श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः–५८.

स्वपरसमयज्ञाननिधिश्रीसिद्धसेनसूरिशेखररचितवृत्त्यलङ्कृतः
अवधूतसिद्धान्तहृदयश्रीमन्नेमिचन्द्रसूरिप्रवरनिर्मितः

# श्रीप्रवचनसारोद्धारः (पूर्वभागः)

मुद्रणकारिका–श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारसंस्था ।
प्रसिद्धिकारकः–जीवनचन्द्र साकरचन्द्रः अस्याः कार्यवाहकः ।

इदं पुस्तकं मोहमय्यां जीवनचंद साकरचंद झवेरी इत्यनेन
निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २३ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्.

वीरसंवत् २४४८. विक्रमसंवत् १९७८. क्राइष्ट १९२२.

प्रति १००० ] पण्यं रूप्यकत्रयम्. [ Rs. 3-0-0

# विषयानुक्रमणिका.

# प्रवचनसारोद्धारस्य उपोद्घातः ।

उपादीयतां शेमुषीधना ! ग्रन्थोऽयं यथार्थाभिधानः प्रवचनसारोद्धाराख्यः, यद्यपि वृत्तिकारैः 'प्रवचनसारस्य वृत्तिमह'मित्युक्त्वा नामान्तरं प्रोक्तं, परं वस्तुतस्तन्न नामान्तरं, पदैकदेशे पदसमुदायोपचारस्य प्रसिद्धत्वात्, तैरपि प्रवचनसारोद्धार इत्येवाभिप्रेतमभिधानं, तत एवैभिः प्रशस्तौ प्रत्यपादि 'प्रवचनसारोद्धारस्य वृत्तिमकरोदतिस्पष्टाम्' तथा च तैः प्रवचनसारोद्धार इत्येव नामोदितं, श्रीमद्भिर्नेमिचन्द्रसूरिभिर्मूलकद्भिस्तु आदौ 'पवयणसारुद्धारं' इति 'पवयणसारुद्धारो' इति उपान्त्यान्त्यगाथयोः स्पष्टमेव प्रोक्तमिदमेव नामेति न किमपि वाच्यमत्र । न च वाच्यं विचारसारः श्रीमत्प्रद्युम्नसूरिशेखरसूत्रितो यः समित्या मुद्रितपूर्वः सोऽभूत् केषांचिदुपयोगिनां पदार्थानां सारग्राहकः ततः कथमिव नैष उपेक्षणीयः इति ?, द्वयोरेतयोर्यद्यपि बहुषु स्थानेष्वैक्यता तथापि बहुषु तेषु पार्थक्यमप्यस्ति, तथा च नैकेन केनापि कस्यापि गतार्थता, विचारसारे तावदधिका एते विषयाः—

अवसर्पिण्यां नराणां देहायुःपृष्ठकरण्डकापत्यपालनाहाराः । आरकमानम् । वर्त्तमानजिनपूर्वभवाः । ( ६३ पुरुषाः ) यतश्च्युताः । जिनजन्मनगर्यः । जिनगोत्राणि । स्वप्नचतुर्दशकम् । षट्पञ्चाशद्दिक्कुमार्यः । स्नात्रमहोत्सवः । जिनजन्मनक्षत्राणि । जिनजन्मराशयः । जिनकुमारराज्यकालः । वरवरिकादानम् । जिनानां दीक्षालिङ्गम् दीक्षाशिबिकाः दीक्षाव्यवस्था दीक्षाकालः व्रतस्थानम् पारणाकारकनामानि छद्मस्थकालः ज्ञानोत्पत्तेः कालः ज्ञानोत्पत्तेः तरुः । समवसरणम् । पारितोषिकदानम् । सर्वसाधुसाध्वीसङ्ख्या । साध्वतिचारगाथा । षाण्मासिकतपश्चिन्ता । पात्रबन्धाद्युपकरणमानम् । आचरणाहेतुः । (आचीर्णाः अर्थाः) युगप्रधानसंख्या । द्रव्याचार्यसङ्ख्या । गच्छरीतिः ।

सारणादिलक्षणम् । आचार्यातिदेशाः । तीर्थतपः । ग्रन्थादानगुणाः । पादोनप्रहरादिमानम् । चरणसप्ततिकरणसप्ततिगाथाः । प्रमार्जनासञ्ज्ञा । पात्रलक्षणम् । ४५ आगमसञ्ज्ञा । श्रावकयोग्यसूत्रार्थौ । संस्तारविधिः । निशि जागरणविधिः । जिनानां प्रथमश्रावकनामानि । श्रावकधर्म्माः । सूत्रकृतकस्वादयः षट् । श्रावकाणामाधिक्यम् । साधर्म्मिकवात्सल्यम् । जिनसिद्धिगमनवेला । जिनकल्याणकनक्षत्राणि ।

वीरतपः । ११ रुद्राः । वीरवद्धतीर्थाः । वीरस्खलनाः । वीरोपसर्गजघन्यादि । दश परमश्राद्धाः । चेटकपुत्र्यः । गौतमकेवलादि । चरमसमवसरणम् । कटभेदचिरसंसृष्टत्वादि गौतमसुधर्मजम्बूकेवलित्वानि । अन्तकृद्भूमिः । कलिकलः । शककालः । विक्रमकालः । दिगम्बरोत्पत्तिः । स्थूलिभद्रभगिन्यः । स्थूलिभद्रप्रमत्तानि । स्थूलिभद्रे व्युच्छिन्नानि । श्रीवज्रे व्युच्छिन्नानि । आर्याकालानुज्ञाव्युच्छेदः । आर्यास्वपक्षप्रव्रज्यानिषेधः । ५०० तमेवर्षे सिद्धसेनदिवाकरः । ६२० आर्यरक्षितः । ९९० कालकाचार्यः । ५८५ (वि.) हरिभद्रः (सूरिः) । १३०० (वि.) बप्पभट्टिः । केशवबलम् । कोटीशिलोत्पाटनम् । पूज्यप्रतिमालक्षणम् । शाश्वतजिननामानि । जिनस्थापना तद्विरहे । जिनमन्दिरविधिः । जिनगृहगमनम् । पूजाः । अष्टप्रकारा पूजा । देवद्रव्यम् । चैत्यवन्दने ५८ भेदाः । चैत्यवन्दने १९८ स्थानकानि । चैत्यवन्दनभेदाः । चैत्यवन्दनसञ्ज्ञाः । तिथ्यधिकारः । प्रत्याख्यानग्रहणविधिः । उग्गए सूरे, सूरे उग्गए । मितदेशे सिद्धावगाहना । संसारानुच्छेदः । श्रावकाराधनाविधिः । ( सम्यक्त्वं द्वादश व्रतानि क्षमणं ) संगव्युत्सर्गः । आज्ञावर्त्तनम् । आचरणा । धर्म्मगुरुस्वरूपम् । प्रस्तुतेऽपि ग्रन्थरत्ने अनेके अधिका विषयाः यथा—

जिनजन्मसञ्ज्ञा १४ जिनवैक्रियसाधु० १८ जिनवादि० १९ अवधि० २० केवलिसञ्ज्ञा २१ मनःपर्यायादिसं० २२ चतुर्दशपूर्विसं० २३ श्रावक० २४ श्राविका० २५ १०।८४ आशातनाः ३७—३८ भाविजिनजीवाः ४६ ऊर्द्धाधःतिर्यक्सिद्ध० ४७ एकसमय-

सिद्ध० ४८ सिद्धावगाहनारीतिः ५० गृहन्यलिङ्गसिद्ध० ५१ निरन्तरसिद्ध० ५२ सिध्यमानसङ्ख्या ५३ सिद्धसंस्थानम् ५४ सिद्धावगाहना: ५६—५७।५८ जङ्घाविद्याचारणाः ६८ परिहारविशुद्धिः ६९ यथालन्दः ७० निर्यामकसङ्ख्या ७१ शुभभावनाः ७२ अशुभभावनाः ७३ क्षेत्रेषु चारित्राणि ७६ स्थितास्थितकल्पः ७७ अस्थितकल्पः ७८ पुस्तकपञ्चकम् ८० । इत्यादयः,

एवं च स्पष्ट एव उभयोरपि ग्रन्थयोरुपयोगः । किं च—विचारसारः क्रियाप्राधान्येन विचारेण प्रणीतो, यतस्तस्मिन् तत्सूचकानि वचांसि लभ्यन्ते, तद्यथा—

पृ. ५७ साहुसाहुणीभणणप्पसंगा पाभाइयकिच्चं ।
५८ तओ उवहिं पडिलेहेइ ।
६२ उवहिं पडिलेहिऊण साहुकिरियं सिक्खेइ पउणपहरं ।
७० पउणपहरे पत्ताइयपडिलेहणं विहेऊण ।
,, तओ भोयणवेलाए पत्ताए विहरणाय वयइ ।
,, भोयणाणंतरं सिक्खइ, अण्णेसिं वा परूवइ ।
८३ तओ अद्धबिंबे निमज्जमाणे देवसियं पडिक्कमणं ।
८४ पसंगतो पक्खियपडिक्कमणविहित्ति ।
४८ तओ सज्झायं विहिय सुयणवेलाए संथारए ठाऊण इमं भणइ ।

यथा चोपर्युक्तवाक्यवृन्दैः साधुक्रियालक्ष्येण तत्प्रकरणकृतिः तथैव श्रावकक्रियालक्ष्येणापि, यतः तत्रावाचि वन्दनाधिकारे—

पृ. १३७ जइ गुरुणो तत्थलमागया हवंति तया गुरुसमीवे वंदणं देइ, अह वसहीए तो तत्थ गंतूण देइ, जओ सव्वाणुट्ठाणं गुरुणो समीवे हवइ ।
१४१ तओ पच्चक्खाणं करेइ, परमुदयतिहीसुत्ति ।
१४५ तओ पच्चक्खाणं काऊण जीवाइपयत्थे सुणेइ ।

तथा च तस्य रचना प्रतिदिनोपयोगिक्रियापेक्षयेति सूक्तमेव, प्रस्तुतस्य तु 'भव्वाण जाणणट्ठा' इत्यस्मादादिवाक्यात् 'सपरावबो-

इकल्लंमि' 'ता नन्दउ बहु पढिज्जंतो' इति प्रान्त्यवाक्यद्वयाच्च प्रवचनसारभूतानां पदार्थानां ज्ञानमेव मुख्यं प्रयोजनमिति, एवं चानुमीयते प्राक् तावत् विचारसारस्य प्रादुर्भावः, दृष्ट्वा च तल्लाभं प्रस्तुतप्रकरणस्य श्रीमद्भिर्विहितः प्रादुर्भावः।

किंचान्यत्—प्रद्युम्नसूरयो विचारसारस्य विधातारो यद्यभविष्यन् विक्रमशताब्द्याः त्रयोदश्याः परतस्तदा श्रीवज्रसिद्धसेनदिवाकरार्यरक्षितहरिभद्रबप्पभट्टीनां सूरिपुरन्दराणां सत्ताकालमिव श्रीमतां कलिकालसर्वज्ञानां हेमचन्द्रसूरीणां निरदेक्ष्यमेव सत्ताकालं, यत् श्रीमन्तो हेमचन्द्रसूरयश्च स्वजीवनकाल एवैतिहासिकपुरुषतामधिगताः, यतः श्रीमन्महिमानमाविर्भावयितुं विहितं तत्कालवार्त्तिभिरेव श्रीमद्भिः सोमप्रभसूरिभिः कुमारपालप्रतिबोधकाव्यं, त्रयोदशविक्रमशताब्दीसंभूतैः श्रीमलयगिरिभिरावश्यकवृत्तौ श्रीदेवेन्द्रसूरिभिः कर्मग्रन्थवृत्तौ श्रीचन्द्रसेनसूरिभिरुत्पादसिद्धौ साक्षितया स्तुत्यतया च ते निर्दिष्टाः, तथा कल्किकालो यो भविष्यत्तयोक्तः त्रयोविंशत्यधिकत्रयोदशशताब्दीरूपस्तं नाकथयिष्यन्। अन्यच्च—साक्षिस्थानेषु अनेकत्र ग्रन्थोद्देशे न क्वापि श्रीमन्मलयगिर्यादिकृतानां वृत्तीनामुल्लेखः। एवं सत्यपि प्राक्तनग्रन्थेषु तथोल्लेखाभावात् तस्य न निश्शङ्कं भणितुं शक्यते श्रीधर्मघोषसूरयः प्रद्युम्नगुरवः १२९४ हायनसत्ताका इति। पश्चादेत इति उल्लेखस्तु विचारसारस्य साक्ष्यं श्राद्धविधिविरचनाकालात् प्राक् न कुत्रापि दृष्टचरमितिहेतोः, प्रस्तुतस्यापि ग्रन्थरत्नस्य सवृत्तिकस्यापि ततः प्राक् न क्वापि अस्त्युल्लेखः, परमस्य वृत्तेः सद्भावात् तत्र च स्पष्टतयैव 'करिसागररविसंख्ये' इत्यनेन अष्टसप्तत्यधिकद्वादशशताब्द्या विक्रमस्योल्लेखात् प्रस्तुतं ग्रन्थरत्नमन्ततो द्वादश्यां त्रयोदश्यां वा शताब्द्यामेव जातमितिनिश्चीयते।

श्रीमतां नेमिचन्द्राचार्याणां मूलकाराणां वृद्धगुरुभ्रातरो विजयसेनाः लघुगुरुभ्रातरस्तु यशोदेवाभिधानाः, गुरुवर्या आम्रदेवाः, गुरुगुरवस्तु जिनचन्द्राह्वा इति पारम्पर्यादि तैः साक्षादुक्तं ग्रन्थप्रान्तभागे, तद्यथा—

धम्मधराधरणमहावराहजिणचन्दसूरिसिस्साणं । सिरिअम्मएवसूरीण पाकपंकयपराएहिं ॥ १५९५ ॥
सिरिविजयसेणगणहरकणिट्ठसिरि जसदेवसूरिजिट्ठेहिं । सिरिनेमिचंदसूरिहिं सविणयं सिस्सभणिएहिं ॥ १५९६ ॥

त्रिष्वपि एतेषु आचार्यपदप्रतिष्ठा यद्यपि तथापि मुख्याचार्यो विजयसेना एवेत्यपि प्रस्तुतगाथापाठादवगन्यते ।

अस्मिंश्च ग्रन्थे श्रीमद्भिः प्राक् स्वयं विहितं जीवकुलकं न्यवेशि तत्तस्य पृथग्भूतस्य लघुतया विनाशो मा भूदिति, यतस्तत् जीवभेदाख्यानं मुख्यद्वारतयोपादाय तन्निरूपणे तन्निरदेशि, यद्यपि सूरीश्वरैर्न हायननिर्देशो व्यधायि परं पूज्यपादविहितानामपरेषां ग्रन्थानामवलोकने तदवगमः सुसाध एव, पूज्यपादविहिताश्च एते ग्रन्था उपलभ्यन्ते—

१ उत्तराध्ययनस्य सुखबोधाख्या वृत्तिः, यतस्तत्र स्पष्ट उल्लेखोऽयं—

विश्रुतस्य महीपीठे, बृहद्गच्छस्य मण्डनम् । श्रीमान् विहारुकप्रष्ठः, सूरिरुद्योतनाभिधः ॥ १ ॥
तस्य शिष्योऽम्रदेवोऽभूदुपाध्यायः सतां मतः । यत्रैकान्तगुणापूर्णे, दोषैर्लेभे पदं नतु ॥ २ ॥
देवेन्द्रगणिश्चेमामुद्धृतवान् वृत्तिकां तद्विनेयः । गुरुसौदर्यश्रीमन्मुनिचन्द्राचार्यवचनेन ॥ ३ ॥
शोधयतु बृहदनुग्रहबुद्धिं(मुरुं)मयि विधाय विज्ञजनः । तत्र मिथ्यादुष्कृतमस्तु कृतमसंगतं यदिह ॥ ४ ॥
अणहिलपाटकनगरे दोहट्टिश्रेष्ठिसत्कवसतौ च । संतिष्ठता कृतेयं नवकरहरवत्सरे चैव ॥ ५ ॥ (११२९)

अनेनोल्लेखेन स्पष्टैव सत्ता श्रीमतां नेमिचन्द्राणां सार्धैकादशशतकादर्वाक्तना प्रतीयते, पूज्याश्च प्राचुर्येण अणहिल्लपत्तने दोहट्टिश्रेष्ठि-

वसतौ अस्थुरित्यपि, यतो यथा वृत्तिरेषा तत्रस्थैः कृता तथैव श्रीमहावीरचरित्रमपि प्राकृतपद्यमयं तत्रैव कृतं, परमेकचत्वारिंश एकादशशतके वैक्रमीये, तथा च श्रीमहावीरचरित्रप्रशस्तिः—

२ श्रीमहावीरचरित्रम्—अणहिलवाडपुरम्मी सिरिकण्णनराहिवंमि विजयन्ते। दोहट्टिकारियाए वसहीए संठिएणं च ॥ ८४ ॥

वाससयाणं एक्कारसण्ह विक्कमनिवस्स विगयाणं। अगुयालीसे संवच्छरंमि एयं निबद्धंति ॥ ८५ ॥

एतेन श्रीवीरचरित्रप्रशस्तिलेखेन निश्चीयते एतत् यदुतैतदपि विहृत्य पुनरागत्यापि तत्र स्थितैरेव सूरिभिर्व्यधायि, परं श्रीउत्तराध्ययनवृत्तेरनु द्वादशवर्ष्यनन्तरं, यतः सा एकोनत्रिंशदधिके एकादशशतके, इदं तु एकचत्वारिंशदधिके इति, प्रस्तुतं ग्रन्थरत्नमपि द्वादश्यामेव शताब्द्यां व्यधायीति निर्विवादं, कर्णराजराज्यकालोऽपि तदनुकूल एव। आम्रदेवदेवसूरिशिष्यत्वं स्वेषां स्वयमेवाचख्यौ, यतोऽत्रैव प्रान्त्यभागे, चतुर्दशाधिकद्विशतद्वारे जीवसंख्याकुलकाबे च।

सिरिआमदेवसूरीण पायपंकयपराएहिं ॥ १५९५ ॥

सिरिअम्मएवमुणिवइविणेयसिरिणेमिचंदसूरीहिं ॥ १२४७ ॥

आम्रदेव—अम्रदेवशब्दयोर्भेदस्तु 'अम्मदे' इत्यपभ्रंशशब्दप्रभवत्वादनयोरकिञ्चित्करः, यद्यपि स्वयमुत्तराध्ययनवृत्तौ अम्रदेव इत्युल्लिखितं तथापि वृत्तिगतं "श्रीआम्रदेवसूरिशिष्यैः श्रीनेमिचन्द्रसूरिभिः—इदं कुलकं—गाथासमुदायात्मकं रचित"मिति वचनमाश्रित्यास्माभिराम्रदेवा इत्युक्ताः। इदं ग्रन्थरत्नं तु श्रीवीरचरित्रादपि पश्चादेवारचितं, यतः उत्तराध्ययनवृत्तावाम्रदेवानामुपाध्यायपदं प्रोक्तं, श्रीवीरचरित्रेऽपि 'उज्जोयणसूरिस्स य सीसो अह अम्बदेवउज्झाओ' इत्युदितं, परं जीवसंख्याकुलके 'सिरिअम्मएवमुणिवई'ति वाक्यात्

'सिरिअम्मएवसूरीण'त्ति प्रस्तुतग्रन्थस्य प्रान्त्यभागस्य वाक्याच्चाम्रदेवानामाचार्यताऽत्र प्रकटिता, ततोऽविहत एष निर्णयो यदुत प्राक्तन-ग्रन्थद्वयात् पश्चाद्देवास्य रचना, स्वर्गकालानुपलम्भाच्चैतेषां नापरा मर्यादोभेत्तुं पार्यते, परं द्वादशशताब्द्या ऊर्ध्वभाग एव श्रीमतां निर्वाणमिति त्वव्याबाधमिति ।

यद्यप्यत्राद्ययोर्द्वयोर्ग्रन्थयोराम्रदेवानां गुरव उद्योतनाचार्या निर्दिष्टा अत्र तु जिनचन्द्रा इति, परं स्यात् तन्नामान्तरमेव, यथा उत्त-राध्ययनवृत्तौ स्वेषां देवेन्द्रगणीत्यभिधा निरदेशि, श्रीवीरचरित्रे तु 'सूरिणा णेमिचंदेणे'ति (८१) वाक्यावयवेन श्रीनेमिचन्द्र इत्यभिधा-ऽऽख्याता, यदि च भिन्ना एवोद्योतना जिनचन्द्राश्च सूरयः परस्परं तदा नैते त्रयो ग्रन्था एककर्तृका इति स्पष्टमेव, अभेदे भेदे च श्रीमतां पारंपर्यादि एवं ।



श्रीमतां मुनिचन्द्राचार्याणां पितृव्यगुरुत्वं 'गुरुसोदर्यश्रीमन्मुनिचन्द्राचार्यवचनेने'त्युक्तेः, श्रीविजयसेनाचार्याणां बृहद्गुरुभ्रातृता श्रीयशोदेवाचार्याणां च लघुगुरुभ्रातृता च स्वयमेवात्र 'सिरिविजयसेणगणधरकणिट्ठसिरिजसोदेवसूरिजिट्ठेहिं'ति स्पष्टैवोक्ता। यद्यपि श्रीमतामभयदेवाचार्याणां नवाङ्गीवृत्तिसौधसूत्रधाराणां बृहद्गुरुभ्रातरः श्रीमतां सुविहितधुरन्धराणां जिनेश्वरबुद्धिसागराचार्याणां शिष्याः 'श्रीजिनचन्द्राः' तदैवैकादशे शतकेऽष्टाविंशत्यधिके सत्तावन्त इति भगवतीवृत्तिप्रशस्तेरवसीयते, परं नैते ते, एते तु ततः प्राचीना एव जिनचन्द्राः, अन्ये तु जिनचन्द्राभिधाना अनेके खरतरपट्टावल्यां दृश्यन्ते, परं ते सर्वेऽपि त्रयोदशशताब्द्याः परत एव जाताः।

श्रीचन्द्रसूरयः।

पूज्यैः सप्तमद्वारे भारतीयानां त्रिकालजिनानां पैरावतीयानां च वर्त्तमानभविष्यज्जिनानां च नामकीर्त्तनावसरे श्रीमतां श्रीचन्द्राचार्याणां स्तोत्रमेव यथास्थितं निवेदितं, ततो विचारणीयमेतत् यदुत कदैते पावयांचक्रुर्भूमण्डलमिदं, श्रीचन्द्राभिधानाश्च त्रयः सूरिवराः, आद्यास्तावत् द्वादशशताब्द्यां सत्तावन्तः प्रचुरग्रन्थकाराश्च, यतस्तन्निर्मिता एते ग्रंथाः।

१ न्यायप्रवेशटिप्पनं रचनासंवत् ११६८
२ मुनिसुव्रतस्वामिचरित्रं रचनासंवत् ११९८(९३)
३ संग्रहणीसूत्रं ( नमिऊणरिहंताई )
४ क्षेत्रसमासः ( नमित्तुं वीरं )
५ निरयावलिकावृत्तिः
६ नन्दी(हा-)इत्याद्याः टीप्पनम्

तदेवं प्रचुरग्रन्थनिर्माणनिपुणा ये तैः कृतमेव कुलकमत्र निरदेशीति ज्ञायते, अपरे तु श्रीचन्द्राः श्रीशीलभद्रशिष्यधनेश्वरशिष्याः श्रीचन्द्रा यैः सुबोधा सामाचारी एकविंशे द्वादशशतके कृता श्रीचैत्यवन्दनलघुवृत्तिश्च, श्रीसनत्कुमारचरित्रं तु चतुर्दशाधिकद्वादशताब्दीमितेऽब्दे श्रीचन्द्राभिधानसूरिसंदृब्धमस्ति, परं तत् केऽन्यधायीति संदिग्धमेव, लघुप्रवचनसारोद्धारकारकास्तु श्रीचन्द्राः एनं ग्रन्थमवलोक्य लघुप्रवचनकारकतया अर्वाचीना अन्ये एवेति ।

श्रीसिद्धसेनसूरीश्वराः ।

व्याख्यातारोऽस्य श्रीमन्तः सिद्धसेनसूरीश्वराः, ते च त्रयोदशशताब्द्यां जाता इति प्रस्तुतवृत्तिगतान्त्यलेखेन निःसंदिग्धमेव, यतोऽवाचि तत्र 'करिसागररविसंख्ये श्रीविक्रमनृपतिवत्सरे चैत्रे । पुष्यार्कदिने शुक्लाष्टम्यां वृत्तिः समाप्ताऽसौ ॥ १८ ॥

व्याख्या चासौ ग्रन्थरत्नस्य विशेषेणैव तत्त्वं विकाशयतीति व्याख्यातृभिर्निर्मिताऽस्याभिधा तत्त्वप्रकाशिनीति, अत एवोक्तं प्रशस्तौ 'तत्त्वज्ञानविकाशिनीमहमिमां वृत्तिं सुबोधां व्यधा'मिति ।

परे यद्यपि सिद्धसेनाभिधाः सूरिपुरन्दराः पंच इत्याख्यान्ति, तन्न चारु, सिद्धर्षिसिद्धसूर्योः तथाभिधानाभावादेव, किंच-तत्त्वार्थटीकाकाराः सिद्धसेनाचार्या आचार्यभास्वामिशिष्याः सन्ति, परं ते श्रीजिनभद्रक्षमाश्रमणेभ्यः प्राचीना इति कश्चित् तन्नावितथं, यतः तद्वृत्तावेव उपयोगविचारे आकाशान्तानां निष्क्रियत्वविचारे च स्पष्टतया क्षमाश्रमणानां नामोल्लेखात्, त्रिषु सिद्धसेनाभिधेषु सूरिपुरन्दरेषु अन्त्या एवैते, यतः श्रीसिद्धसेनदिवाकराणां सत्ता विक्रमसमकालीना, तत्त्वार्थवृत्तिकारा अपि एभ्यः प्रत्ना एव, यतः ३८—३३७

तमपत्रयोः तत्त्वार्थमूलटीकां साक्षितया यदुरेतेऽत्र, ७७–१७९–१९५ तमपत्रेषु च तत्त्वार्थटीकां तामेव सस्मरुः, तथा च निर्विवादमेवैतेऽन्य एव ताभ्यामिति ।

सूरिभिश्चैतैः रचिता ग्रन्थाः १ सामाचारी २ श्रीपद्मप्रभचरित्रं ३ स्तुतिग्रन्थश्च, यद्यपि प्रस्तुतवृत्तौ ग्रन्थत्रयमेतत् ४४३ तमपत्रे अस्मदुपज्ञा सामाचारी निरीक्षणीया इति वाक्येन ४४० तमपत्रे 'आचक्ष्महि पद्मप्रभचरित्रे' इत्यवतरणेन १८७ तमपत्रे "तथा चावोचाम स्तुतिषु"—"जंमि सिरिपासपडिमं संतिकए कीरइ पडिगिहदुवारे । अज्जवि जणो पुरिं तं महुरमधम्मा न पेच्छंति ॥ १ ॥" इति तत्रस्थगाथानिर्देशेन स्वकृततया निरणायि तथापि कालस्य दुष्षमत्वात् भाण्डागारीयाणां च साधुश्रावकाणां मूढतागर्भममत्वबाहुल्याच नैतत् क्वापि सत्तया श्रूयते, तद्वदेव तत्पूर्वजैः देवप्रभमुनीन्द्रैः कृतः प्रमाणप्रकाशः श्रीमद्भिरभयदेवसूरिभिश्च 'वादमहार्णवो' यो निर्मितः इति अत्रत्यप्रशस्त्या स्पष्टतया ज्ञातौ नामशेषतामेवागातामिति ।

श्रीमतां पारम्पर्यं चैवं—

श्रीअभयदेवसूरयः
|
श्रीधनेश्वराः
|
श्रीअजितसिंहाः
|
श्रीवर्धमानसूरयः
|
श्रीदेवचन्द्राः
|
श्रीचन्द्रप्रभाः
|
श्रीभद्रेश्वराः
|
श्रीअजितसिंहाः
|
श्रीदेवप्रभाः
|
श्रीसिद्धसेनाः

## ग्रन्थविषयादि ।

ग्रन्थेऽत्र विषयाः षट्सप्तत्यधिकशतद्वयमिताः विचारिताः, तदनुक्रमस्तु तैरेव ग्रन्थस्यादौ त्रिषष्ट्या द्वारगाथाभिर्दर्शितः, प्रतिद्वारं गाथामानं पत्रमानं चात्र मुद्रिताया अनुक्रमणिकायाः सुखावसेयतायै मुद्रितमस्ति तत्तत एवावधारणीयं, सिद्धान्तोदधिसारभूता विषया अत्र तथा निर्दिष्टा यथा पाठेनैतस्य न कोऽपि मुख्यो विषयः अज्ञाततयाऽवशिष्येतेति प्रवाचकानामेव स्वयमेवावभासिष्यतेऽस्य प्रवचन-सारोद्धारेत्यभिधाऽवितथा, व्याख्यातृभिरपि सूरिवरैर्यथायथं प्रयत्य व्याख्या कृतास्ति तेन सत्यमेवेदं ग्रन्थरत्नमिति श्लाघन्ति सर्वेऽपि प्रवाचकश्रावकाः,

## नम्रनिवेदनम् ।

यद्यपि ग्रन्थरत्नस्य प्राक् मुद्रणमकारि जामनगरवास्तव्यैर्हीरालालाभिधैः श्रावकैः, परं महार्घतरं त्रुटितपाठमेकत्राल्पप्रचारं चेति मत्वा यतितमत्र मुद्रापणे श्रेष्ठिदेवचन्द्रलालभाइ-जैनपुस्तकोद्धार इत्यभिधायाः संस्थायाः कार्यवाहकैः, प्रयत्नतः शोधितेऽप्यत्र स्खलनागः क्षन्तव्यं । विशेषेण निरीक्षणीयं चात्र मुद्रितं साक्षिणां स्थलानां निर्दिष्टग्रन्थानां सूर्यादिविशेषाभिधानां चाकारादिक्रमादि इत्यर्थयन्ते आनन्दसागराः १९८१ आश्विनकृष्णद्वादशी सोमवासर अजीमगंज ( बंगाल ) ।

श्रेष्ठि देवचंद लालभाई जैनपुस्तकोद्धारे

# अद्यावधि मुद्रितग्रन्थानां सूचिः ।



| अंकः ग्रन्थनाम. | मूलकर्ता | टीकाकर्ता | रचनाकाल मूल.टीका. | मुद्रण-स्थानं कालश्च | पण्यं | श्लोक. मू. टीका. | पत्र. प्रति. | विशेषः | विषयः |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| १ वीतरागस्तोत्रं | श्रीहेमचंद्रसूरिः | प्रभानन्दसूरिः (अभय० जिनवल्लभ. अभय. देवप्रभशिष्यः) | | | | मू. *२०० टी.२१०० | प. ८९ | | वीतरागकी स्तुति |
| ,, पञ्जिका | | श्रीसोमसुन्दरशिष्यः विशालराजः | १५१२ | नि.सा.प्रे. मुंबई १९११ | ॥) | टी. ६२५ | प्र. ५०० | प्रथमादर्शः हर्षचन्द्रीयः | |

* यह संख्या अनुमानसें हे.

| अंकः ग्रन्थनाम. | मूलकर्ता | टीकाकर्ता | रचनाकाल मूल.टीका. | मुद्रण-स्थान कालश्च | पण्यं | श्लोक. मू. टीका. | पत्र. प्रति. | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|
| २ श्रवणप्रतिक्रमणं | गणधरः | | | गुजराती-प्रे. मुंबई १९११ | =॥) | | प. १५ प्र. ५०० | | साधुव्रतोंके अतिचारका प्रतिक्रमण |
| ३ स्याद्वादभाषा (प्रमाणनयतत्त्वप्रकाशिका) | शुभविजयगणिः | शुभविजयगणिः (हीरसूरिशिष्यः) | | गुजराती-प्रेस मुंबई. १९११ | =॥) | | प. १४ प्र. ५०० | श्रीविजयसेनसूरिनिर्देशात् | तत्त्वप्रमाणनयविचार |
| ४ पाक्षिकसूत्र-वृत्तिः | गणधरः | वीरगणिश्रीचन्द्र-यशोदेवः | ११८० | नि.सा.प्रे. मुंबई १९११ | ।=) | मू. *३०० टी.२७०० | प. ७८ प्र. ५०० | अणहिलपाटन | साधुमहाव्रत और श्रुत-कीर्तन |

* यह संख्या अनुमानसें हे.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ५ अध्यात्ममतपरीक्षा (पृथग् मूलम्) | (हीरसूरि॰विजयसेनविजयदेव॰विजयसिंहकाले (कल्याण॰ लाभ॰ जीत॰ नयविजयशिष्यः) श्रीयशोविजयमहोपाध्यायः | | | नि. सा. प्रे. मुंबई १९११ | ।=) | गाथा १८४ | प. ११४ प्र. ५०० | दिगम्बरखण्डन |
| ६ षोडशकं (पृथक्-मूल) | श्रीहरिभद्रसूरिः यशोभद्रः श्रीयशोविजयमहोपाध्यायश्च | | | नि. सा. प्रे. मुंबई १९११ | ।=) | मू. २५१ | प. १०६ प्र. ५०० | धर्मपरीक्षा वगैरे |
| ७ कल्पसूत्रवृत्तिः सुबोधिका | भद्रबाहु-आचार्याः | विनयविजय-उपाध्यायः (हीरसूरि, विजयसेन, विजयतिलक, विजयानन्दकाले) | १६९६ | जैनप्रेस सुरत. १९११ | ।।।) | मू. १२१६ | प. ६०० प्र. ५०० | जिनचरित्र, स्थविरावली, सामाचारी |
| ८ वन्दारुवृत्तिः (श्रावकानुष्ठानविधिः) | गणधरः | श्रीदेवेन्द्रसूरि (तपा॰ श्रीजगच्चन्द्रशिष्यः) | | नि. सा. प्रे. मुंबई १९१२ | ।।) | टी. २७२० | प. ९६ प्र. ५०० | श्रावक के छ आवश्यक |

| अंकः | ग्रन्थनाम. | मूलकर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रणस्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ९ | दानकल्पद्रुम. | देवसुन्दरः-सोमसुन्दरशिष्यः जिनकीर्त्तिः | | | ,, १९१२ | ।=) | | प. ६५ प्र. ५०० | | धन्नाजीका जीवन-वृत्तान्त |
| १० | योगफिलॉसॉफी. | मगुभाइ (कारभारी) | | | थामसन, एण्ड को, मद्रास. १९१२ | ।) | | पृष्ठ. २६४ प्र. १००० | | अंग्रेजी, अमेरिका चिकागोमें दियाहुआ १८९३ में वीरचंद राघवजी गांधीका भाषण। |
| ११ | जल्पकल्पलता, | सोमसुन्दर-मुनिसुन्दर-जयचंद्र-रत्नशेखरशिष्य रत्नमण्डनः रत्नशेखरकाले नंदिरत्नशिष्य. | | | नि.सा.प्रे. मुंबई १९१२ | ≡) | | प. ५०० प्र. २३ | | देवसूरिशिष्य माणिक्यसूरि और शंकराचार्यका कर्तृत्वादि वादविवाद। |
| १२ | योगदृष्टिसमुच्चयः | स्वोपज्ञः हरिभद्रसूरिकृतः | | | अहमदाबाद सिटि-प्रेस१९१२ | ≡) | टी. २२६ | पृष्ठ. ९० प्र. ४७५ | | मैत्रीआदि आठ दृष्टि, |

| | | | | | |
|---|---|---|---|---|---|
| १३ कर्म्मफिलॉसॉफी | मगुभाइ कारभारी | | ब्रह्मवादिन् ।-) मद्रास १९१३ | | अंग्रेजी, अमेरिका चिकागोमें दिया हुआ १८९३ में वीरचंद राघवजी गांधीका भाषण |
| १४ आनन्दकाव्यमहोदधिः मौक्तिकं १ | | | | | |
| ,, शालिभद्ररास, | जिनहंसशिष्यः मतिसारः | १६७८ | | | |
| ,, कुसुमश्रीरास | लावण्यविजयशिष्यनीतिविजयशिष्यगंगविजयः | १७७० | जैन प्रेस- ।=) सुरत१९२३ | पृष्ठ. १६६ प्र. १००० | विजयदेव०प्रभ० रत्न० क्षमा०काले, मातर नगरे |
| ,, अशोकचंद्ररोहिणी. | आनन्दविमल० धरमसिंह० जय० कीर्त्ति० विनय० धीरविमलशिष्यनयविमलजी. | १७७२ | | प. ४६२ प्र. १००० | विजय प्रभु सम्मतिसे ज्ञानविमलआचार्यने सुरतबंदर सैतपुर (सुखसागरने) लिखा |
| ,, प्रेमलालच्छी रास. | विजयानन्द० मुनिविजय० शिष्यः दर्शनविजय | १६८९ | | | अबरहानपुरका दलपुरमें. |

| अंकः | ग्रन्थनाम. | मूलकर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| १५ | धर्मपरीक्षा. | पद्मसागरगणिः (धर्म्मसागर. विमलसागरशिष्यः). | | १६४५ | नि.सा.प्रे. मुंबई. १९१३ | ।-) | मू. १४८४ | प. ५८ प्र. ५०० | | पुराणों विगेरहकी परीक्षा |
| १६ | शास्त्रवार्त्ता-समुच्चयवृत्ति. | श्रीहरिभद्रसूरिः | श्रीयशोविजयोपाध्यायः | | धर्म्माभ्यु० बनारस. १९१४ | २) | *मू. ७०० टी. *१२००० | प. ४३१ प्र. ५०० | | नास्तिकादि दर्शनोकी परीक्षा |
| १७ | कर्म्मप्रकृतिः | शिवशर्म्मसूरिः | मलयगिरिः | | नि.सा.प्रे. मुंबई. १९१३ | -१४- | मू. ४७५ | प. २२० प्र. ५५० | | बन्धनादिक अष्ट करण |
| १८ | कल्पसूत्रमूलं कालिकाचार्यकथा च | श्रीभद्रबाहुआचार्याः | | | नि.सा.प्रे. मुंबई. १९१४ | -८- | मू. १२०० ६५ काव्य | प. ६९-५ प्र.१००० | | जिनचरित्रादि ओर कालिकाचार्य वृत्तान्त |

* यह संख्या अनुमानसें हे.

| | | | | | | |
|---|---|---|---|---|---|---|
| १९ | पद्मप्रतिक्रमणानि गणधरादि | | | | | |
| २० | आनन्दकाव्य-महोदधि मौक्तिक रामयशोरसायनरास | विजयऋषि, धर्ममुनि, क्षेमसागर, पद्ममुनि, गुणसागर, केशराज | १६८३ | जैन प्रेस -1०- सुरत. १९१४ | प. ३७० प्र.1००० | रामचरित्र. |
| २१ | आनन्दकाव्य महोदधि ३ | | | | | |
| ,, | भरत रास | ऋषभदास, सांगणपुत्र. | १६७८ | | | |
| ,, | जयानन्दकेवली रास. | वाणाकवि विजयानन्दराज्ये | १६८६ | | | |
| ,, | वच्छराजदेवराजरास | लावण्यसमय (लक्ष्मीसागरराज्ये) | | | | मुनिसुन्दरसूरिका ८००० वाला चरित्रपरसें, कथपुर, |

| अंकः | ग्रन्थनाम. | मूलकर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेष | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ,, | सुरसुन्दरीरास. | नयसुन्दरजी. | | १६४६ | अहमदा-बाद श्राव-मंक तुषि-ली. १९१४ | ॥=) | | प. ३१२ प्र.१००० | | |
| ,, | नळदमयन्ती-रास | मेघराज | पार्श्वचन्द्र, समरचंद्र, रायचंद्र | १६६४ | | | | | | |
| ,, | हरिबलमच्छी-रास. | जिनहर्ष (जिनचंद्रराज्ये) | | १७४६ | | | | | | |
| २२ | उपदेशरत्नाकरः | मुनिसुन्दरसूरिः | | | नि.सा.प्रे. मुंबई. १९१४ | ॥) | [illegible] | प. २११ प्र. ५०० | | देव, गुरु, धर्म, और श्रावकादिका स्वरूप. |

| | | | | | | |
|---|---|---|---|---|---|---|
| २३ चतुर्विंशतिजिनानन्दस्तुतिः | श्रीविजयसेनकाले आनन्दविजयशिष्यः | निर्मल प्रि० अहमदाबाद. १९१४ | =) | ६११ | प. १० प्र. ५०० | चौवीस तीर्थंकरकी स्तुति |
| २४ षट्पुरुषचरित्रं | देवसुन्दरशिष्यः क्षेमंकरः | लुहानाप्रे. बडोदा १९१५ | =) | | प. ४१ प्र. ५०० | उत्तमोत्तमादि छह पुरुष |
| २५ स्थूलभद्रचरित्रं | जयानन्दसूरिः | ,, १९१५ | =) | ६९० | प. ४४ प्र. ७५० | शीलकी महत्तामें |
| २६ धर्मसंग्रहः पूर्वार्द्धः स्वोपज्ञः | विजयानन्द, शान्तिविजयशिष्यः मानविजयोपाध्यायः | नि. सा. प्रे. मुंबई. १९१५ | १) | १४२३ | प. २५९ प्र. ५०० | सामान्य और विशेष गृहस्थका धर्म्म |
| २७ संग्रहणी (पृथक् मूलं) | अभयदेव० हेम० श्रीचन्द्रशिष्यः श्रीचंद्र देवभद्रः | ,, १९१५ | ॥) | गाथा२७३ ३५०० | प. १३८ प्र. ५०० | देव, नारक, स्थिति भव अवगाहना वगैरह |

| अंकः | ग्रन्थनाम: | मूलककर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूलटीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| २८ | उपदेशशतकं सम्यक्त्व-परीक्षा च | विबुधविमलः | | १७९३ | मद्रास ब्रह्मवादी १९१६ | =) | | प. १४ पृ. १९ प्र. ५०० | आनन्दविमल-विजय-दान-हीरसूरि-सेन-सूरि-विजयदेव-विजय-प्रभ-राज्ये ज्ञानविमल-ऋद्धिविमल, कीर्त्ति-विमलशिष्य विबुध विमलः नौरंगाबाद | सम्यक्त्व परीक्षा तथा १२ भावना |
| २९ | ललितविस्तरा | हरिभद्रसूरिः | पंजिका—मुनिचंद्रः | | नि. सा. प्रे. मुंबई. १९१५ | ।।) | मू. १५४५ पंजि. २१५५ | प. ११८ प्र. ५०० | | नमुत्थुणं विगेरः चैत्यवन्दनं |
| ३० | आनन्दकाव्य-महोदधि मौ. ३ शत्रुंजय रास. | | जिनचंद्र-सोमग-णि-शान्तिहर्ष-शिष्यः जिनहर्षः | १७५५ | सुरत जै. प्रे. ,, | ।।।) | | प. ६८० प्र.१००० | | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ३१ | अनुयोगद्वाराणि (पूर्वार्द्ध) | गणधरः | वीरदेव-अभयदेव-हेमचंद्रः | | नि. सा. प्रे. मुंबई. १९१५ | ॥=) | मू. २२८५ प. २७१ टी. ५९०० प्र. ५०० हर्षपुरीये, प्रश्नवाहने, उपक्रम, निक्षेप, |
| ३२ | आनन्दकाव्यमहोदधिमौ ५ हीरसूरिरास | | ऋषभदास कवि (सांगणपुत्र) विजयानंदसूरिराज्ये. | १६८५ | अहमदाबाद सिटी प्रेस. १९१४ | ॥=) | पृ. ४०० प्र. १००० खंभात, खुरम पातिशाह |
| ३३ | उत्तराध्ययनानि पहिला भाग. | जिन-प्रत्येकबुद्ध-ऋषि-गणधर-वगेरह | वादिवेताल-शान्तिसूरि. | | नि. सा. प्रे. मुंबई. ,, | ־॥) | मू. २०७ प. २२८ नि. १२७ प्र. ५०० विनयपरीषहजय वगेरे |
| ३४ | मलयासुन्दरीचरित्रं | जयतिलकसूरिः | | | गुजराती प्रेस. मुंबई. ,, | ।≡) | मू. २४२४ प. ९७ प्र. ५०० |

| अंकः | ग्रन्थनाम. | मूलकर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ३५ | सम्यक्त्वसप्ततिः (तत्त्वकौमुदी) पृथक् मूलं | हरिभद्रसूरिः (?) | | १४२२ | नि. सा. प्रे. १९१३ | १) | टी. ७११ | प. २३८ प्र. ५०० | अभयदेवजिनवल्लभका जिनशेखरपद्मचंद्र-विनयचंद्र-अभयदेव-देवभद्र-प्रभानन्द-श्रीचंद्र (विमलचंद्र) गुणशेखरशिष्यः संघतिलकः, सोमतिलकाचार्यानुजदेवचंद्रवचनात् जिनप्रभ० दिल्यां, महम्मदशाह, सोमकलशयशःकलशौ | श्रद्धादि, |
| ३६ | उत्तराध्ययनसूत्रे भा. २ | जिन- गणधर- प्रत्येकबुद्ध वगेरः | वादिवेताल-शान्तिसूरिः | | नि. सा. प्रे. मुंबई. | १॥) | मू. २०८–९२० नि. १२८–४५७ | प. २१९–५१२ प्र. ५०० | | अकामसकाममरणादि, |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ३७ | अनुयोगद्वार-सूत्र उत्तरार्द्ध | देखो नं ३१ | हेमचन्द्र सूरिः | देखो नं. ३१ | नि. सा. प्रे. मुंबई १९१६ | १) | | १६९ ५०० | | देखो नं ३१ |
| ३८ | गुणस्थानक्रमा-रोहः | रत्नशेखरसूरिः | स्वोपज्ञः | | लुहाना प्रे. वडोदरा १९१६ | =) | मू. १३५ | पृ. ७० प्र. ७५० | वज्रसेनसूरि०हेमतिलक-सूरिपट्टप्रतिष्ठितः रत्न-शेखरसूरिः | चउद गुणस्थानोंका स्वरूप. |
| ३९ | धर्म्मसंग्रहणीपू-र्वार्द्ध | हरिभद्रसूरिः | मलयगिरिः | | नि. सा. प्रे. मुंबई १९१६ | १॥) | मू. ५४५ | प. २१० प्र. ५०० | | ज्ञान-दर्शन, चारित्र धर्म्मनिरूपणं |
| ४० | धर्मकल्पद्रुमः | मुनिसिंह-शील-रत्न-आनन्दप्रभ-आनन्दरत्नकाले मुनिसागरशिष्यः उदयधर्म्मः | | | गुज. प्रे. मुंबई १९१७ | १) | | प. २१७ प्र. ५०० | | दान, शील, तप भाव-का स्वरूप |

| अंकः | ग्रन्थनाम | मूलकर्ता | टीकाकर्ता | रचना-कालः मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ४१ | उत्तराध्ययनसूत्रे भा. ३ | जिन, गणधर, प्रत्येक बुद्ध विगेरः | वादिवेतालशान्तिसूरिः | | नि. सा. प्रे. मुंबई १९१७ | ।।।=) | लि. ४५८ ५६२ मू. ९२१ १६४० सूत्र. ८८ | प. ५१३ से. ७१४ प्र ५०० | भारापद्रगच्छ. | अष्ट प्रवचन माता, यज्ञ, सामाचारी विगेरः |
| ४२ | धर्मसंग्रहणी उत्तरार्द्ध | हरिभद्रसूरिः | मलयगिरिः | | नि. सा. प्रे. मुंबई १९१८ | १।) | ५४६ से. १३९१ | प. २११ से. ४२१ प्र. ५०० | | ज्ञान, दर्शन, चारित्र धर्मनिरूपण |
| ४३ | आनन्दकाव्यमहोदधिःमौक्तिक रूपचंद. रास.नल-दमयंती रास शत्रुंजय रास | | भानुमेरुशिष्य नयसुंदरः | मू. १६३७ | अहमदाबाद डाय. मंछजुयेली १९१८ | ।।।) | | प. ४४९ प्र.१००० | चैत्रगच्छादि पट्टावलि। | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ४४ पिंडनिर्युक्तिः | श्रीभद्रबाहुः | मलयगिरिः | | गु. प्रे. मुंबई १९१८, | १॥) | नि. ६७२ भा. ३७ टी. ७००० | प. १७९ प्र. १००० | उद्गमादि आहारदोषोंका निरूपण. |
| ४५ धर्मसंग्रह उत्तरार्द्ध | विजयानन्द-शान्तिविजयशिष्य-मानविजयोपाध्याय. | | | नि. सा. प्रे. मुंबई ,, | १) | मू. ११९ टी. १४६०२ | प. १८९ प्र. ५०० | स्थविरकल्प और जिनकल्प अधिकार. |
| ४६ उपमितिभवप्रपंचा कथा पूर्वार्द्ध | सिद्धर्षिः | | मू. ९६२ | नि. सा. प्रे. मुंबई | २) | | प. ४६८ प्र. ५०० | आश्रवकषायविपाकादि |
| ४७ दशवैकालिकं | शय्यंभवः | हरिभद्रसूरिः नि० भद्रबाहुः | | नि. सा. प्रे. मुंबई. १९१८ | २॥) | नि. ३७३ गाथा सूत्र. ५१५ गद्य-सूत्र. २१ | प. २८६ प्र. १००० | आहारशुद्धि, साधुपना विगेरः |
| ४८ अर्थदीपिका (श्राद्धप्रतिक्रमणसूत्रवृत्तिः) | सोमसुंदर-भुवनसुंदर-शिष्यः रत्नशेखरः | | मू. १४९६ | नि. सा. प्रे. मुंबई. १९१९ | २) | टी. ६६४४ | प. २०४ प्र. १००० | श्रावकव्रतोंका अतिचार |

| अंकः | ग्रन्थनाम | मूलकर्ता | टीकाकर्ता | रचना-कालः मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ४९ | उपमितिभव-प्रपंचकथा उत्त. | देल्लमहत्तरगर्गर्पि-सिद्धर्पि. सिद्धर्पिः | | | नि. सा. प्रे. मुंबई १९२० | २) | संपूर्ण १६००० | प. ४६९ से. ७७६ प्र. ५०० | निर्वृतिकुले भट्टदेशे भिल्लमाले | इन्द्रियकपाय-विपाकादि, |
| ५० | जीवाजीवाभि-गमः | स्थविराः | मलयगिरिः | | नि. सा. प्रे. मुंबई १९१९ | ३।) | मू. सू. ४५० टी. १४००० | प. ४६७ प्र. १००० | | जीवाजीव विगैरः |
| ५१ | सेनप्रश्न० (प्रश्नरत्नाकर.) | हीरसुरि-विजय-सेनराज्ये शुभ-विजयः | | | मुं. वैभव. प्रेस. १९१९ | १) | | प. १२४ प्र. १००० | | साधु वगैरेहके प्रश्नोत्तर |
| ५२ | जम्बूद्वीपप्रज्ञप्तिः पूर्वार्द्ध (प्रमेय-रत्नमंजूषा.) | स्थविराः | विजयदानहीर-सूरिराज्ये, सक-लचंद्रशिष्यः शान्तिचन्द्रः | | नि. सा. प्रे. मुंबई १९२० | ४) | | प. ३८२ प्र. १००० | | जम्बूद्वीप ओर ज्योति-पका अधिकार |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ५३ आवश्यकटिप्पनं | अभयदेवशिष्यः हेमचंद्रः | | ,, १९२० | १॥) | ४६०० | प. ११८<br>प्र. १००० | | आवश्यकहरिभद्रसूरिजीकी टीकापर खुलासा |
| ५४ जंबूद्वीपप्रज्ञप्तिः उत्तरार्द्धं | स्थविराः | | नि. सा. प्रे.<br>मुंबई<br>१९२० | २) | | प. ३८३<br>से. ५४४<br>प्र. १००० | पट्टावलिका विस्तार | जम्बूवृक्ष और ज्योतिषका अधिकार |
| ५५ देवसीराइ | | | जैनविजय<br>सु. १९२१ | ≡) | | प्र. १००० | | |
| ५६ श्रीपालचरित्रं | ज्ञानविमलसूरि, अपरनाम नयविमल. | मू. १७४५ | मुंबई<br>वैभवप्रेस<br>१९२१ | ॥=) | मू. १८०० | प. ४४<br>प्र. १००० | विजयप्रभ, विजयरत्न विनयविमल, धीरविमल, नयविमल, उन्नतनगरे | नवपद्आराधनका फलमें |
| ५७ सूक्तमुक्तावली | प्राचीन | | नि. सा. प्रे.<br>मुंबई<br>१९२२ | २) | | प. १२६<br>प्र. १००० | | धर्मोपदेश वगैरः १२७ विषयें |

| अंकः | ग्रन्थनाम | मूलकर्त्ता | टीकाकर्त्ता | रचना कालः मूल टीका | मुद्रण-स्थान काल | पण्यं | श्लोक मूल टीका | पत्र प्रति | विशेषः | विषयः |
|---|---|---|---|---|---|---|---|---|---|---|
| ५८ | प्रवचनसारोद्धारपूर्वार्द्ध, (तत्त्वज्ञानविकाशिनी) | नेमिचंद्र (आम्र·देवसूरि शिष्य, विजयसेनयशोदेवयोर्मध्यमः) | देवभद्रशिष्यः सिद्धसेनः | | नि.सा.प्रे. मुंबई १९२२ | ३) | मू. २००० टी. १६००० १०३ द्वा. द्वाराणि | प. २२४ प्र. १००० | | चैत्यवन्दन, गुरुवन्दन, पच्चक्खाण विगैरः २७३ विषयें. |
| ५९ | तन्दुलवेयालियं | वीरहस्तदीक्षितः | विजयदानआनन्दविमलशिष्यः विजयविमलः | | ,, ,, | १।।) | सूत्र. १९ गाथा १३९ | प. ५७ प्र. १००० | | दशदशा विगैरः |
| ,, | चउसरणं | वीरभद्रः | | | ,, ,, | | ६३ गाथा. | प. ५८-७८ प्र. १००० | | अरिहंत, सिद्ध आदिका वर्णन |
| ६० | विंशतिस्थानकचरितं. | जयचंद्रसूरिशिष्यः जिनहर्षः | | मू. १५०२ | बहादुर सिंहप्रेस पालीटाणा. १९२२ | १) | मू. २८०० | प. ९५ प्र. ७५० | वीरमपुर | अरिहंतादिक वीशस्थानकोंका आराधनके फलकी कथायें. |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ६१ कल्पसूत्र सुबोधिका (आवृत्ति दुसरी) | अंक ७ मुजब— | | | नि. सा. प्रे. मुंबई १९२३ | २) | | प. १९६ प्र. १००० | |
| ६२ सुबोधा सामाचारी. | शीलभद्र-धनेश्वर-श्रीचंद्रः | | | मुं. वैभव प्रेस मुंबई १९२४ | ॥) | | प. ५० प्र. १००० | सम्यक्त्व व्रतारोपणादिक २६ विषयें. |
| ६३ सिरिसिरिवालकहा सटीकं. | वज्रसेन-हेमतिलकशिष्यः रत्नशेखरः | | मू. १४२८ | भावनगर आनन्द प्रिं. प्रेस १९२३ | १।) | मू. १३४२ गा. | प. १५१ प्र. १००० | अर्हदादि नवपद आराधना |
| ६४ प्रवचनसारोद्धारः उत्तरभागः पृथग् मूलादि | नेमिचंद्र (आम्रदेवशिष्यः विजयसेनयशोदेवयोर्मध्यमः) | देवभद्रशिष्यः सिद्धसेनः | | नि.सा.प्रेस मुंबई १९२६ | ४) | १०८ सें २७६ द्वारो | प. प्र. | चैत्यवन्दन, गुरुवन्दन, पच्चक्खाण विगेरः २१६ विषयो. |
| ६५ लोकप्रकाशः प्रथमभागे द्रव्यलोकः | श्रीविनयविजयगणिः | | | नि. सा. प्रे. मुंबई १९२६ | २) | | प. प्र. | रज्ज पल्योपम जीवाजीवनिरूपण. |

| अंक | ग्रन्थनाम | मूलकर्त्ता | टीकाकर्त्ता | रचनाकाल मूल टीका | मुद्रण स्थान काल | पण्य | श्लोक मूल टीका | पत्र प्रति | विशेष | विषय |
|---|---|---|---|---|---|---|---|---|---|---|
| ६६ | आनंदकाव्य महोदधि मौ-क्तिकं ७<br>" ढोलामारवणी रास माधवानळ धवळ रास शकु-नचोपाई स्तंभन पार्श्व. स्तवन.चार प्रत्येक वुद्ध चोपाई. | | श्री कुशललाभ, समयसुन्दरजी. | | जशवंत-सिंह प्रेस लिंबडी १९२६ | | | प.<br>प्र. १००० | | |
| ६७ | तत्त्वार्थाधिगम सूत्रम् ५अध्यायी: प्रथमो भागः (पूर्वार्द्धं) | | श्रीमदुमास्वा-तिजी.<br>श्रीदेवगुप्तः<br>श्रीसिद्धसेनसूरिः | | कर्नाटक प्रे. मुंबई १९२६ | | | प.<br>प्र. | | |

श्रेष्ठिदेवचन्द्रलालभाइ-जैनपुस्तकोद्धारे ग्रन्थाङ्कः—

॥ श्रीजिनाय नमः ॥

# श्रीमन्नेमिचन्द्रसूरिप्रवरनिर्मितः प्रवचनसारोद्धारः ।

## श्रीमद्देवभद्रान्तिषच्छ्रीमत्सिद्धसेनसूरिसूत्रिततत्त्वज्ञानविकाशिनीटीकायुक्तः प्रारभ्यते ।



सन्नद्धैरपि यत्तमोभिरखिलैर्न स्पृश्यते कुत्रचिन्नत्कालकलाभिरप्यनुकलं यन्नीयते न क्षयम् ।
तेजोभिः स्फुरितैः परैरपि हठादाक्रम्यते यन्न तज्जैनं सर्वजगत्प्रकाशनपटु ज्योतिः परं नन्दतु ॥ १ ॥
यो ध्यानेन निमूलकापमकषद् द्वेषादिविद्वेषिणो, यत्त्रैलोक्यविलोकनैकरसिकं ज्योतिः किमप्यातनोत् ।
यः सद्भूतमशेषमर्थमवदत् दुर्वादिवित्रासकृद्देवार्च्यः शिवतातिरस्तु स विभुः श्रीवर्धमानः सताम् ॥ २ ॥
स्वगुरूणामादेशं चिन्तामणिसोदरं समासाद्य । श्रेयस्कृते करोमि प्रवचनसारस्य वृत्तिमिमाम् ॥ ३ ॥

इह हि शिष्टाः क्वचिदभीष्टे शास्त्रप्रकरणादिवस्तुनि प्रवर्तमानाः श्रेयस्काम्यया विशिष्टाभीष्टदेवतानमस्कारपुरस्कारेणैव प्रवर्तन्ते, स च यद्यपि कायमनोभ्यामपि क्रियमाणो निखिलविलसद्विघ्नविनाशकत्वेन प्रारिप्सितशास्त्रप्रकरणादिपरिसमाप्तये सम्पनीपद्यते तथापि शास्त्रादौ श्रोतारः सर्वेऽपि शास्त्रादिश्रवणरसिकान्तःकरणाः सकलविघ्नसङ्घातविघातनिमित्तमवश्यमभिमतदेवतास्तवाभिधानपूर्वमेव प्रवर्तन्तामिति श्रोतृणामभीष्टदेवतास्तवविषयमनीषोन्मेषपरिग्रहार्थमादाविष्टदेवतास्तवोऽभिधेयः, तथा यत्किमपि शास्त्रं प्रकरणादि वा कर्तुमिष्यते तत्रावश्यमादौ प्रेक्षावतां प्रवृत्त्यर्थमभिधेयमभिधातव्यं इतरथा किमत्र शास्त्रे प्रकरणादौ वाऽभिधेयमिति संशयाना न तत्र ते प्रवर्तेरन्, वदेयुश्च यथा—नाऽऽरब्धव्यमिदं शास्त्रं प्रकरणादि वा अभिधेयशून्यत्वात् काकदन्तपरीक्षावदिति, यदाहुः—"श्रुत्वाऽभिधेयं शास्त्रादौ, पुरुषार्थोपकारकम्। श्रवणादौ प्रवर्तन्ते, तज्जिज्ञासादिनोदिताः ॥ १ ॥ नाऽश्रुत्वा विपरीतं वा, श्रुत्वाऽऽलोचितकारिणः। काकदन्तपरीक्षादौ, प्रवर्तन्ते कदाचन ॥ २ ॥" इत्यादि, तथा अभिहितेऽप्यभिधेये न प्रयोजनश्रवणमन्तरेण सहृदयास्तदाद्रियन्ते, प्रेक्षावत्ताक्षतिप्रसङ्गात्, यदाहुः—"प्रयोजनमनुद्दिश्य, न मन्दोऽपि प्रवर्तते। एवमेवं प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्? ॥ १ ॥" अभिदध्युश्च ते यथा—नाऽऽरम्भणीयमिदं शास्त्रं प्रयोजनशून्यत्वात्कण्टकशाखामर्दनवदिति, ततः शास्त्रप्रकरणादिप्रारम्भप्रयासनिष्फलताशङ्काशङ्कुसमुद्धरणाय शास्त्रप्रकरणादौ प्रयोजनमपि वक्तव्यं, तथा प्रयोजने दर्शितेऽपि न परम्परया सर्वज्ञमूलताऽवगतिमन्तरेण विविधातीन्द्रियार्थसार्थप्रतिपादके शास्त्रादौ सुधियः प्रवृत्तिमातन्वीरन्, प्रतिपादयेयुश्च ते यथा—नारम्भणीयमिदं शास्त्रादि सम्बन्धवन्ध्यत्वात् स्वेच्छाविरचितशास्त्रवदिति, ततस्तेषां शास्त्रप्रकरणादिप्रवृत्तौ विशिष्टादरनिमित्तं परम्परयाऽर्हन्मूलताख्यापनार्थमादौ गुरुपर्वक्रमलक्षणः सम्बन्धोऽपि वक्तव्य इत्यादि परिभाव्य प्रेक्षावतां प्रवृत्त्यर्थं पूर्वप्रयुक्तप्रयोगाणां चासिद्धतादिदोषोद्भावनार्थमिमामादिगाथामाह—

**नमिऊण जुगाइजिणं वोच्छं भव्वाण जाणणनिमित्तं । पवयणसारुद्धारं गुरूवएसा समासेणं ॥ १ ॥**

अत्र च नरिनृत्यमानमानसवृत्तयः **सौगताः** सङ्गिरन्ते—नन्विदं भवतां गेहेनर्दितमिव प्रतिभासते, यतः सर्वमेवेदं भवद्भिः कथ्यमानं शोभते यदि शब्दार्थयोः कश्चित्सम्बन्धो भवेत्, न चासौ विचार्यमाणश्चारिमाणमञ्चति, द्विविधो हि सम्बन्धः—तादात्म्यलक्षणस्तदुत्पत्तिलक्षणश्च, तत्र न तावच्छब्दार्थयोस्तादात्म्यलक्षणः सम्बन्धः, स हि य एवार्थः स एव शब्दो य एव शब्दः स एवार्थ इत्येवं भवेत्, एवं च मोदकादिशब्दोच्चारणे मोदकादिना मुखपूरणं भवेत् क्षुरिकादिशब्दोच्चारणे च वदनपाटनादिकं सम्पद्येत, ततस्तावदसौ शब्दार्थयोर्न घटामटाट्यते, न तदुत्पत्तिलक्षणोऽपि सम्बन्धः क्षोदं क्षमते, तथाहि—किं शब्दादर्थ उत्पद्यते? अर्थाद्वा शब्द इति?, तत्र न तावच्छब्दादर्थ उत्पद्यते, घटादयो हि मृदादिभ्य एवोत्पद्यमाना वीक्ष्यन्ते, न शब्दादिति, यदि तु शब्दादपि घटादयो भावा भवेयुस्तदा न मृदादिपरिशीलनक्लेशमनुभवेयुः कुम्भकारादयः, नाप्यर्थाच्छब्दोत्पत्तिः, ताल्वोष्ठपुटदन्तादिभ्यः पुरुषप्रयत्नसहितेभ्य एव शब्दोत्पत्तिदर्शनात्, ततः शब्दार्थयोस्तादात्म्यतदुत्पत्तिलक्षणसम्बन्धद्वयाभावेनाऽऽदिवाक्यमभिधेयादिसूचकं निरर्थकमेवेति, तत्र ब्रूमः—अनभ्युपगतोपालम्भेन कण्ठशोषक्लेशमनुभवद्भिर्भवद्भिरेवमात्मा निरर्थकमेव कदर्थितः, न खल्वस्माभिः शब्दार्थयोस्तादात्म्यतदुत्पत्तिलक्षणः सम्बन्ध इष्यते, किन्तु सर्वसहृदयसम्मतो वाच्यवाचकभावलक्षण एव, तत्र च न किञ्चिद्विरुध्यते, यदि च शब्दस्य प्रामाण्यं नाभ्युपगम्यते तदा शब्दप्रामाण्यमूलानामखिलव्यवहाराणामुच्छेदः स्यात्, उक्तं हि—"लौकिकव्यवहारोऽपि, न यस्मिन्नवतिष्ठते। तत्र साधुत्वविज्ञानं, व्यामोहोपनिबन्धनम् ॥ १ ॥" इति, अत्र च बहु वक्तव्यं तत्तु नोच्यते ग्रन्थगौरवभयादिति । तत्र 'नमिऊण' नत्वा 'युगादिजिनं' युगं—एतदवसर्पिणीरूपः कालविशेषस्तत्र आदीयत इत्यादिः—प्रथमः स चासौ जिनश्च—रागद्वेषादिदुर्जयारातिजेता तं ऋषभदेवस्वामिनमित्यर्थः, भवति हि प्रौढ-

विशेषणादनुक्तेऽपि विशेष्ये प्रतिपत्तिः, यथा—"ध्यानैकतानमनसो विगतप्रचाराः, पश्यन्ति यं कमपि निर्मलमद्वितीयम्" इत्यत्र ध्यानैकतानमनसो विगतप्रचारा इति प्रौढविशेषणसामर्थ्याद्योगिन इति विशेष्यस्यानुक्तस्यापि प्रतिपत्तिस्तथाऽत्रापि नाभेयदेवस्येति, '**वोच्छं**' वक्ष्ये '**भव्यानां**' निर्मलनिजगुणनिकरमाहात्म्येन सिद्धिगमनयोग्यानां प्राणिनां ज्ञाननिमित्तं **प्रवचनस्य**—द्वादशाङ्ग्यादिशासनस्य **सारोद्धारं**—प्रधानकतिपयपदार्थोद्धारं '**गुरूपदेशाद्**' गुरुकथनात् '**समासेन**' संक्षेपेणेति गाथापदार्थः । तत्र '**नमिऊण जुगाइजिणं**' इत्यनेन युगादिदेवस्य नमस्कारकरणेन विवक्षितशास्त्रादौ सकलकल्याणमूलं भावमङ्गलं '**वक्ष्ये प्रवचनसारोद्धार**'मित्यनेनाभिधेयं '**भव्यानां ज्ञाननिमित्त**'मित्यनेन प्रयोजनं च प्रत्यपादि, तच्च द्वेधा—प्रकरणकर्तुः श्रोतुश्च, एकैकमपि द्विविधं—अनन्तरं परम्परं च, तत्र प्रकरणकर्तुरनन्तरं प्रयोजनं प्रवचनसारभूतकतिपयपदार्थान् प्रतिपादयतः सत्त्वानुग्रहः, परम्परं तु परमपदावाप्तिः, भव्यसत्त्वानुग्रहप्रवृत्तो हि निरवकरसुखनिकरप्राज्यसाम्राज्यनिसर्गरमणीयरमणीवर्गवैभवोद्भासितस्वर्गप्राप्त्यादिपरम्परया परमपदमवश्यमवाप्नोत्येव, यत उक्तम्—"सर्वज्ञोक्तोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥ १ ॥" श्रोतॄणां पुनरनन्तरप्रयोजनं यथावत्प्रवचनसारभूतकतिपयपदार्थपरिज्ञानं, परम्परप्रयोजनं तु तेषामपि परमपदप्राप्तिरेव, तथाहि—ते यथावद्विज्ञातप्रवचनसारभूतकतिपयपदार्थाः प्रकृत्यसारात्संसाराद्विरज्यन्ते ततः परमपदावाप्तये निःसपत्नं प्रयत्नमाचरन्ति ततो निखिलश्रेयस्कारकं निःश्रेयसमासादयन्ति, यत उक्तम्—"सम्यग्भावपरिज्ञानाद्विरक्ता भवतो जनाः । क्रियाऽऽसक्ता ह्यविघ्नेन, गच्छन्ति परमां गतिम् ॥ १ ॥" इति, सम्बन्धस्तु द्विधा—उपायोपेयलक्षणो गुरुपर्वक्रमलक्षणश्च, तत्र प्रथमस्तर्कानुसारिणः प्रति, स चायं—वचनरूपापन्नं शास्त्रमिदमुपायः, उपेयं सम्यगेतच्छास्त्रार्थपरिज्ञानं मुक्तिपदं वा, तस्याप्यतः पारम्पर्येण प्राप्तेः, श्रद्धानुसारिणस्तु प्रति गुरुपर्वक्रमलक्षणसम्बन्धः, तत्क्रमश्चायं—प्रथमं हि घनाघनघनपटल इवाति-

उसहाइजिणिंदाणं आइमगणहरपवित्तिणीनामा । अरिहंतऽन्नणठांणा जिणजणणीजणयनाम
गेई ॥ ४ ॥ उक्किट्ठजहण्णेहिं संखा विहरंततित्थनाहाणं । जम्मसमएऽवि संखा उक्किट्ठजहण्णिया
तेसिं ॥५॥ जिणगणहर मुणि समणी वेउव्विय वाइ अवहि केवलिणो । मणनाणि चउदसपुव्वि
सड्ढ सड्ढीण संखा उ ॥ ६ ॥ जिणजक्खा देवीओ तणुमाणं लंछणाणि वन्ना य । वयपरिवारो
सव्वाउयं च सिवगमणपरिवारो ॥ ७ ॥ निव्वाणगमणठाणं जिणंतराइं च तित्थवुच्छेओ ।
दस चुलसी वा आसायणाउ तह पाडिहेराइं ॥ ८ ॥ चउतीसाइसयाणं दोसा अट्ठारसारि-
हचउक्कं । निक्खमणे नाणंमि य निव्वाणंमि य जिणाणं तवो ॥ ९ ॥ भाविजिणेसरजीवा संखा
उड्ढाहतिरियसिद्धाणं । तह एक्कसमयसिद्धाण ते य पन्नरसभेएहिं ॥ १० ॥ अवगाहणाय सिद्धा
उक्किट्ठजहन्नमज्झिमाए य । गिहिलिंगअन्नलिंगस्सलिंगसिद्धाणं संखा उ ॥ ११ ॥ बत्तीसाई
सिज्झंति अविरयं जाव अट्ठहीयसयं । अट्ठसमएहिं एक्केक्कूणं जावेक्कसमयंतं ॥ १२ ॥ थीवेए पुंवेए
नपुंसए सिज्झमाणपरिसंखा । सिद्धाणं संठाणं अवठिइठाणं च सिद्धाणं ॥ १३ ॥ अवगाहणा
य तेसिं उक्कोसा मज्झिमा जहन्ना य । नामाइ चउण्हंपि हु सासयजिणनाहपडिमाणं ॥ १४ ॥
उवगरणाणं संखा जिणाण थविराण साहुणीणं च । जिणकप्पियाण संखा उक्किट्ठा एगवसहीए

छत्तीसं सूरिगुणा विणओ बावन्नभेयपडिभिन्नो । चरणं करणं जंघाविज्जाचारणगमण-
सत्ती ॥ १६ ॥ परिहारविसुद्धि अहालंदा निज्जामयाण अडयाला । पणवीस भावणाओ सुहाउ
असुहाउ पणवीसं ॥ १७ ॥ संखा महव्वयाणं किइकम्माण य दिणे तह खित्ते । चारित्ताणं
संखा ठियकप्पो अठियकप्पो य ॥ १८ ॥ चेइयं पुत्थयं दंडयं तणं चम्मं दुसाइं पंच पत्तेयं ।
पंच अवग्गहभेया परीसहा मंडली सत्त ॥१९॥ दसठाणववच्छेओ खवगस्सेढी य उवसमस्सेढी ।
थंडिल्लाण सहस्सो अहिओ चउसहियवीसाए ॥ २० ॥ पुव्वाणं नामाइं पयसंखासंजुयाइं चउ-
दसवि । निग्गंथा समणावि य पत्तेयं पंच पंचेव ॥ २१ ॥ गासेसणाण पणगं पिंडे पाणे य ए-
सणा सत्त । भिक्खारिया वीहीणमट्ठगं पायछित्ताणं ॥ २२ ॥ सामायारी ओहंमि पयविभा-
गंमि तह य दसहा उ (चक्कवालंमि) । निग्गंथत्तं जीवस्स पंचवाराओ भववासे ॥ २३ ॥ साहु-
विहारसरूवं अप्पडिवद्धो य सो विहेयव्वो । जायाअजायकप्पो परिठवणुच्चारकरणदिसा ॥ २४ ॥
अट्ठारस पुरिसेसुं वीसं इत्थीसु दस नपुंसेसुं । पव्वावणाअणरिहा तह वियलंगस्सरूवा य
॥ २५ ॥ जं मुल्लं जइकप्पं वत्थं सेज्जायरस्स पिंडो य । जत्तिय सुत्ते सम्मं जह निग्गंथावि चउग-
इया ॥ २६ ॥ खित्ते मग्गे काले तहा पमाणे अईयमकप्पं । दुहसुहसेज्जचउक्कं तेरस किरियाण

[121] ठाणाइं ॥२७॥ एगंमि बहुभवेसु य आगरिसा चउव्विहेऽवि [122] सामइए । सीलंगाणऽट्ठारस [123] सहस्स
[124] नयसत्तगं चेव ॥ २८ ॥ [125] वत्थग्गहणविहाणं [126] ववहारा पंच तह [127] अहाजायं । [128] निसिजागरणंमि विही
[129] आलोयणदायगऽन्नेसा ॥ २९ ॥ गुरुपमुहाणं कीरइ [130] असुद्धसुद्धेहिं जत्तियं कालं । [131] उव्वहीयोयण-
कालो [132] भोयणभाया [133] वसहिसुद्धी ॥ ३० ॥ संलेहणा [134] दुवालस वरिसे वसहेण [135] वसहिसंगहणं ।
उसिणस्स [136] फासुयस्सवि जलस्स सचित्तया कालो ॥ ३१ ॥ तिरिइत्थीओ तिरियाण माणवीओ
नराण देवीओ । देवाण [137] जगगुणाओ जत्तियमेत्तेण अहियाओ ॥ ३२ ॥ [138] अच्छेरयाण दसगं च-
उरो [139] भासा उ [140] वयणसोलसगं । [141] मासाण पंच भेया भेया [142] वरिसाण पंचेव ॥ ३३ ॥ [143] लोगसरूवं
[144] सन्नाओ तिन्नि [145] चउरो व [146] दस व [147] पनरस वा । तह सत्तसट्ठि[148]लक्खणभेअविसुद्धं च सम्मत्तं ॥३४॥
एगविह दुविह तिविहं चउहा पंचविह दसविहं सम्मं । दव्वाइकारगाईउवसमभेएहिं वा [149] सम्मं
॥ ३५ ॥ कुलकोडीणं [150] संखा जीवाणं जोणिलक्ख [151] चुलसीई । तेकालाईवित्तत्थ[152]विवरणं [153] सद्दुप-
डिमाउ ॥ ३६ ॥ [154] धन्नाणमबीयत्तं खेत्ताईयाण [155] तहे अचित्तत्तं । धन्नाइं [156] चउवीसं मरणं [157] सत्तरस-
भेयं च ॥ ३७ ॥ [158] पलिओवम [159] अयरऽवसप्पिणीण [160] उस्सप्पिणीणवि [161] सरूवं । दव्वे खेत्ते काले भावे
[162] पोग्गलपरावट्टो ॥ ३८ ॥ पन्नरस [163] कम्मभूमी अकम्मभूमीउ [164] तीस अट्ठ [165] भेया । दोन्नि सया तेयाला
भेया [166] पाणाइवायस्स ॥ ३९ ॥ परिणामाणं [167] अट्ठोत्तरसयं [168] बंभमट्ठदसभेयं । कामाण [169] चउव्वीसा

दस पाणा दस य कप्पदुमा ॥ ४० ॥ नरया नेरइयाणं आवासा वेयणाऽऽउतणुमाणं । उप्पत्ति-
नाँसविरहो लेसाऽवहि परमहम्मा य ॥ ४१ ॥ नरयुव्वट्टाणं लद्धिसंभवो तेसु जेसि उववाओ ।
संखा उप्पज्जंताण तह य उव्वट्टमाणाणं ॥ ४२ ॥ कायठिई भवठिइओ एगिंदियविगलसन्निजी-
वाणं । तणुमाणमेसि इंदियसरूवविसया य लेसाओ ॥ ४३ ॥ एयाणं जत्थ गई जत्तो ठाणेहिं
आगई एसिं । उप्पत्तिमरणविरहो जायंतमरंतसंखा य ॥ ४४ ॥ भवणवइवाणमंतरजोइसवेमाण-
वासिदेवाणं । ठिई भवण देहमाणं लेसाओ ओहिमाणं च ॥ ४५ ॥ उप्पत्तीए तहुवट्टणाय
विरहो इमाण संखा य । जम्मि य एयाण गई जत्तो वा आगई एसिं ॥ ४६ ॥ विरहो सिद्धिगई-
ईए जीवाणाहारगहणऊसासा । तिन्नि सया तेसट्ठा पासंडीणऽट्ठ य पमाया ॥ ४७ ॥ अरहाहिवा
हलहरा हरिणो पडिवासुदेवरायाणो । रयणाइ चउदस नवनिहीओ तह जीवसंखाओ ॥ ४८ ॥
कम्माइं अट्ठ तेसिं उत्तरपयडीण अट्ठवन्नसयं । बंधोदयाणुदीरणसत्ताण य किंपि हु सरूवं ॥४९॥
कम्मट्ठिइ सबाहा बायालीसा उ पुण्णपयडीओ । बासीय पावपयडीओ भावछक्कं सपडिभेयं
॥ ५० ॥ जीवाण अजीवाण य गुणाण तह मग्गणाण पत्तेयं । चउदसगं उवओगा बारस जोगा
य पण्णरस ॥ ५१ ॥ परलोगगई गुणठाणएसु तह ताण कालपरिमाणं । नरयतिरिनरसुराणं
उक्कोसविउव्वणाकालो ॥ ५२ ॥ सत्तेव समुग्घाया छप्पज्जत्तीओऽणहारया चउरो । सत्त भयट्ठा-

णाइं [२३५]छब्भासा अप्पसत्थाओ ॥ ५३ ॥ भंगा [२३६]गिहिव्वयाणं अट्ठारस [२३७]पावठाणगाइंपि । [२३८]मुणिगुणं सत्तावीसा इगवीसा [२३९]सावयगुणाणं ॥ ५४ ॥ तेरिच्छीणुक्किट्ठा [२४०]गब्भठिई तह य सा [२४१]मणुस्सीणं । गब्भस्स य [२४२]कायठिई गब्भट्ठियजीव[२४३]आहारो ॥ ५५ ॥ रिउरुहिरसुक्कजोए जत्तियकालेण [२४४]गब्भसंभूई । जत्तियपुत्ता [२४५]गब्भे जत्तिय पियरो य [२४६]पुत्तस्स ॥ ५६ ॥ महिला गब्भअजोगा जेत्तियकालेणऽबीयओ [२४७]पुरिसो । सुक्काईण सरीरट्ठियाण सव्वाण. [२४८]परिमाणं ॥ ५७ ॥ सम्मत्ताईणुत्तमगुणाण लाहंतरं [२४९]जमुक्कोसं । न लहंति माणुसत्तं सत्ता जेऽणंतरु[२५०]व्वट्टा ॥ ५८ ॥ पुव्वंगपरी[२५१]माणं माणं [२५२]पुव्वस्स लवणसिह[२५३]माणं । उस्सेहआयअंगुलपमाणअंगुलप[२५४]माणाइं ॥ ५९ ॥ तम[२५५]कायसरूवमणंत[२५६]छक्कगं अट्ठगं [२५७]निमित्ताणं । [२५८]माणुम्माणपमाणं अट्ठारस भक्खभो[२५९]ज्जाइं ॥ ६० ॥ छट्ठाणवुड्ढि[२६०]हाणी अवहरिउं [२६१]जाइ नेव तीरंति । [२६२]अंतरदीवा जीवाजीवाणं [२६३]अप्पबहुयं च ॥ ६१ ॥ संखा निस्सेसजुगप्पहाणसूरीण वीरजि[२६४]णतित्थे । ओसप्पिणिअन्तिमजिणतित्थअविच्छे[२६५]यमाणं च ॥ ६२ ॥ [२६६]देवाणं पवियारो सरूवमट्ठण्ह [२६७]कण्हराईणं । सज्झायस्स [२६८]अकरणं नंदीसरदीवठिइ[२६९]भणणं ॥ ६३ ॥ [२७०]लद्धीओ [२७१]तव [२७२]पायालकलस आहारग[२७३]स्ससरूवं च । देसा [२७४]अणायरिया [२७५]आरिया य सिद्धेगतीस[२७६]गुणा ॥ ६४ ॥ तेसट्ठीदारगाहाओ ॥

समयसमुद्धरियाणं आसत्थसमत्तिमेसि दाराणं । नामुक्कित्तणपुव्वा तव्विसयवियारणा नेया ॥ ६५ ॥

मप्रवर्तिनीनामानि वक्तव्यानि ९, तथा अर्हत्त्वार्जने—तीर्थकरपदोपार्जने यानि स्थानानि—कारणानि तानि च वक्तव्यानि, **ठाणा** इति प्राकृतशैल्या पुंसा निर्देशः १०, तथा जिनानां जनन्यो—मातरो जनकाश्च—पितरस्तेषां नामानि वक्तव्यानि ११, तथा तेषामेव गुणशेषाणां कस्यां गतौ गमनमिति गतिर्वक्तव्या १२, इति तृतीयगाथायामष्टमादीनि द्वादशान्तानि पञ्च द्वाराणि भणितानि ॥ ४ ॥ उत्कृष्टजघन्याभ्यां पदाभ्यामिति गम्यं विहरत्तीर्थनाथानां सङ्ख्या भणनीया, कियन्त उत्कृष्टतो विहरमाणास्तीर्थनाथा एककालं लभ्यन्ते? जघन्यतश्च कियन्तः? १३, तथा 'जम्मसमय'त्ति जन्मसमयेऽपि सङ्ख्या उत्कृष्टजघन्यका—उत्कृष्टजघन्यभवा तेषां—तीर्थनाथानां [सङ्ख्या] भणनीया, एककालमुत्कृष्टतः कियन्तः कर्मभूमिषु ते जायन्ते कियन्तश्च जघन्यतः १४, इति चतुर्थगाथायां त्रयोदशचतुर्दशस्वरूपं द्वारद्वयमभिहितम् ॥ ५ ॥ अत्र जिनशब्दात् प्राकृतशैल्या षष्ठीबहुवचनं लुप्तं, ततो जिनानां सम्बन्धिनो गणधराश्च मुनयश्च श्रमण्यश्च वैकुर्विकाश्च वादिनश्च अवधयश्च केवलिनश्चेति द्वन्द्वसमाहारे गणधरमुनिश्रमणीवैकुर्विकवाद्यवधिकेवलि(नस्त)तस्येति, ततश्च गाथापर्यन्तवर्ति 'संखाउ' इतिशब्दसम्बन्धाज्जिनानां—ऋषभादीनां प्रत्येकं ये गणधरास्तेषां सङ्ख्या भणनीया १५, तथा तेषामेव ये मुनयः—साधवस्तेषां सङ्ख्या १६, तथा तेषामेव याः श्रमण्यो—व्रतिन्यस्तासां सङ्ख्या १७, तथा 'विकुर्व विक्रियाया'मिति धातुगणे धातुः विकुर्वणमिति 'हलश्चे'ति (पा० ३–३–१२१) घञि च विकुर्वस्तेन चरन्ति 'तेन चरती'ति (पा० ४–४–८ चरति) ठकि 'ठस्येक' (पा० ७–३–५०) इति इकादेशे च वैकुर्विकास्तेषां सङ्ख्या १८, तथा वादिनां देवासुरैरप्यजेयानां सङ्ख्या १९, तथा अवध्यवधिमतोरभेदादवधीनां—अवधिज्ञानवतां सङ्ख्या २०, तथा केवलिनां सङ्ख्या २१, तथा मनोज्ञानिनां—मनःपर्यवज्ञानिनां सङ्ख्या २२, तथा चतुर्दशपूर्विणां—चतुर्दशपूर्वधराणां सङ्ख्या २३, तथा श्राद्धानां—श्रावकाणां २४, तथा श्राद्धिकानां—श्राविकाणां सङ्ख्या वक्तव्या २५, इति पञ्चमगाथायां पञ्चदशा-

दीनि पञ्चविंशतितमान्तान्येकादश द्वाराण्यभिहितानि ॥ ६ ॥ जिनानां यक्षास्तथा देव्यः—शासनदेवताः तथा तनुमानं—शरीरप्रमाणं २६-२७-२८, तथा लाञ्छनानि—चिह्नानि २९, तथा वर्णा—रक्तादयः ३०, तथा व्रतस्य परिवारः—कः कियता परिवारेण सह व्रतमग्रहीदिति ३१, तथा सर्वायुष्कं ३२, चः समुच्चये तथा शिवगमनपरिवारो—मोक्षगमनसमये कः कियता परिवारेण तत्र गत इति वाच्यं ३३, एवं षष्ठगाथायां षड्विंशतितमादीनि त्रयस्त्रिंशत्तमान्तान्यष्टौ द्वाराण्यभिहितानि ॥ ७ ॥ जिनानां निर्वाणगमने यत्स्थानं तदभिधेयं ३४, तथा जिनान्तराणि—एकस्माज्जिनादपरो जिनः कियता कालव्यवधानेन सिद्ध इत्येवंरूपाणि ३५ चः समुच्चये, तथा तीर्थव्यवच्छेदः—चतुर्वर्णश्रमणसङ्घस्य व्यवच्छेदः कदा कुत्र कथं जात इति भणनीयं ३६, तथा दश चतुरशीतिर्वा ज्ञानदर्शनादीनामायं—लाभं शातयन्तीत्याशातना वाच्याः ३७-३८, तथा प्रातिहार्याणि—प्रतिहारकर्माणि तीर्थकृतामभिधेयानि ३९, इति सप्तमगाथायां चतुस्त्रिंशत्तमादीनि एकोनचत्वारिंशत्तमान्तानि षट् द्वाराणि सूत्रितानि ॥ ८ ॥ चतुस्त्रिंशदतिशयानामर्हतो वाच्या ४० तथा दोषा अष्टादश आर्हन्त्यप्रतिपन्थिनो भणनीयाः ४१, तथाऽर्हच्चतुष्कं—नामार्हदादिभेदेनाभिधेयं ४२, तथा निष्क्रमणे—दीक्षायां ४३ तथा ज्ञाने—केवलालोकोत्पत्तौ ४४ तथा निर्वाणे च—मोक्षगमनसमये जिनानां तपांसि वाच्यानि ४५, इत्यष्टमगाथायां चत्वारिंशत्तमादीनि पञ्चचत्वारिंशत्तमान्तानि षट् द्वाराणि सूत्रितानि ॥ ९ ॥ भाविनां—अग्रेतनोत्सर्पिण्यां भविष्यतां जिनेश्वराणां जीवा वक्तव्याः ४६, तथा सङ्ख्या ऊर्ध्वाधस्तिर्यग्लोकसिद्धानां—कियन्त ऊर्ध्वलोके कियन्तोऽधोलोके कियन्तश्च तिर्यग्लोके एकसमये सिद्ध्यन्तीति प्रतिपाद्यं ४७, तथा एकस्मिन् समये सिद्धानां सङ्ख्या अभिधेया एकस्मिन् समये कियन्तः सिद्ध्यन्तीत्यर्थः ४८, तथा ते सिद्धाः पञ्चदशभिर्भेदैः प्रतिपाद्या ४९ इति नवमगाथायां षट्चत्वारिंशदादीन्येकोनपञ्चाशत्तमान्तानि चत्वारि द्वाराण्युक्तानि ॥ १० ॥ अवगाहन्ते जीवा यस्यामित्यौ-

णादिकेऽनप्रत्ययेऽवगाहना—तनुस्तस्यामुत्कृष्टायामेकसमयेन कियन्तः सिद्ध्यन्ति ? जघन्यायां तस्यां कियन्तः ? मध्यमायां च कियन्त इत्यभिधेयं ५० चः समुच्चये, तथा गृहिलिङ्गे—गृहस्थलिङ्गे अन्यलिङ्गे—जटाधराद्यन्यतीर्थिकलिङ्गे स्वलिङ्गे च—रजोहरणादिलिङ्गे एकसमयेन सिद्ध्यतां सङ्ख्या भणनीया ५१ इति दशमगाथायां पञ्चाशत्तमैकपञ्चाशत्तमे द्वे द्वारे अभिहिते ॥ ११ ॥ द्वात्रिंशदादयः आदिशब्दादष्टचत्वारिंशत्षष्टिद्विसप्ततिचतुरशीतिषण्णवतिद्व्युत्तरशताष्टोत्तरशतानि गृह्यन्ते, ततश्चैकद्व्यादयो द्वात्रिंशदाद्यन्ताः सिद्ध्यन्ति निरन्तरं यावदष्टभिरधिकं शतं अष्टभिः समयैरेकैकोनैर्यावदेकसमयान्तं, अयमर्थः—एकस्मिन् समये एको द्वौ वा यावद् द्वात्रिंशत्सिद्ध्यन्ति एवं द्वितीयादिष्वपि समयेषु अष्टमान्तेषु ततोऽवश्यमन्तरं, तथा पूर्ववत् त्रयस्त्रिंशदादय एककादयो वा सप्त समयान् यावन्निरन्तरं सिद्ध्यन्ति ततोऽवश्यमन्तरमित्यादि स्वरूपं भणनीयं ५२ इत्येकादशगाथायां द्विपञ्चाशमेकं द्वारं ॥ १२ ॥ स्त्रीवेदे पुंवेदे नपुंसकवेदे च सिद्ध्यतां सङ्ख्या वाच्या ५३, तथा सिद्धानां संस्थानं ५४, तथा अवस्थितिस्थानं च सिद्धानां कथनीयं ५५, इत्यस्यां द्वादशगाथायां त्रिपञ्चाशच्चतुष्पञ्चाशत्पञ्चपञ्चाशद्रूपाणि त्रीणि द्वाराणि ॥ १३ ॥ अवगाहना—तनुः चः समुच्चये तेषां—सिद्धानामुत्कृष्टा ५६ तथा मध्यमा ५७ तथा जघन्या वाच्या ५८, तथा नामानि—अभिधानानि चतसृणामपि हुशब्दः प्राकट्ये शाश्वतजिननाथप्रतिमानां ५९ इति त्रयोदशगाथायां षट्पञ्चाशादीनि एकोनषष्ट्यन्तानि चत्वारि द्वाराणि ॥ १४ ॥ उपकरणानां सङ्ख्या जिनानां—जिनकल्पिकानां ६० तथा स्थविराणां—गच्छवासिव्रतिनां ६१ तथा साध्वीनां च वाच्या ६२, चः समुच्चये, तथा जिनकल्पिकानां सङ्ख्योत्कृष्टा एकस्यां वसतौ वाच्या ६३ इति चतुर्दशगाथायां षष्टितमादीनि त्रिषष्ट्यन्तानि चत्वारि द्वाराणि ॥ १५ ॥ षट्त्रिंशत् सूरीणां—आचार्याणां गुणा वक्तव्याः ६४, तथा विनयो द्विपञ्चाशद्भेदप्रतिमिश्रो वाच्यः ६५, तथा चरणं सप्ततिभेदं वाच्यं ६६, तथा करणं सप्ततिभेदं

वाच्यं ६७, तथा जङ्घाचारणानां विद्याचारणानां च गमनशक्तिरभिधेया ६८ इति पञ्चदशगाथायां चतुःषष्ट्यादीनि अष्टषष्ट्यन्तानि पञ्च द्वाराणि ॥ १६ ॥ परिहारविशुद्धिकानां परिहारविशुद्धितपसो वा स्वरूपं भणनीयं ६९, तथा 'अहालंद'त्ति यथालन्दकल्पकारिणो वाच्याः ७०, तथा प्रतिपन्नानशनस्य साधोर्ये निर्यामका–आराधनाकारकास्तेषामष्टचत्वारिंशद्गणनीया ७१, तथा पञ्चविंशतिर्भावनाः शुभाः ७२ तथा अशुभाः पञ्चविंशतिर्वाच्याः ७३ इति षोडशगाथायामेकोनसप्ततितमादीनि त्रिसप्तत्यन्तानि पञ्च द्वाराणि ॥ १७ ॥ सङ्ख्या महाव्रतानां–प्राणातिपातविरमणादीनां ७४, तथा कृतिकर्मणां–वन्दनकानां दिनमध्ये सङ्ख्या ७५, चः समुच्चये, तथा क्षेत्रे–भरतादौ चारित्राणां–सामायिकादीनां सङ्ख्या ७६, तथा स्थितकल्पः ७७ तथाऽस्थितकल्पो वाच्यः ७८, चः समुच्चये, इति सप्तदश-गाथायां चतुःसप्तत्यादीनि अष्टसप्तत्यन्तानि पञ्च द्वाराण्यभिहितानि ॥ १८ ॥ चैत्यानि–प्रतिमारूपाणि ७९ तथा पुस्तकानि ८० तथा दण्डकाः ८१ तृणानि ८२ तथा चर्माणि ८३ तथा दूष्याणि–वस्त्राणि ८४ एतानि पञ्च पञ्च प्रत्येकं वक्तव्यानि तथा पञ्चावग्रहभेदाः ८५, तथा परि–सर्वतः सह्यन्ते मोक्षार्थिभिरिति परीषहाः ८६, तथा मण्डल्यः सप्त वाच्याः ८७ इत्यष्टादशगाथा-यामेकोनाशीत्यादीनि सप्ताशीत्यन्तानि नव द्वाराणि भणितानि ॥ १९ ॥ दशानां स्थानानां व्यवच्छेदः ८८, तथा क्षपकश्रेणिः ८९, तथोपशमश्रेणिः ९०, तथा स्थण्डिलानां–साधुयोग्यभूविशेषाणां सहस्रोऽधिकश्चतुःसहितविंशत्या चतुर्विंशत्यधिकसहस्र इत्यर्थः ९१ इत्ये-कोनविंशतितमगाथायां अष्टाशीत्यादीनि एकनवत्यन्तानि चत्वारि द्वाराणि ॥ २० ॥ पूर्वाणां नामानि पदसङ्ख्यया संयुतानि–युक्तानि चतु-र्दशापि कथनीयानि ९२, तथा निर्ग्रन्थाः–साधवः ९३ तथा श्रमणा–भिक्षुकाः ९४ प्रत्येकं पञ्च पञ्चैव वक्तव्या, इति विंशतितमगाथायां द्विनवतित्रिनवतिचतुर्नवतिद्वाराणि त्रीणि ॥ २१ ॥ ग्रासैषणानां पञ्चकं ९५, तथा पिण्डे पाने च एषणाः सप्त ९६, तथा भिक्षाचर्या-

विपये वीथीनां—मार्गाणामष्टकं ९७, तथा प्रायश्चित्तानि वाच्यानि ९८ इत्येकविंशतितमगाथायां पञ्चनवत्यादीनि अष्टनवत्यन्तानि चत्वारि द्वाराणि ॥ २२ ॥ समाचारी ओघे—सामान्ये ९९ तथा पदविभागे—छेदग्रन्थोक्तस्वरूपे १०० तथा दशविधचक्रवाले—प्रतिदिनकरणीयसमाचारे संख्या वाच्या १०१, तथा निर्ग्रन्थत्वं—साधुविशेपत्वं पञ्चवारान् भववासे—संसारावस्थाने १०२ इति द्वाविंशतितमगाथायां नवनवत्यादीनि द्व्यधिकशततमान्तानि चत्वारि द्वाराणि ॥ २३ ॥ साधूनां विहारस्वरूपं १०३, तथा अप्रतिवद्धश्च स विहारो विधातव्यः १०४, तथा जातकल्पोऽजातकल्पश्च वक्तव्यः, जाताः—गीतार्था भण्यन्ते अजाताश्च—अगीतार्थाः १०५, तथा परिष्ठापनोच्चारकरणयोर्दिक् १०६ इति त्रयोविंशतितमगाथायां त्र्यधिकशततमादीनि षडुत्तरशततमान्तानि द्वाराणि चत्वारि ॥ २४ ॥ अष्टादश पुरुपेपु १०७ तथा विंशतिः स्त्रीपु १०८ तथा दश नपुंसकेषु प्रव्राजनानर्हाः १०९, तथा विकलाङ्गस्वरूपाश्च ११० इति चतुर्विंशतितमगाथायां सप्तोत्तरशततमादीनि दशोत्तरशततमान्तानि द्वाराणि चत्वारि ॥ २५ ॥ यत् मूल्यं यस्य तत् यन्मूल्यं यतीनां—मुनीनां कल्प्यं—कल्पनीयं वस्त्रं १११, तथा शय्यातरस्य पिण्डश्च कल्प्योऽकल्प्यो वेति ११२, तथा यावति सूत्रे सति सम्यक्त्वमवश्यम्भावि ११३, तथा निर्ग्रन्था अपि चतुर्गतिका भवन्ति, चतस्रो नरकादयो गतयो येपां ते चतुर्गतिकाः ११४ इति पञ्चविंशतितमगाथायामेकादशोत्तरशततमादीनि चतुर्दशोत्तरशततमान्तानि चत्वारि द्वाराणि ॥ २६ ॥ क्षेत्रे तथा मार्गे तथा काले तथा प्रमाणे चातीतं—भणितप्रमाणात् क्षेत्रादेरतिक्रान्तं अकल्प्यं यत् तद्भणनीयं ११५—११६—११७—११८, तथा दुःखशय्याचतुष्कं ११९, तथा सुखशय्याचतुष्कं १२०, तथा त्रयोदश क्रियास्थानानि १२१ इति षड्विंशतितमगाथायां पञ्चदशोत्तरशततमादीनि एकविंशत्युत्तरशततमान्तानि सप्त द्वाराणि ॥ २७ ॥ एकस्मिन् भवे बहुपु च भवेपु आकर्षा—विरूपाध्यवसायविशेपाश्चतुर्विधेऽपि सामायिके श्रुतसामायिक—सम्यक्त्वसामायिक—देशविरति०—

सर्वविरति०लक्षणे कियन्तो भवन्ति ? १२२, तथा शीलस्याङ्गभूताः–कारणभूता ये पदार्थास्तेषामष्टादशसहस्रा वाच्याः १२३, तथा नयानां–नैगमादीनां सप्तकं च १२४ इति सप्तविंशतितमगाथायां द्वाविंशत्युत्तरत्रयोविंशत्युत्तरचतुर्विंशत्युत्तरशततमानि त्रीणि द्वाराणि ॥२८॥ वस्त्रग्रहणस्य विधानं १२५, तथा व्यवहारा–आगमादयः पञ्च १२६, तथा यथाजातं–चोलपट्टकादि १२७, तथा निशि जागरणे विधिः १२८, तथा आलोचनादायकस्य गुरोरन्वेषा–अन्वेपणा १२९ इत्यष्टाविंशतितमगाथायां पञ्चविंशत्युत्तरशततमादीनि एकोनत्रिंशदुत्तरशततमान्तानि पञ्च द्वाराणि ॥ २९ ॥ गुरुप्रमुखाणां क्रियतेऽशुद्धैः शुद्धैश्च वस्तुभिर्यावन्तं कालं प्रतिजागरणमिति शेपः १३०, तथा उपधेर्धावनकालः–प्रक्षालनप्रस्तावः १३१, तथा भोजनस्य भागाः १३२, तथा वसतिशुद्धिः १३३ इत्येकोनत्रिंशत्तमगाथायां त्रिंशदुत्तरशततमादीनि त्रयस्त्रिंशदुत्तरशततमान्तानि चत्वारि द्वाराणि ॥ ३० ॥ संलेखना–शरीरशोषणा द्वादश वर्षाणि १३४, तथा वृपभेण–बलीवर्देन कल्पितेन वसतेर्ग्रहणं १३५, तथोष्णस्य प्रासुकस्यापि जलस्य सचित्तताकालः १३६, उष्णं–प्रासुकमपि जलं जातं कियता कालेन पुनः सचित्तं भवतीत्यर्थः, इति त्रिंशत्तमगाथायां चतुस्त्रिंशदुत्तरपञ्चत्रिंशदुत्तरषट्त्रिंशदुत्तरशततमानि त्रीणि द्वाराणि ॥ ३१ ॥ इह षष्ठयाः पञ्चम्यर्थत्वात् तिरश्च्यो तिरश्चां मानव्यो मानवानां देव्यो देवानां यद्गुणाः, यो गुणो–गुणकारो यासां ताः तथा, यावता गुणकारेण तिर्यक्पुरुषादिभ्योऽधिकास्तिरश्च्यादय इत्यर्थः, यावन्मात्रेणाधिकाश्च सर्वाः स्त्रियो गुणकारादप्युद्धरिताः १३७ इत्येकत्रिंशत्तमगाथायां सप्तत्रिंशदुत्तरशततममेकं द्वारम् ॥ ३२ ॥ आश्चर्याणां दशकं १३८, तथा चतस्रो भाषाः १३९, तथा वचनानां षोडशकं १४०, तथा मासानां पञ्च भेदाः १४१, तथा भेदाः–प्रकारा वर्षाणां पञ्चैव १४२ इति द्वात्रिंशत्तमगाथायामष्टत्रिंशदुत्तरशततमादीनि द्विचत्वारिंशदुत्तरशततमान्तानि पञ्च द्वाराणि ॥ ३३ ॥ लोकस्वरूपं १४३, तथा संज्ञास्तिस्रः १४४ तथा चतस्रो वा १४५ तथा दश वा

१४६ पञ्चदश वा १४७, तथा सप्तषष्टिलक्षणभेदविशुद्धं च सम्यक्त्वम् १४८ इति त्रयस्त्रिंशत्तमगाथायां त्रिचत्वारिंशदुत्तरशततमा-
दीनि अष्टचत्वारिंशदुत्तरशततमान्तानि षड् द्वाराणि ॥ ३४ ॥ एकविधमग्रस्थितसम्यक्त्वशब्दसम्बन्धात्सम्यक्त्वं, प्राकृतशैल्या प्रथमैक-
वचनमत्राग्रेतनपदेषु च लुप्तं द्रष्टव्यं, तथा द्विविधं त्रिविधं चतुर्धा पञ्चविधं दशविधं द्रव्यादिकारकादिउपशमभेदैर्वा सम्यक्त्वं वाच्यं
१४९, इति चतुस्त्रिंशत्तमगाथायामेकोनपञ्चाशदुत्तरशततममेकं द्वारम् ॥ ३५ ॥ कुलकोटीनां सङ्ख्या जीवानां सम्बन्धिनी भणनीया
१५०, तथा जीवानामेव सम्बन्धिनी योनिलक्षचतुरशीतिः १५१, तथा "त्रैकाल्यं द्रव्यषट्क"मित्यादिवृत्तस्य योऽर्थस्तस्य विवरणं १५२,
तथा श्राद्धानां—श्रावकाणां प्रतिमा १५३ इति पञ्चत्रिंशत्तमगाथायां पञ्चाशदुत्तरशततमादीनि त्रिपञ्चाशदुत्तरशततमान्तानि चत्वारि
द्वाराणि ॥ ३६ ॥ धान्यानामबीजत्वं १५४, तथा क्षेत्रातीतानामचित्तत्वं १५५, तथा धान्यानां चतुर्विंशतिर्नामतः कथ्या १५६, तथा
मरणं सप्तदशभेदं १५७, चः समुच्चये, इति षट्त्रिंशत्तमगाथायां चतुष्पञ्चाशदुत्तरशततमादीनि सप्तपञ्चाशदुत्तरशततमान्तानि चत्वारि
द्वाराणि ॥ ३७ ॥ पल्योपमस्य १५८ तथा न तरीतुं शक्यत इत्यतरः—सागरः एकदेशेन समुदायावगमात् सागरोपमं तस्य १५९
तथा अवसर्पिण्याः स्वरूपं १६० तथा उत्सर्पिण्याः स्वरूपं १६१ तथा द्रव्ये क्षेत्रे काले भावे च पुद्गलपरावर्तो भणनीयः १६२ इति
सप्तत्रिंशत्तमगाथायामष्टपञ्चाशदुत्तरशततमादीनि द्विषष्ट्युत्तरशततमान्तानि पञ्च द्वाराणि ॥ ३८ ॥ पञ्चदश कर्मभूमयो यत्र तीर्थकरादय
उत्पद्यन्ते १६३, तथा अकर्मभूमयस्त्रिंशद् यत्र धर्मादिकं न किञ्चिद् ज्ञायते १६४, तथा अष्टौ मदाः १६५, तथा द्वे शते त्रिचत्वा-
रिंशदधिके भेदाः प्राणातिपातस्य १६६ इत्यष्टत्रिंशत्तमगाथायां त्रिषष्ट्युत्तरशततमादीनि षट्षष्ट्युत्तरशततमान्तानि चत्वारि द्वाराणि ॥ ३९ ॥
परिणामानाम्—अध्यवसायविशेषाणामष्टोत्तरशतं १६७, तथा ब्रह्मचर्यमष्टादशभेदं १६८, तथा कामानां चतुर्विंशतिः १६९, तथा दश

प्राणाः १७०, तथा दश च कल्पद्रुमाः १७१ इत्येकोनचत्वारिंशत्तमगाथायां सप्तषष्ट्युत्तरशततमादीनि एकसप्तत्युत्तरशततमान्तानि पञ्च द्वाराणि ॥ १४० ॥ नरकास्तथा नारकाणामावासाः १७२–१७३, तथा वेदना नारकाणां १७४, तथा तेषामेवायुः १७५, तथा तेषामेव तनुमानं १७६, तथा तेषामेवोत्पत्तिनाशयोर्विरहः १७७, तथा तेषामेव लेश्याः १७८, तथा तेषामेवावधिः १७९, तथा परमाधर्म्माः—पारमाधार्मिकाः १८०, चः समुच्चये, इति चत्वारिंशत्तमगाथायां द्विसप्तत्युत्तरशततमादीनि अशीत्युत्तरशततमान्तानि नव द्वाराणि ॥४१॥ नरकादुद्धृतानां लब्धेः—तीर्थकरत्वादेः सम्भवः १८१, तथा तेषु नरकेषु येषां जीवानामुपपातः—उत्पादः १८२, तथा सङ्ख्योत्पद्यमानानामेकस्मिन् समये नरकेषु १८३, तथा सैव नरकेभ्य उद्वर्तमानानामेकस्मिन् समये १८४, इत्येकचत्वारिंशत्तमगाथायामेकाशीत्युत्तरशततमादीनि चतुरशीत्युत्तरशततमान्तानि चत्वारि द्वाराणि ॥ ४२ ॥ कायस्थितिः तथा भवस्थितिरेकेन्द्रियाणां—पृथिव्यप्तेजोवायुवनस्पतीनां 'विगल'त्ति 'एकदेशे समुदायोपचारात्' विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियाणां संज्ञिनामसञ्ज्ञिनां च जीवानां १८५–१८६, तथैतेषामेव तनुप्रमाणं—शरीरप्रमाणं १८७, तथा 'इंदियसरूवविसय'त्ति इन्द्रियाणां स्वरूपं—आकारविशेषादिलक्षणं विषयाश्च तेषामेव वाच्याः, अत्र च समाहारैकत्वेऽपि प्राकृतत्वात्पुंसा निर्देशः १८८, तथा लेश्याश्चैतेषाम् १८९, इति द्विचत्वारिंशत्तमगाथायां पञ्चाशीत्युत्तरशततमादीनि एकोननवत्युत्तरशततमान्तानि पञ्च द्वाराणि ॥ ४३ ॥ एतेषामेकेन्द्रियविकलेन्द्रियसंज्ञिजीवानां यत्र स्थाने गतिः १९०, तथा येभ्यः स्थानेभ्य आगतिरेतेषां १९१, तथा एतेषामेवोत्पत्तिमरणयोर्विरहः—अन्तरमेकस्मिन्नुत्पन्ने मृते वा सति भूयः कियता कालेनान्य उत्पद्यते म्रियते वेत्येवंलक्षणं १९२, तथैतेषामेकसमयेन जायमानानां म्रियमाणानां च सङ्ख्या १९३ चः समुच्चये, इति त्रिचत्वारिंशत्तमगाथायां नवत्युत्तरशततमादीनि त्रिनवत्युत्तरशततमान्तानि चत्वारि द्वाराणि ॥ ४४ ॥ भवनपतिव्यन्तरज्योतिषिकविमानवासि-

देवानां स्थितिः १९४, तथा भवनानि १९५, तथा देहप्रमाणं १९६, तथा लेश्या १९७, तथाऽवधिज्ञानं १९८, चः समुच्चये, इति चतुश्चत्वारिंशत्तमगाथायां चतुर्नवत्युत्तरशततमादीनि अष्टनवत्युत्तरशततमान्तानि पञ्च द्वाराणि ॥ ४५ ॥ एतेषां भवनपत्यादीनामुत्पद्यमानानां विरहः १९९, तथोद्वर्तमानानां विरहः २००, तथा एतेषामेकसमयेन उत्पद्यमानानां उद्वर्तमानानां च सङ्ख्या २०१, तथैतेषामुद्वृत्तानां यस्मिन् स्थाने गतिः २०२, तथा यतः स्थानादागतिरेतेषाम् २०३ इति पञ्चचत्वारिंशत्तमगाथायां नवनवत्युत्तरशततमादीनि त्र्युत्तरद्विशततमान्तानि पञ्च द्वाराणि ॥४६॥ विरहः–अन्तरं सिद्धिगतेः २०४, तथा जीवानामाहारग्रहणोच्छ्वासाः २०५, तथा त्रीणि शतानि त्रिषष्टानि पाखण्डिनां २०६, तथाऽष्टौ प्रमादाः २०७, इति षट्चत्वारिंशत्तमगाथायां चतुरुत्तरद्विशततमादीनि सप्तोत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ४७ ॥ भरतक्षेत्रस्याधिपाः २०८, तथा हलधरा–वलदेवाः २०९, तथा हरयो–वासुदेवाः २१०, तथा प्रतिवासुदेवाः २११, तथा रत्नानि चतुर्दश २१२, तथा नव निधयः २१३, तथा जीवानां सङ्ख्या २१४, इति सप्तचत्वारिंशत्तमगाथायामष्टोत्तरद्विशततमादीनि चतुर्दशोत्तरद्विशततमान्तानि सप्त द्वाराणि ॥ ४८ ॥ कर्माण्यष्टौ २१५, तथा तेषां कर्मणामुत्तरप्रकृतीनामष्टपञ्चाशदुत्तरं शतं २१६, तथा कर्मणां वन्धोदययोरुदीरणासत्तयोश्च किमपि स्वरूपम् २१७ इत्यष्टचत्वारिंशत्तमगाथायां पञ्चदशोत्तरषोडशोत्तरसप्तदशोत्तरद्विशततमादीनि त्रीणि द्वाराणि ॥ ४९ ॥ कर्मणां स्थितिः साबाधा–अबाधा–अनुदयकालः सह अबाधया साबाधा २१८, तथा द्विचत्वारिंशत्पुण्यप्रकृतयः २१९, तथा द्व्यशीतिः पापप्रकृतयः २२०, तथा भावषट्कं सप्रतिभेदम् २२१ इत्येकोनपञ्चाशत्तमगाथायामष्टादशोत्तरद्विशततमादीनि एकविंशत्युत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ५० ॥ जीवानां तथा अजीवानां तथा गुणानां–गुणस्थानानां तथा मार्गणास्थानानां प्रत्येकं चतुर्दशकं २२२–२२३–२२४–२२५, तथा उपयोगा द्वादश २२६, तथा योगाश्च

पञ्चदश वाच्याः २२७ इति पञ्चाशत्तमगाथायां द्वाविंशत्युत्तरद्विशततमादीनि सप्तविंशत्युत्तरद्विशततमान्तानि षट् द्वाराणि ॥ ५१ ॥
परलोके गतिर्गुणस्थानकेषु मिथ्यात्वादिषु सत्सु २२८, तथा तेषां—गुणस्थानकानां कालपरिमाणं २२९, तथा नारकतिर्यग्नरसुराणामु-
त्कृष्टो विकुर्वणाकालः २३० इत्येकपञ्चाशत्तमगाथायामष्टाविंशत्युत्तरैकोनत्रिंशदुत्तरत्रिंशदुत्तरद्विशततमानि त्रीणि द्वाराणि ॥ ५२ ॥ सप्त
समुद्घाताः २३१, तथा षट् पर्याप्तयः २३२; तथाऽनाहारकाश्चत्वारः २३३, तथा सप्त भयस्थानानि २३४, तथा षट् भाषा अप्र-
शस्ताः २३५; इति द्विपञ्चाशत्तमगाथायामेकत्रिंशदुत्तरद्विशततमादीनि पञ्चत्रिंशदुत्तरद्विशततमान्तानि पञ्च द्वाराणि ॥ ५३ ॥ भङ्गा-
भेदा गृहिव्रतानां २३६, तथा अष्टादश पापस्थानान्यपि २३७, तथा मुनिगुणानां सप्तविंशतिः २३८, तथा एकविंशतिः श्रावकगुणानां
२३९ इति त्रिपञ्चाशत्तमगाथायां षट्त्रिंशदुत्तरद्विशततमादीनि एकोनचत्वारिंशदुत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ५४ ॥ तिर-
श्चीनामुत्कृष्टा गर्भस्थितिः २४०, तथा मानुषीणामुत्कृष्टा गर्भस्थितिः २४१, तथा गर्भस्य च कायस्थितिः—कायस्यावस्थानं २४२, तथा
गर्भस्थितजीवस्याहारः २४३, इति चतुष्पञ्चाशत्तमगाथायां चत्वारिंशदुत्तरद्विशततमादीनि त्रिचत्वारिंशदुत्तरद्विशततमान्तानि चत्वारि
द्वाराणि ॥ ५५ ॥ स्त्रीसम्बन्धि यदृतुसमये रुधिरं पुरुषसम्बन्धि च शुक्रं तयोर्योगे—मीलने सति यावता कालेन गर्भसम्भूतिस्तद्वाच्यं
२४४, तथा यावन्तश्च पुत्रा गर्भे २४५, तथा यावन्तः पितरश्च एकस्य पुत्रस्योत्पादने इति शेषः २४६ एवं पञ्चपञ्चाशत्तमगाथायां
चतुश्चत्वारिंशत्पञ्चचत्वारिंशत्षट्चत्वारिंशदुत्तरद्विशततमानि त्रीणि द्वाराणि ॥ ५६ ॥ महिला गर्भस्यायोग्या यावता कालेन भवति,
अबीजश्च—अवीर्यश्च पुरुषो यावता कालेन सम्पद्यते, तथा शुक्ररुधिरौजःपृष्ठकरण्डकपांशुलिकादीनां सर्वेषामपि शरीरस्थितानां परिमाणं
वक्तव्यं २४७—२४८, इति षट्पञ्चाशत्तमगाथायां सप्तचत्वारिंशदुत्तराष्टचत्वारिंशदुत्तरद्विशततमे द्वे द्वारे ॥ ५७ ॥ सम्यक्त्वचारित्रा-

दीनामुत्तमगुणानामेकदा प्राप्तानां परिपतितानां सतां पुनर्लाभेऽन्तरं कियदुत्कृष्टं भवति ? तथा न लभन्ते मानुपत्वं सत्त्वा—जीवा येऽनन्तरमुद्धृताः २४९—२५० इति सप्तपञ्चाशत्तमगाथायामेकोनपञ्चाशदुत्तरपञ्चाशदुत्तरद्विशततमे द्वे द्वारे ॥ ५८ ॥ पूर्वांगस्य—सङ्ख्याविशेषस्य परिमाणं २५१, तथा पूर्वस्य परिमाणं २५२, तथा लवणस्य—एकदेशेन समुदायावगमाल्लवणसमुद्रस्य सम्बन्धिनी या शिखा मध्ये ऊर्ध्वा वर्तते तस्या मानं २५३, तथा उत्सेधाङ्गुलाऽऽत्माङ्गुलप्रमाणाङ्गुलानां प्रमाणानि २५४, इत्यष्टपञ्चाशत्तमगाथायामेकपञ्चाशदुत्तरद्विशततमादीनि चतुष्पञ्चाशदुत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ५९ ॥ तमस्कायस्य स्वरूपं २५५, तथाऽनन्तानां षट्कं २५६, तथाऽष्टकं निमित्तानां २५७ तथा मानं चोन्मानं च प्रमाणं च वाच्यं २५८, तथाऽष्टादश भक्ष्यभोज्यानि, भक्ष्यन्त इति भक्ष्याणि—गुडधानादीनि भुज्यन्त इति भोज्यानि—शाल्योदनादीनि २५९ इत्येकोनषष्टितमगाथायां पञ्चपञ्चाशदुत्तरद्विशततमादीनि एकोनषष्ट्युत्तरद्विशततमान्तानि पञ्च द्वाराणि ॥ ६० ॥ षट्स्थानेषु वृद्धिर्हानिश्च वस्तूनां विधेया २६०, तथाऽपहर्तुं—अन्यत्र देशान्तरे नेतुं देवादिभिर्यानि न शक्यन्ते २६१, तथा अन्तरद्वीपा वक्तव्याः २६२, तथा जीवाजीवानामल्पबहुत्वं २६३ चः समुच्चये, इति षष्टितमगाथायां षष्ट्युत्तरद्विशततमादीनि त्रिषष्ट्युत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ६१ ॥ सङ्ख्या युगप्रधानसूरीणां श्रीवीरजिनस्य तीर्थे, तथा उत्सर्पिण्यामन्तिमजिनसम्बन्धितीर्थस्याविच्छेदमानं २६४—२६५ चः समुच्चये, इत्येकषष्टितमगाथायां चतुःषष्टिपञ्चषष्ट्युत्तरद्विशततमे द्वे द्वारे ॥ ६२ ॥ देवानां प्रविचारः—अब्रह्मसेवा २६६, तथा स्वरूपमष्टानां कृष्णराजीनां भणनीयं २६७, तथा स्वाध्यायस्याकरणं कदेति शेषः २६८, तथा नन्दीश्वराभिधानस्याष्टमद्वीपस्य सम्बन्धिन्याः स्थितेर्भणनं २६९, इति द्वाषष्टितमगाथायां षट्षष्ट्युत्तरद्विशततमादीन्येकोनसप्तत्युत्तरद्विशततमान्तानि चत्वारि द्वाराणि ॥ ६३ ॥ लब्धयः—आमर्षौषध्यादयः २७०, तथा तपांसि—इन्द्रियजयादीनि, पुंसा निर्देशः प्राकृतत्वेन

२७१, तथा पातालकलशाः समुद्रमध्यवर्तिनः २७२ तथा आहारकशरीरस्वरूपं च २७३, तथा देशा अनार्याः २७४, तथा त एवाऽऽर्याः २७५, तथा सिद्धानामेकत्रिंशद्गुणाः २७६, इति त्रिपष्टितमगाथायां सप्तत्युत्तरद्विशततमादीनि पट्सप्तत्युत्तरद्विशततमान्तानि सप्त द्वाराणि ॥ ६४ ॥ समयात्—सिद्धान्तात्समुद्धृतानामाशास्त्रसमाप्ति—शास्त्रसमाप्तिं यावदेषां द्वाराणां नामोत्कीर्तनपूर्वा एतद्वारविपया विचारणा—विवरणरूपा ज्ञेयेति ॥ ६५ ॥ तत्र 'चिइवंदण'त्ति प्रथमद्वारं विवरीतुमाह—

[सोलस पुण आगारा दोसा एगूणवीस उस्सग्गे । छच्चिय निमित्त हुंति य पंचेव य हेयवो भणिया ॥ १ ॥ अहिगारा पुण बारस दंडा पंचेव होंति नायव्वा । तिन्नेव वंदणिज्जा थुइओ पुण होंति चत्तारि ॥ २ ॥ तिन्निनिसीहीएमाइ तीस तह संपयाओ सत्तणऊ । चियवंदणंमि नेयं सत्तणऊसयं तु ठाणाणं ॥ ३ ॥ अगणीओ छिंदिज्ज व वोहीखोहाइदीहडक्को वा । इय एवमाइएहिं अब्भग्गो होज्ज उस्सग्गो ॥ ४ ॥] तिन्नि निसीहिय तिन्नि य पयाहिणा तिन्नि चेव य पणामा । तिविहा पूया य तहा अवत्थतियभावणं चेव ॥ ६६ ॥ तिदिसिनिरिक्खणविरई तिविहं भूमीपमज्जणं चेव । वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥ ६७ ॥ इय दहतियसंजुत्तं वंदणयं जो जिणाण तिकालं । कुणइ नरो उवउत्तो सो पावइ निज्जरं विउलं ॥ ६८ ॥ घरजिणहरजिणपूयावावारच्चायओ निसीहितिगं । पुप्फक्खयत्थुईहिं तिविहा पूया मुणेयव्वा ॥ ६९ ॥ होइ छउ-

(१) अव्याख्याता अननुमताः सोपयोगाश्च गाथा एताः लिखितेष्वादर्शेष्वदृष्टा अपि मुद्रिते दृष्टा इत्यत्र न्यस्ताः.

**मत्थकेवलिसिद्धत्तेहिं जिणे अवत्थतिगं । वेणत्थाऽऽलंबणओ वण्णाइतियं वियाणिज्ञा ॥ ७० ॥ जिणमुद्दा जोगमुद्दा मुत्तासुत्ती उ तिन्नि मुद्दाओ । कायमणोवयणनिरोहणं च तिविहं च पणिहाणं ॥ ७१ ॥ पंचंगो पणिवाओ थयपाढो होइ जोगमुद्दाए । वंदण जिणमुद्दाए पणिहाणं मुत्तसुत्तीए ॥ ७२ ॥ दो जाणू दुन्नि करा पंचमगं होइ उत्तमंगं तु । संमं संपणिवाओ नेओ पंचंगपणिवाओ ॥ ७३ ॥ अन्नोऽन्नंतरअंगुलि कोसागारेहिं दोहिं हत्थेहिं । पेट्टोवरिकुप्परसंठिएहिं तह जोगमुद्दत्ति ॥ ७४ ॥ चत्तारि अंगुलाइं पुरओ ऊणाइं जत्थ पच्छिमओ । पायाणं उस्सग्गे एसा पुण होइ जिणमुद्दा ॥ ७५ ॥ मुत्तासुत्तीमुद्दा समा जहिं दोवि गब्भिया हत्था । ते पुण निलाडदेसे लग्गा अण्णे अलग्गत्ति ॥ ७६ ॥**

'तिन्निनिसीही'त्यादि गाथात्रयं, अत्रैतद्गाथाद्वयप्रतिपादितानि दश च तानि त्रिकाणि च तैः संयुक्तं, 'तियदहसंजुत्त'मिति पाठे त्रिकाणां दशकं तेन संयुक्तमिति व्याख्येयं, वन्दनकं यः कश्चिद्भव्यो जिनानां—तीर्थकृतां त्रिकालं—त्रिसन्ध्यं करोति उपयुक्तः—सोपयोगः सन् स प्राप्नोति सर्वकर्मक्षयकरीं मोक्षलक्ष्मीविधायिनीं च निर्जरां विपुलामिति, कुत्रापि 'सो पावइ सासयं ठाणं' इति पाठः, तत्रापि शाश्वतं स्थानं—मोक्षमित्यर्थः, इति गाथात्रयसमुदायार्थः, विस्तरार्थस्तु प्रतिपदमासां कथयिष्यते । अत्र च चैत्यवन्दनं कीदृशेन विधिना विधेयमिति विधिस्वरूपमेव निरूपयिष्यते न पुनश्चैत्यवन्दनसूत्रव्याख्या करिष्यतेऽतिविस्तरभयात्, सा च ललितविस्तरादिभ्यो बुद्धिमद्भिर्बोद्धव्या, एवमन्यत्रापि वन्दनकसूत्रादौ प्रायेण यथास्थानं विज्ञेयं । तत्र चैत्यानि वन्दितुकामः कश्चिन्महर्धिको राजादिर्भवेत् सामान्यवि-

'सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुईए सव्वबलेणं सव्वपोरिसेणं' [ सर्वया
भवो वा, तत्र यदि राजादिस्तदा 'सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुईए सव्वबलेणं सव्वपोरिसेणं' [ सर्वया ऋद्ध्या सर्वया दीप्त्या सर्वया युत्त्या सर्वबलेन सर्वपौरुषेण ] इत्यादिवचनात् शासनप्रभावनानिमित्तं महद्धर्या चैत्यादिपु याति, अथ सा-
ऋद्ध्या सर्वया दीप्त्या सर्वया युत्त्या सर्वबलेन सर्वपौरुषेण ] इत्यादिवचनात् शासनप्रभावनानिमित्तं महद्धर्या चैत्यादिपु याति, अथ सा-
मान्यविभवस्तदौद्धत्यादिपरिहारेण लोकोपहासं परिहरन् व्रजतीति । तत्र चैत्यप्रवेशेऽयं विधिः—पुष्पताम्बूलादिसचित्तद्रव्याणां परिहारेण
कटककुण्डलकेयूरहाराद्युचिताचित्तद्रव्याणामपरिहारेण एकवस्त्रपरिधानः एकेन चोपरितनवस्त्रेण कृतोत्तरासङ्गः, एतच्च पुरुषं प्रति द्रष्टव्यं
स्त्री तु सविशेषं प्रावृत्ताङ्गी विनयादवनततनुलतेति, जिनप्रतिमादर्शने शिरस्यञ्जलिकरणेन मनस एकाग्रताकरणेन चेति पञ्चविधाभिगम-
नेन नैषेधिकीपूर्वकं प्रविशति, यदुक्तं भगवत्यां—"सचित्ताणं दव्वाणं विउसरणयाए अचित्ताणं दव्वाणं अविउसरणयाए एगल्लसा-
डएणं उत्तरासङ्गेणं चक्खुफासे अंजलिप्पग्गहेणं मणसो एगत्तीकरणेणं"ति, [सचित्तानां द्रव्याणां व्युत्सर्जनेन अचित्तानां द्रव्याणामव्युत्स-
र्जनेन एकशाटकेनोत्तरासङ्गकरणेन चक्षुःस्पर्शेऽञ्जलिप्रग्रहेण मनस एकत्वीकरणेन] क्वचित् 'अचित्ताणं दव्वाणं विउसरणयाए' इति
पाठः, अत्र अचित्तानां द्रव्याणां—छत्रादीनां व्यवसरणेन—व्युत्सर्जनेन परिहारेणेत्यर्थः, यस्तु राजादिश्चैत्यं प्रविशति स तत्कालं राज-
चिह्नानि मुकुटचामरादीनि परिहरति, तथा च सिद्धान्तः—"अवहट्टु रायककुहाइं पंच वररायककुहरूवाइं । खग्गं छत्तो-
वाणह मउडं तह चामराओ य ॥ १ ॥" [ त्यक्त्वा राजचिह्नानि पञ्च वरराजचिह्नरूपाणि । खड्गः छत्रं उपानहौ मुकुटः तथा
चामरांश्च ॥ १ ॥ ] इत्यादि, 'अवहट्टु'त्ति मुक्त्वा राजककुदानि—राजचिह्नानीत्यर्थः । चैत्यगृहे च प्रविशन् नैषेधिकीत्रयं करोति—जिन-
गृहस्य द्वारभागे मध्यप्रदेशे गर्भगृहदेशे च, तत्र प्रथमा गृहादिविषये कायकार्याणां व्यापाराणां निषेधेन निर्वृत्ता नैषेधिकी, द्वितीया
तद्विषय एव वचनव्यापारविधेयानां कार्याणां निषेधेन निर्वृत्ता, तृतीया तु गृहादिविषय एव मनसा चिन्तनीयानां कार्याणां निषेधेन

निर्वृत्तेति सम्प्रदायः, **सूत्रकारेण** तु नैषेधिकीत्रितयं विवृण्वता—'घरजिणहरजिणपूयावावारच्चायओ निसीहतिगं' इत्युक्तं, तत्राप्ययमर्थः—प्रथमनैषेधिक्यां गृहादिगतसकलसावद्यव्यापारपरम्पराप्रतिषेधः प्रतिपादितः, द्वितीयनैषेधिक्यां जिनगृहविषयपाषाणादिघटापनप्रभृतिसर्वसावद्यव्यापारपूरः प्रत्यषेधि, तृतीयनैषेधिक्यां तु पुष्पफलपानीयप्रदीपप्रमुखपदार्थसार्थसमानयनादिरूपो जिनपूजाविषयोऽपि सावद्यव्यापारश्चैत्यवन्दनावसरे प्रत्यषेध्यत, जिनपूजां कृत्वा तृतीया नैषेधिकी विधीयत इति भावः । तथा **सर्वत्रिकाणि** सूत्रकारेण न विवृतानि, किंतु विषमतराणि कानिचिदेव अस्माभिश्चाविवृतानामपि संक्षेपेण स्वरूपं निरूप्यते १, यथा **तिस्रः प्रदक्षिणा** ज्ञानादित्रयाराधनाय जिनप्रतिमादेर्दक्षिणभागादारभ्य सृष्टिक्रमेणैव कर्तव्याः, सर्वं हि प्रायेणोत्कृष्टं वस्तु कल्याणकामैर्दक्षिणभाग एव विधेयमिति २, तदनन्तरं प्रतिमादिसम्मुखं भक्त्यतिशयख्यापनाय शिरसा भूमिपीठस्पर्शनरूपास्त्रयः प्रणामा विधेयाः ३, **'तिविहा पूय'त्ति सूत्रकृद्विवृणोति**—**'पुप्फक्खयत्थुईहिं तिविहा पूया मुणेयव्वा'** इति, पुष्पैर्विचित्रैः सुगन्धिभिः अक्षतैः—शालितण्डुलादिभिः स्तुतिभिश्च—लोकोत्तरसद्भूततीर्थकृद्गुणवर्णनपराभिः संवेगजनिकाभिस्त्रिविधा पूजा ज्ञातव्येति । अत्र च गाथायां पुष्पादीन्युपलक्षणभूतान्येव श्रीभगवतः पूजाविधौ प्रतिपादितानि, ततो निःसपत्नरत्नसुवर्णमुक्ताभरणादिभिरलङ्करणं विचित्रपवित्रवस्त्रादिभिः परिधापनं पुरतश्च सिद्धार्थकशालितण्डुलादिभिरष्टमाङ्गलिकालेखनं तथा प्रवरबलिजलमङ्गलदीपदधिघृतप्रभृतिपदार्थढौकनं भगवतश्च भालतले गोरोचनामृगमदादिभिस्तिलककरणं तत आरात्रिकाद्युत्तारणं, यदाहुः **पूर्वगणभृतः**—"गंधवरधूयसव्वोसहीहिं उदगाइएहिं चित्तेहिं । सुरहिविलेवणवरकुसुमदामबलिदीवणेहिं च ॥ १ ॥ सिद्धत्थयदहिअक्खयगोरोयणमाइएहिं जहलाभं । कंचणमुत्तियरयणाइदामएहिं च विविहेहिं ॥ २ ॥ पवरेहि साहणेहिं पायं भावोऽवि जायए पवरो । न य अन्नो उवओगो एएसि सया य लट्ठयरो ॥ ३ ॥" इति [ गन्धवरधूपसर्वौषधिभिरुदका-

दिकैश्चित्रैः । सुरभिविलेपनवरकुसुमदामबलिदीपैश्च ॥ १ ॥ सिद्धार्थकदध्यक्षतगोरोचनादिभिर्यथालाभं । काञ्चनमौक्तिकरत्नादिदाममिश्रं विविधैः ॥ २ ॥ प्रवरैः साधनैः प्रायो भावोऽपि जायते प्रवरः । न चान्य उपयोग एतेषां सकाशान्न लष्टतरः ॥३॥] एवं भगवन्तं पूजयित्वा ऐर्यापथिकीप्रतिक्रमणपूर्वकं शक्रस्तवादिदण्डकैश्चैत्यवन्दनं विधाय स्तोत्रैरुत्तमैरुत्तमकविविरचितैर्भगवतो गुणोत्कीर्तनं कुर्यात्, स्तोत्राणां चोत्तमत्वमेवमभिहितं, यथा—"पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः । आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥१॥ पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः । अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥ २ ॥" इति, यथा—"नानन्दोदकलेशलम्पटपुटं स्निग्धेऽपि बन्धौ जने, न क्रोधारुणिमास्पदं कृतबहुक्लेशेऽपि शत्रौ क्वचित् । ध्यानावेशविलोकिताखिलजगल्लक्ष्मीं क्रियाद्दश्चिरं, चक्षुर्युग्ममयुग्मबाणजयिनः श्रीवर्धमानप्रभोः ॥ १ ॥ कृत्वा हाटककोटिभिर्जगदसद्दारिद्र्यमुद्राकथं, हत्वा गर्भशयानपि स्फुटमरीन्मोहादिवंशोद्भवान् । तप्त्वा दुष्करमस्पृहेण मनसा कैवल्यहेतुं तपस्त्रेधा वीरयशो दधद्विजयतां वीरस्त्रिलोकीगुरुः ॥२॥ यथा वा—संसारमारवपथे पतितेन नाथ !, सीमन्तिनीमरुमरीचिविमोहितेन । दृष्टः कृपारसनिधिस्त्वमतः कुरुष्व, तृष्णापनोदवशतो जिन ! निर्वृतिं मे ॥ ३ ॥" इत्यादिस्वरूपैः स्तोत्रैर्गुणोत्कीर्तनरूपा पूजा श्रीभगवतो विधेया, न पुनर्व्रीडामङ्गलातङ्ककदायिभिरेवंविधैर्यथा—"उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा, धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः, शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १ ॥ तथा—शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं, क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम् । विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते शिष्यते, नागे रागिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति यामिति ॥ २ ॥" उपलक्षणत्वाच्च त्रिविधपूजाया अष्टप्रकाराऽपि सकलजनानन्ददायिनी अर्हतां पूजा विज्ञेयेति, यदुक्तम्—

"वरगंधधूवचोक्खक्खएहिं कुसुमेहिं पवरदीवेहिं । नेवेज्जफलजलेहि य जिणपूआ अट्ठहा होइ ॥ १ ॥" [ वरगन्धधूपचोक्षाक्षतैः कुसुमैः प्रवरदीपैः । नैवेद्यफलजलैश्च जिनपूजाऽष्टधा भवति ॥ १ ॥ ] ४ इति । 'अवत्थतियभावणं चेव'त्ति व्याचष्टे—'होइ'त्ति भवति, जिने छद्मस्थकेवलिसिद्धत्वलक्षणमवस्थात्रितयं यथास्वरूपं भावनीयमिति भावः, तत्र छद्मस्थावस्थैवं भगवतो भावनीया, यथा—'विस्फूर्जन्मदवारिवारणघटं राजत्तुरङ्गोद्भटं, हर्षोल्लासिविलासिनीव्यतिकरं निःसीममन्तःपुरम् । राज्यं प्राज्यसुखं विमुच्य भगवान्निःसङ्गतां योऽग्रहीद्धन्यैरेव जनैरचिन्त्यमहिमा विश्वप्रभुर्ध्यायते ॥ १ ॥ धर्मध्याननियन्त्रितेन्द्रियसमूहोऽप्यभिज्ञानगो, ग्रामे ज्ञानपतुष्ठवनॄनसमनिमणोंपलादौ सदृक् । निःसङ्गं विहरन्निदानरहितं कुर्वन् विचित्रं तपः, सत्पुण्यैरवलोक्यते त्रिजगतीनाथः प्रशान्ताकृतिः ॥ २ ॥' इत्यादि, कैवल्यावस्था पुनरेवं भावनीया, यथा—'रागाद्युत्कटशत्रुसंहतिकरं यद्विक्रमक्रीडितं, लोकालोकविलोकनैकरसिकं यच्च ज्ञानविस्फूर्जितम् । मूलोन्मूलितविश्वसंशयघनं यद्भारतीवल्गितं, धन्यैरेव जनैर्जगत्त्रयगुरुः सोऽयं समालोक्यते ॥ १ ॥ अहो विजितनन्दना त्रिभुवने निर्वृतिर्विमोहो कृतमहोत्सवा त्रिजगतीदृशामाकृतिः । अहो वचनचातुरी कुमतिकल्मषा देहिनामहो ललितविभ्रमं सुगुणनोज्झितं चेष्टितम् ॥ २ ॥' सिद्धावस्थाऽप्येवं त्रिजगतीपतेर्भावनीया, यथा—'यस्य ज्ञानमनन्तमप्रतिहतं क्षेत्रादिभिर्दर्शनं, रोगातङ्कमनन्तसुखमनन्तोऽनन्तः गुणानां चयः । वीर्यस्यानुपमः स कोऽपि महिमाऽनन्तस्त्रिलोकाद्भुतः, सिद्धत्वे प्रथितः प्रभुः स भगवान् धन्यैः सदा ध्यायते ॥ १ ॥' ५। तथा त्रिदिग्निरीक्षणविरतिः यस्यां दिशि तीर्थकृत्प्रतिमा तत्सम्मुखमेव निरीक्षणं विधेयं न पुनरन्यदिक्त्रयसम्मुखं, औचित्यभङ्गादिदोषप्रसङ्गात् ६, तथा चैत्यवन्दनं कर्तुकामेन सत्त्वादिरक्षणनिमित्तं सम्यक् चक्षुषा निरीक्ष्य निजचरणनिक्षेपभूमेः प्रमार्जनं त्रिवारं विधेयं, तत्र गृहिणा वस्त्राञ्चलेन यतिना तु रजोहरणेनेति ७। 'वन्नाइतिय'मिति विवृणोति—'वन्नत्थालंबणओ वन्नाइतियं वियाणेज्ज'त्ति

वर्णा—अकारककारादयः अर्थः—शब्दाभिधेयं आलम्बनं—प्रतिमादिरूपं एतस्मिंस्त्रितयेऽप्युपयुक्तेन भवितव्यं, तत्रालम्बनं यथा—'अष्टाभिः प्रातिहार्यैः कृतसकलजगद्विस्मयः कान्तकान्तिः, सिञ्चन् पीयूषपूरैरिव सदसि जनं सोरदृष्टिप्रपातैः । निःशेषश्रीनिदानं निखिलनरसुरैः सेव्यमानः प्रमोदादर्हन्नालम्बनीयः स्फुरदुरुमहिमा वन्दमानेन देवः ॥ १ ॥' ८ इत्यादि । 'मुद्दातिगं' चेति व्याचष्टे—जिनमुद्रा योगमुद्रा मुक्ताशुक्तिमुद्रा चेति मुद्रात्रयं ज्ञातव्यं ९ । 'तिविहं च पणिहाणं' इति विवृणोति—'कायमणोवयणनिरोहणं च तिविहं च पणिहाणं' इति कायमनोवचनानामकुशलरूपाणां निरोधनं—नियन्त्रणं शुभानां च तेषां करणमिति, तत्र कायं सुसंवृतं कृत्वा विहितकरकुशेशयकोशो मनसि तमेवाचिन्त्यचिन्तामणिचारुचरितं वंद्यमानमर्हन्तं निवेश्य निजमधुरिमाधरीकृतमधुमाधुर्यया वाचैवं प्रणिधानमाधत्ते, यथा—'जय त्रिजगतीपते शरण ! देहिनां श्रीजिनप्रसादवशतस्तव स्फुरतु मे विवेकः परः । भवेद्भवविरागिता भवतु संयमे निर्वृतिः, परार्थकरणोद्यमः सह गुणार्जनैर्जायताम् ॥१॥' इत्यादि १० । तत्र मुद्रात्रयमध्ये यस्या यत्र व्यापारस्तां तत्र दर्शयति—'पंचंगे'त्यादि पञ्चाङ्गानि—अवयवा विवक्षितव्यापारवन्ति यत्र स पञ्चाङ्गः प्रणिपातः—प्रणिपातदण्डकपाठस्यादाववसाने च प्रणामो भवति कर्तव्य इति शेषः, यद्यपीह पञ्चाङ्गः प्रणिपात इत्युक्तं तथापि पञ्चाङ्गमुद्रया प्रणिपात इति द्रष्टव्यं, मुद्राणामेवाधिकृतत्वात्, युक्तं च पञ्चाङ्गया अपि मुद्रात्वमङ्गविन्यासविशेषरूपत्वाद्योगमुद्रावदिति । तथा स्तवपाठः शक्रस्तवादिरूपो भवति योगमुद्रया, वन्दनं—चैत्यवन्दनं 'अरहंतचेइयाणं' इत्यादिकं जिनमुद्रया, अनुस्वारश्चात्र लुप्तो द्रष्टव्यः, इयं च पादाश्रिता योगमुद्रा हस्ताश्रितेत्युभयोरपि चैत्यवन्दने व्यापारः, प्रणिधानं 'जय वीयराये'त्यादिकं मुक्ताशुक्तिमुद्रयेति । अथ पञ्चाङ्गप्रणिपातलक्षणनिरूपणापूर्वकं एतासामेव मुद्राणां लक्षणं दर्शयति—'दो जाणू'इत्यादि, तत्र पञ्चभिरङ्गैः सम्यक्—समीचीनतया प्रकर्षेण निपतनं—संप्रणिपातो ज्ञेयः पञ्चाङ्गप्रणिपातः, तत्र कानि पञ्चाङ्गानीति दर्शयति—द्वे जानुनी द्वौ

करौ पञ्चमकं भवत्युत्तमाङ्गं च, तुशब्दः समुच्चयार्थचशब्दार्थः, तथा योगमुद्रा अन्योऽन्यान्तरप्रविष्टाभिरङ्गुलीभिः कृत्वा पद्मकोशाकाराभ्यां द्वाभ्यां हस्ताभ्यामुदरोपरिसंस्थापितकूर्पराभ्यां भवतीति, एषा पुनर्भवति जिनमुद्रा यत्र पादयोरुत्सर्गेऽन्तरं भवति चत्वार्यङ्गुलानि पुरतः-अग्रभागे न्यूनानि च तानि पश्चिमभागे इति, मुक्ताशुक्तिमुद्रा भवति यत्र समौ मिलितौ द्वावपि गर्भितौ—उभयतोऽपि सोन्नासौ न पुनश्चिप्पटौ हस्तौ भवतः, तौ पुनर्ललाटदेशे लग्नौ कार्याविल्येके सूरयः प्रतिपादयन्ति, अन्ये पुनस्तत्रालग्नावेव वदन्ति, नेत्रमध्यभागवर्त्याकाशगताविल्यर्थः ॥ ७६ ॥ पुनर्विधिविशेषमाह—

दाहिणवामंगठिओ नरनारिगणोऽभिवंदए देवे । उक्किट्ठ सट्ठिहत्थुग्गहे जहन्नेण करनवगे ॥ ७७ ॥
अट्ठनवट्ठ य अट्ठवीस सोलस य वीस वीसामा । मंगलइरियावहिया सक्कत्थयपमुहदंडेसु ॥७८॥
पंचपरमेट्ठिमंते पए पए सत्त संपया कमसो । पज्जन्तसत्तरक्खरपरिमाणा अट्ठमी भणिआ ॥ ७९ ॥ इच्छ १ गम २ पाण ३ ओसा ४ जे मे ५ एगिंदि ६ अभिहया ७ तस्स ८ । इरियाविस्सामेसुं पढमपया हुंति दट्ठव्वा ॥ ८० ॥ अरिहं १ आइग २ पुरिसो ३ लोगो ४ भय ५ धम्म ६ अप्प ७ जिण ८ सव्वा ९ । सक्कत्थयसंपयाणं पढमुल्लिंगणपया नेया ॥८१॥ अरिहं १ वंदण २ सद्धा ३ अण्णत्थू ४ सुहुम ५ एव ६ जा ७ ताव ८ । अरिहंतचेइयथए विस्सामाणं पया पढमा ॥ ८२ ॥ अट्ठावीसा सोलस वीसा य जहक्कमेण निद्दिट्ठा । नामजिणट्ठवणाइसु वीसामा पायन्ताणेणं ॥ ८३ ॥

'दाहिण'त्ति प्रतिमाया दक्षिणभागे स्थितः पुरुषप्राधान्यान्नरगणोऽभिवन्दते देवान् नारीगणश्च वामपार्श्वे स्थितः, तथाप्युत्कृष्टतः षष्टिह-

सप्तमितेऽवग्रहे—देशविशेषे स्थितः सन् वन्दते जघन्यतस्तु करनवके—नवहस्तप्रमिते देशे, उच्छ्वासनिःश्वासादिजनिताऽऽशातनापरिहारायोत
॥७७॥ इदानीं पञ्चमङ्गलैर्यापथिकीशक्रस्तवादीनां सम्पत्प्रमाणलक्षणं विधिविशेषमाह—'अट्ठे'त्यादि पञ्चमङ्गले—नमस्कारेऽष्टौ सम्पदः, ऐर्याप-
थिक्यामष्टौ, शक्रस्तवे नव, 'अरिहंतचेइयाणं' इत्यादिदण्डकेऽष्टौ, 'लोगस्सुज्जोयगरे' इत्यस्मिन् दण्डकेऽष्टाविंशतिः, 'पुक्खरवरदीवड्ढे'
इत्यत्र षोडश, 'सिद्धाणं बुद्धाणं' इत्यस्मिंश्च दण्डके विंशतिः सम्पदः, अस्या एव पर्यायमाह—'वीसामा' इति विश्राम्यते—विरम्यते
एष्विति विश्रामाः—सम्पदो विश्रमणस्थानानीतियावत् ॥ ७८ ॥ तत्र 'पञ्चपरमेट्ठी'त्यादि, पञ्चपरमेष्ठिमन्त्रे पदे पदे—विवक्षिताभिधेययुक्ते
'नमो अरहंताणं' इत्यादिके, न पुनः सुप्तिङ्युक्ते, सप्त सम्पदः क्रमशो विज्ञेयाः, अष्टमी पुनः पर्यन्ते सप्तदशाक्षरप्रमाणा 'मंगलाणं
च सव्वेसिं पढमं हवइ मंगलं' इतिस्वरूपा भणिता गणधरादिभिः, अन्ये तु पर्यन्तवर्तिनीस्तिस्रः सम्पद एवं मन्यन्ते, यथा—
'एसो पंच नमुक्कारो सव्वपावप्पणासणो' इति षोडशाक्षरप्रमाणा षष्ठी सम्पत्, 'मंगलाणं च सव्वेसिं' इत्यष्टाक्षरघटिता सप्तमी
सम्पत्, 'पढमं हवइ मंगलं' इति नवाक्षरनिष्पन्ना अष्टमी सम्पत्, यदुक्तं—"अंतिमचूलाइ तियं सोलसअट्ठनवक्खरजुयं चेव ।
जो पढइ भत्तिजुत्तो सो पावइ सासयं ठाणं॥७९॥" [अन्त्यचूलिकायां त्रिकं षोडशाष्टनवाक्षरयुतं चैव। यः पठति भक्तियुक्तः स प्राप्नोति
शाश्वतं स्थानं ॥१॥] इति, एवमैर्यापथिक्यादिष्वपि सम्पद्विषये यथायथं मतान्तराणि मतिमद्भिर्मन्तव्यानीति। अत्र च यद्यपि 'हवइ होइ'
इत्यनयोरर्थं प्रति न कश्चिद्विशेषः 'होइ मंगलं' इति च पाठे श्लोको नाधिकाक्षरो भवति तथापि 'हवइ' इत्येव पठितव्यं, यतो नमस्का-
रवलयकादिग्रन्थेषु सर्वमन्त्ररत्नानामुत्पत्त्याकरस्य प्रथमस्य कल्पितपदार्थकरणैककल्पद्रुमस्य विषविषधरशाकिनीडाकिनीयाकिन्यादिनिग्रहनिर-
वग्रहस्वभावस्य सकलजगद्वशीकरणाकृष्ट्याद्यव्यभिचारिप्रौढप्रभावस्य चतुर्दशपूर्वाणां सारभूतस्य पञ्चपरमेष्ठिनमस्कारस्य व्याख्यायां प्रस्तुतायां

तथाविधप्रयोजनोद्देशेन यन्त्रपद्मादिविरचनायां प्रकृतायां यदा द्वात्रिंशद्दलं पद्ममालिख्यते प्रतिदलं च श्लोकसम्बन्ध्येकैकमक्षरं निवेश्यते तदा नाभौ त्रयस्त्रिंशत्तममक्षरमवश्यं निवेश्यं अन्यथा नाभिभागः शून्य एव स्यात्, मात्रयापि च हीने यन्त्रपद्मादौ निवेश्यमाने महामन्त्रे तत्साध्यविशिष्टाभीष्टपरिपूर्णफलानवाप्तेरिति 'हवइ' इत्ययमेव पाठो युक्तः, तथा चैतत्संवादिपूर्वाचार्यकृतप्रकरणवचनं—"अट्ठसट्ठि-अक्खरपरिमाणु, जिणसासणि नवकार पहाणू । अंतिमचूला तिन्नि पसिद्धा, सोलसअट्ठनवक्खररिद्धा ॥ १ ॥" [ अष्टषष्ट्यक्षरप्रमाणो जिनशासने नमस्कारः प्रधानः । अन्त्यास्तिस्रश्चूलाः प्रसिद्धाः षोडशाष्टनवाक्षरसमृद्धाः ॥ १ ॥ ] इत्यादि, ततो नात्राभिमाननर्तनं केनापि कृतमिति विमर्शनीयं निर्मत्सरैरिति। तथा प्रथमपदेषु ज्ञातेषु यस्यां सम्पदि यावन्ति पदानि भवन्ति तस्यां तावन्ति सुखेनैव ज्ञायन्त इत्यत ऐर्यापथिकीसम्पदामष्टानामपि प्रथमपदानि दर्शयति—'इच्छे'त्यादि, अस्या गाथाया अर्थो लिख्यते, यथा—'भीमो भीमसेन' इति न्यायेन ईर्याया—ईर्यापथिक्या विश्रामेषु—संपत्सु एतानि इच्छगमादीनि प्रथमपदानि द्रष्टव्यानि, अत्र च प्राकृतत्वात्पुंसा निर्देशः, एवं च 'इच्छामि पडिक्कमिउं' इत्याद्येका सम्पत्, द्वितीया 'गमणागमणे' इति, तृतीया 'पाणक्कमणे' इत्यादि, चतुर्थी 'ओसाउत्तिंग' इत्यादि, पञ्चमी 'जे मे जीवा विराहिया' इति, षष्ठी 'एगिंदिया' इत्यादि, सप्तमी 'अभिहया' इत्यादि, अष्टमी 'तस्स उत्तरीकरणेणं' इत्यादि 'ठामि काउस्सग्गं' इति पर्यन्तं ॥ ८० ॥ इदानीं शक्रस्तवसम्पदामादिपदानि दर्श्यन्ते—'अरिह'मित्यादि, अत्र च नव सम्पदो भवन्ति, तत्र प्रथमपदं कर्तृक्रियाप्रतिपादकमेव न तत् सम्पद्ग्रहणेन गृह्यते, ततोऽरिहमित्यनेन पदद्वयं सूचितं, अनेन स्तोतव्यसम्पत्प्रथमा प्रतिपादिता, यतोऽर्हतां भगवतां च स्तोतव्यत्वमुचितं, 'आइगे'त्यनेनाक्षरत्रयेणाऽऽद्यपदसूचितपदत्रयनिष्पन्ना द्वितीया सम्पद्भणिता, एषा च स्तोतव्यसम्पद एव प्रधानसाधारणासाधारणगुणरूपा हेतुसम्पदिति, यत आदिकरणशीला एव तीर्थक-

रत्वेन स्वयंसम्बोधतश्चैते भवन्ति, 'पुरिसो' इत्यनेन गाथात्रयवेन सूचिताद्यपदा चतुष्पदनिष्पन्ना तृतीया सम्पद्भणिता, एषा च स्तोतव्यसम्पद एवासाधारणगुणरूपा हेतुसम्पत्कथिता, पुरुषोत्तमानामेव सिंहपुण्डरीकगन्धहस्तिधर्मभाक्त्वेन स्तोतव्यतोपपत्तेः, 'लोगो' इत्यनेन गाथाक्षरद्वयेन प्रकटिताद्यपदा पञ्चपदनिर्मिता चतुर्थी सम्पदभिहिता, एषा च स्तोतव्यसम्पद एव सामान्येन सर्वजनोपकारित्व-लक्षणेनोपयोगसम्पत्, लोकोत्तमत्वलोकनाथत्वलोकहितत्वलोकप्रदीपत्वलोकप्रद्योतकरत्वानां परार्थत्वादिति, 'अभय' इत्यनेन तु गाथावय-वेनाभिव्यक्ताादिपदा पञ्चाऽऽलापकपरिमाणा पञ्चमी सम्पद्विज्ञेया, एषा चास्या एवोपयोगसम्पदो हेतुसम्पद् ज्ञातव्या, अभयदानश्चक्षुर्दा-नमार्गदानशरणदानवोधिदानैः परार्थसिद्धेरिति। 'धम्म'त्ति गाथावयवेन ज्ञापिताद्यपदा पञ्चपदघटिता षष्ठी सम्पन्निवेदिता, एषा च स्तोतव्यसम्पद एव विशेषेणोपयोगसम्पद्बोद्धव्या, धर्मदत्वधर्मदेशकत्वधर्मनायकत्वधर्मसारथित्वधर्मवरचातुरन्तचक्रवर्तित्वेभ्य एव तस्याः स्तोतव्यसंपदो विशेषेणोपयोगात्, 'अप्प'त्तिगाथाक्षरद्वयेन निरूपिताद्यपदा आलापकद्वयनिष्पन्ना सप्तमी सम्पदभिहिता, एषा च स्तोतव्यसम्पद एव सकारणा स्वरूपसम्पद्, अप्रतिहतवरज्ञानदर्शनधरा व्यावृत्तच्छद्मानश्च यतोऽर्हन्तो भगवन्तश्च भवन्तीति, 'जिण'त्ति गाथालवेन प्रादुष्कृताद्यपदा आलापकचतुष्टयनिर्मिताऽष्टमी सम्पन्निवेदिता, इयं चात्मतुल्यपरफलकर्तृत्वसम्पत्प्रतिपादिता, जिनजापकत्वतीर्ण-तारकत्वबुद्धबोधकत्वमुक्तमोचकत्वानामेवंविधस्वरूपत्वादिति, 'सव्व'त्ति गाथाक्षरद्वयेन संसूचिताद्यपदा आलापकत्रयनिर्मिता 'जियभ-याणं' इति पर्यन्ता नवमी सम्पद्, इयं च प्रधानगुणापरिक्षयप्रधानफलप्राप्त्या अभयसम्पदभिहिता, इयं चात्मतुल्यपरफलकर्तृसर्वज्ञसर्व-दर्शिनामेव शिवाचलादिस्थानप्राप्तौ जितभयत्वोपपत्तेरिति। एताश्च सम्पदोऽनन्तधर्माध्यासिते वस्तुनि मुख्ये सति मुख्यवृत्त्या स-म्भवन्त्येव, न चानन्तधर्मात्मकत्वं वस्तुनोऽनुपपन्नमिति वाच्यं, तस्यान्यत्रास्मद्गुरुप्रणीतप्रमाणप्रकाशवादमहार्णवादिमहातर्कग्रन्थेषु

विस्तरेण साधितत्वादिति शक्रस्तवसम्पदां प्रथमोल्लिङ्गनपदानि ज्ञेयानि, पुल्लिङ्गनिर्देशश्च प्राकृतत्वाददुष्टः, आलापकाश्चात्र त्रयस्त्रिंशद्विज्ञातव्याः। या च 'जे अईया सिद्धा' इति गाथा साऽप्यवश्यं भणनीया, शक्रस्तवान्ते पूर्वमहाश्रुतधरैरभिहितत्वात्, न पुनरौपपातिकादिषु 'नमो जिणाणं जियभयाणं' इति पर्यन्तस्य शक्रस्तवस्य पठितत्वान्नेयं गाथाऽस्माभिः स्वयं भण्यत इति कुबोधाऽऽध्मातमानसैर्नवनवानल्पविकल्पकल्पनाकुशलैराधुनिकैरिव कैश्चिन्न पठनीया, प्राक्तनैरशठैरनभिमानैर्गीतार्थैः सूरिभिरादृतस्य पक्षस्यादरणीयत्वादिति ॥८१॥
'अरिहंतचेइयाणं' इति दण्डकेऽष्टौ सम्पदस्तासामाद्यपदनिरूपणार्थमाह—'अरिहं वंदण'त्यादि तत्रार्हमित्यनेन सूचिताद्यपदा पदद्वयनिष्पन्ना प्रथमा सम्पत्, 'वंदण'मित्यनेन सूचिताद्यपदा पदषट्कनिष्पन्ना द्वितीया सम्पत्, 'सद्धे'ति गाथावयवेन निवेदिताद्यपदा पदसप्तकनिर्मिता तृतीया सम्पत्, 'अन्नत्थू' इति गाथाक्षरत्रयेण निर्मिताद्यपदा पदनवकनिर्मिता चतुर्थी सम्पत्, 'सुहुमेति' गाथावयवेन सूचिताद्यपदा पदत्रयनिष्पन्ना पञ्चमी सम्पत्, 'एवे'ति गाथाक्षरद्वयेन प्रकटीकृताद्यपदा पदषट्कनिष्पन्ना षष्ठी सम्पत्, 'जे'तिगाथाक्षरेण सूचिताद्यपदा पदचतुष्टयनिष्पन्ना सप्तमी सम्पत्, 'तावे'तिगाथाक्षराभ्यां सूचिताद्यपदा पदषट्कनिष्पन्ना अष्टमी सम्पदिति अर्हच्चैत्यस्तवे विश्रामाणां प्रथमानि पदानि, आद्यानां च पदानां परिज्ञाने मध्यमानि पदानि सुगमान्येवेति ॥ ८२ ॥ इदानीं चतुर्विंशतिस्तवदण्डके ज्ञानस्तवदण्डके सिद्धस्तवदण्डके चैकयैव गाथया सम्पत्परिमाणमाह—'अट्ठावीसे'त्यादि, अष्टाविंशतिः षोडश विंशतिश्च यथाक्रमेण—यथासङ्ख्येन निर्दिष्टा—निवेदिता नामजिनस्तवनादिषु—'लोगस्सुज्जोयगरे' इत्यादिषु त्रिषु दण्डकेषु विश्रामाः पादमानेन—श्लोकादिचतुर्थभागसङ्ख्ययेति ॥ ८३ ॥ इदानीमस्यां चैत्यवन्दनायां द्वादशाधिकारास्तान् यथायथं दर्शयन्नाह—

**दुण्णे 'गं दुण्णि दुगं पंचेव कमेण हुंति अहिगारा । सक्कत्थयाइसु इहं थोयव्वविसेसविसया उ**

॥ ८४ ॥ पढमं नमोऽत्थु १ जे अइयसिद्ध २ अरहंतचेइयाणंति ३ । लोगस्स ४ सव्वलोए ५ पु-
क्खर ६ तमतिमिर ७ सिद्धाणं ८ ॥ ८५ ॥ जो देवाणवि ९ उज्जिंत सेल १० चत्तारि अट्ठ दस
दो य ११ । वेयावच्चगराण य १२ अहिगारुल्लिंगणपयाइं ॥ ८६ ॥ पढमे छट्ठे नवमे दसमे एक्कारसे य
भावजिणे । तइयंमि पंचमंमि य ठवणाजिणे सत्तमे नाणं ॥ ८७ ॥ अट्ठमबीयचउत्थेसु सिद्धदव्वा-
रिहंतनामजिणे । वेयावच्चगरसुरे सरेमि बारसमअहिगारे ॥ ८८ ॥

'दुन्नेग'मित्यादि द्वावधिकारौ शक्रस्तवे, एकोऽर्हच्चैत्यस्तवे, द्वौ चतुर्विंशतिस्तवे, द्वौ श्रुतस्तवे, पञ्चैव सिद्धस्तवदण्डके भवन्त्यधिकाराः, अधिक्रियन्ते—समाश्रीयन्ते इत्यधिकाराः—प्रस्तावविशेषाः, तानाश्रित्य चैत्यवन्दनं विधीयत इति शक्रस्तवादिष्विह स्तोतव्यविशेषविषया इति ॥ ८४ ॥ तत्र यथायथं तान्येव दर्शयति—'पढमं नमोऽत्थु'इत्यादि 'नमोऽत्थुणं' इत्यारभ्य 'जियभयाणं' इतिपर्यन्तेन सिद्धिप्राप्तानां भावार्हतां सद्भूतगुणोत्कीर्तनरूपः प्रथमोऽधिकारः, भावार्हन्तोऽत्र स्तुता इत्यर्थः । 'जे अईया सिद्धा' इत्यनेनोपलक्षितया गाथया द्वितीयोऽधिकारः कथितः, अत्र च द्रव्यार्हतां वन्दना विधीयते, द्रव्यभूता अर्हन्तो द्रव्यार्हन्तो येऽर्हत्त्वं—चतुस्त्रिंशदतिशयवत्त्वं प्राप्य सिद्धा ये च तत्प्राप्स्यन्ति क्रमेण तेऽत्र वन्द्यन्ते, यतः—'भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं प्रोक्तम् ॥ १ ॥' इति गणधरैर्द्रव्यलक्षणमुक्तं, न च वक्तव्यं—द्रव्यार्हन्तोऽप्यर्हद्भावापन्ना एव वन्दनीयत्वेनाभिमतास्ततः प्रथमाधिकारेणैव भावार्हतां वन्दितत्वात् 'जे य अईया सिद्ध'त्ति पुनरुक्तमिति, यतो वर्तमाना भविष्यन्तश्च जिनाः प्राप्तार्हद्भावा एव वन्दनीयाः न नरकादिभववर्तिनः इत्यस्यार्थस्य ख्यापनार्थमुक्तत्वादेतस्य पदस्येति, एष द्रव्यार्हद्वन्दनो द्वितीयोऽधिकारः । तथा येषां

देवगृहादौ स्थापितानां जिनबिम्बानां वन्दनं कर्तुमारब्धं तान्यनेन **'अरहंतचेइयाणं'** इतिदण्डकेन वन्द्यन्ते इति स्थापनार्हद्वन्दनो नामाऽयं तृतीयोऽधिकारः, **'लोगस्स'**त्ति **'लोगस्सुज्जोयगरे'** इतिदण्डकेनास्यामवसर्पिण्यामेकक्षेत्रनिवासिनां भव्यजनस्य भवभाविसकलक्लेशापहारकत्वेनासन्नवर्तिनां चतुर्विंशतेरपि तीर्थकृतां नामोत्कीर्तनपुरस्सरं स्तवः क्रियते इति जिननामोत्कीर्तनो नाम चतुर्थोऽधिकारः, **'सव्वलोए'** इतिगाथावयवसूचितः **'सव्वलोए अरिहंतचेइयाणं'** इत्यादिनोर्द्ध्वाधोलोकमर्त्यलोकस्थितशाश्वताशाश्वतदेवगृहस्थापितानां श्रीजिनबिम्बानां वन्दनं क्रियते इति सर्वलोकदेवगृहजिनस्थापनास्तवोऽयं पञ्चमोऽधिकारः, तथा **'पुक्खर'**त्ति गाथाक्षरत्रयेण निवेदितः **'पुक्खरवरदीवड्ढे'** इत्यादिपरिपूर्णगाथाकेन पुष्करवरद्वीपार्धधातकीखण्डजम्बूद्वीपवर्तिनामर्हतां स्तवः क्रियते इति अर्धतृतीयद्वीपवर्तिभावार्हत्स्तवोऽयं षष्ठोऽधिकारः, ननु श्रुतस्तवाधिकार एवेदानीं प्रस्तुतः तत्कथमप्रस्तुतस्तीर्थकृतां स्तवः क्रियते ? इति, सत्यमेतत्, तथापि श्रुतस्य कारणं भगवन्तस्तीर्थकरा एव, तैरेव प्रवर्तितत्वात्, **'अत्थं भासइ अरिहा'** इत्यागमवचनात्, गणधराणामपि सूत्रकर्तॄणामर्थस्य तीर्थकरैरेव कथितत्वादिति, अन्यच्च एतदेव श्रुतस्तवे प्रस्तुतेऽपि तीर्थकरस्तवकरणं ज्ञापयति यत्किञ्चित्कार्यजातं क्रियते श्रेयोऽर्थिभिस्तत्सर्वं तीर्थकृन्नमस्कारपुरस्सरमेव करणीयं, इत्थमेव सर्वकल्याणप्राप्तेरिति, **'तमतिमिर'** इतिगाथाक्षरैः सूचिताग्रेतनसूत्रैः श्रुतं स्तूयत इति श्रुतस्तवोऽयं सप्तमोऽधिकारः, **'सिद्धाणं'** इत्यनेन निवेदितसकलगाथाकेन सिद्धस्तुत्यभिधानोऽष्टमोऽधिकारः ॥ ८५ ॥

**'जो देवाणवि'**त्तिगाथाक्षरैः सूचितेन गाथाद्वयेन एतत्तीर्थस्य प्रवर्तकत्वादासन्नतरतया महोपकारकारित्वाद्भगवतो महावीरस्य स्तवस्तन्नमस्कारफलप्रकटनपरो विधीयत इति वीरस्तवो नामायं नवमोऽधिकारः, **'उज्जिंतसेल'**त्ति अनेनापि पदावयवेन सूचितसकलगाथाकेन सकलत्रिलोकीतिलकायमानस्य भगवतः श्रीनेमिनाथस्य स्तवो विधीयते इति श्रीनेमिनाथस्तवोऽयं दशमोऽधिकारः, **'चत्तारि अट्ठदस**

दो य'त्ति अनयाऽपि गाथया चतुर्विंशतेरपि जिनानामाशंसाकरणपूर्वं प्रणिधानं कृतमिति एकादशोऽधिकारः, 'वेयावच्चगराण'त्ति—अनेनापि सूचित'वेयावच्चगराणं संतिगराणं'इत्यादिकायोत्सर्गकरणतदीयस्तुतिदानपर्यन्तेन द्वादशोऽधिकारः कथितः, एतानि 'नमोऽत्थु' इत्यादीन्यधिकारोल्लिङ्गनपदानि ज्ञेयानीति गाथाद्वयतात्पर्यार्थः ॥ ८६ ॥ इदानीं यस्मिन्नधिकारे ये जिनादयो वन्द्यन्ते तान् स्वयमेव सूत्रकारो दर्शयति—'पढमे छट्ठे'त्यादि गाथाद्वयं, तत्र प्रथमेऽधिकारे शक्रस्तवरूपे 'जियभयाणं' इतिपर्यन्ते तथा षष्ठे 'पुक्खरवरदीवड्ढे' इत्यादिरूपे तथा नवमेऽधिकारे 'जो देवाणवि देवो' इत्यादिरूपे तथा दशमेऽधिकारे 'उज्जिंतसेलसिहरे' इत्यादिरूपे तथैकादशेऽधिकारे 'चत्तारि अट्ठदस' इतिस्वरूपे भावजिनान् द्वितीयगाथान्ते 'सरेमि' इतिक्रियापदकरणात् स्मरामि वन्दनीयतयेति, भावजिनाश्च सकलत्रैलोक्यातिशायिनीमशोकादिविशिष्टाष्टप्रातिहार्यरूपामार्यजननिकरनयननलिनानां परमोत्सवायमानामपारसंसारपारावारनिमज्जज्जनतोत्तारणतरीकल्पामविकल्पकल्पद्रुमचिन्तारत्नादिभ्योऽप्यसमानमहिमानमुन्मीलन्निर्मलकेवलालोकवलयपरिकलितलोकालोकामद्भुतां विभूतिमनुभवन्तस्तीर्थकराः । तथा 'अरिहंतचेइयाणं' इत्यादिके तृतीयेऽधिकारे 'सव्वलोए अरहंतचेइयाणं' इत्यादिरूपे पञ्चमे च यथाक्रमं साक्षाद्विवन्दिपितदेवगृहस्थापितप्रतिमारूपान् भवनपतिव्यन्तरज्योतिपिकवैमानिकनन्दीश्वरमन्दरकुलाचलाष्टापदसम्मेतशैलशिखरशत्रुञ्जयोज्जयन्तादिसर्वलोकस्थितशाश्वताशाश्वतदेवगृहस्थापितजिनेन्द्रबिम्बरूपांश्च जिनान् स्मरामीति ॥ ८७ ॥ तथा 'तमतिमिरपडल' इत्यादिके सप्तमेऽधिकारे निखिलकुमततिमिरनिकरापहारकारि ज्ञानं स्मरामीति, तथा अष्टमे 'सिद्धाणं बुद्धाणं' इत्यादिरूपे द्वितीये 'जे य अईया सिद्धा' इतिरूपे चतुर्थे 'लोगस्स उज्जोयगरे' इत्यादिरूपे च यथासङ्ख्यं सिद्धान् द्रव्यजिनान् नामजिनांश्च स्मरामीति, तथा 'वेयावच्चगराणं करेमि काउस्सग्गं' इत्यादिरूपे द्वादशेऽधिकारे वैयावृत्त्यकरसुरान् स्मरामीति ॥ ८८ ॥

ननु ज्ञातस्तावच्चारुचैत्यवन्दनविधिः, परमेवंविधविधिविशुद्धं चैत्यवन्दनमहोरात्रमध्ये साधुभिः श्रावकैश्च कियतीर्वारा विधीयत इति ?, तत्राह—

**साहूण सत्त वारा होइ अहोरत्तमज्झयारंमि। गिहिणो पुण चिइवंदण तिय पंच य सत्त वा वारा ॥ ८९ ॥ पडिक्कमणे चेइहरे भोयणसमयंमि तह य संवरणे। पडिक्कमणे सुयण पडिबोहकालियं सत्तहा जइणो ॥ ९० ॥ पडिक्कमओ गिहिणोवि हु सत्तविहं पंचहा उ इयरस्स। होइ जहण्णेण पुणो तीसुवि संझासु इय तिविहं ॥ ९१ ॥ नवकारेण जहन्ना दंडकथुइजुयलमज्झिमा नेया। उक्कोसा विहिपुव्वगसक्कत्थयपंचनिम्माया ॥ ९२ ॥**

'साहूण सत्त वारे'त्यादि, साधूनां सप्त वारा अहोरात्रमध्ये भवति चैत्यवन्दनं, गृहिणः—श्रावकस्य पुनश्चैत्यवन्दनं प्राकृतत्वाल्लुप्तप्रथमैकवचनान्तमेतत् तिस्रः पञ्च सप्त वा वारा इति ॥ ८९ ॥ तत्र साधूनामहोरात्रमध्ये कथं तत्सप्त वारा भवतीत्याह—'पडिक्कमणे'त्यादि, प्राभातिकप्रतिक्रमणपर्यन्ते १ ततश्चैत्यगृहे २ तदनु भोजनसमये ३ तथाचेति समुच्चये भोजनानन्तरं च संवरणे—संवरणनिमित्तं प्रत्याख्यानं हि पूर्वमेव चैत्यवन्दने कृते विधीयते ४, तथा सन्ध्यायां प्रतिक्रमणप्रारम्भे ५ तथा स्वापसमये ६ तथा निद्रामोचनरूपप्रतिबोधकालिकं च ७ सप्तधा चैत्यवन्दनं भवति, यतेर्जातिनिर्देशादेकवचनं यतीनामित्यर्थः ॥ ९० ॥ गृहिणः कथं सप्त पञ्च तिस्रो वा वाराश्चैत्यवन्दनमित्याह—'पडिक्कमओ'त्ति, द्विसन्ध्यं प्रतिक्रमतो गृहस्थस्यापि यतेरिव सप्तवेलं चैत्यवन्दनं भवति, यः पुनः प्रतिक्रमणं न विधत्ते तस्य पञ्चवेलं, जघन्येन तिसृष्वपि सन्ध्यासु चैत्यवन्दनमिति त्रिविधम् ॥ ९१ ॥ नन्वेतस्याश्चैत्यवन्दनायाः किमेक

ण्डकैर्जिनमभिवन्दते, चतुर्थस्तुतिपर्यन्ते पुनः शक्रस्तवमभिधाय द्वितीयवेलं तेनैव क्रमेण वन्दते, तदनु चतुर्थशक्रस्तवभणनानन्तरं स्तोत्रं पवित्रं भणित्वा 'जय वीयराय' इत्यादिकं च प्रणिधानं कृत्वा पुनः शक्रस्तवमभिधत्ते इति, एषा चोत्कृष्टा चैत्यवन्दना ऐर्यापथिकीप्रतिक्रमणपूर्विकैव भवति, जघन्यमध्यमे तु चैत्यवन्दने ऐर्यापथिकीप्रतिक्रमणमन्तरेणापि भवत इति ॥९२॥ **'वंदणयं'ति द्वितीयं द्वारमधुना व्याख्यायते**, तत्राह—

**मुहणंतय[25]देहा[25]ऽऽवस्सएसु पणवीस हुंति पत्तेयं । छट्ठाणा[6] छच्च गुणा[6] छच्चेव हवंति गुरुवयणा[6] ॥९३॥ अहिगारिणो[5] य पंच य इयरे पंचेव[5] पंच पडिसेहा[5]। एक्कोऽवग्गह[1] पंचाभिहाणा[5] पंचेव आहरणा[5] ॥ ९४ ॥ आसायण[33] तेत्तीसं दोसा[32] बत्तीस कारणा[8] अट्ठ । बाणउयसयं ठाणाण वंदणे होइ नायव्वं ॥ ९५ ॥**

'मुहणंत' इत्यादि गाथात्रयं, मुखस्यानन्तकं—वस्त्रं मुखानन्तकं—मुखवस्त्रिका तच्च देहश्च—कायः आवश्यकानि च द्व्यवनतादीनि तेषु प्रत्येकं पञ्चविंशतिः स्थानानि, तथा षट् स्थानानि **'इच्छा ये'**त्यादीनि, तथा षड् गुणाः **'विणओवयारे'**त्यादिकाः, तथा षडेव भवन्ति गुरोर्वचनानि **'छंदेणे'**त्यादीनि, प्राकृते लिङ्गमतन्त्रमिति सूत्रे पुंसा निर्देशः ॥ ९३ ॥ तथाऽधिकारिणो येषां वन्दनकं दीयन्ते **'आयरियउवज्झाए'** इत्यादयः पञ्च, तथा येषां न दीयते वन्दनकं तेऽपीतरे अनधिकारिणः पञ्चैव **'पासत्थो ओसन्नो'** इत्यादयः, तथा पञ्च प्रतिषेधाः **'वक्खित्तपराहुत्ते'** इत्यादयः, तथैकोऽवग्रहः **'आयप्पमाणमेत्तो'** इत्यादिना भणिष्यमाणस्वरूपः, तथा वन्दनकस्य पञ्चाभिधानानि—**'वंदणचिइकिइकम्मं'** इत्यादीनि पर्याया इत्यर्थः, तथा पञ्चैवोदाहरणानि **'सीयले खुड्डुए'** इत्यादीनि ॥ ९४ ॥

तथाऽऽशातनास्त्रयस्त्रिंशत् 'पुरओ पक्खासन्ने' इत्यादिकाः, 'अणाढियं च थद्धं च' इत्यादयो द्वात्रिंशद्दोषाः, 'पडिक्कमणे सज्झाए' इत्यादीन्यष्टौ कारणानि, एवं सर्वेषु मीलितेषु द्विनवतं शतं १९२ स्थानानां वन्दनके भवति ज्ञातव्यमिति प्रतिद्वारगाथात्रयार्थः ॥ १५ ॥

**दिट्ठिपडिलेहणेगा नव अक्खोडा नवेव पक्खोडा । पुरिमिल्ला छच्च भवे मुहपुत्ती होइ पणवीसा ॥ १६ ॥ बाहूसिरमुहहियये पाएसु अ हुंति तिन्नि पत्तेयं । पिट्ठीइ हुंति चउरो एसा पुण देहपणवीसा ॥ १७ ॥**

'दिट्ठी'त्यादि, इह च मुखानन्तकपञ्चविंशतिः कायपञ्चविंशतिश्च सुप्रतीतत्वात्सूत्रकृता न व्याख्याता, वयं तु विनेयजनानुग्रहाय किञ्चिद्वितन्महे, तत्र मुखानन्तकस्य—मुखवस्त्रिकायाः पञ्चविंशतिरेवं—यथा वन्दनकं दातुकामः कश्चिद्भव्यः क्षमाश्रमणदानपूर्वं गुरोरनुज्ञां मार्गयित्वा उत्कटिकासनः सन् मुखवस्त्रिकां प्रसार्य तदर्वाग्भागं चक्षुषा निरीक्षेत इदमेकमालोकनं, ततस्तां परावर्त्य निरूप्य च त्रयः पुरिमाः—प्रस्फोटनरूपाः कर्तव्याः, तदनु तां परावर्त्य निरीक्ष्य च पुनरपरे त्रयः पुरिमाः, एवमेते षट्, ततो दक्षिणकराङ्गुल्यन्तरे त्रघूटिकद्वयं त्रयं वा कृत्वा द्वयोर्जङ्घयोर्मध्ये प्रसारितवामकरतलोपरि त्रयस्त्रयः करप्रमार्जनारूपप्रस्फोटकानां त्रयेण त्रयेणान्तरिता आस्फोटकाः कर्तव्याः, अत्र आस्फोटा—अक्खोडा इति प्रसिद्धा नव, प्रमार्जनारूपाश्च प्रस्फोटाः—पक्खोडा इति प्रसिद्धा नव, एवमेते मिलिता मुखानन्तकपञ्चविंशतिः ॥ १६ ॥ तथा देहपञ्चविंशतिरेवं—यथा दक्षिणपाणिस्थितवधूटकीकृतमुखवस्त्रिकया वामबाहोर्मध्यदक्षिणवामभागानां क्रमेण प्रमार्जनमित्येकं त्रिकं, ततो वामकरे तथैव मुखवस्त्रिकां विधाय दक्षिणबाहोर्वामबाहुवत्प्रमार्जनमिति द्वितीयं त्रिकं, ततः समुत्सारित-

वधूटिकया करद्वयगृहीतप्रान्तया मुखवस्त्रिकया शिरसो मध्यदक्षिणवामभागानां क्रमेण प्रमार्जनमिति तृतीयं त्रिकं, ततः शिरोवन्मुखवक्षसोरपि प्रमार्जनमिति चतुर्थं, पञ्चमे त्रिके तदनु दक्षिणकरकलितया मुखपोतिकया दक्षिणस्कन्धदेशोपरि क्षिप्तया पृष्ठदक्षिणभागप्रमार्जनं ततो वामकरस्थितया तया तथैव पृष्ठवामभागप्रमार्जनं, तदनु वामकरस्थितयैव तया दक्षिणकक्षाधस्तान्निक्षिप्तया दक्षिणपृष्ठाधस्तनप्रदेशस्य प्रमार्जनं, ततो दक्षिणकरस्थितया तया तथैव वामपृष्ठाधस्तनप्रदेशप्रमार्जनं, तदनु दक्षिणकरस्थितया वधूटकीकृतया मुखपोतिकया प्रत्येकं दक्षिणवामपादयोः क्रमेण मध्यदक्षिणवामप्रदेशैःप्रमार्जनं, अत्र च पञ्चमित्रिकैः पञ्चदश पृष्ठप्रमार्जनाचतुष्टयं दक्षिणवामचरणप्रमार्जनात्रिकद्वयं चेति सर्वमीलने देहप्रमार्जनापञ्चविंशतिः, इयं च देहपञ्चविंशतिः पुरुषानाश्रित्य विज्ञेया, स्त्रीणां तु गोप्यावयवविलोकनरक्षणाय हस्तद्वयवदनपादद्वयानां प्रत्येकं तिस्रः प्रमार्जना इति पञ्चदशैव भवन्तीति ॥ ९७ ॥ अथाऽऽवश्यकपञ्चविंशतिं सूत्रकृदेव विवृणोति—

**दुओणयं अहाजायं, किइकम्मं बारसावयं । चउस्सिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं ॥ ९८ ॥**

'दुओणय'मित्यादि, अवनमनमवनतमुत्तमाङ्गेन प्रणमनमित्यर्थः द्वे अवनते यत्र तद् द्व्यवनतं, एकं यदा प्रथममेव '**इच्छामि खमासमणो! वन्दिउं जावणिज्जाए निसीहियाए**' इत्यमिधाय छन्दोऽनुज्ञापनायावनमति, द्वितीयं पुनर्यदा कृतावर्तो निष्क्रान्त इच्छामीत्यादिसूत्रममिधाय छन्दोऽनुज्ञापनायैवावनमति, यथाजातं यथाजन्मेत्यर्थः, जन्म च श्रमणत्वं योनिनिष्क्रमणं चाश्रित्य विज्ञेयं, तत्र

---

१ सिरोवन्मुखवक्षसोर्द्वयोरपि मध्यदक्षिणवामभागानां क्रमेण प्र. अधिकं. २ दक्षिणस्कंधप्रदेशवत् प्र. अधिकं. ३ भागानां प्र. अधिकं प्र. अधिकं.

रजोहरणमुखवस्त्रिकाचोलपट्टकमात्रया श्रमणो जातो भालतलघटितकरसम्पुटस्तु योन्या निर्गतः एवम्भूत एव च वन्दनकं ददाति तदन्यतिरेकाद्वन्दनकमपि यथाजातमभिधीयते, कृतिकर्म-वन्दनकं द्वादश आवर्ताः—सूत्राभिधानगर्भाः कायव्यापारा यस्मिंस्तद् द्वादशावर्त्त, इह च प्रथमप्रविष्टस्य 'अहो १ कायं २ कायसंफासं ३ खमणिज्जो भे किलामो अप्पकिलंताणं बहुसुभेण भे दिवसो वइक्कंतो ?, जत्ता भे ४ जवणि ५ ज्जं च भे ६' इति सूत्रगर्भा गुरुचरणकमलन्यस्तहस्तशिरःस्थापनरूपाः षट् आवर्ताः भवन्ति, निष्क्रम्य पुनः प्रविष्टस्याप्येत एव षडिति मिलिता द्वादश 'चउस्सिरं'ति चत्वारि शिरांसि—उपचाराच्छिरोऽवनमनानि यत्र तच्चतुःशिरो वन्दनकं, तत्र प्रथमप्रविष्टस्य 'खामेमि खमासमणो ! देवसियं वइक्कमं' इति भणतः शिष्यस्य एकं शिरः 'अहमवि खामेमि तुमे' इति वदत आचार्यस्य द्वितीयं शिरः पुनरपि निष्क्रम्य प्रविष्टस्य क्षामणाकाले एवमेव शिरोद्वयं ज्ञेयमिति चतुःशिरो वन्दनकं, अन्यत्र पुनरेवं दृश्यते—"संफासनमणे एगं खामणानमणे सीसस्स बीयं, एवं बीयपवेसेवि दोन्नि" इति [ संस्पर्शनमने एकं क्षामणानमने शिष्यस्य द्वितीयं, एवं द्वितीयप्रवेशेऽपि द्वे ] 'तिगुत्तं'त्ति तिस्रो गुप्तयो यत्र तत् त्रिगुप्तं, मनसा सम्यक् प्रणिहितः वाचाऽस्खलितान्यक्षराण्यु-च्चारयन् कायेनाऽऽवर्तानविराधयन् वन्दनकं करोति, चशब्दोऽवधारणे, 'दुपवेसं'ति द्वौ प्रवेशौ यस्मिन् तद् द्विप्रवेशं, प्रथमो गुरुमनुज्ञाप्य प्रविशतः द्वितीयः पुनर्निर्गत्य प्रविशत इति, 'एगनिक्खमणं'ति एकं निष्क्रमणं गुरोरवग्रहादावश्यिकया निर्गच्छतो यत्र तत्तथा इत्यावश्यकपञ्चविंशतिः ॥ १८ ॥ 'छट्ठाणे'ति द्वारमधुना—

**इच्छा य अणुण्णवणा अव्वाबाहं च जत्त जवणा य । अवराहखामणावि य छट्ठाणा हुंति**
**वंदणए ॥ १९ ॥**

**'इच्छा य अणुण्णवणे'**त्यादि, इच्छा चानुज्ञापना अव्याबाधं च यात्रा च यापना चापराधक्षामणा अपि च षट् स्थानानि भवन्ति वन्दनके इति गाथासंस्कारः। तत्रेच्छा नामस्थापनद्रव्यक्षेत्रकालभावभेदैः षड्विधा, तत्र नामस्थापने क्षुण्णे, द्रव्येच्छा सचित्तादिद्रव्याभिलाषोऽनुपयुक्तस्य वेच्छामीत्येवं भणतः, क्षेत्रेच्छा मगधादिक्षेत्राभिलाषः, कालेच्छा रजन्यादिकालाभिलाषः, यथा—"रयणीमभिसारिआओ चोरा परदारिया य इच्छंति। तालायरा सुभिक्खं बहुधन्ना केइ दुब्भिक्खं ॥१॥" [रजनीमभिसारिकाः चौराः पारदारिकाश्चेच्छन्ति। तालाचराः सुभिक्षं बहुधान्याः केचिद् दुर्भिक्षम् ॥ १ ॥] भावे इच्छा प्रशस्तेतरभेदाद्विधा, प्रशस्ता ज्ञानाद्यभिलाषः अप्रशस्ता कामिन्याद्यनुरागाभिलाषः, अत्र च प्रशस्तभावेच्छयाऽधिकारः। इदानीमनुज्ञापना, साऽपि नामादिभिः षड्भेदा, तत्र नामस्थापने सुगमे, द्रव्यानुज्ञापना त्रिधा—लौकिकी लोकोत्तरा कुप्रावचनिकी च, तत्र लौकिकी सचित्ताचित्तमिश्रभेदैस्त्रिधा अश्वाद्यनुज्ञापना प्रथमा मुक्ताफलवैडूर्याद्यनुज्ञापना द्वितीया विविधाऽऽभरणविभूषितवनिताद्यनुज्ञापना तृतीया, लोकोत्तराऽपि सचित्तादिभेदैस्त्रिविधा—शिष्याद्यनुज्ञा प्रथमा वस्त्राद्यनुज्ञा द्वितीया परिहितवस्त्रादिशिष्याद्यनुज्ञा तृतीया, एवं कुप्रावचनिक्यपि त्रेधाऽवगन्तव्या, क्षेत्रानुज्ञापना यावतः क्षेत्रस्यानुज्ञापनं विधीयते यस्मिन् क्षेत्रेऽनुज्ञा व्याख्यायते क्रियते वा, एवं कालानुज्ञापनापि, भावानुज्ञापना आचाराद्यनुज्ञापना, एषा चात्र ग्राह्या। 'अव्वाबाहं'ति न विद्यते व्याबाधा यत्र तदव्याबाधं वन्दनं, सा च व्याबाधा द्रव्यतो भावतश्च, द्रव्यतः खड्गाद्यभिघातकृता, भावतो मिथ्यात्वादिकृता, सा द्विरूपाऽपि न विद्यते यत्रेति, एतच्च **'बहुसुभेण भे'** इत्यादिना कथितं, **'जत्त'**त्ति यात्रा द्विविधा—द्रव्यतो भावतश्च, द्रव्यतस्तापसादीनां मिथ्यादृशां स्वक्रियोत्सर्पणं भावतः साधूनामिति। **'जवणाय'**त्ति यापनाऽपि द्विधा—द्रव्यतो भावतश्च, द्रव्यतः शर्कराद्राक्षादिसदौषधैः कायस्य समाहितत्वं, भावतस्तु इन्द्रियनोइन्द्रियोपशान्तत्वेन शरीरस्य समाहितत्वं। क्षामणाऽपि द्रव्यतो भावतश्च, द्रव्यतः कलुषाशयस्य

इहलोकापायभीरोः भावतस्तु संविग्नचित्तस्य संसारभीरोरिति, एवं षट् स्थानानि वन्दनके भवंति ॥ ९९ ॥ 'छच्च गुण'त्ति द्वारसधुना, तत्र कश्चित्पृच्छति—को गुणोऽनेन वन्दनकेन दीयमानेन सम्पद्यते यदर्थमीदृशः क्लेशः क्रियते ?, तत आह—

**विणओवयार माणस्स भंजणा पूअणा गुरुजणस्स । तित्थयराण य आणा सुयधम्माराहणाऽकिरिया ॥ १०० ॥**

'विणओ'इत्यादि, विनयति—विनाशयति सकलक्लेशकारकमष्टप्रकारमपि कर्म यः स विनयः स एवोपचारः—आराधनाप्रकारो गुरोर्विनयोपचारः, तथा मानस्य—अहङ्कारस्य भञ्जना—विनाशः कृतो भवति, जात्यादिमदाध्माता हि न मन्यन्ते देवं न वन्दन्ते गुरून् न श्लाघन्ते परं, वन्दनके च दीयमाने एवंविधानर्थनिबन्धनमभिमानो नाशितो भवतीति, अत एव गुरुपूजाऽप्येवं भावतः कृता भवति, तथा सकलकल्याणमूला तीर्थकराणामप्येवमाज्ञा परिपालिता भवति, यतो भगवद्भिर्विनयमूल एव धर्मः प्रत्यपादि, तथा श्रुतधर्माराधना च कृता भवति, यतो वन्दनकपूर्वमेव श्रुतग्रहणं क्रियते, तथा पारम्पर्येण वन्दनकादक्रिया भवति, यतोऽक्रियः सिद्ध एव भवति, स च पारम्पर्येण वन्दनकलक्षणाद्विनयादेव सम्पद्यते, उक्तं च परमर्षिभिः—"तहारूवं णं भंते ! समणं वा माहणं वा वंदमाणस्स वा पज्जुवासमाणस्स वंदणा पज्जुवासणा य किंफला पन्नत्ता ?, गोअमा ! सवणफला, से णं सवणे किंफले पन्नत्ते ?, गोअमा ! नाणफले, से णं नाणे किंफले ?, गोअमा ! विन्नाणफले, विन्नाणे पच्चक्खाणफले, पच्चक्खाणे संजमफले, संजमे अणण्हयफले, अणण्हए तवफले, तवे वोदाणफले, वोदाणे अकिरियाफले, अकिरिया सिद्धिगइगमणफल"त्ति [ तथारूपं भदन्त ! श्रमणं वा माहनं वा वन्दमानस्य पर्युपासीनस्य वा वन्दना पर्युपासना च किंफला प्रज्ञप्ता ?, गौतम ! श्रवणफला, तत् श्रवणं किंफलं ?, गौतम ! ज्ञानफलं, तत् ज्ञानं किंफलं ?, गौतम !

विज्ञानफलं, विज्ञानं प्रत्याख्यानफलं प्रत्याख्यानं संयमफलं संयमोऽनाश्रवफलः अनाश्रवः तपःफलः तपो व्यवदानफलं व्यवदानमक्रियाफलं अक्रिया सिद्धिगतिगमनफला] इत्यादि, तत्र 'अणण्हए' इति अनाश्रवो नवकर्मानादानमित्यर्थः, 'वोदाण'त्ति व्यवदानं—विशुद्धिः पूर्वक्षपणमित्यर्थः ॥ १०० ॥ 'छच्चेव हवंति गुरुवयण'त्ति द्वारं, तत्राह—

**छंदेणं ऽणुजाणोमि तहत्ति तुब्भंपि वट्टए एवं । अहमवि खामेमि तुमे वयणाइं वंदणऽरिहस्स ॥ १०१ ॥**

'छंदेणे'त्यादि, इह हि शिष्येण गुरोः वन्दनकं दातुकामेन 'इच्छामि खमासमणो ! वंदिउं जावणिज्जाए निस्सीहियाए' इत्युक्ते गुरुर्यदि व्याक्षेपबाधायुक्तस्तदा भणति—प्रतीक्षस्वेति, तत्र बाधादिकारणं यदि कथनयोग्यं भवति तदा कथयति अन्यथा तु नेति चूर्णिकारमतं, वृत्तिकारस्य तु मतं त्रिविधेनेति भणति, मनसा वचसा कायेन निषिद्धोऽसीत्यर्थः, ततः शिष्यः सङ्क्षेपवन्दनं करोति, व्याक्षेपादिरहितश्चेद्गुरुस्तदा वन्दनकमनुज्ञातुकामश्छन्देनेति वदति, छन्देन—अभिप्रायेण ममाप्यभिप्रेतमेतदित्यर्थः, ततः शिष्येण 'अणुजाणह मे मिउग्गह'मित्युक्ते गुरुराह—अनुजानामीति अनुज्ञातस्त्वं, प्रविश ममावग्रहमित्यर्थः, ततः शिष्येण 'निस्सीहीत्यादि दिवसो वइक्कंतो' इति पर्यन्ते सूत्रे भणिते गुरुराह—तथेति यथा भवान् ब्रवीति, अस्माकं शुभेन दिवसो व्यतिक्रान्त इत्यर्थः, ततः शिष्येण 'जत्ता भे' इत्युक्ते गुरुर्वदति—युष्माकमपि वर्तते ? इति, मम तावत् संयमतपोनियमादिलक्षणा यात्रा उत्सर्पति, भवतामप्युत्सर्पतीत्यर्थः, ततः पुनरपि विनेयेन 'जवणिज्जं च भे' इत्युक्ते गुरुर्भणति—'एव'मिति इन्द्रियनोइन्द्रियोपशमादिना प्रकारेणाबाधितं वर्तते मम शरीरमित्यर्थः, ततो भूयोऽपि शिष्येण 'खामेमि खमासमणो ! देवसियं वइक्कम'मित्युक्ते गुरुर्वक्ति—अहमपि क्षमयामि त्वामिति, दैवसिकं व्यतिक्रमं

जिणमयंमि ॥ १०३ ॥ सो पासत्थो दुविहो सव्वे देसे य होइ नायव्वो । सव्वंमि नाणदंसणचरणाणं जो उ पासंमि ॥ १०४ ॥ देसंमि य पासत्थो सेज्जायरऽभिहडरायपिण्डं च । नीयं च अग्गपिण्डं भुंजइ निक्कारणे चेव ॥ १०५ ॥ ओसन्नोवि य दुविहो सव्वे देसे य तत्थ सव्वंमि । अवबद्धपीढफलगो ठवियगभोई य नायव्वो ॥ १०६ ॥ आवस्सयसज्झाए पडिलेहणभिक्खझाणभत्तट्ठे । आगमणे निग्गमणे ठाणे य निसीयणतुयट्टे ॥ १०७ ॥ आवस्सयाइयाइं न करेइ अहवा विहीणमहियाइं । गुरुवयणवला य तहा भणिओ देसावसन्नोत्ति ॥ १०८ ॥ तिविहो होइ कुसीलो नाणे तह दंसणे चरित्ते य । एसो अवंदणिज्जो पन्नत्तो वीयरागेहिं ॥ १०९ ॥ नाणे नाणायारं जो उ विराहेइ कालमाईयं । दंसण दंसणयारं चरणकुसीलो इमो होइ ॥ ११० ॥ कोउयं भूइकम्मे पसिणापसिणे निमित्तमाजीवी । कक्ककरुयाइ लक्खणं उवजीवइ विज्जमंताई ॥ १११ ॥ सोहग्गाइनिमित्तं परेसि ण्हवणाइ कोउयं भणियं । जरियाइभूइदाणं भूईकम्मं विणिद्दिट्ठं ॥ ११२ ॥ सुविणगविज्जाकहियं आइंखणघंटियाइकहणं वा । जं सासइ अन्नेसिं पसिणापसिणं हवइ एयं ॥ ११३ ॥ तीयाइभावकहणं होइ निमित्तं इमं तु आजीवं । जाइकुलसिप्पकम्मे तवगण सुत्ताइ सत्तविहं ॥ ११४ ॥ कक्ककुरुया य माया नियडीए डंभणंति जं भणियं । थीलक्खणाइ लक्खण विज्जामंताइया पयडा ॥ ११५ ॥ संसत्तो उ इयाणिं सो पुण

गोभत्तलदए चेव । उच्छिट्ठमणुच्छिट्ठं जं किंचिच्छुब्भए सव्वं ॥ ११६ ॥ ... मव य मूलुत्तर-
दोसा य गुणा य जत्तिया केई । ते तंमी(य) सन्निहिया संसत्तो भण्णए तम्हा ॥ ११७ ॥ सो दुवि-
गप्पो भणिओ जिणेहिँ जियरागदोसमोहेहिं । एगो उ संकिलिट्ठो असंकिलिट्ठो तहा अन्नो
॥ ११८ ॥ पंचासवप्पसत्तो जो खलु तिहिं गारवेहिं पडिबद्धो । इत्थिगिहिसंकिलिट्ठो संसत्तो
संकिलिट्ठो उ ॥ ११९ ॥ पासत्थाईएसुं संविग्गेसुं च जत्थ मिलई उ । तहि तारिसओ होई
पियधम्मो अहव इयरो उ ॥ १२० ॥ उस्सुत्तमायरंतो उस्सुत्तं चेव पन्नवेमाणो । एसो उ अहा-
छंदो इच्छाछंदोत्ति एगट्ठा ॥ १२१ ॥ उस्सुत्तमणुवइट्ठं सच्छंदविगप्पियं अणणुवाई । परतत्तिप-
वत्ती तिंतिणो य इणमो अहाच्छंदो ॥ १२२ ॥ सच्छंदमइविगप्पिय किंची सुहसायविगइपडि-
बद्धो । तिहिँ गारवेहिं मज्जइ तं जाणाही अहाछंदं ॥ १२३ ॥

'पासत्थो' इत्यादि पार्श्वस्थः अवसन्नो भवति कुशीलस्तथैव संसक्तः यथाछन्दोऽपि च एते अवन्दनीया जिनमते, तत्र पार्श्वे तटे ज्ञानादीनां यस्तिष्ठति स पार्श्वस्थः, अथवा मिथ्यात्वादयो बन्धहेतवः पाशा इव पाशास्तेषु तिष्ठतीति पाशस्थः, स च द्विभेदः सर्वतो देशतश्च, तत्र सर्वतो यः केवलवेषधारी सम्यग्ज्ञानदर्शनचारित्रेभ्यः पृथक् तिष्ठति, देशतः पुनः पार्श्वस्थः स यः कारणं तथाविधमन्तरेण शय्यातराभ्याहृतं नृपतिपिण्डं नैत्यिकमग्रपिण्डं वा भुङ्क्ते तथा ममैवैतानि कुलान्याभाव्यानि नान्यस्येति यः कुलनिश्रया विहरति तथा गुर्वादीनां योग्यानि स्थापनाकुलानि यः कारणमन्तरेणैव प्रविशति ॥ १०३ ॥ तदेवाह—'सो पासे' त्यादि—व्याख्यातोऽर्थः

नवरं प्रतिदिनं तवैतावन्मात्रं दास्यामि मद्गृहे नित्यमागन्तव्यमिति निमन्त्रितस्य नित्यं गृह्णतो नित्यपिण्डः, तच्छ्रेणोत्तीर्णौदनादिस्थाल्या अव्यापारिताया या शिखा—उपरितनभागलक्षणा सोऽग्रपिण्डः ॥ १०४–१०५ ॥ अवसन्नमाह—'ओसन्नो'इत्यादि, सामाचारीविषयेऽवसीदति—प्रमाद्यति यः सोऽवसन्नः, सोऽपि द्विविधः—सर्वतो देशतश्च, तत्रावबद्धपीठफलकः स्थापनाभोजी च सर्वावसन्नो ज्ञातव्यः ॥ १०६ ॥ तत्रैककाष्ठनिष्पन्नसंस्तारकालाभे बहुभिरपि वंशादिकाष्ठखण्डैर्दवरकादिबन्धान् दत्त्वा वर्षासु संस्तारकः क्रियते, स च पक्षसन्ध्यादिषु बन्धानपनीय प्रत्युपेक्षणीय इति जिनाज्ञा, यस्त्वेवं न प्रत्युपेक्षते सोऽवबद्धपीठफलकोऽभिधीयते, अथवा पुनः पुनः शयनादिनिमित्तं नित्यमास्तीर्णसंस्तारक एव एकान्तानास्तीर्णसंस्तारक एव वा य आस्ते स एवमभिधीयते, स्थापनादोषदुष्टप्राभृतिकाभोजी च—स्थापितकभोजी । देशावसन्नमाह—'आवे'त्यादि, आवश्यकं—प्रतिक्रमणादि, स्वाध्यायः—वाचनादिः आवश्यकं च स्वाध्यायश्चेति समाहारस्तस्मिन्, मुखवस्त्रिकादेः प्रत्युपेक्षणायां भिक्षायां—गोचरचर्यायां ध्याने—धर्मध्यानादिलक्षणे भक्तार्थे—भोजने भोजनमण्डल्यामितियावत् आगमने—बहिर्भागादुपाश्रयप्रवेशलक्षणे निर्गमने—प्रयोजनापेक्षया उपाश्रयाद्बहिर्गमनस्वरूपे स्थाने—कायोत्सर्गायूर्ध्वावस्थाने निषीदने—उपवेशने त्वग्वर्तने—शयने इति सर्वत्र सप्तमीनिर्देशो द्रष्टव्यः ॥ १०७ ॥ ततश्चैतेष्वावश्यकादिषु विषये देशावसन्नो भवतीति शेषः, कदेत्याह—'आवे'त्यादि, यदैतान्यावश्यकस्वाध्यायादीनि स्थानानि सर्वथा न करोत्यथवा हीनाधिकानि करोति प्रतिषिद्धकालकरणादिदोषदुष्टानि वा करोति तदा देशावसन्नो भवतीत्यर्थः, इदमत्र तात्पर्य—यः प्रतिक्रमणाद्यावश्यकं न करोति हीनाधिक्यादिदोषदुष्टं वा करोति स्वाध्यायं न करोति प्रतिषिद्धकालकरणादिदोषदुष्टं वा करोति प्रत्युपेक्षणमपि न करोति दोषदुष्टं वा करोति आलस्यवश्यः सुखलिप्सुर्भिक्षायां न पर्यटति अनुपयुक्तो वा पर्यटति अनेषणीयं वा गृह्णाति, ध्यानं शुभं यथा—"किं मे कडं किं च मे किच्चसेसं, किं

सकणिज्जं न समायरामि" ॥ [ किं मया कृतं किं च मे कृत्यं शेषं किं शक्यं न समाचरामि ] इत्यादिलक्षणं पूर्वापररात्रकाले न ध्यायति अशुभं वा ध्यायति भक्तार्थे मण्डल्यां न भुङ्क्ते कदाचिद्वा भुङ्क्ते काकशृगालादिभक्षितं वा करोति मण्डलीसम्बन्धिसंयोजनादिदोष- दुष्टं वा भुङ्क्ते, अन्ये त्वाहुः—'अब्भत्तट्ठ'त्ति अभक्तार्थग्रहणं सकलप्रत्याख्यानोपलक्षणं, ततोऽयमर्थः—प्रत्याख्यानं न करोति गुरुणा वा भणितो गुरुसम्मुखं किंचिदनिष्टमुक्त्वा करोति आगमने नैषेधिक्यादिसामाचारीं न करोति निर्गमनेऽप्यावश्यकादिसामाचारीं न करोति कायोत्सर्गं गमनागमनादिषु न करोति दोषदुष्टं वा करोति निषदनशयनयोः सन्दंशकभूप्रमार्जनादिसामाचारीं न करोति, 'गुरुवयण'त्ति सामाचारीवितथाचरणादिकरणेष्वावश्यकवेलादौ सम्यगालोचय प्रायश्चित्तं प्रतिपद्यस्वेत्यादि गुरुणा भणितः सन् तद्वचनं प्रतिवलति—सम्मुखीभूयानिष्टं किञ्चिज्जल्पति न तु गुरुवचस्तथैवानुतिष्ठति भणितः स एष देशावसन्नः, उपलक्षणं चेदं, ततः स्खलितेषु मिथ्यादुष्कृतं न दत्ते गुरवे वैयावृत्यं न करोति संवरणादिषु वन्दनकं न दत्ते आदाननिक्षेपणादिषु प्रत्युपेक्षणाप्रमार्जने न करोति इत्या- धन्यदपि सामाचारीवितथाचरणं देशपार्श्वस्थतादिकारणमिति ॥ १०८ ॥ अथ कुशीलमाह—'तिविहो होई'त्यादि, कुत्सितं शीलमस्येति कुशीलः, स त्रिविधो भवति—ज्ञानविषये दर्शनविषये चारित्रविषये च, एषोऽवन्दनीयो—वन्दनानर्हः प्रज्ञप्तो वीतरागैः—अर्हद्भिः ॥१०९॥ तत्र ज्ञानकुशीलदर्शनकुशीलौ लक्षणतः प्राह—'नाणे' इत्यादि, ज्ञानाचारं—'काले विणए' इत्यादिकमष्टप्रकारं यो विराधयति—न सम्यगनुतिष्ठति स ज्ञाने—ज्ञानविषये कुशीलो भवति, दर्शनाचारं 'निस्संकिय निक्कंखिय' इत्यादिकमष्टप्रकारं यो विराधयति स दर्शने— दर्शनविषये कुशीलः, चरणकुशीलः पुनरयं—वक्ष्यमाणलक्षणो भवति ॥११०॥ तमेवाह—'कोउय भूई'त्यादि दारगाहा, कौतुकभूतिक- र्मणी प्रश्नाप्रश्नौ निमित्तं आजीविकां कल्ककुरुकां चः समुच्चये लक्षणं विद्यामन्त्रादिकं च य उपजीवति स चरणकुशीलः ॥१११॥ एतानि

पदानि स्वयमेव व्याचष्टे—'सोहग्गाइनिमित्तं' इत्यादि, सौभाग्यं—जनमान्यताऽपत्यादिनिमित्तं परेषां—योपिदादीनां त्रिकचतुष्कचत्वरादिषु विविधौषधीमिश्रितजलस्नानमूलिकाबन्धनादि यत् क्रियते तत्कौतुकं भणितं, यद्वा कौतुकं नाम आश्चर्यम्, यथा मायाकारको मुखे गोलकान् प्रक्षिप्य कर्णेन नाशिकया वा निष्काशयति तथा मुखादग्निं निःसारयतीत्यादि तत्कुर्वन्नसौ चरणकुशीलो भवतीति द्रष्टव्यं, एवमुत्तरत्राऽपि, ज्वरितादीनामभिमन्त्रितरक्षाप्रदानं शय्यादीनां चतुर्दिशं भूतिकर्म विनिर्दिष्टम् ॥ ११२ ॥ 'सुविणगे'त्यादि, केनापि स्वामिमतं वस्तु पृष्टमपृष्टं वा स्वप्ने विद्यया जपितया कथितं 'आइंखण'त्ति कर्णपिशाचिकया घण्टिकादिभिर्वा मन्त्राभिषिक्ताभिः कथितं यत्कथ्यते अन्येषां प्रश्नाप्रश्नं भवत्येतत् ॥ ११३ ॥ 'तीयाई'त्यादि, अतीतवर्तमानभविष्यत्कालत्रयवर्तिलाभालाभादिभावकथनं भवति निमित्तं, इदं तु वक्ष्यमाणमाजीव्यत इत्याजीवं जात्यादिसप्तविधं, यथा कश्चन भिल्लमालादिजातीयमीश्वरं दृष्ट्वा प्राह—अहमपि भिल्लमालादिजातीयः, स चैकजातिसम्बन्धात्तस्य भिक्षादानादिकां प्रतिपत्तिं करोति इति जात्युपजीवी, एवं वयं भवन्तश्चैककुलशिल्पकर्मतपोगणवर्तिन इत्यादिवचनविरचनया कुलाद्याजीवी, आहारादिगृद्ध्यैव तपःसूत्राभ्यासप्रकटनं कुर्वाणश्च तपःसूत्राजीवी, तत्र कुलं—उग्रादिकं पितृसमुत्थं वा शिल्पं—विज्ञानमाचार्यशिक्षाकृतं कर्म—स्वयंशिक्षितं "साचार्यकं शिल्पम् अनाचार्यकं कर्मे"ति वचनात्, तपोऽनशनादिकं, गणो मल्लगणादिः, 'गुण' इति च पाठोऽशुद्ध इव लक्ष्यते निशीथादिभिर्व्यभिचारात्, सूत्रं—कालिकादि, आदिशब्दः स्वगतानेकभेदसंसूचकः ॥ ११४ ॥ कल्ककुरुका पुनः काऽभिधीयत इत्याह—'कक्ककुरुके'ति माया, अत्रैव तात्पर्यमाह—निकृत्या—शाठ्येन परेषां दम्भनं—वञ्चनमिति यदुक्तं भवति, अन्ये तु कल्ककुरुकाशब्दार्थमित्थमाचक्षते—यथा कल्को नाम प्रसूत्यादिषु रोगेषु क्षारपातनं अथवाऽऽत्मनः शरीरस्य देशतः सर्वतो वा लोध्रादिभिरुद्वर्तनं, तथा कुरुका देशतः सर्वतो वा शरीरस्य प्रक्षालनमिति

स्त्रीलक्षणादीनि आदिशब्दात् पुरुषलक्षणादिपरिग्रहस्तेषां कथनं, यथा—"अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु । गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥१॥" इत्यादिसामुद्रिकलक्षणकथनं, विद्यामन्त्रादयः प्रकटाः, तत्र देव्यधिष्ठायिका विद्याः देवाधिष्ठायकस्तु मन्त्रः ससाधना वा विद्या निःसाधनस्तु मन्त्र इति, आदिशब्दान्मूलकर्मचूर्णादिपरिग्रहः, तत्र मूलकर्म पुरुषद्वेषिण्याः सत्या अपुरुषद्वेषिणीकरणं अपुरुषद्वेषिण्याः सत्याः पुरुषद्वेषिणीकरणं गर्भोत्पादनं गर्भपातनमित्यादि, चूर्णयोगादयस्तु प्रकटाः, उपलक्षणमात्रं चैतत्, अतः शेषमपि शरीरविभूषादिकं चरणमालिन्यजनकं कुर्वाणश्चरणकुशील इत्यर्थः ॥११५॥ इदानीं संसक्तमाह—'संसत्तो उ' इत्यादि, गुणैर्दोषैश्च संसज्यते—मिश्रीभवतीति संसक्तः, तुशब्दोऽप्यर्थः, ततो यथा पार्श्वस्थावसन्नकुशीला वन्दनकार्हा न भवन्ति तथा संसक्तोऽपीत्यर्थः, स पुनरित्थं ज्ञातव्यो यथा गवादीनां खादनकलिन्दके उच्छिष्टमनुच्छिष्टं वा भक्तखलकर्पासादिकं क्षिप्तं सत् सर्वं प्राप्यते ॥ ११६ ॥ 'एमेवे'त्यादि, **एवमेव**—कलिन्दकक्षिप्तभक्तखलादिवत् प्राणातिपातनिवृत्त्यादिस्वरूपमूलगुणाः पिण्डविशुद्ध्यादिस्वरूपोत्तरगुणाश्च बहवो दोषाश्च तद्व्यतिरिक्तास्ते सर्वेऽपि तस्मिन् सन्निहिताः प्राप्यन्ते संसक्तो भण्यते तस्मात् ॥ ११७ ॥ 'सो दुविगप्पो'इत्यादि, संसक्तो द्विविकल्पो भणितो जिनैर्जितरागदोषमोहैः एकश्च संक्लिष्टोऽसंक्लिष्टस्तथा अन्यः ॥ ११८ ॥ तत्र **संक्लिष्टमाह**—'पंचासवे'त्यादि, पञ्चाश्रवाः—प्राणातिपातादयस्तेषु प्रवृत्तो यः खलु त्रिषु गौरवेषु—ऋद्धिगौरवादिषु प्रतिबद्धः '**इत्थीगिहिसंकिलिट्ठो**'त्ति स्त्रीसंक्लिष्टो गृहिसंक्लिष्टश्च, तत्र स्त्रीप्रतिषेवी स्त्रीसंक्लिष्टः गृहिसम्बन्धिनां द्विपदचतुष्पदधनधान्यादीनां तु तप्तिकरणप्रवृत्तो गृहिसंक्लिष्टः, स संसक्तः संक्लिष्टः ॥ ११९ ॥ **असंक्लिष्टमाह**—'**पासत्थाइ**' इत्यादि, पार्श्वस्थादिषु मिलितस्तद्रूपतां भजते, संविग्नेषु मिलितः संवि-

प्रमिवात्मानं दर्शयति, तत्र तत्र तादृशो भवतीत्यर्थः, स च प्रियधर्मोऽथवा इतरस्तु—अप्रियधर्मो भवतीति ॥ १२० ॥ इदानीं **यथा-छन्दमाह**—'उस्सुत्त'मित्यादि, सूत्रादूर्द्ध्वमुत्तीर्णं परिभ्रष्टमित्यर्थः उत्सूत्रं तदाचरन्—स्वयं सेवमानः उत्सूत्रमेव च यः परेभ्यः प्रज्ञापयन् वर्तते एप यथाछन्दः, एतस्यैव पर्यायमाह—"इच्छाछंद" इति एकार्थ नामेति ॥ १२१ ॥ अत्र च किमिदमुत्सूत्रमिति परिप्रश्ने सत्याह—'उस्सुत्त'मित्यादि, उत्सूत्रं यज्जिनादिमिरनुपदिष्टं स्वच्छन्देन—स्वाभिप्रायेण विकल्पितं—उत्प्रेक्षितं अत एव सिद्धान्ताननुपाति—स्वकीयबुद्धिरचितत्वेन जैनागमानुयायि न भवतीत्यर्थः, यथाछन्दस्यैव गुणान्तरमाह—परतप्तिषु—गृहस्थप्रयोजनेषु करणकारणानुमतिभिः प्रवृत्तः परतप्तिप्रवृत्तः, तथा **तिंतिणो** नाम यः स्वल्पेऽपि केनचित्साधुनाऽपराद्धे पुनः पुनरनवरतं झपन्नास्ते एष यथाच्छन्दः ॥ १२२ ॥ तथा—'सच्छंदे'त्यादि, स्वच्छन्दा—आगमनिरपेक्षा याऽसौ मतिस्तया विकल्प्य किञ्चिदालम्बनमध्ययनादिकं ततः सुखमास्वादयतीति सुखास्वादः स चासौ विकृतिप्रतिबद्धश्च स तथा, अपुष्टालम्बनं किंचिद्विकल्प्य यः सुखलिप्सुर्विकृतिप्रतिबद्धो भवतीत्यर्थः, तथा त्रिभि-र्गौरवैः—ऋद्धिरससातलक्षणैर्यो माद्यति तं जानीहि यथाछन्दमिति ॥ १२३ ॥ अत्र च पार्श्वस्थं सर्वथैवाचारित्रिणं केचिन्मन्यन्ते, तच्च न युक्तियुक्तं प्रतिभासते सहृदयानां, यतो यद्येकान्तेनैव पार्श्वस्थोऽचारित्री भवेत् तर्हि सर्वतो देशतश्च इति विकल्पद्वयकल्पनमसङ्गतं भवेत्, चारित्राभावस्योभयत्रापि तुल्यत्वात्, तस्मादेव भेदद्वयकल्पनाद् ज्ञायते सातिचारचारित्रसत्तापि पार्श्वस्थस्य, न चेदं स्वमनीषिकयोच्यते, यतो निशीथचूर्णावप्येवं दृश्यते—**"पासत्थो अच्छइ सुत्तपोरिसिं अत्थपोरिसिं च नो करेइ**, दंसणाइयारेसु वट्टइ, चारित्ते न वट्टइ, अइयारे वा न वज्जेइ, एवं सत्थो अच्छइ पासत्थो"त्ति [ पार्श्वस्थस्तिष्ठति सूत्रपौरुषीं अर्थपौरुषीं च न करोति,

दर्शनातिचारेषु वर्त्तते चारित्रे न वर्त्तते अतिचारान् वा न वर्जयति एवं स्वस्थस्तिष्ठति पार्श्वस्थः ] अनेन ग्रन्थेन सर्वथाऽस्य पार्श्वस्थस्य न चारित्राभावोऽवसीयते, किंतु शवलितचारित्रयुक्तताऽपीति । "पंचेव पडिसेहेत्ति" द्वारमधुना, तत्राह—

**वक्खित्तपराहुत्ते पमत्ते मा कयाइ वंदिज्जा । आहारं व करिंते नीहारं वा जइ करेइ ॥ १२४ ॥ पसंते आसणत्थे य, उवसंते उवट्ठिए । अणुन्नवित्तु मेहावी, किइकम्मं पउंजए ॥ १२५ ॥ आयप्पमाणमित्तो चउदिसिं होइ उग्गहो गुरुणो । अणणुन्नायस्स सया न कप्पए तत्थ पविसेउं ॥ १२६ ॥**

'वक्खित्ते'त्यादि, व्याक्षिप्तं अनेकभविकलोकसङ्कुलायां सभायां देशनाकरणादिना व्यग्रं १, पराहृतमिति—केनापि कारणेन पराङ्मुखं २, प्रमत्तं क्रोधनिन्द्रादिप्रमादेन मा कदाचिद्वन्देत ३, आहारं वा कुर्वाणं ४ नीहारं उच्चारं वा यदि करोति ५ तदा न वन्देतेति सम्बन्धः ॥ १२४ ॥ इह च धर्मान्तरायानवधारणप्रकोपाहारान्तरायलज्जावशपुरीषानिर्गमनादयो दोषा यथासङ्ख्येन ज्ञातव्याः, एतद्विपक्षस्त्वत्रानुक्तोऽपि विज्ञेयः, यथा—'पसंते'त्यादि, तत्र प्रशान्तो—व्याक्षेपविरहितः आसनस्थो—निपद्यास्थितः उपशान्तः—क्रोधादिप्रमादरहितः उपस्थितः —छन्देनेत्यादिवचनमुच्चारयन्, शेषं सुगमम् ॥१२५॥ अथ 'एक्कोवगह'त्ति द्वारं तत्राह—'आयप्पमाणे'त्यादि, आत्मप्रमाणमात्रः—सार्धहस्तत्रयप्रमाणश्चतुर्दिशं भवत्यवग्रहो गुरोः, अननुज्ञातस्य गुरुणा न कल्पते तन्मध्ये प्रवेष्टुं, तत्रावग्रहणमवग्रहः, स च नामस्थापनाद्रव्यक्षेत्रकालभावभेदैः षड्विधः, नामस्थापने सुगमे, द्रव्यस्य मुक्ताफलादेरवग्रहणं द्रव्यावग्रहः, यो यत्क्षेत्रमवगृह्णाति स क्षेत्रावग्रहः स च समन्ततः सक्रोशं योजनमेकस्मिन् क्षेत्रेऽवगृहीते सतीति, कालावग्रहो यो यं कालमवगृह्णाति, यथा ऋतुबद्धे मासमेकं वर्षासु चतुरो

मासानिति, भावावग्रहो द्वेधा—प्रशस्तोऽप्रशस्तश्च, प्रशस्तो ज्ञानादीनामवग्रहः, अप्रशस्तश्च क्रोधादीनां, अथवाऽवग्रहः पंचधा—'देविंद-राजगहवइ' [ देवेन्द्रराजगृहपति ] इत्यादिगाथया वक्ष्यमाणस्वरूपः ॥ १२६ ॥ अत्र च क्षेत्रावग्रहेण प्रशस्तभावावग्रहेण चाधिकारः । अथ 'पंचाभिहाण'त्ति द्वारमाह—

**वंदण[1] चिइ[2] किइकम्मं[3] पूयाकम्मं[4] च विणयकम्मं[5] च । वंदणयस्स इमाइं हवंति नामाइं पंचेव ॥ १२७ ॥**
**सीयले १ खुड्डए २ कण्हे ३, सेवए ४ पालए ५ तहा । पंचेए दिट्ठंता, किइकम्मे हुंति नायव्वा ॥ १२८ ॥**

इह कर्मशब्दः क्रियावचनः प्रत्येकं योज्यते, 'वंदणे'त्यादि, तत्र 'वदि अभिवादनस्तुत्योः' इत्यस्य वन्द्यते—स्तूयतेऽनेन प्रशस्तमनोवाक्कायव्यापारनिकरेण गुरुरिति वन्दनं तदेव कर्म वन्दनकर्म, तद् द्विधा—द्रव्यतो भावतश्च, द्रव्यतो मिथ्यादृष्टेरनुपयुक्तसम्यग्दृष्टेश्च, भावत उपयुक्तसम्यग्दृष्टेः, तथा चिञ् चयने इत्यस्य चयनं—कुशलकर्मण उपचयकरणं चितिः सैव कर्म चितिकर्म, कारणे कार्योपचारात् कुशलकर्मोपचयकरणं रजोहरणाद्युपधिसंहतिः, तदपि द्वेधा—द्रव्यतो भावतश्च, द्रव्यतस्तापसादिलिङ्गग्रहणकर्म अनुपयुक्तसम्यग्दृष्टिरजोहरणाद्युपधिक्रिया च, भावतस्तु उपयुक्तसम्यग्दृष्टिरजोहरणादिकर्म, तथा करणं कृतिः—अवनामादिक्रिया सैव कर्म कृतिकर्म, तच्च द्वेधा—द्रव्यतो भावतश्च, द्रव्यतो निह्नवादीनामवनामादिकरणमनुपयुक्तसम्यग्दृष्टीनां वा, भावत उपयुक्तसम्यग्दृष्टीनां, तथा पूजनं पूजा—प्रशस्तमनोवाक्कायचेष्टा सैव कर्म पूजाकर्म, तदपि द्वेधा—द्रव्यतो भावतश्च, द्रव्यतो निह्नवादीनामनुपयुक्तसम्यग्दृशां वा भावत उपयुक्तसम्यग्दृष्टीनां, तथा विनयनं विनयः, विनीयते विनाश्यते वाष्टप्रकारं कर्मानेनेति विनयः स एव कर्म विनयकर्म, तदपि द्वेधा—द्रव्यतो भावतश्च, द्रव्यतो

निह्नवादीनामनुपयुक्तसम्यग्दृष्टीनां वा, भावत उपयुक्तसम्यग्दृष्टीनामिति । वन्दनकस्य इमानि भवन्ति पञ्चैव नामानीति ॥ १२७ ॥

'पंचेव आहरण'त्ति द्वारं—'सीयले'त्यादि । शीतलको नृपतिः परित्यक्तराज्यसमृद्धिर्गृहीतसर्वज्ञदीक्षोऽक्षुण्णेन तदीयगुणगणेन प्रमोदमानमानसैर्निजगुरुभिर्विश्राणितश्रमणानन्ददायिसूरिपदो द्रव्यभावभेदभिन्ने वन्दनके उदाहरणं, तथा द्रव्यभावस्वरूपे चितिकर्मणि स्थविरैर्निजगुरुभिर्गुरुपदस्थापितक्षुल्लक उदाहरणं, तथा तथाभूत एव कृतिकर्मणि प्रणमदनेकमहाप्रचण्डमण्डलेश्वरमण्डलीमौलिमण्डनमुकुटकोटिनिविष्टविशिष्टमाणिक्यमालातलसमुच्छलदनवरतस्फुरदरुणकिरणपुञ्जपिञ्जरितचरणकमलः शालापतिवीरककलितः कृष्णो दृष्टान्तः, तथा पूजाकर्मणि द्रव्यभावभेदभिन्ने सेवकद्वयमुदाहरणं, तथा विनयकर्मणि द्विविध एव पालकशाम्बावुदाहरणं, पञ्चैते दृष्टान्ताः कृतिकर्मणि—सामान्यतो वन्दनके भवन्ति ज्ञातव्याः ॥ १२८ ॥ उदाहरणानि चैतानि सङ्क्षेपतः कथ्यन्ते, तत्र भावतः शीतलकोदाहरणं यथा—

भवनीवनिताभालतिलके श्रीपुरे पुरे । प्रतापाक्रान्तदिक्चक्रः, क्ष्मापालः शीतलोऽजनि ॥ १ ॥ सर्वज्ञशासनक्षीरनीरधौ सद्व्रतिस्तुतः । शुद्धपक्षद्वयो राजहंसः क्रीडति यः सदा ॥ २ ॥ तस्याभूद्भगिनी भाग्यसौभाग्यैकनिकेतनम् । सद्धर्मकर्मनिर्माणपरा शृङ्गारमञ्जरी ॥ ३ ॥ सा च विक्रमसिंहस्य, राज्ञी जाता जगत्पतेः । सल्लक्षणं क्रमात्पुत्रचतुष्टयमजीजनत् ॥ ४ ॥ शीतलश्च महीपालश्चारुवैराग्यरञ्जितः । श्रीधर्मघोषसूरीणामन्तिके व्रतमग्रहीत् ॥ ५ ॥ तं च विज्ञातसिद्धान्ततत्त्वं गीतार्थशेखरम् । गुरवस्तद्गुणैस्तुष्टाः, स्वपदेऽथ न्यवीविशन् ॥ ६ ॥ अन्येद्युर्निजपुत्राणां, कलाकौशलशालिनाम् । शृङ्गारमञ्जरी राज्ञी, रहस्येवमवोचत ॥ ७ ॥ वत्सा ! यौष्माक एवैकः, श्लाघ्यो जगति मातुलः । येन साम्राज्यमुत्सृज्य, जगृहे व्रतमुत्तमम् ॥ ८ ॥ यश्च निःशेषशास्त्राब्धिपारदृश्वा मुनीश्वरः । निस्सङ्गं विहरन्नित्यं, प्रबोधयति देहिनः ॥ ९ ॥ पचेलिमं यथाऽग्राहि, संसारस्यामुना फलम् । तथा वत्सास्तदादातुं, भव-

तामपि युज्यते ॥ १० ॥ यतः—कोटिशो विषयाः प्राप्ताः, संपदश्च सहस्रशः । राज्यं च शतशो जीवैर्न च धर्मः कदाचन ॥ ११ ॥ इत्थं मातुर्वचः श्रुत्वा, संविग्ना जनकं निजम् । तेऽनुज्ञाप्यार्हतीं दीक्षां, जगृहुः स्थविरान्तिके ॥ १२ ॥ सञ्जातास्ते च गीतार्थो, वन्दितुं निजमातुलम् । अवन्त्यां च गताः सायं, तद्वाह्यायामवस्थिताः ॥ १३ ॥ अथ गन्ता पुरीमध्ये, श्रावकः कोऽपि तद्गिरा । श्रीशीतलमुनीन्द्राय, तत्स्वरूपं न्यवेदयत् ॥ १४ ॥ इतश्च—शुभेनाध्यवसायेन, तेन तेन महात्मनाम् । तेषां निशि समुत्पन्नं, चतुर्णामपि केवलम् ॥ १५ ॥ ततश्च कृतकृत्यत्वाद्यावत्तत्रैव ते स्थिताः । प्रभाते नागमंस्तावदुत्कः श्रीशीतलोऽजनि ॥ १६ ॥ यामादूर्ध्वं स्वयं तेषामन्तिकेऽसौ गतस्ततः । अनादरपरांस्तांश्च, वीक्ष्य संस्थाप्य दण्डकम् ॥ १७ ॥ ऐर्यापथीं प्रतिक्रम्य, समालोच्यैवमभ्यधात् । कुतोऽहं भवतो वन्दे, तेऽप्यूचुस्ते यतो मतम् ? ॥ १८ ॥ अहो दुष्टा अमी शैक्षा, निर्लज्जा इत्यवेत्य सः । क्रोधाध्मातो ददौ तेषां, चतुर्णामपि वन्दनम् ॥ १९ ॥ कषायकण्डकारूढं, तमूचुस्ते त्वया पुरा । द्रव्यतो वन्दनं दत्तमिदानीं देहि भावतः ॥ २० ॥ किमेतदपि जानन्ति, भवन्त इति सोऽब्रवीत् । तेऽपि तं प्रत्यवोचन्त, जानीमो नितरामिदम् ॥ २१ ॥ आचार्यः कथमित्याह, तेऽप्याहुर्ज्ञानतः स च । ब्रवीति कीदृशात् ते च, ब्रुवन्त्यप्रतिपातितः ॥ २२ ॥ पापेनाशातिता एते, मया केवलिनो हहा । इत्थं निन्दन्निवृत्तोऽसौ, कण्डकस्थानतस्ततः ॥ २३ ॥ क्रमात् तेषु चतुर्थाय, ददतस्तस्य वन्दनम् । केवलज्ञानमुत्पन्नमपूर्वकरणादिना ॥ २४ ॥ द्रव्यतो वन्दनं पूर्वं, कषायोपेतचेतसः । जज्ञे पश्चाच्च तत् तस्य, शान्तस्वान्तस्य भावतः ॥ २५ ॥ इदानीं चितिकर्मणि तादृशमेव क्षुल्लकोदाहरणमुच्यते—

तथाहि—गच्छे गरीयसि क्वापि, गुणसुन्दरसूरिभिः । दिवं यियासुभिर्वृद्धैः, शुभलक्षणलक्षितः ॥ १ ॥ स्वपदे क्षुल्लकः कोऽपि, स्थापितः सङ्घसम्मतः । तस्य च व्रतिनः सर्वे, कुर्वन्त्याज्ञामहर्निशम् ॥ २ ॥ (युग्मम्) गीतार्थस्थविराभ्यर्णे, नानाग्रन्थान् पठत्यसौ ।

अन्यदा मोहनीयेन, मोहितो मुनिमण्डले ॥ ३ ॥ भिक्षाकृते गते साधुमेकमादाय सत्वरम् । शरीरचिन्ताव्याजेन, व्रतं मोक्तुमना बहिः
॥ ४ ॥ गतस्तिरोहिते वृक्षैः, साधावुद्धावितस्ततः । एकस्मिन् वनखण्डे च, फलपुष्पाकुलद्रुमे ॥ ५ ॥ विश्रान्तोऽसौ शमीवृक्षं, नीरसं
बद्धपीठकम् । पथिकैः पूज्यमानं च, विलोक्येति व्यचिन्तयत् ॥ ६ ॥ चतुर्भिः कलापकं । अर्च्यते यदसौ लोकैर्बकुलादिषु सत्स्वपि ।
चिरन्तनैः कृतस्यास्य, तत्पीठस्य विजृम्भितम् ॥ ७ ॥ तन्नीरसः शमीवृक्षो, यादृशस्तादृशोऽस्म्यहम् । गीतार्थेषु कुलीनेषु, सत्स्वप्यन्येषु
साधुषु ॥ ८ ॥ यन्निःशेषजनेभ्योऽहं, लभे पूजामनेकधा । सर्वं गुर्वासनादीनां, तन्माहात्म्यं विजृम्भते ॥ ९ ॥ ततस्तारुण्यमत्तेन, मयेदं
धिग् विधित्सितम् । विचिन्त्येति निवृत्तोऽसौ, निजां वसतिमागतः ॥ १० ॥ बहिर्गतानामस्माकमाकस्मिकमजायत । शूलं वेला ततो
लग्ना, साध्वादीनित्युवाच सः ॥११॥ प्रशमामृतमग्नोऽसौ, गीतार्थेभ्यो रहस्यदः । सम्यक् सकलमालोच्य, प्रायश्चित्तं प्रपन्नवान् ॥ १२ ॥
द्रव्यतश्चितिकर्माभूत्, पुरा रागाढ्यचेतसः । प्रशान्तस्य पुनस्तस्य, भावतस्तदजायत ॥ १३ ॥ इदानीं कृतिकर्मणि **कृष्णोदाहरणं**

यथा—सुराष्ट्रमण्डले श्रीमद्**द्वारमत्यामभूत्पुरि** । निःसीमविक्रमावासो, **वासुदेवो** महीपतिः ॥ १ ॥ तस्य शालापतिर्भक्तो,
वीरको नाम सेवकः । **वासुदेवमनालोक्य**, यो न भुङ्क्ते कदाचन ॥ २ ॥ **वासुदेवो** न वर्षासु, कुरुते राजपाटिकाम् । बहवो हि
विपद्यन्ते, जीवास्तस्यां तदा किल ॥ ३ ॥ अन्तरन्तःपुरं किन्तु, **कृष्णः** क्रीडति संततम् । अप्राप्नुवन् प्रवेशं च, द्वाःस्थतो द्वारि वीरकः
॥ ४ ॥ गोमयालेपिकां कृत्वा, पुष्पैरभ्यर्च्य चाव्रजत् । नित्यं नाभुङ्क्त न श्मश्रुनखशुद्धिं व्यधापयत् ॥ ५ ॥ निवृत्तास्वथ वर्षासु, विधातुं
राजपाटिकाम् । निर्गच्छन्तं नृपाः सर्वे, **श्रीकान्तमुपतस्थिरे** ॥ ६ ॥ मुदिते वीरकेऽथैत्य, प्रणते वेत्रिणं हरिः । पप्रच्छ किमयं जज्ञे,
कृशो विच्छायविग्रहः ? ॥ ७ ॥ देवपादेष्वदृष्टेषु, नाकार्षीद्भोजनादिकम् । तेनायमीदृशो जात, इति वेत्री व्यजिज्ञपत् ॥ ८ ॥ तुष्टः

प्रसादात् कृष्णोऽथ, समभाषिष्ट वीरकम् । अवारितप्रवेशं च, तं सर्वत्राप्यचीकरत् ॥ ९ ॥ इतश्च—कृष्णोऽपि किल निःशेषाः, विवाहसमये निजाः । प्रणन्तुमागताः पादानिति पृच्छति पुत्रिकाः ॥ १० ॥ स्वामिन्यः किमु दास्यो वा, वत्सा ! यूयं भविष्यथ ? । ताश्च प्राहुर्भविष्यामः, स्वामिन्यस्त्वत्प्रसादतः ॥ ११ ॥ कृष्णोऽप्युवाच यद्येवं, वत्सानां सम्मतं तदा । सन्निधौ नेमिनाथस्य गृहीत व्रतमुत्तमम् ॥ १२ ॥ समस्तास्तास्ततस्तेन, कृतनिष्क्रमणोत्सवाः । (ग्रन्थाग्रं १०००) प्रव्रज्यां प्रत्यपद्यन्त, श्रीमन्नेमिजिनान्तिके ॥ १३ ॥ अन्येद्युरेकया राज्या, शिक्षिता निजपुत्रिका । अहं दासी भविष्यामीत्येवं वाच्यस्त्वया पिता ॥ १४ ॥ ततो विहितशृङ्गारा, जनन्या प्रेषिता सती । पृष्टा कृष्णेन पुत्री सा, ददौ शिक्षितमुत्तरम् ॥ १५ ॥ संसारे मा भ्रमन्त्वन्या, अप्यसाविव मे सुताः । शिक्षये कथमेतां तत्, कृष्ण एवं व्यचिन्तयत् ॥ १६ ॥ लब्धोपायश्च पप्रच्छ, वीरकं स रहस्यदः । अरे पूर्वं त्वया किञ्चित्, कर्म निर्मितमद्भुतम् ? ॥ १७ ॥ पुरतो निजनाथस्य, नर्मनिर्मितिहेतवे । अमन्दानन्दसन्दोहः, सोऽप्येवमवदत्ततः ॥ १८ ॥ शरीरचिन्तां कुर्वाणो, बदरीशिखरस्थितम् । सरटं लेष्टुनाऽऽहत्य, भूमौ पातितवानहम् ॥ १९ ॥ चक्रोत्खातं वहन्नीरं, वर्षासु शकटाध्वना । धारितं वामपादेन, प्रतिश्रोतश्च तद्गतम् ॥ २० ॥ पायनीघटिकामध्ये, प्रविष्टो मक्षिकागणः । कुर्वन् गुमगुमारावं, कराभ्यामस्मि रुद्धवान् ॥ २१ ॥ हरिर्नृपसहस्राणामपरेद्युः सदस्यदः । अब्रवीद्वीरकस्यास्य, शृणुतान्वयकर्मणी ॥ २२ ॥ येन रक्तस्फटो नागो, निवसन् बदरीवने । पातितो क्षितिशस्त्रेण, क्षत्रियः सैष वेमवान् ॥ २३ ॥ येन चक्रोत्क्षता गङ्गा, वहन्ती कलुषोदकम् । धारिता वामपादेन, क्षत्रियः सैष वेमवान् ॥ २४ ॥ येन घोषवती सेना, वसन्ती कलशीपुरे । धारिता वामहस्तेन, क्षत्रियः सैष वेमवान् ॥ २५ ॥ निर्व्याजक्षत्रियोऽप्येष, जात उत्तरकर्मणा । तन्तुवायस्तदेतस्य, दास्यामि तनयां निजाम् ॥ २६ ॥ तेनाथ वीरकोऽभाणि, ददामि तव पुत्रिकाम् । सोऽप्यनिच्छन्नयोग्य-

त्वाद्, भ्रुकुट्या विनिवारितः ॥ २७ ॥ विवाह्य वीरकेणासौ, गृहे नीता प्रतिष्ठति । पल्यङ्के स्वामिपुत्रीति, भक्तिं चास्याः करोत्यसौ
॥ २८ ॥ राज्ञाऽथ वीरकः पृष्टः, करोति वचनं तव । मम पुत्रीति सोऽप्याह, स्वामिन्या अस्मि किङ्करः ॥ २९ ॥ अवोचद्वीरकं विष्णु-
र्यदि कारयसे न हि । सर्वं स्वकर्म तन्मूर्ध्नि, पातयिष्याम्यहं तव ॥ ३० ॥ ज्ञात्वा विष्णोरभिप्रायं, वीरकोऽपि गृहं गतः । तां निष्ठुर-
मिदं प्राहोत्तिष्ठ पायनिकां कुरु ॥ ३१ ॥ सा रुष्टा कोलिकात्मानं, न जानासीत्यजल्पत । तेन रज्ज्वाऽऽहता कृष्णं, रुदती सुदती ययौ ॥ ३२ ॥
पादौ प्रणम्य कृष्णस्य, सा जगाद सगद्गदम् । तेनाहमाहता तात !, कोलिकेन दुरात्मना ॥ ३३ ॥ अवादीत्केशवो वत्से !, तेन त्वं
भणिता मया । स्वामिनी भव दासत्वं, त्वं पुनर्याचसे ननु ॥ ३४ ॥ साऽथ व्यजिज्ञपत्तात !, नास्य गेहे वसाम्यहम् । स्वामिन्येव
भविष्यामि, सम्प्रति त्वत्प्रसादतः ॥ ३५ ॥ वीरकं समनुज्ञाप्य, ततः श्रीनेमिसन्निधौ । तां प्रव्रज्यां प्रबन्धेन, ग्राहयामास केशवः ॥ ३६ ॥
विहृत्यान्यत्र संप्राप्ते, श्रीरैवतकमन्यदा । श्रीनेमौ सपरिवारो, वन्दनाय ययौ हरिः ॥ ३७ ॥ अष्टादश सहस्राणि, यतीन्नानागुणोत्त-
रान् । सानन्दं वन्दते विष्णुर्द्वादशावर्तवन्दनैः ॥ ३८ ॥ परिश्रान्ता नृपास्तस्थुर्वीरकस्तु तथैव हि । यतींस्तदनुवृत्त्यैव, वन्दते विष्णुना
सह ॥ ३९ ॥ प्रस्वेदक्लिन्नगात्रश्च, श्रीनेमिं पृष्टवान् हरिः । [1]त्रिभिः षष्टिशतैर्नाथ !, नाहमेवं श्रमं गतः ॥ ४० ॥ अवोचद्भगवानेवं,
कृष्ण ! भक्त्याऽनया त्वया । सम्यक्त्वं क्षायिकं प्राप्तं, तीर्थकृत्कर्म चार्जितम् ॥ ४१ ॥ सप्तमपृथ्वीयोग्यं यत्त्वयाऽऽयुःकर्म निर्मितम् ।
आनीतं तत्तृतीयायां, वन्दनं ददता त्वया ॥ ४२ ॥ तदत्र कृष्णस्य भावतः कृतिकर्म, वीरकस्य तु तदनुवृत्त्या द्रव्यत इति ।

इदानीं सेवकोदाहरणं, तथाहि—एकस्य भूमिपालस्य, सेवकौ द्वौ बभूवतुः । आसन्नग्रामयोः सीमाविवादश्च तयोरभूत् ॥ १ ॥

१ नाथ ! नेत्थमहं श्रान्तः सषष्टित्रिशतैर्युधैः । प्र०

विवादमपनेतुं च, गच्छद्भ्यां नृपसन्निधौ । ताभ्यां सम्मुखमागच्छन्, मुनिर्मार्गे व्यलोक्यत ॥ २ ॥ साधुदर्शनतः सिद्धिर्मेऽनेकोऽस्य इ-त्तयोः । भक्त्या प्रदक्षिणीकृत्य, प्रणिपत्य च तं ययौ ॥ ३ ॥ उद्घाटकं द्वितीयोऽपि, तदीयं विदधत्ततः । तं तथैव नमस्कृत्य, गत्वोदीर्य चाव्रजत् ॥ ४ ॥ विवादे कथिते ताभ्यां, मध्यस्थः प्रणतो ययौ । महीभुजा जयो दत्तोऽपरस्य तु पराजयः ॥ ५ ॥ अत्र च प्रथमस्य भावतः पूजाकर्म, द्वितीयस्य च द्रव्यत इति ।

इदानीं विनयकर्मणि पालकोदाहरणं, तथाहि—द्वारवत्यामभूत्पुर्यां, वासुदेवो महीपतिः । तस्य पालकशाम्बाद्या, बभूवुर्बहवः सुताः ॥ १ ॥ अन्येद्युरागते तत्र, श्रीमन्नेमिजिनेश्वरे । वासुदेवो जगादेत्थं, कुमारान्निखिलानपि ॥ २ ॥ यः कल्ये वन्दते पूर्वं, स्वामिनः पादपङ्कजम् । यद्याचते स तत्तस्मै, ददाम्यखिलमप्यहम् ॥ ३ ॥ ततश्च—स्वमन्दिरस्थितेनैव, शाम्बेन शयनीयतः । प्रातरुत्थाय सद्भक्त्या, नेमिप्रभुरवन्द्यत ॥ ४ ॥ दुष्टबुद्धिरभव्यश्च, राज्यलोभेन सत्वरम् । पालकोऽप्यश्वरत्नेन, गत्वा प्रभूनवन्दत ॥ ५ ॥ कृष्णोऽपि तत्र गत्वाऽथ, प्रभुं नत्वा च पृष्टवान् । शाम्बपालकयोः केन, यूयमद्य नताः पुरा? ॥६॥ ततः प्रभुरपि प्राह, कृष्ण! शाम्बेन भावतः । वयं नमस्कृताः पूर्वं, द्रव्यतः पालकेन तु ॥ ७ ॥ केशवोऽपि प्रसादेन, वाजिरत्नं वितीर्णवान् । स्फुरद्गुणकदम्बाय, शाम्बाय विशदात्मने ॥ ८ ॥ अत्र च पालकस्य द्रव्यतो विनयकर्म शाम्बस्य तु भावत इति । अथ 'आसायण तेत्तीस'त्ति द्वारं, तत्राह—

पुरओ पक्खासन्ने गंता[3]चिट्ठण[6]निसीयणायमणे । आलोयणऽपडिसुणणे[11] पुव्वालवणे[13] य आलोए[14]
॥ १२९ ॥ तह उवदंस[15] निमंतण[16] खद्धा[17] अयणे[18] तहा अपडिसुणणे । खद्धंत्तिय[20] तत्थगए[21] किं[22] तुमं[23]
तज्जाय[24] नोसुमणे[25] ॥१३०॥ नो सरसि[26] कहं छित्ता[27] परिसं भित्ता[28] अणुट्ठियाइ कहे । संथारपायघट्टण[31]

चिट्ठ[31]णे[32]वसमासणे[33] यावि ॥ १३१ ॥ पुरओ अग्गपएसे पक्खे पासंमि पच्छ आसन्ने । गमणेण तिन्नि ठाणेण तिन्नि तिण्णि य निसीयणए ॥ १३२ ॥ विणयब्भंसाइगदूसणाउ आसायणाओ नव एया । सेहस्स वियारगमे रायणियपुव्वमायमणे ॥ १३३ ॥ पुव्वं गमणागमणालोए सेहस्स आगयस्स तओ। राओ सुत्तेसु जागरस्स गुरुभणियऽपडिसुणणा ॥ १३४ ॥ आलवणाए अरिहं पुव्वं सेहस्स आलवंतस्स । रायणियाओ एसा तेरसमाऽऽसायणा होइ ॥ १३५ ॥ असणाईयं लद्धुं पुव्विं सेहे तओ य रायणिए । आलोए चउदसमी एवं उवदंसणे नवरं ॥१३६॥ एवं निमंतणेऽवि य लद्धुं रयणाहिगेण तह सद्धिं । असणाइ अपुच्छाए खद्धंति बहुं दलंतस्स ॥ १३७ ॥ संगहगाहाए जो न खद्धसद्दो निरूविओ वीसुं । तं खद्धाइयणपए खद्धत्ति विभज्ज जोएज्जा ॥ १३८ ॥ एवं खद्धाइयणे खद्धं बहुयंति अयणमसणंति । आईसद्दा डायं होइ पुणो पत्तसागंतं ॥ १३९ ॥ वन्नाइजुयं उसढं रसियं पुण दाडिमंबगाइयं । मणईट्ठं तु मणुण्णं मन्नइ मणसा मणामं तं ॥ १४० ॥ निद्धं नेहवगाढं रुक्खं पुण नेहवज्जियं जाण । एवं अप्पडिसुणणे नवरिमिणं दिवसविसयंमि ॥ १४१ ॥ खद्धंति बहु भणंते खरकक्कसगुरुसरेण रायणियं । आसायणा उ सेहे तत्थ गए होइमा चऽण्णा ॥ १४२ ॥ सेहो गुरुणा भणिओ तत्थ गओ सुणइ देइ उल्लावं । एवं किंति च भणई न मत्थएणं तु वंदामि ॥ १४३ ॥ एवं तुमंति भणई कोऽसि तुमं मज्झ चोयणाए उ ? । एवं तज्जाएणं पडि-

भणणाऽऽसायणा सेहे ॥ १४४ ॥ अज्जो ! किं न गिलाणं पडिजग्गसि पडिभणाइ किं न तुमं ? । रायणिए य कहंते कहं च एवं असुमणत्ते ॥ १४५ ॥ एवं नो सरसि तुमं एसो अत्थो न होइ एवंति । एवं कहमच्छिंदिय सयमेव कहेउमारभइ ॥ १४६ ॥ तह परिसं चिय भिंदइ तह किंची भणइ जह न सा मिलइ । ताए अणुट्ठियाए गुरुभणिअ सवित्थरं भणइ ॥ १४७ ॥ सेज्जं संथारं वा गुरुणो संघट्टिऊण पाएहिं । खामेइ न जो सेहो एसा आसायणा तस्स ॥१४८॥ गुरुसेज्जसंथारगचिट्ठणनिसियणतुयट्टणेऽहऽवरा । गुरुउच्चसमासणचिट्ठणाइकरणेण दो चरिमा ॥ १४९ ॥

'पुरओ' इत्यादिगाथात्रयं १२९–१३०–१३१ एतद्गाथाव्याख्यागाथाश्च 'पुरओ अग्गपएसे' इत्यादिकाः 'करणेण दो चरिमा' इत्यन्ता अष्टादश व्याख्यायन्ते, तत्र गुरोः पुरतः—अग्रतः कारणमन्तरेण गन्ता—गमनं करोति शिष्यो विनयभङ्गादिहेतुत्वादाशातना मार्गदर्शनादिके तु कारणे न दोषः १, गुरोः पार्श्वाभ्यामपि गमने आशातना २, पृष्ठतोऽप्यासन्नगमने आशातना निःश्वासक्षुत्श्लेष्मपातादिदोषप्रसङ्गात्, ततश्च यावता भूभागेन[1] गच्छत आशातना न भवति तावता गन्तव्यमिति ३, एवं पुरतः पार्श्वतः पृष्ठतश्च स्थाने—ऊर्द्ध्वरूपे शिष्यस्याऽऽशातनात्रयं ३, पुरतः पार्श्वतः पृष्ठतश्च निषदने आशातनात्रयं ३, कारणे तु तथाविधेऽत्रापि न दोषः, एवं नव ९, अत्र च गन्ता आशातनेति तुल्याधिकरणत्वं न घटते तस्माल्लुप्तमत्वर्थीयमिदं पदं विधेयं ततो गन्ता आशातनावान् भवतीत्यर्थः, एवमन्यत्रापि स्वबुद्ध्या पदाक्षरघटना विधेया सूचापरत्वात्सूत्रस्येति, 'आयमणे'त्ति आचार्येण सहोच्चारभूमिं गतस्याऽऽचार्यात्प्रथममेवाचमनं कुर्वन्नाशातनावान्

[1] साधहस्तत्रयप्रमाणेन प्र. अ.

।१३२—१३३। 'आलोयण'त्ति उच्चारादिबहिर्देशादागतवति गुरौ शिष्यः पूर्वमेव गमनाऽऽगमनविषयामालोचनां
शिष्यो भवतीति १०, ।१३२—१३३। 'आलोयण'त्ति उच्चारादिबहिर्देशादागतवति गुरौ शिष्यः पूर्वमेव गमनाऽऽगमनविषयामालोचनां
करोति गुरुस्तु पश्चादिति शिष्य आशातनावान् भवतीति ११, 'अप्पडिसुणणे'त्ति रत्नाधिकस्य रात्रौ व्याहरतः—कः सुप्तः ? को जागर्तीति ?,
तत्र जाग्रदपि अप्रतिश्रोता भवतीत्याशातनावान् शिष्यो भवतीति १२ ।१३४। 'पुव्वालवणे य'त्ति गुरोरालपनीयस्य कस्यचिद्विनेयेन पूर्व-
मेवालपने आशातनावान् भवतीति १३ । १३५ । 'आलोए'त्ति भिक्षामशनपानखादिमस्वादिमरूपामानीय प्रथममेव कस्यापि शिष्यस्य पुरत
आलोचयति पश्चाद्गुरोरिति शिष्यस्याशातना १४, 'तह उवदंस'त्ति तथा—तेनैव प्रकारेणाऽऽशातनेत्यर्थः अशनादि४भिक्षामानीय प्रथमं
कस्यचित् शैक्षस्योपदर्शयति पश्चाद्गुरोरिति शिष्यस्याशातना १५ ।१३६। 'निमंतण'त्ति अशनादि४भिक्षामानीय गुरुमनापृच्छ्य पूर्वमेव
शैक्षमुपनिमन्त्रयति पश्चात्सूरिमित्याशातनावान् शिष्यो भवतीति १६, 'खद्ध'त्ति अशनादि ४ भिक्षामानीय सूरिभिः समं प्रतिगृह्य सूरिम-
नापृच्छ्य यस्य यस्य प्रतिभाति तस्य तस्य खद्धं खद्धं—प्रचुरं प्रचुरं ददातीति शिष्ये आशातना, खद्धशब्देन सैद्धान्तिकेन प्रचुरमभिधीयते ।१३७।
'संगहगे'त्यादि' ननु संग्रहगाथायां 'खद्ध'त्ति पृथक्पदं नोपात्तं तत्कथमयमनुपात्तो दोषो भवद्भिर्व्याख्यायते ?, अत्रोच्यते, यद्यप्यत्राऽऽहत्य
'खद्ध' शब्दो द्वारगाथायां नोक्तः तथाप्यग्रेतनेऽष्टादशे 'खद्धायणय' लक्षणे दोषे 'खद्ध' शब्दो विद्यते स एवात्र विभज्य सप्तदशदोषरूपतया
व्याख्यात इति न सङ्ग्रहकारस्य कश्चिद्दोषः, विचित्ररचनानि सूत्राणि भवन्तीति, अत एवाऽऽह विवरणगाथायां सूत्रकारः—"संगहगाहाए जो
न खद्धसद्दो निरूविओ वीसुं । तं खद्धाययणपए खद्धंति विभज्ज जोएज्जा ॥ १॥" 'वीसुं'ति विष्वग् पृथगित्यर्थः, शेषं व्याख्यातमेव १७
।१३८। इदानीमष्टादशीमाशातनामाह—'खद्धाइयण'त्ति 'खद्धाद्यदनं प्रचुरादिभक्षणमित्यर्थः, एतस्याश्च यदाशातनाविवरणं गाथाभि-
र्व्याख्यातं तद्दशाश्रुतस्कन्धसूत्राऽपेक्षया द्रष्टव्यम्, तथा च तत्रैवं सूत्रम्—'खद्धाइयण'त्ति सेहे असणं वा ४ रायणिएण सद्धिं भुंजमाणे

तत्थ सेहे खद्धं २ डायं २ ओसढं २ रसियं २ मणुन्नं २ मणामं २ निद्धं २ लुक्खं २ आहारित्ता भवइ आसायणा सेहस्स'त्ति एतत्सूत्रानुसारेणेदं द्वारं स्वयमेव विवृणोति—'खद्धायणे'त्यादि खद्धाद्यदने इत्यत्र पदे खद्धशब्देन बहु भण्यते 'अयणत्ति' अदनमशनमित्यर्थः, ततः खद्धं—बहु आदिर्यस्य तत् खद्धादि अदनं बड्डबड्डेहिं लंबणेहिं खादनमित्यर्थः, आदिशब्दात् डाकादिपरिग्रहः, अत एवाह—'आइसद्दा डायं होइ पुणो पत्तसागंतं' वृन्ताकचिर्भटिकाचणकादयः सुसंस्कृताः पत्रशाकान्ता डाकशब्देन भण्यन्ते, तं गृहीत्वा गृहीत्वा 'वण्णाइजुयं उसढ'मित्यादि शुभवर्णगन्धादियुक्तम्—ऊसढम्—उच्छ्रितमित्यर्थः 'रसियं पुण दाडिमम्बगाईयं' रसितं पुनर्दाडिमाम्रफलादिकं केनापि प्रकारेणाचित्तीकृतमाकृष्याऽऽकृष्य भुङ्क्ते, 'मणइट्ठं तु मणुन्नं' मनस इष्टं—प्रियं मनोज्ञं, तदपि तथैव 'मन्नइ मणसा मणामं तं'ति मन्यते मनसा मनाममिति निरुक्तिवशाद्भव्यमभव्यं वा यन्मन्यते तत् खादतीत्यर्थः । १३९–१४० । 'निद्धं नेहवगाढं'ति स्निग्धं स्नेहेन—घृतादिना अवगाढं—मिश्रितं तदपि तथैव भुङ्क्ते । 'रुक्खं पुण नेहवज्जियं जाण'त्ति रूक्षं पुनः स्नेहवर्जितं जानीहि, तदपि तथैव भुङ्क्ते इत्याशातना गुरुं प्रति शिष्यस्येति, अन्यत्र पुनरियमेवं व्याख्याता—शिष्येण भिक्षामानीयाऽऽचार्याय यत्किञ्चिद्दत्वा स्वयं स्निग्धमधुरमनोज्ञान्नशाकादीनां वर्णगन्धरसस्पर्शवतां च द्रव्याणामुपभोग इति १८ । इदानीमेकोनविंशतितमीमाह—'एवं अप्पडिसुणणे'त्ति सूरेः शब्दं कुर्वतोऽप्रतिश्रवणे आशातना, नन्वियं 'अप्पडिसुणणे'त्ति द्वारे पूर्वव्याख्यातैव किमर्थं पुनर्भण्यते ? इत्यत्राह—'नवरमिणं दिवसविसयं'ति इदमप्रतिश्रवणं दिवसे सामान्येनोक्तं, पाश्चात्यं तु विलसदन्धकारायां रात्रौ न कोऽपि जाग्रतं सुप्तं वा मां ज्ञास्यतीत्यप्रतिश्रवणमिति द्वयोरनयोर्भेदः १९ । १४१ । विंशतितमीमाह—'खद्धंति बहु भणंति' इत्यादि, खरम्—अत्यर्थं कर्कशेन—परुषेण बृहता च स्वरेण खद्धं—बहु प्रचुरमित्यर्थः रत्नाधिकं भाषमाणे शिष्ये आशातना २०, 'तत्थ गए होइमा चऽन्न'त्ति शिष्यो रत्नाधिकेन

व्याहृतो यत्रास्ते तत्रस्थ एवोल्लापं ददाति, न पुनः समीपमागत्योत्तरं ददातीति, इयं चान्याऽऽशातना शिष्यस्य । १४२ । अत एवाह—'सेहो गुरुणा भणिओ तत्थ गओ सुणइ देइ उल्लावं' इति व्याख्यातार्थम् २१, एवं 'किंति च भणइ'त्ति शिष्यः सूरिणा व्याहृतः किमित्येवं वक्ता, किं भणसीत्यर्थः, एवमाशातना शिष्यस्य, मस्तकेन वन्दे इति चेह वक्तव्यमिति २२. । १४३ । एवं 'तुमंति भणइ'त्ति शिष्यो रत्नाधिकं त्वमिति एकवचनान्तेन वक्ता भवति, 'कोऽसि तुमं मज्झ चोयणाए उ'त्ति कस्त्वं मम प्रेरणायामित्यादीनि शिष्यस्याशातना, शिष्यैः श्रीभगवन्तः श्रीपूज्या यूयमित्यादिभिरेव वचनैर्गुरवो भापणीया इति २३, एवं 'तज्जाएणं पडिभणणाऽऽसायणा सेहे'त्ति शिष्यो रत्नाधिकं तज्जातेन—तैरेव गुरूक्तवचनैः प्रतिभणिता भवति, कोऽर्थः ?—सूरिणा शिष्य उक्तो—'अज्जो किं न गिलाण'न्ति ग्लानस्य किमिति किञ्चिन्न करोपि ?, स ब्रूते—त्वं किमिति न करोपि ?, तथा सूरिर्वदति—त्वमालस्यवान्, स वदति—भवानेवालस्यवानित्यादिस्वरूपेण तज्जातेन गुरुं प्रति भणिते भवत्याशातना शिष्यस्येति २४ । १४४ । 'नो सुमण'त्ति इत्यस्य व्याख्या—'रायणिए य कहंते कहं च एवं असुमण'त्ति एवं धर्मगुरौ कथां कथयति असुमनस्त्वे सति शिष्यस्याऽऽशातना, अहो एवमिदं शोभनं कथितं पूज्यैरपीति सुमना नोपबृंहयतीत्यर्थः २५ । १४५ । 'एवं नो सरसि तुमं एसो अत्थो न होइ एवं'ति एवं—अनेनैव प्रकारेणान्याऽऽशातना भवति गुरोः कथां कथयतो न भवन्तः स्मरन्ति एषोऽर्थ एवं न भवतीति यदा शिष्यो भापते २६, इदानीं 'कहं छित्त'त्ति तत्राह—'एवं कहमच्छिंदिय सयमेव कहेउमारभइ' इति गुरौ धर्मकथां कथयति अहं भवतां कथां कथयिष्यामीति गुरुकथाछेदेन शिष्यस्याऽऽशातना २७ । १४६ । 'परिसं भित्त'त्ति इदानीं, तत्राह—'तह परिसं चिय भिंदइ तह किंचि भणइ जह न सा मिलइ' इति, गुरौ

---

१ शिक्षापरगुरुवचनेन एव प्र. अ.

कथां कथयति श्रृण्वत्यां च प्रमुदितायां पर्षदि शिष्यो वदति—इयं भिक्षावेला भोजनवेला सूत्रपौरुपीवेला वेत्यादि, एवं पर्षद्भेदेन आशातना तस्य २८, 'इदानीं अणुट्ठियाए कहे'त्ति तत्राऽऽह—'ताए अणुट्ठियाए गुरुभणियं सवित्थरं भणइ' इति गुरुभिर्धर्मकथायां कृतायामनुत्थितायामेव तस्यां पर्षदि स्वस्य पाटवादिज्ञापनाय गुरुभणितमेवार्थं चर्वयित्वा पुनः पुनः सविस्तरं कथयतः शिष्यस्याऽऽशातना २९। १४७। 'संथारपायघट्टणे'त्ति इदानीं तत्राऽऽह—'सेज्जं संथारं वे'ति गुरोः शय्यां संस्तारादिकं वा पादैर्घट्टयित्वाऽननुज्ञाप्य करैर्वा स्पृष्ट्वा न यः क्षमयति तस्याऽऽशातना, तथा चागमः—"संघट्टयित्ता पाएणं, तहा उवहिणामवि। खमेह अवराहं मे, वइज्ज न पुणत्तिय ॥१॥" इति [ पादाभ्यां संघट्ट्योपधिमपि क्षमयध्वं ममापराधं तथा वदेत् न पुनरिति ॥ १ ॥ ] तत्र शय्या—सर्वाङ्गीणा संस्तारकस्तु सार्धहस्तद्वयप्रमाण इति ३०। १४८। अथ 'चिट्ठत्ति' तत्राह—'गुरुसेज्जसंथारगचिट्ठण निसीयण तुयट्टणेऽहऽवरा' इति गुरूणां शय्यायां संस्तारके वाऽवस्थाने निषदने त्वग्वर्तने वा क्रियमाणेऽथाऽपरा शिष्यस्याऽऽशातना ३१ 'उच्चसमासणे यावि'त्ति तत्राह—'गुरुउच्चसमासणचिट्ठणाइकरणेण दो चरिमा' इति, तत्र गुरोः पुरत उच्चे आसने उपवेशनादि कुर्वत आशातना ३२, एवं गुरोः पुरतः समे आसने उपवेशनादि विदधत आशातना ३३, अनेन गाथोत्तरार्धेन चरमाऽऽशातनाद्वयं गृहीतमिति त्रयस्त्रिंशदाशातनाः। १४९। साम्प्रतं 'दोसा बत्तीसं'ति द्वारं तत्राह—

अणाढियं[1] च थद्धं[2] च, पविद्धं[3] परिपिंडियं[4]। टोलगइ[5] अंकुसं[6] चेव, तहा कच्छवरिंगियं[7] ॥ १५० ॥
मच्छुव्वत्तं[8] मणसा पउट्ठं[9] तह य वेइयाबद्धं[10]। भयसा[11] चेव भयंतं[12] मित्ती[13] गारव[14] कारणा[15] ॥ १५१ ॥
तेणियं[16] पडिणीयं[17] च, रुट्ठं[18] तज्जियमेव[19] य। सढं[20] च हिलियं[21] चेव, तहा विप्पलिउंचियं[22] ॥ १५२ ॥

आलिद्धमणालिद्धं[२७], ऊणं[२८] उत्तरचूलियं[२९] ॥ १५३ ॥
विद्धमविद्धं[२३] च तहा, सिंगं[२४] च करं[२५] मोयणं[२६] ।
मूयं[३०] च ढड्ढरं[३१] चेव, चुडुलीयं[३२] च अपच्छिमं । बत्तीसदोसपरिसुद्धं, किइकम्मं पउंजए ॥ १५४ ॥

'अनाढियं'चेत्यादि गाथापञ्चकव्याख्या—अनादृतं स्तब्धं प्रविद्धं परिपिण्डितं टोलगतिं अंकुशं चैव तथा कच्छपरिङ्गितमिति प्रथम-गाथायां सप्त दोषाः ७ ॥ १५० ॥ मत्स्योद्वृत्तं मनसा प्रदुष्टं तथा च वेदिकाबद्धं 'भयसा चेव'त्ति भयेनैव 'भयंतं'ति भजमानो वन्दनकमपि भजन् मैत्रीं गौरवं कारणं चाश्रित्य वन्दनकमिति द्वितीयगाथायामष्टौ दोषाः १५ ॥ १५१ ॥ स्तैन्येन—चौर्येण कृतं वन्द-नमपि स्तैन्यं प्रत्यनीकवन्दनं रुष्टं वन्दनं तर्जयन् वन्दत इति तर्जितवन्दनं शठवन्दनं चशब्दः समुच्चये हीलितवन्दनं तथा विपरिकुञ्चित-मिति तृतीयगाथायां सप्त दोषाः २२ ॥१५२॥ तथा दृष्टादृष्टं तथा शृङ्गं चः समुच्चये कर(रो)मोचनं आश्लिष्टाऽनाश्लिष्टं न्यूनं उत्तरचूलि-कमिति चतुर्थगाथायां सप्त दोषाः २९ ॥ १५३ ॥ मूकं चः समुच्चये ढड्ढरं चैव तथैव चूडलिकं च पूर्ववत् 'अपच्छिमं'ति अभद्रमुखो भद्रमुख इतिवदपश्चिमं पश्चिमं पर्यन्तवर्ति इति पञ्चमगाथार्धे त्रयो दोषाः ३२ ॥ १५४ ॥ एवं द्वात्रिंशद्दोषपरिशुद्धं कृतिकर्म प्रयुञ्जीत साधुरिति दोषनामोत्कीर्तनगाथापञ्चकार्थः ॥ इदानीं तानेव यथाक्रमं व्याचष्टे—

आयरकरणं आढा तव्विवरीयं अणाढियं होई । दव्वे भावे थद्धो चउभंगो दव्वओ भईओ[३] ॥१५५॥
पव्विद्धमणुवयारं जं अप्पिंतो णिजंतिओ होइ । जत्थ व तत्थ व उज्झइ कियकिच्चोवक्खरं[४] चेव
॥ १५६ ॥ संपिंडिए व वंदइ परिपिंडियवयणकरणओ वावि[५] । टोलोव्व उप्फडंतो ओसक्क-हिसक्कणे कुणई ॥ १५७ ॥ उवगरणे हत्थंमि व घेत्तु निवेसेइ अंकुसं बिंति[६] । ठिउविट्ठरिंगणं जं

तं कच्छवरिंगियं जाणं ॥ १५८ ॥ उट्ठिंतनिवेसिंतो उव्वत्तइ मच्छउव्व जलमज्झे । वंदिउकामो वऽन्नं झसो व परियत्तए तुरियं ॥ १५९ ॥ अप्पपरपत्तिएणं मणप्पओसो[9] य वेइयापणगं[10] । तं पुण जाणूवरि १ जाणुहिट्ठाओ २ जाणुबाहिं ३ वा ॥ १६० ॥ कुणइ करे जाणुं वा एगयरं ठवइ करजुयलमज्झे ४ । उच्छंगे करइ करे ५ अयं तु निज्जूहणाईयं[11] ॥ १६१ ॥ भयइ व भयिस्सइत्ति य इअ वंदइ ण्होरयं निवेसंतो[12] । एमेव य मित्तीए[13] गारव सिक्खाविणीओऽहं[14] ॥ १६२ ॥ नाणाइतिगं मोत्तुं कारणमिहलोयसाहयं होइ । पूयागारवहेऊं नाणग्गहणेवि एमेव[15] ॥ १६३ ॥ हाउं परस्स दिट्ठिं वंदंते तेणियं हवइ एयं । तेणोविव अप्पाणं गूहइ ओभावणा मा[16] मे ॥ १६४ ॥ आहारस्स उ काले नीहारस्सावि होइ पडिणीयं[17] । रोसेण धमधमंतो जं वंदइ रुट्ठमेयं[18] तु ॥ १६५ ॥ नवि कुप्पसि न पसीयसि कट्ठसिवो चेव तज्जियं एयं । सीसंगुलिमाईहि य तज्जेइ गुरुं पणिवयंतो[19] ॥ १६६ ॥ वीसंभट्ठाणमिणं सब्भावजढे सढं भवइ एयं । कवडंति कइयवंति य सढयावि य हुंति एगट्ठा[20] ॥ १६७ ॥ गणिवायगजिट्ठज्जत्ति हीलिउं किं तुमे पणमिऊणं[21] ? । दरवंदियंमिवि कहं करेइ पलिउंचियं एयं[22] ॥ १६८ ॥ अंतरिओ तमसे वा न वंदई वंदई उ दीसंतो । एयं दिट्ठमदिट्ठं[23] सिंगं पुण मुद्धपासेहिं[24] ॥१६९॥ करमिव मन्नइ दिंतो वंदणयं आरहंतियकरोत्ति[25] । लोइयकराउ मुक्का न मुच्चिमो वंदणकरस्स[26] ॥ १७० ॥ आलिद्धमणालिद्धं रयहरणसिरेहिं होइ चउभंगो[27] । वयणक्खरेहिं

ऊणं जहन्न[28]कालेवि सेसेहिं ॥ १७१ ॥ दाऊण वंदणं मत्थएण वंदामि चूलिया एसो[29] । मूयव्व सद्दरहिओ जं वंदइ मूयगं तं तुं[30] ॥ १७२ ॥ ढड्ढरसरेण जो पुण सुत्तं घोसेइ ढड्ढरं तंमिह[31] । चुडलिं व गिण्हिऊणं रयहरणं होइ चुडलिं[32] तु ॥ १७३ ॥ पडिक्कमणे सज्झाए काउस्सग्गेऽवराह-पाहुणए । आलोयणसंवरणे उत्तमट्ठे य वंदणयं ॥ १७४ ॥

'आयरकरण'मिति आदरः-सम्भ्रमस्तत्करणमादृतं आर्षत्वादाढा तद्विपरीतं-तद्रहितमनादृतं भवति १, जात्यादिमदस्तब्धेन क्रियमाणं वन्दनकमपि स्तब्धं, स्तब्धश्च द्रव्यतो भावतश्च भवति, तत्र चतुर्भङ्गिका, यथा—द्रव्यतः स्तब्धो न भावतः भावतः स्तब्धो न द्रव्यतः अपरो द्रव्यतोऽपि भावतोऽपि च चतुर्थो न द्रव्यतो न भावतः, तत्र द्रव्यतो वातादिपरिगृहीतं कस्यापि शरीरं न नमति भावतस्तु अस्तब्ध एवेत्याद्यो भङ्गः, द्वितीये तु भावः—चित्ताध्यवसायलक्षणः स्तब्धः शरीरं त्वस्तब्धमिति, तृतीये तु द्वयमपि स्तब्धं, चतुर्थे तु द्वयमपि न स्तब्धं, अयं च शुद्धो भङ्गः, शेषभङ्गकेष्वपि भावतः स्तब्धोऽशुद्ध एव, द्रव्यतस्तु भजनीयः—शुद्धोऽशुद्धश्च, तत्र उदरपृष्ठ-शूलव्यथादिबाधितोऽवनामं कर्तुमशक्तः कारणतः स्तब्धोऽपि शुद्धो, निष्कारणस्त्वशुद्धः, अत एवाह—'दव्वओ भइओ'त्ति द्रव्यतो भाज्यो-भजनीयो, न दुष्ट एव, भावतस्तु स्तब्धो दुष्ट एवेति तात्पर्यम् २ ॥ १५५ ॥ तृतीयदोषमाह—'पविद्धमणुवयारं'ति प्रविद्धं नाम यदुपचाररहितं, एतदेव व्याचष्टे—यद्वन्दनकं गुरुभ्योऽर्पयन्—ददत् अनियन्त्रितो भवति, अनवस्थित इत्यर्थः, अनवस्थितत्वेन च यत्र वा तत्र वा स्थाने प्रथमप्रवेशादिलक्षणेऽसमाप्तमपि वन्दनकमुज्झित्वा नश्यति, क इव यथा किमुज्झतीत्याह—'कियकिच्चोवक्खरं चेव'त्ति, एतदुक्तं भवति—केनचिद् भाटकिना कुतश्चिन्नगरान्नगरान्तरेऽवस्करं—भाण्डमुपनीतं, अवस्करस्वामिना च स भाटकी भणितः—

प्रतीक्षस्व किञ्चित्कालं, यावदस्यावस्करस्यावतारणाय स्थानं किञ्चिदन्वेषयामि कुत्रापीति, स प्राह—मयाऽस्मिन्नेव नगरे समानेतव्यमिदमित्येवोक्तं, अतः कृतकृत्यत्वान्नातः प्रतीक्षेऽहमित्युक्त्वाऽस्थाने एव तद्भाण्डमुज्झित्वा गच्छति, एवं साधुरप्यस्थाने एव वन्दनकं परित्यज्य नश्यतीत्येतावताऽंशेन दृष्टान्त इति गाथार्थः ३ ॥ १५६ ॥ चतुर्थं दोषमाह—'संपिंडिए व'त्ति यत्र सम्पिण्डितान् एकत्र मिलितानाचार्यादीनेकवन्दनकेनैव वन्दते न पृथक् २ तत्परिपिण्डितं वन्दनकमुच्यते, अथवा वचनानि—सूत्रोच्चारणरूपाणि करणानि—करचरणादीनि सम्पिण्डितानि—अव्यवच्छिन्नानि वचनकरणानि यस्य स तथा, ऊर्वोरुपरि हस्तौ परिस्थाप्य संपिण्डितकरचरणोऽव्यक्तसूत्रोच्चारणपुरस्सरं यद्वन्दते तत्परिपिण्डितमिति भावः ४, पञ्चमं दोषमाह—'टोलोव्व'त्ति अवष्वष्कणं पश्चाद्गमनमभिष्वष्कणं—अभिमुखगमनं ते अवष्वष्कणाभिष्वष्कणे टोलोव्व-तिड्डवदुत्प्लवमानः करोति यत्र तट्टोलगतिवन्दनकमित्यर्थः ५ ॥ १५७ ॥ षष्ठं दोषमाह—'उवगरणे'त्ति यत्राङ्कुशेन गजमिव शिष्यः सूरिमूर्ध्वस्थितं शयितं प्रयोजनान्तरव्यग्रं वोपगरणे—चोलपट्टककल्पादौ हस्ते वाऽवज्ञया समाकृष्य वन्दनकदानार्थमासने उपवेशयति तदङ्कुशवन्दनकमुच्यते, न हि श्रीपूज्याः कदाचनाप्युपकरणाद्याकर्षणमर्हन्त्यविनयत्वात्, किन्तु प्रणामं कृत्वा कृताञ्जलिपुटैर्विनयपूर्वकमिदमभिधीयते—उपविशन्तु भगवन्तो येन वन्दनकं प्रयच्छामीत्यतो दोषदुष्टमिदमिति, **आवश्यकवृत्तौ** तु रजोहरणमङ्कुशवत् करद्वयेन गृहीत्वा यद्वन्द्यते तदंकुशमिति व्याख्यातं, अन्ये तु अङ्कुशाक्रान्तस्य हस्तिन इव शिरोऽवनमनोन्नमने कुर्वाणस्य यद्वन्दनं तदङ्कुशमित्याहुः, एतच्च द्वयमपि सूत्रानुयायि न भवति, तत्त्वं पुनर्बहुश्रुता जानन्ति ६, सप्तमं दोषमाह—'ठिउविठ्ठरी'ति स्थितस्योर्ध्वस्थानेन 'तितीसन्नयरा' इत्यादिसूत्रमुच्चारयतः उपविष्टस्य—आसीनस्य 'अहो कायं काय' इत्यादि सूत्रं भणतः कच्छपस्येव—जलचरजीवविशेषस्येव रिङ्गणं—अग्रतोऽभिमुखं पश्चादभिमुखं च यत् किञ्चिच्चलनं तच्च यत्र करोति शिष्यस्तत्क-

च्छपरिङ्गितं जानीहि ७ ॥ १५८॥ अष्टमं दोषमाह—'उट्ठिंतनिवेसिंतो'त्ति उत्तिष्ठन्निविशमानो वा जलमध्ये मत्स्य इव चद्वर्तते—उद्वेल्लति यत्र तन्मत्स्योद्वृत्तं अथवा एकमाचार्यादिकं वन्दित्वा तत्समीप एवापरं वन्दनार्हं कञ्चन वन्दितुमिच्छंस्तत्समीपं जिगमिषुरुपविष्ट एव झष इव—मत्स्य इव त्वरितमङ्गं परावृत्य यद्गच्छति तन्मत्स्योद्वृत्तं, इत्थं च यदङ्गपरावर्तनं तज्झषावर्तमित्यमिधीयते ८ ॥ १५९ ॥ नवममाह—'अप्पपरपच्चएणं'ति मनसः प्रद्वेषोऽनेकनिमित्तो भवति, स च सर्वोऽप्यात्मप्रत्ययेन परप्रत्ययेन वा स्यात्, तत्राऽऽत्मप्रत्ययेन यदा शिष्य एव गुरुणा किञ्चित्परुपममिहितो भवतीति, परप्रत्ययेन तु यदा तस्यैव शिष्यस्य सम्बन्धिनः सुहृदादेः सम्मुखं सूरिणा किमप्यप्रियमुक्तं भवतीत्येवंप्रकारैरपरैरपि स्वपरप्रत्ययैः कारणान्तरैर्मनःप्रद्वेषो भवति यत्र तन्मनःप्रद्विष्टमुच्यते, 'अप्पपरपत्तिएणं'ति यदा पाठस्तदा आत्माऽप्रीतिकेन पराऽप्रीतिकेन च मनःप्रदुष्टं भवति, भावना पूर्ववत् ९। दशमं दोषमाह—'वेइयापणगंति' जानुनोरुपरि हस्तौ निवेश्य अधो वा पार्श्वयोर्वा उत्सङ्गे वा एकं वा जानुं दक्षिणं वा वामं वा करद्वयान्तः कृत्वा यत्र वन्दनकं विधत्ते तद्वेदिकापञ्चकदोषदुष्टवन्दनकमिति १० ॥ १६० ॥ एकादशं दोषमाह—'भयंति निज्जूहणाईयं'ति—निर्यूहनं गच्छान्निष्काशनं तदादिकं यद्भयं तेन यद्वन्दते तद्भयवन्दनकमाख्यायते इति यथासम्भवं साध्याहारा सर्वत्र व्याख्या कर्तव्या, सूचामात्रत्वात् सूत्रस्येति ११ ॥१६१॥ द्वादशं दोषमाह—'भयइ व भइस्सइ वत्ति' भर्तव्यं, भो आचार्य भवन्तं वन्दमाना वयं तिष्ठाम इत्येवं निहोरकं निवेशयन् वन्दते, किमर्थं ?—भजते वा मां भजनं वा मे करिष्यतीतिहेतोः, किमुक्तं भवति ?—एष तावद्भजते—अनुवर्तते मां सेवायां पतितो वर्तते ममेत्यर्थः, अग्रे च मम भजनं करिष्यत्यसौ, ततश्चाहमपि वन्दनकसत्कं निहोरकं निवेशयामीत्यभिप्रायेण वा यत्र वन्दते तद्भजमानवन्दनकममिधीयते इति १२। त्रयोदशं दोषमाह—'एवमेवेति मित्तीए'त्ति एवमेवेति कोऽर्थः ?—यथा निहोरकदोषादिदुष्टं वन्दते तथा

मैत्र्याऽपि–मैत्रीमाश्रित्य कश्चिद्वन्दते, आचार्येण सह मैत्रीं–प्रीतिमिच्छन् वन्दत इत्यर्थः, तदिदं मैत्रीवन्दनकमुच्यते १३। चतुर्दशं दोषमाह—'गारव सिक्खाविणीओऽहं'ति 'गारव'त्ति गौरवनिमित्तं वन्दनकमिति, कथं ?, तदित्याह—'सिक्खाविणीओऽहं'ति शिक्षा–वन्दनकप्रदानादिसामाचारीविषया तस्यां विनीतः–कुशलोऽहमित्यवगच्छंत्वमी सर्वेऽपि साधव इत्यभिप्रायवान् यथावदावर्ताद्याराधयन् यत्र वन्दते तद्गौरववन्दनकमित्यर्थः १४ ॥ १६२ ॥ इदानीं पञ्चदशं दोषमाह—कारणलक्षणदोषमभिधित्सुः कारणस्यैव तावल्लक्षणमाह—'नाणाइतियं'ति ज्ञानदर्शनचारित्रत्रयं मुक्त्वा यत्किमप्यन्यदिहलोकसाधकं वस्त्रकम्बलादि वन्दनकदानात्साधुरभिलपति तत्कारणं भवतीति प्रतिपत्तव्यं तस्माद्वन्दनकं कारणवन्दनकमिति। ननु ज्ञानादिग्रहणार्थं यदा वन्दते तदा किमेकान्तेनैव कारणं न भवतीत्याह—'पूये'त्यादि, यदि पूजाशयेन गौरवाशयेन वा ज्ञानादिग्रहणेऽपि वन्दते तदा तदपि कारणवन्दनकं भवतीति, अत्र च 'नाणग्गहणेऽवि'त्ति उपलक्षणत्वादर्शनचारित्रग्रहणेऽपीति १५ ॥ १६३ ॥ षोडशं दोषमाह—'हाउं परस्से'ति परस्य–आत्मव्यतिरिक्तस्य साधुश्रावकादेर्दृष्टिं हित्वा–वञ्चयित्वा वन्दमाने सति शिष्ये स्तैन्यवन्दनकं भवति, एतदेवोत्तरार्धेन स्पष्टतरं व्याचष्टे—स्तेन इव–तस्कर इवान्यसाध्वाद्यन्तर्धानेनात्मानं गूहयति–स्थगयति, कस्मादित्याह—'ओभावणा मा मे'त्ति नन्वसावप्यतिविद्वान् किमन्येषां वन्दनकं प्रयच्छतीत्येवंरूपाऽपभ्राजना मम मा भूदित्यर्थः १६ ॥ १६४ ॥ सप्तदशं दोषमाह—'आहारस्स उ' इत्यादि, आहारस्य नीहारस्य वा–उच्चारादेः काले वन्दमानस्य भवति प्रत्यनीकवन्दनकमिति १७। अष्टादशं दोषमाह—'रोसेण'त्ति रोषेण केनापि स्वविकल्पजनितेन 'धमधमिंतो'त्ति जाज्वल्यमानो यद् वन्दते तद् रुष्टवन्दनकमिति १८ ॥ १६५ ॥ एकोनविंशं दोषमाह—'नवि कुप्पसी'ति काष्ठघटितशिवदेवताविशेष इवावन्द्यमानो न कुप्यसि, तथा वन्द्यमानोऽप्यविशेषज्ञतया न प्रसीदसीत्येवं तर्जयन्–

मोचनवन्दनकमिति २६ ॥ १७० ॥ सप्तविंशं दोषमाह—'आलिट्ठमणालिट्ठमि'ति आश्लिष्टमनाश्लिष्टं चेति पदद्वयमाश्रित्य रजोहरणशिरसोर्विषये चतुर्भङ्गिका भवति, सा च 'अहो कायं काय' इत्याद्यावर्तकाले सम्भवति, यथा रजोहरणं कराभ्यामाश्लिष्यति शिरश्चेत्येकः १ रजोहरणं श्लिष्यति न शिर इति द्वितीयः २ शिरः श्लिष्यति न रजोहरणमिति तृतीयः ३, न रजोहरणं न शिरश्च श्लिष्यतीति चतुर्थो भङ्ग ४ इति, अत्राऽऽद्यो भङ्गः शुद्धः, शेषभङ्गत्रये आश्लिष्टानाश्लिष्टदोषदुष्टं प्रकृतवन्दनकमवतरतीति २७। अष्टाविंशं दोषमाह—'वयणक्खरेहिं'ति वचनं—वाक्यं क्रियान्ताक्षरसमूहात्मकं तेन अक्षरैर्वा एकद्व्यादिभिर्हीनं न्यूनमुच्यते, यदिवा 'जहन्नकाले व सेसेहिं'ति यदि पुनः कश्चिदत्युत्सुकः प्रमादितया जघन्येनैव—स्वल्पेनैव कालेन वन्दनकं समापयति तदा आस्तां वचनाक्षरैः शेषैरप्यवनामादिभिरावश्यकैर्न्यूनं भवतीत्यर्थः २८ ॥ १७१ ॥ एकोनत्रिंशं दोषमाह—'दाऊणं'ति दत्त्वा वन्दनकं पश्चान्महता शब्देन 'मस्तकेनाहं वन्दे' इति यत्र वदति तदुत्तरचूडमिति २९। त्रिंशत्तमं दोषमाह—'मूओव्व'त्ति आलापकाननुच्चारयन् यद् वन्दते तन्मूकमिति ३० ॥ १७२ ॥ एकत्रिंशं दोषमाह—'ढड्ढरं'ति ढड्ढरेण—महता शब्देनोच्चारयन्नालापकान् यद्वन्दते ढड्ढरं तदिहेति ३१। द्वात्रिंशं दोषमाह—'चुडुलियव्व'त्ति उल्कामिव—अलातमिव पर्यन्ते रजोहरणं गृहीत्वा भ्रमयन् यत्र वन्दते तच्चुडुलिकमिति द्वात्रिंशद्दोषाः ३२ ॥ १७३ ॥ तथा प्रत्यहं नियतान्यनियतानि च वन्दनकानि भवन्ति, अत उभयस्थाननिदर्शनायाह—'पडिक्कमणे'त्ति, प्रतीपं क्रमणं प्रतिक्रमणं, अपराधस्थानेभ्यो गुणस्थानेषु निवर्तनमित्यर्थः तस्मिन् सामान्यतो वन्दनकं भवति १, तथा स्वाध्याये वाचनादिलक्षणे २, तथा कायोत्सर्गो यः किल विकृतिपरिभोगाय आचाम्लादिविसर्जनार्थं क्रियते ३, तथाऽपराधे—गुरुविनयोल्लङ्घनरूपे यतो वन्दनकं दत्त्वा तं क्षमयति ४, तथा प्राघूर्णके समागते सति वन्दनकं भवति, अयमर्थो—ज्येष्ठस्य प्राघूर्णकस्य समागतस्य

लघवो वन्दनकं ददति, लघुनाऽपि प्राघूर्णकेन समागतेन वन्दनकं ज्येष्ठस्य दातव्यं, अत्र चायं विधिः—संभोइयमसंभोइया य दुविहा हवंति पाहुणया । संभोए आयरियं आपुच्छित्ता उ वंदंति ॥ १ ॥ इयरे पुण आयरियं वंदित्ता संदिसाविउं तह य । पच्छा वंदेइ जई गयमोहो अहव वंदावे ॥ २ ॥ इति । [ सांभोगिका अन्यसांभोगिकाश्च द्विविधा भवन्ति प्राघूर्णकाः । सांभोगिकेषु आचार्यमापृच्छ्यैव वन्दते ॥ १ ॥ इतरे पुनराचार्यं वन्दित्वा संदिश्य तथा च पश्चाद् वन्दते यतीन् गतमोहः अथवा वन्दयेत् ॥ २ ॥ ] ५, तथाऽऽलोचनायां—अपराधे सति विहारगमने च दीयमानायां वन्दनकं भवति, वन्दनकं दत्त्वा गुरूणामालोचना दीयते इत्यर्थः ६, तथा बहुमिराकारैर्गृहीतस्यैकाशनादिप्रत्याख्यानस्य भोजनानन्तरमाकारसङ्क्षेपणस्वरूपं संवरणं अथवा कृतनमस्कारसहितादिप्रत्याख्यानस्यापि पुनरजीर्णादिकारणतोऽभक्तार्थं गृह्णतः संवरणं तस्मिन्नपि वन्दनकं दत्त्वा यत् क्रियते इति ७, तथा उत्तमार्थे—अनशनसंलेखनायां वन्दनकं भवतीति एवं नियतानियतस्थानानि वन्दनकानि सामान्येन दर्शितानि ॥ १७४ ॥ इति वन्दनकद्वारं 'पडिक्कमणं'ति तृतीयद्वारमधुना

तत्र 'प्रतिक्रमण'मिति प्रतीत्ययमुपसर्गः प्रतीपे प्रातिकूल्ये च वर्तते 'क्रमु पादविक्षेपे' इत्यस्य भावे ल्युट्प्रत्ययान्तस्य प्रतीपं प्रतिकूलं वा क्रमणं प्रतिक्रमणं, ततोऽयमर्थः—शुभयोगेभ्योऽशुभयोगान्तरं क्रान्तस्य शुभेष्वेव योगेषु क्रमणात्प्रतीपं क्रमणं, यदाह—"स्वस्थानाद्यत्परं स्थानं, प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः, प्रतिक्रमणमुच्यते ॥ १ ॥" प्रतिकूलं वा गमनं प्रतिक्रमणं, यदाहुः—"क्षायोपशमिकाद्भावादौदयिकवशं गतः । तत्रापि च स एवार्थः, प्रतिकूलगमात् स्मृतः ॥ १ ॥" वीप्सार्थे वा प्रतिशब्दः प्रति प्रति क्रमणं प्रतिक्रमणं, उक्तं च—"प्रति प्रति प्रवर्तनं वा शुभेषु योगेषु मोक्षफलदेषु । निःशल्यस्य यतेर्यत्तद्वा ज्ञेयं प्रतिक्रमणम् ॥ १ ॥" तच्चातीतानागतवर्तमानकालत्रयविषयं, ननु अतीतकालविषयमेव प्रतिक्रमणं युक्तं, यत उक्तम्—"अईयं पडिक्कमामि पडुपन्नं संवरेमि अणागयं पच्चक्खामी"ति

[ अतीतं प्रतिक्राम्यामि प्रत्युत्पन्नं संवृणोमि अनागतं प्रत्याख्यामि ] तत्कथं त्रिकालविषयता प्रतिपाद्यते ?, तत्रोच्यते, अत्र प्रतिक्रमणशब्दोऽशुभयोगनिवृत्तिमात्रार्थः, यदुक्तम्—“मिच्छत्तपडिक्कमणं तहेव अस्संजमे य पडिक्कमणं । कसायाण पडिक्कमणं जोगाण य अप्पसत्थाणं ॥ १ ॥ [ मिथ्यात्वप्रतिक्रमणं तथैवासंयमस्य प्रतिक्रमणं । कषायाणां प्रतिक्रमणं योगानां चाप्रशस्तानाम् ॥ १ ॥ ] ततश्च निन्दाद्वारेणाशुभयोगनिवृत्तिरूपमतीतविषयं प्रतिक्रमणं प्रत्युत्पन्नविषयमपि संवरद्वारेणाशुभयोगानामनागतमपि प्रत्याख्यानद्वारेणेति न कश्चिद्दोषः, तच्च दैवसिकादिभेदात्पञ्चविधं भवति, दिवसस्यान्ते दैवसिकं रात्रेरन्ते रात्रिकं पक्षस्यान्ते पाक्षिकं चतुर्णां मासानामन्ते चातुर्मासिकं संवत्सरस्यान्ते सांवत्सरिकं, व्युत्पत्तिस्तु दिवसे भवमितीकणि दैवसिकमित्यादि, तत्पुनरपि द्विधा ध्रुवमध्रुवं च, तत्र ध्रुवं भरतैरावतेषु प्रथमचरमतीर्थंकरतीर्थेषु अपराधो भवतु मा वा उभयकालं प्रतिक्रमणं, अध्रुवं पुनर्मध्यमतीर्थंकरतीर्थेषु महाविदेहेषु च, तेषां हि कारणजात एव समुत्पन्ने प्रतिक्रमणं, नान्यथा, यदाहुः—‘सपडिक्कमणो धम्मो. पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं कारणजाए पडिक्कमणं ॥ १ ॥ [ सप्रतिक्रमणो धर्मः पूर्वस्य च पश्चिमस्य च जिनस्य । मध्यगानां जिनानां कारणजाते प्रतिक्रमणं ॥ १ ॥ ] प्रतिक्रमणविधिश्चायं—“पञ्चविहायारविसुद्धिहेउमिह साहु सावगो वाऽवि । पडिक्कमणं सह गुरुणा गुरुविरहे कुणइ एकोवि ॥ १ ॥” [ पञ्चविधाचारविशुद्धिहेतोरिह साधुः श्रावको वाऽपि । प्रतिक्रमणं सह गुरुणा गुरुविरहे करोत्येकोऽपि ॥ १ ॥ ] तत्राह—दैवसिकप्रतिक्रमणविधिः

**चिइवंदण उस्सग्गो पोत्तियपडिलेह वंदणालोए । सुत्तं वंदण खामण वंदणय चरित्तउस्सग्गो**

॥ १७८ ॥ दंसणनाणुस्सग्गो सुयदेवयखेत्तदेवयाणं च । पुत्तियवंदण थुइतिय सक्कथय थोत्त दे-
वसियं ॥ १७६ ॥

'चिइवंदणे'त्यादि, त्रसस्थावरजन्तुरहिते प्रेक्षितप्रमार्जिते स्थण्डिले ईर्यापथिकीं प्रतिक्रम्य प्रथमं चैत्यवन्दनं विधेयं, तदनु आचार्यादीनां क्षमाश्रमणानि दत्त्वा भूमिनिहितशिराः सकलदैवसिकातिचाराणां मिथ्यादुष्कृतं दत्त्वा सामायिकपूर्वकं 'इच्छामि ठाइउं काउस्सग्गं' इत्यादिसूत्रं भणित्वा दैवसिकातिचारचिन्तनार्थं कायोत्सर्गं करोति, कायोत्सर्गे च वहुव्यापाराः साधवो यावदेकगुणान् दैवसिकातिचारांश्चिन्तयन्ति तावदल्पहिण्डनको गुरुर्द्विगुणं चिन्तयति, ततो गुरुणोत्सारिते कायोत्सर्गे साधव उत्सारयन्ति, ततः पारयित्वा 'लोगस्सुज्जोयगरे' इत्यादि भणित्वा उपविश्य 'पोत्तियपडिलेह'त्ति पोतिकाया—मुखपोत्तिकायाः प्रतिलेखः—प्रतिलेखनं, प्रथमैकवचनस्य प्राकृतत्वाल्लोपो यथायथं द्रष्टव्यः, तदनु 'वंदण'त्ति वन्दनकं दातव्यं, 'आलोए'त्ति तत आलोचनं कार्यं, कायोत्सर्गचिन्तितातिचारांश्च गुरोः कथयति, तदनूपविश्य 'सुत्तं'ति सामायिकादिसूत्रं भणति साधुः स्वकीयं, श्रावकस्तु स्वकीयं, यावद् 'वंदामि जिणे चउवीसं' इति, 'वंदण'त्ति तदनु वन्दनकं ददाति, 'खामण'त्ति तदनु क्षामणकं कुरुते गुर्वादीनां, तत्र चायं विधिः—गुरुमादिं कृत्वा ज्येष्ठानुक्रमेण सर्वान् क्षामयति, आचीर्णं तु यदि पञ्चकादिर्गणो भवति तदा त्रितयं क्षमयति, अथ पञ्चकमध्ये तदा ज्येष्ठमेवैकमिति, एवं प्राभातिकप्रतिक्रमणादिष्वपि, तदनु 'वंदणय'त्ति वन्दनकं ददाति, चः समुच्चये, इदं च वन्दनकमल्लियावणवंदणयमित्युच्यते, आचार्यादीनामाश्रयणायेत्यर्थः 'चरित्तउस्सग्गो'त्ति तदनु चारित्रविशुद्ध्यर्थं कायोत्सर्गः कार्यः, तत्रोद्योतकरद्वयं चिन्तनीयम् ॥ १७५ ॥
'दंसणे'त्यादि, ततो दर्शनशुद्धिनिमित्तमुत्सर्गः, तत्रैकोद्योतकरचिन्तनं, तदनु ज्ञानशुद्धिनिमित्तमुत्सर्गः, तत्राप्येकोद्योतकरचिन्तनं

'सुयदेवयखेत्तदेवयाणं च'त्ति तदनु श्रुतसमृद्धिनिमित्तं श्रुतदेवतायाः कायोत्सर्गमेकनमस्कारचिन्तनं च कृत्वा तदीयां स्तुतिं ददाति अन्येन दीयमानां शृणोति वा, ततः सर्वविघ्ननिर्दलननिमित्तं क्षेत्रदेवतायाः कायोत्सर्गः कार्यः एकनमस्कारचिन्तनं कृत्वा तदीयां स्तुतिं ददाति परेण दीयमानां वा शृणोति चः समुच्चये, तदनु नमस्कारमभिधायोपविश्य 'पुत्तिय'त्ति मुखपोत्तिकायाः प्रत्युपेक्षणं, तदनु 'वंदण'त्ति मङ्गलादिनिमित्तं वन्दनकं देयं, तदनु 'इच्छामो अणुसट्ठिं' इति भणित्वा उपविश्य गुरुभिरेकस्यां स्तुतौ भणितायां 'थुइ-तिय'त्ति प्रवर्धमानं स्तुतित्रयं प्रवर्धमानस्वरेण भणनीयं, तदनु 'सक्कथयं'ति शक्रस्तवो भणनीयः 'थोत्तं'ति तदनु स्तोत्रं भणनीयं, तदनु दिवसातिचारविशुद्धये कायोत्सर्गः करणीयः लोगस्योद्योतकरचतुष्टयं च चिन्तनीयं, इदं च गाथायामभणितमपि विज्ञेयं, 'देवसियं'ति इदं सन्ध्यायां दैवसिकं प्रतिक्रमणं विज्ञेयम् ॥ १७६ ॥ अथ प्राभातिकप्रतिक्रमणमभिधीयते, तत्राह—

**मिच्छादुक्कड पणिवायदंडयं काउसग्गतियकरणं । पुत्तिय वंदण आलोय सुत्त वंदणय खामणयं ॥ १७७ ॥ वंदणयं गाहातियपाढो छम्मासियस्स उस्सग्गो । पुत्तिय वंदण नियमो थुइतिय चि-इवंदणा राओ ॥ १७८ ॥ णवरं पढमो चरणे दंसणसुद्धीय बीय उस्सग्गो । सुअनाणस्स त-ईओ नवरं चिंतेइ तत्थ इमं ॥ १७९ ॥ तइए निसाइयारं चिंतइ चरिमंमि किं तवं काहं? । छ-म्मासा एगदिणाइ हाणि जा पोरिसि नमो वा ॥ १८० ॥**

'मिच्छादुक्कड पणिवाये'त्यादि, तत्र भूमितलनिवेशितशिरःकमलः सकलनिशातिचाराणां मिथ्यादुष्कृतं दत्त्वा प्रणिपातदण्डकं-शक्रस्तवमभिधायोत्थाय सामायिकादिसूत्रं भणित्वा चारित्रशुद्धिनिमित्तं कायोत्सर्गं करोति एकोद्योतकरचिन्तनं, कृत्वा पारयित्वा च

दर्शनशुद्धिनिमित्तं 'लोगस्सुज्जोयगरं' भणित्वा पुनः कायोत्सर्गं करोति, तत्राप्येकमुद्योतकरं चिन्तयति, पारयित्वा ज्ञानविशुद्धिनिमित्तं 'पुक्खरवरि'त्ति भणित्वा पुनः कायोत्सर्गं विधत्ते, तत्र च निशातिचारांश्चिन्तयति इति कायोत्सर्गत्रितयकरणं पारयित्वा सिद्धादिस्तुतिं पठित्वा उपविश्य 'पुत्तिय'त्ति मुखपोतिकां प्रत्युपेक्ष्य वन्दनकमालोचनं च कृत्वा उपविश्य नमस्कारपूर्वं सामायिकादिसूत्रं 'वंदामि जिणे चउव्वीसं' इति पर्यन्तं भणित्वा वन्दनकं ददाति, तदनु क्षामणं कुरुते ॥ १७७ ॥ 'वंदणय'मित्यादि, पुनर्वन्दनं 'आयरिय उवज्झाए' इत्यादिगाथात्रिकस्य पाठः, तदनु पूर्ववत्सामायिकादिसूत्रं भणित्वा षाण्मासिकतपसश्चिन्तनाय कायोत्सर्गः, तत्र च—'येन संयमयोगानां, हानिः काऽपि न जायते । तत्तपः प्रतिपद्येऽहमिति भावितमानसः ॥ १ ॥ श्रीमहावीरतीर्थेऽस्मिन्नुपवासतपः किल । षण्मासान् यावदादिष्टमुत्कृष्टं गणधारिभिः ॥ २ ॥' ततो जीव ! शक्तोऽसि त्वं संयमयोगानाबाधया षाण्मासिकं तपः कर्तुम् ? इति विचिन्त्य न शक्नोमीति परिभावयति, एकदिनहीनान् षण्मासान् शक्नोषि कर्तुं ?, एकोनत्रिंशद्दिनानि पञ्चमासांश्चेत्यर्थः, न शक्नोमीति पूर्ववत्, पुनर्द्व्यादिदिनहीनान् यावदेकोनत्रिंशद्दिनहीनान् षण्मासानिति, एवं पञ्च मासान् चतुरस्त्रीन् द्वौ चैकादिदिनहीनांश्च चिन्तयेत्, एकं च मासमेकादिदिनहीनं यावत् त्रयोदशदिनहीनं, ततश्चतुस्त्रिंशद् द्वात्रिंशादिकं द्विकद्विकहान्या चिन्तयेत् यावच्चतुर्थं, तदनु आचाम्लनिर्विकृतिकपूर्वार्द्धएकाशनादिनमस्कारसहितान्तं यावत्कर्तुं शक्नोति तन्मनसि कृत्वा कायोत्सर्गं पारयति, चतुर्विंशतिस्तवं च भणित्वा उपविश्य 'पुत्तिय'त्ति मुखपोतिकां प्रत्युपेक्षते, 'वंदण'त्ति ततो वन्दनकं दत्ते, 'नियमो'त्ति ततो नियमः—प्रत्याख्यानं, 'थुइतिय'त्ति ततः स्तुतित्रितयं प्रवर्धमानाक्षरं गृहगोधिकादिसत्त्वोत्थापनपरिहारायाल्पस्वरेण भणति, 'चिइवंदण'त्ति ततश्चैत्यवन्दनं विधत्ते 'राओ'त्ति रात्रिप्रतिक्रमणे ॥ १७८ ॥—'नवर'मित्यादि नवरं केवलं प्रथम उत्सर्गः 'चरणे'ति चारित्रशुद्धिनिमित्तं, दर्शनशुद्धिनिमित्तं च द्वितीय

उत्सर्गे एकैकोद्योतकरचिन्तनं, श्रुतज्ञानस्य शुद्धिकृते तृतीयः, नवरं—केवलं तत्रेदं—वक्ष्यमाणं चिन्तयति तदेवाह—॥ १७९ ॥ 'तइए निसे'त्यादि, तृतीये उत्सर्गे निशातिचारं चिन्तयति, चरिमे कायोत्सर्गे किं तपः करिष्यामीति ?, षण्मासान् एकदिनादिहान्या यावत्पौरुषी 'नमोवे'ति नमस्कारसहितं वा यावच्चिन्तयेदिति । १८० ॥

ननु दैवसिकप्रतिक्रमणे प्रथमोत्सर्गेऽतिचाराश्चिन्त्यन्ते द्वितीयादिकायोत्सर्गेषु च चारित्रादिशुद्धयः क्रियन्ते, प्राभातिकप्रतिक्रमणे च किमिति वैपरीत्येनोत्सर्गकरणमिति, अत्रोच्यते, प्राभातिकप्रतिक्रमणे प्रथमकायोत्सर्गे प्रबुद्धोऽप्यद्यापि निद्राघूर्णमानलोचनः किञ्चिदालस्यवश्यशरीरः सम्यग्निशातिचारानशेषानपि स्मरन्न पट्यते, निद्राघूर्णितत्वेन च परस्परं यतीनां संघट्टनादोषो भवति, उत्सर्गानन्तरं च कृतिकर्मादिकं क्रियमाणं नास्खलितं सम्पद्यते, चारित्रदर्शनशुद्धिविधायिनोः कायोत्सर्गयोः कृतयोर्निद्रामुद्रायां च लोचनयोरपगतायामालस्ये च शरीरादपगते सञ्जातपाटवः सुखेनैव सर्वान्निशातिचारान् ज्ञानशुद्धिहेतुतृतीयोत्सर्गे स्मरति साधूनां परस्परघट्टनां रक्षति कृतिकर्मादिकं चास्खलितं यथास्थितमनलसः करोतीति प्रथमतः प्राभातिकप्रतिक्रमणे चारित्रशुद्ध्यादिकायोत्सर्गाः पश्चादतिचारकायोत्सर्ग इति । यदाहुः समयवादिनः—"निद्दामत्तो न सरइ अइयारे कायघट्टणऽन्नोन्ने । किइअकरणदोसा वा गोसाई तिन्नि उस्सग्गा" ॥ १ ॥ [ निद्रावान् न स्मरति अतीचारान् अन्योऽन्यं। कायघट्टना कृत्यकरणदोषा वा ततः प्रभाते आदौ त्रय उत्सर्गाः ॥ १ ॥ ] इति प्राभातिकप्रतिक्रमणविधिः ॥ इदानीं पाक्षिकप्रतिक्रमणविधिमाह—

**मुहपोत्तीवंदणयं संबुद्धाखामणं तहालोए। वंदण पत्तेयं खामणाणि वंदणयसुत्तं च ॥१८१॥ सुत्तं**
**अब्भुट्ठाणं उस्सग्गो पुत्तिवंदणं तह य। पज्जंते खामणयं एस विही पक्खिपडिक्कमणे ॥ १८२ ॥**

'मुहपुत्तीवंदणये'त्यादि, तत्र चतुर्दशीपर्वणि दैवसिकं प्रतिक्रमणं 'तिविहेण पडिकंतो वंदामि जिणे चउवीसं' इत्येतदन्तं विधाय
'देवसियं आलोइय पडिकंतं इच्छाकारेण संदिसह भगवन पक्खियमुहपत्ती पडिलेहुं ?' गुरुणा 'पडिलेह'त्ति भणिते क्षमा-
श्रमणं दत्त्वा मुखपोत्तिकां प्रत्युपेक्षते, तदनु वन्दनकं ददाति, ततः सम्बुद्धानां—गीतार्थानां पञ्चानां क्षामणकं विधत्ते, तथेति समुच्चये,
तत आलोचनं कुर्वन्ति, तत्र च गुरुश्चतुर्थं दत्ते, चातुर्मासिकसंवत्सरयोश्च षष्ठाष्टमे, ततः पुनर्वन्दनकं, ततः प्रत्येकं यतीनां क्षामणानि
कुर्वन्ति, ततः पुनर्वन्दनकं, ततः पाक्षिकसूत्रं त्रिशतं गुरोरादेशादूर्ध्वस्थितो भणत्येकः, शेषाश्चोर्ध्वस्थिता एव विकथादिरहिताः
शृण्वन्ति, यदि च बालवृद्धादयो वा तावतीं वेलामूर्ध्वस्थिता न शक्नुवन्ति स्थातुं, तदा क्षमाश्रमणं दत्त्वा गुरूननुज्ञाप्योपविश्य निद्रादि-
रहिताः प्रवर्धमानशुभभावाः शृण्वन्ति ॥ १८१ ॥ सूत्रसमाप्तौ पुनरुपविश्य 'सुत्तं'ति प्रतिक्रमणसूत्रं भणन्ति ततोऽभ्युत्थानं कृत्वा
सामायिकादिसूत्रं च भणित्वा द्वादशोद्योतकरचिन्तनमुत्सर्गं करोति, पारयित्वा च 'पोत्ति'त्ति मुखपोतिकाप्रत्युपेक्षणं, ततो वन्दनकं,
तथा चेति समुच्चये, 'पज्जंते'त्ति वन्दनकपर्यन्ते क्षामणकपञ्चकं कुर्वन्तीति **पाक्षिकप्रतिक्रमणविधिः** ॥ १८२ ॥ चातुर्मासिके
वार्षिकेऽपि च प्रतिक्रमणेऽयमेव विधिः, केवलमत्र सप्त सम्बुद्धक्षामणानि क्रियन्ते, महति च चातुर्मासिके कायोत्सर्गे विंशतिरुद्यो-
तकराश्चिन्त्यन्ते, वार्षिके च चत्वारिंशदेको नमस्कारश्चेति, तदनु पूर्वप्रतिक्रान्तदैवसिकाच्छेषं प्रतिक्रमणं कुर्वन्ति, पाक्षिकादिषु त्रिषु
श्रुतदेवताकायोत्सर्गस्थाने भुवनदेवताकायोत्सर्गः क्रियते ननु दैवसिकप्रतिक्रमणादिषु कियन्तश्चतुर्विंशतिस्तवाश्चिन्त्यन्ते ? तत्राह—

**चत्तारि दो दुवालस वीसं चत्ता य हुंति उज्जोया। देसिय राइय पक्खिय चाउम्मासे य वरिसे य**
**॥१८३॥ पणवीस २५ अद्धतेरस १२½ सलोग पन्नत्तरी ७५ य बोद्धव्वा। सयमेगं पणवीसं १२५ बे**

**वावण्णा य २५२ वरिसंमि ॥ १८४ ॥ सांय सयं गोसर्द्धं तिन्नेव सया हवंति पक्खमि । पंच य चाउम्मासे वरिसे अट्ठोत्तरसहस्सा ॥ १८५ ॥ देवसियचाउमासियसंवच्छरिएसु पडिक्कमणमज्झे । मुणिणो खामिज्जंति तिन्नि तहा पंच सत्त कमा ॥ १८६ ॥**

'चत्तारी'त्यादि चत्वारो द्वौ द्वादश विंशतिश्चत्वारिंशत् चः समुच्चये भवन्त्युद्योता—लोकस्योद्योतकरा दैवसिके रात्रिके पाक्षिके चातुर्मासिके वार्षिके च प्रतिक्रमणे यथासङ्ख्येन चिन्त्यन्ते '**चंदेसु निम्मलयरा**' इत्येतदन्ता इति ॥ १८३ ॥ ननु ज्ञातमिदं दैवसिकादिप्रतिक्रमणकायोत्सर्गेष्वेतावन्त एवैतदन्ताश्चिन्त्यंत इति, परमेषु चतुरादिषु '**चंदेसु निम्मलयरा**' इत्यन्तेषु लोकस्योद्योतकरेषु चिन्त्यमानेषु कुत्र कियन्तः श्लोका भवन्तीत्याह—'**पणवीस**' इत्यादि, दैवसिकप्रतिक्रमणे लोकस्योद्योतकरचतुष्टये चिन्त्यमाने पञ्चविंशतिः श्लोका भवन्ति, विद्वद्भाषया गाथादयोऽपि श्लोका भण्यन्ते, तत्रैकस्मिन्नुद्योतकरे षट् श्लोकाः, ते च चतुर्गुणाश्चतुर्विंशतिः, एकश्च पादश्चतुर्गुण एकः श्लोक इति मिलिताः पञ्चविंशतिः श्लोकाः प्राभातिकप्रतिक्रमणे उद्योतकरद्वये तथैव चिन्त्यमाने द्वादश श्लोकाः श्लोकार्धं च, षट् द्विगुणा द्वादश पादश्च द्विगुणस्तदर्धं भवन्त्यतः अर्धत्रयोदशेति, '**सिलोग पन्नत्तरी य**'त्ति श्लोकानां पञ्चसप्ततिः पाक्षिकप्रतिक्रमणोद्योतेषु द्वादशसु तथैव चिन्त्यमानेषु, यतो द्वादश षड्गुणा द्विसप्ततिः, पादश्च द्वादशगुणितः श्लोकत्रयं, मिलिताश्च पञ्चसप्ततिर्बोद्धव्या । '**सयमेगं पन्नवीसं**'ति चातुर्मासिकप्रतिक्रमणे विंशत्युद्योतकरेषु पञ्चविंशं श्लोकशतं भवति, यतो विंशतिः षड्गुणिता विंशं शतं, पादविंशतौ च पञ्च श्लोकाः, मिलिताः पञ्चविंशं शतमिति, '**बे बावन्ना य वरिसंमि**'त्ति द्वे शते द्विपञ्चाशदधिके श्लोकानां वार्षिकप्रतिक्रमणकायोत्सर्गे चत्वारिंशदुद्योतकराणामष्टोच्छ्वासनमस्कारस्य च चिन्तनेन भवत, चत्वारिंशतः षड्गुणने पादचत्वारिंशति

चाष्टौच्छ्वासस्य चिन्तने द्वौ श्लोकौ, मिलिताश्च द्वे शते च श्लोकदशकरूपायां क्षिप्तायां सार्धे द्वे शते, ततो भवतो नमस्कारस्य चाष्टौच्छ्वासस्य चिन्तने द्वौ श्लोकौ, मिलिताश्च द्वे शते द्विपञ्चाशदधिके भवत इति ॥ १८४ ॥ **ननु कस्मिन् कायोत्सर्गे** कियन्तः पादा भवन्तीत्याह—'**सायसय**'मित्यादि, 'सायें' त्यत्रानुस्वारलोपः प्राकृतत्वात्कृतः, ततः सायं—सन्ध्यायां प्रतिक्रमणे शतं पादानां, तत्र श्लोकस्य चतुष्पादरूपत्वात् पञ्चविंशतिश्लोकानां चतुर्भिर्गुणने शतं पादानां भवति, '**गोसे**'ति प्राभातिकोद्योतकरद्वयेऽर्धं शतस्य भवति, पादानां पञ्चाशदित्यर्थः, '**तिन्नेव** सय'त्तिपाक्षिकप्रतिक्रमणकायोत्सर्गे द्वादशोद्योतकराणां शतत्रयं पादानां भवति, द्वादशानां पञ्चविंशत्या गुणने शतत्रयसम्भवादिति, '**पंच** य **चाउम्मासे**'त्ति चातुर्मासिकप्रतिक्रमणोद्योतकरविंशतौ चिन्त्यमानायां पञ्च शतानि पादानां भवन्ति, विंशतेः पञ्चविंशत्या गुणने पञ्चशतसम्भवादिति, '**वरिसे**'त्ति वार्षिकप्रतिक्रमणोत्सर्गोद्योतकरचत्वारिंशतो नमस्कारस्य च चिन्तने अष्टोत्तरसहस्रं पादानां भवति, चत्वारिंशतः पञ्चविंशत्या गुणने सहस्रसम्भवात्, नमस्कारस्य चाष्टपादरूपत्वाच्चेति, पदशब्देन चात्र पाद एव ज्ञातव्यः, प्राकृतत्वेन ह्रस्वकरणात्, यद्वा पादस्यैवायं पदशब्दः पर्यायो ज्ञेय इति ॥ १८५ ॥ **ननु कुत्र प्रतिक्रमणे कियन्ति** क्षमणकानि भवन्तीत्याह—'**देवसिये**'त्यादि, इह दैवसिकग्रहणेन रात्रिकपाक्षिकयोरपि ग्रहणं, तुल्यवक्तव्यत्वात्, ततो दैवसिकरात्रिकपाक्षिकेषु चातुर्मासिके सांवत्सरिके च पर्वणि 'प्रतिक्रमणमध्ये' प्रतिक्रमणे क्रियमाणे '**मुनयः**' साधवः क्षम्यन्ते, तत्र त्रयः पञ्च सप्त च 'क्रमात्' यथासङ्ख्येनेत्यर्थः, अयमभिप्रायः—दैवसिकरात्रिकयोस्त्रयः साधवः क्षाम्यन्ते, पाक्षिकेऽपि त्रयः, यदुक्त**मावश्यकचूर्णौ** पाक्षिकप्रतिक्रमणप्रस्तावे—'एवं जहन्नेणं तिन्नि, उक्कोसेणं सव्वेवि'त्ति [ एवं जघन्येन त्रयः उत्कृष्टतः सर्वेऽपि ] चातुर्मासिके पञ्च सांवत्सरिके च सप्तेति, वृद्धसामाचारी तु दैवसिकरात्रिकयोस्त्रयः पाक्षिके पञ्च चातुर्मासिकसांवत्सरिकयोस्तु सप्त, यदुक्तं **पाक्षिकवृत्तौ** सम्बुद्धक्षमणप्रस्तावे—'एवं जहन्नेणं तिन्नि वा

पञ्च वा चाउम्मासिए संवच्छरिए य सत्त उक्कोसेणं तिसुवि ठाणेसु सव्वे खामिज्जंतित्ति' [ एवं जघन्येन त्रयो वा पञ्च वा चातुर्मासिके सांवत्सरिके च सप्त उत्कर्षेण त्रिष्वपि स्थानेषु सर्वे क्षाम्यन्ते ] ॥ १८६ ॥ इति तृतीयं प्रतिक्रमणद्वारं ।

**चतुर्थं प्रत्याख्यानद्वारमिदानीं**, तत्र च प्रतीति–अविरतिस्वरूपप्रभृतिप्रतिकूलतया आमर्यादया आकारकरणस्वरूपया आख्यानं–कथनं प्रत्याख्यानं, तद् द्वेधा–मूलगुणरूपमुत्तरगुणरूपं च, मूलगुणा यतीनां पञ्च महाव्रतानि श्रावकाणामनुव्रतानि, उत्तरगुणास्तु यतीनां पिण्डविशुद्ध्यादयः श्रावकाणां तु गुणव्रतशिक्षाव्रतानि, मूलगुणानां हि प्रत्याख्यानत्वं हिंसादिनिवृत्तिरूपत्वात्, उत्तरगुणानां तु पिण्डविशुद्ध्यादीनां दिग्व्रतादीनां च प्रतिपक्षनिवृत्तिरूपत्वात्, तत्र च स्वयं प्रत्याख्यानकाले विनयपुरस्सरं सम्यगुपयुक्तः श्रीगुरुवचनमनूच्चरन् प्रत्याख्यानं कुरुते, तत्र च प्रत्याख्याने चतुर्भङ्गी, यथा—स्वयं प्रत्याख्यानस्वरूपं जानन् ज्ञस्यैव गुरोः पार्श्वे करोतीति प्रथमो भङ्गः, गुरोर्ज्ञस्य स्वयमजानन् करोतीति द्वितीयः, शिष्यस्य ज्ञत्वे गुरोरज्ञत्वे तृतीयः, गुरोरज्ञत्वे शिष्यस्य चाज्ञत्वे चतुर्थः, न चेदं स्वमनीषिकयैवोच्यते, सिद्धान्तेऽभिहितत्वात् यदाह—“ **जाणगो जाणगसगासे अजाणगो जाणगसगासे जाणगो अजाणगसगासे अजाणगो अजाणगसगासे** ” [ ज्ञो ज्ञसकाशे अज्ञो ज्ञसकाशे ज्ञोऽज्ञसकाशे अज्ञोऽज्ञसकाशे ॥ इत्यादि, तत्र प्रथमो भङ्गः शुद्धः, द्वयोरपि ज्ञायकत्वात्, द्वितीयोऽपि शुद्धो यदा गुरुर्जानानः स्वयमजानानं शिष्यं सङ्क्षेपतो बोधयित्वा प्रत्याख्यानं कारयति अन्यथा त्वशुद्ध एव, तृतीयोऽप्यशुद्धः, परमेषोऽपि तथाविधगुरोरप्राप्तौ गुरोर्बहुमानात् गुरोः सम्बन्धिनं पितृपितृव्यमातृमातुलकभ्रातृशिष्यादिकमज्ञमपि साक्षिणं कृत्वा यदा प्रत्याख्याति तदा शुद्धः, चतुर्थश्चाशुद्ध एवेति, तत्रोत्तरगुणप्रत्याख्यानं प्रतिदिनोपयोगित्वेन तावद् भण्यते, तच्च दशधा, तदाह—

**भावि [2]अईयं [3]कोडीसहियं च [4]नियंटियं च [5]सागारं । [6]विगयागारं [7]परिमाणवं [8]निरवसेसमट्ठमयं**

॥ १८७ ॥ साकेयं च तहऽद्धां पच्चक्खाणं च दसमयं । संकेयं अट्ठहा होइ, अद्धायं दसहा भवे
॥ १८८ ॥ होही पज्जोसवणा तत्थ य न तवो हवेज्ज काउं मे । गुरुगणगिलाणसिक्खगतवस्सिक-
ज्जाउलत्तेण ॥ १८९ ॥ इअ चिंतिअ पुव्वं जो कुणइ तवं तं अणागयं विंति । तमइक्कंतं तेणेव
हेउणा तवइ जं उड्ढं ॥ १९० ॥ गोसे अब्भत्तट्ठं जो काउं तं कुणइ बीयगोसेऽवि । इय कोडीदुग-
मिलणे कोडीसहियं तु नामेणं ॥ १९१ ॥ हट्ठेण गिलाणेण व अमुगतवो अमुगदिणंमि नियमेणं ।
कायव्वोत्ति नियंटियपच्चक्खाणं जिणा विंति ॥ १९२ ॥ चउदसपुव्विसु जिणकप्पिएसु पढमंमि
चेव संघयणे । एयं वोच्छिन्नं चिय थेरावि तया करेसी य ॥ १९३ ॥ महतरयागाराईआगारेहिं
जुयं तु सागारं । आगारविरहियं पुण भणियमणागारनामंति ॥ १९४ ॥ किंतु अणाभोगो इह
सहसागारो अ दुन्नि भणिअव्वा । जेण तिणाइ खिविज्जा मुहंमि निवडिज्ज वा कहवि ॥ १९५ ॥
इय कयआगारदुगंपि सेसआगाररहिअमणागारं । दुब्भिक्खवित्तिकंतारगाढरोगाइए कुज्जा
॥ १९६ ॥ दत्तीहि व कवलेहिव घरेहिं भिक्खाहिं अहव दव्वेहिं । जो भत्तपरिच्चायं करेइ परि-
माणकडमेयं ॥ १९७ ॥ सव्वं असणं सव्वं च पाणगं खाइमंपि सव्वंपि । वोसिरइ साइमंपि हु
सव्वं जं निरवसेसं तं ॥ १९८ ॥ केयं गिहंति सह तेण जे उ तेसिमिमं तु साकेयं । अहवा केयं

**त्विधं सकेयमेवाहु सांकेयं ॥ १९९ ॥ अंगुट्ठी गंठी मुट्ठी घरसेयुस्सासथिवुगजोईक्खे । पच्चक्खाणविचाले किच्चमिणमभिग्गहेसुवि य ॥ २०० ॥**

'भावि अईयमि'त्यादि भावि—अनागतं अतीतं—पूर्वकालकरणीयं कोटिसहितं चः समुच्चये नियन्त्रितं चः पूर्ववत् साकारं—सहाकारैर्यद्वर्तते अनाकारं विगताऽऽकारमाकाररहितं परिमाणवत् निरवशेषसष्टमकम् ॥ १८७ ॥ 'साकेय'मित्यादि साकेतं च—कृतसङ्केतं नवमं, तथाऽद्धाप्रत्याख्यानं दशमकमिति । तत्र यत्सङ्केतप्रत्याख्यानं तदष्टधा भवति, यच्चाद्धाप्रत्याख्यानं तद्दशधा भवेदिति गाथासङ्क्षेपार्थः ॥ १८८ ॥ इदानीं मूलतोऽपि सर्वाणि प्रत्याख्यानानि क्रमेण व्याख्यायन्ते, तत्र **भाविप्रत्याख्यानस्वरूपमिदं—'होहीपज्जोसवणे'**त्यादि सार्द्धगाथा, भविष्यति पर्युपणादिपर्व, तत्र चाष्टमादि तपोऽवश्यं समाराधनीयं, तत्र पर्युपणादौ न तपः अष्टमाद्यं भवेत् कर्तुं मे—मम, केन हेतुनेत्याह—**'गुरुगणे'**ति गुरूणां—आचार्याणां गणस्य—गच्छस्य ग्लानस्य—रोगाभिभूतस्य शैक्षकस्य—नूतनप्रव्राजितस्य तपस्विनो—विकृष्टादितपश्चरणकारिणो यत्कार्यं—विश्रामणाभक्तपानाऽऽनयनादिलक्षणं तेन यदाकुलत्वं तेन हेतुना ॥ १८९ ॥ **'इय चिंती'**त्यादि—इति चिन्तयित्वा पूर्वमेव—पर्युपणादिपर्वणोऽर्वागेव यत्क्रियते तदनागतं तप इति **'बिन्ति'**त्ति ब्रुवते १ । अतीतं पुनरिदं—**'तमइक्कंतं'** इति गाथोत्तरार्धं, तदतिक्रान्तमतीतमित्यर्थः, तेनैव हेतुना—गुरुगणादिकार्यव्याकुलतालक्षणेन तप्यते—तपः करोति यदूर्ध्वं पर्युपणादिपर्वणि निवृत्तेऽपीत्यर्थः २ ॥ १९० ॥ **कोटीसहितमाह—'गोसे'**त्ति, प्रभातेऽभक्तार्थं—उपवासं यः कृत्वा तं—उपवासं करोति द्वितीयप्रभातेऽपि इति कोटीद्विकमिलने पूर्वदिनकृतोपवासप्रत्याख्याननिष्ठापनालक्षणाया द्वितीयदिनप्रभातक्रियमाणोपवासप्रस्थापनालक्षणायाश्च कोटेर्मिलने तस्य कोटीसहितमिति नाम्ना प्रत्याख्यानं, एवमष्टमादिषु एकतः कोटिद्वयं निष्ठापनारूपमन्यतश्च तृतीयोपवासस्य प्रस्थापनारूपं,

अनयोर्मिलने कोटिसहितं, एवमाचाम्लनिर्विकृतिकैकासनकैकस्थानेष्वपीति ३ ॥ १९१ ॥ यदाहुर्गणभृतः—"पट्ठवणओ य दिवसो पच्चक्खाणस्स निट्ठवणओ य । जहियं समिंति दोन्निवि तं भन्नइ कोडिसहियंति" ॥१॥ इति [ प्रस्थापकश्च दिवसः प्रत्याख्यानस्य निष्ठापकश्च यत्र समितो द्वावपि तद् भण्यते कोटीसहितमिति ॥ १ ॥ ] 'हट्ठेण' इत्यादि हृष्टेन—नीरोगेण ग्लानेन वा—सरोगेण वा अमुकं तपः—षष्ठाष्टमादि अमुकस्मिन् दिने 'नियमेन' निश्चयेन मयेति शेषः 'कायव्वो'त्ति कर्तव्यं, प्राकृतत्वात्पुंसा निर्देशः, नियन्त्रितमिदं प्रत्याख्यानं जिना ब्रुवते ४ ॥ १९२ ॥ इदं च प्रत्याख्यानं न सर्वकालं क्रियते, किं तर्हि ?, नियतकालमेव, तथा चाह—'चउदसे'-त्यादि, चतुर्दशपूर्विषु—चतुर्दशपूर्वधरेषु जिनकल्पिकेषु प्रथम एव संहनने—वज्रर्षभनाराचाभिधेये एतत्—नियन्त्रितं प्रत्याख्यानं व्यवच्छिन्नमेव, अत्राऽऽह—ननु तस्मिन्नपि काले चतुर्दशपूर्वधरादय एव कृतवन्तः स्थविरैस्तु न कृतमेवेदमित्याह—'थेरावि तया करेसीय' स्थविरा अपि तदा—पूर्वधरादिकाले अकार्षुः, चशब्दादन्येऽप्यस्थविराः प्रथमसंहननिन इति ॥ १९३ ॥ साकारमिदानीमाह—'महयरे'त्यादि, आ—मर्यादया मर्यादाख्यापनार्थमित्यर्थः क्रियन्ते—विधीयन्ते इत्याकाराः—अनाभोगसहसाकारमहत्तराकारादयः, अयं महान् अयं महानयमनयोरतिशयेन महान्महत्तरः, ( अतिशये तरतमपाविति १—१—२२ पाणि० ) महत्तर एवाकारो महत्तराकारः स आदिर्येषां ते च ते आकाराश्च तैर्युक्तं साकारमभिधीयते, कोऽर्थः ?—भुजिक्रिया प्रत्याख्यानेन मया निषिद्धा, परमन्यत्र-महत्तराकारादिभिर्हेतुभूतैःएतेभ्योऽन्यत्रेत्यर्थः, एतेषु सत्सु भुजिक्रियामपि कुर्वतो न भङ्ग इति यत्र भक्तपरित्यागं करोति तत् साकारमिति ५ । अनाकारमिदानीमाह—'आकार' इत्यादि, आकारैः—महत्तरादिभिर्यद्विरहितं पुनर्भणितमनाकारं नाम तत् ॥ १९४ ॥ 'किंतु' इत्यादि, किंच—केवलमिहानाकारेऽपि अनाभोगः सहसाकारश्च द्वावाकारौ भणितव्यौ येन कदाचिदनाभोगतः—अज्ञानतः सहसा वा—रभसेन तृणादि मुखे क्षिपे-

भिपतेद्वा कुतोऽपि कथमपि ॥ १९५ ॥ 'इय कये'त्यादि, इति, कृताकारद्धिकमपि शेषैमेद्दत्तराकाराविमिराकारै रहितमनाकारमभिधीयते, इदं चानाकारं कदा विधीयते? तत्राह—'दुब्भिक्खे'त्यादि—'दुर्भिक्षे' मेघ वृष्ट्याद्यभावे हिण्डमानैरपि भिक्षा न लभ्यते, तत इदं प्रत्याख्यानं कृत्वा म्रियते, 'वृत्तिकान्तारे वा' वर्तते शरीरं यया सा वृत्तिः—भिक्षादिका तद्विपये कान्तारमिव कान्तारं तत्र, यथाऽटव्यां भिक्षा न लभ्यते तथा सिणवल्ल्यादिपु स्वभावाद् अदातृद्विजाकीर्णेपु शासनद्विष्टैर्वाऽधिष्ठितेपु भिक्षादि नाऽऽसाद्यते तदेदं प्रत्याख्यानं तथा वैद्याद्यप्रतिविधेये गाढतररोगे सति गृह्यते, आदिशब्दात्कान्तारे केसरिकिशोरादिजन्यमानायामापदि कुर्यादिति ६ ॥१९६॥ परिमाणवदिदानीमाह—'दत्तीहि वे'त्यादि, दत्तिभिर्वा कवलैर्वा गृहैर्वा भिक्षाभिरथवा द्रव्यैर्यो भक्तपरित्यागं करोति परिमाणकृतमेतत्, तत्र करस्थालादिभ्योऽव्यवच्छिन्नधारया या पतति भिक्षा सा दत्तिरभिधीयते, भिक्षाविच्छेदे च द्वितीया दत्तिः, सिक्थमात्रेऽपि पात्रे पतिते भिन्नैव दत्तिरिति, कुर्कुटाण्डकप्रमाणो वद्धोऽशनपिण्डः कवलोऽभिधीयते, अविकृतेन मुखेन वा यो ग्रहीतुं शक्यते तत्प्रमाणो वा, तत्र द्वात्रिंशत्कवलाः किल पुरुपस्याहारः, स्त्रीणामष्टाविंशतिः "वत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए अट्ठावीसं मुणेयव्वा ॥१॥" इति वचनात्, ततश्च दत्तिभिरेकद्वित्र्यादिभिः कवलैश्चैकद्वित्र्यादिभिर्यावदेकत्रिंशत् पुरुपस्य स्त्रियाश्च यावत्सप्तविंशतिः, गृहैश्चैकद्वित्र्यादिभिर्भिक्षाभिः संसृष्टादिभिर्गृहस्थेन दीयमानादिभिरेकद्व्यादिभिर्द्रव्यैश्च पायसौदनमुद्गादिभिर्यत्र शेपाऽऽहारपरित्यागस्तत्परिमाणकृतं प्रत्याख्यानमित्यर्थः ॥ १९७ ॥ इदानीं निरवशेषमाह—'सव्वं असण'मित्यादि—'अश भोजने' अश्यत इत्यशनमोदनं—मण्डकमोदकखज्जकादि पीयत इति पानं कर्मणि ल्युट् खर्जूरद्राक्षापानादि खादनं खादो भावे घञ् खादेन निर्वृत्तं खादिमं 'भावादिम' (पा०४-४-२० वा०) न्निति इमनि खादिमं—नालिकेरफलादि गुडधानादिकं च स्वदनं स्वादस्तेनैव निर्वृत्तं तथैवेमनि स्वादिमं—एलाफलकर्पूर-

लवङ्गपूगीफलहरीतकीनागरादि ततश्च सर्वमशनं सर्वं पानकं खादिमं च सर्वमप्युत्सृजति—परित्यजति स्वादिदमपि सर्वं यन्निरवशेषं तद्विज्ञेयमिति ८॥१९८॥ साकेतमिदानीमाह—'केय'मित्यादि—'कित निवासे' इत्यस्य धातोः कित्यते—उष्यते अस्मिन्निति घञि केतो—गृहमुच्यते सह तेन वर्तन्ते इति सहस्य स्वभावे सकेताः—गृहस्थास्तेषामिदं 'तस्येद'(पा०४-३-१२०)मित्यणि साकेतं प्रत्याख्यानं प्रायेण गृहस्थानामेवेदं भवतीति, अथवा केतं—चिह्नमुच्यते सह केतेन—चिह्नेन वर्तते इति सकेतं सकेतमेव प्रज्ञादित्वात्स्वार्थेऽणि साकेतमाहुर्मुनयः। १९९। तच्चैवं भवति—श्रावकः कोऽपि पौरुष्यादिप्रत्याख्यानं कृत्वा क्षेत्रादौ गतो गृहे वा तिष्ठन् पूर्णेऽपि पौरुष्यादौ प्रत्याख्याने यावदद्यापि भोजनसामग्री न भवति तावत्क्षणमपि प्रत्याख्यानरहितो मा भूवमित्यङ्गुष्ठादिकं चिह्नं करोति यावदङ्गुष्ठं मुष्टिं ग्रन्थिं वा न मुञ्चामि गृहं वा प्रविशामि स्वेदविन्दवो वा न शुष्यन्ति यावदेतावन्तो वा उच्छ्वासा न भवन्ति जलादिमञ्चिकायां यावदेते जलविन्दवो वा न शुष्यन्ति दीपो वा यावन्न निर्वाति तावन्न भुञ्जेऽहमिति, एतदेवाह—'अगुंट्ठी' इत्यादि, अङ्गुष्ठश्च ग्रन्थिश्च मुष्टिश्च गृहं च स्वेदश्च उच्छ्वासश्च स्तिबुकश्च जोइक्खश्चेति समाहारो द्वन्द्वः, जोइक्खशब्दश्च देश्यो दीपे वर्तते, तद्विषये क्रिया सर्वत्र यथोचिता योजनीया, प्रत्याख्यानविचाले कृत्यमिदं, 'अभिग्गहेसुवि य'त्ति केनचित्पौरुष्यादि न कृतं किन्तु केवल एवाभिग्रहः क्रियते यावद् ग्रन्थ्यादिकं न छोटयतीत्यादि तत्रापीदं भवतीत्यर्थः, तथा साधोरपीदं भवति, यथाऽद्यापि गुरवो मण्डल्यां नोपविशन्ति अन्यद्वा सागारिकादिकं किञ्चित्कारणमजनि ततः पूर्णेऽपि प्रत्याख्यानावधौ प्रत्याख्यानरहितो मा स्यामित्यङ्गुष्ठादीनि साधुरपि करोतीति ॥ २०० ॥ इदानीमद्धाप्रत्याख्यानमाह—

अद्धा कालो तस्स य पमाणमद्धं तु जं भवे तमिह । अद्धापच्चक्खाणं दसमं तं पुण इमं भणियं
॥ २०१ ॥ नवकारपोरिसीए पुरिमड्ढेकासणेगठाणे य । आयंबिलऽभत्तट्ठे चरिमे य अभिग्गहे

**विगंई ॥ २०२ ॥ दो चेव नमोक्कारे आगारा छच्च पोरसीए उ । सत्तेव य पुरिमड्ढे एक्कासणगंमि अट्ठेव ॥ २०३ ॥ सत्तेगट्ठाणस्स उ अट्ठेव य अंबिलंमि आगारा । पंचेव अब्भत्तट्ठे छप्पाणे चरिम चत्तारि ॥ २०४ ॥ पंच चउरो अभिग्गहि निव्विइए अट्ठ नव य आगारा । अप्पाउरणे पंच उ हवंति सेसेसु चत्तारि ॥ २०५ ॥ नवणीओगाहिमगे अद्दवदहिपिसियघयगुडे चेव । नव आगारा एसिं सेसदवाणं च अट्ठेव ॥ २०६ ॥**

'अद्धा कालो' इत्यादि, अद्धाशब्देन कालस्तावदभिधीयते, तस्य च कालस्य मुहूर्तपौरुष्यादिकं प्रमाणमप्युपचारात् अद्धन्ति—अद्धां वदन्तीति शेषः, तुशब्दोऽप्यर्थो भिन्नक्रमे च स च यथास्थानं योजित एव, ततोऽद्धापरिमाणपरिच्छिन्नं यत्प्रत्याख्यानं भवेत्तदिह अद्धाप्रत्याख्यानं दशमं पूर्वोक्तभाव्यतीतप्रत्याख्यानादीनां चरममित्यर्थः ॥२०१॥ तत्पुनरिदं वक्ष्यमाणं भणितं गणधरैरिति, तदेवाह—'नवकारे'त्यादि, अत्र भीमो भीमसेनभीमन्यायेन नमस्कारशब्दात्परतः सहितशब्दो द्रष्टव्यः, ततो नमस्कारश्च, कोऽर्थः ?—नमस्कारसहितं च पौरुषी च नमस्कारपौरुष्यौ तस्मिन्, नमस्कारविषये पौरुषीविषये चेत्यर्थः, पूर्वार्धं च एकासनं च एकस्थानं चेति समाहारे सप्तम्येकवचने पूर्वार्धविषये एकासनविषये एकस्थानकविषये चरमे—चरमविषये च, तथा आचाम्लं च अभक्तार्थश्च आचाम्लाभक्तार्थौ तत्र आचाम्लविषये उपवासविषये, तथा भवचरमे दिवसचरमे वेति, तथा अभिग्रहे—अभिग्रहविषये, तथा 'विगइ'त्ति विकृतिविषये, सप्तम्येकवचनं लुप्तमत्र द्रष्टव्यमिति, दशभेदमिदमद्धाप्रत्याख्यानं ॥२०२॥ नन्वेकासनादिप्रत्याख्यानं कथमद्धाप्रत्याख्यानं ?, न ह्यत्र कालनियमः श्रूयते, सत्यं; अद्धाप्रत्याख्यानपूर्वाणि प्रायेणैकासनादीनि क्रियन्ते इत्यद्धाप्रत्याख्यानत्वेन भण्यन्ते इति, प्रत्याख्यानं चापवादरूपाकारसहितं कर्तव्यं, अन्यथा तु भङ्ग एव स्यात्,

ततस्ते यावन्तो नमस्कारसहितादिषु भवन्ति तावत उपदर्शयन्नाह—'**दो चेवे**'त्यादि गाथात्रयं, द्वावेव नमस्कारे—नमस्कारसहिते '**आकारौ**' विधीयमानप्रत्याख्यानापवादरूपौ, षट् च पौरुष्यां, तुः पुनरर्थः, सप्तैव च पूर्वार्धे एकाशनेऽष्टैव ॥२०३॥ सप्त एकस्थानस्य प्रत्याख्यानस्य, तुः समुच्चयार्थः, अष्टैव चाऽऽचाम्ले आकाराः पञ्चैव चाभक्तार्थे—उपवासे, षट् पानकप्रत्याख्याने, चरमे प्रत्याख्याने—दिवसचरमभवचरमरूपभेदद्वयस्वरूपे चत्वार आकाराः ॥ २०४ ॥ पञ्च वा चत्वारो वा अभिग्रहे—अभिग्रहप्रत्याख्याने, निर्विकृतिकेऽष्टौ नव वा आकाराः, '**पंच चउरो अभिग्गहे**'त्ति यदुक्तं तत्स्वयमेव विवृणोति—'**अप्पाउरणे**'त्यादि, अप्रावरणे—अप्रावरणाभिग्रहे प्रत्याख्याने पञ्चैव, तुशब्दस्यावधारणार्थत्वाद्भवन्ति शेषेष्वभिग्रहेषु—देशावकाशिकादिषु दण्डकप्रमार्जनादिषु च चत्वार आकारा इति गाथात्रयाक्षरार्थः ॥ २०५ ॥ भावार्थस्तु निवेद्यते—नमस्कारसहिते प्रत्याख्याने भङ्गपरिहारार्थमनाभोगसहसाकारलक्षणौ द्वावाकारौ ज्ञेयौ, ननु कालस्यानुच्यमानत्वात् सङ्केतप्रत्याख्यानमेवेदं प्रतिभाति तत्कथमद्धाप्रत्याख्यानमभिधीयते ?, सत्यं, सहितशब्देन मुहूर्तस्य विशेषितत्वाददोषः, अथ मुहूर्तशब्दोऽप्यत्र न श्रूयते तत्कथं तस्य विशेष्यत्वं ?, न खलु गगनारविन्देऽसत्येमन्दामोदसुन्दरमिदमित्यादीनि विशेषणानि वस्य सहृदयैर्विधीयन्ते, अत्र ब्रूमः—अद्धाप्रत्याख्यानमध्ये तावदस्य पाठात् पौरुषीप्रत्याख्यानस्य च वक्ष्यमाणत्वान्निश्चितं तदर्वाग् मुहूर्त एवावशिष्यते ततस्तस्य विशेष्यत्वं नानुपपन्नं, अथ मुहूर्तद्वयादिकमपि कस्मान्न लभ्यते ? यदेकमेव मुहूर्तं विशेष्यत इति, उच्यते, अल्पाकारत्वादस्य, पौरुष्यां हि षडाकाराः अस्मिंश्च प्रत्याख्याने आकारद्वयवति स्वल्प एव कालोऽवशिष्यते, स च नमस्कारसहितः पूर्णेऽपि काले नमस्कारपाठमन्तरेण प्रत्याख्यानस्यापूर्यमाणत्वात्, सत्यपि च नमस्कारपाठे मुहूर्ताभ्यन्तरे प्रत्याख्यानभङ्गात्, ततः सिद्धमेतत् मुहूर्तमानकालनमस्कारसहितं प्रत्याख्यानमिति, अथ प्रथम एव मुहूर्ते इति कुतो लभ्यते ?, उच्यते, सूत्रे '**सूरे उग्गए**' इति वचनप्रामाण्यात्, पौरु-

षीप्रत्याख्यानवत्, सूत्रं चेदं—"**सूरिए उग्गए नमोकारसहियं पच्चक्खाइ चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं वोसिरइ**" अस्य च सूत्रस्याग्रेतनपौरुष्यादिसूत्राणां च विस्तारवती व्याख्या स्वस्थानादेव ज्ञातव्या, परमाकाराणां स्वरूपपरिज्ञानाय किंचिद्व्याख्यायते—सूर्ये उद्गते सूर्योद्गमादारभ्येत्यर्थः, 'नमस्कारेण' पञ्चपरमेष्ठिस्तवेन सहितं प्रत्याख्याति 'सर्वे धातवः करोत्यर्थेन व्याप्ता' इति भाष्यकारवचनान्नमस्कारसहितं प्रत्याख्यानं करोति, इदं गुरोर्वचनं शिष्यस्तु प्रत्याख्यामीत्येतदाह, एवं व्युत्सृजतीत्यत्रापि वाच्यं, कथं प्रत्याख्याति ?, तत्राह—चतुर्विधमपि न पुनरेकविधादिकं, आहारं—अभ्यवहार्यं व्युत्सृजतीत्युत्तरेण संटङ्कः इदं च चतुर्विधाहारस्यैव भवतीति वृद्धसम्प्रदायः, रात्रिभोजनप्रत्याख्यानव्रततीरणकल्पत्वादस्य, 'अशन'मित्यादिनाऽऽहारचतुर्विं-धकीर्तनं, अत्र नियमभङ्गभयादाकारावाह—'**अन्नत्थऽणाभोगेणं सहसागारेणं**'ति अत्र पञ्चम्यर्थे तृतीया, अन्यत्रानाभोगात् सहसा-काराच्च, एतौ वर्जयित्वेत्यर्थः, तत्राऽनाभोगः—अत्यन्तविस्मृतिः, सहसाकारः—अतिप्रवृत्तियोगानिवर्त्तनं, 'व्युत्सृजति' परिहरति। तथा पौरुष्यां षडाकाराः, तत्र चैवं सूत्रम्—"**पोरिसिं पच्चक्खाइ उग्गए सूरे चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थ-ऽणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तियागारेणं वोसिरइ**" पुरुषः प्रमाणमस्याः सा पौरुषी छाया तत्प्रमितकालोऽपि पौरुषी प्रहर इत्यर्थः, तां प्रत्याख्याति, अत्र च 'कालाध्वनोरत्यंतसंयोगे' इति ( पा० २-३-५ ) द्वितीया, ततः पौरुषीं यावत्प्रत्याख्यानं करोतीत्यर्थः, एवमन्यत्रापि, कथं ?—चतुर्विधमप्याहारमशनादिकं व्युत्सृजतीति, अन्यत्रानाभोगाद्या-कारेभ्यः, तत्रानाभोगसहसाकारौ पूर्ववद्, अन्यत्र प्रच्छन्नकालात् दिग्मोहात् साधुवचनात् सर्वसमाधिप्रत्ययाकाराच्च, प्रच्छन्नता च कालस्य घनतरघनाघनपटलेन विस्फुरद्रजसा गुरुतरगिरिणा वाऽन्तरितत्वाद् दिवाकरो न दृश्यते, तत्र पौरुषीं पूर्णां ज्ञात्वा भुञ्जानस्यापूर्णायामपि

पौरुष्यां न भङ्गः, ज्ञात्वा तु अर्धभुक्तेनापि तथैव स्थातव्यं यावत्पौरुषी पूर्णा भवति, पूर्णायां ततः परं भोक्तव्यं, अपूर्णा पौरुषीति ज्ञाते तु भुञ्जानस्य भङ्ग एवेति, दिग्मोहस्तु यदा पूर्वामपि पश्चिमेति जानाति तदाऽपूर्णायामपि पौरुष्यां भुञ्जानस्य न भङ्गः, कथमपि मोहापगमे तु पूर्ववदर्धभुक्तेनापि स्थातव्यं अन्यथा तु भङ्ग एवेति, तथा साधुवचनम्—उद्घाटा पौरुषी इत्यादिकं विभ्रमकारणं तत् श्रुत्वा भुञ्जानस्य न भङ्गः, भुञ्जानेन तु ज्ञाते अन्येन वा केनापि निवेदिते पूर्ववत्तथैव स्थातव्यं, तथा कृतपौरुषीप्रत्याख्यानस्य सहसा सञ्जाततीव्रशूलादिदुःखतया समुत्पन्नयोरार्तरौद्रध्यानयोः सर्वथा निरासः सर्वसमाधिः स एव प्रत्ययः—कारणं स एवाकारः—प्रत्याख्यानापवादः सर्वसमाधिप्रत्ययाकारः, पौरुष्यामपूर्णायामप्यकस्मात् शूलादिव्यथायां समुत्पन्नायां तदुपशमनायौषधपथ्यादिकं भुञ्जानस्य न प्रत्याख्यानभङ्ग इति भावः, वैद्यादिर्वा कृतपौरुषीप्रत्याख्यानोऽन्यस्याऽऽतुरस्य समाधिनिमित्तं यदाऽपूर्णायामपि पौरुष्यां भुङ्क्ते तदा न भङ्गः, अर्धभुक्ते त्वातुरस्य समाधौ मरणे वोत्पन्ने सति तथैव भोजनत्यागः, सार्धपौरुषीप्रत्याख्यानं पौरुषीवद्वाच्यं, तस्य तदन्तर्गतत्वादिति, पूर्वार्धप्रत्याख्याने त्वेवं सप्ताऽऽकाराः—**'सूरे उग्गए पुरिमड्ढं पच्चक्खाइ चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ.'**"अस्यार्थः— 'पूर्वस्य पुरिम' इति (सि० हे० प्रा० ८-२-१३५) प्राकृतवचनेन पुरिममिति, एवमन्यत्रापि, ततः पूर्वं च तत् अर्धं च पूर्वार्धं—दिनस्याऽऽद्यप्रहरद्वयं प्रत्याख्याति—पूर्वार्धप्रत्याख्यानं करोति, तत्र षडाऽऽकाराः पूर्ववत्, **'महत्तरागारे'**ति महत्तरं—प्रत्याख्यानपालनवशाल्लभ्यनिर्जरापेक्षया बृहत्तरनिर्जरालाभहेतुभूतं पुरुषान्तरेण साधयितुमशक्यं ग्लानचैत्यसङ्घादिप्रयोजनं तदेवाकारः—प्रत्याख्यानापवादो महत्तराकारः तस्मादन्यत्रेति योगः, यच्चात्रैव महत्तराऽऽकारस्याभिधानं न नमस्कारसहितादौ तत्र कालस्याल्पत्वं अन्यत्र तु महत्त्वं कारणमिति वृद्धा

व्याचक्षते, अपार्धप्रत्याख्यानमपि प्रहरत्रयलक्षणं पूर्वार्धप्रत्याख्यानवद्भणनीयं ॥ अथैकाशनप्रत्याख्याने यथा अष्टाऽऽकारास्तथा कथ्यन्ते, तत्रेदं सूत्रम्—"**एकासणं पच्चक्खाइ तिविहंपि आहारं असणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं सागारियागारेणं आउंटणपसारेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ.**" एकं सकृत् अशनं—भोजनं एकं वा आसनं—पुताचलनतो यत्र प्रत्याख्याने तदेकाशनमेकासनं वा, प्राकृते द्वयोरपि एकासणमिति रूपं, तत् प्रत्याख्याति एकासनप्रत्याख्यानं करोतीतियावत्, अत्र द्वावाद्यौ अन्त्यावाकारौ च पूर्ववत्, '**सागारियागारेणं**'ति सह आगारेण—गृहेण वर्तत इति सागारः स एव सागारिको—गृहस्थः स एवाऽऽकारः—प्रत्याख्यानापवादः सागारिकाकारस्तस्मादन्यत्र, गृहस्थसमक्षं हि साधूनां भोक्तुं न कल्पते, प्रवचनाद्युपघातसम्भवात्, यत उक्तं—"छक्कायदयावंतोऽवि संजओ दुल्लहं कुणइ वोहिं। आहारे नीहारे दुगुंछिए पिंडगहणे य ॥ १ ॥" [षट्कायदयावानपि संयतो दुर्लभां करोति बोधिं। आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥ १ ॥] ततश्च भुञ्जानस्य यदि सागारिकः कश्चिदायाति स च यदि चलस्तदा क्षणं प्रतीक्षते स्थिरस्तदा स्वाध्यायादिव्याघातो मा भूदिति ततः स्थानादन्यत्रोपविश्य भुञ्जानस्यापि नैकासनभङ्गः, गृहस्थस्यापि येन दृष्टं भोजनं न जीर्यति तत् प्रमुखः सागारिको ज्ञातव्यः, '**आउंटणपसारणेणं**'ति आकुञ्चनं—जङ्घादेः सङ्कोचनं प्रसारणं च—तस्यैव जङ्घादेराकुञ्चितस्य ऋजूकरणं आकुञ्चने प्रसारणे वाऽसहिष्णुतया क्रियमाणे किञ्चिदासनं चलति ततोऽन्यत्र प्रत्याख्यानं '**गुरुअब्भुट्ठाणेणं**'ति गुरुरभ्युत्थानार्हस्याचार्यस्य प्राघूर्णकस्य वाऽभ्युत्थानं तमाश्रित्यासनत्यजनं गुर्वभ्युत्थानं ततोऽन्यत्र, गुरुणामभ्युत्थानार्हत्वादवश्यं भुञ्जानेनाप्युत्थानं कर्तव्यमिति न तत्र प्रत्याख्यानभङ्गः '**पारिठावणियागारेणं**'ति परिस्थापनं—सर्वथा त्यजनं प्रयोजनमस्य पारिष्ठापनिकं, तदेवाकारस्तस्मादन्यत्र, तत्र हि त्यज्यमाने बहुदोषसम्भवाश्रीयमाणे

चागमिकन्यायेन गुणसम्भवाद्गुर्वाज्ञया पुनर्भुञ्जानस्यापि न भङ्गः, 'वोसिरइ' व्युत्सृजत्यनेकाशनमशनाद्याहारं च परिहरति । तथा एकस्थाने सप्ताऽऽकारा भवन्ति, तस्येदं सूत्रं—'एक्कासणं एगट्ठाणं पच्चक्खाइ' इत्याद्येकाशनवदाकुञ्चनप्रसारणाऽऽकारवर्जं, एकं—अद्वितीयं स्थानं—अङ्गविन्यासरूपं यत्र तदेकस्थानप्रत्याख्यानं, तद् यथा भोजनकालेऽङ्गोपाङ्गं स्थापितं तस्मिंस्तथास्थित एव भोक्तव्यं, मुखस्य हस्तस्य चाशक्यपरिहारत्वाच्चलनमप्रतिपिद्धमिति । अथाऽऽचाम्ले अष्टावाकारास्तत्र सूत्रं—"आयंबिलं पच्चक्खाइ अन्नत्थऽणाभोगेणं सहसागारेणं लेवालेवेणं गिहिसंसट्ठेणं उक्खित्तविवेगेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ" अस्यार्थः—आचामः—अवश्रामणं अम्लं—चतुर्थो रसः ताभ्यां निर्वृत्तमित्यण्, एतच्च त्रिविधं उपाधिभेदात्, तद्यथा—ओदनं कुल्मापान् सक्तूंश्च अधिकृत्य भवति, तत्प्रत्याख्याति, आचामाम्लं प्रत्याख्यानं करोतीत्यर्थः, आद्यावन्त्याश्चाकारास्त्रयः पूर्ववत्, 'लेवालेवेणं'ति लेपो—भोजनभाजनस्य विकृत्या तीमनादिना वाऽऽचामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता—खरण्टनं विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतोऽलेपोऽलिप्तता, ततश्च लेपश्च अलेपश्च लेपालेपं तस्मादन्यत्र, भाजने विकृत्याद्यवयवसद्भावेऽपि न भङ्ग इत्यर्थः, 'उक्खित्तविवेगेणं'ति शुष्कौदनादिभक्ते पतितपूर्वस्याऽऽचामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्य उत्क्षिप्तस्य—उद्धृतस्य विवेको—निःशेपतया त्यागः उत्क्षिप्तविवेकस्तस्मादन्यत्र, भोक्तव्यद्रव्यस्याभोक्तव्यद्रव्यस्पर्शेनापि न भङ्ग इत्यर्थः, यत्तूत्क्षेप्तुं शक्यते तस्य भोजने भङ्ग एव, 'गिहत्थसंसट्ठेणं'ति गृहस्थस्य—भक्तदायकस्य संबन्धि करोटिकादिभाजनं विकृत्यादिद्रव्येणोपलिप्तं गृहस्थसंसृष्टं तस्मादन्यत्र, विकृत्यादिसंसृष्टभाजनेन हि दीयमानं भक्तमकल्पनीयद्रव्यमिश्रं भवति तद् भुञ्जानस्यापि न भङ्ग इत्यर्थः, यद्यकल्प्यद्रव्यरसो बहु न ज्ञायत इति, 'वोसिरइ' अनाचामाम्लं व्युत्सृजति । तथा अभक्तार्थे पञ्चाकाराः, तत्रेदं सूत्रं—'सूरे उग्गए अब्भत्तट्ठं पच्चक्खाइ चउव्विहंपि

आहारं असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ" अस्यार्थः—'सूरे उग्गए' सूर्योद्गमादारभ्य, अनेन भोजनानन्तरं प्रत्याख्यानस्य निषेध इति ब्रूते, भक्तेन—भोजनेनार्थः—प्रयोजनं भक्तार्थः न भक्तार्थोऽभक्तार्थः अथवा न विद्यते भक्तार्थो यस्मिन् प्रत्याख्यानविशेषे सोऽभक्तार्थः, उपवास इत्यर्थः, आकाराः पूर्ववत्, नवरं पारिष्ठापनिकाकारे विशेषो—यदि त्रिविधाहारस्य प्रत्याख्याति तदा पारिष्ठापनिकं कल्पते, यदि तु चतुर्विधाहारस्य प्रत्याख्याति पानकं च नास्ति तदा न कल्पते पानके तूद्धरिते कल्पत एव, 'वोसिरइ' भक्तार्थमशनादिवस्तु व्युत्सृजति। तथा पानकप्रत्याख्याने षडाकाराः, तत्र पौरुषीपूर्वार्धएकासनएकस्थानाचामाम्लाभक्तार्थप्रत्याख्यानेषु उत्सर्गतश्चतुर्विधाहारस्य प्रत्याख्यानं उक्तं, यदि तु त्रिविधाहारस्य प्रत्याख्यानं करोति तदा पानमाश्रित्य षडाकाराः, तथा च सूत्रं—"**पाणस्स लेवाडेण वा अलेवाडेण वा अच्छेण वा बहलेण वा ससित्थेण वा असित्थेण वा वोसिरइ**" इहाप्यन्यत्रेत्यनुवृत्तेस्तृतीयायाः पञ्चम्यर्थत्वेन व्याख्यातत्वात् '**लेवाडेण वे**'ति लेपकृताद्वा—पिच्छलत्वेन भाजनादीनामुपलेपकारकात् खर्जूरद्राक्षादिपानकादन्यत्र तन्मुक्त्वेत्यर्थः, त्रिविधाहारं व्युत्सृजतीति सम्बन्धः, वाशब्दोऽत्रालेपकृतपानकापेक्षयाऽवर्जनीयत्वाविशेषद्योतनार्थः, अलेपकारिणेव वारिणा लेपकारिणाऽप्युपवासादेर्न भङ्ग इति हृदयं, एवमलेपकृताद्वा पिच्छलात्—सोवीरादेः अच्छात्—निर्मलाद्वा प्रासुकाद्वा वर्णान्तरिताद्वा अपिच्छलात् उष्णोदकादेर्बहलाद्—गड्डुलात्तिलतण्डुलयवधावनादेः ससिक्थाद्वा—भक्तपुलाकोपेतादवश्रावणादेः असिक्थाद्व—सिक्थवर्जितात्पानकाऽऽहारादिति। तथा चरमो—दिवसस्य भवस्य च पाश्चात्यो भागः तत्र क्रियमाणं प्रत्याख्यानमपि दिवसचरिमं भवचरिमं चेति कथ्यते, तत्रेदं सूत्रं—"दिवसचरिमं पच्चक्खाइ चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थऽणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ" एवं भवचरिममपि, आकाराः पूर्वमेव व्याख्याताः, ननु दिवस-

चरिमं प्रत्याख्यानं निष्प्रयोजनं, एकासनादिप्रत्याख्यानेनैव गतार्थत्वादिति, नैतदेवं, एकाशनादिकं ह्यष्टाकारं एतच्च चतुराकारं अत आकाराणां सङ्क्षेपकरणात् सफलमेवेति, अत एव एकाशनादिकं दैवसिकमेव भवति, रात्रिभोजनस्य प्रतिमिस्त्रिविधं त्रिविधेन यावज्जीवं प्रत्याख्यातत्वादिति, गृहस्थापेक्षया पुनरिदं आ आदित्योद्गमाद् ज्ञेयं, दिवसस्याहोरात्रपर्यायतयाऽपि दर्शनात् यथा पञ्चभिर्दिनैर्वयमत्रागताः, पञ्चभिरहोरात्रैरित्यर्थः, तत्र यैर्यावज्जीवमपि रात्रिभोजननियमश्चक्रे तेषामपीदं सार्थकमेवानुवादकत्वेन स्मारकत्वात्, भवचरिमं तु द्व्याकारमपि भवति, यदा जानाति महत्तरसर्वसमाधिप्रत्ययरूपाभ्यामाकाराभ्यां न मम प्रयोजनं तदाऽनाभोगसहसाकारौ भवतः, अनाभोगतः सहसाकारतो वाऽङ्गुल्यादेर्मुखे प्रक्षेपसम्भवात्, अत एवेदमनाकारमपि भण्यते, एतस्याकारद्वयस्यापि परिहार्यत्वादिति । तथा पञ्च चत्वारो वाऽभिग्रहप्रत्याख्याने, तत्र दण्डकप्रमार्जनादिरूपेऽभिग्रहे चत्वार आकारा भवन्ति, यथा—"**अन्नत्थऽणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ**" एतद्व्याख्या पूर्ववत्, यदा त्वप्रावरणाभिग्रहं गृह्णाति तदा '**चोलपट्टागारेणं**'ति पञ्चम आकारो भवति, चोलपट्टकाकारादन्यत्र, सागारिकदर्शने चोलपट्टके गृह्यमाणेऽपि न भङ्ग इत्यर्थः । तथा निर्विकृतिके अष्टौ नव वा आकारा भवन्ति, यथा—"**निव्विगइयं पच्चक्खाइ अन्नत्थऽणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ**" तत्र मनसो विकृतिहेतुत्वाद्विगतिहेतुत्वाद्वा विकृतयो विगतयो वा निर्गता विकृतयो विगतयो वा यत्र तन्निर्विकृतिकं निर्विगतिकं वा प्रत्याख्याति आकाराः पूर्ववद्व्याख्येयाः, नवरं '**पडुच्चमक्खिएणं**'ति प्रतीत्य—सर्वथा रूक्षं मण्डकादिकमपेक्ष्य म्रक्षितं—स्नेहितमीषत्सौकुमार्योत्पादनात् म्रक्षणकृतविशिष्टस्वादुतायाश्चाभावात् म्रक्षितमिव यद्वर्तते तत्प्रतीत्यम्रक्षितं म्रक्षिताभासमित्यर्थः, इह चायं विधिः—यद्यङ्गुल्या घृतादि गृहीत्वा

मण्डकादि म्रक्षितं तदा कल्पते निर्विकृतिकस्य धारया तु न कल्पत इति, व्युत्सृजति—विकृतीः परिहरति, इह च यासु विकृतिपु उत्क्षिप्तविवेकः संभवति तासु नवाकाराः, अन्यासु द्रवरूपासु अष्टौ, ननु निर्विकृतिक एवाकारा अभिहिताः विकृतिपरिहारप्रत्याख्याने तु कुत आकारा अवगम्यन्ते ?, उच्यते, निर्विकृतिकग्रहणे कृते सति विकृतिपरिमाणप्रत्याख्यानस्यापि सङ्ग्रहो भवति, यतस्तत्रापि त एव तथैवाकारा भवन्ति, यथा एकासनकस्य पौरुष्याः पूर्वार्धस्य च सूत्रे आकारा अभिदधिरे परं द्व्यासनकस्य सार्धपौरुष्या अपरार्धस्य च प्रत्याख्यानस्य त एव भवन्तीति, प्रत्याख्यानं च सूत्रानभिहितमपि भवति, अप्रमादवृद्धेः सर्वत्र सम्भवादित्यदोपः ॥ ननु निर्विकृतिके विकृतिपरिमाणे वा प्रत्याख्याने कासौ क वा नव आकारा भवन्तीत्याह—'**नवणीओ**' इत्यादि, नवनीते—म्रक्षणकेऽवगाहिमके च—पक्वान्नेऽद्रवदधिपिशितघृतगुडे चैव, अद्रवग्रहणं सर्वत्र सम्बन्धनीयं, नव आकाराः '**एसिं**'ति अमीषां विकृतिविशेषाणां भवन्ति, शेषाणां तु द्रवरूपाणामष्टैवाकाराः, अयमभिप्रायः—यत्रोत्क्षिप्तविवेकोऽद्रवरूपाणां नवनीतगुडादीनां कर्तुं शक्यते तत्र नवाकाराः, द्रवरूपाणां तु विकृतीनामुद्धर्तुमशक्यानां अष्टावाकारा इति ॥ २०६ ॥ **इदानीमशनपानादीनां प्रत्याख्येयद्रव्याणां स्वरूपमुच्यते**—तत्र 'अश् भोजने' इत्यस्य 'कृत्यल्युटो वहुलमन्यत्रापी'(पा० ३–३–११३ )ति वचनादश्यते इति कर्मणि ल्युडन्तस्याशनमिति भवति, 'पा पाने' इत्यस्य पीयत इति तथैव पानमिति भवति, 'खाद्य भक्षणे' इत्यस्य खादनं खादस्तेन निर्वृत्तं 'भावादिमप्' ( पा० ४–४–२० ) इति वक्तव्यादिमपि खादिममिति भवति 'स्वद स्वाद ष्वर्द आस्वादने' इत्यस्य स्वदनं स्वादस्तेन निर्वृत्तमिति पूर्ववदिमपि स्वादिममिति भवति, समयभापया तु निरुक्तेनैषां व्युत्पत्तिः क्रियते—यथा आशु क्षुधां शमयतीत्यशनं, तथा प्राणानां—इन्द्रियादिलक्षणानां यदुपग्रहे—उपकारे वर्तते तत्पानं, तथा खमित्याकाशं तच्च मुखविवरमेव तस्मिन्मातीति खादिमं, तथा स्वादयति रसादीन् गुणान् गुडादिद्रव्यं कर्तृसंयमगुणान् वा

यतस्ततः स्वादिमं, हेतुत्वेन तदेवाऽऽस्वादयतीत्यर्थः, अथवा सादयति—विनाशयति स्वकीयगुणान् माधुर्यादीन् स्वाद्यमानमिति स्वादिमं, न चैतन्निरुक्तं कल्पनामात्रं स्वकीयमिति ज्ञेयं, भ्रमन् रौतीति भ्रमरः हिनस्तीति सिंह इत्यादीनां निरुक्तशब्दानां व्याकरणेषु 'पृषोदरादीनि यथोपदिष्ट'मिति सूत्रेषु प्रसिद्धत्वादिति, न चेदमत्र वक्तव्यमेवंविधव्युत्पत्तौ भेदचतुष्टयी न युज्यते, तथाहि—यथौदनादिकमश्यते तथाऽऽरनालादिकमपि पीयतेऽश्यते इति तथा खर्जूरादिकमपि खाद्यतेऽश्यते इति तथा गुडादिकमपि स्वाद्यते, कोऽर्थः ? अश्यत इति, ततः परमार्थत एकार्थिका एवैते शब्दा इति भेदकल्पनमयुक्तं, एवं समयभणितनिरुक्तविधिनाऽप्येकार्थत्वमेवैषामिति, अत्र ब्रूमः, अस्त्येतत् परं बालतथाविधज्ञानविकलादीनां सुखावबोधाय विवक्षितद्रव्याणां सुखपरिहाराय च भेदकल्पनाऽपि नायुक्तेति, लोकेऽपि भक्ष्यत्वे तुल्येऽपि भेदो दृश्यते, तथा च वक्तारो भवन्ति—कूरखण्डमण्डकानेतान् भोजयत, एतान् पानीयं द्राक्षापानीयादिपानकं च पाययत, एतान् बालान् गुडधानाखर्जूरनालिकेरादिकां सुखादिकां खादयत, एतान् दुर्ललितान् ताम्बूलं च पञ्चसुगन्धं स्वादयत इत्यादि, तथाऽत्रापि भेदकल्पना न्यायवती ॥ तत्र अशनमाह—

असणं ओयण सत्थुगमुग्गजगाराइ खज्जगविही य । खीराइ सूरणाई मंडगपभिई य विन्नेयं ॥ २०७ ॥ पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव । आउक्काओ सव्वो कक्कडगजलाइयं च तहा ॥ २०८ ॥ भत्तोसं दंताई खज्जूरगनालिकेरदक्खाई । कक्कडिअंबगफणसाइ बहुविहं खाइमं नेयं ॥ २०९ ॥ दंतवणं तंबोलं चित्तं तुलसीकुहेडगाईयं । महुपिप्पलिसुंठाई अणेगहा साइमं

नेयं ॥ २१० ॥ पाणंमि सरयविगई खाइम पक्कन्नअंसओ भणिओ । साइमि गुलमहुविगई सेसाओ सत्त असणंमि ॥ २११ ॥

'असण'मित्यादि, आदिशब्दः स्वगतानेकभेदसूचकः सर्वत्र सम्बध्यते, तत ओदनादि सक्त्वादि मुद्गादि जगार्यादि, जगारीशब्देन समयभाषया रब्बा भण्यते, तथा खाद्यकविधिश्च खाद्यकमण्डिकामोदकसुकुमारिकाघृतपूरलपनश्रीस्वर्गच्युताप्रभृतिपकान्नविधिः, तथा क्षीरादि, आदिशब्दाद्दधिघृततक्रतीमनरसालादिपरिग्रहः, तथा सूरणादि, आदिशब्दादार्द्रकादिसकलवनस्पतिविकारव्यञ्जनपरिग्रहः, मण्डकप्रभृति च, मण्डकाः प्रभृतिर्यस्य ठोठिकाकुल्लरिकाचूरीयकइड्डरिकाप्रमुखवस्तुजातस्य तन्मण्डकप्रभृति विज्ञेयं—ज्ञातव्यमशनमिति ॥२०७॥ सम्प्रति पानमाह—'पान'मित्यादि, सोवीरं—काञ्जिकं यवोदकादि—यवधावनमादिशब्दाद्व्रीहिधूमपष्टिकादितण्डुलकोद्रवधावनादिपरिग्रहः, तथा 'चित्रं' नानाप्रकारं सुरादिकं चैव, आदिशब्दात्सरकादिपरिग्रहः, तथाऽप्कायः 'सर्वः' सरःसरित्कूपादिस्थानसम्बन्धी, तथा कर्कटकजलादिकं च, कर्कटकानि—चिर्भटकानि तन्मध्यवर्ति जलं २ तदादिर्यस्य तत्कर्कटकजलादिकं, आदिशब्दात् खर्जूरद्राक्षादिचिञ्चिणिकापानकेक्षुरसादिग्रहः, एतत्सर्वं पानं ॥ २०८ ॥ सम्प्रति खादिममाह—'भत्तोस'मित्यादि, भक्तं च तद्भोजनमोषं च—दाह्यं भक्तौषं, रूढितः परिभ्रष्टचनकगोधूमादि, 'दन्त्यादि' दन्तेभ्यो हितं दन्त्यं—गुन्दादि, आदिशब्दाच्चारुकुलिकाखण्डेक्षुशर्करादिपरिग्रहः, यद्वा दन्तादि देशविशेषप्रसिद्धं गुडसंस्कृतदन्तपचनादि, तथा खर्जूरनालिकेरद्राक्षादिः, आदिशब्दादक्षोटकवदामादिपरिग्रहः, तथा कर्कटिकाम्रपनसादि, आदिशब्दात्कदल्यादिफलपटलपरिग्रहः, बहुविधं खादिमं ज्ञेयम् ॥ २०९ ॥ स्वादिममाह—'दंतवण'मित्यादि, दन्ताः पूयन्ते—पवित्राः क्रियन्ते येन काष्ठखण्डेन तद्दन्तपावनं, ताम्बूलं—नागवल्लीपत्रपूगफलजातिफलादिरूपं, चित्रं—अनेकविधं, तुलसीकुहेडकादि, तुलसी-पत्रिका-

विशेषः कुहेडकः—पिण्डार्द्रकः, आदिशब्दाज्जीरकहरितादिपरिग्रहः, मधुपिप्पलिशुण्ठ्यादि, आदिशब्दाद्गुडमरिचाजमोदजीरकहरीतकीविभीतकामलकीकटुभाण्डादिपरिग्रहः, अनेकधा स्वादिमं ज्ञेयम् ॥ २१० ॥ साम्प्रतं दशानां विकृतीनां मध्ये का कुत्राऽऽहारेऽवतरतीत्याह—

'पाणंमी'त्यादि, पानाहारे सरकविकृतिरवतरति, 'खादिमे' खादिमाहारे पक्वान्नांशको गुडधानादिषु पक्वगुन्दावयवादिको भणितः, स्वादिमे गुडमधुरूपादिविकृतिरवतरति, शेषाः—क्षीरदधिघृततैलपक्वान्ननवनीतमांसरूपाः सप्त विकृतयोऽशनरूपे आहारेऽवतरन्तीति ॥ २११ ॥ प्रत्याख्यानं च कृतमप्येतैः सुकारणैः विशुद्धं भवतीत्याह—

**फासियं[1] पालियं[2] चेव, सोहियं[3] तीरियं[4] तहा। कित्तियं[5]माराहियं[6] चेव, जएज्जा एरिसम्मि उ ॥२१२॥ उचिए काले विहिणा पत्तं जं फासियं तयं भणियं। तह पालियं च असइं सम्मं उवओगपडियरियं ॥ २१३ ॥ गुरुदत्तसेसभोयणसेवणयाए य सोहियं जाण। पुण्णेवि थेवकालावत्थाणा तीरियं होइ ॥ २१४ ॥ भोयणकाले अमुगं पच्चक्खायंत्ति भुंज कित्तीयं। आराहियं पयारेहिं सम्ममेएहिं निट्ठवियं ॥ २१५ ॥ वयभंगे गुरुदोसो थेवस्सवि पालणा गुणकरी उ। गुरुलाघवं च नेयं धम्मंमि अओ उ आगारा ॥ २१६ ॥**

'फासिय'मित्यादि, स्पृष्टमित्यस्य स्थाने प्राकृते फासियमिति भवति, स्पर्शो वा सञ्जातोऽस्येति इतचि स्पर्शितमिति वा, तच्च प्रत्याख्यानग्रहणकाले विधिना प्राप्तं, पालितं चैव—पुनः पुनरुपयोगप्रतिजागरणेन रक्षितं, शोभितं—गुर्वादिप्रदत्तशेषभोजनाऽऽसेवनेन राजितं, तीरितं—पूर्णेऽपि प्रत्याख्यानकालावधौ किञ्चिदधिककालावस्थानेन तीरं नीतं, कीर्तितं—भोजनवेलायाममुकं मया प्रत्याख्यानं कृतं तत्पूर्णमधुना

भोक्ष्ये इत्युच्चारणेन शब्दितं, आराधितं चैव—एभिरेव प्रकारैः सम्पूर्णं निष्ठां नीतं, यस्मादेवम्भूतमेवैतदर्हदाज्ञापालनादप्रमादाच्च महत्कर्मक्षयकारणं तस्मादीदृशे प्रत्याख्याने यतेत—एवंविध एव यत्नः कर्तव्य इति ॥ २१२ ॥ अथ ग्रन्थकारः स्वयमेवैतानि पदानि विवृणोति—'उचिए'त्यादि गाथात्रयं, उचिते काले विधिना प्राप्तं यत् स्पृष्टं तद्भणितं, इदमुक्तं भवति—साधुः श्रावको वा प्रत्याख्यानसूत्रार्थं सम्यगवबुध्यमानः सूर्येऽनुद्गते एव स्वसाक्षितया चैत्यस्थापनाचार्यसमक्षं वा स्वयं प्रतिपन्नविवक्षितप्रत्याख्यानः पश्चाच्चारित्रपवित्रगात्रस्य गुरोः समीपे सूत्रोक्तविधिना कृतिकर्मादिविनयं विधाय रागद्वेषादिविकथादिरहितः सर्वत्रोपयुक्तः प्राञ्जलिपुटो लघुतरशब्देन गुरुवचनमनूच्चरन् यदा प्रत्याख्यानं प्रतिपद्यते तदा स्पृष्टं भवतीति, तथा पालितं चासकृन्निरन्तरमुपयोगेन सम्यग् प्रतिजागरितं ॥ २१३ ॥ गुरुदत्तशेषभोजनाऽऽसेवनया च शोभितं जानीहि, पूर्णेऽपि प्रत्याख्यानकाले स्तोककालावस्थानात्तीरितं भवतीति ॥२१४॥ भोजनकालेऽमुकं प्रत्याख्यातमिति भणित्वा भुञ्जानस्य कीर्तितं, आराधितं प्रकारैः सम्यगेतैः पूर्वोक्तैर्निष्ठां नीतमिति ॥ २१५ ॥ प्रत्याख्यानं चापवादरूपाऽऽकारसहितं कर्तव्यं अन्यथा तु भङ्गः स्यात्, स च महते दोषायेति कथयन्नाह—'वयभंगे'त्यादि, व्रतभङ्गे—नियमभङ्गे गुरुः—महान् दोषो—दूषणमशुभकर्मबन्धादिरूपं भगवदाज्ञाविराधनात्, तथा स्तोकस्यापि—अल्पस्यापि आस्तां महतः पालना—आराधना गुणकरी तु—कर्मनिर्जरालक्षणोपकारकारिण्येव, विशुद्धपरिणामरूपत्वात्, तथा गुरु च—सारं लघु च—असारं तयोर्भावो गुरुलाघवं तच्च ज्ञातव्यं, केत्याह—धर्मे—चारित्रधर्मे, तथाहि—उपवासे कृतेऽपि सञ्जातासमाधेरौषधादिदानतः समाधिसम्पादने निर्जरागुणो गुरुर्भवति इतरथा पुनरल्प इति विमर्शनीयं, एकान्ताग्रहस्य प्रभूतापकारित्वेनाशुभत्वात्, यत एवमत आकाराः प्रत्याख्याने क्रियन्ते इति ॥ २१६ ॥ ननु प्रत्याख्याने विकृतयोऽभिहितास्ताः कियन्त्यो भवन्तीत्याह—

सहस्रत्रयं शतद्वयाधिकमित्यर्थः, अथवा मतान्तरेण द्वाविंशतिशतानि, सहस्रद्वयं शतद्वयाधिकमित्यर्थः, श्रीअरजिनस्य अष्टाविंशतिशतानि, सहस्रद्वयं शताष्टकाधिकमित्यर्थः, श्रीमल्लिजिनस्य द्वाविंशतिशतानि, सहस्रद्वयं शतद्वयाधिकमित्यर्थः, श्रीमुनिसुव्रतस्य अष्टादशशतानि, सहस्रमेकमष्टशताधिकमित्यर्थः, श्रीनमिजिनस्य षोडशशतानि, सहस्रमेकं षड्भिः शतैरधिकमित्यर्थः, श्रीनेमिजिनस्य पञ्चदशशतानि, सहस्रमेकं पञ्चशताधिकमित्यर्थः, श्रीपार्श्वजिनस्य दशशतानि, सहस्रमित्यर्थः, श्रीवीरजिनस्य च सप्त शतानि, एतत्—पूर्वोक्तं यथाक्रमं सर्वतीर्थकृतां केवलिमानं, मनःपर्यवज्ञानिपरिमाणमिदानीं ब्रूम इति शेषः ॥ २१ ॥ तदेवेदानीं 'मणपज्जवनाणि'त्ति द्वाविंशतितमद्वारेणाह—

बारससहस्स तिण्हं सय सड्ढा सत्त १ पंच य २ दिवड्ढं ३ । एगदस सड्ढछस्सय ४ दससहसा
चउसया सड्ढा ५ ॥ ३५५ ॥ दससहसा तिण्णि सया ६ नव दिवड्ढसया य ७ अट्ठ सहसा य ८ ।
पंचसय सत्तसहसा ९ सुविहिजिणे सीयले १० चेव ॥ ३५६ ॥ छसहस्स दोण्हमित्तो ११–१२
पंच सहस्साइं पंच य सयाइं १३ । पंच सहस्सा चउरो १४ सहस्स सयपंचअब्भहिया १५ ॥ ३५७ ॥
चउरो सहस्स तिन्नि य १६ तिण्णेव सया हवंति चालीसा १७ । सहसदुगं पंचसया इगवन्ना
अरजिणिंदस्स १८ ॥ ३५८ ॥ सत्तरससया सपन्ना १९ पंचदससया य २० बारसय सड्ढा २१ ।
सहसो २२ सय अद्धट्ठम २३ पंचेव सया उ वीरस्स २४ ॥ ३५९ ॥

'बारसे'त्यादिगाथापञ्चकं, त्रयाणामृषभाजितसम्भवनाम्नां तीर्थकृतां द्वादश द्वादश मनःपर्यवज्ञानिनां सहस्राः, परमादिजिनस्य सार्धसप्तशताधिकाः, अजितजिनस्य पञ्चशताधिकाः, सम्भवजिनस्य सार्धशताधिकाः, तथा श्रीअभिनन्दनस्य मनःपर्यवज्ञानिनामेकादशसहस्राः

भोक्ष्ये इत्युच्चारणेन शब्दितं, आराधितं चैव—एभिरेव प्रकारैः सम्पूर्णं निष्ठां नीतं, यस्मादेवम्भूतमेवैतदर्हदाज्ञापालनादप्रमादाच्च महत्कर्म-
क्षयकारणं तस्मादीदृशे प्रत्याख्याने यतेत—एवंविध एव यत्नः कर्तव्य इति ॥ २१२ ॥ अथ ग्रन्थकारः स्वयमेवैतानि पदानि विवृणोति—
'उचिए'त्यादि गाथात्रयं, उचिते काले विधिना प्राप्तं यत् स्पृष्टं तद्भणितं, इदमुक्तं भवति—साधुः श्रावको वा प्रत्याख्यानसूत्रार्थं सम्यगव-
बुध्यमानः सूर्येऽनुद्गते एव स्वसाक्षितया चैत्यस्थापनाचार्यसमक्षं वा स्वयं प्रतिपन्नविवक्षितप्रत्याख्यानः पश्चाच्चारित्रपवित्रगात्रस्य गुरोः समीपे
सूत्रोक्तविधिना कृतिकर्मादिविनयं विधाय रागद्वेषादिविकथादिरहितः सर्वत्रोपयुक्तः प्राञ्जलिपुटो लघुतरशब्देन गुरुवचनमनूच्चरन् यदा
प्रत्याख्यानं प्रतिपद्यते तदा स्पृष्टं भवतीति, तथा पालितं चासकृन्निरन्तरमुपयोगेन सम्यग् प्रतिजागरितं ॥ २१३ ॥ गुरुदत्तशेषभोजना-
ऽऽसेवनया च शोभितं जानीहि, पूर्णेऽपि प्रत्याख्यानकाले स्तोककालावस्थानात्तीरितं भवतीति ॥२१४॥ भोजनकालेऽमुकं प्रत्याख्यातमिति
भणित्वा भुञ्जानस्य कीर्तितं, आराधितं प्रकारैः सम्यगेतैः पूर्वोक्तैर्निष्ठां नीतमिति ॥ २१५ ॥ प्रत्याख्यानं चापवादरूपाऽऽकारसहितं
कर्तव्यं अन्यथा तु भङ्गः स्यात्, स च महते दोषायेति कथयन्नाह—'वयभंगे'त्यादि, व्रतभङ्गे—नियमभङ्गे गुरुः—महान् दोषो—दूषणमशु-
भकर्मबन्धादिरूपं भगवदाज्ञाविराधनात्, तथा स्तोकस्यापि—अल्पस्यापि आस्तां महतः पालना—आराधना गुणकरी तु—कर्मनिर्जरालक्षणोपका-
रकारिण्येव, विशुद्धपरिणामरूपत्वात्, तथा गुरु च—सारं लघु च—असारं तयोर्भावो गुरुलाघवं तच्च ज्ञातव्यं, केत्याह—धर्मे—चारित्रधर्मे,
तथाहि—उपवासे कृतेऽपि सञ्जातासमाधेरौषधादिदानतः समाधिसम्पादने निर्जरागुणो गुरुर्भवति इतरथा पुनरल्प इति विमर्शनीयं,
एकान्ताग्रहस्य प्रभूतापकारित्वेनाशुभत्वात्, यत एवमत आकाराः प्रत्याख्याने क्रियन्ते इति ॥ २१६ ॥ ननु प्रत्याख्याने विकृतयो-
ऽभिहितास्ताः कियन्त्यो भवन्तीत्याह—

जितजिनस्य द्वादशसहस्राश्चतुःशताधिकाः श्रीसम्भवस्य द्वादशसहस्राः श्रीअभिनन्दनस्य एकादशसहस्राः श्रीसुमतिजिनस्य दशसहस्राः पञ्चाशदधिकषट्शताधिकाः, 'छन्नउई' इत्यादिगाथायामुत्तरार्धवर्ति शतानामिति पदं सर्वत्र सम्बध्यते, ततः श्रीपद्मप्रभस्य वादिनां पण्णवतिशतानां, कोऽर्थः ?—नवसहस्राः षट्शतैरधिका इति, श्रीसुपार्श्वजिनस्य चतुरशीतिः शतानां, चतुर्भिः शतैरधिकानि अष्टौ सहस्राणीत्यर्थः, चन्द्रप्रभस्य षट्सप्ततिः शतानां, षड्भिः शतैरधिकानि सप्त सहस्राणीत्यर्थः श्रीसुविधेर्जिनस्य षष्टिः शतानां, षट् सहस्राणीत्यर्थः, श्रीशीतलजिनस्य अष्टपञ्चाशच्छतानां, पञ्च सहस्रा अष्टशताधिका इत्यर्थः, श्रीश्रेयांसस्य पञ्चाशत् शतानां, पञ्च सहस्राणीत्यर्थः, श्रीवासुपूज्यस्य सप्तचत्वारिंशच्छतानि, चत्वारः सहस्राः सप्तशताधिका इत्यर्थः, 'अहवा बायाल'त्ति अथवा मतान्तरेण श्रीवासुपूज्यस्य द्विचत्वारिंशच्छतानि, चत्वारः सहस्राः शतद्वयाधिका इत्यर्थः, श्रीविमलजिनस्य द्वात्रिंशच्छतानि, त्रीणि सहस्राणि शतद्वयाधिकानीत्यर्थः, श्रीअनन्तजिनस्य द्वात्रिंशच्छतानि, श्रीधर्मजिनस्य अष्टाविंशतिशतानि, सहस्रद्वयमष्टशताधिकमित्यर्थः, श्रीशान्तिनाथस्य शतानां चतुर्विंशतिः, द्वे सहस्रे शतचतुष्टयाधिके इत्यर्थः, श्रीकुन्थुजिनस्य द्वे सहस्रे, श्रीअरनाथस्य षोडश शतानि, षट्शताधिकं सहस्रमित्यर्थः, श्रीमल्लिजिनस्य चतुर्दशशतानि, शतचतुष्टयाधिकं सहस्रमित्यर्थः, श्रीमुनिसुव्रतस्य द्वादश शतानि, सहस्रमेकं शतद्वयाधिकमित्यर्थः, श्रीनमिजिनस्य दश शतानि सहस्रमित्यर्थः, श्रीनेमिजिनस्य अष्टौ शतानि, श्रीपार्श्वजिनस्य षट् शतानि, श्रीवीरजिनस्य चत्वारि शतानि भवन्ति इति वादिमुनीनां—वादसमरेषु सुरासुरैरप्यजेयानां यतीनां प्रमाणं क्रमेण चतुर्विंशतेर्जिनवराणामिति ॥ १९ ॥ इदानीं 'अवहि'त्ति विंशतितमं द्वारमाह—

**ओहिनाणिमुणीणं नउई १ चउनवइ २ छण्णवइसयाणि ३ । अट्ठानवइसयाइं ४ एक्कारस ५ दस ६ नवसहस्सा ७ ॥ ३४८ ॥ असीई ८ चुलसी ९ बहत्तरी १० सट्ठी ११ चउप्पण १२ अट्ठच-**

**त्ताला १३ । तेयाला १४ छत्तीसा १५ तीसा १६ पणवीस १७ छव्वीसा १८ ॥ ३४९ ॥ बावीसा १९ अट्ठारस २० सोलस २१ पनरस २२ चउद्दस सयाणि २३ । तेरस २४ साहूण सयाइं ओहि-नाणीण वीरस्स ॥ ३५० ॥**

'ओही'त्यादिगाथात्रयं, तत्रादिजिनस्य अवधिज्ञानिमुनीनां नवतिशतानि, नव सहस्राणीत्यर्थः, श्रीअजितजिनस्य चतुर्नवतिशतानि, नव सहस्राश्चतुर्भिः शतैरधिका इत्यर्थः, श्रीसंभवजिनस्य षण्णवतिशतानि, नवसहस्राः षड्भिः शतैरधिका इत्यर्थः, श्रीअभिनन्दनस्य अष्टानवतिशतानि, नवसहस्रा अष्टशतैरधिका इत्यर्थः, श्रीसुमतिजिनस्य एकादश सहस्राणि श्रीपद्मप्रभस्य दश सहस्राणि श्रीसुपार्श्वस्य नव सहस्राः, अत्र 'बावीसे'त्यादितृतीयगाथायां द्वितीयपादवर्ति 'सयाणि'त्ति (ग्रन्थाग्र ३०००) पदमशीत्यादिपदेषु योज्यते, ततः श्रीचन्द्रप्रभस्य अशीतिशतानि, अष्टौ सहस्रा इत्यर्थः, श्रीसुविधिजिनस्य चतुरशीतिशतानि, अष्टौ सहस्राश्चतुर्भिः शतैरधिका इत्यर्थः, श्रीशीतलजिनस्य द्विसप्ततिशतानि, सप्तसहस्राः शतद्वयाधिका इत्यर्थः, श्रीश्रेयांसजिनस्य षष्टिशतानि, सहस्रषट्कमित्यर्थः, श्रीवासुपूज्यस्य चतुष्पञ्चाशच्छतानि, पञ्च सहस्राश्चतुःशताधिका इत्यर्थः, श्रीविमलजिनस्य अष्टचत्वारिंशच्छतानि, चत्वारः सहस्रा अष्टशताधिका इत्यर्थः, श्रीअनन्तजिनस्य त्रिचत्वारिंशच्छतानि, चत्वारः सहस्राः शतत्रयेणाधिका इत्यर्थः, श्रीधर्मजिनस्य षट्त्रिंशच्छतानि, सहस्रत्रयं षड्भिः शतैरधिकमित्यर्थः, श्रीशान्तिनाथस्य त्रिंशच्छतानि, त्रयः सहस्रा इत्यर्थः, श्रीकुन्थुनाथस्य पञ्चविंशतिशतानि, सहस्रद्वयं पञ्चशताधिकमित्यर्थः, श्रीअरनाथस्य षड्विंशतिशतानि, द्वौ सहस्रौ षट्शताधिकावित्यर्थः, श्रीमल्लिजिनस्य द्वाविंशतिशतानि, सहस्रद्वयं द्विशताधिकमित्यर्थः, श्रीमुनिसुव्रतस्य अष्टादशशतानि, सहस्रमेकमष्टशताधिकमित्यर्थः, श्रीनमिजिनस्य षोडशशतानि, सहस्रमेकं षट्शताधिकमित्यर्थः, श्रीनेमि-

जिनस्य पञ्चदशशतानि, एकः सहस्रः शतपञ्चकाधिक इत्यर्थः, श्रीपार्श्वजिनस्य चतुर्दशशतानि, सहस्रमेकं शतचतुष्टयाधिकमित्यर्थः, श्रीमहावीरजिनस्य च त्रयोदश शतानि, सहस्रमेकं शतत्रयाधिकमित्यर्थः २० ॥ 'केवलि'त्ति द्वारमेकविंशतितममिदानीमाह—

**वीससहस्सा उसहे १ वीसं बावीस अहव अजियस्स २ । पन्नरस ३ चउदस ४ तेरस ५ बारस ६ एक्कारस ७ दसेव ८ ॥ ३५१ ॥ अद्धट्ठम ९ सत्तेव य १० छस्सड्ढा ११ छच्च १२ पंच सड्ढा य १३ । पंचेव १४ अद्धपंचम १५ चउसहस्सा तिन्नि य सया य १६ ॥ ३५२ ॥ बत्तीससया अहवा बावीस सया व हुंति कुंथुस्स १७। अट्ठावीसं १८ बावीस १९ तहय अट्ठारस सयाइं २० ॥३५३॥ सोलस २१ पनरस २२ दससय २३ सत्तेव सया हवंति वीरस्स २४ । एयं केवलिमाणं मणपज्जविमाणमिण्हि तु ॥ ३५४ ॥**

'वीसे'त्यादिगाथाचतुष्कं, केवलिनां विंशतिसहस्रा ऋषभे—वृषभजिनस्य, विंशतिसहस्रा अजितजिनस्य, अथवा मतान्तरेण द्वाविंशतिसहस्रा अजितनाथस्य, श्रीसम्भवस्य पञ्चदशसहस्राः, श्रीअभिनन्दनस्य चतुर्दशसहस्राः श्रीसुमतिनाथस्य त्रयोदशसहस्राः श्रीपद्मप्रभस्य द्वादशसहस्राः श्रीसुपार्श्वस्य एकादशसहस्राः श्रीचन्द्रप्रभस्य दशैव सहस्राः श्रीसुविधिजिनस्य अर्धाष्टमाः सहस्राः, सप्तसहस्राः पञ्चशताधिका इत्यर्थः, श्रीशीतलजिनस्य सप्तसहस्राः श्रीश्रेयांसस्य षट् सहस्राः सार्धाः, सपञ्चशता इत्यर्थः, श्रीवासुपूज्यस्य षट् सहस्राः श्रीविमलजिनस्य पञ्च सहस्राः सार्धाः—सपञ्चशता इत्यर्थः, श्रीअनन्तजिनस्य पञ्चैव सहस्राः, श्रीधर्मजिनस्य अर्धपञ्चमाः सहस्राः, चत्वारः सहस्राः सपञ्चशता इत्यर्थः, श्रीशान्तिनाथस्य चत्वारः सहस्राः (त्रीणि च शतानि) शतत्रयाधिकाः इत्यर्थः, श्रीकुन्थुजिनस्य द्वात्रिंशच्छतानि,

सहस्रत्रयं शतद्वयाधिकमित्यर्थः, अथवा मतान्तरेण द्वाविंशतिशतानि, सहस्रद्वयं शतद्वयाधिकमित्यर्थः, श्रीअरजिनस्य अष्टाविंशतिशतानि, सहस्रद्वयं शताष्टकाधिकमित्यर्थः, श्रीमल्लिजिनस्य द्वाविंशतिशतानि, सहस्रद्वयं शतद्वयाधिकमित्यर्थः, श्रीमुनिसुव्रतस्य अष्टादशशतानि, सहस्रमेकमष्टशताधिकमित्यर्थः, श्रीनमिजिनस्य षोडशशतानि, सहस्रमेकं पङ्क्तिः शतैरधिकमित्यर्थः, श्रीनेमिजिनस्य पञ्चदशशतानि, सहस्रमेकं पञ्चशताधिकमित्यर्थः, श्रीपार्श्वजिनस्य दशशतानि, सहस्रमित्यर्थः, श्रीवीरजिनस्य च सप्त शतानि, एतत्—पूर्वोक्तं यथाक्रमं सर्वतीर्थकृतां केवलिमानं, मनःपर्यवज्ञानिपरिमाणमिदानीं ब्रूम इति शेषः ॥ २१ ॥ तदेवेदानीं 'मणपज्जवनाणि'त्ति द्वाविंशतितमद्वारेणाह—

**बारससहस्स तिण्हं सय सड्ढा सत्त १ पंच य २ दिवड्ढं ३ । एगदस सड्ढछस्सय ४ दससहसा चउसया सड्ढा ५ ॥ ३५५ ॥ दससहसा तिण्णि सया ६ नव दिवड्ढसया य ७ अट्ठ सहसा य ८ । पंचसय सत्तसहसा ९ सुविहिजिणे सीयले १० चेव ॥ ३५७ ॥ छसहस्स दोण्हमित्तो ११–१२ पंच सहस्साइं पंच य सयाइं १३। पंच सहस्सा चउरो १४ सहस्स सयपंचअब्भहिया १५ ॥ ३५७॥ चउरो सहस्स तिन्नि य १६ तिण्णेव सया हवंति चालीसा १७ । सहसदुगं पंचसया इगवन्ना अरजिणिंदस्स १८ ॥ ३५८ ॥ सत्तरससया सपन्ना १९ पंचदससया य २० बारसय सड्ढा २१। सहसो २२ सय अद्धट्ठम २३ पंचेव सया उ वीरस्स २४ ॥ ३५९ ॥**

'बारसे'त्यादिगाथापञ्चकं, त्रयाणामृषभाजितसम्भवनाम्नां तीर्थकृतां द्वादश द्वादश मनःपर्यवज्ञानिनां सहस्राः, परमादिजिनस्य सार्धसप्तशताधिकाः, अजितजिनस्य पञ्चशताधिकाः, सम्भवजिनस्य सार्धशताधिकाः, तथा श्रीअभिनन्दनस्य मनःपर्यवज्ञानिनामेकादशसहस्राः

नस्य तुच्छौषधिभक्षणमतीचारः, अथवाऽत्यन्तावद्यभीरुतयाऽचित्ताहारताऽभ्युपगता, तत्र च यत्तृप्तिकारकं तदचेतनीकृत्यापि भक्षयतु सचित्तस्यैव वर्जनीयत्वाभ्युपगमात्, यत्पुनस्तृप्तिसम्पादनासमर्था अप्यौषधीर्लौल्येनाचेतनीकृत्य भुङ्क्ते तत्तुच्छौषधिभक्षणमतीचारः, तत्र भावतो विरतेर्विराधितत्वाद् द्रव्यतस्तु पालितत्वादिति, एवं रजनीभोजनमांसादिनिवृत्तिव्रतेष्वनाभोगातिक्रमादिभिरतीचारा भावनीयाः, एते पञ्च दोषा—अतीचारा उपभोगपरिभोगव्रते इति, तत्त्वार्थे तु सचित्तः सचित्तसम्बद्धः सम्मिश्रोऽभिषवो दुष्पक्वाहारश्चेत्येवं पञ्चातीचाराः प्रतिपादिताः, तत्र सचित्तसचित्तसम्बद्धदुष्पक्वाहारास्त्रयः पूर्ववत्, संमिश्रस्तु सचित्तेन मिश्रः—शवल आहारः, यथा आर्द्रकदाडिमबीजकरवन्दकादिमिश्रः पूरणादिस्तिलमिश्रो यवधानादिर्वा, अयमप्यनाभोगातिक्रमादिनाऽतीचारः, यद्वा सम्भवत्सचित्तावयवस्यापक्वकणिक्कादेः पिष्टत्वादिना अचेतनमितिबुद्ध्या आहारः सम्मिश्राहारः, व्रतसापेक्षत्वादतीचारः, अभिषवः पुनरनेकद्रव्यसन्धाननिष्पन्नः सुरासौवीरकादिर्मांसप्रकारखण्डादिर्वा सुरामध्वाद्यभिस्यन्दिवृष्यद्रव्योपयोगो वा, अयमपि सावद्याहारवर्जकस्यानाभोगातिक्रमादिनाऽतीचार इति ॥ २८१ ॥ अथानर्थदण्डविरतिलक्षणस्य तृतीयगुणव्रतस्यातीचारानाह—'कुक्कुई'त्यादि, कुदिति कुत्सायां निपातः, निपातानामानन्त्यात् कुत्सितं कुच्यति भ्रूनयनोष्ठनासाकरचरणवदनविकारैः सङ्कुचतीति कुत्कुचस्तस्य भावः कौत्कुच्यं—अनेकप्रकारं भाण्डानामिव विक्रियाकरणं, अथवा कुत्सितः कुचः कुत्कुचः—सङ्कोचादिक्रियावान् तस्य भावः कौत्कुच्यं, अत्र च येन परो हसति स्वस्य च लाघवं सम्पद्यते न तादृशं वक्तुं चेष्टितुं वा कल्पते, प्रमादात्तथाचरणे चातीचार इति प्रथमः १, तथा मुखमस्यास्तीति मुखरः—अनालोचितभाषी वाचाटस्तस्य भावः कर्म वा मौखर्यं—धार्ष्ट्यप्रायमसभ्यासम्बद्धबहुप्रलापित्वं, अतीचारत्वं चास्य पापोपदेशसम्भवादिति द्वितीयः २, तथा भोगः—सकृद्भोग्य आहारमाल्यादिः उपभोगः—पुनःपुनर्भोग्य आच्छादनवनितादिः तयोरतिरेकः—आधिक्यं, इह च स्नानपानभोजनकुङ्कु-

मचन्दनकस्तूरिकावस्त्राभरणादीनामतिरिक्तानामारम्भोऽनर्थदण्डः, अत्रायं सम्प्रदायः—अतिरिक्तानि बहूनि तैलामलकादीनि यदि गृह्णाति तदा तल्लौल्येन बहवः स्नातुं तडागादौ व्रजन्ति, ततः पूतरकाप्कायादिवधोऽधिकः स्यात्, न चैवं कल्पते, ततः को विधिः?, तत्र स्नाने तावत् गृह एव स्नातव्यं, तदभावे तु तैलामलकैर्गृहे एव शिरो घर्षयित्वा तानि सर्वाणि साटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति, पुष्पादिष्वपि येषु संसक्तिः सम्भवति तानि परिहरति, एवं सर्वत्र वाच्यं इति तृतीयः ३, तथा कन्दर्पः—कामस्तद्धेतुस्तत्प्रधानो वा वचनप्रयोगोऽपि कन्दर्पः, श्रावकेण हि तादृशं न वक्तव्यं येन स्वस्य परस्य वा मोहोद्रेको भवतीति चतुर्थः ४, तथाऽधिक्रियते दुर्गतावात्मा अनेनेत्यधिकरणं—उदूखलघरट्टादि संयुक्तं उदूखलेन मुशलं हलेन फालं शकटेन युगं धनुषा शरा इत्यादि एवमेकमधिकरणमधिकरणान्तरेण युक्तं—संयुतं युक्ताधिकरणं, इह च श्रावकेण संयुक्तमधिकरणं न धारणीयं, तथा च सति हिंसकः कश्चित्संयुक्तमधिकरणमाददीत, वियुक्ताधिकरणतायां तु सुखेनैव परः प्रतिषेद्धुं शक्यते, इह च निषिद्धस्यानर्थदण्डस्य अपध्यानाचरितप्रमादाचरितहिंस्रप्रदानपापकर्मोपदेशभेदत्वेन चतुर्विधत्वात्तद्विरतिश्चतुर्धा, तत्र अपध्यानाचरितविरतौ कौत्कुच्यादिपञ्चकस्यानाभोगादिनाऽनुचिन्तनमतीचारः, आकुट्ट्या पुनः प्रवृत्तौ भङ्ग एव, प्रमादाचरितविरतौ तु कौत्कुच्यकन्दर्पभोगोपभोगातिरेकाणां त्रयाणामपि करणमतीचारः, युक्ताधिकरणं तु हिंस्रप्रदानविरतेः, मौखर्यं तु पापकर्मोपदेशविरतेः इति ५ एतेऽतीचारा अनर्थदण्डव्रते ॥ २८२ ॥ उक्ता गुणव्रतातीचाराः, अथ शिक्षाव्रतातीचारावसरः, तत्रापि सामायिकस्य तावदतीचारानाह—

काय १ मणो २ वयणाणं ३ दुप्पणिहाणं सईअकरणं च ४। अणवट्ठियकरणं चिय सामइए
पंच अइयारा ॥ २८३ ॥ आणयणं १ पेसवणं २ सद्दणुवाओ य ३ रूवअणुवाओ ४। बहिपोग्गलप-

**क्खेवो ५ दोसा देसावगासस्स ॥ २८४ ॥ अप्पडिलेहिय अप्पमज्जियं च सेज्जा३ह थंडिलाणि ४ तहा। संमं च अणणुपालण ५ मइयारा पोसहे पंच ॥ २८५ ॥ सचित्ते निक्खिवणं १ सचित्तपिहणं च २ अन्नववएसो ३ । मच्छरइयं च ४ कालाईयं ५ दोसाऽतिहिविभाए ॥ २८६ ॥**

'काये'त्यादि, प्रणहितिः प्रणिधानं दुष्टं च तत्प्रणिधानं च दुष्प्रणिधानं–कायमनोवचनानां सावद्ये प्रवर्तनं, तत्र शरीरावयवानां पाणिपादादीनामनिभृततावस्थापनं कायदुष्प्रणिधानं क्रोधलोभद्रोहाभिमानेर्ष्यादिभिः कार्यव्यासङ्गः सम्भ्रमश्च मनोदुष्प्रणिधानं वर्णसंस्काराभावोऽर्थानवगमश्चापलं च वाग्दुष्प्रणिधानमिति त्रयोऽतीचाराः३, यदुक्तं–"अनिरिक्खियापमज्जिय थंडिल्ले ठाणमाइ सेवंतो । हिंसाऽभावेऽवि न सो कडसामइओ पमायाओ ॥ १ ॥ सामाइयं तु काउं घरचिंतं जो य चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं ॥ २ ॥ कडसामइओ पुव्विं बुद्धीए पेहिऊण भासेज्जा । सइ निरवज्जं वयणं अन्नह सामाइयं न भवे ॥ ३ ॥" [ अनिरीक्ष्याप्रमृज्य स्थण्डिले स्थानादि सेवमानः । हिंसाऽभावेऽपि न स कृतसामायिकः प्रमादात् ॥ १ ॥ सामायिकं तु कृत्वा गृहचिन्तां यस्तु चिन्तयति श्राद्धः । आर्त्तवशार्त्तोपगतो निरर्थकं तस्य सामायिकं ॥ २ ॥ कृतसामायिकः पूर्वं बुद्ध्या प्रेक्ष्य भाषेत सदा निरवद्यं वचनं अन्यथा सामायिकं न भवेत् ॥ ३ ॥ ] तथा स्मृतेः सामायिकविषयाया अकरणं, कोऽर्थः ?–सामायिकं मया कर्तव्यं न कर्तव्यमिति वा सामायिकं मया कृतं न कृतमिति वा प्रबलप्रमादाद्यदा न स्मरति तदाऽतीचारः, स्मृतिमूलत्वान्मोक्षसाधनानुष्ठानस्य, यदभ्यधायि–"न सरइ पमायजुत्तो जो सामइयं कया उ कायव्वं । कयमकयं वा तस्स हु कयंपि विहलं तयं नेयं ॥ १ ॥" [ न स्मरति प्रमादयुक्तो यः सामायिकं कदा तु कर्त्तव्यं । कृतमकृतं वा तस्य कृतमपि निष्फलमेव तकत् ॥ १ ॥ ] इति चतुर्थः ४; तथाऽनवस्थितस्य करणं प्रतिनियतवेलायां

सामायिकस्याकरणं यथाकथञ्चिद्वा करणं करणानन्तरमेव पारणं च, यदुक्तं—"काऊण तक्खणं चिय पारेइ करेइं वा जहिच्छाए। अणवट्ठियसामइयं अणायराओ न तं सुद्धं ॥ १ ॥" [ कृत्वा तत्क्षणमेव पारयेत् करोति वा यदृच्छया। अनवस्थितं सामायिकं अनादरात् तत् न शुद्धं ॥ १ ॥ ] इति पञ्चमः ५, इह चाद्यत्रयस्यानाभोगादिभिरेवातीचारत्वं, अन्यथा तु भङ्ग एव, इतरद्वयस्य तु प्रमादबहुलतयेति, एते सामायिकव्रते पञ्चातीचाराः ॥ २८३ ॥ इदानीं देशावकाशिकव्रतातीचारानाह—'आणये'त्यादि, दिग्व्रतविशेष एव देशावकाशिकव्रतं, इयांस्तु विशेषः—दिग्व्रतं यावज्जीवं संवत्सरं चातुर्मासीं वा यावत् देशावकाशिकं तु दिवसप्रहरमुहूर्तादिपरिमाणं, तस्य च पञ्चातीचाराः, तत्र 'आणयण'मित्यादि, आनयनं—विवक्षितक्षेत्राद्बहिःस्थितस्य सचेतनादिद्रव्यस्य विवक्षिते क्षेत्रे प्रापणं प्रेष्येणेति द्रष्टव्यं, स्वयं गमने हि मम व्रतभङ्गः स्यादितिबुद्ध्या प्रेष्येण यदा आनाययति सचेतनादिद्रव्यं तदाऽतीचार इति प्रथमः १, तथा प्रेषणं—प्रेष्यस्य विवक्षितक्षेत्राद्बहिः प्रयोजनाय व्यापारणं, स्वयं गमने हि मम व्रतभङ्गो भवति ततः स मा भूदितिबुद्ध्या स्वनियमितदेशात्परतोऽन्यं व्यापारयति प्रयोजनकरणायेति, देशावकाशिकव्रतं हि मा भूद्गमनागमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण गृह्यते, स तु स्वयं कृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः, प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः परस्य प्रेष्यस्य पुनरनिपुणत्वादीर्यासमित्यभावे दोष इति द्वितीयः २, तथा शब्दस्यानुपातः शब्दानुपातः, स्वगृहवृत्तिप्राकारादिव्यवच्छिन्नभूप्रदेशकृताभिग्रहः समुत्पन्ने प्रयोजने व्रतभङ्गभयेन स्वयमगमनाद् वृत्तिप्राकारादिप्रत्यासन्नीभूय काशितादिशब्दं करोति आकारणीयानां कर्णेऽनुपातयति ते च तच्छब्दश्रवणात्तत्समीपमागच्छन्तीति ३, तथा रूपं—स्वशरीरसम्बन्धि उत्पन्नप्रयोजनः शब्दमनुच्चारयन्नाह्वानीयानां दृष्टावनुपातयति तद्दर्शनाच्च ते तत्समीपमागच्छन्तीति रूपानुपातोऽयं ४, अयमत्र परमार्थः—विवक्षितक्षेत्राद्बहिः स्थितं कञ्चन नरं व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा स्वकीयशब्दश्रावणरूपदर्शनव्या-

जेन तमाकारयति तदा व्रतसापेक्षत्वात् शब्दानुपातरूपानुपातावतीचाराविति तृतीयचतुर्थौ, तथा बहिर्विवक्षितक्षेत्रात्पुद्गलस्य—लेष्टुकाष्ठशकलादेः प्रक्षेपणं प्रक्षेपः, विशिष्टदेशाभिग्रहे हि सति कार्यार्थी परतो गमननिषेधाद्यदा लेष्ट्वादीन् परेषां बोधनाय क्षिपति तदा लेष्ट्वादिपातसमनन्तरमेव ते तत्समीपमनुधावन्ति, ततश्च तान् व्यापारयतः स्वयमनुपमर्दकस्याप्यतीचारो भवतीति पञ्चमः ५, इह चाद्यद्वयमव्युत्पन्नबुद्धित्वेन सहसाकारादिना वा अन्त्यत्रयं तु मायावितया अतीचारतां यातीति, एते दोषा—अतीचारा देशावकाशिकव्रतस्य, अत्राहुर्वृद्धाः—दिग्व्रतसङ्क्षेपकरणं शेषव्रतसङ्क्षेपकरणस्याप्युपलक्षणं द्रष्टव्यं तेषामपि सङ्क्षेपस्यावश्यंकर्तव्यत्वात् प्रतिव्रतं च सङ्क्षेपकरणस्य भिन्नव्रतत्वे द्वादश व्रतानीति सङ्ख्याविरोधः स्यादिति, तत्र केचिदाचक्षते—दिग्व्रतसङ्क्षेप एव देशावकाशिकव्रतं, तदतीचाराणां दिग्व्रतानुसारितयैवोपलम्भात्, अत्रोच्यते, यथोपलक्षणतया शेषव्रतसङ्क्षेपकरणमपि देशावकाशिकमुच्यते तथोपलक्षणतयैव तदतीचारा अपि तदनुसारिणो द्रष्टव्याः, अथवा प्राणातिपातादिव्रतान्तरसङ्क्षेपकरणेषु वधबन्धादय एवातीचाराः, दिग्व्रतसङ्क्षेपकरणे तु सङ्क्षिप्तत्वात् क्षेत्रस्य प्रेष्यप्रयोगादयोऽप्यतीचाराः स्युरिति भेदेन दर्शिताः, न च सर्वेष्वपि व्रतभेदेषु विशेषतोऽतीचारा दर्शनीयाः, रात्रिभोजनादिव्रतभेदेषु तेषामदर्शितत्वादिति ॥ २८४ ॥ अथ पौषधव्रतातीचारानाह—'अप्पडिले'त्यादि, अप्रत्युपेक्षिताप्रमार्जिताभ्यां दुष्प्रत्युपेक्षितदुष्प्रमार्जितयोरपि ग्रहणं, नञः कुत्सार्थस्यापि दर्शनात्, यथा कुत्सितो ब्राह्मणोऽब्राह्मणः, ततोऽप्रत्युपेक्षितदुष्प्रत्युपेक्षितं शय्यासंस्तारकादीति प्रथमोऽतीचारः, अप्रमार्जितदुष्प्रमार्जितं शय्यासंस्तारकादीति द्वितीयः, अप्रत्युपेक्षितदुष्प्रत्युपेक्षितमुच्चारप्रश्रवणादिस्थण्डिलमिति तृतीयः, अप्रमार्जितदुष्प्रमार्जितमुच्चारप्रश्रवणादिस्थण्डिलमिति चतुर्थः, तत्र अप्रत्युपेक्षितं—चक्षुषाऽनिरीक्षितं दुष्प्रत्युपेक्षितं—विभ्रान्तचेतसा निरीक्षितं अप्रमार्जितं—रजोहरणवस्त्राञ्चलादिना न विशोधितं दुष्प्रमार्जितं—अविधिनाऽनुपयुक्ततया च रजोहरणादिना विशोधितं, इह च सामा-

चारी—गृहीतपौषधो नाप्रत्युपेक्षितां शय्यामारोहति संस्तारकं वा पौषधशालां वा सेवते दर्भवस्त्रं वा शुद्धवस्त्रं वा भूमौ संस्तृणाति, का-
यिकाभूमेश्चागतः पुनरपि संस्तारकं प्रत्युपेक्षते, अन्यथाऽतीचारः स्यात्, एवं पीठादिष्वपि वाच्यं ४ तथा पौषधव्रतस्य सम्यग्—यथागमं
निष्प्रकम्पेन चेतसा अननुपालनं—अनासेवनं, तथाहि—आहारादिविषये चतुर्विधे पौषधे प्रतिपन्ने सति बुभुक्षातृषापीडितः सन्नेवं चिन्त-
यति—प्रातरिदमिदं शाल्योदनघृतपूरपुरस्सरमाहारजातं पाचयिष्यामि द्राक्षापानकादीनि च पानकानि कारयिष्यामि, तथा शरीरस-
त्कारपौषधक्लेशितश्चिन्तयति—प्रभाते स्नानकुङ्कुमादिविलेपनं भव्यरीत्या करिष्यामीति, तथा ब्रह्मचर्यपौषधे चिन्तयाति पूर्वक्रीडितानि मद-
नोद्दीपकानि च वचनचेष्टादीनि करोतीति, तथा अव्यापारपौषधेऽपीदं मे करणीयं व्यवहरणीयं चास्ति इदं लभ्यमिदं च देयमित्यादि
चिन्तयन्नतिचरति व्रतमिति पञ्चमः ५ एते अतीचाराः पञ्च पौषधव्रते ॥ २८५ ॥ इदानीमतिथिसंविभागव्रतातीचारानाह—'स-
चित्ते'त्यादि, सचित्ते—सचेतने पृथिवीजलकुम्भोपचुल्लीधान्यादौ निक्षेपणं निक्षेपः—साधुदेयभक्तादेः स्थापनमदेयबुद्ध्या, असौ हि तुच्छ-
बुद्धिर्जानाति यत् मया गृहीतनियमेन साधूनामवश्यं देयं न चैते मुनयः सचित्ते निक्षिप्तं गृहीष्यन्ति मया दीयमानमपि ततो मया निज-
नियमोऽप्याराधितो भविष्यति वस्त्वप्यशनादिकं रक्षितं भविष्यतीत्येवं कुर्वतोऽतीचारः प्रथमः १ तथा सचित्तेन—सूरणकन्दपत्रपुष्पफलादिना
तथाविधयैव बुद्ध्या पिधानं—आच्छादनं देयस्य वस्तुन इति द्वितीयः २ चः समुच्चये, तथा—अन्यस्य—परस्य व्यपदेशोऽन्यव्यपदेशः, इदं हि
शर्करागुडखण्डघृतपूरादिकं यज्ञदत्तसम्बन्धीति व्रतिनः श्रावयन् ढौकयत्यदेयबुद्ध्या, न च व्रतिनः स्वामिनाऽननुज्ञातं गृह्णन्तीति नियं-
मोऽपि तेन न भग्नः शर्करादिकं च रक्षितमिति तृतीयोऽतीचारः ३ तथा मत्सरः—कोपः स विद्यते यस्येति मत्सरिकस्तस्य भावो मत्स-
रिकता तया ददतिचरति व्रतं, कोऽभिप्रायः?—मार्गितः सन् कुप्यति सदपि वस्तु न ददातीति, अथवाऽनेन तावद् द्रमकेण मार्गितेन

दत्तं मुनिभ्यः किमहं ततोऽपि निकृष्टः? इति मात्सर्यात्—परगुणासहनलक्षणाद्ददतोऽतीचारश्चतुर्थः ४ तथा कालस्य—साधूनामुचितभिक्षासमयस्यातीतमतिक्रमः—अदित्सयाऽनागतभोजनपश्चाद्भोजनद्वारेणोल्लङ्घनं कालातीतं, अयं भावः—उचितो यो भिक्षाकालः साधूनां तं लङ्घयित्वा प्रथमं वा भुञ्जानस्य गृहीतातिथिसंविभागनियमस्यातीचारः पञ्चमः ५ एते दोषा अतिथिविभागे—अतिथिसंविभागे व्रते इति॥२८६॥

सम्प्रति 'भरहंमि भूयसंपइभविस्सतित्थंकराण नामाइं । एरवयंमिवि ताइं संपइजिणभाविनामाइं'ति सप्तमं द्वारं विवरीतुमाह—

भरहेऽतीए संपइ भाविजिणे वंदिमो चउव्वीसं । एरवयंमिवि संपइभाविजिणे नामओ वंदे ॥२८७॥
केवलनाणी १ निव्वाणी २ सायरो ३ जिणमहायसो ४ विमलो ५ । सव्वाणुभूइ (नाहसुतेया) ६ सिरिहर ७ दत्तो ८ दामोयर ९ सुतेओ १० ॥ २८८ ॥ सामिजिणो य ११ सिवासी १२ सुमई १३ सिवगइ १४ जिणो य अत्थाहो १५ (अबाहो) । नाहनमीसर १६ अनिलो १७ जसोहरो १८ जिणकयग्घो य १९ ॥ २८९ ॥ धम्मीसर २० सुद्धमई २१ सिवकरजिण २२ संदणो य २३ संपइ य २४ । तीउस्सप्पिणिभरहे जिणेसरे नामओ वंदे ॥ २९० ॥ उसभं १ अजियं २ संभव ३ मभिणंदण ४ सुमइ ५ पउमप्पह ६ सुपासं ७ । चंदप्पह ८ सुविहि ९ सीअल १० सेज्जंसं ११ वासुपुज्जं च १२ ॥ २९१ ॥ विमल १३ मणंतं १४ धम्मं १५ संतिं १६ कुंथुं १७ अरं च १८ मल्लिं च १९ । मुणिसुव्वय २० नमि २१ नेमी २२ पासं २३ वीरं २४ च पणमामि ॥ २९२ ॥ जिणपउमनाह १ सिरिसुरदेव २ सुपास ३ सिरिसयंपभयं ४ । सव्वाणुभूइ ५ देवसुय ६ उदय ७ पे-

**ढाल ८ मभिवंदे ॥ २९३ ॥ पोट्टिल ९ सयकित्तिजिणं १० मुणिसुव्वय ११ अमम १२ निक्कसायं च १३ । जिणनिप्पुलाय १४ सिरिनिममत्तं १५ जिणचित्तगुत्तं १६ च ॥ २९४ ॥ पणमामि समाहिजिणं १७ संवरय १८ जसोहरं १९ विजय २० मल्लिं २१ । देवजिण २२ ऽणंतविरियं २३ भद्दजिणं २४ भाविभरहंमि ॥ २९५ ॥**

'भरहे'त्यादि, भरते—भारते क्षेत्रेऽतीतान् सम्प्रति—वर्तमानान् भाविनो—भविष्यतश्च जिनान् वन्दामहे चतुर्विंशतिं, ऐरवते—ऐरवतक्षेत्रेऽपि सम्प्रतिवर्तिनो भाविनश्च नामतो, नामानि गृहीत्वेत्यर्थः, इदं च विशेषणं भारतजिनेष्वपि सम्बन्धनीयं, ऐरवतेऽतीतजिननामानि न ज्ञायन्ते ततो वार्तमानिकभविष्यजिनवन्दनमेवोद्दिष्टं, वन्दे—अभिवादये स्तौमि' चेत्यर्थः ॥ २८७ ॥ तान्येव नामानि भारतातीतजिनानामाह—'केवली'त्यादि, केवलज्ञानी १ निर्वाणी २ सागरो जिनो ३ महायशाः ४ विमलो ५ नाथसुतेजाः अन्ये सर्वानुभूतिमाहुः ६ श्रीधरो ७ दत्तः ८ दामोदरः ९ सुतेजा १० इति प्रथमगाथायां दश ॥ २८८ ॥ स्वामिजिनः ११, चः समुच्चये, शिवाशी अन्ये मुनिसुव्रतमाहुः १२ सुमतिः १३ शिवगतिर्जिन १४ श्राबाधः अन्येऽस्तागमाहुः १५, नाथनेमीश्वरो १६ ऽनिलो १७ यशोधरो १८ जिनकृतार्घश्च १९ इति गाथायामस्यां नव जिनाः ॥ २८९ ॥ धर्मीश्वरः केचिज्जिनेश्वरमाहुः, २० शुद्धमतिः २१ शिवकरजिनः २२ स्यन्दनश्च २३ सम्प्रतिजिनश्च २४ अतीतोत्सर्पिण्यां भारते जिनेश्वरानेतान्नामतो वन्देऽहमिति तृतीयगाथायां पञ्च जिनाः ॥ २९० ॥ भारतवर्तमानजिनान्नामत आह—'उसभे'इत्यादि, ऋषभमजितं सम्भवमभिनन्दनं सुमतिं पद्मप्रभं सुपार्श्वं चन्द्रप्रभं सुविधिं शीतलं श्रेयांसं वासुपूज्यं च ॥ २९१ ॥ विमलमनन्तं धर्मं शान्तिं कुंथुं अरं च मल्लिं च मुनिसुव्रतं नमिं 'नेमी'त्ति पदैकदेशे पदसमुदायोपचाराद्

अरिष्टनेमिं एवं पार्श्वनाथं महावीरं च प्रणमामि ॥ २९२ ॥ भविष्यद्भारतजिनान्नामत आह—'जिणपउमे'त्यादि, जिनं पद्मनाभं श्रीसुरदेवं श्रीसुपार्श्वं श्रीस्वयंप्रभं सर्वानुभूतिं देवश्रुतं उदयं पेढालं अभिवन्दे इति प्रथमगाथायामष्टौ जिनाः ॥ २९३ ॥ 'पोट्टिले'त्यादि, पोट्टिलं शतकीर्तिजिनं मुनिसुव्रतं अममं निष्कषायं, चः समुच्चये, जिनं निष्पुलाकं श्रीनिर्ममत्वं जिनं चित्रगुप्तं चेति द्वितीयगाथायामष्टौ, अभिवन्दे इत्यत्रापि योज्यं ॥ २९४ ॥ 'पणमामी'त्यादि, प्रणमामि समाधिजिनं संवरकं यशोधरं विजयं मल्लिं देवजिनं अनन्तवीर्यं भद्रजिनं, अन्ये भद्रकृतमाहुः, इति भाविनो भारते जिनाः ॥ २९५ ॥ समवायाङ्गे त्वेवं नामानि दृश्यन्ते, यथा—'महापउमे १ सुरादेवे २ सुपासे ३ य सयंपभे ४ । सव्वाणुभूई ५ अरहा, देवगुत्ते ६ य होक्खइ ॥ १ ॥ उदए पेढालपुत्ते ८ य, पोट्टिले ९ सयए १० इय । मुणिसुव्वए ११ य अरहा, सव्वभावविऊ १२ जिणे ॥ २ ॥ अममे १३ निक्कसाए १४ य, निप्पुलाए १५ य निम्ममे १६ । चित्तगुत्ते १७ समाही १८ य, आगमस्सेण होक्खइ ॥ ३ ॥ संवरे १९ अनियट्टी २० य, विवाए २१ विमले २२ य । देवोववाए २३ अरिहा, अणंतविजए २४ इय ॥ ४ ॥ 'आगमस्सेण होक्खइ'त्ति आगमिष्यता कालेन भविष्यतीत्यर्थः, एवमग्रेऽपि नामविषये यत्र क्वचित्समवायांगादिभिर्विसंवादो दृश्यते तत्र मतान्तरमवसेयमिति २८७—२९५ ॥ ऐरवतवार्तमानिकजिनेन्द्रान्नामत आह—

**बालचंदं १ सिरिसिचयं २ अग्गिसेणं ३ च नंदिसेणं ४ च । सिरिदत्तं ५ च वयधरं ६ सोमचंद ७ जिणदीहसेणं च ८ ॥ २९६ ॥ वंदे सयाउ ९ सच्चइ १० जुत्तिस्सेणं ११ जिणं च सेयंसं १२ । सीहसेणं १३ सयंजल १४ उवसंतं १५ देवसेणं १६ च ॥ २९७ ॥ महविरिय १७ पास १८ मरुदेव १९ सिरिहरं २० सामिकुट्ठ २१ मभिवंदे । अग्गिसेणं २२ जिणमग्गदत्तं २३ सिरिवारिसेणं २४**

च ॥ २९८ ॥ इय संपइजिणनाहा एरवए कित्तिया सणामेहिं । अहुणा भाविजिणिंदे नियणामेहिं पकित्तेमि ॥ २९९ ॥ सिद्धत्थं १ पुन्नघोसं २ जमघोसं ३ सायरं ४ सुमंगलयं ५ । सव्वट्ठसिद्ध ६ निव्वाणसामिं ७ वंदामि धम्मधयं ८ ॥ ३०० ॥ तह सिद्धसेण ९ महसेण नाह १० रविमित्त ११ सव्वसेणजिणे १२ । सिरिचंदं १३ दढकेउं १४ महिंदयं १५ दीहपासं १६ च ॥ ३०१ ॥ सुव्वय १७ सुपासनाहं १८ सुकोसलं १९ जिणवरं अणंतत्थं २० । विमलं २१ उत्तर २२ महरिद्धि २३ देवयाणंदयं २४ वंदे ॥ ३०२ ॥ निच्छीण्णभवसमुद्दे वीसाहियसयजिणे सुहसमिद्धे । सिरिचंदमुणिवइनए सासयसुहदायए नमह ॥ ३०३ ॥

'वाले'त्यादि गाथाचतुष्कं, वालचन्द्रं श्रीसिचयं अग्निपेणं च नन्दिपेणं च श्रीदत्तं च व्रतधरं सोमचन्द्रं जिनदीर्घसेनं चेति प्रथमगाथायामष्टौ वन्दे इति क्रिया, शतायुषं सत्यकिं च युक्तिसेनं जिनं च श्रेयांसं सिंहसेनं स्वयंजलं उपशान्तं देवसेनं चेति द्वितीयगाथायामष्टौ, महावीर्यं पार्श्वं मरुदेवं श्रीधरं स्वामिकोष्ठममिवन्दे इति क्रिया, अग्निसेनं जिनमग्रदत्तं मार्गदत्तं वा श्रीवारिपेणं चेति तृतीयगाथायामष्टौ, इत्येवमैरवते साम्प्रतिकजिननाथाः कीर्तिताः स्वनामभिः अधुना भाविनो जिनेन्द्रानैरवते निजनामभिः प्रकीर्तयामि ॥ तान्येवाह— 'सिद्धत्थे'त्यादि गाथात्रयं, सिद्धार्थं पुण्यघोषं पूर्णघोषं वा यमघोषं सागरं सुमङ्गलं सर्वार्थसिद्धं निर्वाणस्वामिनं वन्दे धर्मध्वजमिति प्रथमगाथायामष्टौ जिनाः, तथा सिद्धसेनं महासेननाथं रविमित्रं सत्यसेनजिनं श्रीचन्द्रं दृढकेतुं महेन्द्रं दीर्घपार्श्वं च इति द्वितीयगाथायामष्टौ जिनाः सुव्रतं सुपार्श्वनाथं सुकोशलं जिनवरमनन्तार्थं विमलं उत्तरं महर्द्धिं देवतानन्दकं वन्दे इति तृतीयगाथायां जिनाष्टकं ॥ अथ

पूर्वोक्तानां तीर्थकृतां सर्वसङ्ख्यामाह—निस्तीर्णभवसमुद्रान् विंशत्यधिकशतसङ्ख्यजिनान् सुखसमृद्धान् श्रीचन्द्रमुनिपतिनतान् शाश्वतसु-
खदायकान्नमत भव्यलोका यूयमिति, अत्र च चतुर्विंशतिः पञ्चभिर्गुणिता विंशत्युत्तरं शतं भवतीति २९६–३०३ ॥ इदानीं 'उसभाइ-
जिणिंदाणं आइमगणहर'त्यष्टमं द्वारं विवरीतुमाह—

**सिरिउसभसेण १ पहु सीहसेण २ चारु ३ वज्जनाहक्खा ४। चमरो ५ पज्जोय ६ वियब्भ ७ दि-**
**ण्णपहवो ८ वराहो ९ य ॥ ३०४ ॥ पहुनंद १० कोत्थुहावि ११ य सुभोम १२ मंदर १३ जसा**
**१४ अरिट्ठो १५ य। चक्काउह १६ संबा १७ कुंभ १८ भिसय १९ मल्ली २० य सुंभो २१ य**
**॥ ३०५ ॥ वरदत्त २२ अज्जदिन्ना २३ तहिंदभूई २४ गणहरा पढमा । सिस्सा रिसहाईणं हरंतु**
**पावाइं पणयाणं ॥ ३०६ ॥**

'सिरी'त्यादि गाथात्रयं, श्रीऋषभसेनप्रभुसिंहसेनचारुवज्रनाभाख्याः चमरः प्रद्योतविदर्भदत्तप्रभवः वराहश्च प्रभुनन्दकौस्तुभावपि
सुभौममन्दरयशसः अरिष्ठश्च चक्रायुधशम्बौ कुम्भः भिषजो मल्लिश्च सुम्भश्च वरदत्त आर्यदत्तः तथा इन्द्रभूतिश्च, एते प्रथमगणधराः
शिष्या वृषभादीनां जिनानां हरन्तु दुरितानि प्रणतानाम् ३०४–३०६ ॥ इदानीं 'पवित्तिणि'त्ति नवमं द्वारमाह—

**बंभी १ फग्गु २ सामा ३ अजिया ४ तह कासवी ५ रई ६ सोमा ७। सुमणा ८ वारुणि ९ सु-**
**जसा १० धारिणी ११ धरिणी १२ धरा १३ पउमा १४ ॥ ३०७ ॥ अज्जा सिवा १५ सुहा १६**
**दामणी १७ य रक्खी १८ य बंधुमइनामा १९। पुप्फवई २० अनिला २१ जक्खदिन्न २२ तह**

पुप्फचूला २३ य ॥ ३०८ ॥ चंदण २४ सहिआ उ पवत्तिणीओं चउवीसजिणवरिंदाणं । दुरियाइं हरंतु सया सत्ताणं भत्तिजुत्ताणं ॥ ३०९ ॥

'वंभी'त्यादि गाथात्रयं, तत्र ब्राह्मी फल्गुः श्यामा अजिता तथा काश्यपी रतिः सोमा सुमना वारुणी सुयशा धारिणी धरिणी धरा पद्मा इति प्रथमगाथायां चतुर्दश प्रवर्तिनीनामानि । आर्या शिवा शुभा दामिनी च रक्षी च बन्धुमतीनामा पुष्पवती अनिला यक्षदत्ता तथा पुष्पचूला, चः समुच्चये सर्वत्र चन्दनासहिता तु एताः प्रवर्तिन्यश्चतुर्विंशतेर्जिनेन्द्राणां दुरितानि हरन्तु सदा सत्त्वानां भक्तियुक्तानां ३०७–३०९ ॥ इदानीं 'अरिहंतज्जणठाण'त्ति दशमं द्वारं विवरीतुमाह—

अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थेर ५ बहुस्सुए ६ तवस्सी ७ य । वच्छलया य एसिं अभिक्खनाणोवओगो ८ य ॥ ३१० ॥ दंसण ९ विणए १० आवस्सए य ११ सीलव्वए १२-१३ निरइयारो । खणलव १४ तव १५ चियाए १६ वेयावच्चे समाही १७ य ॥ ३११ ॥ अप्पुव्वनाणगहणे १८ सुयभत्ती १९ पवयणे पभावणया २० । एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥३१२॥

'अरिहंते'त्यादि गाथादशकं, अत्र प्रथमगाथायां अष्टौ कारणान्युक्तानि, द्वितीयगाथायां नव तृतीयगाथायां त्रीणि, तत्र प्रथमगाथाव्याख्या—अशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्तीत्यर्हन्तः—तीर्थकराः १ अपगतसकलकर्मांशाः परमसुखिन एकान्तकृतकृत्याः सिद्धाः २ प्रवचनं—द्वादशाङ्गं तदुपयोगानन्यत्वात्सङ्घो वा प्रवचनं ३ गृणन्ति यथावस्थितं शास्त्रार्थमिति गुरवो—धर्मोपदेशादिदातारः ४ स्थविरा जातिश्रुतपर्यायभेदभिन्नाः, तत्र जातिस्थविराः षष्टिवर्षप्रमाणाः श्रुतस्थविराः समवायाङ्गधारिणः पर्यायस्थविरा विंशतिवर्षव्रतपर्यायाः ५ बहु

—प्रभूतं श्रुतं येषां ते बहुश्रुताः, तच्च बहुश्रुतत्वमापेक्षिकं प्रतिपत्तव्यं, श्रुतं च त्रिधा—सूत्रतोऽर्थत उभयतश्च, तत्र सूत्रधरेभ्योऽर्थधराः प्रधानाः तेभ्योऽप्युभयधराः प्रधाना इति ६ विचित्रमनशनादिभेदभिन्नं तपो विद्यते येषां ते तपस्विनः—सामान्यसाधवः ७ अर्हन्तश्च सिद्धाश्च प्रवचनं च गुरवश्च स्थविराश्च बहुश्रुताश्च तपस्विनश्च अर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विनः, सूत्रे च 'बहुस्सुए' इत्यत्र एकारः प्राकृतत्वादलाक्षणिकः, तेषु, 'एसिं'ति प्राकृतत्वात्सप्तम्यर्थे षष्ठी, तत एतेषु सप्तसु स्थानेषु वत्सलभावो वत्सलता—अनुरागः यथावस्थितगुणोत्कीर्तनं तदनुरूपोपचारलक्षणा तीर्थकरनामकर्मबन्धकारणमिति शेषः, तथा अभीक्ष्णं—अनवरतं ज्ञानोपयोगो—ज्ञाने व्याप्रियमाणता, इदमष्टमं कारणं ८। अथ द्वितीयगाथाव्याख्या—दर्शनं—सम्यक्त्वं विनयो—ज्ञानादिविनयः, स च प्रागेवोक्तो वक्ष्यमाणो वा, दर्शनं च विनयश्च दर्शनविनयं समाहारद्वन्द्वः तस्मिन् ९-१० आवश्यकं—अवश्यकर्तव्यं प्रतिक्रमणादि तस्मिन् ११ शीलानि च व्रतानि च शीलव्रतं, अत्रापि समाहारद्वन्द्वः तस्मिन्, तत्र शीलानि—उत्तरगुणाः व्रतानि—मूलगुणाः तेषु निरतीचारः सन् तीर्थकरनामकर्म बध्नातीति क्रियायोगः, १२-१३ एतावता पञ्च कारणान्युक्तानि, तथा क्षणलवे तपसि त्यागे वैयावृत्त्ये च समाधिस्तीर्थकरनामकर्मबन्धकारणं, तत्र क्षणलवग्रहणमशेषकालविशेषोपलक्षणं, क्षणलवादिषु कालविशेषेषु निरन्तरं संवेगभावनातो ध्यानासेवनतश्च समाधिः क्षणलवसमाधिः १४ तथा तपसि—बाह्याभ्यन्तरभेदभिन्ने यथाशक्ति निरन्तरं प्रवृत्तिस्तपःसमाधिः १५ त्यागो द्विधा—द्रव्यत्यागो भावत्यागश्च, द्रव्यत्यागो नाम आहारोपधिशय्यादीनामप्रायोग्याणां परित्यागः प्रायोग्याणां च यतिजनेभ्यो दानं, भावत्यागः क्रोधादीनां विवेको ज्ञानादीनां च यतिजनेभ्यो वितरणं, एतस्मिन् द्विविधेऽपि त्यागे सूत्रानतिक्रमेण यथाशक्ति निरन्तरं प्रवृत्तिस्त्यागसमाधिः १६ वैयावृत्त्यं दशविधं, तद्यथा—आचार्यवैयावृत्त्यं १ उपाध्याय वैयावृत्त्यं २ स्थविरवैयावृत्त्यं ३ तपस्विवैयावृत्त्यं ४ ग्लानवैयावृत्त्यं ५ शैक्षकवैयावृत्त्यं ६ साधर्मिकवैयावृत्त्यं ७ कुलवैयावृत्त्यं ८ गण-

सति सदेवमनुजासुरायां परिषदि ग्लानिपरिहारेण धर्मदेशनया—श्रुतचारित्ररूपधर्मप्ररूपणलक्षणया चतुस्त्रिंशता देहसौगन्ध्यादिभिरतिशयैः पञ्चत्रिंशता बुद्धवचनातिशेषैश्च तद्वेद्यत इति ३१३–३१९ ॥ अथ 'जिणजणणीजणयनाम'त्त्येकादशं द्वारमाह—

**मरुदेवी १ विजय २ सेणा ३ सिद्धत्था ४ मंगला ५ सुसीमा ६ य । पुहवी ७ लक्खण ८ रामा ९ नंदा १० विण्हू ११ जया १२ सामा १३ ॥ ३२० ॥ सुजसा १४ सुव्वय १५ अइरा १६ सिरी १७ देवी १८ पभावई य १९ । पउमावई १२० वप्पा २१ सिव २२ वम्मा २३ तिसला २४ इय ॥ ३२१ ॥ नाभी १ जियसत्तू या २, जियारि ३ संवरे ४ इय । मेहे ५ धरे ६ पइट्ठे ७ य, महसेणे य खत्तिए ८ ॥ ३२२ ॥ सुग्गीवे ९ दढरहे १० विण्हू ११, वसुपुज्जे १२ य खत्तिए । कयवम्मा १३ सीहसेणे १४ य, भाणू १५ विससेणे इय १६ ॥ ३२३ ॥ सूरे १७ सुदंसणे १८ कुंभे १९, सुमित्त २० विजए २१ समुद्दविजए २२ य । राया य अस्ससेणे २३ सिद्धत्थे २४ ऽविय खत्तिए ॥ ३२४ ॥**

'मरुदेवी'त्यादिगाथापञ्चकं, भगवत ऋषभस्वामिनो माता मरुदेवी, अजितस्वामिनो विजया, सम्भवनाथस्य सेना, अभिनन्दनस्य सिद्धार्था, सुमतिनाथस्य मङ्गला, पद्मप्रभस्य सुसीमा, सुपार्श्वस्य पृथिवी, चन्द्रप्रभस्य लक्षणा, सुविधिस्वामिनो रामा, शीतलस्य नन्दा, श्रेयांसस्य विष्णुः, वासुपूज्यस्य जया, विमलस्य श्यामा, अनन्तजिनस्य सुयशाः, धर्मनाथस्य सुव्रता, शान्तिनाथस्य अचिरा, कुन्थुनाथस्य श्रीः, अरस्वामिनो देवी, मल्लिजिनस्य प्रभावती, मुनिसुव्रतस्य पद्मावती, नमिनाथस्य वप्रा, अरिष्टनेमेः शिवा, पार्श्वनाथस्य वामा,

वर्धमानस्वामिनस्त्रिशला ॥ तथा आदितीर्थंकृत ऋषभस्वामिनः पिता नामिः, अजितजिनस्य जितशत्रुः, सम्भवस्वामिनो जितारिः, अभिनन्दनस्य संवरः, सुमतिनाथस्य मेघः, पद्मप्रभस्य धरः, सुपार्श्वस्य प्रतिष्ठः, चन्द्रप्रभस्य महासेनः क्षत्रियो राजा, सुविधिस्वामिनः सुग्रीवः, शीतलस्य दृढरथः, श्रेयांसस्य विष्णुः, वासुपूज्यस्य वसुपूज्यः क्षत्रियः, विमलस्य कृतवर्मा, अनन्तजिनस्य सिंहसेनः, धर्मनाथस्य भानुः, शांतिनाथस्य विश्वसेनः, कुन्थुनाथस्य शूरः, अरस्वामिनः सुदर्शनः, मल्लिजिनस्य कुम्भः, मुनिसुव्रतस्य सुमित्रः, नमिनाथस्य विजयः, अरिष्ठनेमेः समुद्रविजयः, पार्श्वनाथस्य राजा अश्वसेनः, वर्धवानस्वामिनश्च सिद्धार्थः क्षत्रिय इति ॥ इदानीं 'जिणजणणीजणयगइ'त्ति द्वादशं द्वारमाह—

**अट्ठण्हं जणणीओ तित्थयराणं तु हुंति सिद्धाओ । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोद्धव्वा ॥ ३२५ ॥ नागेसुं उसहपिया सेसाणं सत्त हुंति ईसाणे । अट्ठ य सणंकुमारे माहिंदे अट्ठ बोद्धव्वा ॥ ३२६ ॥**

'अट्ठण्ह'मित्यादि गाथाद्वयं, अष्टानां तीर्थकृतामृषभादीनां चन्द्रप्रभान्तानां जनन्यो—मातरो भवन्ति सिद्धाः, तदनु सुविध्यादीनां शान्तिनाथपर्यन्तानामष्टौ जनन्यः सनत्कुमारे—तृतीयदेवलोके गताः, तथा कुन्थुप्रभृतीनां श्रीमहावीरान्तानामष्टौ जनन्यो माहेन्द्रे—चतुर्थदेवलोके गता बोद्धव्या इति ॥ तथा नागेषु—नागकुमारेषु भवनपतिद्वितीयनिकायवर्तिषु सुरेषु श्रीऋषभनाथपिता—नाभिनामा गत इति शेषः, तथा शेषाणामजितनाथप्रभृतीनां चन्द्रप्रभान्तानां सप्त पितरो भवन्ति गता ईशाने—द्वितीयदेवलोके, सैद्धान्तिकास्तु श्रीअजितस्वामिपितुर्जितशत्रोर्मुक्तिगमनमाचक्षते, अनुयोगद्वारादौ तथैव भणनात्, श्रीहेमसूरिः—"राजा बाहुबलिः सूर्ययशाः सोमयशा

अपि । अन्येऽप्यनेकशः केऽपि, शिवं केऽपि दिवं ययुः ॥ १ ॥ जितशत्रुः शिवं प्राप, सुमित्रस्त्रिदिवं गतः" । इति योगशास्त्रे त्रिषष्टिचरितेऽपि च, तथा सुविधिप्रभृतीनां शान्तिनाथान्तानामष्टौ च पितरः सनत्कुमारे—तृतीयदेवलोके, तथा कुन्थुप्रमुखाणां श्रीमहावीरान्तानामष्टौ पितरो माहेन्द्रे—चतुर्थदेवलोके गता वोद्धव्याः । इदानीं 'उक्किट्ठजहन्नेहिं संखा विहरंत तित्थनाहाणं ।' इति त्रयोदशं द्वारं गाथापूर्वार्धेन तथा 'जम्मसमएवि संखा उक्किट्ठजहन्निया तेसिं ।' इति चतुर्दशं च द्वारं गाथोत्तरार्धेन विवृणोति—

**सत्तरिसयमुक्कोसं जहन्न वीसा य दस य विहरंति । जम्मं पइ उक्कोसं वीसं दस हुंति उ जहन्ना ॥ ३२७ ॥**

'**सत्तरी**'त्यादि, सप्तत्यधिकं शतमुत्कृष्टत एककालं तीर्थकृतां समयक्षेत्रे विहरति, पञ्चसु भरतेष्वेकैकस्य भावादैरवतेष्वपि पञ्चसु तावतां भावात्, पञ्चसु च महाविदेहेषु प्रत्येकं द्वात्रिंशता विजयैः कलितेषु तीर्थकृतां षष्ट्यधिकशतस्य सद्भावादेतत्सङ्ख्यायाः सम्भव इति । तथा जघन्यतो विंशतिस्तीर्थकृत एककालं विहरमाणाः प्राप्यन्ते, तथाहि—जम्बूद्वीपस्य पूर्वविदेहे शीतामहानद्या द्विभागीकृते दक्षिणोत्तरदिग्विभागेनैकैकस्य सद्भावात् द्वौ, अपरविदेहेऽपि शीतोदया महानद्या द्विभागीकृते तथैव द्वौ जिनेन्द्रौ, मिलिताश्चत्वारः, एवमपरद्वीपद्वयसम्बन्धिमहाविदेहचतुष्टयेऽपि चत्वारश्चत्वार इति पञ्च चतुष्का विंशतिः, भरतैरावतयोस्तु एकान्तसुषमादावभाव एव, अन्ये तु सूरयो दशैव जघन्यतो विहरन्तीति मन्यन्ते, पञ्चानां महाविदेहानां पूर्वापरविदेहयोः प्रत्येकमेकैकस्य विहरतः सद्भावेन दशानामेव तीर्थकृतां प्राप्यमाणत्वात्, तथा जन्म प्रति—जन्माश्रित्योत्कृष्टत एककालं विहरमाणजिन(ना)विंशतिस्तीर्थकृतो भवन्ति, यतः सर्वेषामपि तीर्थकृतामर्धरात्रसमय एव जन्म, ततो महाविदेहेषु तीर्थकृज्जन्मसमये भरतैरावतक्षेत्रेषु दिवससद्भावेन तीर्थकृदुत्पत्त्यभावादेतावन्त एव प्राप्यन्ते, ननु

महाविदेहक्षेत्रवर्त्तिषु विजयेषु चतुर्भ्योऽधिकानामपि तीर्थकृतामुत्पत्तेः सम्भवात् कथमुत्कृष्टपदे विंशतिरेवेति ?, उच्यते, इह हि मेरौ पण्डकवने चूलिकायाश्चतसृषु पूर्वादिषु दिक्षु प्रत्येकं चतुर्योजनप्रमाणबाहल्याः पञ्चयोजनशतप्रमाणायामा मध्यभागेऽर्धतृतीययोजनशतप्रमाणविष्कम्भा अर्धचन्द्रसंस्थानसंस्थिताः सर्वश्वेतसुवर्णमय्यश्चतस्रोऽभिषेकशिलाः, तत्र चूलिकायाः पूर्वदिग्भाविन्यां पाण्डुकम्बलशिलायां द्वे तीर्थकराभिषेकसिंहासने, तद्यथा—एकमुत्तरत एकं दक्षिणतः, तत्र ये शीताया महानद्या उत्तरतः कच्छादिषु विजयेषु तीर्थकरा उपजायन्ते ते उत्तराहे सिंहासने सुरेन्द्रैरभिषिच्यन्ते, ये पुनः शीताया महानद्या दक्षिणतो मङ्गलावतीप्रमुखेषु विजयेषु उत्पद्यन्ते ते दाक्षिणात्ये सिंहासने सुरेन्द्रैरभिषिच्यन्ते, तथा चूलिकायाः पश्चिमदिग्भाविन्यां रक्तकम्बलशिलायां द्वे सिंहासने, तद्यथा—एकमुत्तरतः एकं दक्षिणतः, तत्र शीतोदाया महानद्या उत्तरतो गन्धिलावतीप्रमुखेषु विजयेषु ये तीर्थकरा उत्पद्यन्ते ते उत्तराहे सिंहासने सुरेन्द्रैरभिषिच्यन्ते, ये पुनः शीतोदाया महानद्या दक्षिणतः पद्मादिषु विजयेषु तीर्थङ्करा उत्पद्यन्ते ते दाक्षिणात्ये सिंहासने सुरेन्द्रैरभिषिच्यन्ते, तथा चूलिकाया दक्षिणदिग्भाविन्यामतिपाण्डुकम्बलशिलायां ये भरतक्षेत्रसमुद्भवास्तीर्थकरास्तेऽभिषिच्यन्ते, उत्तरदिग्भाविन्यां त्वतिरक्तकम्बलशिलायामैरवतक्षेत्रसमुद्भवास्तीर्थकरास्तेऽभिषिच्यन्ते, सिंहासनानि च सर्वरत्नमयानि सर्वाण्यपि प्रत्येकं पञ्चधनुःशतायामविष्कम्भान्यर्धतृतीयधनुःशतबाहल्यानीति, ततः समधिकाभिषेकसिंहासनाभावादेव विदेहेषु चतुर्भ्योऽधिकानां तीर्थकृतामेककालमुत्पत्त्यभाव इति, जघन्यतः पुनर्दशैव एककालमुत्पद्यन्ते, पञ्चसु भरतेषु पञ्चसु चैरवतेषु प्रत्येकमेकैकस्य सद्भावात्, भरतैरवतेषु हि जिनजन्मसमये महाविदेहेषु दिनसद्भावान्नाधिकानामुत्पत्तिरिति १४ ॥ इदानीं 'जिणगणहर'त्ति पञ्चदशमं द्वारमाह—

**चुलसीइ १ पंचनवई २ बिउत्तरं ३ सोलसोत्तरं ४ च सयं ५ । सत्तुत्तर ६ पणनउई ७ तेणउई**

८ अट्ठसीई य ९ ॥ ३२८ ॥ एकासीई १० छावत्तरी ११ य छावट्ठि १२ सत्तावन्ना १३ य । पन्ना १४ तेयालीसा १५ छत्तीसा १६ चेव पणतीसा १७ ॥ ३२९ ॥ तेत्तीस १८ अट्ठवीसा १९ अट्ठारस २० चेव तह य सत्तरस २१ । एक्कारस २२ दस २३ एक्कारसेव २४ इय गणहरपमाणं ॥३३०॥

'चुलसी इत्यादि गाथात्रयं, भगवत आदितीर्थकरस्य चतुरशीतिर्गणधराः, अजितस्वामिनः पञ्चनवतिः, शम्भवनाथस्य द्व्युत्तरं शतं, अभिनन्दनस्य षोडशोत्तरं शतं, सुमतिनाथस्य परिपूर्णं शतं, पद्मप्रभस्य सप्ताधिकं शतं, सुपार्श्वस्य पञ्चनवतिः, चन्द्रप्रभस्य त्रिनवतिः, सुविधिस्वामिनोऽष्टाशीतिः, शीतलनाथस्य एकाशीतिः, श्रेयांसस्य षट्सप्ततिः, वासुपूज्यस्य षट्षष्टिः, विमलस्य सप्तपञ्चाशत्, अनन्तजितः पञ्चाशत्, धर्मस्य त्रिचत्वारिंशत्, शान्तिनाथस्य षट्त्रिंशत्, कुन्थुनाथस्य पञ्चत्रिंशत्, अरजिनस्य त्रयस्त्रिंशत्, मल्लिस्वामिनोऽष्टाविंशतिः, मुनिसुव्रतस्याष्टादश, नमिनाथस्य सप्तदश, अरिष्टनेमेरेकादश नेमिनाथस्याष्टादशेति केचिन्मन्यन्ते, पार्श्वनाथस्य दश, वर्धमानस्वामिनश्चैकादशैवेति, एतत् ऋषभादीनां चतुर्विंशतेस्तीर्थकृतां यथाक्रमं गणधराणां—मूलसूत्रकर्तॄणां प्रमाणं १५ ॥ इदानीं 'मुणि'त्ति षोडशं द्वारमाह—

चुलसीइ सहस्सा १ एगलक्ख २ दो ३ तिन्नि ४ तिन्नि लक्खा य । वीसहिया ५ तीसहिया ६ तिन्नि य ७ अड्ढाइय ८ दु ९ एक्कं १० ॥ ३३१ ॥ चउरासीइ सहस्सा ११ बिसत्तरी १२ अट्ठसट्ठि १३ छावट्ठी १४ । चउसट्ठी १५ बासट्ठी १६ सट्ठी १७ पन्नास १८ चालीसा १९ ॥ ३३२ ॥ तीसा २० वीसा २१ अट्ठारसेव २२ सोलस २३ य चउद्दस सहस्सा २४ । एयं साहुपमाणं चउवीसाए

**जिणवराणं ॥ ३३३ ॥ अट्ठावीसं लक्खा अडयालीसं तह सहस्साइं । सव्वेसिंपि जिणाणं जईण माणं विणिद्दिट्ठं ॥ ३३४ ॥**

'चुलसीई'त्यादि गाथात्रयं, चतुरशीतिसहस्रा मुनीनामाद्यजिनस्य १, एकं लक्षं मुनीनामजितजिनस्य २, एवं मुनितीर्थकृतोः सर्वत्र सम्बन्धः करणीयः, द्वे लक्षे ३, तिस्रो लक्षाः ४, तिस्रो लक्षा विंशत्यधिकाः ५, तिस्रो लक्षास्त्रिंशदधिकाः ६, तिस्रो लक्षाः ७, द्वे सार्धे लक्षे ८, द्वे लक्षे ९, एकं लक्षं १०, चतुरशीतिसहस्राः ११, द्विसप्ततिसहस्राः १२, अष्टषष्टिसहस्राः १३, षट्षष्टिसहस्राः १४, चतुःषष्टिसहस्राः १५, द्विषष्टिसहस्राः १६, षष्टिसहस्राः १७, पञ्चाशत्सहस्राः १८, चत्वारिंशत्सहस्राः १९, त्रिंशत्सहस्राः २०, विंशतिसहस्राः २१, अष्टादशसहस्राः २२, षोडशसहस्राः २३, चतुर्दशसहस्राः २४, एतत्साधुप्रमाणं क्रमेण चतुर्विंशतेर्जिनवराणां ॥ एतेषां सर्वसङ्ख्यामीलने यद्भवति तदाह—'अट्ठावीस'मित्यादि, अष्टाविंशतिर्लक्षाणि अष्टचत्वारिंशच्च तथा सहस्राणि सर्वेषामपि जिनानां सम्बन्धिनां यतीनां मानं—परिमाणं विनिर्दिष्टं—विनिश्चितं, एतच्च ये श्रीजिनेन्द्रैर्निजकरकमलेन दीक्षितास्तेषामेवैकत्र पिण्डितानां परिमाणं, न पुनर्गणधरादिभिरपि ये दीक्षितास्तेषामतिबहुत्वादिति १६ ॥ इदानीं 'समणी'त्ति सप्तदशं द्वारमाह—

**तिन्नि य १ तिन्नि य २ तिन्नि य ३ छ ४ पंच ५ चउरो ६ चउ ७ तिगे ८ क्के ९ क्का १० । लक्खा उसहं मोत्तुं तदुवरि सहस्साणिमा संखा ॥ ३३५ ॥ तीसा २ छत्तीसा ३ तीस ४ तीस ५ वीसा ६ य तीस ७ असीई ८ य । वीसा ९ दसमजिणिंदे लक्खोवरि अज्जिया छक्कं ॥ ३३६ ॥ लक्खो तिन्नि सहस्सा ११ लक्खो १२ लक्खो य अट्ठसयअहिओ १३ । बासट्ठी १४ पुण बासट्ठी १५**

सहसा अहिया चउसएहिं ॥३३७॥ छसयाहिय इगसट्ठी १६ सट्ठी छसयाइं १७ सट्ठी १८ पणपन्ना
१९। पन्ने २० गचत्त २१ चत्ता २२ अडतिस २३ छत्तीस सहसा य २४ ॥ ३३८ ॥ चोयालीसं
लक्खा छायालसहस्स चउसयसमग्गा। अज्जाछक्कं एसो अज्जाणं संगहो सव्वो ॥ ३३९ ॥

'तिन्नि'इत्यादि गाथापञ्चकं, त्रीणि १ त्रीणि २ त्रीणि ३ षट् ४ पञ्च ५ चत्वारि ६ चत्वारि ७ त्रीणि ८ एकं ९ एकं १० लक्षाण्येतानि, तत्र ऋषभजिनस्य त्रीण्येवार्यिकालक्षाणि, ततो वृषभं-आदिजिनं मुक्त्वा तदुपरि-पूर्वोदिष्टलक्षाणामुपरि क्रमेण यावन्तः सहस्राश्चटन्ति तावत आह—'तीसे'त्यादि, त्रिंशत् सहस्रा इति सर्वत्र योज्यम् २, षट्त्रिंशत् ३ त्रिंशत् ४ त्रिंशत् ५ विंशतिः ६ त्रिंशत् ७ अशीतिश्च ८ विंशतिः ९ दशमजिनेन्द्रस्य-शीतलस्य एकलक्षोपरि आर्यिकाषट्कमिति, अयं भावार्थः-श्रीऋषभदेवस्य आर्यिकालक्षत्रयं जातं, अजितजिनस्यार्यिकालक्षत्रयं त्रिंशत्सहस्रैरधिकं, सम्भवजिनस्यार्यिकालक्षत्रयं षट्त्रिंशत्सहस्रैरधिकं, अभिनन्दनस्य साध्वीलक्षषट्कं त्रिंशत्सहस्रैरधिकं, सुमतिजिनस्यार्यिकालक्षपञ्चकं त्रिंशत्सहस्रैरधिकं, पद्मप्रभस्यार्यिकालक्षचतुष्टयं विंशतिसहस्रैरधिकं, सुपार्श्वजिनस्यार्यिकालक्षचतुष्टयं त्रिंशत्सहस्रैरधिकं, चन्द्रप्रभजिनस्य साध्वीलक्षत्रयं अशीतिसहस्रैरधिकं, सुविधिजिनस्यार्यिकालक्षमेकं विंशतिसहस्रैरधिकं, दशमजिनस्य श्रीशीतलस्य आर्यिकाणामेकं लक्षमार्यिकाषट्कं चेति, इदानीं श्रेयांसादिजिनसाध्वीमानमाह-श्रेयांसजिनस्य साध्वीनामेकं लक्षं सहस्रत्रयाधिकं, श्रीवासुपूज्यस्य साध्वीनामेकं लक्षं, श्रीविमलजिनस्यार्यिकालक्षं शताष्टाधिकं, श्रीअनन्तजिनस्य द्विषष्टिसहस्राण्यार्यिकाणां, श्रीधर्मजिनस्य पुनरार्यिकाणां द्विषष्टिसहस्राणि चतुर्भिः शतैरधिकानि, श्रीशान्तिजिनस्यार्यिकाणामेकषष्टिसहस्राणि षड्भिः शतैरधिकानि, श्रीकुन्थुनाथस्यार्यिकाणां षष्टिसहस्राणि षड्भिः शतैरधिकानि, श्रीअरनाथस्यार्यिकाणां षष्टिसहस्राणि, श्रीमल्लिजिन-

स्यार्यिकाणां पञ्चपञ्चाशत्सहस्राणि, श्रीमुनिसुव्रतस्यार्यिकाणां पञ्चाशत्सहस्राणि, श्रीनमेरार्यिकाणां एकचत्वारिंशत्सहस्राणि, श्रीनेमेरार्यिकाणां चत्वारिंशत्सहस्राणि, श्रीपार्श्वजिनस्यार्यिकाणामष्टात्रिंशत्सहस्राणि, श्रीमहावीरजिनस्यार्यिकाणां षट्त्रिंशत्सहस्राणि, चः समुच्चये, प्रागुक्तार्यिकाणां सर्वसङ्ख्यामीलने यद्भवति तदाह—चतुश्चत्वारिंशल्लक्षाः षट्चत्वारिंशत्सहस्रैश्चतुःशताधिकैः समग्राः—पूर्णा आर्याषट्कं च, एष आर्यिकाणां सङ्ग्रहः सर्व इति १७ ॥ 'वेउव्विय'त्ति अष्टादशं द्वारमाह—

**वेउव्वियलद्धीणं वीससहस्सा सयच्छगब्भहिया १ । वीससहस्सा चउसय २ इगुणीससहस्स अट्ठसया ३ ॥ ३४० ॥ अगुणीससहस्स ४ अट्ठार चउसया ५ सोलसहस्स अट्ठसयं ६ । सत्तिसय पनरस ७ चउद्स ८ तेरस ९ बारस सहस दसमे १० ॥ ३४१ ॥ एक्कारस ११ दस १२ नव १३ अट्ठ १४ सत्त १५ छसहस १६ एगवन्नसया १७ । सत्तसहस्स सतिसया १८ दोन्नि सहस्सा नव सयाइं १९ ॥ ३४२ ॥ दुन्नि सहस्सा २० पंचसय सहस्स २१ पन्नरससयाइं नेमिंमि २२ । एक्कारस सय पासे २३ सयाइं सत्तेव वीरजिणे २४ ॥ ३४३ ॥**

'वेउव्विये'त्यादि गाथाचतुष्कं, वैक्रियलब्धिमतां—नानाविधवैक्रियरूपकरणशक्तानां मुनीनामाद्यजिनेन्द्रस्य विंशतिः सहस्राणि षट्शताभ्यधिकानि, श्रीअजितजिनस्य विंशतिसहस्राः सचतुःशताः—शतचतुष्टयाधिकाः, श्रीसम्भवजिनस्य एकोनविंशतिसहस्राः शताष्टकाधिकाः, श्रीअभिनन्दनस्य एकोनविंशतिः सहस्राणि, श्रीसुमतिजिनस्य चतुःशताधिका अष्टादश सहस्राः, श्रीपद्मप्रभस्य षोडश सहस्राणि

गिलिए ॥ १ ॥" [आधाकर्मणो निमन्त्रणे प्रतिश्रूयमाणेऽतिक्रमो भवति । पदभेदादौ व्यतिक्रमो गृहीते तृतीय इतरो गिलिते ॥ १ ॥]
इतिगाथानुसारेण सर्वत्र ज्ञेयं, अत्र 'तइओ'त्ति अतीचारः 'इयरो'त्ति अनाचारः, अत्र च चैत्यसाधुवन्दनाद्यर्थं नियमितोर्ध्वादिदिक्प्र-
माणमतिक्रम्य सूक्ष्मेक्षिकया साधोरिव उपयुक्तस्य परतोऽपि गच्छतो न भङ्गः, तथा स्मृतेर्योजनशतादिरूपदिक्परिमाणविषयाया
अतिव्याकुलत्वप्रमादित्वबुद्ध्यपाटवादिना विस्मरणं, तथाहि—केनचित्पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीत् गमनकाले च
स्पष्टरूपतया न स्मरति—किं शतं परिमाणं कृतमुत पञ्चाशत्?, तस्यैवं पञ्चाशतमतिक्रमतोऽतीचारः सापेक्षत्वात् शतमतिक्रामतश्च
भङ्गो निरपेक्षत्वात्, ततः स्मरणीयमेव गृहीतं व्रतं, स्मृतिमूलं हि सर्वमनुष्ठानमिति चतुर्थोऽतीचारः ४, अयं तु सर्वव्रतेषु द्रष्टव्यः, तथा
क्षेत्रस्य—पूर्वादिदेशस्य दिग्व्रतविषयस्य ह्रस्वस्य सतो वृद्धिः—वर्धनं पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिरिति पञ्चमो-
ऽतीचारः, तथाहि—केनापि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं विदधे, स चोत्पन्नतथाविधप्रयोजन एकस्यां दिशि नवतिं
योजनानि व्यवस्थाप्यान्यस्यां दशोत्तरं योजनशतं करोति द्वाभ्यामपि प्रकाराभ्यां योजनशतद्वयरूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र
क्षेत्रं वर्धयतो व्रतसापेक्षत्वादतीचार इति, यदि चानाभोगात् क्षेत्रपरिमाणमतिक्रान्तो भवति तदा निवर्तितव्यं, ज्ञाते वा न गन्तव्यं,
अन्यो वा न विसर्जनीयः, अथाज्ञानतया गतो भवेत्तदा यत्तेन लब्धं स्वयं वा विस्मृतितो गतेन लब्धं तत्परिहर्तव्यं ५ ॥ २८० ॥ अथ
द्वितीयगुणव्रतातीचारानाह—'अपक्क'मित्यादि, इह हि श्रावकेण भोजनतः किल प्रायो निरवद्याहारेणैव भाव्यं, अतस्तदपेक्षया
यथासम्भवममी अतीचारा दश्याः, तत्र अपक्वं—अग्न्यादिना यदसंस्कृतं शालिगोधूमौषध्यादि तदनाभोगातिक्रमादिना भुञ्जानस्य प्रथमो-
ऽतीचारः?, नन्वपक्वौषधयो यदि सचेतनास्तदा सचित्तमितितृतीयपदेनैवोक्तार्थत्वादस्योपादानमसङ्गतं, अथाचेतनास्तदा कोऽतीचारो?,

द्ध्यात्कियत्यपि काले गते गर्भं ग्राहयतो गर्भस्थद्विपदादिभावेन बहिश्च तदभावेन कथञ्चिद् व्रतभङ्गाभङ्गरूपोऽतीचार इति चतुर्थः ४, तथा कुप्यस्य—रूप्यसुवर्णव्यतिरिक्तस्य कांस्यलोहताम्रत्रपुसीसकवंशविकारकटमञ्चिकामञ्चकमन्थानकतूलिकारथशकटहलमृद्भाण्डप्रभृतिकस्य गृहोपकरणकलापस्य सङ्ख्या—परिगणनं तामल्पधनां बहुधनां करोति, कोऽर्थः?—स्थालादीनां कथञ्चिदधिकत्वे प्रतिपन्ननियमस्य जाते सत्यल्पमूल्यं स्थालाद्यपरेणोत्कलितेन स्थालादिना मेलयित्वा बहुमूल्यं करोति यथा नियमो न भज्यत इति पर्यायान्तरकरणेन सङ्ख्यापूरणात्स्वाभाविकसङ्ख्याबाधनाच्च पञ्चमोऽतीचारः ५, एते पञ्चमव्रते दोषा—अतीचारा इति ॥ २७९ ॥ उक्ता अणुव्रतानां प्रत्येकं पञ्च पञ्चातीचाराः, अथ गुणव्रतातीचाराणामवसरः, तत्रापि प्रथमगुणव्रतस्य दिग्विरतिलक्षणस्यातीचारानाह—

तिरियं अहो य उड्ढं दिसिवयसंखाअइक्कमे तिन्नि । दिसिवयदोसा तह सइविम्हरणं खित्तवुड्ढी च ॥ २८० ॥ अप्पक्कं दुप्पक्कं सचित्तं तह सचित्तपडिबद्धं । तुच्छोसहिभक्खणयं दोसा उवभोगपरिभोगे ॥ २८१ ॥ कुक्कुइयं मोहरियं भोगुवभोगाइरेग कंदप्पा । जुत्ताहिगरणमेए अइयाराऽणत्थदंडवए ॥ २८२ ॥

'तिरिय'मित्यादि, तिर्यगधश्च चः समुच्चये भिन्नक्रमः ऊर्ध्वं चेत्येवं योज्यः, दिग्व्रतस्य सङ्ख्यातिक्रमे त्रयो दिग्व्रते दोषाः—अतीचाराः तथा स्मृतिविस्मरणं चतुर्थः, क्षेत्रवृद्धिश्च पञ्चमः, तत्र तिर्यक्पूर्वादिदिक्षु अधः—अधोग्रामभूमिगृहकूपादिषु ऊर्ध्वं—पर्वततरुशिखरादिषु योऽसौ नियमितः प्रदेशस्तस्य व्यतिक्रमः ३ एते त्रयोऽतीचाराः, एते चानाभोगातिक्रमव्यतिक्रमादिभिरेवातीचारा भवन्ति, अन्यथाप्रवृत्तौ तु भङ्ग एव, अतिक्रमादीनां च स्वरूपं—"आहाकम्मनिमंतण पडिसुणमाणे अइक्कमो होइ । पयभेयाइ वइक्कम गहिए तइएयरो

केनापि स्वकीयं क्षेत्रं तत्क्षेत्रप्रत्यासन्नमेव दीयते, ततोऽसौ स्वकीयनियमभङ्गभयेन तत्परदत्तं क्षेत्रं स्वकीयक्षेत्रेण सह योजयति यथैकमेव द्वाभ्यामपि ताभ्यां क्षेत्रं भवति एवं गृहादिकमपि परदत्तं वृत्तिभित्त्याद्यपनयनेन स्वकीयगृहादिनैकीकरोतीत्यतीचारः प्रथमः १, तथा रूप्यकनकादिसङ्ख्याव्रतकाले चतुर्मासादिकालावधिना यत्परिमाणं गृहीतं तावतोऽधिकं जातं व्यवहारादिना ततो यथा मे नियमभङ्गो न भवति न चेदमन्यत्र कुत्रापि याति नियमावधौ च समाप्ते अहमेव ग्रहीष्याम्येतदितिबुद्ध्या स्वजनेभ्यो ददत् व्रतसापेक्षत्वादतिचरति व्रतमिति द्वितीयः २, तथा धनधान्यादि परगृहे वध्नाति—स्वीकृत्य मुञ्चति यावन्निजनियमपर्यन्तः, तत्र धनं—गणिमधरिममेयपरीक्ष्य (परिच्छेद्य) लक्षणं, यदाहुः—"गणिमं जाईफलफोफलाइ धरिमं तु कुंकुमगुडाई । मेयं चोप्पडलोणाइ रयणवत्थाइ परिच्छेज्जं ॥ १ ॥" धान्यं सप्तदशविधं, यदाहुः—"व्रीहिर्यवो मसूरो गोधूमो मुद्गमापतिलचणकाः । अणवः प्रियङ्गुकोद्रवमकुष्टकाः शालिराढक्यः ॥ १ ॥ किञ्च कलायकुलत्थौ सणसप्तदशानि धान्यानि ॥" इति, धनं च धान्यं च धनधान्ये ते आदी यस्य तद्धनधान्यादि, तत्र कृतधनधान्यादिपरिमाणः कोऽपि पूर्वलभ्यमन्यद्वा धनादिकं कस्यापि पार्श्वाल्लभ्यमानमिदानीमेव यदि स्वगृह एवैतत्समानयामि तदा नियमभङ्गो मे भवति अग्रेतने तु विक्रीतादौ सति पूर्णे वा नियमावधौ स्वगृहे समानेष्यामीतिबुद्ध्या वचननियन्त्रणात्मकेन मूढकादिवन्धरूपेण वा सत्यन्कारदानादिस्वरूपेण वा वन्धनेन स्वीकृत्य यदा तदीयगृह एव तद्व्यवस्थापयति तदा तृतीयोऽतीचारः ३ ॥ २७८ ॥ तथा 'दुपये'त्यादि, द्वे पदे येषां तानि द्विपदानि—कलत्रावरुद्धदासीदासकर्मकरपदात्यादीनि हंसमयूरकुक्कुटशुकसारिकाचकोरपारापतप्रभृतीनि च, चत्वारि पदानि येषां तानि चतुष्पदानि—गोमहिषमेषाविककरभरासभतुरगहस्त्यादीनि, तानि गर्भं ग्राहयति सोऽतीचार इति सम्बन्धः, यथा किल केनापि संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं तेषां च विवक्षितसंवत्सराद्यवधिमध्य एव प्रसवेऽधिकद्विपदादिभावाद् व्रतभङ्गः स्यादिति त-

लिङ्गनादि परदारवर्जिनोऽपि परदारेषु निधुवनं परिहरन्ति नालिङ्गनादीति कथञ्चिद् व्रतसापेक्षत्वादतीचाराविति ४, तथा परेषां—अन्येषां स्वस्वापत्यव्यतिरिक्तानां विवाहो—विवाहकरणं कन्याफललिप्सया स्नेहसंबन्धादिना वा परिणयनविधानं, इदं च स्वकलत्रसन्तोषवता स्वकलत्रात् परदारवर्जकेन तु स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमिति यदा प्रतिपन्नं व्रतं भवति तदा परविवाहकरणं मैथुनकारणमर्थतः प्रतिषिद्धमेव भवति, मैथुनव्रतकारी च मन्यते—मया विवाह एवायं विधीयते न मैथुनं कार्यते इति व्रतसापेक्षत्वादतीचारः, कन्याफललिप्सा च सम्यग्दृष्टेरव्युत्पन्नावस्थायां सम्भवति, मिथ्यादृष्टेश्च भद्रकावस्थायामनुग्रहार्थं व्रतदाने सा सम्भवति, ननु परविवाहवत् स्वापत्यविवाहनेऽपि समान एवायं दोषः, सत्यमेतत्, परं यदि स्वकन्यादीनां विवाहो न कार्यते तदा स्वच्छन्दचारित्वं भवेत् ततः शासनोपघातः स्यात्, विहिते तु विवाहे पत्यादिनियन्त्रितत्वेन न तथा भवतीति, परेऽप्याहुः—"पिता रक्षति कौमारे, भर्ता रक्षति यौवने । पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥ १ ॥" यस्तु यादवशिरोमणेः कृष्णस्य चेटकमहाराजस्य च निजापत्येष्वपि विवाहनियमः श्रूयते स चिन्तकान्तरसद्भावे सति द्रष्टव्य इति ५, मध्ये स्थितस्य 'चउत्थवए' इति पदस्यात्रापि सम्बन्धाच्चतुर्थव्रते एते पञ्चातीचाराः ॥ २७७ ॥ अथ पञ्चमव्रतातीचारानाह—'जोएई'त्यादिगाथाद्वयं, धनधान्यादिवस्तुरूपनवविधपरिग्रहपरिमाणस्वरूपे पञ्चमव्रतेऽतीचारा विज्ञेयाः, यथा 'जोएई'त्यादि, योजयति—क्षेत्रवास्तूनि एकत्र मीलयतीति, तत्र क्षेत्रं—धान्योत्पत्तिभूमिः, तत् त्रिविधं—सेतुकेतूभयभेदात्, तत्र सेतुक्षेत्रं यदरघट्टादिजलेन सिच्यते, केतुक्षेत्रमाकाशोदकनिष्पाद्यशस्यं, उभयक्षेत्रं तूभयजलनिष्पाद्यशस्यं, वास्तु—गृहहट्टादि ग्रामनगरादि च, तत्र गृहं त्रिविधं—खातं—भूमिगृहादि उच्छ्रितं—प्रासादादि खातोच्छ्रितं—भूमिगृहस्योपरि गृहादिसन्निवेशः क्षेत्राणि च वास्तूनि च क्षेत्रवास्तूनि तान्येकत्र योजयति, गृहीतपरिग्रहव्रतेन हि केनचिदेकं क्षेत्रं परिगृहीतं, तस्य

नया परस्य भर्तुरभावेनापरदारत्वादभङ्गः लोके च परदारतया रूढेर्भङ्ग इति पूर्ववदतीचारः, शेषास्तु त्रयोऽतीचारा द्वयोरपि भवेयुः, स्त्रियास्तु स्वपुरुषसन्तोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां परपुरुषत्वात्, अन्यविवाहनादयस्तु त्रयः स्वदारसन्तोषिण इव स्वपुरुषविषयाः स्युरिति, पञ्च वा, कथं ?, आद्यस्तावद्यदा स्वकीयपतिर्वारकदिने सपत्न्या परिगृहीतो भवति तदा सपत्नीवारकं विलुप्य परिभुञ्जानाया अतीचारः द्वितीयस्तु अतिक्रमादिना परपुरुषमभिसरन्त्या अतीचारः, ब्रह्मचारिण्या वा स्वपतिमतिक्रमादिना अभिसरन्त्या अतीचारः, शेषास्त्रयः स्त्रियाः पूर्ववदिति । तथा कामे—मदने तीव्रो—गाढोऽभिलाषः—परित्यक्तान्यसकलव्यापारस्य तदेकाध्यवसायता, रमणीमुखकमलकक्षोपस्थान्तरेष्ववितृप्ततया प्रक्षिप्य प्रजननं महतीं वेलां यावन्निश्चलो मृत इवास्ते चटक इव चटकायां मुहुर्मुहुः कामिन्यामारोहतीति तृतीयः ३, तथा अनङ्गः—कामः, स च पुंसः स्त्रीपुंनपुंसकसेवनेच्छा हस्तकर्मादीच्छा वा वेदोदयात् तथा स्त्रियोऽपि पुरुषनपुंसकस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा नपुंसकस्यापि नपुंसकपुरुषस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा तेन तस्मिन् वा क्रीडा—रमणमनङ्गक्रीडा स्वलिङ्गेन कृतकृत्योऽपि योषितामवाच्यदेशं भूयो भूयः कुष्णाति केशाकर्षणप्रहारदानदन्तनखकदर्थनादिप्रकारैश्च मोहनीयकर्मावेशात्तथा क्रीडति यथा प्रबलो रागः समुज्जृम्भते, अथवा अङ्गं—देहावयवो मैथुनापेक्षया योनिर्मेहनं वा तद्व्यतिरिक्तान्यनङ्गानि—कुचकक्षोरुवदनादीनि तेषु क्रीडा, इह च श्रावकोऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तत्कर्तुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, मैथुनमात्रेणैव च यापनायां सम्भवन्त्यां कामतीव्राभिलाषानङ्गक्रीडे अर्थतः प्रतिषिद्धे, तत्सेवने च न कश्चिद् गुणः प्रत्युत राजयक्ष्मादयो दोषा एव भवन्ति, एवं प्रतिषिद्धाचरणाद्भङ्गः निजनियमाबाधनाच्चाभङ्ग इत्येतावतीचारौ, अन्ये त्वन्यथाऽतीचारद्वयमपि भावयन्ति—स हि स्वदारसंतोषी निधुवनमेव मया प्रत्याख्यातमिति स्वकल्पनया वेश्यादौ तत्परिहरति, ना-

रमल्पमुच्यते, ततः इत्वरं—अल्पं परिग्रहो यस्याः सा इत्वरपरिग्रहा, इत्वरकालं परिग्रहो यस्याः सा तथा, कालशब्दलोपोऽत्र दृश्यः, अथवा इत्वरी—प्रतिपुरुषमयनशीला वेश्येत्यर्थः परिगृह्यत इति परिग्रहा—कश्चित्कालं भाटीप्रदानादिना संगृहीता इत्वरी चासौ परिग्रहा च सा तथा, पुंवद्भावश्चात्र कार्यः, तां यद्भुङ्क्ते—सेवते गृहीतचतुर्थव्रतः सोऽतीचारः, इयमत्र भावना—भाटीप्रदानादित्वरकालं स्वीकारेण स्वकलत्रीकृतस्य वेश्यां सेवमानस्य स्वमतिकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वान्न भङ्गः अल्पकालं परिग्रहाच्च वस्तुतोऽन्यकलत्रत्वाद्भङ्ग इति भङ्गाभङ्गरूपत्वादित्वरपरिग्रहां सेवमानस्य प्रथमोऽतीचारः १, तथा अपरिगृहीता—अगृहीतान्यसत्कभाटिर्वेश्या प्रोषितभर्तृका स्वैरिणी कुलाङ्गना वाऽनाथा तां 'थियं'ति स्त्रियं स्थितां वा, एवंविधां सतीं यो भुङ्क्ते सोऽतीचार इति सण्टङ्कः, अयं चानाभोगादिना अतिक्रमादिना वा अतीचारः २, एतौ च द्वावप्यतीचारौ स्वदारसन्तोषिण एव न तु परदारवर्जकस्य इत्वरपरिग्रहाया वेश्यात्वेन अपरिगृहीतायास्त्वनाथतयैव परदारत्वाभावात् शेषास्त्वतीचारा द्वयोरपीति हरिभद्रसूरिमतं, एतदेव च सूत्रानुपाति, यदाह—"सदारसंतोसस्स इमे पंच अइयारा जाणियव्वा न समायरियव्व"त्ति, अन्ये त्वाहुः—इत्वरपरिग्रहासेवनं स्वदारसन्तोषिणोऽतीचारो यथा पूर्वं व्याख्यातस्तथैव, अपरिग्रहासेवनं तु परदारवर्जिनोऽतीचारः, अपरिग्रहा हि वेश्या, यदा च तां गृहीतान्यसत्कभाटिः काममभिगच्छति तदा परदारगमनदोषसम्भवात् कथञ्चित्परदारत्वाच्च भङ्गत्वेन वेश्यात्वाच्चाभङ्गत्वेन भङ्गाभङ्गरूपोऽतीचारः इति द्वितीयः, परे पुनरन्यथा प्राहुर्यथा—"परदारवज्जिणो पंच होंति तिन्नि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच व भङ्गविगप्पेहिं अइयारा ॥ १ ॥ इयमत्र भावना—इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या तां गच्छतः परदारवर्जिणो भङ्गः, कथंचित्परदारत्वात्तस्याः, लोके तु परदारत्वारूढेर्न भङ्ग इति भङ्गाभङ्गरूपोऽतीचारः, अपरिगृहीतायामनाथकुलाङ्गनायां यद्गमनं परदारवर्जिनः सोऽप्यतीचारः तत्कल्प-

काकर्तरिकाघर्घरिकादीनि तेषामर्पणं विक्रयणं वा उपचाराच्चौरप्रयोगः ततो जातश्चौरप्रयोगजोऽतीचारः, प्राकृतत्वाच्च नपुंसकत्वं, अत्र यद्यपि चौर्यं न करोमि न कारयामीत्येवंप्रतिपन्नस्य व्रतस्य चौरप्रयोगो व्रतभङ्ग एव तथापि किमधुना यूयं निर्व्यापारास्तिष्ठथ? यदि भवतां भोजनादिकं नास्ति तदाऽहं तद्ददामि भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽहं तं विक्रेष्ये इत्येवंविधवचनैश्चौरान् व्यापारयतः स्वयं च चौर्यव्यापारं परिहरतो व्रतसापेक्षस्यासावतीचार इति द्वितीयः २, तथा मीयतेऽनेनेति मानं—कुडवपलहस्तादि तुला तु प्रसिद्धैव मानं च तुला च मानतुले कूटे च ते मानतुले च कूटमानतुले तयोः करणं—हीनेन मानेन ददाति अधिकेन मानेन च गृह्णाति एवं तुलयाऽपीति तृतीयः ३, तथा रिपोः—द्विषः सम्बन्धिनि राज्ये—नियमिते भूमिभागे कटके वा व्यवहारो—व्यवस्थातिक्रमेण व्यवहरणं, इह च यद्यपि स्वस्वामिनाऽननुज्ञातस्य परकटकादिप्रवेशस्य "सामिजीवादत्तं तित्थयरेणं तहेव य गुरूहिं । एयस्स उ जाऽविरई अदिन्नदाणे सरूवं तं ॥ १ ॥" [स्वाम्यदत्तं जीवादत्तं तीर्थकरेण तथैव गुरुभिरदत्तं । एतस्माद् याऽविरतिः अदत्तादानस्यैतत् स्वरूपं ॥ १ ॥] इत्यदत्तादानलक्षणयोगेन विरुद्धराज्यव्यवहारकारिणां च चौर्यदण्डयोगेनादत्तादानव्रतभङ्ग एव तथापि विद्वेषिनृपतिभूमौ मया वाणिज्यमेव क्रियते न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमिति व्यपदेशाभावादतीचारतेति चतुर्थः ४, तथा सदृशयुतिः—सदृशानां वस्तूनां युतिः—मिश्रीकरणं यथा व्रीहिषु पलञ्जिकान् घृते वसादि तैले मूत्रादि सिकतादि अच्छधवलपण्डिकायां जात्यसुवर्णरूप्ययोर्युक्तिसुवर्णरूप्ये मिश्रयित्वा व्यवहरतीति पञ्चमः, अत्र च कूटमानतुलादिव्यवहारः सदृशयुतिश्च परव्यंसनेन परधनग्रहणरूपत्वाद्भङ्ग एव केवलं खात्रखननादिकमेव चौर्यं प्रतिषिद्धं मया वणिक्कलैव कृतेति भावनया व्रतरक्षणोद्यतत्वादतीचारता ५, इति तृतीयव्रतेऽतीचाराः ॥ २७६ ॥ इदानीं **चतुर्थव्रतातीचारानाह**—'भुंजइ'त्यादि, इत्व-

कारकमिदमिदं च मन्त्रयन्ते, यद्वा रहस्यदूषणं—पैशून्यं, यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिस्तयोः प्रणश्यति इति द्वितीयोऽतीचारः, तथा दाराणां—कलत्राणामुपलक्षणत्वान्मित्रादीनां च मन्त्रो—मन्त्रणं तस्य भेदः—प्रकाशनं दारमन्त्रभेदः, अस्य चानुवादरूपत्वेन सत्यत्वाद्यद्यपि नातीचारत्वं घटते तथापि विश्रब्धभाषितार्थप्रकटनजनितलज्जादितः कलत्रमित्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात्कथञ्चिद्भङ्गरूपत्वेनातीचारतैव, रहस्यदूषणे हि रहस्यमाकारादिना विज्ञायानधिकृत एव प्रकाशयति इह तु मन्त्रयित्वैव स्वयं मन्त्रं भिनत्तीत्यनयोर्भेदः, इति तृतीयोऽतीचारः, तथा कूटस्य—असद्भूतस्य लेखो—लेखनं कूटलेखस्तस्य करणं, एतच्च यद्यपि कायेनासत्यां वाचं न वदामीत्यस्य न वादयामीत्यस्य वा व्रतस्य भङ्ग एव तथापि सहसाकारानाभोगादिनाऽतिक्रमादिना वाऽतीचारः, अथवा सत्यमित्यसत्यभणनं मया प्रत्याख्यातं इदं तु लेखनमिति भावनया व्रतसव्यपेक्षस्यातीचार एवेति चतुर्थोऽतीचारः, मृषा—अलीकं तस्योपदेशो मृषोपदेशः, इदं च 'एवं च एवं च ब्रूहि त्वं एवं च एवं च अभिदध्याः कुलगृहेष्वि'त्यादिकमसत्याभिधानशिक्षाप्रदानमित्यर्थः, इह व्रतसंरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं यच्छतः पञ्चमोऽतीचारः, व्रतसव्यपेक्षत्वेन मृषावादे परप्रवर्तनेन च भग्नाभग्नरूपत्वादस्य उपलक्षणत्वान्निकृतिप्रधानशास्त्राध्यापनमप्यतीचारः, इति मृषादोषाः—द्वितीयव्रतातीचाराः ॥ २७५ ॥ अथ तृतीयव्रतातीचारानाह—'चोराणी'त्यादि, चौरैरानीतं—आहृतं चौरानीतं कनकवसनादि, अत्र च सूत्रे आदानपदाध्याहारात्तस्यादानं—मूल्येन मुधिकया वा ग्रहणं, चौरानीतं हि काणक्रयेण मुधिकया वा प्रच्छन्नं गृह्णन् चौर एव भवति, ततश्च चौर्यकरणाद् व्रतभङ्गः, वाणिज्यमेव मया विधीयते न साक्षाच्चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वाच्च न भङ्ग इति भङ्गाभङ्गरूपः प्रथमोऽतीचारः, तथा चौराणां प्रयोजनं—व्यापारणं चौरप्रयोगः—हरत यूयमिति हरणक्रियायां प्रेरणा, अथवा चौराणां प्रयोगाः—उपकरणानि कुशि-

एव भवेत्, विरतेः खण्डनात्, अपरं च—बन्धादीनां प्रत्याख्येयत्वे विवक्षितव्रतेयत्ता विशीर्यते प्रतिव्रतमतीचारव्रतानामाधिक्यादिति, एवं च न बन्धादीनामतीचारतेति ब्रूमः, सत्यं, हिंसैव प्रत्याख्याता न बन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषां, न च बन्धादिकरणेऽपि च व्रतभङ्गः किंत्वतीचार एव, कथं?, इह द्विविधं व्रतं—अंतर्वृत्त्या वहिर्वृत्त्या च, तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात् परप्राणप्रहाणमविगणयन् बन्धादौ प्रवर्तते न च परो विपद्यते तदा निर्दयताविरत्यनपेक्षप्रवृत्तत्वेनाऽऽन्तरवृत्त्या व्रतस्य भङ्गो हिंसाया अभावाच्च वहिर्वृत्त्या पालनमिति, देशस्य भञ्जनात् देशस्य च पालनादतीचारव्यपदेशः प्रवर्तते, यदाहुः—"न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः? । निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपादयाहीनतया तु भग्नः । देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ २ ॥" यच्चोक्तं 'व्रतेयत्ता विशीर्यते' इति, तदयुक्तं, विशुद्धाहिंसासद्भावे हि बन्धादीनामभाव एव, ततः स्थितमेतद्—बन्धादयोऽतीचारा एव, बन्धादिग्रहणस्योपलक्षणत्वान्मन्त्रतन्त्रप्रयोगादयोऽन्येऽप्यतीचारतया विज्ञेया इति ॥ द्वितीयव्रतातीचारानाह—'सहसे'त्यादि, सहसा—अनालोच्य कलङ्कनं—कलङ्कस्य करणमभ्याख्यानमसद्दोषस्यारोपणमितियावत् चौरस्त्वं पारदारिकस्त्वमित्यादि प्रथमोऽतीचारः, ननु सहसा कलङ्कनमसद्दोषाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव न त्वतीचार इति, सत्यं, किन्तु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा सङ्क्लेशाभावेन व्रतसाक्षेपत्वान्न भङ्गः परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपोऽतीचारः, यदा तु तीव्रसङ्क्लेशादभ्याख्याति तदा भङ्ग एव व्रतनिरपेक्षत्वादिति, तथा रहः—एकान्तस्तत्र भवं रहस्यं—राजादिकार्यसम्बद्धं यदन्यस्मै न कथ्यते तस्य दूषणं—अनधिकृतेनैवाकारेङ्गितादिभिर्ज्ञात्वा अन्यस्मै प्रकाशनं रहस्यदूषणं, यथा रहसि मन्त्रयमाणान् कांश्चिदवलोक्य गृहीतमृषाव्रतः कश्चिद्वदति—एते हि राजापकारादि-

ततः क्रोधादिवशत इत्यत्रापि दृश्यं, अत्र चावश्यकचूर्ण्यादिभणितो विधिरयं—बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽपि सार्थकोऽनर्थको वा स्यात्, तत्रानर्थकस्तावद्विधातुं न युज्यते, सार्थकः पुनरयं द्विविधः—सापेक्षो निरपेक्षश्च, तत्र सापेक्षो यो दामग्रन्थिना शिथिलेन यश्च प्रदीपनादिषु मोचयितुं छेत्तुं वा शक्यते, निरपेक्षः पुनर्यन्निश्चलमत्यर्थं च बद्ध्यते, एवं तावच्चतुष्पदानां बन्धः, द्विपदानामपि दासदासीचौरपाठादिप्रमत्तपुत्रादीनां यदि बन्धस्तदा सविक्रमणा एव ते बन्धनीया रक्षणीयाश्च यथा ज्वलनभयादिषु न विनश्यन्ति, तथा द्विपदचतुष्पदाः श्रावकेण त एव सङ्ग्रहितव्या ये अवद्धा एवासत इति, तथा छविच्छेदोऽपि तथैव, नवरं निरपेक्षो हस्तपादकर्णनासिकादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्यद्गण्डं वाऽरुर्वा छिंद्याद्वा दहेद्वेति, तथाऽधिकभारोऽपि नारोपयितव्यः, प्रथममेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अथासावन्या न भवेत् तदा द्विपदो यं भारं स्वयमुत्क्षिपत्यवतारयति च एतावान् वाह्यते, चतुष्पदस्य तु यथोचितभारः किंचिदूनः क्रियते, हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति, तथा वधोऽपि प्रहाररूपस्तथैव, नवरं निरपेक्षप्रहारो निर्दयताडना, सापेक्षः पुनरेवं—यथा श्रावकेणादित एव भीतपर्षदा भवितव्यं, यदि पुनः कोऽपि न करोति विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति, तथा अन्नपानादिनिषेधः कस्यापि न करणीयः, तीक्ष्णबुभुक्षो ह्येवं म्रियेतापि, अतः स्वभोजनवेलायां ज्वरितादीन् विमुच्य नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत, अन्नादिनिरोधोऽपि सार्थकानर्थकादिभेदो बंधवद् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणं च वाचैव वदेद्—अद्य ते भोजनादि न दास्यत इति, शान्तिनिमित्तं चोपवासादि कारयेत्, किं बहुना ?, मूलगुणस्याहिंसालक्षणस्यातीचारा यथा न भवन्ति तथा यतितव्यं । ननु हिंसैव श्रावकेण प्रत्याख्याता ततो बन्धादिकरणेऽपि न कश्चिद् दोषः, हिंसाविरतेरखण्डितत्वात्, अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग

एव भवेत्, विरतेः खण्डनात्, अपरं च—वन्धादीनां प्रत्याख्येयत्वे विवक्षितव्रतेयत्ता विशीर्यते प्रतिव्रतमतीचारव्रतानामाधिक्यादिति, एवं च न वन्धादीनामतीचारतेति ब्रूमः, सत्यं, हिंसैव प्रत्याख्याता न वन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषां, न च वन्धादिकरणेऽपि च व्रतभङ्गः किंत्वतीचार एव, कथं?, इह द्विविधं व्रतं—अंतर्वृत्त्या वहिर्वृत्त्या च, तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात् परप्राणप्रहाणमविगणयन् वन्धादौ प्रवर्तते न च परो विपद्यते तदा निर्दयताविरत्यनपेक्षप्रवृत्तत्वेनाऽऽन्तरवृत्त्या व्रतस्य भङ्गो हिंसाया अभावाच्च वहिर्वृत्त्या पालनमिति, देशस्य भञ्जनात् देशस्य च पालनादतीचारव्यपदेशः प्रवर्तते, यदाहुः—"न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः? । निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः । देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ २ ॥" यच्चोक्तं 'व्रतेयत्ता विशीर्यते' इति, तदयुक्तं, विशुद्धाहिंसासद्भावे हि वन्धादीनामभाव एव, ततः स्थितमेतद्—वन्धादयोऽतीचारा एव, वन्धादिग्रहणस्योपलक्षणत्वान्मन्त्रतन्त्रप्रयोगादयोऽन्येऽप्यतीचारतया विज्ञेया इति ॥ द्वितीयव्रतातीचारानाह—'सहसे'त्यादि, सहसा—अनालोच्य कलङ्कनं—कलङ्कस्य करणमभ्याख्यानमसद्दोपस्यारोपणमितियावत् चौरस्त्वं पारदारिकस्त्वमित्यादि प्रथमोऽतीचारः, ननु सहसा कलङ्कनमसद्दोपाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव न त्वतीचार इति, सत्यं, किन्तु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा सङ्क्लेशाभावेन व्रतसाक्षेपत्वान्न भङ्गः परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपोऽतीचारः, यदा तु तीव्रसङ्क्लेशादभ्याख्याति तदा भङ्ग एव व्रतनिरपेक्षत्वादिति, तथा रहः—एकान्तस्तत्र भवं रहस्यं—राजादिकार्यसम्वद्धं यदन्यस्मै न कथ्यते तस्य दूपणं—अनधिकृतेनैवाकारेङ्गितादिभिर्ज्ञात्वा अन्यस्मै प्रकाशनं रहस्यदूपणं, यथा रहसि मन्त्रयमाणान् कांश्चिदवलोक्य गृहीतमृपाव्रतः कश्चिद्वदति—एते हि राजापकारादि-

ततः क्रोधादिवशत इत्यत्रापि दृश्यं, अत्र चावश्यकचूर्ण्यादिभणितो विधिरयं—बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽपि सार्थकोऽनर्थको वा स्यात्, तत्रानर्थकस्तावद्विधातुं न युज्यते, सार्थकः पुनरयं द्विविधः—सापेक्षो निरपेक्षश्च, तत्र सापेक्षो यो दामग्रन्थिना शिथिलेन यश्च प्रदीपनादिषु मोचयितुं छेत्तुं वा शक्यते, निरपेक्षः पुनर्यन्निश्चलमत्यर्थं च बद्ध्यते, एवं तावच्चतुष्पदानां बन्धः, द्विपदानामपि दासदासीचौरपाठादिप्रमत्तपुत्रादीनां यदि बन्धस्तदा सविक्रमणा एव ते बन्धनीया रक्षणीयाश्च यथा ज्वलनभयादिषु न विनश्यन्ति, तथा द्विपदचतुष्पदाः श्रावकेण त एव सङ्ग्रहितव्या ये अबद्धा एवासत इति, तथा छविच्छेदोऽपि तथैव, नवरं निरपेक्षो हस्तपादकर्णनासिकादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्यद्गण्डं वाऽरुर्वा छिंद्याद्वा दहेद्वेति, तथाऽधिकभारोऽपि नारोपयितव्यः, प्रथममेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अथासावन्या न भवेत् तदा द्विपदो यं भारं स्वयमुत्क्षिपत्यवतारयति च एतावान् वाह्यते, चतुष्पदस्य तु यथोचितभारः किंचिदूनः क्रियते, हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति, तथा वधोऽपि प्रहाररूपस्तथैव, नवरं निरपेक्षप्रहारो निर्दयताडना, सापेक्षः पुनरेवं—यथा श्रावकेणादित एव भीतपर्षदा भवितव्यं, यदि पुनः कोऽपि न करोति विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति, तथा अन्नपानादिनिषेधः कस्यापि न करणीयः, तीक्ष्णबुभुक्षो ह्येवं म्रियेतापि, अतः स्वभोजनवेलायां ज्वरितादीन् विमुच्य नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत, अन्नादिनिरोधोऽपि सार्थकानर्थकादिभेदो बंधवद् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणं च वाचैव वदेद्—अद्य ते भोजनादि न दास्यत इति, शान्तिनिमित्तं चोपवासादि कारयेत्, किं बहुना ?, मूलगुणस्याहिंसालक्षणस्यातीचारा यथा न भवन्ति तथा यतितव्यं । ननु हिंसैव श्रावकेण प्रत्याख्याता ततो बन्धादिकरणेऽपि न कश्चिद् दोषः, हिंसाविरतेरखण्डितत्वात्, अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग

**कणयाइ देइ सयणाणं २ । धणधन्नाइ परघरे बंधइ जा नियमपज्जंतो ३ ॥२७८॥ दुपयाइँ चउप्पयाइँ गब्भं गाहेइ ४ कुप्पसंखं च । अप्पधणं बहुमोल्लं ५ करेइ पंचमवए दोसा ॥ २७९ ॥**

'पढमवये'त्यादि, प्रथमव्रते—प्राणातिपातविरमणलक्षणे नरतिरश्चामन्नपानव्यवच्छेदः तथा बन्धस्तथा वधस्तथाऽतिभारारोपणं तथा छविच्छेदः, एते पञ्चातीचारा—मालिन्यरूपा भवन्ति, तत्रान्नपानव्यवच्छेदो—भोजनपानयोर्निषेधो द्विपदचतुष्पदानां क्रियमाणोऽतीचारः प्रथमव्रतस्य, ननु यद्येवं ज्वरादिरोगाक्रान्तानां पुत्रादीनां लङ्घनादिविधापने गृहीतहिंसाविरमणव्रतस्यातीचारो भविष्यति, तदयुक्तं, सोपस्काराणि हि सूत्राणि भवन्ति ततः क्रोधादिवशत इति सूत्रे अध्याहर्तव्यं, ततः क्रोधादिदूषितमना यद्यन्नादिनिषेधं करोति तदाऽतीचारः, यदा तु हितबुद्ध्या रोगाद्यभिभूतानां पुत्रादीनामन्नादिनिषेधं करोति तदा नातीचार इति, एवमन्यत्रापि क्रोधादिवशत इति द्रष्टव्यं, न चैतदनार्षं, यतोऽन्यत्राभ्यधायि—"बंधवहछविच्छेयं अइभारं भत्तपाणवोच्छेयं । कोहाइदूसियमणो गोमणुयाईण नो कुणइ ॥ १ ॥" [ वन्धवधच्छविच्छेदमतिभारं भक्तपानव्यवच्छेदं क्रोधादिदूषितमनाः गोमनुजादीनां न करोति ॥ १ ॥ ] इत्यादि, किं बहुना ?, यद्रोगाद्यभिभूतानां यच्चापठनादिपराणां पुत्रादीनां यच्च शान्तिकृते उपवासादिकारणं तन्नातीचार इत्यर्थः, तथा वन्धो—रज्ज्वादिना गोमनुष्यादीनां नियन्त्रणं स्वपुत्रादीनामपि विनयग्राहणार्थं क्रियते ततः क्रोधादिवशत इत्यत्रापि सम्बन्धनीयं, अतः प्रबलकषायोदयाद् यो वन्धः सोऽतीचार इति, तथा वधो—लकुटादिना हननं, कषायादेव वध इत्यन्ये, तथा 'अतिभारारोपणं' अतिमात्रस्य—वोढुमशक्यस्य भारस्यारोपणं—गोकरभरासभमनुष्यादीनां स्कन्धे पृष्ठे शिरसि वा वहनायाधिरोपणं, इहापि क्रोधाल्लोभाद्वा यदधिकभारारोपणं सोऽतीचार इति, तथा 'छविच्छेदः' छविः—त्वक् तद्योगाच्छरीरमपि वा छविः तस्याश्छेदो—द्वैधीकरणं, स च पादवल्मिकोपहतस्य पुत्रादेरपि क्रियते,

सम्यक्त्वं दूषयतीत्यतीचारः, तथा 'अन्यतीर्थिकप्रशंसा' अन्यतीर्थिकाः—सौगतभौतिकादयः तेषां प्रशंसा—अहो एतेषां राजपूज्यत्वमहो एतेषां सर्वजनमान्यत्वमहोऽदूष्यवैदुष्यादिगुणसमृद्धिः एवमादि, तेषां प्रशंसा प्रतायमानाऽचिन्त्यचिन्तामणिकल्पं सम्यक्त्वं दूषयतीत्यतीचारः, तथा 'परतीर्थिकोपसेवनं' परतीर्थिकैः सह एकत्र संवासात् परस्परालापादिजनितः परिचयः, तदपि सम्यक्त्वं दूषयतीत्यतीचारः, यत एकत्रवासे तत्प्रक्रियादर्शनश्रवणाभ्यां दृढसम्यक्त्वस्यापि सम्यक्त्वह्रासः सम्भाव्यते किमुत मन्दबुद्धेर्नवधर्मस्येति, ननु दर्शनाचारं प्रतिपादयता तद्विपक्षतया दर्शनस्याष्टावतीचाराः प्रतिपादिताः ततस्तत्रापि शङ्काकाङ्क्षाविचिकित्साः अत्रापि चेति कथं न पौनरुक्त्यं ?, तत्र ब्रूमः—पूर्वं निःशङ्कितत्वाद्यभावमात्रमतीचारतया प्रत्यपादि इह तु जीवादिविषयशङ्कादिसद्भाव इति न कश्चिद्दोषः, इह चातीचारो व्यवहारनयमताश्रयणेन सत्येव सम्यक्त्वे स्खलनामात्रं, निश्चयनयमते तु सम्यक्त्वाभाव एव, तथा चोक्तम्—"एकस्मिन्नप्यर्थे" इत्यादि । अथ 'वयाइं'ति वितन्यते, तत्राह—

पढमवये अइआरा नरतिरिआणऽन्नपाणवोच्छेओ । बंधो वहो य अइभाररोवणं तह छविच्छेओ ॥ २७४ ॥ सहसा कलंकणं १ रहसदूसणं २ दारमंतभेयं च ३ । तह कूडलेहकरणं ४ मुसोवएसो ५ मुसे दोसा ॥ २७५ ॥ चोराणीय १ चोरपओगजं २ कूडमाणतुलकरणं ३ । रिउरज्जव्ववहारो ४ सरिसज्जुई ५ तइयवयदोसा ॥ २७६ ॥ भुंजइ इतरपरिग्गह १ मपरिग्गहियं थियं २ चउत्थवए । कामे तिव्वहिलासो ३ अणंगकीला ४ परविवाहो ५ ॥२७७॥ जोएइ खेत्तवत्थूणि १ रुप्प-

द्वादश भवन्तीति, अथ वीर्यत्रिकातीचारानाह—'तिगं तु विरिअस्स'त्ति वीर्यस्य त्रिकं पुनर्मनोवाक्कायाः सूचकत्वात्सूत्रस्य मनोवाक्कायव्यापाराः ते च पापप्रयुक्ताः—पापविषये प्रवृत्ताः सन्तो वीर्यत्रिकातीचारा भवन्तीति ॥ 'पण सम्म'त्ति व्याख्यायते—

**संका कंखा य तहा वितिगिच्छा अन्नतित्थियपसंसा। परतित्थिओवसेवणमइयारा पंच सम्मत्ते ॥२७३॥**

'संके'त्यादि, शङ्का काङ्क्षा तथा विचिकित्सा अन्यतीर्थिकप्रशंसा परतीर्थिकोपसेवनं च अतीचाराः पञ्च सम्यक्त्वे भवन्तीति । तत्र शङ्का—भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात् सम्यगनवधार्यमाणेषु संशयः—किमेवं स्यान्नैवमिति, यदाहुः- "संसयकरणं सङ्के"ति, सा च शङ्का द्विविधा—देशशङ्का सर्वशङ्का च, देशशङ्का देशविषया जीवाद्यन्यतमपदार्थैकदेशगोचरेत्यर्थः, यथाऽस्ति जीवः केवलं सर्वगतोऽसर्वगतो वा? सप्रदेशोऽप्रदेशो वेति, सर्वशङ्का सर्वविषया यथाऽस्ति धर्मो नास्ति वेति, इयं च द्विधाऽपि शङ्का भगवदर्हत्प्रणीतप्रवचनेऽप्रत्ययरूपा सम्यक्त्वं दूषयतीत्यतीचारः, केवलाऽऽगमगम्या अपि हि पदार्था अस्मदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न सन्देग्धुं योग्याः, यत्रापि मतिदौर्बल्यादिभिर्मोहवशात् क्वचन संशयो भवति तत्राप्यप्रतिहतेयमर्गला, यथा—कत्थइ मइदुव्वलेण तव्विहायरियविरहओ वावि । नेयगहणत्तणेण य नाणावरणोदयेणं च ॥ १ ॥ हेऊदाहरणासंभवे य सइ सुट्ठु जं न बुज्झेज्जा । सव्वन्नुमयमवितहं तहावि तं चिंतए मइमं ॥ २ ॥ अणुवकयपराणुग्गहपरायणा जं जिणा जुगप्पवरा । जिअरागदोसमोहा य नन्नहावाइणो तेणं ॥ ३ ॥ [ कुत्रापि मतिदौर्बल्येन तद्विधाचार्यविरहतो वापि । ज्ञेयगहनत्वेन च ज्ञानावरणोदयेन च ॥ १ ॥ हेतूदाहरणासंभवे च सति सुष्ठु यन्न बुध्येत । सर्वज्ञमतमवितथं तथापि तच्चिन्तयेत् मतिमान् ॥ २ ॥ अनुपकृतपरानुग्रहपरायणा यत् जिना युगप्रवराः जितरागद्वेषमोहाश्च नान्यथावादिनस्तेन ॥ ३ ॥ ] यथा वा—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं

न्नवधादिलिङ्गगम्यं नरकगतिगमनकारणमवसेयं २ । तथा धर्मः—क्षमादिदशलक्षणः तस्मादनपेतं धर्म्यं, तच्च सर्वज्ञाऽऽज्ञानुचिन्तनं १ रागद्वेषकषायेन्द्रियवशजन्तूनामपायविचिन्तनं २ ज्ञानावरणादिशुभाशुभकर्मविपाकसंस्मरणं ३ क्षितिवलयद्वीपसमुद्रप्रभृतिवस्तुसंस्थानादिधर्मालोचनात्मकं ४, जिनप्रणीतभावश्रद्धानादिचिह्नगम्यं देवगत्यादिफलसाधकं ज्ञातव्यं ३ । तथा शोधयत्यष्टप्रकारं कर्ममलं शुचं वा—शोकं क्लमयति-अपनयतीति निरुक्तविधिना शुक्लं, एतदपि पूर्वगतश्रुतानुसारिनानानयमतैकद्रव्योत्पत्तिस्थितिभङ्गादिपर्यायानुस्मरणादिस्वरूपं ४ अवधासम्मोहादिलिङ्गगम्यं मोक्षादिफलप्रसाधकं विज्ञेयं ४ । अत्र च धर्मशुक्ले एव तपसी निर्जरार्थत्वात्, नार्तरौद्रे बन्धहेतुत्वादिति ११ । 'उस्सग्गोऽविय'त्ति उत्सर्जनीयस्य परित्याग उत्सर्गः, स द्विविधः—बाह्योऽभ्यन्तरश्च, तत्र बाह्यो द्वादशादिभेदस्योपधेरतिरिक्तस्यानेषणीयस्य संसक्तस्यान्नपानादेर्वा त्यागः, आभ्यन्तरः कषायाणां मृत्युकाले शरीरस्य च त्यागः, ननु उत्सर्गः प्रायश्चित्तमध्य एवोक्तस्तत् किं पुनरत्र भणनेन ?, सत्यं, सोऽतीचारविशुद्ध्यर्थमुक्तः अयं तु सामान्येन निर्जरार्थमुक्त इत्यपौनरुक्त्यं १२ । 'अब्भितरओ तवो होइ'त्ति इदं प्रायश्चित्तादि व्युत्सर्गान्तमनुष्ठानं लौकिकैरनभिलक्ष्यत्वात् तत्रान्तरीयैश्च भावतोऽनासेव्यमानत्वात् मोक्षावाप्तावन्तरङ्गत्वादभ्यन्तरस्य कर्मणस्तापकत्वादभ्यन्तरैरेवान्तर्मुखैर्भगवद्भिर्ज्ञायमानत्वाच्चाभ्यन्तरं तपो भवतीति, एतेषां च कथं अतीचारः संभवतीति आह—'सम्मे'त्यादि, एतेषामनशनादीनां द्वादशानां तपोभेदानां सम्यगकरणे—विपरीततया न्यूनाधिक्येन वाऽयथावस्थितानुष्ठानरूपे अतीचारा अपि

१ दशधा प्रायश्चित्तवर्णने उत्सर्गशब्देन चेष्टाभिभवभेदेन द्विविधः कायोत्सर्गो वर्णितो मौनध्यानादिक्रियाव्यतिरिक्तक्रियात्यागमधिकृत्य, अयं तु शरीरोपाधिगणादिवस्तून्याश्रित्येति स्पष्टो भेदो मा, अतिरिक्तोपधेस्त्यागो द्रव्यावमौदर्यं अनेषणीयत्यागो विवेकः कषायत्यागः कषायसंलीनता, अपश्चिमाराधनायै वा गणादित्यागोऽयं ।

संपायणमेस भावत्थो" ॥१॥ [ वैयावृत्त्यं व्यावृतभाव इह धर्मसाधननिमित्तं अन्नादीनां विधिना संपादनमेष भावार्थः ॥१॥ ] ९॥ 'तहेव सज्झाओ'त्ति सुष्ठु आ—मर्यादया कालवेलापरिहारेण पौरुष्यपेक्षया वा अध्यायः—अध्ययनं स्वाध्यायः, स च पञ्चधा—वाचनापृच्छनापरावर्तनानुप्रेक्षाधर्मकथाभेदात्, तत्र वाचना—शिष्याध्यापनं, गृहीतवाचनेनापि संशयोत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः पृच्छना, पृच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परावर्तना, सूत्रस्य घोषादिविशुद्धं गणनमित्यर्थः, सूत्रवदर्थेऽपि सम्भवति विस्मरणमतोऽनुप्रेक्षणं, ग्रन्थार्थस्य मनसाऽभ्यासोऽनुप्रेक्षा चिन्तनिकेत्यर्थः, एवमभ्यस्तश्रुतेन धर्मकथा कर्तव्येति, धर्मस्य—श्रुतरूपस्य कथा—व्याख्या धर्मकथेति १० ॥ 'झाण'मिति ध्यायते—चिन्त्यते वस्त्वनेनेति ध्यातिर्वा ध्यानं—अन्तर्मुहूर्तमात्रकालमेकाग्रचित्ताध्यवसानं, यदाहुः—"अंतोमुहुत्तमेत्तं चित्तावत्थाणमेगवत्थुंमि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु" ॥ १ ॥ [ अन्तर्मुहूर्त्तमात्रं चित्तस्यैकवस्तुनि अवस्थानं छद्मस्थानां ध्यानं जिनानां तु योगनिरोधः ॥ १ ॥ ] तच्चतुर्धा—आर्त्तरौद्रधर्म्यशुक्लभेदात्, तत्र ऋतं—दुःखं तस्य निमित्तं तत्र वा भवं ऋते वा—पीडिते प्राणिनि भवमार्त्तं, तच्चामनोज्ञानां शब्दरूपरसस्पर्शगन्धलक्षणानां विषयाणां तदाश्रयभूतवायसादिवस्तूनां वा समुपनतानां विप्रयोगप्रणिधानं भाविनां वाऽसम्प्रयोगचिन्तनम् १ एवं शूलशिरोरोगादिवेदनाया अपि विप्रयोगासंप्रयोगप्रार्थनं २ इष्टशब्दादिविषयाणां सातवेदनायाश्चाविप्रयोगसम्प्रयोगप्रार्थनं ३ देवेन्द्रचक्रवर्तित्वादिप्रार्थनं च ४ शोकाक्रन्दनस्वदेहताडनविलपनादिलक्षणलक्ष्यं तिर्यग्गतिगमनकारणं विज्ञेयं १, तथा रोदयत्यपरानिति रुद्रः—प्राणिवधादिपरिणत—आत्मैव तस्येदं कर्म रौद्रं, तदपि सत्त्वेषु वधवेधबन्धनदहनाङ्कनमारणादिप्रणिधानं १ पैशून्यासभ्यासद्भूतघातादिवचनचिन्तनं २ तीव्रकोपलोभाकुलं भूतोपघातपरायणं परलोकापायनिरपेक्षं परद्रव्यहरणप्रणिधानं ३ सर्वाभिशङ्कनपरम्परोपघातपरायणशब्दादिविषयसाधकद्रव्यसंरक्षणप्रणिधानं च ४ उत्स-

तह य ॥ २ ॥" [ सामायिकादिचारित्राणां श्रद्धानं तथैव कायेन संस्पर्शनं अथ च सर्वसत्त्वानां पुरतः प्ररूपणं ॥ १ ॥ मनोवाक्कायविनय आचार्यादीनां सर्वकाले अकुशलमनआदिरोधः कुशलानां तथोदीरणं च ॥ २ ॥ ] तथा उपचारेण—सुखकारिक्रियाविशेषेण निर्वृत्त औपचारिकः स चासौ विनयश्च औपचारिकविनयः, स च सप्तधा—"अब्भासऽच्छणं छंदाणुवत्तणं कयपडिकिई तह य । कारिअनिमित्तकरणं दुक्खत्तगवेसणं तह य ॥ १ ॥ तह देसकालजाणण सव्वत्थेसु तह य अणुमई भणिया । उवयारिओ उ विणओ एसो भणिओ समासेणं ॥ २ ॥" [ अभ्यासस्थानं छन्दोऽनुवर्त्तनं कृतप्रतिकृतिस्तथा च । कारितनिमित्तकरणं दुःखार्त्तगवेषणं च तथा ॥ १ ॥ तथा देशकालज्ञानं तथा सर्वार्थेष्वनुमतिर्भणिता । औपचारिकस्तु विनय एष भणितः समासेन ॥ २ ॥ ] तत्र 'अब्भासऽच्छणं'ति सूत्राद्यर्थिना नित्यमेवाचार्यस्याभ्यासे—प्रत्यासन्ने स्थातव्यं, तथा छन्दः—अभिप्रायो गुरूणामनुवर्तनीयः, तथा कृतप्रतिकृतिः—कृते भक्तादिना उपचारे प्रसन्ना गुरवः प्रतिकृतिं—प्रत्युपकारं सूत्रार्थादिदानतो मे करिष्यन्ति, न नामैकैव निर्जरेति भक्तादिदाने गुरोर्यतितव्यं, तथा कार्यनिमित्तकारणं, कार्य—श्रुतप्रापणादिकं निमित्तं—हेतुं कृत्वा श्रुतं प्रापितोऽहमनेनेति हेतोरित्यर्थः विशेषेण तस्य विनये वर्तितव्यं, तदनुष्ठानं च कर्तव्यं, यद्वा कारितेन—सम्यक्सूत्रार्थमध्यापितेन पुनस्तन्निमित्तं करणं—विनयस्य विधानं कारितनिमित्तकारणं, गुरुणा सम्यक् सूत्रादिकं पाठितेन विनेयेन विशेषतो विनये वर्तितव्यं तदुक्तार्थानुष्ठानं च कर्त्तव्यमिति भावः, तथा दुःखार्त्तस्य—दुःखपीडितस्य गवेषणं—औषधादिना प्रतिजागरणं दुःखार्त्तगवेषणं, पीडितस्योपकारकरणमित्यर्थः, तथा देशकालज्ञानमवसरज्ञतेत्यर्थः, तथा सर्वार्थेषु गुरुविषयेष्वनुमतिः—आनुकूल्यं, अथवा द्विपञ्चाशद्भेदो विनयः, स च पञ्चषष्टिद्वारे वक्ष्यते ८ ॥ 'वेयावच्च'मिति व्यापिपर्ति सेति व्यापृतः तस्य भावो वैयावृत्त्यं, धर्मसाधनार्थमन्नादिदानमित्यर्थः, यदाहुः—"वेयावच्चं वावडभावो इह धम्मसाहणनिमित्तं । अन्नाइयाण विहिणा

भक्तिस्तथा बहुमानः तद्दृष्टार्थानां सम्यक्त्वभावना विधिग्रहणमभ्यासोऽपि चैष विनयो जिनाभिहितः ॥ २ ॥ ] शुश्रूषणादिकश्च दर्शनविनयः, यदाहुः—"सुस्सूसणा अणासायणा य विणओ उ दंसणे दुविहो । दंसणगुणाहिएसुं किज्जइ सुस्सूसणाविणओ ॥ १ ॥ सक्कारब्भुट्ठाणे संमाणासणअभिग्गहो तह य । आसणअणुप्पयाणं किइकम्मं अंजलिगहो य ॥ २ ॥ इंतस्सऽणुगच्छणया ठिअस्स तह पज्जुवासणा भणिया । गच्छंताणुव्वयणं एसो सुस्सूसणाविणओ ॥ ३ ॥" [ शुश्रूषणा अनाशातना च विनयस्तु दर्शने द्विविधः दर्शनगुणाधिकेषु क्रियते शुश्रूषणाविनयः ॥ १ ॥ सत्कारोऽभ्युत्थानं सन्मानमासनाभिग्रहश्च तथा । आसनानुप्रदानं कृतिकर्माञ्जलिग्रहश्च ॥ २ ॥ आयातोऽनुगमनं स्थितस्य तथा पर्युपासनं भणितं । व्रजतोऽनुव्रजनमेष शुश्रूषणाविनयः ॥ ३ ॥ ] सत्कारः—स्तवनवन्दनादि अभ्युत्थानं—विनयार्हस्य दर्शनादेवासनत्यजनं सन्मानो—वस्त्रपात्रादिभिः पूजनं आसनाभिग्रहः पुनस्तिष्ठत एव गुरोरादरेणासनानयनपूर्वकमत्रोपविशतेति भणनं आसनानुप्रदानं—स्थानात्स्थानान्तरे आसनस्य सञ्चारणं कृतिकर्म—वन्दनकं अञ्जलिग्रहः—अञ्जलिकरणं, शेषं प्रकटं, अनाशातनाविनयः पुनः पञ्चदशविधः, तस्य चेदं स्वरूपम्—"तित्थयर धम्म आयरिअ वायगे थेर कुल गणे संघे । संभोइअ किरियाए मइनाणाईण य तहेव" ॥१॥ [तीर्थकरे धर्मे आचार्ये वाचके स्थविरे कुले गणे संघे सांभोगिके क्रियावति मतिज्ञानादीनां च तथैव ॥१॥] साम्भोगिकाः—एकसामाचारिकाः क्रिया—आस्तिकता "कायव्वा पुण भत्ती बहुमाणो तह य वन्नवाओ य । अरहंतमाइयाणं केवलनाणावसाणाणं" ॥ १ ॥ [ कर्त्तव्या पुनर्भक्तिर्बहुमानस्तथा वर्णवादश्च अर्हदादीनां केवलज्ञानावसानानां ॥ १ ॥ ] भक्तिः—बाह्या प्रतिपत्तिः बहुमानः—आन्तरः प्रीतिविशेषः वर्णवादो—गुणग्रहणं, चारित्रविनयः पुनः "सामाइयाइचरणस्स सद्दहाणं तहेव कायेणं । संफासणं परूवणमह पुरओ सव्वसत्ताणं ॥ १ ॥" तथा—"मणवयकाइयविणओ आयरियाईण सव्वकालम्मि । अकुसलमणाइरोहो कुसलाणमुदीरणं

[ उदयस्यैव निरोधः प्राप्तोदयानां वाऽफलीकरणं । यदत्र कषायाणां कषायसंलीनतैषा ॥ १ ॥ ] योगसंलीनता पुनर्मनोवाक्कायलक्षणयोगानामकुशलानां निरोधः कुशलानामुदीरणं च, यदवोचन्—“अपसत्थाण निरोहो जोगाणमुदीरणं च कुसलाणं । कज्जंमि य विहिगमणं जोगे संलीणया भणिया ॥ १ ॥” [ अप्रशस्तानां योगानां निरोधः कुशलानां चोदीरणं कार्ये च विधिगमनं योगे संलीनता भणिता ॥ १ ॥ ] विविक्तशयनासनतारूपा पुनः संलीनता आरामादिषु स्त्रीपशुपण्डकादिरहितेषु यदवस्थानं, यदाहुर्महर्षयः—“आरामुज्जाणाइसु थीपसुपंडगविवज्जिए ठाणं । फलगाईण य गहणं तह भणियं एसणिज्जाणं ॥ १ ॥” [ आरामोद्यानादिषु स्त्रीपशुपण्डकविवर्जिते स्थानं । तथा एषणीयानां फलकादीनां ग्रहणं भणितं ॥ १ ॥ ] ६ ॥ चः समुच्चये, ‘बज्झो तवो होइ’त्ति एतदनशनादिकं बाह्यं तपो भवति, बाह्यत्वं चास्य बाह्यद्रव्याद्यपेक्षत्वात्, प्रायो बहिः शरीरस्य तापकत्वात् लौकिकैरपि तपस्तया ज्ञायमानत्वात् कुतीर्थिकैरपि स्वाभिप्रायेणासेव्यमानत्वाच्चेति ॥ २७० ॥ ‘पायच्छित्त’मित्यादि, इह चित्तं—जीवो भण्यते, ततः प्रायो—बाहुल्येन चित्तं—जीवं विशोधयति—मूलोत्तरगुणविषयातीचारजनितकर्ममलमलिनं निर्मलं करोतीति प्रायश्चित्तं, तत् पुनरालोचनादिकं दशधा, यदाहुः—“आलोयण पडिक्कमणे मीस विवेगे तहा विउस्सग्गे । तव छेय मूल अणवट्ठया य पारंचिए चेव” ॥१॥ इति [ आलोचना प्रतिक्रमणं मिश्रं विवेकस्तथोत्सर्गः । तपश्छेदो मूलमनवस्थाप्यं पाराञ्चिकं चैव ॥ १ ॥ ] ७ ॥ एतत्स्वरूपं चाष्टानवतिद्वारे न्यक्षेण वक्ष्यते, ‘विणए’त्ति विनीयते—क्षिप्यते अष्टप्रकारं कर्मानेनेति विनयः, स च ज्ञानदर्शनादिभेदात् सप्तधा, यदाहुः—“नाणे दंसणचरणे मणवयकाओवयारिओ विणओ । नाणे पंचपयारो मइनाणाईण सद्दहणं ॥ १ ॥ भत्ती तह बहुमाणो तद्दिट्ठत्थाण सम्मभावणया । विहिगहणब्भासोऽवि य एसो विणओ जिणाभिहिओ ॥ २ ॥” [ ज्ञाने दर्शने चारित्रे मनसि वाचि काये औपचारिको विनयः । ज्ञाने पञ्चप्रकारो—मतिज्ञानादीनां श्रद्धानं ॥१॥

रसानां—मतुब्लोपाद्विशिष्टरसवतां विकारहेतूनां दुग्धादीनां त्यागो—वर्जनं रसत्यागः ४ । 'कायकिलेसो'त्ति कायस्य—शरीरस्य क्लेशः—शास्त्राविरोधेन बाधनं कायक्लेशः, स च वीरासनाद्यासनकरणेन अप्रतिकर्मशरीरत्वकेशोल्लुञ्चनादिना च विचित्रः, यदवाचि—"वीरासणउक्कुडुगासणाइं लोयाइओ य विन्नेओ । कायकिलेसो संसारवासनिव्वेयहेउत्ति ॥ १ ॥ वीरासणाइसु गुणा कायनिरोहो दया य जीवेसु । परलोगमई य तहा बहुमाणो चेव अन्नेसिं ॥ २ ॥ निस्संगया अ पच्छापुरकम्मविवज्जणं च लोयगुणा । दुक्खसहत्तं नरगाइभावणाए य निव्वेओ ॥ ३ ॥" [ वीरासनोत्कटुकासनादि लोचादिकश्च विज्ञेयः । कायक्लेशः संसारवासनिर्वेदहेतुरिति ॥ १ ॥ वीरासनादिषु गुणाः कायनिरोधो दया च जीवेषु । परलोकमतिश्च तथा बहुमानश्चैवान्येषां ॥ २ ॥ निःसंगता च पश्चात्पुरःकर्मविवर्जनं च लोचगुणाः । दुःखसहत्वं नारकभावनया च निर्वेदः ॥ ३ ॥ ] ५ । 'संलीणया य'त्ति संलीनता—गुप्तता, सा चेन्द्रियकषाययोगविषया विविक्तशयनासनता चेति चतुर्धा, यदुक्तम्—"इंदियकसायजोए पडुच्च संलीणया मुणेयव्वा । तह य विवित्ता चरिया पन्नत्ता वीयराएहिं" ॥ १ ॥ [ इंद्रियकषाययोगान् प्रतीत्य संलीनता ज्ञातव्या । तथा विविक्ता चर्या प्रज्ञप्ता वीतरागैः ॥ १ ॥ ] तत्र श्रवणेन्द्रियेण शब्देषु मधुरादिभेदेषु रागद्वेषाकरणं श्रवणेन्द्रियसंलीनता, यदाहुः—"सद्देसु य भद्दयपावएसु सोयविसयमुवगएसु । तुट्ठेण व रुट्ठेण व समणेण सया न होयव्वं ॥ १ ॥" [ शब्देषु भद्रकपापकेषु श्रोत्रविषयमुपगतेषु । श्रमणेन सदा तुष्टेन रुष्टेन वा न भवितव्यं ॥ १ ॥ ] एवं चक्षुरादीन्द्रियेष्वपि भावनीयं, यथा—"रूवेसु य भद्दयपावएसु चक्खुविसयमुवगएसु । तुट्ठेण व रुट्ठेण व समणेण सया न होयव्वं ॥१॥" [ रूपेषु च भद्रकपापकेषु चक्षुर्विषय० ] इत्याद्यभिलापेनेति, कषायसंलीनता च कषायाणामनुदीर्णानामुदयनिरोधेन उदीर्णानां च निष्फलीकरणेन विज्ञेया. यदभ्यधायि—"उदयस्सेव निसेहो उदयप्पत्ताण वाऽफलीकरणं । जं इत्थ कसायाणं कसायसंलीणया एसा ॥ १ ॥"

थेत्येवमाद्यः, उक्तं च—“लेवडमलेवडं वा अमुगं दव्वं च अज्ज घेच्छामि । अमुगेण व दव्वेणं अह दव्वाभिग्गहो नाम ॥ १ ॥ ‘अमुगे-णं'ति चट्टुककरोटिकादिना, अट्ठ उ गोयरभूमी एलुयविक्खंभमित्तगहणं च । सग्गामपरग्गामो एवइअ घरा उ खेत्तंमि ॥ २ ॥ उज्जुग-गंतुं पच्चागई य गोमुत्तिआ पयंगविही । पेडा य अद्धपेडा अब्भिंतरवाहिसंबुक्का ॥ ३ ॥ काले अभिग्गहो पुण आई मज्झे तहेव अव-साणे । अप्पत्ते सइकाले आई विति मज्झि तइयंते ॥ ४ ॥” [ लेपकृदलेपकृद्वाऽमुकं वा द्रव्यमद्य ग्रहीष्यामि । अमुकेन वा द्रव्येणैष द्रव्या-भिग्रहो नाम ॥ १ ॥ अष्टैव गोचरभूमयः देहलीविष्कम्भमात्रग्रहणं च । स्वग्रामे परग्रामे इयन्ति गृहाणि तु क्षेत्रे ॥ २ ॥ ऋजु गत्वा-प्रत्यागतिश्च गोमूत्रिका पतङ्गवीथिः पेटा अर्धपेटा अभ्यन्तरशंबूका बाह्यशम्बूका ॥ ३ ॥ कालेऽभिग्रहः पुनरादौ मध्ये तथैवावसाने । अप्राप्ते स्मृतिकाले आद्यः द्वितीयो मध्ये तृतीयोऽन्त्ये ॥४॥ ] प्रतीतभिक्षावेलाया आदौ मध्येऽवसाने च कालविषयोऽभिग्रहः, तथा चाह—“अप्राप्ते सति भिक्षाकाले अटत आदिः—प्रथमः, मध्ये—भिक्षाकाल एवाटतो द्वितीयः, अन्ते—भिक्षाकालावसानेऽटतस्तृतीयोऽभिग्रहः” दि-तगपडिच्छगाणं हवेज सुहुमंपि मा हु अचियत्तं । इय अप्पत्ते अइए पवत्तणं मा उ सज्झंमि ॥ १ ॥ उक्खित्तमाइचरगा भावजुया खलु अभिग्गहा हुंति । गायंतो व रुयन्तो जं देइ निसन्नमाइ वा ॥ २ ॥” [ दायकप्रतीच्छकयोः सूक्ष्माऽप्यप्रीतिर्मा भूदिति अप्राप्तेऽतीते वा प्रवर्त्तनं—पर्यटनं मा भूदिति मध्ये ॥ १ ॥ उत्क्षिप्तादिचरकाः खल्वभिग्रहा भवन्ति गायन् वा रुदन् वा यद्ददाति निषण्णादि वा ॥ २ ॥] ‘उक्खित्तमाइचरगा'त्ति उत्क्षिप्तादिचरकाः, उत्क्षिप्तं भाजनात् पिण्डं चरति—गवेषयति यः स उत्क्षिप्तचरकः, एवं निक्षिप्ते भाजनादाविति गम्यते, “ओसक्कण अहिसक्कण परंमुहालंकिएयरो वावि । भावन्नयरेण जुओ अह भावाभिग्गहो नाम ॥ १ ॥” [ अवसर्पणाभिसर्पणं पराङ्मुखोऽलङ्कृत इतरो वापि । भावान्यतरेण युतः पुनः एष भावाभिग्रहो नाम ॥ १ ॥] ५ । ‘रसच्चाओ'त्ति

इत्यादि [ द्वात्रिंशत् किल कवला आहारः कुक्षिपूरको भणितः । पुरुषस्य महेलाया अष्टाविंशतिः कवला भवेयुः ॥ १ ॥ कवलस्य च प्रमाणं कुर्कुट्यण्डकप्रमाणमात्रमेव यद्वा अविकृतवदनो वदने क्षिपेद्विश्वस्तः ॥ २ ॥ ] सा च अल्पाहारादिभेदतः पञ्चविधा भवति, यदाहुः—"अप्पाहार १ अवड्ढा २ दुभाग ३ पत्ता ४ तहेव किंचूणा ५ । अट्ठ दुवालस सोलस चउवीस तहेक्कतीसा य ॥१॥" अयमत्र भावार्थः—अल्पाहारोनोदरिका नाम एककवलादारभ्य यावदष्टौ कवला इति, अत्र चैककवलमाना जघन्या अष्टकवलमाना पुनरुत्कृष्टा द्व्यादिकवलमानभेदा मध्यमा, एवं नवभ्यः कवलेभ्य आरभ्य यावद् द्वादश कवलास्तावदपार्धोनोदरिका,अत्रापि नवकवला जघन्या द्वादशकवलोत्कृष्टा शेषा तु मध्यमा, एवं त्रयोदशभ्य आरभ्य यावत् षोडश कवलाः तावद्द्विभागोनोदरिका, जघन्यादिभेदत्रयभावना पूर्ववत्, एवं सप्तदशभ्य आरभ्य यावन् चतुर्विंशतिः कवलास्तावत् प्राप्तोनोदरिका, जघन्यादित्रयभावना अत्रापि पूर्ववत्, एवं पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवलास्तावत् किञ्चिदूनोदरिका, जघन्यादिभेदत्रयं पूर्ववद्भावनीयं, एवमनेनानुसारेण पानेऽपि भणनीया, तथा स्त्रीणामप्येवं पुरुषानुसारेण द्रष्टव्या, भावत ऊनोदरिका क्रोधादिपरित्यागः, यत उक्तम्—"कोहाईणमणुदिणं चाओ जिणवयणभावणाओ य । भावेणोणोदरिआ पन्नत्ता वीयराएहिं ॥१॥ [ क्रोधादीनामनुदिनं त्यागो जिनवचनभावनाश्च भावेनोनोदरिका प्रज्ञप्ता वीतरागैः ॥१॥] २ । 'वित्तीसंखेवणं'ति वर्तते अनयेति वृत्तिः—भैक्ष्यं तस्याः सङ्क्षेपणं—सङ्कोचः तच्च गोचराभिग्रहरूपं, ते च गोचरविषया अभिग्रहा अनेकरूपाः, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो मया अद्य भिक्षायां गतेन लेपकार्यादेव कुन्ताग्रादिसंस्थितमण्डकादि वा ग्राह्यमित्यादयः, क्षेत्रत एकद्वित्र्यादिगृहस्वग्रामपरग्रामपेटार्धपेटादिलब्धं दायकेन देहलीजङ्घयोरन्तर्विधाय वा दत्तं गृहीष्यामीत्यादयः, कालतः पूर्वाह्णादौ सकलभिक्षाचरनिवर्त्तनावसरे वा पर्यटितव्यमित्यादयः, भावतो हसनगानरोदनादिक्रियाप्रवृत्तो बद्धो वा यदि प्रतिलाभयिष्यति ततोऽहमादास्ये न त्वन्य-

॥ २७० ॥ पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोऽवि य अब्भिंतरओ तवो होइ ॥ २७१ ॥ सम्ममकरणे बारस तवाइयारा तिगं तु विरिअस्स । मणवयकाया पावप- उत्ता विरियतिगअइयारा ॥ २७२ ॥

'अणसणे'त्यादि गाथाद्वयं, तत्र अश्यत इति अशनं न अशनं अनशनमाहारत्याग इत्यर्थः तत्पुनर्द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं—परिमितकालं, तत्पुनः श्रीमहावीरतीर्थे नमस्कारसहितादि षण्मासान्तं श्रीनाभेयतीर्थे संवत्सरपर्यन्तं, मध्यमतीर्थकरतीर्थे त्वष्ट मासान् यावत्, यावत्कथिकं पुनराजन्मभावि, तत्पुनश्चेष्टाभेदोपाधिविशेषतस्त्रिधा, यथा पादपोपगमनं इङ्गितमरणं भक्तपरिज्ञा चेति, एतेषां त्रयाणामपि स्वरूपं सप्तपञ्चाशदधिकशततमद्वारादवसेयमिति १ । 'ऊणोअरिय'त्ति ऊनमुदरं ऊनोदरं तस्य करणं भावे वुञि ऊणोदरिका, व्युत्पत्तिरेवं, अस्य प्रवृत्तिस्तूनतामात्रे, सा द्विधा—द्रव्यतो भावतश्च, द्रव्यत उपकरणभक्तपानविषया, तत्र उपकरणविषयोनोदरिका जिनकल्पिकादीनां तदभ्यासपरायणानां वाऽवबोद्धव्या, न पुनरन्येषां, तेषामुपध्यभावे समग्रसंयमपालनाऽभावात्, अथवाऽन्येषामप्यतिरिक्तोपकरणाग्रहणतो भवत्येवोनोदरता, यत उक्तम्—"जं वट्टइ उवगारे उवगरणं तं च होइ उवगरणं । अइरित्तं अहिगरणं अजओ अजयं परिहरंतो ॥ १ ॥" [ उपकरणं यद्वर्त्तते उपकारे तदेव भवत्युपकरणं । अतिरिक्तमधिकरणं अयतोऽयतं भुञ्जन् ॥ १ ॥] इति, 'परिहरंतो'त्ति आसेवमानः 'परिहारो परिभोगो' इति वचनात्, ततोऽयतश्च यत्परिभुञ्जानो भवतीत्यर्थः, भक्तपानोनोदरिका पुनरात्मीयाहारमानपरित्यागतो विज्ञेया, आहारमानं च—'बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलिआए अट्ठावीसं भवे कवला ॥ १ ॥ कवलस्स य परिमाणं कुक्कुडिअंडगपमाणमित्तं तु । जं वा अविगियवयणो वयणम्मि छुभिज्ज वीसंतो ॥ २॥"

साधुजुगुप्सा तदभावो निर्विद्वज्जुगुप्सं, तत एतेषां द्वन्द्वः, पुँल्लिङ्गनिर्देशश्च प्राकृतत्वात् ३ । तथा अमूढा—तपोविद्यातिशयादिकुतीर्थिक-
द्धिदर्शनेऽप्यमोहा—स्वभावादविचलिता सा च सा दृष्टिश्च—सम्यग्दर्शनं अमूढदृष्टिः, अथवा निर्गताः शङ्कितादिभ्यो ये ते निःशङ्कितनि-
ङ्काङ्क्षितनिर्विचिकित्सा जीवाः, अमूढा दृष्टिरस्येत्येवममूढदृष्टिश्च जीव एव, तत एते धर्मधर्मिणोरभेदोपचाराद्दर्शनाचारभेदा भवन्तीति ४ ।
तथा उपबृंहणं उपबृंहा—समानधार्मिकाणां क्षपणावैयावृत्त्यादिसद्गुणप्रशंसनेन तत्तद्गुणवृद्धिकरणं ५ । तथा स्थिरीकरणं तु धर्माद्विषीदतां
तत्रैव चाटुवचनचातुर्यादवस्थापनं, उपबृंहा च स्थिरीकरणं च उपबृंहास्थिरीकरणे ६ । तथा वात्सल्यं च प्रभावना च वात्सल्यप्रभावने,
तत्र वात्सल्यं—समानदेवगुरुधर्माणां भोजननिवसनदानोपकारादिभिः सम्माननं ७ । प्रभावना—धर्मकथाप्रतिवादिनिर्जयदुष्करतपश्चरणकर-
णादिभिर्जिनप्रवचनप्रकाशनं, यद्यपि च प्रवचनं शाश्वतत्वात् तीर्थकरभाषितत्वाद्वा सुरासुरनमस्कृतत्वाद्वा स्वयमेव दीप्यते तथापि दर्शन-
शुद्धिमात्मनोऽभीप्सुर्यो येन गुणेनाधिकः स तेन तत्प्रवचनं प्रभावयति, यथा भगवदार्यवज्रस्वामिप्रभृतिक इति ८ ॥ २६८ ॥ एते-
ऽष्टौ दर्शनाचाराः, **साम्प्रतं चारित्राचारानाह**—'पणिहाणजोगे'त्यादि, प्रणिधानं—चेतःस्वास्थ्यं तत्प्रधाना योगा—व्यापाराः प्रणि-
धानयोगाः तैर्युक्तः—समन्वितो यः साधुः पञ्चभिः समितिभिस्तिसृभिर्गुप्तिभिः कृत्वा, अथवा 'सुपां सुपो भवन्ती'ति वचनात् सप्तम्यर्थे
तृतीया, ततः पञ्चसु समितिषु तिसृषु गुप्तिषु विषये—एता आश्रित्य प्रणिधानयोगयुक्तो यः स एष चरणाचारः, आचाराचारवतोः कथ-
ञ्चिदभेदादिति, ज्ञेय इति शेषः, एतेषां त्रयाणामपि ज्ञानाचारादीनां विपर्यस्ततायां—अकालाविनयादौ शङ्कितत्वादौ अप्रणिधानरूपायां च
सत्यामतीचाराः—चित्तमालिन्यलक्षणा इति ॥ २६९ ॥ 'बारस तव'त्ति व्याख्यातुमाह—

**अणसणमूणोअरिआ वित्तीसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य वज्झो तवो होइ**

स्वाध्यायः कार्यो नान्यदा प्रत्यवायसम्भवात्, दृश्यते च लोकेऽपि कृष्यादेः कालकरणे फलं विपर्यये तु विपर्यय इति, यत उक्तम्—"कालंमि कीरमाणं किसिकम्मं वहुफलं जहा होइ। इय सव्वाविय किरिया नियनियकालंमि विन्नेया ॥ १ ॥ [काले क्रियमाणं कृषिकर्म वहुफलं यथा भवति। एवं सर्वोऽपि च क्रिया निजनिजकाले विज्ञेया ॥ १ ॥] इति १। तथा 'विणए'त्ति विनये—विनयविषये ज्ञानस्य ज्ञानिनां ज्ञानसाधनानां च—पुस्तकादीनामुपचाररूपः, यतो विनयेन—आसनदानाऽऽदेशकरणादिना पठनीयं न पुनरविनयेन—आसनदानाद्यकरणेन २। तथा 'वहुमाणे'त्ति वहुमानः—प्रीतिस्तद्विषये, यतो वहुमानेनैव—आन्तरचित्तप्रमोदलक्षणेन पठनादि विधेयं न पुनर्वहुमानाभावेनेति ३। तथा 'उवहाणे'त्ति उप—समीपे धीयते—ध्रियते सूत्रादिकं येन तपसा तदुपधानं—तपोविशेषः तद्विषये, यतो यद्यस्य सूत्रस्य अध्ययनोद्देशकादेस्तप उक्तं तत्तपः कृत्वैव तस्य पाठादि विधेयं नान्यथेति ४। तथा '(तहा)अनिण्हवणे'त्ति तथाशब्दः समुच्चये, निह्नवनमपलपनं न निह्नवनमनिह्नवनं तद्विषये, यतोऽनिह्नवेनैव पाठादि सूत्रादेर्विधेयं न पुनर्मानादिवशतः आत्मनो लाघवाद्याशङ्कया श्रुतगुरूणां श्रुतस्य वाऽपलापेनेति ५। तथा 'वंजणअत्थतदुभये' इति व्यञ्जनानि—ककारादीनि अर्थः—अभिधेयं तदुभयं च—व्यञ्जनार्थयोरुभयं ततः समाहारद्वन्द्वः, कोऽर्थः?—व्यञ्जनविषयेऽर्थविषये तदुभयविषये च ज्ञानाचारत्रयं भवति, एतत्त्रयानन्यथाकरणेन सम्यगुपयोगेन च यतः सूत्रादि पठनीयं नान्यथा ६-७-८, अत्र व्यञ्जनग्रहणमुपलक्षणं स्वरा अपि द्रष्टव्याः। एवमष्टविधः—अष्टप्रकारो ज्ञानस्य—श्रुतज्ञानस्याचारो—ज्ञानाराधनतत्पराणां व्यवहार इति ॥ २६७ ॥ अथ दर्शनाचारभेदानाह—'निस्संकिये'त्यादि, शङ्कितं शङ्का—सन्देहस्तस्याभावो निःशङ्कितं दर्शनस्य—सम्यक्त्वस्याचारः १। इत्येवमन्यत्रापि, तथा काङ्क्षितं काङ्क्षा—अन्यान्यदर्शनग्रहः तदभावो निष्काङ्क्षितं २। तथा विचिकित्सा—मतिविभ्रमः युक्त्यागमोपपन्नेऽप्यर्थे फलं प्रति सम्मोहः तदभावो निर्विचिकित्सं यद्वा विद्वज्जुगुप्सा—मलमलिना एते इत्यादि-

वेधो गवाश्वादीनामङ्कनं तेषामेव वर्धितकीकरणं करभाणां पृष्ठगालनं गवां च कर्णकम्बलच्छेदनादिकमिति, यदाहुः—"नासावेधोऽङ्कनं मुष्कच्छेदनं पृष्ठगालनम् । कर्णकम्बलविच्छेदो, निर्लाञ्छनमुदीरितम् ॥ १ ॥" १३ इति ॥ 'असतीपोष' इति असत्यो—दुःशीलास्तासां दासीसारिकादीनां पोषणं पोषोऽसतीपोषः, तत्र लिङ्गमतन्त्रं तेन शुकश्वादीनामपि पुंसां पोषणमसतीपोषः, यदवाचि—"मज्जारमोरमक्कडकुक्कुडसालहीअकुक्कुराईणं । दुट्ठित्थिनपुंसाईण पोसणं असइपोसणयं ॥ १ ॥" इति [ मार्जारमयूरमर्कटकुर्कुटशुककुर्कुरादीनां । दुष्टस्त्रीनपुंसकादीनां पोषणमसतीपोषणं ॥ १ ॥ ] एषां च पोषणं पापहेतुरेवेति १४ ॥ तथा 'जलाशयशोषो' जलाशयानां—सरःप्रभृतीनां शोषणमिति, तदुक्तं—"सरदहतलायसोसो वहुजलयरजीवखयगारी" [ सरोद्रहतटाकशोषो वहुजलचरजीवक्षयकारी ] १५ ॥ एतानि च पञ्चदशापि कर्मादानानि प्रतिपिद्धषड्विधजीववधादिमहासावद्यहेतुत्वाद्वर्जनीयानि, उपलक्षणं चैतद्वहुसावद्यानां कर्मणामेवञ्जातीयानां न पुनः परिगणनमिदमिति ॥ २६६ ॥ 'नाणाइअट्ठ'त्ति ज्ञानदर्शनचारित्राणां प्रत्येकमष्टावतीचारा—मालिन्यलक्षणाः, ते च प्रतिपक्षे आचारलक्षणे ज्ञाते सति सुज्ञाना भवन्ति इत्यतस्तावद् ज्ञानाचारान् आह—

काले विणए वहुमाणोवहाणे तहा अनिण्हवणे । वंजण अत्थ तदुभए अट्ठविहो नाणमायारो
॥ २६७ ॥ निस्संकिय निक्कंखिय निव्वितिगिच्छा अमूढदिट्ठी य । उववूह थिरीकरणे वच्छल्ल पभावणे अट्ठ ॥ २६८ ॥ पणिहाणजोगजुत्तो पंचहिं समिईहिं तीहिं गुत्तीहिं । चरणायारो विवरीययाई तिण्हंपि अइयारा ॥ २६९ ॥

'काले'त्यादि, काले—कालविषये ज्ञानाचारो भवतीति सर्वत्र सम्बन्धः, तत्र यो यस्याङ्गप्रविष्टादेः श्रुतस्य काल उक्तस्तस्य तस्मिन्नेव

णिज्यं तथा दुग्धतैलघृतदधिप्रभृतीनां ॥१॥ ] ९॥ तथा केशवाणिज्यं यत्र दासीदासहस्त्यश्वगवोष्ट्रमहिषबालेयादिजीवान् गृहीत्वा तत्रान्यत्र वा विक्रीणीते जीविकानिमित्तं तत् केशवाणिज्यं, यदाहुः—"मणुयाणं तिरियाणं विक्किणणं इत्थ अन्नदेसे वा । केसवणिज्जं भन्नइ गोगद्दहअस्समाईणं ॥ १ ॥" [ मनुजानां तिरश्चां विक्रयणमत्रान्यदेशे वा केशवाणिज्यं भण्यते गोगर्दभाश्वादीनां ॥ १ ॥ ] १० ॥ सजीवानां विक्रये केशवाणिज्यं, अजीवानां तु जीवाङ्गानां विक्रये दन्तवाणिज्यमिति विवेकः ॥२६४॥ तथा दवदानं यन्त्रवाहनं निर्लाञ्छनं असतीपोषः, एतैः सहितानि, सह जलाशयशोपेण वर्तन्ते सजलाशयशोपाणि, चः समुच्चये, कर्माणि भवन्ति पञ्चदश, तत्र 'दवदानं' दवस्य—दवाग्नेस्तृणादिदहननिमित्तं दानं—वितरणं दवदानं, तच्च द्विधा भवति—व्यसनात्—फलनिरपेक्षप्रवृत्तिरूपात्, यथा वनेचरा एवमेव तृणादावग्निं ज्वालयन्ति पुण्यबुद्ध्या वा—यथा मदीयमरणसमये इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति, अथवा जीर्णतृणदाहे सति नवतृणाङ्कुरोद्भेदाद्गावश्चरन्तीति, क्षेत्रे वा शस्यसम्पत्तिनिमित्तमग्निं ज्वालयन्तीति, यदुक्तं—"वणदवदाणमरण्णे दव्वग्गिदाणं तु जीववहजणयं ।" [ अरण्ये वनदवदानं दवाग्निदानं जीववधजनकं ]॥११॥ 'यन्त्रवाहन'मिति तिलेक्षुसर्षपैरण्डफलादिपीलननिमित्तं तत्तद्यन्त्राणां—घाणकादीनां अरघट्टादिजलयन्त्राणां च वाहनं—व्यापारणं शिलोदूखलमुशलादीनां विक्रयणं वा यन्त्रवाहनं, यन्त्रपीलनकर्मेत्यर्थः, उक्तं च—"सिलउक्खलमुसलघरट्टकंकयाईण जमिह विक्किणणं । उच्छुत्तिलपीलणं वा तं विंती जंतपीलणयं ॥ १ ॥" [ शिलोदूखलमुशलघरट्टकंकटादीनां यदिह विक्रयणं । इक्षुतिलपीडनं वा तत् ब्रुवते यन्त्रपीडनकर्म ॥ १ ॥ ] एतच्च पीलनीयतिलादिक्षोदात्तद्गतजीववधाच्च सदोपं, यतो लौकिका अपि भाषन्ते—"दशसूनासमश्चक्री, दशचक्रिसमो ध्वजः । दशध्वजसमा वेश्या, दशवेश्यासमो नृपः ॥ १ ॥" १२ इति । 'निर्लाञ्छन'मिति नितरां लाञ्छनं—अङ्गावयवच्छेदस्तेन कर्म—जीविका निर्लाञ्छनकर्म, तत्र गोमहिषोष्ट्रादीनां नासा-

रणपूर्वकं तद्विक्रयः, एतच्चोपलक्षणं अन्यदपि यदग्निसमारम्भपूर्वकमिष्टकाभांडादिपाकभ्राष्ट्रादिकरणेन जीवनं तदप्यङ्गारकर्म, यदाहुः—"अङ्गारविकयं इट्टयाणं कुंभारलोहगाराणं। सुन्नारभाडभुंजाइयाण कम्मं तमिंगालं ॥ १ ॥" [ अङ्गारविक्रय इष्टकानां कुम्भकारलोहकाराणां। सुवर्णकारभ्राष्ट्रभुञ्जकादीनां कर्म तदङ्गारकर्म ॥ १ ॥ ] ५ ॥ अतीचारता चैतेषां कृततत्प्रत्याख्यानस्य अनाभोगादिना अत्रैव प्रवृत्तेः, एवमन्यत्रापीति, एतत्स्वरूपाणि कर्माणि पञ्च, तथा वाणिज्यानि—क्रयविक्रयस्वरूपाणि, चः समुच्चये, विपलाक्षादन्तरसकेशविपयाणि, तत्र विषवाणिज्यं विपं—शृङ्गिकादि तच्चोपलक्षणमन्येषां जीवघातहेतूनामुपविषाणामस्त्रादीनां च तेपां विक्रयः, यदाहुः—"विसवाणिज्जं भन्नइ विसलोहप्पाणहणणविक्किणणं। धणुहसरखग्गछुरिआपरसुयकुद्दालियाईणं ॥ १ ॥" [ विपवाणिज्यं भण्यते विपलोहप्राणघातकविक्रयणं धनुःशरखड्गक्षुरिकापर्शूकुद्दालिकादीनां ॥ १ ॥ ] ६ ॥ तथा लाक्षावाणिज्यं वहुजीवजालकस्थानलाक्षादिविक्रयः, यदवाचि—"लक्खाधायइगुलियामणसिलहरिआलवज्जलेवाणं। विक्किणणं लक्खवणिज्जं तुयरीसकूडमाईणं ॥ १ ॥" [ लाक्षाधातकीगुलिकामनःशिलहरितालवज्रलेपानां। विक्रयणं लाक्षावाणिज्यं तूरीकूटादीनां ॥ १ ॥ ] ७ ॥ तथा दन्तवाणिज्यं यत्र प्रथमत एव पुलिन्द्रादीनां हस्तिदन्तशङ्खपूतिशचर्मकेशादीनामानयननिमित्तं मूल्यं ददाति आकरे वा गत्वा स्वयं क्रीणाति ततस्ते वनादौ गत्वा हस्त्यादीन् तदर्थं घ्नन्ति तद्विक्रयपूर्वं यदाजीवनं तद्दन्तवाणिज्यं, यदवोचन्—"नहदंतचमरखल्लाभेरिकवड्डा य सिप्पिसंखा य। कत्थूरियपूइसमाइयं च इह दंतवाणिज्जं ॥ १ ॥" [ नखदन्तचामरखल्लाभेरीकपर्दकाः शुक्तिशङ्खाश्च। कस्तूरिकापूतिशादिकं चेह दन्तवाणिज्यं ॥ १ ॥ ] अनाकरे तु दन्तादेर्ग्रहणे विक्रयणे च न दोषः ८ ॥ तथा रसवाणिज्यं मद्यादिविक्रयः, यदभ्यधायि—"महुमज्जमंसमक्खण चउण्ह विगईण जमिह विक्किणणं। रसवाणिज्जं तह दुद्धतिल्लघयदहिअपमिईणं ॥१॥" [ मधुमद्यमांसम्रक्षणानां चतसृणां विकृतीनां यदिह विक्रयणं। रसवा-

॥२६५॥ दवदाण[11] जंतवाहण[12] निल्लंछण[13] असइपोसं[14] सद्दियाणि । सजलासयसोसाणि अ कम्माइँ हवंति पन्नरस ॥ २६६ ॥

'भाडी'त्यादि गाथाद्वयम्, तत्र भाटककर्म यत् स्वकीयगव्यादिना परकीयभाण्डं भाटकेन वहति अन्येषां वा वलीवर्दशकटादीन् भाटकेनैवार्पयति, यदाहुः—"नियएणुवगरणेणं परकीयं भाडएण जो वहइ । तं भाडकम्ममहवा वसहाइसमप्पणेऽन्नेसिं ॥ १ ॥" इति [ निजकेनोपकरणेन परकीयं भाटकेन यो वहति । तत् भाटककर्म अथवा वृषभादिसमर्पणेऽन्येषां ॥ १ ॥ ] १ ॥ 'फोडि'त्ति स्फोटनकर्म—वापीकूपतडागादिखननं यद्वा हलकुद्दालादिना भूमिदारणं पाषाणादिघट्टनं वा, यवादिधान्यानां सक्त्वादिकरणेन विक्रयो वा, यदुक्तं—"जवचणयागोहुममुग्गमासकरडिप्पभिइधन्नाणं । सत्तुयदालिकणिक्कातंडुलकरणाइं फोडणयं ॥ १ ॥ अहवा फोडीकम्मं सीरेणं भूमिफोडणं जं तु । उण्डत्तणयं च तहा तहा य सिलकुट्टयत्तं चे ॥ २ ॥ति" [ यवचणकगोधूममुद्गमापकरटिप्रभृतिधान्यानां सक्तुकदालिकणिकातन्दुलकरणानि स्फोटनकर्म ॥ १ ॥ अथवा स्फोटनकर्म हलेन भूमिस्फोटनं यत्तु । सूडनं च तथा तथा च शैलकुट्टकत्वं च ॥ २ ॥ ] २ ॥ 'साडी'ति शकटकर्म, शकटानां तदङ्गानां च चक्रोर्ध्यादीनां स्वयं परेण वा वृत्तिनिमित्तं निष्पादनं विक्रयो वाहनं वा, यदाहुः—"शकटानां तदङ्गानां, घटनं खेटनं तथा । विक्रयश्चेति शकटजीविका परिकीर्त्तिता ॥ १ ॥" ३ ॥ 'वण'त्ति वनकर्म यत् छिन्नानामच्छिन्नानां च तरुखण्डानां पत्राणां पुष्पाणां फलानां च विक्रयणं वृत्तिकृते तद्वनकर्म, यद्यत्र स्फोटकर्मत्वेनोक्तं मुद्गादिकणानां घरट्टादिना द्वैधीकरणं दाल्यादिरूपं गोधूमादीनां च घरट्टशिलापुत्रकादिना चूर्णीकरणं पिष्टकादिरूपं तदपि वनकर्मेति केचिन्मन्यन्ते, यदाहुः—"छिन्नाच्छिन्नवनपत्रप्रसूनफलविक्रयात् । कणानां दलनोत्पेषात्, वृत्तिश्च वनजीविका ॥ १ ॥" ४ ॥ 'अंगार'त्ति अङ्गारकर्म—यदङ्गारक-

नुष्यापेक्षया मानुपत्वपर्याये यो वर्तते लोकः—प्राणिवर्गः स इहलोकः तद्व्यतिरिक्तस्तु परलोकः, तत्रेहलोकं प्रति आशंसाप्रयोगो यथा—अनेनाऽऽराधनादिकष्टेन मृतः सन्नुन्मत्तद्विपघटोद्भटतरलतरतुंगतुरङ्गराजीविराजमानसुन्दरमन्दुराशतकान्तः काञ्चननिस्सपत्नरत्नोदण्डमणिखण्डप्रमुखमहासमृद्धिसम्भारविनिर्जितवैश्रमणकोशः क्षितिपतिर्विशुद्धबुद्धिरमात्यो वा ज्येष्ठः श्रेष्ठी वा जन्मान्तरे अहं भवेयमित्येवं नरपत्यादिसमृद्धिप्रार्थना १ तथा परलोकाशंसाप्रयोगः—कमनीयकामिनीनयननलिननिपीयमानलसल्लावण्यपुण्यपीयूषः सुरपतिरहं स्यां देवो वा इत्यादिप्रार्थना २ तथा मरणं प्रत्याशंसाप्रयोगः तथाविधप्रान्तक्षेत्रप्रतिपन्नानशनो लोकैः क्रियमाणप्रभावनाकारिपूजाद्यभावे गाढतररोगपीडायां वा यद्यहं झटित्येव म्रिये तदा भव्यं भवेदिति प्रार्थना ३ तथा जीवितं—प्राणधारणं तदाशंसायाः—तदभिलापस्य प्रयोगो, यथा—बहुकालमहं जीवेयमिति, अयं हि कृतानशनः कश्चित् कर्पूरश्रीचन्दनवस्त्रमाल्यधवलरासकादिविशिष्टपूजादर्शनाद् बहुपरिवारावलोकनान्निरन्तरागच्छदतुच्छजननिकरेण धन्योऽयं पुण्यवानित्यादिक्रियमाणश्लाघाश्रवणात् सङ्घादिधार्मिकजनोपबृंहणाच्चैवं मन्यते, यथा—प्रतिपन्नानशनस्यापि चिरतरं जीवितमेव मे श्रेयः यत एवंविधा मदुद्देशेन शासनप्रभावना विभूतिश्च वर्तत इति ४ तथा कामौ—शब्दरूपे भोगाः—गन्धरसस्पर्शास्तेषामाशंसा, यद्यनेन कष्टाराधनाविधिना मम जन्मान्तरे विशिष्टाः कामभोगाः सम्पद्यन्ते तदा भव्यं भवतीत्यादिविकल्परूपा, एते मरणान्ते पञ्चातीचाराः ५, एतैः समयविधिकृताऽप्याराधना दूष्यत इति न कर्तव्या एवंविधा आशंसाः, यत उक्तम्—"आशंसया विनिर्मुक्तोऽनुष्ठानं सर्वमाचरेत् । मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः ॥ १ ॥" 'पन्नरस कम्म'त्ति व्याख्यायते, तत्राह—

भाडी फोडी साडी वणअंगारस्सरूवकम्माइं । वाणिज्जाणि अ विसलक्खदंतरसकेसविसयाणि

वाविशिष्टं कायोत्सर्गमानं क्रियते किन्तु यो यत्परिमाणः कायोत्सर्ग उक्तस्तावन्तं कालं प्रतीक्ष्य तत ऊर्ध्वं नमस्कारमभणित्वा पारयतो भङ्गः, अपरिसमाप्तौ च पठतोऽपि भङ्ग एव, तस्मात् यो यत्परिमाणः कायोत्सर्गस्तस्मिन् पूर्ण एव 'नमो अरहंताण'मिति वक्तव्यं, तथा मार्जारमूषकादेः पुरोगमनेऽग्रतः सरतोऽपि न भङ्गः, तथा राजसम्भ्रमे चौरसंभ्रमे वाऽस्थानेऽपि नमस्कारमुच्चारयतो न भङ्गः, तथा सर्पदष्टे आत्मनि परे वा साध्वादौ सहसा उच्चारयतो न भङ्ग इति ॥ इदानीं 'चउवीससमहियसयं गिहिपडिक्कमणाइयाराण'मिति पष्ठं द्वारं विवृण्वन्नाह—

**पण संलेहण पन्नरस कम्म नाणाइ अट्ठ पत्तेयं । बारस तव विरियतिगं पण सम्म वयाइं पत्तेयं ॥ २६३ ॥ इहपरलोयासंसप्पओग मरणं च जीविआसंसा । कामे भोगे व तहा मरणंते पंच अइआरा ॥ २६४ ॥**

'पणे'त्यादि, पञ्च संलेखनायां अतीचारा इति सर्वत्र योज्यं, पंचदश 'कम्म'त्ति कर्मादानानि, ज्ञानादिषु—ज्ञानदर्शनचारित्रेषु अष्टौ प्रत्येकमित्यष्टकत्रयस्य मीलने चतुर्विंशतिः भवंति विंशतिक्षिप्तेषु जाताश्चत्वारिंशत् ४४ द्वादश तपसि—तपोविषये, लुप्तसप्तमीकमिदं द्रष्टव्यं, चतुश्चत्वारिंशत्मध्ये द्वादशसु क्षिप्तेषु षट्पञ्चाशज्जातानि वीर्यत्रिके—मनोवचनकायवीर्यलक्षणे, अत्र सप्तम्यर्थे प्रथमा, वीर्यत्रिके क्षिप्ते एकोनषष्टिः जाताः तथा सम्यक्त्वे पञ्चातीचाराः, तथा व्रतानि—अणुव्रतादीनि द्वादश तेषु प्रत्येकं पञ्च पञ्चातीचारा इति व्रतेषु षष्टिः, एते च सर्वे मिलिताश्चतुर्विंशत्यधिकं शतं ॥२६३॥ इदानीं क्रमेणैव सर्वानेतान् स्वयमेव व्याचष्टे—'इहपरलोए'त्यादि, आशंसनमाशंसा—अभिलाषः तस्याः प्रयोगो—व्यापारणं करणमाशंसाप्रयोगः, आशंसैव वा प्रयोगो—व्यापार आशंसाप्रयोगः, तत्र इह—अस्मिन् प्रज्ञापकम-

यतः कायोत्सर्गकरणं शीर्पोत्कम्पितदोपः १५ तथा कायोत्सर्गे छिद्यमानेपु केनचिद् गृहस्थादिना कायोत्सर्गव्यवस्थितप्रत्यासन्नप्रदेशवर्तिपु हरितादिपु तं निवारणार्थं मूक इव हुंहुमित्यव्यक्तं शब्दं कुर्वंस्तिष्ठत्युत्सर्गे इति मूकदोषः १६ ॥ २५९ ॥ 'अंगुली'त्यादि, तथाऽऽलापकगणनार्थमङ्गुलीश्चालयन् तथा योगानां संस्थापनार्थं व्यापारान्तरनिरूपणार्थं भ्रुवौ चालयन् भ्रूसंज्ञां कुर्वन् चकारादेवमेव वा भ्रूनृत्तं कुर्वन्नुत्सर्गे तिष्ठति इति अङ्गुलिकाभ्रूदोपः १७ ॥ २६० ॥ तथा 'काउस्सग्गंमी'त्यादि, कायोत्सर्गस्थितो निष्पद्यमानसुरेव बुडबुडाशब्दं—अव्यक्ताऽऽरावं करोतीति, वारुणीमत्तस्येव घूर्णमानस्य स्थानं वारुणीदोप इत्यन्ये १८, अनुप्रेक्षमाणो—नमस्कारादिकं चिन्तयन्नुत्सर्गस्थितो वानर इव चालयत्योष्ठपुटाविति प्रेक्षादोषः १९ इत्येकोनविंशतिः ॥ २६१ ॥ अन्ये त्वेकविंशतिं मन्यन्ते, तत्र स्तम्भकुड्यदोपेण स्तम्भदोपः कुड्यदोपश्चेति ( ग्रन्थाग्रम् २००० ) द्वौ विवक्षितौ, तथाऽङ्गुलिभ्रूदोपेणापि अङ्गुलिदोपो भ्रूदोपश्चेत्येवमेकविंशतिः, एके चान्यानपि कायोत्सर्गदोषानाहुः, यथा—'निष्ठीवनं वपुःस्पर्शः, प्रपञ्चबहुला स्थितिः । सूत्रोदितविधेर्न्यूनो, वयोऽपेक्षाविवर्जनम् ॥ १ ॥ कालापेक्षाव्यतिक्रान्तिर्व्याक्षेपासक्तचित्तता । लोभाकुलितचित्तत्वं, पापकार्योद्यमः परः ॥ २ ॥ कृत्याकृत्यविमूढत्वं, पट्टकाद्युपरिस्थितिः' । इति ॥ इदानीमेतानुपसंहरन्नाह—'एए'इत्यादि, एते—पूर्वभणिता दोपाः कायोत्सर्गं कुर्वता विवुधेन सम्यक् परिहर्तव्याः, जिनैः—तीर्थकरैः प्रतिपिद्धा—निवारिता इतिकृत्वा, जिनाज्ञाकरणं हि सर्वत्र श्रेयस्करमिति ॥ २६२ ॥ अयं च कायोत्सर्ग एतैर्ज्योतिःस्पर्शादिभिः कारणैश्चलनेऽपि न भज्यते, तथाहि—'अगणिओ छिंदिज्ज व वोहीखोभाइ दीहडको वा । आगारेहिं अभग्गो उस्सग्गो एवमाईहिं ॥ १ ॥' यदाऽग्नेर्विद्युतो वा ज्योतिः स्पृशति तदा प्रावरणायोपधिग्रहणेऽपि न भङ्गः, ननु नमस्कारमेवाभिधाय किमिति तद्ग्रहणं न करोति ?, उच्यते, नात्र नमस्कारेण पारणमे-

इत्यादि, स्तम्भे वा कुड्ये वा अवष्टभ्य स्थानं स्तम्भकुड्यदोषः ३ तथा माले—उपरितनभागे उत्तमाङ्गमवष्टभ्य करोत्युत्सर्गमिति मालदोषः ४ ॥ २५० ॥ 'सवरी'त्यादि, शवरी—पुलिन्दिका वसनविरहिता कराभ्यां सागारिकं—गुह्यं यथा स्थगयति एवं स्थगयित्वा गुह्यदेशं कराभ्यां करोत्युसर्गमिति शवरीदोषः ५ ॥ २५१ ॥ 'अवणे'त्यादि, अवनामितोत्तमाङ्गः कुलवधूरिव तिष्ठन् करोत्युत्सर्गमिति वधूदोषः ६ निगडनियन्त्रित इव चरणौ विस्तार्याथवा मीलयित्वा करोत्युत्सर्गमिति निगडदोषः ७ ॥ २५२ ॥ 'काऊणे'त्यादि, कृत्वा चोलपट्टमविधिना नाभिमण्डलस्योपरि अधस्ताच्च जानुमात्रं तिष्ठति कायोत्सर्गे इति लम्बोत्तरदोषः ८ ॥ २५३ ॥ 'पच्छाई'त्यादि, अवच्छाद्य—स्थगयित्वा स्तनौ चोलपट्टेन दंशादीनां रक्षणार्थं अथवा अनाभोगदोषेण—अज्ञानदोषेण करोत्युत्सर्गमिति स्तनदोषः ९ ॥ २५४ ॥ ऊर्ध्विकादोषो द्विधा—बाह्योर्ध्विकादोषोऽभ्यन्तरोर्ध्विकादोषश्च, तत्र द्वावपि क्रमेण आह—'मेलित्तु'इत्यादि, मीलयित्वा पार्ष्णी चरणावग्रभागे विस्तार्य बाह्यतो—बहिर्मुखं तिष्ठत्युत्सर्गे एष बहिःशकटोर्ध्विकादोषो ज्ञातव्यः ॥ २५५ ॥ तथा 'अंगुट्ठे'त्यादि, अङ्गुष्ठौ द्वावपि मेलयित्वा विस्तार्य पार्ष्णी तु बाह्यतस्तिष्ठत्युत्सर्गे एष भणितोऽभ्यन्तरशकटोर्ध्विकादोषः१० ॥ २५६ ॥ 'कुप्पमि'त्यादि, कल्पं वा—पट्टीं पट्टं वा—चोलपट्टं संयतीव स्कन्धदेशयोरुपरि प्रावृत्य तिष्ठत्युत्सर्गे इति संयतीदोषः ११, खलीनमिव—कविकमिव रजोहरणमग्रतः कृत्वा तिष्ठत्युत्सर्गे इति खलीनदोषः १२, वाऽत्र समुच्चये, अन्ये खलीनार्त्तवाजिवदूर्ध्वाधः—शिरःकम्पनं खलीनदोषमाहुः ॥ २५७ ॥ तथा 'भामेई'त्यादि, दृष्टिं भ्रमयति चलचित्तो वायस इव इतस्ततो नयनगोलकभ्रमणं दिग्निरीक्षणं वा कुरुते उत्सर्गे इति वायसदोषः १३, षट्पदिकाभयेन कपित्थवद् वृत्ताकारत्वेन संवृत्य जङ्घादि मध्ये कृत्वा तिष्ठत्युत्सर्गे इति कपित्थदोषः १४ एवमेव मुष्टिं बध्वा स्थानमित्यन्ये ॥ २५८ ॥ 'सीसमि'त्यादि, भूताविष्टस्येव शीर्षं कम्प-

कीउं[12] ॥ २५७ ॥ भामेइ तह य दिट्ठिं चलचित्तो वायसोव्व उस्सग्गे[13]। छप्पइयाण भएणं कुणइ य पट्टं कविट्ठं वं[14] ॥ २५८ ॥ सीसं पकंपमाणो जक्खाइट्ठोव्व कुणइ उस्सग्गं[15] । मूडव्व हूहुयंतो तहेव छिज्जंतमाईसु[16] ॥ २५९ ॥ अंगुलिभमुहाओऽवि अ चालिंतो कुणइ तह य उस्सग्गं। आलावगगणणट्ठं संठवणत्थं च जोगाणं[17] ॥ २६० ॥ काउस्सग्गंमि ठिओ सुरा जहा] बुडबुडेइ अव्वत्तं[18] । अणुपेहंतो तह वानरोव्व चालेइ ओट्ठपुडे ॥ २६१ ॥ एए काउस्सग्गं कुणमाणेण विबुहेण दोसा उ । सम्मं परिहरियव्वा जिणपडिसिद्धत्तिकाऊणं ॥ २६२ ॥

'घोडगे'त्यादि गाथाद्वयं, तत्रैते कायोत्सर्गे भवंति दोषा एकोनविंशतिरिति सण्टङ्कः, कायस्य—शरीरस्य स्थानमौनध्यानक्रियाव्यतिरेकेणान्यत्रोच्छ्वसितादिभ्यः क्रियांतराध्यासमाश्रित्य य उत्सर्गः—त्यागो 'नमोऽरिहंताण'मिति वचनात् पूर्वं स कायोत्सर्गः, स च द्वेधा—चेष्टायामभिभवे च, चेष्टायां—गमनागमनादौ ऐर्यापथिक्यादिप्रतिक्रमणभावी, अभिभवे च सुरादिविधीयमानोपसर्गजयार्थं, यदुक्तम्—"सो उस्सग्गो दुविहो चेट्ठाइ अभिभवे य नायव्वो। भिक्खायरिआइ पढमो उवसग्गभिजुंजणे बीओ ॥ १ ॥" त्ति [ स उत्सर्गो द्विविधः चेष्टायामभिभवे च ज्ञातव्यः भिक्षाचर्यादिषु प्रथमः उपसर्गाभियोजने द्वितीयः ॥ १ ॥ ] स च दोषरहितो विधीयमानो निर्जराहेतुर्भवति, दोषाश्चैते—घोटकलतास्तम्भकुड्यमालशबरीवधूनिगडलम्बोत्तरस्तनोर्द्धिकासंयतीखलीनवायसकपित्थशीर्षोत्कम्पितमूकअङ्गुलीभृकुटिवारुणीप्रेक्षा इत्येकोनविंशतिः ॥२४७–२४८॥ इदानीं नामतोऽभिहितानेतान् स्वयमेव विवृणोति—'आस'इत्यादि, आकुञ्चितैकपादस्य घोटकस्येव स्थानं घोटकदोषः १ कम्पते कायोत्सर्गे लतेव खरपवनसङ्गेनेति लतादोषः २ ॥ २४९ ॥ 'खंभे'

तीतं च दधि वर्जनीयं, जीवसंसक्त्या प्राणातिपातादिलक्षणदोपसंभवात्, एतानि द्वाविंशतिसङ्ख्यानि वर्जनीयानि वस्तूनि कृपापरीतचेतसः सन्तो हे भव्यजना ! वर्जयत—परिहरतेति ॥ २४६ ॥ इदानीं 'उस्सग्गो'त्ति पञ्चमं द्वारमाह—

घोडग लयां य खम्भे कुड्डे माले य सबरि वहुनियले । लंबुत्तर थणे उद्धी संजय खलिणे य वायस कविट्ठे १४ ॥ २४७ ॥ सीसोकंपिय मूई अंगुलिभमुहा य वारुणी पेहा । एए काउस्सग्गे हवंति दोसा इगुणवीसं ॥ २४८ ॥ आसोव्व विसमपायं आउंटावित्तु ठाइ उस्सग्गे । कंपइ काउस्सग्गे लयव्व खरपवणसंगेणं ॥ २४९ ॥ खंभे वा कुड्डे वा अवठंभिय कुणइ काउसग्गं तु । माले य उत्तमंगं अवठंभिय कुणइ उस्सग्गं ॥२५०॥ सवरी वसणविरहिया करेहि सागारिअं जह ठएइ । ठइऊण गुज्झदेसं करेहि इअ कुणइ उस्सग्गं ॥ २५१ ॥ अवणामिउत्तमंगो काउस्सग्गं जहा कुलवहुव्व । नियलियआ विव चरणे वित्थारिय अहव मेलविउं ॥ २५२ ॥ काऊण चोलपट्टं अविहीए नाहिमंडलस्सुवरिं । हेट्ठा य जाणुमेत्तं चिट्ठइ लंबुत्तरुस्सग्गं ॥ २५३ ॥ पच्छाइऊण य थणे चोलगपट्टेण ठाइ उस्सग्गं । दंसाइरक्खणट्ठा अहवाऽणाभोगदोसेणं ॥ २५४ ॥ मेलित्तु पण्हियाओ चलणे वित्थारिऊण वाहिरओ । काउस्सग्गं एसो वाहिरउद्धी मुणेयव्वो ॥ २५५ ॥ अंगुट्ठे मेलविउं वित्थारिय पण्हिआउ वाहिंति । काउस्सग्गं एसो भणिओ अब्भिंतरुद्धित्ति ॥ ॥ २५६ ॥ कप्पं वा पट्टं वा पाउणिउं संजइव्व उस्सग्गं । ठाइ य खलिणं व जहा रयहरणं अग्गओ

दुद्धं दहि नवणीयं घयं तहा तेल्लमेव गुड मज्जं । महु मंसं चेव तहा ओगाहिमगं च विगईओ ॥ २१७ ॥ गोमहिसुट्टीपसूणं एलग खीराणि पंच चत्तारि । दहिमाइयाइं जम्हा उट्टीणं ताणि नो हुंति ॥ २१८ ॥ चत्तारि हुंति तेल्ला तिल अयसि कुसुंभ सरिसवाणं च । विगईओ सेसाणं डोलाईणं न विगईओ ॥ २१९ ॥ दवगुडपिंडगुडा दो मज्जं पुण कट्ठपिट्ठनिप्फन्नं । मच्छियकुत्तिय-भामरभेयं च महुं तिहा होई ॥ २२० ॥ जलथलखहयरमंसं चम्मं वस सोणियं तिभेयं च । आइ-ल्ल तिण्णि चलचल ओगाहिमगं च विगईओ ॥ २२१ ॥ खीरदहीवियडाणं चत्तारि उ अंगुलाणि संसट्ठं । फाणियतिल्लघयाणं अंगुलमेगं तु संसट्ठं ॥ २२२ ॥ महुपुग्गलरसयाणं अद्धङ्गुलयं तु होइ संसट्ठं । गुलपुग्गलनवणीए अद्दामलयं तु संसट्ठं ॥ २२३ ॥ विगई विगइगयाणि य अणंतका-याणि वज्जवत्थूणि । दस तीसं वत्तीसं बावीसं सुणह वन्नेमि ॥ २२४ ॥ दुद्धं दहि तिल्लं नवणीय घयं गुडं महुं मंसं मज्जं पंकं च । पणं चउ चउ चउ चउ दुगतिगं तिगं दुगं एगंपडिभिन्नं ॥ २२५ ॥

'दुद्ध'मित्यादि, दुग्धं दधि नवनीतं घृतं तथा तैलमेव गुडश्च मद्यं चेति गुडमद्यं मधु मांसं चैव तथाऽवगाहिमकं च–अवगाहेन कृतं–घृततैलबोलेन निर्वृत्तमवगाहिमं तदेव अवगाहिमकं च, एता दश विकृतयो, मनसो विकृतिहेतुत्वादिति ॥ २१७ ॥ इदानीमेतासां यथास्वं भेदानाह—'गोमहिसु'इत्यादि, गवां महिषीणामुष्ट्रीणां पशूनां–छागलिकानां एलकानां गड्डरिकाणामित्यर्थः सम्बधीनि क्षीराणि पञ्च विकृतयः, न शेषाणि मानुषीक्षीरादीनि, एलक इत्यत्र षष्ठीबहुवचनं लुप्तं द्रष्टव्यं, तथा चत्वारि–प्रत्येकं चतुर्भेदानि दध्यादीनि–

दधिनवनीतघृतानि, आह–कथं चत्वार्येव भवन्ति ? पञ्च कथं क्षीरवन्न भवन्ति ?, तत्राह—यस्मादुष्ट्रीणां दुग्धे तानि न भवन्ति, सरढस्यैव भावादिति ॥ २१८ ॥ 'चत्तारी'त्यादि, उत्तरत्र स्थितस्य चस्यात्र सम्बन्धात्तैलानि च चत्वारि भवन्ति विकृतय इति सण्टङ्कः, केषां सम्बन्धीनि ?, तत्राह–तिलअतसीकुसुम्भसर्षपाणां, शेषाणां डोलादीनां मधुकफलादीनां आदिशब्दान्नालिकेरएरण्डार्शिंशपादीनां सम्बन्धीनि तैलानि न विकृतयः अत्र च तेल्ला इति प्राकृतत्वात्पुंसा निर्देशः ॥ २१९ ॥ 'दवे'त्यादि, गुडे द्वौ भेदौ–द्रवगुडः पिण्डगुडश्च, तौ द्वावपि विकृती, तथा मद्ये द्वौ भेदौ एकं काष्ठैः–इक्षुतालादिभिर्निष्पन्नं अपरं पिष्टैः–पष्टिकाकोद्रवादितण्डुलैर्निष्पन्नं, तौ द्वावपि विकृती, तथा मधु त्रिभेदं–मक्षिकाकृतं कुत्तिकाकृतं भ्रमरकृतं चेति त्रिधा–त्रिप्रकारमपि विकृतिर्भवति ॥ २२० ॥ 'जले'त्यादि, मांसं त्रिभेदं, जलचराणां—मत्स्यादीनां सम्बन्धि स्थलचराणां–अजमहिषशूकरशशकहरिणादीनां सम्बन्धि खचराणां–लावकचटिकादीनां सम्बन्धि, अथवा अन्यथा मांसत्रैविध्यं–चर्म वसा शोणितं चेति, एतच्च त्रिविधमपि विकृतिर्भवति, अवगाहिमकं पुनर्घृतेन वा तैलेन वा भृतायां तापिकायां चलचलेतिशब्दं कुर्वाणं सुकुमारिकादि यदा पच्यते तदेको घाणः पुनस्तेनैव घृततैलेन द्वितीयः पुनस्तेनैव तृतीयो विकृतिर्भवति, यदि पुनस्तेनैव घृतेन तैलेन वा चतुर्थो घाणः पच्यते तदाऽसौ विकृतिर्न भवति, योगवाहिनां निर्विकृतिकप्रत्याख्यानेऽपि कल्पते, अथ तापिका एकेनैव पूपकेन खज्जकेन वा सकलाऽपि भृता तदा तत्रैव द्वितीयः पूपकादिः क्षिप्तो न विकृतिर्भवति, निर्विकृतिकानामपि कल्पत एव सः, परं यदि सम्यग् ज्ञायतेऽयं चतुर्थोऽयं द्वितीयो घाणः प्रथमक्षिप्तघृतादिना पक्व इति, यदा पुनर्द्वितीयादिघाणेषु तापिकायामपरं घृतादि प्रक्षिप्तं चतुर्थादिर्वा अयं घाण इति सम्यग् न ज्ञातं तदा न कल्पत एवेति ॥ २२१ ॥ गृहस्थसंसृष्टस्याकारस्य विशेषतः स्वरूपमभिधीयते–गृहस्थैरोदनादिर्दध्यादिना स्वप्रयोजनाय संसृष्टः–संश्लेषित इति गृहस्थसंसृष्टः, तत्राऽऽह—'खीरदही'त्यादि, क्षीरदधि-

विकटानां चत्वार्यङ्गुलानि संसृष्टं न विकृतिर्भवति, अयमभिप्रायः—कूरः क्षीरमिश्रितः कृतः, तत्र कूरस्योपरि यदि चत्वार्यङ्गुलानि क्षीरं चटितं भवति तदा न विकृतिर्भवति, निर्विकृतिकानां कल्पते, यदा तु पञ्चमाङ्गुलारम्भो भवति तदा विकृतिरेव, न कल्पते निर्विकृतिकानामित्यर्थः, एवं दध्नो विकटस्य च वक्तव्यं, तथा फाणितेन—द्रवगुडेन मिश्रिते कूरठोठिकादौ यद्येकमङ्गुलमुपरि चटितं भवति तदा न विकृतिः, एवं तैलघृतयोरपि वक्तव्यम् ॥ २२२ ॥ 'महुपुग्गले'त्यादि, मधूनि च पुद्गलानि—मांसानि च तेषां रसैः संसृष्टम्—अङ्गुलस्यार्धं संसृष्टं भवति, अङ्गुलार्धात्परतो विकृतिरेवेति, गुलपुद्गलनवनीते—एतद्विषये एतैः संसृष्टमितियावत् आर्द्रामलकं तु, तुशब्दस्यावधारणार्थत्वादार्द्रामलकमेव न विकृतिर्भवति, आर्द्रामलकं तु शणवृक्षसम्बन्धी मुकुरः, अयमर्थः—गुडमांसनवनीतखण्डैरार्द्रामलकप्रमाणैर्बहुभिरपि संसृष्टमोदनादिकं न विकृतिर्भवति, एतदीयेनैकेनापि स्थूलखण्डेन संसृष्टं विकृतिरेवेति ॥ २२३ ॥ इदानीं प्रत्याख्यानविषयाण्येव विशेषवस्तूनि कथयन्नाह—'विगई'त्यादि, विकृतीर्विकृतिगतानि चानन्तकायानि वर्जनीयवस्तूनि हे भव्यजनाः ! शृणुत वर्णयाम्यहं भवतामिति, तानि च कियद्भेदानि भवन्तीति यथासङ्ख्येनाह—दश त्रिंशत् द्वात्रिंशत् द्वाविंशतिरितिसङ्ख्यानि, कोऽर्थः ?—विकृतिर्दशभेदा विकृतिगतानि त्रिंशत्सङ्ख्यानि अनन्तकायानि द्वात्रिंशत् वर्ज्यवस्तूनि द्वाविंशतिं वर्णयामीति ॥ २२४ ॥ अत्र च शृणुतेति यदुक्तं तत्रायमभिप्रायः—शृण्वतामुपस्थितानामेव भव्यानां सूरिभिर्धर्मः कथनीयः, नानुपस्थितानां, यदवाचि—"अणुवट्ठियस्स धम्मं मा हु कहिज्जाहि सुट्ठुवि पियस्स। विच्छायं होइ मुहं विज्झायग्गिं धम्मंतस्स" ॥ १ ॥ इति [ अनुपस्थिताय धर्मं मा चीकथः सुष्ठ्वपि प्रियाय। विच्छायं भवति मुखं विध्यातमग्निं धमतः ॥ १ ॥ ] वर्णयामीत्यस्यायमभिप्रायः—परोपकारनिरतैः सूरिभिः कथ्यमान एव जीवादितत्त्वे भव्यानां विवेकः समुल्लसति, यदाहुः—"सुच्चा जाणइ कल्लाणं, सुच्चा जाणइ पावगं। उभयंपि

इति [ श्रुत्वा जानाति विरतिं श्रुत्वा जानाति पापं । विरत्यविरती अपि जानाति श्रुत्वा यत्
जाणई सुचा, जं छेयं तं समायरे ॥ १ ॥”
श्रेयः तत्समाचर ॥ १ ॥] तत्र विकृतीस्तावदाह—‘दुद्धे’त्यादि, दुग्धदधितैलनवनीतघृतगुडमधुमांसमद्यपक्कं च, तत्र दुग्धं पञ्चभेदं गोमहिषीकरभीछगलिकागड्डरिकासम्बन्धित्वेन, उष्ट्रीदुग्धेन दधि न भवतीति, दधि चतुर्भेदं—गोमहिषीछगलिकागड्डरिकासम्बन्धित्वेन, नवनीतमपि चतुर्भेदं—गोमहिषीछगलिकागड्डरिकादधिसम्भवित्वेन, घृतमपि चतुर्भेदं—गवादिसम्बन्धित्वेन, तैलमपि चतुर्भेदं—तिलअतसीकुसुम्भसर्षपसम्बन्धित्वेन, एवं गुडो द्विभेदः—द्रवगुडपिण्डगुडभेदेन, मधु त्रिभेदं—मक्षिकाकुत्तिकाभ्रमरीजनितत्वेन, मांसं त्रिभेदं जलचरस्थलचरखचरजीवसम्बन्धित्वेन, चर्मवसाशोणितभेदेन वेति, मद्यं द्विभेदं—काष्ठपिष्टनिष्पन्नत्वेन, पक्कमेकभेदं, घृतेन तैलेन वा भृतायां तापिकायां चलचलेतिशब्देन पच्यमानस्य कणिकादेरेकत्वादिति ॥ २२५ ॥ विकृतिगतानि साम्प्रतमाह—

दव्वहया विगइगयं विगई पुण तेण तं हयं दव्वं । उद्धरिए तत्तंमि य उक्किट्ठदव्वं इमं अन्ने ॥२२६॥
अह पेया[1] दुद्धट्टी[2] दुद्धवलेही[3] य दुद्धसाडी[4] य । पंच य विगइगयाइं दुद्धंमि य खीरिसहियाइं[5] ॥२२७॥
अंबिलजुयंमि दुद्धे दुद्धट्टी दक्खमीसरद्धंमि । पयसाडी तह तंदुलचुण्णयसिद्धंमि अवलेही ॥२२८॥
दहिए विगइगयाइं घोलवडा[1] घोल सिहरिणि[2] करंबो । लवणकणदहियमहियं संगरिगाइंमि अप्पडिए ॥ २२९ ॥ पक्कघयं[1] घयकिट्टी[2] पक्कोसहि उवरि तरिय सप्पिं[3] च । निब्भंजणवीसंदणगाइं[4] घयविगइविगइगया ॥२३०॥ तेल्लमली[1] तिल्लकुट्टी[2] दद्धं[3] तेल्लं तहोसहोव्वरियं[4] । लक्खाइदव्वपक्कं तेल्लं[5] तेल्लंमि पंचेव ॥ २३१ ॥ अद्धकढिइक्खुरसो[2] गुलपाणीयं च सक्करा[3] खंडं । पायगुलं च गुलविगई

लेन युक्ते दुग्धे दुग्धाटी—किलाटिकेत्यर्थः, अन्ये तु बलहिकामाहुः, तथा द्राक्षामिश्रे दुग्धे राद्धे पयःसाटी, पयो—दुग्धं सटति—गच्छतीति व्युत्पत्तेः, तथा तण्डुलचूर्णकसिद्धे दुग्धे अवलेहिका ॥ २२७ ॥ दधिविकृतिगतान्याह—'दहिए'त्यादि, दध्नि—दधिविषये विकृतिगतानि पञ्च, घोलवटकानि—घोलयुक्तवटकानि, तथा घोलो—वस्त्रगालितं दधि, तथा शिखरिणी—करमथितखण्डयुक्तदधिनिष्पन्ना, तथा करम्बको—दधियुक्तकूरनिष्पन्नः, तथा लवणकणयुक्तं दधि च मथितं राजिकाखाटकमित्यर्थः, तच्च संगरिकादिकेऽपतितेऽपि विकृतिगतं भवति, संगरिकापुंस्फलशकलादौ पतिते पुनर्भवत्येव ॥२२८॥ घृतविकृतिगतान्याह—'पक्कघय'मित्यादि, औषधैः पक्वं घृतं सिद्धार्थकादि, तथा घृतकिट्टिका—घृतमलं, तथा घृतपक्वौषधोपरि तरिकारूपं यत्सर्पिस्तदपि विकृतिगतं, तथा निर्भञ्जनं—पक्वान्नोत्तीर्णं दग्धघृतमित्यर्थः, तथा विस्यन्दनं—दधितरिकाकणिक्कानिष्पन्नद्रव्यविशेषः सपादलक्षदेशप्रसिद्धं, घृतविकृतिगतान्येतानि पञ्चापीत्यर्थः ॥ २२९ ॥ तैलविकृतिगतान्याह—'तिलमल्ली'त्यादि, तैलमलिका १ तथा तिलकुट्टिः २ तथा दग्धं तैलं—निर्भञ्जनमित्यर्थः, तथा तैलपक्वौषधोपरिभागे यदुद्धरितं, तथा लाक्षादिद्रव्यपक्वं च तैलं, एतानि तैलविकृतौ पञ्च विकृतिगतानि ॥ २३० ॥ गुडविकृतिगतान्याह—'अद्धे'त्यादि, अर्धकथितेक्षुरसः तथा गुडपानीयं तथा शर्करा तथा खण्डं तथा पाकगुडो येन खज्जकादि लिप्यते, गुडविकृतौ विकृतिगतानि एतानि पञ्चैव ॥ २३१ ॥ पक्वान्ने विकृतिगतान्याह—'एग'मित्यादि, एकं विकृतिगतं तद्यदेकस्य घाणस्योपरि पच्यते, कोऽभिप्रायः ?—प्रक्षिप्तघृतादिके तापके एकेनैव पूपकेन सकले पूरिते द्वितीयपूपकादिस्तत्र क्षिप्तो विकृतिगतमेव भवति, यदवाचि—"जेणेगेणं तवओ पूरिज्जइ पूयगेण तव्वीओ। अखवियनेहो पच्चइ जइ सो नय होइ तव्विगई ॥ १ ॥" [ येनैकेन तापिका पूर्यते पूपेन तत्राक्षिप्ते स्नेहे द्वितीयः पच्यते यदि स न भवति तद्विकृतिः ॥ १ ॥ ] द्वितीयं विकृतिगतं, त्रयाणां घाणानामुपरि

अप्रक्षिप्तापरघृतं यत्तेनैव 'तुप्पेण'त्ति घृतेन पक्वं, तृतीयं गुडधानिकाप्रभृति ॥२३२॥ तथा "चउत्थ"मित्यादि, चतुर्थं समुत्सारिते सुकुमारिकौदा पश्चादुद्धरितघृतादिखरण्टितायां तापिकायां जलेन सिद्धा लपनश्रीः, पञ्चमं पुनः स्नेहदिग्धतापिकायां परिपक्वा पूपिका, एवं च पङ्विकृतिसम्बन्धीनि पञ्च पञ्च विकृतिगतानि मिलितानि त्रिंशद्भवन्तीति ॥ २३३ ॥ इह च विकृतिगतानां स्वरूपं नाऽऽचार्येण स्वमनीषिकयाऽभिदधे, किन्तु सिद्धान्ताभिहितमेव, यदाह—'आवस्सये'त्यादि, आवश्यकचूर्णौ परिभणितं 'अत्र' ग्रन्थे 'वर्णितं' सामान्यद्वारेण 'कथितं' विशेषद्वारेणास्माभिः, एतच्च कथयितव्यं 'कुशलानां' बुद्धिमतां प्रयोक्तव्यं च कारणिके—कारणिकविषये ॥२३४॥ अयमभिप्रायः—यद्यपि क्षैरेयीप्रमुखाणि साक्षाद्विकृतयो न भवन्ति, किन्तु विकृतिगतान्येव, निर्विकृतिकानामपि कल्पन्ते, तथापि उत्कृष्टानि एतानि द्रव्याणि भक्ष्यमाणान्यवश्यं मनोविकारमानयन्ति शान्तानामपि, न च कृतनिर्विकृतिकानामेतेषु भक्ष्यमाणेषु उत्कृष्टा निर्जराः सम्पद्यन्ते, तस्मादेतानि न गृह्यन्ते इति, यस्तु विविधतपःकरणक्षामकुक्षिरनुष्ठानं स्वाध्यायाध्ययनादिकं कर्तुं न शक्नोति स विकृतिगतान्युत्कृष्टान्यपि द्रव्याणि भुङ्क्ते न कश्चिद्दोषः, कर्मनिर्जराऽपि तस्य महती भवति, यदाहुः—"नवरं इह परिभोगो निव्विइयाणंपि कारणावेक्खो । उक्कोसगदव्वाणं न उ अविसेसेण विन्नेओ ॥ १ ॥ आवन्ननिव्विगईयस्स असहुणो जुज्जए परीभोगो । इंदियजयबुद्धीए विगईचायम्मि नो जुत्तो ॥ २ ॥ जो पुण विगईचायं काऊणं खाइ निद्धमहुराइं । उक्कोसगदव्वाइं तुच्छफलो तस्स सो नेओ ॥ ३ ॥ दीसन्ति य केइ इहं पच्चक्खाएवि मंदधम्माणो । कारणियं पडिसेवं अकारणेणावि कुणमाणा ॥ ४ ॥ तिलमोयगतिलवट्टिं वरिसोलगनालिकेरखंडाइं । अइवहलघोलखीरिं घयपप्पुयवंजणाइं च ॥ ५ ॥ घयवुड्डमंडगाई दहिदुद्धकरंबपेयमाईयं । कुल्लुरिचूरिमपमुहं अकारणे केइ भुंजंति ॥ ६ ॥ न य तंपि इह पमाणं जहुत्तकारीण आगमन्नूणं । जरजम्ममरणभीसणभवन्न-

वुव्विग्गचित्ताणं ॥ ७ ॥ मोत्तुं जिणाणमाणं जियाण बहुदुहदवग्गितवियाणं । न हु अन्नो पडियारो कोइ इहं भववणे जेण ॥ ८ ॥ विगई परिणइधम्मो मोहो जमुदिज्जए उदिन्ने य । सुट्ठुवि चित्तजयपरो कहं अकज्जे न वट्टिहिइ ? ॥ ९ ॥ दावानलमज्झगओ को तदुवसमट्ठयाएँ जलमाई । संतेवि न सेविज्जा मोहानलदीविए उवमा ॥ १० ॥ विगइं विगईभीओ विगइगयं जो य भुंजए साहू । विगई विगइसहावा विगइं विगई बला नेइ ॥ १११ ॥" इत्यादि [ नवरमिह परिभोगो निर्विकृतिकानामपि कारणापेक्षः । उत्कृष्ट-द्रव्याणां न त्वविशेषेण विज्ञेयः ॥ १ ॥ आपन्न (संतत)निर्विकृतिकस्याक्षमस्य युज्यते परीभोगः । इन्द्रियस्य जयबुद्ध्या विकृति-त्यागे न युक्तः ॥२॥ यः पुनर्विकृतित्यागं कृत्वा खादति स्निग्धमधुराणि । उत्कृष्टद्रव्याणि तुच्छफलस्तस्य स ज्ञेयः ॥३॥ दृश्यन्ते च केचि-दिह प्रत्याख्यायापि मन्दधर्माणः । कारणिकीं प्रतिषेवां अकारणेऽपि कुर्वाणाः ॥ ४ ॥ तिलमोदकतिलवर्त्यौ वर्पोलिकनालिकेरखण्डादीनि । अतिवहलघोलं क्षैरेयीं घृतप्रभुतव्यञ्जनानि च ॥ ५ ॥ घृतबुद्धमण्डकादीन् दधिदुग्धकरम्भपेयादि कुल्लुरिचूरिमप्रमुखं अकारणे केचित् भुञ्जन्ति ॥ ६ ॥ न च तदपीह प्रमाणं यथोक्तकारिणामागमज्ञानां । जराजन्ममरणभीपणभवार्णवोद्विग्नचित्तानां ॥ ७ ॥ मुक्त्वा जिनानामाज्ञां जीवानां वहु दुःखदवाग्नितप्तानां । नैवान्यः प्रतीकारः कश्चिदिह भववने येन ॥ ८ ॥ विकृतिः परिणतिधर्मो विकारो यस्मादुदीर्यते उदीर्णे च मोहे सुष्ठ्वपि चित्तजयपरः कथमकार्ये न वर्तेत ? ॥ ९ ॥ दावानलमध्यगतः कस्तदुपशमनार्थं जलादीनि सन्त्यपि न गृह्णीयात् मोहानलदीप्ते एपोपमा ॥ १० ॥ विगतिभीतो यस्तु साधुः विकृतिं विकृतिगतं च भुङ्क्ते तं विकारस्वभावात् विकृति-र्वलात्तु विगतिं नयति ॥ ११ ॥ ] सुगमाश्चैताः, नवरमन्त्यगाथा किञ्चिद्विषमत्वाद्वितन्यते—विगतेः—नरकादिकाया यो भीतः—त्रस्तः साधुर्विकृतिं क्षीरादिकां चशब्दस्यानुक्तस्यापि दर्शनाद्विकृतिगतं च—क्षीरान्नादिकं यो भुङ्क्ते स दुर्गतिं यातीति शेषः, कस्मादित्याह—विकृ-

तिर्वलाजीवमनिच्छन्तमपि विगतिं—नरकादिकां नयतीति, एतदपि कुत इत्याह—विकृतिर्यतो विकृतिस्वभावा—मनोविकारकारिस्वरूपेति ॥ अधुना अनन्तकायिकान्याह—

सव्वा हु कंदजाई सूरणकंदो य वज्जकंदो य । अल्लहलिद्दा य तहा अद्दं तह अल्लकच्चूरो ॥२३६॥
सत्तावरी विराली कुमारि तह थोहरी गलोई य । ल्हसणं वंसगरिल्ला गज्जर तह लोणओ लोढो ॥
॥ २३७ ॥ गिरिकन्नि किसलपत्ता खरिंसुया थेग अल्लमुत्था य । तह लोणरुक्खछल्ली खेल्लुडो
अमयवल्ली य ॥ २३८ ॥ मूला तह भूमिरुहा विरुह तह ढक्कवत्थुलो पढमो । सूयरवल्लो य तहा
पल्लंको कोमलंबिलिया ॥ २३९ ॥ आलू तह पिंडालू हवंति एए अणंतनामेहिं । अण्णमणंतं नेयं
लक्खणजुत्तीइ समयाओ ॥ २४० ॥ घोसाडकरीरंकुरतिंदुयअइकोमलंबगाईणि । वरुणवड-
निंबगाईण अंकुराइं अणंताइं ॥ २४१ ॥ गूढसिरसंधिपव्वं समभंगमहीरुगं च छिन्नरुहं । साहा-
रणं सरीरं तव्विवरीयं च पत्तेयं ॥ २४२ ॥ चक्कं व भज्जमाणस्स जस्स गंठी हवेज्ज चुन्नघणो ।
तं पुढविसरिसभेयं अणंतजीवं वियाणाहि ॥ २४३ ॥ गूढसिरागं पत्तं सच्छीरं जं च होइ
निच्छीरं । जंपि य पयावसंधिं अणंतजीवं वियाणाहि ॥ २४४ ॥

'सव्वा हु' इत्यादिगाथापञ्चकम्, हुशब्दोऽवधारणे ततः सर्वैव कन्दजातिरनन्तकायिका इति सम्बन्धः, कन्दो नाम भूमध्यगो वृक्षावयवः, ते चात्र कन्दा अशुष्का एव ग्राह्याः, शुष्काणां तु निर्जीवत्वादनन्तकायिकत्वं न सम्भवति, तानेव कांश्चित्कन्दान् व्याप्रि-

यमाणत्वान्नामत आह—सूरणकन्दः—अर्शोघ्नः कन्दविशेषः १ वज्रकन्दोऽपि कन्दविशेष एव २ आर्द्रा—अशुष्का हरिद्रा प्रतीतैव ३ आर्द्रकं—शृङ्गवेरं ४ आर्द्रकचूरकः—तिक्तद्रव्यविशेषः प्रतीत एव ५ ॥ २३६ ॥ सतावरीविरालिके वल्लीभेदौ ६—७ कुमारी—मांसलप्रणालाकारपत्रा प्रतीतैव ८, थोहरी—स्नुहीतरुः ९ गडूची—वल्लीविशेषः प्रतीत एव १० ल्हसूनं— कन्दविशेषः ११ वंसकरिल्लानि—कोमलाभिनववंशावयवविशेषाः प्रसिद्धा एव १२ गर्जरकाणि—सर्वजनविदितान्येव १३ लवणको—वनस्पतिविशेषः येन दग्धेन सर्जिका निष्पद्यते १४ लोढकः—पद्मिनीकन्दः १५ ॥ २३७ ॥ गिरिकर्णिका—वल्लीविशेषः १६ किसलयरूपाणि पत्राणि—प्रौढपत्रादर्वाक् वीजस्योच्छूनावस्थालक्षणानि सर्वाण्यप्यनन्तकायिकानि न तु कानिचिदेव १७ खरिंसुकाः—कन्दभेदाः १८ थेगोऽपि कन्दविशेष एव १९ आर्द्रा मुस्ता प्रतीता २० लवणनाम्नो वृक्षस्य छल्लिः—त्वक् त्वगेव न त्वन्येऽवयवाः २१ खल्लूडकाः कन्दभेदाः २२ अमृतवल्ली—वल्लीविशेषः २३ ॥ २३८ मूलको—लोकप्रतीतः २४ भूमिरुहाणि—छत्राकाराणि वर्षाकालभावीनि भूमिस्फोटकानीतिलोकप्रसिद्धानि २५ विरूढानि—अङ्कुरितानि द्विदलधान्यानि २६ ढक्कवास्तुलः—शाकविशेषः स च प्रथमः—प्रथमोद्गत एवानन्तकायिको भवति न पुनश्छिन्नप्ररूढः २७ शूकरसञ्ज्ञितो वल्लः शूकरवल्लः स एवानन्तकायिको न तु धान्यवल्लः २८ पल्यङ्कः शाकभेदः २९ कोमलाऽऽम्लिका-अवद्धास्थिका चिञ्चिणिका ॥ २३९ ॥ आलुक ३१ पिण्डालुकौ ३२ कन्दभेदौ, एते पूर्वोक्ताः पदार्था द्वात्रिंशत्सङ्ख्या अनन्तनामभिः—अनन्तकायिकसञ्ज्ञिता आर्यदेशप्रसिद्धा भवन्तीत्यर्थः, न चैतान्येवानन्तकायिकानि, किन्तु ?, अन्यान्यपि, तथा चेह अन्यदपि पूर्वोक्तातिरिक्तमनन्तं—अनन्तकायिकं ज्ञेयं लक्षणयुक्त्या—वक्ष्यमाणतद्गतलक्षणविचारणया 'समयात्' सिद्धांतात् ॥ २४० ॥ तान्येव कानिचिदाह—'घोसाडे'त्यादि, घोपातकीकरीरयोरङ्कुराः तथा अतिकोमलानि—अवद्धास्थिकानि तिन्दुकाम्रफलादीनि, तथा वरुणवटनिम्बा-

दीनां तरूणामङ्कुरा अनन्तकायिकाः ॥ २४१ ॥ अनंतकायपरिज्ञानार्थं लक्षणयुक्तिमाह—'गूढसिरे'त्यादि, गूढानि—प्रकटवृत्त्या अज्ञायमानानि सिराः—सन्धयः पर्वाणि च यस्य पत्रकाण्डनालशाखादेस्तत्तथा, तथा यस्य भज्यमानस्य—शाखादेस्त्रोट्यमानस्य पत्रादेः समः—अदन्तुरो भङ्गः—छेदो भवति तत्समभङ्गं, तथा छिद्यमानस्यैव न विद्यन्ते हीरकाः—तन्तुलक्षणा मध्ये यस्य तदहीरकं, तथा छित्त्वा गृहादावानीतं शुष्कताद्यवस्थाप्राप्तमपि जलादिसामग्रीं प्राप्य गडूच्यादिवत् पुनरपि यत्प्ररोहति तच्छिन्नरुहं, तदेतैर्लक्षणैः साधारणं शरीरं ज्ञेयं, अनन्तकायिकमित्यर्थः । एतल्लक्षणव्यतिरिक्तं च प्रत्येकशरीरमिति ॥२४२॥ पुनरनन्तकायिकस्य लक्षणान्तरमाह—'चक्कं वे'-त्यादि, चक्रमिव—अदन्तुरतया कुम्भकारचक्राकारमेकान्तेन समं भङ्गस्थानं यस्य भज्यमानस्य मूलस्कन्धत्वक्शाखापत्रपुष्पादेः भवति तं मूलादिकमनन्तजीवं विजानीहीति सम्बन्धः. तथा ग्रन्थिः—पर्व सामान्यतो भङ्गस्थानं वा स यस्य चूर्णघनो भवति, कोऽर्थः ?—यस्य भज्यमानस्य ग्रन्थेः शुभ्रो घनश्चूर्णो उड्डीयमानो दृश्यते स वनस्पतिरनन्तजीवानां साधारणमेकं शरीरमित्यर्थः, कथं पुनरसौ समं भज्यत इत्यत्र दृष्टान्तमाह—पृथ्वीसदृशभेदं, अत्र पृथ्वी—केदाराद्युपरिवर्तिनी शुष्ककोप्पटिका श्लक्ष्णखटिकानिर्मितवर्तिका वा गृह्यते, यथा तस्या भज्यमानायाः समः—अदन्तुरो भेदो भवति एवं वनस्पतिरपि चक्राकारं समं यो भज्यत इति भावः ॥२४३॥ पुनर्लक्षणान्तरमनन्तकायिकस्याह—'गूढसिरे'त्यादि, यत्पत्रं सक्षीरं निःक्षीरं वा गूढसिराकं—अलक्ष्यमाणसिराविशेषं भवति, यदपि च 'प्रतापसन्धि' प्रकृष्टस्तापः—उष्मा येषु एवंविधाः सन्धयो यस्य तत्प्रतापसन्धि 'पणट्ठसंधि'त्ति पाठे तु प्रणष्टसन्धि—सर्वथाऽनुपलक्ष्यमाणपत्रार्धद्वयसन्धि यत् अनन्तजीवं तद्विजानीहीति ॥ २४४ ॥ इदानीं वर्जनीयवस्तून्याह—

**पंचुम्बरि[5] चउविगई हिमं विस[11] करगे[12] य सव्वमट्टी[13] य । रयणीभोयणगं[14] चिय बहुबीय[15]**

**[16] अणंतसंधाणं ॥ २४५ ॥ घोल[18]वडा वायंगण[19] अमुणिअनामाणि फुल्लफलयाणि[20] । तुच्छफलं[21] चलियरसं[22] वज्जह वज्जाणि बावीसं ॥ २४६ ॥**

'पंचुंबरी'त्यादि, पञ्चानामुदुम्बराणां समाहारः पञ्चोदुम्बरी—वटपिप्पल्योदुम्बरप्लक्षकाकोदुम्बरीफलरूपा समयप्रसिद्धा, सा मशकाकारसूक्ष्मबहुजीवभृतत्वाद्वर्जनीया, तथा चतस्रो विकृतयो—मद्यमांसमधुनवनीतरूपा वर्ज्याः, सद्य एव तत्र तद्वर्णानेकजीवसम्मूर्च्छनात्, तथा हिमं शुद्धासङ्ख्याप्कायरूपत्वात्, तथा विषं मन्त्रोपहतवीर्यमपि उदरान्तर्वर्तिगण्डोलकादिजीवविघातहेतुत्वात् मरणसमये महामोहोत्पादकत्वाच्च, तथा करका अप्यसङ्ख्याप्कायिकत्वात्, तथा सर्वापि मृत्तिका दर्दुरादिपञ्चेन्द्रियप्राण्युत्पत्तिनिमित्तत्वात्, सर्वग्रहणं खटिकादितद्भेदपरिग्रहार्थं, तद्भक्षणस्यापि आमाश्रयादिदोषजनकत्वात्, तथा रजनीभोजनं बहुविधजीवसम्पातसम्भवेन इहलौकिकपारलौकिकदोषदुष्टत्वात्, तथा बहुबीजं—पम्पोटकादि प्रतिबीजं जीवोपमर्दसम्भवात्, तथा अनन्तानि—अनन्तकायिकानि अनन्तजन्तुसन्ताननिर्घातननिमित्तत्वात्, तथा सन्धानं—अस्त्यानकं बिल्वकादीनां जीवसंसक्तिहेतुत्वात् ॥ २४५ ॥ तथा 'घोलवडे'—त्यादि, घोलवटकानि उपलक्षणत्वादामगोरससम्पृक्तद्विदलानि च केवलिगम्यसूक्ष्मजीवसंसक्तिसम्भवात्, तथा वृन्ताकानि निद्राबाहुल्यमदनोद्दीपनादिदोषदुष्टत्वात्, तथा स्वयं परेण वा येषां नाम न ज्ञायते तान्यज्ञातनामानि पुष्पाणि फलानि, अज्ञानतो निषिद्धफलप्रवृत्तौ व्रतभङ्गसम्भवात्, विषफलेषु प्रवृत्तौ जीवितविनाशात्, तथा तुच्छम्—असारं फलं—मधूकबिल्वादेः उपलक्षणत्वाच्च पुष्पमरणिशिग्रुमधुकादेः पत्रं प्रावृषि तण्डुलिकादेः बहुजीवसम्मिश्रत्वात्, यद्वा तुच्छफलम्—अर्धनिष्पन्नकोमलचवलकशिम्यादिकं, तद्भक्षणे हि तथाविधा तृप्तिरपि नोपजायते, दोषाश्च बहवः सम्भवन्ति, तथा चलितरसं—कुथितान्नं, उपलक्षणत्वात् पुष्पितौदनादि, दिनद्वया-

सार्धषट्शताधिकाः श्रीसुमतेर्दशसहस्राः सार्धचतुःशताधिकाः, श्रीपद्मप्रभस्य दशसहस्राः शतत्रयाधिकाः, श्रीसुपार्श्वस्य नवसहस्राः सार्धैकशताधिकाः, श्रीचन्द्रप्रभस्य अष्टौ सहस्राः, श्रीसुविधिजिनस्य सप्तसहस्राः पञ्चशताधिकाः, शीतलस्याप्येतावन्त एव, श्रेयांसजिनस्य श्रीवासुपूज्यजिनस्य च षट् षट् सहस्राः, 'इत्तो'त्ति इतोऽनन्तरं विमलजिनस्य पञ्चसहस्राणि पञ्चशताधिकानि, अनन्तजिनस्य पञ्चसहस्राः, श्रीधर्मस्य चत्वारः सहस्राः पञ्चशताधिकाः, श्रीशान्तिजिनस्य चत्वारः सहस्राः, श्रीकुन्थोस्त्रयः सहस्राश्चत्वारिंशदधिकशतत्रयाधिकाः, श्रीअरजिनस्य सहस्रद्विकमेकपञ्चाशदधिकपञ्चशताभ्यधिकं, श्रीमल्लेः सप्तदशशतानि पञ्चाशदधिकानि, श्रीमुनिसुव्रतस्य पञ्चदशशतानि, श्रीनमिजिनस्य द्वादश शतानि षष्ट्यधिकानि, श्रीनेमेरेकः सहस्रः श्रीपार्श्वजिनस्य शतान्यर्धाष्टमानि, सार्धानि सप्त शतानीत्यर्थः, श्रीवीरजिनस्य पञ्चैव शतानीति ॥ २२ ॥ इदानीं 'चउद्दसपुव्वि'त्ति त्रयोविंशतितमं द्वारमाह—

**चउद्दसपुव्वि सहस्सा चउरो अद्धट्ठमाणि य सयाणि १ । वीसहिय सत्ततीसा २ इगवीस सया य पन्नासा ३ ॥ ३६० ॥ पनरस ४ चउवीस सया ५ तेवीस सया ६ य वीससय तीसा ७ । दो सहस ८ पनरस सया ९ सयचउद्दस १० तेरस सयाइं ११ ॥ ३६१ ॥ सय बारस १२ एक्कारस १३ दस १४ नव १५ अट्ठेव १६ छच्च सय सयरा १७ । दसहिय छच्चेव सया १८ छच्च सया अट्ठसट्ठिहिया १९ ॥ ३६२ ॥ सय पंच २० अद्धपंचम २१ चउरो २२ अद्धुट्ठ २३ तिन्नि य सयाइं २४ । उसहाइजिणिंदाणं चउदसपुव्वीण परिमाणं ॥ ३६३ ॥**



'चउ'इत्यादि गाथाश्चतस्रः, तत्रादिजिनस्य चतुर्दशपूर्विणां चत्वारः सहस्रा अर्धाष्टमानि च शतानि, पञ्चाशदधिकानि सप्त शतानीत्यर्थः,

श्रीअजितजिनस्य विंशत्यधिकसप्तत्रिंशच्छतानि, श्रीसम्भवजिनस्य एकविंशतिः शतानि पञ्चाशदधिकानि ॥३६०॥ श्रीअभिनन्दनस्य पञ्चदश शतानि, श्रीसुमतेश्चतुर्विंशतिः शतानि, श्रीपद्मप्रभस्य त्रयोविंशतिः शतानि श्रीसुपार्श्वस्य विंशतिः शतानि त्रिंशदधिकानि, श्रीचन्द्रप्रभस्य द्वौ सहस्रौ, श्रीसुविधेः पञ्चदश शतानि, श्रीशीतलस्य शतानि चतुर्दश, श्रीश्रेयांसस्य त्रयोदश शतानि ॥३६१॥ श्रीवासुपूज्यस्य द्वादश शतानि, श्रीविमलजिनस्य एकादश शतानि, श्रीअनन्तजिनस्य दश शतानि, श्रीधर्मस्य नव शतानि, श्रीशान्तेरष्टौ शतानि, श्रीकुन्थोः षट् शतानि सप्तत्यधिकानि, श्रीअरजिनस्य दशाधिकानि षडेव शतानि, श्रीमल्लिजिनस्य षट् शतानि अष्टषष्ट्यधिकानि ॥३६२॥ श्रीमुनिसुव्रतस्य शतानि पञ्च, श्रीनमेश्चत्वारि शतानि पञ्चाशदधिकानि, श्रीनेमेश्चत्वारि शतानि, श्रीपार्श्वजिनस्य त्रीणि शतानि पञ्चाशदधिकानि, श्रीवीरजिनस्य च त्रीणि शतानि, इदं पूर्वोक्तमृषभादिजिनेन्द्राणां क्रमेण चतुर्दशपूर्विपरिमाणम् ॥ ३६३ ॥ २३ ॥ इदानीं 'सड्ढ'त्ति चतुर्विंशतितमं द्वारमाह—

**पढमस्स तिन्नि लक्खा पंच सहस्सा दुलक्ख जा संती। लक्खोवरि अडनउई २ तेणउई ३ अ-**
**ट्ठसीई य ४ ॥ ३६४ ॥ एगसीई ५ छावत्तरि ६ सत्तावण्णा ७ य तह य पन्नासा ८। गुणतीस ९**
**नवासीई १० अ गुणासी ११ पनरस १२ अट्ठेव १३ ॥ ३६५ ॥ छच्चिय सहस्स १४ चउरो सहस्स**
**१५ नउई सहस्स संतिस्स १६। तत्तो एगो लक्खो उवरिं गुणसीय १७ चुलसी १८ य ॥ ३६६ ॥**
**तेयासी १९ बावत्तरि २० सत्तरि २१ इगुहत्तरी २२ य चउसट्ठी २३। एगुणसट्ठि सहस्सा २४**
**सावगमाणं जिणवराणं ॥ ३६७ ॥**

'पढमे'त्यादिगाथाचतुष्टयं, तत्र प्रथमजिनस्य श्रावकाणां तिस्रो लक्षाः पञ्चसहस्राधिकाः, श्रीअजितादिजिनानां यावत् शान्तिजिन-

स्तावल्लक्षद्वयं श्राद्धानां, द्विलक्षोपरि च यदधिकं भवति तन्निवेद्यते तत्र तृतीयगाथावर्ति 'सहस्स'त्तिपदस्य सर्वत्राभिसम्बन्धात् अष्टनवतिः सहस्रा अजितजिनस्य, लक्षद्वयमष्टनवतिसहस्राधिकमित्यर्थः, त्रिनवतिः श्रीसम्भवस्य, लक्षद्वयं त्रिनवतिसहस्राधिकमित्यर्थः, अष्टाशीतिश्च श्रीअभिनन्दनस्य, लक्षद्वयमष्टाशीतिसहस्राधिकमित्यर्थः ॥३६४॥ एकाशीतिः श्रीसुमतेः, लक्षद्वयमेकाशीतिसहस्राधिकमित्यर्थः, षट्सप्ततिः श्रीपद्मप्रभस्य, लक्षद्वयं षट्सप्ततिसहस्राधिकमित्यर्थः, सप्तपञ्चाशच्च श्रीसुपार्श्वस्य, लक्षद्वयं सप्तपञ्चाशत्सहस्राधिकमित्यर्थः, तथा पञ्चाशच्चन्द्रप्रभस्य, लक्षद्वयं पञ्चाशत्सहस्राधिकमित्यर्थः, एकोनत्रिंशत् श्रीसुविधेः, लक्षद्वयमेकोनत्रिंशत्सहस्राधिकमित्यर्थः, नवाशीतिः श्रीशीतलस्य, लक्षद्वयं नवाशीतिसहस्राधिकमित्यर्थः, एकोनाशीतिः श्रीश्रेयांसस्य, लक्षद्वयं एकोनाशीतिसहस्राधिकमित्यर्थः, पञ्चदश श्रीवासुपूज्यस्य, लक्षद्वयं पञ्चदशसहस्राधिकमित्यर्थः, अष्टैव श्रीविमलजिनस्य, लक्षद्वयं अष्टसहस्राधिकमित्यर्थः ॥३६५॥ षट् सहस्राः श्रीअनन्तजिनस्य, लक्षद्वयं षट्सहस्राधिकमित्यर्थः, चत्वारः सहस्राः श्रीधर्मजिनस्य, लक्षद्वयं चतुर्भिः सहस्रैरधिकमित्यर्थः, नवतिसहस्राः श्रीशान्तेः, लक्षद्वयं नवतिसहस्राधिकमित्यर्थः, ततः—श्रीशान्तिनाथादनन्तरं कुन्थुप्रभृतीनां तीर्थंकृतां महावीरपर्यन्तानामेकं लक्षं श्राद्धानां, लक्षोपरि च यत्सङ्ख्यास्थानं तदुच्यते—यथा एकोनाशीतिः श्रीकुन्थोः, लक्षमेकमेकोनाशीतिसहस्राधिकमित्यर्थः, चतुरशीतिः श्रीअरजिनस्य, लक्षमेकं चतुरशीतिसहस्राधिकमित्यर्थः ॥३६६॥ त्र्यशीतिः श्रीमल्लेः, लक्षमेकं त्र्यशीतिसहस्राधिकमित्यर्थः, द्विसप्ततिः श्रीमुनिसुव्रतस्य, लक्षमेकं द्विसप्ततिसहस्राधिकमित्यर्थः, सप्ततिर्नमेः, लक्षमेकं सप्ततिसहस्राधिकमित्यर्थः, एकोनसप्ततिः श्रीनेमेः, लक्षमेकमेकोनसप्ततिसहस्राधिकमित्यर्थः, चतुःषष्टिः श्रीपार्श्वस्य, लक्षमेकं चतुःषष्टिसहस्राधिकमित्यर्थः, एकोनषष्टिसहस्राः श्रीवीरजिनस्य, लक्षमेकमेकोनषष्टिसहस्राधिकमित्यर्थः ॥३६७॥ इति जिनवरेन्द्रचतुर्विंशतेः सम्बन्धिनां श्रावकाणां मानं क्रमेण ज्ञातव्यम् ॥ २४ ॥ इदानीं 'सड्ढीणं'ति पञ्चविंशतितमं द्वारं निर्दिदिक्षुराह—

पढमस्स पंच लक्खा चउपन्न सहस्स १ तयणु पण लक्खा। पणयालीससहस्सा २ छलक्ख छत्तीस सहसा य ३ ॥ ३६८ ॥ सत्तावीससहस्साहियलक्खा पंच ४ पंच लक्खा य। सोलससहस्स-अहिया ५ पणलक्खा पंच उ सहस्सा ६ ॥ ३६९ ॥ उवरिं चउरो लक्खा धम्मो जा उवरि सहस तेणउई ७। इगनउई ८ इगहत्तरि ९ अडवन्न १० ऽडयाल ११ छत्तीसा १२ ॥ ३७० ॥ चउ-वीसा १३ चउदस १४ तेरसेव १५ तत्तो तिलक्ख जा वीरो । तदुवरि तिनवइ १६ इगासी १७ विसत्तरी १८ सयरि १९ पन्नासा २० ॥ ३७१ ॥ अडयाला २१ छत्तीसा २२ इगुचत्त २३ ऽट्ठार-सेव य सहस्सा २४। सड्डीण माणमेयं चउवीसाए जिणवराणं ॥ ३७२ ॥

'पढमस्से'त्यादिगाथापञ्चकं, तत्र प्रथमस्य—आदिजिनस्य श्राविकाणां पञ्च लक्षाणि चतुष्पञ्चाशत्सहस्राधिकानि, तदनु—प्रथमतीर्थकरानन्तरमजितस्य श्राविकाणां पञ्च लक्षाणि पञ्चचत्वारिंशत्सहस्राधिकानि ॥३६८॥ श्रीसम्भवस्य षट् लक्षाणि षट्त्रिंशत्सहस्राश्च, अभिनन्दनस्य सप्तविंशतिसहस्राधिका लक्षाः पञ्च, सुमतिजिनस्य लक्षाः पञ्च षोडशसहस्राधिकाः, श्रीपद्मप्रभस्य लक्षाः पञ्च पञ्चसहस्राधिकाः ॥३६९॥ इत उपरि—पद्मप्रभादारभ्य धर्मजिनं यावत् श्राविकाणां चतस्रो लक्षाः प्रत्येकमुपरि च त्रिनवत्यादयः सहस्राः, कोऽर्थः ?—सुपार्श्वस्य श्राविकाणां लक्षचतुष्टयं त्रिनवतिसहस्राधिकं, चन्द्रप्रभस्य लक्षचतुष्टयमेकनवतिसहस्राधिकं, सुविधेर्लक्षचतुष्टयमेकसप्ततिसहस्राधिकं, शीतलस्य लक्षचतुष्टयमष्टपञ्चाशत्सहस्राधिकं, श्रेयांसस्य लक्षचतुष्टयं अष्टचत्वारिंशत्सहस्राधिकं, वासुपूज्यस्य लक्षचतुष्टयं षट्त्रिंशत्सहस्राधिकं ॥३७०॥ विमलस्य लक्षचतुष्टयं चतुर्विंशतिसहस्राधिकं, अनन्तस्य लक्षचतुष्टयं चतुर्दशसहस्राधिकं, धर्मस्य लक्षचतुष्टयं त्रयोदशसहस्राधिकं, ततः—

श्रीशान्तिनाथादारभ्य प्रत्येकं लक्षत्रयं श्राविकाणां यावन्महावीरं, तदुपरि च—त्रिलक्षोपरि च त्रिनवत्यादयः सहस्राः, तत्र श्रीशान्तेर्लक्षत्रयं त्रिनवतिसहस्राधिकं, कुन्थोर्लक्षत्रयमेकाशीतिसहस्राधिकं, अरजिनस्य लक्षत्रयं द्विसप्ततिसहस्राधिकं, मल्लेर्लक्षत्रयं सप्ततिसहस्राधिकं, मुनिसुव्रतस्य लक्षत्रयं पञ्चाशत्सहस्राधिकं ॥ ३७१ ॥ श्रीनमेर्लक्षत्रयमष्टचत्वारिंशत्सहस्राधिकं, श्रीनेमेर्लक्षत्रयं षट्त्रिंशत्सहस्राधिकं, श्रीपार्श्वस्य लक्षत्रयमेकोनचत्वारिंशत्सहस्राधिकं, वीरजिनस्य च लक्षत्रयमष्टादशसहस्रैरधिकं, श्राविकाणां मानमेतच्चतुर्विंशतेर्जिनवराणामिति ॥ ३७२॥ ॥ २५ ॥ इदानीं 'जिणजक्ख'त्ति षड्विंशतितमं द्वारं विवरीतुमाह—

**जक्खा गोमुह १ महजक्ख २ तिमुह ३ ईसर ४ तुंबुरु ५ कुसुमो ६ । मायंगो ७ विजया ८**
**जिय ९ बंभो १० मणुओ ११ य सुरकुमरो १२ ॥ ३७३ ॥ छम्मुह १३ पयाल १४ किन्नर १५**
**गरुडो १६ गंधव्व १७ तह य जक्खिदो १८ । कूबर १९ वरुणो २० भिउडी २१ गोमेहो २२**
**वामण २३ मयंको २४ ॥ ३७४ ॥**

'जक्खो' इत्यादिगाथाद्वयं, यक्षा भक्तिदक्षास्तीर्थकृतामिमे, यथा प्रथमजिनस्य गोमुखो यक्षः सुवर्णवर्णो गजवाहनश्चतुर्भुजो वरदाक्षमालिकायुक्तदक्षिणपाणिद्वयो मातुलिङ्गपाशकान्वितवामपाणिद्वयश्च १ अजितनाथस्य महायक्षाभिधो यक्षश्चतुर्मुखः श्यामवर्णः करीन्द्रवाहनोऽष्टपाणिर्वरदमुद्गराक्षसूत्रपाशकान्वितदक्षिणपाणिचतुष्टयो बीजपूरकाभयाङ्कुशशक्तियुक्तवामपाणिचतुष्कश्च २ श्रीसम्भवजिनस्य त्रिमुखो नाम यक्षस्त्रिवदनस्त्रिनेत्रः श्यामवर्णो मयूरवाहनः षड्भुजो नकुलगदाभययुक्तदक्षिणकरकमलत्रयो मातुलिङ्गनागाक्षसूत्रयुक्तवामपाणिपद्मत्रयश्च ३ श्रीअभिनन्दनस्य ईश्वरो यक्षः श्यामकान्तिर्गजवाहनश्चतुर्भुजो मातुलिङ्गाक्षसूत्रयुक्तदक्षिणकरकमलद्वयो नकुलाङ्कुशान्वितवाम-

पाणिद्वयश्च ४ श्रीसुमतेस्तुम्बुरुर्यक्षः श्वेतवर्णो गरुडवाहनश्चतुर्भुजो वरदशक्तियुक्तदक्षिणपाणिद्वयो गदानागपाशयुक्तवामपाणिद्वयश्च ५
श्रीपद्मप्रभस्य कुसुमो यक्षो नीलवर्णः कुरङ्गवाहनश्चतुर्भुजः फलाभययुक्तदक्षिणपाणिद्वयो नकुलाक्षसूत्रयुक्तवामपाणिद्वयश्च ६ श्रीसुपार्श्वस्य
मातङ्गो यक्षो नीलवर्णो गजवाहनश्चतुर्भुजो विल्वपाशयुक्तदक्षिणपाणिद्वयो नकुलाङ्कुशयुक्तवामपाणिद्वयश्च ७ श्रीचन्द्रप्रभस्य विजयो यक्षो
हरितवर्णस्त्रिलोचनो हंसवाहनो द्विभुजः कृतदक्षिणहस्तचक्रो वामहस्तधृतमुद्गरश्च ८ श्रीसुविधिजिनस्याजितो यक्षः श्वेतवर्णः कूर्मवाहनश्च-
तुर्भुजो मातुलिङ्गाक्षसूत्रयुक्तदक्षिणपाणिद्वयो नकुलकुन्तकलितवामपाणिद्वयश्च ९ श्रीशीतलस्य ब्रह्मा यक्षश्चतुर्मुखस्त्रिनेत्रः सितवर्णः पद्मा-
सनोऽष्टभुजो मातुलिङ्गमुद्गरपाशकाभययुक्तदक्षिणपाणिचतुष्टयो नकुलगदाङ्कुशाक्षसूत्रयुक्तवामपाणिचतुष्टयश्च १० श्रीश्रेयांसस्य मनुजो
यक्षो मतान्तरेणेश्वरो धवलवर्णस्त्रिनेत्रो वृषभवाहनश्चतुर्भुजो मातुलिङ्गगदायुक्तदक्षिणपाणिद्वयो नकुलाक्षसूत्रयुक्तवामपाणिद्वयश्च ११ श्री-
वासुपूज्यस्य सुरकुमारो यक्षः श्वेतवर्णो हंसवाहनश्चतुर्भुजो वीजपूरकवीणान्वितदक्षिणपाणिद्वयो नकुलकधनुर्युक्तवामपाणिद्वयश्च १२ ॥३७३॥
श्रीविमलस्य षण्मुखो यक्षः श्वेतवर्णः शिखिवाहनो द्वादशभुजः फलचक्रवाणखड्गपाशकाक्षसूत्रयुक्तदक्षिणपाणिषट्को नकुलचक्रधनुःफलकाङ्कु-
शाभययुक्तवामपाणिषट्कश्च १३ श्रीअनन्तस्य पातालो यक्षस्त्रिमुखो रक्तवर्णो मकरवाहनो षड्भुजः पद्मखड्गपाशयुक्तदक्षिणपाणित्रयो
नकुलफलकाक्षसूत्रयुक्तवामपाणित्रयश्च १४ श्रीधर्मस्य किन्नरो यक्षस्त्रिमुखो रक्तवर्णः कूर्मवाहनः षड्भुजो वीजपूरकगदाभययुक्तदक्षिणपा-
णित्रयो नकुलपद्माक्षमालायुक्तवामपाणित्रयश्च १५ श्रीशान्तिनाथस्य गरुडो यक्षो वराहवाहनः क्रोडवदनः श्यामरुचिश्चतुर्भुजो वीजपूर-
कपद्मान्वितदक्षिणकरद्वयो नकुलाक्षसूत्रयुक्तवामपाणिद्वयश्च १६ श्रीकुन्थोर्गन्धर्वयक्षः श्यामवर्णो हंसवाहनश्चतुर्भुजो वरदपाशकान्वितद-
क्षिणपाणिद्वयो मातुलिङ्गाङ्कुशाधिष्ठितवामकरद्वयश्च १७ श्रीअरजिनस्य यक्षेन्द्रो यक्षः षण्मुखस्त्रिनेत्रः श्यामवर्णः शङ्खवाहनो द्वादशभुजो

वीजपूरकवाणखड्गमुद्गरपाशकाभययुक्तदक्षिणकरषट्को नकुलधनुःफलकशूलाङ्कुशाक्षसूत्रयुक्तवामपाणिषट्कश्च १८ श्रीमल्लिजिनस्य कूवरो यक्षश्चतुर्मुख इन्द्रायुधवर्णो गजवाहनोऽष्टभुजो वरदपरशुशूलाभययुक्तदक्षिणपाणिचतुष्टयो वीजपूरकशक्तिमुद्गराक्षसूत्रयुतवामपाणिचतुष्टयश्च अन्ये कूवरस्थाने कुबेरमाहुः १९ श्रीमुनिसुव्रतस्य वरुणो यक्षश्चतुर्मुखस्त्रिनेत्रोऽसितवर्णो वृषभवाहनो जटामुकुटभूषितोऽष्टभुजो वीजपूरकगदावाणशक्तियुक्तदक्षिणकरकमलचतुष्को नकुलपद्मधनुःपरशुयुतवामपाणिचतुष्टयश्च २० श्रीनमिजिनस्य भृकुटियक्षश्चतुर्मुखस्त्रिनेत्रः सुवर्णवर्णो वृषभवाहनोऽष्टभुजो वीजपूरकशक्तिमुद्गराभययुक्तदक्षिणकरचतुष्टयो नकुलपरशुवज्राक्षसूत्रयुक्तवामकरचतुष्टयश्च २१ श्रीनेमिजिनस्य गोमेधो यक्षस्त्रिमुखः श्यामकान्तिः पुरुषवाहनः षड्भुजो मातुलिंगपरशुचक्रान्वितदक्षिणकरत्रयो नकुलशूलशक्तियुक्तवामपाणित्रयश्च २२ श्रीपार्श्वजिनस्य वामनो यक्षो मतान्तरेण पार्श्वनामा यक्षो गजमुख उरगफणमण्डितशिराः श्यामवर्णः कूर्मवाहनश्चतुर्भुजो वीजपूरकोरगयुक्तदक्षिणपाणिद्वयो नकुलभुजगयुक्तवामपाणियुगश्च २३ श्रीवीरजिनस्य मातङ्गो यक्षः श्यामवर्णो गजवाहनो द्विभुजो नकुलयुक्तदक्षिणभुजो वामकरधृतवीजपूरकश्चेति २४ ॥ ३७४ ॥ २६ ॥ इदानीं 'जिणदेवीओ'त्ति सप्तविंशतितमं द्वारमाह—

**देवीओ चक्केसरी १ अजिया २ दुरियारि ३ कालि ४ महकाली ५ । अच्चुय ६ संता ७ जाला ८**
**सुतारया ९ ऽसोय १० सिरिवच्छा ११ ॥ ३७५ ॥ पवर १२ विजयं १३ कुसा १४ पण्णत्ती १५**
**निव्वाणि १६ अच्चुया १७ धरणी १८ । वइरोट्ट १९ ऽच्छुत्त २० गंधारि २१ अंब २२ पउमावई २३**
**सिद्धा २४ ॥ ३७६ ॥**

'देवी'त्यादि गाथाद्वयं, तत्राद्यजिनस्य चक्रेश्वरी देवी, मतान्तरेणाप्रतिचक्रा, सुवर्णवर्णा गरुडवाहना अष्टकरा वरदवाणचक्रपाशयुक्त-

दक्षिणपाणिचतुष्टया, धनुर्वज्रचक्राङ्कुशयुक्तवामपाणिचतुष्टया चेति १, श्रीअजितजिनस्याजिताऽजितबला वा देवी गौरवर्णा लोहासनाधिरूढा चतुर्भुजा वरदपाशकाधिष्ठितदक्षिणकरद्वया बीजपूरकाङ्कुशालङ्कृतवामपाणिद्वया च २, श्रीसम्भवस्य दुरितारिर्देवी गौरवर्णा मेषवाहना चतुर्भुजा वरदाक्षसूत्रभूषितदक्षिणभुजद्वया फलाभयान्वितवामकरद्वया च ३, श्रीअभिनन्दनस्य कालीनामा देवी श्यामकान्तिः पद्मासना चतुर्भुजा वरदपाशाधिष्ठितदक्षिणकरद्वया नागाङ्कुशालङ्कृतवामपाणिद्वया च ४, श्रीसुमतेर्महाकाली देवी सुवर्णवर्णा पद्मासना चतुर्भुजा वरदपाशाधिष्ठितदक्षिणकरद्वया मातुलिङ्गांकुशयुक्तवामपाणिद्वया चेति ५, श्रीपद्मप्रभस्याच्युता मतान्तरेण श्यामा देवी श्यामवर्णा नरवाहना चतुर्भुजा वरदबाणान्वितदक्षिणकरद्वया कार्मुकाभययुतवामपाणिद्वया च ६, श्रीसुपार्श्वस्य शान्ता देवी सुवर्णवर्णा गजवाहना चतुर्भुजा वरदाक्षसूत्रयुक्तदक्षिणकरद्वया शूलाभययुक्तवामहस्तद्वया च ७, श्रीचन्द्रप्रभस्य ज्वाला मतान्तरेण भृकुटिर्देवी पीतवर्णा वरालकाख्यजीवविशेषवाहना चतुर्भुजा खड्गमुद्गरभूषितदक्षिणकरद्वया फलकपरशुयुतवामपाणिद्वया च ८, श्रीसुविधेः सुतारा देवी गौरवर्णा वृषभवाहना चतुर्भुजा वरदाक्षसूत्रयुक्तदक्षिणकरद्वया कलशाङ्कुशाञ्चितवामपाणिद्वया च ९, श्रीशीतलस्य अशोका देवी नीलवर्णा पद्मासना चतुर्भुजा वरदपाशयुक्तदक्षिणपाणिद्वया फलकाङ्कुशयुक्तवामपाणिद्वया च १०, श्रीश्रेयांसस्य श्रीवत्सा देवी मतान्तरेण मानवी गौरवर्णा सिंहवाहना चतुर्भुजा वरदपाशयुक्तदक्षिणकरद्वया कलशाङ्कुशयुक्तवामकरद्वया च ११ ॥३७५॥ श्रीवासुपूज्यस्य प्रवरा देवी मतान्तरेण चण्डा देवी श्यामवर्णा तुरगवाहना चतुर्भुजा वरदशक्तियुक्तदक्षिणकरयुगा पुष्पगदायुतवामकरद्वया च १२, श्रीविमलस्य विजया मतान्तरेण विदिता देवी हरितालवर्णा पद्मासना चतुर्भुजा बाणपाशयुक्तदक्षिणकरद्वया धनुर्नागयुतवामपाणिद्वया च १३, श्रीअनन्तजिनस्य अङ्कुशा देवी गौरवर्णा पद्मासना चतुर्भुजा खड्गपाशयुक्तदक्षिणपाणिद्वया फलकाङ्कुशयुक्तवामकरद्वया च १४, श्रीधर्मस्य पन्नगा देवी मतान्तरेण कन्दर्पा गौरवर्णा

मत्स्यवाहना चतुर्भुजा उत्पलाङ्कुशयुक्तदक्षिणपाणिद्वया पद्माभययुतवामपाणिद्वया च १५, श्रीशान्तिनाथस्य निर्वाणीदेवी कनकरुचिः पद्मासना चतुर्भुजा पुस्तकोत्पलयुक्तदक्षिणपाणिद्वया कमण्डलुकमलकलितवामकरद्वया च १६, श्रीकुन्थोरच्युता देवी मतान्तरेण वलाभिधाना कनकच्छविर्मयूरवाहना चतुर्भुजा बीजपूरकशूलान्वितदक्षिणपाणिद्वया मुषुण्ढिपद्मान्वितवामपाणिद्वया च १७, श्रीअरजिनस्य धारणी देवी नीलवर्णा पद्मासना चतुर्भुजा मातुलिङ्गोत्पलयुक्तदक्षिणपाणिद्वया पद्माक्षसूत्रान्वितवामपाणिद्वया च १८, श्रीमल्लिजिनस्य वैरोट्या देवी कृष्णवर्णा पद्मासना चतुर्भुजा वरदाक्षसूत्रयुक्तदक्षिणपाणिद्वया बीजपूरकशक्तियुक्तवामपाणिद्वया चेति १९, श्रीमुनिसुव्रतस्य अच्छुप्ता देवी मतान्तरेण नरदत्ता कनकरुचिर्भद्रासनारूढा चतुर्भुजा वरदाक्षसूत्रयुक्तदक्षिणभुजद्वया बीजपूरकशूलयुक्तवामकरद्वया च २०, श्रीनमिजिनस्य गान्धारी देवी श्वेतवर्णा हंसवाहना चतुर्भुजा वरदखड्गयुक्तदक्षिणकरद्वया बीजपूरककुन्तकलितवामकरद्वया च २१, श्रीनेमिजिनस्य अम्बा देवी कनककान्तिरुचिः सिंहवाहना चतुर्भुजा आम्रलुम्बिपाशयुक्तदक्षिणकरद्वया पुत्राङ्कुशासक्तवामकरद्वया च २२, श्रीपार्श्वजिनस्य पद्मावती देवी कनकवर्णा कुर्कुटसर्पवाहना चतुर्भुजा पद्मपाशान्वितदक्षिणकरद्वया फलाङ्कुशाधिष्ठितवामकरद्वया च २३, श्रीवीरजिनस्य सिद्धायिका देवी हरितवर्णा सिंहवाहना चतुर्भुजा पुस्तकाभययुक्तदक्षिणकरद्वया बीजपूरकवीणाभिरामवामकरद्वया चेति २४। अत्र च सूत्रकारेण यक्षाणां देवीनां च केवलानि नामान्येवाभिहितानि न पुनर्नयनवदनवर्णादिस्वरूपं निरूपितं, अस्माभिस्तु शिष्यहिताय निर्वाणकलिकादिशास्त्रानुसारेण किंचित्तदीयमुखवर्णप्रहरणादिस्वरूपं निरूपितमिति ॥ ३७६ ॥ २७ ॥ इदानीं 'तनुमाणं'ति अष्टाविंशतितमं द्वारमाह—

**पंचधणूसय पढमो कमेण पण्णासहीण जा सुविही १००। दसहीण जा अणंतो ५० पंचूणा जाव**

**जिणनेमी १० ॥ ३७७ ॥ नव हत्थपमाणो पाससामिओ सत्त हत्थ जिणवीरो । उस्सेहअंगुलेणं सरीरमाणं जिणवराणं ॥ ३७८ ॥**

'पंचे'त्यादि गाथाद्वयं, तत्र प्रथमो जिनः—ऋषभस्वामी पञ्चधनुःशतः—पञ्च धनुषां शतानि अर्थाद्देहप्रमाणं यस्य स तथा पञ्चधनुःशतप्रमाण इत्यर्थः, ततोऽजितादयः '**क्रमेण**' परिपाट्या पञ्चाशता धनुषां हीना यावत्सुविधिजिनः, कोऽर्थः ?—पञ्चभ्यो धनुःशतेभ्यः पञ्चाशत्पञ्चाशत्पात्यन्ते, ततोऽजितजिनस्य चत्वारि धनुःशतानि पञ्चाशद्धनुरधिकानि देहमानं, एवं सम्भवस्वामिनश्चत्वारि धनुःशतानि, अभिनन्दनस्य पञ्चाशदधिकानि त्रीणि धनुःशतानि, सुमतिनाथस्य त्रीणि धनुःशतानि, पद्मप्रभस्य पञ्चाशदधिके द्वे धनुःशते, सुपार्श्वस्य द्वे धनुःशते, चन्द्रप्रभस्य सार्धं धनुःशतं, सुविधिस्वामिनः परिपूर्णं धनुःशतं, '**दसहीण जा अणंतो**'त्ति सुविधेरनन्तरं यावदनन्तजिनस्तावत्तीर्थकृतस्तनुमानविषये क्रमेण दशभिर्दशभिर्धनुर्भिर्हीना वक्तव्याः, ततोऽयमर्थः—सुविधिजिनतनुमानाद्धनुःशतलक्षणाद्दशस्वपनीतेषु शीतलस्य नवतिर्धनूंषि देहमानं, एवं श्रेयांसस्य अशीतिर्धनूंषि, वासुपूज्यस्य सप्ततिः, विमलस्य षष्टिः, अनन्तजिनस्य पञ्चाशद्धनूंषि, '**पंचूणा जाव जिणनेमि**'त्ति अनन्तजिनादनन्तरं तीर्थकृतः क्रमेण पञ्चभिः पञ्चभिर्न्यूनास्तावद्वक्तव्या यावन्नेमिजिनः, ततश्चायमर्थः—अनन्तजिनदेहमानात्पञ्चाशद्धनुःस्वरूपात् पञ्चसूद्धृतेषु धर्मजिनस्य पञ्चचत्वारिंशद्धनूंषि देहमानं, एवं शान्तिनाथस्य चत्वारिंशद्धनूंषि, कुन्थुनाथस्य पञ्चत्रिंशद्धनूंषि, अरस्वामिनस्त्रिंशत्, मल्लिजिनस्य पञ्चविंशतिः, मुनिसुव्रतस्य विंशतिः, नमिनाथस्य पञ्चदश, अरिष्ठनेमेर्दश धनूंषि, नवहस्तप्रमाणः पार्श्वस्वामी, सप्तहस्तप्रमाणश्च वीरजिनः, इत्येवमुत्सेधाङ्गुलेन—'परमाणू रहरेणु तसरेणु' इत्यादिक्रमनिष्पन्नेन शरीरमानमिदं जिनवराणां विज्ञेयमिति ॥ ३७७–३७८ ॥ २८ ॥ साम्प्रतं '**लंछणाणि**'त्ति एकोनत्रिंशत्तमं द्वारमाह—

वसह १ गय २ तुरय ३ वानर ४ कूंचू ५ कमलं च ६ सत्थिओ ७ चंदो ८। मयर ९ सिरिवच्छ १० गंडय ११ महिस १२ वराहो १३ य सेणो १४ य ॥ ३७९ ॥ वज्जं १५ हरिणो १६ छगलो १७ नंद्यावत्तो १८ य कलस १९ कुम्मो २० य। नीलुप्पल २१ संख २२ फणी २३ सीहो २४ य जिणाण चिन्धाइं ॥ ३८० ॥

'वसहे'त्यादि गाथाद्वयं, वृषभो गजस्तुरगो मर्कटः क्रौंचः कमलं च स्वस्तिकश्चन्द्रो मकरः श्रीवत्सो गण्डको महिषो वराहश्च श्येनश्च वज्रं हरिणश्छगलो नंदावर्तश्च कलशः कूर्मश्च नीलोत्पलं शङ्खः फणी सिंहश्च जिनानां—नाभेयादीनां चिह्नानि—लाञ्छनानि क्रमेण ज्ञातव्यानीति ॥ ३७९–३८० ॥ २९ ॥ इदानीं त्रिंशत्तमं 'वन्ना'इति द्वारमाह—

पउमाभवासुपुज्जा रत्ता ससिपुप्फदंत ससिगोरा । सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥ ३८१ ॥ वरतवियकणयगोरा सोलस तित्थंकरा मुणेयव्वा । एसो वन्नविभागो चउवीसाए जिणिंदाणं ॥ ३८२ ॥

'पउमे'त्यादि गाथाद्वयं, पद्मप्रभवासुपूज्यौ जपापुष्पवद्रक्तौ, शशिपुष्पदन्तौ—चन्द्रप्रभसुविधी शशिगौरौ—चन्द्रचारुरुची, सुव्रतनेमिनौ इन्द्रनीलमणिवत्कालौ, पार्श्वमल्लिजिनौ प्रियङ्ग्वाभौ, प्रियङ्गुः—फलिनीतरुस्तदाभौ नीलावित्यर्थः ॥३८१॥ वरं—अकृत्रिमं तापितं यत्कनकं तद्वद्गौराः शेषाः षोडश तीर्थङ्करा ज्ञातव्याः, एष वर्णविभागश्चतुर्विंशतेस्तीर्थकराणामिति ॥ ३८२ ॥ ३० ॥ इदानीं 'वयपरिवारो'त्ति एकत्रिंशत्तमं द्वारमाह—

**एगो भगवं वीरो पासो मल्ली य तिहिं तिहिं सएहिं । भगवंपि वासुपुज्जो छहिं पुरिससएहिं निक्खंतो ॥ ३८३ ॥ उग्गाणं भोगाणं रायण्णाणं च खत्तियाणं च । चउहिं सहस्सेहिं उसहो सेसा उ १९ सहस्सपरिवारा ॥ ३८४ ॥**

'**एगो**' इत्यादि गाथाद्वयं, तत्र एको भगवान् वीरो—वर्धमानस्वामी प्रव्रजितः, न केनापि सह तेन व्रतं गृहीतमित्यर्थः, पार्श्वनाथो भगवांश्च मल्लिस्त्रिभिस्त्रिभिः शतैः सह व्रतमग्रहीत्, अत्र च मल्लिस्वामी स्त्रीणां पुरुषाणां च प्रत्येकं त्रिभिस्त्रिभिः शतैः सह प्रव्रजितः, ततो मिलितानि पट् शतानि भवन्ति, यत्तु सूत्रे त्रिभिः शतैरित्युक्तं तत्र केवलाः स्त्रियः पुरुषा वा गृहीताः, द्वितीयः पुनः पक्षः सन्नपि न विवक्षित इति सम्प्रदायः, स्थानाङ्गटीकायामप्युक्तं—"मल्लिजिनः स्त्रीशतैरपि त्रिभि"रिति, भगवानपि वासुपूज्यः षड्भिः पुरुषशतैः सह निष्क्रान्तः—संसारकान्तारान्निर्गतः प्रव्रजित इतियावत् ॥३८३॥ उग्राणां—आरक्षकस्थानीयानां भोगानां—गुरुप्रायाणां राजन्यानां—मित्रप्रायाणां क्षत्रियाणां—सामन्तादीनां सर्वसङ्ख्यया चतुर्भिः सहस्रैः सह ऋषभः—प्रथमो जिनो निष्क्रान्तो व्रतं जग्राहेत्यर्थः शेषास्तु—वीरपार्श्वमल्लिवासुपूज्यनाभेयव्यतिरिक्ता जिना अजितादय एकोनविंशतिः सहस्रपरिवाराः—एकपुरुषसहस्रसहिताः प्राव्राजिषुरिति ॥ ३८४ ॥ ३१ ॥

इदानीं 'सव्वाउय'न्ति द्वात्रिंशत्तमं द्वारमाह—

**चउरासीइ १ बिसत्तरि २ सट्ठी ३ पन्नास ४ मेव लक्खाइं । चत्ता ५ तीसा ६ वीसा ७ दस ८ दो ९ एगं १० च पुव्वाणं ॥ ३८५ ॥ चउरासी ११ बावत्तरी १२ य सट्ठी १३ य होइ वासाणं । तीसा १४ य दस १५ य एगं १६ एवं एए सयसहस्सा ॥ ३८६ ॥ पंचाणउइ सहस्सा १७ चउ-**

रासीई १८ य पंचवन्ना १९ य । तीसा २० य दस २१ य एगं २२ सयं २३ च बावत्तरी २४ चेव ॥ ३८७ ॥

'चउ' इत्यादि गाथात्रयं, तत्र प्रथमजिनस्य सर्वायुश्चतुरशीतिः पूर्वाणां लक्षाणि, श्रीअजितस्य द्विसप्ततिः पूर्वलक्षाः, श्रीसम्भवस्य षष्टिः पूर्वलक्षाः, श्रीअभिनन्दनस्य पञ्चाशत्पूर्वलक्षाः, श्रीसुमतेश्चत्वारिंशत्पूर्वलक्षाः, श्रीप्रद्मप्रभस्य त्रिंशत्पूर्वलक्षाः, श्रीसुपार्श्वस्य विंशतिः पूर्वलक्षाः, श्रीचन्द्रप्रभस्य दश पूर्वलक्षाः, श्रीसुविधेर्द्वे पूर्वलक्षे, श्रीशीतलस्य एकं पूर्वलक्षं ॥ ३८५ ॥ तथा श्रेयांसस्य चतुरशीतिर्वर्षाणां शतसहस्राणि लक्षाणीत्यर्थः, श्रीवासुपूज्यस्य द्विसप्ततिर्वर्षलक्षाः, श्रीविमलस्य षष्टिर्वर्षलक्षाः, श्रीअनन्तस्य त्रिंशद्वर्षलक्षाः, श्रीधर्मस्य दश वर्षलक्षाः, श्रीशान्तेरेकं वर्षलक्षं ॥३८६॥ तथा श्रीकुन्थोः पञ्चनवतिर्वर्षसहस्राः सर्वायुः, श्रीअरजिनस्य चतुरशीतिर्वर्षसहस्राः, श्रीमल्लेः पञ्चपञ्चाशद्वर्षसहस्राः, श्रीसुव्रतस्य त्रिंशद्वर्षसहस्राः, श्रीनमेर्दश वर्षसहस्राणि, श्रीनेमेरेकं वर्षसहस्रं, श्रीपार्श्वनाथस्य एकं वर्षशतं, श्रीवीरजिनस्य च द्विसप्त तिरेव वर्षाणीति ॥ ३८७ ॥ ३२ ॥ इदानीं 'सिवगमणपरिवारो'त्ति त्रयस्त्रिंशत्तमं द्वारमाह—

एगो भगवं वीरो तेत्तीसाएँ सह निव्वुओ पासो । छत्तीसेहिं पंचहि सएहिं नेमी उ सिद्धिगओ ॥ ३८८ ॥ पंचहिं समणसएहिं मल्ली संती उ नवसएहिं तु । अट्ठसएणं धम्मो सएहिं छहिं वासुपुज्जजिणो ॥ ३८९ ॥ सत्तसहस्साणंतइजिणस्स विमलस्स छस्सहस्साइं । पंच सयाइं सुपासे पउमाभे तिण्णि अट्ठसया ॥ ३९० ॥ दसहिं सहस्सेहिं उसहो सेसा उ सहस्सपरिवुडा सिद्धा । तित्थयरा उ दुवालस परिनिट्ठियअट्ठकम्मभरा ॥ ३९१ ॥

'एगो' इत्यादि गाथात्रयं, तत्र एकः—एकाकी सन् भगवान् श्रीवीरो 'निर्वृत्तो' निर्वाणं ययौ, त्रयस्त्रिंशता साधुभिः सह निर्वृत्तः पार्श्वजिनः, षट्त्रिंशदधिकैः पञ्चभिः शतैः सह नेमिजिनः सिद्धिं गतः ॥ ३८८ ॥ पञ्चभिः श्रमणशतैः सह मल्लिजिनः, शान्तिजिनस्तु नवभिः श्रमणशतैः समं, अष्टोत्तरशतेन सह धर्मजिनः, शतैः षड्भिः सार्धं वासुपूज्यजिनः सिद्धिं गतः ॥ ३८९ ॥ तथाऽनन्तजिज्जिनस्य निर्वाणं गच्छतः सप्त सहस्राणि परिवारः, विमलनाथस्य षट् सहस्राणि, पञ्च शतानि च 'सुपार्श्वे' सुपार्श्वस्य, 'पद्माभे' पद्मप्रभस्य त्रीण्यष्टोत्तराणि शतानि, अन्ये त्र्युत्तराण्यष्टौ शतानीति व्याख्यानयन्ति, आवश्यकटिप्पनके तु पद्मप्रभतीर्थकृद्विषये "त्रीण्यष्टोत्तरशतानि साधूनां निर्वृत्तानीत्यवगन्तव्यं, त्रिगुणमष्टोत्तरं शतमित्यर्थः, त्रीणि शतानि चतुर्विंशत्यधिकानीतियावत्" इति व्याख्यातं, तत्त्वं पुनः केवलिनो विदन्ति, ॥ ३९० ॥ तथा दशभिः सहस्रैः ऋषभः—प्रथमो जिनः परमानन्दश्रियमाशिश्लेष, शेषाः पुनरजितसम्भवाभिनन्दनसुमचन्द्रप्रभसुविधिशीतलश्रेयांसकुन्थुनाथारजिनमुनिसुव्रतनमिलक्षणा द्वादश तीर्थकृतः प्रत्येकमेकसहस्रपरिवृताः परिनिष्ठिताष्टकर्मभराः तिसन्तः सिद्धा इति ॥ ३९१ ॥ ३३ ॥ इदानीं 'निव्वाणगमणठाणं'ति चतुस्त्रिंशत्तमं द्वारमाह—

**अट्ठावयचंपुज्जिंतपावासम्मेयसेलसिहरेसु । उसभवसुपुज्जनेमी वीरो सेसा य सिद्धिगया ॥३९२॥**

'अट्ठे'त्यादि, अष्टापदे चम्पायां उज्जयन्ते अपापायां पुरि सम्मेतशैलशिखरे च यथासङ्ख्येन ऋषभो वासुपूज्यो नेमिर्जिनो वीरः शेषजिनाश्च सिद्धिं गताः, अष्टापदपर्वते श्रीऋषभस्वामी सिद्धिमगमत्, चम्पायां नगर्यां वासुपूज्यः, उज्जयन्तगिरौ नेमिनाथः, अपापायां नगर्यां श्रीमहावीरः, शेषास्तु उक्तव्यतिरिक्ता अजितादयो विंशतिस्तीर्थकृतः सम्मेतशैलशिखरे इति ॥ ३९२ ॥ सम्प्रति 'जिणंतराइं'ति पञ्चत्रिंशं द्वारमाह—

एत्तो जिणंतराइं वोच्छं किल उसभसामिणो अजिओ । पण्णासकोडिलक्खेहिं सायराणं समुप्पण्णो ॥ ३९३ ॥ तीसाए संभवजिणो दसहि उ अभिनंदणो जिणवरिंदो । नवहि उ सुमइजिणिंदो उप्पण्णो कोडिलक्खेहिं ॥ ३९४ ॥ नउईइ सहस्सेहिं कोडीणं वोलियाण पउमाभो । नवहि सहस्सेहिं तओ सुपासनामो समुप्पण्णो ॥ ३९५ ॥ कोडिसएहिं नवहि उ जाओ चंदप्पहो जणाणंदो । नउईए कोडीहिं सुविहिजिणो देसिओ समए ॥ ३९६ ॥ सीयलजिणो महप्पा तत्तो कोडीहि नवहिं निदिट्ठो । कोडीए सेयंसो ऊणाइ इमेण कालेण ॥ ३९७ ॥ सागरसएण एगेण तह य छावट्ठिवरिसलक्खेहिं । छव्वीसाइ सहस्सेहिं तओ पुरो अंतरेसुत्ति ॥ ३९८ ॥ चउपण्णा अयरेहिं वसुपुज्जजिणो जगुत्तमो जाओ । विमलो विमलगुणोहो तीसहि अयरेहि रयरहिओ ॥ ३९९ ॥ नवहिं अयरेहि ऽणंतो चउहि उ धम्मो उ धम्मधुरधवलो । तिहि ऊणेहिं संती तिहि चउभागेहिं पलियस्स ॥ ४०० ॥ भागेहि दोहिं कुंथू पलियस्स अरो उ एगभागेणं । कोडिसहस्सोणेणं वासाण जिणेसरो भणिओ ॥ ४०१ ॥ मल्ली तिसल्लरहिओ जाओ वासाण कोडिसहसेण । चउपण्णवासलक्खेहिं सुव्वओ सुव्वओ सिद्धो ॥ ४०२ ॥ जाओ छहि नमिनाहो पंचहि लक्खेहिं जिणवरो नेमी । पासो अद्धट्ठमसय समहियतेसीइसहसेहिं ॥ ४०३ ॥ अड्ढाइज्जसएहिं

**गएहिं वीरो जिणेसरो जाओ । दूसमअइदूसमाणं दोण्हंपि दुचत्तसहसेहिं ॥ ४०४ ॥ पुज्जइ कोडाकोडी उसहजिणाओ इमेण कालेण । भणियं अंतरदारं एयं समयाणुसारेणं ॥ ४०५ ॥**

'एत्तो' इत्यादि गाथात्रयोदशकं, 'इतो' जिननिर्वाणस्थानानन्तरं जिनान्तराणि—जिनानामन्तरालान्यहं वक्ष्ये—कथयिष्यामि, किलेत्याप्तोपदेशे, अत्र च 'लक्खेहिं' इत्यादिपदेषु सप्तम्यर्थे तृतीया, तत ऋषभस्वामिनः सकाशादजितो जिनः पञ्चाशत्कोटिलक्षेषु सागरोपमाणां गतेषु समुत्पन्नः सिद्धत्वेनेति शेषः, यद्वाऽनेकार्थत्वाद्धातूनां समुत्पन्नः सिद्ध इत्यर्थः, न तु समुत्पन्नो जात इति, इह हि 'उसहसामिणो' इत्यादिपदेषु अवधौ पञ्चमी, अवधिश्च द्विधा—अभिविधिर्मर्यादा च, तत्र यद्यभिविधौ पञ्चमीतिकृत्वा समुत्पन्नो—जात इति व्याख्यायेत तदा ऋषभस्वाम्यादिजन्मकालाद्यथोक्तमजितादिजन्मकालमानं स्यात्, ततश्च ऋषभस्वामिनः सर्वायुःकालमानेनाधिकेषु दुष्षमसुषमारकस्य एकोननवतिपक्षेषु अवशिष्यमाणेषु श्रीमहावीरस्वामिनः सिद्धिः प्रसज्येत, आगमे तु अन्यूनाधिकेषु एकोननवतिपक्षेष्ववशेषेषु श्रीमहावीरसिद्धिरुक्तेत्यागमविरोधप्रसङ्गेन नात्राभिविधौ पञ्चमी, किन्तु मर्यादायामेव, तत्रापि यदि समुत्पन्नो—जात इति व्याख्यायेत तदा ऋषभस्वाम्यादिनिर्वाणकालाद्यथोक्तमजितादिजन्मकालमानं स्यात्, ततश्च यथोक्तजिनान्तराणां कालमानैरेव चतुर्थारकः परिपूर्णः, श्रीमदजितादिजिनत्रयोविंशतेः सर्वायुःकालमानं तु जिनान्तरकालासङ्गृहीतत्वात्तदधिकमापद्यत इत्यतोऽप्रेतनोत्सर्पिण्यां श्रीमन्महावीरसिद्धिः प्रसज्येत, न चैतदिष्टं, तस्मादृषभस्वाम्यादिनिर्वाणाद्यथोक्तकालेन अजितादयः समुत्पन्नाः—सिद्धा इत्येवं व्याख्यातव्यं, नान्यथेति ॥३९३॥ तथा **'तीसाए संभवजिणो'**त्ति श्रीअजितजिननिर्वाणात् त्रिंशत्सागरोपमकोटिलक्षेषु गतेषु श्रीसम्भवजिनः समुत्पन्नः सिद्ध इत्यर्थः, सम्भवानन्तरं च दशसु सागरोपमकोटिलक्षेषु गतेषु अभिनंदनजिनः समुत्पन्नो निर्वृत्त इत्यर्थः, तदनन्तरं नवसु सागरकोटिलक्षेषु

गतेषु सुमतिजिनेन्द्रः समुत्पन्नो—मुक्तो जातः ॥३९४॥ तदनन्तरं नवतिसहस्रेषु सागरोपमकोटीनां व्यपगतेषु पद्मप्रभः समुत्पन्नः शिवश्रियमवापदित्यर्थः, तदनन्तरं नवसु सागरकोटीनां सहस्रेषु गतेषु श्रीसुपार्श्वनामा जिनः समुत्पन्नो निर्वाणमगच्छदित्यर्थः ॥३९५॥ सुपार्श्वानन्तरं च सागरोपमकोटिशतेषु नवसु गतेषु जातः सिद्धत्वेन चन्द्रप्रभो **'जनानन्दो'** जनानन्दकारी, तदनन्तरं नवतौ सागरोपमकोटीषु गतासु सुविधिजिनो **'देशितः'** कथितः सिद्धत्वेन **'समये'** सिद्धान्ते ॥३९६॥ सुविधेरनन्तरं च शीतलजिनो महात्मा सागरोपमकोटिषु नवसु गतासु **'निर्दिष्टः'** कथितो मुक्तत्वेनेति, तदनन्तरमनेन कालेन सागरोपमैकशतषट्षष्टिवर्षलक्षषड्विंशतिवर्षसहस्ररूपेण ऊनायां सागरोपमकोट्यां गतायां श्रेयांसः सिद्धत्वेन जातः, **'तओ पुरो अंतरेसु'**त्ति ततः—तस्मात् श्रीश्रेयांसजिनात् पुरः—अग्रतोऽनन्तरमित्यर्थः **'इति'** वक्ष्यमाण प्रकारेण भणिष्यमाणेषु अन्तरेषु व्यतिक्रान्तेषु वक्ष्यमाणा वासुपूज्यादयो जिनाः सिद्धा इति ॥३९७-८॥ एतदेवाह—**'चउप्पन्ना अयरेहिं'** इत्यादि, श्रेयांसादनन्तरं चतुष्पञ्चाशत्सु अतरेषु गतेषु वासुपूज्यो जिनो जगदुत्तमो जातः सिद्धत्वेनेति, तदनन्तरं विमलजिनो विमलगुणौघस्त्रिंशत्यतरेषु गतेषु रजोरहितः—कर्मनिर्मुक्तो जातः सिद्ध इत्यर्थः ॥३९९॥ तदनन्तरं नवस्वतरेषु गतेषु अनन्तो जिनो जातो—निर्वृत्त इति, तदनन्तरं चतुर्ष्वतरेषु गतेषु धर्मस्तु—धर्मनामा जिनो धर्मधुराधवलो मोक्षं जगामेति, तदनन्तरं त्रिष्वतरेषु चतुर्भागीकृतस्य 'पल्यस्य' पल्योपमस्य त्रिभिर्भागैर्न्यूनेषु गतेषु श्रीशान्तिनाथः शिवश्रियमशिश्रियत्, तदनन्तरं चतुर्भागीकृतस्य पल्योपमस्य ये पूर्वं त्रयो भागा उद्धरितास्तन्मध्याद्भागद्वितये गते कुन्थुजिनो निर्वृत्तः, तदनन्तरं एकस्मिन् पल्योपमचतुर्भागे वर्षकोटिसहस्रन्यूने गते श्रीअरो जिनेश्वरो भणितः सिद्धत्वेनेति ॥४००-१॥ तदनन्तरं मल्लिजिनस्त्रिशल्यरहितो—मायानिदानमिथ्यादर्शनलक्षणशल्यत्रयरहितो वर्षाणां कोटिसहस्रे गते जातः सिद्धत्वेनेति, तदनन्तरं चतुष्पञ्चाशद्वर्षलक्षेषु गतेषु सुव्रतः—शोभनव्रतः सुव्रतो ॥४०२॥ जिनः सिद्धः, तदनन्तरं षट्सु वर्षलक्षेषु गतेषु नमिनाथः

सिद्धः, तदनन्तरं पञ्चसु वर्षलक्षेपु गतेपु जिनवरो नेमिः सिद्धः, तदनन्तरं पार्श्वजिनोऽर्धाष्टमशतैः—सार्धसप्तशतैः समधिकेपु त्र्यशीतिवर्षसहस्रेपु गतेपु सिद्धिपदं प्रपेदे ॥४०३॥ तदनन्तरं सार्धवर्षशतद्वये गते सति वीरो जिनेश्वरो जातः सिद्धत्वेनेति ॥ ४०४ ॥ अत्र च एकोननवतिपक्षैरपरिपूर्णैश्चतुर्थारके श्रीआदिनाथः श्रीमहावीरश्च एकोननवतिपक्षैरपरिपूर्णे चतुर्थारके सिद्धः, एवं च चतुर्थारककालमानः सर्वजिनान्तरकालः संवृत्तः, चतुर्थारकश्च द्विचत्वारिंशद्वर्षसहस्रन्यूनसागरोपमकोटाकोटिप्रमाणः, ततो द्विचत्वारिंशद्वर्षसहस्रसहितेन जिनान्तरकालमानेन सागरोपमकोटाकोटेः परिपूरणायाह—'दूसमे'त्यादि, दुष्पमातिदुष्पमयोः—पञ्चमषष्ठारकयोर्द्वयोरपि सम्बन्धिभिर्द्विचत्वारिंशद्वर्षसहस्रैः सहितेन श्रीवृषभजिनादिनिर्वाणादनेन—पूर्वभणितेन जिनान्तरकालमानेन पूर्यते—सम्पूर्णा भवति कोटाकोटिरेका सागरोपमाणामिति भणितमन्तरद्वारमेतत् समयानुसारेण—सिद्धान्तानुसारेण ॥४०५॥ एषा च सागरोपमकोटाकोटिरेवं पूर्यते—यथा पञ्चाशत्सागरोपमकोटिलक्षास्तावदाद्यजिनाजितान्तरेण त्रिंशत्कोटिलक्षाः सम्भवस्य दश सागरोपमकोटिलक्षाः अभिनन्दनस्य नव सागरोपमकोटिलक्षाः सुमतिजिनस्य एवं पञ्चाशत् त्रिंशत् दश नव च मीलिता नवनवतिकोटिलक्षाः सञ्जाताः, ततः सागरोपमकोटीनां नवतिः सहस्राः पद्मप्रभस्य नव कोटिसहस्राः सुपार्श्वस्य, एवं नवनवतिकोटिसहस्राः जाताः, एककोटीसहस्रोऽवशिष्यते, तन्मध्यान्नव कोटिशतानि चन्द्रप्रभस्य, ततः शेषैककोटिशतमध्यान्नवतिः सागरोपमकोट्यः सुविधिजिनस्य, तदनु नव कोट्यः शीतलस्य, एका कोटिः श्रेयांसस्येति मिलितं कोटिशतं, तच्च चन्द्रप्रभसम्बन्धिषु नवसु कोटिशतेपु मील्यते, ततो जातं कोटिसहस्रं, एतच्च पूर्वदर्शितनवनवतिसागरोपमकोटिसहस्रेपु प्रक्षिप्यते, जातमेकं सागरोपमकोटिलक्षं, तदपि नवनवतिसागरोपमकोटिलक्षेपु प्रक्षिप्यते, ततो जाता सागरोपमकोटाकोटिरेकेति, या च श्रेयांसस्य सागरोपमकोटिरेका अभिदधे सा न परिपूर्णा ग्राह्या, किन्तु सागरोपमशतेनैकोनषट्षष्टिवर्षलक्षैः षड्-

विंशतिवर्षसहस्रैश्च न्यूना ग्राह्या, एषा चैकसागरोपमशतादिककाल एककोटेरुत्सारित एवं पूर्यते, यथा चतुष्पञ्चाशत्सागरोपमाणि तावद्वासुपूज्यस्य, त्रिंशत् विमलस्य, नव अनन्तस्य, चत्वारि धर्मस्य, एवं सप्तनवतिसागरोपमाणि जातानि, तदनु शान्तिनाथस्य त्रीणि सागरोपमाणि, परं न तानि सम्पूर्णानि, किन्तु चतुर्भागीकृतस्य पल्योपमस्य सम्बन्धिभिस्त्रिभिर्भागैर्न्यूनानि, तदनु द्वौ भागौ चतुर्भागीकृतस्य पल्योपमस्य सम्बन्धिनौ कुन्थुनाथस्य, एको भागः पल्यसम्बन्धी श्रीअरजिनस्य, सोऽपि चैको भागो न परिपूर्णः, किन्तु वर्षाणां कोटिसहस्रेणैकेन न्यूनः, स च कोटिसहस्रो मल्लिजिनस्य, एवं च श्रेयांसस्य सागरोपमकोटेर्यदपकृष्टं सागरोपमशतमासीत्तदिदं परिपूर्णमभूत्, इदानीं षट्षष्टिर्वर्षलक्षाः षड्विंशतिर्वर्षसहस्राश्च प्रतिपाद्यन्ते—तत्र चतुष्पञ्चाशल्लक्षाः सुव्रतस्य षट् लक्षा नमिजिनस्य पञ्च लक्षा नेमिजिनस्य मिलिताः पञ्चषष्टिवर्षलक्षाः, अर्धाष्टमशतसमधिकत्र्यशीतिसहस्राः पार्श्वजिनस्य, सार्धे द्वे शते श्रीवीरजिनस्य, एवं श्रीपार्श्ववीरयोरन्तरमानमीलनेन चतुरशीतिसहस्रा जाताः, शेषाश्च एकविंशतिवर्षसहस्रप्रमिता दुष्षमासम्बन्धिन एकविंशतिवर्षसहस्रप्रमिता अतिदुष्षमासम्बन्धिनो द्विचत्वारिंशत्सहस्रास्तेभ्यः षोडश सहस्राः पश्चाद्गुणितचतुरशीतिसहस्रेषु क्षिप्यंते, ततः समजनि लक्षं, तच्च पूर्वोक्तपञ्चषष्टिवर्षलक्षेषु क्षिप्तमिति जाताः षट्षष्टिर्वर्षलक्षाः षड्विंशतिः सहस्राश्च, ततः श्रेयांसजिनकोटौ न्यूनायां सागरशतं षट्षष्टिर्लक्षाः षड्विंशतिर्वर्षसहस्राश्च क्षिप्ता इति परिपूर्णा कोटिः, एवं च जाता एका सागरोपमकोटाकोटिरिति ॥ सम्प्रति प्रकारान्तरेण सर्वतीर्थकृच्चक्रवर्तिवासुदेवानामन्तराणि यस्य तीर्थकृतः काले अन्तरे वा यश्चक्रवर्ती वासुदेवो वा बभूवेत्येवंरूपाणि वपुःप्रमाणं सर्वायुश्च विनेयव्युत्पत्त्यर्थमाह—

**वत्तीसं घरयाइं काउं तिरियाअयाहि रेहाहिं । उड्ढाअयाहिं काउं पंच घराइं तओ पढमे ॥४०६॥**

**पन्नरस जिण निरंतर सुन्नदुगं तिजिण सुन्नतियगं च । दो जिण सुन्न जिणिंदो सुन्न जिणो सुन्न**

दोन्नि जिणा ॥ ४०७ ॥ बिईयपंतिठवणा–दो चक्कि सुन्न तेरस पण चक्की सुण्ण चक्कि दो सुण्णा । चक्की सुन्न दुचक्की सुण्णं चक्की दुसुण्णं च ॥ ४०८ ॥ तईयपंतिठवणा–दस सुण्ण पंच केसव पणसुण्णं केसि सुण्ण केसी य । दो सुण्ण केसवोऽवि य सुण्णदुगं केसव तिसुण्णं ॥ ४०९ ॥ चउत्थपंतिठवणा–उसहभरहाण दोण्हवि उच्चत्तं पंचधणुसए हुंति । अजियसगराण दोण्हवि उच्चत्तं चारि अद्धं च ॥ ४१० ॥ पन्नासं पन्नासं धणुपरिहाणी जिणाण तेण परं । ता जाव पुप्फदंतो धणुसयमेगं भवे उच्चो ॥ ४११ ॥ नउइ धणू सीयलस्स सेज्जंसतिविट्ठुमाइणं पुरओ । जा धम्मपुरिससीहो उच्चत्तं तेसिमं होइ ॥ ४१२ ॥ कमसो असीइ सत्तरि सट्ठी पण्णास तह य पणयाला । एए हवंति धणुया बायालद्धं च मघवस्स ॥ ४१३ ॥ इगयालं धणु सद्धं च सणंकुमारस्स चक्कवट्टिस्स । संतिस्स य चत्ताला कुंथुजिणिंदस्स पणतीसा ॥ ४१४ ॥ तीस धणूणि अरस्स उ इगुतीसं पुरिसपुंडरीयस्स । अट्ठावीस सुभूमे छव्वीस धणूणि दत्तस्स ॥ ४१५ ॥ मल्लिस्स य पणुवीसा वीसं च धणूणि सुव्वए पउमे । नारायणस्स सोलस पनरस नमिनाहहरिसेणे ॥ ४१६ ॥ बारस जयनामस्स य नेमीकण्हाण दसधणुच्चत्तं । सत्तधणु बंभदत्तो नव रयणीओ य पासस्स ॥ ४१७ ॥ वीरस्स सत्त रयणी उच्चत्तं भणियमाउअं अहुणा । पंचमघरयनिविट्ठं कमेण सव्वेसि वोच्छामि ॥ ४१८ ॥ उसहभरहाण दोण्हवि चुलसीई पुव्वसयसहस्साइं । अजियसागराण दोण्हवि याव-

त्तरि सयसहस्साइं ॥ ४१९ ॥ पुरओ जहक्कमेणं सट्ठी पण्णास चत्त तीसा य । वीसा दस दो चेव य लक्खेगो चेव पुव्वाणं ॥ ४२० ॥ सेज्जंसतिविट्ठूणं चुलसीई वाससयसहस्साइं । पुरओ जिणकेसीणं धम्मो ता जाव तुल्लमिणं ॥ ४२१ ॥ कमसो बावत्तरि सट्ठि तीस दस चेव सयसहस्साइं । मघवस्स चक्किणो पुण पंचेव य वासलक्खाइं ॥ ४२२ ॥ तिन्नि य सणंकुमारे संतिस्स य वासलक्खमेगं तु । पंचाणउइ सहस्सा कुंथुस्सवि आउयं भणियं ॥ ४२३ ॥ चुलसीइ सहस्साइं तु आउयं होइ अरजिणिंदस्स । पणसट्ठिसहस्साइं आऊ सिरिपुंडरीयस्स ॥ ४२४ ॥ सट्ठिसहस्स सुभूमे छप्पन्न सहस्स हुंति दत्तस्स । पणपण्णसहस्साइं मल्लिस्सवि आउयं भणियं ॥४२५॥ सुव्वयमहपउमाणं तीस सहस्साइं आउयं भणियं । वारस वाससहस्सा आऊ नारायणस्स भवे ॥ ४२६ ॥ दस वाससहस्साइं नमिहरिसेणाण हुंति दुण्हंपि । तिण्णेव सहस्साइं आऊ जयनामचक्किस्स ॥ ४२७ ॥ वाससहस्सा आऊ नेमीकण्हाण होइ दोण्हंपि । सत्त य वाससयाइं चक्कीसरबंभदत्तस्स ॥ ४२८ ॥ वाससयं पासस्स य वासा बावत्तरिं च वीरस्स । इय बत्तीस घराइं समयविहाणेण भणियाइं ॥ ४२९ ॥

'बत्तीस'मित्यादि गाथाश्चतुर्विंशतिः, इह प्रज्ञापकेनालेखोपदर्शनार्थं पट्टिका सम्मुखमायता स्थाप्यते न तिर्यक्, तत्र तिर्यगायताभिस्त्रयस्त्रिंशता रेखाभिर्द्वात्रिंशतं गृहकाणि कृत्वा ऊर्ध्वायताभिः पड्भिः रेखाभिः पञ्च गृहकाणि क्रियन्ते, कृत्वा च ततस्तत्र पञ्चगृहकमध्ये

प्रथमे गृहके तिर्यगपेक्षया द्वात्रिंशद्गृहकात्मके पञ्चदशस्वान्तरगृहकेषु क्रमेण पञ्चदश जिना—ऋषभाद्या धर्मनाथपर्यन्ता निरन्तराः स्थाप्यन्ते, ततो गृहकद्वये शून्यद्विकं, ततो गृहकत्रये शान्तिकुन्थुअरजिनाः क्रमेण स्थाप्यन्ते, ततो गृहकत्रये शून्यत्रिकं, ततो गृहकद्वये क्रमेण मल्लिमुनिसुव्रतौ स्थाप्येते, तत एकस्मिन् गृहके शून्यं, तत एकस्मिन् गृहके नमिजिनः स्थाप्यः, ततः परस्मिन् गृहके शून्यं, ततः परस्मिन् गृहके नेमिजिनः, ततः परस्मिन् शून्यं, ततः परस्मिन् गृहकद्वये क्रमेण पार्श्वजिनो वीरजिनश्चेति प्रथमपङ्क्तिस्थापना । अथ द्वितीयपङ्क्तिस्थापना दर्श्यते—तत्र च प्रथमगृहकद्वये क्रमेण भरतः सगरश्चक्रवर्ती स्थाप्येते, ततस्त्रयोदशगृहकेषु क्रमेण शून्यानि त्रयोदश, ततः क्रमेण पञ्चसु गृहकेषु पञ्च चक्रवर्तिनो मघवत्सनत्कुमारशान्तिकुन्थुअरनामानः स्थाप्याः, ततः शून्यं, तदग्रेतनगृहे सुभूमश्चक्रवर्ती, ततो गृहकद्वये क्रमेण द्वे शून्ये, तदग्रेतनगृहे महापद्मश्चक्रवर्ती, तदग्रेतनगृहे शून्यं, तदग्रेतनगृहकद्वये क्रमेण हरिषेणजयनामानौ चक्रवर्तिनौ, ततः परस्मिन् गृहे शून्यं, ततः परस्मिन् गृहके चक्री ब्रह्मदत्तः, ततः परयोर्गृहकयोः क्रमेण द्वे शून्ये, इति द्वितीयपङ्क्तिस्थापना । इदानीं तृतीयपङ्क्तिस्थापना—दशसु गृहकेषु क्रमेण दश शून्यानि, ततः पञ्चसु गृहकेषु क्रमेण पञ्च केशवा—वासुदेवास्त्रिपृष्ठद्विपृष्ठस्वयम्भूपुरुषोत्तमपुरुषसिंहाभिधानाः, ततो गृहकेषु पञ्चसु क्रमेण पञ्च शून्यानि, सूत्रे तु 'पणसुन्न'मिति पञ्चानां शून्यानां समाहारः पञ्चशून्यमिति समाहारविवक्षया एकवचनं, ततः परस्मिन् गृहे केशवो—वासुदेवः पुरुषपुण्डरीकाभिधानः, ततः परस्मिन् गृहे शून्यं, ततः परस्मिन् गृहे केशी—दत्ताभिधानः, ततः परस्मिन् गृहकद्वये क्रमेण शून्यद्वयं, ततः परस्मिन् गृहे केशवो नारायणनामा, ततः परस्मिन् गृहकद्वये क्रमेण शून्यद्वयं, ततः परस्मिन् गृहे केशवः—कृष्णाभिधानः, ततः परस्मिन् गृहकत्रये क्रमेण शून्यत्रयमिति तृतीयपङ्क्तिस्थापना । इदानीं चतुर्थपङ्क्तिस्थापना—तत्र प्रथमगृहके वृषभजिनभरतचक्रिणोर्द्वयोरप्युच्चत्वं कायस्य पञ्च धनुःशतानि, द्वितीयगृहके अजितजिनसगरचक्रिणोर्द्व-

चत्वारि धनुःशतानि सार्धानि, ततः परं सम्भवादीनां जिनानां पञ्चाशत्पञ्चाशद्धनुःपरिहाणिस्तावद्यावत्पुष्पदन्तः—सुविधि-
योरप्युच्चत्वं चत्वारि धनुःशतानि सार्धानि, अयमर्थः—तृतीयगृहके सम्भवजिनस्य चत्वारि धनुःशतानि देहमानं, चतुर्थगृहके अभिनन्दनस्य त्रीणि ध-
जिनो धनुःशतमेकं भवेदुच्चः, पञ्चमगृहके सुमतिजिनस्य त्रीणि धनुःशतानि, षष्ठगृहे पद्मप्रभस्य द्वे धनुःशते सार्धे, सप्तमगृहे सुपार्श्वस्य द्वे धनुः-
नुःशतानि सार्धानि, अष्टमगृहे चन्द्रप्रभस्य धनुःशतं सार्धं, नवमगृहके धनुःशतमेकं सुविधेरिति, ततो दशमगृहके शीतलस्य नवतिर्धनूंषि, पुरतः—अन-
शते, न्तरं श्रेयांसत्रिपृष्ठादीनां यावद्धर्मजिनपुरुषसिंहौ तावत्तेषामुच्चत्वमिदं—धनुरशीत्यादिकं क्रमशो भवति, अयमर्थः—एकादशे गृहके श्रेयांस-
जिनत्रिपृष्ठवासुदेवयोरशीतिर्धनूंषि, ततो द्वादशके गृहके वासुपूज्यजिनद्विपृष्ठवासुदेवयोः सप्ततिर्धनूंषि, ततस्त्रयोदशगृहे विमलजिनस्वय-
म्भूवासुदेवयोः षष्टिर्धनूंषि, ततश्चतुर्दशगृहके अनन्तजिनपुरुषोत्तमवासुदेवयोः पञ्चाशद्धनूंषि, ततः पञ्चदशगृहके धर्मजिनपुरुषसिंहवासु-
देवयोः पञ्चचत्वारिंशद्धनूंषीति, तथा षोडशकगृहे मघवतश्चक्रवर्तिनो द्विचत्वारिंशद्धनूंषि तदर्धं च, हस्तद्वयमित्यर्थः, सप्तदशगृहके एक-
चत्वारिंशद्धनूंषि तदर्धं च सनत्कुमारचक्रवर्तिनः, अष्टादशे गृहे शान्तिजिनस्य परिपूर्णानि चत्वारिंशद्धनूंषि, एकोनविंशे गृहके कुन्थुजि-
नेन्द्रस्य पञ्चत्रिंशद्धनूंषि, विंशतितमे गृहके त्रिंशद्धनूंषि अरजिनस्य, तत एकविंशतितमे गृहके पुरुषपुण्डरीकस्य वासुदेवस्य एकोनत्रिंशद्ध-
नूंषि, द्वाविंशतितमगृहे सुभूमचक्रवर्तिनोऽष्टाविंशतिर्धनूंषि, त्रयोविंशतितमगृहके दत्तस्य वासुदेवस्य षड्विंशतिर्धनूंषि, चतुर्विंशे गृहे मल्लि-
जिनस्य पञ्चविंशतिर्धनूंषि, पञ्चविंशतितमे गृहके सुव्रतजिनमहापद्मचक्रवर्तिनोर्विंशतिर्धनूंषि, षड्विंशतितमे गृहके नारायणवासुदेवस्य
षोडश धनूंषि, सप्तविंशतितमे गृहे नमिनाथहरिषेणचक्रिणोः पञ्चदश धनूंषि, अष्टाविंशतितमे गृहे जयचक्रवर्तिनो द्वादश धनूंषि, एकोन-
त्रिंशत्तमे गृहे नेमिजिनकृष्णाभिधानवासुदेवयोर्दश धनूंषि उच्चत्वं, त्रिंशत्तमे गृहे ब्रह्मदत्तचक्रिणः सप्त धनूंषि, एकत्रिंशे गृहके पार्श्वजिनस्य

नव रत्नयो हस्ताः, द्वात्रिंशत्तमगृहके श्रीवीरजिनस्य सप्त हस्तास्तनुमानं ॥ एवमुच्चत्वं चतुर्थपङ्क्तौ सर्वेषां प्रथमजिनादीनां भणितं, इदानीं पञ्चम पङ्क्तिगृहकनिविष्टं सर्वेषां जिनादीनां क्रमेणायुष्कं वक्ष्यामि, तदेवाह—'उसहभरहाणं' इत्यादि, वृषभजिनभरतचक्रिणोर्द्वयोरपि प्रथमगृहके चतुरशीतिः पूर्वाणां शतसहस्राणि—लक्षाणि आयुः, द्वितीयगृहके अजितजिनसगरचक्रिणोर्द्वयोरपि द्विसप्ततिः पूर्वलक्षाणि, इतः पुरतो यथाक्रमं सम्भवादिजिनानां परिपाट्या षष्टिः पञ्चाशच्चत्वारिंशत् त्रिंशत् विंशतिर्दश द्वे एकं लक्षं पूर्वाणामिति, अयमर्थः—तृतीये गृहके सम्भवस्य षष्टिः पूर्वलक्षाः सर्वायुः, चतुर्थगृहके अभिनन्दनस्य पञ्चाशत्पूर्वलक्षाः, पञ्चमगृहे सुमतिजिनस्य चत्वारिंशत्पूर्वलक्षाः, षष्ठगृहे पद्मप्रभस्य त्रिंशत्पूर्वलक्षाः, सप्तमगृहे सुपार्श्वस्य विंशतिः पूर्वलक्षाः, अष्टमगृहे चन्द्रप्रभस्य दश पूर्वलक्षाः, नवमगृहे सुविधेर्द्वे पूर्वलक्षे, दशमगृहे शीतलस्य एकं पूर्वलक्षमिति, तथा एकादशे गृहे श्रेयांसजिनत्रिपृष्ठवासुदेवयोश्चतुरशीतिर्वर्षलक्षाः, पुरतः—अनन्तरं जिनकेशीनां—तीर्थकृद्वासुदेवानां यावद्धर्मपुरुषसिंहौ तावत्परस्परं तुल्यमिदमायुः, तदेव दर्शयति—'कमसो' इत्यादि, क्रमशः—परिपाट्या द्विसप्ततिः षष्टिस्त्रिंशत् दशैव शतसहस्राणि—वर्षलक्षाणि, अयमर्थः—द्वादशे गृहे वासुपूज्यद्विपृष्ठवासुदेवयोर्द्विसप्ततिर्वर्षलक्षाः, त्रयोदशे गृहे विमलजिनस्वयम्भूवासुदेवयोः षष्टिर्वर्षलक्षाः, चतुर्दशे गृहे अनन्तजिनपुरुषोत्तमवासुदेवयोस्त्रिंशद्वर्षलक्षाः, पञ्चदशे गृहे धर्मजिनपुरुषसिंहवासुदेवयोर्दश वर्षलक्षा इति, तथा षोडशे गृहके मघवतश्चक्रिणः पञ्च वर्षलक्षाः, सप्तदशे गृहके सनत्कुमारचक्रवर्तिनस्त्रीणि वर्षलक्षाणि, अष्टादशे गृहे शान्तिजिनचक्रवर्तिनो वर्षलक्षमेकं, एकोनविंशतितमगृहे कुन्थोर्जिनचक्रिणः पञ्चनवतिर्वर्षसहस्राः सर्वायुर्भणितं, विंशतितमगृहे अरजिनस्य चक्रिणश्चतुरशीतिवर्षसहस्राण्यायुर्भवति, एकविंशतितमे गृहे पञ्चषष्टिर्वर्षसहस्राण्यायुः पुरुषपुण्डरीकवासुदेवस्य, द्वाविंशतितमगृहे षष्टिर्वर्षसहस्राः सुभूमचक्रिणः, त्रयोविंशे गृहे षट्पञ्चाशद्वर्षसहस्रा भवन्ति दत्तस्य वासुदेवस्य, चतुर्विंशतितमे गृहे पञ्चप-

श्चाशद्वर्षसहस्राणि मल्लिजिनस्याप्यायुर्भणितं, पञ्चविंशतितमगृहे मुनिसुव्रतजिनमहापद्मचक्रिणोस्त्रिंशद्वर्षसहस्राण्यायुर्भणितं, षड्विंशतितमगृहे द्वादश वर्षसहस्राण्यायुर्नारायणवासुदेवस्य भवेत्, सप्तविंशतितमगृहे दश वर्षसहस्राणि नमिजिनहरिषेणचक्रिणोर्द्वयोरपि भवन्तीति, अष्टाविंशतितमगृहे त्रीणि वर्षसहस्राण्यायुर्जयनाम्नश्चक्रिणः, एकोनत्रिंशत्तमगृहे एकं वर्षसहस्रमायुर्नेमिजिनकृष्णवासुदेवयोर्द्वयोरपि भवति, त्रिंशत्तमगृहे सप्त वर्षशतानि चक्रेश्वरब्रह्मदत्तस्य, एकत्रिंशत्तमगृहे वर्षशतं पार्श्वजिनस्य, द्वात्रिंशत्तमगृहे च वर्षाणि द्विसप्ततिर्वीरजिनस्य सर्वायुरिति द्वात्रिंशद् गृहकाणि समयविधानेन भणितानि । ३५ स्थापना चेयं

| जिनाः | चक्रिणः | वासुदेवाः | तनुमानं | आयुर्मानं |
|---|---|---|---|---|
| १ | १ | ० | ५०० ध. | ८४ लक्षपूर्वाणि |
| २ | २ | ० | ४५० ध. | ७२ ,, |
| ३ | ० | ० | ४०० ध. | ६० ,, |
| ४ | ० | ० | ३५० ध. | ५० ,, |
| ५ | ० | ० | ३०० ध. | ४० ,, |
| ६ | ० | ० | २५० ध. | ३० ,, |
| ७ | ० | ० | २०० ध. | २० ,, |
| ८ | ० | ० | १५० ,, | १० ,, |
| ९ | ० | ० | १०० ,, | २ ,, |
| १० | ० | ० | ९० ,, | १ ,, |
| ११ | ० | १ | ८० ,, | ८४ वर्षल० |

| जिनाः | चक्रिणः | वासुदेवाः | तनुमानं | आयुर्मानं |
|---|---|---|---|---|
| १२ | ० | २ | ७० ध. | ७२ वर्षल० |
| १३ | ० | ३ | ६० ,, | ६० ,, |
| १४ | ० | ४ | ५० ,, | ३० ,, |
| १५ | ० | ५ | ४५ ,, | १० ,, |
| ० | ३ | ० | ४२॥ ,, | ५ ,, |
| ० | ४ | ० | ४१॥ ,, | ३ ,, |
| १६ | ५ | ० | ४० ,, | १ ,, |
| १७ | ६ | ० | ३५ ,, | ९५००० वर्षाणि |
| १८ | ७ | ० | ३० ,, | ८४००० ,, |
| ० | ० | ६ | २९ ,, | ६५००० ,, |
| ० | ८ | ० | २८ ,, | ६०००० ,, |

| जिनाः | चक्रिणः | वासुदेवः | तनुमानं | आयुर्मानं |
|---|---|---|---|---|
| ० | ० | ७ | २६ ध. | ५६००० वर्षाणि |
| १९ | ० | ० | २५ ,, | ५५००० ,, |
| २० | ९ | ० | २० ,, | ३०००० ,, |
| ० | ० | ८ | १६ ,, | १२००० ,, |
| २१ | १० | ० | १५ ,, | १०००० ,, |
| ० | ११ | ० | १२ ,, | ३००० ,, |
| २२ | ० | ९ | १० ,, | १००० ,, |
| ० | १२ | ० | ७ ,, | ७०० ,, |
| २३ | ० | ० | ९ हस्ताः | १०० ,, |
| २४ | ० | ० | ७ ,, | ७२ ,, |

इदानीं 'तित्थवोच्छेओ'त्ति षट्त्रिंशत्तमं द्वारमाह—

**पुरिमंतिमअट्ठट्ठंतरेसु तित्थस्स नत्थि वोच्छेओ। मज्झिल्लएसु सत्तसु एत्तियकालं तु वुच्छेओ ॥ ४३० ॥ चउभागं चउभागो तिन्नि य चउभाग पलियचउभागो। तिण्णेव य चउभागा चउत्थभागो य चउभागो ॥ ४३१ ॥**

'पुरी'त्यादि गाथाद्वयं, इह हि चतुर्विंशतेस्तीर्थकृतां त्रयोविंशतिरेवान्तराणि भवन्ति, यथा चतसृणामङ्गुलीनां त्रीण्येवान्तराणि; तत्र पूर्वेषु श्रीऋषभादीनां सुविधिपर्यन्तानां नवानां तीर्थकृतां सम्बन्धिषु अष्टसु अन्तिमेषु च—शान्तिनाथादीनां महावीरान्तानां नवानां जिनानां सम्बन्धिषु अष्टस्वन्तरेषु 'तीर्थस्य' चतुर्वर्णस्य श्रमणसङ्घस्य नास्ति व्यवच्छेदः, 'मज्झिल्लएसु'त्ति मध्यवर्तिषु पुनः सुविधिप्रभृतीनां शान्तिनाथपर्यन्तानां तीर्थकृतामन्तरेषु सप्तसु एतावन्मात्रं वक्ष्यमाणं कालं यावत्तीर्थस्य व्यवच्छेदः। तदेवाह—'चउभागं' इत्यादि, सुविधिशीतलयोरन्तरे पल्योपमस्य चतुर्भागीकृतस्य एकश्चतुर्भागस्तावत्कालं तीर्थव्यवच्छेदः, अर्हद्धर्मवार्ताऽपि तत्र नष्टेत्यर्थः, तथा शीतलश्रेयांसयोरन्तरे पल्योपमस्य चतुर्भागीकृतस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा श्रेयांसवासुपूज्ययोरन्तरे पल्योपमसम्बन्धिनस्त्रयश्चतुर्भागास्तीर्थव्यवच्छेदः, तथा श्रीवासुपूज्यविमलजिनयोरन्तरे पल्योपमस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा विमलानन्तजिनयोरन्तरे पल्योपमसम्बन्धिनस्त्रयश्चतुर्भागास्तीर्थव्यवच्छेदः, तथाऽनन्तधर्मयोरन्तरा पल्योपमस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा धर्मशान्तिनाथयोरन्तरे पल्योपमचतुर्भागस्तीर्थव्यवच्छेद इति, सर्वाग्रेण भागमीलने त्रीणि पल्योपमानि एकचतुर्भागहीनानि जातानि इति षट्त्रिंशत्तमं द्वारं ॥ ३६ ॥ इदानीं 'दस आसायण'त्ति सप्तत्रिंशत्तमं द्वारमाह—

तंबोल १ पाण २ भोयण ३ पाणह ४ थीभोग ५ सुयण ६ निट्ठवणे ७ । मुत्तु ८ चारं ९ जूयं १०
वज्जे जिणमंदिरस्संतो ॥ ४३२ ॥

ताम्बूलपानभोजनोपानत्स्त्रीभोगस्वपननिष्ठीवनानि मूत्रं–प्रश्रवणं उच्चारं–पुरीषं द्यूतम्–अन्धकादि वर्जयेत् तीर्थकृदाशातनाहेतुत्वाज्जिनमन्दिरस्यान्तर्विवेकी जन इति ॥ ३७ ॥ 'आसायणा उ चुलसी' इति अष्टात्रिंशत्तमं द्वारमाह—

खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गालयं ७, गाली ८ कंगुलिया ९ सरीरधुवणं १० केसे ११ नहे १२ लोहियं १३ । भत्तोसं १४ तय १५ पित्त १६ वंत १७ दसणे १८ विस्सामणं १९ दामणं २०, दंत २१ त्थी २२ नह २३ गंड २४ नासिय २५ सिरो २६ सोत २७-च्छवीणं मलं २८ ॥ ४३३ ॥ मंतु २९ म्मीलण ३० लेक्खयं ३१ विभजणं ३२ भंडार ३३ दुट्ठासणं ३४ छाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी ३९ विस्सारणं नासणं ४० । अक्कंदं ४१ विकहं ४२ सरच्छघडणं ४३ तेरिच्छसंठावणं ४४, अग्गीसेवण ४५ रंधणं ४६ परिखणं ४७ निस्सीहियाभंजणं ४८ ॥ ४३४ ॥ छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोऽणेगत्त ५३ मब्भंगणं, ५४ सचित्ताणमचाय ५५ चायणऽजिए ५६ दिट्ठीअ नो अंजली ५७। साडेगुत्तरसंगभंग ५८ मउडं ५९ मउलिं ६० सिरोसेहरं ६१ हुड्डा ६२ जिंड्डुहगिड्डियाइरमणं ६३ जोहार ६४ भंडक्किय ६५ ॥ ४३५ ॥ रेकारं ६६ धरणं ६७ रणं ६८ विवरणं वालाण ६९ पल्हत्थियं ७०, पाओ ७१ पायप-

**सारणं ७२ पुडपुडी ७३ पंकं ७४ रओ ७५ मेहुणं ७६ । जूआ ७७ जेमण ७८ जुज्झ ७९ विज्ज ८०**
**वणिजं ८१ सेज्जं ८२ जलं ८३ मज्जणं ८४ एमाईयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥ ४३६ ॥**

'खेलक्केलि'मित्यादिशार्दूलवृत्तचतुष्टयमिदं च यथाविदितं व्याख्यायते—तत्र जिनभवने इदमिदं च कुर्वन्नाशातनां करोतीति तात्पर्यार्थः, आयं—लाभं ज्ञानादीनां निःशेषकल्याणसम्पल्लतावितानाविकलबीजानां शातयंति—विनाशयंतीत्याशातनाः, तत्र खेलं—मुखश्लेष्माणं जिनमन्दिरे त्यजति, तथा केलिं—क्रीडां करोति, तथा कलिं—वाक्कलहं विधत्ते, तथा कलां—धनुर्वेदादिकां खलूरिकायामिव तत्र शिक्षते, तथा कुललयं—गण्डूषं विधत्ते, तथा ताम्बूलं तत्र चर्वयति, तथा ताम्बूलसम्बन्धिनमुद्गालमाविलं तत्र मुञ्चति, तथा गालीः—जकारमकारादिकास्तत्र ददाति, तथा कङ्कुलिकां—लघ्वीं महतीं च नीतिं विधत्ते, तथा शरीरस्य धावनं—प्रक्षालनं कुरुते, तथा केशान् मस्तकादिभ्यस्तत्रोत्तारयति, तथा नखान् हस्तपादसम्बन्धिनः किरति, तथा लोहितं शरीरान्निर्गतं तत्र विसृजति, तथा भक्तोपं—सुखादिकां तत्र खादति, तथा त्वचं व्रणादिसम्बन्धिनीं पातयति, तथा पित्तं—धातुविशेषमौषधादिना तत्र पातयति, तथा वान्तं—वमनं करोति, तथा दशनान्—दन्तान् क्षिपति तत्संस्कारं वा कुरुते, तथा विश्रामणां—अङ्गे संबाधनं कारयति, तथा दामनं—बन्धनमजादितिरश्चां विधत्ते, तथा दन्ताक्षिनखगण्डनाशिकाशिरःश्रोत्रच्छवीनां सम्बन्धिनं मलं जिनगृहे त्यजति, तत्र छविः—शरीरं, शेषाश्च तदवयवा इति प्रथमवृत्तं ॥१॥ तथा मन्त्रं—भूतादिनिग्रहलक्षणं राजादिकार्यपर्यालोचनरूपं वा कुरुते, तथा मीलनं—क्वापि स्वकीयविवाहादिकृत्यनिर्णयाय वृद्धपुरुषाणां तत्रोपवेशनं, तथा लेख्यकं—व्यवहारादिसम्बन्धि तत्र कुरुते, तथा विभजनं—विभागं दायादादीनां तत्र विधत्ते, तथा भाण्डागारं निजद्रव्यादेर्विधत्ते, तथा दुष्टासनं—पादोपरिपादस्थापनादिकमनौचित्योपवेशनं कुरुते, तथा छाणी—गोमयपिण्डः, कर्पटं—वस्त्रं, दालिः—मुद्गादिद्वि-

दलरूपा, पर्पटवटिके प्रसिद्धे, तत एतेषां विसारणं—उद्वापनकृते विस्तारणं, तथा नाशनं—नृपदायादादिभयेन चैत्यस्य गर्भगृहादिष्वन्तर्धानं, तथा आक्रन्दं—रुदितविशेषं पुत्रकलत्रादिवियोगे तत्र विधत्ते, तथा विकथां—विविधां कथां रमणीयरमण्यादिसम्बन्धिनीं कुरुते, तथा शराणां—बाणानामीक्षूणां च घटनं, 'सरच्छेति' पाठे तु शराणां अस्त्राणां च-धनुःशरादीनां घटनं, तथा तिरश्चां—अश्वगवादीनां संस्थापनं, तथा अग्निसेवनं शीतादौ सति, तथा रन्धनं—पचनमन्नादीनां, तथा परीक्षणं द्रम्मादीनां, तथा नैषेधिकीभञ्जनं अवश्यमेव हि चैत्यादौ प्रविशद्भिः सामाचारीचतुरैर्नैषेधिकी करणीया, ततस्तस्या अकरणं—भञ्जनमाशातनेति द्वितीयवृत्तार्थः ॥ २ ॥ तथा छत्रस्य तथा उपानहोस्तथा शस्त्राणां—खड्गादीनां तथा चामरयोश्च देवगृहाद्बहिरमोचनं मध्ये वा धारणं, तथा मनसोऽनेकान्तता—अनैकाग्र्यं नानाविकल्पकल्पनमित्यर्थः, तथा अभ्यञ्जनं तैलादिना, तथा सचित्तानां—पुष्पताम्बूलपत्रादीनामत्यागो बहिरमोचनं, तथा त्यागः—परिहरणं 'अजिए' इति अजीवानां हारमुद्रिकादीनां, बहिस्तन्मोचने हि अहो भिक्षाचराणामयं धर्म इत्यवर्णवादो दुष्टलोकैर्विधीयते, तथा सर्वज्ञप्रतिमानां दृष्टौ दृग्गोचरतायां नो—नैवाञ्जलिकरणं—अञ्जलिविरचनं, तथा एकशाटकेन—एकोपरितनवस्त्रेण उत्तरासङ्गभङ्ग—उत्तरासङ्गस्याकरणं, तथा मुकुटं—किरीटं मस्तके धरति, तथा मौलिं—शिरोवेष्टनविशेषरूपां करोति, तथा शिरःशेखरं कुसुमादिमयं विधत्ते, तथा हुड्डां—पारापतनालिकेरादिसम्बन्धिनीं विधत्ते, तथा 'जिंडुह'त्ति कन्दुकः गेड्डिका—तत्क्षेपणी वक्रयष्टिका ताभ्यां, आदिशब्दाद्गोलिकाकपर्दिकामिश्र रमणं—क्रीडनं, तथा ज्योत्कारकरणं पित्रादीनां, तथा भाण्डानां—विटानां क्रिया—कक्षावादनादिका, इति तृतीयवृत्तार्थः ॥ ३ ॥ तथा रेकारं—तिरस्कारप्रकाशकं रे रे रुद्रदत्तेत्यादि वक्ति, तथा धरणकं—रोधनमपकारिणामधमर्णादीनां च, तथा रणं—संग्रामकरणं, तथा विवरणं बालानां—केशानां विजटीकरणं, तथा पर्यस्तिकाकरणं तथा पादुका—काष्ठादिमयं चरणरक्षणोपकरणं, तथा पादयोः प्रसारणं

स्वैरं निराकुलतायां, तथा पुटपुटिकादापनं, तथा पङ्कं—कर्दमं करोति निजदेहावयवप्रक्षालनादिना, तथा रजो—धूली तां तत्र पादादिलमां शाटयति, तथा मैथुनं—मिथुनस्य कर्म, तथा यूका मस्तकादिभ्यः क्षिपति वीक्षयति वा, तथा जेमनं—भोजनं, तथा गुह्यं—लिङ्गं तस्यासं-वृत्तस्य करणं, 'जुज्झंमी'ति तु पाठे युद्धं दृग्मुष्टिबाहुयुद्धादि, तथा 'विज्ज'त्ति वैद्यकं, तथा वाणिज्यं—क्रयविक्रयलक्षणं, तथा शय्यां कृत्वा तत्र स्वपिति, तथा जलं—पयः तत्पानाद्यर्थं तत्र मुञ्चति पिबति वा, तथा मज्जनं—स्नानं तत्र करोति, एवमादिकमवद्यं—सदोषं कार्यं ऋजुकः—प्राञ्जलचेता उद्यतो वा वर्जयेज्जिनेन्द्रालये—जिनमन्दिरे, 'एवमादिक'मित्यनेनेदमाह—न केवलमेतावत्य एवाशातनाः, किन्त्वन्यदपि यदनुचितं हसनवल्गनादिकं जिनालये तदप्याशातनास्वरूपं ज्ञेयं ॥ नन्वेवं 'तंबोलपाणे'त्यादिगाथयैवाशातनादशकस्य प्रतिपादितत्वाच्छेषाशातनानां चैतद्दशकोपलक्षितत्वेनैव ज्ञास्यमानत्वादयुक्तमिदं द्वारान्तरमिति चेत्, न, सामान्याभिधानेऽपि बालादिबोधनार्थं विभिन्नं विशेषाभिधानं क्रियत एव, यथा ब्राह्मणाः समागताः वशिष्ठोऽपि समागत इति सर्वमनवद्यं ॥ नन्वेता आशातना जिनालये क्रियमाणा गृहिणां कञ्चन दोषमावहन्ति ? उतैवमेव न करणीयाः ?, तत्र ब्रूमः—न केवलं गृहिणां सर्वसावद्यकरणोद्यतानां भवभ्रमणादिकं दोषमावहन्ति, किन्तु निरवद्याचाररतानां मुनीनामपि दोषमावहन्तीत्याह—

**आसायणा उ भवभमणकारणं इय विभाविउं जइणो । मलमलिणत्ति न जिणमंदिरंमि निवसंति इय समओ ॥ ४३७ ॥ दुब्भिगंधमलस्सावि, तणुरप्पेस ण्हाणिया । दुहा वायवहो वावि, तेणं ठंति न चेइए ॥ ४३८ ॥ तिन्नि वा कड्ढई जाव, थुइओ त्तिसिलोइया । ताव तत्थ अणुन्नायं, कारणेण परेण उ ॥ ४३९ ॥**

'आसायणे'त्यादिगाथात्रयं, एताः परिस्फुरद्द्विविधदुःखपरम्पराप्रभवभवभ्रमणकारणमिति विभाव्य—परिभाव्य यतयोऽस्नानकारित्वेन मलमलिनदेहत्वाच्च जैनमन्दिरे निवसन्तीति समयः—सिद्धान्तः ॥ तमेव समयं व्यवहारभाष्योक्तं दर्शयति—एषा तनुः स्नापितापि दुरभिगन्धमलप्रस्वेदस्राविणी, तथा द्विधा वायुपथः—अधोवायुनिर्गम उच्छ्वासनिःश्वासनिर्गमश्च यद्वा द्विधा मुखेन अपानेन च वायुवहो वापि—वातवहनं च, तेन कारणेन न तिष्ठन्ति यतयश्चैत्ये—जिनमन्दिरे ॥ यद्येवं व्रतिभिश्चैत्येष्वाशातनाभीरुभिः कदाचिदपि न गन्तव्यं, तत्राह—तिस्रः स्तुतयः कायोत्सर्गानन्तरं या दीयन्ते ता यावत्कर्षति—भणतीत्यर्थः, किंविशिष्टाः? तत्राह—त्रिश्लोकिकाः—त्रयः श्लोकाः—छन्दोविशेषरूपा अधिका न यासु ताः तथा, 'सिद्धाणं बुद्धाणं' इत्येकः श्लोकः 'जो देवाणवि' इति द्वितीयः 'एक्कोवि नमुक्कारो' इति तृतीय इति; अग्रेतनगाथाद्वयं स्तुतिश्च चतुर्थी गीतार्थाचरणेनैव क्रियते, गीतार्थाचरणं तु मूलगणधरभणितमिव सर्वं विधेयमेव सर्वैरपि मुमुक्षुभिरिति, तावत्कालमेव तत्र जिनमन्दिरेऽनुज्ञातमवस्थानं यतीनां, कारणेन पुनर्धर्मश्रवणाद्यर्थमुपस्थितभविकजनोपकारादिना परतोऽपि—चैत्यवन्दनाया अग्रतोऽपि यतीनामवस्थानमनुज्ञातं, शेषकाले तु साधूनां जिनाशातनादिभयान्नानुज्ञातमवस्थानं तीर्थंकरगणधरादिभिः, ततो व्रतिभिरप्येवमाशातनाः परिह्रियन्ते, गृहस्थैस्तु सुतरां परिहरणीया इति । इयं च तीर्थकृतामाज्ञा, आज्ञाभङ्गश्च महतेऽनर्थाय सम्पद्यते, यदाहुः—'आणाइच्चिय चरणं' (आज्ञयैव चारित्रं) इत्यादि ॥ ३८ ॥ साम्प्रतं 'अट्ठ महापाडिहेराइं'ति एकोनचत्वारिंशत्तमं द्वारमाह—

**कंकिल्लि १ कुसुमवुट्ठी २ देवज्झुणि ३ चामरा ४ऽऽसणाइं ५ च । भावलय ६ भेरि ७ छत्तं ८ जयंति जिणपाडिहेराइं ॥ ४४० ॥**

तत्र प्रतिहारा इव प्रतिहाराः—सुरपतिनियुक्ता देवास्तेषां कर्माणि—कृत्यानि प्रातिहार्याणि, 'वर्णदृढादिभ्यः ष्यञ्चे'ति कर्मणि ष्यञ्

तान्यष्टौ, तद्यथा—उल्लसद्बहलपाटलपल्लवजालसर्वकालविकसदसमानकुसुमसमूहविनिःसरदविरलपरमपरिमलोद्गारभरसमाकृष्यमाणभ्रमद्भ्रमरनिकुरम्बरणरणारावशिशिरीकृतप्रणमद्भव्यजननिकरश्रवणविवरोऽतिमनोरमाकारशालिविशालशालः कङ्केल्लितरुः—अशोकतरुर्जिनस्योपरि देवैर्विधीयते १, तथा जलजस्थलजविकुर्वणाविरचितानां पञ्चवर्णानां विकस्वराणामधःकृतवृन्तानामुपरिमुखाणां कुसुमानां पुरुपजानुद्वयसं वृष्टिः क्रि( ग्रन्थाग्रं ४००० ) यते २, तथा सरसतरसुधारससहोदरः सरभसविविधदेशापहृतमुक्तापरव्यापारप्रसारितवदनैः कुरङ्गकुलैराकुलाकुलैरुत्कर्णैराकर्ण्यमानः सकलजनानन्दप्रमोददायी दिव्यो ध्वनिर्वितन्यते ३, तथा कमनीयकदलीकाण्डप्रकाण्डतन्तुमण्डलीरुचिरमरीचिचिकुरनिकुरम्बडम्बरितातिजात्यविचित्रपवित्रनिःसपत्नरत्नविसरविनिःसरत्किरणनिकुरम्बजालेन दिशि दिशि संसूत्र्यमाणेन्द्रचापकान्तकाञ्चनमयोद्दण्डदण्डरमणीया चारुचामरश्रीर्विस्तार्यते ४, तथा अतिभास्वरसटापाटलवन्धुरस्कन्धवन्धविकटप्रकटदंष्ट्राकरालसजीवायमानसिंहरूपालङ्कृतमनेकप्रकाण्डरत्नखण्डविनिर्यद्वर्यकिरणावलिविलुप्यमानविलसत्तमस्काण्डडम्बरं सिंहासनं चारुतरं विरच्यते ५, तथा शरत्कालविलसदखण्डमयूखमण्डलप्रचण्डचण्डमरीचिमण्डलमिव दुरालोकं तीर्थकरकायतः प्रकृतिभास्वरात्तदीयनिरुपमरूपाच्छादकमतुच्छं प्रभापटलं सम्पिण्ड्य जिनशिरसः पश्चाद्भागे मण्डलायमानं भामण्डलमातन्यते ६, तथा तारतरविस्फारभाङ्कारभरितभुवनोदरविवरा भेरयो—महाढक्काः क्रियन्ते ७, तथा भूर्भुवःस्वस्त्रयैकसाम्राज्यसंसूचकं शरदिन्दुकुन्दकुमुदावदातं प्रलम्बमानमुक्ताफलपटलावचूलमालामनोरमं छत्रत्रयमतिपवित्रमासूत्र्यते ८ इत्यष्टौ प्रातिहार्याणि जिनेश्वराणां जयन्तीति ॥ तत्र कङ्केल्लिः 'श्रीमहावीरस्य द्वात्रिंशद्धनुरुच्छ्रितः, शेषाणां तु ऋषभस्वाम्यादीनां पार्श्वनाथपर्यन्तानां त्रयोविंशतेरपि तीर्थकृतां निजनिजशरीरमानाद् द्वादशगुणः, यदुक्तम्—"उसभस्स तिन्नि गाउय वत्तीस धणूणि वद्धमाणस्स । सेसजिणाणमसोओ सरीरओ वारसगुणो उ ॥ १ ॥" [ ऋषभस्य त्रीणि गव्यूतानि द्वात्रिंश-

द्धनूंषि वर्धमानस्य । जिनानां शेषाणामशोकः शरीराद् द्वादशगुणः ॥ १ ॥ ] इति । ननु महावीरस्यापि क्वापि निजशरीराद् द्वादशगुणोऽशोकपादपः प्रतिपाद्यते, यदुक्तमावश्यकचूर्णौ श्रीमहावीरसमवसरणप्रस्तावे—"असोगवरपायवं जिणउच्चत्ताओ वारसगुणं सक्को विउव्वइ"त्ति [अशोकवरपादपं जिनोच्चत्वाद् द्वादशगुणं शक्रो विकुर्वति] तत्कथमिदमुपपद्यते ? इति, अत्रोच्यते—केवलमस्यैवाशोकतरोस्तत्र मानमुक्तं, इह तु सालवृक्षसहितस्य, ततोऽत्रापि केवलो द्वादशगुण एव, स तु सप्तहस्तमानश्रीमहावीरशरीराद् द्वादशगुणीकृतः सन्नेकविंशतिर्धनूंषि भवति, सालवृक्षोऽप्येकादशधनुःप्रमाणः, ततो मिलितानि द्वात्रिंशद्धनूंषि युज्यन्ते इति सम्प्रदायः, **समवायाङ्गे**ऽप्युक्तं—"वत्तीसं धणुयाइं चेइयरुक्खो उ वद्धमाणस्स । निच्चोउगो असोगो उच्छन्नो सालरुक्खेणं ॥ १ ॥" तट्टीका च '**निच्चोउगो**'त्ति नित्यं—सर्वदा ऋतुरेव—पुष्पादिकालो यस्य स नित्यर्तुकः, '**असोगो**'त्ति अशोकाभिधानो यः समवसरणभूमिमध्ये भवति, '**उच्छन्नो सालरुक्खेणं**'ति अवच्छन्नः सालवृक्षेणेति" अत एव वचनादशोकस्योपरि सालवृक्षोऽपि कथञ्चिदस्तीत्यवसीयत इति, तथा आयोजनभूमिकुसुमवर्षविषये कृपार्द्रीकृतचेतसः केचन प्रेरयन्ति—ननु विकचकान्तकुसुमप्रचयनिचितायां समवसरणभुवि जीवदयारसिकान्तःकरणानां श्रमणानां कथमवस्थानगमनादिकं कर्तुं युज्यते ?, जीवविघातहेतुत्वादिति, तत्र केचिदुत्तरयन्ति—तानि कुसुमानि सचित्तान्येव न भवन्ति, विकुर्वणयैव देवैस्तेषां विहितत्वादिति, एतच्चायुक्तं, यतो न तत्र विकुर्वितान्येव पुष्पाणि भवन्ति, जलजस्थलजानामपि कुसुमानां सम्भवात्, न चैतदनार्षं—"विंटट्ठाइं सुरभिं जलथलयं दिव्वकुसुमनीहारिं । पयरिंति समंतेणं दसद्धवण्णं कुसुमवुट्ठिं ॥ १ ॥" [ वृन्तस्थायिनीं सुरभिं जलस्थलजानां दिव्यकुसुमगन्धनिर्हारिणीं दशार्धवर्णां कुसुमवृष्टिं समन्ततो विकिरन्ति ॥ १ ॥ ]ति सिद्धान्तवचनाद्, एवं श्रुत्वाऽपरे सहृदयंमन्या उत्तरयन्ति—यत्र व्रतिनस्तिष्ठन्ति न तत्र देशे देवाः पुष्पाणि किरन्तीति, एतदप्युत्तराभासं, न खलु तपोधनैः

काष्ठीभूतावस्थामालम्व्य तत्रैव देशेऽवश्यं स्थातव्यं, प्रयोजने गमनागमनादेरपि तत्र सम्भवादिति, तस्मान्निखिलगीतार्थसम्मतमिदमुत्तरमत्र दीयते—यथैकयोजनमात्रायां समवसरणधरणावपरिमितसुरासुरादिलोकसंमर्देऽपि न परस्परमाबाधा काचित् तथा तेषामाजानुप्रमाणक्षिप्तानाममन्दमकरन्दसम्पत्सम्पादितानन्दमन्दारमचकुन्दकुन्दकुमुदकमलदलमुकुलमालतीविकचविचकिलप्रमुखकुसुमसमूहानामप्युपरि सञ्चरिष्णौ स्थाष्णौ च मुनिनिकरे विविधजननिचये च न काचिदाबाधा प्रत्युत सुधारससिच्यमानानामिव बहुतरसमुल्लासस्तेषामापनिपद्यते, अचिन्तनीयनिरुपमतीर्थंकरप्रभावोज्जृम्भमाणप्रसादादेवेति । तथा दिव्यध्वनिविषये पूर्वपक्षचञ्चवः केचिदाचक्षते—ननु सकलजनाह्लाददायी जात्यशर्कराद्राक्षादिरसमिश्रितपरिक्कथितस्निग्धदुग्धरससहोदरस्तीर्थंकरस्यैव ध्वनिरसौ कथं प्रतिहारकृतत्वमस्य युज्यते?, युक्तमिदमुदितमुदारमतिभिः, तीर्थकृतां वाणी हि परममधुरिममनोरमपदार्थसार्थातिशायिशब्दशालिनी स्वभावत एव, परं यदा मालवकैशिक्यादिग्रामरागैर्भव्यजनोपकाराय देशनां भगवान् विधत्ते तदा देवैरुभयपार्श्ववर्तिभिरतिमनोहरवेणुवीणादिकलक्वणितकरणेन स एव तीर्थकरशब्दः कलतरः क्रियते, यथा मधुरगानप्रवृत्ततरुणतरगायनीजनगीतरवोऽनवमवैणिकवैणविकादिवीणावेण्वादिरवैरित्येतावताऽंशेन प्रतिहारदेवकृतत्वमस्य न विरुध्यते इति सर्वं समञ्जसम् ३९ । इदानीं 'चउत्तीसातिसयाणं'ति चत्वारिंशत्तमं द्वारमाह—

रयरोयसेयरहिओ देहो १ धवलाइं मंसरुहिराइं २ । आहारानीहारा अद्दिस्सा ३ सुरहिणो सासा ४ ॥ ४४१ ॥ जम्माउ इमे चउरो एक्कारसकम्मखयभवा इण्हिं । खेत्ते जोयणमेत्ते तिजयजणो माइ बहुओऽवि ५ ॥ ४४२ ॥ नियभासाए नरतिरिसुराण धम्मावबोहया वाणी ६ । पुव्वभवा रोगा उवसमंति ७ न य हुंति वेराइं ८ ॥ ४४३ ॥ दुब्भिक्ख ९ डमर १० दुम्मारि ११ ईई १२

अइवुट्टि १३ अणभिवुट्ठीओ १४ । हुंति न जियवहुतरणी पसरइ भामंडलुज्जोओ १५ ॥ ४४४ ॥ सुररइयाणिगुवीसा मणिमयसीहासणं सपयवीढं १६ । छत्तत्तय १७ इंदद्धय १८ सियचामर १९ धम्मचक्काइं २० ॥ ४४५ ॥ सह जगगुरुणा गयणट्ठियाइं पंचवि इमाइं वियरंति । पाउब्भवइ असोओ २१ चिट्ठइ जत्थप्पहू तत्थ ॥ ४४६ ॥ चउमुहमुत्तिचउक्कं २२ मणिकंचणताररइयसाललिगं २३ । नवकणयपंकयाइं २४ अहोमुहा कंटया हुंति २५ ॥ ४४७ ॥ निच्चमवट्ठियमित्ता पहुणो चिट्ठंति केसरोमनहा २६ । इंदियअत्था पंचवि मणोरमा २७ हुंति छप्पि रिऊ २८ ॥ ४४८ ॥ गंधोदयस्स वुट्ठी २९ वुट्ठी कुसुमाण पंचवन्नाणं ३० । दिंति पयाहिण सउणा ३१ पहुणो पवणोऽवि अणुकूलो ३२ ॥ ४४९ ॥ पणमंति दुमा ३३ वज्जंति दुंदुहीओ गहीरघोसाओ ३४ । चउतीसाइसयाणं सव्वजिणिंदाण हुंति इमा ॥ ४५० ॥

'रये'त्यादिगाथादशकं, रजो—मलः रोगो—व्याधिः स्वेदः—श्रमजं शरीरजलं तैर्विरहितः—त्यक्तः, उपलक्षणत्वाल्लोकोत्तररूपगंधरसवंधुरश्च तीर्थकृतां देहः—शरीरं, तथा गोक्षीरधारावद्धवलं—पाण्डुरं अविश्रं च मांसरुधिरं, तथा आहारः—अभ्यवहरणं नीहारो—मूत्रपुरीपोत्सर्गस्तौ क्रियमाणौ न दृश्येते इत्यदृश्यौ मांसचक्षुषा, न पुनरवध्यादिलोचनेन पुंसा, तथा विकचोत्पलवत्सुरभयः श्वासा—उच्छ्वासनिःश्वासा इत्येते चत्वारोऽप्यतिशया जिनानां जन्मतोऽपि जाताः । इदानीमेकादशातिशयाः 'कर्मक्षयभवाः' कर्मणां—ज्ञानावरणादीनां चतुर्णां घातिकर्मणां क्षयाज्जाताः कथ्यन्त इति शेषः, तत्र 'योजनमात्रे' योजनप्रमाणेऽपि 'क्षेत्रे' समवसरणभुवि 'त्रिजगज्जनः' सुरनर-

तिर्यग्जनः 'प्रभूतोऽपि' कोटीकोटीप्रमाणोऽपि 'माति' परस्परासम्बाधया सुखेनावतिष्ठते, तथा वाणी अर्धमागधीभाषा भगवताऽभिधीयमाना नरतिर्यक्सुराणां प्रत्येकं 'निजनिजभाषया' स्वस्वभाषया कृत्वा धर्मावबोधका धर्मावबोधदा वा भवति, अयमर्थः—योजनव्यापिनी एकस्वरूपाऽपि भगवतो भारती वारिदविमुक्तवारिवत्तत्तदाश्रयानुरूपतया परिणमति, यत उक्तम्—"देवा दैवीं नरा नारीं, शवराश्चापि शावरीम् । तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम् ॥ १ ॥" न ह्येवंविधभुवनाद्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यते कर्तुमिति, तथा पूर्वोत्पन्ना रोगाः—ज्वरारोचकादय उपशाम्यन्ति अपूर्वाश्च नोत्पद्यन्ते, तथा न च—नैव भवन्ति पूर्वभवनिबद्धानि जातिप्रत्ययानि च वैराणि—परस्परविरोधाः, तथा दुर्भिक्षं—दुष्कालः तथा डमरः—स्वचक्रपरचक्रकृतो विप्लवः तथा दुष्टदेवतादिकृतं सर्वगतं मरणं दुर्मारिः तथा ईतयः—प्रचुरशलभशुकमूषकाद्या धान्यादिविनाशिकाः तथाऽतिवृष्टिः—अतिजलपातः तथाऽनावृष्टिः—सर्वथा जलपाताभावः, एते च रोगादयो यत्र यत्र भगवान् विहरति तत्र तत्र चतसृषु दिक्षु प्रत्येकं पञ्चविंशतियोजनमध्ये न जायन्ते, तदुक्तं **समवायाङ्गे** "जओ जओऽवि य णं अरिहंता भगवंतो विहरंति तओ तओऽविय णं जोअणपणवीसाए णं ईई ण भवइ मारी न हवइ परचक्कं न भवइ सचक्कं न भवइ अइवुट्ठी न भवइ अणावुट्ठी न भवइ, दुब्भिक्खं न भवइ, पुव्वुप्पण्णावि य णं उप्पाइया वाही खिप्पामेव उवसमंति" [यत्र यत्रापि च अर्हन्तो भगवन्तो विहरन्ति तत्र तत्रापि पञ्चविंशतौ योजनेषु ईतयो न भवन्ति मार्यो न भवन्ति स्वचक्रं न भवति परचक्रं न भवति अतिवृष्टिर्न भवति अनावृष्टिर्न भवति दुर्भिक्षं न भवति पूर्वोत्पन्ना अपि च व्याधयः क्षिप्रमेवोपशाम्यन्ति] त्ति, **स्थानांगटीकायामपि** दशस्थानके लिखितं—"महावीरस्य भगवतः स्वप्रभावप्रशमितयोजनशतमध्यगतवैरिमारिविड्वरदुर्भिक्षाद्युपद्रवस्यापि" इति, तथा जिनशिरसः पश्चाद्भागेऽतिभास्वरतया जितबहुतरणिः—तिरस्कृतद्वादशार्कतेजाः प्रसरति भामण्डलस्य—प्रभापटलस्योद्योतः ।

अथ सुररचितानां—देवकृतानामतिशयानामेकोनविंशतिः कथ्यते, तत्र आकाशवदत्यन्तं स्वच्छो योऽसौ स्फटिकमणिस्तन्मयं सिंहासनं सपादपीठं—पादपीठयुक्तं १ तथा छत्रत्रयमतिपवित्रं २ तथा जिनस्य पुरतोऽनेकलघुपताकिकासहस्रसुन्दरः समुत्तुङ्गो निस्सपत्नरत्नमयः शेषध्वजापेक्षयाऽतिमहत्त्वादिन्द्रश्चासौ ध्वजश्च इन्द्रत्वसूचको वा ध्वज इन्द्रध्वजः ३ तथोभयोः पार्श्वयोर्यक्षहस्तगते सिते चामरे ४ तथा पुरतः पद्मप्रतिष्ठितं स्फुरत्किरणचक्रं धर्मप्रकाशकं चक्रं धर्मचक्रं ५ एतानि च सिंहासनादीनि पञ्चापि यत्र यत्र जगद्गुरुर्विचरति तत्र तत्र गगनगतानि गच्छन्ति, तथा यत्र यत्र प्रभुस्तिष्ठति तत्र तत्र विचित्रपत्रपुष्पपल्लवस्पृहणीयच्छत्रध्वजघण्टापताकादिपरिवृतः प्रादुर्भवत्यशोकवृक्षः ६ तथा चतुर्मुखं चतुर्दिशं मूर्तिचतुष्कं, तत्र पूर्वाभिमुखं भगवान् स्वयमुपविशति शेषासु च तिसृषु दिक्षु प्रतिरूपकाणि तीर्थकराकृतिमन्ति तीर्थकरप्रभावादेव च तीर्थकररूपानुरूपाणि सिंहासनादियुक्तानि देवकृतानि भवन्ति शेषदेवादीनामपि अस्माकं स्वयं कथयतीति प्रतिपत्त्यर्थं ७ तथा समवसरणे मणिकाञ्चनताररचितं शालत्रिकं, तत्र तीर्थङ्करप्रत्यासन्नप्रथमप्राकारो नानाप्रकारनिःसपत्नरत्नमयो वैमानिकसुरैर्विरच्यते द्वितीयो मध्यवर्ती कमनीयकनकमयो ज्योतिष्कविबुधैर्विधीयते तृतीयस्तु बहिर्भूतस्तारतरकान्तिराजितरजतमयो भवनपतिदेवैर्वितन्यते ८ तथा 'नवकनकपङ्कजानि' नवसङ्ख्यानि काञ्चनकमलानि नवनीतस्पर्शानि क्रियन्ते, तत्र च द्वयोर्भगवान् स्वकीयक्रमकमलयुगलं विन्यस्य विचरति अन्यानि च सप्त पद्मानि पृष्ठतस्तिष्ठन्ति तेषां च यद्यत्पश्चिमं तत्तत्पादन्यासं कुर्वतो भगवतः पुरतो भवति ९ तथा यत्र यत्र भगवान् विहरति तत्र तत्राधोमुखाः कण्टकाः संपद्यन्ते १० तथा नित्यं—सर्वदा अवस्थितमात्रा—अवृद्धिस्वभावाः प्रभोः—भगवतस्तिष्ठन्ति—आसते केशरोमनखाः, केशाः—शिरःकूर्चसम्भवाः रोमाणि—शेषशरीरसम्भवानि नखाः—पाणिपादजाः ११ तथा इन्द्रियार्थाः—विषयाः पञ्चापि—स्पर्शरसरूपगन्धशब्दस्वरूपा अमनोज्ञानामभावेन मनोज्ञानां च प्रादुर्भावेन मनोरमा—मनःप्रीणका भवन्ति १२ तथा षडपि ऋतवो—वसन्ताद्याः

शरीराप्यायकसुखस्पर्शादिसम्पादकत्वेन सर्वदाविकाशिकुसुमादिसमृद्ध्या च मनोरमा अनुकूलाः सम्पद्यन्ते १३ तथा यत्र भगवांस्तिष्ठति तत्र पांशुप्रसरप्रशमनार्थं गन्धोदकवृष्टिर्घनघनसारादिमिश्रमनोहारिवारिवृष्टिः १४ तथा वृष्टिः कुसुमानां—मन्दारपारिजातकचम्पकादीनां पञ्च-वर्णानां—श्वेतरक्तपीतनीलकालानां १५ तथा शकुनाः—पक्षिणो ददति प्रदक्षिणां, यत्र भगवान् सञ्चरति तत्र चाषशिखण्डिप्रभृतयः पक्षिणः प्रदक्षिणगतयो भवन्तीत्यर्थः १६ तथा पवनः—संवर्तकवातो योजनं यावत्क्षेत्रशुद्धिविधायकत्वेन सुरभिशीतलमन्दत्वेन च अनुकूलः—सुखदो भवति, यदुक्तं समवायाङ्गे—"सीयलेणं सुहफासेणं सुरहिणा मारुएणं जोयणपरिमंडलं सव्वओ समंता संपमज्जिज्जइ"त्ति, [ शीतलेन सुरभिना सुखस्पर्शेन मारुतेन योजनपरिमण्डलं सर्वतः समन्तात् संप्रमार्ज्यते ] १७ तथा यत्र भगवान् व्रजति तत्र द्रुमाः—पादपाः प्रणमन्ति-नम्रा भवन्ति १८ तथा यत्र भगवान् सलीलं सञ्चरति तत्र वाद्यन्ते दुन्दुभयो—महत्यो ढक्काः सजलजलधरवद्गम्भीरभुवनव्यापिघोषाः १९ इति सर्वजिनेन्द्रातिशयानां चतुस्त्रिंशत् चतुर्णामेकादशानामेकोनविंशतेश्च मीलनेन भवन्तीति । इह च यत्समवायाङ्गेन सह किञ्चिदन्यथा-त्वमपि दृश्यते तन्मतान्तरमवगन्तव्यं, मतान्तरबीजानि तु सर्वज्ञविज्ञेयानीति ४३५–४५० ॥ ४० ॥ सम्प्रति 'दोसा अट्ठारस'त्ति एकचत्वारिंशत्तमं द्वारमाह—

**अन्नाण १ कोह २ मय ३ माण ४ लोह ५ माया ६ रई ७ य अरई ८ य । निद्दा ९ सोय १०**
**अलियवयण ११ चोरिया १२ मच्छर १३ भया १४ य ॥ ४५१ ॥ पाणिवह १५ पेम १६ कीला**
**पसंग १७ हासा १८ य जस्स इय दोसा । अट्ठारसवि पणट्ठा नमामि देवाहिदेवं तं ॥ ४५२ ॥**

'अन्नाणे'त्यादिगाथाद्वयं, 'अज्ञानं' संशयानध्यवसायविपर्ययात्मकं मौढ्यं, 'क्रोधः' कोपः, 'मदः' कुलबलैश्वर्यरूपविद्यादिभि-

रहङ्कारकरणं परप्रधर्षणानिबन्धनं वा, 'मानो' दुरभिनिवेशामोचनं युक्तोक्ताग्रहणं वा, 'लोभो' गृद्धिः, 'माया' दंभः, 'रतिः' अभीष्टपदार्थानामुपरि मनःप्रीतिः, 'अरतिः' अनिष्टसम्प्रयोगसंभवं मनोदुःखं, 'निद्रा' स्वापः, 'शोकः' चित्तवैधुर्यं, 'अलीकवचनं' वितथभाषणं, 'चोरिका' परद्रव्यापहारः, 'मत्सरः' परसम्पदसहिष्णुता, 'भयं' प्रतिभयः, 'प्राणिवधः' प्राण्युपमर्दः, 'प्रेम' स्नेहविशेषः, 'क्रीडाप्रसङ्गः' क्रीडायामासक्तिः, 'हासो' हास्यं, इति यस्य दोषा अष्टादशापि प्रणष्टा नमामि देवाधिदेवं तमिति ४५१—४५२ ॥ ४१ ॥

इदानीं 'अरिहचउक्कं'ति द्विचत्वारिंशत्तमं द्वारमाह—

**जिणनामा नामजिणा केवलिणो सिवगया य भावजिणा । ठवणजिणा पडिमाउ दव्वजिणा भाविजिणजीवा ॥ ४५३ ॥**

जिनाश्चतुर्धा-नामजिनाः स्थापनाजिना द्रव्यजिना भावजिनाश्चेति, तत्र जिनानां—तीर्थकृतां नामानि ऋषभाजितसम्भवादीनि नामजिनाः, तथा अष्टमहाप्रातिहार्यादिसमृद्धिं साक्षादनुभवन्तः 'केवलिनः' समुत्पन्नकेवलज्ञानाः 'शिवगताश्च' परमपदप्राप्ता भावतः—सद्भावतो जिना भावजिनाः, गाथानुलोम्याच्च अनानुपूर्व्या भावजिना व्याख्याताः, 'स्थापनाजिनाः' प्रतिमाः काञ्चनमुक्ताशैलमरकतादिभिर्निर्मिताः, द्रव्यजिना ये जिनत्वेन भाविनो—भविष्यन्ति जीवाः श्रेणिकादय इति ४५३॥४२॥ इदानीं 'निक्खवणतवो'त्ति त्रिचत्वारिंशत्तमं द्वारं विवृणोति—

**सुमइत्थ निच्चभत्तेण निग्गओ वासुपुज्ज[जिणो] चउत्थेण । पासो मल्लीवि य अट्ठमेण सेसा उ छट्ठेणं ॥ ४५४ ॥**

सुमतिरत्र—अस्यामवसर्पिण्यां चतुर्विंशतौ तीर्थकृत्सु मध्ये 'नित्यभक्तेन' अनवरतभक्तेन निर्गतो—गृहवासात् प्रव्रजित इत्यर्थः, वासु-

पूज्यो द्वादशस्तीर्थकृच्चतुर्थेन—एकेनोपवासेन प्रव्रजितः, पार्श्वः—त्रयोविंशतितमतीर्थकृत् मल्लिरपि च—एकोनविंशतितमतीर्थकृदष्टमेन—त्रिभिरुपवासैः प्रव्रजितः, शेषास्तु—ऋषभस्वामिप्रभृतयो विंशतिर्जिनाः षष्ठेन—द्वाभ्यामुपवासाभ्यां निष्क्रान्ता इति ४५४ ॥४३॥ इदानीं 'नाणतवो'त्ति चतुश्चत्वारिंशत्तमं द्वारमाह—

**अट्ठमभत्तवसाणे पासोसहमल्लिरिट्ठनेमीणं । वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाणं ॥ ४५५ ॥**

अष्टमभक्तान्ते—उपवासत्रयपर्यन्ते श्रीपार्श्वजिनवृषभस्वामिमल्लिनाथारिष्टनेमीनां केवलज्ञानमुत्पेदे, वासुपूज्यस्य चतुर्थेन—एकेनोपवासेनेत्यर्थः, शेषाणां तु अजितस्वामिप्रभृतीनां एकोनविंशतेस्तीर्थकृतां षष्ठभक्तेन—द्वाभ्यामुपवासाभ्यामिति ४५५ ॥ ४४ ॥ सम्प्रति 'निव्वाणतवो'त्ति पञ्चचत्वारिंशं द्वारं विवृणोति—

**निव्वाणं संपत्तो चउदसभत्तेण पढमजिणचन्दो । सेसा उ मासएणं वीरजिणिंदो य छट्ठेणं ॥ ४५६ ॥**

निर्वाणं—परमानन्दं सम्प्राप्तश्चतुर्दशभक्तेन—उपवासषट्केन प्रथमजिनचन्द्रः—श्रीनाभेयजिनेन्द्रः, शेषाः पुनरजिताद्याः पार्श्वनाथपर्यन्ता द्वाविंशतिर्जिना मासेन—त्रिंशतोपवासैः, वीरजिनेन्द्रश्च षष्ठेन—उपवासद्वयेनेति ४५६ ॥४५॥ इदानीं 'भाविजिणेसरजीव'त्ति षट्चत्वारिंशं द्वारं विवरीषुः प्रथमं तत्प्रस्तावनागाथामाह—

**वीरवरस्स भगवओ वोलिय चुलसीइवरिससहस्सेहिं । पउमाईचउवीसं जह हुंति जिणा तहा थुणिमो ॥४५७॥ पढमं च पउमनाहं सेणियजीवं जिणेसरं नमिमो । बीयं च सूरदेवं वंदे जीवं सुपासस्स ॥४५८॥ तइयं सुपासनामं उदायिजीवं पणट्ठभववासं । वंदे सयंपभजिणं पुट्टिलजीवं चउत्थमहं ॥ ४५९ ॥**

सव्वाणुभूइनामं दढाउजीवं च पंचमं वंदे। छट्ठं देवसुयजिणं वंदे जीवं च कित्तिस्स ॥ ४६० ॥ सत्तमयं उदयजिणं वंदे जीवं च संखनामस्स । पेढालं अट्ठमयं आणंदजियं नमंसामि ॥ ४६१ ॥ पोट्टिलजिणं च नवमं सुरकयसेवं सुनंदजीवस्स। सयकित्तिजिणं दसमं वंदे सयगस्स जीवंति ॥ ४६२ ॥ एगारसमं मुणिसुव्वयं च वंदामि देवईजीयं। बारसमं अममजिणं सच्चइजीवं जय-पईवं ॥ ४६३ ॥ निकसायं तेरसमं वंदे जीवं च वासुदेवस्स । बलदेवजियं वंदे चउदसमं निप्पु-लायजिणं ॥ ४६४ ॥ सुलसाजीवं वंदे पन्नरसमं निम्ममत्तजिणनामं। रोहिणिजीवं नमिमो सो-लसमं चित्तगुत्तंति ॥ ४६५ ॥ सत्तरसमं च वंदे रेवइजीवं समाहिनामाणं। संवरमट्ठारसमं सया-लिजीवं पणिवयामि ॥ ४६६ ॥ दीवायणस्स जीवं जसोहरं वंदिमो इगुणवीसं। कण्हजियं गय-तण्हं वीसइमं विजयमभिवंदे ॥ ४६७ ॥ वंदे इगवीसइमं नारयजीवं च मल्लनामाणं। देवजिणं बावीसं अंबडजीवस्स वंदेऽहं ॥ ४६८ ॥ अमरजियं तेवीसं अणंतविरियाभिहं जिणं वंदे। तह साइबुद्धजीवं चउवीसं भद्दजिणनामं ॥ ४६९ ॥ उस्सप्पिणिइ चउवीस जिणवरा कित्तिया सना-मेहिं। सिरिचंदसूरिनामेहिं सुहयरा हुंतु सयकालं ॥ ४७० ॥

'वीरे'त्यादिगाथाचतुर्दशकं, अत्र षष्ठी पञ्चम्यर्थे तृतीया च सप्तम्यर्थे ततो 'वीरवरात्' श्रीमहावीरस्वामिनो 'भगवतः' समग्रै-श्वर्यादिगुणयुक्तात् 'व्युत्क्रान्तेषु' गतेषु चतुरशीतिवर्षसहस्रेषु 'पद्मादयः' पद्मनामप्रभृतयश्चतुर्विंशतिर्जिना यथा भविष्यन्ति तथा

**'स्तुमो'** नामग्रहणपूर्वकं प्रणमामः, इयमत्र भावना—एतस्यामवसर्पिण्यां चतुर्थारकस्य दुष्षमसुषमालक्षणस्य पर्यन्ते एकोननवतिपक्षेष्ववतिष्ठमानेषु श्रीवर्धमानस्वामी निर्वृत्तः, ततो महावीरनिर्वाणानन्तरं एकोननवतिपक्षाधिके प्रत्येकमेकविंशतिवर्षसहस्रप्रमिते अवसर्पिणीसम्बन्धिपर्यन्तारकद्वये गते तथोत्सर्पिण्या अप्यतिदुष्षमादुष्षमारूपे प्रत्येकमेकविंशतिवर्षसहस्रमाने एवाद्यारकद्वये गते तृतीयारकस्य च दुष्षमसुषमारूपस्यैकोननवतिपक्षेषु गतेषु श्रीपद्मनाभः समुत्पन्नः, ततः प्रागुक्तारकचतुष्टयसम्बन्धिसर्वप्रमाणमीलने चतुरशीतिर्वर्षसहस्रा जायन्ते, ये च पक्षाणां द्वे एकोननवती समधिके अवतिष्ठेते ते अल्पत्वान्न विवक्षिते इति । अथ तानेव क्रमेणाह—प्रथमं पद्मनाभं जिनेश्वरं श्रीमन्महावीरपरमश्रावकश्रेणिकमहाराजजीवं नमामः, द्वितीयं च सूरदेवं वन्दे जीवं **सुपार्श्वस्य** श्रीमहावीरपितृव्यस्य, तृतीयं सुपार्श्वनामानं कोणिकपुत्र**उदायि**महाराजजीवं प्रणष्टभववासमहं वन्दे, स्वयंप्रभजिनं पोट्टिलकजीवं चतुर्थमहं, सर्वानुभूतिनामानं दृढायुषो जीवं पञ्चमं वन्दे, तथा षष्ठं देवश्रुतजिनं वन्दे जीवं कीर्तेः, सप्तमं उदयजिनं वन्दे जीवं च **शङ्ख**नाम्नः श्रावकस्य, पेढालमष्टमकं **आनन्द**जीवं नमस्यामि, पोट्टिलजिनं च नवमं सुरकृतसेवं **सुनन्द**जीवस्य सम्बन्धिनं, शतकीर्तिजिनं दशमं वन्दे **शतकस्य** जीवं, एकादशमं मुनिसुव्रतं वन्दे **देवक्या** जीवं, द्वादशमममजिनं **सत्यकि**जीवं जगत्प्रदीपं, निष्कषायं त्रयोदशं वन्दे जीवं च वासुदेवस्य, बलदेवस्य जीवं चतुर्दशं निष्पुलाकजिनं, **सुलसाया** जीवं वन्दे पञ्चदशं निर्ममत्वनामानं जिनं, रोहिणीजीवं नमामः षोडशं चित्रगुप्तमिति, सप्तदशं च वन्दे **रेवत्या** जीवं समाधिनामानं जिनं, संवरमष्टादशं सतालिजीवं प्रणिपतामि—नमामि, **द्वीपायनस्य** जीवं यशोधरनामानं जिनमेकोनविंशं वन्दे, कृष्णजीवं गततृष्णं विंशतितमं विजयनामानमभिवन्दे, तथा वन्दे एकविंशतितमं नारदजीवं च मल्लिनामानं, देवजिनं द्वाविंशं **अम्बड**जीवस्य संबन्धिनं, अमरजीवं त्रयोविंशतितममनन्तवीर्याभिधं जिनं वन्दे, तथा स्वातिबुद्धजीवं चतुर्विंशतितमं

भद्रजिननामानं वन्दे । उत्सर्पिण्यां—भाविन्यां चतुर्विंशतिर्जिनवराः 'कीर्तिताः' पूर्वभवसम्बन्धिनामप्रतिपादनकपूर्वकैः स्वनामभिः श्रीचन्द्रसूरिनाम्नाऽऽचार्येण स्तुताः सुखकराः शुभकरा वा भवन्तु सदाकालमिति । एते च तथाविधसम्प्रदायाभावात् शास्त्रान्तरैः सह विसंवादित्वाच्च न विशेषतो विवृताः ॥ ४५७–४७० ॥ ४६ ॥ सम्प्रति 'संखा उड्ढाहतिरियसिद्धाणं' इति सप्तचत्वारिंशं द्वारमाह—

**चत्तारि उड्ढलोए दुवे समुद्दे तओ जले चेव । बावीसमहोलोए तिरिए अट्ठुत्तरसयं तु ॥ ४७१ ॥**

ऊर्ध्वलोके एकसमयेनोत्कर्षतश्चत्वार एव सिद्ध्यन्ति, तथा द्वौ समुद्रे, त्रयः शेषजले ह्रदनद्यादिसम्बन्धिनि, सिद्धप्राभृताभिप्रायेण तु जलमध्ये चत्वारो द्रष्टव्याः, तथा अधोलोके—अधोग्रामादौ उत्कर्षत एकसमयेन द्वाविंशतिः सिद्ध्यति, सिद्धप्राभृते पुनरिदं दृश्यते यथा—"चत्तारि उड्ढलोए जले चउक्कं दुवे समुद्दंमि । अट्ठसयं तिरिलोए वीसपुहुत्तं अहोलोए" ॥ १ ॥ एतट्टीकायां च विंशतिपृथक्त्वं द्वा(द्वि)विंशतिप्रमाणं गृहीतं, द्विप्रभृत्या नवभ्य इति पृथक्त्ववचनात्, ततो यद्यत्रापि 'दोवीसमहोलोए' इति पठ्यते ततः समीचीनं भवति, तथा तिर्यग्लोके उत्कर्षत एकसमयेनाष्टोत्तरं शतं सिद्ध्यतीति ॥ ४७१ ॥ ४७ ॥ सम्प्रति 'तह इक्कसमयसिद्धाणं'ति अष्टचत्वारिंशं द्वारमाह—

**इक्को व दो व तिन्नि व अट्ठसयं जाव एक्कसमयम्मि । मणुयगईए सिज्झइ संखाउयवीयरागा उ ॥ ४७२ ॥**

एकस्मिन् समये जघन्यत एको द्वौ वा त्रयो वा सिद्ध्यन्ति उत्कर्षतोऽष्टोत्तरं शतं, ते च सिद्ध्यन्ति मनुष्यगतेः सकाशान्न शेषगतिभ्यः, तेऽपि च सङ्ख्येयवर्षायुषः, असङ्ख्येयवर्षायुषां सिद्ध्यभावात्, तत्रापि वीतरागाः—अपगतरागाः उपलक्षणत्वाच्च अपगतसकलकर्मकलङ्काः, न पुनः कुतीर्थिकसम्मता इव सकर्माणोऽपि इति ॥ ४७२ ॥ ४८ ॥ 'ते य पन्नरसभेएहिं'ति द्वारमिदानीमेकोनपञ्चाशं विवरीतुमाह—

**तित्थयर १ अतित्थयरा २ तित्थ ३ सलिंग ४ ऽन्नलिंग ५ थी ६ पुरिसा ७। गिहिलिंग ८ नपुंसक ९ अतित्थसिद्ध १० पत्तेयबुद्धा ११ य ॥ ४७३ ॥ एग १२ अणेग १३ सयंबुद्ध १४ बुद्धबोहिय १५ पभेयओ भणिया। सिद्धंते सिद्धाणं भेया पन्नरससंखत्ति॥ ४७४ ॥**

'तित्थे'त्यादिगाथाद्वयं, तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धाः, तथा अतीर्थकराः—सामान्यकेवलिनः सन्तो ये सिद्धास्तेऽतीर्थकरसिद्धाः, तथा तीर्यते संसारसागरोऽनेनेति तीर्थं—यथावस्थितजीवाजीवादिपदार्थसार्थप्ररूपकं परमगुरुप्रणीतं प्रवचनं तच्च निराधारं न भवतीति सङ्घः प्रथमगणधरो वा वेदितव्यः तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः, तथा स्वलिङ्गे—रजोहरणादिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धाः, तथा अन्यलिङ्गे—परिव्राजकादिसम्बन्धिनि वल्कलकषायादिरूपे द्रव्यलिङ्गे व्यवस्थिताः सन्तो ये सिद्धास्ते अन्यलिङ्गसिद्धाः, यदा अन्यलिङ्गिनामपि भावतः सम्यक्त्वादिप्रतिपन्नानां केवलज्ञानमुत्पद्यते तत्समयं च कालं कुर्वन्ति तदेदं द्रष्टव्यं, अन्यथा यदि दीर्घमायुष्कमात्मनः पश्यन्ति ततः साधुलिङ्गमेव प्रतिपद्यन्ते, तथा स्त्रिया लिङ्गं स्त्रीलिङ्गं स्त्रीत्वस्योपलक्षणमित्यर्थः, तच्च त्रिधा—वेदः शरीरनिर्वृत्तिर्नेपथ्यं च, तत्रेह शरीरनिर्वृत्या प्रयोजनं न वेदनेपथ्याभ्यां, वेदे सति सिद्ध्यभावात्, नेपथ्यस्य चाप्रमाणत्वात्, तस्मिन् स्त्रीलिङ्गे वर्तमानाः सन्तो ये सिद्धास्ते स्त्रीलिङ्गसिद्धाः, तथा पुरुषलिङ्गे शरीरनिर्वृत्तिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते पुरुषलिङ्गसिद्धाः, तथा गृहस्थाः सन्तो ये सिद्धास्ते गृहिलिङ्गसिद्धा मरुदेवीप्रभृतयः, तथा नपुंसकलिङ्गे वर्तमानाः सन्तो ये सिद्धास्ते नपुंसकलिङ्गसिद्धाः, तथा तीर्थस्याभावोऽतीर्थं तीर्थस्याभावश्चानुत्पादोऽपान्तराले व्यवच्छेदो वा तस्मिन् ये सिद्धास्तेऽतीर्थसिद्धाः, तत्र तीर्थस्यानुत्पादे सिद्धा मरुदेवीप्रभृतयः, न हि मरुदेव्याः सिद्धिगमनकाले तीर्थमुत्पन्नमासीत्, तीर्थस्य व्यवच्छेदश्च सुवि-

धिस्वाम्याद्यपान्तरालेषु, तत्र ये जातिस्मरणादिना प्राप्तापवर्गास्ते तीर्थव्यवच्छेदसिद्धाः, तथा प्रतीत्य एकं किञ्चिद् वृषभादिकमनित्यतादिभावनाकारणं वस्तु बुद्धा—बुद्धवन्तः परमार्थमिति प्रत्येकबुद्धास्ते सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः, तथा एकस्मिन् समये एकका एव सन्तो ये सिद्धास्ते एकसिद्धाः, तथा एकस्मिन् समये ये अनेके सिद्धास्ते अनेकसिद्धाः, तथा स्वयं—आत्मना बुद्धाः—तत्त्वं ज्ञातवन्तः स्वयंबुद्धास्ते सन्तो ये सिद्धास्ते स्वयंबुद्धसिद्धाः, तथा बुद्धा—आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धाः, इत्येतैः पूर्वोक्तैस्तीर्थकरत्वादिभिः प्रभेदैः—विशेषैर्भणिताः—प्रतिपादिताः सिद्धान्ते सिद्धानां भेदाः—प्रकाराः पञ्चदशसङ्ख्याः । ननु तीर्थकरसिद्धातीर्थकरसिद्धरूपभेदद्वये तीर्थसिद्धातीर्थसिद्धरूपभेदद्वये वा शेषभेदाः सर्वेऽप्यन्तर्भवन्ति तत्किमर्थं शेषभेदोपादानं?, सत्यमन्तर्भवन्ति परं न विवक्षितभेदद्वयोपादानमात्रात् शेषभेदपरिज्ञानं भवति, विशेषपरिज्ञानार्थं चैष शास्त्रारम्भप्रयास इति शेषभेदोपादानमिति ॥४७३—४७४॥ ४९॥

इदानीं 'अवगाहणाय सिद्धा उक्किट्ठजहन्नमज्झिमाए य'त्ति पञ्चाशत्तमं द्वारमाह—

**दो चेवुक्कोसाए चउर जहन्नाए मज्झिमाए उ । अट्ठाहियं सयं खलु सिज्झइ ओगाहणाइ तहा ॥ ४७५ ॥**

एकस्मिन् समये युगपदुत्कृष्टायामवगाहनायां पञ्चधनुःशतमानायामुत्कर्षतो द्वावेव सिद्ध्यतः, जघन्यायामवगाहनायां हस्तद्वयप्रमाणायां चत्वारः, मध्यमायां तु जघन्योत्कृष्टरूपायामष्टाधिकं शतं खलु सिद्ध्यति, ननु मरुदेवी नाभिकुलकरपत्नी, नाभेश्च पञ्चविंशत्यधिकानि पञ्च धनुःशतानि तनुमानं, यदेव च तस्य तनुमानं तदेव मरुदेव्या अपि, 'संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं समं' इति वचनात्, मरुदेवी च भगवती सिद्धा, ततः कथं पञ्चधनुःशतप्रमाणा उत्कृष्टाऽवगाहना घटते? इति, नैष दोषः, मरुदेवाया नाभेः किञ्चिदूनप्रमाणत्वात्, स्त्रियो ह्युत्तमसंस्थाना उत्तमसंस्थानेभ्यः पुरुषेभ्यः स्वस्वकालापेक्षया किञ्चिदूनप्रमाणा भवन्ति, ततो मरुदेवाऽपि

पञ्चधनुःशतप्रमाणेति न कश्चिद्दोषः, अपि च—हस्तिनः स्कन्धारूढा सङ्कुचिताङ्गी मरुदेवी सिद्धा ततः शरीरसङ्कोचभावात्ताधिकावगाहनासम्भव इत्यविरोधः, अथवा यदिदमागमे पञ्चधनुःशतान्युत्कृष्टं तनुमानमुक्तं तद्बाहुल्यापेक्षया, अन्यथा पञ्चविंशत्यधिकपञ्चधनुःशतप्रमाणा उत्कृष्टाऽवगाहना, सा च मरुदेवीकालवर्तिनामेवावसेया, मरुदेव्या आदेशान्तरेण नाभिकुलकरतुल्यत्वात्, तदुक्तं सिद्धप्राभृतटीकायां—'मरुदेवीवि आएसंतरेण नाभितुल्ल'त्ति सिद्धप्राभृतसूत्रेऽप्युक्तं—"ओगाहणा जहन्ना रयणीदुगं अह पुणाइ उक्कोसा। पंचेव धणुसयाइं धणुहपुहुत्तेण अहियाइं ॥ १ ॥" [अवगाहना जघन्या रत्निद्विकमथ पुनरुत्कृष्टा पञ्चैव धनुःशतानि धनुष्पृथक्त्वेनाधिकानि ॥ १ ॥] एतट्टीकाव्याख्या च "पृथक्त्वशब्दो बहुत्ववाची बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्य"मिति ॥ ४७५ ॥ ५० ॥ इदानीं गिहिलिंग अन्नलिंगस्सलिंगसिद्धाण संखा उ'त्ति एकपञ्चाशत्तमं द्वारमाह—

**इह चउरो गिहिलिंगे दसऽन्नलिंगे सयं च अट्ठहियं। विन्नेयं च सलिंगे समएणं सिज्झमाणाणं ॥ ४७६ ॥**

'इह' मनुष्यलोके गृहिलिङ्गे वर्तमाना एकस्मिन् समये उत्कर्षतश्चत्वारः सिद्ध्यन्ति, तथा तापसाद्यन्यलिङ्गे वर्तमाना उत्कर्षत एकसमये दश सिद्ध्यन्ति, तथा शतं चैकमष्टाधिकं विज्ञेयमेकस्मिन् समये युगपदुत्कर्षतः 'स्वलिङ्गे' यतिलिङ्गे सिद्ध्यतामिति ॥ ४७६ ॥ ॥ ५१ ॥ साम्प्रतं 'बत्तीसाई सिज्झंति अविरय'मिति द्विपञ्चाशत्तमं द्वारमाह—

**बत्तीसाई सिज्झंति अविरयं जाव अट्ठअहियसयं। अट्ठसमएहिं एक्केकूणं जावेक्कसमयंमि ॥ ४७७ ॥**
**बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा। चुलसीई छन्नउई दुरहियमट्ठोत्तरसयं च ॥ ४७८ ॥**

'बत्तीस'मित्यादिगाथाद्वयं, एकादयो द्वात्रिंशत्पर्यन्ताः सिद्ध्यन्तो निरन्तरमष्टौ समयान् यावत् प्राप्यन्ते, अयमत्र परमार्थः—प्रथमे
समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत् सिद्ध्यन्ति, द्वितीयेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्, एवं तृती-
येऽपि चतुर्थेऽपि यावदष्टमेऽपि समये जघन्यत एको द्वौ वा सिद्ध्यतः उत्कर्षतो द्वात्रिंशत् सिद्ध्यन्ति, परतोऽवश्यमन्तरं समयादिकं,
न कोऽपि सिद्ध्यतीत्यर्थः, तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः सप्त समयान् यावत्प्राप्यन्ते, परतो
नियमादन्तरं समयादिकं, तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः षट् समयान् यावत् प्राप्यन्ते, ततः परम-
वश्यमन्तरं, तथा एकषष्ठ्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः पञ्च समयान् यावत्प्राप्यन्ते, ततः ऊर्ध्वं नियमादन्तरं,
तथा त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतश्चतुरः समयान् यावत्प्राप्यन्ते, परतोऽवश्यमन्तरं, तथा पञ्चाशीत्यादयः
षण्णवतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतस्त्रीन् समयान् यावदासाद्यन्ते, परतो नियमादन्तरं, तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता
निरन्तरं सिद्ध्यन्त उत्कर्षतो द्वौ समयौ यावत्प्राप्यन्ते, परतो नियमादन्तरं, तथा त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिद्ध्यन्तो नियमादे-
कमेव समयं यावत्प्राप्यन्ते, परतोऽवश्यमन्तरं समयादिकमिति जघन्यतः, उत्कर्षतश्च षण्मासान्तरं षण्मासान् यावत् न कोऽपि सिद्ध्य-
तीत्यत्र सर्वत्र भावना ॥ ४७८ ॥ ५२ ॥ 'थीवेए पुंवेए नपुंसए सिज्झमाणपरिसंखं' इति त्रिपञ्चाशत्तमं द्वारं विवरीतुमाह—

**वीसित्थीगाउ पुरिसाण अट्ठसयं एगसमयओ सिज्झे । दस चेव नपुंसा तह उवरिं समएण पडि-**
**सेहो ॥ ४८० ॥ वीस नरकप्पजोइस पंच य भवणवण दस य तिरियाणं । इत्थीओ पुरिसा पुण**

दस दस सव्वेऽवि कप्पविणा ॥ ४८१ ॥ कप्पट्ठसयं पुढवी आऊ पंकप्पभाउ चत्तारि । रयणाइसु तिसु दस दस छ तरूणमणंतरं सिज्झे ॥ ४८२ ॥

'वीसी'त्यादिगाथाः, एकस्मिन् समये उत्कर्षतः स्त्रियो विंशतिः सिद्ध्यन्ति, तथा पुरुषाणामष्टोत्तरं शतं एकसमये सिद्ध्यति, तथा दशैव नपुंसका एकसमयेन सिद्ध्यन्ति, उक्तसङ्ख्याया उपरि सर्वत्राप्येकसमयेन सिद्ध्यतां प्रतिषेधः। अथास्मिन्नेव द्वारे कस्या गतेरागताः कियन्त उत्कर्षत एकसमयेन सिद्ध्यन्तीति विशेषतः प्रतिपादयन्नाह—अग्रतः स्थितस्य 'इत्थीउ'त्ति पदस्य सर्वत्राभिसम्बन्धात् मनुष्याणां स्त्रियः स्त्रीत्वादुद्धृत्य अनन्तरभवे मनुष्यगतावागताः सत्यो यद्येकस्मिन् समये सिद्ध्यन्ति तदा उत्कर्षतो विंशतिरेव, तथा कल्पयोः—सौधर्मेशानयोः स्त्रियः स्वभवादुद्धृता अनन्तरभवे मनुष्यगतिं प्राप्य विंशतिः सिद्ध्यन्ति, द्वयोरेव कल्पयोः स्त्रिय उत्पद्यन्ते अतः कप्पत्ति सामान्योक्तावपि सौधर्मेशानयोरित्युक्तं, एवं ज्योतिषिकाणामपि स्त्रियः स्त्रीत्वादुद्धृता विंशतिः सिद्ध्यन्ति, तथा भवनपतीनां—असुरकुमारादीनां दशानामपि निकायानां व्यन्तराणां द्वात्रिंशज्जातीनां च स्त्रियः स्त्रीत्वादुद्धृताः प्रत्येकं पञ्च पञ्च सिद्ध्यन्ति, तथा पञ्चेन्द्रियतिरश्चां स्त्रियः स्त्रीत्वादुद्धृत्य दशैव सिद्ध्यन्ति, पुरुषाः पुनः सर्वेऽपि कल्पव्यतिरिक्ता मनुष्यज्योतिष्कभवनपतिव्यन्तरतिर्यग्गतिलक्षणस्थानपञ्चकसम्बन्धिनः पुरुषत्वादुद्धृत्य अनन्तरं मनुष्यभवमागता एकसमयेनोत्कर्षतः प्रत्येकं दश दश सिद्ध्यन्ति, इह 'कल्पं विने'त्युक्तं ततः कल्पादुद्धृताः कियन्तः सिद्ध्यन्ति ?, तत्राह—'कल्पाः' कल्पस्था विमानवासिनो देवा अनन्तरभवे पुरुषत्वं प्राप्य एकसमयेनोत्कर्षतोऽष्टोत्तरं शतं सिद्ध्यन्ति, तथा 'पृथिव्याः' पृथिवीकायिकेभ्योऽप्कायिकेभ्यश्च तथा पङ्कप्रभाया उद्धृताः सन्तः प्रत्येकं चत्वारश्चत्वारः तथा 'रयणाइसु'त्ति सप्तम्याः पञ्चम्यर्थत्वेन रत्नादिभ्यो—रत्नप्रभाशर्कराप्रभावालुकाप्रभाभ्यस्तिसृभ्यः पृथिवीभ्यः उद्धृताः प्रत्येकं दश दश, धूमप्रभा-

दिभ्यस्तु तिसृभ्यः पृथिवीभ्य आगता न सिद्ध्यन्ति तथास्वाभाव्यात्, तथा 'तरूण'त्ति षष्ठी पञ्चम्यर्थे, ततस्तरुभ्यो—वनस्पतिकायिकेभ्य उद्धृत्य अनन्तरं मनुष्यभवमागता उत्कर्षेत एकस्मिन् समये षडेव सिद्ध्यन्ति, तेजोवायूनां पुनरनन्तरभवेन मनुष्यत्वस्यैवाप्राप्तेः द्वित्रिचतुरिन्द्रियाणां तु तथाभवस्वाभाव्यादेवानन्तरभवेन सिद्ध्यभाव इति, तथा चोक्तं प्रज्ञापनायाम्—"अणंतरागया णं भंते! नेरइया एगसमएणं केवइया अंतकिरियं पकरिंति?, गोयमा! जहन्नेणं एगो वा दो वा तिन्नि वा उक्कोसेणं दस, रयणप्पभापुढविनेरइयावि एवं चेव जाव वालुयप्पभापुढवीनेरइया, पंकप्पभापुढवीनेरइया उक्कोसेणं चत्तारि, असुरकुमारा दस, असुरकुमारीओ पञ्च, एवं जहा असुरकुमारा सदेवीया तहा जाव थणियकुमारा, पुढवीकाइया चत्तारि, एवं आउकाइयावि, वणस्सइकाइया छ, पंचिंदियतिरिक्खजोणिया दस, पंचिंदियतिरिक्खजोणिणीओवि दस, मणुस्सा दस, मणुस्सीओ वीसं, वाणमंतरा दस, वाणमंतरीओ पञ्च, जोइसिया दस, जोइसिणीओ वीसं, वेमाणिया अट्ठसयं, वेमाणिणीओ वीस"मिति, सिद्धप्राभृते च देवगतेरन्यत्र गतित्रयेऽपि दशेत्युक्तं 'सेसाण गईण दसदसगं'ति वचनात्, तत्त्वं तु श्रुतविदो विदन्ति, इह च पुंवेदेभ्यो देवादिभ्योऽनन्तरोद्धृता जीवाः केचित्पुरुषाः जायन्ते केचित् स्त्रियः केचिन्नपुंसकाः, एवं स्त्रीवेदेभ्योऽपि देवीप्रभृतिभ्य उद्धृतानां भङ्गत्रयं, एवं नपुंसकेभ्योऽपि नारकादिभ्यो भङ्गत्रयं, सर्वसंख्यया भङ्गा नव, तत्र ये पुंवेदेभ्य उद्धृत्य पुरुषा भूत्वा सिद्ध्यन्ति तेषामेवैकस्मिन् समयेऽष्टोत्तरं शतं सिद्ध्यति, शेषेषु पुनरष्टसु भङ्गकेषु प्रत्येकं दश दशैव, इदमुक्तं भवति—देवेभ्य आगताः पुरुषा भूत्वा एकसमयेनाष्टोत्तरं शतं सिद्ध्यन्ति, स्त्रियो नपुंसकाश्च भूत्वा प्रत्येकं दशैव, देवीभ्यश्चागताः पुरुषा अपि भूत्वा दशैव एवं स्त्रियो नपुंसकाश्च, यत्तु वैमानिकदेवीभ्यो ज्योतिष्कदेवीभ्यो मानुषीभ्यश्चागता विंशतिः सिद्ध्यन्तीत्युक्तं तत्र पुंस्त्रीनपुंसकात् द्विकसंयोगतस्त्रिकसंयोगतो वा मिलिताः सन्तो विंशतिः सिद्ध्यन्ति, न पुनः केवलाः पुरुषाः स्त्रियो नपुंसका वा, यदपि विंशतिः स्त्रिय एकस-

मयेन सिद्ध्यन्तीत्युक्तं तत्रापि काश्चित्पुरुषेभ्यः काश्चित् स्त्रीभ्यः काश्चिन्नपुंसकेभ्य आगताः सन्तो मिलिताः विंशतिः सिद्ध्यन्ति, न पुनः केवलेभ्यः पुरुषेभ्यः केवलाभ्यः स्त्रीभ्यः केवलेभ्यश्च नपुंसकेभ्यः, एवमनया दिशा सर्वेऽपि भङ्गा भावनीयाः, तदुक्तं **सिद्धप्राभृतसूत्रे**—"सेसा उ अट्ठ भंगा दसगं दसगं तु होइ इक्केको ॥" इति, अपरश्चात्र विशेषो दर्श्यते, यथा नन्दनवने चत्वार एकसमये सिद्ध्यन्ति, **'नंदनवणे चत्तारि'** इति सिद्धप्राभृतटीकावचनात्, एकतरस्मिन् विजये विंशतिः, 'वीसा एगयरे विजये' इति वचनात्, संहरणतः पुनः कर्मभूम्यकर्मभूमिकूटशैलादिषु सर्वेष्वपि स्थानेष्वेकसमयेनोत्कर्षतो दश दश, पण्डकवने तु संहरणतो द्वौ, पञ्चदशस्वपि कर्मभूमिषु प्रत्येकं जन्मतोऽष्टोत्तरं शतं, यदुक्तं **सिद्धप्राभृतसूत्रे**—"संकमणाए दसगं दो चेव हवन्ति पंडगवणंमि । समएण य अट्ठसयं पन्नरससु कम्मभूमीसु ॥ १ ॥" तथोत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारकेऽष्टशतं, अवसर्पिण्यां पञ्चमारके विंशतिः शेषेष्वरकेषु प्रत्येकमुत्सर्पिण्यामवसर्पिण्यां च संहरणतो दश, उक्तं च **सिद्धप्राभृतसूत्रे**—"ओसप्पिणिउस्सप्पिणि तइयचउत्थयसमासु अट्ठसयं । पञ्चमियाए वीसं दसगं दसगं तु सेसासु ॥ १ ॥" तत्र पञ्चम्यां समायामवसर्पिण्याः सम्बन्धिन्यां नोत्सर्पिण्याः तत्र तीर्थाभावादिति ॥ ४८२ ॥ ५३ ॥ इदानीं **'सिद्धाणं संठाणं'**ति चतुष्पञ्चाशत्तमं द्वारमाह—

**दीहं वा ह्रस्सं वा जं संठाणं तु आसि पुव्वभवे । तत्तो तिभागहीणा सिद्धाणोगाहणा भणिया ॥ ४८३ ॥ जं संठाणं तु इहं भवं चयंतस्स चरिमसमयंमि । आसीय पएसघणं तं संठाणं तहिं तस्स ॥ ४८४ ॥ उत्ताणओ य पासिल्लओ य ठियओ निसन्नओ चेव । जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥ ४८५ ॥**

'दीहे'त्यादिगाथात्रयं, दीर्घं वा—पञ्चधनुःशतप्रमाणं ह्रस्वं वा—हस्तद्वयप्रमाणं वाशब्दान्मध्यमं वा विचित्रं, यच्चरमभवे आसीत् संस्थानं ततः—तस्मात्संस्थानात् त्रिभागहीना—वदनोदरादिरन्ध्रपूरणात् तृतीयेन भागेन हीना सिद्धानामवगाहना, अवगाहन्ते अस्यामित्यवगाहना—स्वावस्थैव भणिता तीर्थकरगणधरैरिति, भवगतसंस्थानप्रमाणापेक्षया त्रिभागहीनं तत्र संस्थानमानमिति भावः ॥ ४८३ ॥ एतदेव स्पष्टतरमुपदर्शयति—'यत्संस्थानं' यावत्प्रमाणं संस्थानं 'इह' मनुष्यभवे आसीत् तदेव 'भवं' भवन्ति प्राणिनः कर्मवशवर्तिनोऽस्मिन्निति भवं—शरीरं संसारं वा त्यजतः काययोगं परिजिहानस्येति भावः चरमसमये सूक्ष्मक्रियाऽप्रतिपातिध्यानबलेन वदनोदरादिरन्ध्रपूरणात् त्रिभागहीनं प्रदेशघनं आसीत् तदेव प्रदेशघनं मूलप्रमाणापेक्षया त्रिभागहीनप्रमाणं संस्थानं 'तत्र' लोकाग्रे 'तस्य' सिद्धस्य नान्यदिति ॥ ४८४ ॥ तस्य च किमेकेनैवाकारेणावस्थानमुतान्यथाऽपीत्याह—उत्तान एव उत्तानकः पृष्ठतोऽधोवनतादिस्थानतः पार्श्वतो वा—तिर्यग्व्यवस्थितः, स्थितः—ऊर्द्धस्थानतः निषण्णश्चैव—उपविष्टः, किंबहुना ?, यो 'यथा' येन प्रकारेणावस्थितः सन् कालं करोति स 'तथा' तेन प्रकारेणोपपद्यते सिद्ध इति ॥ ४८५ ॥ ५४ ॥ इदानीं 'अवठिइठाणं च सिद्धाणं' इति पञ्चपञ्चाशत्तमं द्वारमाह—

**ईसिप्पब्भाराए उवरिं खलु जोयणस्स जो कोसो। कोसस्स य छब्भाए सिद्धाणोगाहणा भणिया ॥ ४८६ ॥ अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया। इह बोंदिं चइत्ताणं, तत्थ गंतूण सिज्झइ ॥ ४८७ ॥**

'ईसी'त्यादि गाथाद्वयं; इह सर्वार्थसिद्धविमानादूर्द्धं द्वादशभिर्योजनैः पञ्चचत्वारिंशद्योजनलक्षविष्कम्भा वृत्तत्वादायामतोऽप्येतावन्माना बहुमध्यदेशभागे च आयामविष्कम्भाभ्यामष्टयोजनप्रमाणे क्षेत्रेऽष्टयोजनबाहल्या तदनन्तरं सर्वासु दिक्षु विदिक्षु च प्रदेशहान्या

परिहीयमाना परिहीयमाना सर्वेषु चरमान्तेषु मक्षिकापत्रादपि प्रतनुतरत्वादङ्गुलासङ्ख्येयभागमात्रबाहल्या सर्वश्वेतसुवर्णमयी स्फटिकनिर्मला उत्तानच्छत्रसंस्थिता घृतभृततथाविधकरोटिकाकारा च ईषत्प्राग्भारा नाम सिद्धशिला भवति, स्थापना चेयं ◡, सर्वार्थाद् द्वादशभिर्योजनैर्लोकान्त इत्यन्ये, तस्याश्चेषत्प्राग्भाराया उपरि योजने गते लोकान्तो भवति, तस्य च योजनस्य य उपरितनक्रोशः—चतुर्थं गव्यूतं तस्य च क्रोशस्य सर्वोपरितने षष्ठे भागे—त्रयस्त्रिंशदधिकानि त्रीणि धनुःशतानि धनुस्त्रिभागश्चेत्येवंरूपे सिद्धानामवगाहना—अवस्थितिर्भणिता, एतावत्या एवोत्कर्षतः सिद्धावगाहनाया भावात्, यदुक्तं—"तिन्नि सया तेत्तीसा धणुत्तिभागो य कोस छब्भाओ। जं परमोगाहोऽयं तो ते कोसस्स छब्भागे ॥ १ ॥" तथा 'अलोए' इह सप्तमी तृतीयार्थे अलोकेन—केवलाकाशास्तिकायरूपेण 'प्रतिहताः' स्खलिताः सिद्धाः, इह च तत्र धर्मास्तिकायाद्यभावात्तदानन्तर्यवृत्तिरेव प्रतिस्खलनं, न तु सम्बन्धे सति विघातोऽप्रतिघातत्वात्, सप्रतिघातानां हि सम्बन्धे सति विघातो नान्येषां इति, तथा 'लोकस्य' पञ्चास्तिकायात्मकस्याग्रे—मूर्धनि 'प्रतिष्ठिताः' अपुनरागत्या व्यवस्थिताः, तथा 'इह' मनुष्यक्षेत्रे 'बोन्दिं' तनुं त्यक्त्वा 'तत्र' लोकाग्रे समयान्तरप्रदेशान्तरास्पर्शनेन गत्वा 'सिद्ध्यन्ति' निष्ठितार्था भवन्ति, अत्रानुस्वारलोपो द्रष्टव्यः, अथवा एकवचनतोऽप्येवमुपन्यासः सूत्रशैल्या अविरुद्ध एव, तथा चान्यत्रापि दृश्यते—"वत्थगंधमलंकारं, इत्थिओ सयणाणि य। अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ ॥ १ ॥" ॥ ४८६—४८७ ॥ ५५ ॥ सम्प्रति 'अवगाहणा य तेसिं उक्कोस'त्ति षट्पञ्चाशत्तमं द्वारमाह—

**तिण्णि सया तेत्तीसा धणुत्तिभागो य होइ बोद्धव्वो। एसा खलु सिद्धाणं उक्कोसोगाहणा भणिया ॥ ४८८ ॥**

धनुषां त्रीणि शतानि त्रयस्त्रिंशदधिकानि धनुषस्तृतीयभागश्च भवति बोद्धव्यः एषा खलु सिद्धानामुत्कृष्टाऽवगाहना भणिता, इयमत्र भावना—सिद्धिगमनयोग्योत्कृष्टावगाहनायाः पञ्चधनुःशतरूपायास्तृतीयो भागः पट्षष्ट्यधिकं धनुःशतं चतुःषष्टिश्चाङ्गुलानि, स च सिद्धिगमनकाले वदनोदरादिविवरपूरणेन सङ्कोचित इति धनुःशतपञ्चकात्पात्यते, ततः शेषमुत्कृष्टा सिद्धावगाहनेति, यत्पुनः पञ्चविंशत्यधिकपञ्चधनुःशतप्रमाणमुत्कृष्टमवगाहनामानं सिद्धिगमनयोग्यानां मरुदेवीप्रभृतीनां क्वापि श्रूयते तदादेशान्तरेण ज्ञातव्यं ॥ ४८८ ॥ ५६ ॥ इदानीं '**मज्झिमसिद्धोगाहण**'त्ति सप्तपञ्चाशत्तमं द्वारमाह—

**चत्तारि य रयणीओ रयणि तिभागूणिया य बोद्धव्वा । एसा खलु सिद्धाणं मज्झिमओगाहणा भणिया ॥ ४८९ ॥**

चतस्रो रत्नयो—हस्ता रत्निश्च त्रिभागोना बोद्धव्या, एषा खलु सिद्धानां मध्यमावगाहना भणिता, **श्रीमहावीरस्य** हि भगवतः सप्त हस्ताः शरीरमानं, ततः सिद्धावस्थायां शुषिरपूरणायाङ्गुलाष्टकाधिकहस्तद्वयरूपे त्रिभागे समुत्सारिते शेषं चत्वारो हस्ताः षोडश चाङ्गुलानि मध्यमावगाहनेति, उपलक्षणं चैतत्, तत उत्कृष्टायाः सिद्धावगाहनाया अधो जघन्यायाश्चोपरि सर्वापि मध्यमावगाहना भवतीत्यवगन्तव्यं, आह—जघन्यपदे सप्तहस्तोच्छ्रितानामागमे सिद्धिरुक्ता तत एषा जघन्या प्राप्नोति कथं मध्यमा ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, जघन्यपदे हि तीर्थकरापेक्षया सप्तहस्तोच्छ्रितानां सिद्धिरुक्ता सामान्यकेवलिनां तु हीनप्रमाणानामपि भवति, इदमपि चावगाहनामानं चिन्त्यते सामान्यसिद्धापेक्षया, ततो न कश्चिद्दोषः ॥ ४८९ ॥ ५७ ॥ इदानीं '**जहन्न सिद्धोगाहण**'त्यष्टपञ्चाशत्तमं द्वारमाह—

**एगा य होइ रयणी अट्ठेव य अंगुलाइ साहीया । एसा खलु सिद्धाणं जहण्णओगाहणा भणिया ॥ ४९० ॥**

एका च भवति रत्निः परिपूर्णा अष्टौ चाङ्गुलान्यधिकानि एषा खलु सिद्धानां जघन्यावगाहना भणिता तीर्थकरगणधरैः, सिद्धिगमनयोग्यानां हि जघन्या अवगाहना हस्तद्वयप्रमाणा, ततः शुषिरपूरणाय षोडशाङ्गुललक्षणे त्रिभागे पातिते सति अङ्गुलाष्टकाधिक एको हस्तो जघन्यावगाहना भवति, एषा च कूर्मपुत्रादीनां द्विहस्तानामवसेया, यद्वा सप्तहस्तोच्छ्रितानामपि यन्त्रपीलनादिना संवर्तितशरीराणामिति ॥ ४९० ॥ ५८ ॥ इदानीं 'सासयजिणपडिमानामाइं'त्येकोनषष्टं द्वारमामन्त्रणपूर्वमाशिषा प्राह—

**सिरि उसहसेणपहु १ वारिसेण २ सिरिवद्धमाणजिणनाह ३ । चंदाणण ४ जिण सव्वेवि भवहरा होह मह तुब्भे ॥ ४९१ ॥**

श्रीवृषभसेनप्रभो! वारिषेण श्रीवर्धमानजिननाथ चन्द्राननजिन सर्वेऽपि यूयं 'भवहराः' संसारनिर्नाशका भवत ममेति ॥ ४९१ ॥ सम्प्रति 'जिनकप्पिगोपगरणसंख'त्ति षष्टितमं द्वारमाह—

**पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया । पडलाइं रयत्ताणं च गुच्छओ पायनिज्जोगो ॥ ४९२ ॥ तिन्नेव य पच्छागा रयहरणं चेव होइ मुहपोत्ती । एसो दुवालसविहो उवही जिणकप्पियाणं तु ॥ ४९३ ॥ जिणकप्पियावि दुविहा पाणीपाया पडिग्गहधरा य । पाउरणमपाउरणा एक्केक्का ते भवे दुविहा ॥ ४९४ ॥ दुग १ तिग २ चउक्क ३ पणगं ४ नव ५ दस ६ एक्कारसेव ७ बारसगं ८ ।**

**एए अट्ठ विगप्पा जिणकप्पे हुंति उवहिस्स ॥ ४९५ ॥ पुत्तीरयहरणेहिं दुविहो तिविहो य एक्क-कप्पजुओ । चउहा कप्पदुएणं कप्पतिगेणं तु पंचविहो ॥ ४९६ ॥ दुविहो तिविहो चउहा पंच-विहोऽविहु सपायनिज्जोगो । जायइ नवहा दसहा एक्कारसहा दुवालसहा ॥ ४९७ ॥ अहवा दुगं च नवगं उवगरणे हुंति दुन्नि उ विगप्पा । पाउरणवज्जियाणं विसुद्धजिणकप्पियाणं तु ॥ ४९८ ॥ तवेण सुत्तेण सत्तेण, एगत्तेण बलेण य । तुलणा पंचहा वुत्ता, जिणकप्पं पडिवज्जओ ॥ ४९९ ॥**

'पत्त'मित्यादिगाथाऽष्टकं, उपक्रियते व्रती अनेनेत्युपकरणं—उपधिरित्यर्थः, स चोपधिर्द्विधा—औघिक औपग्रहिकश्च, ओघः—प्रवाहः सामान्यमितियावत् तत्र भव औघिको नित्यमेव यो गृह्यते इत्यर्थः, उपः—आत्मनः समीपे संयमोपष्टम्भार्थं वस्तुनो ग्रहणमुपग्रहः स प्रयोजनमस्येत्यौपग्रहिकः, कारणे आपन्ने संयमयात्रार्थं यो गृह्यते न पुनर्नित्यमेव स औपग्रहिक इत्यर्थः, तत्र औघिक उपधिर्द्विविधो—गणनाप्रमाणेन प्रमाणप्रमाणेन च, तत्र गणनाप्रमाणमेकद्वित्र्यादिरूपं प्रमाणप्रमाणं तु दीर्घपृथुत्वादिरूपं, एवमौपग्रहिकोपधेरपि भेदद्वयं भणनीयं, तत्र औघिकोपधिर्गणनाप्रमाणतो जिनकल्पिकानामिह प्रतिपाद्यते, तत्र पात्रं—पतद्ग्रहः १ पात्रबन्धो येन पात्रं धार्यते वस्त्रखण्डेन चतुरस्रेण २ पात्रकस्थापनं कम्बलमयं यत्र पात्रकाणि स्थाप्यन्ते ३ पात्रकेसरिका—पात्रप्रत्युपेक्षणिका या चिलिमिलिकेति प्रसिद्धा ४ पटलानि यानि भिक्षां भ्रमद्भिः पात्रोपरि दीयन्ते ५ रजस्त्राणानि—पात्रवेष्टनकानि ६ प्राकृतत्वाच्च सूत्रे एकवचननिर्देशः गोच्छकः—कबलखण्डमयो यः पात्रकोपरि दीयते ७ अयं सप्तविधः पात्रनिर्योगः, पात्रपरिकर इत्यर्थः ॥४९२॥ तथा त्रय एव प्रच्छादकाः—प्रावरणरूपाः कल्पा इत्यर्थः, द्वौ सूत्रमयावेक ऊर्णामयो ३ रजोहरणं ४ चैव भवति मुखपोतिका ५, एष उत्कर्षतो द्वादशविध उपधिर्जिनकल्पिकानां

भवति ॥४९३॥ ननु जिनकल्पिका एकस्वरूपा एव भवन्त्याहोश्चित्पृथक्स्वरूपा अपीत्याह–'जिणे'त्यादि, जिनानां कल्पः–आचारो जिनकल्पः स विद्यते येषां ते 'अत इनिठना'विति ( पा०५-२-११५ ) ठनि जिनकल्पिकाः, अपिः पुनरर्थो, जिनकल्पिकाः पुनर्द्विविधा–द्विभेदाः, तावेव भेदावाह–पाणी एव पात्रं येषां ते पाणिपात्राः–पाणिपात्रभोजिन एके, पतद्ग्रहधराः–पतद्ग्रहभोजिनो द्वितीयाः, ते पुनरेकैके द्विभेदा भवेयुः–सप्रावरणा अप्रावरणाश्च, अत्र च सूत्रे प्राकृतत्वात्सलोपो द्रष्टव्यः ॥४९४॥ ननु जिनकल्पिकानां द्वादशविध उपधिरभिदधे स किं सर्वेषामेकविध एव भवति ?, नेत्याह–'दुगे'त्यादि, द्विकं त्रिकं चतुष्कं पञ्चकं नवकं दशकं एकादशकं द्वादशकमित्येतेऽष्टौ विकल्पा जिनकल्पे भवन्त्युपधेरिति ॥ ४९५ ॥ तानेव व्याचष्टे–'पुत्ती'त्यादिगाथाद्वयं, मुखपोतिकारजोहरणाभ्यां द्विविधः, कोऽर्थः ?–मुखपोतिकारजोहरण-लक्षणमुपकरणद्वयमेव पाणिपात्राः प्रावरणवर्जिता जिनकल्पिका धारयन्ति, तथा तेषामेव सप्रावरणानामेकेन कल्पेन युक्तः सन् पूर्वोक्त उपधिस्त्रिविधो भवति, तथा स एव मुखवस्त्रिकारजोहरणरूप उपधिः कल्पद्वयेन सहितश्चतुर्विधः कल्पत्रयेण संयुक्तः पुनः पञ्चविधो भवति, तथा पूर्वोक्त एव द्विविधस्त्रिविधश्चतुर्विधः पञ्चविधश्च उपधिः सप्तविधपात्रनिर्योगसहितः सन् यथाक्रमं नवविधो दशविध एकादशविधो द्वादशविधश्चजायते, तत्र रजोहरणमुखपोतिकासप्तविधपात्रनिर्योगसहितो नवविध उपधिः पात्रभोजिनामप्रावरणानां ज्ञेयः, शेषस्तु दशविध एकादशविधो द्वादशविधश्च सप्रावरणानां पात्रभोजिनामिति ॥ ४९६–४९७ ॥ अथ सूत्रकृदेवाप्रावरणानामुपकरणसङ्ख्यामाह–'अहवे'-त्यादि, पूर्वं सामान्यतो जिनकल्पिकोपधेरष्टौ भेदाः प्रतिपादिताः, अथवा द्विकं नवकं चेति द्वावेव भेदौ, तत्र द्विकं रजोहरणमुखपोतिकारूपं नवकं तु रजोहरणमुखपोतिकासप्तविधपात्रनिर्योगलक्षणं, इह च ये प्रावरणवर्जितास्ते स्वल्पोपधित्वेन विशुद्धजिनकल्पिका भण्यन्ते, तेषामेवेदं द्विकनवकलक्षणं भेदद्वयं, अविशुद्धजिनकल्पिकानां तु पूर्वोक्ता एव भेदा इति ॥ ४९८ ॥ जिनकल्पप्रतिपत्तिश्च परिकर्मणापूर्विकैव भवति

अतः पूर्वं परिकर्मणाप्रतिपादनार्थमाह—'तवेणे'त्यादि, तोल्यते—परीक्ष्यते आत्मा यया सा तुलना—परिकर्मणा आत्मनो जिनकल्पाङ्गीकरणं प्रतिपरीक्षणमित्यर्थः, सा पञ्चधा—पञ्चभेदा उक्ता जिनकल्पं प्रतिपद्यमानस्य, कथमिति तत्राह—'तपसा' चतुर्थादिषण्मासान्ततपोऽभ्यासेनात्मानं भावयति, यद्येतावत्तपः कुर्वाणः प्रथममेव न बाध्यते तदा जिनकल्पं प्रतिपद्यते, नान्यथेति भावः १ 'सूत्रेण' नवपूर्वादिलक्षणेन जिनकल्पोचितेन तथाऽभ्यासं करोति यथा पश्चानुपूर्व्यादिक्रमेण तत्परावर्तयितुं शक्नोति २ 'सत्त्वेन' मानसिकावष्टम्भलक्षणेनात्मानं तथा तोलयति यथा शून्यगृहचत्वरश्मशानादिस्थानेषु भयजनकेषु कायोत्सर्गादिकरणसमये निसर्गनिरर्गलदुर्गोपसर्गपरीषहादिभिरक्षोभ्यो भवति ३ एकत्वेनात्मानं भावयति, एकाक्येव पर्यटन् यदि विश्रोतसिकादिभिः [ परिणामवक्रतादिभिः ] न बाध्यते तदा जिनकल्पं प्रतिपद्यते, नान्यथेति ४ 'बलेन' एकाङ्गुष्ठाद्यवष्टम्भतश्चिरस्थायित्वादिरूपेण शारीरेण धृतिरूपेण च मानसेनावष्टम्भेनात्मानं परीक्षयतीति ५, एतैः पञ्चभिः प्रकारैस्तुलनां विधाय पश्चाज्जिनकल्पप्रतिपत्तिः करणीयेति ॥४९९॥ इदानीं 'थविरकप्पोवगरणाइं'ति एकषष्टितमं द्वारमाह—

एए चेव दुवालस मत्तग अइरेग चोलपट्टो उ। एसो चउदसरूवो उवही पुण थेरकप्पंमि ॥५००॥
तिण्णि विहत्थी चउरंगुलं च भाणस्स मज्झिमपमाणं। एत्तो हीण जहन्नं अइरेगयरं तु उक्कोसं
॥ ५०१ ॥ पत्ताबंधपमाणं भाणपमाणेण होइ कायव्वं। जह गंठिंमि कयंमि ३ कोणा चउरंगुला
हुंति ॥ ५०२ ॥ पत्तगठवणं तह गुच्छगो य पायपडिलेहणी चेव। तिण्हंपि उ प्पमाणं विहत्थी
चउरंगुलं चेव ॥ ५०३ ॥ अड्डाइज्जा हत्था दीहा छत्तीसअंगुले रुंदा। बीयं पडिग्गहाओ ससरी-
राओ य निप्फण्णं ॥ ८ ॥ ॥ ५०४ ॥ कयलीगब्भदलसमा पडला उक्किट्ठमज्झिमजहण्णा। गिम्हे

हेमंतंमि य वासासु य पाणरक्खट्ठा ॥ ५०५ ॥ तिण्णि चउ पंच गिम्हे चउरो पंचच्छगं च हेमंते । पंच च्छ सत्त वासासु होंति घणमसिणरूवा ते ॥ ५०६ ॥ माणं तु रयणत्ताणे भाणपमाणेण होइ निप्फन्नं । पायाहिणं करंतं मज्झे चउरंगुलं कमइ ॥ ५०७ ॥ कप्पा आयपमाणा अड्ढाइज्जा य वित्थडा हत्था । दो चेव सुत्तियाओ उण्णिय तइओ मुणेयव्वो ॥ ५०८ ॥ बत्तीसंगुलदीहं चउवीसं अंगुलाइं दंडो से । अट्ठंगुला दसाओ एगयरं हीणमहियं वा ॥ ५०९ ॥ चउरंगुलं विहत्थी एयं मुहणंतगस्स उ पमाणं । बीओऽवि य आएसो मुहप्पमाणेण निप्फण्णं ॥ ५१० ॥ जो मागहओ पत्थो सविसेसयरं तु मत्तगपमाणं । दोसुवि दव्वग्गहणं वासावासे य अहिगारो ॥ ५११ ॥ सूवोयणस्स भरियं दुगाउअद्धाणमागओ साहू । भुंजइ एगट्ठाणे एयं किर मत्तगपमाणं ॥ ५१२ ॥ दुगुणो चउग्गुणो वा हत्थो चउरस्स चोलपट्टो उ । थेरजुवाणाणट्ठा सण्हे थुल्लंमि य विभासा ॥ ५१३ ॥ संथारुत्तरपट्टो अड्ढाइज्जा य आयया हत्था । दोण्हंपि य वित्थारो हत्थो चउरंगुलं चेव ॥ ५१४ ॥ आयाणे निक्खमणे ठाणे निसियण तुयट्ट संकोए । पुव्विं पमज्जणट्ठा लिंगट्ठा चेव रयहरणं ॥ ५१५ ॥ संपाइमरयरेणू पमज्जणट्ठा वयंति मुहपोत्तीं । नासं मुहं च बंधइ तीए वसहिं पमज्जंतो ॥ ५१६ ॥ छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पन्नत्तं । जे य गुणा संभोगे हवंति ते पायगहणेऽवि ॥ ५१७ ॥ तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा । दिट्ठं कप्पग्गहणं गिला-

**णमरणट्ठया चेव ॥ ५१८ ॥ वेउव्वऽवाउडे वाइए य ही खद्धपजणणे चेव । तेसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो य ॥ ५१९ ॥**

'एए' इत्यादि गाथा विंशतिः, एत एव—अनन्तरोदिता जिनकल्पिकसम्बन्धिनः पात्रकाद्या मुखवस्त्रिकापर्यन्ता द्वादश उपधिभेदाः, अतिरिक्तं च मात्रकं चोलपट्टकश्च, एष चतुर्दशविध उपधिः पुनः 'स्थविरकल्पे' स्थविरकल्पविषये भवति गणनाप्रमाणेनेति ॥ ५०० ॥ इदानीं पात्रकस्य प्रमाणमाह—'तिन्नी'त्यादि, तिस्रो वितस्तयश्चतुरङ्गुलं च चतुर्णामङ्गुलानां समाहारश्चतुरङ्गुलं चत्वार्यङ्गुलानि चेत्यर्थः, इदं भाजनस्य मध्यमं प्रमाणं, अयमर्थः—वर्तुलस्य सर्वतः समचतुरस्रस्य सुप्रतिष्ठानस्य निश्छिद्रस्य निर्व्रणस्य स्निग्धवर्णोपेतस्य पात्रस्य परिधिर्दवरकेण मीयते, तत्र च मिते यदा मानदवरकस्तिस्रो वितस्तयश्चत्वारि चाङ्गुलानि भवन्ति तदा तत्पात्रं मध्यमप्रमाणं भवति, 'इतो' मध्यमप्रमाणात् पात्रकात् हीनं द्विवितस्त्येकवितस्त्यादिमानं यत्पात्रं तज्जघन्यं, 'अतिरिक्ततरं तु' मध्यमप्रमाणात्तद्बृहत्तरमुत्कृष्टं भवति ॥ ५०१ ॥ पात्रबन्धप्रमाणमाह—'पत्ते'त्यादि, पात्रबन्धप्रमाणं भाजनप्रमाणेन भवति करणीयं, यदि मध्यमं पात्रं भवति तदा पात्रबन्धकोऽपि (ग्रन्थाग्रं ५०००) तत्प्रमाणः कार्यः, अथ जघन्यं तदा सोऽपि तदनुसारेण करणीयः, अथोत्कृष्टप्रमाणं पात्रं तदा सोऽपि गुरुतरः कार्यः, किं बहुना ?, यथा ग्रन्थौ 'कृते' दत्ते सति 'कोणाः' ग्रन्थेरञ्चलाश्चतुरङ्गुला भवन्ति तथा पात्रबन्धकः कार्य इति ॥ ५०२ ॥ अथ पात्रस्थापनकगोच्छकपात्रप्रत्युपेक्षणिकानां प्रमाणमाह—'पत्तगे'त्यादि, अथ पात्रकस्थापनं तथा गोच्छकस्तथा पात्रप्रतिलेखनी च एतेषां त्रयाणामपि प्रमाणमेका वितस्तिश्चतुर्भिरङ्गुलैरधिका षोडशाङ्गुलानीत्यर्थः, प्रयोजनं तु पात्रबन्धपात्रस्थापनयो रजःप्रभृतिरक्षणं गोच्छकस्य भाजनवस्त्राणां पटलादीनां प्रमार्जनं केशरिकायास्तु पात्रप्रमार्जनमिति, उक्तं च—"रयमाइरक्खणट्ठा पत्ताबंधो य पायठवणं च । होइ पम-

ज्जणहेउं गुच्छओ भाणवत्थाणं ॥ १ ॥ पायपमज्जणहेउं केसरिया इत्थ होइ णायव्वा ॥" [ रजआदिरक्षणार्थं पात्रबन्धश्च पात्रस्थापनं च । भवति प्रमार्जनहेतोर्गोच्छको भाजनवस्त्राणां ॥ १ ॥ पात्रप्रमार्जनहेतोः पात्रकेसरिका भवति ज्ञातव्या ॥ ] ॥ ५०३ ॥ अथ पटलानां प्रमाणमाह— 'अड्ढे'त्यादि, अर्धतृतीयान् हस्तान्—सार्धौ द्वौ हस्तौ दीर्घाणि—आयतानि षट्त्रिंशदङ्गुलानि एको हस्तो द्वादशाङ्गुलानि चेत्यर्थो रुन्द्राणि—विस्तीर्णानि पटलकानि भवन्ति, अथवा द्वितीयमिदं प्रमाणं—पतद्ग्रहात् स्वशरीराच्च निष्पन्नं, कोऽर्थः ?—महति पात्रके स्थूले शरीरे लघुतरे पात्रके कृशे शरीरे वा पटलकान्यपि तदनुसारेण करणीयानि ॥ ५०४ ॥ तानि च कीदृशानि भवन्तीत्याह—'कयली'त्यादि, कदलीगर्भदलसमानि शुक्लानि मसृणश्लक्ष्णानि घनानि चेत्यर्थः क्षौमाणि पटलान्युत्कृष्टमध्यमजघन्यभेदभिन्नानि भवन्ति, उत्कृष्टत्वमध्यमत्वजघन्यत्वानि तु शोभनत्वादिस्वरूपापेक्षया परिगृह्यन्ते, न तु सङ्ख्यापेक्षया, तानि च 'ग्रीष्मे' उष्णकाले 'हेमन्ते' शीतकाले 'वर्षासु च' वर्षाकाले प्रत्येकं २ त्रिविधानि ज्ञेयानि, तानि च किमर्थं क्रियन्ते ?, तत्राह—'प्राणरक्षार्थं' सम्पातिमादिजीवरक्षणनिमित्तं, उपलक्षणत्वात्पक्षिपुरीषपांशुपातादिरक्षणार्थं लिङ्गसंवरणार्थञ्च, एतदुक्तं भवति—अस्थगिते पात्रके सम्पातिमाः सत्त्वाः पतन्ति पवनप्रकम्पितपादपादेः पत्रपुष्पफलादीनि सचित्तरजःसलिलादयो व्योमवर्तिविहङ्गमपुरीषवात्याहतपांशुप्रकरादयश्च निपतन्ति ततस्तत्संरक्षणार्थं पटलानि ध्रियन्ते, तथा भिक्षां भ्रमतः साधोः कदाचिद्वेदोदयोऽपि सम्भवति ततस्तैर्विकृतलिङ्गस्थगनं क्रियते ॥ ५०५ ॥ अथैतेषामेवोत्कृष्टमध्यमजघन्यानां ग्रीष्मादिषु सङ्ख्यामाह—'तिण्णी'त्यादि, ग्रीष्मे उत्कृष्टानि—अत्यन्तशोभनानि त्रीणि पटलानि भवन्ति, कालस्यात्यन्तरूक्षत्वात् सत्वरं सचित्तपृथ्वीरजःप्रभृतीनां परिणतेस्तेन पटलभेदायोगात्, मध्यमानि—न शोभनानि नाप्यशोभनानि चत्वारि, तेषां प्रभूततराणामेव स्वकार्यसाधनात्, जघन्यानि—जीर्णप्रायाणि अत्यन्तमशोभनानि पञ्चैव । तथा हेमन्ते उत्कृष्टानि चत्वारि, कालस्य स्निग्धत्वाद्धिमर्देन पृथ्वीरजःप्रभृतीनां

परिणतेस्तेन पटलभेदसम्भवात्, मध्यमानि पञ्च, जघन्यानि तु षडेव । तथा वर्षासूत्कृष्टानि पञ्च, कालस्यात्यन्तस्निग्धत्वादतिचिरेण पृथ्वीरजःप्रभृतीनां परिणतेस्तेन पटलभेदयोगात्, मध्यमानि षड्, जघन्यानि तु सप्तैव पटलानि भवन्तीति, तानि च पटलानि तथा घनमसृणरूपाणि कर्तव्यानि यथा तैस्तिरोहितः सविताऽपि न दृश्यते, प्राकृतत्वाच्च पुंस्त्वमिति ॥५०६॥ इदानीं रजस्त्राणप्रमाणमाह—'माण'मित्यादि, 'मानं तु' प्रमाणं 'रजस्त्राणे' रजस्त्राणविषयं भाजनप्रमाणेन—पात्रकप्रमाणेन भवति निष्पन्नं, तच्चैवं वेदितव्यमित्याह—प्रादक्षिण्यं—वेष्टनं कुर्वन् पात्रस्य मध्ये चतुरङ्गुलमिति—चत्वार्यङ्गुलानि यावत्क्रमति—अधिकं तिष्ठति, एतदुक्तं भवति—पात्रकानुरूपं रजस्त्राणं कर्तव्यं, किं बहुना ?, तिर्यक् प्रदक्षिणाक्रमेण भाजने वेष्ट्यमाने भाजनस्य मध्यभागो यथा चतुर्भिरङ्गुलै रजस्त्राणेनातिक्रम्यते तथा रजस्त्राणं विधेयं—कार्यं, प्रयोजनं चास्य मूषकभक्षणरेणूत्करवर्षोदकावश्यायसचित्तपृथिवीकायादिसंरक्षणं, उक्तं च—"मूसगरयउक्केरे वासासिण्हारए य रक्खट्ठा । होंति गुणा रयत्ताणे एवं भणियं जिणिंदेहिं ॥ १ ॥" [ मूषकरजउत्केरः वर्षा अवश्याये रजसि च रक्षार्थे । भवन्ति गुणा रजस्त्राणे एवं भणितं जिनेन्द्रैः ॥१॥ ] ॥५०७॥ इदानीं कल्पप्रमाणमाह—'कप्पे'त्यादि, कल्पा आत्मप्रमाणाः—सार्धहस्तत्रयप्रमाणा दैर्घ्यतः सार्धहस्तद्वयप्रमाणाश्च विस्तरतो विधेयाः, तेषां च मध्ये द्वौ 'सौत्रिकौ' सूत्रनिष्पन्नौ प्रच्छादनपटीरूपौ तृतीयः पुनरौर्णिकः—ऊर्णानिष्पन्नः कम्बल इत्यर्थः ॥५०८॥ इदानीं रजोहरणमानमाह—'बत्ती'सादि, द्वात्रिंशदङ्गुलानि दीर्घं तावद्रजोहरणं सामान्येन कार्यं, तत्र च चतुर्विंशतिरङ्गुलानि दण्डः 'से' तस्य करणीयः, अष्टाङ्गुलाश्च दसिकाः कार्याः, अथवा एकतरत् हीनमधिकं वा कार्यं, कोऽर्थः ?—दण्डो वा हीनो दसिका अधिकमानाः दण्डोऽधिकप्रमाणो दसिका हीनप्रमाणाः, सर्वथा समुदायस्तद् द्वात्रिंशदङ्गुलं कर्तव्यमिति । यत्त्वाधुनातनाः साधुमान्याः केचिदेवमाचक्षते—रजोहरणं

१ इतः प्रारभ्य बहुतरदोषसंभव इतीति पर्यन्तः पाठः केनापि कारणेन नष्टो मुद्रिते एतदीयादर्शे ।

मध्यभागे पाशकत्रययुक्तं भवतु 'मज्झे तिपासियं कुज्ज'त्ति [ मध्ये त्रिपाशितं कुर्यात् ] सिद्धान्तवचनात् अधस्तनदवरकं तु ( ये ) बध्नन्ति रजोहरणे ते मिथ्यादृशः साधवो भगवदाज्ञाभङ्गकारित्वादिति, तान् प्रतीदमभिधीयते—गीतार्थैः रजोहरणे अधस्तनदवरकबन्धस्याचरितत्वात् मिथ्यादृष्टिता न तद्बन्धकसाधूनां, न चाशठपञ्चगीतार्थाचरितं कुर्वतां भगवदाज्ञाभङ्गोऽपि कश्चन, 'असढेहिं समाइन्नं जं कत्थइ केणई असावज्जं । न निवारियमन्नेहि य तं बहुगुणमेवमायरियं ॥ १ ॥ [ अशठैः समाचीर्णं यत् कचित् केनचित् असावद्यं । न निवारितमन्यैश्च तद् बहुगुणमेवमाचरितं ॥ १ ॥ ] इति गणधरैरेवाभिहितत्वात्, अपरं च—एवं व्याकुर्वतां गीतार्थाचरितं च न्यक्कुर्वतां तेषामेव मिथ्यादृष्टिताप्रसक्तिः, यतस्तेऽपि अहो सिद्धान्तोक्तकारकंमन्या! भवद्भिः सिद्धान्तोक्तादधिकं किमपि न विधीयते ?, तत आस्तां तावदन्यत् रजोहरणमपि 'घणं मूले थिरं मज्झे, अग्गे मद्दवजुत्तयं । एगंगियं अझुसिरं, पोरायामं तिपासियं ॥ १ ॥ अप्पोलं मिउ पम्हं, पडिपुण्णं हत्थपूरिमं । रयणीपमाणमित्तं, कुज्जा पोरपरिग्गहं ॥ २ ॥ [ घनं मूले स्थिरं मध्ये अग्रे मार्दवयुक्तं एकाङ्गिकं अशुषिरं पर्वायामं त्रिपाशितं ॥ १ ॥ पोलररहितं मृदु पक्ष्मलं प्रतिपूर्णं हस्तपूरकं । हस्तप्रमाणं कुर्यात् पर्वपरिग्राह्यं ॥ २ ॥ ] इत्यागमानभिहितं कुर्वतां भवतामपि भगवदाज्ञाभङ्गकारित्वेन मिथ्यादृष्टित्वं प्राप्तं, ततो भवद्भिरपि गीतार्थाचरितमवश्यं शरणीकर्त्तव्यं अन्यथा तु बहुतरदोषसंभव इति । मुखवस्त्रिकामानमिदानीमाह—'चउ'इत्यादि, चत्वार्यङ्गुलानि एका च वितस्तिरेतच्चतुरस्रस्य मुखानन्तकस्य—मुखवस्त्रिकायाः प्रमाणं, अथवा द्वितीय आदेशो—मतान्तरं मुखप्रमाणेन निष्पन्नं मुखानन्तकं, एतदुक्तं भवति—वसतिं प्रमार्जयतः साधोर्नासिकामुखयो रजःप्रवेशरक्षणार्थं उच्चारभूमौ नाशिकाशोंदोषपरिहारार्थं च यावता मुखं प्रच्छाद्यते त्र्यस्रं कोणद्वये गृहीत्वा पृष्ठतश्च कृकाटिकायां यावता ग्रन्थिर्दातुं शक्यते तावत्प्रमाणा मुखवस्त्रिका करणीयेति ॥ ५१० ॥ इदानीं मात्रकप्रमाणमाह—'जो'इत्यादि,यो 'मागधो' मगधदेशोद्भवः प्रस्थः—दो असईओ

पसई दो पसईओ य सेइया होइ । चउसेइयाहिं कुलओ चउकुलओ मागहो पत्थो ॥ १ ॥ [ द्वे असती प्रसृतिः द्वे प्रसृती सेतिका भवति चतसृभिः सेतिकाभिः कुलवः चतुष्कुलवो मागधः प्रस्थः ॥ १ ॥ ] इति क्रमनिष्पन्नः तन्मानात्सविशेषतरं—अधिकतरं मात्रकप्रमाणं भवति, तेन च किं प्रयोजनमित्याह—द्वयोरपि—वर्षावर्षयोः—वर्षाकालऋतुबद्धकालयोर्गुर्वादिप्रायोग्यद्रव्यग्रहणं क्रियते, अयमधिकारः—इदं मात्रकस्य प्रयोजनं, एतदुक्तं भवति—यदि तत्र क्षेत्रे गुरुग्लानप्राघूर्णकादिप्रायोग्यद्रव्यस्यावश्यंभावी लाभः तदा वैयावृत्त्यकरसङ्घाटक एव मात्रके तत्प्रायोग्यं द्रव्यं गृह्णाति, असति च प्रायोग्यद्रव्यस्य ध्रुवलाभे सर्वे एव सङ्घाटका मात्रकेषु गुर्वादिप्रायोग्यं द्रव्यं गृह्णन्ति, यतो न ज्ञायते कः किं लप्स्यते आहोश्विन्नेति, तथा यत्र यत्र क्षेत्रे काले वा स्वभावेनैव भक्तपानं संसज्यते तत्र प्रथमं मात्रके तद् गृह्यते, ततः शोधयित्वा भक्तपानमितरेषु पतद्ग्रहेषु प्रक्षिप्यते, तथा दुर्लभघृतादिद्रव्यग्रहणं सहसादानग्रहणं च तेन क्रियते, इत्यादि मात्रकस्य प्रयोजनमिति ॥५११॥ अपरं च मात्रकस्य प्रमाणमाह—'सूओ'इत्यादि, अत्र प्राकृतत्वेन विभक्तिव्यत्ययात्सूपोदनेन—दालीकूरेण भृतं यदेकं स्थानं—भाजनरूपं द्विगव्यूतादध्वन आगतः साधुर्भुङ्क्ते तदेतत्किल मात्रकस्य द्वितीयं प्रमाणं, मूलनगरादुपनगरगोकुलादिषु द्विगव्यूतस्थितेषु भिक्षामटित्वा समागत्य वसतौ मात्रके सर्वं प्रक्षिप्य तदानीमेतावता श्रमेण एकस्थानस्थितस्तत्सूपादिकं भुङ्क्ते यदि च यावन्मात्रं सूपादिकं साधुर्भोक्तुं शक्नोति तावन्मात्रमेव तत्र मात्रके माति न न्यूनमधिकं वा तदा तत्प्रमाणं मात्रकस्येति तात्पर्यं ॥ ५१२ ॥ इदानीं चोलपट्टमानमाह—'दिगुणो'इत्यादि, द्विगुणश्चतुर्गुणो वा कृतः सन् यथा हस्तप्रमाणश्चतुरस्रश्च भवति तथा चोलस्य—पुरुषचिह्नस्य पट्टः—प्रावरणवस्त्रं चोलपट्टः कार्यः, किमर्थं द्विगुणश्चतुर्गुणो वेत्याह—'थेरजुवाणाणट्ठ'त्ति क्रमेण स्थविराणां यूनां च साधूनामर्थाय—प्रयोजनाय, स्थविराणां द्विहस्तः, तदिन्द्रियस्य प्रबलसामर्थ्याभावादल्पेनाप्यावरणात्, यूनां च चतुर्हस्तश्चोलपट्टकः करणीय इति भावः, 'सण्हे थुलंमि य

विभास'त्ति श्लक्ष्णे स्थूले च चोलपट्टे 'विभाषा' विविधा भाषा, अयं भेदो—यदुत स्थविराणां श्लक्ष्णः करणीयस्तदिन्द्रियस्पर्शेन चोलपट्टस्योपघाताभावात्, यूनां तु स्थूल इति ॥ ५१३ ॥ इदानीं पूर्वमनुद्दिष्टयोरप्युपकरणप्रस्तावादौपग्रहिकोपधिरूपयोः संस्तारकोत्तरपट्टरूपयोर्मानमाह—'संथे'त्यादि, संस्तारक उत्तरपट्टश्चेति द्वयमपि प्रत्येकमर्धतृतीयौ हस्तौ आयतं भवति, द्वयोरपि संस्तारकोत्तरपट्टयोर्विस्तारः—पृथुत्वमेको हस्तश्चतुरङ्गुलं—चत्वार्यङ्गुलानि, प्रयोजनं च संस्तारकस्य प्राणिरेणुसंरक्षणं, तदभावे हि शुद्धभूमौ शयानस्य साधोः पृथिव्यादीनां प्राणिनामुपमर्दो भवति रेणुश्च शरीरे लगति, तथा उत्तरपट्टोऽपि क्षौमिकः षट्पदिकासंरक्षणार्थं संस्तारकस्योपरि आस्तीर्यते, अन्यथा कम्बलमयसंस्तारकशरीरयोः संघर्षेण षट्पदिकाविराधना स्यादिति ॥ ५१४ ॥ अथ सूत्रकृदेव केषाञ्चिदुपकरणानां प्रयोजनं प्रतिपिपादयिषुः पूर्वं तावद्रजोहरणस्य प्रयोजनमाह—'आये'त्यादि, आदाने—ग्रहणे निक्षेपे—मोचने स्थाने—ऊर्ध्वस्थाने निषदने—उपवेशने त्वग्वर्तने—शयने सङ्कोचने च—पादादीनां पश्चात्करणे सम्पातिमादिसूक्ष्मजीवसंरक्षणाय पूर्वं—आदौ भूम्यादेः प्रमार्जनार्थं रजोहरणं तीर्थकरैः कथितं, पूर्वमप्रमार्जिते हि पात्रादौ तदादाने क्रियमाणेऽवश्यं मशककुंथ्वादीनामुपघातो भवति, रजोहरणेन तु प्रमार्जने कृते तेषां रक्षा कृता भवति, तथाऽर्हद्दीक्षायां लिङ्गं—चिह्नमेतत् प्रथममिति ॥५१५॥ अथ मुखवस्त्रिकायाः प्रयोजनमाह—'संपे'त्यादि, सम्पातिमा जीवा मक्षिकामशकादयस्तेषां रक्षणार्थं भाषमाणैर्मुखे मुखवस्त्रिका दीयते, तथा रजः—सचित्तः पृथिवीकायस्तत्प्रमार्जनार्थं रेणुप्रमार्जनार्थं च मुखपोत्तिकां वदन्ति—प्रतिपादयन्ति तीर्थकरादयः, तथा वसतिं प्रमार्जयन् साधुर्नासां मुखं च बध्नाति—आच्छादयति 'तया' मुखपोतिकया यथा मुखादौ रेणुर्न प्रविशतीति ॥५१६॥ इदानीं पात्रग्रहणस्य प्रयोजनमाह—'छक्काये'त्यादि, षट्कायरक्षणार्थं पात्रग्रहणं जिनैः प्रज्ञप्तं, पात्ररहितो हि साधुर्भोजनार्थी षडपि जीवनिकायान् परिशाटनादिदोषेण विनाशयतीति, ये च गुणाः—गुरुग्लानवृद्धबालभिक्षाश्रमणासहिष्णुराजपुत्रप्राघूर्णकाल-

ऽधिमत्साध्वादेर्भिक्षादानादयः सम्भोगे—एकमण्डलीरूपे व्यावर्णिताः सिद्धान्ते त एव गुणाः पात्रग्रहणेऽपि भवन्ति, पात्रग्रहणमन्तरेण कथमे-तन्निमित्तं भिक्षा समानीयत इति भावः ॥५१७॥ इदानीं कल्पानां प्रयोजनमाह—'तणे'त्यादि, तृणानां—व्रीहिपलालादीनां ग्रहणं तृणग्रहणं अनलः—अग्निस्तस्य सेवा तयोर्निवारणार्थं कल्पग्रहणं, असति कल्पे शीतादौ सति गाढे पलालाग्निसेवामवश्यं करोति तत्करणे च जीववधः, तथा धर्मशुक्लध्याननिमित्तं दृष्टं—अनुज्ञातं कल्पग्रहणं तीर्थकृद्भिः, शीताद्युपद्रवे हि कल्पप्रावृत्तः सुखेन धर्मशुक्लध्याने अध्यामे करोतीति, अन्यथा शीतादौ कम्पमानकायो दन्तवीणामनवरतं वादयन् कथङ्कारं ते ध्याने विधास्यतीति?, तथा ग्लानसंरक्षणार्थं दृष्टं कल्पग्रहणं, अन्यथा शीतवातादिना बाध्यमानो ग्लानो गाढतरं ग्लानो भवति, तथा मरणार्थं कल्पग्रहणं, मृतस्य ह्युपरि प्रच्छादनार्थं कल्पः क्रियते, इतरथा लोकव्यवहारादिबाधा कृता भवति ॥ ५१८ ॥ इदानीं चोलपट्टस्य प्रयोजनमाह—'वेउव्वे'त्यादि, यस्य साधोः प्रजननं—साधनं वैक्रियं—विकृतं भवति यथा दाक्षिणात्यपुरुषाणामग्रभागे विध्यते प्रजननं तच्च तथाविधं दृष्टं विकृतं भवति ततस्तत्प्रच्छादनार्थं चोलपट्टकोऽनुजज्ञे, 'अवाउडे'त्ति पदं सर्वत्र सम्बध्यते ततोऽप्रावृते—अपरिहिते चोलपट्टके एते दोषा भवन्ति, यथा—कश्चित्साधुरप्रावृतसाधनो भवति अग्रभागे चर्मणा अनाच्छादितलिङ्गो दुश्चर्मा इत्यर्थः, ततस्तदनुग्रहार्थं चोलपट्टोऽनुज्ञातः, तथा कश्चित् साधुर्वातिको भवति—वातेन च तदीयसाधनमुच्छूनं भवति ततस्तदनुग्रहाय चोलपट्टोऽनुमतः, तथा प्रकृत्यैव कश्चित् ह्रीमान्—लज्जालुर्भवति ततस्तत्प्रावरणाय चोलपट्टः तथा स्वभावेनैव कश्चित् 'खद्धपजणण'त्ति बृहत्साधनो भवति लोकश्च तथाविधं तं दृष्ट्वा हसति ततस्तथाविधानुग्रहाय चोलपट्टः, तथा लिङ्गोदयार्थं चोलपट्टः कदाचिन्मनोहररूपामनुपमयौवनां वनितां विलोक्य लिङ्गस्योदयो भवति अथवा तदीयं लिङ्गं मनोरमं

चोलपट्टानाच्छादितं दृष्ट्वा स्त्रिया एव लिङ्गोदयो भवति ततस्तत्प्रच्छादनाय पट्टः—चोलपट्टोऽनुज्ञात इति ॥ ५१९ ॥ इदानीमिहैव द्वारे उपकरणादिव्यवस्थार्थं साधुभेदानाह—

अवरेवि सयंबुद्धा हवंति पत्तेयबुद्धमुणिणोऽवि । पढमा दुविहा एगे तित्थयरा तव्वियरा अवरे ॥ ५२० ॥ तित्थयरवज्जियाणं बोही उवही सुयं च लिंगं च । नेयाइँ तेसि बोही जाइस्सरणाइणा होइ ॥ ५२१ ॥ मुहपत्ती रयहरणं कप्पतिगं सत्त पायनिज्जोगो । इय बारसहा उवही होइ सयंबुद्धसाहूणं ॥५२२॥ हवइ इमेसि मुणीणं पुव्वाहीयं सुअं अहव नत्थि । जइ होइ देवया से लिंगं अप्पइ अहव गुरुणो ॥ ५२३ ॥ जइ एगागीविहरु विहरणक्खमो तारिसी व से इच्छा । तो कुणइ तमन्नहा गच्छवासमणुसरइ निअमेणं ॥ ५२४ ॥ पत्तेयबुद्धसाहूण होइ वसहाइदंसणे बोही । पोत्तियरयहरणेहिं तेसि जहण्णो दुहा उवही ॥ ५२५ ॥ मुहपोत्ती रयहरणं तह सत्त य पत्तयाइनिज्जोगो । उक्कोसोऽवि नवविहो सुयं पुणो पुव्वभवपढियं ॥ ५२६ ॥ एक्कारस अंगाइं जहन्नओ होइ तं तदुक्कोसं । देसेण असंपुन्नाइं हुंति पुव्वाइं दस तस्स ॥ ५२७ ॥ लिंगं तु देवया देइ होइ कइयावि लिंगरहिओवि । एगागी चिय विहरइ नागच्छइ गच्छवासे सो ॥ ५२८ ॥

'अवरेऽवी'त्यादिगाथानवकं, 'अपरेऽपि' जिनकल्पिकस्थविरकल्पिकेभ्यः पूर्वभणितेभ्योऽन्येऽपि मुनयो भवन्ति स्वयम्बुद्धाः प्रत्येकबुद्धाश्च, अपिः चार्थे, तत्र प्रथमाः—स्वयम्बुद्धा द्विविधाः—एके तीर्थकरास्तदितरे—तीर्थकरव्यतिरिक्ताः 'अपरे' द्वितीयाः, इह च तीर्थकरव्य-

तिरिक्तैरधिकारः, तत्र स्वयम्बुद्धप्रत्येकबुद्धानां बोध्युपधिश्रुतलिङ्गकृतो विशेषः ॥ ५२० ॥ तत्र स्वयम्बुद्धानां बोध्यादीन्याह–'तित्थे'त्यादि गाथाचतुष्टयं, तीर्थंकरवर्जितानां स्वयम्बुद्धानां बोधिः–धर्मप्राप्तिरुपधिः–उपकरणानि श्रुतं–ज्ञानं लिङ्गं चेति ज्ञेयानि प्रत्येकबुद्धेभ्यो भेदप्रतिपादकानि चत्वारि स्थानानि, तान्येव क्रमेणाह–तेषां बोधिर्बाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना भवति, तथा मुखपोत्तिका रजोहरणं कल्पत्रिकं सप्तविधश्च पात्रनिर्योग इति द्वादशधा उपधिर्भवति स्वयम्बुद्धसाधूनां, तथा एषां–स्वयम्बुद्धसाधूनां पूर्वजन्मन्यधीतं–पठितं श्रुतं भवति अथवा नैव भवति पूर्वाधीतं श्रुतं किन्तु नवतरपठितमेव, ततो यदि पूर्वाधीतं श्रुतं तेषामुपतिष्ठते तदा 'से'त्ति तस्य स्वयम्बुद्धस्य देवता 'लिङ्गं' रजोहरणादिकमर्पयति, उपलक्षणमेतत्, गुरुसन्निधौ वा गत्वा लिङ्गं प्रतिपद्यते, अथ न पूर्वाधीतं श्रुतमुपतिष्ठते तदा गुरव एव लिङ्गमर्पयन्ति, अयं च यद्येकाक्यपि विहरणक्षमो–विहारं कर्तुं समर्थस्तादृशी वा तस्य इच्छा–एकाकिविहारकरणेऽभिलापस्ततः करोति तं–एकाकिविहारं, 'अन्यथा' एकाकिविहाराक्षमतायामिच्छाया अभावे च गच्छवासमनुसरति–गच्छ एवास्ते 'नियमेन' निश्चयेन, इदं च पूर्वाधीतश्रुतसद्भाव एव द्रष्टव्यं, पूर्वाधीतश्रुताभावे तु गच्छवास एवावश्यं व्यवतिष्ठते इति, तथा चोक्तं–"पुव्वाहीयं सुयं से हवइ वा न वा, जइ से नत्थि तो लिंगं नियमा गुरुसंनिहे पडिवज्जइ गच्छे य विहरइत्ति, अह पुव्वाहीयसुयसंभवो अत्थि तो से लिंगं देवया पयच्छइ, गुरुसन्निहे वा पडिवज्जइ, जइ एगविहारविहरणे समत्थो इच्छा व से तो एक्को चेव विहरइ, अन्नहा गच्छे विहरइत्ति," इदानीं प्रत्येकबुद्धानां बोध्यादीनि चत्वारि स्थानान्याह–'पत्ते'इत्यादिगाथाचतुष्टयं प्रत्येकबुद्धसाधूनां बाह्यवृषभादिकारणदर्शने बोधिर्नियमतो भवति, तथा तेषामुपधिर्द्विविधो–जघन्य उत्कृष्टश्च, तत्र जघन्यो मुखपोतिकारजोहरणाभ्यां द्विधा, उत्कृष्टोऽपि मुखपोतिकारजोहरणसप्तविधपात्रनिर्योगरूपो नवविधः, तथा श्रुतं पुनः पूर्वभवपठितमेव तेषां नियमतो भवति, तत्र जघन्यत एकादशाङ्गानि–आचारादीनि,

तथोत्कृष्टं श्रुतं देशेन–एकदेशेनोनानि–असम्पूर्णानि भवन्ति पूर्वाणि दश 'तस्य' प्रत्येकबुद्धस्य, लिङ्गं तु–रजोहरणादिकं देवतैव तस्य ददाति कदाचिच्च लिङ्गरहितोऽपि भवति तथा एकाक्येव विहरति वसुन्धरायां, न पुनरागच्छति गच्छवासे स इति ॥ ५२१–२८ ॥

इदानीं 'साहुणीणोवगरणाइं'ति द्वाषष्टं द्वारमाह—

उवगरणाइं चउद्दस अचोलपट्टाइं कमढयजुयाइं । अज्जाणवि भणियाइं अहियाणिवि हुंति ताणेवं ॥ ५२९ ॥ उग्गहऽणंतग १ पट्टो २ अद्धोरुय ३ चलणिया ४ य बोद्धव्वा । अब्भितर ५ बाहिंनियंसणी ६ य तह कंचुए ७ चेव ॥ ५३० ॥ उक्कच्छिय ८ वेगच्छिय ९ संघाडी १० चेव खंधगरणी ११ य । ओहोवहिंमि एए अज्जाणं पन्नवीसं तु ॥ ५३१ ॥ अह उग्गहणंतगं नावसंठियं गुज्झदेसरक्खट्ठा । तं तु पमाणेणेक्कं घणमासिणं देहमासज्ज ॥ ५३२ ॥ पट्टोवि होइ एगो देहपमाणेण सो उ भइयव्वो । छायंतोग्गहणंतं कडिबद्धो मल्लकच्छा व ॥ ५३३ ॥ अद्धोरुगोवि ते दोवि गिण्हिउं छायए कडीभागं । जाणुपमाणा चलणी असीविया लंखियाए व ॥ ५३४ ॥ अंतोनियंसणी पुण लीणतरी जाव अद्धजंघाओ । बाहिरगा जा खलुगा कडीइ दोरेण पडिबद्धा ॥ ५३५॥ छाएइ अणुकुइए उरोरुहे कंचुओ असिव्वियओ । एमेव य ओकच्छिय सा नवरं दाहिणे पासे ॥ ५३६ ॥ वेगच्छिया उ पट्टो कंचुगमुक्कच्छिगं च छायंतो । संघाडीओ चउरो तत्थ दुहत्था उवसयंमि ॥ ५३७ ॥ दोन्नि तिहत्थायामा भिक्खट्ठा एग एगमुच्चारे । ओसरणे चउहत्थाऽनिस-

पणपच्छायणा मसिणा ॥ ५३८ ॥ खंधगरणी उ चउहत्थवित्थडा वायविहुयरक्खट्ठा । खुज्जक-
रणी उ कीरइ रूववईणं कुडहहेऊ ॥ ५३९ ॥

'उवे'त्यादिगाथैकादशकं, पूर्वोक्तानि 'पत्तं पत्ताबंधो' इत्यादीनि उपकरणादीनि चतुर्दश अचोलपट्टानि—चोलपट्टकरहितानि कमढगयुतानि आर्यिकाणामपि भणितानि, पात्रादीनां च प्रमाणं गणनया स्वरूपेण च स्थविराणामिव द्रष्टव्यं, कमढकं च—लेपिततुम्बकभाजनरूपं कांस्यमयबृहत्तरकरोटिकाकारमेकैकं संयतीनां निजोदरप्रमाणेन विज्ञेयं, संयतीनां च मण्डलीमध्ये पतद्ग्रहको न भ्रमति एकस्याः संयत्या अपरस्याः कार्ये न समायाति तुच्छस्वभावात् किन्तु कमढक एवार्यिका भोजनक्रियां कुर्वन्तीत्यतः कमढकग्रहणं, 'अहियाणिवि हौंति ताणेवं'ति अधिकान्यपि—पूर्वोक्तचतुर्दशोपकरणव्यतिरिक्तान्यप्युपकरणान्यार्यिकाणां भवन्ति, तानि चैवं ॥ ५२९ ॥ यथा—अवग्रहानन्तकं १ पट्टकः २ अर्धोरुकं ३ चलनिका ४ च बोद्धव्या, अभ्यन्तरनिवसनी ५ वहिर्निवसनी ६ च तथा कञ्चुकश्चैव ७ उपकक्षिका ८ वैकक्षिका ९ सङ्घाटी १० चैव स्कन्धकरणी ११ च एते आर्यिकाणां सम्बन्धिनि ओघोपधौ पञ्चविंशतिर्भेदाः ॥ ५३०—३१ ॥ एतान् स्वयमेव व्याचष्टे—'अथे'—त्यानन्तर्ये, अवग्रह इति योनिद्वारस्य सामयिकी संज्ञा तस्यानन्तकं—वस्त्रं अवग्रहानन्तकं, तच्च नौसंस्थानं—वेडिकाकारं मध्यभागे विशालं पर्यंतभागयोस्तु तनुकमित्यर्थः, गुह्यदेशरक्षार्थं—ब्रह्मचर्यसंरक्षणार्थं गृह्यते, तत्पुनर्गणनाप्रमाणेनैकं भवति, तथा आर्तवबीजपातसंरक्षणार्थं घनं—घनवस्त्रेण क्रियते, पुरुषसमानकर्कशस्पर्शपरिहरणार्थं च मसृणं—मसृणवस्त्रेण क्रियते, मसृणे हि वस्त्रे स्त्रीयोनिस्पर्शसदृशः स्पर्शो भवति, सजातीयश्च सजातीये न प्रभवतीति मसृणग्रहणं, तथा 'देहमाश्रित्य' देहानुमानेन प्रमाणं तस्य करणीयं, देहो हि कस्याश्चित्तनुः कस्याश्चित्स्थूलः ततस्तदनुसारेण विधेयमित्यर्थः ॥ ५३२ ॥ पट्टोऽपि गणनाप्रमाणेन भवत्येकः पर्यन्तभागवर्तिवीटकबन्धः पृथुत्वेन चतु-

रङ्गुलप्रमाणः समतिरिक्तो वा दैर्घ्येण तु स्त्रीकटीप्रमाणः, स च देहप्रमाणेन भजनीयः, पृथुलकटीभागाया दीर्घः कृशकटीभागायाश्च ह्रस्व इत्यर्थः, अवग्रहानन्तकस्य पुरतः पृष्ठतश्च द्वावपि पर्यन्तभागावाच्छादयन् वर्धावत्कट्यां बध्यते, तस्मिंश्च बद्धे मल्लकच्छावद्भवति ॥ ५३३ ॥ अथ ऊरुकार्धं भजतीति निरुक्तवशादर्धोरुकः, तौ द्वावपि—अवग्रहानन्तकपट्टौ गृहीत्वा—अवष्टभ्य सर्वं कटीभागमाच्छादयति, स च मल्लचलनाकृतिः, केवलं ऊर्वोरन्तरे ऊरुद्वये च कसाबद्धा, चलनकाऽपीदृश्येव, केवलमधो जानुप्रमाणा अस्यूता कसानिबद्धा लङ्खिका—वंशोपरिनर्तकी तत्परिधानवत् ॥ ५३४ ॥ अन्तर्निवसनी पुनरुपरि कटीभागादारभ्य अधः अर्धजङ्घं यावद्भवति, सा च परिधानकाले लीनतरा परिधीयते, आकुलतया जनहासो मा भूदिति, बहिर्निवसनी या उपरि कटीत आरभ्य अधो यावत् खलुगो—गुल्फः ( घुंटी ) कट्यां च दवरकेण प्रतिबद्धा भवति ॥ ५३५ ॥ इदमधः शरीरस्य षड्विधमुपकरणमुक्तं, अथ ऊर्ध्वकायस्य कथ्यते, तत्र—'छाएई'त्यादि, दैर्घ्यमाश्रित्य स्वहस्तेनार्धतृतीयहस्तप्रमाणः पृथुत्वेन तु हस्तमानः यद्वा निजनिजशरीरप्रमाणनिष्पन्नः, अस्यूतः पार्श्वद्वयेऽपि कसाबद्धः कापालिककञ्चुकवत्कञ्चुकः क्रियते, स च उरोरुहौ—स्तनौ छादयति, किम्भूतौ ?, तत्राह—'अणुकुइए'त्ति अणु—स्वल्पं यथा भवति एवं कुचितौ—कञ्चुकाभ्यन्तरे ससंचारौ न गाढं सम्पृक्तावित्यर्थः गाढपरिधाने हि अतिविविक्तविभागतया जननयनमनःस्पृहणीयरूपौ भवतः तस्मात्कञ्चुकस्य शिथिलमेव परिधानं विधेयमिति, कक्षायाः समीपमुपकक्षं तदाच्छादिका ओपकक्षिका 'एवमेव' कञ्चुकवद्भवति, सा च अस्यूता समचतुरस्रा स्वहस्तेन सार्धहस्तप्रमाणा उरोभागं दक्षिणपार्श्वं पृष्ठं च प्रच्छादयन्ती वामस्कन्धे—वामपार्श्वे च वीटकप्रतिबद्धा परिधीयते ॥ ५३६ ॥ वेगच्छियत्ति पूर्वार्धं, उपकक्षिकाविपरीतो वैकक्षिकालक्षणः पट्टो भवति, तुशब्द उपकक्षिकासादृश्यावधारणे वामपार्श्वपरिधानविशेषे वा द्रष्टव्यः, स च कञ्चुकमुपकक्षिकां चाच्छादयन् वामपार्श्वे परिधीयते 'संघाडीओ'इत्यादिसार्धा गाथा

उपरि परिभोगाय चतस्रः सङ्घाट्यो भवन्ति, एका द्विहस्ता पृथुत्वेन ॥ ५३७ ॥ द्वे त्रिहस्ते, एका च चतुर्हस्ता दैर्घ्येण तु, चतस्रोऽपि सार्धहस्तत्रयप्रमाणाश्चतुर्हस्ता वा द्रष्टव्याः, तत्र 'द्विहस्ता' द्विहस्तविस्तृता उपाश्रये भवति, न तां विहाय प्रकटदेहया कदाचिदासितव्यमिति भावः, ये च द्वे 'त्रिहस्तायामे' त्रिहस्तविस्तृते भवतस्तयोर्मध्ये एका भिक्षार्थं एका उच्चारे भवति, भेदग्रहणं गोचर्याद्युपलब्धतुल्यवेषादिपरिहारार्थं, तथा अवसरणे—समवसरणे व्याख्याने स्नात्रादौ 'चतुर्हस्ता' चतुर्हस्तविस्तृता सङ्घाटिर्भवति, सा च अनिषण्णप्रच्छादनायोपयुज्यते, यतो न तत्र संयतीभिरुपवेष्टव्यं किन्तु ऊर्ध्वाभिरेव स्थातव्यं, ततस्तया स्कन्धादारभ्य पादौ यावद् व्रतिन्यो वपुः प्रच्छादयन्तीति, एताश्च पूर्वप्रावृतवेषप्रच्छादनार्थं श्लाघादीस्यर्थं च मसृणाः क्रियन्ते, चतस्रोऽपि च गणनाप्रमाणेन एकमेव रूपं, युगपत्परिभोगाभावात् ॥ ५३८ ॥ 'खंधे' त्यादि स्कन्धकरणी 'चतुर्हस्तविस्तृता' चतुर्हस्तदीर्घा च समचतुरस्रा प्रावरणस्य वातविधुतरक्षणार्थं चतुष्पुटीकृत्य स्कन्धे ध्रियते, सैव च स्कन्धकरणी रूपवत्याः संयत्याः कुडुभनिमित्तं कुब्जकरण्यपि क्रियते, पृष्ठप्रदेशे स्कन्धादधः संवृततया मसृणवस्त्रपट्टकेन उपकक्षिकावैकक्षिकानिबद्धया तया विरूपतापादनाय कुडुभं विधीयते इति भावः ॥ ५३९ ॥ ६२ ॥ सम्प्रति 'जिणकप्पियाण संखा उक्किट्ठा एगवसहीए'त्ति त्रिषष्टं द्वारमाह—

**जिणकप्पिया य साहू उक्कोसेणं तु एगवसहीए । सत्त य हवंति कहमवि अहिया कइयावि नो हुंति ॥ ५४० ॥**

इह च विनेयजनानुग्रहार्थं किञ्चिदप्रतीतार्थत्वादुत्तरत्र यथालन्दकल्पादौ सप्रयोजनत्वाच्च प्रथमं जिनकल्पिकस्वरूपमेव निरूप्यते—तत्र जिनकल्पं प्रतिपित्सुना प्रथममेव पूर्वापररात्रकाले तावदिदं चिन्तनीयं—विशुद्धचारित्रानुष्ठानेन कृतं मयाऽऽत्महितं शिष्यादिनिष्पादनतः

परहितं च, जातांश्चेदानीं मम गच्छपरिपालनसमर्थाः शिष्याः, ततो विशेषतः साम्प्रतमात्महितं ममानुष्ठानमुचितं इति, विचिन्त्य चेदं सति परिज्ञाने निजमायुःशेषं स्वयमेव पर्यालोचयति, परिज्ञानाभावे पुनरन्यमतिशायिनमाचार्यादिकं पृच्छति, तत्र स्वल्पे स्वायुषि भक्तपरिज्ञानादीनामन्यतमन्मरणमङ्गीकरोति, अथ दीर्घमायुः केवलं जङ्घाबलपरिक्षीणस्तदा वृद्धवासं स्वीकुरुते, पुष्टायां तु शक्तौ जिनकल्पं प्रतिपद्यते, तं च प्रतिपत्तुकामः पूर्वमेव पञ्चभिस्तुलनाभिरात्मानं तोलयति, तद्यथा—"तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य । तुलणा पंचहा वुत्ता जिणकप्पं पडिवज्जओ ॥ १ ॥" [ तपसा सत्त्वेन सूत्रेण एकत्वेन बलेन च । तुलना पञ्चधोक्ता जिनकल्पं प्रतिपद्यमानस्य ॥ १ ॥ ] तुलना भावना परिकर्म चेत्येकार्थानि, तत्राचार्योपाध्यायप्रवर्तकस्थविरगणावच्छेदकस्वरूपाः प्रायः पञ्चैव जनाः प्रशस्ताभिरेताभिः पञ्चभिर्भावनाभिर्जिनकल्पं प्रतिपित्सवः प्रथममेवात्मानं भावयन्ति, अप्रशस्तास्तु कन्दर्पदेवकिल्बिषाभियोगिकाऽऽसुरसम्मोहस्वरूपाः पञ्च भावना वक्ष्यमाणाः सर्वथा दूरतः परिहरन्ति, तत्र तपसाऽऽत्मानं भावयंस्तथा क्षुधां पराजयति यथा देवाद्युपसर्गादिनाऽनेषणीयादिकरणतो यदि षण्मासान् यावदाहारं न लभते तथापि न बाध्यते, सत्त्वभावनया तु भयं निद्रां च पराजयते, तत्र भयनिद्राजयार्थं रात्रौ सुप्तेषु सर्वसाधुषूपाश्रय एव कायोत्सर्गं कुर्वतः प्रथमा सत्त्वभावना भवति, द्वितीयाद्यास्तूपाश्रयबाह्यादिप्रदेशेषु, आह च—"पढमा उवस्सयंमि य बीया बाहिं तइया चउक्कंमि । सुन्नघरंमि चउत्थी अह पंचमिया मसाणंमि ॥ १ ॥" [ प्रथमोपाश्रये च द्वितीया बहिः तृतीया चतुष्के । शून्यगृहे चतुर्थी अथ पञ्चमी श्मशाने ॥ १ ॥ ] सूत्रभावनया तु निजनामवत्तथा परिचितं सूत्रं करोति यथा दिवा रात्रौ वा शरीरच्छायाद्यभावेऽप्युच्छ्वासप्राणस्तोकलवमुहूर्तादिकं कालं सूत्रपरावर्तनानुसारेणैव सर्वं सम्यगवगच्छति, एकत्वभावनया चात्मानं भावयन् सङ्घाटकसंघाटकसाध्वादिना सह पूर्वप्रवृत्तानालापसूत्रार्थसुखदुःखादिप्रश्नमिथःकथादिव्यतिकरा-

न्निराकरोति, ततो बाह्यममत्वे मूलत एव व्यवच्छेदिते पश्चाद्देहोपध्यादिभ्योऽपि भिन्नमात्मानमवलोकयन् सर्वथा तेष्वपि निरभिष्वङ्गो भवति, बलभावनायां बलं द्विविधं—शारीरं मनोधृतिबलं च, तत्र शारीरमपि बलं जिनकल्पार्हस्य शेषजनातिशायिकमेष्टव्यं, तपःप्रभृतिभिस्तु अपकृष्यमाणस्य यद्यपि शारीरं बलं तथाविधं न भवति तथापि धृतिबलेनात्मा तथा भावयितव्यो यथा महद्भिरपि परीषहोपसर्गैर्न बाध्यते, एताभिः पञ्चभिर्भावनाभिर्भावितात्मा जिनकल्पिकप्रतिरूपो गच्छेऽपि प्रतिवसन्नुपध्याहारविषये द्विविधे परिकर्मणि प्रवर्तते, तत्र यदि पाणिपात्रलब्धिरस्ति ततस्तदनुरूपमेव परिकर्म चेष्टते, अथ पाणिपात्रलब्धिर्नास्ति ततः पतद्ग्रहधारित्वपरिकर्मणि यथायोगं प्रवर्तते, आहारपरिकर्मणि तु तृतीयपौरुष्यामवगाढायां वल्लचणकादिकमन्तं प्रान्तं रूक्षं च—"संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥" [ असंसृष्टा संसृष्टा उद्धृता तथा अल्पलेपिका। अवगृहीता प्रगृहीता उज्झितधर्मा च सप्तमी ॥ १ ॥ ] एतासां सप्तानां पिण्डैषणानां मध्ये आद्यद्वयवर्ज्यं शेषाणां पञ्चानां मध्यादन्यतरैषणाद्वयाभिग्रहेणाहारं गृह्णाति, तत्राप्येकया भक्तमपरयाऽन्वेषणया पानकमिति ॥ एवमाद्यागमोक्तविधिना गच्छान्तर्गतः पूर्वमेवात्मानं परिकर्मयित्वा ततो जिनकल्पं प्रतिपित्सुः समग्रमपि सङ्घं मीलयति, तदभावे स्वगणं तावदवश्यमाह्वयते, ततस्तीर्थकरसमीपे तदभावे गणधरसन्निधाने तदसत्त्वे च चतुर्दशपूर्वधरसविधे तदसम्भवे दशपूर्वधरान्तिके तदलाभे तु वटाश्वत्थाशोकपादपादीनामासत्तौ महत्या विभूत्या जिनकल्पमभ्युपगच्छति, निजपदव्यवस्थापितं सूरिं सबालवृद्धं गच्छं विशेषतः पूर्वविरुद्धांश्च क्षमयति, तद्यथा—"जइ किंचि पमाएणं न सुट्ठु भे वट्टियं मए पुव्विं। तं भे खामेमि अहं निस्सल्लो निक्कसाओ य ॥ १ ॥ आणंदमंसुपायं कुणमाणा तेऽवि भूमिगयसीसा। खामिंति तं जहरिहं जहारिहं खामिया तेणं ॥ २ ॥" [ यदि किञ्चित् प्रमादेन न सुष्ठु भवतां वृत्तं मया पूर्वं। तत् भवतां क्षमयाम्यहं निश्शल्यो

निष्कषायश्च ॥ १ ॥ आनन्दाश्रुप्रातं कुर्वाणास्तेऽपि भूमिगतशीर्षाः । क्षमयन्ति यथार्हं यथार्हं क्षमितास्तेन ॥ २ ॥ ] निजपदस्थापित-सूरेः शेषसाधूनां चानुशास्तिं प्रयच्छति, यथा—"पालेज्जसु गणमेयं अप्पडिबद्धो य होज्ज सव्वत्थ । एसो य परंपरओ तुमंपि अंते कुणसु एवं ॥ १ ॥ पुव्वपवण्णं विणयं मा हु पमाएहि विणयजोग्गेसुं । जो जेण पगारेण उवजुज्जइ तं च जाणेहि ॥ २ ॥" तथा "ओमो समराइणिओ अप्पतरसुओ य मा य णं तुब्भे । परिभवह एस तुम्हवि विसेसओ संपयं पुज्जो ॥ ३ ॥" [ पालयेर्गणमेनमप्रति-बद्धश्च भवेः सर्वत्र । एष च परम्परकः त्वमप्यन्ते कुर्याः ॥ १ ॥ पूर्वप्रपन्ने विनये मा प्रमादीर्विनययोग्येषु यो येन प्रकारेणोपयुज्यते तं च जानीयाः ॥ २ ॥ ] [ अवमः समरात्रिकः अल्पतरश्रुत इति मैनं परिभूत युष्माकमेष संप्रति विशेषतः पूज्यः ॥ ३ ॥ ] इत्यादिशिक्षां दत्त्वा गच्छाद्विनिर्गते चक्षुर्गोचरातीते तस्मिन्नानन्दिताः साधवः प्रतिनिवर्तन्ते, एवं च प्रतिपन्नजिनकल्पो यत्र ग्रामादौ मासकल्पं चतुर्मासकं वा करिष्यति तत्र षट् भागान् ग्रामादेः कल्पयति, ततश्च यत्र भागे एकस्मिन् दिने गोचरचर्यायां हिण्डितस्तत्र पुनरपि सप्तम एव दिवसे पर्यटति, भिक्षाचर्यां ग्रामान्तरगमनं च तृतीयपौरुष्यामेव करोति, चतुर्थपौरुषी तु यत्रावगाहते तत्र नियमादवतिष्ठते, भक्तं पानकं च पूर्वोक्तैषणाद्वयाभिग्रहेणालेपकृदेव गृह्णाति, एषणादिविषयं मुक्त्वा न केनापि सार्धं जल्पति, उपसर्गपरीषहान् सर्वानपि सहत एव, रोगेऽपि चिकित्सां न कारयत्येव, तद्वेदनां तु सम्यगेव विषहते, एकाक्येव च भवति, अनापातासंलोकादिदशगुणोपेत एव स्थण्डिले उच्चारादि करोति, जीर्णवस्त्राणि च तत्रैव त्यजति, प्रमार्जनादिपरिकर्मविरहितायां वसतौ तिष्ठति, यद्युपविशति तदा नियमादु-त्कटुक एव न तु निषद्यायामौपग्रहिकोपकरणस्यैवाभावात्, मासकल्पेनैव चायं विहरति, मत्तमतङ्गजव्याघ्रसिंहादिके च संमुखे समा-पतत्युन्मार्गगमनादिना ईर्यासमितिं न भिनत्ति, श्रुतसम्पदपि चास्य जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु, तत्र हि न्यक्षेण काल-

परिज्ञानं, उत्कर्षतस्तु असम्पूर्णानि दश पूर्वाणि, प्रथमसंहननो वज्रकुड्यसमानावष्टम्भश्चायं भवति, लोचं चासौ नित्यमेव विधत्ते, आव-
श्यकीनैषेधिकीमिथ्यादुष्कृतगृहिविषयपृच्छोपसंपल्लक्षणाः पञ्च सामाचार्योऽस्य भवन्ति, अन्ये त्वाहुः—आवश्यकीनैषेधिकीगृहस्थोपसम्पल्ल-
क्षणास्तिस्र एव, आरामादिनिवासिन ओघतः पृच्छादीनामपि असम्भवादित्याद्यन्याऽपि जिनकल्पिकानां सामाचारी कल्पग्रन्थादेरवग-
न्तव्या ॥ तथा जिनकल्पिकस्थितिप्रतिपादनार्थं सोपयोगत्वात् कानिचिद् द्वाराणि दर्श्यन्ते, तद्यथा—क्षेत्रद्वारं १ कालद्वारं २
चारित्रद्वारं ३ तीर्थद्वारं ४ पर्यायद्वारं ५ आगमद्वारं ६ वेदद्वारं ७ कल्पद्वारं ८ लिङ्गद्वारं ९ ध्यानद्वारं १० गणनाद्वारं ११ अभिग्र-
हद्वारं १२ प्रव्राजनाद्वारं १३ निष्प्रतिकर्मताद्वारं १४ भिक्षाद्वारं १५ पथद्वारं १६ चेति, तत्र तीर्थपर्यायागमवेदध्यानाभिग्रहप्रव्रज्यानि-
ष्प्रतिकर्मताभिक्षापथद्वाराण्येकोनसप्ततितमे परिहारविशुद्धिद्वारे यथा वक्ष्यन्ते तथैवात्रापि ज्ञेयानि, क्षेत्रद्वारे जन्मना सद्भावेन च पञ्च-
दशस्वपि कर्मभूमिषु संहरणेन त्वकर्मभूमिष्वपि भवति, कालद्वारे अवसर्पिण्यां जन्मना तृतीयचतुर्थारकयोरेव व्रतस्थस्तु पञ्चमारकेऽपि,
उत्सर्पिण्यां तु व्रतस्थस्तृतीयचतुर्थारकयोरेव, जन्मना तु द्वितीयारकेऽपि, प्रतिभागकाले तु दुष्षमसुषमारूपे जन्मतः सद्भावतश्च प्राप्यते,
विदेहेष्वपि जिनकल्पिकानां सद्भावात्, संहरणेन पुनः सर्वस्मिन्नपि काले प्राप्यते, चारित्रद्वारे प्रतिपद्यमानकः सामायिकच्छेदोपस्था-
पनीययोरेव, मध्यमविदेहतीर्थकृतां सामायिके प्रथमपश्चिमजिनयोस्तु छेदोपस्थापनीये, पूर्वप्रतिपन्नस्तु सूक्ष्मसम्परायथाख्यातचारित्रयो-
रपि, स चोपशमश्रेण्यामेव, न तु क्षपकश्रेण्यां 'तज्जम्मे केवलपडिसेहभावाओ' [ तज्जन्मनि केवलप्रतिषेधभावात् ] इतिवचनात्, कल्प-
द्वारे स्थितकल्पेऽस्थितकल्पे च भवति, लिङ्गद्वारे प्रतिपद्यमानको द्विविधेऽपि द्रव्यभावरूपे लिङ्गे भवति, पूर्वप्रतिपन्नस्तु भावलिङ्गेऽवश्य-
मेव, द्रव्यलिङ्गे तु भाज्यो हृतजीर्णतादिभिः कदाचिद् द्रव्यलिङ्गस्याभावात्, गणनाद्वारे प्रतिपद्यमानका जघन्यत एकादय उत्कर्षतः

शतपृथक्त्वं, पूर्वप्रतिपन्नाः पुनर्जघन्यत उत्कर्पतश्च सहस्रपृथक्त्वं, केवलमुत्कृष्टाज्जघन्यं लघुतरं, इत्याद्यन्यदपि जिनकल्पिकस्वरूपं समयसमुद्राद्‌वसेयमिति । सम्प्रति सूत्रमनुश्रियते, जिना—गच्छनिर्गतसाधुविशेषाः तेषां कल्पः—समाचारस्तेन चरन्तीति जिनकल्पिकाः ते च जिनकल्पिकसाधवः उत्कर्पत एकस्यां वसतौ सप्त भवन्ति, अधिका—अष्टादयः कथमपि कदाचनापि न भवन्ति, यद्यपि चैकस्यां वसतावुत्कृष्टतः सप्त जिनकल्पिकाः प्रतिवसन्ति तथापि परस्परं न भाषन्ते, धर्मवार्त्तामपि न कुर्वन्ति वीथ्यामपि चैकस्यामेक एव जिनकल्पिकः प्रतिदिनमटति, न पुनरपर इति, उक्तं च—"एकाए वसहीए उक्कोसेणं वसंति सत्त जिणा। अवरोप्परसंभासं चइंति अन्नान्नवीहिं च ॥ १ ॥ [ एकस्यां वसतौ उत्कर्पतो वसन्ति सप्त जिनाः। परस्परं संभाषं त्यजन्ति अन्याऽन्यवीथिं च ( व्रजन्ति ) ॥ १ ॥ ] ॥५४०॥

'छत्तीसं सूरिगुण'त्ति चतुःपष्टं द्वारमाह—

**अट्ठविहा गणिसंपय चउग्गुणा नवरि हुंति बत्तीसं । विणओ य चउब्भेओ छत्तीस गुणा इमे गुरुणो ॥ ५४१ ॥ आयार १ सुय २ सरीरे ३ वयणे ४ वायण ५ मई ६ पओगमई ७ । एएसु संपया खलु अट्ठमिया संगहपरिण्णा ८(१) ॥५४२॥ चरणजुओ मयरहिओ अनिययवित्ती अचंचलो चेव (४)। जुग परिचिय उस्सग्गी उदत्तघोसाइ विन्नेओ (८) ॥ ५४३ ॥ चउरंसोऽकुंटाई बहिरत्तणवज्जिओ तवे सत्तो (१२)। वाई महुरत्तऽनिस्सिय फुडवयणो संपया वयणेत्ति ( १६ ) ॥५४४॥ जोगो परिणयवायण निज्जविया वायणाएँ निव्वहणे (२०) । ओग्गह ईहावाया धारण मइसंपया चउरोत्ति (२४)॥ ५४५ ॥ सत्तीं पुरिसं खेत्तं वत्थुं नाउं पओजए वायं (२८)। गणजोग्गं संसत्तं**

सज्झाए सिक्खणं जाणे ( ३२ ) ॥ ५४६ ॥ आयारे सुयविणए विक्खिवणे चेव होइ बोधव्वा । दोसस्स परीघाए विणए चउहेस पडिवत्ती ( ३६ ) ॥ ५४७ ॥ सम्मत्तनाणचरणा पत्तेयं अट्ठअट्ठभेइल्ला । बारसभेओ य तवो सूरिगुणा हुंति छत्तीसं ( २ ) ॥ ५४८ ॥ आयाराई अट्ठ उ तह चेव य दसविहो य ठियकप्पो । बारस तव छावस्सग सूरिगुणा हुंति छत्तीसं ( ३ ) ॥ ५४९ ॥

'अट्ठविहे'त्यादिगाथानवकं, गुणानां साधूनां वा गणः—समुदायो भूयानतिशयवान् वा यस्यास्ति स गणी—आचार्यस्तस्य सम्पत्—समृद्धिर्भावरूपा गणिसम्पत्, सा आचारादिभेदादष्टविधा, केवलमेकैकस्याश्चतुर्भेदत्वेन चतुर्भिर्गुणने द्वात्रिंशद्भेदाः, विनयश्चतुर्भेदस्तत्र प्रक्षिप्यते, तत एते गुरोः—आचार्यस्य षट्त्रिंशद् गुणा भवन्ति ॥ ५४१ ॥ तत्राष्टौ सम्पद इमाः—'आयारे'त्यादि, आचारश्च श्रुतं च शरीरं चेत्येकवद्भावादाचारश्रुतशरीरं, तथा वचनं, प्राकृतत्वादेकारः, वाचना मतिः प्रयोगमतिः, एतेषु विषये सम्पत्, तथाहि—आचारसम्पत् १ श्रुतसम्पत् २ शरीरसम्पत् ३ वचनसम्पत् ४ वाचनासम्पत् ५ मतिसम्पत् ६ प्रयोगमतिसंपत् ७ अष्टमी च संग्रहपरिज्ञासंपत् ८, तत्र आचरणमाचारः—अनुष्ठानं तद्विषया स एव वा सम्पद्—विभूतिस्तस्य वा सम्पत्—सम्पत्तिः प्राप्तिराचारसम्पत्, एवमग्रेऽपि व्युत्पत्त्यर्थो भावनीयः ॥ ५४२ ॥ सा चतुर्धा, यथा—चरणयुतो मदरहितोऽनियतवृत्तिरचञ्चलश्चेति, तत्र चरणं—चारित्रं व्रतश्रमणधर्मेत्यादिसप्ततिस्थानस्वरूपं तेन युतो—युक्तश्चरणयुतः, अन्यत्र तु 'संयमध्रुवयोगयुक्तते' त्येवमिदं पठ्यते, तत्राप्ययमेव परमार्थः, यतः संयमः—चारित्रं तस्मिन् ध्रुवः—नित्यो योगः—समाधिस्तेन युक्तता, तत्र सततोपयुक्ततेत्यर्थः, तथा मदैः—जातिकुलतपःश्रुताद्युद्भवै रहितो मदरहितः, ग्रन्थान्तरे तु 'असंपग्गह' इति पठ्यते, तत्रापि स एवार्थः, यतः समन्तात्प्रकर्षेण—जातिश्रुततपोरूपादिप्रकृष्टतालक्षणेनात्मनो ग्रहणं—अहमेव जाति-

मानित्यादिरूपेणावधारणं सम्प्रग्रहः न तथा असम्प्रग्रहो जात्याद्यनुत्सिक्तत्वमित्यर्थः, अनियतवृत्तिः—ग्रामादिष्वनियतविहारस्वरूपता, तथा-ऽचञ्चलो—वशीकृतेन्द्रियः, अन्यत्र तु 'वृद्धशीलता' इत्येवं पठ्यते, तत्र वृद्धशीलता—वपुषि मनसि च कामिनीमनोमोहने वयसि वर्तमानस्यापि निभृतस्वभावता निर्विकारतेतियावत्, यतः—"मनसि जरसाऽभिभूता जायन्ते यौवनेऽपि विद्वांसः । मूढधियः पुनरितरे भवन्ति वृद्धत्वभावेऽपि ॥ १ ॥" ॥ तथा श्रुतसम्पच्चतुर्धा, यथा—तत्र 'सूचनात्सूत्र'मिति युगो—युगप्रधानागमः परिचितसूत्रः—क्रमोत्क्रमवाचनादिभिः स्थिरसूत्रः उत्सर्गी—उत्सर्गोपवादस्वसमयपरसमयादिवेदी उदात्तघोषादि—उदात्तानुदात्तादिस्वरविशुद्धिविधायी, अन्यत्र बहुश्रुतता १ परिचितसूत्रता २ विचित्रसूत्रता ३ घोषविशुद्धिकरणता ४ चेति पठ्यते, अर्थस्तु स एव ॥ ५४३ ॥ शरीरसम्पदं चतुर्विधामाह—'चउ'इत्यादि, तत्र चतुरस्रः—आरोहपरिणाहयुक्तो दैर्घ्यविस्ताराभ्यां लक्षणप्रमाणसहिताभ्यां युक्त इतियावत् तथा अकुण्टादिः—सम्पूर्णपाण्यादिः तथा बधिरत्वादिवर्जितः—अविकलसकलेन्द्रियः, तथा दृढसंहननत्वेन बाह्याभ्यन्तरभेदभिन्ने तपसि शक्तः—समर्थः, अन्यत्र तु आरोहपरिणाहयुक्तता १ अनवत्राप्यता २ परिपूर्णेन्द्रियता ३ स्थिरसंहननता ४ चेति पठ्यते, तत्रापि स एवार्थः, केवलमविद्यमानमवत्राप्यं—अवत्रपणं लज्जनं यस्य सोऽयमनवत्राप्यो यद्वा अवत्रापयितुं—लज्जयितुमर्हः शक्यो वा अवत्राप्यो—लज्जनीयो न तथाऽनवत्राप्यो-ऽहीनसर्वाङ्गत्वेनालज्जाकर इत्यर्थः वचनसम्पच्चतुर्धा, तद्यथा—'वाई'त्यादि, वादी मधुरवचनः अनिश्रितवचनः स्फुटवचनश्चेत्येषा 'वचने' वचनविषये सम्पत्, तत्र वदनं—वादः स प्रशस्तोऽतिशायी वा विद्यते यस्य स वादी आदेयवचन इत्यर्थः तथा प्रकृष्टार्थप्रतिपादकमपरुषं सुस्वरतागम्भीरतादिगुणोपेतमत एव श्रोतृजनमनःप्रीणकं वचनं यस्य स मधुरवचनः, तथा रागद्वेषादिभिरनिश्रितं—अकलुषं वचनं यस्य सोऽनिश्रितवचनः, स्फुटं—सर्वजनसुबोधं वचनं यस्य स स्फुटवचनः, अन्यत्र तु आदेयवचनता १ मधुरवचनता २ अनिश्रितवचनता ३

असन्दिग्धवचनता ४ चेति पठ्यते, अर्थः प्राग्वदेव ॥ ५४४ ॥ अथ वाचनासम्पच्चतुर्धा, तद्यथा—'जोगो'इत्यादि, तत्र परिणामिकत्वादिगुणोपेतान् शिष्यान् विज्ञाय यस्य यद्योग्यं सूत्रं तत्तस्यैवोद्दिशन् समुद्दिशन् वा योग्यवाचनः, अपरिणामिकादावपक्वघटनिहितजलोदाहरणतो दोषसम्भवात्, तथा पूर्वप्रदत्तसूत्रालापकान् शिष्यस्य सम्यक्परिणमय्य ततोऽपरापरालापकानां वाचनां पुनः पुनः प्रयच्छन् परिणतवाचनः, तथा वाचनायाः—व्याख्यानस्य निर्यापयिता—निर्वाहकः, शिष्यसमुत्साहनेन झटित्येव ग्रन्थं समर्थयते न पुनरपान्तराले एवमेव मुञ्चतीत्यर्थः, तथा निर्वाहणो—निर्वाहकोऽर्थस्येति शेषः, पूर्वापरसाङ्गत्येन स्वयं ज्ञानतोऽन्येषां च कथनतः सम्यगर्थं निर्गमयतीति भावः, ग्रन्थान्तरे त्वेवं दृश्यते—विदित्वोद्देशनं १ विदित्वा समुद्देशनं—परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः २ परिनिर्वाप्य वाचना—पूर्वदत्तालापकानधिगमय्य शिष्यं पुनः सूत्रदानमित्यर्थः ३ अर्थनिर्यापणा अर्थस्य पूर्वापरसाङ्गत्येन गमनिकेत्यर्थः ४ ॥ अथ मतिसम्पच्चतुर्धा, तद्यथा—'उग्गहे'त्यादि, अवग्रहः ईहा अवायः धारणा च, अवग्रहादीनां च स्वरूपं षोडशोत्तरद्विशततमद्वारे वक्ष्यते ॥५४५॥ तथा प्रयोगः—अत्र वादादिप्रयोजनसिद्धये व्यापारः तत्काले मतिः—वस्तुपरिच्छित्तिः प्रयोगमतिः, तत्सम्पच्चतुर्धा, तद्यथा—'सत्ति' इत्यादि, शक्तिं पुरुषं क्षेत्रं वस्तु च ज्ञात्वा वादं प्रयुञ्जीत, तत्र शक्तेर्ज्ञानं वादादिव्यापारकाले किममुं वावदूकं वादिनं जेतुं मम शक्तिरस्ति न वेत्यात्मीयस्वरूपपर्यालोचनं, पुरुषज्ञानं किमयं प्रतिवादी पुरुषः सौगतः साङ्ख्यो वैशेषिकोऽन्यो वा तथा प्रतिभादिमानितरो वेत्यादिपरिभावनं, क्षेत्रज्ञानं किमिदं क्षेत्रं मायाबहुलमन्यथा वा तथा साधुभिर्भावितमभावितं वेत्यादिविमर्शनं, वस्तुज्ञानं किमिदं राजामात्यादि सभासदादि वा वस्तु दारुणमदारुणं वा भद्रकमभद्रकं वेत्यादिनिरूपणं। तथा सङ्ग्रहः—स्वीकरणं तत्र परिज्ञानं नाम—अभिधानं सङ्ग्रहपरिज्ञा, तत्सम्पच्चतुर्धा, तद्यथा—'गणे'त्यादि, तत्र गणस्य—गच्छस्य बालदुर्बलग्लानबहुयतिजनादिलक्षणस्य निर्वाहयोग्यक्षेत्रग्रहणं गणयोग्योपसङ्ग्रहसम्पत् प्रथमा १, तथा भद्रकादिपुरुषं प्रति

तदनुरूपदेशनादिकरणेन संसक्तसम्पद् द्वितीया २, ग्रन्थान्तरे तु निषद्यादिमालिन्यपरिहाराय पीठफलकोपादानात्मिका द्वितीया सम्पदुक्ता,
न चैतानि पीठादीनि न गृह्यन्ते, समये ग्राहितत्वात्, तथा च जीतकल्पे—"पीढफलगाइगहणे न उ मइलिंती निसिज्जाई । वासासु
विसेसेणं अन्नकालं तु गम्मएऽन्नत्थ ॥ १ ॥ पाणा सीयल कुंथाइया य तो गहण वासासु ।" [ पीठफलकादिग्रहणे नैव मलिन्यन्ते निष-
द्यादीनि वर्षासु विशेषेण अन्यकाले तु गम्यतेऽन्यत्र ॥ १ ॥ प्राणाः शीतलं कुन्थ्वादिकाश्च ततो ग्रहणं वर्षासु ] तथा यथासमयमेव
स्वाध्यायप्रत्युपेक्षणाभिक्षाटनोपधिसमुत्पादनात्मिका स्वाध्यायसम्पत्तृतीया, तथा गुरुप्रव्राजकाध्यापकरत्नाधिकप्रभृतीनामुपधिवहनविश्राम-
णाभ्युत्थानदण्डकोपादानादिशिक्षणात्मिका शिक्षोपसङ्ग्रहसम्पच्चतुर्थी, इत्येवं चतुर्विधां संग्रहपरिज्ञासम्पदं जानीयात्, दर्शिता अष्टापि प्रत्येकं
चतुर्विधा गणिसम्पदः ॥५४६॥ इदानीं चतुर्विधं विनयमाह—'आये'त्यादि, आचारविनयः श्रुतविनयो विक्षेपणविनयो दोषपरिघातविनयश्चेति
विनयविषये एषा चतुर्धा प्रतिपत्तिर्भवति, तत्र आचारो—व्रतिनां समाचारः स एव विनीयते—अपनीयते कर्मानेनेति विनयः आचारविनयः,
स चतुर्धा, यथा—संयमसामाचारी तपःसमाचारी गणसामाचारी एकाकिविहारसामाचारी च, तत्र संयमं स्वयमाचरति परं च ग्राहयति
तत्र च सीदन्तं स्थिरीकरोति तत्रोद्यतं चोपबृंहतीति संयमसामाचारी १, पाक्षिकादिषु तपःकर्म स्वयं करोति परं च कारयति भिक्षाचर्यां
स्वयमनुतिष्ठति परं च तस्यां नियुङ्क्ते इति तपःसामाचारी २, प्रत्युपेक्षणाबालवृद्धादिवैयावृत्त्यादिकार्येषु स्वयमुद्यतोऽग्लान्या गणं प्रेरयतीति
गणसामाचारी ३, एकाकिविहारप्रतिमां स्वयं प्रतिपद्यते परं च ग्राहयतीति एकाकिविहारसामाचारी ४ । श्रुतविनयोऽपि चतुर्धा, सूत्र-
वाचनां ददाति १ अर्थं व्याख्यानयति २ हितं वाचयति, हितवाचना च तदैव भवति यदा सूत्रमर्थं तदुभयं च पारिणामिकादिगुणोपेतं
शिष्यं परिभाव्य यद्यस्य योग्यं तत्तस्यैव ददाति ३, सूत्रमर्थं वा निःशेषं परिसमाप्तिं यावद्वाचयति नानवस्थिततयाऽपान्तरालेऽपि मुञ्च-

तीति ४। विक्षिप्यते इति विक्षेपणं तदेव विनयो विक्षेपणविनयः, स चतुर्धा, तत्र मिथ्यादृष्टिं मिथ्यामार्गाद्विक्षिप्य सम्यक्त्वमार्गं ग्राहयतीत्येकः १, सम्यग्दृष्टिं तु गृहस्थं गृहस्थभावाद्विक्षिप्य प्रव्राजयतीति द्वितीयः २, सम्यक्त्वाच्चारित्राद्वा च्युतं तद्भावाद्विक्षिप्य पुनस्तत्रैव व्यवस्थापयतीति तृतीयः ३, स्वयं च चारित्रधर्मस्य यथैवाभिवृद्धिस्तथैव प्रवर्तते अनेपणीयपरिभोगादित्यागेन एषणीयपरिभोगादिस्वीकारेण चेति चतुर्थः ४। दोषाः—क्रोधादयस्तेषां परिघातो—निर्घातना स एव विनयो दोषपरिघातविनयः, स चतुर्धा, क्रुद्धस्य देशनादिभिः क्रोधनिर्घातनमित्येकः १, कषायविषयादिभिर्दुष्टस्य तद्भावविनिवर्तनमिति द्वितीयः २, भक्तपानादिविषयायाः परसमयविषयाया वा काङ्क्षाया निवर्तनमिति तृतीयः ३, स्वयं च क्रोधदोषकाङ्क्षारहितस्य सुप्रणिहितस्य प्रवर्तनमिति चतुर्थः ४। तदेवमेते सर्वेऽपि षट्त्रिंशद्गुणा गुरोर्भवन्ति ॥ ५४७ ॥ अथवा इत्थं षट्त्रिंशद्गुणा गुरोर्भवन्ति, तत्राह—'सम्मत्ते'त्यादि, सम्यक्त्वस्य—दर्शनाचारस्य निःशङ्कितादयः ज्ञानस्य—ज्ञानाचारस्य कालविनयादयः चरणस्य—चारित्राचारस्य ईर्यासमित्यादयः प्रत्येकमष्टावष्टौ भेदा मिलिताश्चतुर्विंशतिः, तपसश्च बाह्याभ्यन्तरभेदभिन्नस्य प्रत्येकं षड्विधत्वेन अनशनादयो द्वादश भेदाः, सर्वमीलने च षट्त्रिंशद्भवन्ति ॥ ५४८ ॥ अथ भङ्ग्यन्तरेणापि गुरोः षट्त्रिंशद्गुणानाह—'आयाराई'त्यादि, आचाराः—श्रुतादयः प्राग्व्यावर्णितस्वरूपा अविवक्षितस्वस्वभेदा अष्टौ गणिसम्पदः, तथा "आचेलक्कु १ देसिय २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५। वय ६ जेट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥" इत्येवं वक्ष्यमाणस्वरूपो दशविधः स्थितकल्पः, तथा द्वादशविधं तपः प्रागुक्तस्वरूपं, तथा षडावश्यकानि—सामायिकचतुर्विंशतिस्तववन्दनकप्रतिक्रमणकायोत्सर्गप्रत्याख्यानलक्षणानि, एतानि सर्वाण्यपि मिलितानि षट्त्रिंशत्सूरिगुणा भवन्ति। इह चैवमन्या अपि षट्त्रिंशिकाः सम्भवन्ति, तास्तु विस्तरभयान्नाभिधीयन्ते, केवलं किञ्चित्सोपयोगत्वात् सुप्रतीतत्वाच्च—'देसकुलजाइरूवे संघयणी

धिइजुओ अणासंसी । अविकत्थणो अमायी थिरपरिवाडी गहियवक्को ॥ १ ॥ जियपरिसो जियनिद्दो मज्झत्थो देसकालभावन्नू । आसन्नलद्धपइभो नाणाविहदेसभासन्नू ॥ २ ॥ पंचविहे आयारे जुत्तो सुत्तत्थतदुभयविहिन्नू । आहरणहेउउवनयनयनिउणोगाहणाकुसलो ॥ ३ ॥ ससमयपरसमयविऊ गंभीरो दित्तिमं सिवो सोमो । गुणसयकलिओ एसो पवयणसारं परिकहेउं ॥ ४ ॥ इति गाथाचतुष्टयभणिताः सूरिगुणाः षट्त्रिंशत्पर्यन्ते—तत्र युतशब्दः प्रत्येकमभिसम्बध्यते, देशयुतः कुलयुत इत्यादि, तत्र यो मध्यदेशे जातो यो वाऽर्धषड्विंशतिषु जनपदेषु स देशयुतः, स ह्यार्यदेशभणितं जानाति ततः सुखेन तस्य समीपे शिष्याः सर्वेऽप्यधीयन्ते इति तदुपादानं १ कुलं—पैतृकं तथा च लोकव्यवहारः—ईक्ष्वाकुकुलजोऽयमित्यादि तेन युतः प्रतिपन्नार्थनिर्वाहको भवति २ जातिः—मातृकी तया युतो विनयादिगुणवान् भवति ३ रूपयुतो लोकानां गुणविषयबहुमानभाग् जायते, 'यत्राकृतिस्तत्र गुणा वसन्ती'तिप्रवादात्, कुरूपस्य अनादेयत्वादिप्रसङ्गाच्च ४ संहननेन—विशिष्टशारीरसामर्थ्यरूपेण युतो व्याख्यायां न श्राम्यति ५ धृतिः—विशिष्टमानसावष्टम्भलक्षणा तया युतो नातिगहनेष्वप्यर्थेषु भ्रममुपयाति ६ अनाशंसी—श्रोतृभ्यो वस्त्राद्यनाकाङ्क्षी ७ अविकत्थनो—नातिबहुभाषी, यद्वा स्वल्पेऽपि केनचिदपराद्धे पुनः पुनस्तदुत्कीर्तनं विकत्थनं तद्रहितः ८ अमायी—शाठ्यरहितः ९ स्थिरा—अतिशयेन निरन्तराभ्यासतः स्थैर्यमापन्ना अनुप्रयोगपरिपाट्यो यस्य स स्थिरपरिपाटिः, तस्य हि सूत्रमर्थो वा न मनागपि गलति १० गृहीतवाक्यः—उपादेयवचनः, तस्य हि स्वल्पमपि वचनं महार्थमिव प्रतिभाति ११ जितपर्षत् न महत्यामपि पर्षदि क्षोभमुपयाति १२ जितनिद्रः—अल्पनिद्रः, स हि रात्रौ सूत्रमर्थं वा परिभावयन् न निद्रया बाध्यते १३ मध्यस्थः—सर्वेषु शिष्येषु समचित्तः १४ देशं कालं च भावं च जानातीति देशकालभावज्ञः, स हि देशं कालं भावं च लोकानां ज्ञात्वा सुखेन विहरति, शिष्याणां वाऽभिप्रायान् ज्ञात्वा तान् सुखेनानुवर्तयति १५—१६—१७ आसन्ना—तत्क्षणादेव लब्धा

कर्मक्षयोपशमेनाविर्भूता प्रतिभा—परतीर्थिकादीनामुत्तरप्रदानशक्तिर्यस्य स आसन्नलब्धप्रतिभः १८ नानाविधानां देशानां भाषां जानातीति नानाविधदेशभाषाज्ञः, स हि नानादेशीयान् शिष्यान् सुखेन शास्त्राणि ग्राहयति, तत्तद्देशजांश्च जनान् तत्तद्भाषया धर्ममार्गेऽवतारयति १९ पञ्चविध आचारो—ज्ञानाचारादिरूपस्तस्मिन् युक्तः—उद्युक्तः स्वयमाचारेष्वनवस्थितस्यान्यानाचारेषु प्रवर्तयितुमशक्यत्वात् २४ सूत्रार्थग्रहणेन चतुर्भङ्गी सूचिता, एकस्य सूत्रं नार्थः द्वितीयस्यार्थो न सूत्रं तृतीयस्य सूत्रमप्यर्थोऽपि चतुर्थस्य न सूत्रं नाप्यर्थः, तत्र तृतीयभङ्गग्रहणार्थं तदुभयग्रहणं, ततः सूत्रार्थतदुभयविधीन् जानातीति सूत्रार्थतदुभयविधिज्ञः २५ आहरणं—दृष्टान्तः हेतुर्द्विविधः—कारको ज्ञापकश्च, तत्र कारको यथा घटस्य कर्ता कुम्भकारः, ज्ञापको यथा तमसि घटादीनामभिव्यञ्जकः प्रदीपः, उपनयः—उपसंहारो दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजनमिति भावः 'कारण'त्ति पाठे तु कारणं—निमित्तं नया—नैगमादयः एतेषु निपुणः आहरणहेतूपनयनयनिपुणः, स हि श्रोतारमपेक्ष्य तत्प्रतिपत्त्यनुरोधतः कचिद् दृष्टान्तोपन्यासं २६ कचिद्धेतूपन्यासं करोति २७ उपसंहारनिपुणतया सम्यगधिकृतमर्थमुपसंहरति २८ नयनिपुणतया स सम्यगधिकृतनयवक्तव्यताऽवसरे सम्यक् सप्रपञ्चवैविक्त्येन नयानभिधत्ते २९ ग्राहणाकुशलः—प्रतिपादनशक्तियुक्तः ३० स्वसमयं ३१ परसमयं ३२ च वेत्तीति स्वसमयपरसमयवित्, स हि परेणाक्षिप्तः सुखेन स्वपक्षं परपक्षं च निर्वाहयति, गम्भीरः—अतुच्छस्वभावः ३३ दीप्तिमान्—परवादिनामनुद्धर्षणीयः ३४ शिवः—अकोपनो यदिवा यत्र तत्र वा विहरन् कल्याणकरः ३५ सोमः—शान्तदृष्टिः ३६ इति षट्त्रिंशद्गुणोपेतो गुरुर्विज्ञेयः, उपलक्षणत्वाच्चामीषां गुणानामपरैरपि गुणैरौदार्यस्थैर्यादिभिः शशधरकरनिकरकमनीयैरलङ्कृतः प्रवचनोपदेशको गुरुर्भवति, तथा चाह—"गुणसयकलिओ जुत्तो पवयणसारं परिकहेउं"ति, यद्वा गुणा—मूलगुणा उत्तरगुणाश्च तेषां शतानि तैः कलितो गुणशतकलितः युक्तः—समीचीनः प्रवचनस्य—द्वादशांगस्य सारं—

अर्थं कथयितुं, यदुक्तं—"गुणसुट्ठियस्स वयणं घयपरिसित्तो व्व पावओ भाइ । गुणहीणस्स न सोहइ नेहविहूणो जह पईवो ॥ १ ॥" [ गुणसुस्थितस्य वचनं घृतपरिषिक्त इव पावको भाति। गुणहीनस्य न शोभते स्नेहविहीनो यथा प्रदीपः ॥ १ ॥ ] इति गाथाचतुष्टयार्थः ॥ ५४९ ॥ ६४ ॥ इदानीं 'विणओ बावन्नभेयपडिभिन्नो'त्ति पञ्चषष्टं द्वारमाह—

**तित्थयर १ सिद्ध २ कुल ३ गण ४ संघ ५ किरिय ६ धम्म ७ णाण ८ णाणीणं ९ । आयरिय १० थेरु ११ वज्झाय १२ गणीणं १३ तेरस पयाइं ॥ ५५० ॥ अणसायणा १ य भत्ती २ बहुमाणो ३ तह य वण्णसंजलणा ४ । तित्थयराई तेरस चउग्गुणा हुंति बावण्णा ॥ ५५१ ॥**

'तित्थे'त्यादिगाथाद्वयं, तीर्थकरादिस्वरूपाणि तावत् त्रयोदश पदानि, तत्र तीर्थकरसिद्धौ प्रसिद्धौ कुलं—नागेन्द्रकुलादि गणः—कोटिकादिः सङ्घः—प्रतीतः क्रिया—अस्तिवादरूपा धर्मः—श्रमणश्रावकधर्मादिः ज्ञानं—मत्यादि ज्ञानिनः—तद्वन्तः आचार्यः प्रतीतः स्थविरः—सीदतां स्थिरीकरणहेतुः उपाध्यायः—प्रसिद्धः कियतोऽपि साधुसमुदायस्याधिपतिर्गणी ॥ यदि नामैतानि च त्रयोदश पदानि ततः किमित्याह—आशातना—जात्यादिहीलना तदभावोऽनाशातना तीर्थकरादीनां सदैव कर्तव्या, तथा भक्तिः—तेष्वेवोचितोपचाररूपा तथा बहुमानः—तेष्वेवान्तरङ्गप्रतिबन्धविशेषः तथा तेषामेव 'वर्णसञ्ज्वलना' वर्णः—कीर्तिस्तस्य सञ्ज्वलना—प्रकाशनं, अनेन प्रकारेण तीर्थकरादयस्त्रयोदश चतुर्गुणा अनाशातनाद्युपाधिभेदेन द्विपञ्चाशद्विनयभेदा भवन्तीति ॥ ५५०—५५१ ॥६५॥ सम्प्रति 'चरणं'ति षट्षष्टं द्वारमाह—

**वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीओ ९ । नाणाइतियं ३ तव १२ कोहनिग्गहा ४ इइ चरणमेयं ७० ॥ ५५२ ॥ पाणिवह मुसावाए अदत्त मेहुण परिग्गहे चेव । एयाइं**

होंति पंच उ महव्वयाइं जईणं तु ॥ ५५३ ॥ खंती य मद्दवऽज्जव मुत्ती तव संजमे य बोद्धव्वे । सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥ ५५४ ॥ पंचासवा विरमणं पंचिंदियनिग्गहो कसायजओ । दंडत्तयस्स विरई सतरसहा संजमो होइ ॥ ५५५ ॥ पुढवि १ दग २ अगणि ३ मारुय ४ वणस्सइ ५ बि ६ ति ७ चउ ८ पणिंदि ९ अज्जीवा १० । पेहु ११ प्पेह १२ पमज्जण १३ परिठवण- १४ मणो १५ वई १६ काए १७ ॥ ५५६ ॥ आयरिय १ उवज्झाए २ तवस्सि ३ सेहे ४ गिलाण- ५ साहूसुं ६ । समणोन्न ७ संघ ८ कुल ९ गण १० वेयावच्चं हवइ दसहा ॥ ५५७ ॥ वसहि १ कह २ निसिज्जिं ३ दिय ४ कुड्डुंतर ५ पुव्वकीलिय ६ पणीए ७ । अइमायाहार ८ विभूसणाई ९ नव बंभगुत्तीओ ॥ ५५८ ॥ बारस अंगाईयं नाणं तत्तत्थसद्दहाणं तु । दंसणमेयं चरणं विरई देसे य सव्वे य ॥ ५५९ ॥ अणसणमूणोयरिया वित्तिसंखेवणं रसच्चाओ । कायकिलेसो संलीणया य बज्झो तवो होइ ॥ ५६० ॥ पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गोवि य अब्भिंतरओ तवो होइ ॥ ५६१ ॥ कोहो माणो माया लोभो चउरो हवंति हु कसाया । एएसिं निग्गहणं चरणस्स हवंतिमे भेया ॥ ५६२ ॥

'वये'त्यादिगाथादशकं, व्रतानि—प्राणातिपातविरमणादीनि परिग्रहविरमणान्तानि तथा श्रमणानां—साधूनां धर्मः श्रमणधर्मः—क्षान्तिमार्दवादिको दशभेदः तथा सम्—एकीभावेन यमः—उपरमः संयमः सप्तदशभेदः तथा व्यापिपर्ति स्मेति व्यापृतस्तस्य भावो वैयावृत्त्यं आचार्या-

विभेदाद्दशप्रकारं तथा ब्रह्म—ब्रह्मचर्यं तस्य गुप्तयो ब्रह्मचर्यगुप्तयः ताश्च वसत्यादिका नव तथा ज्ञायतेऽनेनेति ज्ञानं—आभिनिबोधिकादि तत् आदिर्यस्य तद् ज्ञानादि आदिशब्दात्सम्यग्दर्शनचारित्रपरिग्रहः ज्ञानादि च तत् त्रिकं च ज्ञानादित्रिकं तथा तपो—द्वादशप्रकारमनशनादि तथा क्रोधस्य निग्रहः क्रोधनिग्रहः बहुवचनं माननिग्रहादिपरिग्रहार्थं, इति—एवम्प्रकारं एतच्चरणं भवतीति, 'कोहनिग्गहाई चरणं' इति तु पाठे क्रोधनिग्रह आदिर्यस्य माननिग्रहादिकदम्बकस्य तत्क्रोधनिग्रहादि, एतच्चरणमत्रसेयमिति । इह सहृदयंमन्यः प्राह—ननु चतुर्थव्रतान्तर्गतत्वाद् गुप्तयो न पृथग्भणनीयाः, अथ परिकरभूताश्चतुर्थव्रतस्य ब्रह्मचर्यगुप्तयोऽभिधीयन्ते एवं तर्हि प्राणातिपातविरमणादेरेकैकस्य व्रतस्य परिकरभूता भावना अपि वाच्याः, गुप्तेर्भणने वा चतुर्थं व्रतं न भणनीयं, तथा ज्ञानादित्रिकस्य ग्रहणं न करणीयं, किन्तु ज्ञानसम्यग्दर्शनयोरेवोपन्यासः कार्यः, चारित्रस्य व्रतग्रहणेनैव ग्रहणात्, तथा श्रमणधर्मग्रहणे संयमग्रहणं तपोग्रहणं चातिरिच्यते, संयमतपसी वोद्धृत्य श्रमणधर्मोपन्यासः करणीयः, तथा तपोग्रहणे सति वैयावृत्त्यस्योपन्यासो निरर्थकः, वैयावृत्त्यस्य तपोऽन्तर्गतत्वात्, तथा क्षान्त्यादिधर्मग्रहणे सति क्रोधादिनिग्रहग्रहणमनर्थकमेव, तदियं गाथा परिभाव्यमाना आलूनविशीर्णेति, तत्रोच्यते, चतुरचक्रवर्तिभिर्यदेतदुच्यते——व्रतग्रहणे सति गुप्तयो न पृथग्वाच्या इति, तदयुक्तं, चतुर्थव्रतस्य हि निरपवादत्वं दर्शयितुमेता ब्रह्मचर्यगुप्तयः पृथगुपात्ताः, यदुक्तमागमे——
"नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं । मुत्तुं मेहुणभावं न विणा तं रागदोसेहिं ॥ १ ॥" इति [ नैव किञ्चिदनुज्ञातं प्रतिषिद्धं वापि जिनवरेन्द्रैः । मुक्त्वा मैथुनभावं न स विना रागद्वेषौ ॥ १ ॥ ] अथवा प्रथमचरमतीर्थकरयोः परिग्रहव्रतात् भिन्नमेतन्महाव्रतं भवतीत्येतस्यार्थस्य ज्ञापनार्थं भेदेनोपन्यास इति, यच्चाभ्यधीयत—व्रतग्रहणे ज्ञानादित्रिकं न वक्तव्यं, किन्तु ज्ञानदर्शनद्वयमेव चारित्रस्य व्रतग्रहणेनैव गतत्वादिति, तदयुक्तं, यतो यदेतद् व्रतचारित्रं स एकांशः सामायिकादेः पञ्चविधस्य चारित्रस्य, चतुर्विधं चारि-

त्रमद्याप्यगृहीतमस्ति, तदर्थं ज्ञानादित्रयमुपन्यस्तं इति, यच्चोक्तं—श्रमणधर्मग्रहणे संयमतपसोरुपादानं न विधेयं, श्रमणधर्मग्रहणेनैव तयोर्गृहीतत्वात्, तदप्यसाधु, संयमतपसोः प्रधानमोक्षाङ्गत्वेन पृथगुपादानात्, कथं मोक्षं प्रति प्रधानाङ्गत्वं इति चेत्, तत्र ब्रूमः—अपूर्वकर्माश्रवसंवरहेतुः संयमः, पूर्वोपार्जितकर्मक्षयहेतुश्च तपः, ततः प्रधानत्वमनयोः, अतः श्रमणधर्मगृहीतयोरप्यनयोः प्रधानतया भेदेनोपन्यासः कृतः, दृष्टश्चायं न्यायो यथा ब्राह्मणा आयाता वशिष्टोऽप्यायातः, अत्र हि ब्राह्मणग्रहणेन वशिष्टस्यापि ग्रहणं कृतमेव तथापि प्रधानतया तस्य भेदेनोपन्यासः क्रियत इति, यच्चोक्तं—तपोग्रहणेन वैयावृत्त्यस्यापि ग्रहणाद्भेदेन तदुपादानं न विधेयमिति, तदप्यचारु, वैयावृत्त्यस्य यथा स्वपरोपकारकारित्वेन प्राधान्यं न तथाऽनशनादीनां शेषतपोभेदानामिति ख्यापनार्थं तस्य भेदेनोपादानं, यच्चाभिहितं—श्रमणधर्मग्रहणेनैव गृहीतत्वात्क्रोधादिनिग्रहः पृथग् न वक्तव्य इति, तदप्यसाधीयः, यतो द्विविधाः क्रोधादयः—उदीर्णा अनुदीर्णाश्च, तत्रोदीर्णानां क्रोधादीनां निग्रहणं क्रोधादिनिग्रहः अनुदीर्णानां तु तेषामुदयनिरोधनं क्षान्त्यादय इति ज्ञापनार्थं पृथगुपादानं, अथवा वस्तु त्रिविधं—ग्राह्यं हेयमुपेक्षणीयं च, तत्र क्षान्त्यादयो ग्राह्याः क्रोधादयो हेयाः अतो निग्रहीतव्यास्ते इत्येवमर्थमित्थमुपन्यासः, ततः सर्वमनवद्यमिति ॥ एनां च गाथां स्वयमेव सूत्रकारः प्रत्यवयवं व्याख्यानयति—'एकदेशेन समुदायोपचारात्' 'पाणिवह'त्ति प्राणिवधविरतिरिति द्रष्टव्यं, एवं मृषावादादिष्वपि, तत्र प्राणिनां—त्रसस्थावरजीवानां अज्ञान १ संशय २ विपर्यय ३ राग ४ द्वेष ५—स्मृतिभ्रंश ६ योगदुष्प्रणिधान ७ धर्मानादर ८ रूपाष्टविधप्रमादयोगाद्वधो—हिंसनं प्राणिवधस्तस्माद्विरतिः—सम्यग्ज्ञानश्रद्धानपूर्विका निवृत्तिः प्रथमव्रतं, मृषा—अलीकं वदनं—प्रियपथ्यतथ्यवचनपरिहारेण भाषणं मृषावादस्तस्माद्विरतिर्द्वितीयं व्रतं, तत्र प्रियं वचनं यत् श्रुतमात्रं प्रीणयति पथ्यं—यदुत्तरकाले हितं तथ्यं—सत्यं, तथ्यमपि व्यवहारापेक्षया यदप्रियं यथा चौरं प्रति चौरस्त्वं कुष्ठिनं प्रति कुष्ठी त्वमिति

तदप्रियत्वान्न तथ्यं, तथ्यमपि यदहितं यथा मृगयुभिः पृष्टस्यारण्ये मृगान् दृष्टवतो मया मृगा दृष्टा इति, तज्जन्तुजातघातपापनिमित्तत्वाद् न तथ्यमिति, अदत्तस्य—स्वामिनाऽवितीर्णस्यादानं—ग्रहणं अदत्तादानं, तच्च स्वामिजीवतीर्थकरगुर्वदत्तभेदेन चतुर्विधं, तत्र स्वाम्यदत्तं—तृणदारुपाषाणादिकं तत्स्वामिना यददत्तं, जीवादत्तं—यत्स्वामिना दत्तमपि जीवेनादत्तं, यथा प्रव्रज्यापरिणामरहितो मातापितृभ्यां पुत्रादिर्गुरुभ्यो दीयते सचित्तपृथ्वीकायादिर्वा, तद्धि तत्स्वामिना दत्तमपि तदधिष्ठायकजीवैरदत्तमिति, तीर्थकरादत्तं—यत्तीर्थकरैः प्रतिषिद्धमाधाकर्मादि गृह्यते, गुर्वदत्तं नाम स्वामिना दत्तमाधाकर्मादिदोषरहितं गुरूननुज्ञाप्य यद् गृह्यते, तस्माद्विरतिस्तृतीयं व्रतं, मिथुनं—स्त्रीपुंसद्वन्द्वं तस्य कर्म मैथुनं तस्माद्विरतिश्चतुर्थं व्रतं, परिगृह्यते—आदीयते असाविति परिग्रहः परिग्रहणं वा परिग्रहः, स च धनधान्यक्षेत्रवास्तुरूप्यसुवर्णचतुष्पदद्विपदकुप्यभेदान्नवविधस्तस्माद्विरतिः—मूर्च्छापरिहारेण निवृत्तिः, 'मुच्छा परिग्गहो वुत्तो' इतिवचनात्, न तु द्रव्यादित्यागमात्रं, यस्मादविद्यमानेष्वपि द्रव्यक्षेत्रकालभावेषु मूर्च्छया प्रशमसौख्यविपर्यासेन चित्तविप्लवः स्यात्, सत्स्वपि च द्रव्यादिषु तृष्णात्यक्तमनसामसमप्रशमसुखसंप्राप्त्या चित्तविप्लवाभावः, अत एव धर्मोपकरणधारिणामपि मुनीनां शरीरे उपकरणे च निर्ममत्वानामपरिग्रहत्वं, यदाहुरस्मद्गुरवः—"धर्मसाधननिमित्तमुक्तवद्वस्त्रपात्रमुपकारि धारयन् । देहवन्न हि परिग्रही यतिः, प्रेम नास्य यदि मूर्च्छया सह ॥ १ ॥" एतानि यतीनां भवन्ति पञ्चैव तुशब्दस्यैवकारार्थत्वान्न चत्वारि, प्रथमपश्चिमतीर्थकृत्तीर्थयोः पञ्चानामेव भावात्, महान्ति—बृहन्ति तानि च व्रतानि च—नियमा महाव्रतानि, महत्त्वं चैषां सर्वजीवादिविषयत्वेन महाविषयत्वात्, उक्तं च—"पढमंमि सव्वजीवा बीए चरिमे य सव्वदव्वाणि । सेसा महव्वया खलु तदेकदेसेण दव्वाणं ॥ १ ॥" [प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि । शेषाणि महाव्रतानि खलु तदेकदेशेन द्रव्याणां ॥ १ ॥] इति, तेषां—द्रव्याणामेकदेशेनेत्यर्थः ॥ अथ श्रमणधर्ममाह—'खंती'त्यादि, क्षान्तिः—

क्षमा शक्तस्याशक्तस्य वा सहनपरिणामः, सर्वथा क्रोधविवेक इत्यर्थः, मृदुः—अस्तब्धस्तस्य भावः कर्म वा मार्दवं—नीचैर्वृत्तिरनुत्सेकश्च, ऋजुः—अवक्रमनोवाक्कायकर्मा तस्य भावः कर्म वा आर्जवं—मनोवाक्कायविक्रियाविरहः मायारहितत्वमितियावत्, मोचनं मुक्तिः—बाह्याभ्यन्तरवस्तुषु तृष्णाविच्छेदः लोभपरित्याग इत्यर्थः, तप्यन्ते रसादिधातवः कर्माणि वाऽनेनेति तपः, तच्च द्वादशविधमनशनादि, संयमः—आश्रवविरतिलक्षणः, सत्यं—मृषावादविरतिः, शौचं—संयमं प्रति निरुपलेपता निरतीचारतेत्यर्थः, नास्य किञ्चनं—द्रव्यमस्तीत्यकिञ्चनः तस्य भाव आकिञ्चन्यं, उपलक्षणं चैतत् तेन शरीरधर्मोपकरणादिष्वपि निर्ममत्वमाकिञ्चन्यं, नवब्रह्मचर्यगुप्तिसनाथ उपस्थसंयमो ब्रह्म, एष दशप्रकारो यतिधर्मः, अन्ये त्वेवं पठन्ति—"खंती मुत्ती अज्जव मद्दव तह लाघवे तवे चेव । संजम चियागऽकिंचण बोद्धव्वे बंभचेरे य ॥ १ ॥" तत्र लाघवं—द्रव्यतोऽल्पोपधिता भावतो गौरवपरिहारः त्यागः—सर्वसङ्गानां विमोचनं संयतेभ्यो वस्त्रादिदानं वा, शेषं प्राग्वत् ॥ अथ संयममाह—'पंचासवे'त्यादि, आश्रूयते—उपार्ज्यते कर्म एभिरित्याश्रवाः—अभिनवकर्मबन्धहेतवः प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहलक्षणाः पञ्च तेभ्यो विरमणं—विनिवर्तनं, इन्द्रियाणि—स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि पञ्च तेषां निग्रहो—नियन्त्रणं स्पर्शादिषु विषयेषु लाम्पट्यपरिहारेण वर्तनं, कषायाः—क्रोधमानमायालोभलक्षणाश्चत्वारस्तेषां जयः—अभिभवः उदितानां विफलीकरणेन अनुदितानां चानुत्पादनेन, दण्ड्यते—चारित्रैश्वर्यापहारतोऽसारीक्रियते एभिरात्मेति दण्डा—दुष्प्रयुक्ता मनोवाक्कायास्तेषां त्रयं दण्डत्रयं तस्य विरतिः—अशुभप्रवृत्तिनिरोधः, एष सप्तदशविधः संयमो भवति ॥ अथवाऽन्यथा सप्तदशविधः संयमो भवति—'पुढवी'त्यादि, पृथिव्युदकाग्निमारुतवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाणां मनोवाक्कायकर्मभिः करणकारणानुमतिभिश्च संरम्भसमारम्भारम्भवर्जनमिति नवधा जीवसंयमः, तत्र "संकप्पो संरम्भो परितातकरो भवे समारंभो । आरम्भो उद्दवओ सुद्धनयाणं तु सव्वेसिं ॥ १ ॥" [ संकल्पः

संरम्भः परितापकरो भवेत् समारम्भः । आरम्भः उपद्रवतः शुद्धनयानां च सर्वेषां ॥ १ ॥ ] तथा अजीवरूपाण्यपि पुस्तकादीनि दुष्षमादिदोषात्तथाविधप्रज्ञाऽऽयुष्कश्रद्धासंवेगोद्यमबलादिहीनाऽद्यकालीनविनेयजनानुग्रहाय प्रतिलेखनाप्रमार्जनापूर्वं यतनया धारयतोऽजीवसंयमः, तथा प्रेक्ष्य—चक्षुषा निरीक्ष्य बीजहरितजन्तुसंसक्त्यादिरहितं (यत्) स्थानं तत्र शयनासनचङ्क्रमणादीनि कुर्वीतेति प्रेक्षासंयमः, तथोपेक्षासंयमो—गृहस्थस्य पापव्यापारं कुर्वत उपेक्षणं न पुनरिदं ग्रामचिन्तनादिकं सोपयोगः कुरु इत्याद्युपदेशनं, अथवा साधूनां संयमं प्रति सीदतां प्रेरणं प्रेक्षासंयमः, पार्श्वस्थादीनां च निद्धंधसानां व्यापारणं प्रत्युपेक्षणमुपेक्षासंयम इति, तथा प्रेक्षितेऽपि स्थण्डिले वस्त्रपात्रादौ च रजोहरणादिना प्रमृज्य शयनासननिक्षेपादानादि कुर्वतः कृष्णभूमप्रदेशात्पाण्डुभूमादौ प्रदेशे सागारिकाद्यनिरीक्षणे सचित्ताचित्तमिश्ररजोऽवगुण्ठितपादादीनां रजोहरणेन प्रमार्जनं सागारिकादिनिरीक्षणे त्वप्रमार्जनं कुर्वतो वा प्रमार्जनासंयमः, यदुक्तं—"पायाई सागरिए अपमज्जित्तावि संजमो होइ । ते चेव पमज्जंतेऽसागरिए संजमो होइ ॥ १ ॥" [ पादादीनप्रमार्जयतोऽपि सागारिके सति संयमो भवति । तानेवासागारिके प्रमार्जयतः संयमो भवति ॥ १ ॥ ] तथा भक्तपानादिकं वस्त्रपात्रादिकं च प्राणिसंसक्तमविशुद्धमनुपकारकं वा जन्तुरहिते स्थाने विधिना समयभणितेन परिष्ठापयतः परिष्ठापनासंयमः, तथा मनसो द्रोहेर्ष्याभिमानादिभ्यो निवृत्तिर्धर्मध्यानादिषु च प्रवृत्तिर्मनःसंयमः, तथा वाचो हिंस्रपरुषादिभ्यो निवृत्तिः शुभभाषायां च प्रवृत्तिर्वाक्संयमः, तथा गमनागमनादिष्ववश्यकरणीयेषु यदुपयुक्तः कायं व्यापारयति स कायसंयमः, इत्येवं सप्तदशप्रकारः प्राणातिपातनिवृत्तिरूपः संयमो भवति ॥ इदानीं वैयावृत्त्यमाह—'आयरिये'त्यादि, आचारे—ज्ञानाचारादिके पञ्चविधे साधवं आचार्याः आचर्यन्ते—सेव्यन्ते इति वा आचार्याः उप—समीपमागत्य विनेयैरधीयते—पठ्यते येभ्यस्ते उपाध्यायाः, तपो विकृष्टाविकृष्टरूपं विद्यते येषां ते तपस्विनः नवतरदीक्षिताः शिक्षार्हाः शैक्षाः ग्लाना—ज्वरादिरोगाक्रान्ताः

साधवः स्थविराः, समनोज्ञा—एकसामाचारीसमाचरणपराः सङ्घः—श्रमणश्रमणीश्रमणोपासकश्रमणोपासिकासमुदायः बहूनां गच्छानामेकजातीयानां समूहः कुलं—चान्द्रादि गच्छस्त्वेकाचार्यप्रणेयः साधुसमूहः कुलसमुदायो गणः—कोटिकादिः एषामेवाचार्यादीनामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारकादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषाभेषजक्रियाकान्ताररोगोपसर्गेषु परिपालनमेवमादि वैयावृत्त्यं ॥ अथ ब्रह्मगुप्तीराह—'वसही'त्यादि, ब्रह्मचारिणा स्त्रीपशुपण्डकविवर्जिता वसतिरासेवनीया, तत्र स्त्रियो देवमानुषभेदात् द्विविधाः एताश्च सचित्ताः अचित्तास्तु पुस्तलेप्यचित्रकर्मादिनिर्मिताः, पशवः—तिर्यग्योनिजाः, तत्र गोमहिषीवडवावालेयादयः सम्भाव्यमानमैथुनाः पण्डकाः—तृतीयवेदोदयवर्तिनो महामोहकर्माणः स्त्रीपुंसेवनाभिरताः, तत्संसक्तौ हि तत्कृतविकारदर्शनान्मनोविकारसद्भावेन ब्रह्मचर्यबाधासम्भवात् १ तथा स्त्रीणां केवलानामेकाकिना कथा—धर्मदेशनादिलक्षणवाक्यप्रबन्धरूपा न कथनीया, यदिवा स्त्रीणां सम्बन्धिनी कथा, यथा—'कर्णाटी सुरतोपचारचतुरा लाटी विदग्धप्रिया' इत्यादिरूपा न कर्तव्या, रागानुबन्धिनी हि देशजातिकुलनेपथ्यभाषागतिविभ्रमगीतहास्यलीलाकटाक्षप्रणयकलहशृङ्गाररसानुविद्धा कामिनीनां कथा अवश्यमिह मुनीनामपि मनो विक्रियां नयतीति २, तथा निषद्या—आसनं, कोऽर्थः ? —स्त्रीभिः सहैकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्तं तत्र नोपविशेत्, तदुपभुक्तासनस्य चित्तविकारकारणत्वात्, यदाह—"इत्थीए मलिय सयणासणंमि तप्फासदोसओ जइणो। दूसेइ मणं मयणो कुट्ठं जह फासदोसेणं ॥ १ ॥" [ स्त्रिया परिषेविते शयनासने तत्स्पर्शदोषतो यतेर्मनो मदनो दूषयति यथा कुष्ठं स्पर्शदोषेण ॥ १ ॥ ] ३ तथा अविवेकिजनापेक्षया स्पृहणीयानि स्त्रीणामिन्द्रियाणि—नयननासिकामुखकर्णदेहादीनि उपलक्षणत्वादङ्गानि च—स्तनजघनादीनि अपूर्वविसयरसनिर्भरतया विस्फारितलोचनो न विलोकयेत्, न च विलोकनानन्तरमहो सलवणत्वं लोचनयोः सरलत्वं नाशावंशस्य स्पृहणीयत्वं पयोधरयोरित्यादि तदेकाग्रचित्तश्चिन्तयेत्, तदवलोकनतच्चिन्तनयोर्मो-

होदयहेतुत्वात् ४, तथा कुड्यान्तरं—यत्रान्तरस्थेऽपि कुड्यादौ दम्पत्योः सुरतादिशब्दः श्रूयते ब्रह्मचर्यभङ्गभयाच्च तत्परित्यागः ५, तथा पूर्वं—गृहस्थावस्थायां क्रीडितं—स्त्रीसम्भोगानुभवलक्षणं द्यूतादिरमणलक्षणं वा नानुस्मरेत्, तत्स्मरणेन्धनक्षेपात्स्मराग्निः संधुक्ष्यते ६, तथा प्रणीतं—अतिस्निग्धमधुरादिरसं भक्तं न भुञ्जीत, निरन्तरं वृष्यस्निग्धरसप्रीणितो हि प्रधानधातुपरिपोषेण वेदोदयादब्रह्मापि सेवते ७, तथा रूक्षभैक्ष्यस्याप्यतिमात्रमाहारं—आकण्ठमुदरपूरणं वर्जयेत्, ब्रह्मक्षतिकारित्वात् शरीरपीडाकारित्वाच्च ८, तथा विभूषणा—स्नानविलेपनधूपननखदन्तकेशसंमार्जनादिः स्वशरीरस्य संस्कारस्तां न कुर्यात्, अशुचिशरीरसंस्कारमूढो हि तत्तदुत्कलिकामयैर्विकल्पैर्वृथाऽऽत्मानमायासयतीति ९, एता ब्रह्मचर्यस्य—मैथुनव्रतस्य गुप्तयः—परिरक्षणोपाया ब्रह्मचर्यगुप्तयो नव भवन्ति ॥ अथ ज्ञानादित्रिकमाह—'**वारसे**'त्यादि, ज्ञानं—कर्मक्षयोपशमसमुत्थोऽववोधः तद्धेतुत्वाद् द्वादशाङ्गादिकमपि ज्ञानं आदिशब्दादुपाङ्गप्रकीर्णादिपरिग्रहः, तथा तत्त्वानि—जीवाजीवाश्रवसंवरनिर्जरावन्धमोक्षलक्षणानि तेषामर्थः—अभिधेयं तस्य श्रद्धानं—तथेतिप्रत्ययरूपा रुचिरेतद्दर्शनं, तथा सर्वेभ्यः पापव्यापारेभ्यो विरतिः—ज्ञानश्रद्धानपूर्वकं परिहारश्चरणं, तच्च द्विविधं—देशतः सर्वतश्च, तत्र देशतः श्राद्धानां सर्वतः साधूनामिति ॥ अथ द्वादशप्रकारं तप आह—'**अणसण**'मित्यादि, '**पायच्छित्त**'मित्यादि, गाथाद्वयं, एतत्स्वरूपं च तपोऽतिचारव्याख्यायां पूर्वमेव व्याख्यातं, न पुनरिहोच्यते ॥ अथ क्रोधनिग्रहादीनाह—'**कोहो**'इत्यादि, क्रोधो मानो माया लोभश्चत्वारो भवन्ति कषायाः, कष्यन्ते—हिंस्यन्ते प्राणिनो यत्रासौ कषः—संसारस्तमेति—प्राप्नोति प्राणी यैस्ते कषायास्तेषां निग्रहणं—नियन्त्रणं इति, चरणस्य—चारित्रस्यैते—पूर्वोक्ता भेदाः सप्ततिसङ्ख्या भवन्ति ॥ व्रतानां पञ्चके श्रमणधर्मस्य दशके संयमसम्बन्धिनि सप्तदशके वैयावृत्त्यदशके ब्रह्मगुप्तिनवके ज्ञानादीनां त्रिके तपसो द्वादशके क्रोधनिग्रहादीनां च चतुष्के मिलिते एतत्सङ्ख्यासम्भवादिति ५५२—५६२ ॥ ६६ ॥ इदानीं '**करणं**'ति सप्तषष्टं द्वारमाह—

**पिंडविसोही ४ समिई ५ भावण १२ पडिमा १२ य इंदियनिरोहो ५ पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ७० ॥ ५६३ ॥**

'पिंडे'त्यादिगाथा, 'पिडि सङ्घाते' इत्यस्य 'इदितो नुम् धातो'(पा० ७-१-५८)रिति नुमि कृते पिण्डनं पिण्डः—सङ्घातो, बहूनां सजातीयानां विजातीयानां वा कठिनद्रव्याणामेकत्र समुदाय इत्यर्थः, समुदायश्च समुदायिभ्यः कथञ्चिदभिन्न इति त एव बहवः पदार्था एकत्र संश्लिष्टाः पिण्डशब्देनोच्यन्ते तस्य विविधं—अनेकैराधाकर्मादिपरिहारप्रकारैः शुद्धिः—निर्दोषता पिण्डविशुद्धिः, सं—सम्यक् प्रशस्ता अर्हत्प्रवचनानुसारेण इतिः—चेष्टा समितिः—ईर्यासमित्यादिका, भाव्यन्ते इति भावनाः—अनुप्रेक्षा अनित्यत्वादिकाः, प्रतिमाः—प्रतिज्ञा अभिग्रहप्रकारा मासिक्यादयः, इन्द्रियाणि—स्पर्शनादीनि तेषां निरोधः आत्मीयात्मीयेष्टानिष्टविषयरागद्वेषाभाव इत्यर्थः, प्रतिलेखनं प्रतिलेखना—आगमानुसारेण प्रति प्रति निरीक्षणमनुष्ठानं वा, सा च चोलपट्टादेरुपकरणस्य, गुप्तिः—गोपनमात्मसंरक्षणं मुमुक्षोर्योगनिग्रह इत्यर्थः, अभिगृह्यन्त इत्यभिग्रहाः—नियमविशेषा द्रव्यादिभिरनेकप्रकाराः, चः समुच्चये एवकारः क्रमप्रतिपादनार्थः, एतत्करणं भवतीति, क्रियत इति करणं मोक्षार्थिभिः साधुभिर्निष्पाद्यत इत्यर्थः, तुशब्दो विशेषेण मूलगुणसद्भावे करणत्वमस्य नान्यथेति (दर्शनाय) । अत्राह परः—ननु समितिग्रहणेनैव पिण्डविशुद्धेर्गृहीतत्वान्न पिण्डविशुद्धिग्रहणं कर्तव्यं, यत एषणासमितौ सर्वाऽप्येषणा गृहीता, पिण्डविशुद्धिरप्येषणैव, तत्किं भेदेनोपन्यासः ? इति, अत्रोच्यते, पिण्डद्रव्यव्यतिरेकेणाप्येषणा विद्यते वसत्यादिरूपा तद्ग्रहणार्थमेषणासमितिग्रहणं भविष्यतीति, पिण्डविशुद्धेस्तु भेदेनोपन्यासः कारणे ग्रहणं कर्तव्यं नाकारणे इत्यस्यार्थस्य ज्ञापनार्थः, अथवा आहारमन्तरेण न शक्यते पिण्डविशुद्ध्यादिकरणं सर्वमेव कर्तुमतो भेदेनोपन्यास इति ॥ तत्र स्वयमेवैनां गाथां प्रतिपदं व्याख्यानयन् यैर्दोषै रहितस्य पिण्डस्य विशुद्धिर्भवति तान् दोषान् सामान्येन त्रिभेदानाह—

**सोलस उग्गमदोसा सोलस उपायणाय दोसत्ति। दस एसणाय दोसा बायालीसं इह हवन्ति ॥ ५६४ ॥ आहाकम्मु १ देसिय २ पूईकम्मे ३ य मीसजाए य ४। ठवणा ५ पाहुडियाए ६ पाओयर ७ कीय ८ पामिचे ९ ॥ ५६५ ॥ परियट्टिए १० अभिहडु ११ भिन्ने १२ मालोहडे १३ य अच्छिज्जे १४। अणिसिट्ठे १५ ऽज्झोयरए १६ सोलस पिण्डुग्गमे दोसा ॥ ५६६ ॥**

षोडश उद्गमदोषाः उद्गमनमुद्गमः—पिण्डस्योत्पत्तिः तद्विषया आधाकर्मिकादयो दोषा उद्गमदोषाः, तथा षोडश उत्पादनादोषाः उत्पादनं उत्पादना—मूलतः शुद्धस्यापि पिण्डस्य धात्रीत्वादिभिः प्रकारैरुपार्जनं तद्विषया दोषा उत्पादनादोषाः, तथा दश एषणादोषाः एषणमेषणा—अशनादेर्ग्रहणकाले शङ्कितादिभिः प्रकारैरन्वेषणं तद्विषया दोषा एषणादोषाः, एते चेह त्रयोऽपि मिलिता द्विचत्वारिंशद्भवन्ति ॥ ५६९ ॥ तत्र तावदुद्गमविषयान् षोडश दोषान्नामग्राहमाह—'आहाकम्मे'त्यादिगाथाद्वयं, आधाकर्मादयोऽध्यवपूरकान्ताः षोडश पिण्डोद्गमविषया दोषा भवन्तीतिगाथाद्वयस्य परमार्थः, तत्र 'आहाकम्मं'ति आधानमाधा—साधुनिमित्तं चेतसः प्रणिधानं यथा अमुकस्य साधोः कारणेन मया भक्तादि पचनीयमिति आधया कर्म—पाकादिक्रिया आधाकर्म तद्योगाद्भक्ताद्यप्याधाकर्म, इह दोषाभिधानप्रक्रमेऽपि यद्दोषवतो भक्तादेरभिधानं तद्दोषदोषवतोरभेदविवक्षया द्रष्टव्यं, एवमन्यत्रापि, यद्वा आधाय—साधुं चेतसि प्रणिधाय यत् क्रियते भक्तादि तदाधाकर्म, पृषोदरादित्वाद्यलोपः, साधुनिमित्तं सचित्तस्याचित्तीकरणमचित्तस्य वा पाक इति भावः १ । 'उद्देसिय'त्ति उद्देशनमुद्देशो—यावदर्थिकादिप्रणिधानं तेन निर्वृत्तं तत्प्रयोजनं वा औद्देशिकं, तद् द्विविधं—ओघेन विभागेन च, तत्र ओघः—सामान्यं विभागः—पृथक्करणं, इयमत्र भावना—नादत्तमिह किमपि लभ्यते ततः कतिपया भिक्षा दद्म इति बुद्ध्या कतिपयाधिकतण्डुलप्रक्षेपेण यभि-

कृतमशनादि तदोघौद्देशिकं, ओघेन—सामान्येन स्वपरपृथग्विभागकरणाभावरूपेण औद्देशिकमोघौद्देशिकमिति व्युत्पत्तेः, तथा विवाहप्रकरणादिषु यदुद्धरितं तत्पृथक्कृत्वा दानाय कल्पितं तद्विभागौद्देशिकं, विभागेन—स्वसत्ताया उत्तार्य पृथक्करणेनौद्देशिकं विभागौद्देशिकमिति व्युत्पत्तेः, तत्रौघौद्देशिकमेवं प्रायेण भवति—इह कश्चिदनुभूतदुर्भिक्षबुभुक्षः सम्प्राप्तसुभिक्षो गृहस्थश्चिन्तयति, यथा—जीवितास्तावद्वयं कथमपि महाकष्टेनास्मिन् दुर्भिक्षे, इदानीं किमपि सम्प्राप्तवर्तनस्य प्रतिदिनमर्थिजनसम्पूर्णभोजनदानशक्त्यभावे मम भिक्षा अपि तावत्कियत्योऽपि दातुं युक्ताः, यतो नादत्तमिह जन्मन्यमुत्र च स्वर्गाद्यवाप्त्योपभुज्यते, दत्तस्यैव भोगात्, नाप्यकृतं पुण्यं स्वर्गगमनाद्यवाप्तये सम्पद्यते, कृतस्यैव फलदानसमर्थत्वादिति, ततः पुण्योपार्जनबुद्ध्या यदा गृहिणा प्रतिदिवसं यावत्प्रमाणं भक्तं पच्यते तावत्प्रमाणे एव भक्ते पक्तुमारभ्यमाणे पाखण्डिनां गृहिणां वा मध्ये यः कोऽपि समागमिष्यति तस्य भिक्षादानार्थमेतावत् स्वार्थमेतावच्च भिक्षादानार्थमित्येवं विभागरहितमेव तण्डुलानधिकतरान् प्रक्षिपति तदा ओघौद्देशिकं भवति, विभागौद्देशिकं पुनः प्रथमं तावत् त्रिधा—उद्दिष्टं कृतं कर्म च, तत्र स्वार्थमेव निष्पन्नमशनादिकं भिक्षाचराणां दानाय यत्पृथक्कल्पितं तदुद्दिष्टं, यत्पुनरुद्धरितं सत् शाल्योदनादिकं भिक्षादानाय करम्बादिरूपतया कृतं तत्कृतमित्युच्यते, यत्पुनर्विवाहप्रकरणादावुद्धरितं मोदकचूर्णादि तद्भूयोऽपि भिक्षाचराणां दानाय गुडपाकदानादिना मोदकादिरूपतया कृतं तत्कर्मेत्यभिधीयते, एकैकमपि पुनश्चतुर्धा—उद्देशसमुद्देशादेशसमादेशभेदात्, तत्र यदुद्दिष्टं कृतं कर्म वा विभागौद्देशिकं यावन्तः केऽपि भिक्षाचराः पाखण्डिनो गृहस्था वा समागमिष्यन्ति तेभ्यः सर्वेभ्योऽपि दातव्यमिति यदा सङ्कल्पितं भवति तदा तदुद्देशसंज्ञमुच्यते, यदा पुनः पाखण्डिनां देयत्वेन कल्पयति तदा तत् समुद्देशाख्यं, यदा श्रमणानां—शाक्यादीनां दास्यामीति चिन्तयति तदा तदेवादेशाभिधं, यदा च निर्ग्रन्थानामेव—आर्हतयतीनां दास्यामीति परामृशति तदा तत् समादेशनामकं, न चैतदनार्षं, यत उक्तं—"जावंतियमुद्देसं पासंडिणं भवे

समुद्देसं । समणाणं आएसं निग्गंथाणं समाएसं ॥ १ ॥" इति [ यावतामुद्देशं पाषण्डिनां समुद्देशं भवेत् । श्रमणानामादेशं निर्ग्रन्थानां समादेशं ॥ १ ॥ ] सर्वसङ्ख्यया विभागौद्देशिकं द्वादशप्रकारं भवति, अथ आधाकर्मकर्मौद्देशिकयोः कः परस्परं प्रतिविशेषः ?, उच्यते, यत्प्रथमत एव साध्वर्थं निष्पादितं न स्वार्थं तदाधाकर्म, यत्पुनः प्रथमतः स्वार्थं निष्पादितं सत् भूयोऽपि पाककरणेन संस्क्रियते तत्कर्मौद्देशिकमिति २ 'पूई—कम्मे य'त्ति उद्गमादिदोषरहिततया पूतेः—पवित्रस्य सतो भक्तादेरन्यस्याविशुद्धकोटिकभक्तादेरवयवेन सह सम्पर्कात् पूतेः—पूतिभूतस्य कर्म—करणं पूतिकर्म, तद्योगाद्भक्ताद्यपि पूतिकर्म, अयमर्थः—यथा सौरभ्यमनोहरत्वादिगुणैर्विशिष्टमपि शाल्यादिभोजनद्रव्यं कुथितगन्धाशुच्यादिद्रव्यलवेनापि युक्तमपवित्रं स्याद्विशिष्टजनपरिहार्यं च तथा निरतिचारचारित्रिणो यतेर्निरतिचारचारित्रस्य सातिचारतयाऽपवित्रत्वकरणेनाविशोधिकोटीनामवयवमात्रेणापि संयुक्तः स्वरूपतः परिशुद्धोऽप्याहार उपभुज्यमानो भावपूतेः कारणत्वात् पूतिरिति, तथा आधाकर्मिकाद्यवयवलेशेनापि संश्लिष्टाः स्थालीचट्टुककरोटिकादयोऽपि पूतित्वात्परिहर्तव्याः ३, 'मीसजाए य'त्ति मिश्रेण—कुटुम्बप्रणिधानसाधुप्रणिधानमीलनरूपेण भावेन जातं—पाकादिभावमापन्नं यद्भक्तादि तन्मिश्रजातं, तत् त्रिधा—यावदर्थिकं पाखण्डिमिश्रं साधुमिश्रं च, तत्र दुर्भिक्षादौ बहून् भिक्षाचरानुपलभ्य तदनुकम्पया यावन्तः केचन गृहस्था अगृहस्था वा भिक्षाचराः समागमिष्यन्ति तेषामपि भविष्यति कुटुम्बे चेति बुद्धितः सामान्येन भिक्षाचरयोग्यं कुटुम्बयोग्यं चैकत्र मीलितं यत्पच्यते तद्यावदर्थिकमिश्रजातं, यत्तु केवलपाखण्डियोग्यमात्मयोग्यं चैकत्र पच्यते तत्पाखण्डिमिश्रं, यत्पुनः केवलसाधुयोग्यमात्मयोग्यं चैकत्र पच्यते तत्साधुमिश्रं, श्रमणानां पाखण्डिष्वन्तर्भावविवक्षणात् श्रमणमिश्रं पृथक् नोक्तं ४ । 'ठवण'त्ति स्थाप्यते साधुनिमित्तं कियन्तं कालं यावन्निधीयते इति स्थापना यद्वा स्थापनं—साधुभ्यो देयमिदमितिबुद्ध्या देयवस्तुनः कियन्तं कालं व्यवस्थापनं स्थापना तद्योगाद्देयमपि स्थापना, स्वस्थाने—चुल्लीस्था-

ल्यादौ परस्थाने—सुस्थितकच्छव्वकादौ चिरकालमित्वरकालं च साधुदाननिमित्तं धार्यमाणमशनादिकं स्थापनेति भावः ५। 'पाहुडिया-ए'त्ति कस्मैचिदिष्टाय पूज्याय वा बहुमानपुरस्सरीकारेण यदभीष्टं वस्तु दीयते तत् प्राभृतमुच्यते, ततः प्राभृतमिव प्राभृतं—साधुभ्यो देयं भिक्षादिकं वस्तु, प्राभृतमेव प्राभृतिका, यद्वा प्र इति—प्रकर्षेण आ इति—साधुदानलक्षणमर्यादया भृता—निर्वर्तिता यका भिक्षा सा प्राभृता ततः स्वार्थिककप्रत्ययविधानात् प्राभृतिका, सा च वादरा सूक्ष्मा चेति द्विभेदा, तत्र वादरारम्भविषयतया वादरा स्थूलेत्यर्थः, स्वल्पारम्भविषयतया तु सूक्ष्मेति, एकैकाऽपि च द्विधा—उत्ष्वष्कणेन अवष्वष्कणेन च, तत्र स्वयोगप्रवृत्तिकालावधेः उत्—ऊर्द्ध्वं परतः ष्वष्कणं—आरम्भस्य करणमुत्ष्वष्कणममिधीयते, तथा स्वयोगप्रवृत्तकालावधेरव—अर्वाक् ष्वष्कणं—आरम्भकरणमवष्वष्कणमुच्यते, इह हि केनापि श्रावकेण कुत्रापि नगरे निजापत्यस्य विवाहः कर्तुमारेभे, लग्नं च भव्यं दत्तं ज्योतिषिकेण परं तस्मिन् समयेऽन्यत्र विहृतत्वेन तत्र गुरवो न सन्ति, ततोऽसौ श्रावको विकल्पयति—अस्मिन् विवाहलग्ने सङ्खड्यामनेकाशनखाद्यादिमनोरमायां क्रियमाणायां जनखाद्य-मेव सर्वं भविष्यति, न व्रतिनां किञ्चिदुपयोगं यास्यति, कियद्दिनानन्तरं च यथाविहारक्रमं श्रीगुरवोऽन्यत्र आजिगमिषवः श्रूयन्ते, ततस्तत्समय एव मम विवाहः कर्तुं युज्यते येन साधूनामशनादिकं पुष्कलं ददामि, तदेवाशनादिकं सफलं यत्सुपात्रेषु विनियोगं याति, एवं च महापुण्यमुपार्जितं स्यात् कल्याणं च महत् सम्पनीपद्यते, इत्यादि विचिन्त्य निष्टङ्कितलग्नात्परतो गुरूणामागमनसमये विवाहं करोति, एवं च विवाहदिनस्योत्ष्वष्कणं कृत्वा यदुपस्क्रियते भक्तादि सा वादरोत्ष्वष्कणप्राभृतिकेति, तथा केनापि श्रावकेण स्वपुत्रादेर्वि-वाहदिनं किञ्चिन्निष्टङ्कितं, इतश्च निष्टङ्कितविवाहदिनादर्वागेव साधवस्तत्रागताः, ततोऽसौ परिभावयति—मयैतेषां साधूनां विपुलं विशिष्टं च भक्तपानादिकं पुण्यार्थं दातव्यं, तच्च प्रायेण विवाहादिके महति पर्वणि विशालं भवति, मत्पुत्रादिविवाहस्तु आरिप्सितो यतिजनेऽन्यत्र

विहृते भविष्यतीति विचिन्त्य यतिजने तत्रस्थ एवान्यद्विवाहलग्नं व्यवस्थापयति, अत्र च विवाहलग्नस्य भविष्यत्कालभाविनोऽवष्वष्कणं कृत्वा यदुपस्क्रियते भक्तादि सा बादरावष्वष्कणप्राभृतिकेति, तथा किल काचित्कुटुम्बिनी सूत्रकर्तनादिव्यापारपरायणा बालकेन रुदता भोजनं याच्यते, यथा मातः ! मम भोजनं प्रयच्छेति, तत्र च प्रस्तावे प्रत्यासन्नगृहेषु भिक्षामटन् साधुसङ्घाटकस्तया ददृशे, सा च तं दृष्ट्वा सूत्रकर्तनादिलोभेन बालकं ज्ञपन्तं रुदन्तं च प्रत्यवादीत्—मा पुत्र ! प्रलप मा रोदीश्च त्वं, इह मद्गृहे गेहानुगेहक्रमेण विचरन् यदि यतिसंघाटकः समेष्यति तस्य भिक्षादानायोत्थिता सती तवापि तत्समयमेव भोजनं दास्यामीति, ततः साधुसङ्घाटके क्रमेणागते धर्मार्थमुत्थाय भिक्षां ददाति बालकस्य च भोजनं, इह च यत्र क्षणे बालकेन याचितं भोजनं तदैव तया कर्तुमुचितस्य पुत्रभोजनदानस्य भविष्यत्कालभाविना साधुभिक्षादानेन समं यत्करणं तदुत्ष्वष्कणं तत्र या प्राभृतिका सा सूक्ष्मोत्ष्वष्कणप्राभृतिका, तथा काचिद् गृहस्था कर्त्तनं कुर्वती भोजनं याचमानं बालकं प्रति वदति—कर्तयामि तावत्पूणिकामेकां पश्चात्ते भोजनं दास्यामीति, अत्रान्तरे च साधुरागतः, तत उत्थाय तस्मै भिक्षां ददाति बालकस्य च भोजनं, इह च रूतपूणिकाकर्त्तनसमाप्त्यनन्तरं दातव्यतया बालकाय प्रतिज्ञाते भोजने साधुनिमित्तमर्वागुत्थानेन यदर्वागेव बालकस्य भोजनदानं तदवष्वष्कणं तत्र या प्राभृतिका सा सूक्ष्मावष्वष्कणप्राभृतिकेति, इयं च प्राभृतिका साध्वर्थमुत्थिताया बालकभोजनदानादनन्तरं हस्तधावनादिनाऽप्कायाद्युपमर्दहेतुत्वादकल्पनीयेति ६। 'पाओयर'त्ति साधुनिमित्तं वह्निप्रदीपमण्यादिस्थापनेन भित्त्याद्यपनयनेन वा बहिर्निष्काश्य धारणेन वा प्रादुः—प्रकटत्वेन देयस्य वस्तुनः करणं प्रादुष्करणं तद्योगाद् भक्ताद्यपि प्रादुष्करणं, यद्वा प्रादुः—प्रकटं करणं यस्य तत् प्रादुष्करणं, तच्च द्विधा—प्रकाशकरणं प्रकटकरणं च, तत्र कोऽपि श्रावकः साधुभक्तिभूपितमानसो निरन्तरं सत्पात्रदानपवित्रीकृतनिजपाणिपल्लवो मनाक् मन्दविवेकः सान्धकारगृहमध्यस्थितस्य साधुदेयस्या-

शनादेरचक्षुर्विषयतया साधूनामकल्यतां परिभाव्य तस्य प्रकाशनार्थं भास्वरतरं मणिं तत्र व्यवस्थापयति अग्निप्रदीपौ वा कुरुते गवाक्षं वा कारयति लघुतरं वा सद् द्वारं बृहत्तरं करोति कुड्यच्छिद्रादि वा विधापयति, इत्थं यत्स्थानस्थितस्यैव देयवस्तुनः प्रकाशनं तत्प्रकाशकरणं, यत्पुनर्गृहमध्यवर्तिन्यां चुल्ल्यां स्वगृहार्थं राद्धस्यौदनादेरन्धकारादपसार्य वहिश्चुल्ल्यां चुल्लीव्यतिरिक्ते वाऽन्यस्मिन् सप्रकाशे प्रदेशे साधुदानार्थं स्थापनं प्रकटकरणं, एतच्च द्विविधमपि प्रादुष्करणं षट्कायोपमर्दप्रवृत्तिदोषादिसद्भावात् साधुभिर्वर्जनीयमिति ७। 'कीय'त्ति क्रीतं यत् साध्वर्थं मूल्यादिना परिगृहीतं, तच्च चतुर्धा—आत्मद्रव्यक्रीतं आत्मभावक्रीतं परद्रव्यक्रीतं परभावक्रीतं च, तत्रात्मना—स्वयमेव द्रव्येण—उज्जयन्तादितीर्थशेषादिरूपपरावर्तादिकारिगुटिकासौभाग्यादिसम्पादकरक्षाटकादिरूपेण प्रदानतः परमावर्जयन् भक्तादि गृह्णाति तदात्मद्रव्यक्रीतं, दोषाश्चात्र उज्जयन्तादितीर्थशेषादिसमर्पणानन्तरमेव दैवयोगेन तस्य गृहिणोऽकस्मादेव ज्वरादिके मान्द्ये जातेऽनेन साधुनाऽहं निराकुलः सन् ग्लानीकृत इत्यादिप्रजल्पनतः शासनस्य मालिन्यं स्यात्, एवं ज्ञाते च राजादयः कर्षणकुट्टनादिकं विदध्युः, अथाग्रतो मन्दः सन् तेन शेषादिना समर्पितेन नीरोगः सम्पद्यते तदा चाटुकारिण एते यतय इत्युड्डाहो लोकस्य जल्पतो भवेत्, तथा निर्माल्यादिप्रदानेन प्रगुणीभूतशरीरस्य गृहव्यापारादिप्रयोजकतया षड्जीवघातापन्नः कर्मबन्धः स्यादित्यादयः १, तथा आत्मना—स्वयमेव भक्ताद्यर्थं धर्मकथकवादिक्षपकातापककविप्रमुखैः धर्मकथोपन्यासादिलक्षणेन भावेन विधीयमानेन धर्मकथोपन्यासाद्याक्षिप्तेभ्यो जनेभ्यो यदशनादिकं गृह्यते तदात्मभावक्रीतं, दोषाश्चात्र निर्मलनिजानुष्ठाननिष्फलीकरणादयः २, तथा परेण—गृहस्थेन साधुनिमित्तं सचित्ताचित्तमिश्रभेदेन द्रव्येण क्रीत्वा यदशनादिकं क्रीतं तत्परद्रव्यक्रीतं, अत्र च षट्कायविराधनादयः प्रतीता एव दोषाः ३, तथा परेण—मङ्खादिना भक्तिवशात्साधुनिमित्तं निजनिजविज्ञानप्रदर्शनादिरूपेण धर्मकथादिरूपेण वा भावेन परमावर्ज्य यत्ततो गृहीतं तत्परभावक्रीतं, मङ्खः—केदारको

यः पटमुपदर्श्य लोकमावर्जयति, इत्थंभूतं च परभावक्रीतं त्रयो दोषाः—एकं तावत्क्रीतं द्वितीयमन्यस्माद् गृहादिमानीतमित्यभ्याहृतं आनायानीय चैकत्र साधुनिमित्तं स्थाप्यत इति स्थापितमिति ४–८। 'पामिच्चे'त्ति अपमित्यं—भूयोऽपि तव दास्यामीत्येवमभिधाय यत्साधुनिमित्तमुच्छिन्नं गृह्यते तदपमित्यं प्रामित्यकं वा, इह यदपमित्य गृह्यते तदप्युपचारादपमित्यमित्युक्तं, तद् द्विविधं—लौकिकं लोकोत्तरं च, तत्र लौकिकं यद् गृहस्थेन परस्मादुच्छिन्नं गृहीत्वा घृतादिकं वस्तु व्रतिभ्यो वितीर्यते, दोषाश्च दासत्वनिगडनियन्त्रणादयः, लोकोत्तरं च वस्त्रादिविषयं साधूनामेव परस्परमवसेयं, तत्तु द्विधा—कोऽपि कस्यापि सत्कमेवं वस्त्रादि गृह्णाति—यथा कियद्दिनानि परिभुज्य पुनरपि ते समर्पयिष्यामि, कोऽपि पुनरेवं—एतावद्दिनानामुपरि तवैतत्सदृशमपरं वस्त्रादि दास्यामि, तत्र प्रथमे प्रकारे शरीरादिमलेन मलिनीकृते यदिवा पाटिते चौरादिना वा हृते मार्गे पतिते वा तस्मिन् वस्त्रादिके कलहादयो दोषाः, द्वितीये च प्रकारे अन्यद्वस्त्रादिकं याचमानस्य तस्य दुष्कररुचेर्विशिष्टतरेऽपि दत्ते महता कष्टेन रुचिरापादयितुं शक्यते, ततः तमाश्रित्य कलहादयो दोषाः सम्भवन्तीति ९। 'परियट्टिए'त्ति परिवर्तितं यत्साधुनिमित्तं कृतपरावर्तं, तद् द्विविधं—लौकिकं लोकोत्तरं च, एकैकमपि द्विधा—तद्द्रव्यविषयमन्यद्रव्यविषयं च, तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णातीत्यादि, अन्यद्रव्यविषयं यथा कोद्रवकूरं समर्पयित्वा साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि, इदं च लौकिकमेव, लोकोत्तरमपि साधोः साधुना सह वस्त्रादिपरावर्तनस्वरूपं इति द्विधा भावनीयं, दोषाश्चात्रापि प्राग्वदेव १०। 'अभिहडे'त्ति अभि-साध्वभिमुखं हृतं-गृहस्थेन स्थानान्तरादानीतमभिहृतं, तद् द्विधा—अनाचीर्णमाचीर्णं च, तत्रानाचीर्णं द्विविधं—प्रच्छन्नं प्रकटं च, सर्वथा साधुना अभ्याहृतत्वेन यदपरिज्ञातं तत्प्रच्छन्नं, यत्पुनरभ्याहृतत्वेन ज्ञातं तत्प्रकटं, एकैकमपि द्विविधं—स्वग्रामविषयं परग्रामविषयं च, यस्मिन् ग्रामे साधुर्निवसति स किल स्वग्रामः, शेषस्तु परग्रामः, तत्र

कांचित् श्राविका भक्तियुक्ता साधूनां प्रतिलाभनायाभ्याहृताशङ्कानिवृत्त्यर्थं प्रहेणकमिषेणोपाश्रये मोदकाद्यानीय साधुसंमुखमेवं वदति—यथा भगवन्! मया भ्रातृगेहादौ सङ्खड्यां वा गतया इदं लब्धं यद्वा मया स्वजनानां गृहे प्रहेणकमिदं स्वगृहान्नीतं, तैश्च रोगादिना केनापि कारणेन न गृहीतं, सम्प्रति वन्दनार्थमत्र प्रविष्टा, ततो यदि युष्माकमिदमुपकरोति तर्हि प्रतिगृह्यतामिति, ततः सा यद्ददाति तत् प्रच्छन्नं स्वग्रामविषयमभ्याहृतं, तथा क्वचिद् ग्रामे बहवः श्रावकाः सन्ति, ते च सर्वेऽप्येककुटुम्बवर्तिनः, अन्यदा तेषां गृहे विवाहः समजनि, निवृत्ते च विवाहे प्रचुरमोदकाद्युद्धरितं, ततस्तैरचिन्ति—यथैतत्साधुभ्यो दीयतां येन महत्पुण्यमस्माकमुपजायते, अथ केचित् साधवो दूरेऽवतिष्ठन्ते केचित्पुनः प्रत्यासन्नाः, परमन्तराले नदी विद्यते, ततस्तेऽप्यप्कायविराधनाभयतो नागमिष्यन्ति, आगता अपि च प्रचुर-मोदकादिकमालोक्य शुद्धमिति कथ्यमानमप्याधाकर्मशङ्कया न गृहीष्यन्ति, ततो यत्र ग्रामे साधवो निवसन्ति तत्रैव प्रच्छन्नं गृहीत्वा व्रजाम इति, तथैव च कृतं, ततो भूयोऽपि चिन्तयन्ति—यदि साधूनाहूय दास्यामस्ततस्तेऽशुद्धमाशङ्क्य न गृहीष्यन्ति, तस्माद् द्विजादि-भ्योऽपि किमपि किमपि दद्मः, तच्च तथा दीयमानमपि यदि साधवो न प्रेक्षिष्यन्ते ततस्तदवस्थैव तेषामशुद्धाशङ्का भविष्यति ततो यत्र यत्रोच्चारादिकार्यार्थं निर्गताः सन्तः साधवः प्रेक्षन्ते तत्र दद्म इति, एवं च चिन्तयित्वा विवक्षिते कस्मिंश्चित्प्रदेशे द्विजादिभ्यः स्तोकं स्तोकं दातुमारब्धं, तत उच्चारादिकार्यार्थं निर्गताः केचन साधवो दृष्टाः, ततस्ते निमन्त्रिता—यथा भो साधवोऽस्माकमुद्धरितं मोदकादिकं प्रचुरमवतिष्ठते, ततो यदि युष्माकं किमप्युपकरोति तर्हि तत्प्रतिगृह्यतामिति, साधवोऽपि शुद्धमित्यवगम्य प्रत्यगृह्णन्, एतत्प्रच्छन्नं परग्रा-मविषयमभिहृतं, परम्परया ज्ञाते च परिष्ठापनीयं, तथा कश्चित्साधुर्भिक्षामटन् क्वापि गृहे प्रविष्टः, तत्र च गौरवार्हं स्वजनभोजनादिकं प्रकृतं वर्तते, ततो न तदानीं साधवे भिक्षां दातुं प्रपारिता इत्यादिभिः कारणैः काचित् श्राविका स्वगृहात्साधोरुपाश्रये मोदकादिकमा-

नीय यद्दाति तत्प्रकटं स्वग्रामविषयमभिहृतं, एवं परग्रामविषयमपि प्रकटमनाचीर्णमवसेयं, आचीर्णं पुनर्द्विविधं—क्षेत्रविषयं गृहविषयं च, क्षेत्रविषयमपि त्रिविधं—उत्कृष्टं मध्यमं जघन्यं च, तत्र कस्मिंश्चिन्महति गृहे भूरिभुञ्जानकजनपङ्क्तिरुपविष्टा वर्तते, तस्याश्चैकस्मिन् पर्यन्ते साधुसङ्घाटको द्वितीये तु देयमशनादिकं तिष्ठति, न च साधुसङ्घाटकश्छुप्तिभयादिना देयस्याशनादेः समीपं गन्तुं शक्नोति, ततो हस्तशतप्रमितक्षेत्रादानीतं यद् गृह्णाति तदुत्कृष्टं क्षेत्राभिहृतमाचीर्णं, हस्तशतात्परतस्त्वानीतं प्रतिषिद्धमेव, मध्यमं क्षेत्राभ्याहृतं पुनः करपरिवर्त्तादुपरि यावद्धस्तशतं किञ्चिन्न्यूनं भवति तावद्विज्ञेयं, करपरिवर्ते तु जघन्यं क्षेत्राचीर्णमभ्याहृतं, करपरिवर्तो नाम हस्तस्य किञ्चिच्चलनं, यथा काचिद्दात्री ऊर्द्ध्वा उपविष्टा वा स्वयोगेनैव निजकरगृहीतमोदकमण्डकादिका प्रसारितबाहुस्तिष्ठति, सा च तथास्थिता साधुसङ्घाटकं दृष्ट्वा करस्थितैर्मोदकादिभिस्तं निमन्त्रयते, स च करस्याधः पात्रकं धारयति, सा च भुजमचालयन्ती किञ्चिन्मुष्टिं शिथिलयति, ततो मण्डकादिकं पात्रके पततीति, इदं क्षेत्रविषयमाचीर्णं, गृहविषयमभ्याहृतमाचीर्णं पुनरित्थं भवति—पङ्क्तिस्थितानि त्रीणि गृहाणि सन्ति, तत्र च यदा साधुसङ्घाटको भिक्षां गृह्णाति तदा एकः साधुरेकत्र धर्मलाभिते गृह्यमाणभिक्षे गृहे उपयोगं ददानो भिक्षां गृह्णाति, पश्चाद्भागवर्ती द्वितीयसङ्घाटकस्तु धर्मलाभितगृहादितरयोर्गृहयोरानीयमानभिक्षयोरुपयोगं दायकहस्तादिविषयं ददातीति गृहत्रयादानीतमाचरितमशनादिकं, चतुर्थादेस्तु गृहान्नाचरितमिति ११ । 'उब्भिन्ने'त्ति उद्भेदनमुद्भिन्नं—साधुभ्यो घृतादिदाननिमित्तं कुतुपादेर्मुखस्य गोमयादिस्थगितस्योद्घाटनं, तद् द्विधा—पिहितोद्भिन्नं कपाटोद्भिन्नं च, तत्र यच्छगणकामितापितजतुसचित्तपृथिवीकायप्रभृतिभिः श्लेपद्रव्यैः पिहितद्वारं प्रतिदिनमपरिभोगं खण्डगुडादिभृतघटकुतुपकुशूलादिकं साधुदाननिमित्तमुद्घाट्य खण्डादिकं साधुभ्यो दीयते तद्दीयमानं खण्डादि पिहितोद्भिन्नं पिहितमुद्भिन्नं, यत्र तत्पिहितोद्भिन्नमिति व्युत्पत्तेः, यत्पुनः खण्डघृतगुडादियुक्तापवरकादेर्निश्चलनिभृतदत्त-

कपाटस्य प्रतिदिनमनुद्घाटितद्वारस्य साधुदाननिमित्तमुद्घाट्य कपाटानि गुडखण्डादि साधुभ्यो दीयते तत्कपाटोद्भिन्नं, व्युत्पत्तिः प्राग्वत्, दोषाश्चात्र षड्जीवनिकायविराधनादयः, तथाहि—कुतुपादिमुखाद् घृतादिकं साधवे दत्त्वा शेषस्य रक्षणार्थं भूयोऽपि कुतुपादिमुखं सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिम्पति, ततः पृथिवीकायविराधनाऽप्कायविराधना च, पृथिवीकायमध्ये च मुद्गादयः कीटिकादयश्च सम्भवन्ति ततस्तेषामपि विराधना, तथा कोऽप्यभिज्ञानार्थं जतु तापयित्वा कुतुपादिमुखस्योपरि जतुमुद्रां ददाति तदा तेजस्कायविराधनाऽपि, यत्राग्निस्तत्र वायुरिति वायुकायविराधना च, तथा कुतुपादिलेपननिमित्तं मृत्तिकादि गवेषयन् दाता कदाचिद् वृश्चिकादिना दश्यते पीड्यते चासौ, ततो जना वदन्ति—अहो महाप्रभावा एते यतयो येषां दानमात्रेऽपि दात्रा फलं झगित्येवंविधं प्राप्तमित्येवं लोके उपहासः, तथा प्रथमतः कुतुपादिमुखे साध्वर्थमुद्घाटिते सति पुत्रादिभ्यो घृतादिप्रदाने तथा क्रये विक्रये च पापप्रवृत्तिः, तथा तस्मिन् कुतुपादिमुखे पिधातुं विस्मृते मूषकादयो जीवा निपत्य विनश्यन्तीति, कपाटोद्भिन्नेऽप्येत एव दोषाः, तथाहि—यदा कपाटात्प्राक्कथमपि पृथिवीकायो जलभृतः करवको वा वीजपूरकादिकं वा मुक्तं भवति तदा तस्मिन्नुद्घाट्यमाने कपाटे तद्विराधना भवति, जलभृते च करवकादौ लुठ्यमाने भिद्यमाने वा पानीयं प्रसर्पन् प्रत्यासन्नचुल्ल्यादावपि प्रविशेत्, तथा च सत्यग्निविराधना, यत्राग्निस्तत्र वायुरिति वायुविराधना च, मूषिकादिविवरप्रविष्टकीटिकागृहगोधिकादिसत्त्वविनाशे त्रसकायविराधना च, तथैव च दानक्रयविक्रयेभ्योऽधिकरणप्रवृत्तिरिति, ततो द्विविधमप्युद्भिन्नं न ग्राह्यं, यदा तु कुतुपादीनां मुखबन्धः प्रतिदिवसं बध्यते छोट्यते च, तत्रापि यदि जतुमुद्राव्यतिरेकेण केवलवस्त्रमात्रग्रन्थिर्दीयते नापि च सचित्तपृथिवीकायादिलेपस्तदा तस्मिन् साध्वर्थमुद्भिन्नेऽपि यद्दीयते तत्साधुभिर्गृह्यते, तथा कपाटोद्भिन्नेऽपि यत्र प्रतिदिनमुद्घाट्यते कपाटमुद्घालकश्च भूमिघर्षकस्तथाविधो न भवति तत्रोद्घाटितेऽपि कपाटादावपवरकादिस्थितमशनादिकं कल्पते

एवेति १२। 'मालोहडे यँ'त्ति मालात्—सिक्ककादेरपहृतं—साध्वर्थमानीतं यन्मण्डकादि तन्मालापहृतं, तच्चतुर्भेदं—ऊर्द्ध्वमालापहृतमधोमालापहृतं उभयमालापहृतं तिर्यग्मालापहृतं च, तत्रोर्द्ध्वमालापहृतं जघन्योत्कृष्टमध्यमभेदात् त्रिविधं, तत्रोर्द्ध्वविलगितोच्चसिक्ककादेर्ग्रहीतुमशक्तत्वेनोत्पाटिताभ्यां पार्ष्णिभ्यां पादाधोभागरूपाग्रेतनफणाभ्यां च भूमिन्यस्ताभ्यां दात्र्या निजचक्षुषाऽदृष्टं यद् गृहीतमशनादि तत्पार्ष्ण्युत्पाटनमात्रस्तोकक्रियागृहीतत्वाज्जघन्यमूर्ध्वमालापहृतं, यच्च निश्रेण्यादिकमारुह्य प्रासादोपरितलाद्दात्र्या गृहीतं तन्निश्रेण्यारोहणादिगुरुक्रियागृहीतत्वादुत्कृष्टं मालापहृतं, अनयोर्मध्यवर्ति मध्यममिति, तथा साध्वर्थं भूमिगृहादौ प्रविश्य तत्र स्थितं भक्तादिकं यदानीय ददाति तदधोवर्तिभूमिगृहादेरपहृतमितिकृत्वाऽधोमालापहृतं, तथोष्ट्रिकाकलशमञ्जूषाकोष्ठकादिस्थितं किञ्चिदसकष्टं यद्दात्री ददाति तदुभयस्मादूर्द्ध्वाधोगतव्यापारादुष्ट्रिकाकलशमंजूषाकुम्भ्यादेरपहृतमितिकृत्वोभयमालापहृतं, तथाहि—गृहत्तरोच्चैस्तरकुम्भ्यादिमध्यस्थितस्य देयस्य ग्रहणाय येन दाता पार्ष्ण्युत्पाटनं करोति तेनोर्द्ध्वाश्रितव्यापारता, येन त्वधोमुखं बाहुं व्यापारयतीति तेनाधोगतव्यापारता, यदा च पृथुलभित्त्यादिस्थिते स्कंधसमोच्चप्रदेशप्राये दीर्घगवाक्षादौ तिर्यक्प्रसारितबाहुः क्षिप्तेन हस्तेन गृहीत्वा यद्देयं प्रायेण दृष्टाऽदृष्टं दाता दत्ते तदा तत्तिर्यग्मालापहृतं, तिर्यग्मालाद्—भित्त्यादिस्थितगवाक्षादिरूपादपहृतमितिकृत्वा, न चेदमत्र वक्तव्यं—मालाशब्देनोच्चप्रदेश एवाभिधीयते तत्कथं भूमिगृहादीनामधोभूमिस्थितानां मालशब्दाभिधेयत्वमिति ?, यतो लोकरूढ्या उच्चैःप्रदेशवाचको नात्र मालशब्दो गृह्यते, किन्तु समयप्रसिद्ध्या, समये च भूमिगृहादिकमपि मालशब्देनाभिधीयत इति, दोषाश्चात्र मञ्चकमञ्चिकोदूखलादिष्वारुह्य पार्ष्णी चोत्पाट्य उर्द्ध्वविलगितसिक्ककादिस्थितमोदकादिग्रहणे कथमपि यदि मञ्चकादिल्हसनतो दात्री निपतति तदा तदधःस्थितानां पिपीलिकादीनां पृथिव्यादिकायादीनां च विनाशः दात्र्याश्च हस्तादिभङ्गः, यदिवा विसंस्थुलपतनतः कथमप्यस्थानाभिघातसम्भवात् प्राणव्यपरोपणमपि, तथा प्रवचनस्यो-

ड्डाहो यथा साध्वर्थमेषा भिक्षामाहरन्ती परासुरभूत् तस्मान्नामी साधवः कल्याणकारिणः, एवंविधमपि दात्र्या अनर्थमेते न जानन्तीत्येवं लोकमध्ये मूर्खताप्रवादश्चेत्येवमादयः, तस्मान्मालापहृतं साधुभिर्न ग्राह्यं, यत्पुनर्दर्दरसोपानादीनि सुखावताराण्यारुह्य ददाति तन्मालापहृतं न भवति, केवलं साधुरप्येषणाशुद्धिनिमित्तं प्रासादस्योपरि दर्दरादिना चटति, अपवादेन भूयोऽप्यानीतं गृह्णातीति १३। 'अच्छिज्जे'त्ति आच्छिद्यते—अनिच्छतोऽपि भृतकपुत्रादेः सकाशात् साधुदानाय परिगृह्यते यत्तदाच्छेद्यं, तत् त्रिविधं—स्वामिविषयं प्रभुविषयं स्तेनविषयं च, तत्र ग्रामादिनायकः स्वामी स्वगृहमात्रनायकः प्रभुः स्तेनः—चौरः, ततो ग्रामादिस्वामी यतीन् दृष्ट्वा भद्रकतया कलहेनाकलहेन वा बलादपि साधुनिमित्तं कौटुम्बिकेभ्यः सकाशादशनाद्याच्छिद्य यतिभ्यो यद्ददाति तत् स्वामिविषयमाच्छेद्यं, तथा यद्गोरक्षककर्मकरपुत्रपुत्रिकावधूभार्यादिसत्कमेतेभ्योऽनिच्छद्भ्योऽपि सकाशाद् गृहीत्वा गृहनायकः साधुभ्यो दुग्धादिकं दद्यात्तत्प्रभुविषयमाच्छेद्यं, तथा स्तेना अपि केचित् संयतान् प्रति भद्रका भवन्ति, ततस्ते मार्गे आगच्छन्तः कदाचित्तथाविधसार्थेन सार्धमागतान् भोजनार्थं कृतावस्थितेः सार्थस्य मध्ये भिक्षामटतः परिपूर्णान्नमप्राप्नुवतश्च संयतान् दृष्ट्वा तन्निमित्तमात्मनो वाऽर्थाय सार्थिकेभ्यो बलादाच्छिद्य पाथेयादि यदि साधुभ्यो दद्युस्तत् स्तेनविषयमाच्छेद्यं, एतत् त्रिविधमपि आच्छेद्यं साधूनां न कल्पते, अप्रीतिकलहात्मघातान्तरायप्रद्वेषाद्यनेकदोषसम्भवात्, केवलं स्तेनाच्छेद्येऽयं विशेषः—यथा येषां सम्बन्धि भक्तादि बलादाच्छिद्य चौराः साधुभ्यः प्रयच्छन्ति, त एव सार्थिका यदि स्तेनैर्बलाद्दाप्यमाना एवं ब्रुवते—अस्माकमवश्यं चौरैर्गृहीतव्यं, ततो यदि चौरा अपि यदि युष्मभ्यं दापयन्ति तदा महानस्माकं सन्तोष इति, तत एवं सार्थिकैरनुज्ञाताः साधवो दीयमानं गृह्णन्ति, पश्चाच्चौरेष्वपगतेषु भूयोऽपि तद् द्रव्यं गृहीतं तेभ्यः समर्पयन्ति, यथा तदानीं चौरप्रतिभयादस्माभिर्गृहीतं सम्प्रति ते गतास्तत एतदात्मीयं द्रव्यं यूयं गृह्णीयेति, एवं चोक्ते सति यदि तेऽपि समनुजानते यथा युष्मभ्य-

मेव सदस्माभिर्दत्तमिति तर्हि भुञ्जते कल्पनीयत्वादिति १४। 'अणिसिट्ठे'त्ति न निसृष्टं—सर्वैः स्वामिभिः साधुदानार्थमनुज्ञातं यत्तदनि-
सृष्टं, तत् त्रिधा—साधारणानिसृष्टं चोल्लकानिसृष्टं जड्डानिसृष्टं च, तत्र साधारणं—बहुजनसामान्यं चोल्लकं—स्वामिना पदातिभ्यः प्रसादी-
क्रियमाणं कौटुम्बिकेन वा क्षेत्रादिस्थितकर्मकरेभ्यो दीयमानं देशीभाषया भक्तमुच्यते जड्डो—हस्ती तैरनिसृष्टं—अननुज्ञातं न कल्पते साधूनां,
तत्र साधारणानिसृष्टं च यच्चहट्टगृहादिस्थिततिलकुट्टितैलवस्त्रलड्डुकदध्यादिदेयवस्तुभेदेनानेकवस्तुविषयं, तत्र घाणकादियन्त्रे तिलकुट्टितै-
लादिकं हट्टे वस्त्रादिकं गृहेऽशनादिकं बहुजनसाधारणं च सर्वैः स्वामिभिरननुज्ञातं यदेकः कश्चित्साधुभ्यः प्रयच्छति तत् साधारणा-
निसृष्टं, तथा चोल्लको द्विविधः—छिन्नोऽच्छिन्नश्च, तत्र कोऽपि कौटुम्बिकः क्षेत्रगतहालिकानां कस्यापि पार्श्वे कृत्वा भोजनं प्रस्थापयति,
स यदा एकैकहालिकयोग्यं पृथग्पृथग्भाजने कृत्वा प्रस्थापयति तदा स चोल्लकश्छिन्नः, यदा तु सर्वेषामपि हालिकानां योग्यमेकस्यामेव
स्थाल्यां कृत्वा प्रेषयति तदा सोऽच्छिन्नः, तत्र यश्चोल्लको यस्य निमित्तं छिन्नः स तेन दीयमानो मूलस्वामिना कौटुम्बिकेन दृष्टोऽदृष्टो वा
साधूनां कल्पते, तेन छेदनेन तस्य स्वकीयीकृतस्य दत्तत्वात्, अच्छिन्नोऽपि कौटुम्बिकेन येषां हालिकानां योग्यः स चोल्लकस्तैश्च सा-
धुभ्यो दानायानुज्ञातो दृष्टोऽदृष्टो वा कल्पते, तैः पुनरननुज्ञातोऽन्यतरेणानुज्ञातो वा न कल्पत एव, प्रद्वेषान्तरायपरस्परकलहादिदोष-
सम्भवात्, तथा जड्डानिसृष्टं हस्तिनो भक्तं मेण्ठेनानुज्ञातमपि राज्ञा हस्तिना चाननुज्ञातत्वान्न कल्पते, हस्तिनो हि भक्तं राज्ञः सम्बन्धि,
ततो राजाननुज्ञातस्य ग्रहणे ग्रहणाकर्षणवेपोद्दालनादयो दोषा भवेयुः, तथा मदीयाज्ञामन्तरेणैष साधवे पिण्डं ददातीति रुष्टः सन् राजा
कदाचिन्मेण्ठं स्वाधिकाराद्भ्रंशयति, ततस्तस्य वृत्तिच्छेदः साधुनिमित्त इति साधोरन्तरायदोषः राजाननुज्ञातत्वाददत्तादानदोषश्च, तथा
गजस्य पश्यतो मेण्ठस्यापि सत्कं न गृह्णीयात्, गजो हि सचेतनः ततो मदीयकवलमध्यादनेन मुण्डेन पिण्डो गृह्यते इत्येवं कदाचिद् रुष्टः

सन् यथायोगं मार्गे परिभ्रमन्नुपाश्रये तं साधुं दृष्ट्वा तमुपाश्रयं स्फोटयेत् साधुं च कथमपि प्राप्य मारयेदिति १५ । 'अज्झोयरए य'त्ति अधि—आधिक्येनावपूरणं—स्वार्थदत्ताधिश्रयणादेः साध्वागमनमवगम्य तद्योग्यभक्तसिद्ध्यर्थं प्राचुर्येण भरणमध्यवपूरः स एव स्वार्थिककप्रत्ययविधानादध्यवपूरकः तद्योगाद्भक्ताद्यप्यध्यवपूरकः, स च त्रिधा—स्वगृहयावदर्थिकमिश्रः स्वगृहसाधुमिश्रः स्वगृहपाखण्डिमिश्रश्च, स्वगृहश्रमणमिश्रस्तु स्वगृहपाखण्डिमिश्रे अन्तर्भावित इति पृथङ् नोक्तः, तत्र यावदर्थिकाद्यागमनात्प्रथममेवाग्निसन्धुक्षणस्थालीजलप्रक्षेपादिरूपे आरम्भे स्वार्थं निष्पादिते पश्चाद्यथासम्भवं त्रयाणां यावदर्थिकादीनामर्थायाधिकतरान् तण्डुलादीन् प्रक्षिपति एषोऽध्यवपूरकः, अत एवास्य मिश्रजाताद्भेदः, यतो मिश्रजातं तदुच्यते यत्प्रथमत एव यावदर्थिकाद्यर्थमात्मार्थं च मिश्रं निष्पाद्यते, यत्पुनः प्रथमत आरभ्यते स्वार्थं पश्चात्प्रभूतान् यावदर्थिनः पाखण्डिनः साधून् वा समागतानवगम्य तेषामर्थायाधिकतरजलतण्डुलादि प्रक्षिप्यते सोऽध्यवपूरक इति, अत्र च स्वगृहयावदर्थिकमिश्रे अध्यवपूरके शुद्धभक्तमध्ये यावन्तः कणाः कार्पटिकाद्यर्थं पश्चात्क्षिप्तास्तावन्मात्रे स्थाल्याः पृथक्कृते कार्पटिकेभ्यो वा दत्ते सति शेषमुद्धरितं यद्भक्तं तत्साधूनां कल्पते, अत एव चायं विशोधिकोटिर्वक्ष्यते, तथा स्वगृहपाखण्डिमिश्रे स्वगृहसाधुमिश्रे च शुद्धभक्तमध्यपतिते यदि तावन्मात्रं स्थाल्याः पृथक्कृतं दत्तं वा पाखण्ड्यादिभ्यस्तथापि शेषं न कल्पते, यतः सकलमपि तद्भक्तं पूतिदोषदुष्टं भवतीति १६ । उक्ताः षोडश उद्गमदोषाः; अथ उत्पादनादोषानाह—

**धाई १ दूई २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा ६ य । कोहे ७ माणे ८ माया ९ लोभे १० य हवंति दस एए ॥ ५६७ ॥ पुव्विं पच्छा संथव ११ विज्जा १२ मंते १३ य चुण्ण १४ जोगे १५ य । उप्पायणाय दोसा सोलसमे मूलकम्मे १६ य ॥ ५६८ ॥**

'धाई'त्यादिगाथाद्वयं, तत्र धयन्ति—पिबन्ति बालकास्तामिति धीयते—धार्यते बालानां दुग्धपानाद्यर्थमिति वा धात्री—बालपालिका, सा च पञ्चधा—क्षीरधात्री मज्जनकधात्री मण्डनधात्री क्रीडनधात्री उत्सङ्गधात्री च, इह धात्रीत्वस्य यत्करणं कारणं वा तद्धात्रीशब्देनोक्तं द्रष्टव्यं, तथाविवक्षणात्, ततो धात्र्याः पिण्डो धात्रीपिण्डः, धात्रीत्वस्य करणेन कारणेन च य उत्पाद्यते पिण्डः स धात्रीपिण्ड इत्यर्थः, एवं दूत्यादिष्वपि भावनीयं, इयमत्र भावना—कश्चित्साधुर्भिक्षार्थं पूर्वपरिचितगृहे प्रविष्टो रुदन्तं बालकं विलोक्य तन्मातरमाह—यथाऽयं हि बालकोऽद्यापि क्षीराहारः, ततः क्षीरमन्तरेणावसीदन् रोदिति, तस्मान्मह्यं शीघ्रं भिक्षां देहि पश्चादेनं बालकं स्तन्यं पायय यद्वा प्रथमत एनं स्तन्यं पायय पश्चान्मह्यं भिक्षां देहि यदिवा अलं मे सम्प्रति भिक्षया पायय स्तन्यं बालकमेव पुनरप्यहमन्यगृहे गत्वाऽत्र समेष्यामि यद्वा तिष्ठ त्वं निराकुला अहमेवास्मै कुतोऽप्यानीय क्षीरं दास्यामि, एवं स्वयं धात्रीत्वं करोति, तथा मतिमान् रोगरहितो दीर्घायुश्च बालः स्तन्यं पायितः स्यात्, अपमानितस्तु विपरीतः, तथा दुर्लभं खलु लोके पुत्रमुखदर्शनं, तस्मात्सर्वाण्यन्यानि कर्माणि मुक्त्वा त्वमेनं बालकं स्तन्यं पाययेति, एवं च क्रियमाणे बहवो दोषा भवेयुः, तथाहि—बालकमाता भद्रकत्वादावर्जितमानसा सत्याधाकर्मादिकं कुर्यात्, तथा बालकस्वजनोऽन्यो वा प्रातिवेश्मिकादिर्बालकमात्रादिना सह सम्बन्धं साधोः सम्भावयेच्चाटुकरणदर्शनात्, यदि च प्रान्ता बालजननी भवेत्तदा प्रद्वेषं व्रजेत्, अहो प्रव्रजितस्यास्य महती परकीया तप्तिः, तथा वेदनीयकर्मविपाकवशात्कदाचिद्बालकस्य ज्वरादिमान्द्ये सञ्जाते त्वया मदीयपुत्रो ग्लानीकृत इत्यादि साधुना सह कलहकरणात्प्रवचनमालिन्यं स्यादिति, अथवा कस्यापीश्वरस्य गेहे बालधापनपरां धात्रीं स्वबुद्धिप्रपञ्चेनोत्सार्यान्यां तत्र स्थापयन् धात्रीत्वलक्षणं दोषमासादयति, तथाहि—भिक्षाचर्यायां प्रविष्टः कश्चित्साधुः कचिद्गेहे महिलां काञ्चित् सशोकामवलोक्य पप्रच्छ—किं त्वमद्याधृतिपरा दृश्यसे?, सा प्राह—धार्मिक यते! दुःखं दुःखसहा-

मुनिराह—मां मुक्त्वा कोऽन्यस्तथा-
यस्यैव कथ्यते, यतिराह—को दुःखसहायो भण्यते ?, सा प्राह—यः कथितदुःखप्रतीकारं कुरुते, मुनिराह—मां मुक्त्वा कोऽन्यस्तथा-
भूतः ?, सा प्राह—भगवंस्तर्हि स्फेटितमपरधात्र्या अमुकस्मिन् गृहे मम धात्रीत्वं तेनाहं विषण्णेति, ततः साधुरुत्पन्नाभिमानो यावत्त्वां
न तत्र तथा स्थापयामि न तावत्त्वदीयां मिक्षां गृह्णामीत्यभिधाय स्फेटयितुमिष्टाया धात्र्या अदृष्टत्वात् तत्स्वरूपमजानानस्तस्या एव पार्श्वे
पृच्छति—सा किं तरुणी मध्यमा वृद्धा वा ? प्रतनुस्तनी स्थूलस्तनी कूर्परस्तनी वा ? मांसला कृशा वा ? कृष्णा गौरी वेत्यादि, पृष्ट्वा च
तत्रेश्वरगृहे गतः सन् तं बालकमालोक्य गृहस्वाम्यादिसमक्षं धात्रीदोषान् ब्रूते, यथा वृद्धा धात्री अवलस्तन्या स्यात् तां धयन् बालोऽ-
ऽप्यबलः सम्पद्यते, कृशा च धात्री स्तोकस्तन्या भवेत् तां धयन् शिशुरपि परिपूर्णस्तन्याभावात् सीदन् कृश एव भवति, स्थूलस्तन्याः
स्तन्यं धयन् कोमलाङ्गत्वात् कुचचम्पितवक्त्रघ्राणः सन् चिपिटघ्राणः स्यात्, कूर्पराकारस्तनीं च धयन् बालः सर्वदैव स्तनाभिमुखदी-
र्घीकृतमुखतया सूचीसदृशवदनः स्यात्, उक्तं च—"निःस्यामा स्थविरां धात्रीं, सूच्यास्यः कूर्परस्तनीम् । चिपिटः स्थूलवक्षोजां, धयं-
स्तन्वीं कृशो भवेत् ॥ १ ॥ जाड्यं भवति स्थूलायास्तनुक्यास्त्वबलङ्करम् । तस्मान्मध्यबलस्थायाः, स्तन्यं पुष्टिकरं स्मृतम् ॥ २ ॥"
तथा अभिनवस्थापिता धात्री येन वर्णेन कृष्णादिना उत्कटा भवति तेन वर्णेन तां निन्दति, यथा—"कृष्णा भ्रंशयते वर्णं, गौरी तु
बलवर्जिता । ततः श्यामा भवेद्धात्री, वलवर्णैः प्रशंसिता ॥ १ ॥" इत्यादि, एतद् गृहस्वामी श्रुत्वा स्थविरत्वादिस्वरूपां च वर्तमानधात्रीं
परिभाव्य स्फेटयति साधुसम्मतां च धात्रीं करोति, सा च प्रमुदिता तस्मै साधवे मनोज्ञां विपुलां भिक्षां प्रयच्छतीति धात्रीपिण्डः, अत्र
च बहवो दोषाः, तथाहि—या स्फेटिता धात्री सा विद्वेषं याति, तथा सति साधुरयमनया सह स्वेच्छमास्ते इत्यालं ददाति, अतिद्विष्टा
च सती विषादिदानतः कदाचिन्मारयत्यपीति, याऽपि चिरन्तनीं स्फेटयित्वा संप्रति स्थापिता साऽपि कदाचिदेवं चिन्तयति, यथाऽह-

मनेनामेतन्नीं स्फेटयित्वा धात्री कृता तथाऽन्यया कदाचिदभ्यर्थितो मामपि धात्रीत्वात् स्फेटयिष्यति ततस्तथा करोमि यथाऽयमेव न भवतीति विचिन्त्य विपादिप्रयोगेण मारयेदिति, एवं मज्जनधात्रीत्वकारणे स्वयं वा करणे मण्डनधात्रीत्वकारणे स्वयंकरणे वा क्रीडनकधात्रीत्वकारणे स्वयंकरणे वा अङ्कधात्रीत्वकारणे स्वयंकरणे वा दोषाः परिभाव्य भणनीया इति १ ॥ 'दूइ'त्ति दूती—परस्परसंदिष्टार्थकथिका, ततो दूतीत्वकरणेन—परस्परसन्दिष्टार्थकथनेन यः पिण्ड उपार्ज्यते यतिना स दूतीपिण्डः, सा च दूती द्विधा—स्वग्रामे परग्रामे च, तत्र यस्मिन् ग्रामे साधुर्वसति तस्मिन्नेव ग्रामे यदि सन्देशं कथयति तदा स्वग्रामदूती, यदा तु परग्रामे गत्वा सन्देशं कथयति तदा परग्रामदूती, एकैकाऽपि च द्विधा—प्रकटा प्रच्छन्ना च, प्रच्छन्ना पुनरपि द्विधा—एका लोकोत्तरविषया, द्वितीयसङ्घाटकसाधोरपि गुप्तेत्यर्थः, द्वितीया पुनर्लोकलोकोत्तरविषया, पार्श्ववर्तिनो जनस्य सङ्घाटकद्वितीयसाधोरपि च गुप्तेति भावः, तत्र कश्चित्साधुर्भिक्षाकृते व्रजन् विशेषतस्तल्लाभार्थं तस्यैव ग्रामस्य सम्बन्धिनः पाटकान्तरे ग्रामान्तरे वा जनन्यादेः सत्कं पुत्रिकादेरग्रतो गत्वा सन्देशकं कथयति यथा सा तव माता स तव पिता वा स भ्रात्रादिर्वा त्वयाऽत्रागन्तव्यमित्यादि त्वत्सम्मुखं वदतीत्येवं स्वपक्षपरपक्षयोः शृण्वतोर्निःशङ्कं कथनात् प्रकटं स्वग्रामपरग्रामविषयं दूतीत्वं, तथा कश्चिद्यतिः कयाचिद् दुहित्रा मात्रादिकं प्रति स्वग्रामे परग्रामे वा सन्देशकथनायाभ्यर्थितः, ततस्तत्सन्देशकमवधार्य तज्जनन्यादिपार्श्वे गतः सन्नेवं चिन्तयति—दूतीत्वं खलु गर्हितं सावद्यत्वात्, ततो द्वितीयसङ्घाटकसाधुर्मा मां दूतीदोषदुष्टं ज्ञासीदित्येवमर्थं भङ्ग्यन्तरेणेदं भणति—यथा श्राविके! अतिमुग्धा सा तव दुहिता यैवं सावद्ययोगरहितानस्मान् प्रति वदति—यथेदं प्रयोजनं मदीयागमनादिकं मम मातुस्त्वया कथनीयमिति, साऽपि दक्षतयाऽभिप्रायं ज्ञात्वा द्वितीयसङ्घाटकसाधुचित्तरक्षणार्थं प्रतिभणति—यथा वारयिष्येऽहं तां तवाभिमुखं पुनरेवं वदन्तीमित्येवं सङ्घाटकसाधोरिदं गोपायितुमिष्टं

न लोकस्येति लोकोत्तरप्रच्छन्नं स्वग्रामपरग्रामविषयं दूतीत्वं, उभयप्रच्छन्नं पुनरेवं—काचित् श्राविका साधुं प्रति वदति—यथा मज्जनन्य(?)देस्त्वमेवं कथयेः—तत्कार्यं तव प्रतीतं यथा त्वं जानासि तथैव सम्पन्नमिति, इह च साधुसङ्घाटकस्य शेषलोकानां च सन्देशार्थोनवगमादुभयप्रच्छन्नत्वं, दोषाश्च सर्वत्र गृहस्थव्यापारणादिना जीवोपमर्दोदयः २ ॥ 'निमित्त'न्ति निमित्तं—अतीताद्यर्थपरिज्ञानहेतुः शुभाशुभचेष्टादि तद्धेतुकं ज्ञानमपि उपचारान्निमित्तं तत्करणेन पिण्डो निमित्तपिण्डः, अयमर्थः—कश्चिद् व्रती पिण्डादिलाभनिमित्तं गृहिणामग्रतो निमित्तं कथयति, यथाऽतीते दिने तवेदं सुखदुःखादिकं जातं तथा भाविनि कालेऽमुकस्मिन् दिने तव राजादेः सत्कः प्रसादो भविष्यति, सम्प्रति चाद्यैव दिने तवेदमिदं च भविष्यतीति, तेऽपि च गृहस्था लाभालाभसुखदुःखजीवितमरणादिविषयं निमित्तं पृष्टमपृष्टं वा धृष्टेन तेन कथ्यमानं श्रुत्वा आवर्जितमानसास्तस्मै मुनये मोदकादिकां विशिष्टां विपुलां च भिक्षां यत्प्रयच्छन्ति स निमित्तपिण्डा उच्यते, न चायं यतीनां कल्पते, आत्मपरोभयविषयाणां वधादिदोषाणामनेकेषामत्र सम्भवादिति ३ ॥ 'आजीवि'त्ति आजीवनमाजीवो जीविकेत्यर्थः, स पञ्चविधो—जातिविषयः कुलविषयो गणविषयः कर्मविषयः शिल्पविषयश्च, एकैकोऽपि च द्विधा—सूचयाऽसूचया च, सूचया—वचनभङ्गविशेषेण कथनं असूचया तु स्फुटवचनेनेति, तत्र साधुः सूचया असूचया च स्वजातिप्रकटनात्त जातिमुपजीवति, यथा कश्चिद्भिक्षार्थमटन् ब्राह्मणगेहं प्रविवेश, तत्र च ब्राह्मणसुतं होमादिक्रियां सम्यक्कुर्वाणं वीक्ष्य तज्जनकाभिमुखं स्वजातिप्रकटनाय जल्पति—यथा समिन्मन्त्राहुतिस्थानयागकालघोषादीनाश्रित्य सम्यगसम्यग्वा क्रिया भवेत्, तत्र पिप्पलादीनामार्द्रप्रतिशाखादिखण्डरूपाः समिधः मन्त्राः—प्रणवादिका वर्णपद्धतयः आहुतिः—अग्नौ घृतादेः प्रक्षेपः स्थानं—उत्कटुकादिः यागः—अश्वमेधादिः कालः—प्रभातादिः उदात्तानुदात्तादयश्च घोषा यत्र यथावत्प्रयुज्यन्ते सा सम्यक्क्रिया, यत्र च समिधादयो न्यूनतयाऽधिक-

तया विपर्ययेण वा प्रयुज्यन्ते सा न सम्यक्क्रियेति, अयमपि च त्वत्पुत्रः सम्यग्होमादिक्रियाकरणाद् ज्ञायते यथा श्रोत्रियस्य पुत्र इति, यदिवा वेदादिशास्त्रपारगस्य कस्यचिदुपाध्यायस्य पार्श्वे सम्यक् पठित इति, तत एवमुक्ते स ब्राह्मणो वदति—साधो! त्वमवश्यं ब्राह्मणो येनेत्थं होमादीनामवितथत्वं जानासि, साधुश्च मौनेनावतिष्ठते, एतच्च सूचया स्वजातिप्रकटनं, असूचया तु जात्याजीवनं पृष्टोऽपृष्टो वा आहाराद्यर्थं स्वजातिं प्रकटयति यथाऽहं ब्राह्मण इति, अत्र चानेके दोषाः, तथाहि—यदि स ब्राह्मणो भद्रकस्तर्हि स्वजातिपक्षपातात्प्रभूतमाहारादिकं तन्निमित्तं पक्त्वा ददाति तत आधाकर्मदोषः, अथ प्रान्तस्तर्हि भ्रष्टोऽयं पापात्मा ब्राह्मण्यं परित्यक्तवानिति विचिन्त्य स्वगृहान्निष्काशनादि करोति, एवं क्षत्रियादिजातिष्वपि, एवं कुलादिष्वपि भवनीयमिति ४॥ 'वणीमगे'त्ति 'वनु याचने' वनुते प्रायो दायकाभिमतेषु श्रमणादिष्वात्मानं भक्तं दर्शयित्वा पिण्डं याचते इति वनीपकः, कश्चिद्यतिर्निर्ग्रन्थशाक्यतापसपरिव्राजकाजीवकद्विजप्राघूर्णकश्वानकाकशुकादिभक्तानां गृहिणां गृहे भिक्षां भ्रमन् प्रविष्टः, ततस्तेषां पुरतोऽशनादिलाभार्थं निर्ग्रन्थादिगुणवर्णनेनात्मानं तद्भक्तं दर्शयति, तथाहि—स कदाचित्प्रविष्टो निर्ग्रन्थभक्तश्रावकगृहे निर्ग्रन्थानाश्रित्य वदति, यथा भोः श्रावककुलतिलक! तवैते गुरवः सातिशयज्ञानादिविभूषिता बहुश्रुताः शुद्धक्रियानुष्ठानपालनपरा विशदसामाचारीसमाचरणचमत्कृतचतुरधार्मिकजनमनसः शिवनगरमार्गसार्थवाहा इत्यादि, तथा शाक्योपासकगेहे प्रविष्टः शाक्यान् भुञ्जानानवलोक्य तदुपासकानां पुरतस्तत्प्रशंसां कुरुते, यथा अहो महानुभावाः शाक्यशिष्याश्चित्रलिखिता इव निश्चलाः प्रशान्तचित्तवृत्तयो भुञ्जते, महात्मनामित्थमेव भोक्तुं युक्तं, दयालवो दानशीलाश्चैते इत्यादि, एवं तापसपरिव्राजकाजीवकद्विजानप्याश्रित्य तद्गुणतद्दानप्रशंसाकरणेन वनीपकत्वं विज्ञेयं, तथाऽतिथिभक्तानां पुरत एवं वदति—इह प्रायेण लोकः परिचितेषु यद्वाऽऽश्रितेषु उपकारिषु वा ददाति, यः पुनरध्वखिन्नमतिथिं पूजयति तस्यैव दानं

जगति प्रधानमिति, श्वानभक्तांस्तु प्रति—नैते श्वानः श्वान एव किन्तु कैलाशपर्वतादागत्य यक्षा एव श्वानरूपेण पृथिव्यां सञ्चरन्ति, तत एतेषां पूजा महते हिताय भवतीति, एवं काकादिष्वपि भावनीयं, तदित्थं वनीपकत्वकरणेनोत्पादितः पिण्डो वनीपकपिण्डः, बहुदोषश्चायं, यतो धार्मिकेऽधार्मिके वा पात्रे दानं दत्तं निष्फलं न भवतीत्येवमप्युक्तेऽपात्रदानस्य पात्रदानसमतया प्रशंसनेन सम्यक्त्वातीचारः स्यात्, किं पुनः कुपात्रानेव शाक्यादीन् साक्षात्प्रशंसतः?, उक्तं च—दाणं न होइ अफलं पत्तमपत्तेसु संनिजुज्जंतं। इय भणिएऽवि य दोसो पसंसओ किं पुण अपत्ते? ॥ १ ॥" [ दानं न भवत्यफलं पात्रेष्वपात्रेषु च सन्नियोज्यमानं। इति भणितेऽपि दोषः प्रशंसतः किं पुनरपात्राणि ॥ १ ॥ ] एवं हि शाक्यादिप्रशंसने लोके मिथ्यात्वं स्थिरीकृतं भवति, तथाहि—साधवोऽप्यमून् प्रशंसन्ति तस्मादेतेषां धर्मः सत्य इति, तथा यदि ते शाक्यादिभक्ता भद्रका भवेयुस्तत इत्थं साधुप्रशंसामुपलभ्य तद्योग्यमाधाकर्मादि समाचरेयुः, ततस्तल्लुब्धतया कदाचित् शाक्यादिव्रतं प्रतिपद्येरन्, तथा लोके चाटुकारिण एते जन्मान्तरेऽप्यदत्तदाना आहाराद्यर्थं श्वान इवात्मानं दर्शयन्तीत्यवर्णवादः, अथ प्रत्यनीकास्तर्हि गृहनिष्काशनादि कुर्युः, तथा सर्वसावद्यनिरतानां तेषां प्रशंसने मृषावादप्राणातिपातादयोऽपि चानुमोदिताः स्युरिति ५ ॥ 'चिकिच्छे'त्ति चिकित्सनं चिकित्सा—रोगप्रतीकारः रोगप्रतीकारोपदेशो वा, सा द्विविधा—सूक्ष्मा बादरा च, तत्र सूक्ष्मा औषधवैद्यज्ञापनेन, बादरा स्वयं चिकित्साकरणेन अन्यस्मात्कारणेन वा, तत्र कश्चिज्ज्वरादिरोगाक्रान्तो गृही भिक्षाद्यर्थं गृहे साधुं प्रविष्टं दृष्ट्वा पृच्छति—भगवन्नेतस्य मदीयस्य व्याधेर्जानीषे कमपि प्रतीकारमिति, स प्राह—भोः श्रावक! यादृशस्तवायं रोगस्तादृशो ममाप्येकदा सञ्जात आसीत्, स चामुकेनौषधेन ममोपशमं गत इति, एवं च अज्ञस्य गृहस्थस्य रोगिणो भैषज्यकरणाभिप्रायोत्पादनादौषधसूचनं कृतं, अथवा रोगिणा चिकित्सां पृष्टो वदति—किमहं वैद्यो! येन रोगप्रतीकारं जाने इति, एवं

चोक्ते रोगिणोऽनभिज्ञस्य सतोऽस्मिन् विषये वैद्यं पृच्छेति सूचनं कृतमिति सूक्ष्मा चिकित्सा, यदा तु स्वयं वैद्यीभूय साक्षादेव वमनविरेचनकाथादिकं करोति कारयति वाऽन्यस्मात्तदा बादरा चिकित्सेति, एवमुपकृतो हि प्रमुदितो गृही मम भिक्षां प्रकृष्टां दास्यतीति यतिरिमां द्विविधामपि कुरुते, न चैवं तुच्छपिण्डकृते व्रतिनां कर्तुमुचितमनेकदोषसम्भवात्, तथाहि—चिकित्साकरणकाले कन्दफलमूलादिजीववधेन काथकथनादिपापव्यापारकरणादसंयमो भवेत् तस्य, तथा नीरुक्कृतो गृहस्थस्तप्तायोगोलकसमानः प्रगुणीकृतदुर्बलान्धव्याघ्रवद् अनेकजीवघातं कुर्यात्, तथा यदि दैवदुर्योगात्साधुना चिकित्स्यमानस्यापि रोगिणो व्याधेराधिक्यं जायते तदा कुपितस्तत्पुत्रादिराकृष्य राजकुलादौ ग्राहयेत्, तथाऽऽहारादिलुब्धा एते इत्थमित्थं च वैद्यकादि कुर्वन्तीति प्रवचनमालिन्यं स्यादिति ६ ॥ 'कोहे'त्ति क्रोधः—कोपः तद्धेतुकः पिण्डः क्रोधपिण्डः, किमुक्तं भवति?—कस्यचित्साधोः सम्बन्धिनमुच्चाटनमारणादिकं विद्याप्रभावं शापदानादिकं तपःप्रभावं सहस्रयोधित्वादिकं बलं राजकुले वल्लभत्वं वा ज्ञात्वा यद्वा शापदानेन कस्यचिन्मारणाद्यनर्थरूपं कोपफलं साक्षादेव दृष्ट्वा भयाद् गृहस्थेन यत्तस्मै दीयते स क्रोधपिण्डः, अथवा अन्येभ्यो ब्राह्मणादिभ्यो दीयमाने याचमानोऽपि साधुर्यदा न लभते तदाऽलब्धिमान् सन् कुप्येत, कुपिते च सति तस्मिन् 'साधुः कुपितो भव्यो न भवती'ति यद्दीयते स क्रोधपिण्ड इति, अत्र च सर्वत्र कोप एव पिण्डोत्पादने मुख्यं कारणं द्रष्टव्यं, विद्यातपःप्रभृतीनि तु तत्सहकारिकारणान्येवेति न विद्यापिण्डादिभिः सहास्य लक्षणसाङ्कर्यमाशङ्कनीयं ७ ॥ 'माणे'त्ति मानो—गर्वस्तद्धेतुकः पिण्डो मानपिण्डः, अयमर्थः—कश्चिद्यतिः कैश्चिदपरैः साधुभिस्त्वं लब्धिमान् ज्ञास्यसे यद्यस्मानिदमिदं च भोजयिष्यसीत्यादिवचनैरुत्तेजितो न किमपि त्वया सिद्ध्यतीत्येवमपमानितो वा गर्वाध्मातचेताः अथवाऽऽत्मनो लब्धिप्रशंसादिकमपरैर्विरच्यमानमाकर्ण्य यत्र कुत्राप्यहं व्रजामि तत्र सर्वथाऽपि लभे तथैव च जनो मां प्रशंसतीत्येवं प्रवर्धमानाभिमा-

नमानसः कस्यापि गृहिणः पार्श्वे गत्वा तं गृहिणं तैस्तैर्वचनजातैर्दानविषयेऽभिमाने चटापयति, स च गृही तथाऽभिमानपरः शेषे कलत्रादिके निजलोके दातुमनिच्छत्यपि यदशनादिकं ददाति स मानपिण्डः ८ ॥ 'माय'त्ति माया-परवञ्चनात्मिका बुद्धिः तया कश्चित्साधुर्मन्त्रयोगाद्युपायकुशलः सन् स्वकीयरूपपरावर्तादिकं कृत्वा यन्मोदकादिकं पिण्डमुपार्जयति स मायापिण्डः ९ ॥ 'लोभे य'त्ति लोभो-गृद्धिस्तेन यो गृह्यते पिण्डः स लोभपिण्डः, इयमत्र भावना-कश्चित्साधुरद्याहममुकं सिंहकेसरमोदकादिकं ग्रहीष्यामीतिबुद्ध्या अन्यद्वल्लचणकादिकं लभ्यमानमपि यन्न गृह्णाति किन्तु तदेवेप्सितं स लोभपिण्डः, अथवा पूर्वं तथाविधबुद्ध्यभावेऽपि यथाभावं लभ्यमानं प्रचुरं लपनश्रीप्रभृतिकं भद्रकरसमितिकृत्वा यद् गृह्णाति स लोभपिण्डः, यदिवा पायसादौ लब्धे यदि खण्डशर्करादिकं कुतोऽपि लभ्यते तदा मन्यतरं भवतीतिकृताध्यवसायः पर्यटन् यल्लभते खण्डादिकं स लोभपिण्ड इति, इदं च क्रोधादिपिण्डचतुष्टयं साधूनां न कल्पते, प्रद्वेपकर्मबन्धप्रवचनलाघवादिदोपसम्भवात् १० ॥ 'पुव्विं पच्छा संथव'त्ति संस्तवो द्विधा-वचनसंस्तवः सम्बन्धिसंस्तवश्च, तत्र वचनं-श्लाघा तद्रूपो यः संस्तवः स वचनसंस्तवः, सम्बन्धिनो-मात्रादयः श्वश्र्वादयश्च तद्रूपतया यः संस्तवः स सम्बन्धिसंस्तवः, एकैकोऽपि च द्विधा-पूर्वसंस्तवः पश्चात्संस्तवश्च, तत्र देयेऽलब्धे सति पूर्वमेव दातारं यद्गुणैर्वर्णयति स पूर्वसंस्तवः, यत्तु देये लब्धे सति दातारं गुणैर्वर्णयति स पश्चात्संस्तवः, इयमत्र भावना-कश्चित्साधुर्भिक्षामटन् कस्मिंश्चिद् गृहे कञ्चिदीश्वरं दातारं निरीक्ष्य दानात्पूर्वमेव सत्यैरसत्यैर्वा औदार्यादिभिर्गुणैः स्तौति, यथा अहो दानपतिरस्माभिर्यः पूर्वं वार्ताभिः श्रुतः सोऽयं प्रत्यक्षेणैव वीक्षितः, तथा इतस्ततो भ्राम्यद्भिरस्माभिर्नेदृशा औदार्यादयो गुणा अपरस्य कस्यापि दृष्टाः श्रुता वा, तथा धन्यस्त्वं यस्येदृशा गुणाः सर्वत्रास्खलिताः सर्वदिग्वलयव्यापिनः प्रसरन्तीत्येवं पूर्वसंस्तवः, तथा दाने गृहिणा दत्ते सति यत् स्तौति यथा त्वदीयदर्शनेनाद्यास्माकं लोचने मनश्च शीतलमजायत, न चेदम-

द्भुतं, यतो दातरि गुणिनि च दृष्टे कः प्रमोदभाङ् न भवति ? इत्येप पश्चात्संस्तवः, उभयरूपेऽपि चास्मिन् संस्तवे मायामृषावादासंयतानुमोदनादयो दोपा भवेयुरिति, तथा मातापित्रादिरूपतया यः संस्तवः–परिचयः स पूर्वसम्बन्धिसंस्तवः, मात्रादीनां पूर्वकालभावित्वात्, यस्तु श्वश्रूश्वशुरादिरूपतया संस्तवः स पश्चात्सम्बन्धिसंस्तवः, श्वश्वादीनां पश्चात्कालभावित्वात्, तत्र कश्चित्साधुर्भिक्षार्थं कस्मिंश्चिद् गृहे प्रविष्टः सन्नाहारलम्पटतया आत्मवयः परवयश्च ज्ञात्वा तदनुरूपं सम्बन्धं घटयति, तथाहि–यदि च सा वयोवृद्धा स्वयं च मध्यमवयास्तदा तां निजमात्रादिसमानां महेलामालोक्य मातृस्थानेन मनागश्रुविमोचनं विधत्ते, ततः सा पृच्छति–साधो! किं त्वमधृतो दृश्यसे ?, साधुरपि प्राह–मम त्वत्सदृशी माताऽभूत्, यदि पुनः साऽपि मध्यमवयास्तदा ममेदृशी स्वसाऽभूदिति वदति, अथ सा बालवयास्ततो ममेदृशी दुहिता आसीदित्यादि भापते इति, एवं पश्चात्संस्तवेऽपि भावना कार्या, अत्रापि च बहवो दोपाः, तथाहि–ते गृहिणो यदि भद्रकास्तदा साधौ प्रतिबन्धो भवेत्, प्रतिबन्धे च सत्याधाकर्मादिकं कृत्वा दद्युः, अथ प्रान्तास्तर्हि अयमस्माकं स्वस्य कार्पटिकप्रायस्य जनन्यादिकल्पनेनापभ्राजनां विधत्ते, तत एवं विचिन्त्य स्वगृहान्निष्काशनादि कुर्युः, अधृत्या अश्रुमोचनादि कुर्वन् मायावी एपोऽस्माकमावर्जननिमित्तं चाटूनि करोतीति निन्दा चेति, तथा ममेदृशी माता आसीदित्युक्ते मृतस्य पुत्रस्य स्थानेऽयं मे पुत्र इति बुद्ध्या तस्मै स्नुपादिदानं कुर्यात्, श्वश्रूरीदृशी ममासीदित्युक्ते च विधवां कुरण्डां वा निजसुतां दद्यादित्यादयश्च दोपाः, ततः संस्तवपिण्डो यतीनां न कल्पत इति ११ ॥ 'विज्जामंते'त्ति द्वारद्वयं प्रतिपाद्यते, तत्र विद्या–प्रज्ञप्त्यादि स्त्रीरूपदेवताधिष्ठिता जपहोमादिसाध्या वा अक्षरविशेषपद्धतिः पुरुपरूपदेवताधिष्ठिता पाठमात्रसिद्धा वाऽक्षरविशेपपद्धतिर्मन्त्रः तद्व्यापारेण य उपार्ज्यते पिण्डः स विद्यापिण्डो मन्त्रपिण्डश्च, दोषाश्चात्र–यो विद्ययाऽभिमन्त्रितः सन् दानं दाप्यते स स्वभावस्थो जातः कदाचित् प्रद्विष्टोऽन्यो वा तत्पक्षपाती प्रद्विष्टः सन् प्रतिविद्यया स्तम्भ-

नोच्चाटनमारणादि कुर्यात्, तथा विद्यादिना परद्रोहकरणरूपेण जीवनशीलाः शठाश्चैते इति लोके जुगुप्सा, तथा कार्मणकारिण इमे इति राजकुले ग्रहणाकर्षणवेषपरित्याजनकदर्थनमारणादीनि कुर्यादित्यादयः १२–१३ ॥ 'चुण्णजोगे' इति द्वारद्वयं, तत्र चूर्णो—नयनाञ्जनादिरन्तर्धानादिफलः योगः—पादप्रलेपादिः सौभाग्यदौर्भाग्यकरः एतद्व्यापारणेन य उपार्ज्यते पिण्डः स चूर्णपिण्डो योगपिण्डश्च, दोषाश्चात्रापि पूर्ववत्, ननु चूर्णयोगयोर्द्वयोः क्षोदरूपत्वे सति परस्परं को विशेषः? येन योगद्वारं पृथगुच्यते, सत्यमेतत्, परं कायस्य वहिरुपयोगी चूर्णः वहिरन्तश्चोपयोगी योग इति, यतोऽसावभ्यवहार्यानाहार्यभेदाद् द्विविधो भवेत्, तत्र जलपानादिना अभ्यवहार्यः—आहार्यः पादप्रलेपादिश्चेतर इति अनयोर्विशेषः १४–१५॥ 'उप्पायणाय दोसा सोलसमे मूलकम्मे य' इति एतेऽनन्तरोक्ता उत्पादनाया दोषाः, षोडशो दोषो मूलकर्म—अतिगहनभववनस्य मूलं—कारणं प्ररोहहेतुः कर्म—सावद्यक्रिया ततो मूलं च तत्कर्म च मूलकर्म, तत्र गर्भस्तम्भनगर्भाधानगर्भपाताक्षतयोनित्वकरणक्षतयोनित्वकरणादिना य उपार्ज्यते पिण्डः स मूलकर्मपिण्डः, अयं च साधूनां न कल्पते, प्रद्वेषप्रवचनमालिन्यजीवघाताद्यनेकदोषसम्भवात्, तथाहि—गर्भस्तम्भने गर्भशातने च साधुना कृते ज्ञाते सति प्रद्वेषो भवति, ततः शरीरस्यापि विनाशः, गर्भाधानाक्षतयोनित्वकरणयोश्च यावज्जीवं मैथुनप्रवृत्तिः गर्भाधानाद्धि पुत्रोत्पत्तौ प्राय इष्टा भवति, क्षतयोनित्वकरणे पुनर्भोगान्तरायादीनि १६ ॥ ५६७ ॥ उक्ताः षोडशाप्युत्पादनादोषाः, अथ दश एषणादोषानाह—

**संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ मिस्से ७ । अपरिणय ८**
**लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥ ५६८ ॥**

शङ्कितं—सम्भाविताधाकर्मादिदोषं, तत्र च चतुर्भङ्गी—ग्रहणे शङ्कितो भोजने चेति प्रथमो भङ्गः १ ग्रहणे शङ्कितो न भोजने इति

द्वितीयः २ भोजने शङ्कितो न ग्रहणे इति तृतीयः ३ न ग्रहणे नापि भोजने इति चतुर्थः ४, तत्राद्येषु त्रिषु भङ्गेषु षोडशोद्गमदोषनवैषणादोषरूपाणां पञ्चविंशतिदोषाणां मध्ये येन दोषेण शङ्कितं भवति तं दोषमाप्नोति, किमुक्तं भवति ?—यदा आधाकर्मत्वेन शङ्कितं गृह्णाति भुंक्ते वा तदा आधाकर्मदोषेण सम्बध्यते यदि पुनरौद्देशिकत्वेन तत औद्देशिकेनेत्यादि, चतुर्थे तु भङ्गे वर्तमानः शुद्धो, न केनापि दोषेण सम्बध्यते इत्यर्थः, एतेषां चैवं सम्भवः—यथा कोऽपि साधुः स्वभावतो लज्जावान् भवति, तत्र क्वापि गृहे स भिक्षार्थं प्रविष्टः सन् प्रचुरां भिक्षां लभमानः स्वचेतसि शङ्कते—किमत्र प्रचुरा भिक्षा दीयते ?, न च लज्जया प्रष्टुं शक्नोति, तत एवं शङ्कया गृहीत्वा शङ्कित एव तद् भुङ्क्ते इति प्रथमभङ्गवर्ती, तथा भिक्षार्थं गतः कोऽपि साधुः क्वापि गेहे तथैव शङ्कितमनाः प्रचुरां भिक्षामादाय स्ववसतिमागमत्, ततो भोजनसमये तं दोलायमानमानसं समालोक्य कश्चिदपरसाधुर्विज्ञातभिक्षादायिगृहव्यतिकरस्तदभिप्रायं ज्ञात्वा भणति—भो साधो! यत्र त्वया विपुला भिक्षा लब्धा तद्गृहेऽद्य महत्प्रकरणं वर्तते लाभनकं वा महत्कुतोऽप्यागतमित्येवं तद्वचः श्रुत्वा शुद्धमेतदिति निश्चित्य विगतशङ्कस्तद् भुङ्क्ते इति द्वितीयभङ्गवर्ती, तथा कश्चित्साधुरीश्वरगेहान्निःशङ्कितः प्रचुरां भिक्षां गृहीत्वा वसतावागतोऽन्यान् साधून् गुरोः पुरतः स्वभिक्षातुल्यां भिक्षामालोचयतः श्रुत्वा सञ्जातशङ्कश्चिन्तयति—यथा यादृश्येव मया भिक्षा प्रचुरा लब्धा तादृश्येवान्यैरपि सङ्घाटकैः तन्नूनमेतदाधाकर्मादिदोषदुष्टं भविष्यतीति भुञ्जानस्तृतीयभङ्गवर्ती १ ॥ 'मक्खिय'त्ति म्रक्षितं—पृथिव्यादिनाऽवगुण्ठितं, तद् द्विधा—सचित्तम्रक्षितमचित्तम्रक्षितं च, तत्र सचित्तम्रक्षितं त्रिविधं—पृथिवीकायम्रक्षितं अप्कायम्रक्षितं वनस्पतिकायम्रक्षितं च, तत्र शुष्केणार्द्रेण वा सचित्तपृथिवीकायेन देयं मात्रकं हस्तो वा यदि म्रक्षितो भवति तदा सचित्तपृथ्वीकायम्रक्षितं, अप्कायम्रक्षिते चत्वारो भेदाः—पुरःकर्म पश्चात्कर्म सस्निग्धं उदकार्द्रं च, तत्र भक्तादेर्दानात्पूर्वं यत् साध्वर्थं कर्म हस्तमात्रादेर्जलप्रक्षालनादि क्रियते तत्पुरः-

कर्म, यत्पुनर्भक्तादेर्दानात् पश्चात्क्रियते तत्पश्चात्कर्म, सस्निग्धं—ईषल्लक्ष्यमाणजलखरण्टितं हस्तादि, उदकार्द्रं—स्फुटोपलभ्यमानजलसंसर्गं, तथा चूतफलादीनां सद्यःकृतैः श्लक्ष्णखण्डैः खरण्टितं यद्धस्तादि तद्वनस्पतिकायम्रक्षितं, शेषैस्तु तेजःसमीरत्रसकायैर्म्रक्षितं न भवति, तेजस्कायादिसंसर्गेऽपि लोके म्रक्षितशब्दप्रवृत्त्यदर्शनात्, अचित्तम्रक्षितं पुनर्द्विविधं—गर्हितमितरच्च, गर्हितं वसादिना लिप्तं इतरत् घृतादिना, इह च सचित्तम्रक्षितं तावत् साधूनां सर्वथा न कल्पते, अचित्तम्रक्षितं तु लोकानिन्दितेन घृतादिना म्रक्षितं कल्पते, निन्दितेन पुनर्वसादिना म्रक्षितं न कल्पते एवेति २ ॥ 'निक्खित्त'त्ति निक्षिप्तं—सचित्तस्योपरि स्थापितं, तच्च पृथिव्यप्तेजोवायुवनस्पतित्रसनिक्षिप्तभेदेन षोढा, पुनरेकैकं द्विधा—अनन्तरं परम्परं च, अनन्तरं—अव्यवधानेन परम्परं च—व्यवधानेन, तत्र सचित्ते—मृदादौ यत् पक्वान्नमण्डकादिकमानन्तर्येण व्यवस्थापितं तदनन्तरनिक्षिप्तं, सचित्तमृदादेरेवोपरिस्थिते पिठरकादौ यन्निक्षिप्तं पक्वान्नादि तत् परम्परनिक्षिप्तं, तथा यन्नवनीतस्थानीभूतघृतादिकं सचित्ते उदके निक्षिप्तं तदनन्तरनिक्षिप्तं, तदेव नवनीतादि पक्वान्नादि वा जलमध्ये स्थितेषु नावादिषु स्थितं परम्परनिक्षिप्तं, तथा वह्नौ पर्पटादि यत्प्रक्षिप्यते तदनन्तरनिक्षिप्तं, यत्पुनरग्नेरुपरि स्थापिते पिठरादौ क्षिप्तं तत्परम्परनिक्षिप्तं, तथा वातोत्पाटिताः शालिपर्पटकादयोऽनन्तरनिक्षिप्तं, यद् येनोत्पाट्यते तत्तत्र निक्षिप्तमुच्यते इति विवक्षया, परम्परनिक्षिप्तं तु पवनापूरितदृत्याद्युपरिस्थितमण्डकादि, तथा वनस्पत्यनन्तरनिक्षिप्तं सचित्तव्रीहिकाफलादिषु पूपमण्डकादि न्यस्तं, परम्परनिक्षिप्तं तु हरितादीनामेवोपरिस्थितेषु पिठरादिषु निक्षिप्ता अपूपादयः, तथा त्रसेऽनन्तरनिक्षिप्तं बलीवर्दादिपृष्ठेऽपूपमोदकादयो निक्षिप्ताः, परम्परनिक्षिप्तं तु बलीवर्दादिपृष्ठनिवेशितकुतुपादिभाजनेषु निक्षिप्ता घृतमोदकादय इति, अत्र च पृथिव्यादिषु सर्वेष्वप्यनन्तरनिक्षिप्तं देयं वस्तु यतीनामकल्पनीयमेव, सचित्तपृथिवीकायाद्युपरिस्थितत्वेन सङ्घट्टादिदोषसम्भवात्, परम्परनिक्षिप्तं पुनः सचित्तसङ्घट्टादिपरिहारेण यतनया ग्राह्यमपीति,

केवलं तेजस्काये परम्परनिक्षिप्तस्य ग्रहणमाश्रित्य विशेषः प्रतिपाद्यते—यथेक्षुरसः पाकस्थाने अग्नेरुपरिस्थिते कटाहादौ यदि कटाहः सर्वतः पार्श्वेषु मृत्तिकयाऽवलिप्तो भवति दीयमाने चेक्षुरसे यदि परिशाटिर्नोपजायते सोऽपि च कटाहो यदि विशालमुखो भवति सोऽपि चेक्षुरसोऽचिरक्षिप्त इतिकृत्वा यदि नात्युष्णो भवति तदा स दीयमान इक्षुरसः कल्पते, इह यदि दीयमानस्येक्षुरसस्य कथमपि बिन्दुर्बहिः पतति तर्हि स लेप एव वर्तते, न तु चुल्लीमध्यस्थिततेजस्कायमध्ये पतति, ततो मृत्तिकयाऽवलिप्त इत्युक्तं, तथा विशालमुखादाकृष्यमाण उदञ्चनः पिठरस्य कर्णे न लगति ततो न पिठरस्य भङ्ग इति न तेजस्कायविराधनेत्यतो विशालमुख इत्युक्तं, तथा अत्युष्णे इक्षुरसादौ दीयमाने यस्मिन् भाजने तदत्युष्णं गृह्णाति तेन तप्तं सद् भाजनं हस्तेन साधुर्गृह्णन् दह्यते इत्यात्मविराधना, येनापि स्थानेन [दर्व्यादिना] सा दात्री ददाति तेनाप्यत्युष्णेन सा दह्यते, अन्यच्च—अत्युष्णमिक्षुरसादि कष्टेन दात्री दातुं शक्नोति, कष्टेन च दाने कथमपि साधुसम्बन्धिभाजनाद्बहिरुज्झने हानिर्दीयमानस्येक्षुरसादेस्तस्य च भाजनस्य, साधुना वसतावानयनायोत्पाटितस्य पतद्ग्रहादेः दात्र्या वा दानायोत्पाटितस्योदञ्चनस्य दण्डरहितस्यात्युष्णतया झगिति भूमौ मोचने भङ्गः स्यात्, तथा च षड्जीवनिकायविराधनेति संयमविराधना चेत्यतोऽनत्युष्णमित्युक्तं ३ ॥ 'पिहिय'त्ति पिहितं—सचित्तेन स्थगितं, तदपि षोढा पृथिवीकायादिपिहितभेदात्, एकैकमपि द्विधा-अनन्तरं परम्परं च, तत्र सचित्तपृथिवीकायेनावष्टब्धं मण्डकादि सचित्तपृथ्वीकायानन्तरपिहितं, सचित्तपृथिवीकायगर्भपिठरादिपिहितं सचित्तपृथिवीकायपरम्परपिहितं, तथा हिमादिनाऽवष्टब्धं मण्डकादिकं सचित्ताप्कायानन्तरपिहितं, हिमादिगर्भपिठरादिना पिहितं सचित्ताप्कायपरम्परपिहितं, तथा स्थाल्यादौ संस्वेदिमादीनां मध्ये अङ्गारं स्थापयित्वा हिङ्ग्वादिवासो यदा दीयते तदा तेनाङ्गारेण केषाञ्चित्संस्वेदिमादीनां संस्पर्शोऽस्तीति तेजस्कायानन्तरपिहितं, एवं चनकादिकमपि मुर्मुरादिक्षिप्तमनन्तरपिहितमवगन्तव्यं, अङ्गारभृतेन शरावादिना

स्थगितं पिठरादि परम्परपिहितं, तथा तत्रैवाङ्गारधूपनादौ अव्यवहितमनन्तरपिहितं वायौ द्रष्टव्यं 'यत्राग्निस्तत्र वायु'रिति वचनात्, समीरणभृतेन तु बस्तिना पिहितं परम्परपिहितं, तथा फलादिना अतिरोहितेन पिहितं वनस्पत्यनन्तरपिहितं, फलभृच्छब्बकादिना पिहितं परम्परपिहितं, तथा मण्डकमोदकादिकमुपरिसञ्चरत्पिपीलिकापङ्क्तिकं त्रसानन्तरपिहितं, कीटिकाद्याकीर्णेन तु शरावादिना पिहितं त्रसपरम्परपिहितमिति, तत्र च पृथिवीकायादिभिरनन्तरपिहितं न कल्पत एव यतीनां, सङ्घट्टादिदोषसंभवात्, परम्परपिहितं तु यतनया ग्राह्यमपि, तथा अचित्तेनाप्यचित्ते देये वस्तुनि पिहिते चतुर्भङ्गी, यथा—गुरुकं गुरुकेण पिहितं १ गुरुकं लघुकेन २ लघुकं गुरुकेण ३ लघुकं लघुकेन ४, तत्र च प्रथमतृतीययोर्भङ्गयोरग्राह्यं, गुरुद्रव्यस्योत्पाटने हि कथमपि तस्य पाते पादादिभङ्गसम्भवात्, द्वितीयचतुर्थयोस्तु ग्राह्यमुक्तदोषाभावात्, देयवस्त्वाधारस्य पिठरादेर्गुरुत्वेऽपि ततः करोटिकादिना दानसम्भवात् ४॥ 'साहरिय'त्ति संहृतम्—अन्यत्र प्रक्षिप्तं, तत्र येन करोटिकादिना कृत्वा भक्तादिकं दातुमिच्छति दात्री तत्रान्यददातव्यं किमपि सचित्तमचित्तं मिश्रं वाऽस्ति ततस्तददेयमन्यत्र स्थानान्तरे क्षिप्त्वा तेन ददाति एतत्संहृतमुच्यते, तच्चादेयं कदाचित्सचित्तेषु पृथिव्यादिषु मध्ये क्षिपति कदाचिदचित्तेषु कदाचिन्मिश्रेषु तदा मिश्रस्य सचित्त एवान्तर्भावात्सचित्ताचित्तपदाभ्यां चतुर्भङ्गी, यथा सचित्ते सचित्तं संहृतं १ सचित्ते अचित्तं २ अचित्ते सचित्तं ३ अचित्ते अचित्तमिति ४, तत्राद्येषु त्रिषु भङ्गेषु सचित्तसङ्घट्टादिदोषसम्भवान्न कल्पते चतुर्थे भङ्गे तु तथाविधदोषासम्भवे सति कल्पतेऽपीति, अत्राप्यनन्तरपरम्परप्ररूपणा पूर्ववत्कर्तव्या, यथा सचित्तपृथिवीकायमध्ये यदा संहरति तदाऽनन्तरसचित्तपृथिवीकायसंहृतं, यदा तु सचित्तपृथिवीकायस्योपरिस्थिते पिठरादौ संहरति तदा परम्परसचित्तपृथिवीकायसंहृतं, एवमप्कायादिष्वपि भावनीयं, अनन्तरसंहृते न ग्राह्यं, परम्परसंहृते तु सचित्तपृथिवीकायाद्यसङ्घट्टने ग्राह्यमिति ५॥ 'दायग'त्ति दायकदोषदुष्टं, दायकश्चानेकप्रकारः, तथाहि—स्थविरो १ ऽप्रभु २-

नैपुंसकः ३ कम्पमानकायो ४ ज्वरितो ५ ऽन्धो ६ वालो ७ मत्त ८ उन्मत्त ९ छिन्नकर १० छिन्नचरणो ११ गलत्कुष्ठो १२ बद्धः
१३ पादुकारूढः १४ तथा कण्डयन्ती १५ पिंषन्ती १६ भर्जमाना १७ कुन्तन्ती १८ लोढयन्ती १९ विक्षुवती २० पिञ्जयन्ती २१
दलयन्ती २२ विरोलयन्ती २३ भुञ्जाना २४ आपन्नसत्त्वा २५ वालवत्सा २६ पट् कायान् सङ्घट्टयन्ती २७ तानेव विनाशयन्ती
२८ सप्रत्यपाया २९ चेति, तत एवमादिस्वरूपे दातरि ददति न कल्पते, तत्र स्थविरः सप्ततिवर्षाणां मतान्तरापेक्षया षष्टिवर्षाणां
वोपरिवर्ती, स च प्रायो गलल्लालो भवति, ततो देयमपि वस्तु लालया खरण्टितं भवतीति तद्ग्रहणे लोके जुगुप्सा, तथा कम्प-
मानहस्तश्च भवति, ततो हस्तकम्पनवशाद्देयं वस्तु भूमौ निपतति, तथा च षट्जीवनिकायविराधना, तथा स्वयं वा स्थविरो ददत् निप-
तेत्, तथा सति तस्य पीडा भूम्याश्रितषड्जीवनिकायविराधना च १ अपि च—प्रायः स्थविरो गृहस्याप्रभुर्भवति, ततस्तेन दीयमाने कोऽ-
धिकारोऽस्य वृद्धस्य दाने इति विचिन्त्य गृहे स्वामित्वेन नियुक्तस्य प्रद्वेषः स्यात्, तथा वृद्धोऽपि यदि प्रभुर्भवति कम्पमानश्च यद्यन्येन
विधृतो वर्तते स्वरूपेण वा दृढशरीरो भवति तर्हि ततः कल्पते २ तथा नपुंसकादभीक्ष्णं भिक्षाग्रहणे अतिपरिचयात्तस्य नपुंसकस्य सा-
धोर्वा वेदोदयो भवेत्, ततो नपुंसकस्य साध्वालिङ्गनाद्यासेवनेन द्वयस्यापि कर्मबन्धः, तथा अहो एते नपुंसकादपि निकृष्टात् गृह्णन्तीति
जननिन्दा भवेत्, अपवादतस्तु वर्धितकचिप्पितमन्त्रोपहतऋषिशप्तदेवशप्तादिषु केषुचिदप्रतिसेविषु नपुंसकेषु ददत्सु गृह्यतेऽपि भिक्षेति ३
तथा कम्पमानकायोऽपि भिक्षादानसमये देयमानयन् भूमौ परिशाटयेत् तथा साधुभाजनाद्बहिर्भिक्षां क्षिपेत् देयमात्रकं वा पातनेन स्फो-
टयेदिति, सोऽपि च यदि दृढभिक्षाभाजनग्राही भवेत् पुत्रादिभिर्वा दृढहस्तो भिक्षां दाप्यते तदा ततोऽपि गृह्यते ४ एवं ज्वरितेऽपि दोषा
भावनीयाः, किञ्च—ज्वरिताद्भिक्षाग्रहणे ज्वरसङ्क्रमणमपि साधोर्भवेत्, तथा जने उड्डाहो यथा अहो अमी आहारलम्पटा यदित्थं ज्वर-

पीडितादपि गृह्णन्ति, अथासश्चरिष्णुर्ज्वरी भवेत्तदा यतनया कदाचिद् गृह्यतेऽपीति ५ तथा अन्धाद्भिक्षाग्रहणे उड्डाहः, स चायं—अहोऽमी औदरिका यदन्धादपि भिक्षां च दातुमशक्नुवतो भिक्षां गृह्णन्तीति, तथा अन्धोऽपश्यन् पादाभ्यां भूम्याश्रितषड्जीवनिकायघातं विदधाति, तथाऽन्धो लेष्ट्वादौ स्खलितः सन् भूमौ निपतेत्, तथा च सति भिक्षादानायोत्पाटितहस्तगृहीतस्थाल्यादेर्भङ्गः स्यात्, साधुपात्रकाद् बहिःक्षेपणे च परिशाटिर्भवेदिति, सोऽपि पुत्रादिना धृतहस्तो यदि दद्यात्तदा यतनया गृह्यते ६ तथा बालो—जन्मतो वर्षाष्टकाभ्यन्तरवर्ती तस्मिन् देयमानमजानति मात्राद्यसमक्षमतिप्रभूतां भिक्षां ददति अहो लुण्टाका एते न साधुसद्वृत्ता इत्युड्डाहो भवेत् मात्रादीनां व्रतिनामुपरि द्वेषश्च सञ्जायते, यदि च मात्रादिभिः कार्यवशादन्यत्र गच्छद्भिर्बालकस्य कथितमिदमिदं च व्रतिनामत्रागतानां त्वया देयमिति, यदि च जनन्याद्यनुपदिष्टेऽपि स्तोकमेव किञ्चिद्ददाति बालकस्तदा तेनापि दीयमानं गृह्यते, एवं मात्रादिभिः क्रियमाणस्य कलहादेरभावादिति ७ तथा मत्तः—पीतमदिरादिः, स च भिक्षां ददत् कदाचिन्मत्ततया साधोरालिङ्गनं विदधाति भाजनं वा भिनत्ति यद्वा कदाचिद्भिक्षां ददानः पीतमासवं वमति वमंश्च साधुं साधुपात्रं वा खरण्टयति ततो लोके जुगुप्सा—धिगमी साधवोऽशुचयो ये मत्तादपीत्थं भिक्षां गृह्णन्तीति, तथा कोऽपि मत्तो मदविह्वलतया रे मुण्ड! किमत्रायातस्त्वमिति ब्रुवन् घातमपि विदधाति ८ तथा उन्मत्तो—दृप्तो ग्रहगृहीतो वा, तस्मिन्नप्येत एवालिङ्गनादयो दोषा वमनवर्जा भावनीया इति, तथा मत्तोऽपि यदि भद्रकोऽलक्ष्यमदश्च भवति यदि च सागारिकः कोऽपि तत्र तथाविधो न विद्यते तर्हि तद्धस्तात् कल्पते नान्यथा, उन्मत्तोऽपि चेत् शुचिर्भद्रकश्च भवति तदा कल्पत इति ९ तथा छिन्नकरो मूत्राद्युत्सर्गादौ जलशौचाद्यभावादशुचिरेव, तेन च दीयमाने जनो निन्दां करोति, तथा हस्ताभावे येन भाजनेन कृत्वा भिक्षां ददाति यद्वा देयं वस्तु तस्य पतनमपि भवति, तथा च सति षड्जीवनिकायव्याघातः, तथा छिन्नचरणेऽप्येत एव दोषा द्रष्टव्याः,

केवलं पादाभावात्तस्य भिक्षादानाय चलतः प्रायो नियमतः पतनं भवेत्, तथा च सति भूम्याश्रितपिपीलिकाप्रभृतिप्राणिप्रणाशः, छिन्नकरोऽपि यदि सागारिकाभावे ददाति तदा यतनया गृह्यते, छिन्नचरणोऽपि च यद्युपविष्टो ददाति असागारिकं च स्थानं भवेत्तदा गृह्यते १०-११ तथा गलत्कुष्ठाद् गृह्यमाणे तदीयोच्छ्वासत्वक्संस्पर्शार्धपक्वरुधिरस्वेदमललालादिभिः साधोः कुष्ठसङ्क्रमो भवेत्, सोऽपि चेन्मण्डलप्रसूतिरूपकुष्ठाकीर्णकायः सन् सागारिकाभावे ददाति तर्हि ततः कल्पते न शेषकुष्ठिनः सागारिके वा पश्यति, तत्र मण्डलानि—वृत्ताकारदद्रुविशेषरूपाणि प्रसूतिः—नखविदारणेऽपि वेदनाया असंवेदनमिति १२ तथा करविषयकाष्ठमयबन्धनरूपेण हस्ताण्डुना पादविषयलोहबन्धनरूपेण निगडेन च बद्धे दातरि भिक्षां प्रयच्छति दुःखं तस्य स्यात् तथा मूत्राद्युत्सर्गादौ च शौचकरणासम्भवात्ततो भिक्षाग्रहणे लोके जुगुप्सा, यथा अमी अशुचयो यदेतस्मादप्यशुचीभूताद्भिक्षामाददत इति, तथा पादबद्धश्चेदितश्चेतश्च पीडामन्तरेण गन्तुं शक्तस्ततस्तस्मादपि कल्पते, इतरस्तु य इतश्चेतश्च गन्तुमशक्तः स चेदुपविष्टः सन् ददाति न च कोऽपि तत्र सागारिको विद्यते तर्हि ततोऽपि कल्पते, हस्तबद्धस्तु भिक्षां दातुमपि न शक्नोतीति तत्र प्रतिषेध एव न भजना १३ तथा पादुकयोः—काष्ठमयोपानहोरारूढस्य भिक्षादानाय प्रचलतः कदाचिद् दुःस्थितत्वेन पतनं स्यात्, पादुकारूढोऽपि यद्यचलो भवति तदा कारणे कल्पते १४ तथा कण्डूयन्त्या—उदूखले तण्डुलादिकं छटयन्त्या न गृह्यते, यत इयमुदूखलक्षिप्तशाल्यादिबीजसङ्घट्टादि करोति, भिक्षादानात्पूर्वं भिक्षादानोत्तरकालं वा जलेन हस्तधावनात्पुरःकर्मदोषं पश्चात्कर्मदोषं वा विदध्यादित्यादयो दोषाः, अत्रापि कण्डयन्त्या कण्डनायोत्पाटितं मुशलं न च तस्मिन् मुशले किमपि काञ्च्यां बीजं लग्नमस्ति अत्रान्तरे च समायातः साधुः ततो यदि सा पतनाद्यनर्थरहिते गृहकोणादौ मुशलं स्थापयित्वा भिक्षां ददाति तदा कल्पते १५ तथा पिंपन्ती—शिलायां तिलामलकादि प्रमृद्नन्ती यदा भिक्षादानायोत्तिष्ठति तदा पिष्यमाणतिलादिसत्काः काश्चिन्नखिकाः सचित्ता अपि

हस्तादौ लगिताः सम्भवन्ति ततो भिक्षादानाय हस्तादिप्रस्फोटने भिक्षां वा ददत्या भिक्षासम्पर्कतस्तासां विराधना भवति, भिक्षां च दत्त्वा भिक्षावयवखरण्टितौ हस्तौ जलेन प्रक्षालयेत् ततोऽप्कायविराधना, एषाऽपि पेषणसमाप्तौ प्राशुकं वा पिंषन्ती यदि ददाति तदा कल्पते १६ तथा भर्जमाना—चुल्ल्यां कडिल्लकादौ चनकादीन् स्फोटयन्ती, तस्यां हि भिक्षां ददत्यां वेलालगनेन कडिल्लकक्षिप्तगोधूमचनकादीनां दाहे सति प्रद्वेषादयो दोषाः स्युः, अत्रापि यत्सचित्तं गोधूमादिकं कडिल्लके क्षिप्तं तद्भ्रष्टोत्तारितं अन्यच्च नाद्यापि करे गृह्णाति एतस्मिन्नन्तरे भिक्षाकृते साधुः समागतः ततो यद्युत्थाय ददाति तदा कल्पते १७ तथा कृन्तत्यां—यन्त्रेण रूतपोणिकां सूत्ररूपां कुर्वत्यां १८ तथा लोढयन्त्यां—लोढिन्यां कर्पासं कणकेन रूततया विदधत्यां १९ तथा विक्षुवत्यां—रूतं कराभ्यां पौनःपुन्येन विरलं कुर्वत्यां २० तथा पिञ्जयन्त्यां—पिञ्जनेन रूतं विरलं कुर्वत्यां न गृह्यते, देयलिप्तहस्तधावनरूपस्य पुरःकर्मपश्चात्कर्मादेर्दोषस्य सम्भवात् कार्पासिकादिसचित्तसङ्घट्टसम्भवाच्चेति २१, इह च कर्तने यदि सूत्रस्य श्वेततातिशयोत्पादनाय शङ्खचूर्णेन हस्तौ न खरण्टयति खरण्टने वा यदि जलेन न प्रक्षालयति तदा कल्पते, लोढनेऽपि यदि हस्ते धृतः कार्पासो न स्यात् कार्पासिकान् वा यदि उत्तिष्ठन्ती न घट्टयति तदा गृह्यते, विक्षुवत्यां पिञ्जयन्त्यां च यदि पश्चात्कर्म न भवति तदा कल्पते, तथा दलयन्ती—घरट्टेन गोधूमादि चूर्णयन्ती, तस्यां हि ददत्यां घरट्टक्षिप्तबीजसङ्घट्टः हस्तधावने जलविराधना च, दलयन्त्यपि सचित्तमुद्गादिना दलयमानेन सह घरट्टं मुक्तवती अत्रान्तरे च साधुरायातस्ततो यद्युत्तिष्ठति अचेतनं वा भृष्टं मुद्गादिकं दलयति तर्हि तद्धस्तात्कल्पते २२ तथा विरोलयन्ती—दध्यादि मथ्नन्ती, यदि तद्दध्यादि संसक्तं मथ्नाति तर्हि तेन संसक्तदध्यादिना लिप्तकरत्वाद्भिक्षां ददती तेषां रसजीवानां वधं विदध्यात्, अत्रापि चेदसंसक्तं दध्यादि मथ्नाति तदा कल्पते २३ तथा भुञ्जाना दात्री भिक्षादानार्थमाचमनं करोति आचमने च क्रियमाणे उदकं विराध्यते अथ न करोत्याचमनं तर्हि लोके जुगुप्सा,

उक्तं च—"छक्कायदयावंतोऽवि संजओ दुल्लहं कुणइ वोहिं । आहारे नीहारे दुगुंछिए पिंडगहणे य ॥ १ ॥" [ पट्कायदयावानपि संयतो दुर्लभां करोति वोधिं। आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥१॥ ] २४ तथा आपन्नसत्त्वायां भिक्षां ददत्यां न ग्राह्यं, यतस्तस्या भिक्षादानार्थमूर्द्धीभवन्त्या भिक्षां दत्त्वा आसने उपविशन्त्याश्च गर्भवाधा भवेत्, तत्रापि स्थविरकल्पिकानां मासाष्टकं यावत् तत्करेण कल्पते वेलामासे तु न कल्पते, ऊर्द्धीभवनाद्यायासमन्तरेण स्वभावस्थितयैव तया यदि दीयते तदा वेलामासेऽपि गृह्यते २५ तथा वालवत्सा वालकं भूमौ मञ्चिकादौ वा निक्षिप्य यदि भिक्षां ददाति तर्हि तं वालकं मार्जारसारमेयादयो मांसखण्डं शशकशिशुरिति वा कृत्वा विनाशयेयुः, तथा आहारखरण्टितौ शुष्कौ हस्तौ कर्कशौ भवतः ततो भिक्षां दत्त्वा पुनर्दात्र्या हस्ताभ्यां गृह्यमाणस्य वालस्य पीडा स्यात्, यस्यास्तु वाल आहारेऽपि लगति भूमौ च मुक्तः सन्न रोदिति तस्या हस्तात्कल्पते स्थविरकल्पिकानां, आहारं हि गृह्णन् वालः प्रायः शरीरेण महान् भवेत् ततो न मार्जारादिविराधनाप्रसङ्गः, ये तु भगवन्तो जिनकल्पिकास्ते निरपवादत्वात्सूत्रवलेन गर्भाधानादि ज्ञात्वा मूलत एवापन्नसत्त्वां वालवत्सां च सर्वथा परिहरन्ति २६ तथा पट्कायान् पृथिव्यप्तेजोवायुवनस्पतित्रसस्वरूपान् संघट्टयन्ती—हस्त-पादादिना शरीरावयवेन स्पृशन्ती ततः सजीवलवणोदकाग्निवायुपूरितवस्तिवीजपूरफलादिमत्स्यादीन् हस्तस्थान् सिद्धार्थकदूर्वापल्लवमल्लिकाशतपत्रिकाप्रमुखपुष्पाणि शिरःस्थानि मालतीमालादीन्युरःस्थानि जपाकुसुमान्याभरणतया कर्णस्थानि परिधानाद्यन्तःस्थापितसरससवृन्तताम्बूलपत्रादीनि कटीस्थानि सचित्तजलकणादीनि पादलग्नानि धारयन्ती यदि ददाति तदा न कल्पते सङ्घट्टादिदोपसद्भावात् २७ तथा तानेव पट्कायान् पृथिव्यादीन् विनाशयन्ती—व्यापादयन्ती, तत्र कुश्यादिना भूम्यादिखननेन पृथिवीकायं मज्जनवस्त्रादिधावनवृक्षादिसेचनादिभिरप्कायं उल्मुकघट्टनादिभिरग्निकायं चुल्लयामग्निफूत्करणादिभिः सचित्तवातभृतवस्त्यादेरितस्ततः प्रक्षेपणेन वा वायुकायं चिर्भेटि-

कादिच्छेदनेन वनस्पतिकायं मध्वादेर्मत्कुणादिपातनेन च त्रसकायं विनाशयन्त्यां दात्र्यां न गृह्यते २८ तथा सप्रत्यपाया—सम्भाव्यमानापाया, इह अपायास्त्रिविधाः, तद्यथा—तिर्यगूर्द्ध्वमधश्च, तत्र तिर्यग्गवादिभ्यः ऊर्द्ध्वमुत्तरङ्गकाष्ठादेः अधः सर्पकण्टकादेः, इत्थं च त्रिविधानामप्यपायानामन्यतममपायं बुद्ध्या सम्भावयन् न ततो भिक्षां गृह्णीयादिति, अत्र च षट् कायान् सङ्घट्टयन्त्यां तथा तानेव विनाशयन्त्यां सप्रत्यपायायां चापवादो नास्ति, ततः सर्वथा न कल्पते एव शेषेषु पुनरपवादो दर्शित एव, २९ एवमन्येऽपि दायकदोषाः स्वयं शास्त्रान्तरतश्च परिभाव्य परिहरणीयाः ६॥ 'उम्मीसे'त्ति उन्मिश्रं—सचित्तसम्मिश्रं, इह कश्चिद् गृहस्थः केवलं वस्त्विदं व्रतिने वितीर्यमाणमल्पं स्यादिति लज्जया पृथग्वस्तुद्वयदाने वेला लगतीत्यौत्सुक्येन मीलितं वस्तुद्वयं मृष्टं भवतीति भक्त्या सचित्तभक्षणभङ्गो भवतु एतेषामिति प्रत्यनीकतया अनाभोगेन वा साधूनां कल्पनीयतया उचितं पूरणादिकं अकल्पनीयतया मुनीनामनुचितेन करमर्दकदाडिमकुलिकादिना मिश्रयित्वा यद्ददाति तदुन्मिश्रं, अत्र च कल्पनीयाकल्पनीये द्वे अपि वस्तुनी च मिश्रयित्वा यद्ददाति तदुन्मिश्रं संहरणं तु यद्भाजनस्थमदेयं वस्तु तदन्यत्र क्वापि स्थगनिकादौ संहृत्य ददातीत्ययं मिश्रसंहृतयोर्भेदः ७॥ 'अपरिणय'त्ति अपरिणतं—अप्रासुकीभूतं, तत्सामान्यतस्तावद् द्विधा—द्रव्यतो भावतश्च, पुनरेकैकं द्विधा—दातृविषयं ग्रहीतृविषयं च, तत्र द्रव्यरूपमपरिणतं यत्पृथिवीकायादिकं स्वरूपेण सजीवं, यत्पुनर्जीवेन विप्रमुक्तं तत्परिणतमिति, तच्च यदा दातुः सत्तायां वर्तते तदा दातृविषयं यदा तु ग्रहीतुः सत्तायां तदा ग्रहीतृविषयं, तथा द्वयोर्बहूनां वा साधारणे देयवस्तुनि यद्येकस्य कस्यचिद्ददामीत्येवं भावः परिणमति न शेषाणां एतद्भावतो दातृविषयमपरिणतं, साधारणानिसृष्टं दायकपरोक्षत्वे दातृभावापरिणतं तु दायकसमक्षत्वे इत्यनयोर्भेदः, तथा द्वयोः साध्वोः सङ्घाटकरूपेण भिक्षाकृते गृहिगृहं गतयोरेकस्य साधोरेतल्लभ्यमानमशनादिकं शुद्धमिति मनसि परिणतं न द्वितीयस्येति ग्रहीतृविषयं भावापरिणतं, एतच्च साधूनां न कल्पते

शङ्कितत्वात् कलहादिदोषसम्भवाच्च ८॥ 'लित्त'त्ति हस्तमात्रकादिलेपकारित्वाल्लिप्तं—दुग्धदधितेमनादि तत्पुनरुत्सर्गतः साधुभिर्न ग्राह्यं रसाभ्यवहारलाम्पट्यवृद्धिप्रसङ्गात् दध्यादिलिप्तहस्तप्रक्षालनादिरूपपश्चात्कर्माद्यनेकदोषसद्भावाच्च, किन्तु अलेपकृदेव वल्लचनकौदनादिकं, तथाविधशक्त्यभावे च निरन्तरस्वाध्यायाध्ययनादिकं किमपि पुष्टं कारणमाश्रित्य लेपकृदपि कल्पते, तत्र च लेपकृति गृह्यमाणे दातुः सम्बधी हस्तः संसृष्टोऽसंसृष्टो वा भवति, येन च कृत्वा भिक्षां ददाति तदपि मात्रकं करोटिकादिकं संसृष्टमसंसृष्टं वा, द्रव्यमपि देयं सावशेषं निरवशेषं वा, एतेषां च त्रयाणां पदानां संसृष्टहस्तासंसृष्टमात्रसावशेषद्रव्यरूपाणां सप्रतिपक्षाणां परस्परं योगतोऽष्टौ भङ्गा भवन्ति, ते चामी—संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं १ संसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं २ संसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ३ संसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ४ असंसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं ५ असंसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं ६ असंसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ७ असंसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ८, एतेषु चाष्टसु भङ्गेषु मध्ये विषमेषु भङ्गेषु—प्रथमतृतीयपञ्चमसप्तमेषु ग्रहणं कर्तव्यं न समेषु—द्वितीयचतुर्थषष्ठाष्टमरूपेषु, इयमत्र भावना—इह हस्तो मात्रं द्वे वा स्वयोगेन संसृष्टे वा भवेतामसंसृष्टे वा न तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि द्रव्यवशेन ?, तथाहि—यत्र द्रव्यं सावशेषं तत्र तेन साध्वर्थं खरण्टितेऽपि न दात्री प्रक्षालयति भूयोऽपि परिवेषणसम्भवात्, यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतस्तद्द्रव्याधारस्थालीं हस्तं मात्रं वा प्रक्षालयति, ततो द्वितीयादिषु भङ्गेषु द्रव्ये निरवशेषे पश्चात्कर्मसम्भवान्न कल्पते, प्रथमादिषु तु पश्चात्कर्मासम्भवात्कल्पत इति ९॥ 'छड्डिय'त्ति छर्दितं उज्झितं त्यक्तमिति पर्यायाः, तच्च त्रिधा—सचित्तमचित्तं मिश्रं च, तदपि च कदाचिच्छर्दितं सचित्तमध्ये कदाचिदचित्तमध्ये कदाचिन्मिश्रमध्ये, तत्र उभयत्रापि मिश्रस्य सचित्त एवान्तर्भावात् छर्दने

सचित्ताचित्तद्रव्ययोराधारभूतयोराधेयभूतयोश्च संयोगतश्चतुर्भङ्गी भवति, तद्यथा—सचित्ते सचित्तं अचित्ते सचित्तं सचित्ते अचित्तं अचित्ते अचित्तं, अत्र चाद्येषु त्रिषु भङ्गेषु सचित्तसङ्घट्टादिदोषसद्भावान्न कल्पते, चरमे पुनः परिशाटिसद्भावात्, परिशाटौ च महान् दोषः, तथाहि—उष्णस्य द्रव्यस्य छर्दने भिक्षां ददमानो दह्येत भूम्याश्रितानां वा पृथिव्यादीनां दाहः स्यात् शीतद्रव्यस्य च भूमौ पतने भूम्याश्रिताः पृथिव्यादयो विराध्यन्ते इति १० ॥५६८॥ एते दश एषणादोषा भवन्ति, उक्तास्तावत्सङ्क्षेपतो द्विचत्वारिंशदपि दोषाः, विस्तरतस्तु पिण्डनिर्युक्तेरवगन्तव्याः ॥ अथ पिण्डविशुद्धेः सर्वसङ्ग्रहमाह—

**पिंडेसणा य सव्वा संखित्तोयरइ नवसु कोडीसु । न हणइ न किणइ न पयइ कारावणअणुमईहिं नव ॥ ५६९ ॥**

पिण्डैषणा—पिण्डविशुद्धिः सर्वाऽपि सङ्क्षिप्ता—सङ्क्षेपेण भण्यमाना अवतरति—अन्तर्भवति नवसु कोटीषु—विभागेषु, ता एवाह—न स्वयं हन्ति न च क्रीणाति न च पचति इति त्रयं, एवं कारणानुमतिभ्यामपि, तथा नान्येन घातयति न क्रापयति न च पाचयति तथा नापरेण हन्यमानं न क्रीयमाणं न च पच्यमानमनुमोदते, मिलिताश्चैता नव कोटयः, एतैर्नवभिः पदैः पिण्डविशुद्धिः सर्वाऽपि सङ्गृह्यत इति भावः ॥ ५६९ ॥ इह च पूर्वं षोडशविध उद्गम उक्तः, स च सामान्यतो द्विधा भवति, तद्यथा—विशोधिकोटिरूपोऽविशोधिकोटिरूपश्च, तत्र यद्दोषदुष्टे भक्ते तावन्मात्रेऽपनीते सति शेषं कल्पते स दोषो विशोधिकोटिः शेषस्त्वविशोधिकोटिः, तत्र ये दोषा अविशोधिकोटिरूपा ये च विशोधिकोटिरूपास्तानाह—

**कम्मुद्देसियचरिमे तिय पूइयमीसचरिमपाहुडिया । अज्झोयर अविसोही विसोहिकोडी भवे सेसा ॥ ५७० ॥**

सूचामात्रत्वात्सूत्रस्य '**कम्म**'त्ति आधाकर्म सप्रभेदं औद्देशिकस्य—विभागौद्देशिकस्य चरमत्रिकं—कर्मभेदसत्कमन्त्यमेव भेदत्रयं, पूतिर्भक्तपानरूपा '**मीस**'त्ति मिश्रजातं पाखण्डिगृहिमिश्रं साधुगृहिमिश्रं चरमा—अन्त्या बादरेत्यर्थः प्राभृतिका '**अज्झोयर**'त्ति अध्यवपूरकस्य स्वगृहिपाखण्डिमिश्रस्वगृहिसाधुमिश्ररूपमन्त्यं भेदद्वयं, एते उद्गमदोषा अविशोधिकोटिः, अस्याश्चाविशोधिकोट्या अवयवेन शुष्कसिक्थादिना तथा तक्रादिना लेपेन वल्लचणकादिना च अलेपेन संसृष्टं यत् शुद्धं भक्तं तस्मिन्नुज्झितेऽपि यदकृतकल्पत्रये पात्रे शुद्धमपि भक्तं पश्चात्परिगृह्यते तत्पूतिरवगन्तव्यं, '**विसोहिकोडी भवे सेस**'त्ति शेषाः—ओघौद्देशिकं नवविधमपि च विभागौद्देशिकमुपकरणपूतिर्मिश्रस्याद्यो भेदः स्थापना सूक्ष्मप्राभृतिका प्रादुष्करणं क्रीतं प्रामित्यकं परिवर्तितमभ्याहृतमुद्भिन्नं मालापहृतमाच्छेद्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेत्येवंरूपा विशोधिकोटिः, विशुद्ध्यति शेषं शुद्धं भक्तं यस्मिन्नुद्धृते यद्वा विशुद्ध्यति पात्रकमकृतकल्पत्रयमपि यस्मिन्नुज्झिते सा विशोधिः सा चासौ कोटिश्च—भेदश्च विशोधिकोटिः, उक्तं च—"उद्देसियंमि नवगं उवगरणे जं च पूइयं होइ । जावंतियमीसगयं अज्झोयरए य पढमपयं ॥ १ ॥ परियट्टिए अभिहडे उब्भिन्ने मालोहडे इय । अच्छिज्जे अणिसट्ठे पाओयर कीय पामिच्चे ॥ २ ॥ सुहुमा पाहुडियाऽविय ठवियगपिंडो य जो भवे दुविहो । सव्वोऽवि एस रासी विसोहिकोडी मुणेयव्वो ॥ ३ ॥" [ औद्देशिके नवकमाद्यमुपकरणे यच्च पूतिकं भवति । यावदर्थिकं मिश्रगतं अध्यवपूरके च प्रथमपदम् ॥१॥ परिवर्तितं अभ्याहृतं उद्भिन्नं मालापहृतं च। आच्छेद्यमनिसृष्टं प्रादुष्करणमपमित्यं क्रीतं ॥ २ ॥ सूक्ष्मा प्राभृतिका स्थापनापिण्डश्च यो भवेत् द्विविधः। सर्वोऽप्येष राशिर्विशोधिकोटी ज्ञातव्यः॥ ३ ॥ ]

इह च भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं गृहीतं ततस्तत्रैवानाभोगादिकारणवशतो विशोधिकोटिदोषदुष्टं गृहीतं पश्चाच्च कथमपि ज्ञातं यथैतद्विशोधिकोटिदोषदुष्टं मया गृहीतमिति ततो यदि तेन विनाऽपि निर्वहति तर्हि सकलमपि तद्विधिनाऽऽहारादि परिष्ठापयति, अथ न निर्वहति तदा यदेव विशोधिकोटिदोषदुष्टं तदेव तावन्मात्रं सम्यक्परिज्ञाय परित्यजति, यदि पुनरलक्षितेन सदृशवर्णगन्धादितया पृथक्परिज्ञातुमशक्येन मिश्रितं भवति यद्वा द्रवेण तक्रादि तदा सर्वस्यापि तस्य विवेकः, कृते च सर्वात्मना विवेके यद्यपि केचित्सूक्ष्मा अवयवा लगिता भवन्ति तथापि तत्र पात्रेऽकृतकल्पेऽप्यन्यत्परिगृह्णन् शुद्धः साधुःत्यक्तभक्तादेर्विशोधिकोटित्वादिति ॥५७०॥ अथ समितीराह—

**इरिया १ भासा २ एसण ३ आयाणाईसु ४ तह परिठ्ठवणा ५ । सम्मं जा उ पवित्ती सा समिई पंचहा एवं ॥ ५७१ ॥**

ईरणमीर्या—गतिः भाषणं—भाषा एषणमेषणा आदीयते—गृह्यते इत्यादानं तदादिर्येषां निक्षेपादिक्रियाविशेषाणां ते आदानादयः ईर्या च भाषा च एषणा च आदानादयश्च ते तथा(तेषु), परिष्ठापने—त्यजने सम्यगागमानुसारेण या प्रवृत्तिः—चेष्टा सा समितिः, पञ्चानां चेष्टानां तान्त्रिकीयं संज्ञा, तत ईर्यासमितिर्भाषासमितिरेषणासमितिरादाननिक्षेपसमितिः परिष्ठापनासमितिरित्येवमुक्तन्यायेन पञ्चप्रकारा समितिः, तत्र त्रसस्थावरजन्तुजाताभयदानदीक्षितस्य यतेरावश्यके प्रयोजने लोकैरत्यन्तक्षुण्णेषु रविरश्मिप्रतापितेषु प्रासुकविविक्तेषु मार्गेषु गच्छतो जन्तुरक्षानिमित्तं स्वशरीररक्षानिमित्तं च पादाग्रादारभ्य युगमात्रक्षेत्रं यावन्निरीक्ष्य या ईर्या—गतिस्तस्यां समितिरीर्यासमितिः, यदुक्तं—"पुरओ जुगमायाए, पेहमाणो महिं चरे । वज्जेंतो बीयहरियाइं, पाणे य दगमट्टियं ॥ १ ॥ ओवायं विसमं खाणुं, विज्जलं परिवज्जए । संकमेण न गच्छिज्जा, विज्जमाणे परक्कमे ॥ २ ॥" [ पुरतो युगमात्रेण प्रेक्षमाणो महीं चरेत् । वर्जयन् बीजहरितानि प्राणांश्च दकमृत्तिके

॥ १ ॥ अवपातं विपमं स्थाणुं कर्दमं परिवर्जयेत् । संक्रमेण न गच्छेत् विद्यमाने सरले पथि ॥ २ ॥ ] एवंविधोपयोगेन गच्छतो यतेर्यदि कथमपि प्राणिवधो भवति तथाऽपि तस्य पापं न भवति, यदाहुः—"उच्चालियंमि पाए इरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ १ ॥ न हु तस्स तन्निमित्तो बंधो सुहुमोऽवि देसिओ समए । अणवज्जो उ पओगेण सव्वभावेण सो जम्हा ॥ २ ॥" [ उच्चालिते पादे ईर्यासमितेन संक्रमार्थाय । व्यापद्येत द्वीन्द्रियादिर्म्रियेत तद्योगमासाद्य ॥ १ ॥ नैव तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि दर्शितः समये । अनवद्यस्तु प्रयोगेण सर्वभावेन स यस्मात् ॥ २ ॥ ] तथा—"जियदु व मरदु व जीवो अजदाचारस्स निच्छओ हिंसा । पयदस्स नत्थि बंधो हिंसामित्तेण समिदस्स ॥ १ ॥" [ जीवतु वा प्राणी म्रियतां वा अयताचारस्य निश्चयतो हिंसा । प्रयतस्य नास्ति बन्धः हिंसामात्रेण समितस्य ॥ १ ॥ ] तथा वाक्यशुद्ध्यध्ययनप्रतिपादितां सावद्यां भाषां धूर्तकामुककव्यादचौरचार्वाकादिभाषितानि च निर्दम्भतया वर्जयतः सर्वजनीनं स्वल्पमप्यतिबहुप्रयोजनसाधकमसन्दिग्धं च यद्भाषणं सा भाषासमितिः, तथा गवेषणग्रहणग्रासैषणादोषैरदूषितस्यान्नपानादे रजोहरणमुखवस्त्रिकाद्यौधिकोपधेः शय्यापीठफलकचर्मदण्डाद्यौपग्रहिकोपधेश्च विशुद्धस्य यद् ग्रहणं सा एषणासमितिः, तथा आसनसंस्तारकपीठफलकवस्त्रपात्रदण्डादिकं चक्षुषा निरीक्ष्य प्रतिलिख्य च सम्यगुपयोगपूर्वं रजोहरणादिना यद् गृह्णीयाद् यच्च निरीक्षितप्रतिलेखितभूमौ निक्षिपेत् सा आदाननिक्षेपसमितिः, अनुपयुक्तस्य तु प्रतिलेखनापूर्वमप्यादाने निक्षेपे च न शुद्धा समितिः, यदवाचि—"पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥ १ ॥ पुढवी आउक्काए वाऊ तेऊ वणस्सइतसाणं । पडिलेहणापमत्तो छण्हंपि विराहओ भणिओ ॥२॥" [ प्रतिलेखनां कुर्वाणो मिथः कथां करोति जनपदकथां वा । ददाति वा प्रत्याख्यानं वाचयति स्वयं प्रतीच्छति वा ॥ १ ॥ पृथ्व्यप्कायवायु-

तेजोवनस्पतित्रसानां षण्णामपि प्रतिलेखनाप्रमत्तो विराधको भणितः ॥ २ ॥] तथा पुरीषप्रश्रवणनिष्ठीवनश्लेष्मशरीरमलानुपकारिवसनान्नपानादीनां यज्जन्तुजातरहिते स्थण्डिले उपयोगपूर्वकं परित्यजनं सा परिष्ठापनासमितिः ॥५७१॥ इदानीं भावनाः प्रतिपादयति——

**पढममणिच्च १ मसरणं २ संसारो ३ एगया य ४ अन्नत्तं ५। असुइत्तं ६ आसव ७ संवरो ८ य**
**तह निज्जरा ९ नवमी ॥ ५७२ ॥ लोगसहावो १० बोहिय दुलहा ११ धम्मस्स साहओ अरहा १२।**
**एयाउ हुंति बारस जहक्कमं भावणीयाओ ॥ ५७३ ॥**

तत्र प्रथममनित्यभावना १ द्वितीया अशरणभावना २ तृतीया संसारभावना ३ चतुर्थी एकत्वभावना ४ पञ्चमी अन्यत्वभावना ५ षष्ठी अशुचित्वभावना ६ सप्तमी आश्रवभावना ७ अष्टमी संवरभावना ८ तथा नवमी निर्जराभावना ९ दशमी लोकस्वभावभावना १० एकादशी बोधिदुर्लभत्वभावना ११ द्वादशी धर्मकथकोऽर्हन्निति १२, एतास्तु भावना द्वादश भवन्ति यथाक्रमं—भणितक्रमेण भावनीया—अहर्निशमभ्यसनीया इति ॥ एतासां च स्वरूपं किञ्चिन्निरूपयामः, तत्रैवमनित्यभावना—ग्रस्यन्ते वज्रसाराङ्गास्तेऽप्यनित्यत्वरक्षसा। किं पुनः कदलीगर्भनिःसारानिह देहिनः ? ॥ १ ॥ विषयसुखं दुग्धमिव स्वादयति जनो बिडाल इव मुदितः। नोत्पाटितलकुटमिवोत्पश्यति यममहह किं कुर्मः ? ॥ २ ॥ धराधरधुनीनीरपूरपारिप्लवं वपुः। जन्तूनां जीवितं वातधूतध्वजपटोपमम् ॥ ३ ॥ लावण्यं ललनालोकलोचनाञ्चलचञ्चलम्। यौवनं मत्तमातङ्गकर्णतालचलाचलम् ॥ ४ ॥ स्वाम्यं स्वप्नावलीसाम्यं, चपलाचपलाः श्रियः। प्रेम द्वित्रिक्षणस्थेम, स्थिरत्वविमुखं सुखम् ॥ ५ ॥ सर्वेषामपि भावानां, भावयन्नित्यनित्यताम्। प्राणप्रियेऽपि पुत्रादौ, विपन्नेऽपि न शोचति ॥ ६ ॥ सर्ववस्तुषु नित्यत्वग्रहग्रस्तस्तु मूढधीः। जीर्णतार्णकुटीरेऽपि, भग्ने रोदित्यहर्निशम् ॥ ७ ॥ ततस्तृष्णाविनाशेन, निर्ममत्वविधा-

यिनीम् । शुद्धधीर्भावयेन्नित्यमित्यनित्यत्वभावनाम् ॥८॥ १ । अथाशरणभावना—पितुर्मातुर्भ्रातुस्तनयदयितादेश्च पुरतः, प्रभूताऽऽधिव्याधिव्रजनिगडिताः कर्मचरटैः । रटन्तः क्षिप्यन्ते यममुखगृहान्तस्तनुभृतो, हहा कष्टं लोकः शरणरहितः स्थास्यति कथम्? ॥ १ ॥ ये जानन्ति विचित्रशास्त्रविसरं ये मन्त्रतन्त्रक्रियाप्रावीण्यं प्रथयन्ति ये च दधति ज्योतिःकलाकौशलम् । तेऽपि प्रेतपतेरमुष्य सकलत्रैलोक्यविध्वंसिनोऽप्यस्य प्रतिकारकर्मणि न हि प्रागल्भ्यमाबिभ्रति ॥ २ ॥ नानाशस्त्रपरिश्रमोद्भटभटैरावेष्टिताः सर्वतो, गत्युद्दाममदान्धसिन्धुरशतैः केनाप्यगम्याः क्वचित् । शक्रश्रीपतिचक्रिणोऽपि सहसा कीनाशदासैर्बलादाकृष्टा यमवेश्म यान्ति हहहा निस्त्राणता प्राणिनाम् ॥ ३ ॥ उद्दंडं ननु दण्डसात्सुरगिरिं पृथ्वीं पृथुच्छत्रसात्, ये कर्तुं प्रभविष्णवः कृशमपि क्लेशं विनैवात्मनः । निःसामान्यबलप्रपञ्चचतुरास्तीर्थङ्करास्तेऽप्यहो, नैवाशेषजनौघघस्मरमपाकर्तुं कृतान्तं क्षमाः ॥ ४ ॥ कलत्रमित्रपुत्रादिस्नेहग्रहनिवृत्तये । इति शुद्धमतिः कुर्यादशरण्यत्वभावनाम् ॥ ५ ॥ २ । अथ संसारभावना—सुमतिरमतिः श्रीमानश्रीः सुखी सुखवर्जितः, सुतनुरतनुः स्वाम्यस्वामी प्रियः स्फुटमप्रियः । नृपतिरनृपः स्वर्गी तिर्यङ् नरोऽपि च नारकस्तदिति बहुधा नृत्यत्यस्मिन् भवी भवनाटके ॥ १ ॥ बद्ध्वा पापमनेककल्मषमहारम्भादिभिः कारणैर्गत्वा नारकभूमिपूद्भटतमःसङ्घट्टनष्टाध्वसु । अङ्गच्छेदनभेदनप्रदहनक्लेशादिदुःखं महज्जीवो यल्लभते तदत्र गदितुं ब्रह्मापि जिह्वाननः ॥ २ ॥ मायार्त्त्यादिनिबन्धनैर्बहुविधैः प्राप्तस्तिरश्चां गतिं, सिंहव्याघ्रमतङ्गजैणवृषभच्छागादिरूपस्पृशाम् । क्षुत्तृष्णावधबन्धताडनरुजावाहादिदुःखं सदा, यज्जीवः सहते न तत्कथयितुं केनाप्यहो शक्यते ॥ ३ ॥ खाद्याखाद्यविवेकशून्यमनसो निर्ह्रीकताऽऽलिङ्गिताः, सेव्यासेव्यविधौ समीकृतधियो निःशूकतावल्लभाः । तत्रानार्यनरा निरन्तरमहारम्भादिभिर्दुस्सहं, क्लेशं सङ्कलयन्ति कर्म च महादुःखप्रदं चिन्वते ॥ ४ ॥ मर्त्याः क्षत्रियवाडवप्रभृतयो येऽप्यार्यदेशोद्भवास्तेऽप्यज्ञानदरिद्रताव्यसनितादौर्भाग्यरोगादिभिः । अन्य-

प्रेषणमानभञ्जनजनावज्ञादिमिश्रानिशं, दुःखं तद्विषहन्ति यत्कथयितुं शक्यं न कल्पैरपि ॥ ५ ॥ रम्भागर्भसमः सुखी शिखिशिखाव-
र्णाभिरुच्चैरयःसूचीभिः प्रतिरोमभेदितवपुस्तारुण्यपुण्यः पुमान् । यद् दुःखं लभते तदष्टगुणितं स्त्रीकुक्षिमध्यस्थितौ, सम्पद्येत तदप्य-
नन्तगुणितं जन्मक्षणे प्राणिनाम् ॥ ६ ॥ बाल्ये मूत्रपुरीषधूलिलुठनाज्ञानादिभिर्निन्दिता, तारुण्ये विभवार्जनेष्टविरहानिष्टागमादिर्व्यथा ।
वृद्धत्वे तनुकम्पदृष्टयपटुता श्वासाद्यसुस्थात्मता, तत्का नाम दशाऽस्ति सा सुखमिह प्राप्नोति यस्यां जनः ? ॥ ७ ॥ सम्यग्दर्शनपालनादि-
मिरथ प्राप्ते भवे त्रैदशे, जीवाः शोकविषादमत्सरभयस्वल्पार्धिकत्वादिभिः । ईर्ष्याकाममदक्षुधाप्रभृतिभिश्चात्यन्तपीडार्दिताः, क्लेशेन क्षप-
यन्ति दीनमनसो दीर्घं निजं जीवितम् ॥ ८ ॥ इत्थं शिवफलाधायिभववैराग्यवीरुधः । सुधावृष्टिं सुधीः कुर्यादेनां संसारभावनाम् ॥९॥
३ । अथैकत्वभावना—उत्पद्यते जन्तुरिहैक एव, विपद्यते चैकक एव दुःखी । कर्मार्जयत्येकक एव चित्रमासेवते तत्फलमेक एव ॥ १ ॥
यज्जीवेन धनं स्वयं बहुविधैः कष्टैरिहोपार्ज्यते, तत्सम्भूय कलत्रमित्रतनयभ्रात्रादिभिर्भुज्यते । तत्तत्कर्मवशाच्च नारकनरस्वर्वासितिर्यग्भवे-
ष्वेकः सैष सुदुःसहानि सहते दुःखान्यसङ्ख्यान्यहो ॥ २ ॥ जीवो यस्य कृते भ्रमत्यनुदिशं दैन्यं समालम्बते, धर्मोद्भ्रश्यति वञ्चयत्य-
तिहितान् न्यायादपक्रामति । देहः सोऽपि सहात्मना न पदमप्येकं परस्मिन् भवे, गच्छत्यस्य ततः कथं वदत भोः साहाय्यमाधास्यति ?
॥ ३ ॥ स्वार्थैकनिष्ठं स्वजनस्वदेहमुख्यं ततः सर्वमवेत्य सम्यग् । सर्वत्र कल्याणनिमित्तमेकं, धर्मं सहायं विदधीत धीमान् ॥ ४ ॥ ४ ।
अथान्यत्वभावना—जीवः कायमपि व्यपास्य यदहो लोकान्तरं याति तद्भिन्नोऽसौ वपुषोऽपि कैव हि कथा द्रव्यादिवस्तुव्रजे ? । तस्मा-
ल्लिम्पति यस्तनुं मलयजैर्यो हन्ति दण्डादिभिर्यः पुष्णाति धनादि यश्च हरते तत्रापि साम्यं श्रयेत् ॥ १ ॥ अन्यत्वभावनामेवं, यः क-
रोति महामतिः । तस्य सर्वस्वनाशेऽपि, न शोकांशोऽपि, जायते ॥२॥ ५ । अथाशुचित्वभावना—लवणाकरे पदार्थाः पतिता लवणं यथा

भवन्तीह। काये तथा मलाः स्युस्तदसावशुचिः सदा कायः ॥ १ ॥ कायः शोणितशुक्रमीलनभवो गर्भे जरावेष्टितो, मात्रास्वादितखाद्यपेयरसकैर्वृद्धिं क्रमात्प्रापितः। क्लिद्यद्धातुसमाकुलः कृमिरुजागण्डूपदाद्यास्पदं, कैर्मन्येत सुबुद्धिभिः शुचितया सर्वैर्मलैः कश्मलः? ॥ २ ॥ सुस्वादं शुभगन्धिमोदकदधिक्षीरेक्षुशाल्योदनद्राक्षापर्पटिकामृताघृतपूरस्वर्गच्युताम्रादिकम्। भुक्तं यत्सहसैव यत्र मलसात्सम्पद्यते सर्वतस्तं कायं सकलाशुचिं शुचिमहो मोहान्धिता मन्वते ॥ ३ ॥ अम्भःकुम्भशतैर्वपुर्ननु बहिर्मुग्धाः शुचित्वं कियत्कालं लम्भयथोत्तमं परिमलं कस्तूरिकाद्यैस्तथा। विष्ठाकोष्ठकमेतदङ्गकमहो मध्ये तु शौचं कथङ्कारं नेष्यथ सूत्रयिष्यथ कथङ्कारं च तत्सौरभम्? ॥ ४ ॥ दिव्यामोदसमृद्धिवासितदिशः श्रीखण्डकस्तूरिकाकर्पूरागुरुकुङ्कुमप्रभृतयो भावा यदाश्लेषतः। दौर्गन्ध्यं दधति क्षणेन मलतां चाबिभ्रते सोऽप्यहो, देहः कैश्चन मन्यते शुचितया वैधेयतां पश्यत ॥ ५ ॥ इत्यशौचं शरीरस्य, विभाव्य परमार्थतः। सुमतिर्ममतां तत्र, न कुर्वीत कदाचन ॥ ६ ॥ ६ ॥ अथ **स्रवभावना**—मनोवचोवपुर्योगाः, कर्म येनाशुभं शुभम्। भविनामास्रवन्त्येते, प्रोक्तास्तेनास्रवा जिनैः ॥ १ ॥ मैत्र्या सर्वेषु सत्त्वेषु, प्रमोदेन गुणाधिके। माध्यस्थ्येनाविनीतेषु, कृपया दुःखितेषु च ॥ २ ॥ सततं वासितं स्वान्तं, कस्यचित्पुण्यशालिनः। वितनोति शुभं कर्म, द्विचत्वारिंशदात्मकम् ॥ ३ ॥ रौद्रार्त्तध्यानमिथ्यात्वकषायविषयैर्मनः। आक्रान्तमशुभं कर्म, विदधाति द्व्यशीतिधा ॥ ४ ॥ सर्वज्ञगुरुसिद्धान्तसङ्घसद्गुणवर्णकम्। ऋतं हितं च वचनं, कर्म सञ्चिनुते शुभम् ॥ ५ ॥ श्रीसङ्घगुरुसर्वज्ञधर्मधार्मिकदूषकम्। उन्मार्गदेशि वचनमशुभं कर्म पुष्यति ॥ ६ ॥ देवार्चनगुरूपास्तिसाधुविश्रामणादिकम्। वितन्वती सुगुप्ता च, तनुर्वितनुते शुभम् ॥ ७ ॥ मांसाशनसुरापानजन्तुघातनचौरिकाः। पारदार्यादि कुर्वाणमशुभं कुरुते वपुः ॥ ८ ॥ एनामाश्रवभावनामविरतं यो भावयेद्भावतस्तस्यानर्थपरम्परैकजनकाद् दुष्टाश्रवौघात् मनः। व्यावृत्त्याखिलदुःखदावजलदे निःशेषशर्मावलीनिर्माणप्रवणे शुभाश्रवगणे नित्यं रतिं पुष्यति

॥ ९ ॥ ७ । अथ **संवरभावना**—आश्रवाणां निरोधो यः, संवरः स प्रकीर्तितः। सर्वतो देशतश्चेति, द्विधा स तु विभज्यते ॥ १ ॥ अयोगिकेवलिष्वेव, सर्वतः संवरो मतः। देशतः पुनरेकद्विप्रभृत्याश्रवरोधिषु ॥ २ ॥ प्रत्येकमपि स द्वेधा, द्रव्यभावविभेदतः । यत्कर्मपुद्गलादानमात्मन्याश्रवतो भवेत् ॥ ३ ॥ एतस्य सर्वदेशाभ्यां, छेदनं द्रव्यसंवरः। भवहेतुक्रियायास्तु, त्यागोऽसौ भावसंवरः ॥ ४ ॥ युग्मम्। मिथ्यात्वकषायादीनामाश्रवाणां मनीषिभिः। निरोधाय प्रयोक्तव्या, उपायाः प्रतिपन्थिनः ॥ ५ ॥ यथा—मिथ्यात्वमार्त्तरौद्राख्यकुध्याने च सुधीर्जयेत्। दर्शनेनाकलङ्केन, शुभध्यानेन च क्रमात् ॥ ६ ॥ क्षान्त्या क्रोधं मृदुत्वेन, मानं मायामृजुत्वतः । सन्तोषेण तथा लोभं, निरुन्धीत महामतिः ॥ ७ ॥ शब्दादिविषयानिष्टानिष्टांश्चापि विषोपमान्। रागद्वेषप्रहाणेन, निराकुर्वीत कोविदः ॥ ८ ॥ य एतद्भावनासङ्गी, सौभाग्यं भजते नरः। एति स्वर्गापवर्गश्रीरवश्यं तस्य वश्यताम् ॥ ९ ॥ ७ । अथ **निर्जराभावना**—संसारहेतुभूताया, यः क्षयः कर्मसन्ततेः। निर्जरा सा पुनर्द्वेधा, सकामाकामभेदतः ॥ १ ॥ श्रमणेषु सकामा स्यादकामा शेषजन्तुषु । पाकः स्वत उपायाच्च, कर्मणां स्याद् यथाऽऽम्रवत् ॥ २ ॥ कर्मणां नः क्षयो भूयादित्याशयवतां सताम्। वितन्वतां तपस्यादि, सकामा शमिनां मता ॥ ३ ॥ एकेन्द्रियादिजन्तूनां, सज्ज्ञानरहितात्मनाम् । शीतोष्णवृष्टिदहनच्छेदभेदादिभिः सदा ॥ ४ ॥ कष्टं वेद्यमानानां, यः शाटः कर्मणां भवेत्। अकामनिर्जरामेनामामनन्ति मनीषिणः ॥ ५ ॥ युग्मम्। तपःप्रभृतिभिर्वृद्धिं, व्रजन्ती निर्जरा यतः। ममत्वं कर्म संसारं, हन्यात्तां भावयेत्ततः ॥६॥ ९ । अथ **लोकस्वभावभावना**—वैशाखस्थानस्थितकटिस्थकरयुगनराकृतिर्लोकः। भवति द्रव्यैः पूर्णः, स्थित्युत्पत्तिव्ययाक्रान्तैः ॥ १ ॥ ऊर्द्ध्वतिर्यगधोभेदैः, स त्रेधा जगदे जिनैः । रुचकादग्रप्रदेशान्मेरुमध्यव्यवस्थितात् ॥ २ ॥ नवयोजनशत्यूर्द्ध्वमधोभागेऽपि सा तथा। एतत्प्रमाणकस्तिर्यग्लोकश्चित्रपदार्थभृत् ॥ ३ ॥ ऊर्द्ध्वलोकस्तदुपरि, सप्तरज्जुप्रमाणकः । एतत्प्रमाणसंयुक्तश्चाधोलोको-

ऽपि कीर्तितः ॥ ४ ॥ रत्नप्रभाप्रभृतयः, पृथिव्यः सप्त वेष्टिताः । घनोदधिघनवाततनुवातैस्तमोघनाः ॥ ५ ॥ तृष्णाक्षुधावधाघातभेदनच्छेदनादिभिः । दुःखानि नारकास्तत्र, वेदयन्ते निरन्तरम् ॥ ६ ॥ प्रथमा पृथिवी पिण्डे, योजनानां सहस्रकाः । अशीतिर्लक्षमेकं च, तत्रोपरि सहस्रकम् ॥ ७ ॥ अधश्च मुक्त्वा पिण्डस्य, शेषस्याभ्यन्तरे पुनः । भवनाधिपदेवानां, भवनानि जगुर्जिनाः ॥ ८ ॥ युग्मम् । असुरा नागास्तडितः, सुपर्णा अग्नयोऽनिलाः । स्तनिताब्धिद्वीपदिशः, कुमारान्ता दशेति ते ॥ ९ ॥ व्यवस्थिताः पुनः सर्वे, दक्षिणोत्तरयोर्दिशोः । तत्रासुराणां चमरो, दक्षिणावासिनां विभुः ॥ १० ॥ उदीच्यानां बलिर्नागकुमारादेर्यथाक्रमम् । धरणो भूतानन्दश्च, हरिर्हरिसहस्तथा ॥ ११ ॥ वेणुदेवो वेणुदाली, चाग्निशिखाग्निमाणवौ । वेलम्बः प्रभञ्जनश्च, सुघोषमहाघोषकौ ॥ १२ ॥ जलकान्तो जलप्रभस्ततः पूर्णो वशिष्टकः । अमितो मितवाहनः, इन्द्रा ज्ञेया द्वयोर्दिशोः ॥ १३ ॥ अस्या एव पृथिव्या उपरितने मुक्तयोजनसहस्रे । योजनशतमध उपरि च मुक्त्वाऽष्टसु योजनशतेषु ॥ १४ ॥ पिशाचाद्यष्टभेदानां, व्यन्तराणां तरस्विनाम् । नगराणि भवन्त्यत्र, दक्षिणोत्तरयोर्दिशोः ॥ १५ ॥ पिशाचा भूता यक्षाश्च, राक्षसाः किन्नरास्तथा । किम्पुरुषा महोरगा, गन्धर्वा इति तेऽष्टधा ॥ १६ ॥ दक्षिणोत्तरभागेन, तेषामपि च तस्थुषाम् । द्वौ द्वाविन्द्रौ समाम्नातौ, यथासङ्ख्यं सुबुद्धिभिः ॥ १७ ॥ कालस्ततो महाकालः, सुरूपः प्रतिरूपकः । पूर्णभद्रो माणिभद्रो, भीमो भीमो महादिकः ॥ १८ ॥ किन्नरकिम्पुरुषौ सत्पुरुषमहापुरुषनामकौ तदनु । अतिकायमहाकायौ गीतरतिश्चैव गीतयशाः ॥ १९ ॥ अस्या एव पृथिव्या उपरि च योजनशतं हि यन्मुक्तं । तन्मध्यादध उपरि च योजनदशकं परित्यज्य ॥ २० ॥ मध्येऽशीताविह योजनेषु तिष्ठन्ति वनचरनिकायाः । अप्रज्ञप्तिकमुख्या अष्टावल्पर्धिकाः किञ्चित् ॥ २१ ॥ अत्र प्रतिनिकायं च, द्वौ द्वाविन्द्रौ महाद्युती । दक्षिणोत्तरभागेन, विज्ञातव्यौ मनीषिभिः ॥ २२ ॥ योजनलक्षोन्नतिना स्थितेन मध्ये सुवर्णमयवपुषा । मेरुगि-

रिणा विशिष्टे जम्बूद्वीपे भवन्त्यत्र ॥ २३ ॥ वर्षाणि भारतादीनि, सप्त वर्षधरास्तथा । पर्वता हिमवन्मुख्याः, षट् शाश्वतजिनाख्याः ॥ २४ ॥ योजनलक्षप्रमिताज्जम्बूद्वीपात्परो द्विगुणमानः । लवणसमुद्रः परतस्तद्द्विगुणद्विगुणविस्तारा: ॥ २५ ॥ बोद्धव्या धातकीखण्ड-कालोदाद्या असङ्ख्यकाः । स्वयम्भूरमणान्ताश्च, द्वीपवारिधयः क्रमात् ॥ २६ ॥ युग्मम् । प्रत्येकरससम्पूर्णाश्चत्वारस्तोयराशयः । त्रयो जलरसा अन्ये, सर्वेऽपीक्षुरसाः स्मृताः ॥ २७ ॥ सुजातपरमद्रव्यहृद्यमद्यसमोदकः । वारुणीवरवार्धिः स्यात्, क्षीरोदजलधिः पुनः ॥ २८ ॥ सम्यक्कथितखण्डादिमुग्धदुग्धसमोदकः । घृतवरः सुतापितनव्यगव्यघृतोदकः ॥ २९ ॥ लवणाब्धिस्तु लवणास्वादपानीयपूरितः । कालोदः पुष्करवरः, स्वयम्भूरमणस्तथा ॥ ३० ॥ मेघोदकरसाः किन्तु, कालोदजलधेर्जलम् । कालं गुरुपरिणामं, पुष्करोदजलं पुनः ॥ ३१ ॥ हितं लघुपरिणामं, स्वच्छस्फटिकनिर्मलम् । स्वयम्भूरमणस्यापि, जलधेर्जलमीदृशम् ॥ ३२ ॥ त्रिभागावर्तसुचतुर्जातकेक्षुरसोपमम् । शेषासङ्ख्यसमुद्राणां, नीरं निगदितं जिनैः ॥ ३३ ॥ समभूमितलादूर्ध्वं, योजने शतसप्तके । गते नवतिसंयुक्ते, ज्योतिषां स्यादधस्तलः ॥ ३४ ॥ तस्योपरि च दशसु, योजनेषु दिवाकरः । तदुपर्यशीतिसङ्ख्ययोजनेषु निशाकरः ॥ ३५ ॥ तस्योपरि च विंशत्यां, योजनेषु ग्रहादयः । स्यादेवं योजनशतं, ज्योतिर्लोको दशोत्तरम् ॥ ३६ ॥ जम्बूद्वीपे भ्रमन्तौ च, द्वौ चन्द्रौ द्वौ च भास्करौ । चत्वारो लवणाम्भोधौ, चन्द्राः सूर्याश्च कीर्तिताः ॥ ३७ ॥ धातकीखण्डके चन्द्राः, सूर्याश्च द्वादशैव हि । कालोदे द्विचत्वारिंशच्चन्द्राः सूर्याश्च कीर्तिताः ॥ ३८ ॥ पुष्करार्धे द्विसप्ततिश्चन्द्राः सूर्याश्च मानुषे । क्षेत्रे द्वात्रिंशमिन्दूनां, सूर्याणां च शतं भवेत् ॥ ३९ ॥ मानुषोत्तरतः पञ्चाशद्योजनसहस्रकैः । चन्द्रैरन्तरिताः सूर्याः, सूर्यैरन्तरिताश्च ते ॥ ४० ॥ मानुषक्षेत्रचन्द्रार्कप्रमाणार्धप्रमाणकाः । तत्क्षेत्रपरिधेर्वृद्ध्या, वृद्धिमन्तश्च सङ्ख्यया ॥ ४१ ॥ स्वयम्भूरमणं व्याप्य, घण्टाकारा असङ्ख्यकाः । शुभलेश्या मन्दलेश्यास्तिष्ठन्ति सततं स्थिराः ॥ ४२ ॥

समभूमितलादूर्ध्वं, सार्धरज्जौ व्यवस्थितौ । कल्पावनल्पसम्पत्ती, सौधर्मेशाननामकौ ॥ ४३ ॥ सार्धरज्जुद्वये स्यातां, समानौ दक्षिणोत्तरौ । सनत्कुमारमाहेन्द्रौ, देवलोकौ मनोहरौ ॥ ४४ ॥ ऊर्ध्वलोकस्य मध्ये च, ब्रह्मलोकः प्रकीर्तितः । तदूर्ध्वं लान्तकः कल्पो, महाशुक्रस्ततः परम् ॥ ४५ ॥ देवलोकः सहस्रारोऽथाष्टमो रज्जुपञ्चके । एकेन्द्रौ चन्द्रवद् वृत्तावानतप्राणतौ ततः ॥ ४६ ॥ रज्जुषट्के ततः स्यातामेकेन्द्रावारणाच्युतौ । चन्द्रवद्वर्तुलावेवं, कल्पा द्वादश कीर्तिताः ॥ ४७ ॥ ग्रैवेयकास्त्रयोऽधस्यास्त्रयो मध्यमकास्तथा । त्रयश्चोपरितनाः स्युरिति ग्रैवेयका नव ॥ ४८ ॥ अनुत्तरविमानानि, तदूर्ध्वं पञ्च तत्र च । प्राच्यां विजयमपाच्यां, वैजयन्तं प्रचक्षते ॥४९॥ प्रतीच्यां तु जयन्ताख्यमुदीच्यामपराजितम् । सर्वार्थसिद्धं तन्मध्ये, सर्वोत्तममुदीरितम् ॥ ५० ॥ स्थितिप्रभावलेश्याभिर्विशुद्ध्यवधिदीप्तिभिः । सुखादिभिश्च सौधर्माद्यावत्सर्वार्थसिद्धिकम् ॥ ५१ ॥ पूर्वपूर्वत्रिदशेभ्यस्तेऽधिका उत्तरोत्तरे । हीनहीनतरा देहगतिगर्वपरिग्रहैः ॥ ५२ ॥ घनोदधिप्रतिष्ठाना, विमानाः कल्पयोर्द्वयोः । त्रिषु वायुप्रतिष्ठानास्त्रिषु वायूदधिस्थिताः ॥ ५३ ॥ ते व्योमविहितस्थानाः; सर्वेऽप्युपरिवर्तिनः । इत्यूर्ध्वलोकविमानप्रतिष्ठानविधिः स्मृतः ॥ ५४ ॥ सर्वार्थसिद्धाद् द्वादशयोजनेषु हिमोज्ज्वला । योजनपञ्चचत्वारिंशल्लक्षायामविस्तरा ॥ ५५ ॥ मध्येऽष्टयोजनपिण्डा, शुद्धस्फटिकनिर्मला । सिद्धशिलेपत्प्राग्भारा, प्रसिद्धा जिनशासने ॥ ५६ ॥ तस्या उपरि गव्यूतत्रितयेऽतिगते सति । तुर्यगव्यूतषड्भागे, स्थिताः सिद्धा निरामयाः ॥ ५७ ॥ अनन्तसुखविज्ञानवीर्यसद्दर्शनाः सदा । लोकान्तस्पर्शिनोऽन्योऽन्यावगाढाः शाश्वताश्च ते ॥ ५८ ॥ एतां भव्यजनस्य लोकविषयामभ्यस्यतो भावनां, संसारैकनिबन्धने न विषयग्रामे मनो धावति । किन्त्वन्यान्यपदार्थभावनसमुन्मीलत्प्रबोधोद्धुरं, धर्मध्यानविधाविह स्थिरतरं तज्जायते संततम् ॥ ५९ ॥ १० ।

अथ बोधिदुर्लभत्वभावना—पृथ्वीनीरहुताशवायुतरुषु क्लिष्टैर्निजैः कर्मभिर्भ्राम्यन् भीमभवेऽत्र पुद्गलपरावर्ताननन्तानहो । जीवः कामम-

कामनिर्जरतया सम्प्राप्य पुण्यं शुभं, प्राप्नोति त्रसरूपतां कथमपि द्वित्रीन्द्रियाद्यामिह ॥ १ ॥ आर्यक्षेत्रसुजातिसत्कुलवपुर्नीरोगतासम्पदो, राज्यं प्राज्यसुखं च कर्मलघुताहेतोरवाप्नोत्ययम् । तत्त्वातत्त्वविवेचनैककुशलां बोधिं न तु प्राप्तवान्, कुत्राप्यक्षयमोक्षसौख्यजननीं श्रीसर्वविद्देशिताम् ॥ २ ॥ बोधिर्लब्धा यदि भवेदेकदाऽन्यत्र जन्तुभिः । इयत्कालं न तेषां तद्भवे पर्यटनं भवेत् ॥ ३ ॥ द्रव्यचारित्रमप्येतैर्वहुशः समवाप्यत । सज्ज्ञानकारिणी क्वापि, न तु बोधिः कदाचन ॥ ४ ॥ येऽसिध्यन् ये च सिद्ध्यन्ति, ये सेत्स्यन्ति च केचन । ते सर्वे बोधिमाहात्म्यात्तस्माद्बोधिरुपास्यताम् ॥ ५ ॥ ११ । अथ धर्मकथकोऽर्हन्निति भावना—अर्हन्तः केवलालोकालोकितालोकलोककाः । यथार्थं धर्ममाख्यातुं, पटिष्ठा न पुनः परे ॥ १ ॥ वीतरागा हि सर्वत्र, परार्थकरणोद्यताः । न कुत्राप्यनृतं ब्रूयुस्ततस्तद्धर्मसत्यता ॥ २ ॥ क्षान्त्यादिभेदैर्धर्मं च, दशधा जगदुर्जिनाः । यं कुर्वन् विधिना जन्तुर्भवाब्धौ न निमज्जति ॥ ३ ॥ पूर्वापरविरुद्धानि, हिंसादेः कारकाणि च । वचांसि चित्ररूपाणि, व्याकुर्वद्भिर्निजेच्छया ॥ ४ ॥ कुतीर्थिकैः प्रणीतस्य, सद्गतिप्रतिपन्थिनः । धर्मस्य सकलस्यापि, कथं स्वाख्याततता भवेत्? ॥ ५ ॥ यच्च तत्समये क्वापि, दयासत्यादिपोषणम् । दृश्यते तद्वचोमात्रं, बुधैर्ज्ञेयं न तत्त्वतः ॥ ६ ॥ यस्योद्दाममदान्धसिन्धुरघटं साम्राज्यमासाद्यते, यन्निःशेषजनप्रमोदजनकं सम्पद्यते वैभवम् । यत्पूर्णेन्दुसमद्युतिर्गुणगणः सम्प्राप्यते यत्परं, सौभाग्यं च विजृम्भते तदखिलं धर्मस्य लीलायितम् ॥ ७ ॥ यन्न प्लावयति क्षितिं जलनिधिः कल्लोलमालाकुलो, यत्पृथ्वीमखिलां धिनोति सलिलासारेण धाराधरः । यच्चन्द्रोष्णरुची जगत्युदयतः सर्वान्धकारच्छिदे, तन्निःशेषमपि ध्रुवं विजयते धर्मस्य विस्फूर्जितम् ॥ ८ ॥ अवन्धूनां बन्धुः सुहृदसुहृदां सम्यगगदो, गदार्त्तिक्लान्तानां धनमधनभावार्तमनसाम् । अनाथानां नाथो गुणविरहितानां गुणनिधिः, जयत्येको धर्मः परमिह हितव्रातजनकः ॥ ९ ॥ अर्हता कथितो धर्मः, सत्योऽयमिति भावयन् । सर्वसम्पत्करे धर्मे, धीमान् दृढतरो

भवेत् ॥ १० ॥ १२ ॥ एकामप्यमलामिमासु सततं यो भावयेद्भावनां, भव्यः सोऽपि निहन्त्यशेषकलुषं दत्तासुखं देहिनाम् । यस्त्व-भ्यस्तसमस्तजैनसमयस्ता द्वादशाप्यादराद्भ्यस्येल्लभते स सौख्यमतुलं किं तत्र कौतूहलम्? ॥ १ ॥ ५७२—५७३ ॥ अथ प्रतिमाः प्रतिपादयति—

मासाई सत्तंता ७ पढमा ८ थिइ ९ तइय सत्तराइदिणा १० । अहराइ ११ एगराई १२ भिक्खुपडिमाण बारसगं ॥ ५७४ ॥ पडिवज्जइ एयाओ संघयणधिइजुओ महासत्तो । पडिमाओ भावियप्पा सम्मं गुरुणा अणुन्नाओ ॥ ५७५ ॥ गच्छेच्चिय निम्माओ जा पुव्वा दस भवे असंपुण्णा । नवमस्स तइय वत्थुं होइ जहण्णो सुआभिगमो ॥ ५७६ ॥ वोसट्ठचत्तदेहो उवसग्गसहो जहेव जिणकप्पी । एसण अभिग्गहीया भत्तं च अलेवडं तस्स ॥ ५७७ ॥ गच्छा विणिक्खमित्ता पडिवज्जइ मासियं महापडिमं । दत्तेगा भोयणस्सा पाणस्सवि तत्थ एग भवे ॥५७८॥ जंत्थऽत्थमेइ सूरो न तओ ठाणा पयंपि संचलइ । नाएगराइवासी एगं च दुगं च अण्णाए ॥५७९॥ दुट्ठाण हत्थिमाईण नो भएणं पयंपि ओसरइ । एमाइनियमसेवी विहरइ जाऽखण्डिओ मासो ॥ ५८० ॥ पच्छा गच्छमुवेई एव दुमासी तिमासि जा सत्त । नवरं दत्ती वड्ढइ जा सत्त उ सत्तमासीए ॥ ५८१ ॥ तत्तो य अट्ठमीया भवई इह पढम सत्तराइंदी । तीइ चउत्थचउत्थेणऽपाणएणं अह विसेसो ॥ ५८२ ॥ उत्ताणगपासल्ली नेसज्जी वावि ठाण ठाइत्ता । सहउस्सग्गे घोरे

दिव्वाई तत्थ अविकंपो ॥ ५८३ ॥ दोच्चावि एरिसच्चिय बहिया गामाइयाण नवरं तु । उक्कुडल-
गंडसाई दण्डाययउव्व ठाइत्ता ॥ ५८४ ॥ तच्चावि एरिसच्चिय नवरं ठाणं तु तस्स गोदोही ।
वीरासणमहवावि चिट्ठिज्जा अंबखुज्जो वा ॥ ५८५ ॥ एमेव अहोराई छट्ठं भत्तं अपाणगं नवरं ।
गामनगराण बहिया वग्घारियपाणिए ठाणं ॥ ५८६ ॥ एमेव एगराई अट्ठमभत्तेण ठाण बाहि-
रओ । ईसीपब्भारगए अणिमिसनयणेगदिट्ठीए ॥ ५८७ ॥ साहट्टु दोवि पाए वग्घारियपाणि
ठायए ठाणं । वाघारियलंबियभुओ अंते य इमीइ लद्धित्ति ॥ ५८८ ॥

'मासाई'त्यादि गाथापञ्चदशकं, 'मासादयः' मासप्रभृतयः 'सप्तान्ताः' सप्तमासावसाना एकैकमासवृद्ध्या सप्त प्रतिमा भवन्ति, तत्र मासः परिमाणमस्या मासिकी प्रथमा एवं द्विमासिकी द्वितीया त्रिमासिकी तृतीया यावत् सप्तमासिकी सप्तमी, 'पढमा बिइ तइय सत्तराइदिण'त्ति सप्तानां प्रतिमानामुपरि प्रथमा द्वितीया तृतीया च सप्त रात्रिदिनानि—रात्रिन्दिवानि प्रमाणतो यस्यां सा तथा प्रतिमा भवति, तदभिलापश्चैवं—प्रथमा सप्तरात्रिन्दिवा द्वितीया सप्तरात्रिन्दिवा तृतीया सप्तरात्रिन्दिवा च, एताश्च तिस्रोऽपि क्रमेणाष्टमी नवमी दशमी चेति, 'अहराइ'त्ति अहोरात्रं परिमाणमस्याः साऽहोरात्रिकी एकादशी प्रतिमा, 'एगराइ'त्ति एका रात्रिर्यस्यां सा एकरात्रिः एकरात्रिरेवैकरात्रिकी द्वादशी प्रतिमा, इत्येवं 'भिक्षुप्रतिमाणां' साधुप्रतिज्ञाविशेषाणां द्वादशकं संभवतीति ॥ ५७४ ॥ अथ य एताः प्रतिपद्यते तमाह—'पडिवज्जइ' इत्यादिगाथात्रयं, प्रतिपद्यते—अभ्युपगच्छत्येताः—अनन्तरोक्ताः प्रतिमाः 'संहननधृतियुतः' तत्र संहननं—वज्रर्षभनाराचादेरन्यतरत् एतद्युक्तो ह्यत्यन्तं परीषहसहनसमर्थो भवति धृतिः—चित्तस्वास्थ्यं तद्युक्तश्च रत्यरतिभ्यां न बाध्यते, महासत्त्वः—सात्त्विकः स ह्यनुकूलप्रतिकूलोप-

सर्गेषु हर्षविषादौ न विधत्ते, 'भावितात्मा' सद्भावनाभावितान्तःकरणः प्रतिमानुष्ठानेन वा भावितात्मा, तद्भावना च तुलनापञ्चकेन स्यात्, तद्यथा—"तवेण सत्तेण सुत्तेण, एगत्तेण वलेण य । तुलणा पंचहा वुत्ता, पडिमं पडिवज्जओ ॥ १ ॥" [ तपसा सत्त्वेन सूत्रेण एकत्वेन वलेन च । तुलना पञ्चधोक्ता प्रतिमां प्रतिपद्यमानस्य ॥ १ ॥] एतद्व्याख्या च प्रागेवोक्ता, कथं भावितात्मेत्याह—'सम्यक्' यथाऽऽगमं, तथा 'गुरुणा' आचार्येणानुज्ञातः—अनुमतः, अथ गुरुरेव प्रतिपत्ता तदा व्यवस्थापिताचार्येण गच्छेन वाऽनुमत इति ॥५७५॥ तथा 'गच्छ एव' साधुसमुदायमध्य एव तिष्ठन् 'निर्मातः' आहारादिविषये प्रतिमाकल्पपरिकर्मणि परिनिष्ठितः, आह च—"पडिमाकप्पियतुल्लो गच्छे चिय कुणइ दुविहपरिकम्मं । आहारोवहिमाइसु तहेव पडिवज्जई कप्पं ॥ १ ॥" [ प्रतिमाकल्पिकतुल्यो गच्छ एव करोति द्विविधपरिकर्म । आहारोपध्यादिषु तथैव प्रतिपद्यते कल्पं ॥ १ ॥] आहारादिप्रतिकर्म चाग्रेतनगाथायां कथयिष्यते, परिकर्मपरिमाणं चैवं—मासिक्यादिषु सप्तसु या यत्परिमाणा प्रतिमा तस्यास्तत्परिमाणमेव परिकर्म, तथा वर्षासु नैताः प्रतिपद्यते न च परिकर्म करोति, तथा आद्यद्वयमेकत्रैव वर्षे, तृतीयचतुर्थ्यौ चैकैकस्मिन् वर्षे, अन्यासां तु तिसृणामन्यत्र वर्षे परिकर्म अन्यत्र वर्षे प्रतिपत्तिः, तदेवं नवभिर्वर्षैराद्याः सप्त समाप्यन्त इति । अथ तस्य कियान् श्रुताभिगमो भवतीत्याह—'जा पुव्वे'त्यादि, यावत्पूर्वाणि दश 'असम्पूर्णानि' किञ्चिदूनानि, सम्पूर्णदशपूर्वधरो हि अमोघवचनत्वाद्धर्मदेशनया भव्योपकारित्वेन तीर्थवृद्धिकारित्वात्प्रतिमादिकल्पं न प्रतिपद्यते, 'भवेत्' स्यात् श्रुताधिगम इति योगः, उत्कृष्टश्चायं जघन्यस्य वक्ष्यमाणत्वात्, अथ तमेवाह—नवमस्य पूर्वस्य—प्रत्याख्याननामकस्य तृतीयं वस्तु—आचाराख्यं तद्भागविशेषं यावदिति वर्तते स्यात् अस्य जघन्यः—अल्पीयान् श्रुताधिगमः—श्रुतज्ञानं सूत्रतोऽर्थतश्च, एतत्श्रुतविरहितो हि निरतिशयज्ञानत्वात्कालादि न जानातीति ॥५७६॥ तथा व्युत्सृष्टः परिकर्माभावेन त्यक्तो ममत्वत्यागेन देहः—कायो येन सः तथा, 'उपसर्गसहो' दिव्यमानुषतैर-

श्रोपद्रवसोढा 'यथैव' यद्वदेव 'जिनकल्पी' जिनकल्पिकः तद्वदुपसर्गसह इत्यर्थः, 'एषणा' पिण्डग्रहणप्रकारः, सा च सप्तविधा— "संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥" [असंसृष्टा संसृष्टा उद्धृता तथाऽल्पलेपिका चैव । अवगृहीता प्रगृहीता उज्झितधर्मा च सप्तमी ॥ १ ॥] इति वक्ष्यमाणस्वरूपा 'अभिगृहीता' अभिग्रहवती, अभिग्रहाश्चैवं—तासां सप्तानामेषणानां मध्ये आद्ययोर्द्वयोरग्रहणं पञ्चसु ग्रहणं, पुनरपि विवक्षितदिवसे अन्त्यानां पञ्चानां मध्ये द्वयोरभिग्रहः—एका भक्ते एका च पानके इति, तथा भक्तं च—अन्नं पुनरलेपकृतं—अलेपकारकं वल्लचनकादि 'तस्य' प्रतिमां प्रतिपत्तुकामस्य परिकर्म कुर्वतः, चशब्दादुपधिश्चास्य स्वकीयैषणाद्वयलब्ध एव, तदभावे यथाकृतोऽप्युचितप्राप्तिं यावत्स्यात्, जाते तूचिते तं व्युत्सृजति, उक्तं च—"उवगरणं सुद्धेसणमाणजुअं जमुचिअं सकप्पस्स । तं गिण्हइ तयभावे अहागडं जाव उचियं तु ॥ १ ॥ जाए उचिए य तयं वोसिरइ अहागडं विहाणेणं । इय आणानिरयस्सिह विन्नेयं तंपि तेण समं ॥ २ ॥" [उपकरणं शुद्धैषणामानयुतं यदुचितं स्वकल्पस्य । तत् गृह्णाति यथाकृतं तदभावे यावदुचितं तु ॥ १ ॥ जाते उचिते च तत् व्युत्सृजति यथाकृतं विधानेन । इत्याज्ञानिरतस्येह विज्ञेयं तदपि तेन सदृशं ॥ २ ॥] कल्पोचितं चोपधिमुत्पादयति स्वकीयेनैषणाद्वयेन, एतच्च एषणाचतुष्टयेऽन्तिमं, एषणाचतुष्टयं पुनरिदं—कार्पासिकाद्युद्दिष्टमेव वस्त्रं ग्रहीष्यामि १ प्रेक्षितमेव २ परिभुक्तप्रायमेवोत्तरीयादितया ३ तदप्युज्झितधर्मकमेवेति ४ ॥ ५७५—५७६—५७७ ॥ अथैवं कृतपरिकर्मा यत्करोति तदाह—'गच्छात्' साधुसमूहाद्विनिष्क्रम्य—तं विमुच्येत्यर्थः, तत्र यद्याचार्यादिः प्रतिमाप्रतिपत्ता तदा अल्पकालिकं साध्वन्तरे स्वपदनिक्षेपं कृत्वा शुभेषु द्रव्यादिषु शरत्काले सकलसाध्वामन्त्रणक्षामणपूर्वकं, उक्तं च—"खामेइ तओ संघं सबालवुड्ढं जहोचियं एवं । अच्चंतं संविग्गो पुव्वविरुद्धे विसेसेणं ॥ १ ॥ जं किंचि पमाएणं न सुट्ठु भे वट्टियं मए पुव्विं । तं भे खामेमि

अहं निस्सङ्गो निक्कसाओत्ति ॥ २ ॥" [ क्षमयति ततः सङ्घं सबालवृद्धं यथोचितं एवं । अत्यन्तं संविग्नः पूर्वविरुद्धान् विशेषेण ॥ १ ॥ यत् किञ्चित् प्रमादेन न सुष्ठु भवतां वर्त्तितं मया पूर्वं । तद् भवतां क्षमयामि अहं निश्शल्यो निष्कषाय इति ॥ २ ॥ ] प्रतिपद्यते—अभ्युपगच्छति 'मासिकीं' मासप्रमाणां 'महाप्रतिमां' गुरुकप्रतिज्ञां, तत्र च दत्तिः—अविच्छिन्नदानरूपा 'एका' एकैव भोजनस्य—अन्नस्याज्ञातोञ्छरूपस्य उद्धृताद्युत्तरैषणापञ्चकोपात्तस्यालेपकारिणः कृपणादिभिरजिघृक्षितस्य एकस्वामिसत्कस्यैवागुर्विणीबालवत्सापीयमानस्तनीभिः एलुकस्यान्तः पादमेकं विन्यस्यापरं बहिर्व्यवस्थाप्य दीयमानस्य तथा 'पानस्यापि' पानकाहारस्य चैकैव 'तत्र' मासिक्यां प्रतिमायां दत्तिर्भवेदिति ॥ तथा 'यत्र' जलस्थलदुर्गादौ स्थितस्येति गम्यते 'अस्तमेति' पर्यन्तं याति 'सूरो' रविः 'न' नैव 'ततः' तस्मात्स्थानाज्जलादेः 'पदमपि' पादप्रमाणमपि क्षेत्रमास्तां दूरं 'सञ्चरति' गच्छति आदित्योदयं यावत्, तथा 'ज्ञातः' प्रतिमाप्रतिमाप्रतिपन्नोऽयमित्येवं जनेनावसितः सन्नेकरात्रवासी—एकत्र ग्रामादावहोरात्रमेवावतिष्ठते, न त्वधिकमित्यर्थः, तथा 'अज्ञातो' यत्र ग्रामादौ प्रतिमाप्रतिपन्नतया अविदितस्तत्र एकं वा—एकरात्रं द्विकं वा—रात्रिद्वयं वसति, न परत इति ॥ तथा 'दुष्टानां' मारकाणां हस्त्यादीनां आदिशब्दात्सिंहव्याघ्रादीनां च 'भयेन' मरणभीत्या 'पदमपि' पादविक्षेपमात्रमपि, किं पुनः दूरतः ?, नैवापसरति—अपगच्छति, दुष्टो हि मारणार्थमागच्छन्नपसृतेऽपि साधौ हरितादि विराधयिष्यतीत्यतो नापसरति, अदुष्टस्त्वपसृते साधौ मार्गेणैव गच्छति ततो हरितादिविराधना न स्यादित्यदुष्टादपसरतीति, 'एवमादिनियमसेवी' एतत्प्रभृतिकाभिग्रहानुपालकः सन् आदिशब्दाच्छायाया उष्णं उष्णाच्छायायां च नोपसर्पतीत्याद्यभिग्रहो विहरति—ग्रामानुग्रामं सञ्चरति यावदखण्डितः—परिपूर्णो मासो जात इति शेषः, आदिशब्दादन्येऽपि बहवो नियमविशेषाः प्रतिपत्तव्याः, यथा संस्तारकोपाश्रयादीनां याचनार्थं संशयितसूत्रार्थयोर्गृहादेर्वा प्रश्नार्थं तृणकाष्ठादीनामनुज्ञापनार्थं प्रश्नितानां सूत्रादीनां सकृद् द्विर्वा

कथनार्थमेव चायं प्रतिमाप्रतिपन्नो वक्ति न तु भाषान्तरमिति, तथा आगन्तुकागारविवृतगृहवृक्षमूललक्षण एव वसतित्रये वसति न त्वन्यत्र, तत्र आगन्तुकागारं–यत्र कार्पटिकादय आगत्य वसन्ति विवृतगृहं–यदधः कुड्याभावादुपरि चाच्छादनाभावादनावृतं वृक्षमूलं–करीरादितरुमूलं साधुवर्जनीयदोषरहितं, उक्तं च—"जायणपुच्छाणुन्नवणपुट्ठवागरणभासगो चेव । आगमणवियडगिहरुक्खमूलगावास-यतिगोत्ति ॥ १ ॥" [ याचनापृच्छानुज्ञापनपृष्टव्याकरणभाषक एव । आगमनविवृतगृहवृक्षमूलत्रयावासक इति ॥ १ ॥ ] तथा वह्नेर्न बिभेति–प्रदीप्तादप्युपाश्रयान्न निर्गच्छति, अथ कश्चिद् बाह्वादौ गृहीत्वाऽऽकर्षति तदा निर्यात्यपि, तथा चरणप्रविष्टं दारुकण्टकशर्करादिकं न स्फेटयति अक्षिगतं रेणुतृणमलादिकं च नापनयति, तथा करचरणमुखादिकमङ्गं प्रासुकजलेनापि न क्षालयति, तदन्यसाधवो हि पुष्टालम्बने पटादि प्रक्षालयन्त्यपीति ॥ ५७८–५७९–५८० ॥ पश्चात्–मासपूरणानन्तरं गच्छं–साधुसमूहमुपैति विभूत्या, तथाहि–गच्छस्थानासन्नग्रामे आगच्छत्यसौ, आचार्यास्तु तत्प्रवृत्तिमन्विच्छन्ति, ततो नृपादीनां निवेद्यते यथा परिपालितप्रतिमारूपमहातपाः साधुरत्रागतः, ततो नृपादिलोकैः श्रमणसङ्घेन चाभिनन्द्यमानस्तत्र प्रवेक्ष्यते तपोबहुमानार्थं तस्य तदन्येषां श्रद्धावृद्ध्यर्थं प्रवचनप्रभावनार्थं चेति, एवमाद्या उक्ता शेषाः षडतिदिशन्नाह–'एवं' अनेनैव क्रमेण द्वैमासिकी त्रैमासिकी यावत्सप्तमप्रतिमा सप्तमासिक्यन्ता, 'नवरं' केवलं प्रथमायाः–मासिक्याः प्रतिमायाः सकाशाद् द्वैमासिक्यादीनामयं विशेषः–यथा दत्तयस्तासु वर्धन्ते, तत्र द्वैमासिक्यां भक्तस्य पानस्य च प्रत्येकं दत्तिद्वयं त्रैमासिक्यां भक्तस्य पानस्य च प्रत्येकं दत्तित्रयं, एवं यावत्सप्तमासिक्यां भक्तस्य पानस्य च सप्त सप्त दत्तय इति ॥ ५८१ ॥ अथाष्टमीमाह—'ततश्च' सप्तम्या अनन्तरमष्टमी प्रथमसप्तरात्रिन्दिवा प्रतिमा भवति 'इह' प्रक्रमे, तस्यां प्रथमसप्तरात्रिन्दिवायां चतुर्थचतुर्थेन–एकान्तरोपवासेन आसितव्यमिति शेषः, 'अपानकेन' पानकाहाररहितेन चतुर्विधाहाररहितेनेत्यर्थः, 'अ-

थे'त्ययं उक्तो वक्ष्यमाणश्च 'विशेषो' भेदः प्राक्तनप्रतिमाभ्यः, इह च पारणके आचाम्लं कर्तव्यं, दत्तिनियमस्तु नास्तीति ॥ तथा 'उत्तानक' ऊर्ध्वमुखशयितः 'पासल्ली'ति पार्श्वशयितः 'निसज्जी'ति निषद्यावान् समपुततयोपविष्टः 'वापी'ति विकल्पार्थः 'स्थानं' उक्तमेव कायचेष्टाविशेषरूपं 'स्थित्वा' कृत्वा ग्रामादिभ्यो बहिरिति शेषः, 'सहते' क्षमते 'उपसर्गान्' उपद्रवान् 'घोरान्' रौद्रान् 'दिव्यादीन्' देवकृतादीन्, आदिशब्दान्मानुषतैरश्चादिग्रहः, 'तत्र' तस्यां प्रतिमायामविकम्पो–मनःशरीराभ्यामचल इति ॥ ५८२–५८३ ॥ नवमीमाह—'द्वितीयाऽपि' द्वितीयसप्तरात्रिन्दिवाप्रतिमाऽपि 'ईदृश्येव' प्रथमसप्तरात्रिन्दिवप्रतिमासदृश्येव तपःपारणकसाधर्म्याद् ग्रामादिबहिर्वृत्तिसाधर्म्याच्च, अत एवाह—'बहिस्तादेव' बहिरेव ग्रामादिसन्निवेशविशेषाणां, नवरं–केवलमयं विशेषः, तुशब्दोऽवधारणे, स च योजित एव, 'उत्कटुको' भूमावन्यस्तपुततया उपविष्टः, तथा लगण्डं–दुःसंस्थितं काष्ठं तद्वच्छेते य एवंशीलोऽसौ लगण्डशायी, मस्तकपार्ष्णिकाभिरेव पृष्ठदेशेनैव वा स्पृष्टभूभागः, तथा दण्डवद्–यष्टिवदायतो–दीर्घो दण्डायतः–पादप्रसारणेन भूमिन्यस्तायतशरीरः स एव दण्डायतकः वाशब्दो विकल्पार्थः, स्थित्वा–अवस्थाय देवाद्युपसर्गान् सहत इति प्रक्रमः ॥ ५८४ ॥ दशमीमाह—'तृतीयाऽपि' तृतीयसप्तरात्रिन्दिवप्रतिमाऽपि 'ईदृश्येव' उक्तस्वरूपैव तपःपारणकग्रामादिबहिर्वृत्तिसाधर्म्यात्प्रथमरात्रिन्दिवप्रतिमातुल्यैवेत्यर्थः, 'नवरं' केवलं 'स्थानं' शरीरावस्थानं 'तस्य' प्रतिमाप्रतिपत्तुर्गोदोहीति–गोदोहकसमाकारत्वाद्गोदोहिका गोदोहनप्रवृत्तस्येव पुतयोः पार्ष्णिभ्यां संयोगे अग्रपादतलाभ्यामवस्थानक्रिया, सा विधेयेति शेषः, तथा वीराणां–दृढसंहननानामासनं वीरासनं, सिंहासनाद्यधिरूढस्य भूमिन्यस्तपादस्य सिंहासनाद्यपनयने सत्यचलितस्य तथैवावस्थानरूपं तदपि स्थानं, तस्येति प्रक्रमः, यद्वा वामपादो दक्षिणस्योरोरुपरि दक्षिणश्च पादो वामस्योरोरुपरि यत्र क्रियते दक्षिणकरतलस्योपरि वामतलं वामकरतलस्य चोपरि दक्षिणकरतलमुत्तानं नामिलग्नं च यत्र विधीयते

तद्वीरासनं 'अहवावि'त्ति अथवेति प्रकारान्तरोद्योतनार्थं अपिः समुच्चये 'तिष्ठेद्' अवतिष्ठेत् 'आम्रकुब्जो वा' आम्रफलवद्वक्राकारेणावस्थितः, एवमेतास्तिस्रोऽपि प्रथमसप्तरात्रिन्दिवाद्याः प्रतिमा एकविंशत्या दिवसैर्यान्तीति ॥ ५८५ ॥ एकादशीमाह—'एवमेव' अनन्तरोक्तनीत्या अहोरात्रिकी प्रतिमा भवति, नवरं—केवलं षष्ठं भक्तं—भोजनं वर्जनीयतया यत्र तत् षष्ठभक्तं—उपवासद्वयरूपं तपः, तत्र ह्युपवासद्वये चत्वारि भक्तानि वर्ज्यन्ते, एकाशनेन च तदारभ्यते तेनैव च निष्ठां यातीत्येवं षड्भक्तवर्जनरूपं तदिति, षष्ठमित्यत्र चानुस्वारोऽनागमिकः, अपानकं—पानकाहाररहितं तस्यां विधेममिति शेषः, तथा ग्रामनगरेभ्यो बहिस्तात् 'व्याघारितपाणिके' प्रलम्बितभुजस्य स्थानं—अवस्थानं भवति प्रतिमाप्रतिपन्नस्येति । इयं च अहोरात्रिकी प्रतिमा दिनत्रयेण याति अहोरात्रस्यान्ते षष्ठभक्तकरणात्, यदाह—'अहोराइया तिहिं, पच्छा छट्ठं करेइ'त्ति ॥ ५८६ ॥ द्वादशीमाह—एवमेव—अहोरात्रिकीवदेव च एकरात्रिकी प्रतिमा भवति, विशेषमाह—अष्टमभक्तेन—उपवासत्रयरूपेण पानकाहाररहितेन स्थानं—अवस्थानं तत्कर्तुर्बहिस्ताद् ग्रामादेः, तथाहि—ईषत्प्राग्भारगतः—ईषत्कुब्जो नद्यादिदुस्तटीस्थितो वाऽसौ स्यात्, तथाऽनिमिषनयनो—निर्निमेषनेत्रः, तथैकदृष्टिकः—एकपुद्गलगतदृष्टिर्यथास्थितगात्रो गुप्तसर्वेन्द्रिय इति । 'साहट्टु'त्ति संहृत्य द्वावपि 'पादौ' क्रमौ जिनमुद्रया व्यवस्थाप्येत्यर्थः व्याघारितपाणिः—वक्ष्यमाणार्थः 'ठायए'त्ति तिष्ठति करोति 'स्थानं' कायावस्थानविशेषं । अथ 'वाघारियपाणि'त्ति पदं सूत्रकृदेव व्याख्याति—'वाघारि'त्ति व्याघारितपाणिर्लम्बितभुजोऽवलम्बितबाहुरुच्यते, सम्यक् पालने चास्या यत् स्यात्तदाह—अन्ते च—सम्यक्पर्यन्तं नयने पुनरस्याः—एकरात्रिकीप्रतिमाया लब्धिः—लाभविशेषः स्यात्, आह च—"एगराइयं च णं भिक्खुपडिमं सम्मं अणुपालेमाणस्स इमे तओ ठाणा हियाए भवन्ति, तंजहा—ओहिनाणे वा समुपज्जेज्जा, मणपज्जवनाणे वा समुपज्जेज्जा, केवलनाणे वा असमुप्पण्णपुव्वे समुपज्जेज्जा" विराधने पुनः "उम्मायं वा लभेज्जा, दीह-

कालियं वा रोगायंकं पाउणेज्जा, केवलिपन्नत्ताओ धम्माओ भंसिज्जा" [ एकरात्रिकीं च भिक्षुप्रतिमां सम्यगनुपालयत इमानि त्रीणि स्थानानि हिताय भवन्ति, तद्यथा—अवधिज्ञानं वा समुत्पद्येत मनःपर्यवज्ञानं वा समुत्पद्येत असमुत्पन्नपूर्वं वा केवलज्ञानं समुत्पद्येत ॥ उन्मादं वा लभेत दीर्घकालिकं वा रोगातङ्कं प्राप्नुयात् केवलिप्रज्ञप्तात् धर्मात् भ्रश्येत ] इतिशब्दः समाप्तौ, इयं च प्रतिमा रात्रेरनन्तरमष्टमकरणाच्चतूरात्रिन्दिवमाना स्यात्, यदाह—'एगराइया चउहिं, पच्छा अट्ठमं करेइ'त्ति । अत्र च 'साहट्टु दोवि पाए वाघारियपाणि ठायए ठाणं । वाघारियलंबियभुओ अंते य इमीय लद्धित्ति ॥ १ ॥" इयं गाथा केषुचित्सूत्रपुस्तकेषु न दृश्यत इति ॥ ५८८ ॥ अथेन्द्रियनिरोधमाह—

**फासण १ रसणं २ घाणं ३ चक्खू ४ सोयंति ५ इंदियाणेसिं । फास १ रस २ गंध ३ वण्णा ४ सद्दा ५ विसया विणिद्दिट्ठा ॥ ५८९ ॥**

स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं चेति इन्द्रियाणि पञ्च, स्पर्शो रसो गन्धो वर्णः शब्दश्चेति तेषामिन्द्रियाणां यथाक्रमं विषया विनिर्दिष्टाः, अत्र च गाथायां यद्यपीन्द्रियनिरोधवचनं नास्ति तथाऽपीन्द्रियनिरोधस्य प्रस्तुतत्वादेतेषु विषयेषु इन्द्रियाणामासक्तिर्वर्जनीयेत्यर्थो ज्ञेयः । अनियन्त्रितानि हीन्द्रियाणि पदे पदे क्लेशसागर एव पातयन्ति, यदभ्यधायि—"सक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः । कृपणपतङ्गो रूपे भ्रमरो गन्धेन च विनष्टः ॥ १ ॥ पञ्चसु सक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः । एकः पञ्चसु सक्तः प्रयाति भस्मान्ततां मूढः ॥ २ ॥ तुरगैरिव तरलतरैर्दुर्दान्तैरिन्द्रियैः समाकृष्य । उन्मार्गे नीयन्ते तमोघने दुःखदे जीवाः ॥ ३ ॥ इन्द्रियाणां जये तस्माद्यत्नः कार्यः सुबुद्धिभिः । तज्जयो येन भविनां, परत्रेह च शर्मणे ॥ ४ ॥ ५८९ ॥ अथ प्रतिलेखनामाह—

पडिलेहणाण गोसावरण्हउग्घाडपोरिसीसु तिगं । तत्थ पढमा अणुग्गय सूरे पडिक्कमणकरणाओ ॥ ५९० ॥ मुहपोत्ति १ चोलपट्टो २ कप्पतिगं ३–४–५ दो निसिज्ज ६–७ रयहरणं ८ । संथारु ९ त्तरपट्टो १० दस पेहाऽणुग्गए सूरे ॥५९१॥ उवगरणचउद्दसगं पडिलेहिज्जइ दिणस्स पहरतिगे । उग्घाडपोरिसीए उ पत्तनिज्जोगपडिलेहा ॥ ५९२ ॥ पडिलेहिऊण उवहिं गोसंमि पमज्जणा उ वसहीए । अवरण्हे पुण पढमं पमज्जणा तयणु पडिलेहा ॥ ५९३ ॥ दोन्नि य पमज्जणाओ उउंमि वासासु तइय मज्झण्हे । वसहिं बहुसो पमज्जण अइसंघट्टऽन्नहिं गच्छे ॥ ५९४ ॥

प्रतिदिवसं साधुजनस्य प्रतिलेखनानां त्रिकं–तिस्रः प्रतिलेखनाः कर्तव्या भवन्ति, तद्यथा–एका 'गोस'त्ति प्रभाते द्वितीया 'अवरण्हे'त्ति अपराह्णे तृतीयप्रहरान्ते, तृतीया 'उग्घाडपोरिसि'त्ति उद्घाटपौरुष्यां समयभाषया पादोनप्रहरे, तत्र तासु तिसृषु प्रतिलेखनासु मध्ये प्रथमा तावत् प्रतिपाद्यते–यथा प्रभाते प्रतिक्रमणकरणानन्तरं अनुद्गते सूरे–सूर्योद्गमादर्वागमीषां दशानां स्थानानां प्रतिलेखना भवति ॥५९०॥ कानि पुनर्दश स्थानानीत्याह–मुखपोतिका १ चोलपट्टः २ कल्पत्रिकं–एक ऊर्णामयो द्वौ सूत्रमयौ ३–४–५ द्वे निषद्ये रजोहरणस्य, एका सूत्रमयी अभ्यन्तरनिषद्या ६ द्वितीया बाह्या पादप्रोञ्छनरूपा ७ रजोहरणं ८ संस्तारकः ९ उत्तरपट्टश्च १०, एतेषां दशानामपि स्थानानां 'प्रेक्षायां' प्रतिलेखनायां कृतायामुद्गच्छति सूरः, कोऽर्थः ?–एतेषु दशसु स्थानेषु प्रत्युपेक्षितेषु सत्सु यथा सूर्य उद्गच्छति तथा प्रतिलेखना कर्तव्येति, अन्ये त्वेकादशं दण्डकमाहुः, यदुक्तं निशीथचूर्णौ—'अन्ने भणंति–एक्कारसमो दंडओ'त्ति, कल्पचूर्णावप्युक्तं—'दंडओ एक्कारसमो'त्ति, शेषं च वसत्यादिकमुदिते एव सूर्ये प्रत्युपेक्ष्यते इति, इह च सूत्रे प्रत्युपेक्षणीयस्थानमानमेवोक्तं न तु प्रतिलेख-

नाक्रमः, तस्यागमेऽन्यथैवाभिधानात्, तदुक्तं निशीथचूर्णौ—"उवर्हिमि पच्चूसे पढमं मुहपोत्ति तओ रयहरणं तओ अंतोनिसिज्जा तओ वाहिरनिसिज्जा चोलपट्टो कप्पउत्तरपट्टसंथारपट्टदंडगो य, एस कमो, अन्नहा उक्कमो, पुरिसेसु पुव्वं आयरियस्स, पच्छा परिन्ना तओ गिलाणसेहाइयाण, अन्नहा उक्कमो'त्ति अत्र 'परिन्नि'त्ति अनशनिन उपधिं आचार्योपधिप्रतिलेखनानन्तरं प्रत्युपेक्षते, शेषं सुगमं ॥५९१॥ अथ द्वितीयतृतीयप्रतिलेखनास्वरूपमाह—दिनस्य प्रहरत्रिके अतिक्रान्ते सति उपकरणचतुर्दशकं स्थविरकल्पिकसत्कौघिकस्वरूपं प्रत्युपेक्षते, तत्र प्रथमं मुखवस्त्रिका ततश्चोलपट्टः ततो गोच्छकः ततः पात्रप्रतिलेखनिका ततः पात्रवन्धः ततः पटलानि ततो रजस्त्राणं ततः पात्रस्थापनं ततो मात्रकं ततः पतद्ग्रहः ततो रजोहरणं ततः कल्पत्रिकमिति, उपलक्षणमेतत्, ततोऽन्योऽप्यौपग्रहिकोपधिः प्रत्युपेक्षणीय इति । तथा उद्घाटपौरुष्यां सप्तविध पात्रनिर्योगप्रत्युपेक्षा भवति, तत्रासने समुपविष्टः प्रथमं मुखवस्त्रिकां प्रत्युपेक्ष्य गोच्छकं प्रत्युपेक्षते ततः पटलानि ततः पात्रकेसरिकां ततः पात्रवन्धं ततो रजस्त्राणं ततः पात्रं ततः पात्रस्थापनमिति, प्रत्युपेक्षणविधिस्तु विस्तरभयान्न लिख्यते तत ओघनिर्युक्तिपञ्चवस्तुकादेः स्वयमेवावसेयः ॥ ५९२ ॥ अत्रैव विशेषमाह—गोसे—प्रत्युपसि मुखवस्त्रिकादिलक्षणं पूर्वोक्तमुपधिं प्रत्युपेक्ष्य तदनु वसतेः—यतिनिवासलक्षणाया उपयुक्तेन साधुना प्रमार्जना विधेया, अपराह्णे पुनः प्रथमं वसतेः प्रमार्जना पश्चात्प्रत्युपेक्षणा उपधेरिति ॥ ५९३ ॥ यत्रापि वसतेर्जीवसंसक्तिर्न भवति तत्रापि ऋतुवद्धे काले द्वे प्रमार्जने विधेये प्रत्युपसि अपराह्णे च, द्वौ वारौ वसतिरवश्यतया प्रमार्जनीयेति भावः 'वर्षासु' वर्षाकाले पुनस्तृतीयाऽपि वसतेः प्रमार्जना भवति, द्वे पूर्वोक्ते एव तृतीया तु मध्याह्ने भवति, तथा ऋतुवद्धे वर्षासु वा कुन्थुप्रभृतिभिः प्राणिभिः संसक्तौ सत्यां वहुशोऽपि वसतिं प्रमार्जयेत्, चशब्दो विकल्पप्रदर्शनार्थः, विकल्पश्चायं—यदि संसक्ताऽपि वसतिः पूर्वोक्तप्रमार्जनाप्रमाणेनैवासंसक्ता भवति ततो नातिरिक्ता प्रमार्जना, नो चेत्तदा वहुशोऽपि प्रमा-

र्जना कर्तव्या, अथ बहुशो वसतेः प्रमार्जने प्राणिनामतिसङ्घट्टो भवति तदाऽन्यत्र—वसत्यन्तरे ग्रामान्तरे वा गच्छंतीति ॥ ५९४ ॥ अथ गुप्तीराह—

**मणगुत्तिमाइयाओ गुत्तीओ तिन्नि हुंति नायव्वा । अकुसलनिवित्तिरूवा कुसलपवित्तिस्सरूवा य ॥ ५९५ ॥**

मनोगुप्त्यादयो—मनोगुप्तिवाग्गुप्तिकायगुप्तिलक्षणा गुप्तयस्तिस्रो भवन्ति ज्ञातव्याः, तासां स्वरूपमाह—'अकुशलनिवृत्तिरूपा' अकुशलानां—अशुभानां मनोवचनकायानां निवृत्तिः—निरोधस्तद्रूपाः 'कुशलप्रवृत्तिस्वरूपाश्च' कुशलानां—शुभानां मनोवचनकायानां प्रवृत्तिः—व्यापारणं तत्स्वरूपाश्च ता इति, अयमभिप्रायः—इह मनोगुप्तिस्त्रिधा-आर्त्तरौद्रध्यानानुबन्धिकल्पनानिचयवियोगः प्रथमा, शास्त्रानुसारिणी परलोकसाधिका धर्मध्यानानुबन्धिनी माध्यस्थ्यपरिणतिर्द्वितीया, कुशलाकुशलमनोवृत्तिनिरोधेन योगनिरोधावस्थाभाविनी स्वात्मारामता तृतीयेति, वाग्गुप्तिर्द्विभेदा—मुखनयनभ्रूविकाराङ्गुल्याच्छोटनोर्द्ध्वीभावकासितहुंकृतलोष्ठक्षेपणादीनामर्थसूचिकानां चेष्टानां परिहारेणाद्य मया न वक्तव्यमित्यभिग्रहकरणमेका वाग्गुप्तिः, चेष्टाविशेषेण हि निजप्रयोजनानि सूचयतो मौनकरणाभिग्रहो निष्फल एवेति, तथा वाचनप्रच्छनपरपृष्टार्थव्याकरणादिपु लोकागमाविरोधेन मुखपोतिकाच्छादितमुखकमलस्य भाषमाणस्यापि वाग्वृत्तेर्नियन्त्रणं द्वितीया वाग्गुप्तिः, आभ्यां भेदाभ्यां वाग्गुप्तेः सर्वथा वाग्निरोधः सम्यग्भाषणं च स्वरूपं प्रतिपादितं भवति, भाषासमितौ तु सम्यग्वाक्प्रवृत्तिरेवेति वाग्गुप्तिभाषासमित्योर्भेदः, यदाहुः—"समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भयणिज्जो । कुसलवयमुदीरंतो जं वइगुत्तोवि समिओऽवि ॥ १ ॥" [ समितो नियमाद् गुप्तो गुप्तः समितत्वे भजनीयः । कुशलवच उदीरयन् यद् वचोगुप्तोऽपि समितोऽपि ॥ १ ॥]

कायगुप्तिर्द्वेधा—चेष्टानिवृत्तिलक्षणा यथागमचेष्टानियमलक्षणा च, तत्र दिव्यमानुषाद्युपसर्गसद्भावेऽपि क्षुत्पिपासादिपरीषहादिसम्भवेऽपि च यत्कायोत्सर्गकरणादिना कायस्य निश्चलताकरणं सर्वयोगनिरोधावस्थायां च सर्वथा यत्कायचेष्टानिरोधनं सा प्रथमा कायगुप्तिः, तथा गुरुप्रच्छनशरीरसंस्तारकभूम्यादिप्रतिलेखनप्रमार्जनादिसमयोक्तक्रियाकलापपुरःसरं शयनादि साधुना विधेयं, ततः शयनासननिक्षेपादानादिषु स्वच्छन्दचेष्टापरिहारेण नियता या कायचेष्टा सा द्वितीया कायगुप्तिरिति ॥ ५९५ ॥ इदानीमभिग्रहानाह—

**दव्वे खित्ते काले भावे य अभिग्गहा विणिद्दिट्ठा । ते पुण अणेगभेया करणस्स इमं सरूवं तु ॥ ५९६ ॥**

द्रव्ये क्षेत्रे काले भावे वाऽभिग्रहा विनिर्दिष्टाः—कथिताः जिनैः, ते पुनः सर्वेऽप्यनेकभेदाः, यथा त्रैलोक्यस्वामिना श्रीमन्महावीरेण छद्मस्थचर्यायां विहरता कौशाम्ब्यां गृहीताः, तत्र द्रव्याभिग्रहो यद्यहं कुल्मापवाकुलान् सूर्पैककोणे स्थितान् लप्स्ये तथा क्षेत्राभिग्रहो निगडनियन्त्रितचरणा यद्येकं पादमुदुम्बरस्य मध्ये द्वितीयं च बहिस्तात् दात्री करिष्यति तथा कालाभिग्रहो यदि दिवसद्वितीयपौरुष्यां अतिक्रान्तायां दास्यति तथा भावाभिग्रहो यदि मुण्डितशिरा रुदती सती सा दास्यति तदाऽहं भिक्षां गृहीष्यामि नान्यथेति, एवंविधाभिग्रहैर्भगवतः षण्मासाः पञ्चदिवसोनास्तपस्यतः सञ्जाताः इत्यनया दिशा द्रव्याद्यभिग्रहा विज्ञेयाः ॥ करणस्येदं—उक्तप्रकारेण स्वरूपमिति, अस्यापि करणस्य सप्ततिभेदान् श्रीगुरवः कथयन्ति, ते चैवं—आधाकर्मादयो द्विचत्वारिंशदपि दोषाः पिण्डशय्यावस्त्रपात्रलक्षणवस्तुचतुष्टयविषयत्वेन चत्वार एव गण्यन्ते समितयः पञ्च भावना द्वादश प्रतिमा अपि द्वादश इन्द्रियनिरोधाः पञ्च प्रतिलेखनाः पञ्चविंशतिः गुप्तयस्तिस्रः अभिग्रहाश्चत्वार इति सर्वमीलने च सप्ततिः ॥ ननु चरणकरणयोः कः प्रतिविशेषः ?, उच्यते, नित्यानुष्ठानं चरणं यत्तु

प्रयोजने आपन्ने क्रियते तत्करणमिति, तथा च व्रतादि सर्वकालमेव चर्यते, न पुनर्व्रतशून्यः कश्चित्काल इति, पिण्डविशुद्ध्यादयस्तु प्रयोजन एवापन्नेऽनुष्ठीयन्ते इति ॥ ५९६ ॥ ६७ ॥ सम्प्रति 'जङ्घाविज्जाचारणगमणसत्ति'त्ति अष्टषष्टं द्वारमाह—

**अइसयचरणसमत्था जंघाविज्जाहिं चारणा मुणओ । जंघाहिं जाइ पढमो निस्सं काउं रविकरेऽवि ॥ ५९७ ॥ एगुप्पाएण गओ रुयगवरंमि य तओ पडिनियत्तो । बीएणं नंदीसरंमि एइ तइएण समएणं ॥ ५९८ ॥ पढमेण पंडगवणं बीउप्पाएण नंदणं एइ । तइउप्पाएण तओ इह जंघाचारणो एइ ॥ ५९९ ॥ पढमेण माणुसोत्तरनगं तु नंदीसरं तु बीएणं । एइ तओ तइएणं कयचेइयवंदणो इहयं ॥ ६०० ॥ पढमेण नंदणवणे बीउप्पाएण पंडगवणंमि । एइ इहं तइएणं जो विज्जाचारणो होइ ॥ ६०१ ॥**

चरणं—गमनं तद्विद्यते येषां ते चारणाः, 'ज्योत्स्नादिभ्योऽण्' इति (पा० ५–२–१३ वा०) मत्वर्थीयोऽण् प्रत्ययः, तत्र गमनमन्येषामपि मुनीनामस्ति ततो विशेषणान्यथानुपपत्त्या चरणमिह विशिष्टं गमनमागमनं चाभिगृह्यते, अत एवातिशायने मत्वर्थीयोऽयं, यथा रूपवती कन्येत्यत्र, ततोऽतिशयचरणसमर्था—अतिशयगमनागमनलब्धिसम्पन्नाश्चारणाः, ते च द्विभेदाः—जङ्घाचारणा विद्याचारणाश्च, तत्र ये चारित्रतपोविशेषप्रभावतः समुद्भूतगमनागमनविषयलब्धिसम्पन्नास्ते जङ्घाचारणाः, ये पुनर्विद्यावशतः समुत्पन्नगमनागमनलब्धयस्ते विद्याचारणाः, जङ्घाचारणा रुचकवरद्वीपं यावद्गन्तुं समर्थाः विद्याचारणाश्च नन्दीश्वरं, तत्र जङ्घाचारणा यत्र कुत्रापि गन्तुमिच्छवस्तत्र रविकरानपि निश्रीकृत्य गच्छंति, ॥५९७॥ विद्याचारणास्त्वेवमेव, जङ्घाचारणश्च रुचकवरद्वीपं गच्छन्नेकेनैवोत्पातेन गच्छति प्रतिनिवर्तमानस्त्वेकेनोत्पातेन

नन्दीश्वरमायाति द्वितीयेन स्वस्थानमिति त्रय उत्पाताः, ॥५९८॥ यदि पुनर्मेरुशिखरं जिगमिषुस्तदा प्रथमेनैवोत्पातेन पण्डकवनमधिरोहति, प्रतिनिवर्त्तमानस्त्वेकेनोत्पातेन नन्दनवनमागच्छति द्वितीयेन स्वस्थानमिति, जङ्घाचारणो हि चारित्रातिशयप्रभावतो भवति, ततो लब्ध्युपजीवने औत्सुक्यभावतः प्रमादसम्भवाच्चारित्रातिशयनिबन्धना लब्धिरपहीयते, ततः प्रतिनिवर्तमानो द्वाभ्यामुत्पाताभ्यां स्वस्थानमायाति ॥५९९॥ विद्याचारणः पुनः प्रथमेनोत्पातेन मानुषोत्तरपर्वतं गच्छति, द्वितीयेन तु नन्दीश्वरं, तत्र च गत्वा चैत्यानि वन्दते, ततः प्रतिनिवर्तमानस्त्वेकेनैवोत्पातेन स्वस्थानमायाति, तथा मेरुं गच्छन् प्रथमेनोत्पातेन नन्दनवनं गच्छति द्वितीयेन पण्डकवनं, तत्र चैत्यानि वंदित्वा ततः प्रतिनिवर्तमान एकेनैवोत्पातेन स्वस्थानमायाति, ॥६००॥ विद्याचारणो हि विद्यावशात् भवति, विद्या च परिशील्यमाना स्फुटा स्फुटतरोपजायते, ततः प्रतिनिवर्त्तमानस्य शक्त्यतिशयसंभवात् एकेनैवोत्पातेन स्वस्थानागमनमिति, एतच्च चारणभेदद्वयमुपलक्षणं, अन्येऽपि बहवश्चारणा भवन्ति, तद्यथा—आकाशगामिनः पर्यङ्कासनसन्निविष्टाः कायोत्सर्गेस्थिता वा पादोत्क्षेपनिक्षेपरहिता व्योमचारिणः, अपरे वापीसरित्समुद्रादिषु जलमुपेत्याप्कायिकजीवानविराधयन्तो जले भूमाविव पादोत्क्षेपनिक्षेपकुशला जलचारणाः, अपरे भुव उपरि चतुरङ्गुलप्रमिते आकाशे जङ्घोत्क्षेपनिक्षेपनिपुणा जङ्घाचारणाः, अन्ये नानाद्रुमलतागुल्मपुष्पाण्युपादाय पुष्पसूक्ष्मजीवानविराधयन्तः कुसुमदलपटलमवलम्बमानाः पुष्पचारणाः, अपरे चतुर्योजनशतोच्छ्रितस्य निषधस्य नीलस्य च गिरेष्टङ्कच्छिन्नां श्रेणिमुपादायोपर्यधो वा पादपूर्वकं उत्तरणावतरणनिपुणाः श्रेणिचारणाः, अन्येऽग्निशिखामुपादाय तेजस्कायिकानविराधयन्तः स्वयमदह्यमानाः पादविहारनिपुणा अग्निशिखाचारणाः, अपरे धूमवर्ति तिरश्चीनामूर्द्ध्वगामिनीं वाऽऽलम्ब्यास्खलितगमनास्कन्दिनो धूमचारणाः, कुब्जवृक्षान्तरालभाविनभःप्रदेशेषु कुब्जवृक्षादिसम्बद्धमर्कटकतन्त्वालम्बनतः पादोत्क्षेपनिक्षेपक्षमा मर्कटकतन्तूनच्छिन्दन्तो यान्तो मर्कटकतन्तुचारणाः, चन्द्रार्कग्रहनक्षत्राद्य-

न्यतमज्योतीरश्मिसम्बन्धेन भुवीव चरणचङ्क्रमणप्रवणा ज्योतीरश्मिचारणाः, प्रतिलोमानुलोमवृत्तिषु नानादिग्मुखोन्मुखेषु मारुतेषु तत्प्रदेशश्रेणिमुपादाय गतिमस्खलितक्रमविन्यासामास्कन्दन्तो वायुचारणाः, परे नीहारमवष्टभ्याप्कायिकजीवपीडामजनयन्तो गतिमसङ्गां कुर्वाणा नीहारचारणाः, एवमादयोऽन्येऽपि जलदचारणावश्यायचारणफलचारणादयो वक्तव्याः ॥ ६०१ ॥ ६८ ॥ इदानीं 'परिहारविसुद्धितवो'त्ति एकोनसप्ततितमं द्वारमाह—

परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं ॥ ६०२ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ । अट्ठममिहमुक्कोसो एत्तो सिसिरे पवक्खामि ॥ ६०३ ॥ सिसिरे तु जहन्न तवो छट्ठाई दसमचरमगो होइ । वासासु अट्ठमाई बारसपज्जंतगो नेओ ॥ ६०४ ॥ पारणगे आयामं पंचसु गहो दोसुऽभिग्गहो भिक्खे । कप्पट्ठियावि पइदिण करेंति एमेव आयामं ॥ ६०५ ॥ एवं छम्मासतवं चरिउं परिहारिया अणुचरंति । अणुचरगे परिहारियपरिट्ठिए जाव छम्मासा ॥ ६०६ ॥ कप्पट्ठिओऽवि एवं छम्मासतवं करेइ सेसा उ । अणुपरिहारियभावं वयंति कप्पट्ठियत्तं च ॥ ६०७ ॥ एवं सो अट्ठारसमासपमाणो य वन्निओ कप्पो । संखेवओ विसेसो विसेससुत्ताउ नायव्वो ॥ ६०८ ॥ कप्पसम्मत्तीएँ तयं जिण-

---

१ एगो वायणायरिओ चउरो तविणो तदणुचरा चउरो । मुणिनवगं निग्गच्छइ परिहारविसुद्धिचरणाय ॥ १ ॥ इत्यविवृता गाथा क्वचिट्टीकापुस्तकादर्शे सोपयोगा च ।

**कप्पं वा उविंति गच्छं वा। पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥ ६०९ ॥ तित्थयरसमीवासेवगस्स पासे व नो व अन्नस्स। एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥ ६१० ॥**

'परी'त्यादिगाथानवकं, परिहरणं परिहारः—तपोविशेषस्तेन चरन्तीति पारिहारिकाः, ते द्विधा—निर्विशमानका निर्विष्टकायिकाश्च, तत्र निर्विशमानका—विवक्षिततपोविशेषासेवकाः निर्विष्टकायिकाः—आसेवितविवक्षिततपोविशेषाः, इह च नवको गणः—चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिण एकः कल्पस्थितो वाचनाचार्यः, यद्यपि च सर्वेऽपि श्रुतातिशयसंपन्नास्तथापि कल्पत्वात्तेषामेकः कश्चित् कल्पस्थितोऽवस्थाप्यते, तेषां च परिहारिकाणां निर्विशमाननिर्विष्टकायिकानां तपस्त्रिधा—जघन्यं मध्यममुत्कृष्टं च, तच्च त्रिविधमपि शीतकाले उष्णकाले वर्षाकाले च प्रत्येकं भणितं धीरैः—तीर्थकृद्भिरिति ॥६०२॥ तत्र ग्रीष्मकाले तप आह—'तत्र' तेषु त्रिषु कालेषु मध्ये ग्रीष्मे—उष्णकालेऽतिरूक्षत्वाज्जघन्यं तपश्चतुर्थ—एक उपवासः मध्यमं पुनः षष्ठं—द्वावुपवासौ अष्टमं—त्रय उपवासा उत्कृष्टं तपो भवति, तपःशब्दस्य सूत्रे सर्वत्र प्राकृतत्वात् पुंस्त्वं, इत ऊर्द्धं शिशिरे—शीतकाले तपः प्रवक्ष्यामि ॥ ६०३ ॥ तदेवाह—शिशिरे—शीतकाले ग्रीष्मतः किञ्चित्साधारणे पुनर्जघन्यादि—जघन्यमध्यमोत्कृष्टं यथाक्रमं षष्ठादिदशमपर्यन्तं तपो भवति, कोऽर्थः ?—जघन्यं षष्ठं मध्यममष्टमं उत्कृष्टं दशममुपवासचतुष्टयलक्षणमिति, तथा वर्षासु साधारणे कालेऽष्टमादिद्वादशपर्यन्तं क्रमेण जघन्यमध्यमोत्कृष्टं तपो ज्ञेयं, कोऽर्थः ?—जघन्यं अष्टमं मध्यमं दशमं उत्कृष्टं च द्वादशमुपवासपञ्चकलक्षणं तप इति ॥६०४॥ पारणके त्रिष्वपि कालेषु—ग्रीष्मशीतवर्षालक्षणेषु तेषामाचाम्लं भवति, तथा संसृष्टादयः सप्त भिक्षा भवन्ति, तत्र पञ्चसु उत्तरासु—उद्धृतादिषु ग्रहो—ग्रहणं, संसृष्टासंसृष्टे आद्ये द्वे भिक्षे वर्जयित्वा उद्धृतादयः पञ्चैव ग्रहीतव्या इत्यर्थः, पुनरपि विवक्षितदिनेऽन्त्यानां पञ्चानां मध्ये द्वयोरभिग्रहः—अद्य मया द्वे एव विवक्षिते भिक्षे ग्राह्ये इत्येवंस्वरूपः, तत्राप्येका भक्ते एका

च पानके इति, इदं चतुर्णां पारिहारिकाणां तपः, ये तु कल्पस्थितादयः पञ्च एको वाचनाचार्यश्चत्वारश्चानुचारिणः, ते सर्वेऽपि एवमेव— पूर्वोक्तभिक्षाभिग्रहयुक्ताः सन्तः प्रतिदिनमाचाम्लं कुर्वन्तीति ॥ ६०५ ॥ एवं षण्मासान् तपश्चरित्वा पारिहारिका अनुचरन्ति—अनुचरा भवन्ति, वैयावृत्त्यकरा इत्यर्थः, ये चानुचरका आसन् ते पारिहारिकतपसि परि—सामस्त्येन स्थिता भवन्ति यावत् षण्मासाः, अयमर्थः— ये पूर्वमनुचारिण आसन् ते पूर्वोक्तप्रकारेणैव षण्मासान् यावत् निर्विशमानका भवन्ति, ये च पूर्वं तपःप्रविष्टा आसन् तेऽनुचारिणो भवन्ति ॥ ६०६ ॥ मासद्वादशकानन्तरं कल्पस्थितोऽपि—वाचनाचार्योऽप्येवं—पूर्वोक्तन्यायेन षण्मासान् यावत् परिहारिकतपः करोति, शेषास्तु अष्टौ अनुपारिहारिकभावं—वैयावृत्त्यकरत्वं कल्पस्थितत्वं च—वाचनाचार्यत्वं व्रजन्ति, शेषाणामष्टानां मध्ये सप्त वैयावृत्त्यकरा भवन्ति एकस्तु वाचनाचार्य इत्यर्थः ॥ ६०७ ॥ एवमसौ कल्पोऽष्टादशमासप्रमाणो वर्णितः सङ्क्षेपतः, यस्त्वत्र विशेषः कश्चित् स विशेषसूत्रात् —कल्पादेर्ज्ञातव्यः ॥ ६०८ ॥ कल्पसमाप्तौ च यत्कर्तव्यं तदाह—'कप्पसम्मत्तीए' इत्यादि गाथापूर्वार्द्धं, कल्पस्य—पारिहारिकानुष्ठानरूपस्य समाप्तौ 'तयं'ति तकं तमेव पारिहारिककल्पं जिनकल्पं वा उपयान्ति—प्रतिपद्यन्ते गच्छं वा अनुसरन्ति । परिहारविशुद्धिका हि द्विविधाः—इत्वरा यावत्कथिकाश्च, तत्र ये कल्पसमाप्त्यनन्तरं तमेव कल्पं गच्छं वा समुपयान्ति ते इत्वराः, ये पुनः कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपद्यन्ते ते यावत्कथिकाः, उक्तं च—"इत्तरिय थेरकप्पे जिणकप्पे आवकहिय"त्ति, [ इत्वराः स्थविरकल्पे यावत्कथिका जिनकल्पे ] अत्र स्थविरकल्पग्रहणमुपलक्षणं, स्वकल्पे चेति द्रष्टव्यं, इह चेत्वराणां कल्पप्रभावादेव देवमानुषतिर्यग्योनिककृता उपसर्गाः सद्योघातिन आतङ्का अतीवाविषह्याश्च वेदना न प्रादुर्भवन्ति, यावत्कथिकानां तु सम्भवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः सम्भवन्तीति, उक्तं च—"इत्तरियाणुवसग्गा आयंका वेयणा य न

हवंति । आवकहियाण भइया" इति [ इत्वराणामुपसर्गा आतङ्का वेदनाश्च न भवन्ति । यावत्कथिकानां भक्ताः ] अथायं कल्पो यस्य समीपे प्रतिपद्यते तं सार्धगाथया प्राह–'पडिवज्जे'त्यादि प्रतिपद्यमानकाः–पारिहारिककल्पं प्रतिपत्तुकामाः पुनर्जिनसकाशे–तीर्थकरपार्श्वे प्रतिपद्यन्ते, तीर्थकरसमीपासेवकस्य वा पार्श्वे, येनैतत्तपस्तीर्थकरसमीपे प्रतिपन्नपूर्वं भवति तत्सकाशे वा प्रतिपद्यन्ते इत्यर्थः, एतद्द्वयं मुक्त्वा न पुनरन्यस्य पार्श्वे प्रतिपत्तिरिति, एतेषां यच्चरणं–चारित्रं तत्परिहारविशुद्धिकमभिधीयते, परिहारेण–तपोविशेषेण विशुद्धिः–निर्मलता यस्मिन् चारित्रे इति व्युत्पत्तेः ६०९-१०। अथैते परिहारविशुद्धिकाः कस्मिन् क्षेत्रे काले वा सम्भवन्ति?, उच्यते, इह क्षेत्रादिनिरूपणार्थं बहूनि द्वाराणि प्रवचने निरूप्यन्ते अस्माभिस्तु ग्रन्थगौरवभीरुभिर्विनेयजनानुग्रहाय कानिचिद्दर्श्यन्ते–(ग्रन्थाग्रं ६०००) तत्र क्षेत्रद्वारे द्विधा मार्गणा–जन्मतः सद्भावतश्च, तत्र यत्र क्षेत्रे जन्म तत्र जन्मतो मार्गणा, यत्र च कल्पं प्रतिपद्यते तत्र सद्भावतः, तत्र जन्मतः सद्भावतश्च पञ्चसु भरतेषु पञ्चसु चैरवतेषु प्राप्यन्ते नतु महाविदेहेषु, न चैतेषां संहरणमस्ति येन जिनकल्पिका इव संहरणतः सर्वासु कर्मभूमिष्वकर्मभूमिषु वा प्राप्येरन्, उक्तं च—'खेत्ते भरहेरवएसु होंति संहरणवज्जिया नियमा'। [ क्षेत्रे भरतैरवतयोर्भवन्ति संहरणवर्जिता नियमात् ।] १। काल-द्वारे अवसर्पिण्यां तृतीये चतुर्थे वाऽरके जन्म सद्भावः पञ्चमेऽपि, उत्सर्पिण्यां द्वितीये तृतीये चतुर्थे वा जन्म सद्भावः पुनस्तृतीये चतुर्थे वा, उक्तं च—' ओसप्पिणीए दोसुं जम्मणओ तीसु संतिभावे य । उस्सप्पिणि विवरीओ जम्मणओ संतिभावे य ॥ १ ॥" [ अवसर्पिण्यां द्वयोर्जन्मतस्तिसृषु सद्भावे च । उत्सर्पिण्यां विपरीतो जन्मतः सद्भावतश्च ॥ १ ॥ ] नोत्सर्पिण्यवसर्पिणीरूपे तु चतुर्थारकप्रतिभागकाले न सम्भवन्त्येव, महाविदेहक्षेत्रे तेषामसम्भवात् २। तीर्थद्वारे परिहारविशुद्धिको नियमतस्तीर्थे प्रवर्तमान एव सम्भवति न तूच्छेदे नानुत्पत्त्या वा तदभावे जातिस्मरणादिना, उक्तं च—"तित्थेत्ति नियमओच्चिय होइ स तित्थंमि न उण तदभावे । विगएऽणु-

प्पण्णे वा जाईसरणाइएहिं तु ॥ १ ॥" [ तीर्थे इति नियमत एव भवति स तीर्थे नतु तदभावे । विगतेऽनुत्पन्ने वा जातिस्मरणादिकैस्तु ॥ १ ॥ ] ३ । पर्यायद्वारे पर्यायो द्विधा—गृहस्थपर्यायो यतिपर्यायश्च, एकैकोऽपि द्विधा—जघन्य उत्कृष्टश्च, तत्र गृहस्थपर्यायो जघन्य एकोनत्रिंशद्वर्षाणि यतिपर्यायो विंशतिः, द्वावपि चोत्कर्षतो देशोनपूर्वकोटीप्रमाणौ, उक्तं च पञ्चवस्तुके—"एयस्स एस नेओ गिहिपरियाओ जहन्न गुणतीसा । जइपरियाओ वीसा दोसुवि उक्कोस देसूणा ॥ १ ॥" [ एतस्यैष ज्ञेयो गृहिपर्यायो जघन्यत एकोनत्रिंशत् यतिपर्यायो विंशतिः द्वयोरप्युत्कर्षतो देशोना (पूर्वकोटी ) ॥ १ ॥ ] यत्पुनरत्र सूत्रे—"जम्मेण तीसवरिसो परियाएण गुणवीसवरिसो य । परिहारं पट्ठविउं कप्पइ मणुओ हु एरिसओ ॥ १ ॥" इत्युक्तं तदसङ्गतमिव लक्ष्यते, कल्पादिभिर्व्यभिचारात्, यदुक्तं कल्पभाष्ये—"गिहिपरियाए जहन्नओ गुणतीसा । जइपरियाए वीसा दोसुं उक्कोसदेसूणा ॥ १ ॥" [ गृहिपर्याये जघन्यत एकोनत्रिंशत् यतिपर्याये विंशतिः द्वयोरुत्कर्षतो देशोना ॥ १ ॥ ] ४ । आगमद्वारे अपूर्वमागमं स नाधीते, यस्मात्तं कल्पमधिकृत्य गृहीतोचितयोगाराधनत एव स कृतकृत्यतां भजते, पूर्वाधीतं विश्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनाः सम्यक्प्रायोऽनुस्मरति, आह च—"अप्पुव्वं नाहिज्जइ आगममेसो पडुच्च तं कप्पं । जमुचियपगहियजोगाराहणओ एस कयकिच्चो ॥ १ ॥ पुव्वाहीयं तु तयं पायं अणुसरइ निच्चमेवेसो । एगग्गमणो सम्मं विस्सोयसियाएँ खयहेऊ ॥ २ ॥" [ अपूर्वं नाधीते आगममेष प्रतीत्य तं कल्पं । यदुचितप्रगृहीतयोगाराधनात एष कृतकृत्यः ॥१॥ पूर्वाधीतं तु तं नित्यमेवैषोऽनुस्मरति । एकाग्रमनाः सम्यक् विस्रोतसिकायाः क्षयहेतोः ॥ २ ॥ ] ५ । वेदद्वारे प्रवृत्तिकाले वेदः पुरुषवेदो वा भवेन्नपुंसकवेदो वा, न स्त्रीवेदः, स्त्रियाः परिहारविशुद्धिकल्पप्रतिपत्त्यसम्भवात्, अतीतनयमधिकृत्य पुनः पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेदवेदो वा, तत्र सवेदः श्रेणिप्रतिपत्त्यभावे उपशमश्रेणिप्रतिपत्तौ क्षपकश्रेणिप्रतिपत्तौ वा त्ववेदः, उक्तं च—"वेदो

पविसिकाले इत्थीवज्जो उ होइ एगयरो । पुव्वपडिवन्नगो पुण होइ सवेदो अवेदो वा ॥ १ ॥" [ वेदः प्रवृत्तिकाले स्त्रीवर्जस्तु भवत्ये- कतरः । पूर्वप्रतिपन्नकः पुनर्भवति सवेदोऽवेदो वा ॥ १ ॥ ] ६ । कल्पद्वारे स्थितकल्प एवायं, नास्थितकल्पे, 'ठियकप्पंमि य नियमा' इति वचनात्, तत्र आचेलक्यादिषु दशस्वपि स्थानेषु ये स्थिताः साधवस्तत्कल्पः स्थितकल्प उच्यते, ये पुनश्चतुर्षु शय्यातरपिण्डादिष्व- वस्थितेषु कल्पेषु स्थिताः शेषेषु चाचेलक्यादिषु षट्सु अस्थितास्तत्कल्पोऽस्थितकल्पः ७ । लिङ्गद्वारे नियमतो द्विविधेऽपि लिङ्गे भवन्ति, तद्यथा—द्रव्यलिङ्गे भावलिङ्गे च, एकेनापि विना विवक्षितकल्पोचितसामाचार्ययोगात् ८ । ध्यानद्वारे धर्मध्यानेन प्रवर्धमानेन परिहारविशुद्धिकं कल्पं प्रतिपद्यते, पूर्वप्रतिपन्नः पुनरार्त्तरौद्रयोरपि भवति, केवलं प्रायेण निरनुबन्धः ९ । गणनाद्वारे जघन्यतस्त्रयो गणाः प्रतिपद्यन्ते उत्कर्षतः शतसङ्ख्याः, पूर्वप्रतिपन्ना जघन्यत उत्कर्षतो वा शतशः, पुरुषगणनया जघन्यतः प्रतिपद्यमानाः सप्तविंशतिः उत्कर्षतः सहस्रं, पूर्वप्रतिपन्नाः पुनर्जघन्यतः शतशः उत्कर्षतः सहस्रशः, आह च—"गणओ तिन्नेव गणा जहन्न पडिवत्ति सयस उक्कोसो । उक्कोस जहन्नेण य सयसोच्चिय पुव्वपडिवन्ना ॥ १ ॥ सत्तावीस जहन्ना सहस्समुक्कोसओ य पडिवत्ती । सयसो सहस्ससो वा पडिवन्न जहन्न उक्कोसो ॥ २ ॥" [ गणत्रय एव गणा जघन्यतः प्रतिपत्तौ शतश उत्कृष्टतः । उत्कृष्टतो जघन्यतश्च शतशः एव पूर्वप्रतिपन्नाः ॥ १ ॥ सप्तविंशतिर्जघन्यतः सहस्रमुत्कृष्टतश्च प्रतिपत्तौ । शतशः सहस्रशो वा प्रतिपन्ना जघन्यात् उत्कृष्टाच्च ॥ २ ॥ ] अन्यच्च यदा पूर्वप्रतिप- न्नकल्पमध्यादेको निर्गच्छति अन्यः प्रविशति तदा न्यूनप्रक्षेपे प्रतिपत्तौ कदाचिदेकोऽपि भवति पृथक्त्वं वा, पूर्वप्रतिपन्नोऽप्येवं भजनया कदाचिदेकः प्राप्यते पृथक्त्वं वा, उक्तं च—"पडिवज्जमाण भयणाएँ होज्ज एकोऽवि ऊणपक्खेवो । पुव्वपडिवन्नयावि य भइया एको पुहुत्तं वा ॥ १ ॥" । [ प्रतिपद्यमाना भजनया ऊनप्रक्षेपे एकोऽपि भवेत् पूर्वप्रतिपन्ना अपि च भक्ताः एकः पृथक्त्वं वा ॥ १ ॥ ] १० ।

अभिग्रहद्वारे अभिग्रहाश्चतुर्विधाः—द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च, तत्र परिहारविशुद्धिकस्यैतेऽभिग्रहा न भवन्ति, यस्मादेतस्य कल्प एव यथोक्तस्वरूपोऽभिग्रहो वर्तते, उक्तं च—"दव्वाईय अभिग्गह विचित्तरूवा न हुंति पुण केई । एयस्स जाव कप्पो कप्पोच्चियऽभिग्गहो जेणं ॥ १ ॥ एयम्मि गोयराई नियमा नियमेण निरववादा य । तप्पालणं चिय परं एयस्स विसुद्धिठाणं तु ॥ २ ॥" [ द्रव्यादिका अभिग्रहा विचित्ररूपा न भवन्ति पुनः केचित् । एतस्य यावत् कल्पः कल्प एव येनाभिग्रहः ॥ १ ॥ एतस्मिन् गोचरादिनियमा नियमेन निरपवादाश्च तत्पालनमेव परमेतस्य विशुद्धिस्थानं ॥ २ ॥ ] ११ । प्रव्रज्याद्वारे नासावन्यं प्रव्राजयति कल्पस्थितिरियमितिकृत्वा, आह च—'पव्वावेइ न एसो अन्नं कप्पट्ठिइत्ति काऊणं ।' [ प्रव्राजयति नैषोऽन्यं कल्प इतिकृत्वा ] इति, उपदेशं पुनर्यथाशक्ति प्रयच्छति १२ । निष्प्रतिकर्मताद्वारे एष महात्मा निष्प्रतिकर्मशरीरोऽक्षिमलादिकमपि न कदाचिदपनयति, न च प्राणान्तिकेऽपि समापतिते व्यसने अपवादपदमासेवते, उक्तं च—"निप्पडिकम्मसरीरो अच्छिमलाईवि नावणेइ सया । पाणंतिएवि य तहा वसणंमि न वट्टए वीए ॥ १ ॥ अप्पवहुत्तालोयणविसयाईओ उ होइ एसत्ति । अहवा सुहभावाओ वहुगंऽपेयं चिय इमस्स ॥ २ ॥" [ निष्प्रतिकर्मशरीरोऽक्षिमलाद्यपि नापनयति सदा । प्राणान्तिकेऽपि च तथा व्यसने न वर्त्तते द्वितीये ( अपवादे ) ॥ १ ॥ अल्पवहुत्वालोचनविषयातीतस्तु भवत्येष इति । अथवा शुभभावात् वहुकमप्येतदेवास्य ॥ २ ॥ ] १३ । भिक्षाद्वारे पथिद्वारे च भिक्षा विहारक्रमश्चास्य तृतीयस्यां पौरुष्यां भवति, शेषासु च पौरुषीषु कायोत्सर्गः, निद्राऽपि चास्य स्वल्पा द्रष्टव्या, यदि पुनः कथमपि जङ्घाबलमस्य परिक्षीणं भवति तथाप्येषोऽविहरन्नपि महाभागो नापवादपदमासेवते, किन्तु तत्रैव यथाकल्पमात्मीयं योगं विदधाति, उक्तं च—"तइयाइ पोरसीए भिक्खाकालो विहारकालो य । सेसासु य उस्सग्गो पायं अप्पा य निद्दत्ति ॥ १ ॥ जङ्घावलंमि खीणे अविहरमाणोऽवि न

वरमावज्जे । तत्थेव अहाकप्पं कुणइ उ जोगं महाभागो ॥ २ ॥" [ तृतीयस्यां पौरुष्यां भिक्षाकालो विहारकालश्च शेपासु चोत्सर्गः प्रायोऽल्पा च निद्रेति ॥ १ ॥ जङ्घाबले क्षीणे अविहरन्नपि न परं ( अपवादं ) आपद्यते । तत्रैव यथाकल्पं करोति योगं तु महाभागः ॥ २ ॥ ] १४, १५ ॥ ६९ ॥ इदानीं 'अहालंद'त्ति सप्ततितमं द्वारमाह—

लंदं तु होइ कालो सो पुण उक्कोस मज्झिम जहन्नो । उद्उल्लकरो जाविह सुक्कइ सो होइ उ जहन्नो ॥ ६११ ॥ उक्कोस पुव्वकोडी मज्झे पुण होंति णेगठाणाइं । एत्थ पुण पंचरत्तं उक्कोसं होइ अहलंदं ॥ ६१२ ॥ जम्हा उ पंचरत्तं चरंति तम्हा उ हुंतिऽहालंदी । पंचेव होइ गच्छो तेसिं उक्कोसपरिमाणं ॥ ६१३ ॥ जा चेव य जिणकप्पे मेरा सा चेव लंदियाणंपि । नाणत्तं पुण सुत्ते भिक्खायरिमासकप्पे य ॥ ६१४ ॥ अहलंदिआण गच्छे अप्पडिबद्धाण जह जिणाणं तु । नवरं कालविसेसो उउवासे पणग चउमासो ॥ ६१५ ॥ गच्छे पडिबद्धाणं अहलंदीणं तु अह पुण विसेसो । उग्गह जो तेसिं तु सो आयरियाण आभवइ ॥ ६१६ ॥ एगवसहीएँ पणगं छव्वीहीओ य गामि कुव्वंति । दिवसे दिवसे अन्नं अडंति वीहीसु नियमेणं ॥ ६१७ ॥ पडिबद्धा इयरेऽवि य एक्केक्का ते जिणा य थेरा य । अत्थस्स उ देसम्मि य असमत्ते तेसि पडिबंधो ॥ ६१८ ॥ लग्गाइसु तूरंते तो पडिवज्जित्तु खित्तबाहिठिया । गिण्हंति जं अगहियं तत्थ य गंतूण आयरिओ ॥ ६१९ ॥ तेसिं तयं पयच्छइ खेत्तं इंताण तेसिमे दोसा । वंदंतमवंदंते लोगंमि य होइ परिवाओ

॥ ६२० ॥ न तरेज्ज जई गंतुं आयरिओ ताहे एइ सो चेव । अंतरपल्लिं पडिवसभ गामबहि अ-
ण्णवसहिं वा ॥ ६२१ ॥ तीए य अपरिभोगे ते वंदंते न वंदई सो उ । तं घेत्तु अपडिबद्धा ताहि
जहिच्छाइ विहरंति ॥ ६२२ ॥

'लंद' मित्यादिगाथाद्वादशकं, लन्दं तु भवति कालः, समयपरिभाषया लन्दशब्देन कालो भण्यत इत्यर्थः, स पुनः कालस्त्रेधा—उत्कृष्टो मध्यमो जघन्यश्च, तत्र उदकार्द्रकरो यावता कालेन 'इह' सामान्येन लोके शुष्यति तावान् कालविशेषो भवति जघन्यः, अस्य चेह जघन्यत्वं प्रत्याख्याननियमविशेषादिषु विशेषत उपयोगित्वात्, अन्यथा अतिसूक्ष्मतरस्यापि समयादिलक्षणस्य सिद्धान्तोक्तस्य कालस्य सम्भवात् ॥ ६११ ॥ उत्कृष्टः पूर्वकोटीप्रमाणः, अयमपि चारित्रकालमानमाश्रित्य उत्कृष्टः उक्तः, अन्यथा पल्योपमादिरूपस्यापि कालस्य सम्भवात्, मध्ये पुनर्भवन्त्यनेकानि स्थानानि वर्षादिभेदेन कालस्य, अत्र पुनर्यथालन्दकल्पप्रक्रमे पञ्चरात्रं 'यथे'त्यागमानतिक्रमेण लन्दं—काल उत्कृष्टं भवति, तेनैवात्रोपयोगात् ॥ ६१२ ॥ यस्मात्पञ्चरात्रं चरन्ति पेटार्धपेटाद्यन्यतमायां वीथ्यां भैक्षनिमित्तं पञ्चरात्रिन्दिवान्यटन्ति तस्माद्भवन्ति यथालन्दिनः, विवक्षितयथालन्दभावात्, तथा पञ्चैव पुरुषा भवन्ति गच्छो—गणस्तेषां—यथालन्दिकानां, पञ्चको हि गणोऽमुं कल्पं प्रतिपद्यते इत्युत्कृष्टमेकैकस्य गणस्य पुरुषपरिमाणमेतदिति ॥६१३॥ अत्र बहुवक्तव्यत्वान्निरवशेषाभिधाने ग्रन्थगौरवप्रसक्त्या यथालन्दिककल्पस्यातिदेशमाह—यैव च जिनकल्पे—जिनकल्पविषया मेरा—मर्यादा पञ्चविधतुलनादिरूपा सैव च यथालन्दिकानामपि प्रायशः, नानात्वं—भेदः पुनर्जिनकल्पिकेभ्यो यथालन्दिकानां 'सूत्रे' सूत्रविषयं तथा भिक्षाचर्यायां मासकल्पे च, चकारात्प्रमाणविषयं चेति ॥ ६१४ ॥ अथातिदेशपूर्वकमल्पवक्तव्यत्वात्प्रथमं मासकल्पनानात्वमेवाह—यथालन्दिका द्विविधाः—गच्छे प्रतिबद्धा अप्रतिबद्धाश्च, गच्छे च प्रतिब-

न्धोऽमीषां कारणतः किञ्चिदश्रुतस्यार्थस्य श्रवणार्थमिति मन्तव्यं, ततो यथालन्दिकानां गच्छे अप्रतिबद्धानामुपलक्षणत्वात्प्रतिबद्धानां च
'तवेण सत्तेण' इत्यादिभावनारूपा सर्वापि सामाचारी यथा जिनकल्पिकानां पूर्वमुक्ता तथैव समवसेया, नवरं—केवलं द्विविधानामपि
यथालन्दिकानां जिनकल्पिकेभ्यः काले—कालविषये विशेषो—भेदो ज्ञातव्यः, तमेवाह—'उउ वासे पणग चउमासो'त्ति ऋतौ—ऋतु-
बद्धकाले वर्षे—वर्षाकाले च यथासङ्ख्यं दिनपञ्चकं मासचतुष्टयं चैकत्रावस्थानं भवति, इयमत्र भावना—ऋतुबद्धे काले यथालन्दिकाः साधवो
यदि विस्तीर्णो ग्रामादिर्भवति तदा तं गृहपङ्क्तिरूपाभिः षड्भिर्वीथीभिः परिकल्प्य एकैकस्यां वीथ्यां पञ्च पञ्च दिवसानि भिक्षामटन्ति,
तत्रैव च वसन्ति, एवं षड्भिर्वीथीभिरेकस्मिन् ग्रामे मासः परिपूर्णो भवति, तथाविधविस्तीर्णग्रामाभावे तु निकटतमेषु षट्सु ग्रामेषु
पञ्च पञ्च दिवसान् वसन्ति, उक्तं च कल्पभाष्ये—"एक्केक्कं पंचदिणे पण पणएण य निट्ठिओ मासो। एतच्चूर्णिश्च—जइ एगो चेव गामो
सवियारोत्ति—विच्छिण्णो ता छ वीहीओ काउं एक्केक्कीए पंच पंच दिवसाणि हिंडन्ति बीयाएवि पंच दिवसे जाव छट्ठीएवि पंच दिवसा,
एवं एगगामे मासो भवइ, अह नत्थि एगो गामो सवियारो तो इवंतऽहालंदियाण छग्गामा खेत्तस्स परियंतेणं, तेसिं एक्केक्कं पंच दिव-
साणि अच्छन्ति, एवं मासो विभज्जमाणो पणपणएण निट्ठिओ होइ"त्ति ॥६१५॥ अथ यथालन्दिकानामेव परस्परं भेदमाह—गच्छप्रतिब-
द्धानां पुनर्यथालन्दिकानां गच्छाप्रतिबद्धेभ्यः सकाशात् विशेषो—भेदो भवति, तमेवाह—तेषां गच्छप्रतिबद्धयथालन्दिकानां यः क्रोशप-
ञ्चकलक्षणः क्षेत्रावग्रहः स आचार्याणामेव भवति, यस्याचार्यस्य निश्रया ते विहरन्ति तस्यैव स क्षेत्रावग्रहो भवतीति भावः, गच्छाप्र-
तिबद्धानां तु जिनकल्पिकवत् क्षेत्रावग्रहो नास्तीति ॥ ६१६ ॥ अथ द्विविधानामपि यथालन्दिकानां भिक्षाचर्यानानात्वं विवक्षुराह—ऋतु-
बद्धे काले एकस्यां वसतौ 'पञ्चकं' पञ्च दिवसानि यावदवतिष्ठन्ते, वर्षासु पुनश्चतुरो मासान् यावदेकस्यां वसतौ तिष्ठन्ति, ग्रामे षड्

वीथीः कुर्वन्ति, अयमर्थः—यथालन्दिका गृहपङ्क्तिरूपाभिः षड्भिर्वीथीभिर्ग्रामं परिकल्पयन्ति, एकैकस्यां च वीथ्यां पञ्च पञ्च दिवसानि भिक्षां पर्यटन्ति, तत्रैव च वसतिं विदधति, उक्तं च पञ्चकल्पचूर्णौ—"छब्भागे गामो कीरइ, एगेगे पञ्चदिवसं भिक्खं हिंडंति, तत्थेव वसंति, वासासु एगत्थ चउम्मासो"त्ति, तासु च वीथीषु दिवसे दिवसे नियमतोऽन्यामन्यां भिक्षामटन्ति, उद्धृतादिभिक्षापञ्चकमध्यादेकस्मिन् दिवसे यां भिक्षामटन्ति न पुनर्द्वितीयेऽपि दिने तामेवाटन्ति किन्त्वन्यामिति भावः, इत्थं तावदस्माभिर्व्याख्यातं सुधिया तु समयाविरोधेनान्यथाऽपि व्याख्येयमिति ॥ ६१७ ॥ अथ सूत्रनानात्वं निर्दिदिक्षुर्यथालन्दिकभेदानेवाह—यथालन्दिका द्विविधाः—गच्छप्रतिबद्धा इतरे च—गच्छाप्रतिबद्धाः, ते पुनरेकैकशो द्विभेदाः—जिनकल्पिकाः स्थविरकल्पिकाश्च, तत्र यथालन्दिककल्पपरिसमाप्त्यनन्तरं ये जिनकल्पं प्रतिपत्स्यन्ते ते जिनकल्पिकाः, ये तु स्थविरकल्पमेवाश्रयिष्यन्ति ते स्थविरकल्पिकाः, इह च ये गच्छे प्रतिबद्धास्तेषां प्रतिबन्धोऽनेन कारणेन भवति—'अत्थस्से'त्यादि, अर्थस्यैव न सूत्रस्य, देशः—एकदेशोऽद्याप्यसमाप्तो—न गुरुसमीपे परिपूर्णो गृहीत इति तद्ग्रहणाय गच्छे प्रतिबन्धस्तेषां, तस्यावश्यं गुरुसमीपे ग्रहीष्यमाणत्वादिति ॥ ६१८ ॥ अथ परिपूर्णं सूत्रार्थं गुरुसमीपे गृहीत्वैव कथं कल्पं न प्रतिपद्यन्ते? इत्याह—लग्नादिषु त्वरमाणेषु—शुभेषु लग्नयोगचन्द्रबलादिषु झगित्यागतेषु सत्सु अन्येषु च लग्नादिषु दूरकालवर्तिषु न तथाभव्येषु वाऽगृहीतपरिपूर्णसूत्रार्था अपि लग्नादिभव्यतया कल्पं प्रतिपद्यन्ते, ततः प्रतिपद्य तं कल्पं गच्छान्निर्गत्य गुर्वधिष्ठितात्क्षेत्राद् ग्रामनगरादेर्बहिर्दूरदेशे स्थिता विशिष्टतरनिष्ठुरनिखिलनिजानुष्ठाननिरता गृह्णंति यदगृहीतं—अनधीतमर्थजातं, तत्र चायं विधिः—यदुत आचार्यः स्वयं तत्र गत्वा तेभ्यो यथालन्दिकेभ्यः 'तयं'ति तसर्थशेषं प्रयच्छति—ददाति, अथ त एवाचार्यसमीपमागत्य किमिति तसर्थशेषं न गृह्णन्तीत्याह—'खेत्तं इंताणे'त्यादि, क्षेत्रमध्यं समागच्छतां तेषां—यथालन्दिकानामेते—वक्ष्यमाणा दोषाः, तथाहि—वंदमा-

ज्ज ऊणपक्खेवे । हौंति जहण्णा एए सयग्गसो चेव उक्कोसा ॥ ६२७ ॥ पुव्वपडिवन्नगाणवि उक्कोसजहण्णसो परीमाणं । कोडिपुहुत्तं भणियं होइ अहालंदियाणं तु ॥ ६२८ ॥

जिनकल्पिकाश्च यथालन्दिकास्तदा—कल्पकाले मारणान्तिकेऽप्यातङ्के समुत्पन्ने न कामपि चिकित्सां ते कारयन्ति, यथाकल्पस्थितेः, अपिच निष्प्रतिकर्मशरीराः—प्रतिकर्मरहितदेहास्ते भगवन्तः, तत आस्तां तावदन्यत्, अक्षिमलमपि नापनयन्त्यप्रमादातिशयादिति ॥ ६२३ ॥ स्थविरकल्पिकयथालन्दिकानां जिनकल्पिकयथालन्दिकेभ्यो नानात्वं—भेदः, यथा अशक्नुवन्तं व्याधिबाधितं सन्तं स्वसाधु-मर्पयन्ति गच्छस्य—गच्छवासिसाधुसमूहस्य, स्वकीयपञ्चकगणपरिपूरणार्थं च तस्य स्थाने विशिष्टधृतिसंहननादिसमन्वितमन्यं मुनिं स्व-कल्पे प्रवेशयन्ति, तेऽपि च गच्छवासिनः साधवः 'से'त्ति तस्याशक्नुवतः प्रासुकेन—निरवद्येनान्नपानादिना कुर्वन्ति सर्वमपि परिकर्म—प्रतिजागरणमिति ॥ ६२४ ॥ किञ्च—स्थविराः—स्थविरकल्पिकयथालन्दिका अवश्यमेव एकैकपतद्ग्रहकाः—प्रत्येकमेकैकपतद्ग्रहधारिणः तथा सप्रावरणाश्च भवन्ति, ये पुनरेषां—यथालन्दिकानां मध्ये जिनकल्पे भविष्यन्ति जिनकल्पिकयथालन्दिका इत्यर्थः भाज्ये तेषां वस्त्र-पात्रे—सप्रावरणाप्रावरणपतद्ग्रहधारिपाणिपात्रभेदभिन्ना भाविजिनकल्पापेक्षया केषाञ्चिद्वस्त्रपात्रलक्षणमुपकरणं भवति केषांचिन्न नेत्यर्थः ॥ ६२५ ॥ अथ सामान्येन यथालन्दिकप्रमाणमाह—गणमानतो—गणमाश्रित्य जघन्यतस्त्रयो गणाः प्रतिपद्यमानका भवन्ति, शताग्रशश्च—शतपृथक्त्वमुत्कृष्टतो गणमानं, पुरुपप्रमाणं त्वेतेषां प्रतिपद्यमानकानां जघन्यतः पञ्चदश, पञ्चको हि गणोऽमुं कल्पं प्रतिपद्यते गणाश्च जघन्यतस्त्रयः ततः पञ्च त्रिभिर्गुणिताः पञ्चदश, उत्कृष्टतः पुनः पुरुपप्रमाणं सहस्रशः—सहस्रपृथक्त्वं ॥ ६२६ ॥ पुरुपप्रमाणमेवाश्रित्य पुनर्विशेषमाह—प्रतिपद्यमानका एते जघन्यत एकादयो वा भवेयुः न्यूनप्रक्षेपे सति, यथालन्दिककल्पे हि पञ्चमुनिमयो गच्छः, तत्र च

यदा ग्लानत्वादिकारणवशतो गच्छसमर्पणादिना तेषां न्यूनता भवति तदैकादिकः साधुस्तं कल्पं प्रवेश्यते येन पञ्चको गच्छो भवति, एवं जघन्या एते प्रतिपद्यमानकाः, तथा शताग्रश उत्कृष्टाः प्रतिपद्यमानका एवेति ॥ ६२७ ॥ पूर्वप्रतिपन्नानामपि सामान्येनोत्कृष्टतो जघन्यतश्च परिमाणं कोटिपृथक्त्वं भणितं भवति यथालन्दिकानां, उक्तं च कल्पचूर्णौ—"पडिवज्जमाणगा जहण्णेणं तिन्नि गणा उक्कोसेणं सयपुहुत्तं, पुरिसपमाणेणं पडिवज्जमाणगा जहण्णेणं पन्नरस पुरिसा, उक्कोसेणं सहस्सपुहुत्तं, पुव्वपडिवन्नगाणं जहण्णेणं कोडिपुहुत्तं, उक्कोसेणवि कोडिपुहुत्त"मिति, केवलं जघन्यादुत्कृष्टं विशिष्टतरं ज्ञेयमिति ७७ ॥ ६२८ ॥ इदानीं 'निज्जामयाण अडयाल'त्ति एकसप्ततितमं द्वारमाह—

उव्वत्त १ दार २ संथार ३ कहग ४ वाईय ५ अग्गदारंमि ६ । भत्ते ७ पाण ८ वियारे ९–१० कहग ११ दिसा जे समत्था य १२ ॥ ६२९ ॥ एएसिं तु पयाणं चउक्कगेणं गुणिज्जमाणाणं । निज्जामयाण संखा होइ जहासमयनिद्दिट्ठा ॥ ६३० ॥ उव्वत्तंति परावत्तयंति पडिवण्णअणसणं चउरो १ । तह चउरो अब्भंतर दुवारमूलंमि चिट्ठंति २ ॥ ६३१ ॥ संथारयसंथरया चउरो ३ चउरो कहिंति धम्मं से ४ । चउरो य वाइणो ५ अग्गदारमूले मुणिचउक्कं ६ ॥ ६३२ ॥ चउरो भत्तं ७ चउरो य पाणियं तदुचियं निहालंति ८ । चउरो उच्चारं परिट्ठवंति ९ चउरो य पासवणं १० ॥ ६३३ ॥ चउरो बाहिं धम्मं कहिंति ११ चउरो य चउसुवि दिसासु । चिट्ठंति १२ उवद्दवरक्खया सह-

**स्सजोहिणो मुणिणो ॥ ६३४ ॥ तें सव्वाभावे ता कुज्जा एक्केक्कगेण ऊणा जा । तप्पासट्ठिय एगो जलाइअण्णेसओ बीओ ॥ ६३५ ॥**

'उव्वत्ते'त्यदिगाथाद्वयं, निर्यामका—ग्लानप्रतिचारिणः, तें च पार्श्वस्थावसन्नत्वादिदोषदुष्टा अगीतार्थाश्च न कर्तव्याः किन्तु कालौचित्येन गीतार्थतादिगुणयुक्ता विशेषतो वैयावृत्त्यकरणोद्यताः, एते च उत्कर्षतोऽष्टचत्वारिंशद्भवन्ति, तद्यथा—'उव्वत्त'त्ति उद्वर्तनादिशरीरपरिचेष्टाकारिणः १ 'दार'त्ति अभ्यन्तरद्वारमूलस्थायिनः २ 'संथार'त्ति संस्तारककर्तारः ३ 'कहग'त्ति अनशनिनः पुरतो धर्मकथकाः ४ 'वाइय'त्ति वादिनः ५ 'अग्गदारंमि'त्ति अग्रद्वारमूलावस्थायकाः ६ 'भत्त'त्ति तदुचितभक्तानयनयोग्याः ७ 'पान'त्ति पानानयनयोग्याः ८ 'वियार'त्ति उच्चारप्रश्रवणयोर्ग्रहणं, ततः उच्चारपरिष्ठापकाः ९ प्रश्रवणपरिष्ठापकाश्च १० 'कहग'त्ति' बहिर्धर्मकथकाः ११ 'दिसा जे समत्था य'त्ति दिशासु पूर्वाद्यासु चतसृष्वपि ये समर्थाः—सहस्रयोधिप्रभृतयः १२ ॥ 'एएसिं तु पयाणं'ति एतेषां पूर्वोक्तानां द्वादशानामपि पदानां प्रत्येकं साधुचतुष्टयसद्भावात् चतुष्ककेण गुण्यमानानां निर्यामकसङ्ख्या भवति यथा—येन प्रकारेण समये—सिद्धान्ते निर्दिष्टा—कथिता अष्टचत्वारिंशल्लक्षणेत्यर्थः, अन्ये तु उच्चारप्रश्रवणपरिष्ठापने मिलितेऽपि चतुरोऽभिधाय ततो दिक्षु प्रत्येकं द्वौ द्वावित्यष्टौ महायोधान्मन्यन्ते इत्येवमष्टचत्वारिंशतं प्रतिपादयन्तीति ॥ ६२९–६३० ॥ अथ सूत्रकृदेवैतान् विवृणोति—'उव्वत्तंते'त्यादि गाथाचतुष्टयं, इह च उत्सर्गतस्तावदनशनिना स्वयमेवोद्वर्त्तनादि विधेयं, अथ न शक्नोति तदा तं प्रतिपन्नानशनं चत्वारः साधव उद्वर्तयन्ति परावर्त्तयन्ति च, उपलक्षणमेतत्, उत्थापनोपवेशनबहिर्निर्गमनान्तःप्रवेशनोपधिप्रत्युपेक्षणादिकमपि तदीयं परिकर्म त एव कुर्वन्ति, तथा अभ्यन्तरद्वारमूले जनसम्मर्दरक्षणार्थं चत्वारः साधवस्तिष्ठन्ति, जनसम्मर्दे हि कदाचिदनशनिनोऽसमाधिरप्युत्पद्येत, तथा चत्वारस्तद-

सततं कथयन्ति 'से'
नुकूलसुखस्पर्शाद्युपेतं समाधिसंवर्धनाय संस्तारकमास्तृणन्ति, तथा चत्वारः साधवो विशिष्टदेशनालब्धिसम्पन्नाः
तस्य विदितवस्तुतत्त्वस्यापि संवेगसमुल्लासकं धर्मं, तथा तस्यानशनिनः प्रभावनामतिशायिनीं श्रावकलोकैः क्रियमाणां दृष्ट्वा केचिद् दुरा-
त्मानस्तामसहमानाः सर्वज्ञमतनिराकरणाय वाददानायोपतिष्ठन्ते ततस्तेषां तिरस्करणाय वादिनो–वावदूकाश्चत्वारः प्रमाणप्रवीणाः प्रगु-
णीभूतास्तिष्ठन्ति, तथाऽग्रद्वारमूले प्रत्यनीकादिप्रवेशरक्षार्थं मुनिचतुष्कं–चत्वारः साधवः सामर्थ्योपेतास्तिष्ठन्ति, तथा प्रत्याख्यातेऽप्याहारे
परीषहपीडितो यद्यसौ कथमप्याहारमभिलषति तदा मा कथञ्चिदसौ प्रत्यनीकदेवताधिष्ठितो याचते इति परीक्षार्थं प्रथमतस्तावत्पृच्छयते
यथा–कस्त्वं गीतार्थो वा अगीतार्थो वा ? प्रतिपन्नाशन एवमेव वा ? इदानीं दिनं वर्तते रात्रिर्वेत्यादि, एवं च पृष्टे यद्यसौ प्रस्तुतं वक्ति
तदा ज्ञायते न देवताधिष्ठितः किन्तु परीषहपीडित इति ज्ञात्वा समाधिसम्पादनाय किञ्चिदाहारो दीयते, ततस्तद्बलेन परीषहान् परिभूय
प्रस्तुतपारगामी भवति, अथ वेदनार्दित आहारं न करोति तदाऽऽर्त्तध्यानोपगतस्तिर्यक्षु भवनपतिव्यन्तरेषु वा समुत्पद्येत, प्रत्यनीकेषु च
भवनपतिव्यन्तरेषूत्पन्नः कोपवशात्कदाचित्पाश्चात्ययतीनामुपद्रवमपि कुर्यादिति ततश्चत्वारो मुनयस्तस्यानशनिन उचितं–योग्यं आहारं
'निभालयन्ति' गवेषयन्ति, तथा चत्वारो देहदाहाद्युपशमसमर्थं पानीयमन्वेषयन्ति, तथा चत्वार उच्चारं–पुरीषं परिष्ठापयन्ति–परित्य-
जन्ति, तथा चत्वारः प्रश्रवणं–मूत्रं परिष्ठापयन्ति, तथा चत्वारो बहिर्भागे जनानां पुरतश्चेतश्चमत्कारकारिणं मनोहारिणं धर्मं कथयन्ति,
तथा चत्वारश्चतसृष्वपि दिक्षु क्षुद्रोपद्रवरक्षकाः सहस्रयोधिनो–महामल्ला मुनयस्तिष्ठन्ति, क्षुद्रोपद्रवनिवारणार्थमेकैकश्चतसृष्वपि दिक्षु तिष्ठ-
तीत्यर्थः ॥ ६३१–६३२–६३३–६३४ ॥ अथैते परिपूर्णा यदा न प्राप्यन्ते तदा किमित्याह–ते–निर्यामकाः सर्वेषामष्टचत्वारिं-
शत्सङ्ख्यानामभावे एकैकहान्या तावत्कार्या यावज्जघन्यतोऽवश्यं द्वौ निर्यामकौ, तत्रैकस्तत्पार्श्वस्थितः–तस्य–प्रतिपन्नानशनस्य सर्वदैव

समीपावस्थायी, द्वितीयस्तु जलाद्यन्वेषको भक्तपानाद्यानयनार्थं पर्यटतीति, एकेन पुनर्निर्यामकेन न कर्तव्यैवानशनप्रतिपत्तिः, यदुक्तं— 'एगो जइ निज्जवगो अप्पा चत्तो परो पवयणं च । सेसाणमभावेऽवि हु ता वीओऽवस्स कायव्वो ॥ १ ॥' त्ति [ यद्येको निर्यामकस्तर्हि आत्मा त्यक्तः परः प्रवचनं च । तस्मात् शेषाणामभावेऽपि चावश्यं द्वितीयः कर्त्तव्यः ( निर्यामकः ) ॥ १ ॥] ७१ ॥ ६३५ ॥ इदानीं 'पणवीसं भावणाओ' इति द्वासप्ततितमं द्वारमाह—

**इरियासमिए सया जए १ उवेह भुंजेज्ज व पाणभोयणं २ । आयाणनिक्खेवदुगुंछ ३ संजए समाहिए संजयए मणो ४ वई ५ ॥ ६३६ ॥ अहस्ससच्चे ६ अणुवीय भासए ७, जे कोह ८ लोह ९ भय १० मेव वज्जए । से दीहरायं समुपेहिया सया, मुणी हु मोसंपरिवज्जए सिया ॥ ६३७ ॥ सयमेव उ उग्गहजायणे ११ घडे मइमं निसम्मा १२ सइ भिक्खु उग्गहं १३ । अणुन्नविय भुंजीय पाणभोयणं १४ जाइत्ता साहम्मियाण उग्गहं १५ ॥ ६३८ ॥ आहारगुत्ते १६ अविभूसियप्पा १७ इत्थी न निज्झाय १८ न संथवेज्जा १९ । बुद्धे मुणी खुड्डकहं न कुज्जा २० धम्माणुपेही संधए बंभचेरं ॥ ६३९ ॥ जे सद्द २१ रूव २२ रस २३ गंधमागए २४, फासे य संपप्प मणुण्णपावए २५ । गेहिं पओसं न करेज्ज पंडिए, से होइ दंते विरए अकिंचणे ॥ ६४० ॥**

'ईरियासमिए' इत्यादि वृत्तपञ्चकं, प्राणातिपातादिनिवृत्तिलक्षणमहाव्रतानां दार्ढ्यापादनार्थं भाव्यन्ते—अभ्यस्यन्ते इति भावनाः, अनभ्यस्यमानाभिर्भावनाभिरनभ्यस्यमानविद्यावन्मलीमसीभवन्ति महाव्रतानीति, ताश्च प्रतिमहाव्रतं पञ्च पञ्च भवन्ति, तत्र प्रथममहाव्रतस्य

ताः कथ्यन्ते, ईरणं इर्या—गमनं तत्र समितः—उपयुक्तः, असमितो हि प्राणिनो हिंस्यादिति प्रथमा भावना १ तथा सदा—सर्वकालं 'यतः' सम्यगुपयुक्तः सन् 'उवेह'त्ति अवलोक्य भुञ्जीत वाशब्दाद् गृह्णीत वा पानभोजनं, अयमर्थः—प्रतिगृहं पात्रमध्यपतितः पिण्डश्चक्षुराद्युपयुक्तेन तत्समुत्थागन्तुकसत्त्वरक्षणार्थं प्रत्यवेक्षणीयः, आगत्य च वसतौ पुनः प्रकाशवति प्रदेशे स्थित्वा सुप्रत्यवेक्षितं पानभोजनं विधाय प्रकाशप्रदेशावस्थितेन भोक्तव्यं, अनवलोक्य भुञ्जानस्य हि प्राणिहिंसा सम्भवतीति द्वितीया, २ तथा 'आदाननिक्षेपौ' पात्रादेर्ग्रहणमोक्षावागमप्रतिषिद्धौ 'जुगुप्सति' न करोतीति आदाननिक्षेपजुगुप्सकः, आगमानुसारेण प्रत्यवेक्षणप्रमार्जनपूर्वमुपयुक्तः सन्नुपधेरादाननिक्षेपौ करोतीत्यर्थः, अजुगुप्सको हि सत्त्वव्यापादनं विदध्यादिति तृतीया ३ तथा 'संयतः' साधुः 'समाहितः' समाधानपरः सन् 'संयतते' प्रवर्तयत्यदुष्टं मनो, दुष्टं हि मनः क्रियमाणं कायसंलीनतादिकेऽपि सति कर्मबन्धाय सम्पद्यते, श्रूयते हि प्रसन्नचन्द्रो राजर्षिर्मनोगुप्त्यभाविताऽहिंसाव्रतो हिंसामकुर्वन्नपि सप्तमनरकपृथ्वीयोग्यं कर्म निर्मितवानिति चतुर्थी ४ एवं वाचमप्यदुष्टां प्रवर्तयेत्, दुष्टां (हि तां) प्रवर्तयन् जीवान् विनाशयेदिति पञ्चमी ५, तत्त्वार्थे तु अस्याः स्थाने एषणासमितिलक्षणा भावना भणिता, इति प्रथमव्रतभावनाः पञ्च । अथ द्वितीयमहाव्रतभावना भण्यन्ते—अत्र अहास्यात्—हास्यपरिहारात् 'सत्यः' सत्यवाक्, हास्येन ह्यनृतमपि ब्रूयादिति प्रथमा १ तथा 'अनुविचिन्त्य' सम्यग्ज्ञानपूर्वकं पर्यालोच्य 'भाषको' वक्ता, अनालोचितभाषी हि कदाचिन्मृषाऽप्यभिदधीत, ततश्चात्मनो वैरपीडादयः सत्त्वोपघातश्च भवेदिति द्वितीया २ तथा यः क्रोधं लोभं भयमेव वा वर्जयेत्—परिहरेत् स एव मुनिर्दीर्घरात्रं—मोक्षं 'समुपेक्षिता' सामीप्येन मोक्षावलोकनशीलः सन् 'सदा' सर्वकालं हु—निश्चयेन 'मोसं'ति अनुस्वारस्यालाक्षणिकत्वान्मृषापरिवर्जकः 'सिया' स्यात्, अयमर्थः—क्रोधपरवशो हि वक्ता स्वपरनिरपेक्षो यत्किञ्चनभाषी मृषाऽपि भाषेत अतः क्रोधस्य निवृत्तिरनुत्पादो वा श्रेयानिति तृतीया

३ तथा लोभाभिभूतचित्तोऽप्यत्यर्थमर्थकाङ्क्षया कूटसाक्षित्वादिना वितथभाषी भवति, अतः सत्यव्रतमनुपालयता लोभः प्रत्याख्येय इति चतुर्थी ४ तथा भयार्त्तः निजप्राणादिरक्षणेच्छया सत्यवादितां व्यभिचरति ततो निर्भयवासनाऽऽधानमात्मनि विधेयमिति पञ्चमी ५ इति द्वितीयमहाव्रतभावनाः पञ्च । अथ तृतीयमहाव्रतभावनाः प्रोच्यन्ते, तत्र स्वयमेव—आत्मनैव न तु परमुखेन साधुः प्रभुं प्रभुसन्दिष्टं वा सम्यक्परिज्ञाय अवग्रहस्य—देवेन्द्रराजगृहपतिशय्यातरसाधर्मिकभेदभिन्नस्य याचने—याञ्चायां प्रवर्तते, परमुखेन हि याचनेऽस्वामियाचने च परस्परविरोधेन च अकाण्डधाटनादयोऽदत्तपरिभोगादयश्च दोषा इति प्रथमा १ तथा तत्रैवानुज्ञापितावग्रहे तृणादिग्रहणार्थं मतिमान् घटेत—चेष्टेत निशम्य—आकर्ण्यावग्रहप्रदातुस्तृणाद्यनुज्ञावचनं, अन्यथा तददत्तं स्यादिति द्वितीया २ तथा 'सदा' सर्वकालं भिक्षुरवग्रहं स्पष्टमर्यादया याचेत, अयमर्थः—सकृद्दत्तेऽपि स्वामिनाऽवग्रहे भूयो भूयोऽवग्रहयाचनं कर्तव्यं, पूर्वलब्धेऽवग्रहे ग्लानाद्यवस्थायां मूत्रपुरीषोत्सर्गपात्रकरचरणप्रक्षालनस्थानानि दायकचित्तपीडापरिहारार्थं याचनीयानीति तृतीया ३ तथाऽनुज्ञाप्य गुरुमन्यं वा भुञ्जीत पानभोजनं, अयमर्थः—सूत्रोक्तेन विधिना प्रासुकमेषणीयं लब्धमानीयालोचनापूर्वं गुरवे निवेद्य गुरुणाऽनुज्ञातो मण्डल्यामेकको वाऽभीयात्, उपलक्षणमेतत्, अन्यदपि यत्किञ्चिदौधिकौपग्रहिकभेदमुपकरणं धर्मसाधनं तत्सर्वं गुरुणाऽनुज्ञातमेव भोक्तव्यं अन्यथाऽदत्तमेव परिभुक्तं स्यादिति चतुर्थी ४ तथा समानो धर्मः सधर्मस्तेन चरन्तीति साधर्मिकाः—प्रतिपन्नैकशासनाः संविग्नाः साधवः, तेषां पूर्वपरिगृहीतक्षेत्राणामवग्रहं मासादिकालमानेन पञ्चक्रोशादिक्षेत्ररूपं याचित्वा स्थानादि कार्यं, तदनुज्ञातं हि तत्र उपाश्रयादि समस्तं गृह्णीयात्, अन्यथा चौर्यं स्यादिति पञ्चमी ५ एतास्तृतीयव्रतभावनाः पञ्च । इदानीं चतुर्थव्रतभावनाः प्रतिपाद्यन्ते—तत्र आहारे गुप्तः स्यात् न पुनः स्निग्धमतिमात्रं भुञ्जीत, यतो निरन्तरवृष्यस्निग्धमधुररसप्रीणितः प्रधानधातुपरिपोषणेन वेदोदयादब्रह्मापि सेवेत, अतिमात्राहारस्य तु

न केवलं ब्रह्मव्रतविलोपविधायित्वाद्वर्जनं कायक्लेशकारित्वादपीति प्रथमा १ तथा अविभूषितात्मा—विभूषाविरहितः, देहस्नानविलेपनादिविविधविभूषानिरतो हि नितान्तमुद्रिक्तचित्ततया ब्रह्मविराधकः स्यादिति द्वितीया २ तथा स्त्रियं न निरीक्षेत, तदव्यतिरेकात्तदङ्गान्यपि वदनस्तनप्रभृतीनि सस्पृहं न प्रेक्षेत, निरन्तरमनुपमवनितावयवविलोकने हि ब्रह्मबाधासम्भव इति तृतीया ३ तथा स्त्रियं न संस्तुवीत-स्त्रीभिः सह परिचयं न कुर्यात् तत्संसक्तवसतितदुपभुक्तशयनासनादिसेवनेन, अन्यथा ब्रह्मव्रतभङ्गः स्यादिति चतुर्थी ४ तथा बुद्धः—अवगततत्त्वो मुनिः क्षुद्रां—अप्रशस्यां ब्रह्मचर्यप्रस्तावात् स्त्रीविषयां कथां न कुर्यात्, तत्कथाऽऽसक्तस्य हि मानसोन्मादः सम्पद्येत इति पञ्चमी ५ एताभिः पञ्चभिर्भावनाभिर्भावितान्तःकरणो धर्मानुप्रेक्षी—धर्मसेवनतत्परः साधुः सन्धत्ते—सम्यक्पुष्टिं नयति ब्रह्मचर्यमिति चतुर्थमहाव्रतभावनाः । अथ पञ्चमव्रतभावना निगद्यन्ते—तत्र यः साधुः शब्दरूपरसगन्धान् आगतान्—इन्द्रियविषयीभूतान्, मकारोऽयमलाक्षणिकः, स्पर्शांश्च सम्प्राप्य—समासाद्य मनोज्ञान्—मनोहारिणः पापकान्—विरूपान् इष्टाननिष्टांश्चेत्यर्थः, गृद्धिं—अभिष्वङ्गलक्षणां प्रद्वेषं च—अप्रीतिलक्षणं यथाक्रमं न कुर्यात् पण्डितो—विदिततत्त्वः सन् स दान्तो जितेन्द्रियो विरतः—सर्वसावद्ययोगेभ्यो भवत्यकिञ्चनः—किञ्चन बाह्याभ्यन्तरपरिग्रहभूतं नास्यास्तीतिव्युत्पत्त्या परिग्रहविरतिव्रतवानित्यर्थः, अन्यथा शब्दादिषु मूर्च्छादिसद्भावात् पञ्चमव्रतविराधना स्यादिति पञ्चसु विषयेष्वभिष्वङ्गप्रद्वेषवर्जनात् पञ्चमव्रतस्य पञ्च भावनाः, मिलितास्तु पञ्चविंशतिरिति, एताश्च समवायाङ्गतत्त्वार्थादिषु किञ्चिदन्यथाऽपि दृश्यन्ते इति ॥ ६३६ ॥ ६३७ ॥ ६३८ ॥ ६३९ ॥ ६४० ॥७२॥ इदानीं 'असुहाओ पणवीसं'ति त्रिसप्ततितमं द्वारमाह—

**कंदप्पदेव १ किव्बिस २ अभिओगा ३ आसुरी ४ य सम्मोहा ५ । एसा हु अप्पसत्था पंचविहा**

भावणा तत्थ ॥ ६४१ ॥ कंदप्पे १ कुक्कुइए २ दोसीलत्ते य ३ हासकरणे ४ य । परविम्हियजणणेऽवि य ५ कंदप्पोऽणेगहा तह य ॥ ६४२ ॥ सुयनाण १ केवलीणं २ धम्मायरियाण ३ संघ ४ साहूणं । माई अवण्णवाई किब्बिसियं भावणं कुणइ ॥ ६४३ ॥ कोउय १ भूईकम्मे २ पसिणेहिं ३ तह य पसिणपसिणेहिं ४ । तहय निमित्तेणं ५ चिय पंचवियप्पा भवे सा य ॥ ६४४ ॥ सइ विग्गहसीलत्तं १ संसत्ततवो २ निमित्तकहणं च ३ । निक्किवयावि य ४ अवरा पंचमगं निरणुकंपत्तं ५ ॥ ६४५ ॥ उम्मग्गदेसणा १ मग्गदूसणं २ मग्गविपडिवित्ती य ३ । मोहो य ४ मोहजणणं ५ एवं सा हवइ पंचविहा ॥ ६४६ ॥

कन्दर्पः—कामस्तत्प्रधाना निरन्तरं नर्मादिनिरततया विटप्राया देवविशेषाः कन्दर्पास्तेषामियं कान्दर्पी, एवं देवानां मध्ये किल्बिषाः—पापा अत एवास्पृश्यादिधर्मका देवाश्च ते किल्विषाश्चेति वा देवकिल्विपास्तेषामियं किल्विषी, आ—समन्तात् आभिमुख्येन युज्यन्ते—प्रेष्यकर्मणि व्यापार्यन्ते इत्याभियोग्याः—किङ्करस्थानीया देवविशेषास्तेषामियमाभियोगी, असुरा—भुवनवासिदेवविशेषास्तेषामियमासुरी, संमुह्यन्तीति सम्मोहा—मूढात्मानो देवविशेषास्तेषामियं सम्मोही, एषा तु—स्फुटं 'पञ्चविधा' पञ्चप्रकारा 'अप्रशस्ता' सङ्क्लिष्टा भावना तत्तत्स्वभावाभ्यासरूपा भणितेति शेषः, आसां च मध्ये संयतोऽपि सन् यो यस्यां भावनायां वर्तते कथञ्चिद्भावमान्द्यात् स तद्विधेष्वेव—कन्दर्पादिप्रकारेषु देवेषु गच्छति चारित्रलेशप्रभावात्, उक्तं च—'जो संजओऽवि एयासु अप्पसत्थासु वट्टइ कहिंचि । सो तव्विहेसु गच्छइ सुरेसु भइओ चरणहीणो ॥१॥' [ यः संयतोऽपि एतासु अप्रशस्तासु वर्तते कथंचित् स तद्विधेषु गच्छति सुरेषु भक्तश्चरणहीनः ॥१॥] अत्र

'भइओ चरणहीणो'त्ति यः पुनः सर्वथापि चारित्ररहितः स भाज्यो—विकल्पनीयः,कदाचित्तद्विधेष्वेव सुरेषूत्पद्यते कदाचिच्च नारकतिर्यक्कुमानुषेष्विति ॥६४१॥ एताश्च पञ्चापि भावनाः प्रत्येकं पञ्चविधाः, तत्र प्रथमं पञ्चविधां कन्दर्पभावनामाह—'कंदप्पे'त्यादि, कन्दर्पे कौकुच्ये दुःशीलत्वे हास्यकारणे परविस्मयजननेऽपि च विषये भवति कन्दर्पः—कन्दर्पविषया भावना कान्दर्पिकी इत्यर्थः, 'अनेकविधा'पञ्चप्रकारा, तत्र उच्चैःस्वरेण हसनं तथा परस्परं परिहासः तथा गुर्वादिनाऽपि सह निष्ठुरवक्रोक्त्यादयः स्वेच्छालापाः तथा कामकथाकथनं तथा एवं चैवं च कुर्विति विधानद्वारेण कामोपदेशः तथा कामविषया प्रशंसा च कन्दर्पशब्देनोच्यते, तदुक्तम्—'कहकहकहस्स हसणं कंदप्पो अणिहुया य संलावा । कंदप्पकहाकहणं कंदप्पुवएस संसा य ॥ १ ॥" [ कहकहकहेति हसनं कन्दर्पः अनिभृताश्च संलापाः । कन्दर्पकथाकथनं कन्दर्पोपदेशः कन्दर्पप्रशंसा च ॥१॥ ] तथा कुकुचो—भाण्डचेष्टा तस्य भावः कौकुच्यं, तद् द्वेधा—कायकौकुच्यं वाक्कौकुच्यं च, तत्र कायकौकुच्यं यत्स्वयमहसन्नेव भ्रूनयनादिभिर्देहावयवैर्हासकारकैस्तथा तथा चेष्टां करोति यथा परो हसतीति, यदुक्तम्—'भुमनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह हस्सए परो अत्तणा अहसं ॥ १ ॥" [ भ्रूनयनवदनदशनच्छदेन करचरणकर्णादिभिः । तत्तत् करोति यथा परो हसति आत्मनाऽहसन् ॥ १ ॥ ] वाक्कौकुच्यं तु यत्परिहासप्रधानैस्तैस्तैर्वचनजातैर्विविधजीवविरुतैर्मुखातोद्यवादितया च परं हासयतीति, यदुक्तम्—"वाया कुक्कुइओ पुण तं जंपइ जेण हस्सए अन्नो । नाणाविहजीवरुए कुव्वइ मुहतूरए चेव ॥ १ ॥" [ वाक्कौत्कुचिकः पुनस्तत् जल्पति येन हसति अन्यः । नानाविधजीवरुतानि मुखतूर्यमेव च करोति ॥ १ ॥ ] तथा दुष्टं शीलं—स्वभावो यस्य स दुःशीलः तद्भावो दुःशीलत्वं, तत्र यत्सम्भ्रमावेशवशादपर्यालोच्य द्रुतं द्रुतं भाषते यच्च शरत्काले दर्पोद्धुरप्रधानवलीवर्द इव द्रुतं द्रुतं गच्छति यच्च सर्वत्रासमीक्षितं कार्यं द्रुतं द्रुतं करोति यच्च स्वभावस्थितोऽपि तीव्रोद्रेकवशाद्दर्पेण स्फुटतीव

स्फुटति च एतद् दुःशीलत्वं, यदुक्तम्—"भासइ दुयं दुयं गच्छए य दरिओव्व गोव सो सरए । सव्वंदुयद्दुयकारी फुट्टइ व ठिओवि दप्पेणं ॥ १ ॥" [ भापते द्रुतं द्रुतं गच्छति च दृप्तो गौरिव शरदि । सर्व्वद्रुतद्रुतकारी स्थितोऽपि दर्पेण स्फुटतीव ॥ १ ॥ ] तथा भाण्ड इव परेषां छिद्राणि—विरूपवेषभाषाविषयाणि निरन्तरमन्वेषयन् विचित्रैस्तादृशैरेव वेषवचनैर्यद् द्रष्टृणामात्मनश्च हासं जनयति तद् हास्यकारणं, यदुक्तम्—"वेसवयणेहिं हासं जणयंतो अप्पणो परेसिं च । अह हासणोत्ति भन्नइ घयणोव्व छले नियच्छन्तो ॥१॥" [ वेषवचनाभ्यां हास्यमात्मनः परेषां च जनयन् । अथ हास्यकारक इति भण्यते भाण्ड इव छलं पश्यन् ॥ १ ॥ ] 'घयणो'त्ति भाण्डः, तथा इन्द्रजालप्रभृतिभिः कुतूहलैः प्रहेलिकाकुहेटिकादिभिश्च तथाविधग्राम्यलोकप्रसिद्धैर्यात्स्वयमविस्मयमानो बालिशप्रायस्य जनस्य मनोविभ्रममुत्पादयति तत्परविस्मयजननं, यदुक्तम्—"सुरजालमाइएहिं तु विम्हयं कुणइ तव्विहजणस्स । तेसु न विम्हयइ सयं आहट्टकुहेडएहिं च ॥ १ ॥" [ तद्विधजनस्येन्द्रजालादिभिर्विस्मयं करोति । तः न स्वयं विस्मयते प्रहेलिकाकुहेडकैः ॥ १ ॥ ] अत्र 'आहट्ट'त्ति-प्रहेलिका कुहेडकः—आभाणकप्रायः प्रसिद्ध एव ॥ ६४२ ॥ अथ दैवकिल्विषीं भावनां पञ्चविधामाह—'सुये'त्यादि, श्रुतज्ञानस्य—द्वादशाङ्गीरूपस्य केवलिनां—केवलज्ञानवतां धर्माचार्याणां—धर्मोपदेष्टॄणां सङ्घस्य—साधुसाध्वीश्रावकश्राविकासमुदायरूपस्य साधूनां—यतीनां अवर्णवादी मायी च—स्वशक्तिनिगूहनादिना मायावान् दैवकिल्विषीं भावनां करोति, तत्र अवर्णः—अश्लाघा असद्दोषोद्घट्टनमितियावत्, स चैवं श्रुतज्ञानस्य—पृथिव्यादयः कायाः षड्जीवनिकायामपि व्यावर्ण्यन्ते शस्त्रपरिज्ञाध्ययनादिष्वपि बहुशस्त एव, एवं व्रतान्यपि—प्राणातिपातनिवृत्त्यादीनि तान्येव पुनः पुनस्तेषु तेषु सूत्रेषु प्रतिपाद्यन्ते, तथा त एव प्रमादा—मद्यादयः अप्रमादाश्च—तद्विपक्षभूता भूयो भूयश्च तत्र तत्र कथ्यन्ते, न पुनरधिकं किञ्चिदपीति पुनरुक्तदोषः, अन्यत्र मोक्षार्थं घटयितव्यमितिकृत्वा किं सूत्रे सूर्यप्रज्ञप्त्यादिना

ज्योतिःशास्त्रेण ?, तथा मोक्षार्थमभ्युद्यतानां यतीनां किं योनिप्राभृतोपनिबन्धेन ?, भवहेतुत्वाज्ज्योतिषयोनिप्राभृतप्रभृतीनामिति, उक्तं च—"काया वया य तेच्चिय ते चेव पमाय अप्पमाया य । मोक्खाहिगारियाणं जोइसजोणीहिं किं कज्जं ? ॥ १ ॥" [ कायाः व्रतानि च तान्येव त एव प्रमादा अप्रमादाश्च । मोक्षाधिकारिणां ज्योतिषयोनिभिः किं कार्यम् ? ॥१॥ ] केवलिनामवर्णवादो यथा—किमेषां ज्ञानदर्शनोपयोगौ क्रमेण भवत उत युगपत् ?, तत्र यदि क्रमेणेति पक्षः कक्षीक्रियते तदा ज्ञानकाले न दर्शनं दर्शनकाले च न ज्ञानमिति परस्परावरणतैव प्राप्ता, अथ युगपदिति द्वितीयः पक्षः सोऽप्ययुक्तः, यत एककालत्वाद् द्वयोरप्येकतापऽऽत्तिः प्राप्नोति, उक्तं च—"एगतरसमुप्पाए अन्नोऽन्नावरणया दुवेण्हंपि । केवलदंसणणाणाणमेगकाले य एगत्तं ॥ १ ॥" [ एकतरसमुत्पादे अन्योऽन्यावरणता द्वयोरपि केवलज्ञानदर्शनयोः एककाले एकत्वं ॥ १ ॥ ] धर्माचार्याणामवर्णवादो यथा—न शोभनैतेषां जातिः नैते लोकव्यवहारकुशलाः न चैते औचित्यं विदन्तीत्यादि विविधं गुरून् प्रति भाषते, न चैतेषां विनयवृत्त्या वर्तते, तथा अहितश्छिद्राण्यन्वेषयन् सर्वसमक्षं गुरूणामेवासतोऽपि दोषान् वदति, सर्वदैव च तेषां प्रतिकूलतामाचरतीति, उक्तं च—"जच्चाईहिं अवण्णं विभासइ वट्टइ न यावि उववाए । अहिओ छिद्दप्पेही पगासवाई अणणुकूलो ॥१॥" [ जात्यादिभिरवर्णं विभाषते न चाप्युपपाते वर्त्तते । अहितश्छिद्रपेक्षी प्रकाशवाद्यननुकूलः ॥ १ ॥ ] सङ्घस्यावर्णवादो यथा—बहवश्च पशुश्रृगालादीनां सङ्घाः तत्कोऽयमिह सङ्घो भवतामाराध्य इत्यादि वदति, साधूनामवर्णवादो यथा—नामी साधवः परस्परमपि सहन्ते अत एव देशान्तरं परस्परस्पर्धया परिभ्रमन्ति अन्यथा एकत्रैव संहत्या तिष्ठेयुः, तथा मायावितया सर्वदैव लोकावर्जनाय मन्दगामिनः, महतोऽपि च प्रति प्रकृत्यैव निष्ठुराः, तदैव रुष्टास्तदैव तुष्टाश्च, तथा गृहिभ्यस्तैस्तैश्चाटुवचनैरात्मानं रोचयन्ति, सर्वदा सर्ववस्तुसञ्चयपराश्च, उक्तं च—"अविसहणाऽतुरियगई अणाणुवित्ती य अवि गुरूणंपि । खणमित्तपी-

इरोसा गिहिवच्छलगा य संचइगा ॥ १ ॥" [ अविपहणा अत्वरितगतयः गुरूणामप्यननुवृत्तयः । क्षणमात्रप्रीतिरोपाः गृहिवत्सलकाश्च संचयिकाः ॥ १ ॥ ] अन्यैरप्युक्तं—"अनित्यताशब्दमुदाहरन्ति, भग्नां च तुम्बीं परिशोचयन्ति । यथा तथाऽन्यं च विकत्थयन्ति, हरी- तर्कीं नैव परित्यजन्ति ॥ १ ॥" अन्यत्र तु 'सव्वसाहूणं'ति पठित्वा 'मायी'ति भिन्नैव पञ्चमी भावना प्रतिपादिता, यथा—"गूहइ आयसहावं छायइ य गुणे परस्स संतेवि । चोरोव्व सव्वसंकी गूढायारो हवइ माई ॥१॥" [ गूहते आत्मस्वभावं परस्य च सतोऽपि गुणान् आच्छादयति । चौर इव सर्वशङ्की गूढाचारो भवति मायी ॥१॥ ] ॥६४३॥ अथ आभियोगीं भावनां पञ्चभेदामाह—'कोउये'त्यादि, अत्र सप्तमी तृतीयार्थे ततः कौतुकेन १ भूतिकर्मणा २ प्रश्नेन ३ प्रश्नाप्रश्नेन ४ निमित्तेन ५ च पञ्चविकल्पा—पञ्चभेदा भवेत् सा च—आ- मियोगिकी भावना, तत्र बालादीनां रक्षादिकरणनिमित्तं स्नपनकरभ्रमणाभिमन्त्रणथुक्करणधूपदानादि यत्क्रियते तत्कौतुकं, उक्तं च— "विण्हवणहोमसिरपरिरया य खारडहणाइं धूवे य । असरिसवेसग्गहणं अवतासणउच्छुभणवंधा ॥ १ ॥" [ अपि स्नपनहोमशिरःपरि- रयाश्च क्षारदहनानि धूपश्च । असदृशवेषग्रहणं अवत्रासनं क्षेपणं बन्धः ॥१॥ ] तथा च सति शरीरभाण्डकरक्षार्थं भस्मसूत्रादिना यत्प- रिवेष्टनकरणं तद् भूतिकर्म, उक्तं च—"भूईए मट्टियाइ व सुत्तेण व होइ भूइकम्मं तु । वसहीसरीरभंडयरक्खा अभिओगमाईया ॥ १ ॥" [ भूत्या मृत्तिकया वा सूत्रेण वा भवति भूतिकर्म तु । वसतिशरीरभाण्डरक्षा अभियोगादिकाश्च ॥ १ ॥ ] तथा यत्परस्य पार्श्वे लाभालाभादि पृच्छयते स्वयं वा अङ्गुष्ठदर्पणखड्गतोयादिषु दृश्यते स प्रश्नः, उक्तं च—"पण्हो य होइ पसिणं जं पासइ वा सयं तु तं पसिणं । अंगुट्ठुच्चिट्ठपए दप्पणअसितोयकुड्डाई ॥ १ ॥" [ प्रश्नश्च भवति प्रच्छनं यत् पश्यति वा स्वयं तु स प्रश्नः । अङ्गुष्ठोच्छिष्ट- पदे दर्पणासितोयकुड्यादिषु ॥ १ ॥ ] तथा स्वप्ने स्वयं विद्यया कथितं घण्टिकाद्यवतीर्णदेवतया वा कथितं सत् यदन्यस्मै शुभाशुभ-

जीवितमरणादि परिकथयति स प्रश्नाप्रश्नः, उक्तं च—"पसिणापसिणं सुमिणे विज्जासिट्ठं कहेइ अन्नस्स । अहवा आइंखणियाघंटियसिट्ठं परिकहेइ ॥ १ ॥" [ प्रश्नाप्रश्नः स्वप्ने विद्याशिष्टं अन्यस्मै कथयति । अथवा आखिंणिकाघण्टिकाशिष्टं परिकथयति ॥ १ ॥ ] तथा निमित्तं—अतीतानागतवर्तमानवस्तुपरिज्ञानहेतुर्ज्ञानविशेषः, उक्तं च—"तिविहं होइ निमित्तं तीयपडुप्पण्णऽनागयं चेव । तेण विणा उ न नेयं नज्जइ तेणं निमित्तं तु ॥ १ ॥" [ त्रिविधं भवति निमित्तमतीतं वर्त्तमानमनागतं चैव । तेन विना तु न ज्ञेयं ज्ञायते तेन निमित्तं तु ॥ १ ॥ ] एतानि च कौतुकभूतिकर्मादीनि गौरवादिनिमित्तं कुर्वाणः साधुरभियोगनिर्वृत्तं कर्म बध्नाति, अपवादपदेन तु गौरवरहितः सन्नतिशयज्ञाने सति निःस्पृहवृत्त्या यदा करोति तदाऽसौ आराधक एव उच्चं च गोत्रं बध्नातीति तीर्थोन्नतिकरणात्, उक्तं च—"एयाणि गारवट्ठा कुणमाणो आभियोगियं बंधे । बीयं गारवरहिओ कुव्वइ आराहगुच्चं च ॥१॥" [ एतानि गौरवार्थं कुर्वन् आभियोगिकं बध्नाति द्वितीयं पदं गौरवरहितः करोति आराधक उच्चैर्गोत्रं च ॥१॥] ॥६४४॥ अथ आसुरीं भावनां पञ्चभेदामाह—'सई'त्यादि, सदा विग्रहशीलत्वं १ संसक्ततपः २ निमित्तकथनं च ३ निष्कृपताऽपि चापरा ४ पञ्चमकं च निरनुकम्पत्व ५ मिति, तत्र 'सदा' सर्वकालं 'विग्रहशीलत्वं' पश्चादननुतापितया क्षमणादावपि प्रसत्त्यप्राप्त्या च विरोधानुबन्धः, यदाह—"निच्चं विग्गहसीलो काऊण य नाणुतप्पई पच्छा । न य खामिओ पसीयइ सपक्खपरपक्खओ यावि ॥ १ ॥" [ नित्यं विग्रहशीलः कृत्वा च पश्चान्नानुतप्यते न च क्षमितः प्रसीदति स्वपक्षपरपक्षतो वाऽपि ॥ १ ॥ ] तथा संसक्तस्य—आहारोपधिशय्यादिषु सदा प्रतिबद्धभावस्य आहाराद्यर्थमेव च तपः—अनशनादितपश्चरणं संसक्ततपः, यदाह—"आहारउवहिसेज्जासु जस्स भावो उ निच्चसंसत्तो । भावोवहओ कुणइ व तवोवहाणं तदट्ठाए ॥ १ ॥" [ आहारोपधिशय्यासु यस्य तु भावो नित्यं संसक्तः । उपहतभावो वा करोति तपउपधानं तदर्थाय ॥ १ ॥ ] तथा त्रैकालिकस्य लाभालाभ-

सुखदुःखजीवितमरणविषयस्य निमित्तस्य कथनं—अभिमानाभिनिवेशाद्व्याकरणं, यदाह—"तिविहनिमित्तं एक्केक्क छव्विहं जं तु वन्नियं पुव्वं । अभिमाणाभिनिवेसा वागरियं आसुरं कुणइ ॥ १ ॥" [ त्रिविधं निमित्तमेकैकं षड्विधं यत्तु पूर्वं वर्णितं । अभिमानादभिनिवेशाच्च व्याकृतमासुरीं करोति ॥ १ ॥ ] तथा स्थावरादिसत्त्वेष्वजीवप्रतिपत्त्या गतघृणः कार्यान्तरव्यासक्तः सन् गमनासनादि यः करोति कृत्वा च नानुतप्यते केनचिदुक्तः सन् स निष्कृपः तद्भावो निष्कृपता, यदाहुः—"चंकमणाईसु सत्तो सुनिक्किवो थावराइसत्तेसुं । काउं च नाणुतप्पइ एरिसओ निक्किवो होइ ॥ १ ॥" [ चङ्क्रमणादिषु सक्तः सुनिष्कृपः स्थावरादिसत्त्वेषु कृत्वा च नानुतप्यते ईदृशो निष्कृपो भवति ॥ १ ॥ ] तथा यः कृपापात्रं कुतश्चिद्धेतोः कम्पमानमपि परं दृष्ट्वा क्रूरतया कठिनभावः सन् नानुकम्पाभाग्भवति स निरनुकम्पः तस्य भावो निरनुकम्पत्वं, यदाह—"जो उ परं कंपंतं दट्ठूण न कंपए कढिणभावो । एसो य निरणुकंपो पन्नत्तो वीयरागेहिं ॥१॥" [ यस्तु परं कम्पमानं दृष्ट्वा नानुकम्पते कठिनभावः । एष च निरनुकम्पः प्रज्ञप्तो वीतरागैः ॥१॥ ] ॥६४५॥ अथ सांमोहीं भावनां पञ्चविधामाह—'उम्मग्गे'त्यादि, उन्मार्गदेशना १ मार्गदूषणं २ मार्गविप्रतिपत्तिः ३ मोहः ४ मोहजननं च ५ एवं सा सांमोही भावना भवति पञ्चविधा, तत्र पारमार्थिकानि ज्ञानादीन्यदूषयन्नेव तद्विपरीतं धर्ममार्गं यदुद्दिशति सा उन्मार्गदेशना, आह च—"नाणादि अदूसितो तव्विवरीयं तु उवदिसइ मग्गं । उम्मग्गदेसगो एस आयअहिओ परेसिं च ॥ १ ॥" [ ज्ञानादि अदूषयन् तद्विपरीतं तु देशयति मार्गम् । उन्मार्गदेशक एष आत्मनोऽहितः परेषां च ॥ १ ॥ ] तथा पारमार्थिकं ज्ञानदर्शनचारित्रलक्षणं भावमार्गं तत्प्रतिपन्नांश्च साधून् पण्डितमानी स्वमनीषानिर्मितैर्जातिदूषणैर्यद् दूषयति तन्मार्गदूषणं, आह च—"नाणाइतिहामग्गं दूसइ जो जे य मग्गपडिवन्ना । अबुहो जाईए खलु भन्नइ सो मग्गदूसत्ति ॥ १ ॥" [ ज्ञानादित्रिधामार्गं दूषयति यः ये च मार्गप्रतिपन्नाः (तान्) अबुधो जात्या

भणति स खलु मार्गदूषक इति भण्यते ॥ १ ॥ ] तथा तमेव ज्ञानादिमार्गमसद्दूषणैर्दूषयित्वा जमालिवद्देशत उन्मार्गं यत्प्रतिपद्यते सा मार्गविप्रतिपत्तिः, आह च—"जो पुण तदेव मग्गं दूसित्ता अपंडिओ सतक्काए । उम्मग्गं पडिवज्जइ विप्पडिवण्णो स मग्गस्स ॥ १ ॥" [ यः पुनस्तमेव मार्गं दूषयित्वाऽपण्डितः स्वतर्केण उन्मार्गं प्रतिपद्यते स मार्गात् विप्रतिपन्नः ॥ १ ॥ ] तथा निकाममुपहतमतिः सन्नतिगहनेषु ज्ञानादिविचारेषु यन्मुह्यति यच्च परतीर्थिकसम्बन्धिनीं नानाविधां समृद्धिमालोक्य मुह्यति स संमोहः, आह च—"तह तह उवहयमइओ मुज्झइ नाणचरणंतरालेसु । इड्ढीओ य बहुविहा दट्ठुं जत्तो तओ मोहो ॥१॥" [ तथा तथा उपहमतिकः ज्ञानचरणान्तरेषु मुह्यति बहुविधा ऋद्धींश्च दृष्ट्वा यतः ततो मोहः ॥१॥ ] तथा स्वभावेन कपटेन वा दर्शनान्तरेषु परस्य मोहमुत्पादयति तन्मोहजननं, आह च—"जो पुण मोहेइ परं सब्भावेणं च कइयवेणं वा । संमोहभावणं सो पकरेइ अबोहिलाभाय ॥ १ ॥" [ यो मोहयति पुनः परान् सद्भावेन कैतवेन वा स सम्मोहीभावनां प्रकरोति अबोधिलाभाय ॥ १ ॥ ] एताश्च पञ्चविंशतिरपि भावनाः सम्यक्चारित्रविघ्नविधायित्वादशुभा इति यतिभिः परिहर्तव्याः, यदुक्तम्—"एयाओ विसेसेणं परिहरइ चरणविग्घभूयाओ । एयनिरोहाउ च्चिय सम्मं चरणंपि पावंति ॥ १ ॥" [ एता विशेषेण परिहरति चरणविघ्नभूताः । एतन्निरोधादेव सम्यक् चरणमपि प्राप्नुवन्ति ॥१॥ ] त्ति ७३ ॥ ६४६ ॥ इदानीं 'संखा महव्वयाणं'ति चतुःसप्ततं द्वारमाह—

**पंचवओ खलु धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमयाण जिणाणं चउव्विहो होइ विन्नेओ ॥ ६४७ ॥**

पञ्चव्रतः खलु—प्राणातिपातमृषावादादत्तादानाब्रह्मपरिग्रहविरतिलक्षणपञ्चमहाव्रत एव धर्मः—चारित्रधर्मः पूर्वस्य च—प्रथमस्य च

ऋषभजिनस्य पश्चिमस्य च—चरमस्य वर्धमानजिनस्य मुनीनामिति शेषः, मध्यमकानां—अजितनाथादीनां पार्श्वनाथान्तानां द्वाविंशतेर्जिनानां सम्बन्धिसाधूनां चतुर्व्रतः—चतुर्यामो भवति विज्ञेयः, इह हि तत्तत्कालस्वभावादेव त्रिविधाः पुरुषा भवन्ति—ऋजुजडा वक्रजडा ऋजुप्रज्ञाश्च, तत ऋजवः—शाठ्यरहितास्ते च ते जडाश्च—तथाविधोहापोहव्यपोहादुक्तमात्रार्थग्राहिण ऋजुजडाः—केऽपि प्रथमतीर्थकरसाधवः, ते च नटावलोकनज्ञातेन ज्ञातव्याः, तथाहि—किल केचित् प्रथमतीर्थकरसाधवो विचारगोचराच्चिरेण वसतावागताः, पृष्टाश्च गुरुभिः—किमिति भोश्चिराद्यूयमागताः?, ते च ऋजुत्वादवोचन्—यथा नटं नृत्यन्तमालोकयन्तो वयमस्थाम, ततो गुरुस्तानन्वशात्—यदुत रागादिनिवन्धनं नटनृत्तावलोकनं मा पुनर्भवन्तो व्यधुः, तेऽपि तथैव गुरूणां गिरं प्रतिपेदिरे, अपरेद्युश्च तथैव ते गुरुपृष्टा व्यजिज्ञपन्—यथा नटीं नृत्यन्तीं पश्यन्तः स्थिताः, गुरुभिर्भणितं—ननु पूर्वमेव निषिद्धा यूयं, अथ ते ऋजुजडत्वादूचुः—नटनृत्तनिरीक्षणं भवद्भिः प्रत्यषिद्धयत न नटीनृत्तनिरीक्षणमिति, नटे हि निषिद्धे रागनिमित्तत्वान्नटी निषिद्धैवेति प्रत्येतुं तैर्न शकितमिति ते ऋजुजडाः, तथा वक्रजडाः—शठत्वमुग्धत्वधर्मद्वययुक्ताः केचिच्चरमतीर्थकरसाधवः, तेऽप्येवमेव नटदृष्टान्तेनावगन्तव्याः, नवरं ते तथैव गुरुभिर्निवारिताः पुनरन्यदा नटीनिरीक्षणं कृत्वा चिरादागताः पृष्टाश्च वक्रजडत्वादुदरबाधाद्यसदुत्तराणि वितेरुः, निर्बन्धेन च गुरुभिः पृष्टा अस्माभिर्नटी निरीक्षितेत्युक्तवन्तः, सुतरामुपालब्धाश्च सन्तो जडत्वात्कथितवन्तो—यथा नट एव न द्रष्टव्य इत्यस्माभिरधिगतमासीदिति, तथा आर्जवयुक्ताः प्रज्ञावन्तश्च ऋजुप्रज्ञा मध्यमद्वाविंशतिजिनसाधवो महाविदेहव्रतिनश्च, तेऽपि तथैव नटोदाहरणादेव प्रतिपत्तव्याः, ते हि किल तथैव नटनिरीक्षणं प्रति प्रतिषिद्धाः प्राज्ञत्वात्स्वयं विमृश्य रागादिहेतुतया नटीनिरीक्षणमपि परिहृतवन्तः, ततश्च मध्यमजिनसाधव ऋजुत्वेन यथोपदिष्टानुपालनात् प्राज्ञत्वेनोपदेशमात्रादप्यशेषहेयार्थोहनेन तत्परिहारसमर्थत्वाच्च सुखप्रतिबोध्याः, अतो न अपरिगृहीतायाः

स्त्रियः परिभोगः स्यादिति परिग्रहविरमणेनैव मैथुनविरतिं प्रतिपद्यन्ते इत्यतस्तेषां परमार्थतः पञ्चयामोऽपि चतुर्यामः, प्रथमजिनसाधूनां तु ऋजुजडत्वेन बहुधा बहुमिश्रोपदेशैः समस्तहेयार्थज्ञानसम्भवात् चरमजिनसाधूनां च वक्रजडत्वात्तेन तेन व्याजेन हेयार्थसेवासम्भवात्परिग्रहविरतिव्रतेनैव मैथुनविरतिव्रतं सङ्गृहीतमिति न प्रतिपत्तिः ततः पञ्चयाम एव तेषां धर्म इति ७४ ॥ ६४७ ॥ इदानीं 'किइकम्माण य दिणे संख'त्ति पञ्चसप्ततं द्वारमाह—

**चत्तारि पडिक्कमणे किइकम्मा तिण्णि हुंति सज्झाए । पुव्वण्हे अवरण्हे किइकम्मा चउदस हवंति ॥ ६४८ ॥**

चत्वारि प्रतिक्रमणे कृतिकर्माणि—वन्दनकानि भवन्ति, तत्र आलोचनवन्दनकं प्रथमं क्षामणकवन्दनकं द्वितीयं आचार्यप्रभृतिसर्वसङ्घस्य क्षमणपूर्वमाश्रयणाय वन्दनकं तृतीयं प्रत्याख्यानवन्दनकं चतुर्थं, तथा स्वाध्याये त्रीणि वन्दनकानि, तत्र स्वाध्यायप्रस्थापने एकं वन्दनं स्वाध्यायप्रवेदने द्वितीयं स्वाध्यायकरणानन्तरं च तृतीयं, एवं पूर्वाह्णे—प्रत्युषसि सप्त वन्दनकानि अपराह्णेऽप्येतान्येव सप्त, कालग्रहणोद्देशसमुद्देशानुज्ञादिवन्दनकानां स्वाध्यायवन्दनेष्वेवान्तर्भावात्, तदेवमेतानि ध्रुवाणि कृतिकर्माणि प्रतिदिवसं चतुर्दश भवन्ति अभक्तार्थिकस्य, भक्तार्थिकस्य तु अपराह्णे प्रत्याख्यानवन्दनेनाभ्यधिकानीति ७५ ॥ ६४८ ॥ सम्प्रति 'खेत्ते चारित्ताणं संख'त्ति षट्सप्ततितमं द्वारमाह—

**तिण्णि य चारित्ताइं बावीसजिणाण एरवयभरहे । तह पंचविदेहेसुं बीयं तइयं च नवि होइ ॥ ६४९ ॥**

त्रीण्येव चारित्राणि—सामायिकसूक्ष्मसम्परायथाख्यातलक्षणानि पञ्चसु भरतेपु पञ्चसु चैरवतेपु प्रथमचरमवर्जितानां द्वाविंशतेर्मध्यमजिनानां काले, तथा पञ्चस्वपि महाविदेहेपु साधूनां भवंति, द्वितीयं—छेदोपस्थापनीयं तृतीयं च—परिहारविशुद्धिकं कदाचनापि न भवतीति, प्रथमचरमतीर्थकरयोश्च भरतैरवतेपु पञ्चापि सामायिकादीनि चारित्राणि भवन्तीत्यर्थादुक्तं भवतीति ७६ ॥ ६४९ ॥ इदानीं 'ठियकप्पो'त्ति सप्तसप्ततं द्वारमाह—

**सिज्जायरपिंडंमि य १ चाउज्जामे य २ पुरिसजिट्ठे य ३ । किइकम्मस्स य करणे ४ ठिइकप्पो मज्झिमाणं तु ॥ ६५० ॥**

इह कल्पः—साधुसमाचारः स च सामान्येन दशधा—"आचेलुक्कु १ देसिय २ सेज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥" एप च दशविधोऽपि सततासेवनेन प्रथमचरमजिनसाधूनामवस्थितः कल्पः, मध्यमजिनसाधूनां चतुर्षु स्थानेपु स्थितत्वात् पट्सु चास्थितत्वाद्दशस्थानकापेक्षयाऽनवस्थितः कल्पः, उक्तं च—"ठिय अट्ठियओ य कप्पो आचेलुक्काइएसु ठाणेसु । सव्वेसु ठिया पढमो चउ ठिय छसु अट्ठिया वीओ ॥ १ ॥" [ स्थितोस्थितश्च कल्प आचेलक्यादिकेषु स्थानेपु । सर्वेषु स्थिताः प्रथमः चतुर्षु स्थिताः पट्स्वस्थिता द्वितीयः ॥ १ ॥ ] तथा मध्यमजिनसाधूनामपि चतुर्षु स्थानेपु सदैवावस्थितत्वेन पट्सु च स्थानेपु कादाचित्कावस्थानेन स्थितोऽस्थितश्च द्विधा कल्पः सम्भवति, तत्र तेषां स्थितकल्पस्तावदुच्यते—शय्यातरपिण्डे—वक्ष्यमाणस्वरूपे तथा चतुर्णां यामानां—व्रतानां समाहारश्चतुर्यामं तदेव चातुर्यामं तत्र तथा पुरुप एव ज्येष्ठो—रत्नाधिकः पुरुपज्येष्ठस्तत्र तथा कृतिकर्मणो—वन्दनकस्य करणे—विधाने स्थितः—अवस्थितः कल्पो—मर्यादा मध्यमानां—मध्यमद्वाविंशतिसाधूनां तुशब्दा-

न्महाविदेहसाधूनां च, एतदुक्तं भवति—मध्यमजिनसाधवो महाविदेहसाधवश्च प्रथमचरमजिनसाधुवदवश्यमेव शय्यातरपिण्डं परिहरन्ति-तथा परिग्रहविरमणान्तर्भूतमैथुनविरतिव्रतत्वेन सर्वदैव चतुर्यामं धर्मं मन्यन्ते तथा प्रथमपश्चिमजिनसाधूनां महाव्रतारोपणलक्षणया उपस्थापनया यथा ज्येष्ठत्वं तद्वन्मध्यमजिनसाधूनामपि सर्वेषां प्रव्रज्यया ज्येष्ठत्वं सर्वदैव ज्ञेयं, तथा अभ्युत्थानलक्षणं द्वादशावर्त्तादिरूपं च द्विविधमपि कृतिकर्म साधुभिः साध्वीभिश्च यथापर्यायवृद्धि विधेयं साध्व्यश्च पर्यायज्येष्ठा अपि अद्यदिनदीक्षितैरपि साधुभिर्न वन्दनीयाः पुरुषप्रधानत्वाद् धर्मस्य अनेकदोषसम्भवाच्च, ते चामी—"तुच्छत्तणेण गव्वो जायइ न य संकए परिभवेणं । अन्नोवि होज्ज दोसो थियासु माहुज्जाहिज्जासु ॥ १ ॥" [ तुच्छत्वेन गर्वो जायते न च शङ्कते परिभवे । अन्योऽपि भवेद्दोषः स्त्रीषु माधुर्यहार्यासु ॥ १ ॥ ] स्त्रीषु माधुर्यहार्यासु'माधुर्येण—कोमलवचनेन हर्तुं शक्यास्वित्यर्थः, तदेवमेतानि चत्वार्यपि स्थानानि सर्वेषामपि साधूनां नित्यमवस्थितानीति स्थितकल्पः ७७ ॥ ६५० ॥ इदानीं 'अट्ठियकप्पो'त्ति अष्टासप्ततं द्वारमाह—

**आचेलक्कु १ देसिय २ पडिक्कमणे ३ रायपिंड ४ मासेसु ५ । पज्जुसणाकप्पंमि य ६ अट्ठियकप्पो मुणेयव्वो ॥ ६५१ ॥ आचेलक्को धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं होइ सचेलो अचेलो वा ॥ ६५२ ॥ मज्झिमगाणं तु इमं कडं जमुद्दिस्स तस्स चेवत्ति । नो कप्पइ सेसाणं तु कप्पइ तं एस मेरत्ति ॥ ६५३ ॥ सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमयाण जिणाणं कारणजाए पडिक्कमणं ॥ ६५४ ॥ असणाइचउक्कं वत्थपत्त-कंबलयपायपुंछणए । निवपिंडंमि न कप्पति पुरिमअंतिमजिणजईणं ॥ ६५५ ॥ पुरिमेयरतित्थक-**

राण मासकप्पो ठिओं विणिद्दिट्ठो । मज्झिमगाण जिणाणं अट्ठियओ एस विण्णेओ ॥ ६५६ ॥
पज्जोसवणाकप्पो चेवं पुरिमेयराइभेएणं । उक्कोसेयरभेओ सो नवरं होइ विन्नेओ ॥ ६५७ ॥ चा-
उम्मासुक्कोसो सत्तरि राइंदिया जहन्नो उ । थेराण जिणाणं पुण नियमा उक्कोसओ चेव ॥ ६५८ ॥

आचेलक्ये औद्देशिके प्रतिक्रमणे राजपिंडे मासकल्पे पर्युषणाकल्पे च सततसेवनीयत्वाभावान्मध्यमजिनसाधूनामस्थितकल्पो ज्ञातव्यः,
ते ह्येतानि स्थानानि कदाचिदेव पालयन्तीति ॥६५१॥ तत्र आचेलक्यस्वरूपं तावदाह–'आचे'इत्यादि, अविद्यमानं नञ् कुत्सार्थे कुत्सितं वा
चेलं यस्यासावचेलकस्तद्भाव आचेलक्यं तद्योगाद्धर्मोऽपि चारित्रलक्षण आचेलक्यः स पूर्वस्य च–युगादिदेवस्य पश्चिमस्य च–श्रीमहावीर-
जिनस्य सम्बन्धिसाधूनां भवति, अयमत्र भावार्थः–अचेला द्विधा–अविद्यमानवस्त्रा विद्यमानवस्त्राश्च, तत्र तीर्थंकरा अविद्यमानवस्त्राः
सन्तोऽचेला भवन्ति पुरुहूतोपनीतदेवदूष्यापगमानन्तरं, तीर्थकरव्यतिरिक्तास्तु साधवो विद्यमानैरपि वस्त्रैरचेलाः, स्वल्पमूल्यश्वेतखण्डि-
तवस्त्राश्रयणात्, दृश्यते च लोके विवक्षितवस्त्राभावे सचेलत्वेऽपि विशिष्टार्थाप्रसाधकत्वेनासत्त्वाविशेषादचेलव्यवहारः, यथा काचित्पु-
रन्ध्री परिजीर्णशाटिकापरिधाना तन्तुवायमाह–नग्नाऽहं देहि मे शाटिकामिति, मध्यमकानां पुनर्द्वाविंशतेर्जिनानां सम्बन्धिसाधूनां
भवति–स्यात्सचेलः–सवस्त्रोऽचेलो वा–निर्वस्त्रो धर्मः, कुतः ?–तेषामृजुप्राज्ञत्वान्महामूल्यपञ्चवर्णानामितरेषां च वस्त्राणां परिभोगानुज्ञा-
नात्, प्रथमपश्चिमजिनसाधूनां तु ऋजुजडत्वेन वक्रजडत्वेन च महाधनादिवस्त्राणामननुज्ञानात् श्वेतखण्डितादीनामेव चानुज्ञानादचेलक इति
॥६५२॥ 'उद्देसिय'त्ति व्याख्यायते–'मज्झिमे'त्यादि, उद्देशेन–साधुसङ्कल्पेन निर्वृत्तमौद्देशिकं–आधाकर्म अत्र स्थितास्थितकल्पविचारे विव-
क्षितं ततो मध्यमजिनसाधूनामिदं–औद्देशिकं यमेव–साध्वादिकमुद्दिश्य कृतं–निर्वर्तितं तस्यैव न कल्पते, इतिः वाक्यसमाप्तौ, शेषाणां तु–

उद्दिष्टसाधुभ्योऽन्येषां तदौद्देशिकं ग्रहीतुं कल्पते, कस्मादेवमित्याह—'एषा' अनन्तरोक्ता 'मेर'त्ति मर्यादा ऋजुप्राज्ञसाधून् प्रज्ञापनीयलो-
कांश्चाधिकृत्य जिनैः कृतेतिकृत्वा, प्रथमपश्चिमजिनतीर्थे तु यमुद्दिश्य कृतमाधाकर्म तत्तस्यापि न कल्पते शेषसाधूनामपीति ॥६५३॥ 'पडि-
क्कमण'त्ति प्रतन्यते—सप्रतिक्रमणः—'सपडि'इत्यादि, उभयकालं षड्विधावश्यककरणयुक्तो धर्मः—चारित्रधर्मः पूर्वस्य च पश्चिमस्य च जिन-
स्य संबन्धिसाधूनां, मध्यमजिनसाधूनां तु कारणे—प्रतिक्रमणविशोधनीयातिचाररूपे जाते—समुत्पन्ने सति प्रतिक्रमणं कर्तव्यं, कारणाभावे
सर्वदाऽपि ते न प्रतिक्रामन्ति, अयमभिप्रायः—प्रथमपश्चिमजिनसाधूनामतिचारो भवतु वा मा वा तथाऽप्यवश्यतया प्रभाते प्रदोषे च षड्वि-
धाऽऽवश्यकप्रतिक्रमणं गमनागमननद्यवतारादिषु च नियमेनेर्यापथिकाप्रतिक्रमणं कर्तव्यं, ऋजुजडवक्रजडतया तेषामुपकारित्वात्, मध्य-
मजिनमुनीनां पुनः प्रायेणातीचार एव न सम्भवति ऋजुप्रज्ञत्वात्तेषां, अथ कथञ्चित्कदाचनापि सम्भवति तदा तत्क्षणादेव रोगचिकित्सो-
दाहरणेन प्रतिक्रमणमुक्तरूपं कुर्वन्ति, यथा हि जातमात्र एव रोगे चिकित्सा क्रियमाणा सुखावहा भवति, एवं तत्काल एवातीचारविशुद्धये
विधीयमानं प्रतिक्रमणमपीति ॥६५४॥ 'रायपिंड'त्ति व्याख्यानयन्नाह—'असणे'त्यादि, अशनादिचतुष्कं—अशनपानखादिमस्वादिमरूपा
आहाराश्चत्वारः वस्त्रं पात्रं कम्बलं पादप्रोञ्छनकं चेत्येतान्यष्टौ 'नृपपिण्डे' नृपपिण्डविषये चक्रवर्त्यादिसत्कानीत्यर्थः प्रथमान्तिमजिन-
यतीनां न कल्पन्ते, अनेकदोषसम्भवात्, तथाहि—राजकुले भिक्षार्थं व्रजतां यतीनामनवरतमस्तोकराजकुललोकनिर्गमप्रवेशादिभिः संम-
र्दादमङ्गलबुद्ध्या वा पात्रभङ्गदेहघातादयः सम्भवन्ति, चौरहेरिकघातकादिसम्भावनया राजकोपात्कुलगणसङ्घाद्युपघातश्च लोकमध्ये च
गर्हा यथा अहो राजप्रतिग्रहमेते गर्हणीयमपि न परित्यजन्ति, गर्हणीयता च तस्य स्मार्तैरेवमुच्यते—"राजप्रतिग्रहदग्धानां, ब्राह्मणानां
युधिष्ठिर! । खिन्नानामिव बीजानां, पुनर्जन्म न विद्यते ॥ १ ॥" मध्यमजिनसाधूनां पुनर्नृपपिण्डः कल्पतेऽपि, ते हि ऋजुप्रज्ञत्वा-

द्विशेषतोऽप्रमादित्वेनोक्तदोपपरिहारप्रभविष्णवो भवन्ति, इतरे तु ऋजुजडवक्रजडत्वेन न तथेति ॥६५५॥ 'मास'त्ति प्रकटयन्नाह—'पुरी'-त्यादि, पूर्वेतरतीर्थकराणां—प्रथमपश्चिमजिनसाधूनां मासकल्पः—एकत्र मासावस्थितिरूपः समाचारः स्थितः—अवस्थितो निर्दिष्टः—कथितः, तेषां मासकल्पाभावेऽनेकदोपसम्भवात्, उक्तं च—"पडिबंधो लहुयत्तं न जणुवयारो न देसविन्नाणं । नाणाराहणमेए दोसा अविहारपक्खंमि ॥ १ ॥ अस्या व्याख्या—प्रतिबन्धः—शय्याशय्यातरादिवस्तुष्वभिष्वङ्गो भवति, तथा लघुत्वं—लाघवं, एते हि स्वगृहं परित्यज्य गृहान्तरादिपु व्यासक्ता एवं लोकसम्भावनोत्पादनात्, तथा न जनोपकारो—न विविधदेशस्थितभव्यजनानामुपदेशदानादिभिर्गुणः कृतो भवति अथवा न देशान्तरस्थितसुविहितजनस्योपचारो—वन्दनादिपूजा जनेभ्यो वा सकाशादुपचारो न लब्धो भवति सुविहितजनव्यवहारो वा न परिपालितः स्यात् तथा न—नैव देशेपु—विविधमण्डलेपु सञ्चरतां विज्ञानं—विचित्रलोकलोकोत्तरव्यवहारपरिज्ञानं तथा न—नैव आज्ञाराधनं—आगमोक्तार्थानुपालनं, आगमो ह्येवं—'मुत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि य विहारो ।' [मुक्त्वा मासकल्पं नास्त्यन्यः सूत्रे विहारः] एते—अनन्तरोक्ता दोपाः—दूपणान्यविहारपक्षे—मासकल्पेन विहाराभ्युपगमाभावे इति । अथ कदाचिद् दुर्भिक्षादिकालदोपसंयमाननुगुणत्वादिक्षेत्रदोपशरीराननुकूलभक्तलाभादिद्रव्यदोपग्लानत्वज्ञानहान्यादिभावदोपवशतो यद्यप्येप मासकल्पो न बहिर्वृत्त्या क्रियते तथाप्यवश्यम्भावेन भावतो वसतिसंस्तारकव्यत्ययादिभिः क्रियमाणत्वादवस्थितः, यदुक्तं—"कालाइदोसओ जइ न दव्वओ एस कीरई नियमा । भावेण उ कायव्वो संथारगवच्चयाईहिं ॥ १ ॥" [कालादिदोपतो यदि न द्रव्यत एप क्रियते । भावेन तु नियमात् संस्तारकव्यत्ययादिभिः कर्त्तव्यः ॥ १ ॥] मध्यमजिनसाधूनां पुनरस्थितकः—अनवस्थितः एपः—मासकल्पो विज्ञेयो—ज्ञातव्यः, ऋजुप्रज्ञत्वेन तेपामधिकावस्थानेऽपि पूर्वोक्तदोपासम्भवात्, उक्तं च—"दोसासइ मज्झिमगा अच्छंति उ जाव पुव्वकोडीवि । विहरंति य वासासुवि

अकद्दमे पाणरहिए य ॥ १ ॥ सित्तंपि मासकप्पं करंति तणुयंपि कारणं पप्प । जिणकप्पियावि एवं एमेव महाविदेहेसुं ॥ २ ॥" [ दोपेष्वसत्सु मध्यमास्तिष्ठन्ति यावत् पूर्वकोटीमपि । विहरन्ति वर्षास्वपि च अकर्दमे प्राणरहिते च ॥१॥ मासकल्पमपूर्णमपि कुर्वन्ति तनुकमपि कारणं प्राप्य । जिनकल्पिका अप्येवं एवमेव महाविदेहेषु ॥२॥ ] 'पज्जोसवण'त्ति व्याख्यानयन्नाह—'पज्जो'इत्यादि, परि—सर्वथा वसनं—एकत्र निवासो निरुक्तविधिना पर्युषणा तद्रूपः कल्पः पर्युषणाकल्पः—न्यूनोदरताकरणं विकृतिनवकपरित्यागः पीठफलकादिसंस्तारकादानं उच्चारादिमात्रकसङ्ग्रहणं लोचकरणं शैक्षाप्रव्राजनं प्राग्गृहीतानां भस्मडगलकादीनां परित्यजनं इतरेषां ग्रहणं द्विगुणवर्षोपग्रहोपकरणधरणं अभिनवोपकरणाग्रहणं सक्रोशयोजनात्परतो गमनवर्जनमित्यादिको वर्षाकालसमाचार इत्यर्थः, सोऽपि न केवलं मासकल्प एव, एवं—उक्तक्रमेण, तमेवाह—पूर्वेतरादिभेदेन—आदिमान्तिममध्यमसाधुविशेषेण, अयमर्थः—प्रथमपश्चिमजिनयतीनां पर्युषणाकल्पोऽवस्थितो मध्यमजिनमुनीनां त्वनवस्थित इति, अत्रैव विशेषमाह—उत्कर्षेतरभेदः—उत्कृष्टजघन्यभेदः स पर्युषणाकल्पः, नवरं—केवलं भवति—स्याद्विज्ञेयः—अवसेय इति ॥ ६५७ ॥ एतावेव भेदौ व्याचष्टे—'चाउ०' चतुर्णां मासानां समाहारश्चतुर्मासं तदेव चातुर्मासं तद्यावदुत्कर्षः—उत्कृष्टः पर्युषणाकल्पः, आषाढपूर्णिमायाः कार्तिकपूर्णिमां यावदित्यर्थः, जघन्यः पुनः सप्तर्ति रात्रिन्दिवानि—अहोरात्राणि भाद्रशुक्लपञ्चम्याः कार्तिकपूर्णिमां यावदित्यर्थः, केषामयं पर्युषणाकल्प इत्याह—स्थविराणां—प्रथमपश्चिमजिनसम्बन्धिस्थविरकल्पिकसाधूनां जिनानां पुनः—पूर्वां तिमतीर्थकृज्जिनकल्पिकानां नियमात्—निश्चयेन उत्कृष्ट एव—मासचतुष्टयप्रमाण एव पर्युषणाकल्पः, निरपवादत्वात्तेषामिति ॥ ६५८ ॥ इदानीं 'चेइय'त्ति एकोनाशीतितमं द्वारमाह—

**भत्ती १ मंगलचेइय २ निस्सकड ३ अनिस्सकडचेइयं ४ वावि । सासयचेइय ५ पंचममुवइट्ठं**

जिणवरिंदेहिं ॥ ६५९ ॥ गिहि जिणपडिमाए भत्तिचेइयं १ उत्तरंगघडियंमि । जिणबिंबे मंगलचेइयंति २ समयन्नुणो बिंति ॥ ६६० ॥ निस्सकडं जं गच्छस्स संतियं तदियरं अनिस्सकडं ४ । सिद्धाययणं च ५ इमं चेइयपणगं विणिद्दिट्ठं ॥ ६६१ ॥ नीयाइं सुरलोए भत्तिकयाइं च भरहमाईहिं । निस्सानिस्सकयाइं मंगलकयमुत्तरंगंमि ॥ ६६२ ॥ वारत्तयस्स पुत्तो पडिमं कासीय चेइए रम्मे । तत्थ य थली अहेसी साहम्मियचेइयं तं तु ॥ ६६३ ॥

'भत्ती०' गाथापंचकं, चैत्यशब्दस्य प्रत्येकमभिसम्बन्धाद्भक्तिचैत्यं मङ्गलचैत्यं निश्राकृतं चैत्यमनिश्राकृतं चैत्यं शाश्वतचैत्यं च पञ्चममुपदिष्टं—नामतः कथितं जिनवरेन्द्रैरिति ॥ ६५९ ॥ एतान्येव व्याचष्टे—'गिही'त्यादि गाथाद्वयं, गृहे जिनप्रतिमायां यथोक्तलक्षणाद्युपेतायां प्रतिदिनं त्रिकालं पूजावन्दनाद्यर्थं कारितायां भक्तिचैत्यं, तथा उत्तरङ्गस्य—गृहद्वारोपरिवर्तितिर्यक्काष्ठस्य मध्यभागे घटिते—निष्पादिते जिनबिम्बे मङ्गलचैत्यमिति 'समयज्ञाः' सिद्धान्तवेदिनो 'ब्रुवते' वदन्ति, मथुरायां हि नगर्यां गृहे कृते मङ्गलनिमित्तमुत्तरङ्गेषु प्रथममर्हत्प्रतिमाः प्रतिष्ठाप्यन्ते, अन्यथा तद् गृहं पतति, तथा चावोचाम स्तुतिषु—"जंमि सिरिपासपडिमं संतिकए करइ पडिगिहदुवारे । अज्जवि जणो पुरिं तं महुरमधन्ना न पेच्छंति ॥ १ ॥" [ यस्यां श्रीपार्श्वप्रतिमां शान्तिकृते करोति प्रतिगृहे द्वारि । अद्यापि जनः तां पुरीं मथुरामधन्या न प्रेक्षन्ते ॥ १ ॥ ] तथा 'निश्राकृतं' यद्गच्छस्य कस्यापि सत्कं स एव गच्छस्तत्र प्रतिष्ठादिप्रयोजनेष्वधिक्रियते अन्यः पुनस्तत्र किञ्चित्प्रतिष्ठादिकं कर्तुं न लभते इत्यर्थः, तथा 'तदियरं'ति तस्मात्—निश्राकृतादितरत्—अनिश्राकृतं, यत्र सर्वेऽपि गच्छाः प्रतिष्ठाप्रव्राजनकमालारोपणादीनि प्रयोजनानि कुर्वते इति, तथा 'सिद्धायतनं च' शाश्वतजिनायतनं च, इदं चैत्यपञ्चकं 'विनिर्दिष्टं'

विशेषेण कथितमिति ॥ ६६० ॥ ६६१ ॥ अथवाऽन्येन प्रकारेण पञ्च चैत्यानि भवन्ति, तत्राह—'नीयाइं' इत्यादिगाथाद्वयं, 'नित्यानि' शाश्वतानि चैत्यानि, तानि च 'सुरलोके' देवभूमौ, उपलक्षणत्वान्मेरुशिखरे कूटनन्दीश्वररुचकवरादिषु च भवन्ति, तथा भक्तिकृतानि भरतादिभिः कारितानि, मकारोऽयमलाक्षणिकः, तानि च निश्राकृतानि अनिश्राकृतानि चेति द्वेधा, तथा मङ्गलार्थं कृतं मङ्गलकृतं चैत्यं मथुरादिपुरीषु उत्तरङ्गप्रतिष्ठापितं । तथा वारत्तकमुनेः पुत्रो 'रम्ये' रमणीये 'चैत्ये' देवगृहे 'प्रतिमां' तस्यैव वारत्तकमुनेः प्रतिकृतिमकार्षीत्, तत्र च स्थलीति रूढिरभूत्, तत्तु साधर्मिकचैत्यमिति, भावार्थस्तु कथानकादवसेयः, तच्चेदं—वारत्तकं नगरं, अभयसेनो राजा, तस्य च वारत्तको नाम मन्त्री, एकदा च धर्मघोषनामा मुनिर्भिक्षार्थं तस्य गेहं प्रविष्टः, तद्भार्या च तस्मै भिक्षादानाय घृतखण्डसम्मिश्रपायसपरिपूर्णं पात्रमुत्पाटितवती, अत्रान्तरे च कथमपि ततः खण्डसम्मिश्रो घृतबिन्दुर्भूमौ पतितः, ततः स महात्मा धर्मघोषमुनिर्भगवदुपदिष्टभिक्षाग्रहणविधिविधानविहितोद्यमश्छर्दितदोषदुष्टेयं भिक्षा तस्मान्न कल्पते ममेति मनसि विचिन्त्य भिक्षामगृहीत्वा गृहान्निर्जगाम, वारत्तकमन्त्रिणा च मत्तवारणोपविष्टेन दृष्टो भगवान्निर्गच्छन्, चिन्तितं च—किमनेन मुनिना मदीया भिक्षा न गृहीतेति ?, एवं च यावच्चिन्तयति तावत्तं भूमौ निपतितं खण्डयुक्तघृतबिन्दुं मक्षिकाः समेत्याशिश्रियन् तासां च भक्षणाय प्रधाविता गृहगोधिका तस्या अपि वधाय प्रधावितः सरटः तस्यापि च भक्षणाय प्रधावति स्म मार्जारी तस्या अपि वधाय प्रधावितः प्राघूर्णकः श्वा तस्यापि च वधाय प्रतिद्वन्द्वी प्रधावितोऽन्यो वास्तव्यः श्वा ततो द्वयोरपि तयोः शुनोरभूदन्योऽन्यं युद्धं निजनिजशुनकपराभवपीडया च प्रधावितयोर्द्वयोरपि तत्स्वामिनोरभूत्परस्परं लकुटालकुटि महायुद्धं, दृष्टं चैतत्सर्वमपि वारत्तकमन्त्रिणा, परिभावितं च घृतादेर्बिन्दुमात्रेऽपि भूमौ पतिते यत एवंविधाऽधिकरणप्रवृत्तिः अत एवाधिकरणभीरुर्भगवान्, अहो सुदृष्टो भगवता धर्मः, को हि नाम भगवन्तं

वीतरागमन्तरेणैवमनपायं धर्ममुपदेष्टुमलंभविष्णुः, ततो ममापि स एव देवता तदुक्तमेवानुष्ठानमनुष्ठातुमुचितमिति विचिन्त्य संसारसुखविमुखः शुभध्यानोपगतः सञ्जातजातिस्मरणो देवताऽर्पितसाधुलिङ्गो दीर्घकालं संयममनुपाल्य केवलज्ञानमासादितवान्, कालक्रमेण च सिद्धः, ततस्तत्पुत्रेण स्नेहापूरितमानसेन देवगृहं कारयित्वा रजोहरणमुखपोत्तिकापरिग्रहधारिणी पितृप्रतिमा तत्र स्थापिता सत्रशाला च तत्र प्रवर्तिता सा च साधर्मिकस्थलीति सिद्धान्ते भण्यते ७९ ॥ ६६२ ॥ ६६३ ॥ इदानीं 'पुत्थगपंचगं'ति अशीतितमं द्वारमाह—

**गंडी १ कच्छवि २ मुट्ठी ३ संपुडफलए ४ तहा छिवाडी य ५। एयं पोत्थयपणगं वक्खाणमिणं भवे तस्स ॥ ६६४ ॥ बाहल्लपुहुत्तेहिं गंडीपोत्थो उ तुल्लगो दीहो १। कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥ ६६५ ॥ चउरंगुलदीहो वा वट्टागिइ मुट्ठिपुत्थगो अहवा। चउरंगुलदीहो च्चिय चउरंसो होइ विन्नेओ ॥ ६६६ ॥ संपुडगो दुगमाई फलया वोच्छं छिवाडिमित्ताहे। तणुपत्तूसियरूवो होइ छिवाडी बुहा बेंति ॥ ६६७ ॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो। तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥ ६६८ ॥**

'गंडी०' गाथापंचकं, गण्डिकापुस्तकं कच्छपीपुस्तकं मुष्टिकापुस्तकं संपुटफलकपुस्तकं छेदपाटिपुस्तकं च, एतत्पुस्तकपञ्चकं च ज्ञातव्यमिति शेषः, तस्य च—पुस्तकपञ्चकस्य इदं—वक्ष्यमाणं व्याख्यानं भवेदिति ॥ ६६४ ॥ तदेवाह—'बाहल्ले'त्यादि गाथाचतुष्टयं, बाहल्यं—पिण्डः पृथुत्वं—विस्तरः ताभ्यां तुल्यः—समानश्चतुरस्रो दीर्घश्च गण्डीपुस्तको ज्ञेयः, तथा कच्छपीपुस्तक उभयपार्श्वयोरन्ते—पर्यन्तभागे तनुकः—सूक्ष्मो मध्यभागे च पृथुलो—विस्तृतोऽल्पबाहल्यो ज्ञातव्यः, तथा चतुरङ्गुलः—अङ्गुलचतुष्टयप्रमाणः प्राकृतत्वात् सेर्लोपः

दीर्घो वा—आयतो वृत्ताकृतिः—वर्तुलाकारो मुष्टिपुस्तकः, अथवा चतुरङ्गुलदीर्घ एव—अङ्गुलचतुष्कायाम एव चतुरस्रः—चतुष्कोणो मुष्टिपुस्तको भवति विज्ञेयः; तथा सम्पुटफलकपुस्तको यत्र द्व्यादीनि उभयोः पार्श्वयोः फलकानि—पृष्ठकानि भवन्ति, वणिग्जनस्य उद्धारनिक्षेपाद्याधारः सम्पुटकाख्य उपकरणविशेष इति भावः, इदानीं वक्ष्ये छेदपाटीपुस्तकं, यथा तनुभिः—स्तोकैः पत्रैरुच्छ्रितरूपः—किञ्चिदुन्नतो भवति छेदपाटीपुस्तक इति बुधा ब्रुवते, लक्षणान्तरमाह—दीर्घो वा—महान् ह्रस्वो वा—लघुर्यः पृथुलो—विस्तृतोऽल्पबाहल्यश्च—स्वल्पपिण्डो भवति तं ज्ञातसमयसाराश्छेदपाटीपुस्तकं भणन्तीह—शासने, न चैतत्स्वमनीषिकया व्याख्यायते, यदुक्तं निशीथचूर्णौ—'दीहो बाहल्लपुहुत्तेण तुल्लो चतुरस्सो गंडीपुत्थगो, अंते तणुओ मज्झे पिहुलो अप्पबाहल्लो कच्छभी, चतुरङ्गुलो दीहो वा वृत्ताकृति मुट्ठीपुत्थगो, अहवा चतुरङ्गुलदीहो चउरस्सो मुट्ठिपुत्थगो, दुगाइफलगा संपुडगं, दीहो ह्रस्सो वा पिहुलो अप्पबाहल्लो छिवाडी, अहवा तणुपत्तेहिं उस्सिओ छिवाडी"त्ति ८० ॥ ६६५ ॥ ६६६ ॥ ६६७ ॥ ६६८ ॥ इदानीं 'दंडपंचगं'ति एकाशीतितमं द्वारमाह—

लट्ठी १ तहा विलट्ठी २ दंडो य ३ विदंडओ य ४ नाली अ ५ । भणियं दंडयपणगं वक्खाणमिणं भवे तस्स ॥ ६६९ ॥ लट्ठी आयपमाणा विलट्ठी चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमित्तो उ ॥ ६७० ॥ लट्ठीए चउरंगुल समूसिया दंडपंचगे नाली । नइपमुहजलुत्तारे तीए थग्घिज्जए सलिलं ॥ ६७१ ॥ बज्झइ लट्ठीए जवणिया विलट्ठीएँ कत्थइ दुवारं । घट्टिज्जइ ओवस्सयतणयं तेणाइरक्खट्ठा ॥ ६७२ ॥ उउबद्धम्मि उ दंडो विदंडओ घिप्पए वरिसयाले ।

**जं सो लहुओ निज्जइ कप्पंतरिओ जलभएणं ॥ ६७३ ॥ विसमाइ वद्धमाणाइं दस य पवाइं एगवन्नाइं । दंडेसु अपोल्लाइं सुहाइं सेसाइं असुहाइं ॥ ६७४ ॥**

'लट्ठी०' गाथाषट्कं, यष्टिस्तथा वियष्टिस्तथा दण्डस्तथा विदण्डस्तथा नालिका एतद्दण्डपञ्चकं भणितं तीर्थकरगणधरैः, तस्य च—दण्डपञ्चकस्य इदं—वक्ष्यमाणस्वरूपं व्याख्यानं भवेत्। एतदेवाह—'लट्ठी' इत्यादि सार्धगाथा, यष्टिरात्मप्रमाणः—सार्धहस्तत्रयमानः, वियष्टिर्यष्टेः सकाशाच्चतुर्भिरङ्गुलैः परिहीनो—न्यूनो भवति, दण्डो बाहुप्रमाणः—स्कन्धप्रदेशप्रमाणः विदण्डः कक्षामात्रकः—कक्षाप्रमाणः, नालिका यष्टेः सकाशाच्चतुरङ्गुलसमुच्छ्रिता—आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता षोडशाङ्गुलाधिकहस्तत्रयमानेत्यर्थः, दण्डपञ्चके—दण्डपञ्चकमध्ये नाली नाम दण्डः पञ्चम इति ॥ इदानीं एतेषां पञ्चानामपि दण्डानां प्रयोजनं प्रतिपिपादयिपुरनानुपूर्व्या अपि व्याख्याङ्गत्वात्प्रथमं नालिकायाः प्रयोजनमाह—'**नइपमुहजलुत्तारे तीए थग्घिज्जए सलिलं ।**' नदीप्रमुखजलोत्तारे—नदीह्रदादिकमुत्तरीतुमनोभिर्मुनिभिस्तया नालिकया स्ताघ्यते—सलिलं इदं गाधमगाधं वा इति परिमीयते ॥ ६६९ ॥ ६७० ॥ ६७१ ॥ अथ यष्ट्यादीनां प्रयोजनमाह—'वज्झे'त्यादि, यष्ट्या—यष्टिदण्डकेन उपाश्रये भोजनादिवेलायां सागारिकादिरक्षणार्थं यवनिका—तिरस्करिणी वध्यते, तथा वियष्ट्या—वियष्टिदण्डकेन कुत्रापि प्रत्यन्तग्रामादौ तस्करादिरक्षणार्थमुपाश्रयसत्कं द्वारं घट्टयते—आहन्यते, येन खाट्कारश्रवणात् तस्करशुनकादयो नश्यन्तीति, तथा ऋतुवद्धे काले भिक्षाभ्रमणादिवेलायां दण्डको गृह्यते, तेन हि प्रद्विष्टानां द्विपदानां मनुष्यादीनां चतुष्पदानां गवाश्वादीनां बहुपदानां शरभादीनां निवारणं क्रियते, दुर्गस्थानेषु च व्याघ्रचौरादिभये प्रहरणं भवति, वृद्धस्य च अवष्टम्भनहेतुर्भवतीत्यादिप्रयोजनं, वर्षाकाले विदण्डको गृह्यते, यद्—यस्मात्स लघुको भवति ततः कल्पान्तरितः—कल्पस्याभ्यन्तरे कृतः सुखेनैव नीयते,

जलभयेन—यथाऽप्कायेन न स्पृश्यत इति ॥ ६७२ ॥ ६७३ ॥ इदानीमेतेषां दण्डानां शुभाशुभस्वरूपप्रतिपादनायाह—'विसे'त्यादि, पूर्वोक्तेषु पञ्चसु दण्डकेषु पर्वाणि—ग्रन्थिमध्यानि एवंविधानि शुभानि भवन्तीति सम्बन्धः, तत्र विषमाणि—एकत्रिपञ्चसप्तनवरूपाणि तथा दश च—दशसङ्ख्यानि तथा वर्धमानानि—उपर्युपरि प्रवर्धमानमानानि तथा एकवर्णानि—न पुनश्चित्तलकानि तथा 'अपोल्लाइं' अशुपिराणि निविडानीत्यर्थः एवंविधविशेषणविशिष्टपर्वोपेताः स्निग्धवर्णा मसृणा वर्तुलाश्च दण्डका यतिजनस्य प्रशस्ता इति भावः, 'सेसाइं असुहाइं'ति शेषाणि—पूर्वोक्तविशेषणविपरीतस्वरूपाणि पर्वाणि अशुभानि—अप्रशस्तानीति, एकादिपर्वाणां च शुभाशुभफलमित्थमोघनिर्युक्तावुक्तं, यथा—"एगपव्वं पसंसंति, दुपव्वा कलहकारिया। तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ १ ॥ पंचपव्वा य जा लट्ठी, पंथे कलहनिवारिणी। छपव्वाए य आयंको, सत्तपव्वा निरोगिया ॥ २ ॥ अट्ठपव्वा असंपत्ती, नवपव्वा जसकारिया। दसपव्वा उ जा लट्ठी, तहियं सव्वसंपया ॥ ३ ॥" इति ८१ ॥ ६७४ ॥ इदानीं 'तणपणगं'ति द्व्यशीतितमं द्वारमाह—

**तणपणगं पुण भणियं जिणेहिँ जियरागदोसमोहेहिं। साली १ वीहिय २ कोद्दव ३ रालय ४ रन्ने तणाइं च ५ ॥ ६७५ ॥**

तृणपञ्चकं पुनर्भणितं जिनैर्जितरागद्वेषमोहैर्यथा शालिव्रीहिककोद्रवरालकसम्बन्धीनि तृणानि—पलालप्रायाणि अरण्ये—अरण्यविपयाणि च, तत्र शालयः—कलमशालिप्रभृतयः व्रीहयः—षष्टिकादयः कोद्रवो—धान्यविशेषः प्रतीतः रालकः—कङ्गुविशेषः अरण्यतृणानि—श्यामाकप्रमुखानि ॥ ८२ ॥ ६७५ ॥ इदानीं 'चम्मपंचगं'ति त्र्यशीतितमं द्वारमाह—

**अय १ एल २ गावो ३ महिसी ४ मिगाणमजिणं च ५ पंचमं होइ। तलिगा १ खल्लग २ वद्धे ३ कोसग ४ कित्ती य ५ वीयं तु ॥ ६७६ ॥**

अजाः—छगलिकाः एडका—अजविशेषाः गावो महिष्यश्च प्रतीताः मृगा—हरिणाः, एतेषां सम्बन्धीनि पञ्च अजिनानि—चर्माणि भवन्ति, अथवा द्वितीयादेशेन इदं चर्मपञ्चकं, यथा—'तलिग'त्ति उपानहस्ताश्च एकतलिकाः, तदभावे यावच्चतुस्तलिका अपि गृह्यन्ते, अचक्षुर्विषये रात्रौ गम्यमाने सार्थवशाद्दिवापि मार्गं मुक्त्वा उन्मार्गेण गम्यमाने स्तेनश्वापदादिभयेन वा त्वरितं गम्यमाने कण्टकादिसंरक्षणार्थमेताः पादयोः क्रियन्ते, यद्वा कश्चित्सुकुमारपादत्वाद्गन्तुमसमर्थो भवति ततः सोऽपि गृह्णातीति, तथा खल्लकानि—पादत्राणानि, यस्य हि पादौ विचर्चिकावातेन स्फुटितौ भवतः स मार्गे गच्छन् तृणादिभिर्दूयते यद्वा कस्यचित्सुकुमारपादत्वात् शीतेन पार्ष्ण्यादिप्रदेशेषु विपादिकाः स्फुटन्ति ततस्तद्रक्षणार्थं तानि पादयोः परिधीयन्ते, तथा 'वद्धे'त्ति वर्ध्रास्ते च त्रुटितोपानहादिसन्धानार्थं गृह्यन्ते, तथा कोशकः—चर्ममय उपकरणविशेषः, यदि हि कस्यचित्पादनखाः पाषाणादिषु प्रतिस्खलिता भज्यन्ते तदा तेषु कोशकेष्वङ्गुल्योऽङ्गुष्ठो वा क्षिप्यन्ते, अथवा नखरदनिकाधारः कोशकः, तथा कृत्तिः—मार्गे दावानलभयाद्गच्छे यच्चर्म ध्रियते यत्र वा प्रचुरः सचित्तपृथिवीकायो भवति तत्र पृथिवीकाययतनार्थं कृत्तिमास्तीर्य अवस्थानादि क्रियते यद्वा कदाचित्तस्करैर्मुषिता भवेयुस्ततोऽन्यप्रावरणाभावे तामपि प्रावृण्वन्तीत्येतद् द्वितीयं यतिजनयोग्यं चर्मपञ्चकं भवति ८३ ॥ ६७६ ॥ इदानीं 'दूसपंचगं'ति चतुरशीतितमं द्वारमाह—

**अप्पडिलेहियदूसे तूली १ उवहाणगं च २ नायव्वं। गंडुवहाणा ३ ऽऽलिंगिणि ४ मसूरए ५ चेव पोत्तमए ॥ ६७७ ॥ पल्हवि १ कोयवि २ पावार ३ नवयए ४ तह य दाढिगाली य ५। दुप्पडि-**

लेहियदूसे एयं बीयं भवे पणगं ॥ ६७८ ॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ पडओ। दढगाली धोयपोत्ती सेस पसिद्धा भवे भेया ॥ ६७९ ॥ खरडो १ तह वोरुट्टी २ सलोमपडओ ३ तहा हवइ जीणं ४। सदसं वत्थं ५ पल्हविपमुहाणमिमे उ पज्जाया ॥ ६८० ॥

'अप्पे' त्यादिगाथाचतुष्कं, दूष्यं—वस्त्रं, तद् द्विविधं—अप्रत्युपेक्ष्यं दुष्प्रत्युपेक्ष्यं च, तत्र यत्सर्वथाऽपि न प्रत्युपेक्षितुं शक्यते तदप्रत्युपेक्ष्यं, यच्च सम्यक् न शक्यते प्रत्युपेक्षितुं तद् दुष्प्रत्युपेक्ष्यं, तत्र अप्रत्युपेक्षितदूष्यपञ्चकं यथा—तूली—सुसंस्कृतरूतभृतोऽर्कतूलादिभृतो वा विस्तीर्णः शयनीयविशेषः, तथा उपधानकं—हंसरोमादिपूर्णमुच्छीर्षकं, तथा उपाधानकस्योपरि कपोलप्रदेशे या दीयते सा गण्डोपधानिका गल्लमसूरिकेत्यर्थः, तथा जानुकूर्परादिषु या दीयते सा आलिङ्गिनी, तथा वस्त्रकृतं चर्मकृतं वा वृत्तं बूर्यादिपूर्णमासनं मसूरकः, एतानि सर्वाण्यपि पोतमयानि—वस्त्रमयानि प्रायेणेति ॥ ६७७ ॥ अथ दुष्प्रत्युपेक्षितपञ्चकमाह—पल्लविः कोयविः प्रावारकः नवतकं तथा दढगालिश्च एतद् दुष्प्रत्युपेक्षितदूष्यविषयं द्वितीयं पञ्चकं भवेत् ॥ ६७८ ॥ अथैतदेव व्याख्यानयन्नाह—पल्हविः—हस्त्यास्तरणं, हस्तिनः पृष्ठे यदास्तीर्यते खरड इत्यर्थः ये चान्ये आस्तरकादयोऽल्परोमयुक्ता बहुरोमयुक्ता वा ते सर्वेऽप्यत्रान्तर्भवन्ति, यदुक्तं निशीथचूर्णौ—
"जे य वड्डुअत्थरगइयाई माणभेआ मट्ठरोमा उल्लुतरोमा वा ते सव्वे इत्थ निवयंति"त्ति 'वड्डुअत्थरगाइ'त्ति यः किल उष्ट्रोपरि न्यस्यते, तथा कोयविको—रूतपूरितः पटः, वूरुट्ठीति यदुच्यते, ये चान्ये उल्वणरोमाणो नेपालकम्बलप्रभृतयस्ते सर्वे अत्रान्तर्भवन्ति, उक्तं च—"जे अन्ने एवमाइभेआ उव्वणरोमा कंबलगाइआ ते सव्वे इत्थ निवयंति"त्ति, तथा दढगालिर्धौतपोतिका ब्राह्मणानां सम्बन्धि सदशं परिधानवस्त्रमित्यर्थः, ये चान्ये द्विसरसूत्रपटीप्रभृतयो भेदास्ते सर्वेऽत्र निपतन्ति, उक्तं च—"विरलिमाई भूरिभेआ सव्वे इत्थ

निवयंति"त्ति, विरलिमाइत्ति—दोरियाप्रमुखाः, शेषौ च—प्रावारनवतकलक्षणौ प्रसिद्धावेव भेदौ, तत्र प्रावारः—सलोमकः पटः, स च माणिकीप्रभृतिकाः, अन्ये तु प्रावारको—बृहत्कम्बलः परियच्छिर्वेत्याहुः, नवतं च—जीणमिति ॥ ६७९ ॥ अथ पल्हविप्रमुखाणां पञ्चानामपि सुखाववोधार्थं क्रमेण पर्यायानाह—'खरे'त्यादि, इयं च व्याख्यातार्था ८४ ॥ ६८० ॥ इदानीं 'पञ्च अवग्गहभेय'त्ति पञ्चाशीतितमं द्वारमाह—

**देविंद १ राय २ गिहवइ ३ सागरि ४ साहम्मि ५ उग्गहे पंच । अणुजाणाविय साहूण कप्पए सव्वया वसिउं ॥ ६८१ ॥ अणुजाणावेयव्वो जईहिं दाहिणदिसाहिवो इंदो १ । भरहंमि भरहराया २ जं सो छक्खंडमहिनाहो ॥ ६८२ ॥ तह गिहवईवि देसस्स नायगो ३ सागरित्ति सेज्जवई ४ । साहम्मिओ य सूरी जंमि पुरे विहियवरिसालो ५ ॥ ६८३ ॥ तप्पडिबद्धं तं जाव दोण्णि मासे अओ जईण सया । अणणुन्नाए पंचहिवि उग्गहे कप्पइ न ठाउं ॥ ६८४ ॥**

'देविंदे' त्यादिगाथाचतुष्कं, देवेन्द्रराजगृहपतिसागारिकसाधर्मिकाणां सम्बन्धिनः पञ्चावग्रहाः—आभवनव्यवहारा भवन्ति, ततस्ताननुज्ञाप्य साधूनां—व्रतिनां कल्पते सर्वदा वस्तुं—वासं कर्तुं, नान्यथेति ॥ ६८१ ॥ एतदेव व्यक्तं व्याचष्टे—'अणुजाणावेयव्वे'त्यादि गाथात्रयं, इह लोकमध्यवर्तिनो मेरुमहामहीधरस्य वहुमध्यभागे ऊर्ध्वाधःप्रतररूपा तिर्यक् च एकप्रादेशिकी श्रेणिरस्ति, तया च सर्वोऽपि लोको द्विधाकृतो—दक्षिणार्धमुत्तरार्धं च, तत्र दक्षिणार्धं शक्रस्याभवति उत्तरार्धं च ईशानस्य, ततो दक्षिणार्धवर्तिभिर्यतिभिर्दक्षिणदिशाया—दक्षिणलोकार्धस्याधिपतिरिन्द्रः शक्राभिधोऽनुज्ञापयितव्यः उत्तरार्धवर्तिव्रतिभिस्तु ईशानेन्द्रः १, तथा चक्रवर्त्यादयो राजानो

यावन्मात्रस्य क्षेत्रस्य प्रभवन्ति तावत्प्रमाणं क्षेत्रं राजावग्रहः, तत्र तिर्यग् मागधादिषु तीर्थेषु यावच्चक्रवर्तिनः शरो व्रजति ऊर्द्ध्वमपि क्षुल्लहिमवद्गिरौ चतुःषष्टिं सूत्रादेशेन द्विसप्ततिं वा योजनानि यावत्, उक्तं च कल्पचूर्णौ—'उड्ढं जाव सरो चेव चुल्लहिमवंतकुमारस्स मेराए वच्चति चउसट्ठिं जोयणाणि सुत्ताएसेण बावत्तरिं'ति, अधस्तु गर्तावटादिषु, ततो भरतक्षेत्रे भरतश्चक्री यतिभिरनुज्ञापयितव्यः, यद्—यस्मात्कारणात् स षट्खण्डमहीनाथः, उपलक्षणमेतत् ततः स्वस्वकाले सगरादयोऽप्यनुज्ञापयितव्याः, एवमैरवतादिष्वपि निजनिजचक्रवर्तिनः २, तथा गृहपतिः—देशस्य—मण्डलस्य नायकः—अधिपतिः तदवग्रहे—तदधिष्ठितमण्डलरूपे वसद्भिः सोऽप्यनुज्ञापयितव्यः ३, तथा सागारिकः—शय्यापतिर्वसतिस्वामीत्यर्थः तमप्यनुज्ञाप्य वृत्तिवरण्डकादिपरिक्षिप्तगृहादिरूपे तदवग्रहे स्थातव्यं, एष च तिर्यक् विज्ञेयः, अधस्तु द्वयोरपि गृहपतिसागारिकयोर्वापीकूपभूमिगृहादिपर्यन्तः ऊर्द्ध्वं पुनः पर्वतपादपादिशिखरान्तोऽवग्रह इति ४, तथा समानो धर्मः सधर्मस्तेन चरतीति साधर्मिकः सूरिः—आचार्यः, उपलक्षणत्वादुपाध्यायादिश्च, ततः स आचार्यादिर्यस्मिन् पुरे—नगरे विहितवर्षाकालः—कृतचतुर्मासकस्तन्नगरं गव्यूतपञ्चकादर्वाक् तस्याचार्यादेः प्रतिबद्धं तदवग्रह इत्यर्थः, अयं च क्षेत्रतः, कालतस्तु वर्षाकालानन्तरमपि द्वौ मासौ, एते पञ्च अवग्रहाः, अतः पञ्चभिरेतैर्देवेन्द्रादिभिरननुज्ञाते अवग्रहे यतीनां सदा—सर्वकालं न कल्पते स्थातुं—अवस्थानं कर्तुमिति, अत्र चोत्तरोत्तरेणावग्रहेण पूर्वः पूर्वो बाधितो बोद्धव्यः, यथा राजावग्रहेण देवेन्द्रावग्रहो बाधितः, तथाहि—राजावग्रहे राज्ञ एव प्राधान्यं, न देवेन्द्रस्य, ततस्तत्र राजैवानुज्ञापयितव्यो न तु देवेन्द्र इति, एवं राजावग्रहमपि गृहपत्यवग्रहो बाधते, तमपि सागारिकावग्रहः, तमपि साधर्मिकावग्रह इति ॥ ८५ ॥ ६८२ ॥ ६८३ ॥ ६८४ ॥ इदानीं 'परीसह'त्ति पडशीतं द्वारमाह—

**खुहा १ पिवासा २ सी ३ उण्हं ४, दंसा ५ चेला ६ रइ ७ त्थिओ ८ । चरिया ९ निसीहिया**

१० सेज्जा ११, अक्कोस १२ वह १३ जायणा १४ ॥ ६८५ ॥ अलाभ १५ रोग १६ तणफासा १७,
मल १८ सक्कार १९ परीसहा । पन्ना २० अन्नाण २१ सम्मत्तं २२, इइ वावीसं परीसहा ॥ ६८६ ॥
दंसणमोहे दंसणपरीसहो पन्नऽनाण पढमंमि । चरमेऽलाभपरीसह सत्तेव चरित्तमोहम्मि ॥६८७॥
अक्कोस अरइ इत्थी निसीहियाऽचेल जायणा चेव । सक्कारपुरक्कारे एक्कारस वेयणिज्जंमि ॥ ६८८ ॥
पंचेव आणुपुव्वी चरिया ६ सेज्जा ७ तहेव जल्ले य ८ । वह ९ रोग १० तणफासा ११ सेसेसुं
नत्थि अवयारो ॥ ६८९ ॥ वावीसं वायरसंपराय चउद्दस य सुहुमरायम्मि । छउमत्थवीयरागे
चउद्दस एक्कारस जिणंमि ॥ ६९० ॥ वीसं उक्कोसपए वट्टंति जहन्नओ य एक्को य । सीओसिण-
चरियनिसीहिया य जुगवं न वट्टंति ॥ ६९१ ॥

'खुहे' त्यादिगाथासप्तकं, मार्गाच्यवनार्थं निर्जरार्थं च परि–सामस्त्येन सह्यन्त इति परीषहाः, तत्र मार्गाच्यवनार्थं दर्शनपरीषहः प्रज्ञापरीषहश्च, शेषा विंशतिर्निर्जरार्थं, एते च द्वाविंशतिसङ्ख्याः क्षुत्पिपासाशीतोष्णदंशाचेलारतिस्त्रीचर्यानैषेधिकीशय्याऽऽक्रोशवधयाच्त्राऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानसम्यक्त्वानि, अमीषां च यथाक्रमं सङ्क्षेपतोऽयमर्थः—क्षुद्वेदनामुदितामशेषवेदनातिशायिनीं सम्यग्विषहमाणस्य जठरान्तर्विदाहिनीमागमविहितेन भक्तेन शमयतोऽनेषणीयं च परिहरतः क्षुत्परीषहविजयो भवति, अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः, अयं चाशेषपरीषहाणां मध्येऽतिदुस्सह इत्यादावुपन्यस्तः १ तदनु बुभुक्षापीडितस्य तदुपशमनायोच्चावचेषु गृहेषु हिण्डमानस्य श्रमवशात् तृष्णा जायते, ततः पिपासापरीषहो द्वितीयस्थाने, एवमग्रेतनपरीषहाणामप्युत्तरोत्तरभणने कारणं ज्ञातव्य-

मिति, तत्र पातुमिच्छा—पिपासा सैवात्यन्तव्याकुलीकरणहेतुरपि शीतलजलाद्यप्रार्थनतः परिषह्यमाणा पिपासापरीषहः, एषणीयभावे तु प्राणिदयालुना सम्भ्रमनेषणीयं परिहरता शरीरस्थितिः कार्या २ तथा 'श्यैङ्गता'वित्यस्य गत्यर्थत्वात् कर्तरि क्तः, ततो 'द्रवमूर्तिस्पर्शयोः श्य' ( पा० ६—१—२४ ) इति सम्प्रसारणे स्पर्शवाचित्वाच्च 'श्योऽस्पर्शे' ( पा० ८—२—४७ ) इति नत्वाभावे शीतं—शिशिरस्पर्शः तदेव परीषहः शीतपरीषहः, शीते महत्यपि पतति जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय आगमोक्तेन विधिना एषणीयमेव कल्पादि गवेषयेत् परिभुञ्जीत वा, नापि शीतार्तो ज्वलनं ज्वालयेत् अन्यज्वालितं वा न सेवेत, एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति ३ तथा 'उष् दाहे' इत्यस्य उणादिनक्प्रत्ययान्तस्योष्णं—निदाघादितापात्मकं तदभितप्तशिलादिरूपं च तदेव परीषह उष्णपरीषहः, उष्णतप्तोऽपि न जलावगाहनस्नानव्यजनवातादिकं वांछेत, न चातपत्राद्युष्णत्राणायाददीत, किन्तूष्णमापतितं सम्यक्सहेत, एवमनुतिष्ठतोष्णपरीषहजयः कृतो भवति ४ तथा दशन्ति—भक्षयन्ति इति पचाद्यचि दंशाः मशकयूकामत्कुणादिक्षुद्रसत्त्वोपलक्षणमेतत् त एव परीषहो दंशपरीषहः, दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, नापि व्यजनादिना तन्निवारयेदित्येवं दंशादिपरीषहजयः कृतः स्यात्, एवमन्यत्रापि क्रिया योज्या ५ तथा चेलस्याभावोऽचेलं जिनकल्पिकादीनां अन्येषां तु यतीनां भिन्नं स्फुटितमल्पमूल्यं च चेलमप्यचेलमुच्यते, यथा कुत्सितं शीलमशीलमिति, तदेव परीषहोऽचेलपरीषहः, अमहामूल्यानि खण्डितानि मलिनानि च वासांसि साधुर्धारयेत्, न च तथाविधवस्त्रः सन् मम प्राक्परिगृहीतं वस्त्रं नास्ति नापि तथाविधो दातेति दैन्यं गच्छेत्, अन्यलाभसम्भावनया प्रमुदितमानसश्च न भवेदिति ६ तथा रमणं रतिः—संयमविषया धृतिस्तद्विपरीता त्वरतिः सैव परीषहोऽरतिपरीषहः, विहरतस्तिष्ठतो वा यद्यरतिरुत्पद्यते तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव भवितव्यं ७ तथा स्त्यायतेः स्तृणातेर्वा त्रटि टित्त्वात्

ङीपि स्त्री सैव तद्गतरागहेतुगतिविभ्रमेङ्गिताकारविलोकनेऽपि 'त्वग्रुधिरमांसमेदस्नाय्वस्थिसिराव्रणैः सुदुर्गन्धि । कुचनयनजघनवदनो-रुमूर्च्छितो मन्यते रूपम् ॥ १ ॥ तथा—निष्ठीवनं जुगुप्सत्यधरस्थं पिबति मोहितः प्रसभम् । कुचजघनपरिश्रावं नेच्छति तन्मोहितो भजते ॥ २ ॥' इत्यादितत्स्वरूपपरिभावनातः परिषह्यमाणत्वात्परीषहः स्त्रीपरीषहः, अयमर्थः—न स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितविभ्रमागा-श्चित्ताक्षेपकारिणीश्चेष्टाश्चिन्तयेत्, न जातुचिच्चक्षुरपि तत्र निक्षिपेत् मोक्षमार्गार्गलासु ललनासु कामबुद्ध्येति ८ तथा चरणं चर्या द्रव्यतो ग्रामानुग्रामविहरणात्मिका भावतस्त्वेकस्थानमधितिष्ठतोऽप्यप्रतिबद्धता सैव परीषहश्चर्यापरीषहः, वर्जितालस्यो ग्रामनगरकुलादिष्वनियत-वसतिर्निर्ममत्वात्प्रतिमासं चर्यामाचरेदिति ९ तथा निषेधनं निषेधः—पापकर्मणां गमनादिक्रियायाश्च प्रतिषेधः स प्रयोजनं यस्याः सा नैषे-धिकी—शून्यागारस्मशानादिका स्वाध्यायादिभूमिः सैव परीषहो नैषेधिकीपरीषहः, अन्यत्र तु निषद्येत्येवं पठ्यते, तत्र निषीदन्त्यस्यामिति निषद्या—स्थानं स्त्रीपशुपण्डकविवर्जितं तत्र इष्टानिष्टोपसर्गान् अनुद्विग्नः सम्यक्सहेत १० तथा शेरतेऽस्यामिति शय्या—उपाश्रयः संस्ता-रको वा सैव परीषहः शय्यापरीषहः समविषमभूमिकं पांशूत्करप्रचुरमतिशिशिरं बहुघर्मकं वा उपाश्रयं वा मृदुकठिनादिभेदेनोच्चावचं संस्तारकं वा प्राप्य न कदाचिदप्युद्विजेत् ११ तथा आक्रोशनमाक्रोशः—अनिष्टवचनं स एव परीषहः आक्रोशपरीषहः तद्यदि सत्यं तर्हि कः कोपः ? शिक्षयति हि मामयमुपकारी, न पुनरेवं करिष्यामीति, अनृतं चेत् सुतरां कोपो न कर्तव्यः, उक्तं च—"आक्रुष्टेन मति-मता तत्त्वार्थविचारणे मतिः कार्या । यदि सत्यं कः कोपः ? स्यादनृतं किमिह कोपेन ? ॥ १ ॥" इत्यादि परिभाव्य न कोपं कुर्यात् १२ तथा हननं वधः—ताडनं स एव परीषहो वधपरीषहः, परैर्हि दुरात्मकैः पाणिपार्ष्णिलत्ताकशादिभिः प्रद्वेषादितस्ताडनं क्रियमाणं सम्य-क्सहेत, न पुनः कोपकलुषितान्तःकरणो भवेत्, चिन्तयेच्च—अन्यदेवेदं शरीरमात्मनः पुद्गलसंहतिरूपं, आत्मा पुनर्न शक्यत एव ध्वंस-

यितुं, अतः स्वकृतफलमुपनतमिदं ममेति १३ तथा याचनं याञ्चा प्रार्थनेत्यर्थः सैव परीषहो याञ्चापरीषहः, भिक्षोर्हि वस्त्रपात्रान्नपानप्रतिश्रयादि परत एव सर्वमपि लभ्यं, शालीनतया च यद्यपि याञ्चां कर्तुं न शक्नोति तथापि त्रपामपहाय प्रागल्भ्यभाजा सञ्जाते कार्ये स्वधर्मकायपरिपालनाय याचनमवश्यं कार्यमिति १४ तथा लम्भनं लाभो न लाभोऽलाभः—अभिलषितविषयाप्राप्तिः स एव परीषहोऽलाभपरीषहः, याचनीयालाभेऽपि—"वहुं परघरे अत्थि, विविहं खाइमसाइमं। न तत्थ पंडिओ कुप्पे, इच्छा दिज्ज परो न वा ॥१॥" [ वहु परगृहेऽस्ति विविधं खाद्यस्वाद्यं। न तत्र पण्डितः कुप्येत् इच्छा परो दद्यात् न वा ॥ १ ॥ ] इत्यादि परिभाव्य प्रसन्नचेतसाऽविकृतवदनेन च भवितव्यं १५ तथा रोगः—कण्डूज्वरादिरूपः स एव परीषहो रोगपरीषहः, ज्वरकासश्वासादिके सत्यपि न गच्छनिर्गता जिनकल्पिकादयश्चिकित्साविधापने प्रवर्तन्ते, किन्तु सम्यगेव तदधिसहन्ते स्वकर्मणः फलमिदमुदितमिति चिन्तयन्तः, गच्छवासिनस्त्वल्पवहुत्वालोचनया सम्यग् सहन्ते प्रवचनोक्तेन वा विधिना चिकित्सामपि कारयन्तीति १६ तथा तरन्तीति तृणानि, औणादिको नक् ह्रस्वत्वं च, तेषां स्पर्शस्तृणस्पर्शः स एव परीषहस्तृणस्पर्शपरीषहः, अशुषिरतृणस्य हि दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छवासिनां च यतीनां, तत्र येषां शयनमनुज्ञातं निष्पन्नानां ते तान् दर्भान् भूमावीपदार्द्रतादियुक्तायामास्तीर्य संस्तारोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चौरापहृतोपकरणो वा अत्यन्तजीर्णत्वात्प्रतनुसंस्तारकपट्टको वा तदुपरि शेते, तत्र च शयानस्य यद्यपि कठिनतीक्ष्णाग्रभागैस्तृणैरत्यन्तपीडा समुपजायते तथापि परुषदर्भादितृणस्पर्शं सम्यक् सहेतेति १७ तथा मलः—प्रस्वेदजलसम्पर्कतः कठिनीभूतं रजः स एव परीषहो मलपरीषहः, मलो हि वपुषि स्थिरतां गतो ग्रीष्मोष्मसन्तापजनितघर्मजलार्द्रतां प्राप्तो दुर्गन्धिर्महान्तमुद्वेगमापादयति, तदपनयनाय न कदाचिदभिषेकाद्यभिलाषं कुर्यादिति १८ तथा सत्कारो—भक्तपानान्नवस्त्रपात्रप्रदानवन्दनाभ्युत्थानासनसम्पादनस-

द्भूतगुणोत्कीर्तनादिरूपा प्रतिपत्तिः स एव परीषहः सत्कारपरीषहः, सत्कारं हि परस्माज्जायमानं दृष्ट्वा नोत्कर्षाद्याकुलं चेतः कुर्यात् असत्कारितो वा न प्रद्वेषं व्रजेत् १९ तथा प्रज्ञायतेऽनया वस्तुतत्त्वमिति प्रज्ञा—बुद्ध्यतिशयः स एव परीषहः प्रज्ञापरीषहः, मनोज्ञप्रज्ञाप्राग्भारप्राप्तौ हि न गर्वमुद्वहेत्, प्रज्ञाप्रतिपक्षेणाप्यबुद्धिकत्वेन परीषहो भवति नाहं किञ्चिज्जाने मूर्खोऽहं सर्वैः परिभूत इत्येवं परितापमुपागतस्य कर्मविपाकोऽयमिति मत्वा तदकरणात्तत्परीषहजयः २० तथा ज्ञायते वस्तुतत्त्वमनेनेति ज्ञानं—श्रुताख्यं तदभावोऽज्ञानं स एव परीषहोऽज्ञानपरीषहः, आगमशून्योऽहमिति न मनसि खेदं विदध्यात्, एतत्प्रतिपक्षेणापि ज्ञानेन परीषहो भवति, ततः समग्रश्रुतपारगोऽहमिति नोत्सेकं गच्छेदिति २१ तथा सम्यक्त्वं—सम्यग्दर्शनं तदेव क्रियादिवादिनां विचित्रमतश्रवणेऽपि सम्यक् परिपद्यमाणं निश्चलचित्ततया धार्यमाणं परीषहः सम्यक्त्वपरीषहः, आवश्यके तु असम्यक्त्वपरीषह इति पठितं, तत्र चैवं व्याख्या—सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निस्सङ्गश्चाहं तथापि धर्माधर्मात्मदेवनारकादिभावान्न प्रेक्षे ततो मृषा समस्तमेवेदमिति असम्यक्त्वपरीषहः, तत्रैवमालोचयेत्—धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ ततस्तयोः कार्यदर्शनादनुमानसमधिगम्यत्वं, अथ क्षमाक्रोधादिकौ धर्माधर्मौ ततः स्वानुभवादात्मपरिणामरूपत्वात्प्रत्यक्षविरोधः, देवास्त्वत्यन्तसुखासक्तत्वान्मनुष्यलोके च कार्यस्याभावाद् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति, नारकाः पुनर्निरन्तरमेवातितीव्रवेदनार्त्ताः पूर्वकृतदुष्कर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमिह समायान्तीत्यादि परिभावयतोऽसम्यक्त्वपरीषहजयो भवतीति, इतिशब्द इयत्ताप्रदर्शनार्थः, एते क्षुदादयः सम्यक्त्वान्ता द्वाविंशतिरिति न न्यूनाधिकाः परीषहा भवन्तीति । सम्प्रत्येतेषां द्वाविंशतेरपि परीषहाणां समवतारश्चिन्त्यते—स च द्वेधा-प्रकृतिसमवतारो गुणस्थानकसमवतारश्च, तत्र प्रकृतिसमवतारे ज्ञानावरणवेदनीयमोहनीयान्तरायलक्षणासु चतसृषु प्रकृतिषु द्वाविंशतिरपि परीषहाः समवतरन्ति

॥ ६८५ ॥ ६८६ ॥ तत्र च यस्य यत्रावतारस्तमाह—'दंसणे'त्यादि गाथात्रयं, मोहनीयं द्विधा-चारित्रमोहनीयं दर्शनमोहनीयं च, तत्र दर्शनमोहे—मिथ्यात्वादित्रयलक्षणे दर्शनपरीषहः—सम्यक्त्वपरीषह एकोऽवतरति, तदुदये तस्य भावात्, तथा 'पन्नऽनाण'त्ति प्राकृतत्वेन प्रथमाद्विवचनलोपात् प्रज्ञाऽज्ञाने—प्रज्ञापरीषहोऽज्ञानपरीषहश्च प्रथमे—ज्ञानावरणकर्मण्यवतरतः, तत्क्षयोपशमोदयाभ्यामनयोः सम्भावात्, तथा चरमे—अन्तरायकर्मणि अलाभपरीषहोऽवतरति, लाभान्तरायोदयनिबन्धनत्वादलाभस्य, तथा चारित्रमोहे—चारित्रमोहनीयनाम्नि मोहनीयभेदे आक्रोशारतिस्त्रीनैषेधिक्यचेलयाच्ञासत्कारपुरस्कारलक्षणाः सप्तैव परीषहा अवतरन्ति, अयमर्थः—क्रोधोदयादाक्रोशपरीषहः अरतिमोहनीयोदयादरतिपरीषहः पुंवेदोदयात्स्त्रीपरीषहः भयकर्मोदयान्नैषेधिकीपरीषहः जुगुप्सोदयादचेलपरीषहः मानोदयाद्याच्ञापरीषहः लोभोदयात्सत्कारपुरस्कारपरीषह इति, अत्र च सत्कारो—वस्त्रादिभिः पूजनं पुरस्कारः—अभ्युत्थानादिप्रतिपत्तिः यद्वा सत्कारेण पुरस्कारः—पुरस्करणं ततस्तावेव स एव वा परीषहः सत्कारपुरस्कारपरीषह इति, तथा एकादश परीषहा वेदनीयेऽवतरन्ति तदुदयाद्भवन्तीत्यर्थः, ते चैते 'पञ्चेव आणुपुव्वि' पञ्चैव—पञ्चसङ्ख्या एव, ते च कचिदनानुपूर्व्या अपि व्याख्याङ्गत्वात्तयाऽपि स्युरित्याह—आनुपूर्व्या—परिपाट्या क्षुत्पिपासाशीतोष्णदंशमशकाख्या इतियावत् तथा चर्या शय्या 'जल्ले य'त्ति जल्लो—मलः, वधो रोगस्तृणस्पर्शश्चेत्येकादश, शेषेषु—पूर्वोक्तकर्मचतुष्टयव्यतिरिक्तेषु दर्शनावरणायुर्नामगोत्राख्येषु कर्मसु नास्ति परीषहाणामवतारः—अन्तर्भावः, तदुदये परीषहाणामसम्भवात् ॥ ६८७ ॥ ६८८ ॥ ६८९ ॥ अधुना गुणस्थानकसमवतारमाह—'बावीसं'गाहा, द्वाविंशतिरित्यपिशब्दस्य लुप्तनिर्दिष्टत्वाद् द्वाविंशतिरपि परीषहा बादरसम्परायनाम्नि गुणस्थानके, कोऽर्थः ?—अनिवृत्तिबादरसम्परायं नवमगुणस्थानं यावत् सर्वेऽपि परीषहाः सम्भवन्तीति, तथा चतुर्दश चशब्दस्यैवकारार्थत्वाच्चतुर्दशसङ्ख्या एव—क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधालाभरोगतृणस्पर्शमलप्रज्ञाऽज्ञा-

नरूपाः परीषहाः सूक्ष्मराग—सूक्ष्मसम्परायनाम्नि दशमगुणस्थानके उदयमासादयन्ति, मोहनीयस्य क्षपितत्वेन उपशमितत्वेन वा सप्तानां चारित्रमोहनीयप्रतिबद्धानां दर्शनमोहनीयप्रतिबद्धस्य चैकस्य तत्रासम्भवादिति भावः, तथा छद्म—आवरणं तत्र स्थितश्छद्मस्थः वीतः—अपगतो रागः समस्तमोहोपशमात्सकलमोहक्षयाच्च यस्य स तथा ततः कर्मधारयः, छद्मस्थवीतरागशब्देन उपशान्तमोहक्षीणमोहलक्षणं गुणस्थानकद्वयं परिगृह्यते, तत्रापि उक्तरूपा एव चतुर्दश परीषहाः सम्भवन्तीति, तथा जिने—सयोगिकेवल्ययोगिकेवलिलक्षणे त्रयोदश-चतुर्दशगुणस्थानकद्वये परीषहकारणभूतस्य वेदनीयस्यैव सद्भावात्तत्प्रतिबद्धा एव एकादश परीषहाः सम्भवन्ति, उक्तं च—"क्षुत्पिपासा च शीतोष्णे, दंशाश्चर्या वधो मलः । शय्या रोगतृणस्पर्शौ, जिने वेद्यस्य सम्भवात् ॥ १ ॥" इति ॥ ६९० ॥ नन्वेते परीषहा एकस्मिन् काले उत्कृष्टतो जघन्यतश्च एकस्मिन् प्राणिनि कियन्तः प्राप्यन्ते ?, तत्राह—'वीसं'गाहा विंशतिरुत्कृष्टपदे चिन्त्यमाने परीषहा वर्तन्ते युगपदेकत्र प्राणिनि, जघन्यतश्च—जघन्यपदमाश्रित्य एक एव परीषहः, ननूत्कृष्टपदे किं न द्वाविंशतिरपि परीषहा एकत्र वर्तन्ते ? इत्याह शीतोष्णे चर्यानैषेधिक्यौ च युगपद्—एककालमेकत्र न वर्तेते—न सम्भवतः, परस्परपरिहारस्थितिलक्षणत्वादमीषां, तथाहि—न शीतमुष्णेन सह भवति नोष्णं शीतेन सह न चर्यायां नैषेधिकी न च नैषेधिक्यां सत्यां चर्येति, अतो यौगपद्येनामीषामसम्भवाद् द्वयोरभावान्नोत्कृष्टतोऽपि द्वाविंशतिरेकदा परीषहा वर्तन्त इति, ननु नैषेधिकीवत्कथं शय्यापि चर्यया सह न विरुध्यते ?, अत्रोच्यते, निरोधवाधादितस्त्वङ्गनिकादेरपि तत्र सम्भवात्, नैषेधिकी तु स्वाध्यायादीनां भूमिष्वेव प्रायः स्थिरतायामेवानुज्ञाता इति तस्या एव चर्यया विरोध इति, तत्त्वार्थे तु उत्कृष्टतोऽप्येकोनविंशतिरेवोक्ताः, चर्याशय्यानिषद्यादीनामेकस्य सम्भवे द्वयोरभावात्, तथाहि—चर्यायां सत्यां

निषद्याशय्ये न स्तः निषद्यायां तु शय्याचर्ये शय्यायां पुनर्निषद्याचर्ये न भवत इति ८६ ॥ ६९१ ॥ इदानीं 'मंडलि सत्त'त्ति सप्ताशीतं द्वारमाह—

**सुत्ते १ अत्थे २ भोयण ३ काले ४ आवस्सए य ५ सज्झाए ६ । संथारे ७ चेव तहा सत्तेया मंडली जइणो ॥ ६९२ ॥**

सूत्रे—सूत्रविषयेऽर्थे—अर्थविषये भोजने काले—कालग्रहे आवश्यके—प्रतिक्रमणे स्वाध्यायप्रस्थापने संस्तारके चैव सप्तैता मण्डल्यो यतेः, एतासु चैकैकेनाचाम्लेन प्रवेष्टुं लभ्यते नान्यथेति ८७ ॥ ६९२ ॥ इदानीं 'दसठाणववच्छेओ'त्ति अष्टाशीतं द्वारमाह—

**मण १ परमोहि २ पुलाए ३ आहारग ४ खवग ५ उवसमे ६ कप्पे ७ । संयमतिय ८ केवल ९ सिज्झणा य जंबुंमि वोच्छिन्ना ॥ ६९३ ॥**

पदैकदेशेऽपि पदसमुदायदर्शनात् मनःपर्ययज्ञानं तथा परमः—प्रकृष्टस्तदुत्पत्तावश्यमेव केवलज्ञानलाभादवधिः—मूर्त्तद्रव्यपरिच्छेदी ज्ञानविशेषः परमावधिः स च क्षेत्रतोऽलोकेऽपि लोकप्रमाणासङ्ख्येयखण्डविषयः कालतस्तु असङ्ख्येयोत्सर्पिण्यवसर्पिणीविषयः तथा पुलाकलब्धिस्तथा आहारकशरीरलब्धिस्तथा क्षपकश्रेणिस्तथोपशमश्रेणिस्तथा कल्पो—जिनकल्पः तथा संयमत्रिकं परिहारविशुद्धिसूक्ष्मसम्परायथाख्यातलक्षणचारित्रत्रयं तथा केवलं—केवलज्ञानं तथा सेधना—सिद्धिगमनं इत्येते दश पदार्था जम्बूस्वामिनि व्यवच्छिन्नाः—जम्बूस्वाम्यनन्तरमेतेषामभाव इत्यर्थः, इह च केवलिग्रहणेन सिज्झणाग्रहणेन वाऽऽगते यत् उभयोरुपादानं तत् यः केवली स नियमात्सिद्ध्यति यश्च सिद्ध्यति स नियमात् केवली सन्निति ख्यापनार्थं, तथा प्रथमसंहननं—वज्रर्षभनाराचं प्रथमं संस्थानं—समचतुरस्रं, यश्चान्तर्मुहूर्तेन

चतुर्दशानामपि पूर्वाणामुपयोगोऽनुप्रेक्षणं एते त्रयोऽप्यर्था अपश्चिमे चतुर्दशपूर्वधरे स्थूलभद्रस्वामिनि व्यवच्छिन्नाः उक्तं च—“संघयणं संठाणं च पढमगं जो य पुव्वउवओगो । एए तिन्निवि अत्था वोच्छिन्ना थूलभद्दंमि ॥ १ ॥” [ प्रथमकं संहननं संस्थानं यश्च पूर्वोपयोगः एते त्रयोऽप्यर्था व्यवच्छिन्नाः स्थूलभद्रे ॥ १ ॥ ] ॥ ८८ ॥ ६९३ इदानीं ‘खवगसेढि’त्ति एकोननवतितमं द्वारमाह—

अणमिच्छमीससम्मं अट्ठ नपुंसित्थीवेयछक्कं च । पुंवेयं च खवेइ कोहाईएवि संजलणे ॥ ६९४ ॥
कोहो माणो माया लोहोऽणंताणुबंधिणो चउरो । खविऊण खवइ संढो मिच्छं मीसं च सम्मत्तं
॥ ६९५ ॥ अप्पच्चक्खाणे चउरो पच्चक्खाणे य सममवि खवेइ । तयणु नपुंसगइत्थीवेयदुगं खविय खवइ समं ॥ ६९६ ॥ हासरइअरइपुंवेयसोयभयजुयदुगुंछ सत्त इमा । तह संजलणं कोहं माणं मायं च लोभं च ॥ ६९७ ॥ तो किट्टीकयअस्संखलोहखंडाइं खविय मोहखया । पावइ लोयालोयप्पयासयं केवलं नाणं ॥ ६९८ ॥ नवरं इत्थी खवगा नपुंसगं खविय खवइ थीवेयं । हासाइछगं खविउं खवइ सवेयं नरो खवगो ॥ ६९९ ॥

इह क्षपकश्रेणिप्रतिपत्ता पुमान् वर्षाष्टकस्योपरि वर्तमानो वज्रर्षभनाराचसंहननी शुद्धध्यानार्पितमना अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः केवलं यद्यप्रमत्तसंयतः पूर्ववित्तर्हि शुक्लध्यानोपगतः शेषस्तु सर्वोऽपि धर्मध्यानोपगतः, तत्र प्रथमतोऽनन्तानुबन्धिनां विसंयोजनाऽभिधीयते—इह श्रेणिमप्रतिपद्यमाना अपि अविरताश्चतुर्गतिका अपि क्षायोपशमिकसम्यग्दृष्टयो देशविरतास्तिर्यञ्चो मनुष्या वा सर्वविरतास्तु मनुष्या एव सर्वाभिः पर्याप्तिभिः पर्याप्ता यथासम्भवं विशुद्ध्या परिणमन्तोऽनन्तानुबन्धिनां क्षपणार्थं यथाप्रवृत्तकरणापूर्व-

करणानिवृत्तिकरणाख्यानि त्रीणि करणानि कुर्वन्ति, करणवक्तव्यता च सर्वाऽपि कर्मप्रकृत्यादिभ्योऽवसेया, अनिवृत्तिकरणं च प्राप्तः सन् अनन्तानुवन्धिनां स्थितिं कर्मप्रकृत्यमिहितस्वरूपेणोद्वलनासङ्क्रमेणाधस्तादावलिकामात्रं मुक्त्वा उपरि निरवशेषानन्तानुवन्धिनो विनाशयति, आवलिकामात्रं तु स्तिवुकसङ्क्रमेण वेद्यमानासु प्रकृतिषु सङ्क्रमयति, तदेवं क्षपितानन्तानुवन्धिचतुष्को दर्शनमोहक्षपणार्थं यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति, अनिवृत्तिकरणाद्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासङ्क्रमेणोद्वलयति यावत्पल्योपमासङ्ख्येयभागमात्रमवतिष्ठते, ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तच्चैवं—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसङ्ख्येयगुणं एवं यावदन्तर्मुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसङ्क्रमितदलिकादसङ्ख्येयगुणं सङ्क्रमयति, आवलिकागतं तु स्तिवुकसङ्क्रमेण सम्यक्त्वे प्रक्षिपति, एवं मिथ्यात्वं क्षपितं, ततोऽन्तर्मुहूर्तेन सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति, ततः सम्यग्मिथ्यात्वमपि क्षपितं, ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तर्मुहूर्तेन तदप्यन्तर्मुहूर्तमात्रस्थितिकं जातं, तच्च क्रमेणानुभूयमानमनुभूयमानं सत् समयाधिकावलिकाशेषं जातं, ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः, ततो विपाकानुभवेनैव केवलेन वेदयति यावच्चरमसमयः, ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते, इह यदि वद्धायुः क्षपकश्रेणिमारभते अनन्तानुवन्धिक्षयानन्तरं च मरणसम्भवतो व्युपरमते ततः कदाचिन्मिथ्यात्वोदयाद्भूयोऽप्यनन्तानुवन्धिन उपचिनोति, तद्वीजस्य मिथ्यात्वस्याविनाशात्, क्षीणमिथ्यादर्शनस्तु नोपचिनोति वीजाभावात्, क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेषूत्पद्यते, प्रतिपतितपरिणामस्तु नानामतिसम्भवाद्यथापरिणामं सर्वगतिभाग्भवति, वद्धायुष्कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे नियमादवतिष्ठते, न तु चारित्रमोहक्षपणाय यत्नमादधाति, अथ क्षीणसप्तको गत्यन्तरं सङ्क्रामन् कतितमे भवे मोक्षमुपयाति ?, उच्यते, तृतीये चतुर्थे वा भवे,

तथाहि—यदि देवगतिं नरकगतिं वा सङ्क्रामति तदा देवभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षं याति, अथ तिर्यक्षु मनुष्येषु वा समुत्पद्यते तर्हि सोऽवश्यमसङ्ख्येयवर्षायुष्केषु मध्ये गच्छति न सङ्ख्येयवर्षायुष्केषु, ततस्तद्भवानन्तरं देवभवे देवभवाच्च च्युत्वा मनुष्यभवे ततो मोक्षं यातीति चतुर्थे भवे मोक्षगमनं, तथा क्षीणसप्तकः पूर्ववद्धायुष्कोऽपि यदि तदानीं कालं न करोति तर्हि कश्चिद्वैमानिकेष्वेव वद्धायुष्कश्चारित्रमोहनीयोपशमार्थमपि यतते, न शेषभवेषु वद्धायुष्कः ॥ ननु यदि दर्शनत्रिकमपि क्षयमुपगतं तर्हि किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः ?, उच्यते, सम्यग्दृष्टिः, सम्यग्दर्शनाभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत्, तदसत्, इह निर्मदनीकृतकोद्रवकल्पा अपगतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव यत्सम्यग्दर्शनं तदेव क्षीणं यत्पुनरात्मपरिणतिस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि च—तदतीव श्लक्ष्णशुभ्राभ्रपटलविगमे मनुष्यदृष्टिरिव विशुद्धतरस्वरूपं भवति, यदि पुनरवद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहनीयक्षपणाय यत्नमारभते, चारित्रमोहनीयं च क्षपयितुं यतमानो यथाप्रवृत्तादीनि त्रीणि करणानि करोति, तद्यथा—यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके अपूर्वकरणमपूर्वकरणगुणस्थानके अनिवृत्तिकरणमनिवृत्तिवादरसम्परायगुणस्थानके, तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तत्पल्योपमासङ्ख्येयभागमात्रस्थितिकं जातं, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिकनरकतिर्यग्गतिनरकतिर्यगानुपूर्व्येकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणानां षोडशप्रकृतीनामुद्वलनासङ्क्रमेणोद्वल्यमानानां पल्योपमासङ्ख्येयभागमात्रा स्थितिर्जाता, ततो वध्यमानासु प्रकृतिषु तानि षोडशापि कर्माणि गुणसङ्क्रमेण प्रतिसमयं प्रक्षिप्यमाणानि निःशेषतोऽपि क्षीणानि भवन्ति, इहाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं तन्नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषो-

डशकं क्षपितं पश्चात्तदपि कषायाष्टकमन्तर्मुहूर्तेन क्षपयतीत्येष सूत्रादेशः, अन्ये त्वाहुः—षोडश कर्माण्येव पूर्वं क्षपयितुमारभते केवलम-
पान्तरालेऽष्टौ कषायान् क्षपयति पश्चात् षोडश कर्माणीति, ततोऽन्तर्मुहूर्तेन नवानां नोकषायाणां चतुर्णां च सञ्ज्वलनानामन्तरकरणं
करोति, स्थापना, तच्च कृत्वा नपुंसकवेददलिकमुपरितनस्थितिगतमुद्वलनविधिना क्षपयितुमारभते, तच्चान्तर्मुहूर्तेन पल्योपमासङ्ख्येयभाग-
मात्रं जातं, ततः प्रभृति वध्यमानासु प्रकृतिषु गुणसङ्क्रमेण तद्दलिकं प्रक्षिपति, तच्चैवं प्रक्षिप्यमाणं अन्तर्मुहूर्तेन निःशेषं क्षीणं, अध-
स्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति अन्यथा त्वावलिकामात्रं तद्भवति तच्च वेद्यमानासु प्रकृ-
तिषु स्तिवुकसङ्क्रमेण सङ्क्रमयति तदेवं क्षपितो नपुंसकवेदः, ततोऽन्तर्मुहूर्तेन स्त्रीवेदोऽप्यनेनैव क्रमेण क्षिप्यते, ततः षट् नोकषायान्
युगपत्क्षपयितुमारभते, ततः प्रभृति च तेषामुपरितनस्थितिगतं दलिकं न पुरुषवेदे सङ्क्रमयति किन्तु सञ्ज्वलनक्रोध एव, एतेऽपि च
पूर्वोक्तविधिना क्षिप्यमाणा अन्तर्मुहूर्तेन निःशेषाः क्षीणाः, तत्समयमेव च पुंवेदस्य बन्धोदयोदीरणाव्यवच्छेदः समयोनावलिकाद्विकबद्धं
मुक्त्वा शेषदलिकक्षयश्च, ततोऽसाविदानीमवेदको जातः, क्रोधं च वेदयतः सतस्तस्य क्रोधाद्धायास्त्रयो विभागा भवन्ति, तद्यथा—अश्व-
कर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च, तत्राश्वकर्णकरणाद्धायां वर्तमानः प्रतिसमयमनन्तान्यपूर्वस्पर्धकानि चतुर्णामपि सञ्ज्वल-
नानामन्तरकरणादुपरितनस्थितौ करोति, अथ किमिदं स्पर्धकमिति ?, उच्यते, इह तावदनन्तानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः
कर्मतया गृह्णाति, तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यरसः परमाणुस्तस्यापि रसः केवलिप्रज्ञया छिद्यमानः सर्वजीवेभ्योऽनन्तगुणान्
रसभागान् प्रयच्छति अपरस्तानप्येकाधिकान् अन्यस्तु द्व्यधिकान् एवमेकोत्तरया वृद्ध्या तावन्नेयं यावदन्यपरमाणुरभव्यानन्तगुणान्
सिद्धानन्तभागेनाधिकान् रसभागान् प्रयच्छति, तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणेत्युच्यते

अन्येषां त्वेकाधिकरसभागयुक्तानां समुदायो द्वितीया वर्गणा अपरेषां तु द्व्यधिकरसभागयुक्तानां समुदायस्तृतीया वर्गणा एवमनया दिशा एकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानन्तभागकल्पा अभव्यानन्तगुणा वाच्याः, एतासां च समुदायः स्पर्धकमित्युच्यते, स्पर्धन्त इवोत्तरोत्तरवृद्ध्या परमाणुवर्गणा अत्रेतिकृत्वा, इत ऊर्द्ध्वमेकोत्तरया निरन्तरया वृद्ध्या प्रवर्धमानो रसो न लभ्यते किन्तु सर्वजीवानन्तगुणैरेव रसभागैः, ततस्तेनैव क्रमेण ततः प्रभृति द्वितीयं स्पर्धकमारभ्यते, एवमेव च तृतीयं, एवं तावद्वाच्यं यावदनन्तानि स्पर्धकानि, एतेभ्य एव चेदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत्स्पर्धकानि करोति, न चैवंभूतानि पूर्वं कदाचनापि कृतानि ततोऽपूर्वाणीत्युच्यन्ते, अस्यां चाश्वकर्णकरणाद्धायां वर्तमानः पुंवेदं समयोनावलिकाद्विकेन क्रोधे गुणसङ्क्रमेण सङ्क्रमयन् चरमसमये सर्वसङ्क्रमेण सङ्क्रमयति, तदेवं क्षीणः पुंवेदः, अश्वकर्णकरणाद्धायां च समाप्तायां किट्टिकरणाद्धायां च वर्तमानश्चतुर्णामपि सञ्ज्वलनानां उपरितनस्थितिदलिकस्य किट्टीः करोति, किट्टयो नाम पूर्वस्पर्धकेभ्यः प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादत्यन्तहीनरसाः कृत्वा तासामेकोत्तरवृद्धित्यागेन बृहदन्तरालतया व्यवस्थापनं, यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरादि वाऽऽसीत् तासामेव विशुद्धिप्रकर्षवशादनुभागभागानां दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति, एताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूलजातिभेदापेक्षया द्वादश कल्प्यन्ते, एकै–( ग्रन्थाग्रं ७००० ) कस्य कषायस्य तिस्रस्तिस्रः, तद्यथा–प्रथमा द्वितीया तृतीया च, एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यं, यदा तु मानेन प्रतिपद्यते तदा उद्वलनविधिना क्रोधे क्षपिते सति शेषाणां त्रयाणां पूर्वक्रमेण नव किट्टीः करोति, मायया चेत्प्रतिपन्नस्तर्हि क्रोधमानयोरुद्वलनविधिना क्षपितयोः सतोः शेषद्विकस्य पूर्वक्रमेण षट् किट्टीः करोति, यदि पुनर्लोभेन प्रतिपद्यते तत उद्वलनविधिना क्रोधादित्रिके क्षपिते सति लोभस्य किट्टित्रिकं करोति, एष किट्टीकरण-

विधिः, किट्टीकरणाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः सन् क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततोऽनन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तिसृष्वपि चामूषु किट्टिवेदनाद्धासुपरितनस्थितिगतं दलिकं गुणसङ्क्रमेणापि प्रतिसमयमसङ्ख्येयगुणवृद्धिलक्षणेन सञ्ज्वलने माने प्रक्षिपति, तृतीयकिट्टिवेदनाद्धायाश्चरमसमये सञ्ज्वलनक्रोधस्य बन्धोदयोदीरणानां युगपद् व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यन्नास्ति, सर्वस्य माने प्रक्षिप्तत्वात्, ततो मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, क्रोधस्यापि च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन मानगुणसङ्क्रमेण सङ्क्रमयन् चरमसमये सर्वं सङ्क्रमयति, मानस्यापि च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत् समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धमेव, शेषस्य क्रोधशेषस्येव माने मायायां प्रक्षिप्तत्वात्, ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तमात्रं, सञ्ज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन गुणसङ्क्रमेण मायायां सर्वं प्रक्षिपति, मायाया अपि च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थिति-

गतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत् समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्याः समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसङ्क्रमेण लोभे प्रक्षिप्तत्वात्, ततो लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति तस्या दलिकं समयोनावलिकाद्विकेन गुणसङ्क्रमेण लोभे सर्वं सङ्क्रमयति, सञ्ज्वलनलोभस्य च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकामात्रं शेषं जातं, ततो लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद्यावद् द्वितीयकिट्टिदलिकस्य प्रथमस्थितिकृतस्य समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये सञ्ज्वलनलोभस्य बन्धव्यवच्छेदो बादरकषायोदयोदीरणाव्यवच्छेदोऽनिवृत्तिबादरसम्परायगुणस्थानककालव्यवच्छेदश्च युगपज्जायते, ततः सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तदानीमसौ सूक्ष्मसम्पराय उच्यते, पूर्वोक्ताश्चावलिकास्तृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिबुकसङ्क्रमेण सङ्क्रमयति, प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्ट्यन्तर्गता वेद्यन्ते, सूक्ष्मसम्परायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत्क्षपयति यावत्सूक्ष्मसम्परायाद्धायाः सङ्ख्येया भागा गता भवन्ति एकोऽवशिष्यते, ततस्तस्मिन् सङ्ख्येये भागे सञ्ज्वलनलोभं सर्वापवर्तनयाऽपवर्त्य सूक्ष्मसम्परायाद्धासमं करोति, सा च सूक्ष्मसम्परायाद्धा अद्याप्यन्तर्मुहूर्तमाना, ततः प्रभृति च मोहस्य स्थितिघातादयो निवृत्ताः शेषकर्मणां तु प्रवर्तन्त एव, तां च लोभस्यापवर्तितां स्थितिमुदयो-

दीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा स्थिता, तत उदयेनैव केवलेन तां वेदयते यावच्चरमसमयः, तस्मिंश्च चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणां षोडशकर्मणां बन्धव्यवच्छेदः मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति, ततोऽसौ क्षीणकषायो जायते, तस्य च शेषकर्मणां स्थितिघातादयः पूर्ववत्प्रवर्तन्ते यावत्क्षीणकषायाद्धायाः सङ्ख्येया भागा गता भवन्ति, एकः सङ्ख्येयो भागोऽवतिष्ठते, तस्मिंश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयनिद्राद्विकरूपाणां षोडशकर्मणां स्थितिसत्कर्म सर्वापवर्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति, केवलं निद्राद्विकस्य स्वस्वरूपापेक्षया समयन्यूनं सामान्यतः कर्मरूपतया तु तुल्यं, सा च क्षीणकषायाद्धा अद्याप्यन्तर्मुहूर्त्तमाना, ततः प्रभृति च तेषां स्थितिघातादयः स्थिताः, शेषाणां तु भवन्त्येव, तानि च षोडश कर्माणि निद्राद्विकहीनानि उदयोदीरणाभ्यां वेदयमानस्ताव द्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा निवृत्ता, तत आवलिकामात्रं यावदुदयेनैव केवलेन तानि वेदयते यावत्क्षीणकषायाद्धाया द्विचरमसमयः, तस्मिंश्च द्विचरमसमये निद्राद्विकं स्वरूपसत्तापेक्षया क्षीणं, चतुर्दशानां च प्रकृतीनां चरमसमये क्षयः, ततोऽनन्तरसमये केवली जायत इति ॥६९४॥ अथैनां गाथां प्रतिपदं स्वयमेव सूत्रकृद्व्याख्याति—'कोहो' इत्यादि गाथाद्वयं, क्रोधो मानो माया लोभ इत्येताननन्तानुबन्धिनश्चतुरः कषायान् युगपत्क्षपयित्वा 'संढो'त्ति नपुंसकः श्रेणिप्रतिपत्ता मिथ्यात्वं मिश्रं सम्यक्त्वं च क्रमेणान्तर्मुहूर्तेन क्षपयति, सर्वत्रापि च क्षपणाकालोऽन्तर्मुहूर्तमानः, श्रेणिपरिसमाप्तिकालोऽप्यन्तर्मुहूर्तमात्र एव, अन्तर्मुहूर्तानामसङ्ख्येयभेदत्वात् ॥ ६९५ ॥ ततोऽप्रत्याख्यानप्रत्याख्यानावरणान् अष्टौ कषायान् 'सममपि' युगपदेव क्षपयति, तदनु नपुंसकस्त्रीवेदद्विकं युगपत्क्षपयति, स्त्रीवेदनपुंसकवेदक्षयसमकालमेव च पुंवेदस्य बन्धो व्यवच्छिद्यते, तच्च क्षपयित्वाऽनन्तरं क्षपयति समं—युगपदेव इमा वक्ष्यमाणाः सप्त प्रकृतीः ॥ ६९६ ॥ ता एवाह—'हासे'त्यादि, हास्यरत्यरतिपुंवेदशोक-

भयजुगुप्साख्या इमाः सप्त, तदनन्तरं सञ्ज्वलनक्रोधं ततः सञ्ज्वलनं मानं ततः सञ्ज्वलनां मायां ततः सञ्ज्वलनं लोभं च क्षपय-तीति योगः, लोभस्य त्वयं विशेषः ॥ ६९७ ॥ 'तो किट्टी' गाहा, श्लक्ष्णीकृतानि ततो—मायाक्षपणानन्तरं लोभस्य खण्डान्यसङ्ख्येयानि किट्टीकृतानि क्षपयित्वा सकलमोहक्षयात्प्राप्नोति लोकालोकप्रकाशकं केवलज्ञानमिति, इदं च लोभकिट्टिकरणं लोभेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यं, यदा तु क्रोधेन श्रेणिं प्रतिपद्यते तदा क्रोधादीनां चतुर्णामपि किट्टीः करोति, मानेन तु मानादीनां त्रयाणां, मायया च मायालोभयोः किट्टीकरणं ज्ञेयमिति ॥६९८॥ अयं च क्षपणाक्रमः सूत्रे नपुंसकं क्षपकमाश्रित्योक्तः, यदा तु स्त्री प्रारम्भिका तदाऽयं विशेषः—'नवर'मित्यादि, नवरं—केवलं स्त्री क्षपिका पूर्वं नपुंसकवेदं क्षपयति, ततः स्त्रीवेदं, स्त्रीवेदक्षयसमकालमेव च पुंवेदस्य बन्धव्यवच्छेदः, ततोऽवेदकः पूर्वोक्ताः पुंवेदहास्यादिषट्करूपाः सप्त प्रकृतीर्युगपत्क्षपयति, शेषं तथैव, यदा तु पुरुषः प्रतिपत्ता भवति तदा पूर्वं नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं क्षपयित्वा पश्चात्स्ववेदं-पुंवेदं क्षपयति, शेषं तथैवेति ८९ ॥ ६९९ ॥ सम्प्रति 'उवसमसेढि'त्ति नवतितमं द्वारमाह—

**अणदंसनपुंसित्थीवेयछक्कं च पुरिसवेयं च । दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥ ७०० ॥ कोहं माणं मायं लोभमणंताणुबंधमुवसमइ । मिच्छत्तमिस्ससम्मत्तरूवपुंजत्तयं तयणु ॥ ७०१ ॥ इत्थिनपुंसगवेए तत्तो हासाइछक्कमेयं तु । हासो रई य अरई य सोगो य भयं दुगुंछा य ॥ ७०२ ॥ तो पुंवेयं तत्तो अपच्चक्खाणपच्चखाणा य । आवरणकोहजुयलं पसमइ संजलणकोहंपि ॥७०३॥ एयक्कमेण तिन्निवि माणे माया उ लोह तियगंपि । नवरं संजलणाभिह-लोभाइं किट्टीकयाइं खंडाइं पसमइ कमेणं। पुणरवि चरिमं लोहतिभागे इय विसेसो ॥ ७०४ ॥**

खंडं असंखखंडाइं काऊण ॥ ७०५ ॥ अणुसमयं एक्केक्कं उवसामइ इह हि सत्तगोवसमे । होइ
अपुव्वो तत्तो अनियट्टी होइ नपुमाइ ॥ ७०६ ॥ पसमंतो जा संखेयलोहखंडाओ चरिमखंडस्स ।
संखाईए खंडे पसमंतो सुहुमराओ सो ॥ ७०७ ॥ इय मोहोवसमम्मि कयम्मि उवसंतमोहगु-
णठाणं । सव्वट्ठसिद्धिहेऊं संजायइ वीयरायाणं ॥ ७०८ ॥

इहोपशमश्रेणिप्रारम्भकोऽप्रमत्तसंयत एव, उपशमश्रेणिपर्यवसाने त्वप्रमत्तसंयतप्रमत्तसंयतदेशविरताविरतानामन्यतमो भवति, अन्ये
त्वाहुः—अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमोऽनन्तानुबन्धिनः कषायानुपशमयति, दर्शनत्रिकादिकं तु संयमे एव वर्तमानः, तत्र
प्रथममनन्तानुबन्धिनामुपशमनाऽभिधीयते, अविरतादीनामन्यतमोऽन्यतमस्मिन् योगे वर्तमानस्तेजःपद्मशुक्ललेश्यान्यतमलेश्यायुक्तः साकारो-
पयोगयुक्तोऽन्तःसागरोपमकोटीकोटीस्थितिसत्कर्मा करणकालात् पूर्वमप्यन्तर्मुहूर्तं यावद्विशुद्ध्यमानचित्तसन्ततिरवतिष्ठते, तथाऽवतिष्ठमा-
नश्च परावर्तमानाः प्रकृतीः शुभा एव बध्नाति नाशुभाः, प्रतिसमयं चाशुभानां कर्मणामनुभागमनन्तगुणहान्या करोति शुभानां चान-
न्तगुणवृद्ध्या, स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासङ्ख्येयभागहीनं करोति, पूर्णे चान्तर्मुहूर्ते
क्रमेण यथाप्रवृत्तकरणापूर्वकरणानिवृत्तिकरणाख्यानि प्रत्येकमान्तर्मुहूर्तिकानि त्रीणि करणानि करोति, चतुर्थीं तूपशान्ताद्धां, करणवक्त-
व्यता च सर्वाऽपि कर्मप्रकृतेरवसेया, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनाम-
धस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्तमानमन्तरकरणमन्तर्मुहूर्तेन करोति, अन्तरकरणदलिकं चोत्कीर्यमाणं बध्यमानासु परप्रकृतिषु प्रक्षि-
पति, प्रथमस्थित्यावलिकागतं च दलिकं स्तिबुकसङ्क्रमेण वेद्यमानासु परप्रकृतिषु प्रक्षिपति, अन्तरकरणे च कृते द्वितीयसमयेऽनन्ता-

नुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते, तद्यथा—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसंख्यातगुणं तृतीयसमयेऽपि ततोऽसङ्ख्ये-
यगुणं यावदन्तर्मुहूर्तेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति, उपशमिता नाम यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिपिच्याभि-
पिच्य द्रुघणादिभिर्निकुट्टितो निस्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशुद्धिवारिपूरेण परिपिच्य परिपिच्यानिर्वृत्तिकरणरूपद्रुघणनिकु-
ट्टितः सङ्क्रमणोदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यो भवति, अन्ये तु अनन्तानुबन्धिनामुपशमनां न मन्यन्ते, किन्तु विसंयो-
जनां क्षपणां, सा च प्रागेवोक्ता, सम्प्रति दर्शनत्रिकस्योपशमना भण्यते, इह क्षायोपशमिकसम्यग्दृष्टिः संयमे वर्तमानोऽन्तर्मुहूर्तेन दर्श-
नत्रिकमुपशमयति, उपशमयंश्च पूर्वोक्तकरणत्रयनिर्वर्तनेन विशुद्ध्या वर्धमानोऽनिर्वृत्तिकरणाद्धाया असङ्ख्येयेषु भागेषु गतेषु अन्तरकरणं
करोति, तच्च कुर्वन् सम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्तमानां स्थापयति मिथ्यात्वमिश्रयोश्चावलिकामात्रं, उत्कीर्यमाणं च दलिकं त्रयाणा-
मपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति, मिथ्यात्वमिश्रयोः प्रथमस्थितिदलिकं सम्यक्त्वस्य प्रथमस्थितिदलिकमध्ये स्तिबुकसङ्क्रमेण सङ्क्र-
मयति, सम्यक्त्वस्य पुनः प्रथमस्थितौ विपाकानुभवतः क्रमेण क्षीणायामुपशमसम्यग्दृष्टिर्भवति, उपरितनदलिकस्य चोपशमना त्रया-
णामपि मिथ्यात्वादीनामनन्तानुबन्धिनामुपरितनस्थितिदलिकस्येवावसेया, एवमुपशान्तदर्शनत्रिकः प्रमत्ताप्रमत्तपरिवृत्तिशतानि कृत्वा
चारित्रमोहमुपशमयितुकामः पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति, केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थाने अपूर्वकरणं
चापूर्वकरणगुणस्थाने, अपूर्वकरणे च स्थितिघातादिभिर्विशुद्ध्य ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रविशति, अनिवृत्तिकरणाद्धायाश्च सङ्ख्ये-
येषु भागेषु गतेषु दर्शनसप्तकवर्जितानामेकविंशतेर्मोहनीयप्रकृतीनामन्तरकरणं करोति, तत्र यस्य वेदस्य सञ्ज्वलनस्य च उदयोऽस्ति
तयोः स्वोदयकालमानां प्रथमस्थितिं करोति, शेषाणां त्वेकादशकषायाणामष्टानां च नोकषायाणामावलिकामात्रं, वेदत्रिकसञ्ज्वलनचतु-

ष्कोदयकालमानं अन्तरकरणगतदलिकप्रक्षेपस्वरूपं च ग्रन्थविस्तरभयान्न लिख्यते, अन्तरकरणं च कृत्वा ततो नपुंसकवेदमन्तर्मुहूर्तेनोपशमयति, तथाहि—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसङ्ख्येयगुणं एवं च प्रतिसमयमसङ्ख्येयगुणं तावदुपशमयति यावच्चरमसमयः, परप्रकृतिषु प्रतिसमयमुपशमितदलिकापेक्षया तावदसङ्ख्येयगुणं प्रक्षिपति यावद् द्विचरमसमयः, चरमसमये तूपशम्यमानं दलिकं परप्रकृतिषु सङ्क्रम्यमाणदलिकापेक्षयाऽसङ्ख्येयगुणं द्रष्टव्यं, उपशान्ते च नपुंसकवेदे स्त्रीवेदं प्रागुक्तविधिनाऽन्तर्मुहूर्तेनोपशमयति, ततोऽन्तर्मुहूर्तेन हास्यादिषट्कं तस्मिंश्चोपशान्ते तत्समयमेव पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सकलमपि पुंवेदमुपशमयति, ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सञ्ज्वलनक्रोधमुपशमयति, ततोऽन्तर्मुहूर्तेनाप्रत्याख्यानप्रत्याख्यानावरणौ मानौ युगपदुपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सञ्ज्वलनमानमुपशमयति, ततो युगपदन्तर्मुहूर्तेनाप्रत्याख्यानप्रत्याख्यानावरणमाये उपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः, ततोऽसौ लोभवेदको जातः, लोभवेदनाद्धायाश्च त्रयो विभागास्तद्यथा—अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च, तत्राद्ययोर्द्वयोस्त्रिभागयोर्वर्तमानः सञ्ज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च, अश्वकर्णकरणाद्धायां च वर्तमानः प्रथमसमय एव त्रीनपि लोभानप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपान् युगपदुपशमयितुमारभते, विशुद्ध्या वर्धमानश्चापूर्वाणि स्पर्धकानि करोति, अपूर्वस्पर्धकशब्दार्थश्च प्रागेवोक्तः, सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति ततः समयोनावलिकाद्विकेन सञ्ज्वलनमायामुपशमयति, एवमश्वकर्णकरणाद्धायां गतायां किट्टिकरणाद्धायां प्रविशति, तत्र च पूर्वस्पर्धकेभ्यो-

ऽपूर्वस्पर्धकेभ्यश्च द्वितीयस्थितिगतं दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति, किट्टिकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानप्र-
त्याख्यानावरणलोभावुपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनलोभबन्धव्यवच्छेदो बादरसञ्ज्वलनलोभोदयोदीरणाव्यवच्छे-
दश्च, ततोऽसौ सूक्ष्मसम्परायो भवति, तदा चोपरितनस्थितेः सकाशात्कतिपयाः किट्टीः समाकृष्य प्रथमस्थितिं सूक्ष्मसम्परायाद्धातुल्यां
करोति वेदयते च, सूक्ष्मसम्परायाद्धा चान्तर्मुहूर्तमाना, शेषं च सूक्ष्मं किट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति, सूक्ष्म-
सम्परायाद्धायाश्च चरमसमये सञ्ज्वलनलोभ उपशान्तो भवति, ततोऽनन्तरसमयेऽसावुपशान्तमोहो भवति, स च जघन्येनैकसमयमुत्क-
र्षतोऽन्तर्मुहूर्तं यावल्लभ्यते, तत ऊर्ध्वं नियमादसौ प्रतिपतति, प्रतिपातश्च द्विधा-भवक्षयेण अद्धाक्षयेण च, तत्र भवक्षयो म्रियमाणस्य
अद्धाक्षय उपशान्ताद्धायां समाप्तायां, अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति, यत्र यत्र बन्धोदयो व्यवच्छिन्नस्तत्र तत्र
प्रतिपतता सता तेन ते अद्धाक्षयेण आरभ्यन्ते इतियावत्, प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकं, कश्चित्पुनस्ततोऽ-
प्यधस्तनं गुणस्थानकद्विकं याति, कोऽपि सासादनभावमपि, यः पुनर्भवक्षयेण प्रतिपतति स नियमादनुत्तरविमानवासिपूत्पद्यते, उत्प-
न्नश्च प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीत्येष विशेषः, उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते,
यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः, यः पुनरेकवारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपीत्येष
कार्मग्रन्थिकाभिप्रायः, आगमाभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते, तदुक्तम्—'मोहोपशम एकस्मिन्, भवे द्विः स्याद-
सन्ततः । यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न ॥ १ ॥" इति, ननूपशमश्रेणिमविरतादय एवारभन्ते ते च यथासम्भवं सम्य-
ग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानामुपशमाद्भवन्ति अन्यथा तेषामुदये सम्यक्त्वादिलाभायोगात् ततः कथमिदानीं

तेषामुपशमो भण्यते ?, तदसत्, पूर्वं हि तेषां क्षयोपशम एवासीत् नोपशमस्तत इदानीमुपशमः क्रियते, ननु क्षयोपशमोऽप्युदिते कर्मांशे क्षीणेऽनुदिते चोपशान्ते भवति उपशमोऽपि चेत्थंभूत एव ततः कोऽनयोर्विशेषः ? येनैवमुच्यते पूर्वं क्षयोपशम आसीन्नोपशम इति, सत्यं, इह क्षयोपशमे तदावारकस्य कर्मणः प्रदेशतोऽनुभवोऽस्ति उपशमे तु नेति विशेषः, ननु यदि सत्यपि क्षयोपशमे मिथ्यात्वानन्तानुवन्ध्यादिकषायाणां प्रदेशानुभवोऽस्ति तर्हि कथं न सम्यक्त्वादिगुणविघातो भवति ?, तदुदये ह्यवश्यं सम्यक्त्वादिलाभः सन्नप्यपगच्छति यथा सासादनसम्यग्दृष्टेरिति, नैष दोषः, प्रदेशानुभवस्य मन्दानुभावत्वात्, मन्दानुभावो ह्युदयो न स्वावार्यगुणविघातमाधातुमलं, यथा चतुर्ज्ञानिनो मतिज्ञानावरणादीनां विपाकतोऽप्युदयः, तथाहि—मतिज्ञानावरणादिकं कर्म ध्रुवोदयं ध्रुवोदयत्वाच्चावश्यं विपाकतोऽनुभवनीयं, विपाकानुभवापेक्षयैव ध्रुवोदयत्वाभिधानात्, अथ च तत्सकलचतुर्ज्ञानिनो न मत्यादिज्ञानविघातकृद्भवति, तदुदयस्य मन्दानुभावत्वात्, तद्यदि विपाकतोऽप्यनुभूयमानं मन्दानुभावोदयत्वान्न स्वावार्यगुणविघाताय प्रभवति ततः प्रदेशतोऽनुभूयमानमनन्तानुबन्ध्यादि सुतरां न भविष्यति, तदुदयस्यातीव मन्दानुभावत्वादिति । अथ गाथाक्षरार्थः कथ्यते-एकदेशेन समुदायोपचारात् 'अण'त्ति अनन्तानुवन्धिनः क्रोधमानमायालोभान् उपशमयति, इयं च क्रिया सर्वत्र योज्या, ततो दर्शनं दर्शस्तत् त्रिविधं मिथ्यात्वमिश्रसम्यक्त्वस्वरूपं पुञ्जत्रयं ततो नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं—हास्यरत्यरतिशोकभयजुगुप्सालक्षणं ततः पुरुषवेदं ततो द्वौ द्वौ क्रोधाद्यौ एकान्तरितौ—सञ्ज्वलनक्रोधाद्यन्तरितौ सदृशौ—क्रोधादित्वेन तुल्यौ सदृशं—तुल्यं युगपदिति भावः; अयमर्थः—अप्रत्याख्यानप्रत्याख्यानावरणक्रोधयुगलं युगपत् प्रशमयति, ततः सञ्ज्वलनक्रोधमित्यादि ॥ ७०० ॥ अथैनां गाथां स्वयमेव सूत्रकृद्व्याख्याति—

'कोहं' गाहा, गतार्था, 'इत्थी' गाहा सुगमा, नवरं दर्शनत्रयोपशमानन्तरं नपुंसकवेदस्त्रीवेदौ युगपदुपशमयति, अयं च नपुंसकवेदेन

श्रेणिं प्रतिपन्नस्य क्रम उक्तः, इहायं सम्प्रदायः—स्त्रीवेदेन पुरुषवेदेन वा उपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तद्दूरं यावन्नपुंसकवेदेनापि श्रेणिं प्रतिपन्नः सन् नपुंसकवेदमेव केवलमुपशमयति, तत ऊर्ध्वं पुनर्नपुंसकवेदं स्त्रीवेदं च युगपदुपशमयितुं लग्नः, स च तावद्गतो यावन्नपुंसकवेदोदयाद्धाया द्विचरमसमयः, तस्मिंश्च समये स्त्रीवेद उपशान्तः, नपुंसकवेदस्य च एका समयमात्रा उदयस्थितिर्वर्तते, शेषं सर्वमुपशान्तं, तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भवति, ततः पुरुषवेदादिकाः सप्त प्रकृतीर्युगपदुपशमयितुं यतते, शेषं तथैव, यदा तु स्त्रीवेदेन श्रेणिं प्रतिपद्यते तदा प्रथमतो नपुंसकवेदमुपशमयति, पश्चात् स्त्रीवेदं, तं च तावदुपशमयति यावत्स्वोदयस्य द्विचरमसमयः, तस्मिंश्च समये एकां चरमसमयमात्रामुदयस्थितिं वर्जयित्वा शेषं सकलमपि स्त्रीवेदस्य सत्कं दलिकमुपशमितं, ततश्चरमसमये गतेऽवेदका सती पुरुषवेदहास्यादिपट्करूपाः सप्त प्रकृतीर्युगपदुपशमयति, शेषं तथैव, पुरुषवेदेन पुनः श्रेणिं प्रतिपद्यमानस्य स्वरूपं प्रथमगाथायामेवोक्तं ॥ ७०१ ॥ ७०२ ॥ 'तो पुंवेयं' गाहा, उत्तानार्था, 'एवे'त्यादि अनेनैव क्रोधोपशमक्रमेण त्रीनप्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनाख्यान्मानान् तिस्रश्च माया लोभत्रिकं च प्रशमयतीति योगः, नवरं—केवलं सञ्ज्वलनाभिधलोभस्य त्रिभागे किट्टिवेदनाद्धालक्षणे लोभे इति—वक्ष्यमाणो विशेषः, तमेवाह ॥ ७०३ ॥ ७०४ ॥ 'संखेयाइं' इत्यादि, गाथाचतुष्टयं, किट्टीकृतानि—श्लक्ष्णीकृतानि सञ्ज्वलनलोभखण्डानि सङ्ख्यातानि क्रमेणानुसमयं प्रशमयति, चरमं च खण्डं पुनरप्यसङ्ख्येयानि खण्डानि कृत्वाऽनुसमयमेकैकमुपशमयति ॥७०५॥७०६॥७०७॥ इदानीं याः प्रकृतीरुपशमयन् येषु गुणस्थानकेषु वर्तते तदाह—'इह ही'त्यादि, इह हि श्रेणिप्रतिपत्ताऽनन्तानुवन्धिचतुष्कदर्शनत्रिकरूपसप्तकोपशमे कृते सति भवत्यपूर्वः-अपूर्वकरणगुणस्थानके वर्तत इत्यर्थः, ततः परं 'नपुमाइं'त्ति नपुंसकवेदादिप्रकृतीः प्रशमयन् यावत्सङ्ख्येयानि वादरलोभखण्डानि प्रशमयति तावदनिवृत्तिवादरो भवति, अनिवृत्तियाद-

रगुणस्थाने वर्तते इत्यर्थः, तदनु चरमस्य सूक्ष्मकिट्टीकृतखण्डस्य सङ्ख्यातीतानि—असङ्ख्येयानि खण्डानि प्रशमयन् सूक्ष्मसम्परायगुणस्थानके भवति, इत्येवं मोहनीयोपशमे कृते सति उपशान्तमोहगुणस्थानं भवति, तच्च सर्वार्थसिद्धिहेतुः सञ्जायते वीतरागाणामप्रतिपतितभावानामिति शेष इति ९० ॥ ७०८ ॥ इदानीं 'थंडिल्लाण चउवीस उ सहस्से'त्ति द्वारमेकनवतितममाह—

**अणावायमसंलोए १, परस्साणुवघायए २। समे ३ अज्झुसिरे यावि ४, अचिरकालकयंमि ५ य ॥ ७०९ ॥ विच्छिन्ने ६ दूरमोगाढे ७, नासन्ने ८ बिलवज्जिए ९ । तसपाणबीयरहिए १०, उच्चाराईणि वोसिरे ॥ ७१० ॥**

अनापातमसंलोकं १ परस्य अनौपघातिकं २ समं ३ अशुषिरं ४ अचिरकालकृतं ५ विस्तीर्णं ६ दूरमवगाढं ७ अनासन्नं ८ बिलवर्जितं ९ त्रसप्राणबीजरहितं १० यत्स्थण्डिलं तत्र उच्चारादीनि—पुरीषप्रश्रवणप्रभृतीनि व्युत्सृजेत्, तत्र परस्येत्युभयत्र सम्बन्धात् न विद्यते आपातः—अभ्यागमः परस्य—अन्यस्य स्वपक्षस्य परपक्षस्य वा यस्मिन् स्थण्डिले तदनापातं, न विद्यते संलोको—दर्शनं वृक्षादिच्छन्नत्वाद्यत्र परस्य तदसंलोकं, अत्र च चतुर्भङ्गी, तद्यथा—अनापातमसंलोकमिति प्रथमो भङ्गः अनापातं संलोकवदिति द्वितीयः आपातवदसंलोकमिति तृतीयः आपातवत् संलोकवच्चेति चतुर्थः, अमीषां चतुर्णां भङ्गानां मध्ये प्रथमो भङ्गोऽनुज्ञातः शेषास्तु प्रतिषिद्धाः, इह च चरमभङ्गव्याख्याने अन्ये विधिप्रतिषेधरूपाः सुज्ञाना भवन्तीति चरमभङ्गस्यैव स्वरूपं निरूप्यते—तत्र आपातवत्स्थण्डिलं द्विविधं ज्ञातव्यं, तद्यथा—स्वपक्षापातवत् परपक्षापातवच्च, स्वपक्षः—संयतवर्गः परपक्षो—गृहस्थादिः, स्वपक्षापातवदपि द्विविधं—संयतापातवत् संयत्यापातवच्च, संयता अपि द्विविधाः—संविग्ना असंविग्नाश्च, संविग्ना—उद्यतविहारिणः असंविग्नाः—शिथिलाः पार्श्वस्थादयः, संविग्ना अपि

द्विविधाः—मनोज्ञा अमनोज्ञाश्च, मनोज्ञा—एकसामाचारिकाः अमनोज्ञाश्च—विभिन्नसामाचारिकाः, असंविज्ञा अपि द्विविधाः—संविज्ञपाक्षिका असंविज्ञपाक्षिकाश्च, संविज्ञपाक्षिका—निजानुष्ठाननिन्दिनो यथोक्तसुसाधुसमाचारप्ररूपकाः असंविज्ञपाक्षिका—निर्धर्माणः सुसाधुजुगुप्सकाः, उक्तं च—'तत्थावायं दुविहं सपक्खपरपक्खओ य नायव्वं । दुविहं होइ सपक्खे संजय तह संजईणं च ॥ १ ॥ संविग्गमसंविग्गा संविग्गमणुन्नएयरा चेव । असंविग्गावि दुविहा तप्पक्खियएयरा चेव ॥ २ ॥" परपक्षापातवदपि स्थण्डिलं द्विविधं—मनुष्यापातवत् तिर्यगापातवच्च, एकैकमपि त्रिविधं—पुरुषापातवत् स्त्र्यापातवन्नपुंसकापातवच्च, तत्र मानुषपुरुषापातवत् त्रिविधं—दण्डिकपुरुषापातवत् कौटुम्बिकपुरुषापातवत् प्राकृतपुरुषापातवच्च, दण्डिका—राजकुलानुगताः कौटुम्बिकाः—शेषा महर्द्धिकाः इतरे—प्राकृताः, ते च त्रयोऽपि प्रत्येकं द्विविधाः—शौचवादिनोऽशौचवादिनश्च, एवं स्त्र्यापातवन्नपुंसकापातवच्च प्रत्येकं प्रथमतो दण्डिकादिभेदतस्त्रिविधं, ततः शौचवाद्यशौचवादिभेदतः पुनरेकैकं द्विविधमवसेयं, उक्तं च—"परपक्खेऽवि य दुविहं माणुसतेरिच्छगं च नायव्वं । एक्केक्कंपि च तिविहं पुरिसित्थिनपुंसकं चेव ॥ १ ॥ पुरिसावायं तिविहं दण्डियकोडुंबिए य पागइए । ते सोयऽसोयवाई एमेव नपुंसइत्थीसुं ॥ २ ॥" अथ तिर्यगापातवत् कथ्यते—तत्र तिर्यञ्चो द्विविधाः—दृप्ता अदृप्ताश्च, दृप्ता—दर्पवन्तः अदृप्ताः—शान्ताः, तेऽपि प्रत्येकं त्रिविधाः—जघन्या उत्कृष्टा मध्यमाश्च, जघन्या मूल्यमङ्गीकृत्य एडकादयः उत्कृष्टा हस्त्यादयः मध्यमा महीपादयः, एते किल पुरुषा उक्ताः, एवमेव स्त्रीनपुंसका अपि वक्तव्याः, नवरं ते दृप्ता अदृप्ताश्च प्रत्येकं द्विधा विज्ञेयाः, तद्यथा—जुगुप्सिता अजुगुप्सिताश्च, जुगुप्सिता गर्दभ्यादयः इतरेऽजुगुप्सिताः, उक्तं च—"दित्तमदित्ता तिरिया जहन्नउक्कोसमज्झिमा तिविहा । एमेव थीनपुंसा दुगुंछिअदुगुंछिया नवरं ॥ १ ॥" उक्तमापातवत्स्थण्डिलं, संलोकवत्पुनर्मनुष्येष्वेव द्रष्टव्यं, ते च मनुष्यास्त्रिविधाः—तद्यथा—पुरुषाः स्त्रियो नपुंसकाश्च, एकैके प्रत्येकं त्रिविधाः-

प्राकृताः कौटुम्बिका दण्डिकाश्च, ते पुनरेकैके द्विविधाः—शौचवादिनोऽशौचवादिनश्च, उक्तं च—"आलोगो मणुएसुं पुरिसित्थीनपुंसगाण बोद्धव्वो । पागडकुडुंबिदंडिय असोय तह सोयवाईणं ॥ १ ॥" तत्रैवमापातसंलोकौ चरमभङ्गे तृतीये आपातो द्वितीये संलोक उक्तभेदप्रभेदयुक्तः । इदानीमेतेषु स्थण्डिलेषु गमने दोषाः प्रतिपाद्यन्ते—तत्र स्वपक्षसंयतसंविग्नामनोज्ञानामापाते सति न गन्तव्यं, अधिकरणदोषसम्भवात्, तथाहि—आचार्याणां परस्परं विभिन्नाः सामाचार्यः, ततोऽमनोज्ञानां सामाचारीवितथाचरणदर्शने सति शैक्षाणां स्वसामाचारीपक्षपातेन नैषा सामाचारीति कलहः स्यात्, असंविग्नानामपि पार्श्वस्थादीनामापाते न गन्तव्यं, ते हि प्रचुरेण पानीयेन पुतप्रक्षालनं कुर्वन्ति, ततस्तेषां कुशीलानां प्रचुरवारिणा पुतनिर्लेपकरणं दृष्ट्वा शैक्षकाणां शौचवादिनां मन्दधर्माणां च एतेऽपि प्रव्रजिता एवेति वरमेते इत्यनुकूलतया तेषां समीपे गमनं स्यात्, मनोज्ञानामापातेऽपि गमनं कर्तव्यं, संयत्यापातस्तु सर्वथाऽपि परिहर्तव्य इति स्वपक्षापातदोषाः, परपक्षापातेऽपि यदि पुरुषापातं स्थण्डिलं व्रजति तदा नियमतोऽतिप्रचुरमनाविलं च जलं नेतव्यं, अन्यथाऽत्यल्पे कलुषे वा सर्वथा पानीयाभावे वा यदि गतो भवेत्ततस्ते दृष्ट्वा अशुचयोऽमी इत्यवर्णवादं विदध्युः, मा कोऽप्यमीषामशुचीनामन्नपानादि दद्यादिति भिक्षाप्रतिषेधं वा कुर्युः, अभिनवप्रवृत्तस्य च कस्यचित् श्रावकस्य विपरिणामो वा भवेदिति, स्त्रीनपुंसकापाते पुनरात्मनि परे तदुभयस्मिन् वा शङ्कादयो दोषा भवन्ति, तत्रात्मनि साधुः शङ्काविषयीक्रियते यथा एष किमप्युद्भ्रामयति, परे स्त्री नपुंसको वा शङ्क्यते यथैते पापकर्माण एनं साधुं कामयन्ते इति, तदुभयस्मिन् यथा द्वावप्येतौ परस्परमत्र मैथुनार्थमागतौ, तथा स्त्र्यापाते नपुंसकापाते वा स साधुरात्मपरोभयसमुत्थेन दोषेण स्त्रिया पण्डकेन वा सार्धं मैथुनं कुर्यात् तत्र च केनचिदागारिकेण दृष्ट्वा राजकुलादिष्वाकृष्येत ततः प्रवचनस्योड्डाह इत्यादि, दृप्ततिर्यगापातेन शृङ्गादिताडनमारणादयो दोषाः, गर्हिततिर्यक्स्त्रीनपुंसकापाते पुनर्जनस्य मैथुनशङ्का स्यात् कदा-

चिच्च प्रतिसेवनामपि कुर्यादिति ॥ उक्ता आपाते दोषाः, एवमेव संलोकेऽपि तिर्यग्योनिकान् वर्जयित्वा मनुष्येषु द्रष्टव्याः, तिरश्चां हि संलोके नास्ति कश्चिदनन्तरोदितो दोषः, मनुष्याणां पुनः स्त्रीपुरुषनपुंसकानां संलोके ये आपाते दोषा उक्तास्त एव वेदितव्याः, अथ कदाचिदात्मपरोभयसमुत्था मैथुनदोषा न भवेयुस्तथाप्यमी सम्भाव्यन्ते—यथा केचिदेवमाहुर्यदुत ययैव दिशा उच्चारार्थमस्माकं युवतिवर्गो व्रजति तयैव दिशा एतेऽपि प्रव्रजिता व्रजन्ति, तन्नूनमस्मदीयां कामपि कामिनीं कामयमाना दत्तसङ्केता वा तदालोके तिष्ठन्ति, तथा नपुंसकः स्त्री वा स्वभावतो वातदोषेण वा विकृतं सागारिकं दृष्ट्वा तद्विषयाभिलापमूर्च्छामापन्ना तं साधुमुपसर्गयेत्, तस्मात् त्रयाणामपि संलोको वर्जनीयः, तदेवं चरमभङ्गे आपातसंलोकदोषाः तृतीये आपातदोषाः द्वितीये च संलोकदोषा भवन्ति, प्रथमे पुनः स्थण्डिले ते द्वयेऽप्यापातसंलोकदोषा न संति ततस्तत्र गमनं कर्तव्यं, उक्तं च—"आवायदोस तइए वीए संलोगओ भवे दोसा। ते दोवि नत्थि पढमे तहिं गमणं भणियविहिणा उ ॥ १ ॥" १। तथा उपघातः—उड्डाहादि प्रयोजनमस्य तदौपघातिकं स्थण्डिलं, तत् त्रिविधं-आत्मौपघातिकं प्रवचनौपघातिकं संयमौपघातिकं च, तत्रात्मौपघातिकमारामादि, तत्र हि संज्ञां व्युत्सृजतो यतेस्तत्स्वामिनः सकाशात् पिट्टनादिप्रसङ्गः, प्रवचनौपघातिकं पुरीपस्थानं, तद्धि जुगुप्सितमशुच्यात्मकत्वात्, ततस्तत्र संज्ञाव्युत्सर्गे ईदृशा एते इति प्रवचनोपघातः स्यात्, संयमौपघातिकमङ्गारादिदाहस्थानं, तत्र हि संज्ञाव्युत्सर्जने तेऽग्न्यारम्भिणोऽन्यत्रास्थण्डिलेऽग्निप्रज्वालनादि कुर्वन्ति त्यजन्ति वा तां संज्ञामस्थण्डिले ततश्च संयमोपघात इति, यतश्चैते दोषा भवन्त्यतोऽनौपघातिके स्थण्डिले व्युत्सर्जनीयं, एवमन्यत्रापि भावनीयं २। तथा समं—अविषमं, विषमे हि व्युत्सृजतो यतेः पतनं स्यात् तत्र चात्मविराधना, पुरीषं प्रश्रवणं वा प्रलोठत् षट्कायानुपमर्दयतीति संयमविराधना च ३। तथा 'अज्झुसिरं' यत्तृणादिच्छन्नं न भवति, शुषिरे हि संज्ञादि व्युत्सृजतो वृश्चिकदंदशूकादिदशने-

नात्मनो विराधना पुरीषप्रश्रवणाक्रमणेन च त्रसस्थावरप्राणिप्रणाशनतः संयमविराधना ४ । तथा अचिरकालकृतं—स्वल्पकालनिविष्टं,
अयमर्थः—यानि स्थण्डिलानि यस्मिन् ऋतावग्निप्रज्वालनादिभिः कारणैरचित्तानि कृतानि तस्मिन्नेव ऋतौ तान्यचिरकालकृतानि भवन्ति, यथा
हेमन्ते कृतानि हेमन्त एव अचिरकालकृतानि, ऋत्वन्तरव्यवहितानि तु चिरकालकृतानि, ततः सचित्तत्वान्मिश्रीभूतत्वाद्वा अस्थण्डि-
लानि तानीति, यत्र पुनरेकं वर्षाकालं सधनो ग्राम उषितस्तत्र द्वादश वर्षाणि यावत्स्थण्डिलं भवति ततः परमस्थण्डिलं ५ । तथा विस्तीर्ण—
महत्, तत् त्रिधा—जघन्यं मध्यमुत्कृष्टं च, तत्र जघन्यमायामविष्कम्भाभ्यां हस्तप्रमाणं, उत्कृष्टं द्वादश योजनानि, तच्च चक्रवर्तिस्क-
न्धावारनिवेशे समवसेयं, शेषं तु मध्यममिति ६ । तथा दूरमवगाढं—गम्भीरं, यत्राधस्ताच्चत्वार्यङ्गुलान्यग्नितापादिना अचित्ता भूमिस्त-
ज्जघन्यं, यस्य पुनरधस्तात्पञ्चाङ्गुलप्रभृतिकं तदुत्कृष्टं दूरमवगाढं, अत्र च वृद्धसम्प्रदायः—'चउरङ्गुलोगाढे सन्ना वोसिरिज्जइ न काइ-
य'त्ति ७ । तथा अनासन्नं—आरामादेर्नातिसमीपस्थं, इह किल आसन्नं द्विविधं—द्रव्यासन्नं भावासन्नं च, तत्र द्रव्यासन्नं देवकुलहर्म्यग्रा-
मारामग्रामक्षेत्रमार्गादीनां निकटं, तत्र च द्वौ दोषौ—संयमोपघात आत्मोपघातश्च, तथाहि—स देवकुलादिस्वामी तत्साधुव्युत्सृष्टं पुरीषं
केनचित्कर्मकरेणान्यत्र त्याजयति, ततस्तत्प्रदेशविलेपने हस्तप्रक्षालने च संयमोपघातः, आत्मोपघातश्च स गृहाद्यधिपतिः प्रद्विष्टः सन्
कदाचित्ताडयतीति, भावासन्नं नाम तावत्तिष्ठति यावत्संज्ञा मनाग् नागच्छति, ततस्त्वरितं गच्छन् केनचिद्धूर्तेन भावासन्नतामुपगम्य
धर्मप्रच्छनादिव्याजेनार्धपथ एव धृतः, ततश्च तस्य पुरीषवेगं धारयत आत्मविराधना, मरणस्य ग्लानत्वस्य वाऽवश्यम्भावात्, अनधिसहेन
च सता तेन लोकपुरतोऽस्थाने संज्ञाव्युत्सर्गे पुनर्जङ्घादिलेपने वा प्रवचनविराधना, संयमोपघातादि तत्रैवाप्रत्युपेक्षितस्थण्डिले व्युत्सृजतो
भवतीति ८ । तथा बिलवर्जितं—भूमिरन्ध्रादिरहितं, बिलयुक्ते हि स्थण्डिले संज्ञां व्युत्सृजतो यदा बिले प्रविशन्त्या संज्ञया प्रश्रवणेन च

तद्गताः पिपीलिकाप्रभृतयः प्राणिनो व्यापाद्यन्ते तदा संयमविराधना सर्पादिभक्षणे चात्मविराधना ९। तथा त्रसप्राणबीजरहितं—स्थावरजङ्गमजन्तुजातवियुक्तं, तद्युक्ते हि स्थण्डिले संज्ञाव्युत्सर्गं कुर्वाणस्य साधोर्द्वौ दोषौ—संयमविराधना आत्मविराधना च, तत्र त्रसेषु बीजेषु च प्राणव्यपरोपणात् संयमविराधना सुप्रतीता, त्रसेष्वात्मविराधना तेभ्यो भक्षणाद्युपद्रवसम्भवात्, बीजेष्वात्मविराधना अतितीक्ष्णगोक्षुरकादिबीजानां पादेषु लगनतः पादप्रलोठनेन पतनतो वेति १०। अमीषां चानन्तरोदितानां दशानां पदानामेकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशकैः संयोगाः कर्तव्याः, तेषु च भङ्गाः सर्वसङ्ख्यया चतुर्विंशत्यधिकं सहस्रं, अथ कस्मिन् संयोगे कियन्तो भङ्गकाः?, उच्यन्ते, इह भङ्गानामानयनार्थमियं करणगाथा—"उभयमुहं रासिदुगं हेट्ठिल्लाणंतरेण भय पढमं। लद्धहरासिविभत्ते तस्सुवरि गुणित्तु संजोगा ॥ १ ॥" अस्या अक्षरगमनिका—इह दशानां पदानां द्व्यादिसंयोगभङ्गा आनेतुमभिप्रेतास्ततस्तावत्प्रमाणौ द्वौ राशी उभयमुखौ स्थाप्येते, किमुक्तं भवति?—एककादीन् दशकपर्यन्तानङ्कान् पूर्वानुपूर्व्योपरि स्थापयित्वा तेषामधस्तात् पश्चानुपूर्व्या भूय एककादयो दशकपर्यन्ता अङ्काः स्थापनीयाः, स्थापना चेयं—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| १ | १० | ४५ | १२० | २१० | २५२ | २१० | १२० | ४५ | १० |

अत्राधस्तनराशिपर्यन्तवर्तिन एककस्योपरि यो दशकस्ते एककसंयोगे दश भङ्गा द्रष्टव्याः, न च तत्र करणगाथाया व्यापारो, द्व्यादिसंयोगभङ्गानयनायैव तस्याः प्रवृत्तत्वात्, ततोऽधस्तनराशिपर्यन्तवर्तिन एककस्यानन्तरेण द्विकलक्षणेनोपरितनराशौ पश्चानुपूर्व्या प्रथममंकं

दशकरूपं भजेत्—तस्य भागाकारं कुर्यात्, ततो लब्धाः पञ्च, यतो दश द्विधा विभक्ताः पञ्चैव भवन्ति, 'लद्धहरासिविभत्ते'त्ति अ-
धोराशिना द्विकलक्षणेनोपरितने प्रथमे अङ्के दशकलक्षणे विभक्ते सति लब्धेन अङ्केन पञ्चकेन तस्य द्विकलक्षणस्योपरितनमङ्कं नवकलक्षणं
गुणयेत्—ताडयेत्, जाताः पञ्चचत्वारिंशत्, इत्थं च गुणयित्वा संयोगाः—संयोगभङ्गा वाच्याः, यथा द्विकसंयोगे भङ्गाः पञ्चचत्वारिंश-
दिति, ततो भूयोऽपि त्रिकसंयोगभङ्गानयनाय प्रथमपादरहिता करणगाथा व्यापार्यते, यथाऽधस्तनराशिस्थितेन द्विकादनन्तरेण त्रिकेणो-
परितनराशिव्यवस्थितं त्रिकोपरितनाष्टकरूपाङ्कापेक्षयाऽऽद्यं पञ्चचत्वारिंशल्लक्षणमंकं भजेत्, ततो लब्धाः पञ्चदश, यतः पञ्चचत्वारिंशत्
त्रिधा विभक्ताः पञ्चदशैव भवन्ति, तैश्चाधोराशिनोपरितने अङ्के विभक्ते लब्धैः पञ्चदशभिस्त्रिकलक्षणस्याङ्कस्योपरितनमष्टकलक्षणमङ्कं गुण-
येत्, गुणिते च सति जातं विंशत्युत्तरं शतं, एतावन्तस्त्रिकसंयोगे भङ्गाः, पुनश्चाधस्तनराशिस्थितेन त्रिकादनन्तरेण चतुष्ककेणोपरित-
नराशिस्थितं चतुष्कोपरितनसप्तकरूपाङ्कापेक्षया प्रथमं विंशत्युत्तरशतलक्षणमंकं भजेत्, लब्धा त्रिंशत्, यतो विंशत्युत्तरं शतं चतुर्भिर्भक्तं
त्रिंशदेव भवति, तया च त्रिंशता चतुष्कस्योपरि यः सप्तकः स गुण्यते, जाते द्वे शते दशोत्तरे, एतावन्तश्चतुष्ककसंयोगे भङ्गाः, एवं
पञ्चकादिसंयोगेष्वपि भङ्गा आनेतव्याः यावद्दशकसंयोगे एको भङ्गः, एवं चैककसंयोगे दश भङ्गाः द्विकसंयोगे पञ्चचत्वारिंशत् त्रिक-
संयोगे विंशं शतं चतुष्कसंयोगे द्वे शते दशोत्तरे पञ्चकसंयोगे द्वे शते द्विपञ्चाशदधिके षट्कसंयोगे द्वे शते दशोत्तरे सप्तकसंयोगे विंशं
शतं अष्टकसंयोगे पञ्चचत्वारिंशत् नवकसंयोगे दश दशकसंयोगे एकः, सर्वमीलने च त्रयोविंशत्युत्तरं सहस्रमशुद्धभङ्गानां भवति, चतु-
र्विंशस्तु शुद्धो भङ्गो यद्यपि करणेन नागच्छति तथाप्येतन्मध्ये तं प्रक्षिप्य भङ्गसङ्ख्या पूरणीया, यतः सर्वभङ्गप्रसारे क्रियमाणे पर्यन्ते
शुद्धभङ्गस्यागतिः, उक्तं च—"दस पणयाल विसोत्तरसयं च दोसय दसुत्तरा दो य । बावन्न दो दसुत्तर विसुत्तरं पञ्च चत्ता य ॥ १ ॥

दस एक्को य कमेणं भङ्गा एगादिचारणाएसुं । सुद्धेण समं मिलिया भङ्गसहस्सं चउव्वीसं ॥ २ ॥" ११ ॥ ७१० ॥ इदानीं 'पुव्वाणं नामाइं पयसंखासंजुयाइं चउदसवि'त्ति द्विनवतं द्वारमाह—

उप्पायं पढमं पुण एक्कारसकोडिपयपमाणेणं । बीयं अग्गाणीयं छन्नउई लक्खपयसंखं ॥ ७११ ॥ विरियप्पवायपुव्वं सत्तरिपयलक्खलक्खियं तइयं । अत्थियनत्थिपवायं सट्ठीलक्खा चउत्थं तु ॥ ७१२ ॥ नाणप्पवायनामं एयं एगूणकोडिपयसंखं । सच्चप्पवायपुव्वं छप्पयअहिएगकोडीए ॥ ७१३ ॥ आयप्पवायपुव्वं पयाण कोडी उ हुंति छत्तीसं । समयप्पवायगवरं असीई लक्ख पयकोडी ॥ ७१४ ॥ नवमं पच्चक्खाणं लक्खा चुलसी पयाण परिमाणं । विज्जप्पवाय पनरस सहस्स एक्कारस उ कोडी ॥ ७१५ ॥ छव्वीसं कोडीओ पयाण पुव्वे अवंझणामंमि । छप्पन्न लक्ख अहिया पयाण कोडी उ पाणाउ ॥ ७१६ ॥ किरियाविसालपुव्वं नव कोडीओ पयाण तेरसमं । अद्धत्तेरसकोडी चउदसमे विंदुसारम्मि ॥ ७१७ ॥ पढमं आयारंगं अट्ठारस पयसहस्सपरिमाणं । एवं सेसंगाणवि दुगुणादुगुणप्पमाणाइं ॥ ७१८ ॥

'उप्पाये'त्यादिगाथाष्टकं, यत्रोत्पादमङ्गीकृत्य सर्वद्रव्यपर्यायाणां प्ररूपणा कृता तदुत्पादपूर्वं प्रथमं, तच्च पदप्रमाणेन—पदसङ्ख्यामाश्रित्यैकादशकोटिप्रमाणं, प्रथमपूर्वे एकादश पदानां कोटय इत्यर्थः, इह यत्रार्थोपलब्धिस्तत्पदमित्यादिपदलक्षणसद्भावेऽपि तथाविधसम्प्रदायाभावात्तस्य प्रमाणं न सम्यगवगम्यत इति, तथा यत्र सर्वेषां द्रव्याणां पर्यायाणां जीवविशेषाणां चाग्रं—परिमाणं वर्ण्यते तदग्रायणीयं द्वितीयं पूर्वं,

अग्रं—परिमाणं तस्य अयनं—गमनं परिच्छेद इत्यर्थः तस्मै हितमग्रायणीयमिति व्युत्पत्तेः, तस्य पदपरिमाणं षण्णवतिर्लक्षाणि, तथा यत्र जीवानां सकर्मेतराणामजीवानां च वीर्यं प्रोच्यते—प्ररूप्यते तद्वीर्यप्रवादं तृतीयं पूर्वं, तस्य पदपरिमाणं सप्ततिर्लक्षाणि, तथा यल्लोकेऽस्ति वस्तु धर्मास्तिकायादि यच्च नास्ति खरशृङ्गादि अथवा स्याद्वादाभिप्रायेण सर्वं वस्तु स्वरूपेणास्ति पररूपेण नास्तीत्येवं यत्र प्रोच्यते तदस्तिनास्तिप्रवादं चतुर्थं, तदपि पदपरिमाणतः षष्टिर्लक्षाणि, तथा यत्र ज्ञानं मत्यादिकं पञ्चविधं स्वरूपभेदप्रभेदादिभिः प्रोद्यते तत् ज्ञानप्रवादं नाम पञ्चमं पूर्वं, एतच्च पदपरिमाणमाश्रित्यैकेन पदेन न्यूना एका कोटिः, तथा सत्यं—संयमः सत्यवचनं वा तद्यत्र सभेदं सप्रतिपक्षं च प्रोद्यते तत् सत्यप्रवादं षष्ठं पूर्वं, तस्य पदपरिमाणं षड्भिः पदैरधिका एका कोटिः, तथा यत्रात्मा—जीवोऽनेकनयैः प्रोद्यते तदात्मप्रवादं सप्तमं पूर्वं, तस्य पदपरिमाणं षट्त्रिंशत्कोटयः, तथा समयः—सिद्धान्तार्थः स चात्र कर्मरूपो गृह्यते ततः कर्मस्वरूपं यत्र प्ररूप्यते तत् समयप्रवादं वरं—प्रधानमष्टमं पूर्वं, अन्यत्र तु कर्मप्रवादमित्युच्यते, तत्रापि कर्म—ज्ञानावरणादिकमष्टविधं प्रकृतिस्थित्यनुभागप्रदेशादिभिर्भेदैरन्यैश्चोत्तरोत्तरभेदैर्यत्र प्रोद्यते तत्कर्मप्रवादं पूर्वं, तस्य पदपरिमाणमेका कोटिरशीतिश्च लक्षाणि, तथा यत्र सर्वप्रत्याख्यानस्वरूपं सप्रभेदं प्रोद्यते तत् प्रत्याख्यानप्रवादं नवमं, तस्य पदानां परिमाणं चतुरशीतिर्लक्षाः, तथा यत्रानेकविधा विद्यातिशयाः साधनानुकूल्येन सिद्धिप्रकर्षेण वर्ण्यंते तद्विद्यानुप्रवादं दशमं, तस्य पदपरिमाणमेकादश कोटयः पञ्चदश च सहस्राणि, तथाऽवन्ध्यनामधेयमेकादशं पूर्वं, वन्ध्यं नाम निष्फलं न वन्ध्यं अवन्ध्यं सफलमित्यर्थः, तत्र हि सर्वे ज्ञानतपःसंयोगाः शुभफलेन सफला वर्ण्यन्ते अप्रशस्ताश्च प्रमादादिकाः सर्वे अशुभफला वर्ण्यन्ते अतोऽवन्ध्यं, अन्ये तु कल्याणमित्याहुः, अर्थस्तु तत्रापि स एव, तस्मिंश्च पदपरिमाणं षड्विंशतिकोटयः, तथा यत्र प्राणा—जीवाः पञ्चेन्द्रियत्रिविधवलोच्छ्वासनिःश्वासरूपा वा आयुश्चानेकधा वर्ण्यते तत् प्राणायुर्द्वादशं पूर्वं, तत्र पदपरिमाणमेका

कोटिः पट्पञ्चाशच्च लक्षाः, तथा यत्र क्रियाः—कायिक्यादिका विशाला—विस्तीर्णाः सभेदत्वादभिधीयन्ते तत् क्रियाविशालं त्रयोदशं पूर्वं, तत्र पदपरिमाणं नव कोटयः, तथा विन्दुसारमिति लोकशब्दोऽत्र लुप्तो द्रष्टव्यः, ततश्च लोके—जगति श्रुतलोके वाऽक्षरस्योपरि विन्दुरिव सारं—सर्वोत्तमं सर्वाक्षरसन्निपातलब्धिहेतुत्वाल्लोकविन्दुसारं, तत्परिमाणमर्धत्रयोदशपदकोट्य इति, समवायांगटीकायां तु पदपरिमाणविषये किंचिदन्यथात्वमपि दृश्यते इति । ननु पूर्वाणीति कः शब्दार्थः ?, उच्यते, यस्मात्तीर्थङ्करस्तीर्थप्रवर्तनाकाले गणधराणां सर्वसूत्राधारत्वेन पूर्वं पूर्वगतसूत्रार्थं भाषते तस्मात् पूर्वाणीति भणितानि, गणधराः पुनः श्रुतरचनां विदधाना आचारादिक्रमेण रचयन्ति स्थापयन्ति च, मतान्तरेण तु पूर्वगतः सूत्रार्थः पूर्वमर्हता भाषितो गणधरैरपि पूर्वगतं श्रुतमेव पूर्वं रचितं पश्चादाचारादिकं, नन्वेवं यदाचारनिर्युक्तावुक्तं—'सव्वेसिं आयारो' इत्यादि तत्कथं ?, उच्यते, तत्र स्थापनामाश्रित्य तथोक्तं इह तु अक्षररचनामधिकृत्य भणितं पूर्वं पूर्वाणि कृतानीति ॥ ७११ ॥ ७१२ ॥ ७१३ ॥ ७१४ ॥ ७१५ ॥ ७१६ ॥ ७१७ ॥ अथ पदसङ्ख्याप्रस्तावादाचारादीनामप्यङ्गानां पदसङ्ख्यामाह—'पढमं' इत्यादिगाथा, प्रथममाचाराङ्गमष्टादशपदसहस्रप्रमाणं, एवम्—अनेनैव प्रकारेण सूत्रकृदङ्गस्थानाङ्गप्रभृतीनि शेषाङ्गान्यपि द्विगुणद्विगुणपदप्रमाणानि, तथाहि—सूत्रकृदङ्गं पट्त्रिंशत्पदसहस्रं स्थानाङ्गं द्विसप्ततिपदसहस्रं एवमुत्तरोत्तराणामपि समवायादीनामङ्गानां क्रमेण द्विगुणता पदानां प्रतिपत्तव्या, यावद्विपाकश्रुते एकादशे अङ्गे पदपरिमाणमेका कोटी चतुरशीतिर्लक्षाः द्वात्रिंशच्च सहस्राणीति । ननु पूर्वं तावत् पूर्वाणि भगवद्भिर्गणभृद्भिः क्रमेण ग्रथ्यन्ते पूर्वं करणात्पूर्वाणीति पूर्वसूरिप्रदर्शितव्युत्पत्तिश्रवणात्, पूर्वेषु च सकलस्यापि वाङ्मयस्यावतारो, न खलु तदस्ति यत्पूर्वेषु नाभिहितं, ततः किं शेषाङ्गविरचनेनाङ्गबाह्यविरचनेन वा ?, उच्यते, इह विचित्रा जगति प्राणिनः, तत्र ये दुर्मेधसस्ते पूर्वाणि नाध्येतुमीशते, पूर्वाणामतिगम्भीरार्थत्वात्, स्त्रीणां च पूर्वाध्ययनेऽनाधिकार एव, तासां तुच्छ-

त्वादिदोषबहुलत्वात्, उक्तं च—"तुच्छा गारवकलिया चलिंदिया दुव्वला य धीईए । इइ अतिसेसज्झयणा भूयावाओ य नो थीणं ॥ १ ॥" [ तुच्छा गौरवकलिताश्चलेन्द्रिया धृत्या च दुर्बला इतिहेतोरतिशायीन्यध्ययनानि भूतवादश्च न स्त्रीणां ॥ १ ॥ ] अत्रातिशेषाध्ययनानि—उत्थानश्रुतादीनि विविधविशिष्टातिशयसम्पन्नानि शास्त्राणि, भूतवादो—दृष्टिवादः । ततो दुर्मेधसां स्त्रीणां चानुग्रहाय शेषाङ्गानामङ्गबाह्यस्य च विरचनमिति ॥ ९२ ॥ ७१८ ॥ इदानीं 'निग्गंथ'त्ति त्रिनवतं द्वारमाह—

पंच नियंठा भणिया पुलाय १ बउसा २ कुसील ३ निग्गंथा ४ । होइ सिणाओ य ५ तहा एक्केक्को सो भवे दुविहो ॥ ७१९ ॥ गंथो मिच्छत्तधणाइओ मओ जे य निग्गया तत्तो । ते निग्गंथा वुत्ता तेसिं पुलाओ भवे पढमो ॥ ७२० ॥ मिच्छत्तं वेयतियं हासाई छक्कगं च नायवं । कोहाईण चउक्कं चउदस अब्भिंतरा गंथा ॥ ७२१ ॥ खेत्तं वत्थुं धणधन्नसंचओ मित्तनाइसंजोगो । जाणसयणासणाणि य दासा दासीउ कुवियं च ॥ ७२२ ॥ धन्नमसारं भन्नइ पुलायसद्देण तेण जस्स समं । चरणं सो हु पुलाओ लद्धीसेवाहि सो य दुहा ॥ ७२३ ॥ उवगरणसरीरेसु बउसो दुविहोवि होइ पंचविहो । आभोग १ अणाभोए २ संवुड ३ अस्संवुडे ४ सुहुमे ५ ॥ ७२४ ॥ आसेवणा कसाए दुहा कुसीलो दुहावि पंचविहो । नाणे १ दंसण २ चरणे ३ तवे ४ य अहसुहुमए ५ चेव ॥ ७२५ ॥ उवसामगो १ य खवगो २ दुहा नियंठो दुहावि पंचविहो । पढमसमओ १ अपढमो २ चरम ३ अचरमो ४ अहासुहुमो ५ ॥ ७२६ ॥ पाविज्जइ अट्ठसयं खवगाणुवसामगाण

चउपन्ना । उक्कोसओ जहन्नेणेक्को व दुगं व तिगमहवा ॥ ७२७ ॥ सुहज्झाणजलविसुद्धो कम्मम-लावेक्खया सिणाओत्ति । दुविहो य सो सजोगी तहा अजोगी विणिद्दिट्ठो ॥ ७२८ ॥ मूलुत्तर-गुणविसया पडिसेवा सेवए पुलाए य । उत्तरगुणेसु बउसो सेसा पडिसेवणारहिया ॥ ७२९ ॥ निग्गंथसिणायाणं पुलायसहियाण तिण्ह वोच्छेओ । समणा बउसकुसीला जा तित्थं ताव होहिंति ॥ ७३० ॥

'पंचे'त्यादिगाथाद्वादशकं, ग्रन्थादान्तरान्मिथ्यात्वादेर्बाह्याच्च धर्मोपकरणवर्जधनादेर्निर्गता निर्ग्रन्थाः—साधवः, ते पञ्चविधा उक्ताः, यथा—पुलाको बकुशः कुशीलो निर्ग्रन्थः स्नातकश्चेति, एतेषां च पुलाकादीनां सर्वेषां सामान्यतश्चारित्रसद्भावेऽपि मोहनीयकर्मक्षयोपशमादिवैचित्र्या-द्भेदोऽवगन्तव्यः, एकैकोऽपि स पुलाकादिर्द्विविधो भवेत्, द्वैविध्यं च सूत्रकृदेवाग्रे प्रकटयिष्यति ॥ ७१९ ॥ अथ सूत्रकार एव निर्ग्रन्थशब्द-व्युत्पत्तिमाह—'गंथो' गाहा, ग्रथ्यते—वध्यते कषायवशगेनात्मनेति ग्रन्थः यद्वा ग्रथ्नाति—बध्नात्यात्मानं कर्मणेति ग्रन्थः, स द्विभेदः—आभ्यन्तरो बाह्यश्च, तत्राभ्यन्तरो मिथ्यात्वादिश्चतुर्दशविधः बाह्यश्च धनादिको दशविधो 'मतः' कथितः, तस्माच्च द्विभेदादपि ग्रन्थाद् ये निर्गतास्ते निर्ग्रन्था 'उक्ताः' भणिताः, 'तेषां' निर्ग्रन्थानां पञ्चभेदानां मध्ये पुलाकः प्रथमो भवेत् ॥ ७२० ॥ अथ चतुर्दशविधाभ्य-न्तरग्रन्थप्रतिपादनामाह—'मिच्छत्तं' गाहा, मिथ्यात्वं—तत्त्वार्थाश्रद्धानं वेदत्रिकं—पुंस्त्रीनपुंसकवेदलक्षणं हास्यादिषट्कं च—हास्यरत्यरति-भयशोकजुगुप्सालक्षणं ज्ञातव्यं, तत्र हास्यं—विस्मयादिषु वक्त्रविकाशात्मकं रतिः—असंयमे प्रीतिः अरतिः—संयमेऽप्रीतिः, उक्तं च—"अरई य संजमम्मी होइ रईऽसंजमे यावि"त्ति भयं—इहलोकादिसप्तधा, शोकः—इष्टवियोगान्मानसं दुःखं जुगुप्सा—अज्ञानादिमलिन-

तनुमुनिहीलना, तथा चाह—"अण्हाणमाइएहिं साहुं तु दुगुंछई दुगुंछ"त्ति [ अस्नानादिभिः साधुं जुगुप्सते जुगुप्सेति ]। तथा क्रोधादीनां चतुष्कं—क्रोधमानमायालोभलक्षणं एते चतुर्दश आभ्यन्तरा ग्रन्थाः ॥ ७२१ ॥ अथ बाह्यं ग्रन्थमाह—क्षेत्रं—सेत्वादि वास्तु—खातादि धनं च—हिरण्यादि धान्यं च—शाल्यादि तयोः सञ्चयो—राशिर्धनधान्यसञ्चयः मित्राणि च—सहवर्धितादीनि ज्ञातयश्च—स्वजनास्तैः संयोगः—सम्बन्धो मित्रज्ञातिसंयोगः, यानानि च—शिविकादीनि शयनानि च—पल्यंकादीनि आसनानि च—सिंहासनादीनि यानशयनासनानि, चः समुच्चये दासा—अङ्कपतिताः दास्योऽपि—तथाविधा एव कुप्यं च—विविधगृहोपस्करात्मकं, अत्र च धनधान्यसञ्चयो मित्रज्ञातिसंयोगश्चेति द्वौ, शेषाश्चाष्टेति दशविधो बाह्यग्रन्थः ॥ ७२२ ॥ अथ पुलाकादीन् व्याचिख्यासुः प्रथमं पुलाकव्याख्यानमाह—'धन्नमसारं' गाहा, पुलाकशब्देनासारं—निःसारं धान्यं तण्डुलकणशून्यं पलञ्जिरूपं भण्यते तेन पुलाकेन समं—सदृशं यस्य साधोश्चरणं—चारित्रं भवति स पुलाकः, पुलाक इव पुलाक इतिकृत्वा, अयमर्थः—तपःश्रुतहेतुकायाः सङ्घादिप्रयोजने सबलवाहनस्य चक्रवर्त्यादेरपि चूर्णने समर्थाया लब्धेरुपजीवनेन ज्ञानाद्यतिचारासेवनेन वा सकलसंयमसारगलनात् पलञ्जिवन्निःसारो यः स पुलाकः, स च द्विधा—लब्ध्या सेवया च, लब्धिपुलाकः सेवापुलाकश्चेत्यर्थः, तत्र लब्धिपुलाको देवेन्द्रर्द्धिसमसमृद्धिको लब्धिविशेषयुक्तः, यदाह—"संघाइयाण कज्जे चुण्णेज्जा चक्कवट्टिमवि जीए। तीए लद्धीएँ जुओ लद्धिपुलाओ मुणेयव्वो ॥ १ ॥" [ संघादिकानां कार्ये चूर्णयति चक्रवर्तिनमपि यया। तया लब्ध्या युतो लब्धिपुलाको ज्ञातव्यः ॥ १ ॥ ] अन्ये त्वाहुः—आसेवनतो यो ज्ञानपुलाकस्तस्येयमीदृशी लब्धिः स एव च लब्धिपुलाको न तद्व्यतिरिक्तः कश्चिदपर इति, आसेवापुलाकस्तु पञ्चविधः—ज्ञानपुलाकः दर्शनपुलाकः चारित्रपुलाकः लिङ्गपुलाकः यथासूक्ष्मपुलाकश्च, तत्र स्खलितमिलितादिभिरतिचारैर्ज्ञानमाश्रित्यात्मानमसारं कुर्वन् ज्ञानपुलाकः, एवं कुदृष्टिसंस्तवादिभिर्दर्शनपुलाकः, मूलो-

त्तरगुणप्रतिषेवणया चारित्रविराधनतश्चरणपुलाकः, यथोक्तलिङ्गाधिकग्रहणान्निष्कारणान्यलिङ्गकरणाद्वा लिङ्गपुलाकः, किञ्चित्प्रमादान्मनसाऽकल्प्यग्रहणाद्वा यथासूक्ष्मपुलाकः, अन्यत्र पुनरेवमुक्तं—"आहासुहुमो य एएसु चेव चउसुवि जो थोवथोवं विराहेइ"त्ति ॥ ७२३ ॥ अथ वकुशमाह—'उवगरण' गाहा, वकुशः शवलः कर्वुर इति पर्यायाः, एवम्भूतश्च सातिचारत्वात् संयमोऽत्राभिप्रेतः, ततश्च वकुशसंयमयोगात्साधुरपि बकुशः, सातिचारत्वाच्छुद्ध्यशुद्धिव्यतिकीर्णचरण इत्यर्थः, स द्विविधः—उपकरणविषये शरीरविषये च, उपकरणवकुशः शरीरवकुशश्चेति भावः, तत्राकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिश्लोक्ष्णवासःप्रियः पात्रदण्डकाद्यपि विभूषार्थं तैलमात्रयोज्ज्वलीकृत्य धारयन्नुपकरणवकुशः, तथाऽनागुप्तव्यतिरेकेण करचरणवदनप्रक्षालनमक्षिकर्णनासिकाद्यवयवेभ्योऽपि दूषिकामलाद्यपनयनं दन्तपवनकरणं केशसंस्कारं च देहविभूषार्थमाचरन् शरीरवकुशः, अयं च द्विविधोऽपि सामान्यतः पञ्चविधः, तद्यथा—आभोगवकुशः अनाभोगवकुशः संवृतवकुशः असंवृतवकुशः सूक्ष्मवकुशश्च, अत्राभोगः—साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवम्भूतं ज्ञानं तत्प्रधानो वकुश आभोगवकुशः, शरीरोपकरणविभूषयोः सहसाकारी अनाभोगवकुशः, संवृतो—गुप्तो लोके अविज्ञातदोषः संवृतवकुशः, प्रकटकारी तु असंवृतवकुशः, मूलोत्तरगुणाश्रितं वा संवृतासंवृतत्वं किञ्चित्प्रमादी नेत्रमलाद्यपनयनात् सूक्ष्मवकुशः, एते च वकुशाः सामान्येन ऋद्धियशस्कामाः सातगौरवाश्रिताः अविविक्तपरिवाराः छेदयोग्यशवलचारित्रयुक्ता अवगन्तव्याः, तत्र ऋद्धिः—प्रचुरवस्त्रपात्रादिप्राप्तिः यशश्च—गुणवन्तो विशिष्टाः साधव इत्यादिप्रवादरूपख्यातिगुणस्तत्कामाः—तदभिलाषिणः, सातं—सुखं तत्र गौरवं—आदरस्तदाश्रिताः, नातीवाहोरात्राभ्यन्तरानुष्ठेयासु क्रियास्वभ्युद्यता इति भावः, अविविक्तः—असंयमादपृथग्भूतः समुद्रफेनादिना निघृष्टजङ्घस्तैलादिना विहितशरीरमृजः कर्तरिकाकल्पितकेशः स परिवारो येषां तेऽविविक्तपरिवाराः छेदयोग्यं—सर्वदेशच्छेदार्हं शवलं—अतिचारकर्बुरं यथा-

रित्रं तेन युक्ताः छेदयोग्यशवलचारित्रयुक्ताः ॥ ७२४ ॥ अथ कुशीलमाह—**'आसेवणा'** गाहा, मूलोत्तरगुणविराधनात् सञ्ज्वलनकषायोदयाद्वा कुत्सितं शीलं—चारित्रं यस्य स कुशीलः, स च द्विधा—आसेवनाकुशीलः कषायकुशीलश्च, आसेवना—संयमस्य विपरीताऽऽराधना तया कुशील आसेवनाकुशीलः, कषायैः—सञ्ज्वलनक्रोधाद्युदयलक्षणैः कुशीलः कषायकुशीलः, द्विविधोऽपि कुशीलः पञ्चविधो—ज्ञानदर्शनचरणतपोयथासूक्ष्मभेदात्, अयमर्थः—प्रतिसेवनाकुशीलः पञ्चविधो ज्ञानदर्शनचारित्रतपःप्रतिसेवकः सूक्ष्मप्रतिसेवकश्च, तत्र ज्ञानदर्शनचारित्रतपांस्युपजीवन् तत्प्रतिसेवक उच्यते, अन्ये तु तपःस्थाने लिङ्गं पठन्ति, एष एव शोभनस्तपस्वीत्यादिप्रशंसया यस्तुष्यति स सूक्ष्मप्रतिसेवकः, कषायकुशीलोऽपि पञ्चविधो—ज्ञानदर्शनचारित्रतपःकषायकुशीलः सूक्ष्मकषायकुशीलश्च, तत्र ज्ञानदर्शनतपांसि सञ्ज्वलनक्रोधकषायाद्युपयुक्तो यः स्वस्वविषये व्यापारयति स तत्तत्कषायकुशील उच्यते, कषायाविष्ट एव यः कस्यापि शापं प्रयच्छति स चारित्रकषायकुशीलः, मनसा तु क्रोधादीन् कुर्वन् सूक्ष्मकषायकुशीलः, अथवा सञ्ज्वलनक्रोधादिकषायाविष्ट एव ज्ञानदर्शनचारित्रतपांसि यो विराधयति—अतीचारमलिनानि करोति स ज्ञानादिकषायकुशीलः, सूक्ष्मकषायकुशीलस्तु तथैवेति ॥ ७२५ ॥ अथ निर्ग्रन्थमाह—**'उवसामगो य'**गाहा, निर्गतो मोहनीयकर्मलक्षणात् ग्रन्थादिति निर्ग्रन्थः, स द्विधा—उपशान्तमोहः क्षीणमोहश्च, सूत्रे च 'वर्तमानसामीप्ये वर्तमानवद्वे'ति न्यायादतीतकालाभिधानेऽपि 'उवसामगो य खवगो'त्ति वार्तमानिको वुण्प्रत्ययः, उक्तं च—"सो उवसंतकसाओ खीणकसाओ व"त्ति, तत्र उपशान्तः—उपशमं नीतो विद्यमान एव सङ्क्रमणोद्वर्तनादिकरणायोग्यत्वेन व्यवस्थापितो मोहो—मोहनीयं कर्म येन स उपशान्तमोहः, तथा क्षीणो मोहो यस्य स क्षीणमोहः, सूक्ष्मसम्परायावस्थायां सञ्ज्वलनलोभमपि निःशेषं क्षपयित्वा सर्वथा मोहनीयकर्माभावं प्रतिपन्न इत्यर्थः, स द्विविधोऽपि प्रत्येकं पञ्चविधस्तद्यथा—प्रथमसमयनिर्ग्रन्थोऽप्रथमसमयनिर्ग्रन्थश्चरमसमय-

निर्ग्रन्थोऽचरमसमयनिर्ग्रन्थो यथासूक्ष्मनिर्ग्रन्थश्चेति, तत्रान्तर्मुहूर्तप्रमाणे निर्ग्रन्थकालसमयराशौ प्रथमसमये निर्ग्रन्थत्वं प्रतिपद्यमानः प्रथमसमयनिर्ग्रन्थः १, अन्यसमयेषु च वर्तमानोऽप्रथमसमयनिर्ग्रन्थः २ पूर्वानुपूर्व्या व्यपदिश्यते, तथा चरमे—अन्तिमे समये वर्तमानश्चरमसमयनिर्ग्रन्थः ३ शेषेषु पुनर्वर्तमानोऽचरमसमयनिर्ग्रन्थः पश्चानुपूर्व्या निर्दिश्यते, यथासूक्ष्मनिर्ग्रन्थः पुनः सामान्येन प्रथमादिसमयाविवक्षया सर्वेषु समयेषु वर्तमानो यथासूक्ष्मनिर्ग्रन्थः पञ्चम इति विवक्षया भेद एषामिति ॥ ७२६ ॥ अथैते उपशान्तमोहाः क्षीणमोहाश्च निर्ग्रन्था एकस्मिन् समये यावन्तः प्राप्यन्ते तदाह—'**पाविज्जइ**' गाहा, एकस्मिन् समये प्रवेशमङ्गीकृत्य प्राप्यतेऽष्टोत्तरशतं क्षपकाणां—क्षीणमोहानां, उपशामकानां—उपशान्तमोहानां पुनश्चतुष्पञ्चाशत्, इदं च उत्कर्षतः, जघन्येन तु क्षीणमोहा उपशान्तमोहाश्च एको वा द्वौ वा त्रयो वा प्राप्यन्ते, अयमभिप्रायः—क्षीणमोहास्तावत्कदाचिद्भवन्ति कदाचिन्न भवन्ति, क्षपकश्रेणेरुत्कर्षतः षण्मासमानस्यान्तरस्य सद्भावान्निरन्तरमसम्भवात्, ततो यदा भवन्ति तदा युगपदेकसमये क्षपकश्रेण्यां जघन्यत एकादयः उत्कृष्टतोऽष्टोत्तरशतप्रमाणा एव प्रविशन्ति नाधिकाः, एतच्च सूत्रे युगपदेकसमयप्रविष्टानङ्गीकृत्योक्तं, नानासमयप्रविष्टानङ्गीकृत्य पुनरुत्कृष्टतः शतपृथक्त्वं, तथाहि—अन्तर्मुहूर्तस्वरूपे क्षपकश्रेणिकाले एकस्मिन् समये युगपदेवैकादयो यावदुत्कृष्टतोऽष्टोत्तरशतप्रमाणा जीवा मोहक्षपणाय प्रविष्टाः अन्यस्मिन्नपि समये एतावन्तोऽपरस्मिन्नपि च समये एतावन्तः प्रविष्टाः एवं नानासमयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वस्मिन्नप्यन्तर्मुहूर्तप्रमाणे क्षपकश्रेणिकाले सामान्येन पञ्चदशस्वपि कर्मभूमिषु कदाचिच्छतपृथक्त्वं क्षीणमोहानां प्राप्यते, ततः परं क्षपकश्रेणेरपि निरन्तरसम्भावात्। आह—नन्वन्तर्मुहूर्तमानेऽपि क्षपकश्रेणिकालेऽसङ्ख्याताः समयाः प्राप्यन्ते, तत्र च प्रतिसमयं यद्येकैकः प्रविशति तथाप्यसङ्ख्येया भवन्ति किं पुनरष्टोत्तरशतप्रवेशे इति ?, अत्रोच्यते, स्यादेवं यदि प्रतिसमयमसङ्ख्यातेष्वपि समयेष्वेवं तत्प्रवेशः स्यात्, एतच्च

नास्ति, केषुचिदेव समयेष्वेवं तत्प्रवेशसम्भवात् तथैवातिशायिभिर्दृष्टत्वाद्गर्भजमनुष्याणामपि चासङ्ख्यातानामसम्भवाद्विशेषतस्तु चारित्रिणां, न च गर्भजमनुष्यं चारित्रिणं मुक्त्वाऽन्यः क्षपकश्रेणिं प्रतिपद्यत इति । तथा उपशान्तमोहा अपि कदाचिद्भवन्ति कदाचिन्न भवन्ति, उपशमश्रेणेरुत्कर्षतो वर्षपृथक्त्वप्रमाणस्यान्तरस्यापि सद्भावात्, तत्र च यदा भवन्त्यमी तदा जघन्यत एकादय उत्कर्षतस्तु चतुष्पञ्चाशत्प्रमाणा एव जीवा एकस्मिन् समये उपशमश्रेणिं प्रतिपद्यन्ते नाधिकाः, नानासमयप्रविष्टाः पुनरुत्कृष्टतः सङ्ख्याताः, एतदुक्तं भवति—अन्तर्मुहूर्तलक्षणे उपशमश्रेणिकाले एकस्मिन् समये युगपदेव एकादयो यावदुत्कृष्टतश्चतुष्पञ्चाशत् प्रविष्टाः अन्यस्मिन्नपि समये एतावन्तः अपरस्मिन्नपि समये एतावन्तः प्रविष्टाः, एवं नानासमयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वस्मिन्नप्यन्तर्मुहूर्तमाने उपशमश्रेणिकाले सामान्येन सर्वस्मिन्नपि मनुष्यक्षेत्रे कदाचिदुत्कृष्टतः सङ्ख्याता उपशान्तमोहाः प्राप्यन्ते, ततः परमुपशमश्रेणेर्निरन्तरमभावात्, असङ्ख्येयाः कथममी न प्राप्यन्ते? इत्याद्याक्षेपपरिहारौ पूर्ववद्वाच्याविति ॥ ७२७ ॥ अथ स्नातकमाह—'सुहझाण' गाहा, शुभं—प्रशस्तं ध्यानं—शुक्लध्यानलक्षणं तदेव कर्ममलापेक्षया—घातिकर्ममलपटलप्रक्षालनापेक्षया जलं—सलिलं तेन विशुद्धो—निर्मलः स्नातक इति भण्यते, क्षालितसकलघातिकर्ममलपटलत्वात् स्नात इव स्नातः स एव स्नातकः केवलीत्यर्थः, स च द्विविधो निर्दिष्टः—सयोगी अयोगी च, तत्र मनोवाक्कायव्यापारवान् सयोगी सर्वथा समुच्छिन्नमनोवाक्कायव्यापारस्त्वयोगी, एतेषां च पुलाकादीनां व्याख्याप्रज्ञप्तौ 'पन्नवणवेय' इत्यादिग्रन्थोक्तैः षट्त्रिंशता द्वारैर्विचारोऽस्ति ॥ ७२८ ॥ तत्र बहुतरोपयोगित्वात् शेषद्वारोपलक्षणार्थं प्रतिसेवनाद्वारमाह—'मूलुत्तरगुण' गाहा, मूलगुणाः—प्राणातिपातनिवृत्त्यादयः उत्तरगुणाः—पिण्डविशुद्ध्यादयः तद्विषया 'प्रतिसेवा' सेवा—सम्यगाराधना तत्प्रतिपक्षस्तु प्रतिसेवा विराधनेत्यर्थः 'सेवए'त्ति सूचकत्वात्सूत्रस्य प्रतिसेवना कुशीले पुलाके च, अयमर्थः—पुलाकप्रतिसेवना कुशीलप्रतिसेवना, मूलगु-

णानामुत्तरगुणानां चान्यतमस्य विराधना, तत्त्वार्थभाष्ये तु "प्रतिसेवना पञ्चानां मूलगुणानां रात्रिभोजनविरतिषष्ठानां पराभियोगाद् बलात्कारेणान्यतमं प्रतिसेवमानः पुलाको भवति, मैथुनमेवेत्येके, प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु काञ्चिद्विराधनां प्रतिसेवते" इत्युक्तं, तथा उत्तरगुणेषु प्रतिसेवको वकुशः, उत्तरगुणानामेव विराधको न मूलगुणानामित्यर्थः, शेषास्तु कषायकुशीलनिर्ग्रन्थस्नातकाः प्रतिसेवनारहिताः, मूलगुणानामुत्तरगुणानां च अविराधका एवेति भावः, अत्र च यत्पुलाकादीनां मूलोत्तरगुणविराधकत्वेऽपि निर्ग्रन्थत्वमुक्तं तज्जघन्यजघन्यतरोत्कृष्टोत्कृष्टतरादिभेदतः संयमस्थानानामसङ्ख्येयतया तदात्मकतया च चारित्रपरिणतेरिति भावनीयं, चारित्रपर्याया अपि चामीषां पञ्चानामपि प्रत्येकमनन्ताः, यत उक्तम्—"पुलागस्स णं भंते! केवइया चरित्तपज्जवा पन्नत्ता ?, गोयमा! अणंता चरित्तपज्जवा पन्नत्ता, एवं जाव सिणायस्स"त्ति ॥ ७२९ ॥ अथैते पुलाकादयः पञ्चापि कियन्तं कालं यावत्प्राप्यन्ते ?, तत्राह—निर्ग्रन्थस्नातकानां पुलाकसहितानां त्रयाणामपि निर्ग्रन्थभेदानां व्यवच्छेदः—अभावो 'मणपरमोहिपुलाए' इत्यादिवचनात् जम्बूस्वामिनोऽनन्तरमेते त्रयोऽपि न जाता इत्यर्थः, वकुशकुशीललक्षणाः पुनः श्रमणाः—साधवो यावत्तीर्थं तावद्भविष्यन्ति, 'वकुसकुसीलेहिं वट्टए तित्थं' इति वचनात् ९२ ॥ ७३० ॥ इदानीं 'समण'त्ति चतुर्नवतं द्वारमाह—

**निग्गंथ १ सक्क २ तावस ३ गेरुय ४ आजीव ५ पंचहा समणा । तम्मि निग्गंथा ते जे जिणसासणभवा मुणिणो ॥ ७३१ ॥ सक्का य सुगयसीसा जे जडिला ते उ तावसा गीया । जे धाउरत्तवत्था तिदंडिणो गेरुया ते उ ॥ ७३२ ॥ जे गोसालगमयमणुसरंति भन्नंति ते उ आजीवा । समणत्तणेण भुवणे पंचवि पत्ता पसिद्धिमिमे ॥ ७३३ ॥**

निर्ग्रन्थाः शाक्यास्तापसा गैरुका आजीवाश्च पञ्चधा—पञ्चभेदाः श्रमणा भवन्ति, ‘तंमि’त्ति प्राकृतत्वादेकवचनं, ततस्तेषु—श्रम-
णेषु मध्ये निर्ग्रन्थास्ते भण्यन्ते ये जिनशासनभवाः—प्रतिपन्नपारमेश्वरप्रवचनाः मुनयः—साधवः, तथा शाक्याः सुगतशिष्या—बौद्धा
इत्यर्थः, ये च जटिला—जटाधारिणो वनवासिपाखण्डिनस्ते तापसा गीताः—कथिताः, ये धातुरक्तवस्त्रास्त्रिदण्डिनस्ते तु गैरुकाः परिव्रा-
जका इत्यर्थः, तथा ये गोशालकमतमनुसरन्ति भण्यन्ते ते तु आजीवका इति, एते पञ्चापि श्रमणत्वेन भुवने प्रसिद्धिं प्राप्ता इति ९४॥
॥ ७३१ ॥ ७३२ ॥ ७३३ ॥ इदानीं ‘गासेसण’त्ति पञ्चनवतं द्वारमाह—

**संजोयणा १ पमाणे २ इंगाले ३ धूम ४ कारणे ५ चेव । उवगरणभत्तपाणे सबाहिरऽब्भंतरा प-**
**ढमा ॥ ७३४ ॥ कुक्कुडिअंडयमेत्ता कवला बत्तीस भोयणपमाणे । राएणाऽऽसायंतो संगारं करइ**
**सचरित्तं ॥ ७३५ ॥ भुंजंतो अमणुन्नं दोसेण सधूमगं कुणइ चरणं । वेयणआयंकप्पमुहकारणा**
**छच्च पत्तेयं ॥ ७३६ ॥ वेयण १ वेयावच्चे २ इयरिट्ठाए य ३ संजमट्ठाए ४ । तह पाणवत्तियाए ५**
**छट्ठं पुण धम्मचिंताए ६ ॥ ७३७ ॥ आयंके १ उवसग्गे २ तितिक्खया बंभचेरगुत्तीसु ३ । पाणि-**
**दया ४ तवहेऊ ५ सरीरवोच्छेयणट्ठाए ६ ॥ ७३८ ॥**

ग्रासैषणादोषाः, ग्रासो—भोजनं तद्विषया एषणा—
‘संजोयणे’ति गाथापूर्वार्धं, संयोजना प्रमाणं अङ्गारो धूमः कारणं चेति पञ्च ग्रासैषणादोषाः, ग्रासो—भोजनं तद्विषया एषणा—
शुद्धाशुद्धपर्यालोचनं ग्रासैषणा तस्या दोषा ग्रासैषणादोषाः, तत्र प्रथमं संयोजनामाह—‘उवगरणे’त्यादि उत्तरार्धं, ‘पढम’त्ति दोषप-
ञ्चकापेक्षया प्रथमा—आद्या संयोजनेत्यर्थः, संयोजनं संयोजना—उत्कर्षतोत्पादनार्थं द्रव्यस्य द्रव्यान्तरेण मीलनं, सा द्विधा भवति—उप-

करणविषया भक्तपानविषया च, पुनरेकैका द्विधा—सबाह्याभ्यन्तरा—बाह्याभ्यन्तरभेदयुक्ता, बाह्या अभ्यन्तरा चेत्यर्थः, तत्र उपकरणविषया बाह्या संयोजना यथा कश्चित्साधुः कुत्रापि गृहे भव्यं चोलपट्टादिकं प्राप्य पुनरन्यत्र विभूषार्थं तदुचितं पटीप्रभृतिकं मार्गयित्वा वसतेर्बहिरेव प्रावृणोतीति, अभ्यन्तरा वसतौ निर्मलं चोलपट्टादिकं परिधाय विभूषानिमित्तं तदनुरूपां निर्मलामेव नर्मादिपटीं परिदधातीति, तथा भिक्षार्थं हिण्डमानः सन् क्षीरादिकमनुकूलद्रव्यैः खण्डादिभिः सह रसगृद्ध्या रसविशेषोत्पादनाय बहिरेव संयोजयतीत्येषा बाह्या भक्तपानविषया संयोजना, अभ्यन्तरा पुनर्यद्वसतावागत्य भोजनवेलायां संयोजयतीति, सा च त्रिधा—पात्रकविषया कवलविषया मुखविषया च, तत्र भोजनसमये यत्पायसादि येन खण्डादिना रोचते तद्रसगृद्ध्या तेनैव सहैकस्मिन्नेव पात्रे संयोज्य स्थापयतीति प्रथमा, यदा तु हस्तगतमेव कवलतया उत्पादितं सुकुमारिकादिकं खण्डादिना सह संयोजयति तदा द्वितीया, यदा पुनर्मण्डकादिकं मुखे प्रक्षिप्य पश्चाद्गुडादिकं प्रक्षिपति तदा तृतीयेति, अपवादश्चात्र—एकैकं साधुसङ्घाटकं प्रति प्रचुरघृतादिप्राप्तौ सत्यां भोजनानन्तरं यदि कथमपि कियदप्युद्धरितं भवति तदा तदुद्धरितघृतादिनिर्गमनार्थं खण्डादिभिरपि तस्य संयोजनं न दोषाय, उद्धरितं हि घृतादि न खण्डादिकमन्तरेण मण्डकादिभिरपि सह भोक्तुं शक्यते प्रायस्तृप्तत्वात्, न च परिष्ठापनं युक्तं घृतादिपरिष्ठापने स्निग्धत्वात् पश्चादपि पिपीलिकादिप्राणिप्रणाशसम्भवात्, तथा ग्लानभव्यीकरणार्थं यद्वा भक्तारोचकिनः प्रधानाहारलालितस्य सुखोचितस्य राजपुत्रादेर्वा साधूचितेन संयोगरहिताहारेणाद्यापि सम्यगभावितस्य शैक्षकस्य वा निमित्तं रसगृद्ध्यापि संयोजना कल्पत एवेति ॥ ७३४ ॥ इदानीं प्रमाणमाह—
'कुक्कुडि' इत्यादि गाथापूर्वार्धं, कुर्कुट्यण्डकमात्राः कवला द्वात्रिंशद्भोजनप्रमाणे इति, तत्र कुर्कुटी द्विधा—द्रव्यकुर्कुटी भावकुर्कुटी च, तत्र साधोः शरीरमेव कुर्कुटी तन्मुखमण्डकं, तत्राक्षिकपोलौष्ठभ्रुवां विकृतिमनापाद्य यः कवलो मुखे प्रविशति एतत्प्रमाणं कवलस्य, अथवा

कुर्कुटी–पक्षिणी तस्या अण्डकं प्रमाणं कवलस्य, तथा यावन्मात्रेणाहारेण भुक्तेन न न्यूनं नाप्यत्याध्मातमुदरं भवति धृतिश्च विशिष्टा सम्पद्यते ज्ञानदर्शनचारित्राणां च वृद्धिरुपजायते तावत्प्रमाण आहारो भावकुर्कुटी, तस्य द्वात्रिंशत्तिमो भागोऽण्डकं, तत्प्रमाणं कवलस्य, ततो द्वात्रिंशत्कवलाः पुरुषस्याहारप्रमाणं, स्त्रियास्तु अष्टाविंशतिः नपुंसकस्य पुनश्चतुर्विंशतिः, उक्तं च तण्डुलवैचारिके—"बत्तीसं कवला पुरिसस्स आहारो अट्ठावीसं इत्थियाए चउव्वीसं पंडयस्स"त्ति, अधिकाहारस्तु अजीर्यमाणः सन् व्याधये वमनाय मृत्यवे चेति, यदभ्यधायि—"अइबहुयं अइबहुसो अइप्पमाणेण भोयणं भुत्तं। हादेज्ज व वामेज्ज व मारेज्ज व तं अजीरंतं ॥ १ ॥" इति [ अतिबहुकमतिबहुशः अतिप्रमाणेन भोजनं भुक्तं। हादयेद्वा वमयेद्वा मारयेद्वा तदजीर्यमाणं ॥ १ ॥ ] इदानीमङ्गारदोषमाह—'राएणे'त्यादि उत्तरार्धं, रागेण–अन्नस्य तद्दातुर्वा प्रशंसारूपेणास्वादयन्–अभ्यवहरन् प्रासुकमप्याहारं करोति स्वचारित्रं साङ्गारं, चरणेन्धनस्याङ्गारभूतत्वात्, अयमत्र भावार्थः–इह द्विधा अङ्गाराः–द्रव्यतो भावतश्च, तत्र द्रव्यतः कृशानुदग्धाः खदिरादिवनस्पतिविशेषाः, भावतो रागाग्निना निर्दग्धं चरणेन्धनं, ततो यथा दग्धमिन्धनं धूमे गते सति अङ्गार इत्युच्यते एवमिहापि चरणेन्धनं रागाग्निना निर्दग्धं सदङ्गारक इत्युच्यते, ततश्च भोजनगतविशिष्टगन्धरसास्वादवशेन सञ्जाततद्विषयमूर्च्छस्य सतोऽहो सुमृष्टमहो सुसंभृतमहो स्निग्धं सुपक्वं सुरसं चेत्येवं प्रशंसातः सहाङ्गारेण यद्वर्तते तत्साङ्गारमिति ॥ ७३५ ॥ इदानीं धूमदोषमाह—'भुंजंतो' इत्यादि गाथापूर्वार्धं, द्वेषेण–अन्नस्य तद्दायकस्य वा निन्दात्मकेन अमनोज्ञम्–अमधुरमाहारं भुञ्जानश्चरणं–चारित्रं सधूमकं करोति, निन्दात्मककलुषभावस्वरूपधूमसम्मिश्रत्वात्, अत्राप्ययं भावार्थः–इह द्विविधो धूमस्तद्यथा–द्रव्यतो भावतश्च, तत्र द्रव्यतोऽर्धदग्धानां काष्ठानां सम्बन्धी भावतो द्वेषाग्निना दह्यमानस्य चरणेन्धनस्य सम्बन्धी कलुषभावो निन्दात्मकः, ततो यथाऽङ्गारत्वमप्राप्तं ज्वलदिन्धनं सधूममुच्यते एवं द्वेषाग्निना दह्यमानं चरणेन्धनमपि

सधूमं, ततश्च भोजनगतविरूपरसगन्धास्वादतो जाततद्विपयव्यलीकचित्तस्य सतोऽहो विरूपं कथितमपक्वमसंस्कृतमलवणं चेति निन्दाव- शाद्धूमेन सह यद्वर्तते तत्सधूमं चारित्रमिति ॥ अधुना कारणमाह—'वेयणे'त्याद्युत्तरार्धं, वेदनातङ्कप्रमुखानि पट् कारणानि प्रत्येकं भोजने अभोजने च ज्ञेयानि, पुंस्त्वं च प्राकृतत्वात्, अयमर्थः—वेदनादिभिः पड्भिः कारणैर्भोजनं कुर्वाणः आतङ्कप्रमुखैश्च पड्भिः कारणैर्भोजनमकु- र्वाणस्तीर्थकृदाज्ञां नातिक्रामति पुष्टकारणत्वात्, अन्यथा त्वतिक्रामत्येव रागादिभावादिति ॥ ७३६ ॥ तत्र वेदनादीनि पट् भोजनका- रणानि तावदाह—'वेयण' गाहा, इह पदैकदेशे पदसमुदायोपचारात् सुव्यत्ययाच्च 'वेयण'त्ति क्षुद्वेदनोपशमाय भुञ्जीतेति सर्वत्र क्रिया- सम्बन्धः, बुभुक्षा हि न शक्यते सोढुं बुभुक्षायाः सर्ववेदनातिशायित्वात्, उक्तं च—'छुहासमा वेयणा नत्थि'त्ति [ क्षुधासमा वेदना नास्ति ] तथा वैयावृत्त्यकरणाय, बुभुक्षितो हि गुर्वादीनां न शक्नोति वैयावृत्त्यं कर्तुं, तथा ईर्येति—ईर्यासमितिः सैव निर्जरार्थिभिरर्थ्यमानतया- ऽर्थस्तस्मै, बुभुक्षापीडितस्य हि चक्षुर्भ्यामपश्यतः कथमिव ईर्यासमितिपरिपालनं स्यात्?, तथा संयमार्थाय, क्षुधार्त्तो हि न प्रेक्षोत्प्रेक्षा- प्रमार्जनादिलक्षणं संयमं विधातुमलं अतः संयमाभिवृद्ध्यर्थं, तथा प्राणा—उच्छ्वासादयो बलं वा प्राणास्तेषां तस्य वा वृत्तिः—पालनं तदर्थं प्राणसंधारणार्थमित्यर्थः यद्वा प्राणप्रत्ययं—जीवितनिमित्तं, अविधिना ह्यात्मनोऽपि प्राणोपक्रमे हिंसा स्यात्, अत एवोक्तम्—'भाविय- जिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणंमि परंमि य तो वज्जे पीडमुभओवि ॥ १ ॥' [ भावितजिनवचनानां ममत्व- रहितानां नास्त्येव विशेषः । आत्मनि परस्मिन्नपि च ततो वर्जयेत् पीडामुभययोरपि ॥ १ ॥ ] षष्ठं पुनरिदं कारणं—यदुत 'धर्मचिन्तायै' धर्मचिन्ता—धर्मध्यानचिन्ता श्रुतधर्मचिन्ता वा ग्रन्थपरावर्तनचिन्तनवाचनादिरूपा, इयं ह्युभयरूपाऽपि बुभुक्षाऽऽकुलितचेतसो न स्यादार्त्त- ध्यानसम्भवादिति । इह च यद्यपि वेदनोपशमादीनां शाब्द्या वृत्त्या तदुपलक्षितभोजनफलत्वेन प्रतीतिः तथापि तैर्विना तन्निषेधसूचना-

दार्ढ्या वृत्त्या कारणत्वमेवैषामुपदर्शितं भवति, अत एव षष्ठमित्यत्र कारणमेव सम्बन्धितम् ॥ ७३७ ॥ अथातङ्कादीनि षडेवाभोजनकारणान्याह—'आयंके' गाहा, आतङ्के—ज्वरादौ रोगे समुत्पन्ने सति न भुञ्जीत, उपवासान् कुर्वतो हि प्रायेण ज्वरादयस्त्रुट्यन्ति, उक्तं च—"वलावरोधि निर्दिष्टं, ज्वरादौ लङ्घनं हितम्। ऋतेऽनिलश्रमक्रोधशोककामक्षतज्वरान् ॥ १ ॥" तथोपसर्गे देवमनुष्यतिर्यक्कृते सञ्जाते सति, तितिक्षया हेतुभूतया उपसर्गसहनार्थमित्यर्थः, उपसर्गश्च अनुकूलप्रतिकूलभेदाद् द्विविधः, तत्र मातापितृकलत्रादिस्वजनकृतोऽनुकूलः, ते हि स्नेहादिना प्रव्रज्यामोचनार्थं कदाचिदुपतिष्ठन्ते, तत्रोपसर्गोऽयमिति मत्वा नाश्नीयात्, यतस्तमुपवासान् कुर्वन्तं वीक्ष्य तन्निश्चयावगमनान्मरणादिभयाद्वा मुञ्चन्तीति, प्रतिकूलोपसर्गश्च कुपितराजादिकृतः, तत्रापि न भुञ्जीत, विहितोपवासं हि साधुं समीक्ष्य राजादयोऽपि प्रायेण सञ्जातदया मुञ्चन्तीति, तथा ब्रह्मचर्यगुप्तिषु—ब्रह्मचर्यगुप्तिनिमित्तं मैथुनव्रतसंरक्षणार्थमित्यर्थः, उपवासान् हि विदधतः कामः कामं दूरमपक्रामति, यदुक्तम्—'विषया विनिवर्तन्ते, निराहारस्य देहिनः।' इति, तथा 'पाणिदयातवहेउ'त्ति प्राणिदयाहेतोः—जीवरक्षणार्थं, जलवृष्टौ महिकापाते सचित्तरजःपातादौ प्रभूतसूक्ष्ममण्डूकिकामसिकाकोद्रविकादिसत्त्वसंसक्तायां वा भूमौ प्राणिदयानिमित्तमटनं परिहरन् न भुञ्जीत, तथा तपोहेतोः—तपःकरणनिमित्तं, एकद्वित्र्याद्युपवासकरणेन षण्मासान्तं यावत्तपः कुर्वतो न भोजनसम्भवः, तथा शरीरस्य व्यवच्छेदः—परिहारस्तदर्थं च, इह हि शिष्यनिष्पादनादिसकलकर्तव्यताऽनन्तरं पाश्चात्ये वयसि संलेखनाकरणेन यावज्जीवानशनप्रत्याख्यानकरणयोग्यमात्मानं कृत्वा भोजनं परिहरेत् नान्यथा, शिष्यनिष्पादनाद्यभावे प्रथमे द्वितीये वा वयसि शरीरपरित्यागार्थमनशनप्रत्याख्यानकरणे जिनाज्ञाभङ्गप्रसङ्गात् संलेखनामन्तरेणार्त्तध्यानादिसम्भवाच्च, यदुक्तम्—"देहम्मि असंलिहिए सहसा धाऊर्हि खिज्जमाणाहिं। जायइ अट्टज्झाणं सरीरिणो चरिमसमयम्मि ॥ १ ॥" [ देहेऽसंलिखिते सहसा धातुषु क्षीयमाणेषु ।

जायते आर्त्तध्यानं शरीरिणश्चरमसमये ॥ १ ॥] इत्यादि, कारणत्वभावना चामीषां प्राग्वत् १५ ॥ ७३८ ॥ इदानीं 'पिंडे पाणे य एसणासत्तगं'ति पण्णवतं द्वारमाह—

**संसट्ठ १ मसंसट्ठा २ उद्धड ३ तह अप्पलेविया ४ चेव । उग्गहिया ५ पग्गहिया ६ उज्झियधम्मा ७ य सत्तमिया ॥ ७३९ ॥ तंमि य संसट्ठा हत्थमत्तएहिं इमा पढम भिक्खा १ । तव्विवरीया बीया भिक्खा गिण्हंतयस्स भवे २ ॥ ७४० ॥ नियजोएणं भोयणजायं उद्धरियमुद्धडा भिक्खा ३ । सा अप्पलेविया जा निल्लेवा वल्लचणगाई ४ ॥ ७४१ ॥ भोयणकाले निहिया सरावपमुहेसु होइ उग्गहिया ५ । पग्गहिया जं दाउं भुत्तुं व करेण असणाई ६ ॥ ७४२ ॥ भोयणजायं जं छड्डुणारिहं नेहयंति दुपयाई । अद्धच्चत्तं वा सा उज्झियधम्मा भवे भिक्खा ॥ ७४३ ॥ पाणेसणावि एवं नवरि चउत्थीएँ होइ नाणत्तं । सोवीरायामाई जमलेवाडत्ति समयुत्ती ॥७४४॥**

'संसट्ठे'त्यादिगाथापट्कं, पिण्डः—सिद्धान्तभाषया भक्तमुच्यते तस्य एपणा—ग्रहणप्रकारः पिण्डैपणा, सा च सप्तविधा, तद्यथा—असंसृष्टा १ संसृष्टा २ उद्धृता ३ तथा अल्पलेपिका ४ चैव अवगृहीता ५ प्रगृहीता ६ उज्झितधर्मा च सप्तमिका, अत्र च उत्तरोत्तरस्या अतिविशुद्धत्वात् इत्थं क्रमनिर्देशो द्रष्टव्यः, यत्पुनः सूत्रे संसृष्टायाः पूर्वमुपादानं तद्गाथाभङ्गभयादिति, इह च द्वये साधवो—गच्छान्तर्गता गच्छनिर्गताश्च, तत्र गच्छान्तर्गतानामेताः सप्तापि ग्रहीतुमनुज्ञाताः, गच्छनिर्गतानां पुनराद्ययोर्द्वयोरग्रहः पञ्चस्वभिग्रहः ॥ ७३९ ॥ अथैताः स्वयमेव व्याचष्टे—'तंमी'त्यादिगाथाचतुष्टयम् ,'तंमि'त्ति प्राकृतत्वात्तासु भिक्षासु मध्ये संसृष्टा हस्तमात्रकाभ्यां भवति, कोऽर्थः ?—संसृष्टेन—तक्रतीमनादिना

खरण्टितेन हस्तेन संसृष्टेनैव च मात्रकेण—करोटिकादिना गृह्णतः साधोः संसृष्टा नाम भिक्षा भवति, इयं च द्वितीयाऽपि मूलगाथोक्तक्रमापेक्षया प्रथमा, अत्र च संसृष्टासंसृष्टसावशेषनिरवशेषद्रव्यैरष्टौ भङ्गाः, तेषु चाष्टमो भङ्गः संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यमित्येष गच्छनिर्गतानामपि कल्पते, शेषास्तु भङ्गा गच्छान्तर्गतानां सूत्रार्थहान्यादिकं कारणमाश्रित्य कल्पन्त इति, तथा तद्विपरीता—संसृष्टाख्यभिक्षाविपरीता द्वितीया असंसृष्टा नाम भिक्षा भवति, असंसृष्टेन हस्तेन असंसृष्टेन च मात्रकेण भिक्षां गृह्णतः साधोरसंसृष्टेत्यर्थः, अत्र चासंसृष्टो हस्तोऽसंसृष्टं च मात्रं द्रव्यं पुनः सावशेषं वा स्यान्निरवशेषं वा, तत्र निरवशेषे पश्चात्कर्मदोषः तथापि गच्छस्य बालाद्याकुलत्वात्तन्निषेधो नास्ति अत एव सूत्रे तच्चिन्ता न कृता ॥ तथा निजयोगेन—आत्मव्यापारेणैव भोजनजातं मूलस्थाल्यादेः सकाशादन्यत्र स्थाल्यादावुद्धृतं, तच्च साधोर्गृह्णत उद्धृता तृतीया भिक्षा भवति, तथा सा अल्पलेपिका नाम चतुर्थी भिक्षा या निर्लेपा वल्लचणकादिः, आदिशब्दात्पृथुकादिपरिग्रहः, अत्र चाल्पशब्दोऽभाववाचकः, ततोऽल्पलेपा निर्लेपा नीरसेत्यर्थः, यद्वाऽल्पः—स्तोको लेपः पश्चात्कर्मादिजनितः कर्मसंबन्धो वा यस्यां सा अल्पलेपा, उक्तं च आचाराङ्गे—'अंसि खलु पडिग्गहियंसि अप्पे पच्छाकम्मे अप्पे पज्जवजाए'त्ति अत्र च—पृथुकादिके गृहीतेऽप्यल्पं पश्चात्कर्मादि तथा अल्पं पर्यायजातं, अल्पं तुषादि त्यजनीयमित्यर्थः, तथा भोजनसमये अवगृहीता निहितं—निक्षिप्तं शरावप्रमुखेषु—शरावकांस्यपात्रादिषु भाजनेषु भोक्तुकामस्य ढौकितं यद्भोजनजातं कूरादिकं तद् गृह्णतो यतेरवगृहीता पञ्चमी भिक्षा भवति, अत्र च दात्रा कदाचित्पूर्वमेव उदकेन हस्तो मात्रकं वा धौतं स्यात्ततो यदि परिणतः पाण्यादिपूदकलेपस्तदा कल्पते अन्यथा तु निषेधः, तथा भोजनवेलायां भोक्तुकामाय दातुमभ्युद्यतेन परिवेषकेण पिठरकादेरुद्धृत्य चट्टुकादिना उत्क्षिप्तं परेण च न गृहीतं प्रव्रजिताय दापितं यद्वा भोक्त्रा स्वयं भोक्तुं करेण—निजहस्तेन यद् गृहीतमशनादि तद् गृह्णतो यतेः प्रगृहीता नाम षष्ठी भिक्षा

भवति, तथा यद्भोजनजातममनोज्ञत्वादिना कारणेन परित्यागार्हं अन्ये च द्विपदादयो ब्राह्मणश्रमणातिथिकार्पटिकादयो न ईहन्ते—नावकाङ्क्षन्ति तद् अर्धत्यक्तं वा गृह्णतः साधोरुज्झितधर्मा नाम सप्तमी भिक्षा भवेदिति, आसु च सप्तस्वपि पिण्डैषणासु संसृष्टाद्यष्टभङ्गी भणनीया, नवरं चतुर्थ्यां नानात्वं, तस्या अलेपत्वात्संसृष्टाद्यभाव इति ॥ ७४० ॥ ७४१ ॥ ७४२ ॥ ७४३ ॥ अथ पानैषणासप्तकमाह—'पाणेसणा' गाहा, पानैषणाऽप्येवमेव संसृष्टादिका सप्तविधा ज्ञेया, नवरं—केवलं चतुर्थ्यामल्पलेपायां भवति नानात्वं—भेदः, यदुयस्मात् सौवीरायामादि—काञ्जिकावस्रावणादि आदिशब्दादुष्णोदकतण्डुलोदकादि चालेपकृदिति 'समयोक्तिः' सिद्धान्तभणितिः, शेषं तु ईक्षुरसद्राक्षापानकाम्लिकापानकादि लेपकृत्, तद्धि पीयमानं यतेः कर्मलेपं करोति ९६ ॥ ७४४ ॥ इदानीं 'भिक्खायरियावीहीणमट्ठगं'ति सप्तनवतं द्वारमाह—

उज्जुं १ गंतु पच्चागइया २ गोमुत्तिया ३ पयंगविही ४ । पेडा य ५ अद्धपेडा ६ अब्भिंतर ७ बाहिसंबुक्का ८ ॥ ७४५ ॥ ठाणा उज्जुगईए भिक्खंतो जाइ वलइ अनडंतो । पढमाए १ बीयाए पविसिय निस्सरइ भिक्खंतो २ ॥ ७४६ ॥ वामाओ दाहिणगिहे भिक्खिज्जइ दाहिणाओ वामंमि । जीए सा गोमुत्ती ३ अड्डवियड्डा पयंगविही ४ ॥ ७४७ ॥ चउदिसि सेणीभमणे मज्झे मुक्कंमि भन्नए पेडा ५ । दिसिदुगसंबद्धस्सेणिभिक्खणे अद्धपेडत्ति ६ ॥ ७४८ ॥ अब्भिंतरसंबुक्का जीए भमिरो बहिं विणिस्सरइ ७ । बहिसंबुक्का भन्नइ एयं विवरीयभिक्खाए ८ ॥ ७४९ ॥

'उज्जु'मित्यादिगाथापंचकं, भिक्षाचर्याविषया वीथयो—मार्गविशेषा भिक्षाचर्यावीथयः, ताश्च अष्टौ यथा—ऋज्वी १ गत्वा प्रत्यागतिः २

गोमूत्रिका ३ पतङ्गवीथिः ४ पेटा ५ अर्धपेटा ६ 'अब्भिंतरबाहिसंबुक्क'त्ति शम्बूकशब्दस्य प्रत्येकमभिसम्बन्धादभ्यन्तरशम्बूका ७ बहिःशम्बूका ८ च ॥ ७४५ ॥ तत्रैताः क्रमेण व्याचष्टे—'ठाणे'त्यादि, प्रथमायां वीथ्यां कश्चिद्यतिः स्वस्थानात्—निजवसतेः ऋजुगत्या—प्राञ्जलपथेन समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षां भ्रमन् याति यावत्पङ्क्तेश्चरमं गृहं ततोऽनटन्—भिक्षामगृह्णन् ऋजुगत्या तथैव वलति—निवर्तते, द्वितीयायां—गत्वाप्रत्यागतिकायां भ्रमन्—भिक्षां गृह्णन् समस्थितगृहपङ्क्तौ प्रविश्य द्वितीयपङ्क्तौ भिक्षमाण एव निःसरति—प्रत्यागच्छति, कोऽर्थः ?—उपाश्रयान्निर्गतः सन्नेकस्यां गृहपङ्क्तौ भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयायां गृहपङ्क्तौ यस्यां भिक्षते सा गत्वाप्रत्यागतिका, गत्वा प्रत्यागतिर्यस्यामिति च विग्रहः, अन्ये तु ऋज्वीविपर्ययेण गत्वाप्रत्यागतिकां व्याख्यानयन्तीति, तथा वामाद्—वामगृहाद्दक्षिणगृहे दक्षिणगृहाच्च वामगृहे यस्यां भिक्षते सा गोमूत्रिका, गोः—बलीवर्दस्तस्य मूत्रणं गोमूत्रिका तद्वद्या सा तथा, इयं हि परस्पराभिमुखगृहपङ्क्त्योरेकस्यां गत्वा पुनरितरस्यां पुनस्तस्यां पुनरितरस्यां पुनस्तस्यामेवेत्येवं क्रमेण भावनीया, तथा अदंवितदं—अनियता भिक्षा 'पतङ्गवीथिः' पतङ्गः—शलभस्तस्य वीथिका—मार्गस्तद्वद्या सा तथा, पतङ्गगतिर्हि अनियतक्रमा भवति एवं या अनाश्रितक्रमा सा पतङ्गवीथिकेति, तथा पेटा—वंशदलमयं वस्त्रादिस्थानं जनप्रतीतं, सा च चतुरस्रा भवति, ततश्च साधुरभिग्रहविशेषाद्यस्यां चर्यायां ग्रामादिक्षेत्रं पेटावच्चतुरस्रं विभज्य मध्यवर्तीनि च गृहाणि मुक्त्वा चतसृष्वपि दिक्षु समश्रेण्या भिक्षां भ्रमति सा पेटेति भण्यते, तथा दिग्द्वयसम्बद्धयोर्गृहश्रेण्योर्भिक्षणेऽर्धपेटेति, पेटार्धसमानसंस्थानगृहश्रेणिभिक्षणेऽर्धपेटेति भावः, तथा शम्बूकः—शङ्खस्तद्वत् शङ्खभ्रमिवदित्यर्थः या वीथिः सा शम्बूका, इयं च द्वेधा—अभ्यन्तरशम्बूका बहिःशम्बूका च, तत्र यस्यां क्षेत्रमध्यभागात् शङ्खवृत्तत्वगत्या भिक्षां भ्रमन् बहिर्विनिःसरति—क्षेत्रबहिर्भागमागच्छति सा अभ्यन्तरशम्बूका, तथा बहिःशम्बूका भण्यते एतस्या—अभ्यन्तरशम्बूकाया विपरीतभिक्षया—

विपरीतमिक्षणेन, यस्यां वहिर्भागात्तथैव मिक्षामटन् मध्यभागमायाति सा वहिःशम्बूकेति भावः, उक्तं च—'अब्भितरसंबुका वाहिरसंबुक्का य, तत्थ अब्भितरसंबुक्काए संखनामिखेत्तोवमाए आगिइए अंतो आढवइ वाहिरओ संनियट्टइ, इयरीए विवज्जओ"त्ति अन्ये तु अभ्यन्तरशम्बूकावहिःशम्बूकयोः परस्परं लक्षणविपर्ययमाहुः, पञ्चाशकवृत्तौ तु "शम्बूकावृत्ता—शङ्खवद्वृत्ततागमनं, सा च द्विविधा—प्रदक्षिणतोऽप्रदक्षिणतश्चे"त्युक्तं, इह च गत्वाप्रत्यागतिकायां ऋज्व्याः प्रक्षेपात् शम्बूकाया एकत्वविवक्षणाच्च षडेव वीथयो ग्रन्थान्तरे प्रतिपादिता इति १७ ॥ ७४९ ॥ [ इति प्रथमखण्डमेकगाथासहितं ९ सहस्ररूपं ] इदानीं 'दस पायच्छित्ताइं'ति अष्टनवतं द्वारमाह—

आलोयण १ पडिक्कमणे २ मीस ३ विवेगे ४ तहा विउस्सग्गे ५। तव ६ च्छेय ७ मूल ८ अणवट्ठिया य ९ पारंचिए चेव १० ॥ ७५० ॥ आलोइज्जइ गुरुणो पुरओ कज्जेण हत्थसयगमणे १। समिइपमुहाण मिच्छाकरणे कीरइ पडिक्कमणं २ ॥ ७५१ ॥ सद्दाइएसु रागाइविरयणं साहिउं गुरूण पुरो। दिज्जइ मिच्छादुक्कडमेयं मीसं तु पच्छित्तं ३ ॥ ७५२ ॥ कज्जो अणेसणिज्जे गहिए असणाइए परिच्चाओ ४। कीरइ काउस्सग्गो दिट्ठे दुस्सविणपमुहंमि ५ ॥ ७५३ ॥ निव्विगयाई दिज्जइ पुढवाइविघट्टणे तवविसेसो ६। तवदुद्दमस्स मुणिणो किज्जइ पज्जायवुच्छेओ ७ ॥ ७५४ ॥ पाणाइवायपमुहे पुणव्वयारोवणं विहेयव्वं ८। ठाविज्जइ नवि एसुं कराइघायप्पदुट्ठमणो ९॥ ७५५ ॥ पारंचियमावज्जइ सलिंगनिवभारियाइसेवाहिं। अवत्तलिंगधरणे वारसवरिसाइं सूरीणं १० ॥ ७५६ ॥ नवरं दसमावत्तीएँ नवममज्झावयाण पच्छित्तं। छम्मासे जाव तयं जहन्नमुक्कोसओ

**वरिसं ॥ ७५७ ॥ दस ता अणुसज्जंती जा चउद्दसपुवि पढमसंघयणी । तेण परं मूलंतं दुप्पसहो जाव चारित्ती ॥ ७५८ ॥**

'आलोये'त्यादिगाथानवकं, आङ्—मर्यादायां सा च मर्यादा इयं—'जह बालो जंपंतो कज्जमकज्जं च उज्जुअं भणइ। तं तह आलोएज्जा मायामयविप्पमुक्को य ॥ १ ॥' [यथा बालो जल्पन् कार्यमकार्यं च ऋजुकं भणति । तथा तदालोचयेत् मायामदविप्रमुक्तश्च ॥ १ ॥] अनया मर्यादया 'लोचृ दर्शने' चुरादित्वात् णिच् लोचनं लोचना—प्रकटीकरणं आलोचना, गुरोः पुरतो वचसा प्रकाशनमिति भावः, यत्प्रायश्चित्तमालोचनामात्रेण शुद्ध्यति तदालोचनार्हतया कारणे कार्योपचारादालोचना १, तथा प्रतिक्रमणं—दोषात्प्रतिनिवर्तनं अपुनःकरणतया मिथ्यादुष्कृतप्रदानमित्यर्थः तदर्हं प्रायश्चित्तमपि प्रतिक्रमणं, किमुक्तं भवति ?—यत् प्रायश्चित्तं मिथ्यादुष्कृतमात्रेणैव शुद्धिमासादयति न च गुरुसमक्षमालोच्यते, यथा सहसाऽनुपयोगतः श्लेष्मादिप्रक्षेपादुपजातं प्रायश्चित्तं, तथाहि—सहसाऽनुपयुक्तेन यदि श्लेष्मादि प्रक्षिप्तं भवति न च हिंसादिकं दोषमापन्नस्तर्हि गुरुसमक्षमालोचनामन्तरेणापि मिथ्यादुष्कृतप्रदानमात्रेण स शुद्ध्यति तत्प्रतिक्रमणार्हत्वात्प्रतिक्रमणं २, यस्मिन् पुनः प्रतिसेविते प्रायश्चित्ते यदि गुरुसमक्षमालोचयति आलोच्य गुरुसन्दिष्टः प्रतिक्रामति पश्चाच्च मिथ्यादुष्कृतमिति ब्रूते तदा शुद्ध्यति तदालोचनाप्रतिक्रमणलक्षणोभयार्हत्वान्मिश्रं ३, तथा विवेकः—परित्यागः, यत्प्रायश्चित्तं विवेक एव कृते शुद्धिमासादयति नान्यथा, यथा आधाकर्मणि गृहीते, तद्विवेकार्हत्वाद्विवेकः ४, तथा व्युत्सर्गः—कायचेष्टानिरोधः, यद् व्युत्सर्गेण—कायचेष्टानिरोधोपयोगमात्रेण शुद्ध्यति प्रायश्चित्तं यथा दुःस्वप्नजनितं तत् व्युत्सर्गार्हत्वाद् व्युत्सर्गः ५, 'तवे'त्ति यस्मिन् प्रतिसेविते निर्विकृतिकादिषण्मासान्तं तपो दीयते तत्तपोऽर्हत्वात्तपः ६, यस्मिन् पुनरापतिते प्रायश्चित्ते सन्दूषितपूर्वपर्यायदेशावच्छेदः शेषपर्यायरक्षानिमित्तं दुष्टव्याधिसंदूषितशरीरैकदेशच्छे-

दनमिव शेषशरीरावयवपरिपालनाय क्रियते तच्छेदार्हत्वाच्छेदः ७, 'मूल'त्ति यस्मिन् समापतिते प्रायश्चित्ते निरवशेषपर्यायोच्छेदमाधाय भूयो महाव्रतारोपणं तन्मूलार्हत्वान्मूलं ८, येन पुनः प्रतिसेवितेन उत्थापनाया अप्ययोग्यः सन् कञ्चित्कालं न व्रतेषु स्थाप्यते यावन्नाद्यापि प्रतिविशिष्टं तपश्चीर्णं भवति पश्चाच्च चीर्णतपास्तद्दोषोपरतौ व्रतेषु स्थाप्यते तदनवस्थार्हत्वादनवस्थितप्रायश्चित्तं, यद्वा यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिङ्गे वा स्थाप्यते इत्यनवस्थाप्यः तस्य भावोऽनवस्थाप्यता ९, 'पारंचिए चेव'त्ति 'अंचू गतौ' यस्मिन् प्रतिसेविते लिङ्गक्षेत्रकालतपसां पारमञ्चति तत्पाराञ्चितं, पाराञ्चितमर्हति 'तदर्हती'ति (पा०५-१-६३) सूत्रेण डः पाराञ्चितं, यद्वा पारं-अन्तं प्रायश्चित्तानां तत उत्कृष्टतरप्रायश्चित्ताभावादपराधानां वा पारमञ्चति-गच्छतीत्येवंशीलं पाराञ्चि तदेव पाराञ्चिकमिति १० ॥ ७५० ॥ अथैतानि स्वयमेव व्याचष्टे—'आलोज्जइ' इत्यादिगाथाषट्कम्, कार्येण-अवश्यकरणीयेन भिक्षाग्रहणादिना हस्तशतात्परतः-ऊर्द्ध्वं यद्गमनमुपलक्षणत्वादागमनादि च तदालोचर्हस्य गुरोः पुरत आलोच्यते-वचसा प्रकटीक्रियते, इयमत्र भावना-गुरुमापृच्छ्य गुरुणाऽनुज्ञातः सन् स्वयोग्यभिक्षावस्त्रपात्रशय्यासंस्तारकपादप्रोञ्छनादि यदिवा आचार्योपाध्यायस्थविरबालग्लानशैक्षकक्षपकासमर्थप्रायोग्यवस्त्रपात्रभक्तपानौषधादि गृहीत्वा समागतो यद्वा उच्चारभूमेर्विहाराद्वा समागतः अथवा चैत्यवन्दननिमित्तं पूर्वगृहीतपीठफलकादिप्रत्यर्पणनिमित्तं वा बहुश्रुतापूर्वसंविग्नानां वंदनप्रत्ययं वा संशयव्यवच्छेदाय वा श्राद्धस्वज्ञात्यवसन्नविहाराणां श्रद्धावृद्ध्यर्थं वा साधर्मिकाणां वा संयमोत्साहनिमित्तं हस्तशतात्परं दूरमासन्नं वा गत्वा समागतो यथाविधि गुरुसमक्षमालोचयतीति, इयं चालोचना गमनागमनादिष्ववश्यकर्तव्येषु सम्यगुपयुक्तस्यादुष्टभावतया निरतिचारस्य छद्मस्थस्याप्रमत्तस्य यतेर्द्रष्टव्या, सातिचारस्य तूपरितनप्रायश्चित्तसम्भवात्, केवलज्ञानिनश्च कृतकृत्यत्वेनालोचनाया अयोगात्, आह-यानि नामावश्यकर्तव्यानि गमनादीनि

तेपु सम्यगुपयुक्तस्यादुष्टभावतया निरतिचारस्य छद्मस्थस्याप्रमत्तस्य किमालोचनया ?, तामन्तरेणापि तस्य शुद्धत्वात्, यथासूत्रं प्रवृत्तेः, सत्यमेतत्, केवलं याश्चेष्टानिमित्ताः सूक्ष्मप्रमादनिमित्ता वा सूक्ष्मा आश्रवक्रियास्ता आलोचनामात्रेण शुद्ध्यन्तीति तच्छुद्धिनिमित्तमालोचना १। तथा समितिप्रमुखाणां सहसाकारतोऽनाभोगतो वा कथमपि प्रमादे सति मिथ्याकरणे—अन्यथाकरणे प्रतिक्रमणं—मिथ्यादुष्कृतप्रदान-लक्षणं प्रायश्चित्तं क्रियते, तत्र समितयः पञ्च, तद्यथा—ईर्यासमितिर्भाषासमितिरेषणासमितिरादानभाण्डमात्रनिक्षेपणासमितिरुच्चारप्रश्र-वणखेलसिङ्घानजल्लपारिष्ठापनिकासमितिश्च, प्रमुखग्रहणाद्गुप्त्यादिपरिग्रहः, गुप्तयश्च तिस्रस्तद्यथा—मनोगुप्तिर्वचनगुप्तिः कायगुप्तिश्च, इयमत्र भावना—सहसाकारतोऽनाभोगतो वा ईर्यायां यदि कथां कथयन् व्रजेत् भाषायामपि यदि गृहस्थभाषया ढड्ढरस्वरेण वा भाषेत एषणायां भक्तपानगवेषणवेलायामनुपयुक्तो भाण्डोपकरणस्यादाने निक्षेपे वा अप्रमार्जयिता अप्रत्युपेक्षिते स्थण्डिले उच्चारादीनां परिष्ठापयिता न च हिंसादोषमापन्नः तथा यदि मनसा दुश्चिन्तितं स्यात् वचसा दुर्भाषितं कायेन दुश्चेष्टितं तथा यदि कन्दर्पो वा हासो वा स्त्रीभक्तचौ-रजनपदकथा वा तथा क्रोधमानमायालोभेषु गमनं विषयेषु वा शब्दरूपरसगन्धस्पर्शलक्षणेष्वभिष्वङ्गः सहसाऽनाभोगतो वा कृतः स्या-त्तत एतेपु सर्वेपु स्थानेपु आचार्यादिषु च मनसा प्रद्वेषादिकरणे वाचा अन्तरभाषादिकृतौ कायेन पुरोगमनादौ तथा इच्छामिथ्यातथाकारा-दिप्रशस्तयोगाकरणे च मिथ्यादुष्कृतप्रदानलक्षणं प्रायश्चित्तमिति २। तथा शब्दादिपु—शब्दरूपप्रभृतिष्विष्टानिष्टविषयेपु 'रागादिविरचनं' रागस्य—अभिष्वङ्गलक्षणस्य आदिग्रहणाद् द्वेषस्य—अप्रीतिलक्षणस्य मनोमात्रेण करणं गुरूणां पुरतः 'साहिउं'ति कथयित्वा यद्दीयते मि-थ्यादुष्कृतमेतत्प्रायश्चित्तं मिश्रमिति भणितं, इयमत्र भावना—नानाप्रकारान् शब्दादीन् विषयान् इन्द्रियविषयीभूताननुभूय कस्यचिदेवं संशयः स्याद् यथा शब्दादिषु विषयेषु रागद्वेषौ गतो वा न वेति, ततस्तस्मिन् संशयविषये मिश्रं—पूर्वं गुरूणां पुरत आलोचनं तदनन्तरं

गुरुसमादेशेन मिथ्यादुष्कृतदानमित्येवंरूपं प्रायश्चित्तं भावतः प्रतिपद्यते, यदि हि निश्चितं भवति यथा अमुकेषु शब्दादिषु विषयेषु रागं द्वेषं वा गत इति, तत्र तपोऽर्हं प्रायश्चित्तं, अथैवं निश्चयो—न गतो रागं द्वेषं वा, तत्र स शुद्ध एव न प्रायश्चित्तविषयः ३। तथाऽनेषणीये—अशुद्धे अशनादिके—अशनपानखादिमस्वादिमरूपे सकलौघिकौपग्रहिकलक्षणे च वस्तुनि गृहीते सति परित्यागः कार्यः, इदमुक्तं भवति—सम्यगुपयुक्तेन केनापि साधुना भक्तपानादिकं गृहीतं पश्चात्कथमप्यप्रासुकमनेषणीयं वा ज्ञातं तत्र प्रायश्चित्तं तस्य गृहीतस्य भक्तपानादेः परित्यागः, उपलक्षणमेतत् तेन एतदपि द्रष्टव्यं—अशठभावेन गिरिराहुमेघमहिकारजःसमावृते सवितरि उद्गतबुद्ध्या अनस्तमितबुद्ध्या वा गृहीतमशनादिकं पश्चाद् ज्ञातमनुद्गते अस्तमिते वा सूर्ये गृहीतं तथा प्रथमपौरुष्यां गृहीत्वा चतुर्थीमपि पौरुषीं यावद् धृतमशनादि शठभावेनाशठभावेन वा अर्धयोजनातिक्रमणेन नीतमानीतं वाऽशनादि तत्र विवेक एव प्रायश्चित्तमिति, शठाशठयोश्चेदं लक्षणं —इन्द्रियविकथामायाक्रीडादिभिः कुर्वन् शठः ग्लानसागारिकास्थण्डिलभयादिकारणतोऽशठः ४, तथा दुःस्वप्नप्रमुखे दृष्टे सति तद्विशोधनाय क्रियते कायोत्सर्गः, तत्र दुःस्वप्नः—प्राणातिपातादिसावद्यबहुलः, प्रमुखग्रहणाद्गमनागमननौसंतरणादिपरिग्रहः, एतेषु विषये कायोत्सर्गलक्षणं प्रायश्चित्तमिति भावः, उक्तं च—"गमणागमणवियारे सुत्ते वा सुमिणदंसणे राओ। नावा नइसंतारे पायच्छित्तं विउस्सग्गो॥ १॥" [ गमनागमनयोर्विचारे सूत्रे वा स्वप्नदर्शने रात्रौ। नावा नदीसंतरणे प्रायश्चित्तं व्युत्सर्गः॥ १॥ ] अत्र 'सुत्ते व'त्ति सूत्रे —सूत्रविषयेषु उद्देशसमुद्देशानुज्ञाप्रस्थापनप्रतिक्रमणश्रुतस्कन्धाङ्गपरिवर्तनादिष्वविधिसमाचरणपरिहाराय प्रायश्चित्तं कायोत्सर्गः ५। वा समुच्चये, तथा पृथिव्यादिविघट्टने—सचित्तपृथिवीकायादिसङ्घट्टने निर्विकृतिकादिकः षण्मासावसानस्तपोविशेषो दीयते छेदग्रन्थानुसारेण जीतकल्पानुसारेण वा, एतत्तपोलक्षणं प्रायश्चित्तमिति ६। तथा तपसा दुर्दमस्य—विशोधयितुमशक्यस्य मुनेः क्रियते पर्यायव्यवच्छेदः

महाव्रतारोपणकालादारभ्य अहोरात्रपञ्चकादिना क्रमेण श्रामण्यपर्यायच्छेदनं, तत्र तपोदुर्दमो यः पण्मासक्षपकोऽन्यो वा विकृष्टतपः- करणसमर्थस्तपसा गर्वितो भवति यथा किं ममानेन प्रभूतेनापि तपसा क्रियते ? इति तपःकरणासमर्थो वा ग्लानासहबालवृद्धादिः तथा- विधतपःश्रद्धानरहितो वा निष्कारणतोऽपवादरुचिर्वेति ७। तथा प्राणातिपातप्रमुखे—प्राणिवधमृपावादादिकेऽपराधे सङ्कल्प्य कृते पुनर्व्रता- रोपणं—भूयोऽपि व्रतस्थापनं विधातव्यं, अयमर्थः—आकुट्या पञ्चेन्द्रियजीववधे विहिते दर्पेण मैथुने सेविते मृषावादादत्तादानपरिग्रहेषु च उत्कृष्टेपु प्रतिसेवितेपु आकुट्या पुनः पुनः सेवितेपु वा मूलाभिधानमेतत्प्रायश्चित्तं भवतीति ८। तथा करादिभिः—मुष्टियष्टिप्रभृतिभिर्घातो- मरणनिरपेक्षतया आत्मनः परस्य वा स्वपक्षगतस्य परपक्षगतस्य वा घोरपरिणामतः प्रहरणं तेन प्रदुष्टमना—अतिसङ्क्लिष्टचित्ताध्यवसायो न व्रतेपु स्थाप्यते यावदुचितं तपो न कृतं स्यात्, उचितं च तपःकर्म उत्थाननिपदनाद्यशक्तिपर्यन्तं, स हि यदा उत्थानाद्यपि कर्तुमश- क्तस्तदा अन्यान् प्रार्थयते—आर्या! उत्थातुमिच्छामीत्यादि, ते तु तेन सह सम्भापणमकुर्वाणास्तत्कृत्यं कुर्वन्ति, एतावति तपसि कृते तस्योत्थापना क्रियत इति ९। तथा पाराञ्चिकं नाम दशमं प्रायश्चित्तमापद्यते स्वलिङ्गिनीनृपभार्यादिसेवाभिः, आदिशब्दाल्लिङ्गिघातरा- जवधादिपरिग्रहः, एतच्च अव्यक्तलिङ्गधारिणां जिनकल्पिकप्रतिरूपाणां क्षेत्राद्बहिःस्थितानां सुविपुलं तपः कुर्वतां महासत्त्वानां सूरीणां— आचार्याणामेव जघन्यतः पण्मासान् उत्कृष्टतो द्वादश वर्पाणि यावद्भवति, ततश्च—अतिचारपारगमनानन्तरं प्रव्राज्यते नान्यथेति १० ॥ ७५१॥७५२॥७५३॥७५४॥७५५॥७५६ ॥ अथात्रैव विशेपमाह—'नवर'मित्यादिगाथात्रयं, नवरं—केवलं दशमप्रायश्चित्तापत्तावपि सत्यां नवममेव—अनवस्थाप्यलक्षणं प्रायश्चित्तमध्यापकानां—उपाध्यायानां भवति, अयमर्थः—येपु येष्वपराधेषु पाराञ्चिकमापद्यते तेपु तेष्वपि बहुशः समासेवितेपु उपाध्यायस्यानवस्थाप्यमेव प्रायश्चित्तं भवति, न तु पाराञ्चिकं, उपाध्यायस्यानवस्थाप्यपर्यन्तस्यैव प्रायश्चित्तस्य

प्रतिपादनात्, एवं सामान्यसाधूनामप्यनवस्थाप्यपाराञ्चिकयोग्येष्वपराधेषु सत्सु मूलपर्यन्तमेव प्रायश्चित्तमवगन्तव्यं, तत्रानवस्थाप्यं जघन्यतः षण्मासान् यावद्भवति उत्कृष्टतस्तु वर्षमिति, इदं च आशातनानवस्थाप्यमाश्रित्योक्तं, प्रतिसेवनानवस्थाप्यापेक्षया तु जघन्यतो वर्षमुत्कृष्टतो द्वादश वर्षाणि, उक्तं च—"तत्थ आसायणाअणवट्ठप्पो जहन्नेणं छम्मासा उक्कोसेणं संवच्छरं, पडिसेवणाअणवट्ठप्पो जहन्नेणं बारस मासा उक्कोसेणं बारस संवच्छराणि"त्ति, तत्र तीर्थकरप्रवचनगणधराद्यधिक्षेपकारी आशातनानवस्थाप्यः, हस्तताडनसाधर्मिकान्यधार्मिकस्तैन्यकारी तु प्रतिसेवनानवस्थाप्यः। नन्वेतानि दशापि प्रायश्चित्तानि यावत्तीर्थं तावद्भवन्ति ? उत नेत्याह—'दस ता' गाहा, यावच्चतुर्दशपूर्वी प्रथमसंहननी च तावद्दश प्रायश्चित्तानि अनुपजन्ति—अनुवर्तन्ते, एतौ च चतुर्दशपूर्विप्रथमसंहनिनौ युगपदेव व्यवच्छिन्नौ, तयोश्च व्युच्छिन्नयोरनवस्थाप्यं पाराञ्चितं च व्यवच्छिन्नं, ततः परेण—अनवस्थाप्यपाराञ्चितव्यवच्छेदादनन्तरमालोचनादि मूलान्तमष्टविधं प्रायश्चित्तं तावदनुवर्तमानं बोद्धव्यं यावद् दुष्प्रसभनामा सूरिः, तस्मिंश्च कालगते तीर्थं चारित्रं च व्यवच्छेदमुपयास्यतीति ९८ ॥ ७५८ ॥ इदानीं 'ओहम्मि पयविभागम्मि सामायारीदुगं'ति नवनवतं शततमं द्वारमाह—

**सामायारी ओहंमि ओहनिज्जुत्तिजंपियं सव्वं। सा पयविभागसामायारी जा छेयगंथुत्ता ॥ ७५९ ॥**

समाचरणं समाचारः—शिष्टजनाचरितः क्रियाकलापः समाचार एव सामाचार्यं, भेषजादित्वात् स्वार्थे ष्यञ् (पा० ५-४-२३) स्त्रीविवक्षायां 'षिद्गौरादिभ्यश्चे'ति (पा० ४-१-४१) ङीप्, 'यस्ये' (यस्येति च पा० ६-४-१४८) त्यकारलोपः, यस्य हल (पा० ६-४-४९) इत्यनेन तद्धितयकारलोपः, परगमनं सामाचारी, सा त्रिधा भवति—ओघसामाचारी दशधासामाचारी पदविभागसामाचारी च, तत्र ओघः—सामान्यं तद्विषया सामाचारी—सामान्यतः सङ्क्षेपाभिधानरूपा सा च ओघनिर्युक्तिज-

लिखतं सर्वं ज्ञेयं, तत्र हि व्रतिनामोघतः सर्वसमाचारः प्रत्युपेक्षणादिकः कथ्यते इति, तथा सा पदविभागसामाचारी या छेदग्रन्थेषु- जीतकल्पनिशीथादिपूक्तेति, इह च साम्प्रतकालप्रव्रजितानां तथाविधश्रुतपरिज्ञानशक्तिविकलानामायुष्कादिह्रासमपेक्ष्य ओघसामाचारी नवमात्पूर्वात् तृतीयाद्वस्तुन आचारामिधानात् तत्रापि विंशतितमात्प्राभृतात् तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढा, पदविभागसामाचार्यपि नवमपूर्वादेव निर्व्यूढेति ९९–१०० ॥ ७५९ ॥ इदानीमेकशततमं 'चक्कवालसामायारी'त्ति द्वारमाह—

इच्छा १ मिच्छा २ तहक्कारो ३, आवस्सिया य ४ निसीहिया ५। आपुच्छणा य ६ पडिपुच्छा ७, छंदणा य ८ निमंतणा ९ ॥ ७६० ॥ उवसंपया य १० काले, सामायारी भवे दसविहा उ। एएसिं तु पयाणं, पत्तेयपरूवणं वोच्छं ॥७६१ ॥ जइ अब्भत्थिज्ज परं कारणजाए करेज्ज से कोई। तत्थ य इच्छाकारो न कप्पइ बलाभिओगो उ १ ॥ ७६२ ॥ संजमजोए अब्भुट्ठियस्स जं किंपि वितहमायरियं। मिच्छा एयंति वियाणिऊण मिच्छत्ति कायवं २ ॥ ७६३ ॥ कप्पाकप्पे परिनिट्ठियस्स ठाणेसु पंचसु ठियस्स। संयमतवड्ढगस्स उ अविकप्पेणं तहक्कारो ३ ॥७६४॥ आवस्सिया विहेया अवस्सगंतव्वकारणे मुणिणो ४। तम्मि निसीहिया जत्थ सेज्जठाणाइ आयरइ ५॥ ७६५ ॥ आपुच्छणा उ कज्जे ६ पुव्वनिसिद्धेण होइ पडिपुच्छा ७। पुव्वगहिएण छंदण ८ निमंतणा होअगहिएणं ९ ॥ ७६६ ॥ उवसंपया य तिविहा नाणे तह दंसणे चरित्ते य १०। एसा हु दसपयारा सामायारी तहऽन्ना य ॥ ७६७ ॥

'इच्छे'त्यादिगाथाष्टकं, एषणमिच्छा करणं–कारः, कारशब्दः प्रत्येकमभिसम्बध्यते, इच्छया–बलाभियोगमन्तरेण करणं इच्छाकारः, तथा च इच्छाकारेण ममेदं कुर्विति, किमुक्तं भवति?–इच्छाक्रियया न बलाभियोगपूर्विकया ममेदं कुर्विति, तथा मिथ्या वितथमनृतमिति पर्यायाः, मिथ्याकरणं मिथ्याकारो मिथ्याक्रियेत्यर्थः, तथा संयमयोगवितथाचरणे विदितजिनवचनसाराः साधवस्तत्क्रियाया वैतथ्य-प्रदर्शनाय मिथ्याकारं विदधते मिथ्याक्रियेयमिति, तथाकरणं तथाकारः, स च सूत्रप्रश्नादिगोचरो यथा भवद्भिरुक्तं तथैवेदमित्येवंस्वरूपः, तथा अवश्यं अवश्यशब्दोऽकारान्तोऽप्यस्ति ततोऽवश्यस्य–अवश्यं कर्तव्यस्य क्रिया आवश्यिकी, चः समुच्चये, तथा निषेधेन–असंवृतगात्रचेष्टानिवारणेन निर्वृत्ता तत्प्रयोजना वा या शय्यादिप्रवेशनक्रिया सा नैषेधिकी, तथा आपृच्छनमापृच्छा, सा विहारभूमिगमनादिषु प्रयोजनेषु गुरोः करणीया, चः पूर्ववत्, तथा प्रतिपृच्छा–प्रतिप्रश्नः, सा च प्रागनियुक्तेनापि करणकाले कार्या निषिद्धेन वा प्रयोजनतः कर्तुकामेनेति, तथा छंदना–पूर्वगृहीतेनाशनादिना आमन्त्रणा विधेया, तथा निमन्त्रणा अगृहीतेनैवाशनादिना अहं भवदर्थमशनाद्यान-यामीत्येवंरूपा, तथोपसम्पच्च विविना देया, इयं काले–कालविषये सामाचारी भवेद् दशविधा, एवं तावत्समासत उक्ता, सम्प्रति प्रपञ्चतः प्रतिपदमभिधित्सुरिदमाह–एतेषां पदानां तुर्विशेषणे विषयप्रदर्शनेन प्रत्येकं पृथक्पृथक्प्ररूपणां वक्ष्ये–कथयिष्यामि ॥ ७६० ॥ ७६१ ॥ तत्रेच्छाकारो येष्वर्थेषु क्रियते तत्प्रदर्शनार्थमाह—'जई'त्यादि, यदीत्यभ्युपगमे अन्यथा साधूनामकारणे अभ्यर्थनैव न कल्पते, ततश्च यदि अभ्यर्थयेत्परं–अन्यं साधुं ग्लानादौ कारणजाते समुत्पन्ने सति, ततस्तेनाभ्यर्थयमानेन इच्छाकारः प्रयोक्तव्यः, यदिवा अनभ्यर्थितोऽपि कोऽप्यन्यः साधुः 'से'त्ति तस्य कर्तुकामस्य कस्यचित्साधोः कारणजाते कुर्यात्, तत्रापि तेनानभ्यर्थितेन साधुना तस्य चिकीर्षितं कर्तुकामेन इच्छाकारः प्रयोक्तव्यः, इह विरलाः केचिदनभ्यर्थिता एव परकार्यकर्तार इति कोऽपीतिग्रहणं, अथ कस्मादिच्छा-

कारप्रयोगः क्रियते ?, उच्यते, वलाभियोगो मा भूदिति हेतोः, तथा चाह—यतो न कल्पते वलाभियोगः साधूनां, तत इच्छाकारप्रयोगः
कर्तव्यः, तुशब्दः कचिद्वलाभियोगोऽपि कल्पते इति सूचनार्थः ॥ ७६२ ॥ सम्प्रति मिथ्याकारविषयप्रतिपादनार्थमाह—'संजमजोए'
गाहा, संयमयोगः—समितिगुप्तिरूपः तस्मिन् विषयेऽभ्युत्थितस्य सतो यत्किञ्चिद्वितथं—अन्यथाऽऽचरितं—आसेवितं भूतमिति शेषः,
मिथ्या विपरीतमेतदिति विज्ञाय, किं ?—मिथ्येति कर्तव्यं—तद्विषये मिथ्यादुष्कृतं दातव्यमित्यर्थः, संयमयोगविषयायां च प्रवृत्तौ
वितथासेवने मिथ्यादुष्कृतं दोषापनयनाय समर्थं न तूपेत्यकरणविषयायां नाप्यसकृत्करणगोचरायामिति ॥ ७६३ ॥ इदानीं तथाकारो
यस्य दीयते तत्प्रतिपिपादयिषुराह—'कप्पाकप्पे' गाहा, कल्पो विधिराचार इति पर्यायाः कल्पविपरीतस्त्वकल्पो जिनस्थविरकल्पादिर्वा
कल्पः चरकसुगतादिदीक्षा पुनरकल्प इति, कल्पश्चाकल्पश्च कल्पाकल्पमित्येकवद्भावः तस्मिन् परि—समन्तान्निष्ठितः परिनिष्ठितो
ज्ञाननिष्ठां प्राप्तस्तस्य, अनेन च ज्ञानसम्पदुक्ता, तथा तिष्ठंति मुमुक्षवो येषु तानि स्थानानि—महाव्रतानि तेषु पञ्चसु—पञ्चसङ्ख्येषु
स्थितस्य—आश्रितस्य, अनेन च मूलगुणसम्पत्तिरुक्ता, तथा संयमः—प्रत्युपेक्षोत्प्रेक्षादिः तपश्च—अनशनादि ताभ्यामाढ्यस्य—सम्पन्नस्ये-
त्यनेनोत्तरगुणयुक्तामाह, तस्य, किमित्याह—'अविकल्पेन' निर्विकल्पं तदीयवचने वितथत्वाशङ्कामकुर्वाणेनेत्यर्थः तथाकारः, कार्य
इत्यध्याहारः, कोऽभिप्रायः ?—एवंविधस्य गुरोर्वाचनादानादौ पृच्छनानन्तरमुत्तरदाने तथा सामाचारीशिक्षणादौ च यथा यूयं वदथ
तथैवैतदित्यर्थसंसूचकस्तथाशब्दः प्रयोक्तव्यः ॥ ७६४ ॥ इदानीमावश्यिकीनैषेधिकीद्वारद्वयमाह—'आवे'त्यादि, आवश्यकी विधेया
वसतेर्निर्गच्छता साधुना अवश्यं गन्तव्ये ज्ञानादित्रयहेतुभूते भिक्षाटनादौ कारणे सति, अनेन निष्कारणगमननिषेध उक्तः, तथा वहिर्देशा-
न्निवृत्तेन तस्मिन् स्थाने नैषेधिकी विधेया यत्र शय्यास्थानाद्याचरति, तत्र शय्या—वसतिस्तस्यां स्थानं—अवस्थानं तच्च प्रस्तावात्प्रवेशलक्षणं

आदिशब्दाच्चैत्यप्रवेशादिपरिग्रहः, वहिर्देशाद्वसत्यादौ प्रविशन् नैषेधिकीं विदध्यादिति भावः ॥ ७६५ ॥ साम्प्रतमापृच्छादिद्वारचतुष्टयमेकगाथया प्राह– 'आपुच्छे'त्यादि, आपृच्छनमापृच्छा सा च कर्तुमभीष्टे कार्ये प्रवर्तमानेन गुरोः कार्या–भगवन् ! अहं इदं करोमीति द्वारं । तथा पूर्वनिषिद्धेन सता यथा त्वयेदं न कर्तव्यमिति, उत्पन्ने च प्रयोजने कर्तुकामेन 'होइ पडिपुच्छ'त्ति भवति प्रतिपृच्छा, पूज्यैरिदं निषिद्धमासीत् इदानीं तेन कार्येण प्रयोजनं यदि पूज्या आदिशन्ति तदा करोमीत्येवंरूपा, पाठान्तरं वा 'पुव्वनिउत्तेण होइ पडिपुच्छ'त्ति पूर्वं नियुक्तेन सता यथा भवतेदं कार्यमिति तत्कर्तुकामेन गुरोः प्रतिपृच्छा भवति कर्तव्या अहं तत्करोमीति, तत्र हि गुरुः कदाचित्कार्यान्तरमादिशति समाप्तं वा तेन प्रयोजनमिति द्वारं । तथा पूर्वगृहीतेनाशनादिना छंदना शेषसाधुभ्यः कर्तव्या, यथा मयेदमशनाद्यानीतं यदि कस्यचिदुपयुज्यते ततोऽसाविच्छाकारेण ग्रहणं करोत्विति द्वारं । तथा निमन्त्रणा भवत्यगृहीतेनाशनादिना, यथाऽहं भवतां योग्यमशनाद्यानयामीति द्वारं ॥ ७६६ ॥ इदानीमुपसम्पद्द्वारमाह–'उवे'त्यादि, उपसम्पदनमुपसम्पत्–कस्माच्चिदप्यपरगुरुकुलादपरस्य विशिष्टश्रुतादियुक्तस्य गुरोः समीपागमनमिति, सा च त्रिधा–ज्ञाने–ज्ञानविषया एवं दर्शनविषया चारित्रविषया च, तत्र ज्ञानदर्शनयोः सम्बन्धिनी त्रिधा भवति–वर्तना सन्धना ग्रहणं च, एतदर्थं हि उपसम्पद्यते इति, तत्र वर्तना–पूर्वगृहीतस्यैवास्थिरस्य सूत्रादेर्गुणनमिति, सन्धना च–तस्यैव सूत्रादेः प्रदेशान्तरे विस्मृतस्य मीलना घट्टना योजनेत्यर्थः ग्रहणं पुनस्तस्यैव तत्प्रथमतया आदानं, एतत् त्रितयमपि सूत्रार्थतदुभयविषयमवगन्तव्यं, एवं ज्ञाने नव भेदाः, तथा दर्शनेऽपि दर्शनप्रभावकसंमत्यादिशास्त्रविषये. एत एव भेदा विज्ञेया इति, तथा चारित्रविषया द्विधा सम्पत्–वैयावृत्त्यविषया क्षपणविषया च, अयमाशयः–चारित्रार्थमन्यगच्छसत्काचार्याय कश्चिद्वैयावृत्त्यकरत्वं प्रतिपद्यते, स च कालतः कश्चिदित्वरकालं कश्चिच्च यावज्जीवमिति, अत्राह परः–ननु किमत्रोपसम्पदा कार्यं ?,

स्वगच्छ एवायं चारित्रार्थं किमिति वैयावृत्त्यं न करोति ?, सत्यं, स्वगच्छे न तथाविधा निर्वाहादिसामग्री वैयावृत्त्यादिकरणक्षमा समस्ति ततः परगच्छोपसम्पदं करोतीति, तथा क्षपणविषयैवं भवति—यथा कश्चित्क्षपणार्थमुपसम्पद्यते, स च क्षपको द्विविधः—इत्वरो यावत्कथिकश्च, यावत्कथिक उत्तरकालेऽनशनकर्ता, इत्वरस्तु द्विविधो—विकृष्टक्षपकोऽविकृष्टक्षपकश्च, तत्राष्टमदशमादिकर्ता विकृष्टक्षपकः, षष्ठान्ततपःकारी तु अविकृष्टक्षपक इत्यादिस्वरूपमावश्यकादिभ्यो विज्ञेयमिति, एषा दुः—स्फुटं चक्रवाले—चक्रवालविषया चक्रवत्प्रतिपदं भ्रमन्ती दशविधा सामाचारी विज्ञेयेति शेषः, तथा अन्या च वक्ष्यमाणा सामाचारी दशविधा ज्ञेया ॥ ७६७ ॥ तामेवाह—

**पडिलेहणा १ पमज्जण २ भिक्खि ३ रिया ४ऽऽलोग ५ भुंजणा ६ चेव। पत्तगधुयण ७ वियारा ८ थंडिल ९ आवस्सयाईया १० ॥ ७६८ ॥**

पूर्वाह्णेऽपराह्णे च वस्त्रपात्रादीनां प्रत्युपेक्षणा विधेया १ तथा प्रमार्जना वसतेः पूर्वाह्णेऽपराह्णे च कर्तव्या २ तथा कृतकायिकादिव्यापाराः पात्राणि गृहीत्वा आवश्यकीकरणपूर्वं वसतेर्निर्गत्याहारादिषु मूर्च्छामकुर्वन्तः पिण्डग्रहणैषणायां सम्यगुपयुक्ताः साधवो 'भिक्ख'त्ति भिक्षां गृह्णन्ति ३ तथा भिक्षाग्रहणानन्तरं नैषेधिकीपूर्वं वसतौ प्रविश्य 'नमः क्षमाश्रमणेभ्य' इत्येवंरूपं वाचिकं नमस्कारमुच्चार्य योग्यदेशं चक्षुःप्रत्युपेक्षणापुरस्सरं रजोहरणेन प्रमृज्य 'इरिय'त्ति ईर्यापथिकीं प्रतिक्रामन्ति ४ कायोत्सर्गे च भिक्षाभ्रमणभाविनो निर्गमनादारभ्य प्रवेशपर्यन्तान् पुरःकर्मादीनतिचारान् गुरुनिवेदनार्थं चिन्तयन्ति, पारयित्वा च चतुर्विंशतिस्तवं पठन्तीति, तथा च चतुर्विंशतिस्तवपाठानन्तरं भावतश्चारित्रपरिणामापन्नाः सन्तो गुरोर्गुरुसम्मतस्य वा ज्येष्ठार्यस्य पुरतो यदोदनादि येन प्रकारेण करोटिकाप्रभृतिभाजनादिना गृहीतं तत्सर्वं तथैव प्रवचनोक्तेन विधिना 'आलोय'त्ति आलोचयन्ति निवेदयन्तीत्यर्थः, तदनन्तरं दुरालोचितभक्तपानयो-

र्निमित्तमेषणानेषणयोर्वा निमित्तं कायोत्सर्गं कुर्वन्ति, 'इच्छामि पडिक्कमिउं गोयरचरियाए भिक्खायरियाए जाव तस्स मिच्छामि दुक्कडं, तस्स उत्तरीकरणेणं जाव वोसिरामि'त्ति कायोत्सर्गं कुर्वन्ति च, तत्र नमस्कारं 'जइ मे अणुग्गहं कुज्जा साहू' इत्यादि वा चिन्तयेत्, यदुक्तमोघनिर्युक्तौ—'तहिं दुरालोइयभत्तपाणएसणमणेसणाए उ। अट्ठुस्सासे अहवा अणुग्गहाई व झाइज्जा ॥१॥ दशवैकालिके त्वस्मिन् कायोत्सर्गे 'अहो जिणेहिं असावज्जा' इतिगाथाचिन्तनं भणितं, पारयित्वा च चतुर्विंशतिस्तवभणनं, तदनु परिश्रमाद्यपनयनाय मुहूर्त्तमुपविष्टाः स्वाध्यायं विदधतीति, तथा निःसागारिके स्थाने रागद्वेषविरहिताः सन्तो नमस्कारं पठित्वा सन्दिशत पारयाम इत्यभिधाय च गुरुणाऽनुज्ञाता व्रणलेपाद्युपमया भुञ्जन्ति—भोजनं कुर्वन्ति, तथा भोजनानन्तरमच्छोदकेन भाजनेषु समयप्रसिद्धं कल्पत्रयं दत्त्वा 'पत्तगधुवण'त्ति पात्रकाणां धावनं कुर्वन्ति, समयपरिभाषया त्रेप्यन्तीत्यर्थः, तदनु यद्यपि प्रागेवैकाशनकं प्रत्याख्यातं तथाप्यप्रमादार्थं 'सागारिकाकारेणं गुरुअब्भुट्ठाणेणं आउंटणपसारेणं पारिट्ठावणियागारेणं' इत्येषां प्रागगृहीतानामाकाराणां च निरोधनार्थं प्रत्याख्यानं विधेयमिति, तथा 'वियार'त्ति विचारः—संज्ञाव्युत्सर्जनार्थं वहिर्गमनं तं वक्ष्यमाणविधिना कुर्वन्ति, तथा 'थंडिलं'ति स्थण्डिलं—परानुपरोधिप्रासुकभूभागलक्षणं तिर्यग् जघन्येन हस्तमात्रं प्रतिलेखयन्ति, तच्च सप्तविंशतिविधं, तथाहि—कायिकायोग्यानि वसतेर्मध्ये षट् स्थण्डिलानि वहिर्भागेऽपि षडेव, मिलितानि च द्वादश, एवमुच्चारयोग्यान्यपि द्वादश, त्रीणि च कालग्रहणयोग्यानीति, तथा पूर्वोक्तविधिना 'आवस्सय'त्ति आवश्यकं—प्रतिक्रमणं कुर्वन्ति, आदिशब्दात्कालग्रहणादिपरिग्रहः, इत्येषा प्रकारान्तरेण दशविधा प्रतिदिनसामाचारी समासतो व्याख्याता, विस्तरतस्तु पञ्चवस्तुकद्वितीयद्वारादवसेयेति १०१ ॥ ७६८ ॥ इदानीं 'निग्गंथत्तं जीवस्स पंच वाराओ भववासे'त्ति द्व्युत्तरशततमं द्वारमाह—

**उवसमसेणिचउक्कं जायइ जीवस्स आभवं नूणं । ता पुण दो एगभवे खवगस्सेणी पुणो एगा ॥ ७६९ ॥**

उपशमश्रेणिचतुष्कं—उपशमश्रेणिचतुष्टयमेव जायते—भवति जीवस्याभवं—संसारे वर्तमानस्य तत् नूनं—निश्चितं, उत्कर्षतो नानाभवेषु वारचतुष्टयमुपशमश्रेणिं प्रतिपद्यत इति भावः, ते पुनरुपशमश्रेण्यौ एकस्मिन् भवे उत्कर्षतो द्वे भवतः, क्षपकश्रेणिः पुनरेकैवैकस्मिन् भवे भवति, ततोऽयमर्थः—उपशान्तमोहे क्षीणमोहे च गुणस्थानके निर्ग्रन्थत्वं भवति, तत्रोपशमश्रेणिचतुष्टये क्षपकश्रेणौ चैकस्यां कृतायां पञ्चधा भवत्युत्कर्षतः संसारे वसतो जीवस्येति १०२ ॥ ७६९ ॥ इदानीं 'साहुविहारसरूवं'ति त्र्युत्तरशततमं द्वारमाह—

**गीयत्थो य विहारो बीओ गीयत्थमीसओ भणिओ । एत्तो तइयविहारो नाणुन्नाओ जिणवरेहिं ॥ ७७० ॥ दव्वओ चक्खुसा पेहे, जुगमित्तं तु खेत्तओ । कालओ जाव रीएज्जा, उवउत्ते य भावओ ॥ ७७१ ॥**

गीतो—विज्ञातः कृत्याकृत्यलक्षणोऽर्थो यैस्ते गीतार्था—बहुश्रुताः साधवः तत्सम्बन्धित्वाद्गीतार्थः चशब्दः समुच्चये भिन्नक्रमश्च विहारो—विचरणं प्रथम इति गम्यते, द्वितीयश्च—अन्यो विहारो गीतार्थैर्मिश्राः—समन्विता येऽगीतार्थास्ते गीतार्थमिश्रास्तेषां सत्को गीतार्थमिश्रः स एव गीतार्थमिश्रको भणितः—उक्तो जिनैर्विधेयतया, पाठान्तरं गीतार्थनिश्रित इति, तत्र गीतार्थस्य निश्रा—आश्रयणं गीतार्थनिश्रा सा सञ्जाता अस्येति गीतार्थनिश्रितः, इतः—आभ्यां द्वाभ्यां विहाराभ्यामन्यस्तृतीय एकानेकागीतार्थसाधुरूपो नानुज्ञातो—नानुमतो विधे-

यतया जिनवैररिति ॥ ७७० ॥ विहारश्चतुर्विधो भवति, द्रव्यतः क्षेत्रतः कालतो भावतश्च, एतदेवाह—'दवओ'इत्यादि, द्रव्यतश्चक्षुषा प्रेक्षते मार्गस्थितान् जीवानिति शेषः, क्षेत्रतो युगमात्रं क्षेत्रं, युगं—यूपं चतुर्हस्तप्रमाणं तत्प्रमाणां भूमिं निरीक्षेत, अत्यासन्नस्य दृष्टस्यापि कस्यचिज्जीवादे रक्षितुमशक्यत्वात् (ग्रन्थाग्रं ८०००) युगमात्राच्च परतः श्लक्ष्णजीवादेर्द्रष्टुमप्यशक्यत्वादिति युगमात्रग्रहणं, कालतो यावत्कालं मुहूर्त्तप्रहरादिकं 'रीएज्ज'त्ति गच्छेत्, भावतश्च उपयुक्तः—सम्यगुपयोगपर इति १०३ ॥ ७७१ ॥

॥ इति श्रीप्रवचनसारोद्धारवृत्तौ पूर्वभागः ॥

श्रेष्ठि—देवचन्द्र लालभाइ जैनपुस्तकोद्धारे ग्रन्थाङ्कः ५८

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः-६४.

स्वपरसमयज्ञाननिधिश्रीसिद्धसेनसूरिशेखररचितवृत्त्यलङ्कृतः
अवधूतसिद्धान्तहृदयश्रीमन्नेमिचन्द्रसूरिप्रवरनिर्मितः

# श्रीप्रवचनसारोद्धारः (उत्तरभागः)

(समूलो विविधानुक्रमयुतः)

मुद्रणकारिका-श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारसंस्था।
प्रसिद्धिकारकः-जीवनचन्द्र साकरचन्द्र जह्वेरी, अस्याः कार्यवाहकः।
इदं पुस्तकं मोहमय्यां जीवनचंद साकरचंद झह्वेरी इत्यनेन
निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २६-२८ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्।
प्रति १०००.] वीरसंवत् २४५२. विक्रम संवत् १९८२. पण्यं चत्वारो रूप्यकाः क्राइष्टस्य १९२६. [ Rs. 4-0-0.



# श्रेष्ठी देवचंद लालभाई जह्वेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाव्दे | निर्याणम् १९६२ वैक्रमाव्दे |
| कार्तिकशुक्लैकादश्यां, सूर्यपूरे | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 1853 A. D. Surat.** **Died 13th January 1906 A. D. Bombay,**

10000–1–21.

साम्प्रतं 'अप्पडिवद्धविहारो'त्ति चतुरुत्तरशततमं द्वारमाह—

अप्पडिवद्धो अ सया गुरूवएसेण सव्वभावेसुं । मासाइविहारेणं विहरेज्ज जहोचियं नियमा ॥ ७७२ ॥ मुत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि उ विहारो । ता कहमाइग्गहणं कज्जे ऊणाइभावेणं ॥ ७७३ ॥ कालाइदोसओ जइ न दव्वओ एस कीरए नियमा । भावेण तहवि कीरइ संथारगवच्चयाईहिं ॥ ७७४ ॥ काऊण (कम्हिपि) मासकप्पं तत्थेव ठियाण तीस मग्गसिरे । सालंवणाण जिट्ठोग्गहो य छम्मासिओ होइ ॥ ७७५ ॥ अह अत्थि पयवियारो चउपाडिवयंमि होइ निग्गमणं । अहवावि अनिंतस्स आरोवण सुत्तनिद्दिट्ठं ॥ ७७६ ॥ एगक्खेत्तनिवासी कालाइक्कंतचारिणो जइवि । तहवि हु विसुद्धचरणा विसुद्धआलंबणा जेण ॥ ७७७ ॥ सालंबणो पडंतो अत्ताणं दुग्गमेऽवि धारेइ । इय सालंबणसेवी धारेइ जई असढभावं ॥ ७७८ ॥ काहं अछित्तिं अदुवा अहिस्सं, तवोवहाणेसु य उज्जमिस्सं । गणं व नीइसु य सारइस्सं, सालंबसेवी समुवेइ मोक्खं ॥ ७७९ ॥

'अप्पडिवद्धो'इत्यादि गाथाऽष्टकं, अप्रतिवद्धश्च सदा—सर्वकालमभिष्वङ्गरहित इत्यर्थः गुरूपदेशेन हेतुभूतेन, केत्याह—सर्वभावेषु—द्रव्यादिषु, तत्र द्रव्ये—श्रावकादौ क्षेत्रे—निर्वातवसत्यादौ काले—शरदादौ भावे—शरीरोपचयादौ अप्रतिवद्धः, किमित्याह—मासादिविहारेण सिद्धान्तप्रसिद्धेन विहरेत्—विहारं कुर्यात्, यथोचितं—संहननाद्यौचित्येन नियमाद्—अवश्यंभावत इति, एतदुक्तं भवति—द्रव्यादिष्व-

कुलप्रतिबन्धादयो बहवो दोषा एव भवन्ति ततः कथमिदं युक्तमित्याह—'एगे'त्यादि, एकस्मिन् क्षेत्रे निवास एकक्षेत्रनिवासः तस्मिन् सति यद्यपि 'कालातिक्रान्तचारिणः' समयभणितकालातिक्रमचारिणो यतयस्तथापि 'हुः' स्फुटं 'विशुद्धचरणा' निरतिचारचारित्रास्ते 'येन' यतः कारणात् 'विशुद्धालम्बना' विशुद्धं—शाठ्येनादूषितं वार्धकजङ्घाबलपरिक्षीणताविहारायोग्यक्षेत्रादिकमालम्बनं—कारणं येषां ते विशुद्धालम्बना इति ॥ ७७७ ॥ अथ कस्मादालम्बनमन्वेषणीयमित्याह—'सालंबे'त्यादि, आलम्ब्यते—पतद्भिराश्रीयते इत्यालम्बनं, तच्च द्विविधं—द्रव्यतो भावतश्च, तत्र गर्त्तादौ प्रपतद्भिर्यद् द्रव्यमालम्ब्यते तद् द्रव्यालम्बनं, तदपि द्रव्यं द्विविधं—पुष्टमपुष्टं च, तत्रापुष्टं—दुर्बलं कुशवल्वजादि पुष्टं तु दृढं कठोरवल्ल्यादि, भावालम्बनमपि पुष्टापुष्टभेदाद् द्विधा, तत्र पुष्टं वक्ष्यमाणं तीर्थाव्यवच्छित्त्यादि, शठतया स्वमतिमात्रोत्प्रेक्षितं त्वपुष्टं, ततश्च सह आलम्बनेन वर्तत इति सालम्बनः, असौ पतन्नप्यात्मानं दुर्गमेऽपि—गर्त्तादौ पुष्टालम्बनावष्टम्भतो धारयति, 'इति' एवमेव सह आलम्बनेन वर्तत इति सालम्बनः एवम्भूतः सन् किमपि नित्यवासादिकं सेवते—भजते इति सालम्बनसेवी 'यतिः' साधुः संसारगर्तायां पतन्तमात्मानमशठभावं—मातृस्थानरहितं धारयतीत्येष आलम्बनान्वेषणे गुणः ॥ ७७८ ॥ कानि पुनस्तान्यालम्बनानीत्याह—'काह'मित्यादि, यः कश्चिदेवं चिन्तयति यथा करिष्याम्यहमत्र स्थितोऽच्छित्तिं—अव्यवच्छित्तिं जिनधर्मस्येति शेषः, राजादेर्जिनशासनावतारणादिभिः, 'अदुवे'ति अथवा अहमध्येष्ये सूत्रतोऽर्थतश्च द्वादशाङ्गं दर्शनप्रभावकाणि वा शास्त्राणि, यदिवा तपोलब्धिसमन्वितत्वात्तपोविधानेषु नानाप्रकारेषु तपस्सु 'उज्जमिस्सं'ति उद्यंस्यामि उद्यमं करिष्यामि, 'गणं वा' गच्छं वा 'नीइसु य'त्ति सप्तम्यास्तृतीयार्थत्वान्नीतिभिः सूत्रोक्ताभिः सारयिष्यामि—गुणैः प्रवृद्धं करिष्यामि, स एवं सालम्बनसेवी—एतैरनन्तरोदितैरालम्बनैर्यतनया नित्यवासमपि प्रतिसेवमानो जिनाज्ञानुलङ्घनात्समुपैति—प्राप्नोति 'मोक्षं' सिद्धिं, तस्मात्तीर्थाव्यवच्छेदा-

दिकमेव यथोक्तं ज्ञानदर्शनचारित्राणां समुदितानामन्यतरस्य वा यद् वृद्धिजनकं तदालम्बनं जिनाज्ञावशादुपादेयं, नान्यत्, अन्यथा हि—"आलंबणाण भरिओ लोओ जीवस्स अजउकामस्स । जं जं पिच्छइ लोए तं तं आलंवणं कुणइ ॥ १ ॥" इति [अयतितुकामस्य जीवस्य लोक आलम्बनैर्भृतः । यत् यत् प्रेक्षते लोके तत्तद् आलम्बनं करोति ॥ १ ॥] १०४ ॥ ७७९ ॥ इदानीं 'जायाजायकप्प'त्ति पञ्चोत्तरशततमं द्वारमाह—

**जाओ य अजाओ य दुविहो कप्पो य होइ नायव्वो । एक्केक्कोऽवि य दुविहो समत्तकप्पो य असमत्तो ॥ ७८० ॥ गीयत्थ जायकप्पो अगीयओ खलु भवे अजाओ य । पणगं समत्तकप्पो तदूणगो होइ असमत्तो ॥ ७८१ ॥ उउबद्धे वासासुं सत्त समत्तो तदूणगो इयरो । असमत्ताजायाणं ओहेण न किंचि आहव्वं ॥ ७८२ ॥**

'जाओ'इत्यादि गाथात्रयं, द्विविधः खलु कल्पः—समाचारो भवति ज्ञातव्यस्तद्यथा—जातोऽजातश्च, तत्र जाता—निष्पन्नाः श्रुतसम्पदुपेततया लब्धात्मलाभाः साधवः तदव्यतिरेकात्कल्पोऽपि जात उच्यते, एतद्विपरीतः पुनरजातः, एकैकोऽपि च द्विधा—समाप्तकल्पोऽसमाप्तकल्पश्च, समाप्तकल्पो नाम परिपूर्णसहायः तद्विपरीतोऽसमाप्तकल्पः ॥ ७८० ॥ एतानेव चतुरो जातादीन् व्याख्यानयति—'गीयत्थ' इत्यादिगाथाद्वयं, गीतार्थसाधुसम्बन्धित्वाद्गीतार्थो यो विहारः स जातकल्पोऽभिधीयते 'अगीतः खलु' अगीतार्थसाधुसम्बन्धी पुनर्भवेदजातः—अजातकल्पः, तथा द्वितीयगाथावर्तिनः 'उउबद्धे' इत्यस्य पदस्येह सम्बन्धात् 'ऋतुबद्धे' अवर्षासु 'पणगं'ति साधुपञ्चकपरिमाणः समाप्तकल्पो नाम विहारो भवति, 'तदूनकः' तस्मात्पञ्चकात् हीनतरो द्वित्रिचतुराणां साधूनामित्यर्थः कल्पो भवत्यस-

मासोऽपरिपूर्णसहायत्वात्, वर्षासु—वर्षाकाले पुनः साधुसप्तकपरिमाणः समाप्तकल्पः, तदूनकः—तस्मात्सप्तकान्न्यूनतर इतरः—असमाप्तकल्पः, यच्च वर्षासु सप्तानां विहारकरणं तत् किल वर्षासु तेषां ग्लानत्वादिसम्भवे सहायस्यान्यत आगमनासम्भवादल्पसहायता मा भूदिति हेतोः, ततश्चासमाप्ताजातानां—असमाप्तकल्पाजातकल्पवतां साधूनामोघेन—उत्सर्गेण न किञ्चित्क्षेत्रतद्गतशिष्यभक्तपानवस्त्रपात्रादिकमागमप्रसिद्धमाभाव्यमिति १०५ ॥ ७८१ ॥ ७८२ ॥ इदानीं 'परिट्ठवणुच्चारकरणदिसि'त्ति पडुत्तरशततमं द्वारमाह—

दिसा अवरदक्खिणा १ दक्खिणा य २ अवरा य ३ दक्खिणापुव्वा ४ । अवरुत्तरा य ५ पुव्वा ६ उत्तर ७ पुव्वुत्तरा ८ चेव ॥ ७८३ ॥ पउरऽन्नपाण पढमा वीयाए भत्तपाण न लहंति । तइयाए उवहिमाई नत्थि चउत्थीएँ सज्झाओ ॥ ७८४ ॥ पंचमियाए असंखडी छट्टीए गणस्स भेयणं जाण । सत्तमिया गेलन्नं मरणं पुण अट्ठमे विंति ॥ ७८५ ॥ दिसिपवणगामसूरियच्छायाए पमज्जिऊण तिक्खुत्तो । जस्सोग्गहोत्ति काऊण वोसिरे आयमेज्जा वा ॥ ७८६ ॥ उत्तरपुव्वा पुज्जा जम्माएँ निसायरा अहिपडंति । घाणारिसा य पवणे सूरियगामे अवन्नो उ ॥ ७८७ ॥ संसत्तग्गहणी पुण छायाए निग्गयाएँ वोसिरइ । छायाऽसइ उण्हंमिवि वोसिरिय मुहुत्तयं चिट्ठे ॥ ७८८ ॥ उवगरणं वामगजाणुगंमि मत्तो य दाहिणे हत्थे । तत्थऽन्नत्थ व पुंछे तिआयमणं अदूरंमि ॥ ७८९ ॥

'दिसे'त्यादिगाथासप्तकं, अचित्तसंयतपरिष्ठापनाय दिक् प्रथमतोऽपरदक्षिणा—नैर्ऋती निरीक्षणीया तस्या अभावे दक्षिणा तस्या

अभावे अपरा—पश्चिमेत्यर्थः तस्या अप्यभावे दक्षिणपूर्वा—आग्नेयीत्यर्थः तस्या अप्यभावेऽपरोत्तरा—वायवीति भावः तस्या अप्यभावे पूर्वा तस्या अप्यलाभे उत्तरा तस्या अप्यलाभे पूर्वोत्तरा ऐशानीत्यर्थः, इह च यत्र ग्रामादौ मासकल्पं वर्षावासं वा गीतार्थाः साधवः संवसन्ति तत्र प्रथममेव पूर्वोक्तासु दिक्षु परिष्ठापने मृतोज्झननिमित्तं त्रीणि महास्थण्डिलानि प्रत्युपेक्षन्ते—आसन्ने मध्ये दूरे च, किं कारणमिति चेत्तत्र ब्रूमः—प्रथमस्थण्डिले कदाचिद्व्याघातो भवेत्, तथाहि—क्षेत्रं तत्र केनापि कृष्टं उदकेन वा तत् प्लावितं हरितकायो वा तत्राजनि कीटिकादिभिर्वा तत्संसक्तं जातं ग्रामो वा तत्र निविष्टः सार्थो वा कश्चित्तत्रावासित इत्यतो द्वितीये स्थण्डिले परिष्ठापनं विधेयं, तस्याप्येतैरेव हेतुभिर्व्याघाते तृतीये स्थण्डिले परिष्ठापनं कार्यमिति ॥ ७८३ ॥ सम्प्रति प्रथमायां दिशि सत्यां शेषदिक्षु परिष्ठापने दोषमाह—'पउरे'त्यादिगाथाद्वयं, **'पउरन्नपाण पढमा'** इत्यत्र प्राकृतत्वात्सप्तम्या लोपः, ततः प्रथमायाम्—अपरदक्षिणायां परिष्ठापने प्रचुरान्नपानवस्त्रपात्रादिलाभतः समाधिरुपजायते, तस्यां सत्यां द्वितीयस्यां—दक्षिणायां परिष्ठापने भक्तपाने न लभन्ते, तृतीयस्यां—पश्चिमायामुपध्यादि न लभन्ते, चतुर्थ्यां—दक्षिणपूर्वस्यां नास्ति स्वाध्यायः स्वाध्यायाभाव इत्यर्थः ॥ ७८४ ॥ पञ्चम्याम्—अपरोत्तरस्यां 'असंखडि'त्ति कलहः संयतगृहस्थान्यतीर्थिकादिभिः सह, षष्ठ्यां—पूर्वस्यां गणस्य—गच्छस्य भेदनं—भेदं जानीहि, गच्छभेदो भवतीत्यर्थः, सप्तम्याम्—उत्तरस्यां ग्लानत्वं—रोगोत्पत्तिः, अष्टमीति प्राकृतत्वाद्विभक्तिलोपे अष्टम्यां—पूर्वोत्तरस्यां दिशि मृतकपरिष्ठापने मरणं पुनर्ब्रुवते, अन्यः कश्चित्संयतो म्रियते इत्यर्थः, इह च पानीयस्तेनभयादिव्याघातसद्भावतः पूर्वपूर्वदिगलाभे उत्तरोत्तरस्यामपि दिशि मृतकपरिष्ठापने प्रचुरान्नपानलाभलक्षणः प्रथमदिक्प्रतिपादित एव गुणोऽवसेयः, यदा पुनः पूर्वपूर्वदिक्सद्भावे उत्तरोत्तरस्यां दिशि परिष्ठापयन्ति तदा पाश्चात्या एव दोषा भवन्तीति ॥ ७८५ ॥ उक्ता अचित्तसंयतपरिष्ठापनदिक्, इदानीमुच्चारकरणदिगभि-

धीयते—'दिसी'त्यादि, साधुना संज्ञां व्युत्सृजता 'दिसि'त्ति पूर्वस्यामुत्तरस्यां च दिशि पृष्ठं न दातव्यं, तथा पवनग्रामसूर्याणां च पृष्ठं न दातव्यं, तथा छायायां निर्गतायां व्युत्सृजेत्, तथा त्रिकृत्वः—त्रीन् वारान् प्रमार्ज्य उपलक्षणमेतत् प्रत्युपेक्ष्य च स्थण्डिलमिति गम्यते व्युत्सृजेत्, तत्र चायं विधिः—अयुगलिता अत्वरमाणा विकथारहिताश्च पुरीषव्युत्सर्जनाय व्रजन्ति, तत उपविश्य पुतनिर्लेपनाय इष्टकादिखण्डरूपाणि डगलकानि गृह्णन्ति, पिपीलिकादिरक्षणार्थं च तेषां प्रस्फोटनं कुर्वन्ति, तदनन्तरमुत्थाय निर्दोषं स्थण्डिलं गत्वा ऊर्द्धमधस्तिर्यक् चावलोकनं कुर्वन्ति, तत्रोर्द्धं वृक्षस्थपर्वतस्थादिदर्शनार्थं अधो गर्तादर्याद्युपलब्धये तिर्यक् व्रजद्विश्रान्यदादिनिरीक्षणार्थमिति, ततः सागारिकाभावे संदंशकान् सम्प्रमार्ज्य प्रेक्षिते प्रमार्जिते च स्थण्डिले पुरीषं व्युत्सृजन्तीति, तथा यस्यायमवग्रहः सोऽनुजानीयादित्यनुज्ञां कृत्वा व्युत्सृजेत् आचमेद्वा ॥ ७८६ ॥ सम्प्रत्येनामेव गाथां विवरीतुकाम आह—'उत्तरे'त्यादि, उत्तरदिक्पूर्वदिक्क लोके पूज्येते ततस्तस्याः पृष्ठदाने लोकमध्येऽवर्णवादो भवति, वानमन्तरं वा कश्चित् कोपयेत् तथा च सति जीवितव्यस्य विनाशः, तस्माद्दिवा रात्रौ च पूर्वस्यामुत्तरस्यां च पृष्ठं वर्जयेत्, तथा याम्या—दक्षिणा दिक् तस्याः सकाशाद्रात्रौ निशाचराः—पिशाचादयो देवा अभिपतन्ति—उत्तराभिमुखाः समागच्छन्ति, ततस्तस्यां रात्रौ पृष्ठं न दद्यात्, उक्तं च—"उभे मूत्रपुरीषे च, दिवा कुर्यादुदङ्मुखः । रात्रौ दक्षिणतश्चैव, तथा चायुर्न हीयते ॥ १ ॥" तथा यतः पवनस्ततः पृष्ठदाने अशुभगन्धाघ्राणं नासिकायां च अर्शांस्युपजायन्ते, चशब्दाल्लोकोपहासश्च यथा आघ्रन्त्येतदेते इति, तस्मात्पवनस्यापि पृष्ठं न कर्तव्यं, तथा सूर्यस्य ग्रामस्य च पृष्ठकरणेऽवर्णो—लोकमध्येऽश्लाघा, यथा न किञ्चिज्जानन्त्येते यल्लोकोद्योतकरस्यापि सूर्यस्य यस्मिन् ग्रामे स्थीयते तस्यापि च पृष्ठं ददति, ततस्तयोरपि न दातव्यं पृष्ठमिति ॥ ७८७ ॥ 'छायाए' इति व्याख्यानार्थमाह—'संसत्ते'त्यादि, संसक्ता द्वीन्द्रियैर्ग्रहणिः—कुक्षिर्यस्यासौ संसक्तग्रहणिः, स द्वीन्द्रियरक्ष-

णार्थं छायायां पुष्पफलप्रदवृक्षादिसम्बन्धिन्यां निर्गतायां व्युत्सृजति, अथ छायाऽद्यापि न निर्गच्छति मध्याह्ने एव संज्ञाप्रवृत्तेः ततश्छायाया असति—अभावे उष्णेऽपि स्वशरीरच्छायां पुरीषस्य कृत्वा व्युत्सृजति, व्युत्सृज्य च मुहूर्तकं—अल्पं मुहूर्तं तथैव तिष्ठति येन एतावता कालेन स्वयोगतस्ते परिणमन्ति, अन्यथोष्णेन महती परितापना स्यात् ॥ ७८८ ॥ अथ व्युत्सृजन् स्वोपकरणं कथं धरतीत्याह—'उवे'त्यादि, उपकरणं—दण्डकं रजोहरणं च वामे ऊरौ स्थापयति, मात्रकं च दक्षिणे हस्ते क्रियते, डगलानि च वामहस्तेन धरणीयानि, ततः संज्ञां व्युत्सृज्य तत्रान्यत्र वा प्रदेशे डगलकैः पुतं पुंसयति—रूक्षयति, पुंसयित्वा त्रिभिर्नावापूरकैः चुलुकैरित्यर्थः आचमनं—निर्लेपनं करोति, उक्तं च—'तिहिं नावापूरएहिं आयामइ—निल्लेवेइ, नावा—पसई' इति, तदपि चाचमनमदूरे करोति, यदि पुनर्दूरे आचमति तत उड्डाहो यथा कश्चिद् दृष्ट्वा चिन्तयेत्—अनिर्लिप्तपुतो गत एव इति ॥ १०६ ॥ ७८९ ॥ इदानीं 'अट्ठारस पुरिसेसु'त्ति सप्तोत्तरशततमं द्वारमाह—

**वाले १ वुड्ढे २ नपुंसे य ३, कीवे ४ जड्डे य ५ वाहिए ६ । तेणे ७ रायावगारी य ८, उम्मत्ते य ९**
**अदंसणे १० ॥ ७९० ॥ दासे ११ दुट्ठे य १२ मूढे य १३, अणत्ते १४ जुंगिए इय १५ ॥ ओबद्धए**
**य १६ भयए १७, सेहनिप्फेडिया इय १८ ॥ ७९१ ॥**

'वाले'त्यादि श्लोकद्वयं, जन्मत आरभ्य अष्टौ वर्षाणि यावद्बालोऽत्राभिधीयते, स किल गर्भस्थो नव मासान् सातिरेकान् गमयति जातोऽप्यष्टौ वर्षाणि यावद्दीक्षां न प्रतिपद्यते, वर्षाष्टकादधो वर्तमानस्य सर्वस्यापि तथास्वाभाव्याद्देशतः सर्वतो वा विरतिप्रतिपत्तेरभावात्, उक्तं च—"एएसि वयपमाणं अट्ठ समाउत्ति वीयराएहिं । भणिअं जहन्नगं खलु" इति [एतेषां वयःप्रमाणमष्ट समा इति वीतरागैर्भणितं जघन्यकं खलु]

अन्ये तु गर्भाष्टमवर्षस्यापि दीक्षां मन्यन्ते, यदुक्तं **निशीथचूर्णौ**—"आदेसेण वा गब्भट्ठमस्स दिक्ख"त्ति [आदेशेन वा गर्भाष्टमस्य दीक्षेति] भगवद्वज्रस्वामिना व्यभिचार इति चेत्, तथाहि–भगवान् वज्रस्वामी षाण्मासिकोऽपि भावतः प्रतिपन्नसर्वसावद्यविरतिः श्रूयते, तथा च सूत्रं—'छम्मासियं छसु जयं माऊए समन्नियं वंदे' [षाण्मासिकं षट्सु यतं मात्रा समन्वितं वन्दे] सत्यमेतत्, किन्त्वियं शैशवेऽपि भगवद्वज्रस्वामिनो भावतश्चरणप्रतिपत्तिराश्चर्यभूता कादाचित्कीति न तया व्यभिचारः, उक्तं च **पञ्चवस्तुके**—"तदधो परिहवखेत्तं न चरणभावोऽवि पायमेएसिं। आहच्चभावकहगं सुत्तं पुण होइ नायव्वं ॥ १ ॥" अस्या व्याख्या–तेषामष्टानामधो वर्तमाना मनुष्याः परिभवक्षेत्रं भवन्ति, येन तेन वाऽतिशिशुत्वात्परिभूयन्ते, तथा चरणभावोऽपि–चरणपरिणामोऽपि प्राय एतेषां–वर्षाष्टकादधोवर्तमानानां न भवति, यत्पुनः सूत्रं 'छम्मासियं छसु जयं माऊए समन्नियं वंदे' इत्येवंरूपं तत् '**आहच्चभावकहगं**' कादाचित्कभावकथकं, ततो वर्षाष्टकादधः परिभवक्षेत्रत्वाच्चरणपरिणामाभावाच्च न दीक्ष्यन्ते इति, अन्यच्च बालदीक्षणायां संयमविराधनादयो दोषाः, स हि अयोगोलकसमानो यतो यतः स्पन्दते ततस्ततोऽज्ञानित्वात् षड्जीवनिकायवधाय भवति, तथा निरनुकम्पा अमी श्रमणाः यदेवं बालानपि बलाद्दीक्षाकारागारे प्रक्षिप्य स्वच्छन्दतामुच्छिदन्तीति जननिन्दा, तत्परिचेष्टायां च मातृजनोचितायां क्रियमाणायां स्वाध्यायपलिमन्थः स्यादिति १। तथा सप्ततिवर्षेभ्यः परतो वृद्धो भण्यते, अपरे त्वाहुः–अर्वागपीन्द्रियादिहानिदर्शनात् षष्टिवर्षेभ्य उपरि वृद्धोऽभिधीयते, तस्यापि च समाधानादि कर्तुं दुःशकं, यदुक्तम्—"उच्चासणं समीहइ विणयं न करेइ गव्वमुव्वहइ। वुड्ढो न दिक्खियव्वो जइ जाओ वासुदेवेणं ॥ १ ॥" [उच्चासनं समीहते विनयं न करोति गर्वमुद्वहति। वृद्धो न दीक्षितव्यो यदि जातो वासुदेवेन ॥ १ ॥] इत्यादि, इदं च वर्षशतायुष्कं प्रति द्रष्टव्यं, अन्यथा यद् यस्मिन् काले उत्कृष्टमायुस्तद्दशधा विभज्याष्टमनवमदशमभागेषु वर्तमानस्य वृद्ध-

त्वमवसेयं २ । तथा स्त्रीपुंसोभयाभिलाषी पुरुषाकृतिः पुरुषनपुंसकः, सोऽपि बहुदोषकारित्वाद्दीक्षितुमनुचितः 'वाले वुड्ढे य थेरे य' इति पाठस्तु निशीथादिष्वदर्शनादुपेक्षितः ३ । तथा स्त्रीभिर्भोगैर्निमन्त्रितोऽसंवृताया वा स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं वा मन्मथोल्लापादिकं तासां श्रुत्वा समुद्भूतकामाभिलाषोऽधिसोढुं यो न शक्नोति स पुरुषाकृतिः पुरुषक्लीवः, सोऽप्युत्कटवेदतया पुरुषवेदोदयाद् वलात्कारेणाङ्गनालिङ्गनादि कुर्यात् तत उड्डाहादिकारित्वाद्दीक्षाया अनर्ह एव ४ । तथा जड्डस्त्रिविधो—भाषया शरीरेण करणेन च, भाषाजड्डः पुनरपि त्रिविधो—जलमूको मन्मनमूक एलकमूकश्च, तत्र जलमग्न इव बुडबुडायमानो यो वक्ति स जलमूकः, यस्य तु वदतः खच्यमानमिव वचनं स्खलति स मन्मनमूकः, यश्चैलक इवाव्यक्तं मूकतया शब्दमात्रमेव करोति स एलकमूकः, तथा यः पथि भिक्षाटने वन्दनादिषु वाऽतीव स्थूलतया अशक्तो भवति स शरीरजड्डः, करणं—क्रिया तस्यां जड्डः करणजड्डः, समितिगुप्तिप्रतिक्रमणप्रत्युपेक्षणसंयमपालनादिक्रियां पुनः पुनरुपदिश्यमानामप्यतीव जड्डतया यो ग्रहीतुं न शक्नोति स करणजड्ड इत्यर्थः, तत्र भाषाजड्डस्त्रिविधोऽपि ज्ञानग्रहणेऽसमर्थत्वान्न दीक्ष्यते, शरीरजड्डस्तु मार्गगमनभक्तपानाद्यानयनादिषु असमर्थो भवति, तथा अतिजड्डस्य प्रस्वेदेन कक्षादिषु कुथितत्वं भवति, तेषां जलेन क्षालनादिषु क्रियमाणेषु कीटिकादीनां प्राणिनां प्लावना सम्पद्यते ततः संयमविराधना, तथा लोको निन्दां करोति—अहोऽसौ बहुभक्षकः, कथमन्यथा एवंविधं स्थूलत्वमेतस्य मुण्डितकस्य, न हि गलत्क्षौर इति, तथा तस्योर्द्ध्वश्वासो भवति, अपरिक्रमश्च सर्पजलज्वलनादिषु समीपमागच्छत्सु स भवति, ततोऽसौ न दीक्षणीयः, तथा करणजड्डोऽपि समितिगुप्त्यादीनां शिक्ष्यमाणोऽप्यग्राहकत्वान्न दीक्षणीय इति ५ । तथा 'वाहिए'त्ति भगन्दरातिसारकुष्ठप्लीहकार्श्यकासज्वरादिरोगैर्ग्रस्तो व्याधितः, सोऽपि न दीक्षार्हः, तस्य चिकित्सने षट्कायविराधना स्वाध्यायादिहानिश्च ६ । तथा क्षत्रखननमार्गपातनादिचौर्यनिरतः स्तेनः, सोऽपि गच्छस्य वधवन्ध-

नताडनादिनानाविधानर्थनिबन्धनतया दीक्षानर्ह एव ७। तथा श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहविधायको राजापकारी, चः समुच्चये, तद्दीक्षणे रुष्टराजकृता मारणदेशनिःसारणादयो दोषा भवन्ति ८। तथा यक्षादिभिः प्रबलमोहोदयेन वा परवशतां नीत उन्मत्तः, सोऽपि न दीक्षार्हः, यक्षादिभ्यः प्रत्यवायसम्भवात् स्वाध्यायध्यानसंयमादिहानिप्रसङ्गाच्च ९। तथा न विद्यते दर्शनं—दृष्टिरस्येत्यदर्शनः—अन्धः, स्त्यानर्द्धिनिद्रोदयवानप्यत्र द्रष्टव्यः न विद्यते दर्शनं—सम्यक्त्वमस्येति व्युत्पत्तेः, अयं च दीक्षितः सन् दृग्विकलतया यत्र तत्र वा सञ्चरन् षट् कायान् विराधयेत् विषमकीलकण्टकादिषु च प्रपतेत्, स्त्यानर्द्धिस्तु प्रद्विष्टो गृहिणां साधूनां च मारणादि कुर्यात् १०। ॥ ७९० ॥ तथा गृहदास्याः सञ्जातो दुर्भिक्षादिष्वर्थादिना वा क्रीतः ऋणादिव्यतिकरे वाऽवरुद्धो दास उच्यते तस्यापि दीक्षादाने तत्स्वामिकृता उत्प्रव्राजनादयो दोषाः ११। तथा दुष्टो द्विधा—कषायदुष्टो विषयदुष्टश्च, तत्र गुरुगृहीतसर्षपमर्जिकाव्यतिकराभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः, अतीव परयोषिदादिषु गृद्धो विषयदुष्टः, सोऽपि दीक्षानर्होऽतिसंक्लिष्टाध्यवसायत्वात् १२। तथा स्नेहादज्ञानादिपरतन्त्रतया यथावस्थितवस्त्वधिगमशून्यमानसो मूढः, सोऽपि ज्ञानविवेकमूलायामार्हतदीक्षायां नाधिक्रियते, अज्ञानत्वात्कृत्याकृत्यादिविवेकविकलत्वाच्च १३। तथा यो राजव्यवहारिकादीनां हिरण्यादिकं धारयति स ऋणार्त्तः तस्य दीक्षादाने राजादिकृता ग्रहणाकर्षणकदर्थनादयो दोषाः १४। तथा जातिकर्मशरीरादिभिर्दूषितो जुङ्गितः, तत्र मातङ्गकोलिकवरुडसूचिकछिम्पादयोऽस्पृश्या जातिजुङ्गिताः, स्पृश्या अपि स्त्रीमयूरकुर्कुटशुकादिपोषका वंशवरत्रारोहणनखप्रक्षालनसौकरिकत्ववागुरिकत्वादिनिन्दितकर्मकारिणः कर्मजुङ्गिताः, करचरणकर्णादिवर्जिताः पङ्गुकुब्जवामनककाणकप्रभृतयः शरीरजुङ्गिताः, तेऽपि न दीक्षार्हाः, लोकेऽवर्णवादसम्भवात् १५। तथा अर्थग्रहणपूर्वकं विद्यादिग्रहणनिमित्तं वा एतावन्ति दिनानि त्वदीयोऽहमित्येवं येनात्मनः परायत्तता कृता भवति सोऽवबद्धः स

एवाववद्धकः, सोऽपि न दीक्षार्हः कलहादिदोषसम्भवात् १६ । तथा रूप्यकादिमात्रया वृत्त्या धनिनां गृहे दिनपाटिकादिमात्रेण तदादेशकरणाय प्रवृत्तो यः स भृतकः, सोऽपि न दीक्षोचितः, यस्यासौ वृत्तिं गृह्णाति स दीक्ष्यमाणे तस्मिन् महतीमप्रीतिमादधाति १७ । तथा शैक्षस्य—दीक्षितुमिष्टस्य निस्फेटिका—अपहरणं शैक्षनिस्फेटिका तद्योगाद् यो मातापित्रादिभिरमुत्कलितोऽपहृत्य दीक्षितुमिष्यते सोऽपि न दीक्षोचितः, मातापित्रादीनां कर्मबन्धसम्भवात् अदत्तादानादिदोषप्रसङ्गाच्च १८ । इत्येतेऽष्टादश पुरुषस्य—पुरुषाकारवतो दीक्षानर्हा भेदा इति १०७ ॥ ७९१ ॥ इदानीं 'वीसं इत्थीसु'न्ति अष्टोत्तरशततमं द्वारमाह—

**जे अट्ठारस भेया पुरिसस्स तहित्थियाएँ ते चेव । गुव्विणी १ सबालवच्छा २ दुन्नि इमे हुंति अन्नेवि ॥ ७९२ ॥**

येऽष्टादश भेदाः पुरुषेष्वदीक्षणार्हा उक्तास्तथा—तेनैव प्रकारेण स्त्रियोऽपि त एव भेदा अष्टादश विज्ञेयाः, अयमर्थः—यथा पुरुषाकारवतस्तथा स्त्रीजनाकारवतोऽपि व्रतायोग्या बालादयोऽष्टादश भेदास्तावन्त एव, अन्यावपि द्वाविमौ भवतः, यथा गुर्विणी—सगर्भा सह बालेन—स्तनपायिना वत्सेन वर्तते सा सबालवत्सा, एते सर्वेऽपि विंशतिः स्त्रीभेदा व्रतायोग्याः, दोषा अप्यत्र पूर्ववद्वाच्याः १०८ ॥ ७९२ ॥ इदानीं 'दस नपुंसेसु' इति नवोत्तरशततमं द्वारमाह—

**पंडए १ वाइए २ कीवे ३, कुंभी ४ ईसालुयत्ति य ५ । सउणी ६ तक्कमसेवी ७ य, पक्खियापक्खिए ८ इय ॥ ७९३ ॥ सोगंधिए य ९ आसत्ते १०, दस एते नपुंसगा । संकिलिट्ठित्ति साहूणं, पव्वावेउं अकप्पिया ॥ ७९४ ॥**

'पंडए'इत्यादिश्लोकद्वयं, पण्डको वातिकः क्लीवः कुंभी ईर्ष्यालुः शकुनिस्तत्कर्मसेवी पाक्षिकापाक्षिकः सौगन्धिक आसक्तश्च दश एते नपुंसकाः सङ्क्लिष्टचित्ता इति साधूनां प्रव्राजयितुमकल्प्या व्रतायोग्या इत्यर्थः, सङ्क्लिष्टत्वं चैषां सर्वेषामप्यविशेषतो नगरमहादाहसमानकामाध्यवसायसम्पन्नत्वेन स्त्रीपुरुषसेवामाश्रित्य विज्ञेयं, उभयसेविनो ह्येते इति ॥ ७९३ ॥ ७९४ ॥–

तत्र पण्डकस्य लक्षणं–महिलासहावो सरवन्नभेओ, मिंढं महंतं मउया य वाणी। ससद्दयं मुत्तमफेणयं च, एयाणि छप्पंडगलक्खणाणि ॥ १ ॥ इति वृत्तादवसेयं, अस्य व्याख्या–पुरुषाकारधारिणोऽपि महिलास्वभावत्वं पण्डकस्यैकं लक्षणं, तथाहि–गतिस्त्रस्तपदाकुला मन्दा च भवति सशङ्कं च पृष्ठतोऽवलोकमानो गच्छति शरीरं च शीतलं मृदु च भवति योपिदिवानवरतं हस्तोल्लकान् प्रयच्छन् उदरोपरि तिर्यग्व्यवस्थापितवामकरतलस्योपरिष्टाद्दक्षिणकरकूर्परं विन्यस्य दक्षिणकरतले च मुखं कृत्वा बाहू च विक्षिपन् भाषते अभीक्ष्णं च कटिहस्तकं ददाति प्रावरणाभावे स्त्रीवद् बाहुभ्यां हृदयमाच्छादयति भाषमाणश्च पुनः पुनः सविभ्रमं भ्रूयुग्ममुत्क्षिपति केशवन्धनप्रावरणादिकं च स्त्रीवत्करोति योपिदाभरणादिपरिधानं च बहुमन्यते स्नानादिकं च प्रच्छन्ने समाचरति पुरुषसमाजमध्ये च सभयः शङ्कितस्तिष्ठति स्त्रीसमाजे तु निःशङ्कः प्रमदाजनोचितं च रन्धनकण्डनपेषणादिकं कर्म विदधाति इत्यादिमहिलास्वभावत्वं पण्डकलक्षणं १ तथा 'स्वरवर्णभेदः' स्वरः–शब्दो वर्णः–शरीरसम्बन्धी उपलक्षणत्वाद्गन्धरसस्पर्शाश्च स्त्रीपुरुषापेक्षया विलक्षणास्तस्य भवन्तीत्यर्थः २–३ मेहनं–पुरुषचिह्नं महद्भवति ४ मृद्वी च वाणी ललनाया इव जायते ५ तथा स्त्रिया इव सशब्दं मूत्रं जायते फेनरहितं च तद्भवति ६ एतानि षट् पण्डकलक्षणानि १ । तथा वातोऽस्यास्तीति वातिकः यः स्वनिमित्ततोऽन्यथा वा मेहने स्तब्धे सति स्त्रीसेवायामकृतायां वेदं धारयितुं न शक्नोति २ । तथा क्लीवः–असमर्थः, स चतुर्धा दृष्टिशब्दाश्लिष्टनिमन्त्रणाक्लीवभेदात्, तत्र यो विवस्त्रायवस्थं विपक्षं वीक्ष्य

दृष्टिक्लीबः, यस्तु युवतिशब्दं श्रुत्वा क्षुभ्यति स शब्दक्लीबः, यः पुनः पुरन्ध्रीभिरुपगूढो निमन्त्रितश्च व्रतं विधातुं न शक्नोति
क्षुभ्यति स दृष्टिक्लीबः, यस्तु युवतिशब्दं श्रुत्वा क्षुभ्यति स शब्दक्लीबः, यः पुनः पुरन्ध्रीभिरुपगूढो निमन्त्रितश्च व्रतं विधातुं न शक्नोति

स यथाक्रममाश्लिष्टक्लीबो निमन्त्रितक्लीबश्च विज्ञेयः ३ । यस्य तु मोहोत्कटतया सागारिकं वृषणौ वा कुम्भवदुत्सूनौ भवतः स कुम्भी ४ । तथा यस्य प्रतिसेव्यमानां वनितां विलोक्य प्रकाममीर्ष्या समुत्पद्यते स ईर्ष्यालुः ५ । तथा चटकवदुत्कटवेदतयाऽभीक्ष्णं प्रतिसे-वनाप्रसक्तः शकुनिः ६ । तथा मैथुनमासेव्य बीजनिसर्गे सति यः श्वान इव वेदोत्कटतया जिह्वालेहनादिनिन्द्यकर्मणा सुखमात्मनो मन्यते स तत्कर्मसेवी ७ । तथा यस्य पक्षे—शुक्लपक्षेऽतीव मोहोद्भवो भवति अपक्षे च—कृष्णपक्षे स्वल्पः स पाक्षिकापाक्षिकः ८ । तथा यः शुभगन्धं मन्वानः स्वकीयं लिङ्गं जिघ्रति स सौगन्धिकः ९ । तथा यो वीर्यपातेऽपि कामिनीमालिङ्ग्य तदङ्गेषु कक्षोपस्थादिष्वनुप्र-विश्यैव तिष्ठति स आसक्तः १० । पण्डकादीनां च परिज्ञानं तेषां तन्मित्रादेर्वा कथनादेरिति । ननु पुरुषमध्येऽपि नपुंसका उक्ता इहापि चेति तत्क एतेषां परस्परं प्रतिविशेषः ?, सत्यं, किन्तु तत्र पुरुषाकृतीनां ग्रहणं इह तु नपुंसकाकृतीनामिति, उक्तं च निशीथ-चूर्णौ—'इयाणिं नपुंसया दस, ते पुरिसेसु चेव वुत्ता नपुंसदारे, जइ जे पुरिसेसु वुत्ता ते चेव इहंपि किंकओ भेदो ?, भन्नइ, तहिं पुरिसाकिई इह गहणा सेसयाण भवे'त्ति, एवं स्त्रीष्वपि वाच्यं । ननु नपुंसकाः षोडशविधाः श्रुते श्रूयन्ते तत्कथमत्र दशैवोक्ताः ?, सत्यं, दशैव तद्भेदाः प्रव्रज्याया अयोग्याः ततस्त एवोक्ताः, शेषाः पुनः षट् दीक्षायोग्या एव, तथा चोक्तम्—'वद्धिए चिप्पिए चेव, मंतोसहिउवहए । इसिसत्ते देवसत्ते य, पव्वावेज्जा नपुंसए ॥ १ ॥' अस्यार्थः—आयत्यां राजान्तःपुरमहल्लकपदप्राप्त्यादिनिमित्तं यस्य बाल-त्वेऽपि छेदं दत्त्वा वृषणौ गालितौ भवतः स वर्द्धितकः, यस्य तु जातमात्रस्याङ्गुष्ठाङ्गुलीभिर्मर्दयित्वा वृषणौ द्राव्येते स चिप्पितः, एत-योश्चैवं कृते सति किल नपुंसकवेदोदयः सम्पद्यते, तथा कस्यचिन्मन्त्रसामर्थ्यादन्यस्य तु तथाविधौषधीप्रभावात् पुरुषवेदे स्त्रीवेदे वा

समुपहते सति नपुंसकवेदः समुदेति, तथा कस्यचिन्मदीयतपःप्रभावान्नपुंसको भवत्वयमिति ऋषिशापात्, तथा कस्यचिद्देवशापात्तदुदयो जायते, इत्येतान् षट् नपुंसकान् निशीथोक्तविशेषलक्षणसम्भवे सति प्रव्राजयेदिति १०९ ॥ इदानीं 'विगलंग'त्ति द्वारं दशोत्तरशततममाह—

**हत्थे पाए कन्ने नासा उट्ठे विवज्जिए चेव । वामणगवडभखुज्जा पंगुलटुंटा य काणा य ॥ ७९५ ॥**

**पच्छावि होंति वियला आयरियत्तं न कप्पए तेसिं । सीसो ठावेयव्वो काणगमहिसोव निम्मंमि ॥ ७९६ ॥**

'हत्थे'त्यादिगाथाद्वयं, इह सर्वत्र तृतीयार्थे सप्तमी, ततोऽयमर्थः—हस्तेन उपलक्षणत्वात् हस्ताभ्यां वा पादेन पादाभ्यां वा कर्णेन कर्णाभ्यां वा नासया ओष्ठेन वा विवर्जिता—रहिताः तथा वामनका—हीनहस्तपादाद्यवयवाः पृष्ठतोऽग्रतो वा निर्गतशरीरा वडभाः एकपार्श्वहीनाः कुब्जाः पादगमनशक्तिविकलाः पङ्गुलाः विकलपाणयः टुण्टाः काणा—एकाक्षाः एते सर्वेऽपि प्रव्राजनानर्हाः, प्रवचननिन्दादिदोपसम्भवादिति ॥ ७९६ ॥ अथ गृहीते व्रते ये विकलाङ्गा भवन्ति तेषां का वार्ता ?, तत्राह—पश्चादपि श्रामण्यस्थिता येऽक्षिगलनादिना विकला—विकलाङ्गा भवन्ति तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्वं न कल्पते, प्रवचनहीलनाप्रसक्तेः, येऽप्याचार्यपदोपविष्टाः सन्तः पश्चाद्विकलाङ्गा जायन्ते तेषामपि न कल्पते धारयितुमाचार्यत्वं, किन्तु तैस्तथा विकलाङ्गैः सद्भिरात्मनः पदे कोऽप्याकृतिमत्त्वादिगुणगणप्रशस्यः शिष्यः स्थापयितव्यः, आत्मा त्वप्रकाशे स्थाने स्थापयितव्यः, क इवेत्यत्राह—'काणकमहिप इव निम्ने' इयमत्र भावना—काणको नाम चोरित उच्यते, यथा चोरितमहिपो मा कोऽप्येनं द्राक्षीदिति हेतोर्ग्रामस्य नगरस्य वा बहिर्गर्तारूपे निम्ने प्रदेशे

उपलक्षणमेतदतिगुपिले वा वनगहने स्थाप्यते, एवमेषोऽपि, अन्यथा प्रवचनहीलनाप्रसक्तिः आज्ञादिभङ्गदोषप्रसङ्गश्च, केवलमस्यापि यत्कृत्यं तत्सर्वमपि स्थविराः कुर्वन्तीति ११० ॥ ७९७ ॥ इदानीं 'जंमुल्लं जइकप्पं वत्थं'ति एकादशोत्तरशततमं द्वारमाह—

**मुल्लजुयं पुण तिविहं जहन्नयं मज्झिमं च उक्कोसं । जहन्नेणऽट्ठारसगं सयसाहस्सं च उक्कोसं ॥ ७९७ ॥ दो साभरगा दीविच्चगा उ सो उत्तरावहो एक्को । दो उत्तरावहा पुण पाडलिपुत्तो हवइ एक्को ॥ ७९८ ॥ दो दक्खिणावहा वा कंचीए नेलओ स दुगुणाओ । एक्को कुसुमनगरओ तेण पमाणं इमं होइ ॥ ७९९ ॥**

'मुल्ले'त्यादि गाथात्रयं, मूल्ययुक्तं पुनर्वस्त्रं त्रिविधं भवति—जघन्यं मध्यममुत्कृष्टं च, तत्र जघन्येन—जघन्यतोऽष्टादशकं यस्याष्टादश रूपका नाणकविशेषा मूल्यं तज्जघन्यं वस्त्रमित्यर्थः, शतसाहस्रं च—रूपकलक्षमूल्यमुत्कृष्टं, शेषं तु मध्यममिति, तत्रेह त्रिविधमपि मूल्ययुक्तं वस्त्रं साधूनां ग्रहीतुं न कल्पते, किन्त्वेतस्मादष्टादशरूपकलक्षणान्मूल्याद्यन्न्यूनमूल्यं तदेव कल्पते, उक्तं च पञ्चकल्पबृहद्भाष्ये—"ऊणगअट्ठारसगं वत्थं पुण साहुणो अणुन्नायं । एत्तो वइरित्तं पुण नाणुन्नायं भवे वत्थं ॥ १ ॥" [ऊनाष्टादशकं वस्त्रं पुनः साधूनामनुज्ञातं । इतो व्यतिरिक्तं पुनर्नानुज्ञातं भवेद्वस्त्रम् ॥ १ ॥] ॥ ७९७ ॥ नन्विदं केन रूपकेण प्रमाणमित्याह—'साभरे'त्यादि, साभरको नाम रूपकः, ततो द्वीपस्थानसत्काभ्यां द्वाभ्यां साभरकाभ्यामुत्तरापथे एकः स साभरको भवति, द्वीपश्च यः सुराष्ट्रामण्डले दक्षिणस्यां दिशि योजनमात्रं समुद्रमवगाह्य तिष्ठति सोऽत्र गृह्यते, द्वाभ्यां च उत्तरापथाभ्यां—उत्तरापथसम्बन्धिभ्यां साभरकाभ्यां पाटलीपुत्रनगरसत्क एकः साभरक इति, अनेन रूपकेण वस्त्रप्रमाणमत्र कर्तव्यं ॥ ७९८ ॥ अथ प्रकारान्तरेण रूपकस्वरूपमाह—

'दक्खिणे'त्यादि, वाशब्दः प्रकारान्तरद्योतने द्वौ दक्षिणापथसत्कौ रूपकौ काञ्चीनगर्याः सम्बन्धी नेलको रूपक इत्यर्थः, स च नेलको द्विगुणः सन् एकः कुसुमनगरजः—पाटलीपुत्रसम्बन्धी रूपकः तेन रूपकेणेदमष्टादशकादि प्रमाणं भवतीति ॥ १११ ॥ ॥ ७९९ ॥ इदानीं 'सेज्जयरपिंडो'त्ति द्वादशोत्तरशततमं द्वारमाह—

सेज्जायरो पहू वा पहुसंदिट्ठो य होइ कायव्वो । एगो णेगे य पहू पहुसंदिट्ठेवि एमेव ॥ ८०० ॥ सागारियसंदिट्ठे एगमणेगे चउक्कभयणा उ । एगमणेगा वज्जा णेगेसु य ठावए एगं ॥ ८०१ ॥ अन्नत्थ वसेऊणं आवस्सग चरिममन्नहिं तु करे । दोन्निवि तरा भवंती सत्थाइसु अन्नहा भयणा ॥ ८०२ ॥ जइ जग्गंति सुविहिया करेंति आवस्सयं तु अन्नत्थ । सिज्जायरो न होई सुत्ते व कए व सो होई ॥ ८०३ ॥ दाऊण गेहं तु सपुत्तदारो, वाणिज्जमाईहि उ कारणेहिं । तं चेव अन्नं व वएज्ज देसं, सेज्जायरो तत्थ स एव होइ ॥ ८०४ ॥ लिंगत्थस्सवि वज्जो तं परिहरओ व भुंजओ वावि । जुत्तस्स अजुत्तस्स व रसावणे तत्थ दिट्ठंतो ॥ ८०५ ॥ तित्थंकरपडिकुट्ठो अन्नायं उग्ग-मोवि य न सुज्झे । अविमुत्ति अलाघवया दुल्लहसेज्जा उ वोच्छेओ ॥ ८०६ ॥ पुरपच्छिमवज्जेहिं अवि कम्मं जिणवरेहिं लेसेणं । भुत्तं विदेहएहि य न य सागरिअस्स पिंडो उ ॥८०७॥ बाहुल्ला गच्छस्स उ पढमालियपाणगाइकज्जेसु । सज्झायकरणआउट्टिया करे उग्गमेगयरं ॥ ८०८ ॥

'सेज्जे'त्यादिगाथानवकं, शय्यया—साधुसमर्पितगृहलक्षणया संसारसागरं दुस्तरमपि तरतीति शय्यातरः, स द्विधा भवति कर्तव्यः प्रभुर्वा—

यतिप्रदत्तोपाश्रयस्वामी प्रभुसन्दिष्टो वा—तेनैव प्रभुणा यत्कृतप्रमाणतया निर्दिष्टः, तत्र यः प्रभुः स एको वा भवेदनेको वा, प्रभुसन्दिष्टोऽप्येवमेव वाच्यः, कोऽर्थः ?—प्रभुसन्दिष्टोऽप्येको वाऽनेको वा भवतीति ॥ ८०० ॥ अमुमेवार्थं विशेषत आह—'सागारिये'त्यादि, सागारिकः—साधूपाश्रयस्वामी सन्दिष्टश्च—प्रभुसन्दिष्टः प्रत्येकमेको वाऽनेके वा भवन्ति, ततश्चतुष्कभजना—चतुर्भङ्गी ज्ञातव्या, तद्यथा—एकः प्रभुरेकः प्रभुसन्दिष्ट इति प्रथमो भङ्गः, एकः प्रभुरनेके प्रभुसन्दिष्टा इति द्वितीयः, अनेके प्रभव एकः प्रभुसन्दिष्ट इति तृतीयः, अनेके प्रभवोऽनेके च प्रभुसन्दिष्टा इति चतुर्थो भङ्गः, ते च शय्यातरा एको वाऽनेके वा वर्जनीयाः, अत्रैवापवादमाह—'अणेगेसु य ठावए एगं'ति अनेकेपु—वहुपु शय्यातरेपु सत्सु एकं कमप्यपवादपदेन शय्यातरं स्थापयेत्, इयमत्र भावना—वहुजनसाधारणा वसतिः कापि लब्धा, तत्र च साधुसामाचारीकुशलाः श्रावका यद्येवं वदन्ति एकं कमपि शय्यातरं स्थापयत मा सर्वानपि परिहरतेति तदा एकं शय्यातरं स्थापयित्वा शेषगृहेषु भिक्षां गृह्णन्ति, यद्वा वहवस्तत्र साधवस्ततो यदि सर्वेऽपि संस्तरन्ति तदा सर्वानपि शय्यातरान् कुर्वन्ति, असंस्तरणे तु एकं शय्यातरमिति, ग्रहणविधिश्चायं—द्वयोः शय्यातरयोरेकान्तरेण भिक्षाग्रहणवारको भवति त्रिषु शय्यातरेषु तृतीयदिने चतुर्षु चतुर्थदिने एवं वारकेण भिक्षां गृह्णन्तीति ॥ ८०१ ॥ अथायं शय्यातरः कदा भवति ?, तत्राह—'अन्नत्थे'त्यादि, अन्यत्र—अन्यस्मिन् कस्मिंश्चित् सार्थे ग्रामादौ वा उषित्वा सुप्त्वेत्यर्थः चरमं—प्राभातिकमावश्यकं—प्रतिक्रमणमन्यत्र—स्थानान्तरे गत्वा यदि कुर्वन्ति तदा द्वावपि 'तर'त्ति एकदेशेन समुदायोपचारात् शय्यातरौ भवतः, यस्यावग्रहे रात्रौ सुप्तो यदवग्रहे च प्राभातिकं प्रतिक्रमणं कृतं तौ द्वावपि शय्यातरौ भवत इति भावः, इदं च प्रायशः सार्थादिषु सम्भवति आदिशब्दाच्च चौरावस्कन्दभयादिपरिग्रहः, अन्यथा तु—प्रकारान्तरसद्भावे भजना—शय्यातरस्य विकल्पना, यस्य गृहे स्थिताः स वाऽन्यो वा शय्यातरो भवतीत्यर्थः ॥ ८०२ ॥ तामेव भजनामाह

—'जई'त्यादि, यदीत्यभ्युपगमे रात्रेश्चतुरोऽपि प्रहरान् जाग्रति शोभनं विहितं—अनुष्ठानं येषां ते सुविहिताः साधव इत्यर्थः आवश्यकं तु—प्राभातिकप्रतिक्रमणं पुनरन्यत्र गत्वा कुर्वन्ति तदा मूलोपाश्रयस्वामी शय्यातरो न भवति, किन्तु सुप्ते वा—शयने वा कृते सति कृते वा प्राभातिकप्रतिक्रमणे शय्यातरो भवति, अयमत्र तात्पर्यार्थः—शय्यातरगृहे सकलां रात्रिं जागरित्वा प्राभातिकप्रतिक्रमणं यद्यन्यत्र कुर्वन्ति तदा मौलः शय्यातरो न भवति किन्तु यद्गृहे प्रतिक्रमणं कृतं स एव, अथ शय्यातरगृहे रात्रौ सुप्त्वा जागरित्वा वा प्राभातिकप्रतिक्रमणं कुर्वन्ति तदा स एव शय्यातर इति, यदा तु वसतिसङ्कीर्णतादिकारणादनेकोपाश्रयेषु साधवस्तिष्ठन्ति तदा यत्राचार्यः स्थितः स एव शय्यातरो नान्य इति ॥ ८०३ ॥ ननु साधूनां गृहमर्पयित्वा गृहस्वामी यदा देशान्तरं व्रजति तदा शय्यातरो भवति वा न वा?, तत्राह—'दाऊणे'त्यादि वृत्तं, कश्चिद् गृहस्थः साधूनां गृहं दत्त्वा **'सपुत्रदारः'** पुत्रकलत्रादिसकलनिजलोकपरिवृतो वणिज्यादिभिः कारणैस्तमेव देशमन्यं वा व्रजेत्, तत्रापि च स्थितो यदि तस्य गृहस्य स्वामी तदा स एव शय्यातरो भवति, न पुनर्दूरदेशान्तरस्थितत्वात्तस्य शय्यातरत्वं न भवतीति ॥ ८०४ ॥ अथायं शय्यातरः कस्य सम्बन्धी परिहरणीयस्तत्राह—'लिंगत्थे'त्यादि, लिङ्गस्थस्यापि—लिङ्गमात्रधारिणोऽपि साधुगुणविरहितस्यापीत्यर्थः सम्बन्धी शय्यातरो वर्जनीयः आस्तां तावदितरस्य चारित्रिण इति, स च साधुस्तं शय्यातरपिण्डं परिहरतु वा भुङ्क्तां वा तथापि वर्ज्यः, अथ साधुगुणैर्वियुक्तस्य शय्यातरः कस्मात्परिह्रियते ?, उच्यते, साधुगुणैर्युक्तस्यायुक्तस्य वा शय्यातरः सर्वथा परिहर्तव्यः, अत्र च **'रसापणो'** मद्यापणो दृष्टान्तः, तथाहि—महाराष्ट्राख्ये देशे सर्वेष्वपि मद्यहट्टेषु मद्यं भवतु वा मा वा तथापि तत्परिज्ञापनार्थं ध्वजो बध्यते, तं च दृष्ट्वा सर्वेऽपि भिक्षाचरादयोऽभोज्यमितिकृत्वा परिहरन्ति, एवमसावपि साधुगुणैर्युक्तो वा भवतु अयुक्तो वा तथाप्यस्य रजोहरणध्वजो दृश्यत इतिकृत्वा शय्यातरः परिह्रियत इति ॥ ८०५ ॥ अथ

शय्यातरपिण्डग्रहणे दोषानाह—'तित्थंकरे'त्यादि, तीर्थकरैः सर्वैरपि प्रतिक्रुष्टो—निषिद्धः शय्यातरपिण्डः, तं च गृह्णता तीर्थकराज्ञा न कृता स्यात्, तथा अज्ञातस्य—अविदितस्य राजादिप्रव्रजितत्वेन उञ्छवृत्त्या यद्भैक्षं तदज्ञातमुच्यते तदेव प्रायः साधुना ग्राह्यं 'अन्नाय-उञ्छं चरई विसुद्धं' इति वचनात्, तत्रासन्ननिवासादतिपरिचयेन ज्ञातस्वरूपतया शय्यातरगृहे पिण्डं गृह्णन्न शुद्ध्यतीति योगः, तथा शय्यातरपिण्डग्रहणे सति 'उद्गमः' कल्पनीयभक्तादिभवनमपि 'न शुद्ध्यति' न शुद्धो भवति, निकटादिभावेन पुनः पुनस्तत्रैव भैक्ष-पानकादिनिमित्तं प्रविशत उद्गमदोषाः स्युरित्यर्थः, तथा स्वाध्यायश्रवणादिभ्यः प्रीतः शय्यातरः क्षीरादि स्निग्धद्रव्यं ददाति तच्च गृह्णता विमुक्तिः—गार्ध्याभावो न कृतः स्यात्, तथा अविद्यमानं लाघवं—लघुता यस्य स तथा तद्भावोऽलाघवता, तत्र विशिष्टाहारलाभेनोपचितत्वाच्छरीरालाघवं शय्यातरात्तत्परिजनाच्चोपधेर्लाभादुपधेरनल्पतया तदलाघवमिति, तथा दुर्लभा—असुलभा शय्या च—वसतिः कृता भवति, येन किल शय्या देया तेनाहाराद्यपि देयमित्येवं गृहिणां भयोत्पादनात्, तथा व्यवच्छेदो—विनाशो दानभयाच्छय्यायाः शय्यातरेण क्रियते, वसत्यभावाद्वा भक्तपानशय्यादिव्यवच्छेदः स्यादिति ॥ ८०६ ॥ तथा—'पुरे'त्यादि, पूर्वः—ऋषभस्वामी पश्चिमो—वर्धमानस्वामी एतौ द्वावपि मुक्त्वा शेषैर्जिनवरैः—द्वाविंशतिसङ्ख्यैर्मध्यमतीर्थकृद्भिर्विदेहजैश्च—महाविदेहक्षेत्रसमुत्पन्नैः सर्वैरपि तीर्थकरैः 'अवि कम्मं'ति अपिः—सम्भावने कर्म—आधाकर्म 'लेशेन' एकदेशेन भुक्तं, 'न च' नैव 'सागारिकस्य' शय्यातरस्य पिण्डः, मध्यमविदेहतीर्थकराणां हि यस्यैव योग्यमाधाकर्म कृतं तस्यैव तन्न कल्पते शेषाणां तु कल्पते इति तैराधाकर्मभोजनमपि कथञ्चिदनुमतं, सागारिकपिण्डः पुनः सर्वथापि प्रतिषिद्ध एवेति, अयं च सागारिकपिण्डो द्वादशधा अशनपानखादिमस्वादिम ४ रजोहरणवस्त्रपात्रकम्बल ४ सूचीपिप्पलक-कर्णशोधननखरदनिका ४ भेदात्, उक्तं च—"असणाईया चउरो ४ पाउञ्छण ५ वत्थ ६ पत्त ७ कंबलयं ८ । सूई ९ छुर १०

कन्नसोहण ११ नहरणिया १२ सागरियपिंडो ॥ १ ॥” तृणडगलकादिस्त्वपिण्डः, उक्तं च—“तणडगलछारमल्लगसेज्जासंथारपीढलेवाई । सेज्जायरपिंडो सो न होइ सेहो य सोवहिओ ॥ १ ॥” अत्र 'सेहो य सोवहिओ'त्ति यदि शय्यातरस्य पुत्रः पुत्री वा वस्त्रपात्रादिसहिता प्रव्रजेत्तदा स शय्यातरपिण्डो न भवतीति ॥ ८०७ ॥ तथा—'वाहुल्ले'त्यादि, गच्छस्य—साधुसमूहस्य वाहुल्यात्—प्राचुर्याद्धेतोः प्रथमालिकापानकाद्यर्थं शय्यातरगृहे पुनः पुनः प्रविशत्सु साधुषु शय्यातर उद्गमदोषं—आधाकर्मादीनामन्यतरं कमपि कुर्यात्, तत्र प्रथमालिका—क्षुल्लकग्लानादीनां प्रथमत एव भोजनं, पानकं च प्रतीतं, तथा निरन्तरस्वाध्यायविधानेन करणेन च—चारित्रेण 'आउट्टिय'त्ति आवर्जिता उपेत्य उद्गमदोषान् कुर्युरिति, अयं च अहोरात्रात्परतोऽशय्यातरो भवति, यदुक्तं—'वुत्थे वज्जेज्जऽहोरत्तं' (उषिते वर्जयेदहोरात्रं) इदमत्र हृदयं—यत्रोषितास्ततः स्थानाद्यस्यां वेलायां विनिर्गता द्वितीयदिने तावत्या वेलायाः परतोऽशय्यातरो भवति, तथा अपवादतो ग्लानत्वादिकारणे शय्यातरपिण्डोऽपि ग्रहीतुं कल्पते, यदुक्तं—'दुविहे गेलन्नंमी निमंतणे दव्वदुल्लहे असिवे । ओमोयरियपओसे भए य गहणं अणुन्नायं ॥ १ ॥' अस्या व्याख्या—आगाढानागाढे—गाढतरागाढतरे द्विविधे ग्लानत्वे शय्यातरपिण्डोऽपि ग्राह्यः, इदमुक्तं भवति—अनागाढे ग्लानत्वे त्रीन् वारानाहिण्ड्यते यदि न लब्धं ग्लानप्रायोग्यं तदा शय्यातरपिण्डोऽपि गृह्यते, आगाढे पुनः शीघ्रमेव शय्यातरपिण्डग्रहणं क्रियते, निमन्त्रणे च—शय्यातरनिर्बन्धे सकृत् तं गृहीत्वा पुनः प्रसङ्गो निवारणीयः, दुर्लभे च क्षीरादिद्रव्ये आचार्यादीनां प्रायोग्ये अन्यत्रालभ्यमाने तत्रैव गृह्णन्ति, अशिवे—दुष्टव्यन्तरोपद्रवादिके अवमौदर्ये च—दुर्भिक्षे अन्यत्र भिक्षायामलभ्यमानायां शय्यातरगृहेऽपि भिक्षां गृह्णन्ति, 'पओसे'त्ति राज्ञा प्रद्विष्टेन सर्वत्र भैक्षे निवारिते प्रच्छन्नं तद्गृहेऽपि गृह्णन्ति, अन्यत्र च तस्करादिभये तत्रापि गृह्णन्ति भिक्षादिकमिति ११२ ॥ ८०८ ॥ इदानीं 'जत्तिय सुत्ते सम्मं'ति त्रयोदशोत्तरशततमं द्वारमाह—

**चउदस दस य अभिन्ने नियमा सम्मं तु सेसए भयणा । मइओहिविवज्जासे होइ हु मिच्छं न सेसेसु ॥ ८०९ ॥**

यस्य साधोश्चतुर्दश पूर्वाणि यावद्दश च पूर्वाणि अभिन्नानि—परिपूर्णानि सन्ति तस्मिन्नियमात्—निश्चयेन सम्यक्त्वं भवति, शेषे—किञ्चिदूनदशपूर्वधरादौ भजना—विकल्पना, सम्यक्त्वं वा स्यान्मिथ्यात्वं वेत्यर्थः, तथा मतेरवधेश्च विपर्यासे—मत्यज्ञाने विभङ्गज्ञाने च संति हु—निश्चयेन मिथ्यात्वं भवति, मिथ्यात्ववशादेव हि मतिज्ञानावधिज्ञानयोर्विपर्याससद्भावः, श्रुतज्ञानस्य तु विपर्यासो दर्शित एव, 'सेसए भयण'त्ति वचनात्, शेषयोस्तु मनःपर्यवज्ञानकेवलज्ञानयोर्मिथ्यात्वं न भवत्येवेति ११३ ॥ ८०९ ॥ इदानीं 'जे निग्गंथावि चउगइय'त्ति चतुर्दशोत्तरशततमं द्वारमाह—

**चउदस ओहि आहारगावि मणनाणि वीयरागावि । हुंति पमायपरवसा तयणंतरमेव चउगइया ॥ ८१० ॥**

सर्वत्र सूचामात्रत्वात्सूत्रस्य 'चउदस'त्ति चतुर्दशपूर्वधरा अपि तथा अवधिज्ञानिनोऽपि तथा आहारका अपि—आहारकलब्धिमन्तोऽपि, चतुर्दशपूर्विणोऽपि केचिदाहारकलब्धिमन्तो न भवन्तीत्याहारकग्रहणं, तथा मनःपर्यवज्ञानिनोऽपि, तथा वीतरागा अपि—उपशान्तमोहा अपि, क्षीणमोहानां त्वप्रतिपातित्वान्न ग्रहणं, 'प्रमादपरवशाः' विषयकषायादिकलुषीकृतचेतसः सन्तस्तदनन्तरमेव—तद्भवानन्तरमेव चतुर्गतिका—नारकतिर्यग्मनुष्यदेवलक्षणगतिचतुष्टयभाजो भवन्तीति ११४ ॥ ८१० ॥ इदानीं 'खेत्ताईयं'ति पञ्चदशोत्तरशततमं द्वारमाह—

**जमणुग्गए रविंमि अतावखेत्तंमि गहियमसणाइ । कप्पइ न तमुवभोत्तुं खेत्ताईयत्ति समउत्ती**

॥ ८११ ॥ असणाईयं कप्पइ कोसदुगब्भंतराउ आणेउं । परओ आणिज्जंतं मग्गाईयंति तमकप्पं
॥ ८१२ ॥ पढमप्पहराणीयं असणाइ जईण कप्पए भोत्तुं । जाव तिजामे उड्ढं तमकप्पं कालइक्कंतं
॥ ८१३ ॥ कुक्कुडिअंडयमाणा कवला वत्तीस साहुआहारे । अहवा निययाहारो कीरइ वत्तीस-
भाएहिं ॥ ८१४ ॥ होइ पमाणाईयं तदहियकवलाण भोयणे जइणो । एगकवलाइऊणे ऊणोय-
रिया तवो संति ( तंमि ) ॥ ८१५ ॥

'जमे'त्यादिगाथापद्कं, यदनुद्गते रवावतापक्षेत्रे रात्रावित्यर्थः गृहीतमशनादि—अशनं पानं खादिमं स्वादिमं च न तदुपभोक्तुं कल्पते यतीनां, यतः क्षेत्रातीतं तदिति समयोक्तिः—सिद्धान्तभणितिरिति ११५ ॥ ८११ ॥ इदानीं 'मार्गातीत'मिति पोडशोत्तरशततमं द्वारमाह—'असे'त्यादि, अशनादिकं क्रोशद्वयाभ्यन्तराद्—गव्यूतद्वयमध्यादानेतुं कल्पते यतीनां, परतस्तु—क्रोशद्वयात्परत आनीयमानं तदश-नादि मार्गातीतमितिकृत्वाऽकल्पनीयमेवेति ११६ ॥ ८१२ ॥ इदानीं 'कालातीत'मिति सप्तदशोत्तरशततमं द्वारमाह—'पढे'त्यादि, दिनप्रथमप्रहरानीतमशनादि कल्पते यतीनां भोक्तुं यावत् त्रयाणां यामानां समाहारस्त्रियामं—प्रहरत्रयमित्यर्थः, ऊर्द्ध्वं तु—प्रहरत्रयादुपरि चतुर्थप्रहरे तदकल्प्यं—अकल्पनीयं कालातिक्रान्तं, सिद्धान्ते निषिद्धमितिकृत्वेति ॥ ११७ ॥ ८१३ ॥ इदानीं 'प्रमाणातिक्रान्त'मित्य-ष्टादशोत्तरशततमं द्वारमाह—'कुक्कु' इत्यादिगाथाद्वयं, कुर्कुटी—पक्षिणी तस्या यदण्डकं तन्मानाः—तत्प्रमाणाः कवला द्वात्रिंशत्साधूनां—य-तीनामाहारे भवन्ति, प्रकारान्तरेण कवलमानमाह—अथवा साधोरुदरं यावन्मात्रेणाहारेण न न्यूनं नाप्यत्याध्रातं भवति तावन्मात्रो निजकाहारो द्वात्रिंशद्भागैः क्रियते, द्वात्रिंशत्तमश्च भागः कवल इति, एतस्माच्च द्वात्रिंशत्कवलमानादधिककवलभोजने यतेः प्रमाणातीतं

भोजनं भवति, तथा एतस्माद् द्वात्रिंशत्कवलप्रमाणाहारादेकेन द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चादिभिर्वा कवलैर्न्यूने सति तस्मिन्नाहारे ऊनोदरिकाभिधस्तपोविशेषो भवतीति ११८ ॥ ८१४–८१५ ॥ इदानीं 'दुहसेज्जचउक्कं'ति एकोनविंशत्युत्तरशततमं द्वारमाह—

**पवयणअसद्दहाणं १ परलाभेहा य २ कामआसंसा ३ । ण्हाणाइपत्थणं ४ इय चत्तारिऽवि दुक्खसेज्जाओ ॥ ८१६ ॥ सुहसेज्जाओऽवि चउरो जइणो धम्माणुरायरत्तस्स । विवरीयायरणाओ सुहसेज्जाउत्ति भन्नंति ॥ ८१७ ॥**

'पवे'त्यादिगाथाद्वयं, शेरते आस्विति शय्याः दुःखदाः शय्या दुःखशय्याः, ताश्च द्वेधा—द्रव्यतो भावतश्च, तत्र द्रव्यतोऽमनोज्ञखट्वादिरूपाः, भावतो दुःस्थितचित्ततया दुःश्रमणतास्वभावास्ताश्चतस्रः, तत्र प्रवचनस्य—जिनशासनस्याश्रद्धानं—एवमेवेदमिति प्रतिपत्त्यभाव इति प्रथमा दुःखशय्या, तथा परेषां—अन्येषां लाभस्य—वस्त्राद्यवाप्तेरीहा— प्रार्थनेति द्वितीया, चः समुच्चये, तथा कामानां—मनोज्ञशब्दरूपादीनामाशंसनं—अभिलषणमिति तृतीया, तथा स्नानादीनां—गात्राभ्यङ्गमर्दनप्रक्षालनादीनां प्रार्थनं—आकाङ्क्षणमिति चतुर्थी, आसु हि क्लिष्टभावस्वभावासु श्रामण्यशय्यासु स्थितो जीवः कदाचिदपि श्रामण्यस्य न सुखमासादयतीति चतस्रो दुःखशय्याः ११९ ॥ ८१६ ॥ इदानीं विंशत्युत्तरशततमं 'सुहसेज्जचउक्कं'ति द्वारमाह—'सुहे'त्यादि, 'यतेः' साधोः 'धर्मानुरागरक्तस्य' धर्मे—जिनधर्मे अनुरागेण—गाढतराभिलापरूपेण रक्तस्य—आसक्तस्य सुखशय्या एवं चतस्रोऽपि 'विपरीताचरणात्' पूर्वोक्तप्रवचनाश्रद्धानादिदुःखशय्यावैपरीत्यकरणतः सुखशय्या इति भण्यन्ते, अयं भावः—प्रवचनश्रद्धानं परलाभानीहनं कामादीनामनाशंसनं स्नानादीनामप्रार्थनं यतेः

सुखशय्याः, तत्र हि स्थितः परमसन्तोषपीयूषमग्नमानसतया निरन्तरतपोऽनुष्ठानादिक्रियाकलापव्यापृततया च सुखमेव यतिः समासादयतीति १२० ॥ ८१७ ॥ इदानीं 'तेरस किरियाठाणाइं'ति एकविंशत्युत्तरशततमं द्वारमाह—

अट्ठा १ णट्ठा २ हिंसा ३ ऽकम्हा ४ दिट्ठी य ५ मोस ६ ऽदिन्ने ७ य । अज्झप्प ८ माण ९ मित्ते १० माया ११ लोभे १२ रियावहिया १३ ॥ ८१८ ॥ तसथावरभूएहिं जो दंडं निसरई उ कज्जेणं । आयपरस्स व अट्ठा अट्ठादंडं तयं यिंति १ ॥ ८१९ ॥ जो पुण सरडाईयं थावरकायं च वणलयाईयं । मारेइ छिंदिऊण व छड्डेई सो अणट्ठाए २ ॥ ८२० ॥ अहिमाइवयरियस्स व हिंसिंसु हिंसई व हिंसेही । जो दंडं आरभई हिंसादंडो हवइ एसो ३ ॥ ८२१ ॥ अन्नट्ठाए निसिरइ कंडाई अन्नमाहणे जो उ । जो व निअंतो सस्सं छिंदिज्जा सालिमाईयं ॥ ८२२ ॥ एस अकम्हादंडो ४ दिट्ठिविवज्जासओ इमो होइ । जो मित्तममित्तंति काउं घाएज्ज अहवावि ॥ ८२३ ॥ गामाई घाएज्ज व अतेण तेणत्ति वावि घाएज्जा । दिट्ठिविवज्जासेसो किरियाठाणं तु पंचमयं ५ ॥ ८२४ ॥ अत्तट्ठनायगाईण वावि अट्ठाइ जो मुसं वयइ । सो मोसप्पचइओ दंडो छट्ठो हवइ एसो ६ ॥ ८२५ ॥ एमेव आयनायगअट्ठा जो गिण्हई अदिन्नं तु । एसो अदिन्नवित्ती ७ अज्झत्थीओ इमो होइ ॥ ८२६ ॥ नवि कोइ य किंचि भणइ तहवि हु हियएण दुम्मणो किंचि । तस्सऽज्झत्थी सीसइ चउरो ठाणा इमे तस्स ॥ ८२७ ॥ कोहो माणो माया लोभो अज्झत्थिकिरियए चेव ८ । जो पुण

जाइमयाई अट्ठविहेणं तु माणेणं ॥ ८२८ ॥ मत्तो हीलेइ परं खिंसइ परिभवइ माणवत्तेया ९। माइपिइनायगाईण जो पुण अप्पेवि अवराहे ॥ ८२९ ॥ तिव्वं दंडं कुणई दहणंकणबंधताडणा-ईयं। तम्मित्तदोसवित्ती किरियाठाणं भवे दसमं १० ॥ ८३० ॥ एगारसमं माया अन्नं हिययंमि अन्न वायाए। अन्नं आयरई वा सकम्मणा गूढसामत्थो ॥ ८३१ ॥ मायावत्ती एसा ११ एत्तो पुण लोहवत्तिया इणमो। सावज्जारंभपरिग्गहेसु सत्तो महंतेसु ॥ ८३२ ॥ तह इत्थीकामेसुं गिद्धो अ-प्पाणयं च रक्खंतो। अन्नेसिं सत्ताणं वहबंधणमारणे कुणइ ॥ ८३३ ॥ एसेह लोहवत्ती १२ इरि-यावहिअं अओ पवक्खामि। इह खलु अणगारस्सा समिईगुत्तीसुगुत्तस्स ॥८३४॥ सययं अप्पम-त्तस्स भगवओ जाव चक्खुपम्हंपि। निवयइ ता सुहुमा हू इरियावहिया किरिय एसा १३ ॥८३५॥

'अट्ठे'त्यादिगाथाऽष्टादशकं, करणं क्रिया—कर्मबन्धनिबन्धना चेष्टा तस्याः स्थानानि—भेदाः क्रियास्थानानि तानि च त्रयोदश, तत्र 'अट्ठाऽणट्ठा हिंस'त्ति अत्र त्रिषु पदेषु प्राकृतलक्षणेन चतुर्थ्येकवचनस्य लोपो दृश्यः, ततोऽर्थाय—स्वपरप्रयोजनाय क्रिया अर्थक्रिया, अनर्थाय—स्वपरप्रयोजनाभावेन क्रियाऽनर्थक्रिया, हिंसायै क्रिया हिंसाक्रिया, अथवाऽर्थो विद्यते यस्यां साऽर्थक्रिया अनर्थः—स्वप्रयो-जनाभावो विद्यते यस्यां साऽनर्था, हिंसा विद्यते यस्यां सा हिंसाक्रिया, अर्शादेराकृतिगणत्वादच्प्रत्ययः, तथाऽकस्माद्—अनभिसन्धिना क्रियाऽकस्मात्क्रिया, तथा 'दिट्ठी य'त्ति दृष्टिविपर्यासक्रिया सूचनात्सूत्रमितिकृत्वा, तथा मृषाक्रिया तथाऽदत्तादानक्रिया तथाऽ-ध्यात्मक्रिया तथा मानक्रिया तथाऽमित्रक्रिया तथा मायाक्रिया तथा लोभक्रिया तथा ईर्यापथक्रियेति ॥ ८१८ ॥ अथैतानि क्रमेण

व्याचिख्यासुः प्रथमं क्रियास्थानं व्याचष्टे—'तसे'त्यादि, अत्र तृतीयायाः सप्तम्यर्थत्वात् त्रसेषु—द्वीन्द्रियादिषु स्थावरेषु—पृथिव्यादिषु भूतेषु—प्राणिषु यः कश्चिद्दण्डं—दण्ड्यते आत्माऽन्यो वा प्राणी येन स दण्डो—हिंसा, तं निसृजति—करोति कार्येण—प्रयोजनेन, तदेवाह—'आयपरस्स व अट्ठ'त्ति आत्मनः—स्वशरीरादेः परस्य वा—बन्धुवर्गादेरर्थाय—उपकाराय तं क्रियाक्रियावतोरभेदोपचारादर्थ-दण्डं—अर्थक्रियां ब्रुवते तीर्थकरगणधरा इति १ ॥ ८१९ ॥ अथ द्वितीयं क्रियास्थानमाह—'जो पुणे'त्यादि, यः पुनः कश्चित्सरटादिकं—कृकलासमूषिकादिकं त्रसकायं स्थावरकायं च—वनलतादिकं प्रयोजनव्यतिरेकेणैव यथाक्रमं मारयित्वा छित्त्वा च त्यजति स धर्म-धर्मिणोरभेदोपचारादनर्थाय क्रियेति २ ॥ ८२० ॥ तृतीयं क्रियास्थानमाह—'अही'त्यादि, अयं सर्पादिर्वैरी वाऽस्मान् हिंसितवान् हिनस्ति हिंसिष्यति वा इत्यभिसंधिना अह्यादेः—सर्पादेः मकारोऽलाक्षणिकः वैरिणो वा यो दण्डमारभते—वधं विधत्ते स हिंसादण्डः धर्मधर्मिणोरभेदोपचाराद्भवत्येष इति ३ ॥ ८२१ ॥ चतुर्थं क्रियास्थानमाह—'अन्नट्ठे'त्यादि, अन्यार्थं—अन्येषां मृगपक्षिसरीसृपप्र-भृतीनां वधनिमित्तं 'निसृजति' क्षिपति 'काण्डादिकं' शरलेष्टुप्रभृतिकं अन्यं पुनराहन्यात् य एषोऽकस्माद्—अनभिसन्धिना अन्य-वधार्थप्रवृत्त्या दण्डः—अन्यस्य विनाशोऽकस्माद्दण्डः, यो वा 'नियंतो'त्ति अवलोकयन् छेदनबुद्ध्या तृणादिकं अन्यत् शाल्यादिकं शस्यमनाभोगेन छिंद्यादिति, अयमर्थः—अन्यस्मिन् शाल्यादिमध्यव्यवस्थिते तृणादिके छेत्तुमुपक्रान्ते अनाभोगतोऽन्यच्छाल्यादिकं छिंद्यात् एष वाऽकस्माद्दण्डः ४ ॥ ८२२ ॥ पञ्चमं क्रियास्थानमाह—'दिट्ठी'त्यादि, दृष्टेः—बुद्धेर्विपर्यासो—विपर्ययो मतिविभ्रम इत्यर्थः तस्मादयं—वक्ष्यमाणो दण्डो भवति, अमुमेवाह—यो मित्रमपि सदमित्रमितिकृत्वा घातयेत्, यो मित्रस्याप्यमित्रोऽयमिति बुद्ध्या वधः स दृष्टिविपर्यासदण्ड इति भावः, अथवाऽपीति प्रकारान्तरद्योतने, ग्रामादीन् घातयेत्, अयमर्थः—ग्राममध्यवर्तिना केनचित्कर्सि-

श्चिदपराधे कृते समग्रमपि ग्रामं यन्मारयति एष वा दृष्टिविपर्यासदण्ड इति, यद्वा अस्तेनमपि स्तेनोऽयमितिकृत्वा हन्यादित्येष दृष्टिविपर्यासः पञ्चमं क्रियास्थानमिति ५ ॥ ८२३ ॥ ८२४ ॥ अथ षष्ठं क्रियास्थानमाह—'अत्तट्ठे'त्यादि, आत्मार्थं परेषां वा—नायकादीनामर्थाय यो मृषा वदति स एष मृषाप्रत्ययिको—मृषाकारणिको दण्डः षष्ठो भवति ६ ॥ ८२५ ॥ सप्तमं क्रियास्थानमाह—'एमेवे'त्यादि, 'एवमेव' मृषावाददण्डवदात्मनायकार्थं—आत्मनः परेषां वा नायकादीनां निमित्तं 'नाइग'त्ति पाठे तु ज्ञात्यर्थं—स्वजनार्थं यो गृह्णात्यदत्तं—अन्येनावितीर्णमेषोऽदत्तवर्ती अदत्तदण्डक्रियावानित्यर्थः ७ ॥ ८२६ ॥ अयं पुनर्वक्ष्यमाणो भवति आध्यात्मिको दण्डः, अध्यात्मं—मनस्तत्र भवो वाह्यनिमित्तानपेक्षः शोकोऽमिभव इति भावः, तमेवाह—'नवी'त्यादि, यस्य सम्मुखं न कोऽपि किञ्चिदप्यनिष्टं जल्पति, तथापि हृदयेन—मनसा कृत्वा किञ्चिदतिशयेन दुर्मनाः—कालुष्यभाग्भवति तस्याध्यात्मिकी क्रिया 'सीसइ'त्ति कथ्यते, तस्य चाध्यात्मिकक्रियास्थानस्य इमानि—वक्ष्यमाणानि चत्वारि 'स्थानानि' कारणानि भवन्ति, तान्येवाह—'कोहो' इत्यादि, क्रोधो मानो माया लोभश्चेत्येतानि चत्वारि कारणान्यध्यात्मक्रियायां भवन्तीति, वाह्यनिमित्तानपेक्षमाभ्यन्तरनिष्कारणक्रोधादिसमुद्भूतं दौर्मनस्यमाध्यात्मिकक्रियेति तात्पर्यार्थः ८ ॥ ८२७ ॥ नवमं क्रियास्थानमाह—'जो पुणे'त्यादि, यः पुनर्जातिमदादिना—जातिकुलरूपवलश्रुततपोलाभैश्वर्यमदलक्षणेनाष्टविधेन मानेन मत्तः सन् परं आत्मव्यतिरिक्तं हीलयति—जात्यादिभिर्निन्दति निकृष्टोऽयमित्यादिवचनैः परिभवत्यनेकाभिः कदर्थनाभिर्मानप्रत्यया एषा क्रियेति ९ ॥ ८२८—८२९ ॥ दशमं क्रियास्थानमाह—'माई'त्यादि, यः पुनर्मातापितृस्वजनादीनामल्पेऽप्यपराधे तीव्रं दण्डं कुरुते दहनाङ्कनवन्धताडनादिकं तन्मित्रद्वेषवर्तिक्रियास्थानं, अमित्रक्रियेत्यर्थः, भवेद्दशमं क्रियास्थानमिति, तत्र दहनं—उल्मुकादिभिर्दम्भनं अङ्कनं—ललाटादिषु चिह्नकरणं वन्धो—रज्ज्वादिभिर्नियन्त्रणं ताडनं—कशादिभिराहननं, आदिशब्दादन्नपान-

मित्राद्विषप्रत्ययिकः १० ॥ ८३० ॥ एकादशं क्रियास्थानमाह—'एगारे'त्यादि, एकादशं माया—मायाक्रियास्थानं यथा कश्चिन्मनसि अन्यत्—मनःक्रियाविलक्षणं अन्यच वाग्ज्ञानमतिसंगादि आचरति—करोति, कथम्भूतः सन् ?—अन्यत्—वचःक्रियाविलक्षणं वाचि—वचसि अन्यत्—मनःक्रियाविलक्षणं अन्यच कर्मणा निजचेष्टितेनाकारेङ्गितादिना, मायाप्र-'गूढसामर्थ्यः' गूढे—गोपने सामर्थ्यं—शक्तिविशेषो यस्य स तथा, केन कृत्वा ?—'स्वकर्मणा' निजचेष्टितेनाकारेङ्गितादिना, मायाप्रत्यया एषा क्रियेति ११ ॥ ८३१ ॥ द्वादशं क्रियास्थानमाह—'एत्तो' इत्यादि, इतः—ऊर्ध्वं पुनर्लोभप्रत्यया क्रिया इयं—वक्ष्यमाणा, यथा सावद्यारम्भाः—प्राण्युपमर्दादिना सपापव्यापारा ये परिग्रहा—धनधान्यादिरूपास्तेषु गढ्तेषु—गुरुषु सक्तो—गाढतराकाङ्क्षायुक्तः, तथा स्त्रीषु—युवतिषु कामेषु च—मनोज्ञरूपरसगन्धस्पर्शशब्दस्वरूपेषु गृद्धः—अत्यन्तमभिसक्तः, तथाऽऽत्मानमपायेभ्यो गाढादरेण रक्षन् अन्येषां सत्त्वानां—प्राणिनां वधबन्धनमारणानि—लगुडादिहननरज्ज्वादिसंयमनप्राणव्यपरोपणलक्षणानि करोति एषा इह—सिद्धान्ते लोभप्रत्यया—लोभनिबन्धना क्रियेति ॥ १२ ॥ ८३२–८३३ ॥ त्रयोदशं क्रियास्थानमाह—अतो—लोभक्रियानन्तरमैर्यापथिकीं क्रियां प्रवक्ष्यामि, तत्र ईरणमीर्या—गमनं तद्विशिष्टः पन्था ईर्यापथस्तत्र भवा ऐर्यापथिकी, व्युत्पत्तिमात्रमिदं प्रवृत्तिनिमित्तं तु यः केवलयोगप्रत्यय उपशान्तमोहादित्रयस्य सातवेदनीयकर्मबन्धः सा ऐर्यापथिकी, इह खल्वनगारस्य साधोः समितिषु—ईर्यासमित्यादिषु गुप्तिषु—मनोगुप्त्यादिषुषु गुप्तस्य—सुसंवृतस्य सततमेवाप्रमत्तस्योपशान्तमोहक्षीणमोहसयोगकेवलिलक्षणगुणस्थानकत्रयवर्तिनः, अन्येषां तु अप्रमत्तानामपि कषायप्रत्ययकर्मबन्धसद्भावेन केवलयोगनिमित्तकर्मबन्धासम्भवान्नाप्रमत्तशब्देनात्र ग्रहणं, भगवतः—पूज्यस्य यावच्चक्षुःपक्ष्मापि निपतति—स्पन्दते, इदं च योगस्योपलक्षणं, ततोऽयमर्थः—यावच्चक्षुर्निमेषोन्मेषमात्रोऽपि योगः सम्भवति तावत्सूक्ष्मा—एकसामयिकबन्धत्वेनात्यल्पा सातबन्धनल-

क्षणा क्रिया भवति, एषा हुः—स्फुटमैर्यापथिकी क्रिया त्रयोदशीति १२१ ॥ ८३४ ॥ ८३५ ॥ इदानीं 'आगरिसा सामाईए चउविहेवि एगभवे' इति द्वाविंशत्युत्तरशततमं द्वारमाह—

**सामाइयं चउद्धा सुय १ दंसण २ देस ३ सव्व ४ भेएहिं । ताण इमे आगरिसा एगभवं पप्प भणियव्वा ॥ ८३६ ॥ तिण्ह सहस्स पुहुत्तं च सयपुहुत्तं च होइ विरईए । एगभवे आगरिसा एवइया हुंति नायव्वा ॥ ८३७ ॥**

'सामे'त्यादि गाथाद्वयं, समो—रागद्वेषयोरपान्तरालवर्ती मध्यस्थः, 'इण् गतौ' अयनं अयो गमनमित्यर्थः समस्य अयः समायः—समीभूतस्य सतो मोक्षाध्वनि प्रवृत्तिः, समाय एव सामायिकं, विनयादेराकृतिगणत्वात् स्वार्थिक इकण्प्रत्ययः, एकान्तोपशान्तगमनमिति भावः, तच्चतुर्धा—चतुर्भेदं श्रुतदर्शनदेशसर्वलक्षणैर्भेदैः, श्रुतसामायिकं सम्यक्त्वसामायिकं देशविरतिसामायिकं सर्वविरतिसामायिकं चेत्यर्थः, तेषां च चतुर्णामप्येते—वक्ष्यमाणा आकर्षा एकं भवं उपलक्षणत्वान्नानाभवांश्च प्राप्य—आश्रित्य भणितव्याः, तत्र आकर्षणमाकर्षः—प्रथमतया मुक्तस्य वा ग्रहणमित्यर्थः, ते च द्विधा—एकभविका नानाभविकाश्च ॥ ८३६ ॥ तत्र प्रथमत एकभविकानाह—'तिण्हे'त्यादि, त्रयाणां—सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिकानामेकभवे सहस्रपृथक्त्वमाकर्षाणामुत्कर्षतो भवति, विरतेः—सर्वविरतेस्त्वेकभवे शतपृथक्त्वमाकर्षाणामुत्कर्षतः, पृथक्त्वमिति द्विप्रभृतिरानवभ्यः; एवमेतावन्त उत्कर्षत एकभवे आकर्षा भवन्ति ज्ञातव्याः, परतस्तु प्रतिपातोऽलाभो वा, जघन्यतः पुनश्चतुर्णामपि सामायिकानामेक एवाकर्ष एकस्मिन् भवे भवति, उक्तं चावश्यकचूर्णौ—'सुयसामाइयं एग-

भवे जहन्नेणं एगम्मि आगरिसे उक्कोसेणं सहस्सपुहुत्तंवारा, एवं सम्मत्तस्सवि, देसविरईए य सव्वविरईए य पुण जहन्नेण एकम्मि, उक्कोसेणं सयपुहुत्तंवारा" इति ॥ ८३७ ॥ अथ नानाभवगतान् प्रतिपादयति—

**तिण्ह असंखसहस्सा सहसपुहुत्तं च होइ विरईए। नाणभवे आगरिसा एवइया हुंति नायव्वा ॥ ८३८ ॥**

'तिण्हं'इत्यादि, त्रयाणां–सम्यक्त्वश्रुतदेशविरतिसामायिकानां नानाभवेष्वाकर्षाणामुत्कर्षतो भवन्त्यसङ्ख्येयानि सहस्राणि, यतस्त्रयाणामप्येकस्मिन् भवे सहस्रपृथक्त्वमाकर्षाणामुक्तं, भवाश्च क्षेत्रपल्योपमासङ्ख्येयभागगतनभःप्रदेशतुल्याः 'संमत्तदेसविरया पलियस्सासंखभागमेत्ता उ।' [ सम्यक्त्वदेशविरताः पल्यस्यासंखभागमात्रा एव ] इति वचनात्, ततः सहस्रपृथक्त्वं तैर्गुणितमसङ्ख्येयानि सहस्राणि भवन्ति, सहस्रपृथक्त्वं च नानाभवेष्वाकर्षाणामुत्कर्षतो भवति विरतेः–सर्वविरतेः, तस्या हि खल्वेकभवे शतपृथक्त्वमाकर्षाणामुक्तं भवाश्चाष्टौ ततः शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं भवति, एतावन्तो नानाभवेष्वाकर्षा भवन्ति ज्ञातव्याः, अन्ये पठंति—'दोण्ह सहस्समसंखा' इति, तत्रापि श्रुतसामायिकं सम्यक्त्वसामायिकानन्तरीयकत्वादनुक्तमपि प्रतिपत्तव्यं, सामान्यश्रुतस्य त्वक्षरात्मकस्य नानाभवेष्वाकर्षा अनन्तगुणा इति १२२ ॥ ८३८ ॥ इदानीं 'सीलंगट्ठारससहस्स'त्ति त्रयोविंशत्युत्तरशततमं द्वारमाह—

**सीलंगाण सहस्सा अट्ठारस एत्थ हुंति नियमेणं । भावेणं समणाणं अक्खंडचरित्तजुत्ताणं ॥ ८३९ ॥ जोए ३ करणे ३ सन्ना ४ इंदिय ५ भोमाइ १० समणधम्मे य १० । सीलंगसहस्साणं अट्ठारगस्स निप्फत्ती ॥ ८४० ॥ करणाइं तिन्नि जोगा मणमाईणि हवंति करणाइं । आहाराई**

सन्ना चउ सोयाइंदिया पंच ॥ ८४१ ॥ भोमाई नव जीवा अजीवकाओ य समणधम्मो य। खं-
ताइदसपयारो एवं ठिय भावणा एसा ॥ ८४२ ॥ न करइ मणेण आहारसन्नविप्पजढगो उ निय-
मेण। सोइंदियसंवरणो पुढविजिए खंतिसंजुत्तो ॥ ८४३ ॥ इय मद्दवाइजोगा पुढवीकाए हवंति
दस भेया। आउक्कायाईसुवि इअ एए पिंडिअं तु सयं ॥ ८४४ ॥ सोइंदिएण एवं सेसेहिवि जं
इमं तओ पंच। आहारसन्नजोगा इय सेसाहिं सहस्सदुगं ॥ ८४५ ॥ एवं मणेण वयमाइएसु एवं
तु छस्सहस्साइं। न करे सेसेहिंपि य एए सव्वेवि अट्ठारा ॥ ८४६ ॥

शीलाङ्गानां—चारित्रांशानां तत्कारणानां वा सहस्राण्यष्टादश 'अत्र' यतिधर्मे शासने वा भवन्ति—स्युर्नियमेन—अवश्यम्भावेन न
न्यूनान्यधिकानि वेति भावः, कथमित्याह—'भावेन' विशुद्धपरिणामेन, बहिर्वृत्त्या तु कल्पप्रतिसेवया न्यूनान्यपि स्युरिति भावः,
केषामित्याह—श्रमणानां—साधूनां, न पुनः श्रावकाणां, सर्वविरतावेव तेषामुक्तसङ्ख्याकानां सम्भवात्, अथवा भावेन श्रमणानां न तु द्रव्य-
श्रमणानां, तेषामपि किंविधानामित्याह—'अखण्डचरित्रयुक्तानां' सम्यक्चरणप्रतिपन्नानां न तु दर्पप्रतिषेवया खण्डितचारित्रांशानां,
नन्वखण्डचारित्रा एव सर्वविरता भवन्ति तत्खण्डने असर्वविरतत्वप्रसक्तेः, तथाहि—'पडिवज्ज अइकम्मे पंच' इत्यागमप्रामाण्यात् सर्व-
विरतः पञ्चापि महाव्रतानि प्रतिपद्यते अतिक्रामति च पञ्चाप्येव नैकादिकमिति कथं सर्वविरतेर्देशखण्डनमिति ?, अत्रोच्यते, सत्यमे-
तत्, किन्तु प्रतिपत्त्यपेक्षं सर्वविरतत्वं, परिपालनापेक्षया त्वन्यथाऽपि सञ्ज्वलनकषायोदयात्स्यात्, अत एवोक्तम्—"सव्वेवि य अइ-
यारा संजलणाणं तु उदयओ होंती"ति [ सर्वेऽप्यतिचाराश्च संज्वलनानामेवोदयतो भवन्ति ] अतिचारा हि चारित्रदेशखण्डनरूपा एव,

तथैकव्रतातिक्रमे सर्वव्रतातिक्रम इति यदुक्तं तदपि विवक्षया, सा चेयं—"छेयस्स जाव दाणं ताव अइक्कमइ नेव एगंपि । एगं अइक्कमंतो अइक्कमे पंच मूलेणं ॥ १ ॥" [ छेदस्य यावद्दानं तावदतिक्राम्यति नैवैकमपि । एकमतिक्राम्यन् अतिक्राम्यति पञ्च ( शोधिश्च ) मूलेन ॥ १ ॥ ] एवमेव हि दशविधप्रायश्चित्तविधानं सफलं स्यात्, अन्यथा मूलाद्येव तत्स्यात्, व्यवहारनयतश्चातिचारसम्भवः निश्चयतस्त्वसर्वविरततया भङ्ग एवेति पर्याप्तं प्रपञ्चेनेति ॥ ८३९ ॥ कथं पुनरेकविधस्य शीलस्याङ्गानामष्टादश सहस्राणि भवन्तीत्याह—'जोए' इत्यादि, योगे—करणादिव्यापारे विषयभूते करणे—योगस्यैव साधकतमे मनःप्रभृतिके, संज्ञादीनि चत्वारि पदानि द्वन्द्वैकत्ववन्ति, तत्र संज्ञासु—चेतनाविशेषरूपासु आहारादिषु इन्द्रियेषु—अक्षेषु श्रोत्रादिषु भूम्यादिषु—पृथिव्यादिजीवकायेष्वजीवकाये च श्रमणधर्मे च—क्षान्त्यादौ शीलाङ्गसहस्राणां प्रस्तुतानामष्टादश परिमाणमस्य वृन्दस्येत्यष्टादशकं तस्य निष्पत्तिः—सिद्धिर्भवति ॥ ८४० ॥ योगादीनेव व्याख्यातुमाह—'करणाइं'ति विभक्तिलोपात्करणादयः—करणकारणानुमतयस्त्रयो योगा भवन्ति, तथा मनआदीनि तु—मनोवचनकायरूपाणि पुनर्भवन्ति—स्युः करणानि त्रीण्येव, तथा आहारादयः—आहारभयमैथुनपरिग्रहविषया वेदनीयभयमोहनीयवेदमोहनीयलोभकषायोदयसम्पाद्या अध्यवसायविशेषरूपाः, 'चउ'त्ति चतस्रः संज्ञा भवन्ति, तथा श्रोत्रादीनि—पश्चानुपूर्व्या श्रोत्रचक्षुर्घ्राणरसनस्पर्शनानीन्द्रियाणि पञ्च भवन्ति, उत्तरोत्तरगुणावाप्तिसाध्यानि शीलाङ्गानीति ज्ञापनार्थमिन्द्रियेषु पश्चानुपूर्वीति, तथा भूम्यादयः—पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रिया नव जीवा—जीवकायाः, अजीवकायस्तु—अजीवकायः पुनर्दशमो यः परिहार्यतयोक्तः स च महामूल्यवस्त्रपात्रसुवर्णरजतादिरूपो दुष्प्रत्युपेक्षिताप्रत्युपेक्षितदूष्यपुस्तकचर्मतृणपञ्चकादिरूपश्च, तथा श्रमणधर्मस्तु—यतिधर्मः पुनः क्षान्त्यादिः—क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चन्यब्रह्मचर्यरूपो दशविध इति, 'एवं'ति एवमुक्तन्यायेन 'स्थिते' औत्तराधर्येण पट्टकादौ

व्यवस्थिते त्रिचतुःपञ्चदशदशसङ्ख्ये मूलपदकलापे 'भावना' भङ्गप्रकाशना 'एषा' अनन्तरवक्ष्यमाणलक्षणा शीलाङ्गनिष्पत्तिविषयेति ॥ ८४१ ॥ ८४२ ॥ तामेवाह—'न करेई'त्यादि, न करोतीति करणलक्षणः प्रथमयोग उपात्तः, मनसेति प्रथमं करणं, 'आहारसन्न-विप्पजढगो'त्ति आहारसंज्ञाविप्रहीणः सन्, अनेन च प्रथमसंज्ञा तथा नियमेन—अवश्यन्तया श्रोत्रेन्द्रियसंवरणो—निरुद्धरागादिमच्छ्रोत्रे-न्द्रियप्रवृत्तिः, अनेन च प्रथमेन्द्रियं, एवंविधः सन् किं न करोतीत्याह—पृथिवीजीवान् आरम्भविषयानिति शेषः, पृथिवीजीवारम्भं न करोतीति तात्पर्यार्थः, अनेन च प्रथमजीवस्थानं, क्षान्तिसंयुक्तः—क्षान्तिसम्पन्नः, अनेन च प्रथमश्रमणधर्मभेद उक्त इति ॥८४३॥ तदेव-मेकं शीलाङ्गमाविर्भावितमिति, अथ शेषाण्यपि तान्यतिदेशतो दर्शयन्नाह—'इये'त्यादि, 'इति' अनेनैव पूर्वोक्ताभिलापेन मार्दवादियो-गात्—मार्दवार्जवादिपदसंयोगेन 'पृथिवीकाये' पृथिवीकायमाश्रित्य पृथिवीकायारम्भमित्यभिलापेनेत्यर्थः सम्भवन्ति—स्युर्दश भेदा—दश शीलविकल्पाः, अप्कायादिष्वपि नवसु स्थानेषु, अपिशब्दो दशेत्यस्येह सम्बन्धनार्थः, इत्यनेन क्रमेण एते सर्वेऽपि भेदाः 'पिंडियं तु'-त्ति प्राकृतत्वात् पिण्डिताः पुनः सन्तः अथवा पिण्डितं—पिण्डमाश्रित्य शतं—शतसङ्ख्याः स्युरिति, श्रोत्रेन्द्रियेणैतत् शतं लब्धं, शेषैरपि चक्षुरादिभिर्यद्—यस्मादिदं शतं प्रत्येकं लभ्यते, ततो मिलितानि पञ्च शतानि स्युः, पञ्चत्वादिन्द्रियाणां, एतानि चाहारसंज्ञायोगलब्धानि इति, एवं शेषाभिरपि भयसंज्ञादिभिस्तिसृभिः पञ्च पञ्च शतानि स्युः, सर्वमीलने च सहस्रद्वयं स्यात्, यतश्चतस्रः संज्ञा इति, एतत्स-हस्रद्वितयं मनोयोगेन लब्धं, 'वयमाइएसु'त्ति वागाद्योः—वचनकाययोः प्रत्येकमेतत्सहस्रद्वयं, इत्येवं षट् सहस्राणि, त्रिसङ्ख्यत्वात् मनोव-चनकाययोगानां, एतानि न करोतीत्यनेन लब्धानि, शेषयोरपि च कारणानुमत्योः षट् षट् सहस्राणि स्युः, एते अनन्तरोक्ताः सर्वेऽपि शीलभेदाः पिण्डिताः सन्तोऽष्टादश सहस्राणि भवन्तीति । आलापकगाथाश्चैवमत्र करणीयाः—'न करेमि मणसाऽऽहारसन्नविरओ उ सोय-

संगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥ एवं मद्दवगुणे वट्टमाणोऽहं २। अज्जवगुणे वट्टमाणोऽहं ३। यावद्बंभगुणे वट्टमाणोऽहं १०। एवमप्कायादिष्वपि गाथा भणनीयाः। तथा कारेमि न मणसाहारसन्नविरओ उ सोयसंगुत्तो। पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥' इत्यादि तथा—'नऽणुमन्ने मणसाहारसन्नविरओ उ सोयसंगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥' इत्यादि । नन्वेककयोगे एवाष्टादश सहस्राणि स्युर्यदा तु द्व्यादिसंयोगजन्या भङ्गका इह गृह्यन्ते तदा वहुतराः स्युः, तथाहि—एकद्व्यादिसंयोगेन योगेषु सप्त विकल्पाः, एवं करणेष्वपि, संज्ञासु पञ्चदश, इन्द्रियेष्वेकत्रिंशत्, भूम्यादिषु त्रयोविंशत्यधिकं सहस्रं, एवं क्षमादिष्वपीति, एषां च राशीनां परस्परगुणने द्वे कोटीसहस्रे त्रीणि कोटीशतानि चतुरशीतिः कोटयः एकपञ्चाशल्लक्षाणि त्रीणि षष्टिः सहस्राणि द्वे शते पञ्चषष्टिश्चेति (२३८४५१६३२६५) ततः किमित्यष्टादशैव सहस्राण्युक्तानि?, उच्यते, यदि श्रावकधर्मवदन्यतरभङ्गकेन सर्वविरतिप्रतिपत्तिः स्यात्तदा युज्येत तद्गुणनं, न चैवमेकतरस्यापि शीलाङ्गभङ्गकस्य शेषसद्भाव एव भावादन्यथा सर्वविरतिरेव न स्यादिति, उक्तं च—"इत्थ इमं विन्नेयं अइदंपज्जं तु बुद्धिमंतेहिं । एक्कंपि सुपरिसुद्धं सीलंगं सेससब्भावे ॥ १ ॥" अस्या व्याख्या—अत्र—शीलाङ्गाधिकारे इदं विज्ञेयमैदम्पर्य—तत्त्वं बुद्धिमद्भिः पुरुषैः, यदुत—एकमपि सुपरिशुद्धं शीलाङ्गं शेषसद्भावे—तदपरशीलाङ्गसत्तायामेव, तदेवं समुदितान्येवैतानि भवन्तीति न द्व्यादिसंयोगभङ्गकोपादानं अपि तु सर्वपदान्त्यभङ्गस्येयमष्टादशसहस्रांशतोक्ता, यथा त्रिविधं त्रिविधेनेत्यस्य नवांशतेति, अत एव श्रावकाणामेतानि न भवन्त्येव, किन्तु मनःस्थैर्यसम्पादनार्थं तेऽप्यनुमतिप्रधानेन स्वाभिलापेन गाथोच्चारणमात्रमासूत्रयन्ति, अभिलापश्चायं—न करेंती मणसाहारसन्नविरया उ सोयसंगुत्ता । पुढवीकायारंभं धन्ना जे खंतिगुणजुत्ता १ ॥ १ ॥ एवं धन्ना

जे मद्दवुज्जुत्ता २, धन्ना जे अज्जवुज्जुत्ता ३, एवं यावद्धन्ना जे बंभगुणजुत्ता', इत्यादि ॥ ८४४ ॥ ८४५ ॥ ८४६ ॥ १२३ । इदानीं 'नयसत्तगं'ति चतुर्विंशत्युत्तरशततमं द्वारमाह—

**नेगम १ संगह २ ववहार ३ रिज्जुसुए ४ चेव होइ बोद्धवे । सद्दे ५ य समभिरूढे ६ एवंभूए ७ य मूलनया ॥ ८४७ ॥ एक्केक्को य सयविहो सत्त नयसया हवंति एवं तु । बीओवि य आएसो पंचेव सया नयाणं तु ॥ ८४८ ॥**

अनेकधर्मकं वस्त्वनवधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण प्रतिपाद्य स्वबुद्धिं नीयते—प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नयः, अयमत्र तात्पर्यार्थः—इह यो नाम नयो नयान्तरसापेक्षतया स्याद्वादलाञ्छितं वस्तु प्रतिपद्यते स परमार्थतः परिपूर्णं वस्तु गृह्णातीति प्रमाण एवान्तर्भवति, यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणानवधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स वस्त्वेकदेशपरिग्राहकत्वान्नय इत्युच्यते, स च नियमान्मिथ्यादृष्टिरेव, अयथावस्थितार्थवस्तुपरिग्राहकत्वात्, अत एवोक्तमन्यत्र 'सव्वे नया मिच्छावाइणो'त्ति [ सर्वे नया मिथ्यावादिनः ] यत एव च नयवादो मिथ्यावादः तत एव च जिनप्रवचनवेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सरं भाषन्ते न तु जातुचिदपि स्यात्कारविरहितं, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात्स्यात्पदं प्रयुञ्जते तथापि तत्राप्रयुक्तोऽपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्यः, प्रयोजकस्य कुशलत्वात्, उक्तं च—'अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते । विधौ निषेधेऽन्यत्रापि, कुशलश्चेत्प्रयोजकः ॥ १ ॥" अत्र 'अन्यत्रापी'ति अनुवादातिदेशादिवाक्येषु । ते च नया मूलभेदापेक्षया सप्त, तथा चाह—'नेगमे'त्यादि, नैगमः संग्रहो व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्यः।शब्दश्च समभिरूढ एवंभूतश्चेति मूल नया

इति गाथासङ्क्षेपार्थः। तत्र न एकं नैकं नायं नञ् किन्तु न इति 'अन् स्वरे' इति न भवति, प्रभूतानीत्यर्थः, ततो नैकैः–प्रभूतसङ्ख्याकैर्मानैः–महासामान्यावान्तरसामान्यविशेषादिविषयैः प्रमाणैर्मिमीते–परिच्छिनत्ति वस्तुजातमिति नैगमः, पृषोदरादित्वादिष्टरूपसिद्धिः, यद्वा निश्चितो गमो नैगमः परस्परविविक्तसामान्यादिवस्तुग्रहणं स एव प्रज्ञादेराकृतिगणतया स्वार्थिकाण्प्रत्ययविधानान्नैगमः, अथवा गमाः–पन्थानो नैके गमा यस्य स नैगमः, पृषोदरादित्वात्ककारस्य लोपः, बहुविधवस्त्वभ्युपगमपर इत्यर्थः, तथाहि–एष सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि तथा अन्त्यान् विशेषान्–सकलासाधारणरूपान् अवान्तरविशेषांश्च–पररूपव्यावर्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपान् प्रतिपद्यते, यतोऽसावेवमाह–संविन्निविष्टाः किल पदार्थव्यवस्थितयः, तत्र सर्वेष्वपि पदार्थेषु द्रव्यादिरूपेषु सत् सदित्यविशेषेण प्रत्यय उपजायते वचनं च, न चैते तथारूपे प्रत्ययवचने द्रव्यादिमात्रनिबन्धने, द्रव्यादीनामसर्वव्यापकत्वात्, तथाहि–यदि द्रव्यमात्रनिबन्धनः सदिति प्रत्ययस्तर्हि स गुणादिषु न भवेत्, तत्र द्रव्यत्वाभावात्, गुणमात्रनिबन्धनत्वे द्रव्यादिषु न स्यात्, तत्र गुणत्वाभावात्, एवं सर्वत्रापि भावनीयं, ततोऽस्ति द्रव्यादिभ्यो व्यतिरिक्तं महासत्ताख्यं नाम सामान्यं यद्वशादविशेषेण सर्वत्र सदिति प्रत्यय इति । तथा नवसु द्रव्येषु द्रव्यं द्रव्यमित्यनुगताकारप्रत्ययदर्शनात् द्रव्यत्वं नामावान्तरसामान्यं प्रतिपत्तव्यं, एवं गुणत्वकर्मत्वगोत्वाश्वत्वादीन्यपि, अमूनि चावान्तरसामान्यानि सामान्यविशेषा इत्युच्यन्ते, यत एतानि स्वस्वाधारविशेषेषु अनुगताकारप्रत्ययवचनहेतुत्वात् सामान्यानि विजातीयेभ्यो व्यावर्तमानत्वाच्च विशेषा इति सामान्यविशेषाः, तथा तुल्यजातिगुणक्रियाधाराणां नित्यद्रव्याणां परमाण्वाकाशदिगादीनामत्यन्तव्यावृत्तिबुद्धिहेतुत्वादन्त्या विशेषाः ते च योगिनामेव प्रत्यक्षाः अस्मदादीनां त्वनुमेयाः, तथाहि–तुल्यजातिगुणक्रियाधाराः परमाणवो व्यावर्तकधर्मसम्बन्धिनो व्यावृत्तिप्रत्ययविषयत्वात्, मुक्ताफलराश्यन्तर्गतसचि-

हृमुक्ताफलवत्, ये चावान्तरविशेषा घटपटादीनामितरेतरव्यावर्तनक्षमास्ते आबालगोपालाङ्गनादिजनानामपि प्रत्यक्षाः, एते च महासामान्यावान्तरसामान्यांत्यविशेषावान्तरविशेषाः परस्परविसकलितस्वरूपास्तथैव प्रतिभासमानत्वात्, तथाहि—न सामान्यग्राहिणि विज्ञाने विशेषावभासः नापि विशेषग्राहिणि सामान्यावभासः, ततः परस्परविनिर्लुठितस्वरूपाः, तथा चात्र प्रयोगः—यद्यथाऽवभासते तत्तथाऽभ्युपगन्तव्यं, यथा नीलं नीलतया, अवभासन्ते च ते परस्परविसकलितस्वरूपा इति नैगमः। नन्वेष यदि सामान्यविशेषाभ्युपगमपरस्तर्हि यत्सामान्यं तद् द्रव्यं ये तु विशेषास्ते पर्याया इति परमार्थतो द्रव्यास्तिकपर्यायास्तिकनयमतावलम्बित्वात् सम्यग्दृष्टिरेव प्रतिपन्नजिनमतत्वात्तथाविधसम्यग्जैनसाधुवत् ततः कथं मिथ्यादृष्टिः ?, तदेतदयुक्तं, प्रतिपन्नजिनमतत्वासिद्धेः, परस्परविसंकलितसामान्यविशेषाभ्युपगमात्, तथाहि—एष परस्परमेकान्ततो विभिन्नावेव सामान्यविशेषाविच्छति, गुणगुणिनामवयवावयविनां क्रियाकारकाणां चात्यन्तभेदं, न पुनर्जैनसाधुरिव सर्वत्रापि भेदाभेदावतो मिथ्यादृष्टिः कणादवत्, कणादेनापि हि सकलमप्यात्मीयं शास्त्रं द्वाभ्यामपि द्रव्यास्तिकपर्यायास्तिकनयाभ्यां समर्थितं तथापि तन्मिथ्यात्वं, स्वविषयप्रधानतया परस्परमनपेक्षयोः सामान्यविशेषयोरभ्युपगमात्, उक्तं च—"जं सामन्नविसेसे परोप्परं वत्थुतो य से भिन्ने। (ग्रन्थाग्रं १००००) मन्नइ अच्चंतमतो मिच्छादिट्ठी कणादोव्व ॥ १ ॥ दोहिवि नएहिँ नीयं सत्थमुलूगेण तहवि मिच्छत्तं। जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥ २ ॥" [ यत् सामान्यविशेषौ परस्परं वस्तुतश्च तौ भिन्नौ। मन्यते अत्यन्तं अतः कणाद इव मिथ्यादृष्टिः ॥ १ ॥ द्वाभ्यामपि नयाभ्यामुलूकेन शास्त्रं नीतं तथापि मिथ्यात्वं। यत् स्वविषयप्रधानत्वात् अन्योऽन्यनिरपेक्षौ ( इति वदति ) ॥ २ ॥] १। तथा सङ्गृह्णाति—अशेषविशेषातिरोधानद्वारेण सामान्यरूपतया समस्तं जगदादत्ते इति सङ्ग्रहः, तथाहि—अयमेवं मन्यते—सामान्यमेवैकं तात्त्विकं न विशेषाः, ते हि भावलक्षणसामान्याद्व्यतिरिक्ता वा

भवेयुरव्यतिरिक्ता वा? गत्यन्तराभावात्, प्रथमपक्षे न सन्त्येव विशेषाः, भावाद्व्यतिरिक्तत्वादाकाशकुशेशयवत्, अथ द्वितीयः पक्षस्तर्हि विशेषा अपि भावमात्रमेव, तथाहि—भावमात्रं विशेषास्तदव्यतिरिक्तत्वात्, इह यद्यस्मादव्यतिरिक्तं तत्तदेव, यथा भावस्य स्वरूपं, अव्यतिरेकिणश्च भावाद्विशेषा इति, किं च—विशेषाग्रहो विशेषेण त्याज्यो विशेषव्यवस्थापकप्रमाणाभावात्, तथाहि—भेदरूपा विशेषाः, न च किञ्चन प्रमाणं भेदमवगाहते, प्रत्यक्षं हि भावसम्पादितसत्ताकं अतस्तमेव साक्षात्कर्तुमलं नाभावं, अभावस्य सकलशक्तिविरहरूपतया तदुत्पादने व्यापाराभावात्, अनुत्पादकस्य च साक्षात्करणे सर्वसाक्षात्करणप्रसङ्गः, तथा च सति विशेषाभावात्सर्वोऽपि द्रष्टा सर्वदर्शी स्यात्, अनिष्टं चैतत्, तस्माद्भावग्राहकमेव प्रत्यक्षमेष्टव्यं, स च भावः सर्वत्राविशिष्टस्तथैव तेन ग्राह्य इति न प्रत्यक्षाद् विशेषावगतिः, नाप्यनुमानादेः, प्रत्यक्षपूर्वकत्वाच्छेषप्रमाणपटलस्य, ततः सामान्यमेव परमार्थतः सत् न विशेषा इति सङ्ग्रहः २। तथा व्यवहरणं व्यवहारः, यदिवा विशेषतोऽवह्रियते—निराक्रियते सामान्यमनेनेति व्यवहारः, विशेषप्रतिपादनपरो व्यवहारनय इत्यर्थः, स ह्येवं विचारयति—यदि सदित्युक्ते घटपटाद्यन्यतमो विशेष एव कोऽप्यनिर्दिष्टस्वरूपः प्रतीयते न सङ्ग्रहनयसम्मतं सामान्यं तस्यार्थक्रियासामर्थ्यविकलतया सकललोकव्यवहारपथातीतत्वात् ततो विशेष एवास्ति न सामान्यं, इतश्च न सामान्यमुपलब्धिलक्षणप्राप्तस्य तस्यानुपलब्धेः, इह यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्तव्यं, यथा कचित्केवलभूतलप्रदेशे घटो, नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सत् सङ्ग्रहनयसम्मतं सामान्यमिति स्वभावानुपलब्धिः, अपि च—सामान्यं विशेषेभ्यो व्यतिरिक्तं स्यादव्यतिरिक्तं वा? स्यात्, यद्याद्यः पक्षस्तर्हि सामान्यस्याभाव एव, विशेषव्यतिरिक्तस्य सामान्यस्यासम्भवात्, न हि मुकुलितार्धमुकुलितादिविशेषविकलं किमप्याकाशकुसुममस्तीति परिभावनीयमेतत्, अथाव्यतिरिक्तं ततो विशेषा एव न सामान्यं तदव्यतिरिक्तत्वात्तत्स्वरूपवत्, यदपि चोक्तं 'प्रत्यक्षं

भावसम्पादितसकलसत्ताकं अतस्तमेव साक्षात्कर्तुमल'मित्यादि, तदपि बालप्रलपितं, प्रत्यक्षं हि नाम तेन सम्पादितसत्ताकमुच्यते यदुत्पन्नं सत्प्रत्यक्षं साक्षात् करोति, कुरुते च प्रत्यक्षं साक्षात् घटपटादिरूपं विशेषं न सङ्ग्रहनयसम्मतं सामान्यं, न च विशेषो घटपटादिरूपोऽभावो भावात्मकत्वात्, ततो नार्थक्रियाशक्तिविकल इत्यदोषः, ततो विशेष एव प्रत्यक्षादिप्रमाणप्रसिद्धो न सामान्यमिति सामान्याग्रह एव त्याज्यो न विशेषाग्रहः, किञ्च—यदेवार्थक्रियाकारि तदेव परमार्थसत्, न च सामान्यं दोहादिक्रियासूपयुज्यते किन्तु विशेषा एव गवादयः ततस्त एव तात्त्विकाः न सामान्यमिति, एष च व्यवहारनयो लोकसंव्यवहारपरः ततो यदेव लोकोऽभिमन्यते तदेवैषोऽपि न शेषं सन्तमपि, लोकश्च भ्रमरादौ परमार्थतः पञ्चवर्णाद्युपेतेऽपि कृष्णवर्णादित्वमेव प्रतिपन्नः, तस्य स्पष्टतयोपलभ्यमानत्वात्, तत एषोऽपि तदनुयायितया तदेवेच्छति न शेषान् सतोऽपि शुक्लादीन् वर्णानिति ३। तथा ऋजु—प्रगुणमकुटिलमतीतानागतपरकीयवक्रपरित्यागाद्वर्तमानक्षणविवर्ति स्वकीयं च सूत्रयति—निष्टङ्कितं दर्शयतीति ऋजुसूत्रः, यदिवा ऋजुश्रुत इति शब्दसंस्कारः, तत्र ऋजुः—पूर्वोक्तवक्रविपर्ययादभिमुखं श्रुतं—ज्ञानमस्येति ऋजुश्रुतः, शेषज्ञानानभ्युपगमात्, तथाहि—अयं मन्यते यदतीतमनागतं वा तद्यथाक्रमं विनष्टत्वात् अलब्धात्मलाभाच्च नार्थक्रियासमर्थं नापि प्रमाणगोचरोऽथ चार्थक्रियासमर्थं प्रत्यक्षादिप्रमाणपथमवतीर्णं वस्तु न शेषं, अन्यथा शशशृङ्गादेरपि वस्तुत्वप्रसक्तेः, ततोऽर्थक्रियासामर्थ्यविकलत्वात् प्रमाणपथातीतत्वाच्च नातीतमनागतं वा वस्तु, यदपि च परकीयं वस्तु तदपि परमार्थतोऽसत् निष्प्रयोजनत्वात् परधनवत्, एष च ऋजुसूत्रो वार्तमानिकं वस्तु प्रतिपद्यमानो लिङ्गवचनभिन्नमप्येकं प्रतिपद्यते, तत्रैकमपि त्रिलिङ्गं यथा तटस्तटी तटं, तथैकमपि एकवचनद्विवचनबहुवचनवाच्यं यथा गुरुर्गुरू गुरवः गोदौ ग्रामः आपो जलं दाराः कलत्रमित्यादि, निक्षेपचिन्तायां च नामस्थापनाद्रव्यभावरूपांश्चतुरोऽप्यसौ निक्षेपानभिमन्यते ४। तथा शब्द्यते—प्रतिपाद्यते वस्त्वनेनेति

शब्दः, शब्दस्य यो वाच्योऽर्थः स एव येन नयेन तत्त्वतो गम्यते न शेषः स नय उपचारात् शब्द इत्युच्यते, अस्य च द्वितीयं नाम साम्प्रत इति, साम्प्रतवस्त्वाश्रयणात् साम्प्रतः, तथाहि—एषोऽपि ऋजुसूत्रनय इव साम्प्रतमेव वस्त्वभ्युपगच्छति नातीतमनागतं वा, नापि वर्तमानमपि परकीयं, अपि च—निक्षेपचिन्तायां भावनिक्षेपमेव केवलमेष मन्यते न नामादीन् निक्षेपान्, तथा च नामादिनिक्षेपनिराकरणाय प्रमाणमाह—नामस्थापनाद्रव्यरूपा घटा न घटाः घटकार्यकारित्वाभावात् यद् घटकार्यकारि न भवति तन्न घटो यथा पटस्तथा चामी घटा घटकार्यकारिणो न भवन्ति तस्मान्न घटा इति नामादिघटानां घटत्वाभावः, इतश्च घटत्वाभावस्तल्लिङ्गादर्शनात्, न खलु नामादिघटेषु घटलिङ्गं पृथुबुध्नोदराद्याकाररूपं जलधारणरूपं वा किमप्युपलभामहे, अनुपलभमानाश्च तेषु कथं घटव्यपदेशप्रवृत्तिमिच्छामः ?, अपि च—नामादीन् घटान् घटत्वेन व्यपदिशत ऋजुसूत्रस्य प्रत्यक्षविरोधः, अघटरूपतया पटादीनामिव तेषां प्रत्यक्षत उपलभ्यमानत्वात्। अन्यच्च एष लिङ्गवचनभेदाद्वस्तुनो भेदं प्रतिपद्यते, यथा अन्य एव तटीशब्दस्य वाच्योऽर्थः अन्य एव तटशब्दस्य पुल्लिङ्गस्य, अपर एव च नपुंसकलिङ्गस्य, तथा अन्य एव गुरुरित्येकवचनवाच्योऽर्थः अन्य एव च गुरव इति बहुवचनवाच्यः, ततो न बहुवचनवाच्योऽर्थ एकवचनेन वक्तुं शक्यो, नाप्येकवचनवाच्यो बहुवचनेन, तथा न पुँल्लिङ्गार्थो नपुंसकलिङ्गेन वक्तुं शक्यः नापि स्त्रीलिङ्गेन नापि नपुंसकः पुंलिङ्गेन स्त्रीलिङ्गेन वा नापि स्त्रीलिङ्गः पुंलिङ्गेन नपुंसकलिङ्गेन वा, अर्थाननुयायितया तेषामर्थतो भिन्नत्वात्, तथा चात्र प्रयोगः—ये परस्परमर्थतोऽननुयायिनस्ते भिन्नार्था इति व्यवहर्तव्याः यथा घटपटादिशब्दाः, परस्परमर्थतोऽननुयायिनश्च लिङ्गवचनभेदभिन्नाः शब्दा इति, ये त्विन्द्रशक्रपुरन्दरादयः शब्दाः सुरपतिप्रभृतिलक्षणमेकमभिन्नलिङ्गवचनमधिकृत्याभिन्नलिङ्गवचनास्तेषामभिन्नोऽर्थ इत्येकार्थता ५। तथा सम्—एकीभावेन अभिरोहति—व्युत्पत्तिनिमित्तमास्कन्दति शब्दप्रवृत्तौ यः स समभिरूढः, एष हि पर्यायशब्दानामपि प्रविभक्तमे-

वार्थमभिमन्यते, यथा घटनाद् घटः, विशिष्टा कापनापि या चेष्टा युवतिमस्तकाधारोहणाविलक्षणा सा परमार्थतो घटशब्दवाच्या, तद्वत्यर्थे पुनर्घटशब्दः प्रवर्तते उपचारात्, एवं 'कुट कौटिल्ये' कुटनात् कुटः, अत्र पृथुबुध्नोदरकम्बुग्रीवाद्याकारकौटिल्यं कुटशब्दवाच्यं, तथा 'उभ उंभ पूरणे' कुः—पृथिवी तस्यां स्थितस्य उम्भनात्—पूरणात्कुम्भः, अत्र यत् पृथिव्यां स्थितस्य पूरणं तत्कुम्भशब्दवाच्यं, एवं सर्वेषामपि पर्यायशब्दानां नानात्वं प्रतिपद्यते, वदति च—न शब्दान्तराभिधेयं वस्तु द्रव्यं पर्यायो वा तदन्यशब्दवाच्यवस्तुरूपतां सङ्क्रामति, न खलु पटशब्दवाच्योऽर्थो जातुचिदपि घटशब्दवाच्यवस्तुरूपतामास्कन्दति तथाऽनुपलम्भात् आस्कन्दने वा वस्तुसाङ्कर्योपपत्तिः, तथा च सति सकललोकप्रसिद्धप्रतिनियतविषयप्रवृत्तिनिवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः, ततो घटादिशब्दवाच्यानामर्थानां कुटादिशब्दवाच्यार्थरूपताऽनास्कन्दनान्न कुटादयः शब्दा घटाद्यर्थवाचका इति विभिन्नार्थाः पर्यायशब्दाः, प्रमाणयति च—इह ये ये प्रविभक्तव्युत्पत्तिनिमित्तकाः शब्दास्ते ते विभिन्नार्थाः यथा घटपटशकटादिशब्दाः, भिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा इति, यत्पुनरविचारितप्रतीतिबलादेकार्थाभिधायकत्वं पर्यायशब्दानां प्रतिपाद्यते, तदसमीचीनमतिप्रसङ्गात्, तथाहि—यदि युक्तिरिक्ताऽपि प्रतीतिः शरणीक्रियते तर्हि मन्दमन्दप्रकाशे दवीयसि देशे संनिविष्टमूर्तयो विभिन्ना अपि निम्बकदम्बाश्वत्थकपित्थादय एकतर्वाकारतामाबिभ्राणाः प्रतीतिपथमवतरन्तीत्येकतयैव तेऽभ्युपगन्तव्याः, न चैतदस्ति, विविक्ततत्स्वरूपग्राहिप्रत्यनीकप्रत्ययोपनिपातबाधितत्वेन पूर्वप्रतीतेर्विविक्तानामेवैतेषामभ्युपगमात्, एवमन्यत्रापि भावनीयं, अन्यच्च—शब्दनय! यदि त्वया परस्परमर्थतो भिन्नत्वाल्लिङ्गवचनभिन्नानां शब्दानां भिन्नार्थता व्यवह्रियते ततः पर्यायशब्दानामपि किं न विभिन्नार्थताव्यवहारः क्रियते?, तेषामपि परस्परमर्थतो भिन्नत्वात्तस्मान्नैकार्थवाचिनः पर्यायध्वनय इति ६। तथा एवंशब्दः प्रकारवचनः एवं—यथा व्युत्पादितस्तं प्रकारं भूतः—प्राप्त एवम्भूतः शब्दः तत्समर्थनप्रधानो नयोऽप्येवम्भूतः उपचारात्,

अयं हि शब्दमर्थेन विशेषयति, अर्थवशान्नैयत्ये व्यवस्थापयतीति भावः, यथा स एव तत्त्वतो घटशब्दो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेषः, तथा अर्थं शब्देन विशेषयति, शब्दवशात्तच्छब्दवाच्यमर्थं प्रतिनियतं व्यवस्थापयतीति भावः, यथा या घटशब्दवाच्यत्वेन प्रसिद्धा चेष्टा सा घटनात् घट इति व्युत्पत्त्यर्थपरिभावनाबलात् योषिदादिमस्तकारूढस्य घटस्य जलाहरणादिक्रियारूपा द्रष्टव्या न तु स्थानभरणक्रियारूपा, ततश्च यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव स्वरूपतो वर्तते तदैव तं शब्दं प्रवर्तमानमभिप्रैति न शेषकालं, यथोदकाद्याहरणवेलायां योषिदादिमस्तकारूढो विशिष्टचेष्टावान् घटो घटशब्दवाच्यो न शेषो घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात् पटादिवत्, तथा घटशब्दोऽपि तत्त्वतः स एव द्रष्टव्यो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेषः, शेषस्य स्वाभिधेयार्थशून्यत्वात्, एवं चैष व्युत्पत्तिनिमित्तार्थास्तित्वभूषितमेव तात्त्विकं शब्दमभिलपति, य एव पञ्चेन्द्रियत्रिविधबलादिरूपान् दशविधान् प्राणान् धारयति स एव नारकादिरूपः सांसारिकः प्राणी जीवशब्दवाच्यो न सिद्धः, सूत्रोक्तस्वरूपप्राणधारणलक्षणव्युत्पत्तिनिमित्तासम्भवात्, सिद्धस्त्वात्मादिशब्दवाच्यः; अतति—सातत्येन गच्छति तांस्तान् ज्ञानदर्शनसुखादिपर्यायानित्याद्यात्मादिशब्दव्युत्पत्तिनिमित्तसम्भवादिति ७ ॥८४७॥ सम्प्रत्येतेषामेव नयानां प्रभेदसङ्ख्यादर्शनार्थमाह—'एकैके'त्यादि, नया मूलभेदापेक्षया यथोक्तरूपा नैगमादयः सप्त, एकैकश्च प्रभेदतः शतविधः, ततः सर्वभेदगणनया सप्त नयशतानि भवन्ति, अन्योऽपि चादेशो—मतान्तरं पञ्चैव शतानि नयानां भवन्तीति, तथाहि—शब्दसमभिरूढैवम्भूतानां त्रयाणामपि नयानां शब्दपरत्वेनैकत्वविवक्षणात् पञ्चैव मूलनयाः, प्रत्येकं च शतप्रभेदत्वे पञ्च शतानीति, अपिशब्दात् षट् चत्वारि शतानि द्वे वा शते, तत्र षट् शतान्येवं—नैगमः सामान्यग्राही सङ्ग्रहे प्रविष्टो विशेषग्राही तु व्यवहारे, ततः षडेव मूलनयाः, एकैकश्च प्रभेदतः शतभेद इति षट् शतानि, तथा सङ्ग्रहव्यवहारऋजुसूत्रशब्दा इति चत्वार एव मूलनयाः एकैकश्च शतविध इति चत्वारि शतानि, शतद्वयं तु

नैगमादीनां ऋजुसूत्रपर्यन्तानां चतुर्णां द्रव्यास्तिकत्वात् शब्दादीनां तु त्रयाणां पर्यायास्तिकत्वात्तयोश्च प्रत्येकं शतभेदत्वात्, अथवा यावन्तो वचनपथास्तावन्तो नया इत्यसङ्ख्याताः प्रतिपत्तव्याः १२४ ॥ ८४८ ॥ इदानीं 'वत्थग्गहणविहाणं'ति पञ्चविंशत्युत्तरं शततमं द्वारमाह—

जन्न तयट्ठा कीयं नेव वुयं जं न गहियमन्नेसिं । आहडपामिच्चं चिय कप्पए साहुणो वत्थं ॥८४९॥ अंजणखंजणकद्दमलित्ते, मूसगभक्खियअग्गिविदड्ढे । तुन्निय कुट्टिय पज्जवलीढे, होइ विवागो सुह असुहो वा ॥ ८५० ॥ नवभागकए वत्थे चउरो कोणा य दुन्नि अंता य । दो कन्नावट्टीउ मज्झे वत्थस्स एक्कं तु ॥ ८५१ ॥ चत्तारि देवया भागा, दुवे भागा य माणुसा । आसुरा य दुवे भागा, एगो पुण जाण रक्खसो ॥ ८५२ ॥ देवेसु उत्तमो लाभो, माणुसेसु य मज्झिमो । आसुरेसु य गेलन्नं, मरणं जाण रक्खसे ॥ ८५३ ॥

इह तावद्वस्त्रमेकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियावयवनिष्पत्तिभेदात् त्रिधा भवति, तत्र एकेन्द्रियावयवनिष्पन्नं कार्पासिकादि, विकलेन्द्रियावयवनिष्पन्नं कौशेयकादि एतच्च कारण एव गृह्यते, पञ्चेन्द्रियावयवनिष्पन्नं और्णिकादि, पुनरेकैकं त्रिधा—यथाकृतालपपरिकर्मबहुपरिकर्मभेदात्, तत्र यानि परिकर्मरहितान्येव तथास्वरूपाणि लभ्यन्ते तानि यथाकृतानि, यानि चैकवारं खण्डित्वा सीवितानि तान्यल्पपरिकर्माणि, यानि पुनर्बहुधा खण्डित्वा सीवितानि तानि बहुपरिकर्माणि, इह च यान्यल्पपरिकर्माणि वस्त्राणि तानि बहुपरिकर्मवस्त्रापेक्षया स्तोकसंयमव्याघातकारीणीत्यतस्तदपेक्षया शुद्धानि, तेभ्योऽपि यथाकृतान्यतिशुद्धानि, मनागपि पलिमन्थादिदोषकारित्वाभावात्, ततो गृहद्भिः पूर्वं यथाकृतानि ग्राह्याणि तदलाभे चाल्पपरिकर्माणि तेषामप्यभावे बहुपरिकर्माण्यपि वस्त्राणि ग्राह्याणीति, एतच्च सर्वमपि वस्त्रं

गच्छवासिभिः कल्पनीयमेव ग्राह्यम् , तत्रैवं—यद्वस्त्रं न तदर्थं—व्रतिनिमित्तं क्रीतं, यत्र नैव व्रतिनिमित्तं 'वुयं'ति अन्तर्भूतण्यर्थत्वात् वायितं, यत्र नैव गृहीतमन्येषां सम्बन्धि, अनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय बलाद्यत्र गृहीतमिति भावः, एवंविधं वस्त्रं, तथा अभ्याहृतमपमित्यकं च त्यक्त्वा शेषं साधोः कल्पत इति, तत्र अभ्याहृतं द्वेधा—परग्रामाभ्याहृतं स्वग्रामाभ्याहृतं च, परग्रामाभ्याहृतं यदन्यस्माद् ग्रामादेः साधुनिमित्तमानीतं, स्वग्रामाभ्याहृतं हट्टादिभ्यो यद् व्रतिभिरदृष्टं यतिनिमित्तमेव गृहे समानीतं, व्रतिदृष्टं तु हट्टादिभ्योऽप्यानीतं गृहादिषु यतीनां ग्रहीतुं कल्पत इति, तथा अपमित्यकं—उद्धारकेणान्यस्माद् गृहीत्वा यद्ददाति, दोषाश्चात्रापि पिण्डवद्वाच्या इति, अपरं च—अत्राप्यविशोधिकोटिविशोधिकोटिद्वयं ज्ञातव्यं, तत्र मूलतो यत्यर्थं वायनादिकं वस्त्रस्याविशोधिकोटिः प्रक्षालनादिकं च यत्यर्थं क्रियमाणं विशोधिकोटिः, इदं च वस्त्रं यदा कल्पनीयमित्यवसितं भवति तदा द्वयोरप्यन्तयोर्गृहीत्वा सर्वतो निरीक्षणीयं, मा तत्र गृहिणां मणिर्वा सुवर्णं वा अन्यद्वा रूपकादिद्रव्यं निबद्धं स्यात् , ततः सोऽपि गृहस्थो भण्यते—निरीक्षस्व एतद्वस्त्रं सर्वतः, एवं च यदि तेन मण्यादि दृष्टं ततो गृहीतं, अथ न दृष्टं ततः साधुरेव दर्शयति एनमपनयेति, आह—गृहिणः कथिते कथमधिकरणं न भवति ?, उच्यते, कथिते स्तोकतर एव दोषः, अकथिते तु महानुड्डाहादिः स्यादिति ॥ अथ यादृशे वस्त्रे लब्धे शुभं भवति यादृशे चाशुभं भवतीत्येतदाह—'अंजणे'त्यादि, अञ्जनं—सौवीराञ्जनप्रभृतिकं तैलकज्जलाञ्जनप्रभृति वा खञ्जनं—दीपमलः कर्दमः—पङ्कस्तैर्लिप्ते—खरण्टिते वस्त्रे, तथा मूषकैरुपलक्षणत्वात्कंसारिकादिभिश्च भक्षिते तथाऽग्निना विशेषेण दग्धे तथा तुण्णिते तुन्नकारेण स्वकलाकौशलतः पूरितच्छिद्रे तथा कुट्टिते—रजककुट्टनेन पतितच्छिद्रे तथा पर्यवैः—पुराणादिभिः पर्यायैर्लीढे—युक्ते, अतिजीर्णतया कुत्सितवर्णान्तरादिसंयुक्ते इत्यर्थः, एवंविधे वस्त्रे गृहीते सति भवति विपाकः—परिणामः शुभोऽशुभो वा, इयमत्र भावना—गृहीतस्य वस्त्रस्य नव भागाः कल्प्यन्ते, तत्र च केषुचिद्भागेषु

अञ्जनखञ्जनादिके सति शुभं फलमुपजायते केषुचित्पुनरशुभमिति । अथ तानेव भागानाह—कल्पनया नवभिर्भागैः कृते वस्त्रे एते नव भागा विज्ञेयाः, यथा—चत्वारः कोणकास्तथा द्वावन्तौ ययोर्दशिका भवन्ति तथा द्वे कर्णपट्टिके, मध्ये च वस्त्रस्यैको भागः ॥ सम्प्रत्येतेषामेव विभागानां क्रमेण स्वामिन आह—चत्वारः कोणकरूपा भागा दैव्या—देवसम्बन्धिनः, द्वावन्त्यौ दशिकासम्बद्धौ भागौ मानुषौ—मनुष्य-स्वामिकौ, द्वौ च विभागौ—कर्णपट्टिकालक्षणौ आसुरौ—असुरसम्बन्धिनौ सर्वमध्यगतः पुनरेको भागो राक्षसो—राक्षससम्बन्धीत्येवं क्रमेण नवानामपि विभागानां स्वामिनो जानीहीति ॥ अथैतेषु भागेषु अञ्जनादिसद्भावे प्रशस्ताप्रशस्तं फलमाह—दैव्येषु भागेषु यद्यञ्जनादिभिर्दूषितं वस्त्रं भवेत्तदा तस्मिन् गृहीते यतिजनस्य उत्तमो लाभो भवेद्वस्त्रपात्रादीनां, तथा मानुषभागयोरञ्जनादिभिः दूषिते वस्त्रे मुनीनां मध्यमो लाभः सम्पद्यते, तथा आसुरभागयोरञ्जनादिभिः दूषिते वस्त्रे गृह्यमाणे ग्लानत्वं व्रतिनां जायते, राक्षसभागे पुनरञ्जनादिदूषिते जानीहि यतीनां मरणमिति १२५ ॥ ८५३ ॥ साम्प्रतं 'ववहारा पंचेव'त्ति षड्विंशत्युत्तरशततमं द्वारमाह—

आगम १ सुय २ आणा ३ धारणा ४ य जीए ५ य पंच ववहारा । केवल १ मणो २ हि ३ चउ-दस ४ दस ५ नवपुव्वाइ ६ पढमोऽत्थ ॥ ८५४ ॥ कहेहि सव्वं जो वुत्तो, जाणमाणोऽवि गूहइ । न तस्स दिंति पच्छित्तं, बिंति अन्नत्थ सोहय ॥८५५॥ न संभरे य जे दोसे, सब्भावा न य मायओ। पच्चक्खी साहए ते उ, माइणो उ न साहए १ ॥८५६॥ आयारपकप्पाई सेसं सव्वं सुयं विणिद्दिट्ठं २। देसंतरट्ठियाणं गूढपयालोयणा आणा ३ ॥८५७॥ गीयत्थेणं दिन्नं सुद्धिं अवहारिऊण तह चेव । दिं-

**तस्स धारणा तह उद्धियपयधरणरूवा वा ४ ॥ ८५८ ॥ दव्वाइ चिंतिऊणं संघयणाईण हाणिमासज्ज । पायच्छित्तं जीयं रूढं वा जं जहिं गच्छे ५ ॥ ८५९ ॥**

'आगमे'त्यादि व्यवह्रियन्ते जीवादयोऽनेनेति व्यवहारः अथवा व्यवहरणं व्यवहारो—मुमुक्षुप्रवृत्तिनिवृत्तिरूपः तत्कारणत्वाद् ज्ञानविशेषा अपि व्यवहारः, स च पञ्चप्रकारस्तद्यथा—आगम्यन्ते—परिच्छिद्यन्ते पदार्था अनेनेत्यागमः १ श्रवणं श्रूयते इति वा श्रुतं २ आज्ञाप्यते—आदिश्यते इत्याज्ञा ३ धरणं—धारणा ४ जीयत इति जीतं ५, तत्र प्रथमः—आगमव्यवहारः षड्विधः, कस्क इत्याह—केवलज्ञानं '**मणोहि**'त्ति 'पदैकदेशे पदसमुदायोपचारात्' मनःपर्यायज्ञानं अवधिज्ञानं '**चउदस दस नव पुव्वाइं**'ति पूर्वशब्दः प्रत्येकमभिसम्बध्यते चतुर्दश पूर्वाणि दश पूर्वाणि नव पूर्वाणि च एष सर्वोऽप्यागमव्यवहार उच्यते इति, इह च यदि केवली प्राप्यते तदा तस्यैवालोचना दीयते तदभावे मनःपर्यायज्ञानिनः तस्याप्यभावेऽवधिज्ञानिनः इत्यादि यथाक्रमं वाच्यं ॥ ८५४ ॥ तत्र केवल्यादिरागमव्यवहारी स्वयमपि तावत्सर्वं जानात्येव ततोऽतिचारजातं शिष्यस्य स्वयमपि प्रकटीकृत्य प्रायश्चित्तं ददाति अन्यथा वेत्याशङ्क्य प्रासङ्गिकं तावदाह—'कहेही'त्यादि कथय सर्वं दोषजातमिति आगमव्यवहारिणा प्रोक्तो यः शिष्यो जानानोऽपि स्वदोषान् मायावितया गूहति—गोपायति न तस्मै—मायाविने प्रायश्चित्तं ददाति आगमव्यवहारिणः, किन्तु ब्रुवते—'**अन्यत्र**' अन्यस्य समीपे गत्वा शोधय—शोधिं गृहाण, यस्तु सद्भावत एव दोषान् कांश्चिन्न स्मरति न पुनर्मायया तस्य तान् दोषान् प्रत्यक्षी—प्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थः '**साहए**'त्ति कथयति, मायाविनस्तु न कथयतीति, एतदुक्तं भवति—आगमव्यवहारी यदि केवलज्ञानादिबलेनैतज्जानाति यथैष भणितः सन् शुद्धभावत्वात् सम्यक्प्रतिपत्स्यते इति तदा स्मारयति यथाऽमुकं तवालोचनीयं विस्मृतं ततस्तदप्यालोचयेति, यदि पुनरेतदवगच्छति यथैष भणितोऽपि सन् मायावितया न सम्यक्प्रतिपत्स्यते

इति तदा तमप्रतिपत्स्यमानं नैव सारयति निष्फलत्वात्, अमूढलक्षो हि भगवानागमव्यवहारी, अत एव दत्तायामप्यालोचनायां यथालोचकः सम्यगावृत्तो ज्ञातस्ततस्तस्मै प्रायश्चित्तं प्रयच्छति, अथ न प्रत्यावृत्तस्ततो न प्रयच्छतीति, ननु चतुर्दशपूर्वधरादेः कथं प्रत्यक्षज्ञानित्वं?, तस्य श्रुतज्ञानित्वेन परोक्षज्ञानित्वात्, उच्यते, चतुर्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात्, तथाहि—येन यथा योऽतिचारः कृतस्तं तथा सर्वमेते जानन्तीति, अथ यदि आगमव्यवहारिणः सर्वभावविषयं परिज्ञानं ततः कस्मात्तस्य पुरत आलोच्यते?, किन्तु तस्य समीपमुपगम्य वक्तव्यमपराधं मे भवन्तो जानते तस्य शोधिं प्रयच्छतेति, उच्यते, आलोचिते बहुगुणसम्भवतः सम्यगाराधना भवति, तथाहि—आलोचनाऽऽचार्येण स आलोचकः प्रोत्साह्यते, यथा वत्स! त्वं भाग्यवान् यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयसि, महादुष्करमेतत्, एवं स प्रोत्साहितः सन् प्रवर्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति शोधिं च सम्यक्प्रतिपद्यते ततः पर्यन्ते आराधना स्तोककालेन च मोक्षगमनमिति ॥ ८५५ ॥ ८५६ ॥ अथ श्रुतव्यवहारमाह—'आयारे'त्यादि, आचारप्रकल्पो—निशीथस्तदादिकं कल्पव्यवहारदशाश्रुतस्कन्धप्रभृतिकं, एकादशाङ्गावशेषपूर्वप्रमुखं च शेषं श्रुतं—सर्वमपि श्रुतव्यवहारः, नवादिपूर्वाणां श्रुतत्वाविशेषेऽप्यतीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वात् केवलादिवदागमत्वेनैव व्यपदेशः, एते च श्रुतव्यवहारिणः स्फुटतरोपलब्धिनिमित्तं त्रीन् वारानालोचनार्हमालोचापयन्ति, ते ह्येकं द्वौ वा वारावालोचिते अनेन सम्यगालोचितमसम्यग्वेति विशेषं नावगच्छन्तीति, कथमालोचापयन्तीति चेदुच्यते प्रथमवेलायां निद्रायमाण इव शृणोति, ततो ब्रूते—निद्राप्रमादं गतवानहमिति न किमप्यश्रौषमतो भूयोऽप्यालोचय, द्वितीयवारमालोचिते भणति—न सुष्ठु मयाऽधुनाऽवधारितमनुपयोगभावादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशार्थमालोचितं ततो ज्ञातव्यमेषोऽमायावी, अथ विसदृशं तर्हि ज्ञातव्यमेष परिणामतः कुटिल इति,

एवं च सति तस्यापि प्रत्यय उपजायते यथाऽहं विसदृशभणनेन मायावी लक्षित इति, ततो मायानिष्पन्नं प्रायश्चित्तं पूर्वं दातव्यं तदनन्तरमपराधनिमित्तमिति ॥ अथ आज्ञाव्यवहारमाह—'देसंते'त्यादि, देशान्तरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचना—निजातिचारनिवेदनमाज्ञाव्यवहारः, एतदुक्तं भवति—यदा द्वावप्याचार्यावासेवितसूत्रार्थतया गीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दूरतरदेशान्तरव्यवस्थितौ अत एव परस्परस्य समीपं गन्तुमसमर्थाविभूतां, तदाऽन्यतरः प्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थशिष्याभावे सति मतिधारणाकुशलमगीतार्थमपि शिष्यं समयभाषया गूढार्थान्यतीचारासेवनपदानि कथयित्वा प्रेषयति, तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं वा तत्र गमनं करोति शिष्यं वा तथाविधं योग्यं गीतार्थं प्रज्ञाप्य प्रेषयति तदभावे तस्यैव प्रेषितस्य गूढार्थामतिचारशुद्धिं कथयतीति ॥ ८५७ ॥ अथ धारणाव्यवहारमाह—'गीयत्थे'त्यादि, इह गीतार्थेन संविग्नेनाचार्येण कस्यापि शिष्यस्य कचिदपराधे द्रव्यक्षेत्रकालभावपुरुषान् प्रतिसेवनाश्चावलोक्य या शुद्धिः प्रदत्ता तां शुद्धिं तथैवावधार्य सोऽपि शिष्यो यदाऽन्यत्रापि तादृश एवापराधे तेष्वेव द्रव्यादिषु तथैव प्रायश्चित्तं ददाति तदाऽसौ धारणानाम चतुर्थो व्यवहारः, उद्धृतपदधारणरूपा वा धारणा, इदमुक्तं भवति—वैयावृत्त्यकरणादिना कश्चिद्गच्छोपकारी साधुरद्याप्यशेषच्छेदश्रुतयोग्यो न भवति ततस्तस्यानुग्रहं कृत्वा यदा गुरुरुद्धृतान्येव कानिचित्प्रायश्चित्तपदानि कथयति तदा तस्य तेषां पदानां धरणं धारणाऽभिधीयते इति ॥ ८५८ ॥ अथ जीतव्यवहारमाह—'दव्वाई'त्यादि, येष्वपराधेषु पूर्वमहर्षयो बहुना तपःप्रकारेण शुद्धिं कृतवन्तस्तेष्वप्यपराधेषु साम्प्रतं द्रव्यक्षेत्रकालभावान् विचिन्त्य संहननधृतिबलादीनां च हानिमासाद्य समुचितेन केनचित्तपःप्रकारेण यां गीतार्थाः शुद्धिं निर्दिशन्ति तत्समयपरिभाषया जीतमुच्यते, अथवा यत्प्रायश्चित्तं यस्याचार्यस्य गच्छे सूत्रातिरिक्तं कारणतः प्रवर्तितं अन्यैश्च बहुभिरनुवर्तितं तत्तत्र रूढं जीतमुच्यते, तदेवमेतेषां

पञ्चानां व्यवहाराणामन्यतरेणापि व्यवहारेण युक्त एव प्रायश्चित्तप्रदाने गीतार्थो गुरुरधिक्रियते न त्वगीतार्थः, अनेकदोषसम्भवात्
उक्तं च—'अगीओ न वियाणइ सोहिं चरणस्स देइ ऊणऽहियं । तो अप्पाणं आलोयगं च पाडेइ संसारे ॥ १ ॥' इति
[ अगीतार्थो न विजानीते चरणस्य शोधिं ददात्यूनामधिकां वा । तत आत्मानमालोचकं च पातयति संसारे ॥ १ ॥ ] १२६ ॥ ८५९ ॥

इदानीं 'पंच अहाजाय'त्ति सप्तविंशत्युत्तरशततमं द्वारमाह—

**पंच अहाजायाइं चोलगपट्टो १ तहेव रयहरणं २ । उन्निय ३ खोमिय ४ निस्सेज्जजुयलयं तह य**
**मुहपोत्ती ५ ॥ ८६० ॥**

यथाजातानि, यथाजातं—जन्म तत्र श्रमणचोलपट्टस्तथा रजोहरणं तथा और्णिकक्षौमनिषद्यायुगलकं तथा मुखपोतिका एतानि पञ्च यथाजातानि, यथाजातं—जन्म तत्र श्रमण-
त्वमाश्रित्य द्रष्टव्यं, चोलपट्टादिमात्रोपकरणयुक्त एव हि श्रमणो जायते अतस्तद्योगादेतान्यपि यथाजातान्युच्यन्ते, तत्र चोलपट्टः प्रतीत
एव, बाह्याभ्यन्तरनिषद्याद्वयरहितमेकनिषद्यं सदशं रजोहरणं, इह किल सम्प्रति दशिकाभिः सह या दण्डिका क्रियते सा सूत्रनीत्या
केवलैव भवति न सहदशिका, तस्याश्च निषद्यात्रयं, तत्र या दण्डिकाया उपरि तिर्यग्वेष्टकत्रयप्रमाणपृथुत्वा एकहस्तायामा कम्बलीखण्ड-
रूपा सा आद्या निषद्या, तस्याश्चाग्रे हस्तत्रिभागायामा दशिकाः सम्बध्यन्ते, एषा च निषद्या दशिकाकलिताऽत्र रजोहरणशब्देन गृह्यते
उक्तं च—"एगनिसेज्जं च रयहरण"मिति [ एकनिषद्यावच्च रजोहरणं ॥ ] द्वितीया त्वेनामेव निषद्यां तिर्यग्बहुभिर्वेष्टकैरावेष्टयन्ती कि-
ञ्चिदधिकहस्तप्रमाणायामा हस्तप्रमाणमात्रपृथुत्वा वस्त्रमयी निषद्या सा अभ्यन्तरनिषद्या, इयं च क्षौमिकनिषद्याग्रहणेनेह गृह्यते, तृतीया
तु तस्या एवाभ्यन्तरनिषद्यायाः तिर्यग्वेष्टकान् बहून् कुर्वन्ती चतुरङ्गुलाधिकैकहस्तमाना चतुरस्रा कम्बलमयी भवति, सा चोपवेशनोप-

कारित्वादधुना पादप्रोञ्छनकमिति रूढा, इयं बाह्या निषद्येत्यभिधीयते, अस्यास्त्विह और्णिकनिषद्याग्रहणेन ग्रहणमिति, तथा मुखपिधानाय पोतं—वस्त्रं मुखपोतं, मुखपोतमेव ह्रस्वं चतुरङ्गुलाधिकवितस्तिमात्रप्रमाणत्वान्मुखपोतिका मुखवस्त्रिकेत्यर्थः, 'अतिवर्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानी'ति वचनाच्च प्रथमतो नपुंसकत्वेऽपि कप्रत्यये समानीते स्त्रीत्वमिति १२७ ॥ ८६० ॥ इदानीं **'निसिजागरणविहि'**त्ति अष्टाविंशत्युत्तरशततमं द्वारमाह—

**सवेऽवि पढमयामे दोन्नि य वसहाण आइमा जामा । तइओ होइ गुरूणं चउत्थ सवे गुरू सुयइ ॥ ८६१ ॥**

सर्वेऽपि साधवः प्रथमयामे—रात्रेः प्रथमं प्रहरं यावत् स्वाध्यायाध्ययनादि कुर्वाणा जाग्रति, द्वौ च आद्यौ यामौ वृषभाणां, वृषभा इव वृषभा—गीतार्थाः साधवस्तेषां, अयमर्थः—द्वितीये यामे ये सूत्रवन्तः साधवस्ते स्वपन्ति वृषभास्तु जाग्रति, ते च जाग्रतः **प्रज्ञापना**दिसूत्रार्थं परावर्तयन्ति, तृतीयः प्रहरो भवति गुरूणां, कोऽर्थः ?—प्रहरद्वयानन्तरं वृषभाः स्वपन्ति गुरवस्तूत्थिताः प्रज्ञापनादि गुणयन्ति चतुर्थं प्रहरं यावत्, चतुर्थे च प्रहरे सर्वेऽपि साधवः समुत्थाय वैरात्रिकं कालं गृहीत्वा कालिकश्रुतं परावर्तयन्ति, गुरुः पुनः स्वपिति, अन्यथा प्रातर्निद्राघूर्णमानलोचनास्तद्वशादेव च भज्यमानपृष्ठका व्याख्यानभव्यजनोपदेशादिकं कर्तुं ते सोद्यमाः सन्तो न शक्नुवन्तीति १२८ ॥ ८६१ ॥ इदानीं **'आलोयणदायगन्नेस'**त्त्येकोनत्रिंशदुत्तरशततमं द्वारमाह—

**सल्लुद्धरणनिमित्तं गीयस्सऽन्नेसणा उ उक्कोसा । जोयणसयाइं सत्त उ बारस वासाइं कायवा ॥ ८६२ ॥**

'शल्योद्धरणनिमित्तं' आलोचनार्थं 'गीतस्य' गीतार्थस्य गुरोरन्वेषणा तुः पुनरर्थे उत्कृष्टा क्षेत्रतः सप्तैव योजनशतानि यावत्कर्तव्या कालतस्तु द्वादश वर्षाणि यावदिति, अयमर्थः—संनिहित एव गीतार्थो यदि न लभ्यते तदा योजनशतसप्तप्रमाणक्षेत्रेऽसावुत्कृष्टतोऽन्वेषणीयः कालतस्तु द्वादश वर्षाणि यावत्समागच्छन् प्रतीक्षणीय इति, नन्वेतावति क्षेत्रे तदन्वेषणार्थं पर्यटन्नेतावन्तं च कालं तमागच्छन्तं प्रतीक्षमाणः स यदि अन्तरालेऽप्रदत्तालोचनोऽपि म्रियते तदा किमयमाराधको न वेति ?, उच्यते, आलोचनां दातुं सम्यक्परिणतोऽन्तराऽपि म्रियमाणोऽयमाराधक एव, विशुद्धाध्यवसायसम्पन्नत्वात्, उक्तं च—"आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसयासे । जइ अंतरावि कालं करेज्ज आराहओ तहवि ॥ १ ॥" [ आलोचनापरिणतः सम्यक् संप्रस्थितो गुरुसकाशे । यद्यन्तराऽपि कालं कुर्यात् तथाप्याराधकः ॥ १ ॥ ] अथैवमन्वेषणेऽपि सकलोक्तगुणगुरुर्गुरुर्न प्राप्यते तदा संविग्नगीतार्थमात्रस्याप्यालोचना दातव्या, यतः श्रूयते—अपवादतो गीतार्थसंविग्नपाक्षिकसिद्धपुत्रप्रवचनदेवतानामलाभे सिद्धानामप्यालोचना देया, सशल्यमरणस्य संसारकारणत्वात् इति, आह च—"संविग्गे गीयत्थे असई पासत्थमाइसारूवी" [ संविग्ने गीतार्थे असति पार्श्वस्थादयः सरूप्यन्ताः इति ] १२९ ॥ ८६२ ॥ सम्प्रति 'गुरुपमुहाणं कीरइ असुद्धसुद्धेहिँ जत्तियं कालं ।' इति त्रिंशदुत्तरशततमं द्वारमाह—

**जावज्जीवं गुरुणो असुद्धसुद्धेहिँ वावि कायव्वं । वसहे बारस वासा अट्ठारस भिक्खुणो मासा ॥ ८६३ ॥**

यावज्जीवमाजन्मापीत्यर्थः गुरोः—आचार्यस्य शुद्धैः—आधाकर्मादिदोषादूषितैरशुद्धैर्वाऽपि—आधाकर्मादिदोषयुक्तैर्वाऽपि अशनपानभैषजादिभिः कर्तव्यं प्रतिजागरणमिति शेषः, अयमर्थः—शुद्धैरशुद्धैश्च ते यावज्जीवमपि प्रतिजागरणीयाः साधुश्रावकलोकेन, सर्वस्यापि च ग-

च्छस्य तदधीनत्वात् यथाशक्ति निरन्तरं सूत्रार्थनिर्णयप्रवृत्तेश्च, तथा वृषभे—उपाध्यायादिके द्वादश वर्षाणि यावत् प्रतिजागरणा शुद्धैरशुद्धैर्वस्तुभिश्च विधेया, ततः परं शक्तौ भक्तविवेकः, एतावता कालेनान्यस्यापि समस्तगच्छभारोद्वहनसमर्थस्य वृषभस्य उत्थानात्, तथा अष्टादश मासान् यावद्भिक्षोः—सामान्यसाधोः शुद्धैरशुद्धैः प्रतिजागरणा विधेया, ततः परमसाध्यतया शक्तौ सत्यां भक्तविवेकस्यैव कर्तुमुचितत्वात्, इदं च शुद्धाशुद्धाशनादिभिराचार्यादीनां परिपालनं रोगाद्यभिभूतवपुषां क्षेत्रकालादेः परिहाणिवशतो भक्ताद्यलाभवतां च विधेया (यं) न पुनरेवमेव सुस्थावस्थायामिति, व्यवहारभाष्ये तु सर्वसामान्यग्लानप्रक्रियाव्यवस्थार्थमियं गाथा लिखिताऽस्ति, यथा—"छम्मासे आयरिओ कुलं तु संवच्छराइँ तिन्नि भवे। संवच्छरं गणो खलु जावज्जीवं भवे संघो ॥ १ ॥" अस्या व्याख्या—प्रथमत आचार्यः षड् मासान् यावच्चिकित्सां ग्लानस्य कारयति, तथाप्यप्रगुणीभूतं तं कुलस्य समर्पयति, ततः कुलं त्रीन् संवत्सरान् यावच्चिकित्सकं भवति, तथाप्यप्रगुणीभवने कुलं गणस्य तं समर्पयति, तदनन्तरं संवत्सरं यावद्गणः खलु चिकित्सां कारयति, तथाप्यनिवर्तितरोगे तं गणः सङ्घस्य समर्पयति, ततः सङ्घो यावज्जीवं—प्रासुकप्रत्यवतारेण तदभावे चाप्रासुकेनापि यावज्जीवं चिकित्सको भवति, एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतः, यः पुनर्भक्तविवेकं कर्तुं शक्नोति तेन प्रथमतोऽष्टादश मासान् चिकित्सा कारयितव्या, विरतिसहितस्य जीवितस्य पुनः संसारे दुष्प्रापत्वात्, तदनन्तरं चेत्प्रगुणीभवति ततः सुन्दरं, अथ न भवति तर्हि भक्तविवेकः कर्तव्य इति १३० ॥ ८६३ ॥ इदानीं 'उवहिधोयणकालो'त्ति एकत्रिंशदुत्तरशततमं द्वारमाह—

**अप्पत्ते चिय वासे सव्वं उवहिं धुवंति जयणाए। असईए उदगस्स उ जहन्नओ पायनिज्जोगो**

**॥ ८६४ ॥ आयरियगिलाणाणं मइला मइला पुणोवि धोइज्जा । मा हु गुरूण अवण्णो लोगम्मि अजीरणं इअरे ॥ ८६५ ॥**

अप्राप्त एव—अनायाते एव वर्षे—वर्षाकाले वर्षाकालान्मनागर्वाक्तने काले इत्यर्थः, जलादिसामग्र्यां सत्यामुत्कर्षतः सर्वमुपधिं—उपकरणं यतनया यतयः प्रक्षालयन्ति, उदकस्य—जलस्य पुनरसति—अभावे जघन्यतोऽपि पात्रनिर्योगोऽवश्यं प्रक्षालनीयः, इह निस्पूर्वो युजिरुपकारे वर्तते, उक्तं च पाठोदूखले 'निज्जोगो उवयारो' इति, तत्र निर्युज्यते—उपक्रियतेऽनेनेति निर्योगः—उपकरणं पात्रस्य निर्योगः पात्रनिर्योगः—पात्रोपकरणं पात्रकबन्धादिः, उक्तं च—"पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया । पडलाइं रयत्ताणा गोच्छओ पायनिज्जोगो ॥ १ ॥" इति, आह—किं सर्वेषामेव वस्त्राणि वर्षाकालादर्वागेव प्रक्षाल्यन्ते? किं वाऽस्ति केषाञ्चिद्विशेषः?, अस्तीति ब्रूमः, ॥ ८६४ ॥ केषामिति चेदत आह—'आयरिये'त्यादि, आचार्याः—प्रवचनार्थव्याख्याधिकारिणः सद्धर्मदेशनादिगुणग्रामभूरयः सूरयः, आचार्यग्रहणमुपलक्षणं तेनोपाध्यायादीनां प्रभूणां परिग्रहः, तेषां, तथा ग्लाना—मन्दास्तेषां च पुनः पुनर्मलिनानि २ वस्त्राणि प्रक्षालयेत्, प्राकृतत्वाच्च मलिनानीत्यत्र सूत्रे पुंस्त्वनिर्देशः, प्रस्तुतेऽर्थे कारणमाह—'मा हु' इत्यादि, मा भवतु हुः—निश्चितं गुरूणां मलिनवस्त्रपरिधाने लोकेऽवर्णः—अश्लाघा, यथा निराकृतयोऽमी मलदुरभिगन्धोपलिप्तदेहाः ततः किमेतेषामुपकण्ठं गतैरस्माभिरिति, तथा इतरस्मिन्—ग्लाने मा भवत्वजीर्णमिति, मलक्लिन्नवस्त्रप्रावरणे हि शीतलमारुतादिसम्पर्कतः शैत्यसम्भवेन भुक्ताहारस्यापरिणतौ ग्लानस्य विशेषतो मान्द्यमुज्जृम्भते इति, इह वर्षाकालप्रत्यासन्नं कालमपहाय शेषे ऋतुबद्धे काले चीवरप्रक्षालनं यतीनां न कल्पते, प्राण्युपमर्दोपकरणबकुशत्वाद्यनेकदोषसम्भवात्, नन्वेते दोषा वर्षाकालादर्वागपि वस्त्रप्रक्षालने सम्भवन्ति ततस्तदानीमपि न चीवराणि प्रक्षालनीयानि, तत्र,

तदानीं चीवरप्रक्षालनस्य सूत्रोक्तनीत्या वहुगुणत्वात्, येऽपि च प्राण्युपमर्दादयो दोषास्तेऽपि यतनया प्रवर्तमानस्य न सम्भवन्ति, यो हि सूत्राज्ञामनुसृत्य यतनया सम्यक्प्रवर्तते स यद्यपि कथञ्चित्प्राण्युपमर्दकारी तथापि नासौ पापभाग्भवति नापि तीव्रप्रायश्चित्तभागी, सूत्रवहुमानतो यतनया प्रवर्तमानत्वात्, अत एवोक्तम्—'धुवंति जयणाए' इति १३१ ॥ ८६५ ॥ इदानीं '**भोयणभाय**'त्ति द्वात्रिंशदुत्तरशततमं द्वारं व्याचिख्यासुः प्रथमतः कवलमानमाह—

**बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥ ८६६ ॥ अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भाए । वायपवियारणट्ठा छब्भागं ऊणयं कुज्जा ॥ ८६७ ॥ सीओ उसिणो साहारणो य कालो तिहा मुणेयव्वो । साहारणंमि काले तत्थाहारे इमा मत्ता ॥ ८६८ ॥ सीए दवस्स एगो भत्ते चत्तारि अहव दो पाणे । उसिणे दवस्स दुन्नी तिन्निवि सेसा उ भत्तस्स ॥ ८६९ ॥ एगो दवस्स भागो अवट्ठिओ भोयणस्स दो भागा । वड्ढंति व हायंति व दो दो भागा उ एक्केक्के ॥ ८७० ॥**

पुरुषस्य कुक्षिपूरक आहारो मध्यमप्रमाणो द्वात्रिंशत्कवलाः, किलेत्याहारस्य मध्यमप्रमाणतायाः संसूचकं, महेलायाः कुक्षिपूरक आहारो मध्यमप्रमाणोऽष्टाविंशतिः कवला इति ॥ ८६६ ॥ अथ भोजनभागप्रतिपादनार्थमेवाह (ग्रन्थाग्रं९०००)–'अद्धे'त्यादि, इह किल सर्वमुदरं षड्भिर्भागैर्विभज्यते, तत्रार्ध–त्रीन् भागानशनस्य–कूरमुद्गमोदकादेः सव्यञ्जनस्य–तक्रतीमनभर्जिकासहितस्य योग्यं कुर्यात्–विदध्यात्, तथा द्रवस्य–पानीयस्य योग्यौ द्वौ भागौ कुर्यात्, षष्ठं तु भागं वातप्रविचारणार्थ–वायुसञ्चलनार्थमूनकं कुर्यात्, अन्यथा हि वायुविष्कम्भतः

शरीरे रोगादिसम्भव इति ॥ ८६७ ॥ इह कालापेक्षया तथा तथा भवति आहारस्य प्रमाणं, कालश्च त्रिधा, तथा चाह—'सीओ'इत्यादि, त्रिधा कालो ज्ञातव्यः, तद्यथा—शीत उष्णः साधारणश्च, 'तत्र' तेषु कालेषु मध्ये साधारणे काले आहारे—आहारविषये इयं—अनन्तरोक्ता मात्रा—प्रमाणं ॥ ८६८ ॥ 'सीए'इत्यादि, शीते—अतिशयेन शीतकाले द्रवस्य—पानीयस्य एको भागः कल्पनीयः चत्वारो भक्ते—भक्तस्य, मध्यमे तु शीतकाले द्वौ भागौ पानीयस्य कल्पनीयौ त्रयस्तु भागा भक्तस्य, अथवेतिशब्दो मध्यमशीतकालसंसूचनार्थः, तथा उष्णे—मध्यमोष्णकाले द्वौ भागौ द्रवस्य—पानीयस्य कल्पनीयौ शेषास्तु त्रयो भागा भक्तस्य, अत्युष्णे च काले त्रयो भागा द्रवस्य शेषौ तु द्वौ भागौ भक्तस्य, वाशब्दोऽत्रात्युष्णकालसंसूचनार्थः, सर्वत्र च षष्ठो भागो वायुप्रविचारणार्थं मुत्कलो मोक्तव्यः ॥ ८६९ ॥ सम्प्रति भागानां चरस्थिरविभागप्रदर्शनार्थमाह—'एगो'इत्यादि, एको द्रवस्य भागोऽवस्थितो, न कदाचिदपि न भवतीति भावः, द्वौ च भागौ भोजनस्य, शेषौ तु द्वौ द्वौ भागौ एकैकस्मिन्—भक्ते पाने चेत्यर्थः, वर्धेते वा हीयेते वा, वृद्धिं वा व्रजतो हानिं वा व्रजत इत्यर्थः, तथाहि—अतिशीतकाले द्वौ भागौ भोजनस्य वर्धेते अत्युष्णकाले च पानीयस्य, अत्युष्णकाले च द्वौ भागौ भोजनस्य हीयेते अतिशीतकाले च पानीयस्येति॥ ८७० ॥ १३२॥ साम्प्रतं 'वसहिसुद्धि'त्ति त्रयस्त्रिंशदुत्तरशततमं द्वारमाह—

पट्टीवंसो दो धारणाउ चत्तारि मूलवेलीओ । मूलगुणेहिं विसुद्धा एसा हु अहागडा वसही ॥ ८७१ ॥ वंसगकडणोक्कंबण छायण लेवण दुवारभूमी य । परिकम्मविप्पमुक्का एसा मूलुत्तरगुणेसु ॥ ८७२ ॥ दूमिय धूविय वासिय उज्जोइय बलिकडा अवत्ता य । सित्ता संमट्ठावि य विसो-

**द्दिकोडिं गया वसही ॥ ८७३ ॥ मूलुत्तरगुणसुद्धं थीपसुपंडगविवज्जियं वसहिं । सेविज्ज सव्वकालं विवज्जए हुंति दोसा उ ॥ ८७४ ॥**

उपरितनस्तिर्यक्पाती पृष्ठवंशो गृहसम्बन्धी मध्यवलक इत्यर्थः द्वौ मूलधारिण्यौ—स्तम्भौ ययोरुपरि पृष्ठवंशस्तिर्यक् स्थाप्यते, ततस्तो मूलवेलयश्चतुर्षु गृहपार्श्वेषु, उभयोर्धारणयोरुभयतो द्विद्विवेलिसम्भवात्, एते च वसतेः सप्त मूलगुणाः, एतैर्मूलगुणैः सप्तभिरात्मार्थं कृतैः सद्भिर्वसतिर्विशुद्धा भवति, या पुनः साधुसङ्कल्पेन निष्पादितैर्मूलगुणैर्युक्ता एषा दुः—स्फुटं आधाकृता भवति—साधूनाधाय—सम्प्रधार्य कृता आधाकृता आधाकर्मिकीत्यर्थः, उक्ता मूलगुणविशुद्धा वसतिः, अथोत्तरगुणविशुद्धाऽभिधीयते, ते चोत्तरगुणा द्विविधाः—मूलोत्तरगुणा उत्तरोत्तरगुणाश्च, तत्र प्रथमं तावन्मूलोत्तरगुणानाह—'वंसगे'त्यादि, वंशका ये मूलवेलीनामुपरि स्थाप्यन्ते, पृष्ठवंशस्योपरि तिर्यक् कटनं—कटादिभिः समन्ततः पार्श्वाणामाच्छादनं उत्कम्बनं—उपरि कम्बिकानां बन्धनं छादनं—दर्भादिभिराच्छादनं लेपनं—कुड्यानां कर्दमेन गोमयेन च लेपप्रदानं 'दुवार'त्ति संयतनिमित्तमन्यतो वसतेर्द्वारकरणं बृहद्वल्पद्वारकरणं वा 'भूमि'त्ति विषमाया भूमेः समीकरणं, एते सप्त मूलभूता उत्तरगुणा मूलोत्तरगुणाः, उत्तरगुणेषु एते मूलगुणा इत्यर्थः, एतद्रूपं यत्परिकर्म—साध्वर्थमेतेषां निष्पादनं तेन विप्रमुक्ता—विरहिता या वसतिरेषा मूलोत्तरगुणेषु विशुद्धा, एतानि सप्त साध्वर्थं यत्र न कृतानि सा मूलोत्तरगुणविशुद्धा वसतिरिति भावः, एते च पृष्ठवंशादयश्चतुर्दशाप्यविशोधिकोटिः, उत्तरोत्तरगुणास्तु विशोधिकोटिः, ते चामी—'दूमिये'त्यादि, दूमिया नाम—सुकुमारलेपनेन कोमलीकृतकुड्या खटिकया धवलीकृतकुड्या च धूपिता—दुर्गन्धेतिकृत्वाऽगुरुधूपादिभिः सुगन्धीकृता वासिता—पटवासपुष्पादिभिरपनीतदौर्गन्ध्या उद्योतिता—रत्नप्रदीपादिभिरन्धकारे प्रकाशिता बलीकृता—कूरापूपकूरादिबलिविधाना अवत्ता—छगण-

एतैरुत्तरोत्तरगुणैः संयतनिमित्तं
मृत्तिकाभ्यां जलेन चोपलिप्तभूमितला सिक्ता—केवलोदकेन आर्द्रीकृता सम्मृष्टा—सम्मार्जिन्या प्रमार्जिता, यत्र तु साध्वर्थमेते न निष्पादिताः सा वसतिर्विशुद्धैवेति । तथा चाह
कृतैर्विशोधिकोटिं गता वसतिः, अविशोधिकोटौ न भवतीत्यर्थः, विपर्यये—अशुद्धायां स्त्र्यादिसंसक्तायां च
—'मूलुत्त'त्यादि, मूलोत्तरगुणपरिशुद्धां तथा स्त्रीपशुपण्डकविवर्जितां वसतिं सेवेत सर्वकालं, यत्पुनरिह सूत्रे चतुःशालाद्यपेक्षया मूलो-
वसतौ भवन्ति दोषा इति, एतदनुसारतस्तु चतुःशालादिष्वपि मूलोत्तरगुणविभागो विज्ञेयः, प्रायो ग्रामादिष्वेव वासः सम्भवति,
त्तरगुणविभागः साक्षान्नोक्तस्तत्रेदं कारणं—यथा विहरतां साधूनां श्रुताध्ययनादिव्याक्षेपपरिहारार्थं उक्तं च—"चाउस्सालाईए विन्नेओ एवमेव उ वि-
तत्र च वसतिः पृष्ठवंशादियुक्तैव भवति, ततस्तासामेव वसतीनां साक्षाद्ग्रहणमिति, वासो तेसु य वसही
भागो । इह मूलाइगुणाणं सक्खा पुण सुण न जं भणिओ ॥ १ ॥ विहरंताणं पायं समत्तकज्जाण जेण गामेसु ।
पट्ठाइजुया अओ तासिं ॥ २ ॥" ॥ ८७४ ॥ १३३ ॥ साम्प्रतं 'संलेहणा दुवालस वरिसे'त्ति चतुस्त्रिंशदुत्तरशततमं द्वारमाह—

**चत्तारि विचित्ताइं ४ विगईनिज्जूहियाइं चत्तारि ४ । संवच्छरे य दोन्नि उ एगंतरियं च आयामं**
**१० ॥ ८७५ ॥ नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं । अवरेऽवि य छम्मासे होइ**
**विगिट्ठं तवोकम्मं ११ ॥ ८७६ ॥ वासं कोडीसहियं १२ आयामं कट्टु आणुपुव्वीए । गिरिकंदरं व**
**गंतुं पाओवगमं पवज्जेइ ॥ ८७७ ॥**

संलेखनं संलेखना—आगमोक्तेन विधिना शरीराद्यपकर्षणं, सा च त्रिविधा—जघन्या पाण्मासिकी मध्यमा संवत्सरप्रमाणा उत्कृष्टा तु
द्वादश वर्षाणि, तत्र उत्कृष्टा तावदेवं—प्रथमं चत्वारि वर्षाणि 'विचित्राणि' विचित्रतपांसि करोति, किमुक्तं भवति ?—चत्वारि वर्षाणि

यावत्कदाचिच्चतुर्थं कदाचित् षष्ठं कदाचिदष्टमं एवं दशमद्वादशादीन्यपि करोति, पारणकं च सर्वकामगुणितेनोद्गमादिशुद्धेनाहारेण विधत्ते, ततः परमन्यानि चत्वारि वर्षाणि उक्तप्रकारेण विचित्रतपांसि करोति विकृतिनिर्यूहितानि—विकृतिरहितानि, किमुक्तं भवति?—विचित्रं तपः कृत्वा पारणके निर्विकृतिकं भुङ्क्ते उत्कृष्टरसवर्जं च, ततः परतोऽन्ये द्वे च वर्षे एकान्तरितमाचाम्लं करोति, एकान्तरं चतुर्थं कृत्वा आचाम्लेन पारयतीत्यर्थः, एवमेतानि दश वर्षाणि गतानि, एकादशस्य तु वर्षस्याद्यान् षण्मासान् 'नातिविकृष्टं' नातिगाढं तपः करोति, नातिविकृष्टं नाम तपश्चतुर्थं षष्ठं वाऽवसेयं नाष्टमादिकं, पारणके तु परिमितं—किञ्चिदूनोदरतासम्पन्नमाचाम्लं करोति, ततः परमपरान् षण्मासान् विकृष्टं—अष्टमदशमद्वादशादिकं तपःकर्म भवति, पारणके तु मा शीघ्रमेव मरणं यासिषमितिकृत्वा परिपूर्णभ्राण्या आचाम्लं करोति, न पुनरूनोदरतयेति, द्वादशं तु वर्षं कोटीसहितं निरन्तरमाचाम्लं करोतीत्यर्थः । उक्तं च निशीथचूर्णौ—"दुवालसमं वरिसं निरंतरं हायमाणं उसिणोदएण आयंबिलं करेइ, तं कोडिसहियं भवइ, जेणायंबिलस्स कोडी कोडीए मिलइ"त्ति । चतुर्थं कृत्वा आचाम्लेन पारयति, पुनश्चतुर्थं विधायाचाम्लेनैव पारयतीत्यादीन्यपि बहूनि मतान्तराणि द्वादशस्य वर्षस्य विषये वीक्ष्यन्ते, परं ग्रन्थगौरवभयान्नात्र लिखितानीति । इह च द्वादशे वर्षे भोजनं कुर्वन् प्रतिदिनमेकैककवलहान्या तावदूनोदरतां करोति यावदेकं कवलमाहारयति, ततः शेषेषु दिनेषु क्रमश एकेन सिक्थेनोनमेकं कवलमाहारयति द्वाभ्यां सिक्थाभ्यां त्रिभिः सिक्थैरेवं यावदन्ते एकमेव सिक्थं भुङ्क्ते, यथा दीपे समकालं तैलवर्तिक्षयो भवति तथा शरीरायुषोरपि समकं क्षयः स्यादिति हेतोः, अपरं चेह द्वादशस्य वर्षस्य पर्यन्तवर्तिनश्चतुरो मासान् यावदेकान्तरितं तैलगण्डूषं चिरकालमसौ मुखे धारयति, ततः खेलमल्लके भस्ममध्ये प्रक्षिप्य मुखमुष्णोदकेन शोधयति, यदि पुनस्तैलगण्डूषविधानं न कार्यते तदा रूक्षत्वात्तेन मुखयन्त्रमीलनसम्भवे पर्यंतसमये नमस्कारमुच्चारयितुं न शक्नोतीति,

तदेवमनयाऽऽनुपूर्व्या—क्रमेण द्वादशवार्षिकीमुत्कृष्टां संलेखनां कृत्वा गिरिकन्दरां च गत्वा उपलक्षणमेतत् अन्यदपि षट्कायोपमर्दरहितं विविक्तं स्थानं गत्वा पादपोपगमनं, वाशब्दाद्भक्तपरिज्ञामिंगिनीमरणं वा प्रपद्यते, मध्यमा तु संलेखना पूर्वोक्तप्रकारेण द्वादशभिर्मासैः जघन्या च द्वादशभिः पक्षैः परिभावनीया, वर्षस्थाने मासान् पक्षांश्च स्थापयित्वा तपोविधिः प्रागिव निरवशेष उभयत्रापि भावनीय इति भावः ॥ ८७५ ॥ ८७६ ॥ ८७७ ॥ १३४ ॥ इदानीं 'वसहेण वसहिगहणं'ति पंचत्रिंशदुत्तरशततमं द्वारमाह—

**नयराइएसु घेप्पइ वसही पुव्वामुहं ठविय वसहं । वामकडीइ निविट्ठं दीहीकअग्गिमेकपयं ॥ ८७८ ॥ सिंगक्खोडे कलहो ठाणं पुण नेव होइ चलणेसु । अहिठाणे पोट्टरोगो पुच्छंमि य फेडणं जाण ॥ ८७९ ॥ मुहमूलंमि य चारी सिरे य कउहे य पूयसक्कारो । खंधे पट्ठीय भरो पुट्टंमि य धायओ वसहो ॥ ८८० ॥**

नगरग्रामादिषु पूर्वाभिमुखं वामकट्या—वामपार्श्वेण निविष्टं—उपविष्टं दीर्घीकृताग्रिमैकपादं—आयतीकृताग्रतनैकतरचरणं वृषभं—बलीवर्दं स्थापयित्वा—निवेश्य वसतिर्गृह्यते, अयमर्थः—यावन्मात्रं क्षेत्रं वसिमाक्रान्तं भवति तावत्सर्वमपि वामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूपं बुद्ध्या परिकल्प्य प्रशस्तेषु प्रदेशेषु साधुभिर्वसतिर्ग्राह्येति ॥ ८७८ ॥ इत्थं च क्षेत्रे वृषभरूपे कल्पिते कुत्रावयवे वसतिः क्रियमाणा किम्फला भवति ?, तत्राह—'सिंगे'त्यादि, शृङ्गप्रदेशे यदि वसतिं करोति तदा निरन्तरं व्रतिनां कलहो भवति, तथा स्थानं—अवस्थितिः पुनः नैव भवति चरणेषु—पादप्रदेशेषु क्रियमाणायां वसतौ, तथाऽधिष्ठाने—अपानप्रदेशे वसतौ क्रियमाणायां मुनीनां उदररोगो भवति, तथा पुच्छे—पुच्छप्रदेशे क्रियमाणायां वसतौ स्फेटनं—अपनयनं वसतेर्जानीहि, तथा मुखमूले वसतौ क्रियमाणायां 'चारि'त्ति भोजनसम्पत्तिः

साधूनां भव्या भवति, तथा शिरसि—शृङ्गयोर्मध्ये ककुदे वा—अंशकूटप्रदेशे वसतिकरणे पूजा—प्रवरवस्त्रपात्रादिप्रदानलक्षणा सत्कारश्च—अभ्युत्थानादिरूपो व्रतिनां भवति, तथा स्कन्धप्रदेशे पृष्ठप्रदेशे च वसतौ सत्यां भरो भवति—साधुभिरितस्तत आगच्छद्भिर्वसतिराकुला भवति, तथा 'पोट्टंमि य'त्ति उदरदेशे वसतौ विधीयमानायां ध्रातः—तृप्तो भवति वृषभो—वृषभकल्पो भवति गृहीतवसतिनिवासी यतिजन इति ॥ ८७९ ॥ ८८० ॥ १३५ ॥ इदानीं 'उसिणस्स फासुयस्सवि जलस्स सचित्तया कालो' इति षट्त्रिंशदुत्तरशततमं द्वारमाह—

**उसिणोदगं तिदंडुक्कलियं फासुयजलंति जइकप्पं । नवरि गिलाणाइकए पहरतिगोवरिवि धरियव्वं ॥ ८८१ ॥ जायइ सचित्तया से गिम्हंमि पहरपंचगस्सुवरिं । चउपहरोवरि सिसिरे वासासु पुणो तिपहरुवरिं ॥ ८८२ ॥**

त्रिभिर्दण्डैः—उत्कालैरुत्कालितं—आवृत्तं यदुष्णोदकं तथा यत्प्रासुकं—स्वकायपरकायशस्त्रोपहतत्वेनाचित्तीभूतं जलं तदेव यतीनां कल्प्यं—ग्रहीतुमुचितं, इह किल प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्रः द्वितीये प्रभूतः परिणमति स्तोकोऽवतिष्ठते तृतीये तु सर्वोऽप्यप्कायोऽचित्तो भवतीति त्रिदण्डग्रहणं, इदं च सर्वमपि प्रहरत्रयमध्य एवोपभोक्तव्यं, प्रहरत्रयादूर्द्ध्वं पुनः कालातिक्रान्तदोषसम्भवेनोपभोगानर्हत्वान्न धारणीयं, नवरं—केवलं ग्लानादिकृते—ग्लानवृद्धादीनामर्थाय प्रहरत्रिकादप्यूर्द्ध्वं धर्तव्यमिति ॥ ८८१ ॥ 'जाये'त्यादि, जायते—भवति सचित्तता 'से'त्ति तस्य उष्णोदकस्य प्रासुकजलस्य वा ग्लानाद्यर्थं धृतस्य 'ग्रीष्मे' उष्णकाले प्रहरपञ्चकस्योपरि—प्रहरपञ्चकादूर्द्ध्वं, कालस्यातिरूक्षत्वाच्चिरेणैव जीवसंसक्तिसद्भावात्, तथा शिशिरे—शीतकाले कालस्य स्निग्धत्वात्प्रहरचतुष्टयादूर्द्ध्वं सचित्तता

सचित्तीभवति, तदूर्द्धमपि यदि ध्रियते
भवति, वर्षासु—वर्षाकाले पुनः कालस्यातिस्निग्धत्वात्प्रासुकीभूतमपि जलं भूयः प्रहरत्रयादूर्द्ध्वं सचित्तीभवति, तदूर्द्धमपि यदि ध्रियते
तदा क्षारः प्रक्षेपणीयो येन भूयः सचित्तं न भवतीति ॥ ८८२ ॥ १३६ ॥ इदानीं 'तेरिच्छिमाणवीओ देवीओ तिरियमणुयदेवाणं।
जग्गुणाओ जत्तियमेत्ताहिगाउ'त्ति सप्तत्रिंशदुत्तरशततमं द्वारमाह—

तिगुणा तिरूवअहिया तिरियाणं इत्थिया मुणेयव्वा । सत्तावीसगुणा पुण मणुयाणं तयहिया चेव ॥ ८८३ ॥ बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं । देवीओ पन्नत्ता जिणेहिं जियराग-दोसेहिं ॥ ८८४ ॥

त्रिगुणास्त्रिभी रूपैरधिकाश्च तिरश्चां पुंवेदिनां स्त्रियो ज्ञातव्याः, कोऽर्थः ?—असत्कल्पनया सर्वेभ्यस्तिर्यग्योनिकपुरुषेभ्यः प्रत्येकं तिस्र-स्तिस्रस्तिर्यक्स्त्रियो दीयन्ते तिस्रश्च तिर्यक्स्त्रिय उद्धरन्ति ततो न तद्योग्यस्तिर्यग्योनिकः पुमान् प्राप्यत इति, एवमुत्तरत्रापि भावना कार्या, तथा मनुष्याणां स्त्रियो मनुष्यपुरुषेभ्यः सप्तविंशतिगुणाः तदधिकाश्च—सप्तविंशतिरूपाधिकाः, तथा देवपुरुषेभ्यो देवस्त्रियो द्वात्रिं-शद्गुणा द्वात्रिंशद्रूपाधिकाश्च प्रज्ञप्ताः—कथिता जिनैर्जितरागद्वेषैरिति ॥ ८८३ ॥ ८८४ ॥ १३७ ॥ इदानीं 'अच्छेरयाण दसगं'ति अष्ट-त्रिंशदुत्तरशततमं द्वारमाह—

उवसग्ग १ गब्भहरणं २ इत्थीतित्थं ३ अभाविया परिसा ४ । कण्हस्स अवरकंका ५ अवयरणं चंदसूराणं ६ ॥ ८८५ ॥ हरिवंसकुलुप्पत्ती ७ चमरुप्पाओ ८ य अट्ठसयसिद्धा ९ । अस्संजयाण पूया १० दसवि अणंतेण कालेणं ॥ ८८६ ॥ सिरिरिसहसीयलेसुं एक्केक्कं मल्लिनेमिनाहे य । वीर-

**जिणिंदे पंच उ एगं सव्वेसु पाएणं ॥ ८८७ ॥ रिसहे अट्ठऽहियसयं सिद्धं सीयलजिणंमि हरिवंसो । नेमिजिणेऽवरकंकागमणं कण्हस्स संपन्नं ॥ ८८८ ॥ इत्थीतित्थं मल्ली पूया असंजयाण नवमजिणे । अवसेसा अच्छेरा वीरजिणिंदस्स तित्थंमि ॥ ८८९ ॥**

आ—विसयतश्चर्यन्ते—अवगम्यन्ते जनैरित्याश्चर्याणि—अद्भुतानि, तानि च उपसर्गादीनि दश, तत्रोपसृज्यते—क्षिप्यते बाध्यते प्राणी धर्मादिभिरित्युपसर्गाः—सुरनरादिकृतोपद्रवाः, ते च योजनशतमिते क्षेत्रे प्रशमितदुर्वारवैरमारिविड्वरदुर्भिक्षाद्युपद्रवोद्रेकस्यापि वरेण्यपुण्यापणस्यापि तीर्थकरस्यापि भगवतः **श्रीमहावीरस्य** छद्मस्थकाले केवलिकाले च नरामरतिर्यक्कृताः समभवन्, इदं च किल न जातुचिद् जातपूर्वं, तीर्थकरा हि निखिलनरामरतिरश्चां सत्कारस्थानमेव, नोपसर्गभाजनं, अनन्तकालभाव्ययमर्थो लोकेऽद्भुतभूत इति १ । तथा गर्भस्य—स्त्रीकुक्षिसमुद्भूतसत्त्वस्य संहरणं—अन्यस्त्रीकुक्षौ सङ्क्रामणं गर्भसंहरणं, एतच्च तीर्थङ्करमुद्दिश्याभूतपूर्वमस्यामवसर्पिण्यां भगवतः **श्रीमहावीरस्य** जातं, तथाहि—**श्रीमहावीरजीवो मरीचिभवे** समुपार्जितनीचैर्गोत्रकर्मा प्राणतकल्पपुष्पोत्तरविमानाच्युत्वा ब्राह्मणकुण्डग्रामे ऋषभदत्तापरनामधेयसोमिलद्विजदयिताया देवानन्दायाः कुक्षावाषाढशुक्लषष्ठ्यामवातरत्, इतश्च द्व्यशीतिदिनेषु समतिक्रान्तेषु सौधर्माधिपतिरुपयुक्तावधिर्न तीर्थकृतः कदाचनापि नीचैःकुलेषु जायन्ते इति विमृश्य भुवनगुरुभक्तिभरभावितमनाः पदात्यनीकाधिपतिं हरिणेगमेषिमादिक्षत्—यथैष भरतक्षेत्रे चरमतीर्थकृत् प्रागुपात्तकर्मशेषपरिणतिवशतस्तुच्छकुले जातः तदयमितः संहृत्य क्षत्रियकुण्डग्रामे प्रसिद्धसिद्धार्थपार्थिवपत्न्यास्त्रिशलादेव्याः कुक्षौ स्थाप्यतामिति, ततः स हरिणेगमेषिस्तथेति प्रतिपद्याश्वयुक्कृष्णत्रयोदशीदिवसे रात्रौ प्रथमप्रहरद्वयमध्ये **देवानन्दा**भिधानब्राह्मण्युदरात् त्रिशलादेव्याः कुक्षौ भगवन्तं संहृतवान्, एतदप्यनन्तकालभावित्वादाश्चर्यमेवेति २ ।

तथा स्त्री—योषित्तस्यास्तीर्थङ्करत्वेनोत्पन्नायास्तीर्थं—द्वादशाङ्गं सङ्घो वा स्त्रीतीर्थं, तीर्थं हि त्रिभुवनातिशायिनिरुपमानमहिमानः पुरुषा एव प्रवर्तयन्ति, इह त्ववसर्पिण्यां कुम्भकनृपतिपुत्र्या मल्लयभिधानया एकोनविंशतितमतीर्थंकरत्वेनोत्पन्नया तीर्थं प्रवर्तितं, तथाहि—इहैव जम्बूद्वीपे द्वीपेऽपरविदेहे सलिलावतीविजये वीतशोकायां नगर्यां महाबलो नाम भूपतिरभूत्, स च सुचिरपरिपालितराज्यः षड्भिर्बालमित्रैः सममार्हतं धर्ममाकर्ण्य वरधर्ममुनीन्द्रसमीपे प्रवव्राज, तैश्च सप्तभिरपि यदेकस्तपः करिष्यति तदन्यैरपि कर्तव्यमिति प्रतिज्ञाय सर्वं चतुर्थादितपश्चक्रे, अन्यदा च महाबलमुनिस्तेभ्यो विशिष्टतरफलेप्सया पारणकदिने पादोऽद्य मे दुष्यति शिरोऽद्य मे दुष्यति दुष्यत्युदरमद्य मे नास्ति मेऽद्य क्षुदित्यादिव्यपदेशेन मायया तान् वञ्चयित्वा तपश्चक्रे, तेन च मायामिश्रेण तपसा स्त्रीवेदकर्म अर्हद्वात्सल्यादिभिः विंशतिस्थानैस्तीर्थकृन्नामकर्म च बद्ध्वा पर्यन्तसमये समयोक्ताराधनया विपद्य वैजयन्तविमानेषु सुरः समुत्पेदे, ततश्च्युत्वा च मिथिलानगर्यां कुम्भाभिधवसुधाधिपतेः पत्न्याः प्रभावत्याः प्राग्जन्मकृतमायासमुपार्जितस्त्रीवेदकर्मवशतो मल्लयभिधाना पुत्री समभवत्, क्रमेण च प्राप्तयौवना यथाविधि प्रव्रज्यां प्रतिपद्य केवलज्ञानमुपागमत्, अष्टमहाप्रातिहार्यप्रभृतितीर्थकरसमृद्धिसंशोभिता च तीर्थं प्रवर्तयामासेति, अस्यापि भावस्यानन्तकालजातत्वादाश्चर्यतेति ३। तथा अभव्या—अयोग्या चारित्रधर्मस्य पर्षत्—तीर्थकरसमवसरणस्थितश्रोतृलोकाः, श्रूयते हि भगवतः श्रीवर्धमानस्वामिनो जृम्भिकग्रामाद्बहिः समुत्पन्ननिःसपत्नकेवलालोकस्य तत्कालसमायातसङ्ख्यातीतसुरविसरविरचितसुचारुसमवसरणस्य भूरिभक्तिकुतूहलाकुलितमिलितापरिमितामरनरतिरश्चां स्वस्वभाषानुसारिणा सजलजलधरध्वानानुकारिणाऽतिमनोहारिणा महाध्वनिना धर्मकथां कुर्वाणस्यापि न केनचिद्विरतिः प्रतिपन्ना, केवलं प्रथमसमवसरणेऽवश्यमेव तीर्थकृद्भिः कर्तव्या धर्मदेशनेति स्थितिपरिपालनायैव धर्मकथा वभूव, न चैतत्तीर्थकरस्य कस्यापि भूतपूर्वमित्याश्चर्यं ४। तथा कृष्णस्य—नवमवासुदेवस्यापरकङ्कामिधाना नगरी

गमनगोचरोऽभूदित्यभूतपूर्वत्वादाश्चर्यं, इह किल श्रूयते हस्तिनागपुरे युधिष्ठिरप्रष्ठाः पञ्चापि पाण्डवाः काम्पिल्यपुराधिपद्रुपदनृपपुत्र्या द्रौपद्या सह सहर्षं वारकेण विषयसुखमुपभुञ्जानाः परमप्रमोदेन दिनान्यतिवाहयन्ति स्म, अन्येद्युर्नारदनामा मुनिर्मनःसमीहितान् देशान् परिभ्राम्यन् द्रौपदीमन्दिरमाययौ, द्रौपद्या चाविरतोऽयमिति मत्वा नमस्कृतिमात्रेणापि न तस्य प्रतिपत्तिः कृता, ततोऽसौ क्रोधाध्मातमना नारदः कथमियं महादुःखभाग्भविष्यतीति चिन्तयंस्तन्निकेतनान्निर्गत्य भरतक्षेत्रे च कृष्णभयात्तस्याः कुतोऽप्यपायमपश्यन् धातकीखण्डसम्बन्धिभरतक्षेत्रे चम्पाधिपतिकपिलाख्यकेशवसेवकस्य ललनालम्पटस्य पद्मनाभनृपस्य पुरीमपरकङ्काभिधामभ्यगात्, सोऽपि नृपःससम्भ्रममुत्थाय प्रतिपत्तिपुरस्सरमन्तःपुरे नीत्वा निखिला अपि निजप्रेयसीः प्रदर्शयन् भगवन्! अनवरतं सर्वत्राप्यस्खलितप्रचारेण भवता विलोकिताः काप्येवंविधाः पुरन्ध्रय इति नारदं निजगाद, नारदोऽपि सेत्स्यत्यनेन मम प्रयोजनमिति मनसि निश्चित्य प्रत्यवादीत्—राजन्! कूपमण्डूक इव किमेताभिः स्वान्तःपुरीभिः प्रमोदमानमानसो भवान्?, यज्जम्बूद्वीपभरतभूषणायमाने हस्तिनागपुरे पाण्डवानां प्रेयस्या द्रौपद्याः पुरस्तादेताः सर्वा अपि दासीदेश्या एवेत्यभिधाय नारदमुनिरुत्पपात, अथ पद्मनाभो द्रौपदीप्राप्तिपर्याकुलः पातालनिवासिनं पूर्वसङ्गतिकं सुरं तपसा समाराध्य प्रत्यक्षीभूतं किं करोमीतिवादिनं पाण्डवप्रणयिनीं द्रौपदीमिहानीय मम समर्पयेत्यवादीत्, देवोऽपि महाराज! द्रौपदी हि महासती पाण्डवव्यतिरेकेण नान्यं मनसाऽपि पतिमभिलपति तथाऽपि त्वन्निर्बन्धादत्रानयामीत्युक्त्वा हस्तिनागपुरादवस्वापिनीदानेन निशि प्रसुप्तां द्रौपदीमपहृत्य तस्मै समर्पयामास, पद्मनाभोऽपि प्रमुदितमनाः प्रबुद्धां निजदयितादयनवलोकनेन विह्वलितहृदयां द्रौपदीमभाषत—मा भैषीर्मृगाक्षि! मयैवेह त्वमानायिताऽसि, अहं हि धातकीखण्डभरतक्षेत्रे अपरकङ्कापुरीपतिः पद्मनाभनामा नृपस्त्वां प्रेयसीं प्रार्थये, ततो मया सह स्वेच्छयाऽतुच्छान् भोगान् भुङ्क्ष्वेति, द्रौपद्यपि च तद्वचः श्रुत्वा तत्काल-

समुत्पन्नमतिः षण्मासमध्ये यदि मदीयः कोऽपि इह नागमिष्यति तदा त्वदीयं समीहितं करिष्यामीत्यवोचत, राज्ञाऽपि जम्बूद्वीपजुषां पुरुषाणामत्रागमनमसंभवीति विमृश्य तद्वचः प्रत्यपद्यत, इतश्च पाण्डवाः प्रभाते द्रौपदीमपश्यन्तः सादरं सर्वत्रान्वेषणेऽपि तद्वार्तामप्यलभमानाः समग्रमपि वृत्तान्तं वासुदेवाय न्यवेदयन्, वासुदेवोऽपि किंकर्तव्यतामूढो यावदास्ते तावदकस्मान्नारदमुनिस्तत्र स्वयंकृतमनर्थमवलोकयितुमाजगाम, सर्वत्राप्यस्खलितप्रचारं सञ्चरता भवता किं क्वापि द्रौपदी दृष्टेति कृष्णेनानुयुक्तः स उक्तवान्—धातकीखण्डेऽमरकङ्कायां नगर्यां गतेन मया पद्मनाभनृपस्य सद्मनि द्रौपदी दृष्टेत्यभिधाय सोऽन्यतोऽगमत्, ततः कृष्णः पद्मनृपतिना द्रौपदी हृता एषोऽहं तामितो हानेष्यामीति मा मनागपि खेदं विदध्वमिति पाण्डवान् समाश्वास्य महापृतनापरिवृतः पाण्डवैः सह दक्षिणाम्भोनिधितटनिकटमभ्यगात्, पाण्डवा अप्यत्यन्तभीषणमपारं पारावारमवलोक्य स्वामिन्नयं मनसाऽप्यलङ्घ्यः कथं लङ्घनीय इति विष्णुं व्यजिज्ञपन्, विष्णुरपि न काचिच्चिन्ता भवद्भिर्विधेयेति तानुक्त्वाऽष्टमतपसा सुस्थितनामानं लवणसमुद्रस्वामिनममरमाराधयामास, अथाविर्भूय देवेन किं करोमीत्युक्ते विष्णुरवदत्—सुरश्रेष्ठ! पद्मनाभनृपत्यपहृता धातकीखण्डद्वीपाद् द्रौपदी द्रुतमेव यथा समानीयते तथा कुर्विति, देवोऽपि यथा पद्मनाभपार्थिवस्य पूर्वसङ्गतसुरेणापहृत्य समर्पिता तथा तवाप्यहमर्पयामि यद्वा तं सबलवाहनमम्भोनिधिमध्ये क्षिप्त्वा तामानयामीत्यादि वहु जल्पितवान्, कृष्णोऽप्यभाषत—नायं यशस्करः पन्थाः, ततः पाण्डवानां ममापि च षण्णां रथानामम्भोधिमध्येन मार्गमव्याहतं कुरु येन स्वयमेव तत्र गत्वा तं च युधि विनिर्जित्य द्रुपदतनयामानयाम इति, सुस्थितेन च तथैव कृते श्रीपतिः पञ्चभिः पाण्डवैः सह द्विलक्षयोजनप्रमाणमपि जलधिं स्थलमिवोल्लङ्घ्यापरकङ्कापुरीपरिसरोद्याने च स्थित्वा प्रथमं दारुकाख्यदूतप्रेषणेन द्रौपदीमयाचत, पद्मोऽपि स तत्रैव वासुदेवः इह त्वात्मषष्ठोऽप्यसौ मम न किञ्चित् ततो गत्वा युद्धाय स्वस्वामिनं सज्जयेति सगर्वमभिधाय युयुत्सुः ससैन्यः सन्नह्य

तदेवोद्यानमागमत्, विष्णुरपि दारुकवचनश्रवणाद् द्विगुणीभूतरोपस्तं ससैन्यमापतन्तमालोक्य शङ्खमापूर्य तद्ध्वनिना सेनात्रिभागमनाशयत्, ततः शार्ङ्गास्फालनजनितध्वनिनाऽपि सैन्यत्रिभागे नाशिते पद्मनाभनृपोऽवतिष्ठमानतृतीयांशबलो रणाङ्गणान्नंष्ट्वा निजपुरीमध्ये प्रविश्य गोपुराणि पिहितवान्, कृष्णोऽपि सक्रोधं रथादवतीर्य नृसिंहरूपधारी नितान्तं गर्जन्निजपाददर्दरैः पुरमपातयत्, ततः पद्मनाभो भयव्याकुलितः क्षम्यतां २ देवि! रक्ष २ मामस्मात्क्रुद्धात्कृष्णादिति वदन् द्रौपदीं शरणमगमत्, तयाऽपि मां पुरस्कृत्य विधाय च स्त्रीवेषं शार्ङ्गिणमेव शरणं व्रजेत्युक्तः स तथा कृतवान्, कृष्णोऽपि द्रौपदीं पाण्डवानामर्पयित्वा तेनैव पथा रथारूढः प्रतिनिवृत्तः, तदानीं च तत्र चम्पायां पुर्यामुद्याने समवसृतं मुनिसुव्रतजिनं कपिलनामा वासुदेवस्तत्समीपमासीनः स्वामिन्! कस्यायं ममेव शङ्खस्वनः श्रूयते?, इति पप्रच्छ, भगवानपि समग्रं द्रौपदीवृत्तान्तमाख्यत्, ततः कपिलो जम्बूद्वीपभरतार्धाधिपतेरभ्यागतस्य स्वागतिको भवामीति भगवन्तमपृच्छत्, ततो भगवता यथैकत्र द्वितीयोऽर्हन्न चक्रभृन्न तथा विष्णुरपि न भवति, तथा कारणादागतोऽपि नान्येन मिलतीत्युक्तोऽपि कपिलः कौतुकात् कृष्णदिदृक्षया जलधितटे जगाम, दृष्टवांश्चाम्भोधिमध्येन व्रजतो विष्णो रथध्वजान्, ततः कपिलनामा वासुदेवस्त्वां द्रष्टुमुत्कण्ठितोऽहमिहागतस्तद्वलस्वेति स्पष्टाक्षरं शङ्खमवादयत्, कृष्णोऽपि वयमतिदूरं गतास्ततस्त्वया न किञ्चिद्वाच्यमिति व्यक्ताक्षरं शङ्खध्वनिना तं प्रतिबोध्य क्रमेण स्वस्थानं प्राप्त इति ५। तथा कौशाम्ब्यां नगर्यां समवसृतस्य भगवतः श्रीवर्धमानविभोर्वन्दनार्थं पश्चिमपौरुष्यामवतरणं—आकाशात्समवसरणभुवि समागमनं युगपच्चन्द्रसूर्ययोः शाश्वतविमानस्थितयोर्बभूव इदमप्याश्चर्यमेव, अन्यदा हि उत्तरवैक्रियविमानेनैवावतरत इति ६। तथा हरेः—पुरुषविशेषस्य वंशः—पुत्रपौत्रादिपरम्परा हरिवंशः तल्लक्षणं यत्कुलं तस्योत्पत्तिर्हरिवंशकुलोत्पत्तिः, कुलं ह्यनेकधा ततो हरिवंशेन विशेष्यते, एतदपि च पूर्वमभूतत्वादाश्चर्यमेवेति, श्रूयते हि इहैव जम्बूद्वीपभरतक्षेत्रे

कौशाम्ब्यां नगर्यां सुमुखो नाम भूपतिरभूत्, एकदा च विचित्रविलासवसतौ वसन्तसमये समागते मतङ्गजारूढः स राजा रन्तुकामः पुरपरिसरोद्यानं गच्छन् मार्गे वीरकाह्वयस्य कुविन्दस्य दयितां वनमालाभिधानामसमानलावण्यपुण्यदेहावयवामवलोकितवान्, साऽपि प्रणयस्पृशा दृशा वारं वारं साकाङ्क्षमुदैक्षत, राजा च तां निर्निमेषचक्षुषा सस्पृहं पश्यन् स्मरविधुरस्तत्रैव गजं भ्रमयन् कमपि प्रतीक्षमाण इव नाग्रतो जगाम, अथ सुमतिनामा सचिवस्तद्भावं जिज्ञासुः स्वामिन्! सर्वमपि सैन्यमिह प्राप्तं ततः किमद्यापि विलम्ब्यते? इति राजानं व्यजिज्ञपत्, राजापि सचिववचसा चेतः कथमपि संस्थाप्य लीलोद्यानमगमत्, तत्र च शून्यहृदयो हृद्येऽप्युद्याने न क्वापि रतिं प्राप, अथ तमुद्विग्नमानसममात्यः सुमतिरवादीत्—देव! किमद्य शून्यहृदय इव त्वं लक्ष्यसे?, यद्यगोप्योऽयं मनोविकारस्तत्कथ्यतामिति, राजापि त्वमेव मम मनोविकारप्रतीकारप्रवणः ततस्तव गोप्यं न किञ्चिदस्तीत्यभिधाय स्वस्वरूपं न्यरूपयत्, अथ देव! त्वत्समीहितं शीघ्रमेव सम्पादयिष्यामि व्रजतु स्वामी स्वस्थः स्वावासमित्यमात्येनोक्तः क्षितिपतिः स्वावासमयासीत्, ततो मन्त्री विचित्रोपायपण्डितामात्रेयिकां नाम परिव्राजिकां वनमालायाः पार्श्वे प्राहिणोत्, साऽपि तत्र गत्वा तद्विरहविह्वलां वनमालामवोचत्—वत्से! किमद्य विच्छाया वीक्ष्यसे?, निवेदय स्वदुःखमिति, साऽपि निःश्वस्य दुष्प्रापप्रार्थकतामात्मीयामकथयत्, आत्रेयिकापि मदीयमन्त्रतन्त्राणां न किञ्चिदसाध्यमस्ति ततः प्रातः पृथ्वीपतिना सह सङ्गमं तव करिष्यामीति तामाश्वास्य गत्वा च सचिवसविधं तत् नृपप्रयोजनं निष्पन्नप्रायं न्यवेदयत्, सचिवोऽपि तद्वृत्तान्तनिवेदनेन नृपराजमरञ्जयत्, ततः प्रभाते परिव्राजिका वनमालामादाय नृपमन्दिरमगमत्, राजाऽप्यनुरागवशात्तामन्तःपुरे निक्षिप्य तया सममसमं संसारसुखमन्वभूत्, इतश्च वीरककुविन्दोऽपि वनमालामनवलोकमानो हा प्रिये वनमाले! क्व गताऽसीत्याद्यनेकप्रकारं प्रलपन्नुन्मत्त इव च त्रिकचत्वरादिषु परिभ्रमन्नेकदा नृपतिनिकेतनान्तिकमभ्यगात्, भूपालो-

ऽपि वनमालासहितस्तथाविकृताकारं शून्यमानसं हा वनमाले इत्यादिप्रलापिनं तमवेक्ष्य व्यचिन्तयत्—अहोऽस्माभिरुभयलोकविरुद्धमति-निर्घृणं कर्म समाचरितं सर्वथाऽप्यस्माकं नरकेऽप्यवस्थानं नास्तीत्यादि बह्वात्मानं निन्दतोस्तयोः सहसैवाकाशात्तडित्पतित्वा प्राणान् जहार, मृत्वा च तौ परस्परस्नेहवशात् शुभध्यानाच्च हरिवर्षाख्ये तृतीये क्षेत्रे मिथुनरूपिणौ हरिहरिणीनामकावुत्पन्नौ, तत्र च कल्पपादप-सम्पादितसमीहितौ सततमवियुक्तौ परस्परस्नेहवशात् सुचिरं विलसन्तौ तस्थतुः, वीरकुविन्दोऽपि तयोर्मृत्युमवगत्य त्यक्तमहिलभावो दुस्तपमज्ञानतपः किमपि कृत्वा मृत्वा च सौधर्मकल्पे किल्बिषिकसुरः समुत्पेदे, अवधिना च निजं पूर्वभवं हरिहरिणीनामकौ च पूर्वभववैरिणौ विलोक्य तत्कालोत्पन्नरोपारुणेक्षणः क्षणमचिन्तयत्—इह हरिवर्षक्षेत्रे क्षेत्रानुभावादेव ताववध्यौ मृतौ चावश्यमेव देवलोकं व्रजिष्यतस्ततो दुर्गतिनिबन्धने अकालेऽपि मरणप्रदे नयाम्यन्यत्र स्थानान्तरे इति विनिश्चित्य तावुभावपि कल्पतरुभिः सह ततः क्षेत्रादपहृत्य भरतक्षेत्रे चम्पापुर्यामानैषीत्, तस्यां च पुरि तदानीमिक्ष्वाकुवंशजश्चन्द्रकीर्तिनामा नृपोऽपुत्रः पञ्चत्वमगमत्, ततस्तस्य प्रकृतयो राज्यार्हमपरं पुरुषमन्वेष्टुं सर्वतोऽपि प्रवर्तमानास्तेन देवेनाकाशस्थितेन स्वसमृद्धिवशतः सर्वस्यापि जनस्य विस्मयमुपजनयता सादरमभिहिताः—भो भो राज्यचिन्तकाः! भवत्पुण्यप्रेरितेनेव मया हरिवर्षात् हरिण्याख्यनिजपत्न्या समन्वितो हरिनामा राज्यार्हः पुमान् युग्मरूपोऽनयोरेवाहार-योग्यैः कल्पद्रुमैः सममिहानीतः तदयमस्तु भवतां राजा, एतयोश्च कल्पपादपफलमिश्रं पशुपक्षिमांसं मद्यं चाहारो देय इति, प्रकृतयो-ऽप्येवमस्त्विति भणित्वा हरिं राज्ये स्थापयामासुः, सोऽपि सुरः स्वशक्त्या तयोरायुःस्थितिं ह्रस्वां तनुं च धनुःशतमानां कृत्वा तिरोदधे, हरिरपि पयोधिपर्यन्तां वसुधां साधयित्वा सुचिरं राज्यमकरोत्, ततः प्रभृति च पृथिव्यां तन्नाम्ना हरिवंशो बभूवेति ७। तथा चमरस्य —असुरकुमारेन्द्रस्योत्पातः—ऊर्द्ध्वगमनं सोऽप्याकस्मिकत्वादाश्चर्यमिति, श्रूयते हि इहैव भरतक्षेत्रे विभेले सन्निवेशे **पूरणो** नाम धनाढ्यो

गृहपतिरभूत्, स चान्यदा निशीथे चिन्तयामास—नूनं प्राग्भवाचीर्णविस्तीर्णतपःप्रभावतः प्राप्ता तावदियं लक्ष्मीः मान्यता च, ततः पुनरप्येष्यद्भवे विशिष्टफलप्राप्तये गृहवासं परित्यज्य किमपि दुस्तपं तपः करोमीत्येवं विचिन्त्य प्रातः सर्वानपि स्वजनानापृच्छ्य तनयं च निजपदे निवेश्य प्राणामनामकं तापसव्रतमग्रहीत्, तद्दिनादारभ्य च यावज्जीवं षष्ठं तपश्चकार, पारणकदिने च दारुमयं चतुष्पुटं भिक्षापात्रमादाय मध्याह्नक्षणे भिक्षां भ्राम्यति स्म, तत्र प्रथमपुटपतितां भिक्षां पान्थादिभ्यः द्वितीयपुटपतितां भिक्षां काकादिभ्यः तृतीयपुटभिक्षां च मत्स्यादिजलचारिभ्यो दत्त्वा रागद्वेषादिरहितश्चतुर्थपुटभिक्षां स्वयमभुङ्क्त, एवं द्वादश वर्षाणि बालतपः कृत्वा पर्यन्तसमये मासमेकमनशनमादाय मृत्वा च चमरचञ्चायां चमरेन्द्रो बभूव, उत्पन्नश्च तत्रावधिज्ञानेनेतस्ततः पश्यन्नूर्ध्वं सौधर्मावतंसके विमाने सौधर्मेन्द्रं दृष्ट्वा क्रुद्धः सुरानवोचत्—अरे कोऽयं दुरात्माऽप्रार्थितप्रार्थितो मम शिरः स्थित एवं विलसतीति ?, तेऽप्यूचुः—अयं हि पूर्वभवार्जितैः पुण्यैः सर्वातिशायिसमृद्धिपराक्रमः सौधर्माधिपः शक्र इति, एतच्च श्रुत्वाऽधिकतरं क्रुद्धः स्वपरिवारनिवारितोऽपि युयुत्सुः शिक्षयाम्येनमवज्ञाकारिणमिति वदन् परिघमादाय स हि शक्तः श्रूयते ततः कथमपि तत्पराजितोऽहं कं शरणं प्रपत्स्ये ? इति विचिन्त्य स सुसुमारपुरे प्रतिमास्थितस्य श्रीमहावीरस्य समीपमागमत्, तत्र च प्रणामपूर्वकं भगवंस्तव प्रभावेण वज्रिणं जेष्यामीति विभुं विज्ञप्य लक्षयोजनमानमतिविकृतं निजवपुर्विधाय परिघप्रहरणं परितो भ्रमयन् गर्जन्नास्फोटयन् त्रिदशान् त्रासयन् दर्पान्धः सौधर्मेन्द्रं प्रति समुदपतत्, तत एकं पादं सौधर्मावतंसकविमानवेदिकायामपरं च सुधर्मायां निधाय परिघेनेन्द्रकीलं त्रिस्ताडयित्वाऽनेकशः शक्रमाक्रोशयामास, शक्रोऽप्यवधितस्तं विदित्वा कोपाज्ज्वाज्वल्यमानः स्फारस्फुरत्स्फुलिङ्गशतसमाकुलं कुलिशं तं प्रति मुमोच, चमरोऽपि पृष्ठतो दम्भोलिमायान्तमवलोकयितुमप्यक्षमः श्रीमहावीरं शरणं प्रपित्सुर्वपुर्विस्तरमुपसंहृत्य त्वरिततरं पलायिष्ट, समासन्नीभूतकुलिशश्च शरणं शरणमिति ब्रुवाणः

सूक्ष्मीभूय स्वामिपादयोरन्तरे प्राविशत्, शक्रोऽप्यर्हदादिनिश्रामन्तरेण नासुराणामिहागन्तुं स्वतः शक्तिः सम्भवतीति विचिन्त्यावधिज्ञानावगततद्व्यतिकरस्तीर्थकराशातनाभयात्त्वरितमागत्य स्वामिपादयोश्चतुरङ्गुलमप्राप्तं वज्रमुपसंजहार, स्वामिनं च क्षमयित्वा चमरमवोचत्—मुक्तोऽस्यहो भगवतः प्रसादान्नास्ति ते भयमिति, एवं चमरमाश्वास्य भूयोऽपि भगवन्तं नत्वा शक्रः स्वस्थानमगमत्, चमरोऽप्यमरेन्द्रे गते प्रभुपादद्वयान्तरान्निर्गत्य प्रणम्य च प्रभुं प्रास्तावीत्, यथा—'श्रीमद्वीरजिनेन्द्र! भद्रमतुलं तुभ्यं भवत्वन्वहं, यस्यानन्यसमानदिव्यमहिमन्यामिश्रया निश्रया। किञ्चित्कर्म मनीषितं तनुमतां व्यातन्वतां सम्मुखीभूताप्याशु विपत्तिरेति निधनं सम्पत्तिरुज्जृम्भते ॥ १ ॥' एवं च स्तुत्वा स चमरचञ्चापुरीमयासीत् ८। तथाऽष्टभिरधिकं शतमष्टशतं ते सिद्धाः—निर्वृता अष्टशतसिद्धाः एकसमयेनेति शेषः, तथा चास्मिन् भरतक्षेत्रे अस्यामवसर्पिण्यां भगवतः श्रीनाभेयस्य निर्वाणसमये श्रूयते अष्टोत्तरं शतमेकसमयेन सिद्धं, तथा चोक्तं सङ्घदासगणिना वसुदेवचरिते—"भयवं उसभसामी जयगुरू पुव्वसयसहस्सं वाससहस्सूणयं विहरिऊण केवली अट्ठावयपव्वए सह दसहिं समणसहस्सेहिं परिनिव्वाणमुवगओ चउद्दसमेणं भत्तेणं माघबहुले पक्खे तेरसीए अभीइणा नक्खत्तेणं एगूणपुत्तसएणं अट्ठहि य नत्तुएहिं सह एकसमएणं निव्वुओ, सेसाणवि अणगाराणं दस सहस्साणि अट्ठसयऊणगाणि सिद्धाणि तंमि चेव रिक्खे समयंतरेसु बहुसु" इति, इदमप्यनन्तकालजातमित्याश्चर्यं, एतदाश्चर्यमुत्कृष्टावगाहनायामेव ज्ञातव्यं, मध्यमावगाहनायां तु अनेकशोऽपि अष्टोत्तरशतं सिध्यतीति नाश्चर्यम् ९। तथा असंयता—असंयमवन्तः आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणस्तेषु पूजासत्कारः, सर्वदा हि किल संयता एव पूजार्हाः, अस्यां त्ववसर्पिण्यां विपरीतं जातमित्याश्चर्यं, तथा च श्रूयते श्रीसुविधिस्वामिनिर्वाणात्कियत्यपि काले गते हुंडावसर्पिणीदोषात्साधूनामुच्छेदः समपद्यत, ततः स्थविरश्रावकान् धर्ममार्गानभिज्ञा जना धर्मं पप्रच्छुः, अथात्मपरिज्ञानानुसारतः किञ्चिद्धर्मं कथयतां तेषां स्थवि-

रश्रावकाणां ते जनाः श्रावकजनयोग्यां धनवसनादिकां पूजां प्रचक्रिरे, तेऽपि तत्पूजया समुत्पन्नगर्वास्तत्कालं स्वबुद्ध्या शास्त्राणि समासूत्र्य महीमन्दिरशय्यास्वर्णरूप्यलोहतिलकर्पासगोकन्यागजाश्वादेर्दानानि इहामुत्र च महाफलान्याचख्युः, महागृद्ध्या च वयमेव दानायोचितं पात्रं अपरं सर्वमपात्रमित्याद्युपदेशतः सर्वतो जनं विप्रतारयन्तोऽपि तदानीं तथाविधगुर्वभावाल्लोकानां गुरुतां गताः, एवमस्मिन् क्षेत्रे समन्ततस्तीर्थसमुच्छेदे सञ्जाते श्रीशीतलस्वामितीर्थे यावदसंयतानामपि तेषां धिग्वर्णानां प्रथीयसी पूजा समजायतेति १० । एतानि च दशाप्याश्चर्याण्यनन्तेन कालेन—अनन्तकालादस्यामवसर्पिण्यां संवृत्तानीति । उपलक्षणं चैतान्याश्चर्याणि, अतोऽन्येऽप्येवमादयो भावा अनन्तकालभाविन आश्चर्यरूपा द्रष्टव्याः, यदुक्तं पञ्चवस्तुके—'उवलक्खणं तु एयाइं'ति ॥ ८८५ ॥ ८८६ ॥ अथ कस्य तीर्थकृतः काले कियन्त्याश्चर्याणि जातानीत्येतदाह—'सिरी'त्यादि, श्रीऋषभनाथशीतलस्वामिनोस्तीर्थे एकैकमाश्चर्यमभूत्, तत्र श्रीऋषभनाथतीर्थे एकसमयेनाष्टोत्तरशतसिद्धिः, शीतलस्वामितीर्थे च हरिवंशोत्पत्तिः, तथा मल्लिजिननेमिनाथयोरप्येकैकं, तत्र स्त्रीतीर्थं मल्लिजिनेनैव प्रवर्तितं, नेमिनाथतीर्थे च कृष्णस्यापरकंकागमनं संवृत्तं, तथा वीरजिनेन्द्रे गर्भहरणोपसर्गचमरोत्पाताभव्यपर्षच्चन्द्रसूर्यावतरणलक्षणानि पञ्चैवाश्चर्याणि क्रमेण जातानि, तथा एकमसंयतपूजालक्षणमाश्चर्यं प्रायेण—बाहुल्येन सर्वेष्वपि तीर्थकरेषु सम्पन्नमिति ॥ ८८७ ॥ एतदेव स्पष्टतरं प्रतिपादयन्नाह—'रिसहे'गाहा 'इत्थी'गाहा, व्याख्यातार्थं चैतत्, नवरं 'पूया अस्संजयाण नवमजिणे' इति यदुक्तं तत्सर्वथा तीर्थोच्छेदजनितासंयतपूजाप्रारम्भमाश्रित्य द्रष्टव्यं, सुविधिस्वामिप्रभृतीनां शान्तिनाथपर्यन्तानामष्टानां तीर्थकृतामन्तरेषु सप्तसु तीर्थोच्छेदजाताया असंयतपूजायाः सद्भावात्, यत्पुनः श्रीऋषभनाथादिकाले मरीचिकपिलादीनामसंयतानां पूजा श्रूयते तत्तीर्थे प्रवर्तमान

एवेति, अत एव प्रागुक्तं 'एगं सव्वेसु पाएणे'ति १३८ ॥ ८८८ ॥ ८८९ ॥ इदानीं 'चउरो भासाउ'त्ति एकोनचत्वारिंशदुत्तरशततमं द्वारमाह—

**पढमा भासा सच्चा १ बीया उ मुसा विवज्जिया तासिं । सच्चामुसा ३ असच्चामुसा ४ पुणो तह चउत्थीत्ति ॥ ८९० ॥ जणवय १ संमय २ ठवणा ३ नामे ४ रूवे ५ पडुच्चसच्चे य ६ । ववहार ७ भाव ८ जोगे ९ दसमे ओवम्मसच्चे य १० ॥ ८९१ ॥ कोहे १ माणे २ माया ३ लोभे ४ पेज्जे ५ तहेव दोसे ६ य । हास ७ भए ८ अक्खाइय ९ उवघाए १० निस्सिया दसहा ॥ ८९२ ॥ उप्पन्न १ विगय २ मीसग ३ जीव ४ अजीवे ५ य जीवअज्जीवे ६ । तह मीसगा अणंता ७ परित्त ८ अद्धा ९ य अद्धद्धा १० ॥ ८९३ ॥ आमंतणि १ आणमणी २ जायणि ३ तह पुच्छणी य ४ पन्नवणी ५ । पच्चक्खाणी भासा ६ भासा इच्छाणुलोमा य ७ ॥ ८९४ ॥ अणभिग्गहिया ८ भासा भासा य अभिग्गहंमि ९ योद्धव्वा । संसयकरणी १० भासा वोयड ११ अव्वोयडा १२ चेव ॥८९५॥**

भाष्यते इति भाषा, सा चतुर्विधा, तत्र प्रथमा भाषा सत्या, सन्तो—मूलोत्तरगुणास्तेषामेव जगति मुक्तिपदप्रदायकतया परमशोभनत्वात् अथवा सन्तो—विद्यमानास्ते च भगवदुपदिष्टा एव जीवादयः पदार्था अन्येषां कल्पनामात्ररचितसत्ताकतया तत्त्वतोऽसत्त्वात् तेभ्यो हिता सत्या, सत्याविपरीतस्वरूपा मृषा द्वितीया, उभयस्वभावा सत्यामृषा तासां चतसृणां भाषाणां मध्ये तृतीया, या पुनस्तिसृष्वपि भाषास्वनधिकृता—तल्लक्षणायोगतस्तत्रानन्तर्भाविनी सा आमन्त्रणाज्ञापनादिविषया असत्या मृषा तासां भाषाणां मध्ये चतुर्थीति ॥ ८९० ॥

साम्प्रतमेतासामेव भाषाणां भेदानभिधित्सुः प्रथमं सत्यभाषाया भेदानाह—'जणवये'त्यादि, सत्या भाषा तावद्दशप्रकारा भवति जनपदसत्यादिभेदात्, तत्र जनपदेषु—देशेषु या यदर्थवाचकतया रूढा देशान्तरेऽपि सा तदर्थवाचकतया प्रयुज्यमाना सत्या—अवितथेति जनपदसत्या, यथा कोङ्कणादिषु पयः पिच्चं नीरमुदकमित्यादि, सत्यता चास्या अदुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद्व्यवहारप्रवृत्तेः, एवं शेषेष्वपि भावना कार्या १, तथा सकललोकसाम्मत्येन सत्यतया प्रसिद्धा सम्मतसत्या, यथा कुमुदकुवलयोत्पलतामरसानां समानेऽपि पङ्कसम्भवे गोपालादीनां सम्मतमरविन्दमेव पङ्कजं न शेषमित्यरविन्दे संमततया पङ्कजशब्दः सत्यः, कुवलयादावसत्योऽसम्मतत्वादिति २, तथा स्थापनासत्या या तथाविधमङ्कविन्यासं मुद्राविन्यासं चोपलभ्य प्रयुज्यते यथा एककं पुरतो बिन्दुद्वयसहितमुपलभ्य शतमिदमिति बिन्दुत्रयसहितं सहस्रमिदमिति, तथा तथाविधं मुद्राविन्यासमुपलभ्य मृत्तिकादिषु मासोऽयं कार्षापणोऽयमिति, यद्वा यल्लेप्यादिकर्म अर्हदादिविकल्पेन स्थाप्यते सा स्थापना तद्विषये सत्या स्थापनासत्या, यथाऽजिनोऽपि जिनोऽयं अनाचार्योऽप्याचार्योऽयमिति ३, तथा नामतः—अभिधानमात्रेण सत्या नामसत्या, यथा कुलमवर्धयन्नपि कुलवर्धनः धनमवर्धयन्नपि धनवर्धनः अयक्षश्च यक्ष इति ४, तथा रूपतो—रूपापेक्षया सत्या रूपसत्या, यथा दम्भतो गृहीतप्रव्रजितरूपः प्रव्रजितोऽयमिति ५, तथा प्रतीत्य—आश्रित्य वस्त्वन्तरं सत्या प्रतीत्यसत्या, यथा अनामिकायाः कनिष्ठामधिकृत्य दीर्घत्वं मध्यमामधिकृत्य ह्रस्वत्वं, न च वाच्यं कथमेकस्या ह्रस्वत्वं दीर्घत्वं च तात्त्विकं परस्परविरोधादिति, भिन्ननिमित्तत्वे परस्परविरोधासम्भवात्, तथाहि—तामेव यदि कनिष्ठां मध्यमां वा एकामङ्गुलिमङ्गीकृत्य ह्रस्वत्वं दीर्घत्वं च प्रतिपाद्येत ततो विरोधः सम्भवेत्, एकनिमित्तत्वे परस्परविरुद्धकार्यद्वयासम्भवात्, यदा त्वेकामधिकृत्य ह्रस्वत्वं अपरामधिकृत्य दीर्घत्वं तदा सत्त्वासत्त्वयोरिव भिन्ननिमित्तत्वान्न परस्परं विरोधः, अथ यदि तात्त्विके ह्रस्वत्वदीर्घत्वे तत

ऋजुत्ववक्रत्वे इव कस्मात्ते परनिरपेक्षे न प्रतिभासेते ?, तस्मात्परोपाधिकत्वात्काल्पनिके इमे इति, तदयुक्तं, द्विविधा हि वस्तुनो धर्माः— सहकारिव्यङ्ग्यरूपा इतरे च, तत्र ये सहकारिव्यङ्ग्यरूपास्ते सहकारिसम्पर्कवशात्प्रतीतिपथमायान्ति यथा पृथिव्या जलसम्पर्कतो गन्धः, इतरे त्वेवमेवापि यथा कर्पूरादिगन्धः, ह्रस्वत्वदीर्घत्वे अपि सहकारिव्यङ्ग्यरूपे, ततस्ते तं तं सहकारिणमासाद्याभिव्यक्तिमायात इत्यदोषः ६, तथा व्यवहारतो—लोकविवक्षातः सत्या व्यवहारसत्या, यथा गिरिर्दह्यते गलति भाजनं अनुदरा कन्या अलोमिका एडका, लोको हि गिरिगततृणादिदाहे तृणादिना सह गिरेरभेदं विवक्षित्वा गिरिर्दह्यते इति ब्रूते, भाजनादुदके स्रवति उदकभाजनयोरभेदं विवक्षित्वा गलति भाजनमिति, सम्भोगजबीजप्रभवोदराभावेऽनुदरेति लवनयोग्यलोमाभावेऽलोमिकेति, ततो लोकव्यवहारमपेक्ष्य साधोरपि तथा ब्रुवतो व्यवहारसत्या भाषा भवति ७, तथा भावतो वर्णादिस्वरूपा सत्या भावसत्या, किमुक्तं भवति ?—यो भावो वर्णादिर्यस्मिन्नुत्कटो भवति तेन या सत्या भाषा सा भावसत्या, यथा सत्यपि पञ्चवर्णसम्भवे शुक्लस्यैव वर्णस्योत्कटत्वाद्बलाका शुक्लेति ८, तथा योगः—सम्बन्धस्तस्मात्सत्या योगसत्या, यथा छत्रयोगाद्विवक्षितशब्दप्रयोगकाले छत्राभावेऽपि छत्रयोगस्य सम्भवात् छत्री, एवं दण्डयोगाद्दण्डी ९, तथा उपमैव औपम्यं तेन सत्या औपम्यसत्या, यथा समुद्रवत्तडागमिति १०॥८९१॥ अथ द्वितीयभाषाया मृषालक्षणाया भेदानाह—'कोहे' इत्यादि, क्रोधनिःसृतादिभेदान्मृषाभाषा दशविधा भवति, सप्तम्याः पञ्चम्यर्थत्वान्निःसृतशब्दस्य च प्रत्येकमभिसम्बन्धात्क्रोधान्निःसृता क्रोधाद्विनिर्गतेत्यर्थः, एवमन्यत्रापि, तत्र क्रोधाभिभूतो विसंवादनबुद्ध्या परं प्रत्याययन् यत्सत्यमसत्यं वा भाषते तत्सर्वं मृषा, तस्य हि आशयोऽतीव दुष्टः, ततो यदपि घुणाक्षरन्यायेन सत्यमापतति शाठ्यबुद्ध्या वोपेत्य सत्यं भाषते तदप्याशयदोषदुष्टमिति मृषा, यथा वा क्रोधाभिभूतः पिता पुत्रमाह—न त्वं मम पुत्र इति, अदासं वा दासमभिधत्ते इति १ तथा मानान्निःसृता यत्पूर्वमननुभूतमप्यैश्वर्यमात्मो-

त्कर्षख्यापनायानुभूतमस्मामिस्तदानीमेवमैश्वर्यमित्यादि वदति २ तथा मायाया निःसृता यत्परवञ्चनाभिप्रायेण सत्यमसत्यं वा भाषते ३ तथा लोभान्निःसृता वणिक्प्रभृतीनामन्यथा क्रीतमेवेत्थं क्रीतमित्यादि ४ तथा प्रेम्णो निःसृता, यदतिप्रेमवशाद्दासोऽहं तवेत्यादि वदति ५ तथा द्वेषान्निःसृता मत्सरिणां गुणवत्यपि निर्गुणोऽयमित्यादि ६ तथा हास्यान्निःसृता यथा कान्दर्पिकाणां कस्मिंश्चित्कस्यचित् सम्बन्धिनि गृहीतेऽपि पृष्टानां केलिवशतो न दृष्टमित्यादि ७ तथा भयान्निःसृता तस्करादिभयेनासमञ्जसभाषणं ८ तथा आख्यायिकानिःसृता, यथा कथास्वसंभव्यभिधानं ९ तथा उपघातान्निस्सृता चौरस्त्वमित्याद्यसदभ्याख्यानमिति १० ॥८९२॥ अथ तृतीयभाषायाः सत्यामृषाया भेदानाह—'उप्पन्ने'त्यादि, उत्पन्नमिश्रितादिभेदात्सत्यामृषा भाषा दशधा भवति, इह च मध्यस्थितस्य 'मीसय'त्ति पदस्य सर्वत्रापि सम्बधादुत्पन्नमिश्रिता विगतमिश्रितेत्यादि द्रष्टव्यं, ततश्च उत्पन्नमिश्रिता अनुत्पन्नैः सह सङ्ख्यापूरणार्थं या सा उत्पन्नमिश्रिता, एवमन्यत्रापि यथायोगं भावनीयं, तत्रोत्पन्नमिश्रिता यथा कस्मिंश्चिद् ग्रामे नगरे वा न्यूनेष्वधिकेषु वा दारकेषु जातेषु दश दारका अस्मिन्नद्य जाता इत्यादि, व्यवहारतः सत्यामृषात्वाद् अस्याः, श्वस्ते शतं दास्यामीत्युक्त्वा पञ्चाशत्यपि दत्तायां लोके मृषात्वादर्शनादनुत्पन्नेष्वेवादत्तेष्वेव च मृषात्वव्यवहारात् १ तथा एवमेव मरणकथने विगतमिश्रिता, यथा अस्मिन्नद्य दश वृद्धा विगता इत्यादि २ तथा जन्मनो मरणस्य च कृतपरिमाणस्याभिधाने विसंवादने च मिश्रकमिश्रिता उत्पन्नविगतमिश्रितेत्यर्थः, यथाऽस्मिन्नद्य दश दारका जाता दश च वृद्धा विपन्ना इति ३ तथा प्रभूतानां जीवतां स्तोकानां च मृतानां शङ्खशङ्खनकादीनामेकत्र राशौ दृष्टे यदा कश्चिदेवं वदति—अहो महान् जीवराशिरयमिति तदा सा जीवमिश्रिता, सत्यामृषात्वं चास्या जीवत्सु सत्यत्वान्मृतेषु मृषात्वात् ४ तथा यदा प्रभूतेषु मृतेषु स्तोकेषु जीवत्सु एकत्र राशीकृतेषु शङ्खादिष्वेवं वदति—अहो महानयं मृतो जीवराशिरिति तदा सा अजीवमिश्रिता, अस्या अपि सत्यामृ-

पात्वं मृतेषु सत्यत्वात् जीवत्सु च मृषात्वात् ५ तथा तस्मिन्नेव राशौ एतावन्तोऽत्र जीवन्ति एतावन्तोऽत्र मृता इति नियमेनावधारयतो विसंवादे जीवाजीवमिश्रिता ६ तथा मूलकादिकमनन्तकायं तस्यैव सत्कैः परिपाण्डुपत्रैरन्येन वा केनचित्प्रत्येकवनस्पतिना मिश्रमवलोक्य सर्वोऽप्येषोऽनन्तकायिक इति वदतोऽनन्तमिश्रिता ७ तथा प्रत्येकवनस्पतिसङ्घातमनन्तकायिकेन सह राशीकृतमवलोक्य प्रत्येकवनस्पतिरयं सर्वोऽपीति वदतः प्रत्येकमिश्रिता ८ तथा अद्धा—कालः, स चेह प्रस्तावाद्दिवसो रात्रिर्वा परिगृह्यते, स मिश्रितो यया सा अद्धामिश्रिता, यथा कश्चित्कञ्चन त्वरयन् दिवसे वर्तमान एव वदति— उत्तिष्ठ २ रात्रिर्जातेति, रात्रौ वा वर्तमानायामुत्तिष्ठ २ दिवसो जात इति ९ तथा दिवसस्य रात्रेर्वा एकदेशोऽद्धाद्धा, सा मिश्रिता यया सा अद्धाद्धामिश्रिता, यथा प्रथमपौरुष्यामेव वर्तमानायां कश्चित् कञ्चन त्वरयन्नेवं वदति—चल चल मध्याह्नो जात इति १० ॥ ८९३ ॥ अथ चतुर्थभाषाया असत्यामृषाया भेदानाह—'आमंत्रणी'त्यादि, आमन्त्रण्यादिभेदादसत्यामृषा भाषा द्वादशभेदा भवति, तत्र आमन्त्रणी हे देवदत्त ! इत्यादि, एषा हि प्रागुक्तसत्यादिभाषात्रयलक्षणविकलत्वान्न सत्या न मृषा नापि सत्यामृषा, केवलं व्यवहारमात्रप्रवृत्तिहेतुरित्यसत्यामृषा १ एवं सर्वत्रापि भावना कार्या, आज्ञापनी—कार्ये परस्य प्रवर्तनं, यथेदं कुर्विति २ याचनी कस्यापि वस्तुविशेषस्य देहीति मार्गणं ३ प्रच्छनी अविज्ञातस्य सन्दिग्धस्य वा कस्यचिदर्थस्य परिज्ञानाय तद्विदः पार्श्वे कथमेतदिति प्रच्छनं ४ प्रज्ञापनी विनेयजनस्योपदेशदानं, यथा प्राणिवधान्निवृत्ता भवन्ति भवान्तरे प्राणिनो दीर्घायुष इत्यादि ५ प्रत्याख्यानी—याचमानस्य प्रतिषेधवचनं ६ इच्छानुलोमा नाम यथा कश्चित् किञ्चन कार्यमारभमाणः कञ्चन पृच्छति, स प्राह—करोतु भवान् ममाप्येतदभिप्रेतमिति ७ अनभिगृहीता—यत्र न प्रतिनियतार्थावधारणं, यथा बहुषु कार्येषूपस्थितेषु कश्चित् कञ्चन पृच्छति—किमिदानीं करोमि ?, स प्राह—यत्प्रतिभासते तत्कुर्विति ८ अभिगृहीता—प्रतिनियतार्थावधारणं,

यथा इदमिदानीं कर्तव्यमिदं नेति, यद्वा अनभिगृहीता याऽर्थमनभिगृह्योच्यते डित्थादिवत्, अभिगृहीता त्वर्थमभिगृह्य योच्यते घटादिवत् ९ संशयकरणी या एकका वागनेकार्थाभिधायितया परस्परं संशयमुत्पादयति, यथा सैन्धवमानीयतामित्यत्र सैन्धवशब्दो लवणवस्त्रपुरुषवाजिषु १० व्याकृता या प्रकटार्था ११ अव्याकृता अतिगभीरशब्दार्था अव्यक्ताक्षरप्रयुक्ता वा, अविभावितार्थत्वादिति १२ १३९ ॥ ८९४ ॥ ८९५ ॥ इदानीं 'वयणसोलसगं'ति चत्वारिंशदुत्तरशततमं द्वारमाह—

**कालतियं ३ वयणतियं ६ लिंगतियं ९ तह परोक्ख १० पच्चक्खं ११ । उवणयऽवणयचउक्कं १५**
**अज्झत्थं चेव सोलसमं ॥ ८९६ ॥**

कालत्रिकं तथा वचनत्रिकं तथा लिङ्गत्रिकं परोक्षमत्र प्रथमैकवचनस्य लोपः तथा प्रत्यक्षं तथोपनयापनयचतुष्कं तथाऽध्यात्मं चैव षोडशमिति गाथावयवार्थः । तत्राकरोत्करोति करिष्यतीत्यतीतादिकालनिर्देशप्रधानं वचनजातं कालत्रिकवचनमित्यर्थः, तथा एको द्वौ बहव इत्येकत्वाद्यभिधायकः शब्दसन्दर्भो वचनत्रिकमिति, तथेयं स्त्री अयं पुरुषः इदं कुलमिति त्रीणि लिङ्गप्रधानानि वचनानीति लिङ्गत्रिकं तथा स इति परोक्षनिर्देशः परोक्षवचनं अयमिति प्रत्यक्षनिर्देशः प्रत्यक्षवचनं, तथोपनयापनयवचनं चतुर्धा भवति, तद्यथा—उपनयापनयवचनं तथा उपनयोपनयवचनं तथा अपनयोपनयवचनं तथा अपनयापनयवचनमिति, तत्रोपनयो—गुणोक्तिः अपनयो—दोषभणनं, तत्र सुरूपेयं रामा परं दुःशीला इत्युपनयापनयवचनं तथा सुरूपेयं स्त्री सुशीलेत्युपनयोपनयवचनं तथा कुरूपा स्त्रीयं परं सुशीलेत्यपनयोपनयवचनं कुरूपेयं कुशीला चेत्यपनयापनयवचनमिति, तथा अन्यच्चेतसि निधाय विप्रतारकबुद्ध्याऽन्यद्विभणिषुरपि सहसा यच्चेतसि तदेव वक्ति यत्तत् षोडशमध्यात्मवचनम् १४० ॥ ८९६ ॥ इदानीं 'मासाण पंचभेय'त्ति एकचत्वारिंशदुत्तरशततमं द्वारमाह—

मासा य पंच सुत्ते नक्खत्तो १ चंदिओ २ य रिउमासो ३। आइच्चोऽविय अवरो ४ ऽभिवड्ढिओ तह य पंचमओ ५ ॥ ८९७ ॥ अहरत्त सत्तवीसं तिसत्तसत्तट्ठिभाग नक्खत्तो २७ । $\frac{२१}{६७}$ । चंदो उणत्तीसं बिसट्ठिभाया य बत्तीसं २९ । $\frac{३२}{६२}$ ॥ ८९८ ॥ उउमासो तीसदिणो ३० आइच्चो तीस होइ अद्धं च ३० । $\frac{१}{२}$ । अभिवड्ढिओ य मासो चउवीससएण छेएणं ॥ ८९९ ॥ भागाणिगवीससयं तीसा एगाहिया दिणाणं तु ३१ । $\frac{१२१}{१२४}$ । एए जह निप्फत्तिं लहंति समयाउ तह नेयं ॥ ९०० ॥

मासा नक्षत्रादयः पञ्च 'सूत्रे' पारमेश्वरे प्रवचने प्रतिपादिता इति शेषः, तत्र नक्षत्रेषु भवो नाक्षत्रः, किमुक्तं भवति ?—चन्द्रश्चारं चरन् यावता कालेनाभिजित आरभ्योत्तरापाढानक्षत्रपर्यन्तं गच्छति तत्कालप्रमाणो नाक्षत्रो मासः, यदिवा चन्द्रस्य नक्षत्रमण्डले परिवर्तयतो निष्पन्न इत्युपचारान्मासोऽपि नक्षत्रं, तथा चन्द्रे भवश्चान्द्रः युगादौ श्रावणे मासे बहुलपक्षप्रतिपद आरभ्य यावत्पूर्णिमासीपरिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपौर्णमासीपरावर्तश्चान्द्रो मास इतियावत्, अथवा चन्द्रचारनिष्पन्नत्वादुपचारतो मासोऽपि चान्द्रः, चः समुच्चये, तथा ऋतुमासः, इह किल ऋतुर्लोकरूढ्या षष्ट्यहोरात्रप्रमाणो मासद्वयात्मकः तस्यार्धमपि मासोऽवयवे समुदायोपचारात् ऋतुः स चार्थात्परिपूर्णत्रिंशदहोरात्रप्रमाणः, एष एव च ऋतुमासः कर्ममास इति वा सावनमास इति वा व्यवह्रियते, उक्तञ्च—"एस चेव उउमासो कम्ममासो सावणो मासो भन्नइ" इति, तथा आदित्यस्यायमादित्यः, स च एकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य षष्ठभागमानः यदिवा आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः, तथा पञ्चमो मासोऽभिवर्धितः, अभिव-

र्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणः सवत्सर.,
गप्रमाणो मासोऽप्यवयवे समुदायोपचारादभिवर्धितः, तदेवमुक्ता नामतो नक्षत्रादयः पञ्चापि मासाः, ॥ ८९७ ॥ साम्प्रतमेतेषामेव
मासानां दिनपरिमाणमाह—'अहरत्ते'गाहा 'उउ'गाहा 'भागा'गाहा, नाक्षत्रो—नक्षत्रसम्बन्धी मासः सप्तविंशतिरहोरात्राः एकस्य
चाहोरात्रस्य सप्तषष्टिभागास्त्रिः सप्त—त्रयो वाराः सप्त, एकविंशतिरित्यर्थः, तथा चान्द्रः—चन्द्रमासः एकोनत्रिंशदहोरात्रा द्वाषष्टिभागाश्च
अहोरात्रस्य द्वात्रिंशत्, तथा ऋतुमासः परिपूर्णानि त्रिंशद्दिनानि, तथा आदित्यः—आदित्यमासो भवति त्रिंशदहोरात्रा अर्धं चाहोरात्रस्य,
तथा अभिवर्धितमासो दिनानामेकेनाधिका त्रिंशत्, एकत्रिंशदहोरात्रा इत्यर्थः, एकस्य चाहोरात्रस्य चतुर्विंशत्युत्तरशतरूपेण छेदेन—भा-
गेन विभक्तस्य एकविंशत्यधिकं शतं भागानां भवतीति, एते पञ्चापि मासा यथा निष्पत्तिं लभन्ते तथा 'समयात्' सिद्धान्ताद्
'ज्ञेयं' ज्ञातव्यमिति । स च निष्पत्तिप्रकारः सिद्धान्तानुसारेण विनेयजनानुग्रहाय किञ्चिद्दर्श्यते—इह किल चन्द्रचन्द्राभिवर्धितचन्द्राभि-
वर्धितलक्षणसंवत्सरपञ्चकप्रमाणे युगे अहोरात्रराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो १८३० भवति, कथमेतदवसीयते? इति चेदुच्यते—
इह सूर्यस्य दक्षिणमुत्तरं वा अयनं त्र्यशीतिअधिकदिनशतात्मकं युगे च पञ्च दक्षिणायनानि पञ्चोत्तरायणानीति सर्वसङ्ख्यया दशाय-
नानि ततस्त्र्यशीत्यधिकं दिनशतं दशकेन गुण्यते इत्यागच्छति यथोक्तो दिनराशिः, एवंप्रमाणं दिनराशिं स्थापयित्वा नक्षत्रचन्द्रऋत्वा-
दित्यमासानां दिनमानानयनाय यथाक्रमं सप्तषष्टिद्वाषष्ट्येकषष्टिषष्टिलक्षणैर्भागहारैर्भागं हरेत् ततो यथोक्तं नक्षत्रादिमासगतदिनपरिमाण-
मागच्छति, तथाहि—युगदिनराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो ध्रियते, तस्य सप्तषष्ट्या युगे नक्षत्रमासा इति सप्तषष्ट्या भागो ह्रियते लब्धाः
सप्तविंशतिरहोरात्राः एकविंशतिरहोरात्रस्य सप्तषष्टिभागाः एष नक्षत्रमासः, तथा तस्यैव युगदिनराशेस्त्रिंशदधिकाष्टादशशतमानस्य युगे

मासा य पंच सुत्ते नक्खत्तो १ चंदिओ २ य रिउमासो ३ । आइच्चोऽविय अवरो ४ ऽभिवड्ढिओ तह य पंचमओ ५ ॥ ८९७ ॥ अहरत्त सत्तवीसं तिसत्तसत्तट्ठिभाग नक्खत्तो २७ । $\frac{२१}{६७}$ । चंदो उणत्तीसं बिसट्ठिभाया य बत्तीसं २९ । $\frac{३२}{६२}$ ॥ ८९८ ॥ उउमासो तीसदिणो ३० आइच्चो तीस होइ अद्धं च ३० । $\frac{१}{२}$ । अभिवड्ढिओ य मासो चउवीससएण छेएणं ॥ ८९९ ॥ भागाणिगवीससयं तीसा एगाहिया दिणाणं तु ३१ । $\frac{१२१}{१२४}$ । एए जह निप्फत्तिं लहंति समयाउ तह नेयं ॥ ९०० ॥

मासा नक्षत्रादयः पञ्च 'सूत्रे' पारमेश्वरे प्रवचने प्रतिपादिता इति शेषः, तत्र नक्षत्रेषु भवो नाक्षत्रः, किमुक्तं भवति ?—चन्द्रश्चारं चरन् यावता कालेनाभिजित आरभ्योत्तराषाढानक्षत्रपर्यन्तं गच्छति तत्कालप्रमाणो नाक्षत्रो मासः, यदिवा चन्द्रस्य नक्षत्रमण्डले परिवर्तयतो निष्पन्न इत्युपचारान्मासोऽपि नक्षत्रं, तथा चन्द्रे भवश्चान्द्रः युगादौ श्रावणे मासे बहुलपक्षप्रतिपद आरभ्य यावत्पूर्णिमासीपरिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपौर्णमासीपरावर्तश्चान्द्रो मास इतियावत्, अथवा चन्द्रचारनिष्पन्नत्वादुपचारतो मासोऽपि चान्द्रः, चः समुच्चये, तथा ऋतुमासः, इह किल ऋतुर्लोकरूढ्या पष्ट्यहोरात्रप्रमाणो मासद्वयात्मकः तस्यार्धमपि मासोऽवयवे समुदायोपचारात् ऋतुः स चार्थात्परिपूर्णत्रिंशदहोरात्रप्रमाणः, एष एव च ऋतुमासः कर्ममास इति वा सावनमास इति वा व्यवह्रियते, उक्तञ्च—"एस चेव उउमासो कम्ममासो सावणो मासो भन्नइ" इति, तथा आदित्यस्यायमादित्यः, स च एकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य पष्ठभागमानः यदिवा आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः, तथा पञ्चमो मासोऽभिवर्धितः, अभिव-

र्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणः संवत्सरः, द्वादशचन्द्रमासप्रमाणात्संवत्सरादेकेन मासेनाभिवर्धितत्वात्, परं तद्द्वादशभा-
गप्रमाणो मासोऽप्यवयवे समुदायोपचारादभिवर्धितः, तदेवमुक्ता नामतो नक्षत्रादयः पञ्चापि मासाः, ॥ ८९७ ॥ साम्प्रतमेतेषामेव
मासानां दिनपरिमाणमाह—'अहरत्ते'गाहा 'उउ'गाहा 'भागा'गाहा, नाक्षत्रो—नक्षत्रसम्बन्धी मासः सप्तविंशतिरहोरात्राः एकस्य
चाहोरात्रस्य सप्तषष्टिभागास्त्रिः सप्त—त्रयो वाराः सप्त, एकविंशतिरित्यर्थः, तथा चान्द्रः—चन्द्रमासः एकोनत्रिंशदहोरात्रा द्वापष्टिभागाश्च
अहोरात्रस्य द्वात्रिंशत्, तथा ऋतुमासः परिपूर्णानि त्रिंशद्दिनानि, तथा आदित्यः—आदित्यमासो भवति त्रिंशदहोरात्रा अर्धं चाहोरात्रस्य,
तथा अभिवर्धितमासो दिनानामेकेनाधिका त्रिंशत्, एकत्रिंशदहोरात्रा इत्यर्थः, एकस्य चाहोरात्रस्य चतुर्विंशत्युत्तरशतरूपेण छेदेन—भा-
गेन विभक्तस्य एकविंशत्यधिकं शतं भागानां भवतीति, एते पञ्चापि मासा यथा निष्पत्तिं लभन्ते तथा 'समयात्' सिद्धान्ताद्
'ज्ञेयं' ज्ञातव्यमिति । स च निष्पत्तिप्रकारः सिद्धान्तानुसारेण विनेयजनानुग्रहाय किञ्चिद्दर्श्यते—इह किल चन्द्रचन्द्राभिवर्धितचन्द्राभि-
वर्धितलक्षणसंवत्सरपञ्चकप्रमाणे युगे अहोरात्रराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो १८३० भवति, कथमेतदवसीयते? इति चेदुच्यते—
इह सूर्यस्य दक्षिणमुत्तरं वा अयनं त्र्यशीतिअधिकदिनशतात्मकं युगे च पञ्च दक्षिणायनानि पञ्चोत्तरायणानीति सर्वसङ्ख्यया दशाय-
नानि ततस्त्र्यशीत्यधिकं दिनशतं दशकेन गुण्यते इत्यागच्छति यथोक्तो दिनराशिः, एवंप्रमाणं दिनराशिं स्थापयित्वा नक्षत्रचन्द्रऋत्वा-
दित्यमासानां दिनमानानयनाय यथाक्रमं सप्तषष्टिद्वाषष्ट्येकषष्टिषष्टिलक्षणैर्भागहारैर्भागं हरेत् ततो यथोक्तं नक्षत्रादिमासगतदिनपरिमाण-
मागच्छति, तथाहि—युगदिनराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो ध्रियते, तस्य सप्तषष्ट्यियुगे नक्षत्रमासा इति सप्तषष्ट्या भागो ह्रियते लब्धाः
सप्तविंशतिरहोरात्राः एकविंशतिरहोरात्रस्य सप्तषष्टिभागाः एष नक्षत्रमासः, तथा तस्यैव युगदिनराशेस्त्रिंशदधिकाष्टादशशतमानस्य युगे

चन्द्रमासा द्वाषष्टिरिति द्वाषष्ट्या भागे हृते यल्लभ्यते तच्चन्द्रमाससमानं, तथाऽस्यैव युगदिनराशेरेकषष्टिर्युगे ऋतुमासाः इत्येकषष्ट्या भागहरणे लब्धं यथोक्तमृतुमाससमानं, तथा युगे सूर्यमासाः षष्टिरिति षष्ट्या ध्रुवराशेर्भागहारे यल्लब्धमेतत्सूर्यमासपरिमाणं, उक्तं च—'रिक्खाईमासाणं करणमिणमं तु आणणोवाओ । जुगदिणरासिं ठाविय अट्ठार सयाइं तीसाइं ॥ १ ॥ ताहे हराहि भागं रिक्खाईयाण दिणकरंताणं । सत्तट्ठीबावट्ठीएगट्ठीसट्ठिभागेहिं ॥ २ ॥" [ ऋक्षादिमासानां करणमिदं त्वानयनोपायः युगदिनराशिं स्थापयित्वाऽष्टादश शतानि त्रिंशानि ॥ १ ॥ ततो हर भागमृक्षादीनां दिनकरान्तानां सप्तषष्टिद्वाषष्टिएकषष्टिषष्टिभागैः ॥ २ ॥] तथा तस्मिन् वर्षे अभिवर्धितरूपे तृतीये पञ्चमे वा त्रयोदश शशिमासा भवन्ति तद्वर्षं द्वादशभागीक्रियते तत एकैको भागोऽभिवर्धितमास इत्युच्यते, इह किलाभिवर्धितसंवत्सरस्य त्रयोदशचन्द्रमाससमानस्य दिनपरिमाणं त्र्यशीत्यधिकानि त्रीणि शतानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा रात्रिन्दिवस्य ३८३$\frac{४४}{६२}$ तथाहि—एकस्मिन् चन्द्रमासे एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागाः, मासाश्च त्रयोदश इति तानि दिनानि तदंशाश्च त्रयोदशभिर्गुण्यन्ते जातानि सप्तसप्तत्युत्तराणि दिनानां त्रीणि शतानि, अंशानां च षोडशाधिकानि चत्वारि शतानि, ते च दिनस्य द्वाषष्टिभागाः ततो दिनानयनाय द्वाषष्ट्या भागो ह्रियते लब्धानि षट् दिनानि, तानि च पूर्वोक्तदिनेषु मील्यन्ते, ततो जातानि त्रीणि शतानि त्र्यशीत्यधिकानि दिनानां चतुश्चत्वारिंशच्च द्वाषष्टिभागाः, ततो वर्षे मासा द्वादश इति मासानयनाय द्वादशभिर्भागो ह्रियते, लब्धा एकत्रिंशदहोरात्राः शेषास्तिष्ठन्त्यहोरात्रा एकादश, ते चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्तरशतेन गुण्यन्ते, जातानि त्रयोदश शतानि चतुष्षष्ट्यधिकानि, येऽपि च उपरितनाश्चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि चतुर्विंशत्युत्तरशतभागकरणार्थं द्वाभ्यां गुण्यन्ते जाता अष्टाशीतिः, साऽनन्तरभागराशौ प्रक्षिप्यते, जातानि च चतुर्दश शतानि द्विपञ्चाशदधिकानि, तेषां द्वादशभिर्भागे हृते लब्धमेकविंशत्युत्तरं शतं चतुर्विंश-

त्युत्तरशतभागानां, एतावदभिवर्धितमासप्रमाणं, उक्तं च—"जंमि वरिसंमि तेरस ससिणो मासा हवंति सो वरिसो । बारसभाए क- ज्जइ अभिवड्ढियमास सो भागो ॥ १ ॥" [यस्मिन् वर्षे त्रयोदश शशिनो मासा भवन्ति तत् वर्षं । द्वादशभागीक्रियते स भागोऽभि- वर्धितमासः ॥ १ ॥] इति १४१ ॥ ८९८ ॥ ८९९ ॥ ९०० ॥ सम्प्रति 'वरिसाण पंच भेय'त्ति द्विचत्वारिंशदधिकशततमं द्वारमाह—

**संवच्छरा उ पंच उ चंदे १ चंदे २ ऽभिवड्ढिए ३ चेव । चंदे ४ ऽभिवड्ढिए ५ तह त्रिसट्ठिमासेहिं जुगमाणं ॥ ९०१ ॥**

चान्द्रश्चान्द्रोऽभिवर्धितः चान्द्रोऽभिवर्धितश्चेत्येवं क्रमेण पञ्च संवत्सरा भवन्ति, एते च पञ्चाप्यनेन क्रमेण भवन्तो मिलित्वा एकं युगं निष्पादयन्तीति युगसंवत्सरा इत्युच्यन्ते, तत्र पूर्वोक्तस्वरूपचन्द्रमासनिष्पन्नत्वात्संवत्सरोऽपि चान्द्रः, तस्य च प्रमाणं त्रीणि शतानि चतुष्पञ्चाशदुत्तराणि दिनानां द्वादश च द्वाषष्टिभागाः $३५४\frac{१२}{६२}$ तथाहि—एकोनत्रिंशद्दिनानि द्वाषष्टिभागीकृतस्याहोरात्रस्य च द्वात्रिंशदंशाश्चन्द्रमासः $२९\frac{३२}{६२}$ स च द्वादशभिर्गुण्यते ततो यथोक्तं चन्द्रसंवत्सरप्रमाणं भवति, एवं द्वितीयचतुर्थावपि संवत्सराविति, तथा चन्द्रसंवत्सरादेकेन मासेनाभिवर्धितत्वादभिवर्धितसंवत्सरः, तस्य च प्रमाणं त्रीणि शतानि अह्नां त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागाः $३८३\frac{४४}{६२}$ तथाहि—एकत्रिंशदहोरात्राश्चतुर्विंशत्युत्तरशतभागानां चैकविंशं शतमभिवर्धितमासप्रमाणं, तत्रैकत्रिंशद्दिनानि द्वादशभिर्गुण्यन्ते जातानि द्वासप्तत्युत्तराणि त्रीणि शतानि, यच्चैकविंशत्यधिकं भागशतं तदपि द्वादशभिर्गुण्यते जातानि द्विपञ्चाशदधिकानि चतुर्दश शतानि, तेषां च चतुर्विंशत्यधिकशतेन भागहरणे लब्धान्येकादश दिनानि तानि च पूर्वोक्तदिनेषु प्रक्षिप्यन्ते, भवन्ति च त्रीणि शतानि

त्र्यशीत्यधिकानि, शेपस्य चाष्टाशीतिरूपभाज्यराशेश्चतुर्विंशत्युत्तरशतरूपभाजकराशेश्च यथोक्तभागानयनाय द्विकेनापवर्तना क्रियते, लब्धाश्चतुश्चत्वारिंशत् द्वाषष्टिभागाः एषोऽभिवर्धितसंवत्सरः, एवं पञ्चमोऽपि, एभिश्चान्द्रादिभिः पञ्चभिः संवत्सरैरेकं युगं भवति, तच्च द्विषष्टिचन्द्रमासप्रमाणं, तथाहि—युगे त्रयश्चन्द्रसंवत्सराः एकैकस्मिंश्च चन्द्रसंवत्सरे द्वादश चन्द्रमासाः ततस्त्रयो द्वादशभिर्गुण्यन्ते जाताः षट्त्रिंशत्, अभिवर्धितसंवत्सरौ च युगे द्वावेव एकैकस्मिंश्चाभिवर्धितसंवत्सरे त्रयोदश चन्द्रमासाः, अधिकमासकस्य तत्र सद्भावात्, ततो द्वौ त्रयोदशभिर्गुण्येते जाताः षड्विंशतिः, उभयमीलने च द्वाषष्टिश्चन्द्रमासा इति १४२ ॥ ९०१ ॥ इदानीं 'लोगसरूवं'ति त्रिचत्वारिंशदधिकशततमं द्वारमाह—

**माघवईऍ तलाओ ईसिंपब्भारउवरिमतलं जा । चउदसरज्जू लोगो तस्साहो वित्थरे सत्त ॥ ९०२ ॥ उवरिं पएसहाणी ता नेया जाव भूतले एगा । तयणुप्पएसवुड्ढी पंचमकप्पंमि जा पंच ॥ ९०३ ॥ पुणरवि पएसहाणी जा सिद्धसिलाऍ एक्कगा रज्जू । घम्माए लोगमज्झो जोयणअसंखकोडीहिं ॥ ९०४ ॥ हेट्ठाहोमुहमल्लगतुल्लो उवरिं तु संपुडठियाणं । अणुसरइ मल्लगाणं लोगो पंचत्थिकायमओ ॥ ९०५ ॥ तिरियं सत्तावन्ना उड्ढं पंचेव हुंति रेहाओ । पाएसु चउसु रज्जू चउदस रज्जू य तसनाडी ॥ ९०६ ॥ तिरियं चउरो दोसुं छ दोसुं अट्ठ दस य इक्किक्के । बारस दोसुं सोलस दोसुं वीसा य चउसुंपि ॥ ९०७ ॥ पुणरवि सोलस दोसुं बारस दोसुंपि हुंति नायव्वा । तिसु दस तिसु अट्ठ च्छा य दोसु दोसुंपि चत्तारि ॥ ९०८ ॥ ओयरिय लोयमज्झा चउरो चउरो**

य सव्वहिं नेया । तिग तिग दुग दुग एक्किकगो य जा सत्तमी पुढवी ॥ १०९ ॥ अडवीसा छ-
व्वीसा चउवीसा वीस सोल दस चउरो । सत्तासुवि पुढवीसुं तिरियं खण्डुयगपरिमाणं ॥ ११० ॥
पंच सय बारसुत्तर हेट्ठा तिसया उ चउर अब्भहिया । अह उड्ढं अट्ठ सया सोलहिया खंडुया
सव्वे ॥ १११ ॥ बत्तीसं रज्जुओ हेट्ठा रुयगस्स हुंति नायव्वा । एगोणवीसमुवरिं इगवन्ना सव्वपिं-
डेणं ॥ ११२ ॥ दाहिणपास दुखंडा वामे संधिज्ज विहियविवरीयं । नाडीजुया तिरज्जू उड्ढाहो
सत्त तो जाया ॥ ११३ ॥ हेट्ठाओ वामखंडं दाहिणपासंमि ठवसु विवरीयं । उवरिम तिरज्जु
खंडं वामे ठाणंमि संधिज्जा ॥ ११४ ॥ तिन्नि सया तेयाला रज्जूणं हुंति सव्वलोगम्मि । चउरंसं
होइ जयं सत्तण्ह घणेणिमा संखा ॥ ११५ ॥ छसु खंडगेसु य दुगं चउसु दुगं दससु हुंति च-
त्तारि । चउसु चउक्कं गेवेज्जणुत्तराइं चउक्कंमि ॥ ११६ ॥ सयंभुपुरिमंताओ अवरंतो जाव रज्जु-
माणं तु । एएण रज्जुमाणेण लोगो चउद्दसरज्जुओ ॥ ११७ ॥

सर्वाधस्तनभागादारभ्य ईषत्प्राग्भारायाः—सिद्ध-शिलायाः सर्वोपरितनतलं लोकान्तलक्षणं यावदूर्द्धाधोभागेन चतुर्दशरज्जूप्रमाणो लोको भवति, तस्य च लोकस्याधस्तात्—सप्तमपृथिव्या माघवत्याः—तमस्तमप्रभापराभिधानायाः सप्तमनरकपृथिव्यास्तलाद्—अलोकसंस्पर्शिनः अधोभागे विस्तरतो देशोनाः सप्त रज्जवः, सूत्रकारेण त्वल्पत्वाद्देशोनत्वं न विवक्षितं, ततोऽधोलोकान्तादुपरि प्रदेशहानिः—तिर्यगङ्गुलास-ङ्ख्येयभागहानिस्तावद् ज्ञातव्या यावद् भूतले—तिर्यग्लोकमध्यवर्तिसमभूमिभागे विस्तरत एका रज्जूः, तदनु—समभूमिभागादुपरिमुखं

प्रदेशवृद्धिः—तिर्यगङ्गुलासङ्ख्येयभागवृद्धिस्तावद् द्रष्टव्या यावदूर्ध्वलोकमध्ये पञ्चमे ब्रह्मलोकाभिधे कल्पे विस्तरतः पञ्च रज्जवः, ततः पुनरप्यूर्ध्वं प्रदेशहानिस्तावदवसेया यावत्सिद्धशिलाया उपरिष्टाल्लोकान्ते विस्तरत एकैव रज्जुः, घर्मायां च—रत्नप्रभापराभिधानायां प्रथमपृथिव्यां योजनानामसङ्ख्याताभिः कोटिभिर्बहुसमभूमिभागादतिक्रान्ताभिर्लोकमध्यं, इयमत्र भावना—इह सामस्त्येन चतुर्दशरज्ज्वात्मको लोकः, स च त्रिधा भिद्यते, तद्यथा—ऊर्ध्वलोकस्तिर्यग्लोकोऽधोलोकश्च, तत्र तिर्यग्लोकस्य ऊर्ध्वाधोऽपेक्षया अष्टादशयोजनशतप्रमाणस्य मध्यभागे जम्बूद्वीपे रत्नप्रभाया बहुसमे भूमिभागे मेरुबहुमध्येऽष्टप्रादेशिको रुचकः, तत्र गोस्तनाकाराश्चत्वार उपरितनाः प्रदेशाश्चत्वारश्चाधस्तनाः, एष एव रुचकः सर्वासां दिशां विदिशां च प्रवर्तकः, एतस्माच्च रुचकादूर्ध्वाधस्तिर्यग्लोकविभागाः, तथाहि—रुचकस्याधस्तादुपरिष्टाच्च नव नव योजनशतानि तिर्यग्लोकः तस्य च तिर्यग्लोकस्याधस्तादधोलोकः उपरिष्टादूर्ध्वलोकः, देशोनसप्तरज्जुप्रमाण ऊर्ध्वलोकः समधिकसप्तरज्जुप्रमाणोऽधोलोकः मध्येऽष्टादशयोजनशतोच्छ्रयस्तिर्यग्लोकः, ततो—रुचकसमभूतलभागादधोमुखमसङ्ख्याता योजनकोटीर्गत्वा रत्नप्रभायां चतुर्दशरज्ज्वात्मकस्य लोकस्य मध्यभागः परिपूर्णसप्तरज्जुप्रमाणो भवतीति ॥ १०२ ॥ १०३ ॥ १०४ ॥ सम्प्रति लोकस्य संस्थानमाह—'हेट्ठे'त्यादि, अधस्ताद्—अधोभागे अधोमुखमल्लकतुल्यः—अधोमुखीकृतसरावसदृक्षाकारः, उपरि पुनः सम्पुटस्थितयोर्मल्लकयोः—शरावयोराकारमनुसरति लोकः, अयमर्थः—प्रथमं तावदेकं शरावमधोमुखमवस्थाप्यते ततस्तस्योपरि द्वितीयमुपरिमुखं तस्याप्युपरि तृतीयमधोमुखमित्येवं व्यवस्थितशरावत्रयसदृशाकारः सकलोऽपि लोको भवतीति, स च पञ्चास्तिकायमयो—धर्माधर्माकाशजीवपुद्गललक्षणैः पञ्चभिरस्तिकायैर्व्याप्तः ॥ १०५ ॥ अथ चतुर्दशरज्ज्वात्मकमपि लोकमसत्कल्पनया खण्डकप्रविभागेन दिदर्शयिषुः खण्डकनिष्पादनाय तावदाह—'तिरिय'मित्यादि, तिर्यक्—तिरश्चीनाः सप्तपञ्चाशत्सङ्ख्या रेखाः पट्टिकादौ स्थाप्यन्ते, ऊर्ध्व—उपर्यधोभा-

वेन पुनः पञ्चैव रेखाः स्थाप्या भवन्ति, तथा 'पाएसु चउसु'त्ति सप्तम्यास्तृतीयार्थत्वाच्चतुर्भिः पादैः—खण्डकैरेका रज्जूर्भवति, इह चतुर्भिः खण्डकैरेका रज्जूः परिकल्पिता ततो रज्जूचतुर्थभागत्वात् खण्डकं पाद इत्यभिहितं, चतुर्दशरज्जूश्च—ऊर्द्धाधोभावेन चतुर्दशरज्जूप्रमाणा त्रसनाडी, इयमत्र भावना—तिर्यग्व्यवस्थापितसप्तपञ्चाशद्रेखाभिरूर्द्धाधोभावेन षट्पञ्चाशत्खण्डकानि जायन्ते, चतुर्भिश्च खण्डकैरेका रज्जूरिति षट्पञ्चाशतश्चतुर्भिर्भागहारे ऊर्द्धाधश्चतुर्दश रज्जवो लभ्यन्ते इति, तिर्यक्त्रसनाडीमध्ये सर्वत्र एकैव रज्जूरुपर्यधोभावविनिवेशितरेखापञ्चकेन खण्डकचतुष्कस्यैव निष्पन्नत्वात्, एवं तावत् त्रसनाडीमध्ये ऊर्द्धाधोभावेन खण्डकान्युक्तानि ॥ ९०६ ॥ अथ सकलस्यापि लोकस्य तिर्यग्वर्तीनि खण्डकान्यभिधातुकामः प्रथमं तावदूर्द्धलोके रुचकादारभ्य लोकान्तं यावत्तिर्यक्खण्डान्याह— 'तिरिय'मित्यादि, रुचकसमाद् भूभागादूर्द्ध्वं द्वयोः पङ्क्त्योरेकोनत्रिंशत्तमरेखोपरिवर्तिन्योस्तिर्यक्—तिरश्चीनानि चत्वारि चत्वारि खण्डकानि त्रसनाडीमध्यगतान्येव भवन्ति, त्रसनाड्या वहिस्तत्र खण्डकानामभावात्, तत उपरितन्योर्द्वयोः पङ्क्त्योः षट् खण्डकानि, तत्र चत्वारि त्रसनाडीमध्यवर्तीन्येव एकैकं तु त्रसनाड्या वहिः प्रत्येकमुभयपार्श्वयोरिति, तत एकैकस्यां पङ्क्तौ क्रमेणाष्टौ दश च खण्डकानि, तथाहि—एकस्यां पङ्क्तौ नाडीमध्ये चत्वारि वहिश्चैकपार्श्वे द्वयं द्वितीयपार्श्वेऽपि द्वयमित्यष्टौ, अपरस्यां च पङ्क्तौ चत्वारि मध्ये वहिश्च उभयतः प्रत्येकं त्रितयं त्रितयमिति दश, ततोऽपि द्वयोः पङ्क्त्योः प्रत्येकं द्वादश द्वादश खण्डकानि चत्वारि मध्ये वहिश्चत्वारि चत्वारीति, तदनन्तरं द्वयोः पङ्क्त्योः प्रत्येकं षोडश षोडश खण्डकानि चत्वारि मध्ये पार्श्वयोश्च षट् षडिति, तत उपरितनीषु चतसृषु पङ्क्तिषु प्रत्येकं विंशतिः खण्डकानि चत्वारि मध्ये वहिश्चैकपार्श्वेऽष्टावपरपार्श्वेऽप्यष्टाविति, तदेवमूर्द्धलोके चतुर्दशसु पङ्क्तिषु यथासम्भवं खण्डकानां वृद्धिरुक्ता ॥९०७॥ अथ चतुर्दशस्वेव पङ्क्तिषु हानिमाह—(ग्रन्था. १०००० 'पुणरवी'त्यादि, पुनरप्युपरितनपङ्क्तिद्वये षोडश खण्डकानि, भावना च

सर्वत्र प्राग्वदवसेया, तत ऊर्ध्वं द्वयोः पङ्क्त्योर्द्वादश द्वादश खण्डकानि, ततोऽपि तिसृषु पङ्क्तिषु दश दश खण्डकानि, ततोऽपि तिसृषु पङ्क्तिषु अष्टावष्टौ खण्डकानि, तदनु द्वयोः पङ्क्त्योः षट् षट् खण्डकानि ततोऽपि सर्वोपरिवर्तिन्योर्द्वयोः पङ्क्त्योर्नाडीमध्यगतान्येव चत्वारि चत्वारि खण्डकानि भवन्तीति, इत्थं तावन्निजगुरुप्रदर्शितस्थापनानुसारतो रुचकादारभ्य लोकान्तं यावत् 'तिरियं चउरो दोसुं' इत्यादिगाथाद्वयं व्याख्यातं, अपरे तु वैपरीत्येन पट्टेषु स्थापनां पश्यन्त एतद्गाथाद्वयं लोकान्तादारभ्य लोकमध्यं यावद्व्याख्यानयन्तीति ॥ १०८ ॥ अथाधोलोके सप्तस्वपि पृथिवीषु ऊर्ध्वाधोभावेन खण्डकान्याह—'ओयरिये'त्यादि, अवतीर्य लोकान्ताल्लोकमध्यं समागत्य ततो लोकमध्याद्—रुचकलक्षणादारभ्य सर्वत्र–सर्वासु पृथिवीषु त्रसनाडीमध्ये ऊर्ध्वाधोभावेन चत्वारि चत्वारि खण्डकानि ज्ञातव्यानि, त्रसनाड्यास्तु बहिर्द्वितीयाद्यासु पृथिवीषु यथाक्रमं खण्डकानां त्रिकं त्रिकं द्विकं द्विकमेकैकं च खण्डकं तावद् विज्ञेयं यावत् सप्तमी पृथ्वी, इयमत्र भावना—रत्नप्रभायां तावत् त्रसनाड्याः बहिः खण्डकानामभाव एव, ततः शर्कराप्रभाया उपरितनतलादारभ्य दक्षिणवामभागयोः प्रतिपङ्क्ति तिरश्चीनानि त्रीणि त्रीणि खण्डकानि तावदूर्ध्वाधोभावेन ज्ञेयानि यावत्सप्तमपृथिव्या अधस्तनो भागः, ततो वालुकाप्रभाया उपरितलादारभ्य उभयपार्श्वयोः खण्डकत्रयात्पुरतः पुनरपि त्रीणि त्रीणि खण्डकानि तावदवसेयानि यावत्सप्तमी पृथिवी, ततः पङ्कप्रभाया उपरितलादारभ्य द्वयोः पार्श्वयोः पूर्वोक्तखण्डकेभ्यः परतो द्वे द्वे खण्डके तावदवगन्तव्ये यावत्सप्तमी पृथिवी, ततः पुनरपि धूमप्रभाया आरभ्य पार्श्वद्वयेऽपि द्वे द्वे खण्डके तावद्भवतो यावत्सप्तमी पृथिवी, ततो भूयोऽपि तमःप्रभाया आरभ्य पार्श्वद्वयोस्तावदेकैकं खण्डकं स्थापनीयं यावत् सप्तमी पृथिवी, ततः सप्तम्यामपि पृथिव्यां पूर्वोक्तखण्डकेभ्यः परत उभयपार्श्वयोरेकैकं खण्डकं प्रतिपङ्क्ति तावद्भवति यावत्सर्वाधस्तनी पङ्क्तिरिति, तदेवमधोलोके ऊर्ध्वाधोभावेन खण्डकान्युक्तानि ॥ १०९ ॥ अथ तमस्तमःप्रभाया आरभ्य रत्नप्रभां याव-

प्रतिपृथिवि तिर्यक्खण्डकप्रमाणमाह—'अट्ठावीसे'त्यादि, सप्तम्यां—तमस्तमःप्रभायां नरकपृथिव्यामष्टाविंशतिः खण्डकानि तिर्यग्भवन्ति, तत्र त्रसनाड्या वहिरेकपार्श्वे द्वादश द्वितीयपार्श्वेऽपि द्वादश त्रसनाडीमध्ये च चत्वारीति, तमःप्रभायां षड्विंशतिः खण्डकानि चत्वारि मध्ये वहिर्भागयोश्चैकादशैकादशेति, धूमप्रभायां चतुर्विंशतिः चत्वारि मध्ये उभयपार्श्वयोश्च दश दशेति, पङ्कप्रभायां विंशतिः मध्ये चत्वारि वहिर्भागयोश्चाष्टाष्टाविति, वालुकाप्रभायां षोडश मध्ये चत्वारि उभयपार्श्वयोश्च षट् षडिति, शर्कराप्रभायां तिर्यग्दश खण्डकानि चत्वारि मध्ये दक्षिणवामभागयोश्च त्रीणि त्रीणीति, रत्नप्रभायां च त्रसनाडीमध्यगतान्येव चत्वारि तिर्यक्खण्डकानीत्येवं सप्तस्वपि तमस्तमःप्रभाद्यासु पृथिवीषु तिर्यक्तिरश्चीनखण्डकानां—कल्पितचतुरस्राकारनभोभागरूपाणां परिमाणं—सङ्ख्यानं समवसेयमिति ॥ ९१० ॥ अथ सकलस्यापि लोकस्य खण्डकसर्वसङ्ख्यामाह—'पञ्चे'त्यादि, पञ्च शतानि द्वादशोत्तराणि—द्वादशाधिकानि खण्डकानां 'हेट्ठ'त्ति अधोलोके भवन्ति, तथाहि—'अडवीसा' इत्यादिगाथोक्तान् अष्टाविंशत्याद्यङ्कान् मीलयित्वा प्रतिपृथिवि अष्टाविंशतिषड्विंशत्यादिखण्डकसङ्ख्योपेतपङ्क्तिचतुष्टयसद्भावाच्चतुर्भिर्गुणयेत्, ततो जायन्ते पञ्च शतानि द्वादशोत्तराणीति, 'अह उड्ढं'ति अथ—अधोलोकादनन्तरमूर्द्ध्व—ऊर्द्ध्वलोके त्रीणि शतानि चतुर्भिरभ्यधिकानि खण्डकानां भवन्ति, 'तिरियं चउरो दोसुं' इत्यादिगाथाद्वितयोदितखण्डकमीलने यथोक्तसङ्ख्यासद्भावात्, सर्वाणि चाधोलोकोर्द्ध्वलोकसम्बन्धीनि खण्डकानि मिलितानि अष्टौ शतानि षोडशाधिकानि भवन्तीति ॥९११॥ अथ सर्वस्मिन्नपि लोके यावत्यो यावत्यो रज्जवो भवन्ति तावतीर्दर्शयितुमाह—'बत्तीसं'इत्यादि, रुचकस्य—पूर्वोक्तस्वरूपस्याधस्तादधोलोके इत्यर्थः द्वात्रिंशद्रज्जवो भवन्ति ज्ञातव्याः, इह किल त्रिधा रज्जूः—सूचीरज्जूः प्रतररज्जूर्घनरज्जूश्च, तत्रायामतः खण्डकचतुष्टयप्रमाणा वाहल्यतः पुनरेकखण्डप्रमिता खण्डकश्रेणिः सूच्याकारव्यवस्थापितखण्डकचतुष्टयनिष्पन्नत्वात्सूचीरज्जूः, तथा एषैव प्राक्प्रदर्शिता खण्डकचतुष्कात्मिका सूचिस्तयैव गुण्यते अतः प्रत्येकं खण्डकचतुष्टयनि-

ष्पन्नसूचीचतुष्टयात्मिका उपरितनाधस्तनखण्डकरहिता पोडशखण्डकसङ्ख्या प्रतररज्जूः सम्पद्यते, तथा प्रतर एव सूच्या गुणितो दैर्घ्येण विष्कम्भतः पिण्डतश्च समसङ्ख्यखण्डकोपेता सर्वतश्चतुरस्रा घनरज्जूः, दैर्घ्यादिपु त्रिष्वपि स्थानेपु समतालक्षणस्यैव घनस्येह रूढत्वात्, प्रतररज्जूश्च दीर्घविष्कम्भाभ्यामेव समानपिण्डस्तस्यैकखण्डकमात्रत्वादिति भावः, एपा च घनरज्जूश्चतुःषष्टिखण्डकात्मिका, पूर्वोक्तसूच्याऽनन्तरोदितपोडशखण्डकप्रमिते प्रतरे गुणिते एतावतामेव खण्डकानां भावात्, स्थापना च—प्रागुक्तपोडशखण्डकात्मकप्रतरस्योपरि त्रीन् वारान् षोडश पोडश खण्डकानि दत्त्वा भावनीया, तथा च दैर्घ्यविष्कम्भपिण्डैस्तुल्योऽयमापद्यत इति, उक्तं च—"सूई रज्जू चउहिँ उ खंडगेहिँ सोलसहिँ पयररज्जू य । चउसट्ठिखंडगेहिँ घणरज्जू होइ विन्नेया ॥ १ ॥" ततो द्वादशोत्तरपञ्चशतरूपस्याधोलोकखण्डकराशेः प्रतररज्ज्वानयनाय षोडशभिर्भागे हृते द्वात्रिंशत्प्रतररज्जवो भवन्ति, तथा उपरि—ऊर्द्ध्वलोके एकोनविंशतिः प्रतररज्जवः, चतुरुत्तरशतत्रयस्य पोडशभिर्भागहारे एकोनविंशतेरेव लभ्यमानत्वात्, तथा सर्वपिण्डेन—अधोलोकोर्द्ध्वलोकसम्बन्धिसर्वरज्जूमीलनेन एकपञ्चाशत्प्रतररज्जवो भवन्तीति ॥ ९१२ ॥ साम्प्रतं घनरज्जूसङ्ख्यां प्रतिपिपादयिषुः प्रथमं तावल्लोकघनीकरणमाह—'दाहिण' गाहा 'हेट्ठाओ' गाहा, ऊर्द्ध्वलोके त्रसनाड्या दक्षिणपार्श्ववर्तिनी ये द्वे खण्डे—ब्रह्मलोकमध्यादधस्तनमुपरितनं च खण्डं ते परिगृह्य विपरीते च विधाय—अधस्तनभागमुपरितनं उपरितनं च चाधः कृत्वेत्यर्थः, वामपार्श्वे सन्दध्यात्—संयोजयेत्, ततस्ते द्वे खण्डे रज्जूविस्तृतया त्रसनाड्या युते सर्वत्र विस्तरतस्तिस्रो रज्जवो जाताः ऊर्द्ध्वाधश्चोच्छ्रयेण सप्त रज्जवः इत्यूर्द्ध्वलोकसंवर्त्तनं, 'हेट्ठाउ'त्ति अधस्ताद्—अधोलोके पुनस्त्रसनाडीतो वामभागवर्ति खण्डं बुद्ध्या गृहीत्वा दक्षिणपार्श्वे विपरीतं कृत्वा स्थापयेत्, तत उपरितनसंवर्तितोर्द्ध्वलोकरूपं खण्डं त्रिरज्जूविस्तीर्णं संवर्तिताधोलोकखण्डस्य वामे स्थाने—वामपार्श्वे सङ्घातयेत्, इयमत्र भावना—इह स्वरूपतस्तावल्लोक ऊर्द्ध्वाधश्चतुर्दशरज्जूप्रमाणः

तिर्यग्लोकमध्यभागे एकरज्जूः ब्रह्मलोकमध्ये पञ्चरज्जूः उपरि च लोकान्ते एकरज्जूः शेषस्था-
अधस्ताद्विस्तरतो देशोनसप्तरज्जूप्रमाणः तिर्यग्लोकमध्यभागे एकरज्जूः ब्रह्मलोकमध्ये पञ्चरज्जूः उपरि च लोकान्ते एकरज्जूः शेषस्था-
नेषु पुनरनियतविस्तरः, एवंप्रमाणस्य लोकस्य वैशाखस्थानस्थकटिस्थकरयुग्मपुरुषाकारस्य घनीकरणाय प्रथममुपरितनलोकार्धं संवर्त्यते,
तथाहि—सर्वत्रैकरज्जूविस्तीर्णायास्त्रसनाड्या दक्षिणभागवर्तिनी ब्रह्मलोकमध्यादधस्तनमुपरितनं च ये द्वे खण्डे कूर्पराकारसंस्थिते ब्रह्मलो-
कमध्ये प्रत्येकं द्विरज्जूविस्तीर्णे देशोनार्धचतुष्टयरज्जूच्छ्रये ते बुद्धिकल्पनया समादाय त्रसनाड्या एवोत्तरपार्श्वे वैपरीत्येन सङ्घात्येते, एवं
चोपरितनं लोकार्धं त्रिरज्जूविस्तारं देशोनसप्तरज्जूच्छ्रयं, बाहल्यतस्तु ब्रह्मलोकमध्ये पञ्चरज्जूप्रमाणमन्यत्र त्वनियतबाहल्यं जायते, ततो-
ऽधोलोके च त्रसनाड्या दक्षिणभागवर्त्यधोलोकखण्डमधोभागे देशोनत्रिरज्जूविस्तारं क्रमेण हीयमानविस्तरं तावद्यावदुपरिष्टाद्रज्जवसङ्ख्येय-
भागविष्कम्भं समधिकसप्तरज्जूच्छ्रयं बुद्ध्या परिगृह्य त्रसनाड्या एवोत्तरपार्श्वे ऊर्ध्वाधोभागविपर्यासेन संयोजयेत्, एवं च कृतेऽधस्तनं
लोकार्धं देशोनचतूरज्जूविस्तारं सातिरेकसप्तरज्जूच्छ्रयं बाहल्यतोऽप्यधः क्वचित्किञ्चिदूनसप्तरज्जूमानं अन्यत्र त्वनियतबाहल्यं जयाते,
तत उपरितनमर्धं बुद्ध्या गृहीत्वाऽधस्तनस्यार्धस्योत्तरपार्श्वे सङ्घात्यते, तथा च सति क्वचित्सातिरेकसप्तरज्जूच्छ्रयः क्वचिच्च देशोनसप्तर-
ज्जूच्छ्रयः विस्तरतस्तु देशोनसप्तरज्जूप्रमाणो घनो जातः, ततः सप्तरज्जूनामुपरि यदधिकं तत्परिगृह्य उत्तरपार्श्वे ऊर्ध्वाध आयतं सङ्घा-
त्यते, ततो विस्तरतोऽपि परिपूर्णाः सप्त रज्जवो भवन्ति, तथा सङ्घातितोपरितनखण्डस्य बाहल्यं क्वचित्पञ्च रज्जवः अधस्तनखण्डस्य तु
बाहल्यं अधस्ताद्यथासम्भवं देशोनाः सप्त रज्जवः, तत उपरितनखण्डबाहल्याद्देशोनरज्जूद्वयमत्रातिरिच्यते इत्यस्मादतिरिच्यमानबाहल्या-
दर्धं गृहीत्वा उपरितनखण्डबाहल्ये संयोज्यते, एवं च कृते बाहल्यतस्तावत् कियत्यपि प्रदेशे किञ्चिदूनाः षट् रज्जवो भवन्ति, व्यवहार-
तस्तु सर्वमप्येतच्चतुरस्रीकृतनभःखण्डं सप्तरज्जूप्रमाणमुच्यते, व्यवहारनयो हि किञ्चिन्न्यूनसप्तहस्तादिप्रमाणमपि पटादिवस्तु परिपूर्णस-

सहस्रादिमानं व्यपदिशति, देशतोऽपि च दृष्टं बाहल्यादिधर्मं परिपूर्णेऽपि वस्तुनि व्यवस्यति स्थूलदृष्टित्वादिति भावः, अत एव तन्मते-नैवात्र सप्तरज्जूबाहल्यता सर्वगताऽवगन्तव्या, आयामविष्कम्भाभ्यामपि यत्र देशोनसप्तरज्जूप्रमाणमिदं व्यवहारतस्तत्रापि प्रत्येकं सप्तर-ज्जूप्रमाणता दृश्या, तदेवं व्यवहारनयमतेनायामविष्कम्भबाहल्यैः प्रत्येकं सप्तरज्जूप्रमाणो घनो जायते, एतच्च पट्टिकादौ लिखित्वा भा-वनीयमिति ॥ ९१३ ॥९१४ ॥ इदानीं घनीकृतस्य लोकस्य रज्जूसङ्ख्यां प्रतिपादयितुमाह—'तिण्णि' इत्यादि, सर्वस्मिन्नपि चतुर्दश-रज्ज्वात्मके लोके घनीकृते त्रिचत्वारिंशदुत्तराणि त्रीणि शतानि रज्जूनां भवन्ति, अथ घनीकरणे कीदृक्संस्थानो लोकः सम्पद्यते?, त-त्राह—'चउरंसं होइ जयं' चतुरस्रं—सर्वतः समचतुरस्रं जगत्—लोको भवति, संवर्तितं सदिति शेषः, इयं च त्रिचत्वारिंशदुत्तरशत-त्रयलक्षणा रज्जूसङ्ख्या सप्तानां घनेन 'समत्रिराशिहतिर्घन' इतिवचनादन्योऽन्यं त्रिस्ताडनेन जायते, एतदुक्तं भवति—संवर्तितस्य लोक-स्यायामविष्कम्भबाहल्यानां प्रत्येकं सप्तरज्जूमानत्वात् सप्त सप्तकेन गुण्यन्ते जाता एकोनपञ्चाशत् साऽपि पुनः सप्तकेन गुण्यते जा-तानि त्रीणि शतानि त्रिचत्वारिंशानीति, एतच्च व्यवहारमाश्रित्योक्तं, निश्चयतस्तु एकोनचत्वारिंशदधिकशतद्वयसङ्ख्यानामेव घनरज्जूनां सम्भवात्, तथाहि—षट्पञ्चाशत्सङ्ख्यास्वपि पङ्क्तिषु 'तिरियं चउरो दोसुं' इत्यादिगाथाकथितानि चतुरादीनि प्रतरखण्डकानि एकैक-पङ्क्तिगतानि पृथक्पृथग्वर्ग्यन्ते, 'सदृशद्विराशिघातो वर्गः' इतिवचनात् चतुष्कादयोऽङ्काश्चतुष्कादिभिरेव गुण्यन्ते इत्यर्थः, जाताः षोड-शादयोऽङ्काः, तेषां च सर्वमीलने पञ्चदशसहस्राः षण्णवत्यधिके च द्वे शते खण्डकानां भवन्ति, अस्य च राशेर्घनरज्जूसमानयनाय चतुःषष्ट्या भागो ह्रियते, ततो जायते एकोनचत्वारिंशदधिकद्विशतसङ्ख्या एव घनरज्जव इति, उक्तं च—'अह उवरिं छप्पन्ना पयरपण्ह-क्खदिट्ठखंडाणं । वग्गं कुणह पिहु पिहु संजोगे तिजयगणियपयं ॥ १ ॥ सहसेगारस दुसया बत्तीसहिया अहंमि खंडाणं । समदीह-

पिहुव्वेहाण रज्जुचउरंसमाणेण ॥ २ ॥ चत्तारि सहस्साइं चउसट्ठिजुआइं उड्ढलोगम्मि । पनरससहस्स दुसयं छण्णउयं जायमुभएसिं ॥ ३ ॥ चउसट्ठीएँ विहत्तं उणयाला दो सया हविज्जेवं । लोए घणरज्जूणं तिरियं चउरोति गाहत्थो ॥ ४ ॥" अथोर्द्ध्वलोके यावत्सु खण्डकेपु यावन्तो देवलोका भवन्तीत्येतदाह—'छसु' इत्यादि, रुचकसमाद् भूभागादुपरिमुखेपु पट्सु खण्डकेपु, सार्धरज्जूप्रमाणे क्षेत्रे इत्यर्थः, द्विकं—सौधर्मेशानलक्षणं देवलोकद्वयं भवति, ततोऽप्युपरितनेपु चतुर्पु खण्डकेपु—रज्जूमाने क्षेत्रे सनत्कुमारमाहेन्द्ररूपं देवलोकद्विकं भवति, ततोऽप्युपरि दशसु खण्डकेपु—अर्धतृतीयरज्जूप्रमिते क्षेत्रे भवन्ति ब्रह्मलोकलान्तकशुक्रसहस्रारस्वरूपाश्चत्वारो देवलोकाः, तदनु चतुर्पु खण्डकेपु—रज्जूपरिच्छिन्ने क्षेत्रे आनतप्राणतारणाच्युतनामकानां देवलोकानां चतुष्कं भवति, ततः सर्वोपरिवर्तिनि खण्डकचतुष्टये—अन्तिमरज्जौ नवग्रैवेयकविजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धाख्यानि पञ्चानुत्तरविमानानि सिद्धिक्षेत्रं च भवंतीति ॥११६॥ सम्प्रति रज्जूस्वरूपमाह—'सयंभु' इत्यादि, सकलद्वीपपयोधिपर्यन्तवर्तिनः स्वयम्भूरमणाभिधानजलनिधेः 'पुरिम'त्ति पूर्ववेदिकान्तादारभ्य यावत्तस्यैव तोयधेरपरवेदिकान्तः एतावत्प्रमाणा रज्जूरवगन्तव्या, अनेन च रज्जूमानेनोच्छ्रयतो लोकश्चतुर्दशरज्जूप्रमाणो भवतीति ११७ ॥ इदानीं 'सन्नाओ तिन्नि'त्ति चतुश्चत्वारिंशं शततमं द्वारमाह—

१४३

सन्नाउ तिन्नि पढमेऽत्थ दीहकालोवएसिया नाम । तह हेउवायदिट्ठीवाउवएसा तदियराओ ॥ ९१८ ॥ एयं करेमि एयं कयं मए इममहं करिस्सामि । सो दीहकालसन्नी जो इय तिक्कालसन्नधरो ॥ ९१९ ॥ जे उण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसुं । वत्तंति नियत्तंति य सदेहपरिपालणाहेउं ॥ ९२० ॥ पाएण संपइच्चिय कालंमि न यावि दीहकालंमि । ते हेउवायसन्नी निच्चेट्ठा हुंति

**हु असन्नी ॥ ९२१ ॥ सम्मद्दिट्ठी सन्नी संते नाणे खओवसमिए य । अस्सन्नी मिच्छत्तंमि दिट्ठिवा-ओवएसेणं ॥ ९२२ ॥**

संज्ञानं संज्ञा ज्ञानमित्यर्थः, सा त्रिभेदा 'पढमेत्थ'त्ति प्रथमा—आद्या अत्र—एतासु तिसृषु संज्ञासु मध्ये दीर्घकालोपदेशिकी नाम, दीर्घकालमतीतानागतवस्तुविषयत्वेनोपदेशः—कथनं यस्याः सा दीर्घकालोपदेशी सैव दीर्घकालोपदेशिका, तथा तदितरे—द्वितीयतृतीये हेतुवाददृष्टिवादोपदेशे, उपदेशशब्दस्य प्रत्येकमभिसम्बन्धात् हेतुवादोपदेशा द्वितीया सञ्ज्ञा दृष्टिवादोपदेशा च तृतीयेत्यर्थः, तत्र हेतुः कारणं निमित्तमित्यनर्थान्तरं तस्य वदनं वादस्तद्विषय उपदेशः—प्ररूपणा यस्यां सा हेतुवादोपदेशा, तथा दृष्टिः—दर्शनं सम्यक्त्वं तस्य वदनं—वादो दृष्टीनां वादो दृष्टिवादः तद्विषय उपदेशः—प्ररूपणं यस्यां सा दृष्टिवादोपदेशेति ॥ ९१८ ॥ अथ दीर्घकालोपदेशसंज्ञायाः स्वरूपं प्रतिपिपादयिपुस्तया संज्ञिनमेवाह—'एयं' इत्यादि, एतत्करोम्यहं एतत्कृतं मया एतत्करिष्याम्यहं इत्येवं यस्त्रिकालविषयां वर्तमानातीतानागतकालत्रयवर्तिवस्तुविषयां संज्ञां—मनोविज्ञानं धारयति स दीर्घकालसंज्ञी, दीर्घकाला—दीर्घकालोपदेशा संज्ञाऽस्यास्तीतिकृत्वा, स च गर्भजस्तिर्यङ् मनुष्यो वा देवो नारकश्च मनःपर्याप्तियुक्तो विज्ञेयः, तस्यैव त्रिकालविषयविमर्शादिसम्भवात्, एष च प्रायः सर्वमप्यर्थं स्फुटरूपमुपलभते, तथाहि—यथा चक्षुष्मान् प्रदीपादिप्रकाशेन स्फुटमर्थमुपलभते तथैषोऽपि मनोलब्धिसम्पन्नो मनोद्रव्यावष्टम्भसमुत्थविमर्शवशतः पूर्वापरानुसन्धानेन यथावस्थितं स्फुटमर्थमुपलभते, यस्य पुनर्नास्ति तथाविधस्त्रिकालविषयो विमर्शः सोऽसंज्ञीति सामर्थ्याल्लभ्यते, स च सम्मूर्च्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेयः, स हि स्वल्पस्वल्पतरमनोलब्धिसम्पन्नत्वादस्फुटमस्फुटतरमर्थं जानाति, तथाहि—संज्ञिपञ्चेन्द्रियापेक्षया सम्मूर्च्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जानाति, ततोऽप्यस्फुटं चतुरिन्द्रियः ततोऽप्यस्फुटतरं त्रीन्द्रियः ततो-

ऽप्यस्फुटतमं द्वीन्द्रियः ततोऽप्यत्यस्फुटतममेकेन्द्रियः तस्य प्रायो मनोद्रव्यासम्भवात्, केवलमव्यक्तमेव किञ्चिदतीवाल्पतरं मनो द्रष्टव्यं यद्वशादाहारादिसंज्ञा अव्यक्तरूपाः प्रादुष्ष्यन्तीति १ ॥ ९१९ ॥ साम्प्रतं हेतुवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह—'जे उण' गाहा, 'पाएण' गाहा, ये पुनः सञ्चिन्त्य सञ्चिन्त्येष्टानिष्टेषु—छायातपाहारादिषु विषयवस्तुषु मध्ये स्वदेहपरिपालनाहेतोरिष्टेषु वर्तन्ते अनिष्टेभ्यस्तु तेभ्य एव निवर्तन्ते, प्रायेण च साम्प्रतकाल एव, न चापि—नैव दीर्घकाले—अतीतानागतलक्षणे, प्रायोग्रहणात् केचिदतीतानागतकालावलम्बिनोऽपि नातिदीर्घकालानुसारिणः ते द्वीन्द्रियादयो हेतुवादोपदेशसंज्ञया संज्ञिनो विज्ञेयाः, अत्र च निश्चेष्टाः—घर्माद्यभितापेऽपि तन्निराकरणाय प्रवृत्तिनिवृत्तिविरहिताः पृथिव्यादय एवासंज्ञिनो भवन्ति, इदमुक्तं भवति—यो बुद्धिपूर्वकं स्वदेहपरिपालनार्थमिष्टेष्वाहारादिषु वस्तुषु प्रवर्तते अनिष्टेभ्यश्च निवर्तते स हेतूपदेशसंज्ञी, स च द्वीन्द्रियादिरपि वेदितव्यः, तथाहि—इष्टानिष्टविषयप्रवृत्तिनिवृत्तिसञ्चिन्तनं न मनोव्यापारमन्तरेण सम्भवति, मनसा च पर्यालोचनं संज्ञा, सा च द्वीन्द्रियादेरपि विद्यते, तस्यापि प्रतिनियतेष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात्, ततो द्वीन्द्रियादिरपि हेतूपदेशसंज्ञया संज्ञी लभ्यते, नवरमस्य सञ्चिन्तनं प्रायो वर्तमानकालविषयं, न भूतभविष्यद्विषयमिति नायं दीर्घकालोपदेशेन संज्ञी, यस्य पुनर्नास्त्यभिसन्धारणपूर्विका प्रवृत्तिनिवृत्तिशक्तिः स प्राणी हेतुवादोपदेशेनाप्यसंज्ञी लभ्यते, स च पृथिव्यादिरेकेन्द्रियो वेदितव्यः, तस्याभिसन्धिपूर्वकमिष्टानिष्टप्रवृत्तिनिवृत्त्यसम्भवात्, या अपि च आहारादिका दश संज्ञाः पृथिव्यादीनामप्यत्र वक्ष्यन्ते प्रज्ञापनायामपि च प्रतिपादितास्ता अप्यत्यन्तमव्यक्तरूपा मोहोदयजन्यत्वादशोभनाश्चेति न तदपेक्षयाऽपि तेषां संज्ञित्वव्यपदेशः, न हि लोकेऽपि कार्षापणमात्रास्तित्वेन धनवानुच्यते न चाविशिष्टेन मूर्तिमात्रेण रूपवानिति, अन्यत्रापि हेतुवादोपदेशसंज्ञित्वमाश्रित्योक्तं—"कृमिकीटपतङ्गाद्याः समनस्का जङ्गमाश्चतुर्भेदाः । अमनस्काः पञ्चविधाः पृथिवीकायादयो जीवाः ॥१॥"

२ ॥९२०॥९२१॥ अथ दृष्टिवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह–'सम्मे'त्यादि, दृष्टिवादोपदेशेन क्षायोपशमिके ज्ञाने वर्तमानः सम्यग्दृष्टिरेव संज्ञी, संज्ञानं संज्ञा–सम्यग्ज्ञानं तद्युक्तत्वात्, मिथ्यादृष्टिः पुनरसंज्ञी विपर्ययत्वेन वस्तुतः सम्यग्ज्ञानरूपसंज्ञारहितत्वात्, यद्यपि च मिथ्यादृष्टिरपि सम्यग्दृष्टिरिव घटादिकं जानीते व्यवहरति च तथापि तस्य सम्बन्धि व्यवहारमात्रेण ज्ञानमपि निश्चयतोऽज्ञानमेवोच्यते, स्याद्वादाश्रयणेन ज्ञाननिवन्धनस्य भुवनगुरुनिर्णीतयथावस्थितवस्त्वभ्युपगमस्य कदाचिदप्यभावात्, आह–यदि विशिष्टसंज्ञायुक्तत्वात् सम्यग्दृष्टिः संज्ञीष्यते तर्हि किमिति क्षायोपशमिकज्ञानयुक्तोऽसौ गृह्यते?, क्षायिकज्ञाने हि विशिष्टतरा सा प्राप्यते, ततस्तद्वृत्तिरप्यसौ किं नाङ्गीक्रियते?, उच्यते, यतोऽतीतस्यार्थस्य स्मरणमनागतस्य च चिन्ता संज्ञाऽभिधीयते, सा च केवलिनि नास्ति, सर्वदा सर्वार्थावभासकत्वेन केवलिनां स्मरणचिन्ताद्यतीतत्वात् इति क्षायोपशमिकज्ञान्येव सम्यग्दृष्टिः संज्ञीति। ननु प्रथमं हेतुवादोपदेशेन संज्ञी वक्तुं युज्यते, हेतुवादोपदेशेनाल्पमनोलब्धिसम्पन्नस्यापि द्वीन्द्रियादेः संज्ञित्वेनाभ्युपगमात् तस्य चाविशुद्धतरत्वात्, ततो दीर्घकालोपदेशेन, हेतूपदेशसंज्ञ्यपेक्षया दीर्घकालोपदेशसंज्ञिनो मनःपर्याप्तियुक्ततया विशुद्धत्वात्, तत्किमर्थमुत्क्रमोपन्यासः?, उच्यते, इह सर्वत्र सूत्रे यत्र क्वचित्संज्ञी असंज्ञी वा परिगृह्यते तत्र सर्वत्रापि प्रायो दीर्घकालोपदेशेन गृह्यते न हेतुवादोपदेशेन नापि दृष्टिवादोपदेशेन, तत एतत्संप्रत्ययार्थं प्रथमं दीर्घकालोपदेशेन संज्ञिनो ग्रहणं, उक्तं च–"सन्निति असन्निति य सव्वसुए कालिओवएसेणं। पायं संववहारो कीरइ तेणाइओ स कओ ॥ १ ॥" ततोऽनन्तरमप्रधानत्वात् हेतूपदेशेन संज्ञिनो ग्रहणं, ततः सर्वप्रधानत्वादन्ते दृष्टिवादोपदेशेनेति१४४॥९२२॥ इदानीं 'सन्नाओ चउरो'त्ति पञ्चचत्वारिंशदुत्तरशततमं द्वारमाह—

**आहार १ भय २ परिग्गह ३ मेहुण ४ रूवाओ हुंति चत्तारि। सत्ताणं सन्नाओ आसंसारं सम-ग्गाणं ॥ ९२३ ॥**

संज्ञानं संज्ञा—आभोगः, सा द्विधा—क्षायोपशमिकी औदयिकी च, तत्राद्या ज्ञानावरणक्षयोपशमजन्यमतिभेदरूपा, सा चानन्तरमेवोक्ता, द्वितीया पुनः सामान्येन चतुर्विधाऽऽहारसंज्ञादिलक्षणा, तत्र क्षुद्वेदनीयोदयाद् या कवलाद्याहारार्थं तथाविधपुद्गलोपादानक्रिया सा आहारसंज्ञा, तस्या आभोगात्मिकत्वात्, सा पुनश्चतुर्भिः कारणैः समुत्पद्यते, यदुक्तं **स्थानाङ्गे**—"चउहिं ठाणेहिं आहारसन्ना समुप्पज्जइ, तंजहा—ओमकुट्ठयाए छुहावेयणिज्जस्स कम्मस्सुदएणं मईए तदट्ठोवओगेणं"ति, तत्र अवमकोष्ठतया—रिक्तोदरतया क्षुद्वेदनीयस्य कर्मण उदयेन मत्या—आहारकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन—सततमाहारचिन्तयेति १ तथा भयमोहनीयोदयाद्भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रिया भयसंज्ञा, इयमपि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तं—"हीणसत्तयाए भयवेयणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं"ति, तत्र हीनसत्त्वतया—सत्त्वाभावेन भयवेदनीयस्य कर्मण उदयेन मत्या—भयवार्ताश्रवणभीपणदर्शनादिजनितया बुद्ध्या तदर्थोपयोगेन—इहलोकादिसप्तभयलक्षणार्थपर्यालोचनेनेति २ तथा लोभोदयात्प्रधानसंसारकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया परिग्रहसंज्ञा, एपापि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तम्—"अविमुत्तयाए लोभवेयणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं"ति, तत्र अविमुक्ततया—सपरिग्रहतया लोभवेदनीयकर्मण उदयेन मत्या—सचेतनादिपरिग्रहदर्शनादिजनितबुद्ध्या तदर्थोपयोगेन—परिग्रहानुचिन्तनेनेति ३ तथा पुंवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनसंस्तंभितोरुवेपथुप्रभृतिलक्षणा क्रिया मैथुनसंज्ञा, असावपि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तम्—'चियमंससोणियाए मोहणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं'ति, तत्र चिते—उपचिते मांसशोणिते यस्य स

तथा तद्भावस्तत्ता तया चितमांसशोणिततया मोहनीयस्य कर्मण उदयेन मत्या—सुरतकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन—मैथुनलक्षणार्थचिन्तनेनेति ४, एताश्चतस्रः संज्ञाः समग्राणामेकेन्द्रियादीनां पञ्चेन्द्रियपर्यवसानानां सत्त्वानां—जीवानामासंसारं—संसारवासं यावद्भवन्ति, तथा च केषाञ्चिदेकेन्द्रियाणामप्येताः स्पष्टमेवोपलभ्यन्ते, तथाहि—जलाद्याहारोपजीवनाद्वनस्पत्यादीनामाहारसंज्ञा सङ्कोचनीवल्ल्यादीनां तु हस्तस्पर्शादिभीत्या अवयवसङ्कोचनादिभ्यो भयसंज्ञा बिल्वपलाशादीनां तु निधानीकृतद्रविणोपरि पादमोचनादिभ्यः परिग्रहसंज्ञा कुरुबकाशोकतिलकादीनां तु कमनीयकामिनीभुजलतावगूहनपार्ष्णिप्रहारकटाक्षविक्षेपादिभ्यः प्रसूनपल्लवादिप्रसवप्रदर्शनान्मैथुनसंज्ञेति १४५ ॥ ९२३ ॥ इदानीं 'सन्नाओ दस'त्ति षट्चत्वारिंशदधिकशततमं द्वारमाह—

**आहार १ भय २ परिग्गह ३ मेहुण ४ तह कोह ५ माण ६ माया ७ य । लोभो ८ ह ९ लोग १० सन्ना दसऽवेया सवजीवाणं ॥ ९२४ ॥**

संज्ञायतेऽनयाऽयं जीव इति संज्ञा—वेदनीयमोहोदयाश्रिता ज्ञानावरणदर्शनावरणक्षयोपशमाश्रिता च विचित्राहारादिप्राप्तिक्रिया, सा चोपाधिभेदाद्दशविधा, तत्राहारभयपरिग्रहमैथुनसंज्ञा अनन्तरमेव व्याख्याताः, तथा क्रोधवेदनीयोदयात्तदावेशगर्भा परुषमुखनयनदन्तच्छदस्फुरणादिचेष्टा क्रोधसंज्ञा मानोदयादहङ्कारात्मिका उत्सेकादिपरिणतिर्मानसंज्ञा मायावेदनीयेनाशुभसङ्क्लेशादनृतसम्भाषणादिक्रिया मायासंज्ञा लोभवेदनीयोदयतो लालसत्वेन सचित्तेतरद्रव्यप्रार्थना लोभसंज्ञा, तथा मतिज्ञानावरणकर्मक्षयोपशमात् शब्दाद्यर्थगोचरा सामान्यावबोधक्रिया ओघसंज्ञा तद्विशेषावबोधक्रिया लोकसंज्ञा, एवं चेदमापतितं—दर्शनोपयोग ओघसंज्ञा ज्ञानोपयोगो लोकसंज्ञा, एष स्थानाङ्गटीकाभिप्रायः, आचाराङ्गटीकायां पुनरभिहितं—ओघसंज्ञा तु अव्यक्तोपयोगरूपा वल्लीवितानारोहणादिसंज्ञा लोकसंज्ञा तु

स्वच्छंदघटितविकल्परूपा लौकिकाचरिता, यथा—'न सन्त्यनपत्यस्य लोकाः श्वानो यक्षाः विप्रा देवाः काकाः पितामहाः बर्हिणां पक्षवातेन गर्भ इत्यादिका' इति, अपरे तु ज्ञानोपयोग ओघसंज्ञा दर्शनोपयोगो लोकसंज्ञेत्येवमाहुः, एते दशापि अयं जीव इति संज्ञानहेतुत्वात् संज्ञाः सर्वेषां संसारिजीवानां ज्ञेयाः, सुखप्रतिपत्तये च स्पष्टरूपाः पञ्चेन्द्रियानधिकृत्य व्याख्याताः, एकेन्द्रियादीनां त्वेता अव्यक्तरूपा अवगन्तव्या इति १४६ ॥ ९२४ ॥ इदानीं **'सन्नाओ पन्नरसे'**ति सप्तचत्वारिंशदधिकशततमं द्वारमाह—

**आहार १ भय २ परिग्गह ३ मेहुण ४ सुह ५ दुक्ख ६ मोह ७ वितिगिच्छा ८ । तह कोह ९**
**माण १० माया ११ लोहे १२ लोगे य १३ धम्मो १४ घे १५ ॥ ९२५ ॥**

प्रक्रमायातस्य संज्ञाशब्दस्य प्रत्येकमभिसम्बन्धादाहारसंज्ञादय ओघसंज्ञापर्यन्ताः पञ्चदश संज्ञा भवन्ति, तत्र दश पूर्वोक्तस्वरूपा एव, सुखदुःखसंज्ञे—सातासातानुभवरूपे मोहसंज्ञा—मिथ्यादर्शनरूपा विचिकित्सासंज्ञा—चित्तविप्लुतिलक्षणा धर्मसंज्ञा—क्षमाद्यासेवनस्वरूपा, एताश्च विशेषानुपादानाद्यथासम्भवं सर्वजीवानामवसेयाः, इह कचिद् ग्रन्थे चतुर्विधाः संज्ञाः उक्ताः कचिद्दशविधाः कचित् तु पञ्चदशविधाः ततः कासाञ्चित्पुनर्भणनेऽपि न पौनरुक्त्यमाशङ्कनीयं, तथा **आचाराङ्गे** विप्रलापवैमनस्यरूपां शोकसंज्ञां प्रक्षिप्य षोडश संज्ञाः प्रतिपादिता इति १४७ ॥ ९२५ ॥ इदानीं 'सत्तसट्ठिलक्खणभेयविसुद्धं सम्मत्तं'ति अष्टचत्वारिंशदधिकशततमं द्वारमाह—

**चउसद्दहण ४ तिलिंगं ३ दसविणय १० तिसुद्धि ३ पंचगयदोसं ५ । अट्ठपभावण ८ भूसण ५-**
**लक्खण ५ पंचविहसंजुत्तं ॥ ९२६ ॥ छव्विहजयणा ६ ऽऽगारं ६ छब्भावण ६ भावियं च छट्ठाणं**
**६ । इय सत्तयसट्ठिलक्खणभेयविसुद्धं च सम्मत्तं ॥ ९२७ ॥ परमत्थसंथवो वा १ सुदिट्ठपरमत्थसे-**

वणा वावि २। वावन्न३ कुदंसणवज्जणा य ४ सम्मत्तसद्दहणा ॥ ९२८ ॥ सुस्सूस १ धम्मराओ २ गुरुदेवाणं जहासमाहीए । वेयावच्चे नियमो ३ सम्मदिट्ठिस्स लिंगाइं ॥ ९२९ ॥ अरहंत १ सिद्ध २ चेइय ३ सुए य ४ धम्मे य ५ साहुवग्गे य ६। आयरिय ७ उवज्झाएसु ८ य पवयणे ९ दंसणे १० यावि ॥ ९३० ॥ भत्ती पूया वन्नज्जलणं वज्जणमवन्नवायस्स। आसायणपरिहारो दंसणविणओ समासेणं ॥ ९३१ ॥ मोत्तूण जिणं १ मोत्तूण जिणमयं २ जिणमयट्ठिए मोत्तुं ३। संसारकच्चवारं चिंतिज्जंतं जगं सेसं ॥ ९३२ ॥ संका १ कंख २ विगिच्छा ३ पसंस ४ तह संथवो कुलिंगीसु ५। सम्मत्तस्सऽइयारा परिहरियव्वा पयत्तेणं ॥ ९३३ ॥ पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी ५ य। विज्जा ६ सिद्धो य ७ कवी ८ अट्ठेव पभावगा भणिया ॥ ९३४ ॥ जिणसासणे कुसलया १ पभावणा २ ऽऽययणसेवणा ३ थिरया ४। भत्ती य ५ गुणा सम्मत्तदीवया उत्तमा पंच ॥ ९३५ ॥ उवसम १ संवेगोऽवि य २ निव्वेओ ३ तह य होइ अणुकंपा ४। अत्थिक्कं चिय ५ एए संमत्ते लक्खणा पंच ॥ ९३६ ॥ नोअन्नतित्थिए अन्नतित्थिदेवे य तह सदेवेऽवि। गहिए कुतित्थिएहिं वंदामि न वा नमंसामि ॥ ९३७ ॥ नेव अणालत्तो आलवेमि नो संलवेमि तह तेसिं। देमि न असणाईयं पेसेमि न गंधपुप्फाइ ॥ ९३८ ॥ रायाभिओगो य १ गणाभिओगो २, बलाभिओगो य ३ सुराभिओगो ४। कंतारवित्ती ५ गुरुनिग्गहो य ६, छ छिंडिआओ जिणसा-

**सणम्मि ॥ ९३९ ॥ मूलं १ दारं २ पइट्ठाणं ३, आहारो ४ भायणं ५ निही ६ । दुच्छक्कस्सावि धम्मस्स, सम्मत्तं परिकित्तियं ॥ ९४० ॥ अत्थि य १ निचो २ कुणई ३ कयं च वेएइ ४ अत्थि निव्वाणं ५ । अत्थि य मोक्खोवाओ ६ छस्सम्मत्तस्स ठाणाइं ॥ ९४१ ॥**

चत्वारि श्रद्धानानि यत्र तच्चतुःश्रद्धानं, श्रद्धानचतुष्टयान्वितं सम्यक्त्वं भवतीति भावः, प्राकृतत्वाच्च प्रथमैकवचनलोपः, एवमग्रेऽपि यथासम्भवं समासो विभक्तिलोपश्च द्रष्टव्यः, 'त्रिलिङ्ग'मिति लिङ्गत्रययुक्तं दशविनयं–दशविधविनयोपेतं त्रिशुद्धं–शुद्धित्रयसमन्वितं 'पंचगयदोसं'ति गताः पञ्च दोषा यस्मात्तद्गतपञ्चदोषं, दोषपञ्चकपरिवर्जितमित्यर्थः, छन्दोभङ्गभयाच्च क्तान्तस्य परनिपातः, अष्टप्रभावनं–अष्टविधप्रभावनापरिगतं 'भूसणलक्खणपंचविहसंजुत्तं'ति पञ्चविधेन भूषणेन पञ्चविधेन च लक्षणेन संयुक्तं, अत्रापि पञ्चविधशब्दस्य परनिपातस्तथैव, तथा षड्विधौ यतनाकारौ यस्य तत् षड्विधयतनाकारं, षड्भिर्यतनाभिः षड्भिश्चाकारैः परिकलितमित्यर्थः, षड्भावनाभावितं–षड्भिर्भावनाभिर्निरन्तरं परिशीलितं, षट्स्थानं–स्थानषट्कयुक्तं, इत्येवं सप्तषष्ट्या 'लक्षणभेदैः' लक्ष्यते–निश्चीयते सम्यक्त्वमेभिरिति लक्षणानि–श्रद्धानादीनि तेषां भेदाः –प्रकाराः परमार्थसंस्तवादयस्तैर्विशुद्धं चस्यैवकारार्थत्वादेतैः सप्तषष्ट्या लक्षणभेदैर्विशुद्धमेव परमार्थतः सम्यक्त्वं भवति, सम्यक्शब्दः प्रशंसार्थोऽविरोधार्थो वा, सम्यग्–जीवस्तस्य भावः सम्यक्त्वं, प्रशस्तो मोक्षाविरोधी वा जीवस्य स्वभावविशेष इतियावत् ॥ ९२७ ॥ अथैतानेव लक्षणभेदान् प्रत्येकं प्रतिपिपादयिषुः प्रथमं 'चउसद्दहणं'ति व्याख्यातुमाह—'परमे'त्यादि, परमाश्च–तात्त्विकाश्च तेऽर्थाश्च–जीवाजीवादयस्तेषु संस्तवः–परिचयस्तात्पर्येण बहुमानपुरस्सरं जीवादिपदार्थावगमाभ्यास इतियावत् वाशब्द उत्तरापेक्षया समुच्चये इति प्रथमं श्रद्धानं, तथा सुष्टु–सम्यग्नीत्या दृष्टा–उपलब्धाः परमार्था–जीवादयो यैस्ते सु-

दृष्टपरमार्थाः—आचार्यादयस्तेषां सेवनं—पर्युपास्तिः सुदृष्टपरमार्थसेवनं, स्त्रीत्वं प्राकृतत्वात् वाशब्दोऽनुक्तसमुच्चये, ततो यथाशक्ति तद्वैयावृत्तिप्रवृत्तिश्च, अपि समुच्चये, इति द्वितीयं श्रद्धानं, तथा 'वावन्नकुदंसण'त्ति दर्शनशब्दः प्रत्येकमभिसम्बध्यते व्यापन्नं—विपन्नं विनष्टं दर्शनं येषां ते व्यापन्नदर्शना—निह्नवादयः तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः—शाक्यादयस्तेषां वर्जनं—परिहारो व्यापन्नकुदर्शनवर्जनं, मा भूदेतदपरिहारतः सम्यक्त्वमालिन्यमिति, अत्रापि स्त्रीत्वं प्राकृतत्वात् इति तृतीयचतुर्थे श्रद्धाने, 'सम्मत्तसद्दहणा' इति सम्यक्त्वं श्रद्धीयते—अस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धानं, प्रत्येकं च परमार्थसंस्तवादिभिरस्य सम्भवादेकवचनं, न चाङ्गारमर्दकादेरपि परमार्थसंस्तवादीनां सम्भवाद्व्यभिचारता, तात्त्विकानामेवैषामिहाधिकृतत्वात् तस्य च तथाविधानामेषामसम्भवादिति ॥ १२८ ॥ 'तिलिंगं'ति व्याख्यातुमाह—'सुस्सूसे'त्यादि, श्रोतुमिच्छा—शुश्रूषा, ह्रस्वत्वं तु प्राकृतशैल्या, सद्बोधावन्ध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छेत्यर्थः, सा च वैदग्ध्यादिगुणोत्तरतरुणनरकिन्नरगानश्रवणरागादप्यधिकतमा सम्यक्त्वे सति भवति, तथा धर्मः—श्रुतचारित्रलक्षणः, तत्र श्रुतधर्मरागस्य शुश्रूषापदेनैव प्रतिपादितत्वादिह धर्मरागश्चारित्रधर्मरागोऽभिप्रेतः, स च तथाविधकर्मदोषतस्तदकरणेन कान्तारागतदुर्गतबुभुक्षाक्षामब्राह्मणघृतपूर्णभोजनाभिलाषादप्यतिरिक्तोऽत्र भवति, तथा गुरवो—धर्मोपदेशका आचार्यादयः देवाश्च—आराध्यतमा अर्हन्तो गुरुदेवाः तेषां, इह च गुरुपदस्य पूर्वनिपातो विवक्षया गुरूणां पूज्यतरत्वख्यापनार्थः, न हि गुरूपदेशमन्तरेण सर्वविद्देवाभिगम इति भावः, यथासमाधि—समाधानानतिक्रमेण, अत्र चाव्ययीभावसमासादपि तृतीयाया अलोपः प्राकृतत्वात्, वैयावृत्त्ये—तत्प्रतिपत्तिविश्रामणाभ्यर्चनादौ नियमः—अवश्यङ्कर्तव्यतयाऽङ्गीकारः, स च सम्यक्त्वे सति भवतीत्येतानि सम्यग्दृष्टेः—धर्मधर्मिणोरभेदोपचारात् सम्यक्त्वस्य लिङ्गानि, एतैः शुश्रूषादिभिस्त्रिभिर्लिङ्गैः सम्यक्त्वमुत्पन्नमस्तीति निश्चीयत इति भावः, यद्यपि च शुश्रूषादय उपशान्तमोहादीनां

साक्षान्न भवन्ति कृतकृत्यत्वात् तथापि फलतो भवन्ति तद्भावस्य तत्फलत्वादिति ॥ ९२९ ॥ 'दसविणय'त्ति व्याख्यानयन्नाह—'अ-
रिहंत'गाहा 'भत्ती'गाहा, अर्हन्तः—तीर्थकराः सिद्धाः—क्षीणाष्टकर्ममलपटलाः चैत्यानि—जैनेन्द्रप्रतिमाः श्रुतं—आचाराद्यागमः धर्मः—
क्षान्त्यादिरूपः साधुवर्गः—श्रमणसमूहः आचार्योपाध्यायौ—प्रतीतौ प्रवक्ति जीवादितत्त्वमिति प्रवचनं—सङ्घः दर्शनं—सम्यक्त्वं तद्भेदो-
पचारात्तद्वानपि दर्शनमुच्यते, एवं प्रागपि यथासम्भवं वाच्यं । एतेषु अर्हदादिषु दशसु स्थानेषु विषयेषु किमित्याह—'भत्ती'त्यादि,
भक्तिः—अभिमुखगमनासनप्रदानपर्युपास्त्यञ्जलिबन्धानुव्रजनादिलक्षणा पूजा—गन्धमाल्यवस्त्रपात्रान्नपानप्रदानादिसत्काररूपा वर्णनं वर्णः—
श्लाघनं तेन ज्वलनं—ज्ञानादिगुणोद्भासनं वर्णज्वलनं तथा वर्जनं—परिहरणमवर्णवादस्य—अश्लाघायाः आशातना—मनोवाक्कायैः प्रतीपवर्तनं
तस्याः परिहारः—प्रतिषेधः आशातनापरिहारः, एष दशस्थानविषयत्वाद्दशविधो दर्शनविनयः, सम्यक्त्वे सति अस्य भावात्सम्यक्त्ववि-
नयः 'समासेन' सङ्क्षेपेण द्रष्टव्यः, विस्तरतस्तु शास्त्रान्तरादवसेय इति ॥ ९३१ ॥ 'तिसुद्धि'त्ति व्याचिख्यासुराह—'मोत्तूणे'त्यादि,
'मुत्त्वा' विमुच्य 'जिनं' वीतरागं मुक्त्वा च 'जिनमतं' स्यात्पदलाञ्छिततया तीर्थकृद्भिः प्रणीतं यथावस्थितं जीवाजीवादितत्त्वं तथा
जिनमतस्थितांश्च—प्रतिपन्नपारमेश्वरप्रवचनान् साध्वादीन् मुक्त्वा शेषमेकान्तग्रहग्रस्तं जगच्चिन्त्यमानं—परिभाव्यमानं 'संसारकच्चवारं'ति
संसारमध्ये कचवरनिकरप्रायमसारमित्यर्थः, जिनादित्रितयमेव सारं शेषं तु सर्वमप्यसारमिति चिन्तया सम्यक्त्वस्य विशोध्यमानत्वादेता-
स्तिस्रः शुद्धय इति ॥९३२॥ 'पंचगयदोसं'ति प्रकटयन्नाह—'संके'त्यादि, शङ्का—सर्वज्ञोक्तवचसि संशयः काङ्क्षा—अन्यान्यदर्शनाभिलाषः
विचिकित्सा—सदाचारसाध्वादिनिन्दा तथा कुत्सितं लिङ्गं—दर्शनं येषां ते कुलिङ्गिनः—कुतीर्थिकाः तेषु विषये प्रशंसा—श्लाघा तथा तद्विषय
एव संस्तवः—सम्भाषणादिना परिचयः, एते पञ्चापि शङ्कादयः सम्यक्त्वस्य मालिन्यहेतुत्वादतीचारा—दोषाः सम्यग्दृष्टिना प्रयत्नेन परि-

हर्तव्या —वर्जनीयाः, विशेपरास्त्वेतेषां स्वरूपं पष्ठे श्रावकप्रतिक्रमणातिचारद्वारे प्रतिपादितमिति ॥ ९३३ ॥ 'अट्ठपभावण'ति विवरीपुराह—'पावयणी'त्यादि, प्रवचनं—द्वादशाङ्गं तदस्यास्त्यतिशयवदिति प्रावचनी—युगप्रधानागमः, धर्मकथा प्रशस्याऽस्यास्तीति धर्मकथी, यः क्षीराश्रवादिलब्धिसम्पन्नः सजलजलधरध्वानानुकारिणा नादेनाक्षेपणीविक्षेपणीसंवेजनीनिर्वेदिनीलक्षणां चतुर्विधां जनितजनमनःप्रमोदप्रथां धर्मकथां कथयति, वादिप्रतिवादिसभ्यसभापतिरूपायां चतुरङ्गायां परिषदि प्रतिपक्षप्रतिक्षेपपूर्वकं स्वपक्षस्थापनार्थमवश्यं वदतीति वादी, निरुपमवादलब्धिसम्पन्नत्वेन वावदूकवादिवृन्दारकवृन्दैरप्यमन्दीकृतवाग्विभव इति भावः, निमित्तं—त्रैकालिकलाभालाभप्रतिपादकं शास्त्रं तद्वेत्त्यधीते वा स नैमित्तिकः सुनिश्चितातीतादिनिमित्तवेदीत्यर्थः, विप्रकृष्टं—अष्टमप्रभृतिकं दुस्तपं तपोऽस्यास्तीति तपस्वी 'विज्ज'त्ति मतुब्लोपाद्विद्यावान् विद्याः—प्रज्ञप्त्यादयः शासनदेवताः ताः सहायके यस्य स विद्यावान् वज्रस्वामिवत्, अञ्जनपादलेपतिलकगुटिकासकलभूताकर्षणवैक्रियत्वप्रभृतयः सिद्धयः ताभिः सिद्ध्यति स्मेति सिद्धः, कवते—नवनवभङ्गीवैदग्ध्यदिग्धैः पाकातिरेकरसनीयरसरहस्यास्वादमेदुरितसहृदयहृदयानन्दैर्निःशेपभाषावैदग्ध्यहृद्यहृद्यैर्गद्यपद्यप्रबन्धैर्वर्णनं करोतीति कविः, एते प्रावचन्यादयोऽष्टौ प्रभावयन्ति—स्वतः प्रकाशकस्वभावमेव देशकालाद्यौचित्येन सहायकरणात्प्रवचनं प्रकाशयन्तीति प्रभावकाः कथिताः, तेषां च कर्म प्रभावना, सा च सम्यक्त्वं निर्मलीकरोतीति, अन्यत्र पुनरन्यथाऽष्टौ प्रभावका उक्तास्तथाहि—"अइसेसइड्ढि १ धम्मकहि २ वाई ३ आयरिय ४ खवग ५ नेमित्ती ६ । विज्जा ७ रायागणसंमया ८ य तित्थं पभावंति ॥ १ ॥" [ अतिशेषर्धयो धर्मकथको वादी आचार्यः क्षपकः नैमित्तिकः विद्यासिद्धः राजगणसंमतश्च तीर्थं प्रभावयन्ति ॥ १ ॥ ] तत्र अतिशेषा—अवधिमनःपर्ययज्ञानामर्पौषध्यादयोऽतिशयास्ते तैर्वा ऋद्धिर्यस्य सोऽतिशेषर्द्धिः, राजसम्मता—नृपवल्लभाः गणसम्मता—महाजनादिबहुमता इति ॥ ९३४ ॥ 'भूसण'त्ति व्याचिख्यासुराह—

जिनशासने—अर्हद्दर्शनविषये एतच्च सर्वत्र सम्बध्यते कुशलता—नैपुण्यं, तद्वशेन हि नानाप्रकारैरुपायैः सुखेनैव परं प्रतिबोधयतीति, तथा प्रभवति जैनेन्द्रं शासनं तस्य प्रभवतः प्रयोजकत्वं च प्रभावना, सा चाष्टधा प्रभावकभेदेन प्रागेवोक्ता, यत्पुनरिहोपादानं तदस्याः स्वपरोपकारित्वेन तीर्थकरनामकर्मनिबन्धनत्वेन च प्राधान्यख्यापनार्थं, तथा आयतनं द्विधा—द्रव्यतो भावतश्च, तत्र द्रव्यतो जिनगृहादि भावतस्तु ज्ञानदर्शनचारित्राधाराः साध्वादयः तस्यासेवनं—पर्युपास्तिः, स्त्रीत्वं च प्राकृतत्वादिति, तथा स्थिरता—जिनधर्मं प्रति चलितचित्तस्य परस्य स्थिरत्वापादनं स्वस्य वा परतीर्थिकसमृद्धिदर्शनेऽपि जिनप्रवचनं प्रति निष्प्रकम्पता, तथा भक्तिः—प्रवचने विनयवैयावृत्त्यरूपा प्रतिपत्तिः, एते सम्यक्त्वस्य दीपकाः—प्रभासका उत्तमाः—प्रधाना गुणा—भूषणानि, एतैर्गुणैः सम्यक्त्वमलङ्क्रियत इति भावः ॥९३५॥

'लक्खणपंचविहसंजुत्तं'ति विवृण्वन्नाह—'उवसमे'त्यादि, अपराधविधायिन्यपि कोपपरिवर्जनमुपशमः, स च कस्यचित्कषायपरिणतेः कटुकफलावलोकनाद्भवति कस्यचित्पुनः प्रकृत्यैवेति, तथा नरामरसुखपरिहारेण मुक्तिसुखाभिलाषः संवेगः, सम्यग्दृष्टिर्हि नरेन्द्रसुरेन्द्राणां विषयसुखानि दुःखानुषङ्गाद् दुःखतया मन्यमानो मोक्षसुखमेव सुखत्वेन मन्यतेऽभिलषति चेति, तथा नारकतिर्यगादिसांसारिकदुःखेभ्यो निर्विण्णता निर्वेदः, सम्यग्दर्शनी हि दुःखातिगहने संसारकारागारे गुरुतरकर्मदण्डपाशिकैस्तथा तथा कदर्थ्यमानः प्रतिकर्तुमक्षमो ममत्वरहितश्च दुःखेन निर्विण्णो भवति, अन्ये तु संवेगो भवविरागः निर्वेदो मोक्षाभिलाप इत्यनयोरर्थव्यत्ययमाहुः, तथा दुःखितेषु प्राणिष्वपक्षपातेन दुःखप्रहाणेच्छा दया अनुकम्पा, पक्षपातेन तु करुणा स्वपुत्रादौ व्याघ्रादीनामप्यस्त्येव, सा चानुकम्पा द्रव्यतो भावतश्च भवति, द्रव्यतः सत्यां शक्तौ दुःखप्रतिकारेण भावत आर्द्रहृदयत्वेनेति, तथा अस्तीति मतिरस्येत्यास्तिकः तस्य भावः कर्म वा आस्तिक्यं, तत्त्वान्तरश्रवणेऽपि जिनगदिततत्त्वविषये निराकाङ्क्षा प्रतिपत्तिः, एतान्युपशमादीनि पञ्च सम्यक्त्वे-सम्यक्त्वविषयाणि लक्षणानि,

एतैः परस्थं परोक्षमपि सम्यक्त्वं सम्यगुपलक्ष्यत इति ॥ ९३६ ॥ 'छव्विहजयण'त्ति व्याख्यानयन्नाह—'नो अन्ने'त्यादि, 'नेवे'त्यादि, अन्यतीर्थिकान्—परदर्शनिनः परिव्राजकभिक्षुभौतिकादीन् अन्यतीर्थिकदेवांश्च—रुद्रविष्णुसुगतादीन् तथा स्वदेवानपि—अर्हत्प्रतिमालक्षणान् कुतीर्थिकैः—दिगम्बरादिभिर्गृहीतान्—स्वीकृतान् भौतिकादिभिर्वा परिगृहीतान् महाकालादीन् 'नो' नैव वन्दे वा न च 'नमस्यामि' नमस्करोमि, तद्भक्तानां मिथ्यात्वादिस्थिरीकरणात्, तत्र वन्दनं—शीर्षाभिवादनं नमस्करणं—प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्तनं, तथा अन्यतीर्थिकैः पूर्वमनालप्तः सन् तानैवालपामि नापि संलपामि, तत्र आङ् ईषदर्थत्वाद् ईषद्भाषणमालापनं पुनः पुनः सम्भाषणं संलपनं, तत्सम्भाषणे हि तैः सह परिचयप्राप्त्या तत्प्रक्रियाश्रवणदर्शनादिभिर्मिथ्यात्वोदयोऽपि स्यात्, प्रथमालप्तेन त्वसम्भ्रमं लोकापवादभयात् किञ्चित्स्वल्पं वाच्यमपीति, तथा तेषां—अन्यतीर्थिकानां ददामि नाशनादिकं—अशनपानखादिमस्वादिमवस्त्रपात्रादिकं, तद्दाने ह्यात्मनोऽन्येषां च पश्यतां तेषु बहुमानसद्भावात्तदैव मिथ्यात्वगमनं, इह च परतीर्थिकानामशनादिदानमनुकम्पां विहाय प्रतिषिद्धं, अनुकम्पागोचरापन्नं तु तेषामपि दानं दातव्यं, यत उक्तम्—"सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं । सत्ताणुकंपणट्ठा दाणं न कहिंपि पडिसिद्धं ॥ १ ॥" [ सर्वैरपि जिनैर्जितदुर्जेयरागद्वेषमोहैः । सत्त्वानुकम्पायै दानं न कुत्रापि प्रतिषिद्धं ॥ १ ॥ ] तथा तेषामेव—परतीर्थिकदेवानां तत्परिगृहीतजिनप्रतिमानां च पूजादिनिमित्तं न प्रेषयामि गन्धपुष्पादिकं आदिशब्दाद्विनयवैयावृत्त्ययात्रास्नात्रादिकं च तेषां न करोमीति, एतत्करणे हि लोकानां मिथ्यात्वं स्थिरीकृतं स्यात्, एताभिः परतीर्थिकादिवन्दननमस्करणालपनसंलपनाशनादिदानगन्धपुष्पादिप्रेषणलक्षणाभिः षड्भिर्यतनाभिर्यतमानः सम्यक्त्वं नातिक्रमतीति ॥ ९३७–९३८ ॥ 'छागारं'ति वितन्वन्नाह—'रायाभिओगो' इत्यादि, तत्राभियोजनं—अनिच्छतोऽपि व्यापारणमभियोगः राज्ञो—नृपतेरभियोगो राजाभियोगः, गणः—स्वजनादिसमुदायस्तस्या-

मियोगो गणाभियोगः, बलं—बलवतो हठप्रयोगस्तेनाभियोगो बलाभियोगः, सुरस्य—कुलदेवतादेरभियोगः सुराभियोगः, कान्तारं—अरण्यं तत्र वृत्तिः—वर्तनं निर्वाहः कान्तारवृत्तिः यद्वा कान्तारमपि बाधाहेतुत्वादिह बाधात्वेन विवक्षितं ततः कान्तारेण—बाधया वृत्तिः—प्राणवर्त्तनरूपा कान्तारवृत्तिः, कष्टेन निर्वाह इतियावत्, गुरवो—मातृपितृप्रभृतयः, यदुक्तं—'माता पिता कलाचार्यो, एतेषां ज्ञातयस्तथा। वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥ १ ॥' तेषां निग्रहो—निर्बन्धः, तदेताः षट् छिण्डिका—अपवादा जिनशासने भवन्ति, इदमत्र तात्पर्यम्—प्रतिपन्नसम्यक्त्वस्य परतीर्थिकवन्दनादिकं यत्प्रतिषिद्धं तद्राजाभियोगादिभिरेतैः षड्भिः कारणैर्भक्तिवियुक्तं द्रव्यतः समाचरन्नपि सम्यक्त्वं नातिचरतीति ॥९३९॥ 'छब्भावणभावियं'ति व्याख्यातुमाह—'मूलं दार'मित्यादि, द्विषट्कस्यापि—द्वादशभेदस्यापि पञ्चाणुव्रतत्रिगुणव्रतचतुःशिक्षाव्रतरूपस्य चारित्रधर्मस्य इदं सम्यक्त्वं मूलं कारणमित्यर्थः परिकीर्तितं—कथितं, तीर्थकरादिभिरिति सर्वत्र सम्बन्धः, यथा हि मूलविरहितः पादपः प्रचण्डपवनप्रकम्पितस्तत्क्षणादेव निपतति, एवं धर्मतरुरपि सुदृढसम्यक्त्वमूलविहीनः कुतीर्थिकमतमारुतान्दोलितः स्थैर्यं नासादयेदिति, 'दारं'ति द्वारमिव द्वारं प्रवेशमुखमिति भावः, यथा हि अकृतद्वारं नगरं समन्ततः प्राकारवलयवेष्टितमप्यनगरमेव भवति जनप्रवेशनिर्गमाभावात्, एवं धर्ममहापुरमपि सम्यक्त्वद्वारशून्यमशक्याधिगमं स्यादिति, 'पइट्ठाणं'ति प्रतिष्ठते प्रासादोऽस्मिन्निति प्रतिष्ठानं—पीठं, ततः प्रतिष्ठानमिव प्रतिष्ठानं, यथा हि पयःपर्यन्तपृथ्वीतलगतगर्तापूरकरहितः प्रासादः सुदृढो न भवति तथा धर्मदेवस्य हर्म्यमपि सम्यक्त्वरूपप्रतिष्ठानपरित्यक्तं निश्चलं न भवेदिति, 'आहारो'त्ति आधार इव आधार आश्रय इतियावत्, यथा हि धरातलमन्तरेण निरालम्बं जगदिदं न तिष्ठति, एवं धर्मजगदपि सम्यक्त्वलक्षणाधारव्यतिरेकेण नावतिष्ठति, 'भायणं'ति भाजनमिव भाजनं पात्रमित्यर्थः, यथा हि कुण्डादिभाजनविशेषविवर्जितं क्षीरादिवस्तुनिकुरम्बं विनश्यति एवं धर्मवस्तुनिवहोऽपि सम्य-

क्त्वभाजनं विंना विनाशमासादयेदिति, 'निहि'त्ति निधिरिव निधिः, यथा हि निरवधिनिधिव्यतिरेकेण महार्हमणिमौक्तिककनकादिद्रव्यं न प्राप्यते तथा सम्यक्त्वमहानिधानानभिगतौ चारित्रधर्मवित्तमपि निरुपमसुखसम्पादकं न प्राप्यते इति, इत्येताभिः पङ्क्तिर्भावनाभिर्भाव्यमानमिदं सम्यक्त्वमविलम्बमसममोक्षसुखसाधकं भवतीति ॥ १४० ॥ 'छट्ठाणं'ति प्रपञ्चयितुमाह—'अत्थी'त्यादि, अस्ति—विद्यते चशब्दस्यावधारणार्थत्वादस्त्येव जीव इति गम्यते, प्रतिप्राणि स्वसंवेदनप्रमाणप्रसिद्धचैतन्यान्यथानुपपत्तेः, तथाहि—न चैतन्यमिदं भूतानां धर्मः, तद्धर्मत्वे सति पृथिव्याः काठिन्यस्येव तस्य सर्वत्र सर्वदा चोपलम्भप्रसङ्गात्, न च सर्वत्र सर्वदा चोपलभ्यते, लोष्टादौ मृतावस्थायां चानुपलम्भात्, नापि चैतन्यमिदं भूतानां कार्यं, अत्यन्तवैलक्षण्यादेव कार्यकारणभावस्याप्यनुपपत्तेः, तथाहि—प्रत्यक्षत एव काठिन्यादिस्वभावानि भूतानि प्रतीयन्ते, चैतन्यं च तद्विलक्षणं, ततः कथमनयोः कार्यकारणभावः ?, तन्न भूतधर्मो भूतकार्यं वा चैतन्यं, अथ चास्ति प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धं, अतो यस्येदं स जीव इति, अनेन च नास्तिकमतमपहस्तितं १ । 'निच्चो'त्ति स च जीवो नित्यः—उत्पत्तिविनाशविरहितः, तदुत्पादककारणाभावात् सतः सर्वथा विनाशायोगाच्च, अनित्यत्वे हि जीवस्य बन्धमोक्षाद्येकाधिकरणत्वाभावप्रसक्तेः, तथाहि—यद्यात्मा नित्यो नाभ्युपगम्यते, किन्तु पूर्वापरक्षणत्रुटितानुसन्धाना ज्ञानक्षणा एव, तथा सत्यन्यस्य बन्धोऽन्यस्य मुक्तिः अन्यस्य क्षुदन्यस्य तृप्तिः अन्योऽनुभविताऽन्यः स्मर्ता अन्यश्चिकित्सादुःखमनुभवति अन्यो व्याधिरहितो जायते अन्यस्तपःक्लेशमधिसहतेऽपरः स्वर्गसुखमनुभवति अपरः शास्त्रमभ्यसितुमारभतेऽन्योऽधिगतशास्त्रार्थो भवति, न चैतद्युक्तं, अतिप्रसङ्गादिति, एतेन शौद्धोदनिसिद्धान्तध्वान्तमपध्वस्तं २ । 'कुणइ'त्ति स च जीवः करोति मिथ्यात्वाविरतिकषायादिबन्धहेतुयुक्ततया तत्तत्कर्माणि निर्वर्तयति, प्रतिप्राणिप्रतीतविचित्रसुखदुःखाद्यनुभवान्यथानुपपत्तेः, तथाहि—लोके सुखं दुःखं वा चित्रमनुभूयते, न चैष चित्रसुख-

दुःखानुभवो निर्हेतुकः, सर्वदा सद्भावाभावप्रसङ्गात्, 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्' । इति न्यायात्, तस्मादस्य सुख-दुःखानुभवस्य स्वकृतमेव कर्म हेतुरिति सिद्धो जीवः कर्मणां कर्त्तेति कापिलप्रतिकल्पनाप्रतिक्षेपः, नन्वयं जीवः सुखाभिलाषी न कदा-चनाप्यात्मनो दुःखमाशास्ते ततो यदि स्वकर्मणामेष कर्ता ततः कथं दुःखफलं कर्म करोति ?, उच्यते, यथा हि रोगी रोगनिवृत्तिमि-च्छन्नपि रोगाभिभूतत्वाद् अपथ्यक्रियानिबन्धनं भाविनमपायं जानन्नपि चापथ्यक्रियामासेवते तद्वदेषोऽपि जीवो मिथ्यात्वाद्यभिभूत-त्वात् कथंचित् जानन्नपि दुःखफलं कर्म करोतीति ३ । 'कयं च वेएइ'त्ति स च जीवः कृतं—स्वयमभिनिर्वर्त्तितं शुभाशुभं कर्म वेद-यते—स्वयमेवोपभुङ्क्ते अनुभवलोकागमप्रमाणतस्तथैवोपपद्यमानत्वात्, तथाहि—यदि स्वयंकृतकर्मफलभोक्तृत्वं जीवस्य नाभ्युपगम्यते ततः सुखदुःखानुभवो मुक्ताकाशयोरिव तस्य न स्यात्, सुखदुःखानुभवकारणसातासातवेदनीयकर्मोपभोगाभावात्, अस्ति चायं सुखदुःखा-नुभवः प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धत्वात्, लोकेऽप्येष जीवः प्रायो भोक्ता सिद्धः, तथाहि—सुखिनं कञ्चन पुरुषं दृष्ट्वा लोके वक्तारो भवन्ति—पुण्यवानेष यदित्थं सुखमनुभवतीति, तथा आगमेषु च जैनेतरेषु भोक्ता सिद्धः 'सव्वं च पएसतया भुंजइ कम्ममणुभावओ भइयं' [ सर्वं च प्रदेशतया भुज्यते कर्म, अनुभावतो भाज्यं । ] तथा 'नाभुक्तं क्षीयते कर्म, कोटिकल्पशतैरपि' । इत्यादिवचनात्, न चैवं लोकप्रतीतावागमेषु वा वर्तमानेषु कस्यचिद्विवेकचक्षुषो विप्रतिपत्तिरस्ति, कृतवैफल्यप्रसङ्गात्, न चैतद्युज्यते, वणिक्कृषीवलादीनां स्वकृतशुभाशुभकर्मफलभोगस्य साक्षादेव दर्शनात्, तथा च सति सिद्ध एष जीवः स्वकृतकर्मणां भोक्तेति, अनेन चाभोक्तृजीववादी दुर्नयो निराकृतः ४ । 'अत्थि निव्वाणं'ति अस्य जीवस्यास्ति—विद्यते निर्वाणं—मोक्षः, सत एव जीवस्य रागद्वेषमदमोहजन्मजरारो-गादिदुःखक्षयरूपोऽवस्थाविशेष इतियावत्, एतेन प्रदीपनिर्वाणकल्पमभावरूपं निर्वाणमित्याद्यसङ्गतं सङ्गिरन्तः सौगतविशेषा व्युदस्ताः;

ते हि प्रदीपस्येवास्य जीवस्य सर्वथा ध्वंस एव निर्वाणमाहुः, तथा च तद्वचः—"दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात्केवलमेति शान्तिम् ॥ १ ॥ जीवस्तथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्, क्लेशक्षयात्केवलमेति शान्तिम् ॥ २ ॥" एतच्चायुक्तं, दीक्षादिप्रयासवैयर्थ्यात्, प्रदीपदृष्टान्तस्याप्यसिद्धत्वात्, तथाहि—न प्रदीपानलस्य सर्वथा विनाशः, किन्तु तथाविधपुद्गलपरिणामवैचित्र्यात् त एव पावकपुद्गला भास्वरं रूपं परित्यज्य तामसं रूपान्तरमाप्नुवन्ति, तथा च विध्याते प्रदीपेऽनन्तरमेव तामसपुद्गलरूपो विकारः समुपलभ्यते, चिरं चासौ पुरस्ताद्यन्नोपलभ्यते तत्सूक्ष्मसूक्ष्मतरपरिणामसद्भावादञ्जनरजोवत्, अञ्जनस्य हि पवनेनापह्रियमाणस्य यत्कृष्णरज उड्डीयते तदपि परिणामसौक्ष्म्यान्नोपलभ्यते न पुनरसत्त्वादिति, ततो यथाऽनन्तरोक्तस्वरूपं परिणामान्तरं प्राप्तः प्रदीपो निर्वाण इत्युच्यते तथा जीवोऽपि कर्मविरहितः केवलामूर्तजीवस्वरूपलक्षणं परिणामान्तरं प्राप्तो निर्वाणमुच्यते, तस्मात् दुःखादिक्षयरूपा सतोऽवस्था निर्वाणमिति स्थितं ५ । 'अत्थि य मोक्खोवाओ'त्ति अस्ति च मोक्षस्य—निर्वृतेरुपायः—सम्यक्साधनं, सम्यग्दर्शनज्ञानचारित्राणां मुक्तिसाधकतया घटमानकत्वात्, तथाहि—सकलमपि कर्मजालं मिथ्यात्वाज्ञानप्राणिहिंसादिहेतुकं, ततस्तत्प्रतिपक्षतया सम्यग्दर्शनाद्यभ्यासः सकलकर्मनिर्मूलनाय प्रभविष्णुरेव, न चैवं मिथ्यादृष्टिप्रणीतोऽप्युपायो मुक्तिसाधको भविष्यतीति वाच्यं, तस्य हिंसादिदोषकलुषितत्वेन संसारकारणत्वात्, अनेनापि मोक्षोपायाभावप्रतिपादकदुर्नयन्यक्कारः कृतः ६ । एतान्यात्मास्तित्वादीनि षट् सम्यक्त्वस्थानानि, सम्यक्त्वमेषु सत्स्वेव भवतीति भावः, अत्र च प्रतिस्थानकमात्मादिसिद्धये बहु वक्तव्यं तत्तु नोच्यते ग्रन्थगहनताप्रसङ्गादिति १४८ ॥ ९४१ ॥ इदानीं '**एगविहाइ दसविहं सम्मत्तं**'त्येकोनपञ्चाशदधिकशततमं द्वारमाह—

एगविह १ दुविह २ तिविहं ३ चउहा ४ पंचविह ५ दसविहं ६ सम्मं । दवाइ कारगाई उवसमभेएहि वा सम्मं ॥ ९४२ ॥ एगविहं सम्मरुई १ निसग्गऽभिगमेहि २ तं भवे दुविहं । तिविहं तं खइयाई ३ अहवावि हु कारगाईहिं ॥ ९४३ ॥ सम्मत्तमीसमिच्छत्तकम्मक्खयओ भणंति तं खइयं । मिच्छत्तखओवसमा खाओवसमं ववइसंति ॥ ९४४ ॥ मिच्छत्तस्स उवसमा उवसमयं तं भणंति समयन्नू । तं उवसमसेढीए आइमसम्मत्तलाभे वा ॥ ९४५ ॥ विहिआणुट्ठाणं पुण कारगमिह रोयगं तु सद्दहणं । मिच्छद्दिट्ठी दीवइ जं तत्ते दीवगं तं तु ॥ ९४६ ॥ खइयाई सासायणसहियं तं चउविहं तु विन्नेयं । तं सम्मत्तब्भंसे मिच्छत्ताऽऽपत्तिरूवं तु ॥ ९४७ ॥ वेययसंजुत्तं पुण एयं चिय पंचहा विणिद्दिट्ठं । सम्मत्तचरिमपोग्गलवेयणकाले तयं होइ ॥ ९४८ ॥ एयं चिय पंचविहं निसग्गाभिगमभेयओ दसहा । अहवा निसग्गरुई इचाइ जमागमे भणिअं ॥ ९४९ ॥ निस्सग्गु १ वएसरुई २ आणरुई ३ सुत्त ४ बीय ५ रुईमेव । अहिगम ६ वित्थाररुई ७ किरिया ८ संखेव ९ धम्मरुई १० ॥ ९५० ॥ जो जिणदिट्ठे भावे चउव्विहे सद्दहेइ सयमेव । एमेव नन्नहत्ति य निसग्गरुइत्ति नायव्वो ॥ ९५१ ॥ एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व उवएसरुइत्ति नायव्वो ॥ ९५२ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो सो खलु आणारुई नाम ॥९५३॥ जो सुत्तमहिज्जंतो सुएणमोगाहई उ सम्मत्तं ।

अंगेण बाहिरेण य (उ) सो सुत्तरुइत्ति नायव्वो ॥ ९५४ ॥ एगपएऽणेगाइं पयाइं जो पसरई उ सम्मत्ते । उदएव्व तिल्लबिंदू सो वीयरुइत्ति नायव्वो ॥ ९५५ ॥ सो होइ अहिगमरुई सुयनाणं जस्स अत्थओ दिट्ठं । एक्कारस अंगाइं पइन्नगा दिट्ठिवाओ य ॥ ९५६ ॥ दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहिं वित्थाररुई मुणेयव्वो ॥ ९५७ ॥ नाणे दंसणचरणे तवविणए सच्चसमिइगुत्तीसु । जो किरियाभावरुई सो खलु किरियारुई नाम ॥ ९५८ ॥ अणभिग्गहियकुदिट्ठी संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसुं ॥ ९५९ ॥ जो अत्थिकायधम्मं सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायव्वो ॥ ९६० ॥ आईपुढवीसु तिसु खय १ उवसम २ वेयगं ३ च सम्मत्तं । वेमाणियदेवाणं पणिंदितिरियाण एमेव ॥ ९६१ ॥ सेसाण नारयाणं तिरियत्थीणं च तिविहदेवाणं । नत्थि हु खइयं सम्मं अन्नेसिं चेव जीवाणं ॥ ९६२ ॥

एकविधं द्विविधं त्रिविधं चतुर्धा पञ्चविधं दशविधं सम्यक्त्वं भवतीति शेषः, तत्र एकविधं तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वं, एतच्चानुक्तमप्यविवक्षितोपाधिभेदत्वेन सामान्यरूपत्वादवसीयते इत्यस्यां गाथायां न विवृत्तं, द्विविधादि तु न ज्ञायते इत्युल्लेखमाह—'दव्वाइ' इत्यादि, द्विविधं द्रव्यादिभेदतः, तत्र च 'दव्व'त्ति सूचामात्रत्वाद् द्रव्यतो भावतश्च, द्रव्यतो विशोधिविशेषेण विशुद्धिकृता मिथ्यात्वपुद्गला एव, भावतस्तु तदुपष्टम्भोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामः, आदिशब्दः प्रकारान्तरैरपि द्विविधत्वदर्शनार्थः, तेन नैश्च-

यिकव्यावहारिकभेदतः पौद्गलिकापौद्गलिकभेदतो नैसर्गिकाधिगमिकभेदतोऽपि च द्विविधमिति, तत्र यद्देशकालसंहननानुरूपं यथाशक्ति यथावत्संयमानुष्ठानरूपं मौनं—अविकलं मुनिवृत्तं तन्नैश्चयिकं सम्यक्त्वं, व्यावहारिकं तु सम्यक्त्वं न केवलमुपशमादिलिङ्गगम्यः शुभात्मपरिणामः किंतु सम्यक्त्वहेतुरपि अर्हच्छासनप्रीत्यादिः कारणे कार्योपचारात्सम्यक्त्वं, तदपि हि पारम्पर्येण शुद्धचेतसामपवर्गप्राप्तिहेतुर्भवतीति, उक्तं च—'जं मोणं तं सम्मं जं सम्मं तमिह होइ मोणं तु। निच्छयओ इयरस्स उ सम्मं सम्मत्तहेऊवि ॥ १ ॥' [ यन्मौनं तत्सम्यक्त्वं यत्सम्यक्त्वं तदिह भवति मौनमेव। निश्चयस्य इतरस्य तु सम्यक्त्वहेतुरपि सम्यक्त्वं ॥ १ ॥ ] व्यवहारनयमतमपि च प्रमाणं, तद्बलेनैव तीर्थप्रवृत्तेः, अन्यथा तदुच्छेदप्रसङ्गात्, तदुक्तं—'जइ जिणमयं पवज्जह ता मा ववहारनिच्छयं मुयह। ववहारनओच्छेए तित्थुच्छेओ जओऽवस्सं ॥ १ ॥'' [ यदि जिनमतं प्रतिपद्यसे तर्हि व्यवहारनिश्चयौ मा मुञ्च। व्यवहारनयोच्छेदे तीर्थोच्छेदो यतोऽवश्यं ॥ १ ॥ ] इति, तथा अपनीतमिथ्यास्वभावसम्यक्त्वपुञ्जगतपुद्गलवेदनस्वरूपं क्षायोपशमिकं पौद्गलिकं, सर्वथा मिथ्यात्वमिश्रसम्यक्त्वपुञ्जपुद्गलानां क्षयादुपशमाच्च जातं केवलजीवपरिणामरूपं क्षायिकमौपशमिकं चापौद्गलिकं, नैसर्गिकाधिगमिके पुनरग्रे वक्ष्येते, तथा 'त्रिविधं कारकादि' कारकरोचकदीपकभेदतः, 'उवसमभेएहिं व'त्ति वाशब्दः त्रैविध्यस्यैव प्रकारान्तरप्रदर्शनार्थः, बहुवचनं च गणार्थं, ततस्त्रिविधं चतुर्विधं पञ्चविधं दशविधं च सम्यक्त्वमुपशमादिभिर्भेदैर्भवतीति, इदमुक्तं भवति—औपशमिकक्षायिकक्षायोपशमिकभेदात् त्रिविधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनभेदाच्चतुर्विधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनवेदकभेदात्पञ्चविधं, एतदेव प्रत्येकं निसर्गाधिगमभेदाद्दशविधमिति, कथं पुनर्द्विविधादिभेदं सम्यक्त्वमित्याह—सम्यग्—अवैपरीत्येन आगमोक्तप्रकारेण, न तु स्वमतिपरिकल्पितभेदैरिति भावः ॥ ९४२ ॥ अथैनामेव गाथां स्फुटतरं व्याख्यानयन्नाह—एकविधं—एकप्रकारमुपाधिभेदाविवक्षया निर्भे-

दमित्यर्थः, 'सम्यग् रुचिः' सम्यग्—अज्ञानसंशयविपर्यासनिरासेन इदमेव तत्त्वमिति निश्चयपूर्विका जिनोदितजीवादिपदार्थेष्वभिप्रीतिः,
जिनोक्तानुसारितया तत्त्वार्थश्रद्धानरूपमेकविधं सम्यक्त्वमिति भावः, तथा निसर्गाधिगमाभ्यां तत्—सम्यक्त्वं भवेद् द्विविधं, तत्र नि-
सर्गः—स्वभावो गुरूपदेशादिनिरपेक्षस्तस्मात्सम्यक्त्वं भवति, यथा नारकादीनां, अधिगमो—गुरूपदेशादिस्तस्मात्सम्यक्त्वं भवतीति प्रती-
तमेव, अयमभिप्रायः—तीर्थकराद्युपदेशदानमन्तरेण स्वत एव जन्तोर्यत्कर्मोपशमादिभ्यो जायते तन्निसर्गसम्यक्त्वं, यत्पुनस्तीर्थकराद्युप-
देशजिनप्रतिमादर्शनादिबाह्यनिमित्तोपष्टम्भतः कर्मोपशमादिना प्रादुर्भवति तदधिगमसम्यक्त्वमिति, तथा त्रिविधं तत्—सम्यक्त्वं क्षायि-
कादि, अथवा त्रिविधं कारकादि ॥ ९४३ ॥ तत्र क्षायिकक्षायोपशमिके व्याख्यातुमाह—सम्यक्त्वमिश्रमिथ्यात्वकर्मक्षयाद्भणन्ति तीर्थ-
करगणधराः क्षायिकं सम्यक्त्वं, त्रिविधस्यापि दर्शनमोहनीयस्य क्षयेण—निर्मूलोच्छेदेन निर्वृत्तं क्षायिकं, अयमर्थः—अनन्तानुबन्धिकषा-
यचतुष्टयक्षयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधेऽपि दर्शनमोहनीयकर्मणि सर्वथा क्षीणे क्षायिकं सम्यक्त्वं भवतीति, तथा
मिथ्यात्वस्य—मिथ्यात्वमोहनीयकर्मण उदीर्णस्य क्षयादनुदीर्णस्य चोपशमात्सम्यक्त्वरूपतापत्तिलक्षणाद्विष्कम्भितोदयस्वरूपाच्च क्षायोपश-
मिकं सम्यक्त्वं व्यपदिशन्ति—कथयन्ति, इदमुक्तं भवति—यदुदीर्णं—उदयमागतं मिथ्यात्वं तद्विपाकोदयेन वेदितत्वात् क्षीणं—निर्जीर्णं,
यच्च शेषं सत्तायामनुदयागतं वर्तते तदुपशान्तं, उपशान्तं नाम विष्कम्भितोदयमपनीतमिथ्यास्वभावं च, मिथ्यात्वमिश्रपुञ्जावाश्रित्य
विष्कम्भितोदयं शुद्धपुञ्जमाश्रित्य पुनरपनीतमिथ्यात्वस्वभावमित्यर्थः, तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयेण अनुदीर्णस्य चोपशमेन निर्वृत्त-
त्वात् त्रुटितरसं शुद्धपुञ्जलक्षणं मिथ्यात्वमपि क्षायोपशमिकं सम्यक्त्वमुच्यते, शोधिता हि मिथ्यात्वपुद्गला अतिस्वच्छवस्त्रमिव दृष्टेर्य-
थाऽवस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वस्यावारका न भवन्ति, अतस्तेऽप्युपचारतः सम्यक्त्वमुच्यन्ते इति ॥ ९४४ ॥ अथौपश-

मिकं सम्यक्त्वमाह—मिथ्यात्वस्य—मिथ्यात्वमोहनीयस्य कर्मणो य उपशमो—विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य भस्मच्छन्नवह्निव- द्विष्कम्भणं तस्मात् 'उवसमयं'ति प्राकृतशैल्या औपशमिकं तत्सम्यक्त्वं भणन्ति समयज्ञाः—सिद्धान्तवेदिनः, तत्पुनरुपशमश्रेण्यामौप- पशमिकीं श्रेणिमनुप्रविष्टस्य सतो जन्तोरनन्तानुबन्धिषु दर्शनत्रिके चोपशमं नीते भवति, किमुपशमश्रेणिगतस्यैवैतद्भवति ?, नेत्याह— 'आइमे'त्यादि, आदिमः—प्रथमोऽनादिमिथ्यादृष्टेः सतो जीवस्य योऽसौ सम्यक्त्वलाभस्तस्मिन् वा औपशमिकं सम्यक्त्वं भवति । इह खल्वनादिमिथ्यादृष्टिः कश्चिदायुर्वर्जसप्तकर्मप्रकृतिष्वनाभोगनिर्वर्तितेन यथाप्रवृत्तिकरणेन क्षपयित्वा प्रत्येकं पल्योपमासङ्ख्येयभागन्यूनसा- गरोपमकोटीकोटिप्रमाणतां नीतासु अपूर्वकरणेन 'भन्नइ करणं तु परिणामो' इतिवचनादध्यवसायविशेषरूपेणातिप्रकृष्टघनरागद्वेषपरि- णामजनितस्य वज्राश्मवद् दुर्भेदस्य कर्मग्रन्थेर्भेदं विधायानिवृत्तिकरणं प्रविशति, तत्र च प्रतिसमयं विशुद्ध्यमानस्तान्येव कर्माणि निर- न्तरं क्षपयन् उदीर्णं मिथ्यात्वं वेदयन् अनुदीर्णस्य तु तस्योपशमलक्षणमन्तर्मुहूर्त्तकालमानमन्तरकरणं प्रविशति, तस्य चायं विधिः— यदुत अन्तरकरणस्थितेर्मिथ्यादलिकं गृहीत्वा प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, एवं च प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणद- लिकं सकलमपि क्षीयते, अन्तर्मुहूर्तेन च कालेन सकलदलिकक्षयः, ततस्तस्मिन्ननिवृत्तिकरणेऽवसिते उदीर्णे च मिथ्यात्वेऽनुभवतः क्षीणे अनुदीर्णे च परिणामविशुद्धिविशेषतो विष्कम्भितोदये ऊषरदेशकल्पं मिथ्यात्वविवरमासाद्य औपशमिकं सम्यक्त्वमधिगच्छति, तस्मिंश्च स्थितः सत्तायां वर्तमानं मिथ्यात्वं विशोध्य पुञ्जत्रयरूपेणावश्यं व्यवस्थापयति, यथा हि कश्चिन्मदनकोद्रवानौषधवशेन शोधयति, ते च शोध्यमानाः केचिच्छुद्ध्यन्ति केचिदर्धशुद्धा एव भवन्ति केचित्तेष्वपि सर्वथैव न शुद्ध्यन्ति, एवं जीवोऽप्यध्यवसायविशेषतो जिनवचन- रुचिप्रतिबन्धकदुष्टरसोच्छेदकरणेन मिथ्यात्वं शोधयति, तदपि शोध्यमानं शुद्धमर्धशुद्धमशुद्धं च त्रिधा जायते, तत्र शुद्धपुञ्जः सर्वज्ञधर्मे

सम्यक्प्रतिपत्त्यप्रतिबन्धकत्वेनोपचारात् सम्यक्त्वपुञ्ज उच्यते, द्वितीयस्तु अर्धशुद्ध इति मिश्रपुञ्ज उच्यते, तदुदये तु जिनधर्मे औदासीन्यमेव भवति, अशुद्धस्त्वर्हदादिषु मिथ्याप्रतिपत्तिजनकत्वान्मिथ्यात्वपुञ्जोऽभिधीयते, तदेवमन्तरकरणेन अन्तर्मुहूर्तकालमौपशमिकसम्यक्त्वेऽनुभूते तदनन्तरं नियमादसौ क्षायोपशमिकसम्यग्दृष्टिर्मिश्रो मिथ्यादृष्टिर्वा भवतीत्येष कार्मग्रन्थिकाभिप्रायः, सैद्धान्तिकाः पुनरयमनादिमिथ्यादृष्टिः कोऽपि ग्रन्थिभेदं विधाय तथाविधतीव्रपरिणामोपेतत्वेनापूर्वकरणमुपारूढः सन्मिथ्यात्वं त्रिपुञ्जीकरोति 'अपुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया ।' इति वचनात्, ततोऽनिवृत्तिकरणसामर्थ्याच्छुद्धपुञ्जपुद्गलान् वेदयन्नौपशमिकं सम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति, अन्यस्तु यथाप्रवृत्त्यादिकरणत्रयक्रमेणान्तरकरणे औपशमिकं सम्यक्त्वं लभते, पुंजत्रयं त्वसौ न करोत्येव, ततश्चौपशमिकसम्यक्त्वाच्युतोऽवश्यं मिथ्यात्वमेव गच्छतीति । नन्वौपशमिकसम्यक्त्वस्य क्षायोपशमिकसम्यक्त्वात्को विशेषः?, उभयत्रापि ह्यविशेषेणोदितं मिथ्यात्वं क्षीणं अनुदितं चोपशान्तमिति, उच्यते, अस्ति विशेषः, क्षायोपशमिके हि सम्यक्त्वे मिथ्यात्वस्य प्रदेशानुभवोऽस्ति, न त्वौपशमिके सम्यक्त्वे इति, अन्ये तु व्याचक्षते—श्रेणिमध्यवर्तिन्येवौपशमिके सम्यक्त्वे प्रदेशानुभवो नास्ति, न तु द्वितीये, तथापि तत्र सम्यक्त्वाणवनुभवाभाव एव विशेष इति ॥ १४५ ॥ इदानीं कारकरोचकदीपकसम्यक्त्वानि क्रमेणाह—विहितस्य—आगमोक्तस्य यदनुष्ठानं—करणं तदिह—सम्यक्त्वविचारे कारकं सम्यक्त्वं, अयमर्थः—यदनुष्ठानं यथा सूत्रे भणितं तद् यस्मिन् सम्यक्त्वे परमविशुद्धिरूपे सति देशकालसंहननानुरूपशक्त्यनिगूहनेन तथैव करोति तत् सदनुष्ठानं कारयतीति कारकमुच्यते, एतच्च साधूनां द्रष्टव्यं, तथा श्रद्धानमात्रं रोचकं सम्यक्त्वं, इदमुक्तं भवति—यत्सम्यक्त्वं सदनुष्ठानं रोचयत्येव केवलं न पुनः कारयति तद्रोचयति तथाविधविशुद्धिभावाद्विहितानुष्ठानं इति रोचकं, यथा श्रेणिकादीनां, तथा यः स्वयमिह मिथ्यादृष्टिरभव्यो वा कश्चिदङ्गार-

मर्दकादिवत् अथ च धर्मकथया मातृस्थानानुष्ठानेनातिशयेन वा केनचित्तत्त्वानि जिनोक्तानि दीपयति—परस्य प्रकाशयति यस्मात्तस्मा-
त्तत्सम्यक्त्वं दीपकमुच्यते, ननु स्वयं मिथ्यादृष्टिरथ च तस्य सम्यक्त्वमिति कथमुच्यते ? विरोधात्, उच्यते, मिथ्यादृष्टेरपि सतस्तस्य यः
परिणामविशेषः स खलु प्रतिपत्तॄणां सम्यक्त्वस्य कारणं, ततः कारणे कार्योपचारात् सम्यक्त्वमित्युच्यते, यथाऽऽयुर्घृतमित्यदोषः ॥९४६॥
अथ चतुर्विधं सम्यक्त्वमाह—'खइये'त्यादि, तदेव क्षायिकादित्रिविधं सम्यक्त्वं सास्वादनसहितं चतुर्विधं विज्ञेयं, तत्पुनः सास्वादनमनन्तानुब-
न्धिकषायोदयेन सम्यक्त्वस्यौपशमिकाख्यस्य भ्रंशे—ह्रासे मिथ्यात्वाप्राप्तिरूपमवसेयं, इयमत्र भावना—इहान्तरकरणे औपशमिकसम्यक्त्वा-
द्धायां जघन्यतः समयशेषायामुत्कृष्टतस्तु षडावलिकाशेषायां वर्तमानस्य कस्यचिदनन्तानुबन्धिकषायोदयः सम्पद्यते, ततस्तेन कषायोदये-
नौपशमिकसम्यक्त्वाच्च्यवमानस्य मिथ्यात्वमद्याप्यप्राप्नुवतोऽत्रान्तरे जघन्यतः समयमुत्कृष्टतस्तु षडावलिकाः सास्वादनसम्यक्त्वं भवति,
परतस्त्वसौ नियमेन मिथ्यात्वोदयान्मिथ्यादृष्टिर्भवतीति ॥९४७॥ सम्प्रति पञ्चविधं सम्यक्त्वमाह—'वेयये'त्यादि, एतदेव पूर्वोक्तं चतुर्विधं
सम्यक्त्वं वेदकसम्यक्त्वसंयुक्तं पुनः पञ्चधा—पञ्चविधं विनिर्दिष्टं—विशेषतः कथितं वीतरागैः, तत्र वेदकसम्यक्त्वं सम्यक्त्वपुञ्जस्य बहुत-
रक्षपितस्य चरमपुद्गलानां वेदनकाले—ग्राससमये भवति, वेदयति—अनुभवति सम्यक्त्वपुद्गलान् इति वेदकः—अनुभविता, तदनर्थान्तरभूत-
त्वात् सम्यक्त्वमपि वेदकं, यथा आह्रियत इत्याहारकं तथा वेद्यत इति वेदकं, इदमत्र तात्पर्यम्—क्षपकश्रेणिं प्रतिपन्नस्यानन्तानुबन्धि-
कषायचतुष्टयमपि क्षपयित्वा मिथ्यात्वमिश्रपुञ्जेषु सर्वथा क्षपितेषु सम्यक्त्वपुञ्जमप्युदीर्योदीर्यानुभवेन निर्जरयतो निष्ठितोदीरणीयस्य
चरमग्रासेऽवतिष्ठमानेऽद्यापि सम्यक्त्वपुञ्जपुद्गलानां कियतामपि वेद्यमानत्वाद्वेदकं सम्यक्त्वमुपजायते इति । अत्राह—नन्वेवं सति क्षायो-
पशमिकेन सहास्य को विशेषः ?, सम्यक्त्वपुञ्जपुद्गलानुभवस्योभयत्रापि समानत्वात्, सत्यं, किन्त्वेतदशेषोदितपुद्गलानुभूतिमतः प्रोक्तं,

इतरस्तूदितानुदितपुद्गलस्यैतन्मात्रकृतो विशेषः, परमार्थतस्तु क्षायोपशमिकमेवेदं, चरमग्रासशेषाणां पुद्गलानां क्षयाच्चरमग्रासवर्तिनां तु मिथ्या-
स्वभावापगमलक्षणस्योपशमस्य सद्भावादिति ॥९४८॥ अथ दशविधं सम्यक्त्वमाह—'एय'मित्यादि, एतदेवानन्तरोदितं पञ्चविधं सम्यक्त्वं
निसर्गाधिगमभेदाभ्यां दशधा भवति, क्षायिकक्षायोपशमिकऔपशमिकसास्वादनवेदकानां प्रत्येकं निसर्गतोऽधिगमतश्च जायमानत्वाद्दशविध-
त्वमित्यर्थः, अथवेति प्रकारान्तरोपदर्शनार्थः निसर्गरुचिरुपदेशरुचिरित्यादिरूपतया यदागमे—प्रज्ञापनादौ प्रतिपादितं तेन च दशविधत्व-
मवगन्तव्यम् ॥९४९॥ तदेवाह—'निसग्गु'इत्यादि, अत्र रुचिशब्दः प्रत्येकं योज्यते ततो निसर्गरुचिरुपदेशरुचिरिति द्रष्टव्यम्, अत्र निसर्गः—
स्वभावस्तेन रुचिः—जिनप्रणीततत्त्वाभिलापरूपा यस्य स निसर्गरुचिः १ उपदेशो—गुर्वादिभिर्वस्तुतत्त्वकथनं तेन रुचिः—उक्तस्वरूपा यस्य स
उपदेशरुचिः २ आज्ञा—सर्वज्ञवचनात्मिका तस्यां रुचिः—अभिलापो यस्य स आज्ञारुचिः ३ 'सुत्तबीयरुइमेव'त्ति अत्रापि रुचिशब्दः
प्रत्येकमभिसम्बध्यते, सूत्रं—आचाराद्यङ्गप्रविष्टं अङ्गबाह्यं चावश्यकदशवैकालिकादि तेन रुचिर्यस्य स सूत्ररुचिः ४ बीजमिव बीजं यदे-
कमप्यनेकार्थप्रबोधोत्पादकं वचः तेन रुचिर्यस्य स बीजरुचिः ५, अनयोश्च पदयोः समाहारद्वन्द्वः तेन नपुंसकनिर्देशः, एवेति समुच्चये,
'अहिगमवित्थाररुइ'त्ति अत्रापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धः, ततोऽधिगमरुचिर्विस्ताररुचिश्च, तत्राधिगमो—विशिष्टं परिज्ञानं तेन
रुचिर्यस्यासावधिगमरुचिः ६ विस्तारो—व्यासः सकलद्वादशाङ्गस्य नयैः पर्यालोचनमिति भावः तेनोपबृंहिता रुचिर्यस्य स विस्ताररुचिः ७
'किरियासंखेवधम्मरुइ'त्ति रुचिशब्दस्यात्रापि प्रत्येकमभिसम्बन्धात् क्रियारुचिः सङ्क्षेपरुचिर्धर्मरुचिरिति द्रष्टव्यं, तत्र क्रिया—सम्य-
क्संयमानुष्ठानं तत्र रुचिर्यस्य स क्रियारुचिः ८ सङ्क्षेपः—सङ्ग्रहस्तत्र रुचिर्यस्य विस्तरार्थापरिज्ञानात् स सङ्क्षेपरुचिः ९ धर्मे—अस्तिकायधर्मे
श्रुतधर्मादौ वा रुचिर्यस्य स धर्मरुचिः, यच्चेह सम्यक्त्वस्य जीवानन्यत्वेनाभिधानं तद्गुणगुणिनोः कथञ्चिदनन्यत्वख्यापनार्थमिति गाथा-

सङ्क्षेपार्थः ॥९५०॥ न्यासार्थं तु स्वत एव सूत्रकृदाह–'जो'इत्यादि, यो जिनदृष्टान्–तीर्थकरोपलब्धान् भावान्–जीवादिपदार्थांश्चतुर्विधान्–
द्रव्यक्षेत्रकालभावभेदतो नामस्थापनाद्रव्यभावभेदतो वा चतुष्प्रकारान् स्वयमेव–परोपदेशनिरपेक्षं जातिस्मरणप्रतिभादिरूपया स्वमत्यैव
श्रद्दधाति, केनोल्लेखेन श्रद्दधाति ? तत आह–एवमेवैतत् जीवादि यथा जिनैर्दृष्टं नान्यथेति, चः समुच्चये, एष निसर्गरुचिर्ज्ञातव्यः ॥९५१॥
उपदेशरुचिमाह–'एए'इत्यादि, एतांश्चैव अनन्तरोक्तान् तुः पूरणे भावान्–जीवादीनुपदिष्टान्–कथितान् परेण–अन्येन श्रद्दधाति–तथेति
प्रतिपद्यते, कीदृशेन परेण ?–छादयतीति छद्म–घातिकर्मचतुष्टयं तत्र तिष्ठतीति छद्मस्थः–अनुत्पन्नकेवलस्तेन जयति रागादीनिति जिनस्तेन
च–उत्पन्नकेवलज्ञानेन तीर्थकृदादिना, छद्मस्थस्य तु प्रागुपन्यासस्तत्पूर्वकत्वाज्जिनस्य प्राचुर्येण वा तथाविधोपदेष्टॄणां, स ईदृक्किमित्याह–उप-
देशरुचिरिति ज्ञातव्यः ॥९५२॥ आज्ञारुचिमाह–'रागो'इत्यादि, रागः–अभिष्वङ्गो द्वेषः–अप्रीतिः मोहः–शेषमोहनीयप्रकृतयः अज्ञानं–
मिथ्याज्ञानरूपं यस्यापगतं–नष्टं भवति, सर्वथा चास्यैतदपगमासम्भवाद्देशत इति गम्यते, अपगतशब्दस्य लिङ्गविपरिणामतो रागादिभिः
प्रत्येकमभिसम्बन्धः, एतदपगमाच्च 'आणाए'त्ति अवधारणफलत्वाद्वाक्यस्य आज्ञयैव केवलया तीर्थकरादिसम्बन्धिन्या रोचमानः–क्वचिदपि
कुग्रहाभावात् प्रवचनोक्तमर्थजातं तथेति प्रतिपद्यमानो माषतुषादिवत् स खलु–निश्चितमाज्ञारुचिः नामेत्यभ्युपगमे ततश्चाज्ञारुचिरित्यभ्यु-
पगन्तव्यः ॥९५३॥ सूत्ररुचिमाह–'जो सुत्ते'इत्यादि, यः सूत्रं आगममधीयानः पठन् श्रुतेनेति–सूत्रेण तेनैवाधीयमानेन अङ्गेन–अङ्गप्रविष्टे-
नाचारादिना बाह्येन च–अङ्गबाह्येन आवश्यकादिना सम्यक्त्वमवगाहते–प्राप्नोति तुशब्दस्याधिकार्थसूचकत्वात्प्रसन्नप्रसन्नतराध्यवसायश्च
भवति स गोविन्दवाचकवत् सूत्ररुचिरिति ज्ञातव्यः ॥९५४॥ बीजरुचिमाह–'एगे'त्यादि, एकेन पदेन प्रक्रमाज्जीवादिना अवगतेन अनेकानि
पदानि प्राकृतत्वेन विभक्तिव्यत्ययादनेकेषु–बहुषु पदेषु–जीवादिषु यः प्रसरति–व्यापितया गच्छति सम्यक्त्वमित्यनेन रुचिरत्रोपलक्षिता

ततो धर्मधर्मिणोरभेदोपचारात् आत्मा सम्यक्त्ववान् सन् प्रसरति रुचिरूपेण प्रसरतीत्यर्थः, यदा तु 'पयरई उ सम्मत्ते' इति पाठस्तदा एकपदविषये सम्यक्त्वे—रुचौ सति अनेकेषु पदेषु प्रचरति—प्रकर्षेण व्यापितया गच्छति रुच्यात्मकत्वेनैवेत्यक्षरार्थः, भावार्थस्तु स एवेति, तुशब्दोऽवधारणे, प्रसरत्येव, कथमित्याह—उदक इव तैलविन्दुः, किमुक्तं भवति ?—यथा उदकैकदेशगतोऽपि तैलविन्दुः समस्तमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमवशादशेषेषु तत्त्वेषु रुचिमान् भवति, स एवंविधो वीजरुचिरिति ज्ञातव्यः, यथा हि बीजं क्रमेणानेकवीजानां जनकं एवमस्यापि रुचिविषयो भेदतो भिन्नानां रुच्यन्तराणामिति ॥१५५॥ अधिगमरुचिमाह—'सो'इत्यादि, यस्य श्रुतज्ञानमर्थतो दृष्टं, किमुक्तं भवति ?—येन श्रुतज्ञानस्यार्थोऽधिगतो भवति, किं पुनस्तत् श्रुतज्ञानमित्याह—एकादशाङ्गानि—आचारादीनि प्रकीर्णकानि—उत्तराध्ययननन्द्यध्ययनादीनि दृष्टिवादः—परिकर्मसूत्रादिः, अङ्गत्वेऽपि पृथगुपादानमस्य प्राधान्यख्यापनार्थं, चशब्दादुपाङ्गानि चौपपातिकादीनि, स भवत्यधिगमरुचिः ॥ १५६ ॥ विस्ताररुचिमाह—'दव्वाण'मित्यादि, द्रव्याणां—धर्मास्तिकायादीनामशेषाणामपि सर्वे भावाः—पर्यायाः सर्वप्रमाणैः—अशेषैः प्रत्यक्षादिभिर्यस्योपलब्धाः—यस्य प्रमाणस्य यत्र व्यापारस्तेनैव प्रमाणेन प्रतीताः 'सव्वाहिं'ति सर्वैश्च नयविधिभिः—नैगमादिनयप्रकारैः, अमुं भावमग्रं अमुं चायं नयभेदमि(द इ)च्छतीति स विस्ताररुचिरिति ज्ञातव्यः, सर्ववस्तुपर्यायप्रपञ्चा-वगमेन तस्य रुचेरतिविमलरूपतया भावात् ॥ १५७ ॥ क्रियारुचिमाह—'नाणे'इत्यादि, ज्ञाने तथा दर्शनं च चारित्रं च दर्शनचारित्रं समा-हारद्वन्द्वस्तस्मिन् तथा तपसि विनये च, तथा सर्वासु समितिषु—ईर्यासमित्यादिषु सर्वासु च गुप्तिषु—मनोगुप्तिप्रभृतिषु 'सच्च'त्ति पाठे तु सत्या—निरुपचरितास्ताश्च ताः समितिगुप्तयश्च, यद्वा सत्यं च—अविसंवादनयोगाद्यात्मकं समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु यः क्रिया-भावरुचिः, किमुक्तं भवति ?—यस्य भावतो ज्ञानाद्याचारानुष्ठाने रुचिरस्ति स खलु क्रियारुचिर्नाम, इह च चारित्रान्तर्गतत्वेऽपि तपः-

प्रभृतीनां पुनरुपादानं विशेषत एषां मुक्त्यङ्गत्वख्यापनार्थं ॥ ९५८ ॥ सङ्क्षेपरुचिमाह—'अणे'त्यादि, अनभिगृहीता—अनङ्गीकृता कुत्सिता दृष्टिः—सौगतादिदर्शनं येन स तथा, अविशारदः—अकुशलः प्रवचने—जिनप्रणीते शेषेषु च—कपिलादिप्रणीतेषु प्रवचनेषु अनभिगृहीतो—न विद्यतेऽभीत्याभिमुख्येनोपादेयतया गृहीतं—ग्रहणं ज्ञानमस्येत्यनभिगृहीतः, पूर्वमनभिगृहीतकुदृष्टिरित्यनेन दर्शनान्तरपरिग्रहः प्रतिषिद्धः अनेन तु परदर्शनपरिज्ञानमात्रमपि निषिद्धमिति विशेषः, इदमत्र तात्पर्यं—उक्तविशेषणो यः सङ्क्षेपेणैव चिलातीपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स सङ्क्षेपरुचिरुच्यते इति ॥ ९५९ ॥ धर्मरुचिमाह—'जो'इत्यादि, यः खलु जीवोऽस्तिकायानां—धर्मास्तिकायादीनां धर्मं—गत्युपष्टम्भकत्वादिरूपं स्वभावं श्रुतधर्मम्—अङ्गप्रविष्टाद्यागमस्वरूपं चारित्रधर्मं च—सामायिकादिकं जिनाभिहितं—तीर्थकृदुक्तं श्रद्धाति—तथेति प्रतिपद्यते स धर्मरुचिरिति ज्ञातव्यः, इह च शिष्यमतिव्युत्पादनार्थमित्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानं, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा कचित्केषाञ्चिदन्तर्भावोऽस्त्येवेति ॥ ९६० ॥ अथ पूर्वोक्तान्येव क्षायिकादीनि त्रीणि सम्यक्त्वानि प्रसङ्गतो नारकादिजीवेषु चिन्तयन्नाह—'आई'त्यादिगाथाद्वयं, आद्यासु तिसृषु पृथिवीषु—रत्नप्रभाशर्कराप्रभावालुकाप्रभासु 'खयोवसमवेयगं'ति सूचकत्वात् सूत्रस्य क्षायिकमौपशमिकं वेदकं च सम्यक्त्वं भवति, इह च वेद्यन्ते—अनुभूयन्ते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदकं—क्षायोपशमिकं सम्यक्त्वमुच्यते, औपशमिकक्षायिकसम्यक्त्वयोः पुद्गलवेदनस्य सर्वथैवाभावात्, यत्पुनः क्षप्यमाणसम्यक्त्वपुञ्जपुद्गलचरमग्रासलक्षणं वेदकसम्यक्त्वं पूर्वमुक्तं तदिह पृथग् न विवक्षितं, पुद्गलवेदनस्य समानत्वेन क्षायोपशमिकसम्यक्त्व एव तस्यान्तर्भावात्, ततोऽयमर्थः—आद्यनरकपृथिवीत्रयवर्तिनारकाणां क्षायिकौपशमिकक्षायोपशमिकानि त्रीण्यपि सम्यक्त्वानि सम्भवन्तीति, तथाहि—योऽनादिमिथ्यादृष्टिर्नारकः प्रथमं सम्यक्त्वमवाप्नोति तस्यान्तरकरणकालेऽन्तर्मुहूर्तमौपशमिकं सम्यक्त्वं भवति, औपशमिकसम्यक्त्वाच्चानन्तरं

शुद्धसम्यक्त्वपुञ्जपुद्गलान् वेदयतस्तस्यापि क्षायोपशमिकं सम्यक्त्वमवाप्यते, मनुष्यतिर्यग्भ्यो वा यः क्षायोपशमिकसम्यग्दृष्टिर्नारकेषूत्पद्यते तस्यैतत्पारभविकं लभ्यते, विराधितसम्यक्त्वो हि षष्ठीपृथिवीं यावत् गृहीतेनापि सम्यक्त्वेन सैद्धान्तिकमतेन कश्चिदुत्पद्यते, कार्मग्रन्थिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्मनुष्यो वा वान्तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते न गृहीतेनेति, यदा पुनः कश्चिन्मनुष्यो नारकयोग्यमायुर्बन्धं विधाय पश्चात्क्षपकश्रेणिमारभते बद्धायुष्कत्वाच्च तां न समापयति केवलं दर्शनसप्तकं क्षपयित्वा क्षायिकं सम्यक्त्वमवाप्नोति, ततश्च मनुष्यायुस्त्रुटिसमये मृत्वा नारकेषूत्पद्यते तदा आद्यपृथिवीत्रयनारकाणां पारभविकं क्षायिकं सम्यक्त्वमवाप्यते, न तु ताद्भविकं, मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वादिति, तथा वैमानिकदेवानां 'पणिंदितिरियाण'त्ति व्याख्यानतो विशेषावगतौ पञ्चेन्द्रियाणां मनुष्याणां तिरश्चां वा सङ्ख्येयवर्षायुषामेवमेव—पूर्वोक्तमेव, त्रीण्यपि सम्यक्त्वानि भवन्तीत्यर्थः ॥ तत्र वैमानिकदेवानामौपशमिकं क्षायिकं च नारकवदेव, क्षायोपशमिकं त्वौपशमिकसम्यक्त्वानन्तरकालभावि ताद्भविकं, तिर्यङ् मनुष्यो वा यः क्षायोपशमिकसम्यग्दृष्टिः सन् वैमानिकेषूत्पद्यते तस्यैतत्पारभविकं च लभ्यते, मनुष्यास्तु द्विविधाः सङ्ख्येयवर्षायुषोऽसङ्ख्येयवर्षायुषश्च, तत्र सङ्ख्येयवर्षायुषां मनुष्याणामौपशमिकं सम्यक्त्वमनन्तरोक्तन्यायेन प्रथमसम्यक्त्वलाभकाले भवत्युपशमश्रेण्यां वा, तदनन्तरकालादिभावि तु क्षायोपशमिकं ताद्भविकं, देवादीनां तु क्षायोपशमिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं क्षायोपशमिकं, क्षायिकं तु क्षपकश्रेण्यां ताद्भविकं, नारकदेवानां क्षायिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं तथैव, असङ्ख्येयवर्षायुषां पुनर्मनुष्याणामौपशमिकं क्षायिकं च नारकवदेव वाच्यं, क्षायोपशमिकं तु तदनन्तरकालादिभावि ताद्भविकं तथैव, तिर्यङ्मनुष्यास्तु क्षायोपशमिकसम्यक्त्वयुक्ता वैमानिकेष्वेव जायन्ते नान्यत्र, ये तु मिथ्यादृक्ष्ववस्थायां बद्धायुष्कत्वादेषूत्पद्यन्ते ते अवश्यं मरणसमये मिथ्यात्वं गत्वैवोत्पद्यन्ते इति पारभविकं क्षायोपश-

मिकं सम्यक्त्वमेषां न लभ्यते इति कार्मग्रन्थिकाः, सैद्धान्तिकास्तु मन्यन्ते—क्षायोपशमिकसम्यक्त्वसंयुक्ता अपि बद्धायुष्का अमी केचिद्देतेषूत्पद्यन्ते इति पारभविकमपि क्षायोपशमिकं सम्यक्त्वममीषां लभ्यते, असङ्ख्येयवर्षायुष्कतिरश्चां पुनस्त्रीण्यपि सम्यक्त्वान्यसङ्ख्येयवर्षायुष्कमनुष्यवद्व्याच्यानि, शेषाणामाद्यपृथिवीत्रयव्यतिरिक्तानां नारकाणां पङ्कप्रभाद्यधस्तनपृथिवीचतुष्टयनारकाणामित्यर्थः 'तिरियत्थीणं च'त्ति असङ्ख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिरश्चां तत् स्त्रीणां च, तथा त्रिविधदेवानां—भवनपतिव्यन्तरज्योतिष्कलक्षणानां नास्त्येव क्षायिकं सम्यक्त्वं, क्षायिकं हि सम्यक्त्वमेतेषु ताद्भविकं तावन्न भवति, सङ्ख्येयवर्षायुष्कमनुष्यस्यैव क्षायिकसम्यक्त्वारम्भकत्वात्, पारभविकमपि न भवति क्षायिकसम्यग्दृष्टेरेतेष्वनुत्पत्तेः, औपशमिकक्षायोपशमिके तु भवत इति, 'सम्मं अन्नेसिं चेव जीवाणं'ति अन्येषां पुनर्जीवानां सम्यक्त्वमेव नास्ति चः पुनरर्थे, एवोऽवधारणे भिन्नक्रमः स च योजित एव, एतदुक्तं भवति—एकद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां तद्भवं परभवं वा अपेक्ष्य प्रस्तुतसम्यक्त्वत्रयमध्य एकमपि न सम्भवति, सास्वादनसम्यक्त्वं पुनर्वादरपृथिव्यम्बुवनस्पतिद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियेष्वपर्याप्तावस्थायां पारभविकं, पर्याप्तसंज्ञिपञ्चेन्द्रियेषु तु ताद्भविकमवाप्यते, सूक्ष्मैकेन्द्रियवादरतेजोवायुषु पुनः सम्यक्त्वलेशवतामप्युत्पादाभावात् सास्वादनं नास्तीत्येष कार्मग्रन्थिकाभिप्रायः, सूत्राभिप्रायेण तु पृथिव्याद्येकेन्द्रियाणां सास्वादनसम्यक्त्वं नास्ति, यदुक्तं प्रज्ञापनायां—"पुढविकाइयाणं पुच्छा, गोयमा ! पुढविकाइया नो सम्मदिट्ठी मिच्छादिट्ठी नो सम्मामिच्छदिट्ठी, एवं जाव वणप्फइकाइया" इति ॥ ९६१ ॥ ९६२ ॥ १४९ ॥ इदानीं 'कुलकोडीणं संखा जीवाणं'ति पञ्चाशदधिकशततमं द्वारमाह—

**बारस सत्त य तिन्नि य सत्त य कुलकोडिसयसहस्साइं । नेया पुढविदगागणिवाऊणं चेव परि-**

संखा ॥ ९६३ ॥ कुलकोडिसयसहस्सा सत्तट्ठ य नव य अट्ठवीसं च । वेइंदियतेइंदियचउरिंदियहरियकायाणं ॥ ९६४ ॥ अद्धत्तेरस बारस दस दस नव चेव सयसहस्साइं । जलयरपक्खिचउप्पयउरभुयसप्पाण कुलसंखा ॥ ९६५ ॥ छवीसा पणवीसा सुरनेरइयाण सयसहस्साइं । बारस य सयसहस्सा कुलकोडीणं मणुस्साणं ॥९६६॥ एगा कोडाकोडी सत्ताणउई भवे सयसहस्सा । पन्नासं च सहस्सा कुलकोडीणं मुणेयव्वा ॥ ९६७ ॥

'बारसे'त्यादिगाथापञ्चकम्, पृथिव्युदकाग्निवायूनामेव कुलान्याश्रित्य परिसङ्ख्या यथाक्रमं ज्ञेया, तद्यथा—द्वादश कुलकोटिशतसहस्राणि—लक्षाः पृथिवीकायिकानां सप्त उदकजीवानां त्रीण्यग्निकायिकानां वायूनां पुनः सप्तैव कुलकोटिशतसहस्राणि ॥९६३॥ 'कुले'त्यादि, अत्रापि यथासङ्ख्येन योजना, द्वीन्द्रियाणां सप्त कुलकोटिशतसहस्राणि अष्टौ त्रीन्द्रियाणां नव चतुरिन्द्रियाणां अष्टाविंशतिर्हरितकायिकानां—समस्तवनस्पतिकायिकानाम् ॥९६४॥ 'अद्धे'त्यादि, अत्रापि यथाक्रमं पदघटना, तत्र जले चरन्ति—पर्यटन्तीति जलचराः—मत्स्यमकरादयः तेषामर्धत्रयोदश कुलकोटिशतसहस्राणि, सार्धा द्वादश कुलकोटिलक्षा इत्यर्थः, पक्षिणां—केकिकाकादीनां द्वादश चतुष्पदानां—गजगर्दभादीनां दश उरःपरिसर्पाणां—भुजगादीनां दश भुजपरिसर्पाणां—गोधानकुलादीनां नव कुलकोटिलक्षाणि भवन्ति ॥९६५॥ 'छवीसे'त्यादि, सर्वेषां भवनपत्यादिसुराणां षड्विंशतिः कुलकोटिलक्षाणि नारकाणां तु पञ्चविंशतिः मनुष्याणां पुनर्द्वादश कुलकोटीनां शतसहस्राणि भवन्तीति ॥९६६॥ अथ पूर्वोक्तानामेव कुलानां सर्वसङ्ख्यामाह—'एगे'त्यादि, सर्वसङ्ख्यया एका कुलकोटीकोटिः सप्तनवतिः कुलकोटीनां शतसहस्राणि पञ्चाशच्च सहस्राः कुलकोटीनां ज्ञातव्याः ॥ ९६७॥ १५०॥ इदानीं 'जोणिलक्ख चुलसी'त्येकपञ्चाशदधिकशततमं द्वारमाह—

**पुढविदगअगणिमारुय एक्केके सत्त जोणिलक्खाओ । वणपत्तेयअणंते दस चउदस जोणिलक्खाओ ॥ ९६८ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसुं । तिरिएसु होंति चउरो चउदस लक्खा उ मणुएसु ॥ ९६९ ॥ समवन्नाइसमेया बहवोऽवि हु जोणिलक्खभेयाओ । सामन्ना घिप्पंतिह एक्कगजोणीइ गहणेणं ॥ ९७० ॥**

'यु मिश्रणे' इत्यस्य धातोर्युवन्ति—भवान्तरसङ्क्रमणकाले तैजसकार्मणशरीरवन्तः सन्तो जीवा औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धैर्मिश्रीभवन्त्यस्यामिति औणादिके निप्रत्यये योनिः जीवानामुत्पत्तिस्थानमित्यर्थः, तत्र पृथिव्युदकाग्निमरुतां सम्बन्धिन्येकैकस्मिन् समूहे सप्त सप्त योनिलक्षा भवन्ति, तद्यथा—सप्त पृथिवीनिकाये सप्तोदकनिकाये सप्ताग्निनिकाये सप्त वायुनिकाये, वनस्पतिनिकायो द्विविधस्तद्यथा—प्रत्येकोऽनन्तकायश्च, तत्र प्रत्येकवनस्पतिनिकाये दश योनिलक्षाः, अनन्तवनस्पतिनिकाये चतुर्दश लक्षाः, विकलेन्द्रियेषु—द्वीन्द्रियादिषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियरूपेषु प्रत्येकं द्वे द्वे योनिलक्षे, तद्यथा—द्वे योनिलक्षे द्वीन्द्रियेषु द्वे त्रीन्द्रियेषु द्वे चतुरिन्द्रियेषु, तथा चतस्रो योनिलक्षा नारकाणां, चतस्रो देवानां, तथा तिर्यक्षु पञ्चेन्द्रियेषु चतस्रो योनिलक्षाः, चतुर्दश योनिलक्षा मनुष्येषु, सर्वसङ्ख्यायाश्च मीलने चतुरशीतिर्योनिलक्षा भवन्तीति । न च वक्तव्यमनन्तानां जीवानामुत्पत्तिस्थानान्यप्यनन्तानि प्राप्नुवन्ति, यतो जीवानां सामान्याधारभूतो लोकोऽप्यसङ्ख्येयप्रदेशात्मक एव, विशेषाधाररूपाण्यपि नरकनिष्कुटदेवशयनीयप्रत्येकसाधारणजन्तुशरीराण्यसङ्ख्येयान्येव, ततो जीवानामानन्त्येऽपि कथमुत्पत्तिस्थानानामानन्त्यं?, भवन्तु तर्ह्यसङ्ख्येयानीति चेन्नैवं, यतो बहून्यपि तानि केवलिदृष्टेन केनचिद्वर्णादिना धर्मेण सदृशान्येकैव योनिरिष्यते, ततोऽनन्तानामपि जन्तूनां केवलिविवक्षितवर्णादिसादृश्यतः परस्परान्तर्भावचिन्तया चतुरशी-

तिलक्षसङ्ख्या एव योनयो भवन्ति, न हीनाधिकाः ॥ ९६८ ॥ ९६९ ॥ एतदेवाह—'समे'त्यादि, समैः—सदृशैर्वर्णादिभिः—वर्णगन्धरसस्पर्शैः समेता—युक्ताः समानवर्णगन्धरसस्पर्शा इत्यर्थः, बहवोऽपि—प्रभूता अपि योनिभेदलक्षा हुः—निश्चितमिह एकयोनिजातिग्रहणेन गृह्यन्ते, कुतः ?—सामान्यात्—व्यक्तिभेदतः प्राभूत्येऽपि समानवर्णगन्धरसस्पर्शसद्भावेन सादृश्यादिति । ननु योनिकुलयोः कः प्रतिविशेषः ?, उच्यते, योनिर्जीवानामुत्पत्तिस्थानं, यथा वृश्चिकादेर्गोमयादि, कुलानि तु योनिप्रभवानि, तथाहि—एकस्यामेव योनावनेकानि कुलानि भवन्ति, यथा छगणयोनौ कृमिकुलं कीटकुलं वृश्चिककुलमित्यादि, यदिवा तस्यैव वृश्चिकादेर्गोमयाद्येकयोन्युत्पन्नस्यापि कपिलरक्तादिवर्णभेदादनेकविधानि कुलानीति । अथ प्रज्ञापनाद्यनुसारेण योनिविषयोऽपरोऽपि विशेषः कश्चिदुपदर्श्यते—यथा शीतोष्णमिश्रभेदात् त्रिधा योनिः, तत्र नारकाणां शीता उष्णा च, आद्यासु तिसृषूष्णवेदनासु पृथिवीषु शीता, चतुर्थ्यां बहुषूपरितनेषु उष्णवेदनेषु नरकावासेषु शीता अधः स्तोकेषु शीतवेदनेषु उष्णा, पञ्चम्यां बहुषु शीतवेदनेषु उष्णा स्तोकेषु उष्णवेदनेषु शीता, षष्ठीसप्तम्योश्च शीतवेदनयोर्नारकाणां योनिरुष्णैव, शीतयोनिकानां हि उष्णवेदनाऽभ्यधिका भवति उष्णयोनिकानां तु शीतवेदना, नारकाणां च यथा वेदनाप्राचुर्यमापद्यते प्रायः सर्वं तथैव परिणमति, ततो वेदनाक्रमप्रातिकूल्येन योनिक्रमसम्भवः, सुराणां गर्भजतिर्यङ्नराणां च शीतोष्णरूपोभयस्वभावा योनिः, नैकान्तेन शीतं नाप्युष्णं किन्त्वनुष्णाशीतं तदुपपातक्षेत्रमिति भावः, पृथिव्यम्बुवायुवनस्पतिद्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यक्पञ्चेन्द्रियसम्मूर्च्छिममनुष्याणामुपपातस्थानानि शीतस्पर्शान्युष्णस्पर्शान्युभयस्पर्शान्यपि भवन्तीति तेषां त्रिधा योनिः, केषाञ्चिच्छीता केषाञ्चिदुष्णा केषाञ्चिन्मिश्रेति, तेजस्कायिकानामुष्णैव योनिः, उष्णस्पर्शपरिणत एव क्षेत्रे तेषामुत्पत्तेः । तथा सचित्ताचित्तमिश्रभेदादपि त्रिधा योनिः, तत्र नारकाणां देवानां चाचित्ता, तदुपपातक्षेत्रस्य केनापि जन्तुनाऽपरिगृहीतत्वेनाचेतनत्वात्, यद्यपि

च सूक्ष्मैकेन्द्रियाः सकललोकव्यापिनस्तथापि न तत्प्रदेशैरुपपातस्थानपुद्गला अन्योऽन्यानुगमेन सम्बद्धा इत्यचित्तैव तेषां योनिः, एक-द्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यग्नराणां त्रिविधाऽपि योनिः, जीवति गवादावुत्पद्यमानानां कृम्यादीनां सचित्ता अचित्ते काष्ठे समुत्पद्यमानानां घुणादीनामचित्ता सचित्ताचित्तेषु काष्ठगोक्षतादिषु घुणकृम्यादीनामेव मिश्रा, गर्भजतिर्यग्नराणां पुनर्मिश्रा, ये हि शुक्रमिश्राः शोणितपुद्गला योन्याऽऽत्मसात्कृतास्ते सचित्ताः, अन्ये त्वचित्ता इति । तथा संवृतविवृतोभयभेदादपि त्रिधा योनिः, तत्र नारकदेवैकेन्द्रियाणां संवृता योनिः, नारकोत्पत्तिस्थानानां निष्कुटानां संवृतगवाक्षकल्पत्वात् देवानां तु देवशयनीयेषु देवदूष्याभ्यन्तरे संवृतस्वरूपे समुत्पादात् एकेन्द्रियाणां तु योनेः स्पष्टमनुपलक्ष्यमाणत्वात्, द्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यग्नराणां विवृता योनिः, तेषामुत्पत्तिस्थानस्य जलाशयादेः स्पष्टमुपलक्ष्यमाणत्वात्, गर्भजतिर्यग्नराणां तूभयरूपा योनिः, गर्भस्य संवृतविवृतरूपत्वात्, गर्भो ह्यन्तः स्वरूपतो नोपलभ्यते बहिः पुनरुदरवृद्ध्यादिना समुपलक्ष्यते इति । अथ मनुष्ययोनिगतो विशेषः प्रतिपाद्यते—यथा मनुष्याणां योनिस्त्रिधा—कूर्मोन्नता शङ्खावर्ता वंशीपत्रा च, कूर्मपृष्ठमिवोन्नता कूर्मोन्नता शङ्खस्येवावर्तो यस्यां सा शङ्खावर्ता संयुक्तवंशीपत्रद्वयाकारा वंशीपत्रा, तत्र कूर्मोन्नतायां योनौ तीर्थकृच्चक्रवर्तिवासुदेवबलदेवा उत्पद्यन्ते, वंशीपत्रायां सामान्यमनुष्या जायन्ते, शङ्खावर्ता तु स्त्रीरत्नस्यैव भवति, तस्यां च गर्भ उत्पन्नोऽपि न निष्पत्तिं याति, प्रबलतमकामाग्निपरितापतो ध्वंसगमनादिति वृद्धप्रवादः ॥ ९७० ॥ १५१ ॥ सम्प्रति 'तिकालाईवितत्थ विवरणं'ति द्विपञ्चाशदधिकशततमं द्वारमाह—

**त्रैकाल्यं ३ द्रव्यषट्कं ६ नवपदसहितं जीवषट्कायलेश्याः ६, पञ्चान्ये चास्तिकाया ५ व्रत ५ समिति ५ गति ५ ज्ञान ५ चारित्र ५ भेदाः । इत्येते मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः,**

प्रत्येति श्रद्धधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ ९७१ ॥ एयस्स विवरणमिणं तिकालमईयवट्टमाणेहिं । होइ भविस्सजुएहिं दव्वच्छक्कं पुणो एयं ॥ ९७२ ॥ धम्मत्थिकायदव्वं १ दव्वमहम्मत्थिकायनामं २ च । आगास ३ काल ४ पोग्गल ५ जीवदव्वसरूवं च ६ ॥ ९७३ ॥ जीवा १ जीवा २ पुन्नं ३ पावा ४ऽऽसव ५ संवरो य ६ निज्जरणा ७ । बंधो ८ मोक्खो ९ य इमाइं नव पयाइं जिणमयम्मि ॥ ९७४ ॥ जीवं छक्कं इग १ बि २ ति ३ चउ ४ पणिंदिय ५ अणिंदियसरूवं ६ । छक्काया पुढवि १ जला २ नल ३ वाउ ४ वणस्सइ ५ तसेहिं ६ ॥ ९७५ ॥ छल्लेसाओ कण्हा १ नीला २ काऊ य ३ तेउ ४ पउम ५ सिया ६ । कालविहीणं दव्वच्छक्कं इह अत्थिकायाओ ॥ ९७६ ॥ पाणिवह १ मुसावाए २ अदत्त ३ मेहुण ४ परिग्गहेहि ५ इहं । पंच वयाइं भणियाइं पंच समिईओ साहेमि ॥ ९७७ ॥ इरिया १ भासा २ एसण ३ गहण ४ परिट्ठवण ५ नामिया ताओ । पंच गईओ नारय १ तिरि २ नर ३ सुर ४ सिद्ध ५ नामाओ ॥ ९७८ ॥ नाणाइं पंच मइ १ सुय २ ओहि ३ मण ४ केवलेहि ५ भणियाइं । सामाइय १ छेय २ परिहार ३ सुहम ४ अहक्खाय ५ चरणाइं ॥ ९७९ ॥

त्रयः कालाः समाहृतास्त्रिकालं त्रिकालमेव त्रैकाल्यमतीतादिकालत्रिकमित्यर्थः, द्रव्यषट्कं—धर्मास्तिकायादिभेदात्, नवभिः पदैः—जीवादिभिस्तत्त्वैः सहितं—युक्तं द्रव्यषट्कमेव ज्ञातव्यं, तथा षट्शब्दस्य डमरुकमणिन्यायेनोभयत्र सम्बन्धात् षट् जीवा—एकेन्द्रिया-

दयः षट् कायाः—पृथिवीकायादयः, षट् च लेश्याः—कृष्णादयः, अपरे च पञ्चास्तिकाया—धर्मास्तिकायादयः, तथा पञ्चशब्दस्य प्रत्येक-
मत्रापि योजनात्पञ्च व्रतभेदाः—प्राणिवधविरमणादयः, पञ्च समितिभेदा—ईर्यासमित्यादयः, पञ्च गतिभेदा—नरकगत्यादयः, पञ्च ज्ञान-
भेदाः—मतिज्ञानादयः, पञ्च चारित्रभेदाः—सामायिकादयः, इत्येते पूर्वोक्ताः सर्वेऽपि पदार्थास्त्रिभुवनमहितैः—त्रिलोकार्चितैरर्हद्भिः—तीर्थ-
करैरीशैः—स्वाभाविककर्मक्षयजन्यसुरविरचितचतुस्त्रिंशदतिशयस्वरूपपरमैश्वर्योपशोभितैर्मोक्षमूलं—निर्वाणकारणं प्रोक्तं—उपदिष्टं, अतो यः
पुमान् मतिमान्—प्रवेकविवेककलित एतान् प्रत्येति—स्वरूपतोऽवगच्छति श्रद्धाति—इदमेव तत्त्वमित्यात्मनो रोचयति स्पृशति च—यथा-
यथं सम्यगासेवते स वै स्फुटं 'शुद्धदृष्टिः' शुद्धा—मिथ्यात्वमलानाविला दृष्टिः—सम्यक्त्वं यस्य स शुद्धदृष्टिरिति ॥ ९७१ ॥ अथैनं
वृत्तं व्याचिख्यासुः कालत्रिकं प्रतिपादयन्नाह—'एये'त्यादि, एतस्य—पूर्वोक्तस्य त्रैकाल्यमित्यादेः स्रग्धरावृत्तस्येदं—वक्ष्यमाणं विवरणं—
व्याख्यानं विज्ञेयमिति शेषः, तत्र त्रैकाल्यमतीतवर्तमानाभ्यां भविष्यद्युक्ताभ्यां भवति, अतीतवर्तमानभविष्यल्लक्षणास्त्रयः काला इत्यर्थः,
तत्रातिशयेन इतो—गतोऽतीतो, वर्तमानत्वमतिक्रान्त इत्यर्थः, वर्तत इति वर्तमानः—साम्प्रतमुत्पन्नः सर्वसूक्ष्मनिरंशसमयमात्रमान इति
भावः, भविष्यतीति भविष्यन्—वर्तमानत्वं न प्राप्तोऽनागत इति हृदयं, द्रव्यषट्कं पुनरिदं—वक्ष्यमाणं ॥ ९७२ ॥ तदेवाह—'धम्मे'-
त्यादि, धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायकालपुद्गलास्तिकायजीवास्तिकायस्वरूपाणि षड् द्रव्याणि, तत्र जीवानां पुद्गलानां च स्वत
एव गतिक्रियापरिणतानां तत्स्वभावधरणात्—तत्स्वभावपोषणाद्धर्मः अस्तयश्चेह प्रदेशास्तेषां कायः—सङ्घातोऽस्तिकायः, ततो धर्मश्चा-
सावस्तिकायश्च धर्मास्तिकायः, सकललोकव्यापी असंख्येयप्रदेशात्मकोऽमूर्तो द्रव्यविशेष इत्यर्थः । जीवपुद्गलानामेव तथैव गतिपरिण-
तानां तत्स्वभावेऽधरणादधर्मः स चासावस्तिकायश्चाधर्मास्तिकायः, किमुक्तं भवति ?—जीवपुद्गलानां स्थितिपरिणामपरिणतानां तत्परि-

णामोपष्टम्भकोऽमूर्त्तो लोकव्यापी असंख्येयप्रदेशात्मकोऽधर्मास्तिकायः, लोकमात्रत्वं चानयोरेतदवष्टम्भकाकाशदेशस्यैव लोकत्वात्, अलोकव्यापित्वे त्वनयोर्जीवपुद्गलानामपि तत्र प्रचारप्रसङ्गेन तस्यापि लोकत्वप्राप्तेरिति । तथा आङिति मर्यादया तत्संयोगेऽपि स्वकीयस्वकीयस्वरूपेऽवस्थानतः सर्वथा तत्स्वरूपाप्राप्तिलक्षणया काशन्ते—स्वभावलाभेनावस्थितिकरणेन च दीप्यन्ते पदार्थसार्था यत्र तदाकाशं यदा त्वमिविधावाङ् तदाऽऽङिति सर्वभावाभिव्याप्त्या काशते—प्रतिभासते इत्याकाशं तच्च तदस्तिकायश्चाकाशास्तिकायो, लोकालोकव्यापी अनन्तप्रदेशात्मको द्रव्यविशेष इत्यर्थः । तथा कलनं—समस्तवस्तुस्तोमस्य सङ्ख्यानमिति कालः, अथवा कलयन्ति—समयोऽयमनेन रूपेणोत्पन्नस्त्यावलिका मुहूर्त्तादि वा इत्यादिप्रकारेण सर्वमपि सचेतनाचेतनं वस्त्ववगच्छन्ति केवल्यादयोऽनेनेति कालः—समयावलिकारूपो द्रव्यविशेषः । तथा पूरणगलनधर्माणः पुद्गलाः—परमाण्वादयोऽनन्ताणुकस्कन्धपर्यन्ताः, एते हि कुतश्चिद् द्रव्याद्गलन्ति—वियुज्यन्ते किञ्चित्तु द्रव्यं स्वसंयोगतः पूरयन्ति—पुष्टं कुर्वन्ति, पुद्गलाश्च तेऽस्तिकायश्च पुद्गलास्तिकायः । तथा जीवन्ति जीविष्यन्ति जीवितवन्त इति जीवास्ते च तेऽस्तिकायश्च जीवास्तिकायः, प्रत्येकमसङ्ख्येयप्रदेशात्मकसकललोकभाविनानाजीवद्रव्यसमूह इत्यर्थः, अत्र च जीवपुद्गलानां गत्यन्यथानुपपत्तेर्धर्मास्तिकायस्य तेषामेव स्थित्यन्यथानुपपत्तेरधर्मास्तिकायस्य जीवादिपदार्थानामाधारान्यथानुपपत्तेराकाशास्तिकायस्य वकुलाशोकचम्पकादिपुष्पफलप्रदाननैयत्यान्यथाऽनुपपत्तेः कालस्य घटादिकार्यान्यथानुपपत्तेः पुद्गलास्तिकायस्य प्रतिप्राणि स्वसंवेदनसिद्धचैतन्यान्यथानुपपत्तेश्च जीवास्तिकायस्य सत्त्वं समवसेयमिति ॥ ९७३ ॥ अथ नव पदान्याह—'जीवे'त्यादि, जीवाः—सुखदुःखोपयोगलक्षणाः अजीवाः—तद्विपरीता धर्मास्तिकायादयः पुण्यं—शुभप्रकृतिरूपं कर्म पापं—तद्विपरीतं कर्मैव आश्रवति—आगच्छति कर्मानेनेत्याश्रवः शुभाशुभकर्मोपादानहेतुः हिंसादिः संवरणं संवरो—गुप्त्यादिभिराश्रवनिरोधः निर्जरणं निर्जरा—विपाकात्तपसो वा कर्मणां देशतः क्षपणं बन्धो—

जीवकर्मणोरत्यन्तसंश्लेषः मोक्षः—कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानं, इत्येतानि नवसङ्ख्यानि पदानि—तत्त्वानि जिनमते—अर्हत्प्रवचने विज्ञेयानीति, इह च आश्रवबन्धपुण्यपापानि मुख्यं संसारकारणमिति हेयानि, संवरनिर्जरे मुख्यं मोक्षकारणं, मोक्षस्तु मुख्यं साध्यमित्येतानि त्रीण्यप्युपादेयानीत्येवं शिष्यस्य हेयोपादेयतापरिज्ञानार्थं मध्यमप्रस्थानापेक्षया नवेत्युक्तं, अन्यथा सङ्क्षेपापेक्षया जीवाजीवयोरेव पुण्यपापादीनामन्तर्भावसंभवाद् द्वित्वसङ्ख्ययैवाभिधेयं स्यात्, तथा चोक्तं स्थानाङ्गे—'जदत्थि च णं लोए तं सव्वं दुपडोयारं, तंजहा—जीवा चेव अजीवा चेव'त्ति, विस्तरतस्तु तदुत्तरोत्तरभेदविवक्षयाऽऽनन्त्यमेव स्यात्, अथ कथं जीवाजीवयोरेव पुण्यपापादीनामन्तर्भावसम्भव इति चेदुच्यते—पुण्यपापे कर्मणी बन्धोऽपि तदात्मक एव कर्म च पुद्गलपरिणामः पुद्गलाश्चाजीवा इति, आश्रवस्तु मिथ्यादर्शनादिरूपः परिणामो जीवस्य, स चात्मानं पुद्गलांश्च मुक्त्वा कोऽन्यः ?, संवरोऽप्याश्रवनिरोधलक्षणो देशसर्वभेद आत्मनः परिणामो निवृत्तिरूपः, निर्जरा तु कर्मपरिशाटो जीवः कर्मणां यत्पार्थक्यमापादयति स्वशक्त्या, मोक्षोऽपि सकलकर्मविरहित आत्मैवेति, अन्यत्र पुनः पुण्यपापयोर्बन्धेऽन्तर्भावात् सप्तैव तत्त्वान्युक्तानि ॥ ९७४ ॥ अथ जीवषट्कायषट्के प्राह—'इगे'त्यादि, इन्द्रियशब्दस्य प्रत्येकमभिसम्बन्धादेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियानिन्द्रियस्वरूपं जीवषट्कं, तत्र एकं—स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियाः—पृथिव्यम्बुतेजोवायुवनस्पतयः द्वे स्पर्शनरसनलक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः—शङ्खशुक्तिकाचन्दनककपर्दकजलूकाकृमिगण्डोलकपूतरकादयः त्रीणि स्पर्शनरसनघ्राणलक्षणानि इन्द्रियाणि येषां ते त्रीन्द्रियाः—यूकामत्कुणगर्दभकेन्द्रगोपककुन्थुमत्कोटपिपीलिकोपदेहिकाकार्पासास्थित्रपुसबीजकतुम्बरकादयः चत्वारि स्पर्शनरसनघ्राणचक्षुर्लक्षणानि इन्द्रियाणि येषां ते चतुरिन्द्रियाः—भ्रमरमक्षिकादंशमशकवृश्चिककीटपतङ्गादयः पञ्च स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि इन्द्रियाणि येषां ते पञ्चेन्द्रियाः—करिमकरमयूरमनुजादयः निखिलकर्मनिर्मु-

स्कत्वेन शरीरविरहितत्वान्न विद्यते इन्द्रियं—स्पर्शनादि येषां ते अनिन्द्रियाः—सिद्धाः । तथा षट् कायाः पृथ्वीजलानलवायुवनस्पतित्रसभेदात्, पृथ्वीकायजलकायानलकायवायुकायवनस्पतिकायत्रसकायलक्षणाः षट् काया इत्यर्थः, तत्र पृथिवी—काठिन्यादिलक्षणा सैव कायः—शरीरं येषां ते पृथिवीकायाः जलं—पानीयं तदेव कायः—शरीरं येषां ते जलकायाः, अनलो—वह्निः स एव कायः—शरीरं येषां तेऽनलकायाः, वायुः—पवनः स एव कायः—शरीरं येषां ते वायुकायाः, वनस्पतिः—लतादिरूपः स एव कायः—शरीरं येषां ते वनस्पतिकायाः, त्रसनशीलास्त्रसाः—चलनधर्माणः कायाः—शरीराणि येषां ते त्रसकायाः ॥ ९७५ ॥ अथ लेश्यापट्कमस्तिकायपञ्चकं चाह— 'छलेसे'त्यादि, लिश्यते—श्लिष्यते कर्मणा सह जीवो यकाभिस्ता लेश्याः—कृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसाहाय्याज्जीवस्याशुभाः शुभाश्च परिणामविशेषाः, उक्तं च—'कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥' कृष्णादिद्रव्याणि च केचिद् 'योगपरिणामो लेश्या' इतिवचनाद्योगान्तर्गतद्रव्याण्याहुः, अन्ये तु 'सकलकर्मप्रकृतिनिःस्यन्दरूपाणि' अपरे पुनः 'कार्मणशरीरवत्पृथगेव कर्माष्टकात्कार्मणवर्गणानिष्पन्नानि कृष्णादिद्रव्याणी'ति प्रतिपादयन्ति, तत्त्वं तु तीर्थकृतो विदन्तीति, एताश्च परिणामविशेषात्मिका लेश्याः षड् भवन्ति, तद्यथा—कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या 'सिय'त्ति सितलेश्या शुक्ललेश्येत्यर्थः, तत्र कृष्णद्रव्यात्मिका कृष्णद्रव्यजनिता वा लेश्या कृष्णलेश्येत्यर्थः, एवं नीललेश्येत्यादिपदेष्वपि भावनीयं, तासु चाद्यास्तिस्रोऽशुभाः अपरास्तु तिस्रः शुभाः, एतासां च विशेषतः स्वरूपनिरूपणार्थं जम्बूखादकषट्पुरुषीदृष्टान्तो ग्रामघातकदृष्टान्तश्चोच्यते, तथाहि—केचित् कस्मिंश्चित्कानने क्षुत्क्षामकुक्षयः षट् पुरुषाः सुपरिपक्वसरसफलभरावनमितसकलशाखं कल्पशाखिसदृक्षमेकं जम्बूवृक्षमद्राक्षुः, ततः सर्वैरपि प्रमुदितैः प्रोक्तं—अहोऽवसरप्राप्तमस्य दर्शनं अपनयामो बुभुक्षां भक्षयामः स्वेच्छयाऽतुच्छान्यस्य

स्वादुफलानीत्यैकमत्ये सति तन्मध्ये क्लिष्टपरिणामेनैकेनोक्तं—युक्तमिदं केवलमस्मिन्ननोकहे दुरारोहे समारोहतां जीवितव्यस्यापि संशयः,
तस्मात्तीक्ष्णधारैः कुठारैरमुं मूलत एव कर्तयित्वा तिर्यक्प्रपात्य सुखेनैव सकलानि फलान्यभ्यवहरामः, एष एवंजातीयः कृष्णलेश्याप-
रिणामः, द्वितीयेन तु किञ्चित्ससूकेनोक्तं—किमस्माकमेतेनातिमहता पादपेन छिन्नेन ?, महीयसीमस्य शाखामेवैकां कर्तयित्वा फलान्या-
स्वादयामः, एवंप्रकारो नीललेश्यापरिणामः, तृतीयः पुनः प्राह—किमेतया महाशाखया छिन्नया ?, तदेकदेशभूताः प्रशाखा एव कर्त-
यामः, इत्येवंविधः कापोतलेश्यापरिणामः, चतुर्थश्चोवाच—किमाभिरपि वराकीभिः कर्तिताभिः ?, तत्पर्यन्तवर्तिनः कांश्चिद्गुच्छानेव
छिन्द्मः, एष तैजसलेश्यापरिणामः, पञ्चमः पुनः प्रोवाच—गुच्छैरपि किं नश्छिन्नैः ?, तन्मध्यात्सुपक्कानि भक्षणोचितानि कानिचित्फला-
न्येव गृह्णीम इत्यसौ पद्मलेश्यापरिणामः, षष्ठस्तु बभाषे—किं तैरपि त्रोटितैः ?, यावत्प्रमाणैः प्रयोजनमस्माकं तावत्प्रमाणानि फला-
न्यधस्तादपि पतितान्यस्य विटपिनः प्राप्यन्ते, तद्वयममीभिरेव प्राणवृत्तिं विदध्मः किमुन्मूलनादिनाऽस्य शाखिनः खेदेन ? इत्ययं शुक्ल-
लेश्यापरिणाम इति ॥ ग्रामघातकदृष्टान्तस्तु कस्मिंश्चिद् ग्रामे धनधान्यादिलुब्धैः षड्भिस्तस्करस्वामिभिर्मिलित्वा धाटी प्रक्षिप्ता, तत्रैके-
नोक्तं—यत्किमपि द्विपदचतुष्पदपुरुषस्त्रीबालवृद्धादिकं पश्यथ तत्सर्वं मारयत ?, इत्येवंजातीयः कृष्णलेश्यापरिणामः, द्वितीयस्तु नीलले-
श्यापरिणामवर्ती बभाषे—मानुषाण्येव मारयत किं तिर्यग्भिरिति, तृतीयः पुनः कापोतलेश्यायुक्तो जगाद—पुरुषानेव व्यापादयत ?,
किं स्त्रीभिरिति, चतुर्थस्तु तैजसलेश्यापरिणामान्वितः प्राह—पुरुषेष्वपि सप्रहरणानेव निशुम्भत, किं निष्प्रहरणैरपि ?, पञ्चमः पुनः
पद्मलेश्यापरिणामसम्पन्नः प्रोवाच—सायुधेष्वपि युध्यमानानेव विनाशयत किमन्यैर्निरपराधैरिति, षष्ठस्तु शुक्ललेश्यापरिणामपरिगतः
प्रतिपादयति स्म—अहो महदसमञ्जसं यदेकं तावद् द्रव्यमपहरथ अपरं च वराकमेनं जनं विनाशयथ, तस्माद्यद्यपि द्रव्यमपहरथ तथापि

प्राणांस्त्रावर स्तिकाय क

पि लोकस्य रक्षतेति ॥ तथा कालविहीनं—काललक्षणद्रव्यरहितं पूर्वोक्तं द्रव्यषट्कमेवास्तिकायाः—धर्मास्तिकायाधर्मोऽस्तिकायपुद्गलास्तिकायजीवास्तिकायलक्षणाः प्रागुक्तस्वरूपाः पञ्चास्तिकाया इत्यर्थः, अथ यथा धर्मास्तिकाय इत्युक्तं तथा काय इति कस्मान्नोच्यते ? इति चेत्, नैवं, प्रदेशबहुत्व एवास्तिकायत्वोपपत्तेः, अत्र च तन्नास्ति, अतीतानागतसमया(ग्रन्था-२०००)नां विनष्टानुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्तमानसमयरूपस्यैकस्यैव कालप्रदेशस्य सद्भावादिति, यद्येवमावलिकामुहूर्तदिवसादिप्ररूपणाया अप्यभावप्रसङ्गः प्राप्नोति, आवलिकादीनामप्यसङ्ख्येयसमयाद्यात्मकत्वेन प्रदेशबहुत्व एवोपपत्तेः, सत्यमेतत्, केवलं स्थिरस्थूलकायत्रयवर्तिवस्त्वभ्युपगमपरव्यवहारनयमतमवलम्ब्याऽऽवलिकादिकालप्ररूपणा, निश्चयनयमतेन तु तदभाव एवेति न कालेऽस्तिकायता ॥ ९७६ ॥ पञ्च व्रतान्याह—'पाणिवहे'त्यादि, व्रतं—शास्त्रविहितो नियमः तस्य च प्रत्येकमभिसम्बन्धात्प्राणिवधव्रतमृषावादव्रतादत्तादानव्रतमैथुनव्रतपरिग्रहव्रतैरिह—जिनसिद्धान्ते पञ्च व्रतानि भणितानि। इतः पञ्च समितीः 'साहेमि'त्ति कथयामि, ॥९७७॥ ता एवाह—'इरिये'त्यादि पूर्वार्धं, ईर्यासमितिर्भाषासमितिरेषणासमितिर्ग्रहणसमितिः आदाननिक्षेपसमितिरित्यर्थः परिष्ठापनासमितिश्चेत्येताः पञ्च समितयः। व्रतसमितिस्वरूपं च षट्षष्टे सप्तषष्टे च द्वारे विस्तरेणोक्तमिति । अथ पञ्च गतीराह—'पंचे'त्यादि उत्तरार्धं, नारकगतितिर्यग्गतिनरगतिसुरगतिसिद्धगतिनामिकाः पञ्च गतयः, तत्र गम्यते—प्राप्यते स्वकर्मरज्जुसमाकृष्टैर्जन्तुभिरिति गतिः नारकाणां गतिर्नारकगतिः, तिरश्चां—एकेन्द्रियादीनां गतिस्तिर्यग्गतिः, नराणां—मनुष्याणां गतिर्नरगतिः, सुराणां—देवानां गतिः सुरगतिः, सिद्धगतिस्तु कर्मजन्या शास्त्रपरिभाषिता न भवति केवलं गम्यत इति गतिरिति व्युत्पत्तिसाम्यमात्रादिहोपात्तेति ॥ ९७८ ॥ अथ पञ्च ज्ञानानि चारित्राणि चाह—'नाणाइं' इत्यादि, मतिश्रुतावधिमनःपर्ययकेवललक्षणैर्भेदैः पञ्च ज्ञानानि, एतानि चाग्रे व्याख्यास्यन्ते, तथा चर्यते—गम्यते

प्राप्यते भवोदधेः परकूलमेभिरिति चरणानि—चारित्राणि, तानि च पञ्च सामायिकं पदैकदेशेऽपि पदसमुदायोपचारात् छेदोपस्थापनिकं
परिहारविशुद्धिकं सूक्ष्मसम्परायं यथाख्यातं चेति, तत्र समो—रागद्वेषरहितत्वाद् अयो—गमनं समायः, एष चान्यासामपि साधुक्रिया-
णामुपलक्षणं, सर्वासामपि साधुक्रियाणां रागद्वेषरहितत्वात्, समायेन निर्वृत्तं समाये वा भवं सामायिकं, यद्वा समानां—ज्ञानदर्शनचा-
रित्राणामायो—लाभः समायः समाय एव सामायिकं, विनयादेराकृतिगणतया स्वार्थे इकण्, तच्च सर्वसावद्यविरतिरूपं, यद्यपि च सर्व-
मपि चारित्रमविशेषतः सामायिकं तथापि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, प्रथमं पुनरविशेषणात्सामा-
न्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्र स्वल्पकालभावि इत्वरं, इदं च भरतैरावतेषु प्रथमपश्चि-
मतीर्थंकरतीर्थेष्वनारोपितमहाव्रतस्य शैक्षस्य विज्ञेयं, अत्र जन्मनि यावज्जीवितकथाऽस्यात्मनस्तावत्कालभावि यावत्कथं तदेव यावत्क-
थिकं आभववर्तीत्यर्थः, एतच्च भरतैरावतभाविमध्यमद्वाविंशतितीर्थंकरतीर्थेषु विदेहतीर्थंकरतीर्थेषु च मुनीनामवसेयं, तेषामुपस्थापनाया
अभावात्, ननु चेत्वरमपि सामायिकं 'करोमि भदंत! सामायिकं यावज्जीवं' इत्येवं व्रतग्रहणकाले यावदायुरागृहीतं तत उपस्थापनाकाले
तत्परित्यजतः कथं न प्रतिज्ञाभङ्गः?, उच्यते, ननु प्रागेवोक्तं सर्वमेवेदं चारित्रमविशेषतः सामायिकं, सर्वत्रापि सावद्ययोगविरतिसद्भा-
वात्, केवलं छेदादिविशुद्धिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं वा
परमविशुद्धिविशेषरूपसूक्ष्मसम्परायादिचारित्रावाप्तौ न भङ्गमङ्गीकरोति तथा इत्वरमपि सामायिकं विशुद्धिरूपच्छेदोपस्थापनावाप्तौ,
यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते न तु तस्यैव विशुद्धिविशेषावाप्ताविति, तथा छेदः पूर्वपर्यायस्य उपस्थापना च महा-
व्रतेषु यस्मिन् चारित्रे तच्छेदोपस्थापनं तदेव छेदोपस्थापनिकं तदेव वा विद्यते यत्र तच्छेदोपस्थापनिकं, तच्च द्विधा—सातिचारं निरति-

चारं च, तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षस्यारोप्यते, तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्तौ, सातिचारं यन्मूलगुणघातिनः पुनर्व्रतारोपणं, तथा परिहरणं परिहारः—तपोविशेषस्तेन विशुद्धिः—कर्मनिर्जरारूपा यस्मिन् चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानका—विवक्षितचारित्रासेवकाः निर्विष्टकायिका—आसेवितविवक्षितचारित्रकाः तदव्यतिरेकाच्चारित्रमप्येवमुच्यते, इह नवको गणश्चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः एकः कल्पस्थितो वाचनाचार्यः, एतत्स्वरूपं च सविस्तरमेकोनसप्ततिद्वारे प्रत्यपादि, तथा सम्परैति—पर्यटति संसारमनेनेति सम्परायः—कषायोदयः सूक्ष्मो—लोभांशावशेषः सम्परायो यत्र तत् सूक्ष्मसम्परायं, तच्च द्विधा—विशुध्यमानकं संक्लिश्यमानकं च, तत्र विशुध्यमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः, संक्लिश्यमानं तूपशमश्रेणितः प्रच्यवमानस्य, तथा अथशब्दो—याथातथ्यार्थे आङ् अभिविधौ, यथातथ्येन अभिविधिना वा यत् ख्यातं—कथितं अकषायचारित्रमिति तत् अथाख्यातं, यथाख्यातमिति द्वितीयं नाम, तस्यायमन्वर्थः—यथा सर्वस्मिन् जीवलोके ख्यातं—प्रसिद्धमकषायं भवति चारित्रमिति तथैव यत्तत् यथाख्यातं, इदं च द्विधा—छाद्मस्थिकं कैवलिकं च, तत्र छाद्मस्थिकमुपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके वा, कैवलिकं सयोगिकेवलिभवमयोगिकेवलिभवं चेति १५२ ॥९७९॥

इदानीं 'सड्ढपडिमाओ'त्ति त्रिपञ्चाशदधिकशततमं द्वारमाह—

> दंसण १ वय २ सामाइय ३ पोसह ४ पडिमा ५ अबंभ ६ सचित्ते ७। आरंभ ८ पेस ९ उद्दिट्ठ १० वज्जए समणभूए ११ य ॥ ९८० ॥ जस्संखा जा पडिमा तस्संखा तीऍ हुंति मासावि । कीरंतीसुवि कज्जाउ तासु पुव्वुत्तकिरिया उ ॥ ९८१ ॥ पसमाइगुणविसिट्ठं कुग्गहसंकाइसल्लपरिहीणं ।

सम्मदंसणमणहं दंसणपडिमा हवइ पढमा १ ॥ ९८२ ॥ बीयाणुवयधारी २ सामाइकडो य
होइ तइयाए ३ । होइ चउत्थी चउद्दसीअट्ठमिमाईसु दिवसेसु ॥ ९८३ ॥ पोसह चउविहंपि य
पडिपुण्णं सम्म सो उ अणुपाले । बंधाई अइयारे पयत्तओ वज्जईमासु ॥ ९८४ ॥ सम्ममणुवयगु-
णवयसिक्खावयवं थिरो य नाणी य । अट्ठमीचउद्दसीसुं पडिमं ठाएगराईयं ॥ ९८५ ॥ असि-
णाण वियडभोई मउलियडो दिवसबंभयारी य । रत्तिं परिमाणकडो पडिमावज्जेसु दिवसेसुं
॥ ९८६ ॥ झायइ पडिमाएँ ठिओ तिलोयपुज्जे जिणे जियकसाए । नियदोसपच्चणीयं अन्नं वा
पंच जा मासा ॥ ९८७ ॥ सिंगारकहविभूसुक्करिसं इत्थीकहं च वज्जिंतो । वज्जइ अबंभमेगंतओ
य छट्ठाइ छम्मासे ॥ ९८८ ॥ सत्तमि सत्त उ मासे नवि आहारइ सचित्तमाहारं । जं जं हेट्ठि-
ल्लाणं तं तं चरिमाण सव्वंपि ॥ ९८९ ॥ आरंभसयंकरणं अट्ठमिया अट्ठ मास वज्जेइ । नवमा नव
मासे पुण पेसारंभेऽवि वज्जेइ ॥ ९९० ॥ दसमा दस मासे पुण उद्दिट्ठकयंपि भत्त नवि भुंजे ।
सो होइ उ छुरमुंडो सिहलिं वा धारए कोई ॥ ९९१ ॥ जं निहियमत्थजायं पुच्छंत सुयाण न-
वरि सो तत्थ । जइ जाणइ तो साहइ अह नवि तो बेइ नवि याणे ॥ ९९२ ॥ खुरमुंडो लोएण
व रयहरणं पडिग्गहं च गिण्हित्ता । समणो हूओ विहरइ मासा एक्कारसुक्कोसं ॥ ९९३ ॥ मम-
कारेऽवोच्छिन्ने वच्चइ सन्नायपल्लि दट्ठुं जे । तत्थवि साहुव्व जहा गिण्हइ फासुं तु आहारं ॥ ९९४ ॥

दर्शनं च—सम्यक्त्वं व्रतानि च—अणुव्रतादीनि सामायिकं च—सावद्यानवद्ययोगपरिवर्जनासेवनस्वरूपं पौषधं च—अष्टमीचतुर्दश्यादिपर्वदिनानुष्ठेयोऽनुष्ठानविशेषः प्रतिमा च—कायोत्सर्गः अब्रह्म च—अब्रह्मचर्यं सचित्तं च—सचेतनद्रव्यं इति समाहारद्वन्द्वः तत एतस्मिन् विषये प्रतिमेति प्रस्तावादवसेयं, अत्र च दर्शनादिषु पञ्चसु विधिद्वारेण प्रतिमाभिग्रहः अब्रह्मसचित्तयोस्तु प्रतिषेधमुखेनेति, तथा आरम्भश्च—स्वयं कृष्यादिकरणं प्रेष्यश्च—प्रेषणं परेषां पापकर्मसु व्यापारणं उद्दिष्टं च—तमेव श्रावकमुद्दिश्य सचेतनं सदचेतनीकृतं पक्वं वा यो वर्जयति—परिहरति स आरम्भप्रेष्योद्दिष्टवर्जकः, प्रतिमेति प्रकृतमेव, इह च प्रतिमानां प्रक्रान्तत्वेऽपि प्रतिमाप्रतिमावतोरभेदोपचारात्प्रतिमावतो निर्देशः कृतः, एवमुत्तरत्रापि, तथा श्रमणः—साधुः स इव यः स श्रमणभूतः, भूतशब्दस्योपमानार्थत्वात्, चः समुच्चये, आसां च दर्शनप्रतिमा व्रतप्रतिमेत्यादिरूपोऽभिलापः कार्यः, एता एकादश श्राद्धानां—उपासकानां प्रतिमाः—प्रतिज्ञा अभिग्रहाः श्राद्धप्रतिमा इति ॥ ९८० ॥

अथैतासामेव प्रतिमाणां प्रत्येकं स्वरूपं प्रतिपिपादयिषुः प्रथमं तावत् कालमानं सामान्यस्वरूपं चाह—'जस्संखे'त्यादि, यत्सङ्ख्या—यावत्सङ्ख्यामाना प्रथमद्वितीयादिकेत्यर्थः प्रतिमा तस्यां मासा अपि तत्सङ्ख्याः—तावत्प्रमाणा भवन्ति, अयमर्थः—प्रथमायां प्रतिमायामेको मासः कालमानं द्वितीयायां द्वौ मासौ तृतीयायां त्रयो मासा यावदेकादश्यां प्रतिमायामेकादश मासा इति, एतच्च कालमानं यद्यपि दशाश्रुतस्कन्धादिषु साक्षान्नोपलभ्यते तथाऽप्युपासकदशासु प्रतिमाकारिणामानन्दादिश्रमणोपासकानां सार्धवर्षपञ्चकलक्षणं प्रतिमैकादशप्रमाणं प्रतिपादितमस्ति, तच्च पूर्वोक्तयैव एकादिकयैकोत्तरया वृद्ध्या सङ्गच्छत इति, तथा उत्तरोत्तरास्वपि तासु प्रतिमासु क्रियमाणासु पूर्वपूर्वप्रतिमाप्रतिपादिताः सर्वा अपि क्रिया—अनुष्ठानविशेषरूपाः कर्तव्या एव, तुशब्द एवकारार्थः, इदमत्र तात्पर्यम्—द्वितीयायां प्रतिमायां प्रथमप्रतिमोक्तमनुष्ठानं निरवशेषमपि कर्तव्यं, तृतीयायां तु प्रतिमायां प्रथमद्वितीयप्रतिमाद्वयोक्तमप्यनु-

ष्ठानं विधेयं, एवं यावदेकादश्यां प्रतिमायां पूर्वप्रतिमादशकोक्तं सर्वमप्यनुष्ठानं कार्यमिति ॥ ९८१ ॥ अथ दर्शनप्रतिमास्वरूपनिरूपणा-
याह—'पसमे'त्यादि, सम्यग्दर्शनं—सम्यक्त्वं प्रथमा दर्शनप्रतिमा भवतीति सम्बन्धः, कथम्भूतं सम्यग्दर्शनमित्याह—प्रशमादिगुणवि-
शिष्टं—प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलक्षणैः पञ्चभिर्गुणैर्विशिष्टं—अन्वितं, तथा कुग्रहश्च—तत्त्वं प्रति शास्त्रबाधितत्वेन कुत्सितोऽभिनि-
वेशः शङ्कादयश्च—शङ्काकाङ्क्षाविचिकित्सामिथ्यादृष्टिप्रशंसातत्संस्तवरूपाः पञ्च सम्यक्त्वातीचाराः कुग्रहशङ्कादयस्त एव शल्यते—अने-
कार्थत्वाद्बाध्यते जन्तुरेभिरिति शल्यानि तैः परिहीनं—रहितं, अत एव अनघं—निर्दोषं, अयमत्र भावार्थः—सम्यग्दर्शनस्य कुग्रहशङ्कादि-
शल्यरहितस्याणुव्रतादिगुणविकलस्य योऽभ्युपगमः सा दर्शनप्रतिमेति, सम्यग्दर्शनप्रतिपत्तिश्च तस्य पूर्वमप्यासीत् केवलमिह शङ्कादिदो-
षराजाभियोगाद्याकारषट्कवर्जितत्वेन यथावत्सम्यग्दर्शनाचारविशेषपरिपालनाभ्युपगमेन च प्रतिमात्वं सम्भाव्यते, कथमन्यथा उपास-
कदशासु एकमासं प्रथमायाः प्रतिमायाः पालनेन द्वौ मासौ द्वितीयायाः प्रतिमायाः पालनेन एवं यावदेकादश मासानेकादश्याः पाल-
नेन पञ्च सार्धानि वर्षाण्यर्थतः प्रतिपादितानीति, न चायमर्थो दशाश्रुतस्कन्धादावुपलभ्यते, श्रद्धामात्ररूपायास्तत्र तस्याः प्रतिपादनात्,
एवं दर्शन(व्रत)प्रतिमादिष्वपि यथायोगं भावना कार्या ॥९८२॥ अथ गाथाद्वयेन व्रतसामायिकपौषधप्रतिमात्रयमाह—'बीये'त्यादि, अणु-
व्रतानि—स्थूलप्राणातिपातविरमणादीनि उपलक्षणत्वाद् गुणव्रतानि शिक्षाव्रतानि च वधबन्धाद्यतिचाररहितानि निरपवादानि च धारयतः
सम्यक्परिपालयतो द्वितीया व्रतप्रतिमा भवति, सूत्रे च प्रतिमाप्रतिमावतोरभेदोपचारादित्थं निर्देशः, तथा तृतीयायां—सामायिकप्रतिमायां
सामायिकं—सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं कृतं—विहितं देशतो येन स सामायिककृतः, आहिताग्न्यादिदर्शनात् क्तान्तस्यो-
त्तरपदत्वं, इदमुक्तं भवति—अप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं सामायिककरणं तृतीया प्रतिमेति, तथा चतुर्थी

पोषधप्रतिमा यस्यां चतुर्दश्यष्टम्यादिषु दिवसेषु—चतुर्दश्यष्टम्यमावास्यापौर्णमासीषु पर्वतिथिषु चतुर्विधमप्याहारशरीरसत्काराब्रह्मचर्यव्यापा-
रपरिवर्जनरूपं पौषधं परिपूर्णं, न पुनरन्यतरेणापि प्रकारेण परिहीनं सम्यग् आगमोक्तविधिना स—प्रतिमाप्रतिपत्ता तुशब्दस्यावधारणार्थ-
त्वादनुपालयत्येव—आसेवत एव, एतासु चतसृष्वपि व्रतादिषु प्रतिमासु वन्धादीन्—वन्धवधच्छविच्छेदप्रभृतीन् पष्टिसंख्यान् अतिचारान्
द्वादशव्रतविषयान् प्रयत्नतो—महता यत्नेन वर्जयति—परिहरतीति ॥ ९८३ ॥ ९८४ ॥ अथ प्रतिमाप्रतिमास्वरूपमाह—'सम्मे'त्यादि,
'सम्म'त्ति सम्यक्त्वं मकारोऽलाक्षणिकः अणुव्रतगुणव्रतशिक्षाव्रतानि च यस्य विद्यन्ते स तद्वान्, पूर्वोक्तप्रतिमाचतुष्टयान्वित इत्यर्थः,
स्थिरः—अविचलसत्त्वः इतरो हि तद्विराधको भवति, यतोऽस्यां प्रतिमायां निशि चतुष्पथादौ कायोत्सर्गः क्रियते तत्र चोपसर्गाः प्रभूताः
सम्भवन्तीति, ज्ञानी च—प्रतिमाकल्पादिपरिज्ञानप्रवणः, अजानानो हि सर्वत्राप्ययोग्यः किं पुनरेतत्प्रतिमाप्रतिपत्ताविति, अष्टमीचतुर्द-
श्योरुपलक्षणत्वादष्टमीचतुर्दश्यमावास्यापौर्णमासीरूपेषु पौषधदिनेष्वपि द्रष्टव्यं 'प्रतिमां' कायोत्सर्गं 'ठाइ'त्ति तिष्ठति धातूनामनेकार्थ-
त्वात्करोतीत्यर्थः, किम्प्रमाणामित्याह—एका रात्रिः परिमाणमस्या इत्येकरात्रिकी—सार्वरात्रिकी तां यस्तस्य प्रतिमा भवतीति शेषः ॥९८५॥
शेषदिनेषु यादृशोऽसौ भवति तद्दर्शयितुमाह—'असिणाणे'त्यादि, अस्नानः—स्नानपरिवर्जकः विकटे—प्रकटे प्रकाशे दिवा न रात्रावि-
त्यर्थः दिवापि वा प्रकाशदेशे भुङ्क्ते—अशनाद्यभ्यवहरतीति विकटभोजी, पूर्वं किल रात्रिभोजनेऽनियम आसीत् तदर्थमिदमुक्तं, 'मउलि-
यडो'त्ति अवद्धपरिधानकच्छ इत्यर्थः, तथा दिवसे—दिवा ब्रह्म चरतीत्येवंशीलो दिवसब्रह्मचारी, 'रत्तिं'ति रात्रौ किमत आह—परिमाणं—
स्त्रीणां तद्भोगानां वा प्रमाणं कृतं येन स परिमाणकृतः, कदेत्याह—प्रतिमावर्जेषु—कायोत्सर्गरहितेष्वपर्वस्वित्यर्थः दिवसेषु—दिनेष्विति
॥ ९८६ ॥ अथ कायोत्सर्गस्थितो यच्चिन्तयति तदाह—'झायई'त्यादि, ध्यायति—चिन्तयति प्रतिमायां कायोत्सर्गस्थितः—अवस्थितस्त्रि-

लोकपूज्यान्—त्रिभुवनाभ्यर्चनीयान् 'जिनान्—तीर्थकृतो जितकषायान्—निरस्तसमस्तद्वेषादिदोषान् अन्यद्वा जिनापेक्षया निजदोषप्रत्यनीकं—स्वकीयकामक्रोधप्रमुखदूषणप्रतिपक्षभूतं कामनिन्दाक्षान्तिप्रभृतिकं ध्यायति, कियत्प्रमाणेयं पञ्चमी प्रतिमेत्याह—पञ्च मासान् यावदिति ॥ ९८७ ॥ अथ षष्ठीं प्रतिमामाह—'सिंगारे'त्यादि, शृङ्गारकथा—कामकथा तथा विभूषायाः—स्नानविलेपनधूपप्रभृतिकाया उत्कर्षः—प्रकर्षः ततः समाहारद्वन्द्वः तद्वर्जयन्—परिहरन्, उत्कर्षग्रहणाच्छरीरमात्रानुगां विभूषां विदधात्यपीति, तथा स्त्रिया—योषिता सह रहसि कथां—प्रणयवार्तां वर्जयन्, किमित्याह—वर्जयति अब्रह्म—मैथुनमेकं 'तओ य'त्ति तकः—असौ प्रतिमाप्रतिपत्ता षष्ठ्यां—अब्रह्मवर्जनप्रतिमायां षण्मासान् यावत्, पूर्वस्यां हि प्रतिमायां दिवस एव मैथुनं प्रतिषिद्धं, रात्रौ पुनरप्रतिषिद्धमासीत्, अस्यां तु दिवापि रजन्यामपि च सर्वथापि मैथुनप्रतिषेधः, अत एवात्र चित्तविप्लुतिविधायिनां कामकथादीनामपि प्रतिषेधः कृत इति ॥ ९८८ ॥ अथ सप्तमीं प्रतिमामाह—'सत्तमी'त्यादि, सप्तम्यां—सचित्ताहारवर्जनप्रतिमायां सप्त मासान् यावत् सचित्तं—सचेतनमाहारं—अशनपानखादिमस्वादिमस्वरूपं नैवाहारयति—अभ्यवहरति, तथा यद्यदधस्तनीनां—प्राक्तनीनां प्रतिमानामनुष्ठानं तत्तत्सर्वमपि—निरवशेषमुपरितनीनां—अग्रेतनप्रतिमानामवसेयं, एतच्च प्रागुक्तमपि विस्मरणशीलविनेयजनानुग्रहाय पुनरुपन्यस्तम्, एवमन्यत्रापि ॥९८९॥ अथाष्टमीनवम्यौ प्रतिमे प्रतिपादयितुमाह—'आरंभे'त्यादि, अष्टमी—स्वयमारम्भवर्जनप्रतिमा भवति यस्यामष्टौ मासान् यावदारम्भस्य—पृथिव्याद्युपमर्दनलक्षणस्य स्वयं—आत्मना करणं—विधानं वर्जयति—परिहरति, स्वयमिति वचनाच्चैतदापन्नं—वृत्तिनिमित्तमारम्भेषु तथाविधतीव्रपरिणामरहितः परैः कर्मकरादिभिः सावद्यमपि व्यापारं कारयतीति, ननु स्वयमप्रवर्तमानस्याप्यारम्भेषु प्रेष्यान् व्यापारयतः प्राणिहिंसा तदवस्थैव, सत्यं, किन्तु या सर्वथैव स्वयमारम्भाणां करणतः परैश्च कारणत उभयजन्या हिंसा सा स्वयमकरणतस्तावत्परिहृतैव, यतः स्वल्पोऽपि प्रारम्भः परि-

ह्रियमाणः प्रोज्जृम्भमाणमहाव्याधेः स्तोकतरस्तोकतमक्षय इव हित एव भवति, एषा पुनर्नवमी—प्रेष्यारम्भवर्जनप्रतिमा भवति, यस्यां नव मासान् यावत् पुत्रभ्रातृप्रभृतिषु न्यस्तसमस्तकुटुम्बादिकार्यभारतया धनधान्यादिपरिग्रहेष्वल्पाभिष्वङ्गतया च प्रेष्यैरपि—कर्मकरादिभिरपि आस्तां स्वयं आरम्भान्—सपापव्यापारान् महतः कृष्यादीनिति भावः, आसनदापनादिव्यापाराणां पुनरतिलघूनामनिषेध एव, तथाविधकर्मबन्धहेतुत्वाभावेनारम्भत्वानुपपत्तेः ॥ ९९० ॥ अथ दशमीं प्रतिमामाह—'दसमे'त्यादि, दशमी पुनरुद्दिष्टभक्तवर्जनप्रतिमा दश मासान् यावद्भवति, यस्यामुद्दिष्टं—उद्देशस्तेन कृतं—विहितमुद्दिष्टकृतं, तमेव श्रावकमुद्दिश्य संस्कृतमित्यर्थः, एवंस्वरूपं भक्तमपि—ओदनादिकं नैव भुञ्जीत आस्तां तावदितरसावद्यव्यापारकरणमित्यपिशब्दार्थः, 'सो होइ'त्ति स पुनर्दशमप्रतिमाप्रतिपत्ता कश्चित् क्षुरमुण्डः—क्षुरमुण्डितमस्तको भवति 'सिहिलिं'ति शिखां वा शिरसि कोऽपि धारयतीति ॥ ९९१ ॥ तथा—'ज'मित्यादि, नवरं—केवलं स श्रावकस्तत्र—तस्यां दशमप्रतिमायां स्थितो यन्निहितं—भूम्यादौ निक्षिप्तमर्थजातं—द्रव्यं सुवर्णादिकं तत्पृच्छतां सुतानां—पुत्राणां उपलक्षणत्वाद्भ्रात्रादीनां च यदि जानाति ततः कथयति, अकथने वृत्तिच्छेदप्राप्तेः, अथ नैव जानाति ततो ब्रूते—नैवाहं किमपि जानामि—स्मरामीति, एतावन्मुक्त्वा नान्यत्किमपि तस्य गृहकृत्यं कर्तुं कल्पत इति तात्पर्यम् ॥ ९९२ ॥ अथैकादशीं प्रतिमामाह—'खुरे'त्यादि, क्षुरेण मुण्डो—मुण्डितः क्षुरमुण्डो लोचेन वा—हस्तलुञ्चनेन मुण्डः सन् रजोहरणं पतद्ग्रहं च उपलक्षणमेतत् सर्वमपि साधूपकरणं गृहीत्वा 'समणहूओ'त्ति श्रमणो—निर्ग्रन्थस्तद्वद् यस्तदनुष्ठानकरणात्स श्रमणभूतः साधुकल्प इत्यर्थः विहरेत्—गृहान्निर्गत्य निखिलसाधुसामाचारीसमाचरणचतुरः समितिगुप्त्यादिकं सम्यगनुपालयन् भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां दत्तेति भाषमाणः, कस्त्वमिति कस्मिंश्चित्पृच्छति प्रतिमाप्रतिपन्नः श्रमणोपासकोऽहमिति ब्रुवाणो ग्रामनगरादिष्वनगार इव मासकल्पा-

दिना विचरेदेकादश मासान् यावदिति । एतच्चोत्कृष्टतः कालमानमुक्तं, जघन्यतः पुनरेकादशापि प्रतिमाः प्रत्येकमन्तर्मुहूर्तादिमाना एव, तच्च मरणे वा प्रव्रजितत्वे वा सम्भवति, नान्यथेति ॥ ९९३ ॥ तथा—'ममे'त्यादि, ममेत्यस्य करणं ममकारस्तस्मिन्नव्यवच्छिन्ने—अनपगते सति, अनेन स्वजनदर्शनार्थित्वकारणमुक्तं, संज्ञाताः—स्वजनास्तेषां पल्ली—सन्निवेशस्तां संज्ञातपल्लीं व्रजति—गच्छति द्रष्टुं—विलोकयितुं संज्ञातानिति गम्यते, जे इति पादपूरणे, तत्रापि—संज्ञातपल्ल्यामपि, आस्तामन्यत्र, साधुरिव—संयत इव वर्तते, न पुनः स्वजनोपरोधेन गृहचिन्तादिकं कुर्यात्, यथा च साधुः प्रासुकमेषणीयं च गृह्णाति तथा सोऽपि श्रमणभूतप्रतिमाप्रतिपन्नः प्रासुकमेव—प्रगतासुकमेवाचेतनमेवोपलक्षणत्वादस्यैषणीयं चाहारं—अशनादिकं गृह्णातीति, ज्ञातयो हि स्नेहादनेषणीयं भक्तादि कुर्वन्ति आग्रहेण च तद् ग्राहयितुमिच्छंति अनुवर्तनीयाश्च ते प्रायो भवन्तीति तद्ग्रहणं सम्भाव्यते तथापि तदसौ न गृह्णातीति भावः ॥ इह चोत्तरासु सप्तसु प्रतिमास्वावश्यकचूर्ण्यां प्रकारान्तरमपि दृश्यते, तथाहि—"राईभत्तपरिन्नाएत्ति पञ्चमी, सचित्ताहारपरिन्नाएत्ति पष्ठी, दिया ब्रह्मचारी, राओपरिमाणकडेत्ति सप्तमी, दियावि राओवि बंभयारी असिणाणए वोसट्ठकेसमंसुरोमनहेत्ति अष्टमी, सारंभपरिन्नाएत्ति नवमी, पेसारंभपरिन्नाएत्ति दशमी, उद्दिट्ठभत्तविवज्जए समणभूएत्ति एकादशी"ति १५३ ॥ ९९४ ॥ इदानीं 'धन्नाणमबीयत्तं'ति चतुष्पञ्चाशदधिकशततमं द्वारमाह—

जव १ जवजव २ गोहुम ३ सालि ४ वीहि ५ धन्नाण कोट्ठयाईसुं। खिविऊणं पिहियाणं लित्ताणं मुद्दियाणं च ॥ ९९५ ॥ उक्कोसेणं ठिइ होइ तिन्नि वरिसाणि तयणु एएसिं । विद्धंसिज्जइ जोणी तत्तो जायइ अबीयत्तं ॥ ९९६ ॥ तिल १ मुग्ग २ मसुर ३ कलाय ४ मास ५ चवलय ६ कुलत्थ—

७ तुवरीणं ८। तह कसिणचणय ९ वल्लाण १० कोट्ठयाईसु खिविऊणं ॥ ९९७ ॥ ओलित्ताणं पिहियाण लंछियाणं च मुद्दियाणं च । उक्किट्ठठिई वरिसाण पंचगं तो अबीयत्तं ॥ ९९८ ॥ अयसी १ लट्टा २ कंगू ३ कोडूसग ४ सण ५ वरट्ट ६ सिद्धत्था ७। कोद्दव ८ रालग ९ मूलग बीयाणं १० कोट्ठईयासु ॥ ९९९ ॥ निक्खित्ताणं एयाणुक्कोसठिईए सत्त वरिसाइं । होइ जहन्नेण पुणो अंतमुहुत्तं समग्गाणं ॥ १००० ॥

'यवे'त्यादि, यवा गोधूमाश्च प्रतीताः यवयवा—यवविशेषाः शालयः—कलमादिविशेषाः व्रीहयः—सामान्यतः, एतेषां धान्यानां कोष्ठकादिषु—कुशूलपल्यप्रभृतिषु क्षिप्त्वा—प्रक्षिप्य पिहितानां—तथाविधपिधानकेन स्थगितानां लिप्तानां—द्वारदेशे पिधानेन सह गोमयादिना सर्वतोऽवलिप्तानां मुद्रितानां च—मृत्तिकादिमुद्रावतामुत्कर्षतस्त्रीणि वर्षाणि यावत् स्थितिः—अविनष्टयोनिकत्वेन अवस्थानं भवतीति, तदनु—ततः परमेतेषां—यवादीनां पश्चानां धान्यानां योनिः—अङ्कुरोत्पत्तिहेतुर्विध्वस्यते—क्षीयते, ततो—योनिविध्वंसे सति जायतेऽबीजत्वं—तद्बीजमबीजं भवति, उप्तमपि नाङ्कुरमुत्पादयतीति भावः ॥ ९९५ ॥ ९९६ ॥ तथा—'तिले'त्यादि, तिलमुद्गमाषचवलकाः प्रतीताः मसूरो—वृत्ताकारो धान्यविशेषः ( ग्रन्था० ७०० ) चनकिका इत्यन्ये कलायः—त्रिपुटाख्यो धान्यविशेषः कुलत्थाः—चवलकाकाराश्चिपिटिका भवन्ति तुवर्यः—आढक्यः, वृत्तचणकाः—शिखारहिता वृत्ताकाराश्चणकविशेषाः वल्ला—निष्पावाः, एतेषां दशानां धान्यानां कोष्ठकादिषु क्षिप्त्वा पिहितानां ततोऽवलिप्तानां ततो लाञ्छितानां—रेखादिभिः कृतलाञ्छनानां मुद्रितानां चोत्कृष्टा स्थितिर्वर्षपञ्चकं यावद्भवति, ततोऽबीजत्वं जायते, छन्दोऽनुरोधाच्च पिहितावलिप्तयोर्व्यतिक्रमनिर्देशः ॥ ९९७ ॥ ९९८ ॥ 'अयसी'त्यादि, अतसी—क्षुमा लट्टा—

कुसुंभं कङ्गुः—पीततण्डुलाः 'कोडूसग'त्ति कोरदूषकाः—कोद्रवविशेषाः शणं—त्वक्प्रधानो धान्यविशेषः, 'वरठ'त्ति धान्यविशेषः, स वरठीति सपादलक्षादिषु प्रसिद्धः सिद्धार्थाः—सर्षपाः कोद्रवाः प्रतीता एव रालकः—कङ्गुविशेषः मूलकं—शाकविशेषस्तस्य बीजानि मूलकबीजानि एतेषां दशानामपि धान्यानां कोष्ठकादिषु निक्षिप्तानां उपलक्षणमेतत् पिहितानामवलिप्तानां लाञ्छितानां मुद्रितानां चोत्कृष्टायां स्थितौ सप्त वर्षाणि भवन्ति, जघन्येन पुनः समग्राणां—सर्वेषामपि पूर्वोक्तानां धान्यानामन्तर्मुहूर्तं स्थितिर्भवति, अन्तर्मुहूर्ताच्च परतः स्वायुःक्षयादेवाचित्तता जायते, सा च परमार्थतोऽतिशयज्ञानेनैव सम्यक्परिज्ञायते न छाद्मस्थिकज्ञानेनेति न व्यवहारपथमवतरति, अत एव च पिपासापीडितानामपि साधूनां स्वभावतः स्वायुःक्षयेणाचित्तीभूतमपि तडागोदकं पानाय वर्धमानस्वामी भगवान् नानुज्ञातवान्, इत्थंभूतस्याचित्तीभवनस्य छद्मस्थानां दुर्लक्षत्वेन मा भूत्सर्वत्रापि तडागोदके सचित्तेऽपि पाश्चात्यसाधूनां प्रवृत्तिप्रसङ्ग इति कृत्वा १५४ ॥ ९९९ ॥ १००० ॥ इदानीं 'खेत्ताइयाणऽचित्तं'ति पञ्चपञ्चाशदधिकशततमं द्वारमाह—

**जोयणसयं तु गंता अणहारेणं तु भंडसंकंती । वायागणिधूमेहि य विद्धत्थं होइ लोणाई॥१००१॥**
**हरियालो मणसिल पिप्पली उ खज्जूर मुद्दिया अभया। आइन्नमणाइन्ना तेऽवि हु एमेव नायव्वा ॥ २ ॥ आरुहणे ओरुहणे निसियण गोणाइणं च गाउम्हा। भोम्माहारच्छेओ उवक्कमेणं तु परिणामो ॥ ३ ॥**

एकं योजनशतं गत्वा—अतिक्रम्य लवणादि विध्वस्तम्—अचित्तं भवति, केनेत्याह—अनाहारेण—स्वदेशजसाधारणाहाराभावेन, अयमर्थः—विवक्षितक्षेत्रादन्यत्र क्षेत्रे लवणादिकं यदा नीयते तदा तत्प्रतिदिनं विध्वस्यमानं २ तावद्गच्छति यावद्योजनशतं, योजनशतादूर्ध्वं पुन-

भिन्नाहारत्वेन शीतादिसम्पर्कतश्चावश्यमचित्तीभवति, केचित्तु योजनशतस्थाने गव्यूतशतं पठन्ति, यदुक्तं निशीथचूर्णौ—'केई पठंति गाउयसयगाहा' इति, तथा 'भंडसंकंती'ति प्राकृतत्वेन विभक्तिव्यत्ययात् भाण्डसङ्क्रान्त्या—पूर्वभाजनादपरभाजनप्रक्षेपणेन पूर्वभाण्डशालाया वाऽन्यभाण्डशालासंचारणेन वाताग्निधूमैश्च योजनशतमगतमपि स्वस्थानेऽन्तरे वा वर्तमानं लवणादिकमचित्तं भवतीति । इत्थं च क्षेत्रादिक्रमेणाचित्तीभवनं पृथिवीकायिकानां वनस्पतिपर्यन्तानां सर्वेषामपि प्रतिपत्तव्यम् ॥ १००१ ॥ अत एवाह—'हरियाले'त्यादि, हरितालादयः प्रतीता एव, नवरं मुद्रिका—द्राक्षा अभया—हरितकी, एतेऽप्येवमेव ज्ञातव्याः, योजनशतात्परतः पूर्वोक्तैरेव हेतुभिरचित्तीभवन्तीति भावः, 'आइन्नमणाइन्न'त्ति योजनशतादागता अपि केचिदाचीर्णाः केचित्पुनरनाचीर्णाः, तत्र पिप्पलीहरितक्यादय आचीर्णा अतो गृह्यन्ते खर्जूरद्राक्षादयः पुनरनाचीर्णास्ततोऽचित्ता अपि न गृह्यन्ते इति ॥ २ ॥ अथ लवणादीनामेवाचित्तताकारणाभिव्यञ्जनायाह—'आरुहणे' इत्यादि, तेषां लवणादीनामारोहणे—शकटगवादिपृष्ठादिष्वधिरोपणे सति तथा अवरोहणे—शकटादिभ्य एवावतारणे तथा निषीदन्तीति नन्द्यादेराकृतिगणत्वाद्युप्रत्यये निषदना—लवणाद्युपरि निविष्टपुरुषाः तेषां गवादीनां च गात्रोष्मणा, तथा यो यस्य लवणादेराहारो भौमादिः—पार्थिवादिस्तस्य व्यवच्छेदे च—अभावे सति, तथा उपक्रम्यते—बहुकालवेद्यमप्यायुः स्तोकेनैव कालेन निष्ठां नीयते अनेनेत्युपक्रमः—स्वकायशस्त्रादिः, तथाहि—किञ्चित्कस्यचित् स्वकायशस्त्रं यथा क्षारोदकं मधुरोदकस्य किञ्चित्परकायशस्त्रं यथा ज्वलनो वनस्पतेः किञ्चित्तूभयशस्त्रं यथा मृत्तिकामिश्रमुदकं शुद्धोदकस्य, तेन च परिणामः—अचित्तता भवति, सचित्तमप्येभिः कारणैरचित्ततारूपेण परिणमतीत्यर्थः १५५ ॥३॥ इदानीं च 'धन्नाइं चउवीसं'ति षट्पञ्चाशदधिकशततमं द्वारमाह—

**धन्नाइं चउवीसं जव १ गोहुम २ सालि ३ वीहि ४ सट्ठी ५ य । कोद्दव ६ अणुया ७ कंगू ८**

रालय ९ तिल १० मुग्ग ११ मासा १२ य ॥ ४ ॥ अयसि १३ हरिमंथ १४ तिउगड १५ निप्फाव १६ सिलिंद १७ रायमासा १८ य। इक्खू १९ मसूर २० तुवरी २१ कुलत्थ २२ तह धन्नय २३ कलाया २४ ॥ ५ ॥

धान्यानि चतुर्विंशतिर्भवन्ति, यथा—यवाः १ गोधूमाः २ शालयो ३ व्रीहयः ४ षष्टिकाः ५ कोद्रवा ६ अणुकाः ७ कंगुः ८ रालकः ९ तिला १० मुद्गा ११ माषाश्च १२ तथा अतसी १३ हरिमन्थाः १४ त्रिपुटिकाः १५ निष्पावाः १६ शिलिन्दा १७ राजमाषा १८ इक्षवः १९ मसूराः २० तुवर्यः २१ कुलत्था २२ स्तथा धान्यकं २३ कलायाः २४ इत्येतानि च प्रायेण लोकप्रसिद्धानि प्रागुक्तान्येव, नवरं षष्टिकाः—शालिभेदः ये षष्टिरात्रेण पच्यन्ते, अणुका—युगन्धरी, बृहच्छिरा कङ्गुः अल्पतरशिरो रालकः, हरिमन्थाः—कृष्णचणकाः शिलिन्दा—मकुष्टाः राजमाषाः—चवलकाः धान्यकं—कुसुम्भरी कलाया—अत्र वृत्तचणका इति १५६ ॥ ४ ॥ ५ ॥

अधुना 'मरणं सत्तरसभेयं'ति सप्तपञ्चाशदधिकशततमं द्वारमाह—

आवीइ १ ओहि २ अंतिय ३ वलायमरणं ४ वसट्टमरणं च ५ । अंतोसल्लं ६ तब्भव ७ बालं ८ तह पंडियं ९ मीसं १० ॥ ६ ॥ छउमत्थमरण ११ केवलि १२ वेहायस १३ गिद्धपिट्ठमरणं १४ च । मरणं भत्तपरिन्ना १५ इंगिणि १६ पाओवगमणं च १७ ॥ ७ ॥ अणुसमयनिरंतरमाविइसन्नियं तं भणंति पंचविहं । दव्वे खेत्ते काले भवे य भावे य संसारे ॥ ८ ॥ एमेव ओहिमरणं जाणि मओ ताणि चेव मरइ पुणो । एमेव आइअंतियमरणं नवि मरइ ताणि पुणो ॥ ९ ॥ संज-

मजोगविसन्ना मरंति जे तं वलायमरणं तु । इंदियविसयवसगया मरंति जे तं वसट्टं तु ॥ १० ॥ गारवपंकनिवुड्डा अइयारं जे परस्स न कहंति । दंसणनाणचरित्ते ससल्लमरणं हवइ तेसिं ॥ ११ ॥ मोत्तुं अकम्मभूमिय नरतिरिए सुरगणे य नेरइए । सेसाणं जीवाणं तब्भवमरणं च केसिंचि ॥१२॥ मोत्तूण ओहिमरणं आवी(ई)यंतियंतियं चेव। सेसा मरणा सव्वे तब्भवमरणेण नायव्वा ॥१३॥ अविरयमरणं बालं मरणं विरयाण पंडियं बिंति । जाणाहि बालपंडियमरणं पुण देसविरयाणं ॥१४॥ मणपज्जवोहिनाणी सुयमइनाणी मरंति जे समणा । छउमत्थमरणमेयं केवलिमरणं तु केवलिणो ॥ १५ ॥ गिद्धाइभक्खणं गिद्धपिट्ठ उब्बंधणाइ वेहासं । एए दोन्निऽवि मरणा कारणजाए अणुन्नाया ॥ १६ ॥ मरणं भत्तपरिन्ना इंगिणि पायवगमणं च तिन्नि मरणाइं । कन्नसमज्झिमजेट्ठा धिइसंघयणेण उ विसिट्ठा ॥ १७ ॥

'आवीई'त्यादि, मरणशब्दस्य प्रत्येकमभिसम्बन्धादावीचिमरणं अवधिमरणं 'अंतियं'ति आत्यन्तिकमरणं आर्षत्वाच्चेत्थं निर्देशः एवमुत्तरत्रापि, 'वलायमरणं'ति वलन्मरणं वशार्त्तमरणं च अन्तःशल्यमरणं तद्भवमरणं बालमरणं तथा पण्डितमरणं मिश्रमरणं छद्मस्थमरणं केवलिमरणं 'वेहायसं'ति वैहायसमरणं गृध्रपृष्ठं च मरणं 'भत्तपरिन्न'त्ति भक्तपरिज्ञामरणं इंगिनीमरणं पादपोपगमनमरणं चेति ॥६॥७॥ एतानि क्रमशः स्वयमेव विवरीपुरावीचिमरणं तावदाह—'अणुसमय'मित्यादि, अनुसमयं—समयमाश्रित्य, इदं च व्यवहितसमयाश्रयणतोऽपि भवतीति मा भूद्भ्रान्तिरत आह—निरन्तरं—असान्तरमन्तरालाभावात्, किं तदेवंविधं ?—'आवीचिसंज्ञितं' आ—समन्तात् वीचय

इव वीचयः—प्रतिसमयमनुभूयमानायुषोऽपरापरायुर्दलिकोदयात्पूर्वपूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन् मरणे तदावीचि, तत आवीचीति संज्ञा सञ्जाता यस्मिन् तदावीचिसंज्ञितं, तारकादित्वादितचि रूपमिदं, अथवा वीचिः—विच्छेदस्तदभावोऽवीचिः, दीर्घत्वं तु प्राकृतत्वात्, उभयत्र प्रक्रमान्मरणं, तदेवम्भूतं प्रतिक्षणमायुर्द्रव्यविचटनलक्षणमावीचिमरणं पञ्चविधं भणन्ति तीर्थकरगणधरादयोऽस्मिन् संसारे—जगति, पञ्चविधत्वमेवाह—द्रव्ये क्षेत्रे काले भवे भावे च, द्रव्याऽऽवीचिमरणं क्षेत्राऽऽवीचिमरणं कालाऽऽवीचिमरणं भवाऽऽवीचिमरणं भावाऽऽवीचिमरणं चेत्यर्थः, तत्र द्रव्याऽऽवीचिमरणं नाम यन्नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृति निजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद्विचटनं, तच्च नारकादिभेदाच्चतुर्विधं, एवं नारकादिगतिचातुर्विध्यापेक्षया तद्विषयं क्षेत्रमपि चतुर्विधं ततस्तत्प्राधान्यापेक्षया क्षेत्रावीचिमरणमपि चतुर्धैव, काल इति यथायुष्ककालो गृह्यते, न तु अद्धाकालस्तस्य देवादिष्वसम्भवात्, स च देवायुष्ककालादिभेदाच्चतुर्विधः, अतस्तत्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधमेव, नारकादिचतुर्विधभवापेक्षया भवावीचिमरणमपि चतुर्धैव, तेषामेव च नारकादीनां चतुर्विधायुःक्षयलक्षणभावप्राधान्यापेक्षया भावावीचिमरणमपि चतुर्धैवेति ॥ ८ ॥ अथावधिमरणमाह—'एवमेवे'त्यादि, एवमेव यथाऽऽवीचिमरणं द्रव्यक्षेत्रकालभवभावभेदतः पञ्चविधं तथेदमवधिमरणमपीत्यर्थः, तत्स्वरूपमाह—यानि मृतः सम्प्रतीति शेषः तानि चैव 'मरइ पुण'त्ति तिङ्व्यत्ययेन मरिष्यति पुनः, किमुक्तं भवति ?—अवधिः—मर्यादा ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते पुनर्यदि तान्येवानुभूय मरिष्यति तदा द्रव्यावधिमरणं, तद्द्रव्यापेक्षया पुनस्तद्ग्रहणावधेर्यावज्जीवस्य मृतत्वात्, सम्भवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं परिणामवैचित्र्यादिति, एवं क्षेत्रकालादिष्वपि भावना कार्या । आत्यन्तिकमरणमाह—'एमेवे'त्यादि, एवमेव—अवधिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदतः पञ्च-

तया सह तेन सशल्यं तत्र तन्मरणं च सशल्यमरणम्—अन्तःशल्यमरणं भवति तेषां—गौरवपङ्कनिमग्नानामिति ॥ ११ ॥ तद्भवमरणमाह
—'मोत्तुं' इत्यादि, मुक्त्वा—अपहाय, कान्?—अकर्मभूमिजाश्च ते देवकुरूत्तरकुर्वादिपूत्पन्नतया नरतिर्यञ्चश्चाकर्मभूमिजनरतिर्यञ्च-
स्तान्, तेषां हि तद्भवानन्तरं देवेष्वेवोत्पादः, तथा सुरगणांश्च—सुरनिकायान्, किमुक्तं भवति?—चतुर्निकायवर्तिनोऽपि देवान्, तथा
निरयो—नरकस्तस्मिन् भवा नैरयिकास्तांश्च मुक्त्वेति सम्बन्धः, तेषां देवानां च तद्भवानन्तरं तिर्यग्मनुष्येष्वेवोत्पत्तेः, शेषाणां—एतदुद्ध-
रितानां कर्मभूमिजनरतिरश्चां जीवानां—प्राणिनां तद्भवमरणं, तेषामेव पुनस्तत्रोत्पत्तेः, तद् विद्यते यस्मिन् भवे—तिर्यग्मनुष्यलक्षणे वर्तते
जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण म्रियमाणस्य भवति, तुशब्दस्तेषामपि सङ्ख्येयवर्षायुषामेवेति विशेषख्यापकः, असङ्ख्येयवर्षायुषां
हि युगलधार्मिकत्वादकर्मभूमिजानामिव देवेष्वेवोत्पादः, तेषामपि न सर्वेषां, किन्तु केषाञ्चित्तद्भवोपादानरूपमेवायुःकर्मोपचिन्वतामिति
॥ १२ ॥ अत्रान्तरे—आवीई इति गाथा सूत्रे दृश्यते न चास्या भावार्थः सम्यगवगम्यते नाप्यसावुत्तराध्ययनचूर्ण्यादिषु व्याख्यातेत्युपेक्ष्यते
॥ १३ ॥ सम्प्रति बालपण्डितमिश्रमरणान्याह—'अविरये'त्यादि, विरमणं विरतं—हिंसानृतादेरुपरमणं न विद्यते तद्येषां तेऽविरता-
स्तेषां—मृतिसमयेऽपि देशविरतिमप्यप्रतिपद्यमानानां मिथ्यादृशां सम्यग्दृशां वा मरणमविरतमरणं तद् बाला इव बालाः—अविरतास्तेषां
मरणं बालमरणमिति ब्रुवते इति सम्बन्धः, तथा विरतानां—सर्वसावद्यनिवृत्तिमभ्युपगतानां मरणं पण्डितमरणं ब्रुवते तीर्थकरगणधरा-
दय इति, तथा जानीहि बालपण्डितमरणं—मिश्रमरणं, पुनःशब्दः पूर्वापेक्षया विशेषद्योतनार्थः, देशात्सर्वविरतविषयापेक्षया स्थूलप्राणि-
व्यपरोपणादेर्विरता देशविरतास्तेषां देशविरतानां ॥ १४ ॥ एवं चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण छद्मस्थमरणकेवलिम-
रणे प्राह—'मणपज्जवो' इत्यादि, मनःपर्यायज्ञानिनोऽवधिज्ञानिनः श्रुतज्ञानिनो मतिज्ञानिनश्च म्रियन्ते ये श्रमणाः—तपस्विनः छाद्य-

मनःपर्यायनिर्देशाद्धि-
न्तीति छद्मानि—ज्ञानावरणादीनि कर्माणि तेपु तिष्ठन्तीति छद्मस्थास्तेषां मरणं छद्मस्थमरणमेतत्, इह च प्रथमतो मनःपर्यायनिर्देशाद्धि-
शुद्धिकृतप्राधान्याङ्गीकारेण चारित्रिण एतदुपजायते इति स्वामिकृतप्राधान्यापेक्षया द्रष्टव्यं, एवमवध्यादिष्वपि यथायोगं स्वधियैव हेतु-
वाँच्य इति, तथा केवलमरणं केवलिनः—उत्पन्नकेवलज्ञानस्य सकलकर्मपुद्गलशाटनतो म्रियमाणस्य भवतीति ॥ १४ ॥ साम्प्रतं वैहाय-
सगृध्रपृष्ठमरणे अभिधातुमाह—'गिद्धाई'त्यादि, गृध्राः—प्रतीताः ते आदिर्येषां शकुनिकाशिवादीनां तैर्भक्षणं गम्यमानत्वादात्मनस्तदनि-
वारणादिना तद्भक्ष्यकरिकरभादिशरीरानुप्रवेशेन च गृध्रादिभक्षणं, तत्किमुच्यते ? इत्याह—'गिद्धपिट्ठ'त्ति गृध्रैः स्पृष्टं—स्पर्शनं यस्मिन्
तद् गृध्रस्पृष्टं यदिवा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि च मर्तुर्यस्मिन् तद् गृध्रपृष्ठं, स ह्यलक्तकपूणिकापुटप्रदानेनात्मानं गृध्रा-
दिभिः पृष्ठादौ भक्षयतीति, पश्चान्निर्दिष्टस्यापि तस्य प्रथमतः प्रतिपादनमत्यन्तमहासत्त्वविषयतया कर्मनिर्जरां प्रति प्राधान्यख्यापनार्थम्,
'उव्वंधणाइ वेहास'मिति उद्—ऊर्द्ध्वं वृक्षशाखादौ वन्धनमुद्बन्धनं तदादिर्यस्य तरुगिरिभृगुप्रपातादेरात्मनैव जनितस्य मरणस्य तदु-
द्बन्धनादि, 'वेहास'मिति प्राकृतत्वाद्यलोपे विहायसि—व्योमनि भवं वैहायसं, उद्बद्धस्य हि विहायस्येव भवनमिति तत्प्राधान्यविव-
क्षयेत्थमुक्तमिति, नन्वेवं गृध्रपृष्ठस्याप्यात्मघातरूपत्वाद्वैहायस एवान्तर्भावः, सत्यमेतत् केवलमस्याल्पसत्त्वैर्विधातुमशक्यत्वख्यापनार्थं
भेदोपन्यासः, ननु—'भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणंमि परम्मि य तो वज्जे पीडमुभओऽवि ॥ १ ॥'
[ भावितजिनवचनानां ममत्वरहितानां नास्त्येव विशेषः । आत्मनि च परस्मिंश्च ततो वर्जयेत् पीडामुभयोरपि ॥ १ ॥ ] इत्यागमः,
एते चानन्तरोक्ते मरणे अत्यन्तमात्मपीडाकारिणी इति कथं नागमविरोधः ?, अत एव च भक्तपरिज्ञानादिषु पीडापरिहाराय 'चत्तारि
विचित्ताइं । विगईनिज्जूहियाइं चत्तारि ॥' [ चत्वारि ( वर्षाणि ) विचित्राणि विकृतिनिर्यूढानि चत्वारि ] इत्यादिसंलेखनाविधिः पान-

कादिविधिश्च तत्राभिहितः, दर्शनमालिन्यं चोभयत्रेत्याशंक्याह—एते—अनंतरोक्ते द्वे अपि—गृध्रपृष्ठवैहायसाख्ये मरणे **'कारण'**त्ति प्राक्तत्वेन सप्तमीलोपात् कारणे—दर्शनमालिन्यपरिहारादिके जाते—समुत्पन्ने यद्वा कारणजाते—कारणप्रकारे सति **उदायिनृपानुमृततथाविधगीतार्थाचार्यवदनुज्ञाते** इत्यदोषः ॥ १६ ॥ सम्प्रति **अन्त्यमरणत्रयमाह**—**'मरण'**मित्यादि, भक्तं—भोजनं तस्य परिज्ञानं परिज्ञा, सा द्विधा—ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, ज्ञपरिज्ञयाऽनेकविधमस्माभिर्भुक्तपूर्वमेतद्धेतुकं च सर्वमवद्यमिति परिज्ञानं, प्रत्याख्यानपरिज्ञया च—"सव्वं च असणपाणं चउव्विहं जो य बाहिरो उवही। अब्भिन्तरं चउविहं जावज्जीवं च वोसिरइ ॥ १ ॥" [सर्वं चाशनपानं चतुर्विधं यश्च बाह्य उपधिः। अभ्यन्तरं चतुर्विधं यावज्जीवं च व्युत्सृजति ॥ १ ॥] इत्यागमवचनाच्चतुर्विधाहारस्य त्रिविधाहारस्य वा यावज्जीवमपि परित्यागात्मकं प्रत्याख्यानं भक्तपरिज्ञोच्यते, तथा इङ्ग्यते—प्रतिनियतदेश एव चेष्टतेऽस्यामनशनक्रियायामितीङ्गिनी, भक्तपरिज्ञायां हि त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याचष्टे शरीरपरिकर्म च स्वतः करोति परतश्च कारयति, इङ्गिन्यां तु नियमाच्चतुर्विधाहारविरतिः परपरिकर्मविवर्जनं च भवति, स्वयं पुनरिङ्गितदेशाभ्यन्तरे उद्वर्तनादिचेष्टात्मकं परिकर्म यथासमाधि विदधात्यपीति विशेषः, तथा पादैः—अधःप्रसर्पिमूलात्मकैः पिबतीति पादपो—वृक्षः, उपशब्दश्चौपम्ये उपमेयेऽपि सादृश्येऽपि च दृश्यते, ततश्च पादपमुपगच्छति—सादृश्येन प्राप्नोतीति पादपोपगमनं, किमुक्तं भवति?—यथैव पादपः कचित्कथञ्चिन्निपतितः सममसमं वा अविभावयन् निश्चल एवास्ते तथा अयमपि भगवान् यद्यथा समविषमदेशेष्वङ्गमुपाङ्गं वा प्रथमतः पतितं न तत्ततश्चलयतीति, इह चैवंविधानशनोपलक्षितानि मरणान्यप्येवमुक्तानि, अत एवाह—त्रीणि मरणानि, अथैतेषामेव त्रयाणां मरणानां किञ्चित् स्वरूपमाह—**'कन्नस'**त्ति सूत्रत्वात् कनिष्ठं—लघु जघन्यमितियावत् मध्यमं—लघुज्येष्ठयोर्मध्यभावि ज्येष्ठं—अतिशयवृद्धमुत्कृष्टमित्यर्थः तत एतेषां द्वन्द्वे कनिष्ठमध्यमज्येष्ठानि यथास-

ब्देन त्रीण्यपि मरणान्यवसेयानि, तथा 'धिइ'त्ति धृतिः—संयमं प्रति चित्तस्वास्थ्यं संहननं—शरीरसामर्थ्यहेतुर्वज्रऋषभनाराचादि ततः समाहारद्वन्द्वे धृतिसंहननं तेन विशिष्टान्येतानि, इदमुक्तं भवति—यद्यपि त्रितयमप्येतत् 'धीरेणवि मरियव्वं कापुरिसेणावि अवस्स मरियव्वं । तम्हा अवस्समरणे वरं खु धीरत्तणे मरिउं ॥ १ ॥' [ धीरेणापि मर्त्तव्यं कापुरुषेणाप्यवश्यं मर्त्तव्यं तस्मादवश्यमरणे धीरत्वेनैव मर्त्तुं वरं ॥ १ ॥ ] इत्यादिभावनातः शुभाशयवानेव प्रतिपद्यते फलमपि च वैमानिकता मुक्तिलक्षणं च त्रयस्यापि समानं, तथा चोक्तम्—"एयं पच्चक्खाणं अणुपालेऊण सुविहिओ सम्मं । वेमाणिओ व देवो हविज्ज अहवावि सिज्झिज्जा ॥ १ ॥" [ एतत् प्रत्याख्यानमनुपाल्य सुविहितः सम्यक् वैमानिको देवो वा भवेत् अथवापि सिध्येत् ॥ १ ॥ ] तथापि विशिष्टविशिष्टतरविशिष्टतमधृतिमतामेव च तत्प्राप्तिरिति ज्येष्ठत्वादिस्तद्विशेष उच्यते, तथाहि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति, यत उक्तम्—"सव्वावि य अज्जाओ सव्वेवि य पढमसंघयणवज्जा । सव्वेवि देसविरया पच्चक्खाणेण उ मरंति ॥ १ ॥" [ सर्वा अप्यार्याः सर्वेऽपि च प्रथमसंहननवर्जाः । सर्वेऽपि च देशविरताः प्रत्याख्यानेनैव म्रियन्ते ॥ १ ॥ ] अत्र च प्रत्याख्यानशब्देन भक्तपरिज्ञैव भणिता, तत्र प्राक् पादपोपगमादेरन्यथा भणनात्, इङ्गिनीमरणं तु विशिष्टतरधृतिसंहननवतामेव भवतीत्यार्यिकादिनिषेधत एवावसीयते, पादपोपगमनं तु नाम्नैव विशिष्टतमधृतिमतां वज्रर्षभनाराचसंहननिनामेव च भवति, उक्तं च—"पढमंमि य संघयणे वट्टंते सेलकुड्डसामाणा । तेसिंपि य वोच्छेओ चोद्दसपुव्वीण वोच्छेए ॥ १ ॥" [ प्रथमे च संहनने वर्त्तमाने शैलकुड्यसमानाः । तेषामपि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे ॥ १ ॥ ] इति, तीर्थकरसेवितत्वाच्च पादपोपगमनस्य ज्येष्ठत्वं, इतरयोश्च विशिष्टसाधुसेवितत्वादन्यथात्वं, यतोऽभ्यधायि—"सव्वे सव्वद्धाए सव्वन्नू सव्वकम्मभूमीसु । सव्वगुरू सव्वमहिया सव्वे मेरुम्मि अभिसित्ता ॥ १ ॥ सव्वाहिं लद्धीहिं सव्वेऽवि परिसहे पराजित्ता । सव्वेवि य

तित्थयरा पाओवगया उ सिद्धिगया ॥ २ ॥ अवसेसा अणगारा तीयपडुप्पन्नऽणागया सव्वे । केई पाओवगया पच्चक्खाणिंगिणी केई
॥ ३ ॥" [ सर्वे सर्वाद्धायां एते सर्वज्ञाः सर्वकर्मभूमिषु सर्वगुरवः सर्वमहिताः सर्वे मेरौ अभिषिक्ताः ॥ १ ॥ सर्वामिर्लब्धिभिर्युक्ताः
सर्वेऽपि च परिषहान् पराजित्य । सर्वेऽपि च तीर्थकराः पादपोपगताः सिद्धिगताः ॥ २ ॥ अवशेषा अनगाराः अतीतप्रत्युत्पन्नानागताः
सर्वे । केचित् पादपोपगताः प्रत्याख्यानिन इङ्गिनश्च केचित् ॥ ३ ॥ ] इति, तस्माद्भक्तपरिज्ञानं कनिष्ठं इङ्गिनीमरणं मध्यमं पादपोप-
गमनं तु ज्येष्ठमिति १५७ ॥ १७ ॥ इदानीं 'पलिओवमं' इत्यष्टपञ्चाशदधिकशततमं द्वारमाह—

पलिओवमं च तिविहं उद्धारऽद्धं च खेत्तपलियं च । एक्केक्कं पुण दुविहं बायर सुहुमं च नायव्वं
॥ १८ ॥ जं जोयणविच्छिन्नं तं तिउणं परिरएण सविसेसं । तावइयं उव्विद्धं पल्लं पलिओवमं
नाम ॥ १९ ॥ एगाहियबेहियतेहियाण उक्कोस सत्तरत्ताणं । सम्मट्ठं संनिचियं भरियं वालग्ग-
कोडीहिं ॥ २० ॥ तत्तो समए समए इक्किक्के अवहियंमि जो कालो । संखिज्जा खलु समया बाय-
रउद्धारपल्लंमि ॥ २१ ॥ एक्केक्कमओ लोमं कट्टुमसंखिज्जखंडमद्दिस्सं । समछेयाणंतपएसियाण
पल्लं भरिज्जाहि ॥ २२ ॥ तत्तो समए समए एक्केक्के अवहियंमि जो कालो । संखिज्ज वासकोडी
सुहुमे उद्धारपल्लंमि ॥ २३ ॥ वाससए वाससए एक्केक्के बायरे अवहियंमि । बायरअद्धापलियं
संखेज्जा वासकोडीओ ॥ २४ ॥ वाससए वाससए एक्केक्के अवहियम्मि सुहुमंमि । सुहुमं अद्धा-

**पलियं हवंति वासा असंखिज्जा ॥ २५ ॥ बायरसुहुमायासे खेत्तपएसाणुसमयमवहारे । बायर-सुहुमं खेत्तं उस्सप्पिणीओ असंखेज्जा ॥ २६ ॥**

'पलिओवमे'त्यादिगाथानवकम्, पल्यो—वर्तुलाकृतिर्धान्याधारविशेषः पल्यवत्पल्यः—पुरस्ताद्वक्ष्यमाणस्वरूपः तेनोपमा यत्र कालप्रमाणे तत्पल्योपमं, तच्च त्रिधा—उद्धारपल्योपमं अद्धापल्योपमं क्षेत्रपल्योपमं च, तत्र वक्ष्यमाणस्वरूपवालाग्राणां तत्खण्डानां चोद्धारेण द्वीपसमुद्राणां वा प्रतिसमयमुद्धरणम्—अपहरणमुद्धारः तद्विषयं तत्प्रधानं वा पल्योपममुद्धारपल्योपमं, तथा अद्धा—कालः स चेह प्रक्रमाद्वक्ष्यमाणवालाग्राणां तत्खण्डानां वा प्रत्येकं वर्षशतलक्षण उद्धारकालो गृह्यते, अथवा प्रस्तुताद्धापल्योपमपरिच्छेद्यो नारकाद्यायुष्कलक्षणः कालोऽद्धा तत्प्रधानं तद्विषयं वा पल्योपममद्धापल्योपमं, तथा क्षेत्रं—विवक्षिताकाशप्रदेशस्वरूपं तदुद्धारप्रधानं पल्योपमं क्षेत्रपल्योपमं, एतेषां च मध्ये पुनरेकैकं द्विभेदं ज्ञातव्यं—बादरं सूक्ष्मं च, तत्र वालाग्राणां सूक्ष्मखण्डाकरणतो यथावस्थितानां स्थूलानां ग्रहणाद्बादरं तेषामेवासङ्ख्येयसूक्ष्मखण्डकरणतः सूक्ष्ममिति ॥ १८ ॥ कः पुनरसौ पल्यो येन पल्योपमे उपमा विधीयते ? इत्याह—'ज'मित्यादि, नाम इति शिष्यस्य कोमलामन्त्रणे 'पलिओवमं' इत्यत्र प्राकृतत्वेन विभक्तिव्यत्ययात् सप्तमी 'पल्लं' इत्यादावपि लिङ्गव्यत्ययात् पुंस्त्वं, ततश्च पल्योपमे—पल्योपमविषये धान्यपल्यवत्पल्यः प्रागुदिष्टः स विज्ञेयो, यः किमित्याह—यो विस्तीर्णः, कियदित्याह—योजनमुत्सेधाङ्गुलकमनिष्पन्नं, वृत्ताकारत्वाद्दैर्घ्येणापि योजनमिति द्रष्टव्यं, तच्च योजनं त्रिगुणं सविशेषं परिरयेण, प्रमितिमङ्गीकृत्य सर्वस्यापि वृत्तपरिधेः किञ्चिन्न्यूनपञ्चभागाधिकत्रिगुणत्वादस्यापि पल्यस्य किञ्चिन्न्यूनपञ्चभा(ग्रं० ९००)गाधिकानि त्रीणि योजनानि परिधिर्भवतीत्यर्थः, 'उविद्धं' उच्चोऽपि तावदेव योजनमेवेत्यर्थः, आयामविष्कम्भाभ्यां प्रत्येकमेकयोजनमानः उच्चत्वेनापि योजनप्रमाणः परिधिना तु किञ्चिन्न्यूनपञ्चभागाधिक-

योजनत्रयमानो यः पल्यः स इह पल्योपमं विज्ञेय इति तात्पर्यं ॥ १९ ॥ अथ अयमेव पल्यो यत्स्वरूपैर्वालाग्रैः पूर्यते तदेतन्निरूपयितुमाह—'एगाहिये'त्यादि, एकेनाह्ना निर्वृत्ता एकाहिक्यः द्वाभ्यां त्रिभिश्चाहोभिर्निष्पन्ना द्व्याहिक्यस्त्र्याहिक्यश्च तासामेकाहिकीद्व्याहिकीत्र्याहिकीनामेवं चतुराहिकीनां यावदुत्कर्षतः सप्तरात्रप्ररूढानां वालानामेवातिसूक्ष्मत्वादग्रकोटयो वालाग्रकोटयस्तासां भृतोऽसौ पल्यो-ऽत्राधिक्रियते, तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्यः द्वाभ्यां तु या उत्तिष्ठन्ति ता द्व्याहिक्यः त्रिभिस्तु त्र्याहिक्यः एवं यावत्सप्तरात्रप्ररूढाः सप्तरात्रिक्य इति, कथं पुनस्तासां वालाग्रकोटीनां भृत इत्याह—संमृष्टः—आकर्णपूरितः संनिचितः—प्रचयविशेषान्निबिडीकृतः, किं बहुना?, तथा कथञ्चनापि भृतोऽसौ पल्यो यथा तानि वालाग्राणि न वायुरपहरति नापि वह्निर्दहति न च तेषु सलिलं प्रविश्य कोथमापादयति, तदुक्तम्—"ते णं वालग्गा नो अग्गी डहेज्जा नो वाऊ हरेज्जा नो सलिलं कुत्थेज्जा" [ तान् वालाग्रान् नाग्निर्दहेत् न वायुर्हरेत् न सलिलं कोथयेत् ] इत्यादि ॥ २० ॥ ततः किमित्याह—'तत्तो' इत्यादि, ततो—यथोक्तवालाग्रभृतपल्यात् समये समये—प्रतिसमयमेकैकस्मिन् वालाग्रेऽपह्रियमाणे यावान् कालो लगति, प्रतिसमयं वालाग्राकर्षणाद्यावता कालेन सकलोऽपि स पल्यः सर्वात्मना निर्लेपो भवतीत्यर्थः, तावान् कालो वादरमुद्धारपल्योपमं इत्यावृत्त्या प्रथमान्ततयाऽप्यत्र सम्बध्यते, कियान् पुनरसौ काल इति कथ्यतामित्याह—खल्ववधारणे सङ्ख्येया एव समया अस्मिन् वादरे उद्धारपल्योपमे भवन्ति नासङ्ख्येयाः, वालाग्राणामप्यत्र सङ्ख्यातत्वात् तेषां च प्रतिसमयमेकैकापहारे सङ्ख्येयस्यैव समयराशेः सद्भावादिति ॥ २१ ॥ उक्तं वादरमुद्धारपल्योपमं, अथ क्रमप्राप्तमेव सूक्ष्ममुद्धारपल्योपममभिधित्सुराह—'एक्केक्के'त्यादि, अतः—सहजवालाग्रभृतपल्यादेकैकं लोम—पूर्वोक्तवालाग्रलक्षणं असङ्ख्येयानि खण्डानि यत्र तदसङ्ख्येयखण्डमदृश्यं कृत्वा, एतदुक्तं भवति—पूर्वं वालाग्राणि सहजान्येव गृही-

तानि अत्र तु तान्येव वालाग्राणि प्रत्येकं तावदसत्कल्पनया खण्ड्यन्ते यावद्दृश्यतास्वरूपासङ्ख्येयखण्डरूपतामेकैकं वालाग्रं भजत इति, तत्पुनरेकैकं वालाग्रखण्डं द्रव्यतोऽत्यन्तविशुद्धलोचनश्छद्मस्थः पुरुषो यदतीव सूक्ष्मं पुद्गलद्रव्यं चक्षुषा पश्यति तदसङ्ख्येयभागमात्रं, क्षेत्रतस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रेऽवगाहते तदसङ्ख्येयगुणक्षेत्रावगाहि द्रव्यप्रमाणं, तथा **चानुयोगद्वारसूत्रम्**—"तत्थ णं एगमेगे वालग्गे असंखेज्जाइं खंडाइं किज्जइ, ते णं वालग्गा दिट्ठीओगाहणाओ असंखेज्जइभागमेत्तातो सुहुमस्स पणगजीवस्स सरीरोगाहणाउ असंखेज्जगुणा" [ तत्रैकैकस्य वालाग्रस्यासंख्येयानि खण्डानि क्रियंते तानि वालाग्राणि दृष्ट्यवगाहनातोऽसंख्येयभागमात्राणि सूक्ष्मस्य पनकजीवस्य शरीरावगाहनाया असंख्येयगुणानि ] इति, वृद्धास्तु व्याचक्षते—वादरपर्याप्तपृथिवीकायशरीरतुल्यमिति, तथा **चानुयोगद्वारमूलटीकाकृदाह हरिभद्रसूरिः**—"वादरपृथिवीकायिकपर्याप्तशरीरतुल्यान्यसङ्ख्येयखण्डानी"ति वृद्धवादः, एवं कृत्वा ततः किं विधेयमित्यत्रोच्यते—ततोऽमीषां सर्वेषामपि समच्छेदानां—परस्परं तुल्यखण्डीकृतानां प्रत्येकं चाद्याप्यनन्तप्रादेशिकानामनन्तपरमाण्वात्मकानां तमेव पूर्वोक्तं पल्यं विभृया—बुद्ध्या परिपूर्णं विदध्यास्त्वमिति ॥ २२ ॥ एवं च तस्मिन् भृते यत्कर्तव्यं तदाह—**'तत्तो'** इत्यादि, ततः—सूक्ष्मखण्डीकृतवालाग्रभृतपल्यात्प्रतिसमयमेकैकस्मिन् सूक्ष्मवालाग्रखण्डेऽपह्रियमाणे यावान् कालो लगति तावत्प्रमाणं सूक्ष्ममुद्धारपल्योपमं भवतीति प्राग्वदत्रापि सम्बन्धः, कियान् पुनरसौ कालो भवतीत्याह—सङ्ख्येया वर्षकोट्यः सूक्ष्मे उद्धारपल्योपमे भवन्तीति ज्ञातव्यं, वालाग्राणामिह प्रत्येकमसङ्ख्येयखण्डात्मकत्वादेकैकस्यापि वालाग्रस्य सम्बन्धिनां खण्डानामपहारेऽसङ्ख्येयसमयराशिप्राप्तेः सर्ववालाग्रखण्डात्मकापहारे भवन्त्येव सङ्ख्याता वर्षकोट्यः ॥ २३ ॥ अथ **बादरमद्धापल्योपमं प्रतिपादयितुमाह**—**'वासे'**त्यादि, तस्मिन्नेवोत्सेधाङ्गुलप्रमितयोजनप्रमाणायामविष्कम्भोद्वेधे पल्ये पूर्वोक्तसहजबादरवालाग्रैर्निभृतं भृते सति प्रति वर्षशतमेकैकं वालाग्रमप-

ह्रियते यावता कालेन स पल्यो निर्लेपीक्रियते तावान् कालो बादरमद्धापल्योपमं विज्ञेयं, तत्र बादरेऽद्धापल्योपमे सङ्ख्येया वर्षकोट्यो भवन्तीति ॥ २४ ॥ अथ सूक्ष्ममद्धापल्योपममाह—'वाससे'त्यादि, स एव पल्यः प्राग्वदसङ्ख्येयखण्डीकृतसूक्ष्मवालाग्रैराकर्णं परिपूर्णः क्रियते, ततो वर्षशते वर्षशतेऽतिक्रान्ते सत्येकैकसूक्ष्मवालाग्रापहारतो यावता कालेन स पल्यः सर्वात्मना रिक्तो भवति तावान् कालः सूक्ष्ममद्धापल्योपमं अवबोद्धव्यं, तत्र च सूक्ष्मेऽद्धापल्योपमे भवन्त्यसङ्ख्येयानि वर्षाणि, असङ्ख्येया वर्षकोटयो भवन्तीत्यर्थः ॥ २५ ॥ सम्प्रति बादरं सूक्ष्मं च क्षेत्रपल्योपममाह—'बायरे'त्यादि, बादराणि च सूक्ष्माणि च बादरसूक्ष्माणि पूर्वोक्तपल्यगतानि सहजान्यसङ्ख्येयखण्डीकृतानि च यानि वालाग्राणीत्यर्थः तेषामवगाढत्वसम्बन्धेन सम्बन्धि यदाकाशं तत्र ये क्षेत्रप्रदेशा—निरंशनभोविभागस्वरूपास्तेषामनुसमयं—प्रतिसमयमेकैकापहारे क्रियमाणे यावान् कालो लगति तदात्मकं यथाक्रममेव बादरं सूक्ष्मं च क्षेत्रं—क्षेत्रपल्योपमं भवति, इयमत्र भावना—स एवोत्सेधाङ्गुलप्रमितयोजनप्रमाणविष्कम्भायामावगाढः पल्यः पूर्ववदेकाहोरात्रयावत्सप्ताहोरात्रप्ररूढैर्वालाग्रैराकर्णं निचितो भ्रियते, ततस्तैर्वालाग्रैर्ये नभःप्रदेशाः स्पृष्टास्ते समये समये एकैकनभःप्रदेशप्रतिसमयापहारेण यावता कालेन सर्वात्मना निष्ठामुपयाति तावान् कालविशेषो बादरं क्षेत्रपल्योपमं, एतच्चासङ्ख्येयोत्सर्पिण्यवसर्पिणीमानं, यतः क्षेत्रस्यातिसूक्ष्मत्वेनैकैकवालाग्रावगाढक्षेत्रप्रदेशानामपि प्रतिसमयमेकैकापहारे 'अंगुलअसंखभागे ओसप्पिणीओ असंखेज्जा' [ अङ्गुलासंख्येयभागे अवसर्पिण्योऽसंख्येयाः ] इति वचनात् असङ्ख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति, किं पुनः सर्ववालाग्रावगाढक्षेत्रप्रदेशापहार इति । तथा स एव पूर्वोक्तः पल्यः पूर्ववदेकैकं वालाग्रमसङ्ख्येयखण्डं कृत्वा तैराकर्णं भृतो निचितश्च तथा क्रियते यथा मनागपि न तत्राग्न्यादिकमाक्रामति, एवं भृते तस्मिन् पल्ये ये आकाशप्रदेशास्तैर्वालाग्रैः स्पृष्टा ये च न स्पृष्टास्ते सर्वेऽप्येकैकस्मिन् समये एकैकाकाशप्रदेशापहारेण

समुद्ध्रियमाणा यावता कालेन सर्वात्मना निष्ठामुपयान्ति तावान् कालविशेषः सूक्ष्मं क्षेत्रपल्योपमं, इदमप्यसङ्ख्येयोत्सर्पिण्यवसर्पिणीमानमेव केवलं पूर्वस्मादसङ्ख्येयगुणं, वालाग्रस्पृष्टनभःप्रदेशेभ्योऽस्पृष्टानामसंख्यातगुणत्वादिति । ननु यैर्वालाग्रैरेकान्ततो निचितमापूरिते सति तस्मिन् पल्ये वह्न्यादिकमपि सर्वथा नाक्रामति तत्र कथं तैर्वालाग्रैः अस्पृष्टा नभःप्रदेशाः सम्भाव्यन्ते ? येनोच्यते तैर्वालाग्रैरस्पृष्टा इति, अत्रोच्यते, वालाग्रेभ्योऽसङ्ख्येयखण्डीकृतेभ्योऽपि नभःप्रदेशानामत्यन्तसूक्ष्मत्वात्, तथा चात्रार्थे प्रश्ननिर्वचनरूपमनुयोगद्वारसूत्रं—"तत्थ णं चोयगे पण्णवगमेवं वयासी—अत्थि णं तस्स पल्लस्सागासप्पएसा जे णं तेहिं वालग्गेहिं अफुन्ना ?, हंता अत्थि, जहा को दिट्ठंतो ?, से जहानामए एगे पल्ले सिया से णं कोहंडाणं भरिए तत्थ माउलिंगा पक्खित्ता तेवि माया तत्थ णं बिल्ला पक्खित्ता तेवि माया तत्थ णं आमलगा पक्खित्ता तेवि माया तत्थ णं बदरा पक्खित्ता तेवि माया तत्थ णं चणगा पक्खित्ता तेवि माया, एवमेएणं दिट्ठंतेणं अत्थि णं तस्स पल्लस्स आगासप्पएसा जे णं तेहिं वालग्गेहिं अणुप्फुन्ना" इति, [तत्र चोदकः प्रज्ञापकमेवमवादीत्—सन्ति तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैरस्पृष्टाः ?, हन्त सन्ति, यथा को दृष्टान्तः ?, तद्यथा नाम एकः पल्यः स्यात् स कूष्माण्डैर्भृतः तत्र मातुलिङ्गानि प्रक्षिप्तानि तानि मातानि तत्र बिल्वानि प्रक्षिप्तानि तान्यपि मातानि तत्रामलकानि प्रक्षिप्तानि तान्यपि मातानि तत्र बदराणि प्रक्षिप्तानि तान्यपि मातानि तत्र चणकाः प्रक्षिप्तास्तेऽपि माताः एवमनेन दृष्टान्तेन सन्ति तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैर्न स्पृष्टाः ] तदेवमर्वाग्दृष्टयो यद्यपि यथोक्तपल्ये शुषिराभावतोऽस्पृष्टनभःप्रदेशान्न सम्भावयन्ति तथापि सूक्ष्माणामपि वालाग्राणां वादरत्वादाकाशप्रदेशानां पुनरतिसूक्ष्मत्वात्सन्त्येवासङ्ख्याता अस्पृष्टा नभःप्रदेशाः, दृश्यन्ते च निबिडतया सम्भाव्यमानेऽपि स्तम्भादौ आस्फालितानां कीलिकानां प्रभूतानां तदन्तः प्रवेशः न चासौ शुषिरमन्तरेण भवतीति । ननु यद्याकाशप्रदेशा वालाग्रैः स्पृष्टा

अस्पृष्टाश्च परिगृह्यन्ते ततः किं वालाग्रैः प्रयोजनं ?, एवं प्ररूपणा क्रियतां—उत्सेधाङ्गुलप्रमितयोजनायामविष्कम्भावगाढे पल्ये यावन्तो नभःप्रदेशा इति, सत्यमेतत्, केवलमनेन सूक्ष्मपल्योपमेन दृष्टिवादे स्पृष्टास्पृष्टभेदेन द्रव्यप्रमाणं क्रियते, यथा यैर्वालाग्रैः स्पृष्टा नभः-प्रदेशास्तेषां प्रतिसमयमेकैकनभःप्रदेशापहारेण यत् वादरक्षेत्रपल्योपमं तत्प्रमाणान्येतानि द्रव्याणि, ये तु वालाग्रैः स्पृष्टा अस्पृष्टा वा नभःप्रदेशास्तेषां प्रतिसमयमेकैकनभःप्रदेशापहारेण यत् सूक्ष्मक्षेत्रपल्योपमं तावत्प्रमाणान्येतानि द्रव्याणि, ततो दृष्टिवादे वालाग्रैः प्रयो-जनमिति तत्प्ररूपणा क्रियते इति १५८ ॥ २६ ॥ इदानीं 'अयर'स्त्येकोनषष्ट्यधिकशततमं द्वारमाह—

उद्धारपल्लगाणं कोडाकोडी भवेज्ज दसगुणिया । तं सागरोवमस्स उ एक्कस्स भवे परीमाणं ॥२७॥
जावइओ उद्धारो अड्ढाइज्जाण सागराण भवे । तावइआ खलु लोए हवंति दीवा समुद्दा य
॥ २८ ॥ तह अद्धापल्लाणं कोडाकोडी भवेज्ज दसगुणिया । तं सागरोवमस्स उ परिमाणं हवइ
एगस्स ॥ २९ ॥ सुहुमेण उ अद्धासागरस्स माणेण सव्वजीवाणं । कम्मठिई कायठिई भवठिई
होइ नायव्वा ॥ ३० ॥ इह खेत्तपल्लगाणं कोडाकोडी हवेज्ज दसगुणिया । तं सागरोवमस्स उ
एक्कस्स भवे परीमाणं ॥ ३१ ॥ एएण खेत्तसागरउवमाणेणं हविज्ज नायव्वं । पुढविदगअगणिमारु-
यहरियतसाणं च परिमाणं ॥ ३२ ॥

'उद्धारे'त्यादिगाथाषट्कं, अतिमहत्त्वसाम्यात्सागरेण—समुद्रेणोपमा यस्य तत्सागरोपमं, तदपि त्रिधा—उद्धाराद्धाक्षेत्रसागरोपमभेदात्, पुनरेकैकं द्विधा—बादरं सूक्ष्मं च, तत्र उद्धारपल्ययोः पूर्वोक्तस्वरूपयोर्बादरसूक्ष्मभेदभिन्नयोर्या प्रत्येकं कोटीकोटिर्दशभिर्गुणिता दश कोटीकोटय

इत्यर्थः तदेतत्प्रत्येकमेकस्य वादरोद्धारसागरोपमस्य सूक्ष्मोद्धारसागरोपमस्य च परिमाणं भवेदिति, दशभिर्वादरोद्धारपल्योपमकोटिकोटिभिरेकं वादरोद्धारसागरोपमं भवति, दशभिश्च सूक्ष्मोद्धारपल्योपमकोटिकोटिभिरेकं सूक्ष्मोद्धारसागरोपमं भवतीत्यर्थः ॥ २७ ॥ अथ सूक्ष्मोद्धारसागरोपमस्य प्रयोजनमाह—'जावइओ' इत्यादि, अर्धतृतीयप्रमाणानां व्याख्यानात् सूक्ष्मोद्धारसागरोपमाणां पञ्चविंशतिपल्यकोटिकोटिष्वित्यर्थः सूक्ष्मवालाग्रोद्धारोपलक्षितः समयराशिरित्यर्थः भवेत्—जायेत तावन्त एव लोके द्वीपाः समुद्राश्च भवन्ति, एतदुक्तं भवति —सार्धे सूक्ष्मोद्धारसागरोपमद्वये सूक्ष्मोद्धारपल्योपमानां पञ्चविंशतिकोटिकोटिष्वित्यर्थः यावन्तो वालाग्रोद्धारविषयाः समया भवन्ति तावत्सङ्ख्यास्तिर्यग्लोके द्वीपसमुद्रा अपि सर्वे सम्भवन्तीत्यर्थः, इह च यद्यपि सूत्रे सामान्येनैवोक्तं तथापि सूक्ष्मोद्धारसागरोपमस्यैवेदं द्वीपसमुद्रसङ्ख्यानयनलक्षणं प्रयोजनमवसेयं, 'एएहिं सुहुमेहिं उद्धारपलिओवमसागरोवमेहिं दीवसमुदाणं उद्धारो घिप्पइ' [ एताभ्यां सूक्ष्मोद्धारपल्योपमसागरोपमाभ्यां द्वीपसमुद्राणामुद्धारो गृह्यते ] इति वचनात्, वादरोद्धारसागरोपमेण तु न किमपि प्रयोजनं, केवलं वादरे प्ररूपिते सूक्ष्मप्ररूपणा क्रमनिष्पन्नत्वात् सुखकर्तव्या सुखावसेया च भवतीत्यतस्तत्प्ररूपणामात्रं कृतं, एवं वादराद्धाक्षेत्रसागरोपमयोर्वादरपल्योपमत्रये च वाच्यमिति ॥ २८ ॥ अथ वादरं सूक्ष्मं चाद्धासागरोपममाह—'तहे'त्यादि, तथेति समुच्चये अद्धापल्योपमयोर्वादरसूक्ष्मभेदभिन्नयोर्या प्रत्येकं कोटिकोटिर्दशभिर्गुणिता दश कोटिकोटय इत्यर्थः तदेतत्प्रत्येकमेकस्य वादराद्धासागरोपमस्य सूक्ष्माद्धासागरोपमस्य च प्रमाणं भवेत्, भावार्थस्तु उद्धारसागरोपमवदिति ॥ २९ ॥ अथ सूक्ष्माद्धासागरोपमप्रयोजनमाह—'सुहुमे'त्यादि, सूक्ष्मेणाद्धासागरोपमस्य मानेन—प्रमाणेन सर्वेषां—नारकतिर्यगादिजीवानां कर्मस्थितिकायस्थितिभवस्थितयो भवन्ति ज्ञातव्याः, तत्र कर्मणां—ज्ञानावरणादीनां स्थितिः—अवस्थानकालस्त्रिंशत्सागरोपमकोटीकोट्यादिरूपः कर्मस्थितिः, कायः—पृथिव्यादिकायोऽत्राभिप्रेतः, ततश्चैकस्मिन्

कायें पुनः पुनस्तत्रैवोत्पत्त्या स्थितिः असङ्ख्येयोत्सर्पिण्यवसर्पिण्यात्मिका कायस्थितिः भवो—नारकाद्येकजीवस्य विवक्षितमेकमेव जन्म तत्र स्थितिः—आयुःकर्मानुभवनपरिणतिस्त्रयस्त्रिंशत्सागरोपमादिरूपा भवस्थितिः, एताः कर्मकायभवस्थितयः सूक्ष्माद्धासागरोपमेण प्रमीयन्ते इति भावः ॥ ३० ॥ अथ वादरं सूक्ष्मं च क्षेत्रसागरोपममाह—'इहे'त्यादि, इह—अस्मिन् प्रक्रमे वादरक्षेत्रपल्योपमानां दशभिः कोटिकोटिभिर्वादरं क्षेत्रसागरोपमं सूक्ष्मक्षेत्रपल्योपमानां तु दशभिः कोटिकोटिभिः सूक्ष्मं क्षेत्रसागरोपममिति तात्पर्यार्थः, अक्षरार्थस्तु पूर्ववदिति॥३१॥सूक्ष्मक्षेत्रसागरोपमस्य प्रयोजनमाह—'एतेणे'त्यादि,एतेन—सूक्ष्मक्षेत्रसागरोपमस्यैव मानेन—प्रमाणेन ज्ञातव्यं, किमित्याह—परिमाणं—सङ्ख्यानं, केषां ?—पृथिव्युदकाग्निवायुवनस्पतित्रसजीवानां, एतच्च प्राचुर्येण दृष्टिवादे प्रतिपादितं सकृदेवान्यत्र सूक्ष्मोद्धाराद्धाक्षेत्रपल्योपमानामप्येतान्येव प्रयोजनानि द्रष्टव्यानीति १५९ ॥ ३२ ॥ इदानीं 'ओसप्पिणि'त्ति पञ्चाविकशततमं द्वारमाह—

दस कोडाकोडीओ अद्धाअयराण हुंति पुन्नाओ । अवसप्पिणीएँ तीए भाया छच्चेव कालस्स ॥ ३३ ॥ सुसमसुसमा य १ सुसमा २ तइया पुण सुसमदुस्समा ३ होइ । दूसमसुसम चउत्थी ४ दूसम ५ अइदूसमा छट्ठी ६ ॥ ३४ ॥ सुसमसुसमाएँ कालो चत्तारि हवंति कोडिकोडीओ । तिन्नि सुसमाएँ कालो दुन्नि भवे सुसमदुसमाए ॥ ३५ ॥ एक्का कोडाकोडी बायालीसाएँ जा सहस्सेहिं । वासाण होइ ऊणा दूसमसुसमाइ सो कालो ॥ ३६ ॥ अह दूसमाएँ कालो वाससहस्साइं एक्कवीसं तु । तावइओ चेव भवे कालो अइदूसमाएवि ॥ ३७ ॥

'दसे'त्यादिगाथापञ्चकं, अवसर्पति हीयमानारकतया अवसर्पयति वाऽऽयुष्कशरीरादिभावान् ह्रापयतीत्यवसर्पिणी तस्यां, तरीतुमशक्यानि

प्रभूतकालतरणीयत्वादतराणि—सागरोपमाणीत्यर्थः सूक्ष्माद्धासागरोपमाणां सम्पूर्णा दश कोटीकोट्यो भवन्ति, सूक्ष्माद्धासागरोपमाणां दशभिः कोटीकोटीभिर्निष्पन्नोऽवसर्पिणीलक्षणः कालविशेषोऽवगन्तव्य इति तात्पर्यार्थः, तस्यां चावसर्पिण्यां कालस्य भागा—विच्छेदाः सुषमसुषमादयः षडेव भवन्ति ॥ ३३ ॥ तानेवाह—'सुसमे'त्यादि, शोभनाः समाः—वर्षाण्यस्यामिति सुषमा अत्यन्तं सुषमा सुषमासुषमा, सर्वथा दुष्षमानुभावरहित एकान्तसुषमारूपोऽवसर्पिण्याः प्रथमो भागः, द्वितीया सुषमा तृतीया पुनः सुषमदुष्षमा भवति, दुष्टाः समा अस्यां सा दुष्षमा सुषमा चासौ दुष्षमा च सुषमदुष्षमा, सुषमानुभावबहुला अल्पदुष्षमानुभावेत्यर्थः, चतुर्थी दुष्षमसुषमा, दुष्षमा चासौ सुषमा च दुष्षमसुषमा, दुष्षमानुभावबहुला अल्पसुषमानुभावेत्यर्थः, पञ्चमी दुष्षमा, षष्ठी त्वतिशयेन दुष्षमा अतिदुष्षमा, सर्वथा सुषमानुभावरहिता दुष्षमदुष्षमेत्यर्थः ॥ ३४ ॥ अथैतेषामेव सुषमसुषमादीनां षण्णामरकाणां प्रमाणमाह—'सुसमसुसे'त्यादि, सुषमसुषमायां कालः—कालप्रमाणं सागरोपमाणां चतस्रः कोटिकोटयो भवन्ति, सुषमायां तिस्रः सागरोपमकोटिकोटयः, सुषमदुष्षमायां द्वे सागरोपमकोटिकोट्यौ, एका—एकसङ्ख्या सागरोपमकोटिकोटिर्द्विचत्वारिंशता वर्षाणां सहस्रैर्या न्यूना भवति स दुष्षमसुषमायाः कालो, द्विचत्वारिंशद्वर्षसहस्रन्यूनैकसागरोपमकोटिकोटिप्रमाणा दुष्षमसुषमेत्यर्थः, अथ दुष्षमायां कालप्रमाणमेकविंशतिवर्षसहस्राणि तावानेव च—दुष्षमाप्रमाण एव भवेत् कालः अतिदुष्षमायामपि, एकविंशतिवर्षसहस्रप्रमाणा दुष्षमदुष्षमापि भवतीति भावः, अस्यां चावसर्पिण्यां शरीरोच्छ्रयायुष्ककल्पवृक्षादिशुभभावानां परतोऽनन्तगुणा परिहानिः, तथाहि—सुषमसुषमायां मनुष्याणां गव्यूतत्रितयं शरीरोच्छ्रयः त्रीणि च पल्योपमान्यायुः शुभपरिणामोऽपि कल्पवृक्षादिरनेकः, सुषमायां द्वे गव्यूते द्वे च पल्योपमे कल्पपादपादिपरिणामश्च शुभो हीनतरः, सुषमदुष्षमायामेकं गव्यूतं एकं पल्योपमं हीनतमश्च कल्पवृक्षादिपरिणामः, दुष्षमसुषमायां पञ्च-

धनुःशतप्रभृति सप्तहस्तान्तं तनुमानमायुरपि पूर्वकोटिप्रमाणं परिहीनश्च कल्पवृक्षादिपरिणामः, दुष्षमायामनियतं देहमानमायुरप्यनियतं वर्षशतादर्वाक् पर्यन्ते विंशतिवर्षाणि परमायुः शरीरोच्छ्रयो हस्तद्वयं औषधिवीर्यपरिहाणिश्चानन्तगुणा, अतिदुष्षमायामप्यनियतं शरीरोच्छ्रयादि सर्वं पर्यन्ते तु हस्तप्रमाणं वपुः षोडश वर्षाणि परमायुर्निरवशेषौषधिपरिहानिश्चेति, एवमन्यदप्येतत्स्वरूपं समयात् समवसेयमिति १६० ॥ ३५ ॥ ३६ ॥ ३७ ॥ इदानीं 'उस्सप्पिणि'त्ति एकषष्ट्यधिकशततमं द्वारमाह—

**अवसप्पिणीव भागा हवंति उस्सप्पिणीइवि छ एए । पडिलोमा परिवाडी नवरि विभाएसु नायव्वा ॥ ३८ ॥**

'अवसप्पिणी'त्यादि, उत्सर्पति—वर्धतेऽरकापेक्षया उत्सर्पयति वा-भावानायुष्कादीन् वर्धयतीत्युत्सर्पिणी, अस्यामप्येत एवावसर्पिण्याः सम्बन्धिनः सुषमसुषमादयो षट् कालविभागा भवन्ति, नवरं—केवलं विभागेषु—अरकेषु प्रतिलोमा—विपरीता परिपाटी—आनुपूर्वी ज्ञातव्या, अयमर्थः—अवसर्पिण्यां सुषमसुषमाद्या दुष्षमदुष्षमान्ताः षडरका उक्ताः उत्सर्पिण्यां तु दुष्षमदुष्षमाद्याः सुषमसुषमापर्यन्ताः षडरका भवन्तीति, तदेवं विंशतिसूक्ष्माद्धासागरोपमकोटीकोटीप्रमाणद्वादशारकमेतदवसर्पिण्युत्सर्पिण्योः कालचक्रं पञ्चसु भरतेष्वैरवतेषु च पञ्चस्वनाद्यन्तं परिवर्तते, यथाऽहोरात्रे वासरो रजनी वा न शक्यते निरूपयितुमादित्वेनान्तत्वेन वा अनादित्वादहोरात्रचक्रप्रवृत्तेस्तथेदमपीति १६१ ॥ ३८ ॥ इदानीं 'दव्वे खेत्ते काले । भावे पोग्गलपरियट्टो'त्ति द्विषष्ट्यधिकशततमं द्वारमाह—

**ओसप्पिणी अणंता पोग्गलपरियट्टओ मुणेयव्वो । तेऽणंता तीयद्धा अणागयद्धा अणंतगुणा ॥ ३९ ॥ पोग्गलपरियट्टो इह दव्वाइचउव्विहो मुणेयव्वो । थूलेयरभेएहिं जह होइ तहा निसामेह**

ओरालविउव्वातेयकम्मभासाणपाणमणएहिं । फासेवि सव्वपोग्गल मुक्का अह बायर-
॥ ४० ॥ ओरालविउव्वातेयकम्मेहिं । नीसेसदव्वगहणंमि बायरो होइ परि-
परट्टो ॥ ४१ ॥ अहव इमो दव्वाई ओरालविउव्वतेयकम्मेहिं । नीसेसदव्वगहणंमि बायरो होइ परि-
यट्टो ॥ ४२ ॥ दव्वे सुहुमपरट्टो जाहे एगेण अह सरीरेणं । फासेवि सव्वपोग्गल अणुक्कमेणं नणु
गणिज्जा ॥ ४३ ॥ लोगागासपएसा जया मरंतेण एत्थ जीवेणं । पुट्ठा कमुक्कमेणं खेत्तपरट्टो
भवे थूलो ॥ ४४ ॥ जीवो जइया एगे खेत्तपएसंमि अहिगए मरइ । पुणरवि तस्साणंतरि बीय-
पएसंमि जइ मरए ॥ ४५ ॥ एवं तरतमजोगेण सव्वखेत्तंमि जइ मओ होइ । सुहुमो खेत्तपरट्टो
अणुक्कमेणं नणु गणेज्जा ॥ ४६ ॥ ओसप्पिणीएँ समया जावइया ते य नियमरणेणं । पुट्ठा कमु-
क्कमेणं कालपरट्टो भवे थूलो ॥ ४७ ॥ सुहुमो पुण ओसप्पिणी पढमे समयंमि जइ मओ होइ ।
पुणरवि तस्साणंतरबीए समयंमि जइ मरइ ॥ ४८ ॥ एवं तरतमजोएण सव्वसमएसु चेव एएसुं ।
जइ कुणइ पाणचायं अणुक्कमेणं नणु गणिज्जा ॥ ४९ ॥ एगसमयंमि लोए सुहुमागणिजिया उ
जे उ पविसंति । ते हुंतऽसंखलोयप्पएसतुल्ला असंखेज्जा ॥ ५० ॥ तत्तो असंखगुणिया अगणि-
काया उ तेसिं कायठिई । तत्तो संजमअणुभागबंधठाणाणिऽसंखाणि ॥ ५१ ॥ ताणि मरंतेण
जया पुट्ठाणि कमुक्कमेण सव्वाणि । भावंमि बायरो सो सुहुमो य कमेण बोद्धव्वो ॥ ५२ ॥
'ओसप्पी'त्यादि गाथाचतुर्दशकं, अवसर्पिणीग्रहणेनोत्सर्पिण्यप्युपलक्ष्यते, ततोऽयमर्थः—अवसर्पिण्युत्सर्पिण्योऽनन्ता मिलिताःसमु-

अतीताद्धापेक्षया
दिताः पुद्गलपरावर्तो ज्ञातव्यः, ते च पुद्गलपरावर्ता अनन्ता अतीताद्धा, अनन्तपुद्गलपरावर्तात्मकोऽतीतः काल इत्यर्थः, अतीताद्धापेक्षया
चानन्तगुणोऽनागताद्धा भविष्यत्काल इत्यर्थः, ननु भगवत्यां 'अणागयद्धा णं तीयद्धाओ समयाहिय'त्ति सूत्रेऽनागतकालोऽतीतकालात्स-
मयाधिक उक्तः, तथाहि—"अतीतानागतौ कालावनादित्वानन्तत्वाभ्यां तुल्यौ, तयोश्च मध्ये भगवतः प्रश्नसमयो वर्तते, स चाविनष्टत्वे-
नातीते न प्रविशतीत्यविनष्टसाधर्म्यादनागते क्षिप्तः, ततोऽतीतकालादनागताद्धा समयाधिको भवती"ति, इह पुनरतीताद्धातोऽनागताद्धाऽन-
न्तगुणाऽभिहिता तत्कथं न विरोधः?, अत्रोच्यते, यथा अनागताद्धाया अन्तो नास्ति एवमतीताद्धाया आदिरित्युभयोरप्यन्ताभावमात्रेण
तत्र तुल्यत्वं विवक्षितमिति न दोषः, यदि च अतीतानागताद्धे वर्तमानसमये समे स्यातां ततः समयातिक्रमेऽनागताद्धा समयेनोना स्यात्
ततो द्व्यादिभिः समयैः, एवं च समत्वं नास्ति, तस्मादतीताद्धायाः सकाशादनागताद्धाऽनन्तगुणेति स्थितं, अत एवानन्तेनापि कालेन
गतेन नासौ क्षीयत इति, वर्तमानैकसमयरूपा वर्तमानाद्धाऽप्यस्ति, सा च सूक्ष्मत्वान्नेह पृथक्प्रतिपादितेति ॥ ३९ ॥ पुद्गलपरावर्तभे-
दानभिधातुमाह—'पोग्गले'त्यादि, इह—अस्मिन् पारमेश्वरप्रवचने पुद्गलपरावर्तो द्रव्यादितो—द्रव्यक्षेत्रकालभावभेदतश्चतुर्विधः—
चतुष्प्रकारो ज्ञातव्यः, तद्यथा—द्रव्यपुद्गलपरावर्तः क्षेत्रपुद्गलपरावर्तः कालपुद्गलपरावर्तो भावपुद्गलपरावर्तश्च, पुनरप्येकैकः पुद्गलपरावर्तः
स्थूलेतरभेदाभ्यां—बादरसूक्ष्मत्वभेदेन द्विधा—बादरः सूक्ष्मश्च, स च यथा भवति तथा निशमयत—शृणुतेति ॥ ४० ॥ तत्र
बादरद्रव्यपुद्गलपरावर्तमाह—'ओराले'त्यादि, एकेन जन्तुना विकटां भवाटवीं पर्यटता अनन्तेषु भवेषु औदारिकवैक्रियतैजसकार्म-
णभाषाऽऽनप्राणमनोलक्षणपदार्थसप्तकरूपतया चतुर्दशरज्ज्वात्मकलोकवर्तिनः सर्वेऽपि पुद्गलाः स्पृष्ट्वा—परिभुज्य यावता कालेन मुक्ता
भवन्ति एष बादरद्रव्यपुद्गलपरावर्तः, किमुक्तं भवति?—यावता कालेनैकेन जीवेन सर्वेऽपि जगद्वर्तिनः परमाणवो यथायोगमौ-

दारिकादिसप्तकस्वभावत्वेन परिभुज्य २ परित्यजति यावान् कालविशेषो बादरद्रव्यपुद्गलपरावर्तः, आहारकशरीरं चोत्कृष्टतोऽप्येकजीवस्य वारचतुष्टयमेव सम्भवति ततस्तस्य पुद्गलपरावर्तं प्रत्यनुपयोगान्न ग्रहणं कृतमिति ॥ ४१ ॥ अथ मतान्तरेण द्रव्यपुद्गलपरावर्तनमाह— 'अहवे'त्यादि, अथवा—अन्येषामाचार्याणां मतेनौदारिकवैक्रियतैजसकार्मणशरीरचतुष्टयरूपतया निःशेषद्रव्यग्रहणोज्झनेन सर्वलोकपुद्गलानां परिभुज्य २ परित्यजनेऽयं बादरः—स्थूलः पुद्गलपरावर्तो भवति, किंविशिष्टः ?—द्रव्यादिः, द्रव्यमेव आदिर्यस्य पुद्गलपरावर्तस्य स द्रव्यादिः, द्रव्यपुद्गलपरावर्त इत्यर्थः ॥ ४२ ॥ सूक्ष्मं द्रव्यपुद्गलपरावर्तनमाह—'दो' इत्यादि, अत्र द्रव्ये—द्रव्यविषयः सूक्ष्मः पुद्गलपरावर्तो भवति यथा औदारिकादिशरीराणामेकेन—अन्यतमेन शरीरेण एको जीवः संसारे परिभ्रमन् सर्वानपि पुद्गलान् स्पृष्ट्वा—परिभुज्य २ मुञ्चति, इयमत्र भावना—यावता कालेन सर्वेऽपि लोकाकाशवर्तिनः परमाणव औदारिकाद्यन्यतमैकविवक्षितशरीररूपतया परिभुज्य २ निष्ठां नीयन्ते तावान् कालविशेषः सूक्ष्मद्रव्यपुद्गलपरावर्तः, पुद्गलानां—परमाणूनामौदारिकादिरूपतया विवक्षितैकशरीररूपतया वा सामस्त्येन परावर्तः—परिणमनं यावति काले स तावान् कालः पुद्गलपरावर्तः, इदं च शब्दस्य व्युत्पत्तिनिमित्तं, अनेन च व्युत्पत्तिनिमित्तेन ऐकार्थसमवायिप्रवृत्तिनिमित्तमनन्तोत्सर्पिण्यवसर्पिणीमानस्वरूपं लक्ष्यते, तेन क्षेत्रपुद्गलपरावर्तादौ पुद्गलपरावर्तनाभावेऽपि प्रवृत्तिनिमित्तस्यानन्तोत्सर्पिण्यवसर्पिणीमानस्वरूपस्य विद्यमानत्वात्पुद्गलपरावर्तशब्दः प्रवर्तमानो न विरुध्यते, यथा गोशब्दः पूर्वं गमने व्युत्पादितः, तेन च गमनेन व्युत्पत्तिनिमित्तेन ऐकार्थसमवायिगुरुककुद्लाङ्गूलसास्नादिमत्त्वरूपं प्रवृत्तिनिमित्तमुपलक्ष्यते, ततो गमनरहितेऽपि गोपिण्डे प्रवृत्तिनिमित्तसद्भावाद्गोशब्दः प्रवर्तते इति, 'अणुक्कमेणं नवरं गणेज्ज'त्ति एतांश्च पुद्गलान् अनुक्रमेण—विवक्षितैकशरीरस्पृष्टतारूपया परिपाट्या ननु—निश्चितं गणयेत्, इदमत्र तात्पर्यम्—एतस्मिन् सूक्ष्मे द्रव्यपुद्गलपरावर्ते

विवक्षितैकशरीरव्यतिरेकेणान्यशरीरतया ये परिभुज्य २ परित्यज्यन्ते ते न गण्यन्ते, किन्तु प्रभूतेऽपि काले गते सति ये च विवक्षि-
तैकशरीररूपतया परिणस्यन्ते त एव परमाणवो गण्यन्त इति, प्रथमपक्षाभिप्रायेण तु औदारिकादिसप्तकमध्यादन्यतमेनैकेन केनचित्पू-
र्वोक्तरीत्या सर्वपुद्गलस्पर्शने सूक्ष्मपुद्गलपरावर्तो भवतीति ॥ ४३ ॥ अथ वादरक्षेत्रपुद्गलपरावर्तमाह—'लोगे'त्यादि, लोकस्य—चतुर्दश-
रज्ज्वात्मकस्याकाशप्रदेशा—निर्विभागा नभोभागा यदा म्रियमाणेनात्र—जगति जीवेन स्पृष्टा—व्याप्ताः क्रमेण—तदनन्तरभावलक्षणेनोत्क्र-
मेण वा—अर्द्धवितर्द्दमरणाक्रान्तक्षेत्रप्रदेशरूपेण तदा क्षेत्रपुद्गलपरावर्तो भवेत् स्थूलो—वादरः, किमुक्तं भवति ?—यावता कालेनैकेन जीवेन
क्रमेण उत्क्रमेण वा यत्र तत्र म्रियमाणेन सर्वेऽपि लोकाकाशप्रदेशा मरणे संस्पृष्टाः क्रियन्ते स तावान् कालविशेषो वादरः क्षेत्रपुद्गल-
परावर्तः ॥ ४४ ॥ सम्प्रति सूक्ष्मक्षेत्रपुद्गलपरावर्तमाह—'जीवो' इत्यादिगाथाद्वयं, एकः कश्चिज्जन्तुरनन्तभवभ्रमणपरो यदा एकस्मिन्
क्षेत्रप्रदेशेऽधिगते—प्राप्ते सति, तत्र स्थित इत्यर्थः, कल्पनया न परमार्थेन, असङ्ख्यातप्रदेशावगाढत्वाज्जीवस्य, म्रियते—प्राणान् परित्यजति-
पुनरपि तस्य—प्रथममरणस्पृष्टप्रदेशस्यानन्तरे—अव्यवहिते द्वितीये प्रदेशे यदि म्रियते पुनरप्यनन्तरे तृतीये प्रदेशे यदि म्रियते, एवं तर,
तमयोगेन—अनन्तरानन्तरप्रदेशमरणलाभलक्षणेन सर्वस्मिन्नपि क्षेत्रे—लोकाकाशे मृतो भवति तदा सूक्ष्मः क्षेत्रपुद्गलपरावर्तो ज्ञेयः, अत्र
च क्षेत्रप्रदेशान् अनुक्रमेणैव—प्रथमप्रदेशानुबद्धप्रदेशपरम्परापरिपाट्यैव गणयेत्, न पुनः पूर्वस्पृष्टान् व्यवहितान् वा प्रदेशान् गणयेत्,
इयमत्र भावना—यद्यपि जीवस्यावगाहना जघन्याऽप्यसङ्ख्येयप्रदेशात्मिका भवति तथापि विवक्षिते कस्मिंश्चिद्देशे म्रियमाणस्य विवक्षितः
कश्चिदेकः प्रदेशोऽवधिभूतो विवक्ष्यते, ततस्तस्मात्प्रदेशादन्यत्र प्रदेशान्तरे ये नभःप्रदेशा मरणेन व्याप्यन्ते ते न गण्यन्ते, किन्त्वनन्ते-
ऽपि काले गते सति विवक्षितात्प्रदेशादनन्तरो यः प्रदेशो मरणेन व्याप्तो भवति स गण्यते, तस्मादप्यनन्तरो यः प्रदेशो मरणे व्याप्तः

स गण्यते, एवमानन्तर्यपरम्परया यावता कालेन सर्वलोकाकाशप्रदेशा मरणेन स्पृष्टा भवन्ति तावान् कालविशेषः सूक्ष्मक्षेत्रपुद्गलपरावर्तः, अन्ये तु व्याचक्षते—येष्वाकाशप्रदेशेष्ववगाढो जीवो मृतस्ते सर्वेऽप्याकाशप्रदेशा गण्यन्ते, न पुनस्तन्मध्यवर्ती विवक्षितः कश्चिदेक एवाकाशप्रदेश इति ॥ ४५ ॥ ४६ ॥ अथ बादरं कालपुद्गलपरावर्तमाह—'ओसप्पी'त्यादि, अवसर्पिण्या उपलक्षणत्वादुत्सर्पिण्याश्च यावन्तः समयाः—परमसूक्ष्माः कालविभागास्ते यदा एकजीवेन निजमरणेन क्रमेणोत्क्रमेण वा स्पृष्टा भवन्ति तदा कालपुद्गलपरावर्तो भवेत् स्थूलः, अयमर्थः—यावता कालेनैको जीवः सर्वानप्यवसर्पिण्युत्सर्पिणीसमयान् क्रमेणोत्क्रमेण वा मरणेन व्याप्तान् करोति तावान् कालविशेषो बादरः कालपुद्गलपरावर्तः ॥ ४७ ॥ सूक्ष्मं कालपुद्गलपरावर्तमाह—'सुहुमो' इत्यादिगाथाद्वयं, सूक्ष्मः पुनः कालपुद्गलपरावर्तो भवति, तद्यथा—एकः कश्चिज्जीवोऽवसर्पिण्याः प्रथमे समये यदि मृतो भवति पुनरपि तस्यावसर्पिणीप्रथमसमयस्यानन्तरे द्वितीये समये यदि म्रियते, एवं तरतमयोगेन—अनन्तरानन्तरसमयमरणलाभलक्षणेन एतेषु सर्वेष्वप्यवसर्पिण्युत्सर्पिणीसम्बन्धिषु समयेषु यदि प्राणपरित्यागं करोति तदा सूक्ष्मः कालपुद्गलपरावर्तो भवति, इहापि समयान् अनुक्रमेणैव—प्रथमसमयानुगतसमयपरम्परापरिपाट्यैव गणयेत्, न पुनः पूर्वस्पृष्टान् व्यवहितान् वा समयान् गणयेदिति, अत्रापीयं भावना—इहावसर्पिणीप्रथमसमये कश्चिज्जीवो मृत्युमुपगतः, ततो यदि समयोनविंशतिसागरोपमकोटीकोटीभिरतिक्रान्ताभिर्भूयोऽपि स जन्तुरवसर्पिणीद्वितीयसमये म्रियते तदा स द्वितीयः समयो मरणस्पृष्टो गण्यते, शेषास्तु समया मरणस्पृष्टा अपि सन्तो न गण्यन्ते, यदि पुनस्तस्मिन्नवसर्पिणीद्वितीयसमये न म्रियते किन्तु समयान्तरे तदा सोऽपि न गृह्यते, किन्त्वनन्तास्ववसर्पिण्युत्सर्पिणीषु गतासु यदाऽवसर्पिणीद्वितीयसमये एव मरिष्यति तदा स समयो गण्यते, एवमानन्तर्यप्रकारेण यावता कालेन सर्वेऽप्युत्सर्पिण्यवसर्पिणीसमया मरणव्याप्ता भवन्ति तावान् कालविशेषः

सूक्ष्मः कालपुद्गलपरावर्तः ॥ ४८ ॥ ४९ ॥ साम्प्रतं द्विविधमपि भावपुद्गलपरावर्तं विवक्षुः प्रथमं तावदनुभागबन्धस्थानपरिमाणमाह—'एगसमयंमी'त्यादिगाथाद्वयं, लोके इह—जगति एकस्मिन् समये ये पृथिवीकायिकादयो जीवाः 'सुहुमागणिजिया उ'त्ति सप्तम्यर्थत्वात्प्रथमायाः सूक्ष्माग्निजीवेषु—सूक्ष्मनामकर्मोदयवर्तिषु तेजस्कायिकजीवेषु प्रविशन्ति—उत्पद्यन्ते ते भवन्त्यसङ्ख्येयाः, असङ्ख्येयत्वमेवाह—असङ्ख्येयलोकप्रदेशतुल्याः—असङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणाः, इह च विजातीयजीवानां जात्यन्तरतयोत्पत्तिः प्रवेश उच्यते, इत्थमेव प्रज्ञप्तौ प्रवेशनकशब्दार्थस्य व्याख्यातत्वात्, ततस्ते जीवाः पृथिव्यादिभ्योऽन्यकायेभ्यो बादरतेजस्कायेभ्यश्च सूक्ष्मतेजस्कायतयोत्पद्यन्ते ते इह गृह्यन्ते, ये पुनः पूर्वमुत्पन्नाः(सूक्ष्म)स्तेजस्कायिकाः पुनर्मृत्वा तेनैव पर्यायेणोत्पद्यन्ते ते न गृह्यंते, तेषां पूर्वमेव प्रविष्टत्वात्, ततः सर्वस्तोका एकसमयसमुत्पन्नसूक्ष्माग्निकायिकाः, 'तत्तो'त्ति ततः—तेभ्यः एकसमयोत्पन्नसूक्ष्माग्निकायिकेभ्योऽसङ्ख्यगुणिता—असङ्ख्येयगुणा अग्निकायाः पूर्वोत्पन्नाः सर्वेऽपि सूक्ष्माग्निकायिकजीवाः, कथमिति चेदुच्यते—एकः सूक्ष्माग्निकायिको जीवः समुत्पन्नोऽन्तर्मुहूर्तं जीवति, एतावन्मात्रायुष्कत्वात्तेषां, तस्मिंश्चान्तर्मुहूर्ते ये समयास्तेषु प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशप्रमाणाः सूक्ष्माग्निकायिकाः समुत्पद्यन्ते, अतः सिद्धमेकसमयोत्पन्नसूक्ष्माग्निकायिकेभ्यः सर्वेषां पूर्वोत्पन्नसूक्ष्माग्निकायिकानामसङ्ख्येयगुणत्वं, तेभ्योऽपि सर्वसूक्ष्माग्निकायिकेभ्यस्तेषामेव प्रत्येकं कायस्थितिः—पुनः पुनस्तत्रैव काये समुत्पत्तिलक्षणाऽसङ्ख्यातगुणा, एकैकस्यापि सूक्ष्माग्निकायिकस्यासङ्ख्येयोत्सर्पिण्यवसर्पिणीप्रमाणायाः कायस्थितेरुत्कर्षतः प्रतिपादितत्वादिति, तस्या अपि कायस्थितेः सकाशात्संयमस्थानान्यनुभागबन्धस्थानानि च प्रत्येकमसङ्ख्येयगुणानि, कायस्थितावसङ्ख्येयगुणानां स्थितिबन्धानां भावात्, एकैकस्मिंश्च स्थितिबन्धेऽसङ्ख्येयानामनुभागबन्धस्थानानां सद्भावादिति, संयमस्थानान्यप्यनुभागबन्धस्थानैस्तुल्यान्येवेति तेषामुपादानं, तत्स्वरूपं चाग्रे वक्ष्यामः । अथानुभागबन्धस्थानानीति कः

शब्दार्थः ?, उच्यते, तिष्ठत्यस्मिन् जीव इति स्थानं, अनुभागबन्धस्य स्थानमनुभागबन्धस्थानं, एकेन काषायिकेणाध्यवसायेन गृहीतानां कर्मपुद्गलानां विवक्षितैकसमयबद्धरससमुदायपरिमाणमित्यर्थः, तानि चानुभागबन्धस्थानान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि, तेषां चानुभागबन्धस्थानानां निष्पादका ये कषायोदयरूपा अध्यवसायविशेषास्तेऽप्यनुभागबन्धस्थानानीत्युच्यन्ते, कारणे कार्योपचारात्, तेऽपि चानुभागबन्धाध्यवसाया असङ्ख्येयलोकाकाशप्रदेशप्रमाणा इति ॥ ५० ॥ ५१ ॥ अथ बादरं सूक्ष्मं च भावपुद्गलपरावर्तमाह— 'ताणी'त्यादि, तानि—अनुभागबन्धाध्यवसायस्थानानि सर्वाण्यप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि म्रियमाणेन यदा जीवेनैकेन क्रमेण—आनन्तर्येणोत्क्रमेण च—पारम्पर्येण स्पृष्टानि भवन्ति एष बादरभावपुद्गलपरावर्तः, किमुक्तं भवति ?—यावता कालेन क्रमेणोत्क्रमेण वा सर्वेष्वप्यनुभागबन्धाध्यवसायेषु वर्तमानो मृतो भवति तावान् कालो बादरभावपुद्गलपरावर्तः, सूक्ष्मः पुनः भावपुद्गलपरावर्तो बोद्धव्यो यदा क्रमेण—परिपाट्या सर्वाण्यप्यनुभागबन्धाध्यवसायस्थानानि स्पृष्टानि भवन्ति, इयमत्र भावना—कश्चिज्जन्तुः सर्वजघन्ये कषायोदयरूपेऽध्यवसाये वर्तमानो मृतस्ततो यदि स एव जन्तुरनन्तेऽपि काले गते सति प्रथमादनन्तरे द्वितीयेऽध्यवसायस्थाने वर्तमानो म्रियते तदा तन्मरणं गण्यते न शेषाण्युत्क्रमभावीन्यनन्तान्यपि मरणानि, ततः कालान्तरे भूयोऽपि यदि द्वितीयस्मादनन्तरे तृतीयेऽध्यवसायस्थाने वर्तमानो म्रियते तदा तृतीयं मरणं गण्यते न शेषाण्यपान्तरालभावीन्यनन्तान्यपि मरणानि, एवं क्रमेण सर्वाण्यनुभागबन्धाध्यवसायस्थानानि यावता कालेन मरणेन स्पृष्टानि भवन्ति तावान् कालविशेषः सूक्ष्मभावपुद्गलपरावर्तः । इह च बादरे प्ररूपिते सति सूक्ष्मः सुखेनैव शिष्यैः समधिगम्यते इति बादरपुद्गलपरावर्तप्ररूपणा क्रियते, न पुनः कोऽपि बादरपुद्गलपरावर्तः क्वचिदपि सिद्धान्तप्रदेशे प्रयोजनवानुपलभ्यत इति, तथा सूक्ष्माणामपि चतुर्णां पुद्गलपरावर्तानां मध्ये जीवाभिगमादौ पुद्गलपरावर्तः क्षेत्रतो बाहुल्येन

गृहीतः, क्षेत्रतो मार्गणायां तस्योपादानात्, तथा च तत्सूत्रं—'जे से साइए सपज्जवसिए मिच्छादिट्ठी से जहन्नेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अणंताओ उसप्पिणीओसप्पिणीओ कालओ, खेत्तओ अवड्ढं पोग्गलपरियट्टं देसूण'मित्यादि [ यः स सादिसपर्यवसितो मिथ्यादृष्टिः स जघन्येनान्तर्मुहूर्त्तमुत्कष्टेनानन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽपार्धं पुद्गलपरावर्त्तं देशोनं ] ततोऽन्यत्रापि यत्र विशेषनिर्देशो नास्ति तत्र पुद्गलपरावर्तग्रहणे क्षेत्रपुद्गलपरावर्तो गृह्यते इति सम्भाव्यते, तत्त्वं तु बहुश्रुता एव विदन्तीति १६२ ॥ ५२ ॥ इदानीं 'पन्नरस कम्मभूमीउ'त्ति त्रिषष्ठ्यधिकशततमं द्वारमाह—

**भरहाइ ५ विदेहाइं ५ एरवयाइं च ५ पंच पत्तेयं। भन्नंति कम्मभूमी धम्मजोग्गा उ पन्नरस॥५३॥**

भरतानि 'विदेहाइं'ति महाविदेहा ऐरवतानि च प्रत्येकं पञ्च पञ्च भण्यन्ते पञ्चदश कर्मभूमयः, एतासामेव स्वरूपमाह—धर्मस्य—श्रुतचारित्ररूपस्य योग्या—उचितास्तदनुष्ठानस्य तत्रैव सम्भवात्, अयमर्थः—कर्म—कृषिवाणिज्यादि मोक्षानुष्ठानं वा तत्प्रधाना भूमयः कर्मभूमयः ताश्च पञ्चदश भवन्ति, तद्यथा—एकं भरतक्षेत्रं जम्बूद्वीपे द्वे धातकीखण्डे द्वे च पुष्करवरद्वीपार्धे एवं भरतानि पञ्च, एवं महाविदेहा ऐरवतानि च प्रत्येकं पञ्च पञ्चेति १६३ ॥ ५३ ॥ इदानीं 'अकम्मभूमीओ तीस'त्ति चतुःषष्ठ्यधिकशततमं द्वारमाह—

**हेमवयं १ हरिवासं २ देवकुरू ३ तह य उत्तरकुरूवि ४ । रम्मय ५ एरन्नवयं ६ इय छब्भूमी उ पंचगुणा ॥ ५४ ॥ एया अकम्मभूमीउ तीस सया जुअलधम्मजणठाणं । दसविहकप्पमहद्दुमसमुत्थभोगा पसिद्धाओ ॥ ५५ ॥**

'हेमवय'मित्यादिगाथाद्वयं, हैमवतं हरिवर्षं देवकुरवस्तथा उत्तरकुरवो रम्यकमैरण्यवतं चेत्येताः षड्भूमयः पञ्चभिर्गुणितास्त्रिंशदक-

र्माणो—यथोक्तकर्मविकला भूमयोऽकर्मभूमयो भवन्ति, षण्णां पञ्चानां त्रिंशत्सङ्ख्यात्मकत्वात्, एताश्च सर्वा अपि सदा—सर्वकालं युगलधार्मिकजनानां स्थानं—आश्रयः, युगलधार्मिका एव नरतिर्यञ्चस्तत्र वसन्तीति भावः, तथा दशविधा ये कल्पमहाद्रुमा वक्ष्यमाणस्वरूपास्तत्समुत्थेन—तदुत्पन्नेन भोगेन—अन्नपानवसनालङ्कारादिना प्रसिद्धाः—प्रख्याता इति १६४॥ ५४ ॥ ५५ ॥ साम्प्रतं 'अट्ठ मय'त्ति पञ्चषष्ट्यधिकशततमं द्वारमाह—

**जाइ १ कुल २ रूव ३ बल ४ सुय ५ तव ६ लाभि ७ स्सरिय ८ अट्ठ मयमत्तो । एयाइं चिय बंधइ असुहाइं बहुं च संसारे ॥ ५६ ॥**

जातिकुलरूपबलश्रुततपोलाभैश्वर्यस्वरूपैरष्टभिर्मदैः—अभिमानैर्मत्तः—परवशः प्राणी एतान्येव—जात्यादीन्यशुभानि—हीनानि बध्नाति—अर्जयति बहुं च—प्रभूतं कालं यावदस्मिन् संसारे परिभ्रमतीति शेषः, अयमर्थः—जातिमदं विदधानो जन्तुरन्यजन्मनि तामेव जातिं हीनां लभते विकटां च भवाटवीं पर्यटतीति, एवमन्येऽपि भावना कार्या, तत्र जातिः—मातृकी विप्रादिका वा कुलं—पैतृकमुग्रादिकं वा रूपं—शरीरसौन्दर्यं बलं—सामर्थ्यं श्रुतं—अनेकशास्त्रावबोधः तपः—अनशनादि लाभः—अभिलषितवस्तुप्राप्तिः ऐश्वर्यं च—प्रभुत्वमिति, १६५ ॥ ५६ ॥ इदानीं 'दुन्नि सया तेयाला भेया पाणाइवायस्स ॥' इति षट्षष्ट्यधिकशततमं द्वारमाह—

**भू १ जल २ जलणा ३ निल ४ वण ५ बि ६ ति ७ चउ ८ पंचिंदिएहिं ९ नव जीवा । मणवयणकाय ३ गुणिया हवंति ते सत्तवीसंति ॥ ५७ ॥ एक्कासीई सा करणकारणाणुमइताडिया होइ । सच्चिय तिकालगुणिया दुन्नि सया होंति तेयाला (२४३) ॥ ५८ ॥**

भूः—पृथ्वी जलं—आपः ज्वलनः—अग्निः अनिलो—वायुः वनस्पतयः—प्रतीताः द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाश्चेत्येतैर्भेदैर्नवविधा जीवाः, ते च मनोवचनकायलक्षणैस्त्रिभिः करणैर्गुणिताः सप्तविंशतिर्भवन्ति, तथा सा—सप्तविंशतिः करणकारणानुमतिभिस्ताडिता—गुणिता एकाशीतिर्भवति, सैवैकाशीतिरतीतवर्तमानभविष्यल्लक्षणैस्त्रिभिः कालैर्गुणिता द्वे शते त्रिचत्वारिंशदधिके भवतः, अयमत्र भावार्थः—पृथिव्यादीनां नवानामपि जीवानां मनसा वचनेन कायेन च प्रत्येकं वधस्य सम्भवात् सप्तविंशतिर्भेदाः, तत्रापि पृथिव्यादिवधं मनःप्रभृतीभिः कश्चित्स्वयं करोति कश्चिदन्येन कारयति कश्चित्पुनरन्यं कुर्वन्तमनुमन्यते इति प्रत्येकं करणकारणानुमतिसम्भवेनैकाशीतिर्भेदाः, ते च प्रत्येकं कालत्रयेऽपि सम्भवन्तीति द्वे शते त्रिचत्वारिंशदधिके प्राणातिपातभेदा इति १६६ ॥ ५७ ॥ ५८ ॥

सम्प्रति 'परिणामाणं अट्ठुत्तरसयं'ति सप्तषष्ठ्यधिकशततमं द्वारमाह—

**संकप्पाइतिएणं ३ मणमाईहिं ३ तहेव करणेहिं ३। कोहाइचउक्केणं ४ परिणामेऽट्ठोत्तरसयं च ॥५९॥**
**संकप्पो संरंभो १ परितावकरो भवे समारंभो २। आरंभो ३ उद्दवओ सुद्धनयाणं च सव्वेसिं ॥६०॥**

इह सङ्कल्पशब्देन संरम्भ उपलक्ष्यते पर्यायत्वात्, आदिशब्दात्समारम्भारम्भपरिग्रहः, ततो वक्ष्यमाणस्वरूपाः संरम्भसमारम्भारम्भाख्यो मनोवचनकायैर्गुण्यन्ते जाता नव, तथा 'करणेहिं'ति बहुवचननिर्देशात्कारणानुमतिपरिग्रहः, ततः पूर्वोक्ता नव करणकारणानुमतित्रिकेण गुण्यन्ते जाताः सप्तविंशतिः, साऽपि क्रोधादिचतुष्केण—क्रोधमानमायालोभलक्षणैश्चतुर्भिः कषायैर्गुण्यते जातं 'परिणामे' षष्ठीसप्तम्योरर्थं प्रत्यभेदात् परिणामानां—चित्तादिपरिणतिविशेषाणामष्टोत्तरं शतमिति, इदमत्र तात्पर्य—उद्भूतक्रोधपरिणाम आत्मा करोति स्वयं कायेन संरम्भमित्येको विकल्पः, तथा आविर्भूतमानपरिणाम आत्मा स्वयं करोति कायेन संरम्भमिति द्वितीयः, तथा

समुपजातमायापरिणतिरात्मा स्वयं करोति कायेन संरम्भमिति तृतीयः, तथा लोभकषायग्रस्त आत्मा करोति स्वयं कायेन संरम्भमिति चतुर्थः, एवं कृतेन चत्वारो विकल्पाः कारितेन चत्वारः अनुमत्याऽपि चत्वारः एते द्वादश कायेन लब्धाः, तथा वचसा द्वादश मनसाऽपि द्वादश, एते षट्त्रिंशत्संरम्भेण लब्धाः तथा समारम्भेणापि षट्त्रिंशत् तथा आरम्भेणापि षट्त्रिंशदित्येवमष्टोत्तरं परिणामशतं भवतीति ॥ ५९ ॥ अथ सङ्कल्पादीनामेव स्वरूपमाह—

प्राणातिपातं करोमीति यः सङ्कल्पः—अध्यवसायः स संरम्भः, यः पुनः परस्य परितापकरः—पीडाविधायी व्यापारः स समारम्भः, अपद्रावयतो—जीवितात्परं व्यपरोपयतो व्यापार आरम्भः, एतच्च संरम्भादित्रितयं सर्वेषामपि शुद्धनयानां सम्मतं, अयमर्थः—इह नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतलक्षणाः सप्त नयाः, तत्र शुद्धेरन्तर्भूतकारितार्थत्वात् शोधयंति कर्ममलिनं जीवमिति शुद्धाः—नैगमसङ्ग्रहव्यवहाररूपास्त्रयः, ते हि अनुयायिद्रव्याभ्युपगमपराः, ततो भवान्तरेऽपि कृतकर्मफलोपभोगोपपत्तेः सद्धर्मदेशनादौ प्रवृत्तियोगतो भवति तात्त्विकी शुद्धिस्तस्मात्त एव शुद्धाः, ऋजुसूत्रशब्दसमभिरूढैवंभूतस्वरूपास्तु चत्वारो नया अशुद्धाः, ते हि पर्यायमात्रमभ्युपगच्छन्ति पर्यायाणां परस्परमात्यन्तिकं भेदं च, एवं च सति कृतविप्रणाशादिदोषप्रसङ्गः, तथाहि—मनुष्येण कृतं कर्म किल देवो भुङ्क्ते, मनुष्यावस्थातश्च देवावस्था भिन्ना, ततो मनुष्यकृतकर्मविप्रणाशो, मनुष्येण सता तस्योपभोगाभावात्, देवस्य च फलोपभोगोऽकृताभ्यागमः, देवेन सता तस्य कर्मणोऽकरणात्, कृतप्रणाशादिदोषपरिज्ञाने च न कोऽपि धर्मश्रवणेऽनुष्ठाने वा प्रवर्तते इति मिथ्यात्वशुद्ध्यभावः, तदभावाच्च न ते शुद्धा इति, अथवा शुद्धनयानां चेत्यत्र प्राकृतत्वात्पूर्वस्याकारस्य लोपो द्रष्टव्यः, ततः सर्वेषामप्यशुद्धनयानामेतत्संरम्भादित्रितयं सम्मतं न तु शुद्धानामिति, तत्र नैगमसङ्ग्रहव्यवहाररूपा आद्यास्त्रयो नया अशुद्धा व्यवहाराभ्युपगमपराः

त्वात्, उपरितनास्तु चत्वारः शुद्धा नैश्चयिकत्वादिति, तदिदमत्र तात्पर्य—संरम्भसमारम्भारम्भलक्षणं त्रितयं नैगमादीनामेव त्रयाणां सम्मतं, व्यवहारपरतया तेषां मतेन त्रितयस्यापि सम्भवात्, ऋजुसूत्रादयस्तु हिंसाविचारप्रक्रमे न बाह्यवस्तुगतां हिंसामनुमन्यन्ते, यतस्तन्मतेनात्मैव तथाऽध्यवसायपरिकलितो हिंसा न बाह्यमनुष्यादिपर्यायविनाशनं, 'आया चेव उ हिंसा' इति वचनात्, ततः संरम्भ एव हिंसा, न समारम्भो नाप्यारम्भः, ऋजुसूत्रादीनां मतेनेति १६७ ॥ ६० ॥ सम्प्रति 'बंभमट्ठदसभेयं'ति अष्टपञ्चाधिकशततमं द्वारमाह—

**दिवा कामरइसुहा तिविहं तिविहेण नवविहा विरई । ओरालियाउवि तहा तं बंभं अट्ठदसभेयं ॥ ६१ ॥**

दिवि भवं दिव्यं तच्च वैक्रियशरीरसम्भवं काम्यन्त इति कामा—विषयास्तेषु रतिः—अभिष्वङ्गस्तस्मात्सुखं कामरतिसुखं सुरतसुखमिति भावः तस्माद्दिव्यात्कामरतिसुखात् त्रिविधं यथा भवति कृतकारितानुमतिभिरित्यर्थः त्रिविधेन—मनोवाक्कायलक्षणेन करणेन नवविधा विरतिः, एवमौदारिकादपि तिर्यङ्मनुष्यसम्भवात् तथा—त्रिविधंत्रिविधेन नवविधा विरतिः, इत्येवं तद्—ब्रह्मचर्यमष्टादशभेदं भवति, इयमत्र भावना—मनसाऽब्रह्म न करोमि न कारयामि कुर्वन्तमपि परं नानुमन्ये एवं वचसा कायेन चेति दिव्ये ब्रह्मणि नव भेदाः, एवमौदारिकेऽपीत्यष्टादशेति १६८ ॥ ६१ ॥ सम्प्रति 'कामाण चउवीसं'त्येकोनसप्तत्यधिकशततमं द्वारमाह—

**कामो चउवीसविहो संपत्तो खलु तहा असंपत्तो । चउदसहा संपत्तो दसहा पुण होअसंपत्तो ॥ ६२ ॥ तत्थ असंपत्तेऽत्था १ चिंता २ तह सद्ध ३ संभरण ४ मेव । विक्कवय ५ लज्जनासो ६**

पमाय ७ उम्माय ८ तब्भावो ९ ॥ ६३ ॥ मरणं च होइ दसमे १० संपत्तंपि य समासओ वोच्छं। दिट्ठीए संपाओ १ दिट्ठीसेवा २ य संभासो ३ ॥ ६४ ॥ हसिय ४ ललिओ ५ वगूहिय ६ दंत ७ नहनिवाय ८ चुंबणं ९ चेव । आलिंगण १० मादाणं ११ कर १२ सेवण १३ ऽणंगकीडा १४ य ॥ ६५ ॥

कामश्चतुर्विंशतिविधः—चतुर्विंशतिभेदो भवति, तत्र प्रथमं तावत्सामान्येन द्विधा—सम्प्राप्तः—कामिनामन्योऽन्यं सङ्गमसमुत्थः, तथा असम्प्राप्तश्च—विप्रलम्भस्वरूपः, तत्र सम्प्राप्तश्चतुर्दशधा—चतुर्दशप्रकारः दशधा पुनः—दशप्रकारो भवत्यसम्प्राप्त इति ॥ ६२ ॥ तत्राल्पतरवक्तव्यत्वादसम्प्राप्तं तावदाह—'तत्थे'त्यादि, तत्र—द्वयोः सम्प्राप्तासम्प्राप्तयोर्मध्ये असम्प्राप्तोऽयं—'अत्थे'ति अर्थनमर्थः—अदृष्टेऽपि रमण्यादौ श्रुत्वा तदभिलाषमात्रं १ चिन्ता—अहो रूपादयस्तस्या गुणा इत्यनुरागेण चिन्तनं २ तथा श्रद्धा—तत्सङ्गमाभिलाषः ३ तथा संस्मरणं—सङ्कल्पिततद्रूपस्यालेख्यादिदर्शनेनात्मनो विनोदनं ४ तथा विक्लवता—तद्विरहदुःखातिरेकेणाहारादिष्वपि निरपेक्षता ५ तथा लज्जानाशो—गुर्वादिसमक्षमपि तद्गुणोत्कीर्तनं ६ तथा प्रमादः—तदर्थमेव सर्वारम्भेषु प्रवर्तनं ७ तथोन्मादो—नष्टचित्ततया आलजालजल्पनं ८ तथा तद्भावना—स्तम्भादीनामपि तद्बुद्ध्याऽऽलिङ्गनादिचेष्टा ९ मरणं च भवति दशमोऽसम्प्राप्तकामभेदः १०, इदं च सर्वथा प्राणपरित्यागलक्षणं न ज्ञातव्यं, शृङ्गाररसभङ्गप्रसङ्गात्, किन्तु मरणमिव मरणं—निश्चेष्टावस्था मूर्च्छाप्राया काचिदित्यर्थः, इत्थमेवाभिनवगुप्तेन भरतवृत्तिकृताऽपि व्याख्यातत्वादिति । अथ संप्राप्तं काममाह—'संपत्तंपी'त्यादि, संप्राप्तमपि कामं समासतः—सङ्क्षेपेण वक्ष्ये, तदेवाह—दृष्टेः सम्पातः स्त्रीणां कुचाद्यवलोकनं १ तथा दृष्टिसेवा—हावभावसारं तद्दृष्टेर्दृष्टिमीलनं २ तथा सम्भाषणं—उचितकाले

सरकथाभिजल्पः ३ ॥ ६३ ॥ ६४ ॥ हसितं च—वक्रोक्तिगर्भं हसनं ४ ललितं—पासकादिक्रीडा ५ उपगूढं—गाढतरपरिष्वक्तं ६ दन्त-
सरकथाभिजल्पः ३ ॥ ६३ ॥ ६४ ॥ हसितं च—वक्रोक्तिगर्भ हसनं ४ ललितं—पासकादिक्रीडा ५ उपगूढं—गाढतरपरिष्वक्तं ६ दन्त-

पातो—दशनच्छेदविधिः ७ नखनिपातः—कररुहविपाटनप्रकारः ८ चुम्बनं—वक्त्रसंयोगः ९ आलिङ्गनं—ईषत्स्पर्शनं १० आदानं—कुचा-
दिग्रहणं ११ 'करसेवणं'ति प्राकृतशैल्या करणासेवने, तत्र करणं—सुरतारम्भयश्च चतुरशीतिभेदं वात्स्यायनप्रसिद्धं १२ आसेवनं—
मैथुनक्रिया १३ अनङ्गक्रीडा च—आस्यादावर्थक्रियेति १४ ॥ १६९ ॥ ६५ ॥ इदानीं 'दस पाण'त्ति सप्तत्यधिकशततमं द्वारमाह—

**इंदिय ५ बल ३ ऊसासा १ उ १ पाण चउ छक्क सत्त अट्ठेव। इगि विगल असन्नी सन्नी नव दस**
**पाणा य बोद्धवा ॥ ६६ ॥**

इन्द्रियबलोच्छ्वासायूंषि प्राणा इत्यभिधीयन्ते, ते च दश, तत्रेन्द्रियाणि—स्पर्शनादीनि पञ्च, बलं कायवाङ्मनोभेदात् त्रिधा, उच्छ्वा-
सशब्देनाविनाभावित्वान्निःश्वासो गृह्यते तत उच्छ्वासनिःश्वासरूप एको भेदः, आयुश्च दशममिति । सम्प्रति येषां जीवानां यावन्तः
प्राणाः सम्भवन्तीत्येतदाह—'चउछक्के'त्यादि, इह सूचकत्वात्सूत्रस्य 'इगि'त्ति एकेन्द्रियाः 'विकल'त्ति विकलेन्द्रियाः द्वित्रिचतुरि-
न्द्रिया इत्यर्थः, तत एकेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणां च यथासङ्ख्यं चत्वारः षट् सप्त अष्टौ च प्राणा भवन्ति, इयमत्र भावना—स्पर्श-
नेन्द्रियकायबलोच्छ्वासायुर्लक्षणाश्चत्वारः प्राणा एकेन्द्रियाणां पृथिव्यादीनां, स्पर्शनेन्द्रियरसनेन्द्रियकायबलवाग्बलोच्छ्वासायुःस्वरूपाः षट्
प्राणा द्वीन्द्रियाणां, त एव घ्राणेन्द्रियसहिताः सप्त प्राणास्त्रीन्द्रियाणां, त एव सप्त चक्षुरिन्द्रियसहिता अष्टौ प्राणाश्चतुरिन्द्रियाणां, तथा
असंज्ञिनां संज्ञिनां च नव दश प्राणा बोद्धव्याः, अत्राप्ययमर्थः—इन्द्रियपञ्चककायवाग्बलोच्छ्वासनिःश्वासायुर्लक्षणा नव प्राणा असंज्ञिपञ्चे-
न्द्रियाणां, संज्ञिपञ्चेन्द्रियाणां तु पूर्वोक्ता दशापि प्राणा भवन्तीति १७० ॥६६॥ सम्प्रति 'दस कप्पदुम'त्त्येकसप्तत्यधिकशततमं द्वारमाह—

**मत्तंगया य १ भिंगा २ तुडियंगा ३ दीव ४ जोइ ५ चित्तंगा ६ । चित्तरसा ७ मणियंगा ८ गेहागारा ९ अणियणा य १० ॥ ६७ ॥ मत्तंगएसु मज्जं सुहपेज्जं १ भायणा य भिंगेसु २ । तुडियंगेसु य संगयतुडियाइं बहुप्पगाराइं ३ ॥ ६८ ॥ दीवसिहा ४ जोइसनामगा य एए करेंति उज्जोयं ५ । चित्तंगेसु य मल्लं ६ चित्तरसा भोयणट्ठाए ७ ॥ ६९ ॥ मणियंगेसु य भूसणवराइं ८ भवणाइ भवणरुक्खेसु ९ । तह अणियणेसु धणियं वत्थाइं बहुप्पयाराइं १० ॥ ७० ॥**

इह मत्तं—मदस्तस्याङ्गं—कारणं मदिरास्तद्ददतीति मत्ताङ्गदाः यद्वा मत्तस्य—मदस्याङ्गं—कारणं मदिरारूपं येषु ते मत्ताङ्गास्त एव मत्ताङ्गकाः १ 'भिंग'त्ति भृतं—भरणं पूरणं तत्राङ्गानि—कारणानि भृताङ्गानि—भाजनानि, न हि भरणक्रिया भरणीयं भाजनं विना भवतीति तत्सम्पादकत्वाद् वृक्षा अपि भृताङ्गाः प्राकृतत्वाच्च भिंगा उच्यन्ते २ तथा त्रुटितानि—तूर्याणि तत्कारणत्वात् त्रुटिताङ्गाः ३ 'दीवजोइचित्तंग'त्ति इहाङ्गशब्दः प्रत्येकमभिसम्बध्यते, ततो दीपः—प्रकाशकं वस्तु तत्कारणत्वाद्दीपाङ्गाः ४ ज्योतिः—अग्निस्तत्र च सुषमसुषमायामग्नेरभावात् ज्योतिरिव यद्वस्तु सोष्मप्रकाशकमिति भावः तत्कारणत्वाज्ज्योतिरङ्गाः ४ तथा चित्रस्य—अनेकप्रकारस्य विवक्षाप्राधान्यात् माल्यस्य कारणत्वाच्चित्राङ्गाः ६ तथा चित्रा—विविधा मनोज्ञा रसा—मधुरादयो येभ्यस्ते चित्ररसाः ७ तथा मणीनां—मणिप्रधानाभरणानां कारणत्वान्मण्यङ्गाः ८ तथा गेहं—गृहं तद्वदाकारो येषां ते गृहाकाराः ९ 'अणियण'त्ति विचित्रवस्त्रदायित्वान्न विद्यन्ते नग्नास्तन्निवासिनो जना येभ्यस्तेऽनग्नाः १० इत्येते दश कल्पद्रुमा भवन्तीति ॥ ६७ ॥ अथैतेषां मध्ये येषु यद्भवति तदाह—मत्ताङ्गकेषु कल्पद्रुमेषु सुखपेयं परमातिशयसंपन्नवर्णादिविशिष्टत्वेन पातुमभिलषणीयं सुपक्वेक्षुद्राक्षादिरसनिष्पन्नं मद्यं भवति, कोऽर्थः ?—तेषां फलानि

विशिष्टबलवीर्यकान्तिहेतुविश्रसापरिणतसरससुगन्धिविविधपरिपाकागतहृद्यमद्यपरिपूर्णानि स्फुटित्वा स्फुटित्वा मद्यं मुञ्चन्तीति १ तथा भृताङ्गेषु भाजनानि—स्थालप्रभृतीनि भवन्ति, अयमर्थः—यथा इह मणिकनकरजतादिमयविचित्रभाजनानि स्थालप्रभृतीनि दृश्यन्ते तथैव विश्रसापरिणतैरपरिमितैः स्थालकचोलककलशकरकादिभिर्भाजनैः फलैरिवोपशोभमानाः प्रेक्ष्यन्ते २ तथा त्रुटिताङ्गेषु सङ्गतानि—सम्यग्-यथोक्तरीत्या सम्बद्धानि त्रुटितानि—आतोद्यानि बहुप्रकाराणि—ततविततघनशुषिरभेदभिन्नानि फलानीव भवन्ति, तत्र 'ततं—वीणादिकं ज्ञेयं, विततं—पटहादिकम् । घनं तु—कांस्यतालादि, शुषिरं—काहलादिक ॥ १ ॥' मिति ३ तथा दीपशिखा ज्योतिषिकनामकाश्च एते कल्पतरव उद्योतं—प्रकाशं कुर्वन्ति, इदमुक्तं भवति—यथेह स्निग्धं प्रज्ज्वलन्त्यः काञ्चनमणिमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वद्विश्रसापरिणताः ( दीपशिखाकल्पवृक्षाः ) प्रकृष्टोद्योतेन सर्वमुद्योतयन्तो वर्तन्ते ज्योतिषिकास्तु सूर्यमण्डलमिव स्वतेजसा सर्वमप्यवभासयन्तः सन्तीति ४–५ तथा चित्राङ्गेषु माल्यम्—अनेकप्रकारसरससुरभिनानावर्णकुसुमदामरूपं भवति ६ तथा चित्ररसा भोजनार्थाय—युगलधार्मिकाणां भोजननिमित्तं भवन्ति, एतदुक्तं भवति—इहत्यविशिष्टदालिकलमशालिशालनकपकान्नप्रभृतिभ्योऽतीवापरिमितस्वादुतादिगुणोपेतेन्द्रियबलपुष्टिहेतुहृद्यखाद्यभोज्यपदार्थपरिपूर्णैः फलमध्यैर्विराजमानाश्चित्ररसाः संतिष्ठन्ति ७ तथा मण्यङ्गेषु वराणि—श्रेष्ठानि भूषणानि विश्रसापरिणतानि कटककुण्डलकेयूरादीन्याभरणानि भवन्ति ८ तथा भवनवृक्षेषु गेहाकारनामकेषु कल्पद्रुमेषु भवनानि—विश्रसापरिणामत एव प्रांशुप्राकारोपगूढसुखारोहसोपानपङ्क्तिविचित्रचित्रशालाविततवातायनानेकगुप्तप्रकटापवरककुट्टिमतलाद्यलङ्कृतानि नानाविधानि निकेतनानि भवन्ति ९ तथा अनग्नेषु कल्पपादपेषु धणियं—अत्यर्थं बहुप्रकाराणि विचित्राणि वस्त्राणि—विश्रसावशत एवातिसूक्ष्मसुकुमारदेवदूष्यानुकारीणि मनोहारीणि निर्मलभांसि वासांसि समुपजायन्त इति १० । १७१ ॥ ६८ ॥ ६९ ॥७०॥ इदानीं 'नरय'त्ति द्विसप्तत्यधिकशततमं द्वारमाह—

**घम्मा १ वंसा २ सेला ३ अंजण ४ रिट्ठा ५ मघा ६ य माघवई ७ । नरयपुढवीण नामाइं हुंति रयणाइं गोत्ताइं ॥ ७१ ॥ रयणप्पह १ सक्करपह २ वालुयपह ३ पंकपहभिहाणाओ ४। धूमपह ५ तमपहाओ ६ तह महातमपहा ७ पुढवी ॥ ७२ ॥**

इह यदनादिकालप्रसिद्धमन्वर्थरहितमभिधानं तत्सर्वकालं यथाकथञ्चिदन्वर्थनिरपेक्षतया नमनात्–प्रवर्तनान्नामेत्युच्यते, यत्पुनः सान्वर्थं तद्गोः–स्वाभिधायकवचनस्य त्राणाद्–यथार्थत्वसम्पादनेन पालनाद्गोत्रमिति, तत्र घर्मा वंशा शैला अञ्जना रिष्ठा मघा माघवती चेत्येतानि नरकपृथिवीनां सप्तानां यथाक्रमं नामानि भवन्ति, तथा 'रयण'त्ति एकदेशेन समुदायोपचाराद्रत्नप्रभादीनि गोत्राणि भवन्ति, तत्र प्रभाशब्दो बाहुल्यवाची, ततो रत्नानां–कर्केतनादीनां प्रभा–बाहुल्यं यस्यां सा रत्नप्रभा रत्नबहुलेति भावः, एवं शर्कराणामुपलखण्डानां प्रभा यस्यां सा शर्कराप्रभा, वालुकायाः परुषपांसूत्कररूपायाः प्रभा यस्यां सा वालुकाप्रभा, पङ्कस्य प्रभा यस्यां सा पङ्कप्रभा, कर्दमाभद्रव्योपलक्षितेत्यर्थः, धूमस्य प्रभा यस्यां सा धूमप्रभा, धूमाभद्रव्योपलक्षितेति भावः, तमसः प्रभा–बाहुल्यं यत्र सा तमःप्रभा, तथा महातमसः–अतिशायितमसः प्रभा–बाहुल्यं यत्र सा महातमःप्रभा, अपरे तु तमस्तमस्य–प्रकृष्टतमसस्तमस्तमसो वा–अत्यन्ततमसः प्रभा–बाहुल्यं यस्यां सा तमस्तमःप्रभेति वा मन्यन्त इति १७२ ॥ ७१ ॥ ७२ ॥ सम्प्रति **'नेरइयाणं आवास'**त्ति त्रिसप्तत्यधिकशततमं द्वारमाह––

**तीसा य १ पन्नवीसा २ पन्नरस ३ दस ४ चेव तिन्नि ५ य हवंति । पंचूण सयसहस्सं ६ पंचेव ७ अणुत्तरा नरया ॥ ७३ ॥**

नारकाणामावासाः क्रमशः सप्तस्वपि पृथिवीषु त्रिंशल्लक्षादयो भवन्ति, तथाहि—प्रथमायां पृथिव्यां त्रिंशच्छतसहस्रा लक्षा इत्यर्थः, एवं द्वितीयस्यां पञ्चविंशतिः तृतीयस्यां पञ्चदश चतुर्थ्यां दश पञ्चम्यां त्रीणि षष्ठ्यां पञ्चभिरूनं शतसहस्रं लक्षमित्यर्थः सप्तम्यां पञ्चैवानुत्तराः—सर्वाधोवर्तिनो नारकावासाः, ते चैवं—पूर्वस्यां दिशि कालनामा नरकावासः अपरस्यां दिशि महाकालः दक्षिणस्यां रोरुकः उत्तरस्यां महारोरुकः मध्येऽप्रतिष्ठानकः, मिलिताश्चैते चतुरशीतिर्लक्षाः १७३ ॥ ७३ ॥ सम्प्रति 'वेयण'त्ति चतुःसप्तत्यधिकशततमं द्वारमाह—

**सत्तसु खेत्तसहावा अन्नोऽन्नुदीरिया य जा छट्ठी । तिसु आइमासु वियणा परमाहम्मियसुरकया य ॥ ७४ ॥**

क्षेत्रस्वभावा—क्षेत्रस्वभावसमुद्भूता दुःखवेदना तावदविशेषेण सप्तस्वपि नरकपृथिवीषु भवति, '**अन्नोऽन्नुदीरिया य जा छट्ठी**'त्ति यावच्छब्दोऽयमव्ययत्वेनानेकार्थत्वादिह मर्यादावाची, ततोऽन्योऽन्योदीरिता—नारकैरेव परस्परमुपजनिता वेदना षष्ठीं पृथिवीं यावत्—षष्ठ्या अर्वाक्पञ्चमीमभिव्याप्य भवतीति, इदमुक्तं भवति—अन्योऽन्योदीरिता वेदना द्विधा—प्रहरणकृता शरीरकृता च, तत्र प्रहरणकृता आद्यास्वेव पञ्चसु पृथिवीषु भवति, शरीरकृता तु सामान्येन सप्तस्वपि पृथिवीषु, न चैतदनार्षं, तथा चोक्तं **जीवाभिगमोपांगे**—"इमीसे णं भंते! रयणप्पभाए पुढवीए नेरइया जाव एगत्तंपि पहू विउव्वित्तए पुहुत्तंपि पहू विउव्वित्तए', एगत्तं विउव्वमाणा एगं महं मुग्गररूवं वा मुसुंढीरूवं वा एवं करवत्तअसिसत्तिहलगयामुसलचक्कनारायकुंततोमरसूललगुडजाव भिंडिमालरूवं वा, पुहुत्तं विउव्वेमाणा मुग्गररूवाणि वा जाव भिंडमालरूवाणि वा, ताइं संखेज्जाइं नो असंखेज्जाइं संबद्धाइं नो असंबद्धाइं सरिसाइं नो असरिसाइं विउव्वंति, विउव्वित्ता अन्नमन्नस्स कायं अभिभवमाणा वेयणं उदीरयन्ति, एवं जाव धूमप्पभाए पुढवीए, छट्ठसत्तमासु णं पुढवीसु नेरइया

लोहियकुंथुरूवाइं वइरामयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा २ खाएमाणा २ सयपोराकिमिया इव चालेमाणा चालेमाणा अन्तो अन्तो अणुप्पविसमाणा वेयणमुदीरयन्ति"त्ति [ अस्यां भदन्त ! रत्नप्रभायां पृथिव्यां नैरयिका यावद् एकत्वमपि प्रभुर्विकुर्वितुं पृथक्त्वमपि प्रभुर्विकुर्वितुं ?, एकत्वं विकुर्वन्त एकं महत् मुद्गररूपं वा मुषण्ढीरूपं वा एवं करपत्रासिशक्तिहलगदामुशलचक्रनाराचकुन्ततोमरशूललकुटयावत्भिण्डिमालरूपं वा, पृथक्त्वं विकुर्वन्तो मुद्गररूपाणि वा यावद् भिण्डिमालरूपाणि वा, तानि सङ्ख्येयानि नासङ्ख्येयानि सम्बद्धानि नासम्बद्धानि सदृशानि नासदृशानि विकुर्वन्ति, विकुर्व्य अन्योऽन्यस्य कायमभिभवन्तो वेदनामुदीरयन्ते, एवं यावद् धूमप्रभायां पृथ्व्यां, षष्ठीसप्तम्योः पृथ्व्योर्नैरयिका लौहिककुन्थुरूपाणि वज्रमयतुण्डानि गोमूतककीटसमानानि विकुर्व्य अन्योऽन्यस्य कायं समतुरङ्गायमाणाः २ खादन्तः २ शतपर्वकृमय इव चालयन्तः २ अन्तरन्तरनुप्रविशन्तो वेदनामुदीरयन्ते ]। अत्र पृथक्त्वशब्दो बहुत्ववाची, ततः पृथक्त्वं—प्रभूतानि मुद्गरादीनि भिण्डिमालपर्यन्तानि प्रहरणानि विकुर्वन्तः परिमितानि स्वशरीरसंलग्नानि समानरूपाणि च विकुर्वन्ति, असङ्ख्यातानां स्वशरीरपृथग्भूतानां विसदृशानां च प्रहरणानां विकुर्वणे तथाभवस्वाभाव्येन सामर्थ्याभावात्, 'समतुरङ्गेमाणा समतुरङ्गेमाणा' इति समतुरङ्गा इवाचरन्तः समतुरङ्गायमाणाः, अश्वा इवान्योऽन्यमारोहन्त इत्यर्थः, शतपर्वकृमय इव—इक्षुकृमय इव 'चालेमाणा चालेमाणा' शरीरमध्येन सञ्चरन्तः सञ्चरन्त इति ॥ तथा तिसृष्वाद्यासु पृथिवीषु परमाधार्मिकसुरकृताऽपि वेदना भवति, तत्र क्षेत्रस्वभावजा (ग्रन्थाग्रं १३०००) रत्नप्रभाशर्कराप्रभावालुकाप्रभासूष्णा, एतन्नारकाणां हि शीतयोनिकत्वेन केवलं हिमप्रतिमशीतप्रदेशात्मकत्वात् योनिस्थानादन्यत्र च सर्वस्यापि भूम्यादेः खदिराङ्गारेभ्योऽप्यत्यन्तप्रतप्तत्वाद्गाढतर उष्णवेदनानुभवः, एवमन्यास्वपि वाच्यं, पङ्कप्रभायां बहुपूपरितनेषु नरकावासेषूष्णा अधस्तनेषु स्तोकेषु च शीता, धूमप्रभायां

शीता स्तोकेषूष्णा, षष्ठयां सप्तम्यां च पृथिव्यां केवला शीता वेदनैव, इयं च वेदना सर्वाऽप्यधोऽधोऽनन्तगुणतया तीव्रा तीव्रतरा तमा चावसेया, उष्णवेदनायाः शीतवेदनायाश्च स्वरूपं पुनरित्थं प्रदर्शयन्ति प्रवचनवेदिनः—यथा निदाघचरमसमयमध्याह्ने नभोमध्यमधिरूढे प्रौढे चण्डरोचिषि सर्वथाऽपि जलदपटलविकले गगनतले मनागप्यस्फुरति मारुति प्रभूतपित्तकोपाभिभूतस्य कृतातपवारणनिवारणस्य सर्वतः प्रज्वलज्ज्वलनज्वालाकरालितकलेवरस्य कस्यचित्पुंसः किल वाक्पथातीतसंवेदना यादृगुष्णवेदना प्रादुर्भवति ततोऽप्युष्णवेदनेषु नरकेषु नारकाणामनन्तगुणा, अपिच—यदि नारका उष्णवेदनेभ्यो नरकेभ्य उत्पाट्य धमनीमुखोध्मायमानखादिराङ्गारराशिशय्याशायिनः क्रियन्ते तदा सुधारससेकातिरेकनिर्वाप्यमाणा इवात्यन्तसुखास्वादमेदुरमनसो निद्रामपि लभेरन् । तथा पौषे माघे वा निशीथे सर्वथाऽप्यभ्रविभ्रमविरहितेऽपि वियति सर्वतोऽपि वपुःप्रकम्पकारि प्रवाति वाते तुषारशिखरिशिखरकृतस्थितेस्तुहिनकणगणसम्पर्किणो निरग्नेर्निराश्रयस्य निरावरणस्य पुंसो या शीतवेदना ततो भवति शीतवेदनेषु नारकाणामनन्तगुणा, किञ्च—यदि ते नारकाः शीतवेदनेभ्यो नरकेभ्य उत्पाट्य यथोक्तपुरुषस्थाने स्थाप्यन्ते तदा ते प्राप्तात्यन्तनिर्वातस्थाना इव निरुपमसुखसम्पत्तेर्निद्रामप्यासादयेयुरिति । तथा क्षुत्पिपासाकण्डूपारवश्यज्वरदाहभयशोकादिकाऽन्याऽपि नारकाणां वेदना श्रुते श्रूयते, तथाहि—ते नारकाः सर्वदैवाक्षयक्षुदग्निदह्यमानशरीराः सकलजगद्गतसुस्निग्धघृतादिपुद्गलाहारेणापि न तृप्यन्ति, पिपासाऽपि तेषां शश्वत्कण्ठोष्ठतालुजिह्वादिशोषकृन्निखिलपयोधिपयःपानेऽपि नोपशाम्यति, कंडूः पुनः कण्डूयमाना क्षुरिकादिभिरप्यनुच्छेद्या, पारवश्यज्वरदाहभयशोकादयोऽप्यत्रत्येभ्योऽनन्तगुणाः, यदपि च नारकाणामवधिज्ञानं विभङ्गज्ञानं वा तदपि तेषां दुःखकारणं, ते हि दूरत एव तिर्यगूर्ध्वमधश्च निरन्तरं दुःखहेतुमापतन्तमालोकयन्ति, आलोक्य च भयेन कम्पमानकायाः सोद्वेगमवतिष्ठन्ते । इयं सर्वाऽपि क्षेत्रस्वभावजा दुःखवेदना, अथ परस्परो-

दीरिता प्रतिपाद्यते—इह द्विविधा नारकाः—सम्यग्दृष्टयो मिथ्यादृष्टयश्च, तत्र ये मिथ्यादृष्टयस्ते मिथ्याज्ञानावलिप्तचेतसः परमार्थमजानानाः परस्परमुदीरयन्ति दुःखानि, ये तु सम्यग्दृष्टयस्ते तु नूनमस्माभिः कृतं जन्मान्तरेऽपि तत्किमपि पापं प्राणिहिंसादिरूपं येन निमग्ना वयं परमदुःखाम्भोधाविति परिभावयन्तः सहन्ते सम्यक्परोदीरितानि दुःखानि न पुनरन्येषामुत्पादयन्ति, दृष्टनिजकर्मविपाकत्वात्, अत एव च ते मिथ्यादृष्टिभ्योऽधिकतरदुःखाः प्रवचने प्रतिपाद्यन्ते, भूयिष्ठतया मानसिकदुःखसम्भवात्, येऽपि च मिथ्यादृष्टयः परस्परमुदीरयन्ति दुःखानि तेऽप्येवं—यथेह जगत्यपूर्वाद् ग्रामान्तरादागच्छतः शुनो दृष्ट्वा तद्ग्रामवास्तव्याः श्वानो निर्दयं क्रुद्ध्यन्ति परस्परं प्रहरन्ति च तथा नारका अपि विभङ्गज्ञानबलेन दूरत एवान्योऽन्यमालोक्य क्रोधान्धा वैक्रियं भयानकं रूपमाधाय तेष्वेव स्वस्वनरकावासेषु क्षेत्रानुभावजनितानि पृथिवीपरिणामरूपाणि शूलशिलामुद्गरकुन्ततोमरखड्गयष्टिपरशुप्रभृतीनि प्रहरणानि वैक्रियाणि वाऽऽदाय तैः करचरणदशनैश्च परस्परमभिघ्नन्ति, ततः परस्पराभिघाततो विकृताङ्गा निस्स्वनन्तो गाढवेदनाः सूनान्तःप्रविष्टमहिषादय इव रुधिरकर्दमे विचेष्टन्ते, एवमादिकाः परस्परोदीरिता दुःखवेदनाः, परमाधार्मिककृतास्तु तप्तत्रपुपानतप्तायोमयस्त्रीसमालिङ्गनकूटशाल्मल्यग्रारोपणअयोघनाघातवास्यादितक्षणक्षतक्षारोष्णतैलक्षेपणकुन्तादिप्रोतनभ्राष्ट्रभर्जनयन्त्रपीलनकरपत्रपाटनवैक्रियानेककाकोलूकसिंहादिकदर्थनतप्तवालुकावतारणअसिपत्रवनप्रवेशनवैतरणीतरङ्गिणीप्लावनपरस्परायोधनादिजनिता अपरिमिताः समयसमुद्रादवगन्तव्याः । किञ्च—कुम्भीषु पच्यमानास्तीव्रतापात्ते नारका उत्कर्षतः पञ्च योजनशतान्यूर्द्ध्वमुच्छलन्ति, तथा चोक्तं जीवाभिगमे—'नेरइयाणुप्पाओ उक्कोसं पंच जोयणसयाइं । दुक्खेणऽभिदुयाणं वेयणसयसंपगाढाणं ॥ १ ॥' [ नैरयिकाणामुत्पात उत्कृष्टतः पञ्च योजनशतानि । दुःखे-

किञ्चिच्छेषास्तु भूमिपतिता
नामिद्रुतानां वेदनाशतसंप्रगाढानां ॥ १ ॥ ] पतन्तश्च विकुर्वितैर्वज्रतुण्डैरण्डजैरन्तराले त्रोटिमिस्त्रोट्यन्ते
व्याघ्रादिमिर्विलुप्यन्त इति १७४ ॥ ७४ ॥ इदानीं 'आउ'त्ति पञ्चसप्तत्यधिकशततमं द्वारमाह—

**सागरमेगं १ तिय २ सत्त ३ दस ४ य सत्तरस ५ तह य बावीसा ६ । तेत्तीसं ७ जाव ठिई स-**
**त्तसु पुढवीसु उक्कोसा ॥ ७५ ॥ जा पढमाए जेट्ठा सा बीयाए कणिट्ठिया भणिया । तरतमजोगो**
**एसो दसवाससहस्स रयणाए ॥ ७६ ॥**

सप्तस्वपि नरकपृथिवीष्वियं यथासङ्ख्यमुत्कृष्टा स्थितिः, तद्यथा—रत्नप्रभायां पृथिव्यां सागरोपममेकमुत्कृष्टा स्थितिः शर्कराप्रभायां
त्रीणि सागरोपमाणि वालुकाप्रभायां सप्त पङ्कप्रभायां दश धूमप्रभायां सप्तदश तमःप्रभायां द्वाविंशतिः तमस्तमःप्रभायां त्रयस्त्रिंशत्साग-
रोपमाण्युत्कृष्टा स्थितिरिति ॥ ७५ ॥ सम्प्रति सप्तस्वपि पृथिवीषु जघन्यां स्थितिमाह—'जे'त्यादि, या प्रथमायां—रत्नप्रभायां ज्येष्ठा—
उत्कृष्टा स्थितिरेकसागरोपमलक्षणा सा द्वितीयायां पृथिव्यां शर्कराप्रभामिधानायां कनिष्ठा—जघन्या भणिता, एष तरतमयोगो—जघन्यो-
त्कृष्टस्थितियोगः सर्वास्वपि पृथिवीषु भावनीयः, तद्यथा—या द्वितीयायामुत्कृष्टा सा तृतीयायां जघन्या या तृतीयायामुत्कृष्टा सा चतुर्थ्यां
जघन्या एवं या षष्ठयामुत्कृष्टा सा सप्तम्यां जघन्या, रत्नप्रभायां प्रथमपृथिव्यां जघन्या स्थितिर्दश वर्षसहस्राणीति, अयममिप्रायः—
प्रथमपृथिव्यां रत्नप्रभायां जघन्या स्थितिर्दश वर्षसहस्राणि शर्कराप्रभायामेकं सागरोपमं वालुकाप्रभायां त्रीणि सागरोपमाणि पङ्कप्रभायां
सप्त धूमप्रभायां दशतमःप्रभांया सप्तदश तमस्तमःप्रभायां कालादिषु चतुर्षु नरकावासेषु द्वाविंशतिसागरोपमाणि जघन्या स्थितिः जघन्यो-
त्कृष्टान्तरालवर्तिनी तु स्थितिः सर्वत्र मध्यमा बोद्धव्या १७५ ॥ ७५ ॥ ७६ ॥ इदानीं 'तणुमाणं'ति षट्सप्तत्यधिकशततमं द्वारमाह—

**पढमाए पुढवीए नेरइयाणं तु होइ उच्चत्तं । सत्त धणु तिन्नि रयणी छच्चेव य अंगुला पुण्णा ॥ ७७ ॥ सत्तमपुढवीएँ पुणो पंचेव धणुस्सयाइं तणुमाणं । मज्झिमपुढवीसु पुणो अणेगहा मज्झिमं नेयं ॥ ७८ ॥ जा जम्मि होइ भवधारणिज्ज अवगाहणा य नरएसु । सा दुगुणा बोद्धव्वा उत्तरवेउव्वि उक्कोसा ॥ ७९ ॥ भवधारणिज्जरूवा उत्तरविउव्विया य नरएसु । ओगाहणा जहन्ना अंगुलअस्संखभागो उ ॥ ८० ॥**

अवगाहते—अवतिष्ठते जीवोऽस्यामित्यवगाहना—तनुः शरीरमित्येकोऽर्थः, सा द्विधा—भवधारणीया उत्तरवैक्रिया च, भवे—नारकादावायुःसमाप्तिं यावदनवरतं धार्यतेऽसाविति भवधारणीया, स्वाभाविकं शरीरमित्यर्थः, सहजशरीरग्रहणोत्तरं—उत्तरकालं कार्यविशेषमाश्रित्य विविधा क्रियत इत्युत्तरवैक्रिया, एकैकाऽपि च द्विधा—जघन्या उत्कृष्टा च, तत्र प्रथमं तावत् प्रतिपृथिवि उत्कृष्टा भवधारणीयाऽवगाहना प्रोच्यते—प्रथमायां रत्नप्रभायां पृथिव्यां नारकाणामुत्कर्षतो भवधारणीयावगाहनोच्चत्वं सप्त धनूंषि तिस्रो रत्नयः—त्रयो हस्ता इत्यर्थः, षडेव चाङ्गुलानि पूर्णानि, उत्सेधाङ्गुलेन सपादैकत्रिंशद्धस्ता इति भावः, सप्तमपृथिव्यां पुनः पञ्चैव धनुःशतान्युत्कर्षतो नारकाणां तनुमानं—शरीरोच्छ्रयः, मध्यमपृथिवीषु—शर्कराप्रभाद्यासु तमःप्रभापर्यन्तासु पुनर्मध्यमं—प्रथमसप्तमपृथिवीनारकतनुमानयोर्मध्यवर्ति अनेकधा, पूर्वपूर्वपृथिवीत उत्तरोत्तरपृथिवीषु द्विगुणद्विगुणं तनुमानमुत्कर्षतो ज्ञातव्यं, तथाहि—रत्नप्रभानारकतनुमानाद् द्विगुणं शर्कराप्रभायां—पञ्चदश धनूंषि द्वौ हस्तौ द्वादश चाङ्गुलानि देहमानं, एवं वालुकाप्रभायामेकत्रिंशद्धनूंषि एको हस्तः पङ्कप्रभायां द्वाषष्टिर्धनूंषि द्वौ हस्तौ धूमप्रभायां पञ्चविंशं धनुःशतं तमःप्रभायां सार्धे द्वे धनुःशते तमस्तमःप्रभायां पञ्चैव धनुःशतानीति ॥ ७७ ॥ सम्प्रति

प्रतिपृथिव्युत्कर्षत उत्तरवैक्रियामवगाहनामाह—'जा जम्मी'त्यादि, सप्तसु नरकेषु—नरकपृथिवीषु मध्ये यस्मिन्नरके—नरकपृथिव्यामुत्कृष्टा भवधारणीया याऽवगाहना उक्ता सा द्विगुणा सती यावत्प्रमाणा भवति तावती तस्यां नरकपृथिव्यामुत्कृष्टा उत्तरवैक्रियरूपा अवगाहना बोद्धव्या, तद्यथा—रत्नप्रभायामुत्कृष्टा उत्तरवैक्रियावगाहना पञ्चदश धनूंषि द्वौ च सार्धौ हस्तौ शर्कराप्रभायामेकत्रिंशद्धनूंषि एको हस्तः वालुकाप्रभायां द्वाषष्टिर्धनूंषि द्वौ च हस्तौ पङ्कप्रभायां पञ्चविंशं धनुःशतं धूमप्रभायां सार्धे द्वे शते तमःप्रभायां पञ्च धनुःशतानि तमस्तमःप्रभायां धनुःसहस्रमिति ॥७९॥ सम्प्रति भवधारणीयामुत्तरवैक्रियां च जघन्यामाह—'भवे'त्यादि, नरकेषु—सर्वासु नरकपृथिवीषु नारकाणां जघन्या भवधारणीया अङ्गुलस्यासङ्ख्येयो भागः, सा चोत्पत्तिसमये द्रष्टव्या, न त्वन्यदा, उत्तरवैक्रियरूपा पुनरवगाहना जघन्याऽङ्गुलसङ्ख्येयभागमात्रा, साऽपि च प्रारम्भकाले द्रष्टव्या, केवलं सा प्रथमसमयेऽपि तथाविधप्रयत्नाभावादङ्गुलसङ्ख्येयभागमात्रैव भवति न त्वसङ्ख्येयभागमात्रा, केचिच्च 'अंगुलअसंखभागो उ' इति पठन्तो जघन्यामुत्तरवैक्रियामप्यङ्गुलासङ्ख्यातभागप्रमाणामाहुः, तदसङ्गतमेव समयविरोधात्, तथा च प्रज्ञापनासूत्रम्—"तत्थ णं जा सा उत्तरवेउव्विया सा जहन्नेणं अंगुलस्स संखेज्जइभागं उक्कोसेणं धणुसहस्स"मिति, तथा अनुयोगद्वारटीकायां हरिभद्रसूरिरप्याह—"उत्तरवैक्रिया तु तथाविधप्रयत्नाभावादाद्यसमयेऽप्यङ्गुलसङ्ख्येयभागमात्रैवे"ति १७६ ॥ ८० ॥ इदानीं 'उप्पत्तिनासविरहो'त्ति सप्तसप्तत्यधिकशततमं द्वारमाह—

**चउवीसई मुहुत्ता १ सत्त अहोरत्त २ तह य पन्नरस ३। मासो य ४ दो य ५ चउरो ६ छम्मासा ७ विरहकालो उ ॥ ८१ ॥ उक्कोसो रयणाइसु सव्वासु जहन्नओ भवे समयो । एमेव य उव्वट्टणसंखा पुण सुरवरुतुल्ला (राण समा) ॥ ८२ ॥**

इह नरकगतौ तिर्यङ्मनुष्यगतिका जीवास्तावदनवरतं सदैवोत्पद्यन्ते कदाचित्त्वन्तरमपि भवति, तत्र सामान्येन सर्वामपि नरकग-
तिमाश्रित्य जघन्येनैकः समयः उत्कृष्टतस्तु द्वादश मुहूर्ताः, एतावन्तं कालमन्यत आगत्यैकोऽपि जन्तुर्नरकगतौ नोत्पद्यते इति भावः,
इदं च सूत्रेऽनुक्तमपि स्वयमेव द्रष्टव्यं, यदुक्तम्—"निरइगई णं भन्ते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ?, गोयमा ! जहन्नेणं
एकं समयं उक्कोसेणं बारस मुहुत्त"त्ति, प्रतिपृथिवीषू(वित् )त्पादान्तरमुत्कृष्टतो रत्नप्रभायां चतुर्विंशतिर्मुहूर्ताः शर्कराप्रभायां सप्ताहोरात्राः
वालुकाप्रभायां पञ्चदश पङ्कप्रभायामेको मासः धूमप्रभायां द्वौ मासौ तमःप्रभायां चत्वारो मासाः तमस्तमःप्रभायां षण्मासा विरह-
कालः—अन्तरकाल उत्कृष्टतः, जघन्यतः पुनः सर्वास्वपि रत्नप्रभादिकासु पृथिवीषु प्रत्येकं भवत्येकः समयो विरहकालः, 'एवमेव य
उवट्टण'त्ति यथोपपातविरहकाल उक्तः एवमेव उद्वर्तनविरहकालोऽपि जघन्यत उत्कर्षतश्च वाच्यः, किमुक्तं भवति ?—नरकेभ्यो नारकाः
प्रायः सततं च्यवन्ते कदाचिदेव त्वन्तरं, तत्र सामान्येन नरकगतिमाश्रित्य जघन्यत एकः समयः, उत्कृष्टतस्तु द्वादश मुहूर्ताः । विशे-
षचिन्तायां तु जघन्यतः सर्वास्वपि पृथिवीषु उद्वर्तनाविरहकाल एकः समयः, उत्कर्षतो रत्नप्रभायां चतुर्विंशतिर्मुहूर्ताः शर्कराप्रभायां
सप्त दिना वालुकाप्रभायां पक्षः पङ्कप्रभायां मासः धूमप्रभायां द्वौ मासौ तमःप्रभायां चत्वारो मासाः तमस्तमःप्रभायां षण्मासाः,
एकस्मिन्नारके उद्वृत्ते पुनरियता कालेनान्यो नारक उद्वर्तत इति भावः । 'संखा पुण सुरवरतुल्ल'त्ति उपपातोद्वर्तनयोः सङ्ख्या पुनरेक-
स्मिन् समये कियन्तो नारका उत्पद्यन्ते च्यवन्ते चेत्येवंलक्षणा सुरवरैस्तुल्या यथा सुराणां वक्ष्यते तथैव द्रष्टव्या, तद्यथा—एकस्मिन्
समये नारका उत्पद्यन्ते च्यवन्ते च जघन्यत एको द्वौ वा उत्कर्षतस्तु सङ्ख्याता असङ्ख्याता वेति १७७ ॥ ८१ ॥ ८२ ॥ सम्प्रति
'लेसाउ'त्ति अष्टसप्तत्यधिकशततमं द्वारमाह—

**काऊ १ काऊ २ तह काऊनील ३ नीला ४ य नीलकिण्हा ५ य । किण्हा ६ किण्हा ७ य तहा सत्तसु पुढवीसु लेसाओ ॥ ८३ ॥**

इह सामान्येन तावन्नारकाणां लेश्याषट्कमध्यादाद्याः कृष्णनीलकापोताख्यास्तिस्र एव लेश्या भवन्ति, ताश्च प्रतिपृथिवि प्रतिपाद्यन्ते, तत्र कापोतादयो लेश्याः सप्तस्वपि पृथिवीषु यथासङ्ख्येन भवन्ति, तथाहि—रत्नप्रभायामेका कापोतलेश्यैव भवति, शर्कराप्रभायामपि कापोतलेश्यैव, केवलं क्लिष्टतरा वेदितव्या, एवं सर्वत्र सजातीया विजातीया च लेश्याऽधोऽधः क्लिष्टतरा क्लिष्टतमा वाच्या, वालुकाप्रभायां कापोतनीला च लेश्या भवति, केषुचिदुपरितनेषु प्रस्तटेषु कापोतलेश्या केषुचिदधस्तनेषु नीललेश्येति भावः, पङ्कप्रभायां केवला नीललेश्यैव, धूमप्रभायां नीललेश्या कृष्णलेश्या च, केषुचिदुपरितनप्रस्तटेषु नीललेश्या शेषेष्वधस्तनप्रस्तटेषु कृष्णलेश्या भवतीत्यर्थः, तमःप्रभायामेकैव कृष्णलेश्या, तमस्तमःप्रभायामप्यतिसङ्क्लिष्टतमा कृष्णलेश्यैवेति, इह च केचिदाचक्षते—यथैता नारकाणां वक्ष्यमाणाश्च देवानां बाह्यवर्णरूपाः किल द्रव्यलेश्या अवगन्तव्याः, अन्यथा सप्तमपृथिवीनारकाणां या सम्यक्त्वप्राप्तिः श्रुतेऽभिधीयते सा न युज्यते, तैजस्यादिलेश्यात्रय एव तदवाप्तेरुक्तत्वात्, यदुक्तमावश्यके—"सम्मत्तस्स य तिसु उवरिमासु पडिवज्जमाणओ होइ। पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥ १ ॥" [ सम्यक्त्वस्य च तिसृषूपरितनीषु प्रतिपद्यमानको भवति। पूर्वप्रतिपन्नकोऽन्यतरस्यां पुनर्लेश्यायां ॥ १ ॥ ] उपरितन्यश्च तिस्रो लेश्यास्तेषां न सन्ति, सप्तमपृथिव्यां कृष्णलेश्याया एवोक्तत्वात्, तथा सौधर्मे तेजोलेश्यैव केवला वक्ष्यते, अस्याश्च प्रशस्तपरिणामहेतुत्वेन सङ्गमकादीनां भुवनगुरौ रौद्रोपसर्गकर्तृत्वानुपपत्तिः, तथा—'काऊ नीला कण्हा लेसाओ तिन्नि होंति नरएसु।' [ कापोती नीला कृष्णा लेश्यास्तिस्रो भवन्ति नरकेषु ] इत्यादिरूपो नियमोऽपि विरुध्यते 'देवाण नारयाण य दव्व-

ल्लेसा हवंति एयाओ । भावपरावत्तिइ पुण सुरनेरइयाण छल्लेसा ॥ १ ॥' [ देवानां नारकाणां च द्रव्यलेश्या भवन्त्येताः । भावपरावृत्तौ पुनः सुरनैरयिकाणां षट् लेश्याः ॥ १ ॥ ] इति वचनात्, तस्मादेता नारकाणां वक्ष्यमाणाश्च सुराणां बाह्यवर्णरूपा एवेति, तदेतदयुक्त-
मभिप्रायापरिज्ञानात्, लेश्याशब्दो हि शुभाशुभे परिणामविशेषे व्याख्यातः, तस्य च परिणामविशेषस्योत्पादकानि कृष्णादिरूपाणि
द्रव्याणि जन्तूनां सदा संनिहितानि सन्ति, एतैश्च कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनो-
च्यन्ते, गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिरूपाणि द्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते, ततश्च नारकाणां
देवानां च या लेश्यास्ता द्रव्यलेश्या द्रष्टव्याः, तत्तल्लेश्याद्रव्याणि तस्य तस्य नारकस्य देवस्य वा सर्वदैवावस्थितोदयानि द्रष्टव्यानीति
तात्पर्यं, न पुनर्बाह्यवर्णरूपाः, तानि च लेश्याद्रव्याणि तिर्यङ्मनुष्याणामन्यलेश्याद्रव्योपधाने विशुद्धवस्त्रमिव मञ्जिष्ठादिरागयोगे सर्वथा
स्वरूपत्यागात्तद्रूपेणैव परिणमन्ते, अन्यथैतल्लेश्यायाः पल्योपमत्रयस्थितेरपि सम्भवादुत्कर्षतोऽप्यन्तर्मुहूर्तमागमोक्तं विरुध्येत, नारकदेव-
लेश्याद्रव्याणां तु तदन्यलेश्याद्रव्यसम्पर्के तदाकारमात्रं तत्प्रतिबिम्बमात्रं वा जायते, न पुनः स्वस्वरूपपरिहारेण तद्रूपता, तथाहि—यथा
वैडूर्यादिमणेः प्रोतकृष्णादिसूत्रसम्पर्कादस्पष्टं किञ्चित्तदाकारभावमात्रं भवति स्फटिकोपलस्य वा जपाकुसुमादिसन्निधानतः स्पष्टं तत्प्र-
तिबिम्बमात्रं, न तूभयत्रापि तद्रूपतापत्तिः, तथा कृष्णादिलेश्याद्रव्याण्यपि नीलादिलेश्याद्रव्यौघं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं
कदाचित्स्पष्टं तत्प्रतिबिम्बमात्रं प्रतिपद्यन्ते, न पुनस्तद्वर्णगन्धरसस्पर्शतया परिणम्य नीलादिलेश्याद्रव्यरूपाण्येव भवन्ति, न चैतन्निजमनी-
षाविजृम्भितं, प्रज्ञापनायां लेश्यापदे इत्थमेव प्रतिपादितत्वात्, तत्सूत्रं च विस्तरभयान्न लिखितमिति । एवं च सप्तमपृथिव्यामपि यदा
कृष्णलेश्या तेजोलेश्यादिद्रव्याणि प्राप्य तदाकारमात्रेण तत्प्रतिबिम्बमात्रेण वाऽन्विता भवन्ति तदा सदावस्थितकृष्णलेश्याद्रव्ययोगेऽपि

साक्षात्तेजोलेश्यादिद्रव्यसाचिव्ये इव शुभः परिणामो नारकस्य जायते जपोपरक्तस्फटिकसन्निधाने स्फटिकस्य रक्ततावत्, तत्परिणामे
चास्य सम्यक्त्वावाप्तिरविरुद्धेति, न चैवमपि तेजोलेश्यादिसद्भावे सप्तमपृथिव्यां केवलकृष्णलेश्याभिधायिनः सूत्रस्य व्याघातः, यत-
स्तस्यां कृष्णैव सदावस्थायिनी तैजस्यादिका त्वाकारमात्रादिना कदाचिदेव जायते, न च जातापि चिरमवतिष्ठते, न चावस्थितायामपि
तस्यां कृष्णलेश्यादिद्रव्याणि सर्वथा स्वस्वरूपं त्यजन्ति, ततोऽधिकृतसूत्रे कृष्णैव सप्तम्यामुक्तेत्येवं सर्वत्र भावनीयं, अत एव सङ्गमका-
दीनामप्याकारमात्रादिना कृष्णलेश्यासम्भवादुपपद्यते त्रिभुवनगुरावुपसर्गविधातृत्वं, या अपि भावपरावृत्त्या सुरनारकाणां षडपि लेश्या
उक्तास्ता अपि प्रागुक्तेनैवाकारभावमात्रादिना प्रकारेण घटन्ते नान्यथा, लेश्यात्रयनियमस्तु सदावस्थितोदयलेश्याद्रव्यापेक्षत्वादविरुद्ध
इति, किंच—आसां बाह्यवर्णरूपत्वे प्रज्ञप्त्यादिषु—'नेरइया णं भंते! सव्वे समवन्ना?, गोयमा! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं
वुच्चइ?, गोयमा! नेरइया दुविहा पन्नत्ता, तंजहा—पुव्वोववन्नगा य पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नत-
रागा, जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा, से एणट्ठेणं गोयमा! एवं वुच्चइ—नो नेरइया सव्वे समवन्ना" इति वर्णमुक्त्वा
"नेरइया णं भंते! सव्वे समलेसा?, गोयमा! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! नेरइया दुविहा पन्नत्ता,
तंजहा—पुव्वोववन्नगा पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धलेसतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धले-
सतरागा, से एएणट्ठेणं गोयमा! एवं वुच्चइ—नो नेरइया सव्वे समलेस्सा" इति लेश्योक्तिरतिरिच्येत, वर्णानामेव लेश्यात्वाभ्युपगमात्,
तेषां च पूर्वसूत्रेणैव प्रतिपादितत्वादिति १७८ ॥ ८३ ॥ सम्प्रति 'अवहि'त्ति एकोनाशीत्यधिकशततमं द्वारमाह—

**चत्तारि गाउयाइं १ अद्धुट्ठाइं २ तिगाउयं चेव ३। अड्ढाइज्जा ४ दोन्नि य ५ दिवड्ढ ६ मेगं च ७ नरयोही ॥ ८४ ॥**

इह रत्नप्रभायां नरकावासेषु नारकाणां चत्वारि गव्यूतान्यवधिः—उत्कृष्टमवधिक्षेत्रप्रमाणं भवति, शर्कराप्रभायां तु अर्धं चतुर्थस्य येषु तान्यर्धचतुर्थानि गव्यूतानि, सार्धं गव्यूतत्रयमित्यर्थः, वालुकाप्रभायां गव्यूतत्रयं, पङ्कप्रभायामर्धं तृतीयस्य येषु तान्यर्धतृतीयानि गव्यूतानि, धूमप्रभायां द्वे गव्यूते, तमायां द्वितीयस्यार्धं यत्र तद् द्व्यर्धं गव्यूतं, सप्तमपृथिव्यां पुनरेकं गव्यूतमुत्कृष्टमवधिप्रमाणं, तथा सप्तस्वपि पृथिवीषु प्रत्येकमुत्कृष्टादवधिक्षेत्रप्रमाणादर्धगव्यूते व्यपनीते जघन्यमवधिक्षेत्रप्रमाणं भवति, तथाहि—प्रथमायां पृथिव्यां सार्धानि त्रीणि गव्यूतानि द्वितीयायां त्रीणि गव्यूतानि तृतीयायामर्धतृतीयानि गव्यूतानि चतुर्थ्यां द्वे गव्यूते पञ्चम्यां सार्धं गव्यूतं षष्ठयामेकं गव्यूतं सप्तम्यामर्धगव्यूतमिति, उक्तं च—"अद्धुट्ठगाउयाई जहन्नयं अद्धगाउयंता" [ अध्युष्टगव्यूतादिको जघन्योऽर्धगव्यूतान्तः ] इति १७९ ॥ ८४ ॥ सम्प्रति 'परमाहम्मिय'त्त्यशीत्यधिकशततमं द्वारमाह—

**अंबे १ अंबरिसी २ चेव, सामे य ३ सबले य ४। रुद्दो ५ वरुद्द ६ काले य ७, महाकालित्ति ८ आवरे ॥ ८५ ॥ असिपत्ते ९ धणू १० कुंभे ११, वालू १२ वेयरणी इय १३। खरस्सरे १४ महाघोसे १५, पन्नरस परमाहम्मिया ॥ ८६ ॥**

परमाश्च ते अधार्मिकाश्च सङ्क्लिष्टपरिणामत्वात् परमाधार्मिका—असुरविशेषाः, ते च व्यापारभेदेन पञ्चदश भवन्ति, तत्र यः परमाधार्मिको देवो नारकानम्बरतले नीत्वा निःशङ्कं विमुञ्चति सोऽम्ब इत्यभिधीयते १ यस्तु नारकान्निहतान् कल्पनिकाभिः खण्डशः

कृत्वा भ्राष्ट्रपाकयोग्यान् करोतीत्यसावम्बरीषस्य–भ्राष्ट्रस्य सम्बन्धादम्बरीष इति २ यस्तु रज्जुपाणिप्रहारादिना शातनपातनादिकं करोति वर्णतश्च श्यामः स श्याम इति ३ यश्चान्त्रवसाहृदयकालेज्यकादीन्युत्पाटयति वर्णतश्च शवलः–कर्बुरः स शवल इति ४ यः शक्तिकुन्तादिषु नारकान् प्रोतयति स रौद्रत्वाद्रौद्रः ५ यस्तु तेषामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्रः ६ यः पुनः कण्डादिषु पचति वर्णतश्च कालः स कालः ७ महाकाल इति चापरः परमाधार्मिक इति प्रक्रमः, स च श्लक्ष्णमांसानि खण्डयित्वा खादयति वर्णतश्च महाकाल इति ८ असिः–खड्गस्तदाकारपत्रवद्वनं विकुर्व्य यस्तत्समाश्रितान्नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः ९ यो धनुर्विमुक्तार्धचन्द्रादिभिर्बाणैः कर्णादीनां छेदनभेदनानि करोति स धनुः १० भगवत्यां तु महाकालानन्तरमसिस्ततोऽसिपत्रस्ततः कुम्भ इति पठ्यते, तत्र योऽसिना नारकांश्छिनत्ति सोऽसिः शेषं तथैव, यः कुम्भ्यादिषु तान् पचति स कुम्भः ११ यः कदम्बपुष्पाकारासु वज्राकारासु वा वैक्रियासु वालुकासु तप्तासु चनकानिव तान् पचति स वालुकः १२ विरूपं तरणं प्रयोजनमस्या इति वैतरणीति यथार्था पूयरुधिरत्रपुताम्रादिभिरतितापात्कलकलायमानैर्भृतां नदीं विकुर्वित्वा तत्तारणेन नारकान् यः कदर्थयति स वैतरणीति १३ यो वज्रकण्टकाकुलशाल्मलीवृक्षे नारकमारोप्य खरं स्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वरः १४ यस्तु भीतान् प्रपलायमानान्नारकान् पशूनिव वाटकेषु महाघोषं कुर्वतो निरुणद्धि स महाघोष इति १५। एवमेते पञ्चदश परमाधार्मिकाः प्राग्जन्मनि सङ्क्लिष्टक्रूरक्रियाः पापाभिरताः पञ्चाग्न्यादिरूपं मिथ्याकष्टतपः कृत्वा रौद्रीमासुरीं गतिमनुप्राप्ताः सन्तस्ताच्छील्यान्नारकाणामाद्यासु तिसृषु पृथिवीषु विविधवेदनाः समुदीरयन्ति तथा कदर्थ्यमानांश्च नारकान् दृष्ट्वा इहत्यमेषमहिषकुर्कुटादियुद्धप्रेक्षकनरा इव हृष्यन्ति, हृष्टाश्चाट्टाट्टहासं चेलोत्क्षेपं

त्रिपद्यास्फालनादि च कुर्वन्ति, किं बहुना?, यथैषामित्थं प्रीतिर्न तथा नितान्तकान्ते प्रेक्षणकादाविति १८७ ॥ ८५ ॥ ८६ ॥ सम्प्रति 'नरयुबट्टाण लद्धिसंभवो'त्येकाशीत्यधिकशततमं द्वारमाह—

तिसु तित्थ चउत्थीए केवलं पंचमीए सामन्नं । छट्ठीए विरइऽविरई सत्तमपुढवीइ सम्मत्तं ॥ ८७ ॥
पढमाओ चक्कवट्टी बीयाओ रामकेसवा हुंति । तचाओ अरहंता तहऽन्तकिरिया चउत्थीओ ॥ ८८ ॥
उव्वट्टिया उ संता नेरइया तमतमाओ पुढवीओ । न लहंति माणुसत्तं तिरिक्खजोणिं उवणमंति ॥ ८९ ॥ छट्ठीओ पुढवीओ उव्वट्टा इह अणंतरभवंमि । भज्जा मणुस्सजम्मे संजमलंभेण उ विहीणा ॥ ९० ॥

इह 'तिसु'त्ति सप्तम्याः प्राकृतत्वेन पञ्चम्यर्थत्वादाद्याभ्यस्तिसृभ्य एव पृथिवीभ्य उद्वृत्ता अनन्तरभवे तीर्थकृतो भवन्ति, न शेषपृथिवीभ्यः, सम्भवमात्रं चेदं, न नियमः, तेन ये पूर्वनिबद्धनरकायुषः सन्तः समुपात्ततीर्थकृन्नामगोत्राः श्रेणिकादय इव नरकेषु गच्छन्ति त एव तत उद्वृत्ता अनन्तरभवे तीर्थकृतो, न शेषाः, चतुर्थ्याः पृथ्व्या उद्वृत्ताः केचित् केवलं—केवलज्ञानं सामान्येन प्राप्नुवन्ति, तीर्थकृतस्तु नियमेन न भवन्ति, पञ्चम्या उद्वृत्ताः श्रामण्यं—सर्वविरतिरूपं लभन्ते न तु केवलज्ञानं, षष्ठ्या उद्वृत्ता विरताविरतिं—देशविरतिं लभन्ते न तु श्रामण्यं, सप्तम्या उद्वृत्ताः सम्यक्त्वं—सम्यग्दर्शनरूपं, न देशविरत्यादिकमिति, अयमत्र भावार्थः—आद्याभ्यस्तिसृभ्य उद्वृत्तास्तीर्थकृतो भवन्ति चतसृभ्य उद्वृत्ताः केवलज्ञानिनः पञ्चम्या उद्वृत्ताः संयमिनः षष्ठ्या उद्वृत्ता देशविरताः सप्तम्या उद्वृत्ताः सम्यग्दृष्टय इति ॥ ८७ ॥ पुनरपि लब्धिविशेषसम्भवं दर्शयन्नाह—'पढमे'त्यादि, प्रथमायाः—रत्नप्रभाया एवोद्वृत्ताश्चक्रवर्तिनो भवन्ति न शेषपृथिवीभ्यः, द्वितीय-

यायाः—द्वितीयां मर्यादीकृत्य नरकेभ्य उद्धृता रामकेशवा—बलदेववासुदेवा भवन्ति, एवं सर्वत्र मर्यादा भावनीया, तृतीयाया उद्धृता अर्हन्तो भवन्ति, चतुर्थ्या उद्धृता 'अंतकिरिय'त्ति पदैकदेशे पदसमुदायोपचाराद् अन्तक्रियासाधकाः, मुक्तिगामिनो भवन्तीत्यर्थः, तथा तमस्तमाभिधानायाः सप्तम्याः पृथिव्या उद्धृताः सन्तो नारका नियमान्मानुषत्वं न लभन्ते, किन्तु तिर्यग्योनिमुपनमन्ति—धातूनामनेकार्थत्वेन प्राप्नुवन्ति, तथा षष्ठ्याः—तमःप्रभाभिधानायाः पृथिव्या उद्धृताः सन्तो नारका इहानन्तरभवे मनुष्यजन्मनि भाज्याः—केचिन्मनुष्या भवन्ति केचित्तु नेति भावः, येऽपि च मनुष्या भवन्ति तेऽपि नियमतः संयमलाभेन—सर्वविरतिलाभेन विहीना भवन्ति, न तु कदाचनापि तद्युक्ताः १८१ ॥ ८८ ॥ ८९ ॥ ९० ॥ इदानीं 'तेसु जेसिमुववाओ' इति द्व्यशीत्यधिकशततमं द्वारमाह—

**अस्सन्नी खलु पढमं दोच्चं च सरिसिवा तइय पक्खी । सीहा जंति चउत्थिं उरगा पुण पंचमिं पुढविं ॥ ९१ ॥ छट्ठिं च इत्थियाओ मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ बोद्धव्वो नरयपुढवीसु ॥ ९२ ॥ वालेसु य दाढीसु य पक्खीसु य जलयरेसु उववन्ना । संखिज्जाउठिईया पुणोऽवि नरयाउया हुंति ॥ ९३ ॥**

असंज्ञिनः—सम्मूर्च्छिमाः पञ्चेन्द्रियाः खलु प्रथमां नरकपृथिवीं गच्छन्ति, खलुशब्दोऽवधारणे, तच्चावधारणमेवं—असंज्ञिनः प्रथमामेव पृथिवीं यावद्गच्छन्ति, न परत इति, न तु त एव प्रथमां गच्छन्ति, गर्भजसरीसृपादीनामपि उत्तरपृथिवीषट्कगामिनां तत्र गमनभावात्, एवमुत्तरत्राप्यवधारणं भावनीयं, असंज्ञिनश्चात्र तिर्यञ्चो ज्ञेयाः, संमूर्च्छिममनुष्याणामपर्याप्तानामेव कालकरणतो नरकगतेरभावात्, तत्रापि पल्योपमासङ्ख्येयभागायुष्केष्वेव, उक्तं च—"असन्नी णं नेरइयाउ पकरेमाणा जहन्नेणं दस वाससहस्साइं उक्कोसेणं पलि-

ओवमस्स असंखेज्जइभागं पकरिंति"त्ति [ असंज्ञिनो नैरयिकायुः प्रकुर्वन्तो जघन्येन दश वर्षसहस्राणि उत्कृष्टतः पल्योपमस्यासंख्येयभागं प्रकुर्वन्ति ] तथा द्वितीयामेव पृथिवीं यावद्गच्छन्ति सरीसृपा—भुजपरिसर्पा गोधानकुलादयो गर्भव्युत्क्रान्ता न ततः परतः, एवं तृतीयामेव गर्भजाः पक्षिणो—गृध्रादयः, चतुर्थीमेव सिंहाः—सिंहोपलक्षिताश्चतुष्पदा गर्भजाः, पञ्चमीमेव गर्भजा उरगाः—उरःपरिसर्पाः सर्पादयः, षष्ठीमेव स्त्रियः—स्त्रीरत्नाद्या महारम्भादियुक्ताः, सप्तमीं यावद्गर्भजा मत्स्या—जलचरा मनुजाश्च अतिक्रूराध्यवसायिनो महापापकारिणः, एप जीवविशेषभेदेन परमः—उत्कृष्ट उपपातो वोद्धव्यो नरकपृथिवीषु, जघन्यतस्तु सर्वेषामपि रत्नप्रभायाः प्रथमे प्रस्तटे मध्यमतः पुनर्जघन्यात्परतः स्वस्वोत्कृष्टोपपातादर्वागिति ॥ ९१ ॥ ९२ ॥ सम्प्रति केषाञ्चित्तिर्यग्योनिजानां वाहुल्यकृतं विशेषमाह—'वालेसु' इत्यादि, नरकेभ्य उद्धृता व्यालेषु—सर्पादिषु दंष्ट्रिषु—व्याघ्रसिंहादिषु पक्षिषु—गृद्ध्रादिषु जलचरेषु—मत्स्यजातिषु सङ्ख्यातायुःस्थितय उत्पन्नाः सन्तो भूयः क्रूराध्यवसायवशगाः पञ्चेन्द्रियवधादीन् विधाय नरकायुषो भवन्ति, एतच्च वाहुल्येनोच्यते न तु नियमः, यतो नारकेभ्योऽपि केचिदुद्धृत्य सम्यक्त्वादिप्राप्तिवशाच्छुभां गतिमासादयन्तीति ९३ ॥ १८२ ॥ सम्प्रति 'संखा उप्पज्जंताण'त्ति त्र्यशीत्यधिकशततमद्वारस्य 'तह य उवट्टमाणाणं'ति चतुरशीत्यधिकशततमद्वारस्य चावसरो विवरणाय, परमुत्पत्तिनाशविरहकालद्वारे 'संखा पुण सुरवरतुल्ल'त्ति गाथादलेन तद्द्वारद्वयमपि व्यक्तं प्राग्व्याख्यातमिति नेदानीं तद्विवृतमिति १८३–१८४ ॥ सम्प्रति 'एगिंदियविगलिंदियसन्नीजीवाण कायठिइओ'त्ति पञ्चाशीत्यधिकशततमं द्वारमाह—

**अस्संखोसप्पिणिसप्पिणीउ एगिंदियाण (उ) चउण्हं । ता चेव ऊ अणंता वणस्सइए उ बोद्धव्वा**

**॥ ९४ ॥ वाससहस्सासंखा विगलाणं ठिइउ होइ बोद्धवा । सत्तट्ठभवा उ भवे पणिंदितिरिमणुय उक्कोसा ॥ ९५ ॥**

एकेन्द्रियाणां चतुर्णां—पृथिव्यप्तेजोवायुरूपाणां प्रत्येकमुत्कृष्टा कायस्थितिः—मृत्वा मृत्वा तत्रैव कायेऽवस्थानमसङ्ख्येया उत्सर्पिण्यवसर्पिण्यः, एतच्च कायस्थितिमानं कालतः, क्षेत्रतस्त्वसङ्ख्येया लोकाः, इदमुक्तं भवति—असङ्ख्येयेषु लोकाकाशेषु प्रतिसमयमेकैकप्रदेशापहारे सर्वप्रदेशापहारेण यावत्योऽसङ्ख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावत्य इति, ता एव—उत्सर्पिण्यवसर्पिण्योऽनन्ता वनस्पतिकायिकस्योत्कृष्टा कायस्थितिः बोद्धव्या, इयमपि कालतः, क्षेत्रतस्तु पूर्वोक्तप्रकारेण अनन्ता लोकाः, असङ्ख्येयाः पुद्गलपरावर्त्ताः, ते च आवलिकाया असङ्ख्येयतमे भागे यावन्तः समयाः तत्तुल्या, इयं च कायस्थितिः सांव्यवहारिकानाश्रित्य द्रष्टव्या, असांव्यवहारिकजीवानां त्वनादिरवसेया, ततो न मरुदेव्यादिभिर्व्यभिचारः, तथा च **क्षमाश्रमणाः**—'तह कायठिइकालादओ विसेसे पडुच्च किर जीवे । नाणाइवणस्सइणो जे संववहारबाहिरिया ॥ १ ॥" [ तथा कायस्थितिकालादयो विशेषान् जीवान् किल प्रतीत्य । नानादिवनस्पतीन् ये संव्यवहारबाह्याः ॥ १ ॥ ] यापि चासांव्यवहारिकजीवानामनादिः कायस्थितिः साऽपि केषाञ्चिदनादिरपर्यवसाना, ये जातुचिदप्यसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ न निपतिष्यन्ति, केषाञ्चिदनादिः सपर्यवसाना, येऽसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ निपतन्ति । अथ किमसांव्यवहारिकराशेर्विनिर्गत्य सांव्यवहारिकराशावागच्छन्ति ?, उच्यते, आगच्छन्ति, तथा चोक्तं **विशेषणवत्यां**—"सिज्झंति जत्तिया किर इह संववहारजीवरासीओ । इन्ति अणाइवणस्सइरासीओ तत्तिया तंमि ॥ १ ॥" [ सिध्यन्ति यावन्तः किलेह संव्यवहारजीवराशेः । आयान्ति अनादिवनस्पतिराशेस्तावन्तस्तस्मिन् ॥ १ ॥ ] तत्र येऽनादिसूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवे-

पूत्पद्यन्ते ते पृथिव्यादिविविधव्यवहारयोगात् सांव्यवहारिकाः, ये पुनरनादिकालादारभ्य सूक्ष्मनिगोदेष्वेवावतिष्ठन्ते ते तु तथाविधव्यवहारातीतत्वादसांव्यवहारिकाः; तत्र सांव्यवहारिकाः सूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवेपूत्पद्यन्ते, तेभ्योऽप्युद्धृत्य केचिद् भूयोऽपि तेष्वेव निगोदेषु गच्छन्ति, परं तत्रापि सांव्यवहारिका एव ते, व्यवहारे पतितत्वात्, तत्र च सूत्रोक्तमुत्कर्षतोऽवस्थानकालमानं, असांव्यवहारिकास्तु सदा निगोदेष्वेवोत्पत्तिमरणभाजो, न कदाचनापि त्रसादिभावं लब्धवन्त इति । तथा विकलानां—द्वित्रिचतुरिन्द्रियाणां प्रत्येकं कायस्थितिस्तु सङ्ख्याता वर्षसहस्राः 'विगलाण य वाससहस्सं संखेज्ज'त्ति पञ्चसङ्ग्रहवचनात्, पञ्चेन्द्रियतिरश्चां मनुष्याणां च संज्ञिपर्याप्तानामुत्कृष्टा कायस्थितिः सप्ताष्टौ वा भवा भवेत्, तत्र सप्त भवाः सङ्ख्येयवर्षायुषः अष्टमस्त्वसङ्ख्येयवर्षायुष एव, तथाहि—पर्याप्तमनुष्याः पर्याप्तसंज्ञिपञ्चेन्द्रियतिर्यञ्चो वा निरन्तरं यथासङ्ख्यं सप्त नरभवांस्तिर्यग्भवान् वाऽनुभूय यद्यष्टमे भवे भूयस्तेष्वेवोत्पद्यन्ते तदा नियमादसङ्ख्यायुष्केष्वेव नेतरेषु, असङ्ख्यायुश्च मृत्वा सुरेष्वेवोत्पद्यन्ते ततो नवमोऽपि नरभवस्तिर्यग्भवो वा निरन्तरं न लभ्यते, अष्टसु च भवेपूत्कर्षतः कालमानं त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वाधिकानि, जघन्या तु सर्वत्रापि कायस्थितिरन्तर्मुहूर्तमिति १८५ ॥ ९४ ॥ ॥ ९५ ॥ सम्प्रति 'एगिंदियविगलसन्निजीवाणं भवट्ठिइ'त्ति षडशीत्यधिकशततमं द्वारमाह—

**बावीसई सहस्सा सत्तेव सहस्स तिन्निऽहोरत्ता। वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥ ९६ ॥ संवच्छराइं बारस राइंदिय हुंति अउणपन्नासं । छम्मास तिन्नि पलिया पुढवाईणं ठिइ- कोसा ॥ ९७ ॥ सण्हा य १ सुद्ध २ वालुय ३ मणोसिला ४ सक्करा य ५ खरपुढवी ६ । एकं १ बारस २ चउदस ३ सोलस ४ अट्ठार ५ बावीसा ६ ॥ ९८ ॥**

पृथिव्यादीनां मनुष्यपर्यन्तानां स्थितिः—आयुःप्रमाणरूपा एषा उत्कृष्टा, यथा—पृथिवीकायिकानां द्वाविंशतिर्वर्षसहस्राणि अप्कायिकानां सप्त वर्षसहस्राणि तेजस्कायिकानां त्रीणि रात्रिन्दिवानि वाते—वातकाये त्रीणि वर्षसहस्राणि वृक्षा—वनस्पतयो दशवर्षसाहस्रिकाः, किमुक्तं भवति ?—वनस्पतिकायिकानामुत्कर्षतः स्थितिर्दश वर्षसहस्राणीति, तथा द्वीन्द्रियाणामुत्कर्षत आयुःस्थितिर्द्वादश वर्षाणि त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिन्दिवानि चतुरिन्द्रियाणां षण्मासाः पञ्चेन्द्रियाणां तिर्यग्मनुष्याणां त्रीणि पल्योपमानि, एषा चोत्कृष्टा स्थितिः प्रायो निरुपद्रवस्थाने द्रष्टव्या, एवमग्रेऽपि ज्ञेयं ॥ ९६ ॥ ९७ ॥ एवं सामान्येन पृथिव्यादीनामुत्कृष्टां स्थितिमभिधाय पृथिवीभेदेषु विशेषेणाह—'सण्हे'त्यादि, इह पूर्वार्धपदानामुत्तरार्धपदानां च यथाक्रमं योजना, सा चैवं—श्लक्ष्णा—मरुस्थल्यादिगता पृथिवी तस्या एकं वर्षसहस्रमुत्कृष्टमायुः शुद्धा—कुमारमृत्तिका तस्या द्वादश वर्षसहस्राणि वालुका—सिकता तस्याश्चतुर्दश वर्षसहस्राणि मनःशिला प्रतीता तस्याः षोडश शर्करा—दृषत्कर्करिका तस्या अष्टादश खरपृथिवी—शिलापाषाणरूपा तस्या द्वाविंशतिर्वर्षसहस्राण्युत्कृष्टमायुः, जघन्यं तु सर्वत्राप्यन्तर्मुहूर्तमिति १८६ ॥ ९८ ॥ सम्प्रति 'एएसिं तणुमाणं'ति सप्ताशीत्यधिकशततमं द्वारमाह—

जोयणसहस्समहियं ओहपएगिंदिए तरुगणेसु । मच्छजुयले सहस्सं उरगेसु य गब्भजाईसु
॥ १०९९ ॥ उस्सेहंगुलगुणियं जलासयं जमिह जोयणसहस्सं । तत्थुप्पन्नं नलिणं विन्नेयं भणियमाणंति ॥ ११०० ॥ जं पुण जलहिदहेसुं पमाणजोयणसहस्समाणेसुं । उप्पज्जइ वरपउमं तं जाणसु भूवियारंति ॥ ११०१ ॥ वणऽणंतसरीराणं एगमनिलसरीरगं पमाणेणं । अनलोदगपुढवीणं असंखगुणिया भवे वुड्ढी ॥ २ ॥ विगलिंदियाण बारस जोयणा तिन्नि चउर कोसा य । सेसाणोगा-

**हणया अंगुलभागो असंखिज्जो ॥३॥ गब्भचउप्पय छग्गाउयाइं भुयगेसु गाउयपुहुत्तं। पक्खीसु धणुपुहुत्तं मणुएसु य गाउया तिन्नि ॥ ४ ॥**

ओघपदे–सामान्यचिन्तायामेकेन्द्रिये पृथिव्यादिविशेषानाकाङ्क्षितानामेकेन्द्रियाणामित्यर्थः, विशेषचिन्तायां तरुगणेषु–प्रत्येकवनस्पतीनामित्यर्थः उत्कर्षतः सातिरेकं योजनसहस्रं शरीरप्रमाणमवसेयं, एतच्च समुद्रे गोतीर्थादिगतलतानलिननालाद्यधिकृत्य वेदितव्यं, अन्यत्रैतावदौदारिकशरीरस्यासम्भवात्, तथा पञ्चेन्द्रियतिर्यञ्चस्त्रिविधाः–जलचराः स्थलचराः खेचराश्च, जलचराः सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, स्थलचरास्तु द्विविधाः–चतुष्पदाः परिसर्पाश्च, चतुष्पदाः पुनरपि सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, परिसर्पास्तु द्विविधाः–उरःपरिसर्पा भुजपरिसर्पाश्च, उभये अपि प्रत्येकं चतुष्पदवच्चतुर्विधाः, इत्येवं स्थलचराः सर्वेऽपि द्वादशविधाः, खेचरास्तु जलचरवच्चतुर्विधाः, तदेवं विंशतिभेदानां तिरश्चां तनुमानचिन्तायां मत्स्यानां–जलचराणां युगले–सम्मूर्छजगर्भजलक्षणे उरगेषु च–उरःपरिसर्पेषु सर्पादिषु गर्भजेषु प्रत्येकं परिपूर्णं योजनसहस्रमिति ॥ ९९ ॥ ननु तनुप्रमाणमुत्सेधाङ्गुलेन 'उस्सेहपमाणओ मिणसु देहं' इति वचनात्, समुद्रपद्मह्रदादीनां तु प्रमाणं प्रमाणाङ्गुलेन, ततः समुद्रादीनां योजनसहस्रावगाहनत्वात्तद्गतपद्मनालादीनामुत्सेधाङ्गुलापेक्षयाऽत्यंतदैर्घ्यं प्राप्नोतीत्यत आह–'उस्सेह'मित्यादि, 'ज'मित्यादि, उत्सेधाङ्गुलेन 'परमाणू रहरेणू' इत्यादिक्रमनिष्पन्नेन गुणितः–प्रमितः सन् योऽसौ जलाशयः–समुद्रगोतीर्थादिरिह–मनुष्यलोके योजनसहस्रप्रमाणो भवति, तत्र समुत्पन्नं नलिनं–पद्मं भणितमानं–पूर्वोक्तकिञ्चित्समधिकयोजनसहस्रप्रमाणं विज्ञेयं, यत् पुनः प्रमाणाङ्गुलानां योजनसहस्रमानेषु जलधिह्रदादिषु वरं–प्रधानं पद्ममुत्पद्यते तज्जानीहि भूविकारं–पृथिवीविकारमिति। इदमुक्तं भवति–इह समुद्रमध्ये प्रमाणाङ्गुलतो योजनसहस्रावगाहे

यानि पद्मानि तानि पृथिवीपरिणामरूपाण्येवं, यथा श्रीदेवतायाः पद्महृदे पद्मं, यानि पुनः शेषेषु गोतीर्थादिषु स्थानेषु पद्मानि तानि वनस्पतिपरिणामरूपाण्यपि भवन्ति, तानि च शेषेषु जलाशयेषु, वल्ल्यादयश्चोत्कर्षतो यथोक्तमाना भवन्ति, तथा चोक्तं **विशेषणवत्याम्**—"पुढवीपरिणामाइं ताइं किर सिरिनिवासपउमं व। गोतित्थेसु वणस्सइपरिणामाइं तु होज्जाहि ॥ १ ॥ जत्थुस्सेहंगुलओ सहस्समवसेसएसु य जलेसुं। वल्लीलयादओऽवि य सहस्समायामओ होंति ॥ २ ॥" [तानि किल पृथ्वीपरिणामानि श्रीनिवासपद्ममिव। गोतीर्थेषु वनस्पतिपरिणामानि तु भवेयुः ॥१॥ यत्रोत्सेधांगुलतः सहस्रं अवशेषेषु च जलेषु। वल्लीलतादयोऽपि च सहस्रमायामतो भवन्ति ॥२॥]॥११००-११०१॥

तथा प्रत्येकवनस्पतिवर्जितानां पंचानामपि पृथिव्यादीनामङ्गुलासङ्ख्येयभागमानाऽवगाहना वक्ष्यते, ततस्तत्र विशेषमाह—'**वणे**'त्यादि, '**विगले**'त्यादि, '**गब्भे**'त्यादि, '**वण**'त्ति वनस्पतीनां '**अणंत**'त्ति अनन्तकायिकानां सूक्ष्माणां यान्यसङ्ख्येयानि शरीराणि तेषां प्रमाणेन—मानेनैकमनिलशरीरकं—वायुशरीरं, किमुक्तं भवति?—सूक्ष्मसाधारणवनस्पतीनामसङ्ख्यातैः शरीरैस्तुल्यमेकं सूक्ष्मं वायुशरीरमिति, उक्तं च **प्रज्ञप्तौ**—'अणंताणं सुहुमवणस्सइकाइयाणं जावइया सरीरा से एगे सुहुमवाउसरीरे"त्ति, अनन्तकायिकानां यावन्ति शरीराणि तदेकं सूक्ष्मं वायुशरीरं, तावत्शरीरप्रमाणमित्यर्थः, यावद्ग्रहणाच्चासङ्ख्यातानि शरीराणि ग्राह्याणि, अनन्तानामपि वनस्पतीनामेकाद्यसङ्ख्येयान्तशरीरत्वेनानन्तानां शरीराणामभावात्, ततो वायुकायिकशरीरादनलोदकपृथिवीनां—अग्निजलपृथिवीकायिकशरीराणां सूक्ष्माणां बादराणां च यथाक्रममसङ्ख्यगुणा भवति वृद्धिः, इयमत्र भावना—यावत्प्रमाणमेकं सूक्ष्मवायुकायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मतेजस्कायिकशरीरं ततोऽसङ्ख्यातगुणमेकं सूक्ष्माप्कायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मपृथिवीकायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं बादरवायुशरीरं ततोऽसङ्ख्यातगुणमेकं बादराग्निशरीरं ततोऽप्यसङ्ख्यातगुणमेकं बादराप्कायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं

बादरपृथिवीशरीरं तस्मादप्यसङ्ख्यातगुणमेकं बादरनिगोदशरीरमिति, एतच्च सर्वमपि भगवत्येकोनविंशतितमशतकतृतीयोद्देशकानुसारेणोक्तं न तु निजमनीषिकयेति, इह च पृथिव्यादीनामङ्गुलासङ्ख्येयभागमात्रावगाहनात्वेऽप्यसङ्ख्येयभेदत्वादङ्गुलासङ्ख्येयभागस्येतरेतरापेक्षयाऽसङ्ख्येयगुणत्वं न विरुध्यते ॥ २ ॥ अथ द्वीन्द्रियादीनामवगाहनामाह—विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियाणां यथाक्रमं शरीरमानं द्वादश योजनानि त्रयः क्रोशाः चत्वारः क्रोशाः, इयमत्र भावना—द्वीन्द्रियाणां शङ्खादीनामुत्कर्पतो देहमानं द्वादश योजनानि त्रीन्द्रियाणां कर्णश्रृगालीमत्कोटकादीनां त्रीणि गव्यूतानि चतुरिन्द्रियाणां भ्रमरादीनामेकं योजनं शेषाणां पृथिव्यप्तेजोवायूनां साधारणवनस्पतीनां संमूर्छिममनुष्याणां सर्वेषामपि चापर्याप्तजीवानामुत्कर्पतोऽवगाहना—देहमानमङ्गुलासङ्ख्येयो भागः ॥ ३ ॥ अथ तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च देहमानमाह—गर्भजचतुष्पदानां—हस्त्यादीनामुत्कृष्टं देहमानं षड्गव्यूतानि भुजगेषु गर्भजेषु—गोधानकुलादिषु गव्यूतपृथक्त्वं, पृथक्त्वं च द्विप्रभृत्यानवभ्यः, पक्षिषु—गृध्रादिषु 'व्याख्यानतो विशेषप्रतिपत्तेः' गर्भजेषु संमूर्छिमेषु च धनुःपृथक्त्वं, मनुष्येषु च गर्भजेषु त्रीणि गव्यूतानि, 'मणुएसु य'त्ति चकारोऽनुक्तसमुच्चये, ततः संमूर्छिमचतुष्पदानां गवादीनामुत्कर्पतो देहमानं गव्यूतपृथक्त्वम्, संमूर्छिमभुजगानां धनुष्पृथक्त्वं, संमूर्छिमोरगाणां च योजनपृथक्त्वं, एतच्च प्रज्ञापनावगाहनासंस्थानपदोक्तानुसारेणास्माभिरभिहितमिति, इदं चोत्कर्षतः सर्वमपि देहमानं, जघन्यतस्तु सर्वेपामपि जीवानामङ्गुलस्यासङ्ख्याततमो भागः, स चोपपातसमये बोद्धव्यः १८७ ॥ ४ ॥ सम्प्रति 'इंदियसरूवविसओ य एएसिं'ति अष्टाशीत्यधिकशततमं द्वारमाह—

**कायंबपुप्फगोलय १ मसूर २ अइमुत्तयस्स कुसुमं च ३ । सोयं १ चक्खू २ घाणं ३ खुरप्पपरिसंठिअं रसणं ४ ॥ ५ ॥ नाणागारं फासिंदियं तु बाहल्लओ य सव्वाइं । अंगुलअसंखभागं**

एमेव पुहुत्तओ नवरं ॥ ६ ॥ अंगुलपुहुत्त रसणं फरिसं तु सरीरवित्थडं भणियं । बारसहिं जोयणेहिं सोयं परिगिण्हए सद्दं ॥ ७ ॥ रूवं गिण्हइ चक्खू जोयणलक्खाओ साइरेगाओ । गंधं रसं च फासं जोयणनवगाउ सेसाणि ॥ ८ ॥ अंगुलअसंखभागा मुणंति विसयं जहन्नओ मोत्तुं । चक्खुं तं पुण जाणइ अंगुलसंखिज्जभागाओ ॥ ९ ॥

इन्दनादिन्द्रः—आत्मा सर्वद्रव्योपलब्धिरूपपरमैश्वर्ययोगात् तस्य लिङ्गं—चिह्नमविनाभावि इन्द्रियं, तद् द्विधा—द्रव्येन्द्रियं भावेन्द्रियं च, तत्र द्रव्येन्द्रियं द्विधा—निर्वृत्तिरूपमुपकरणरूपं च, निर्वृत्तिर्नाम प्रतिविशिष्टसंस्थानविशेषः, साऽपि द्विधा—बाह्या आभ्यन्तरा च, तत्र बाह्या कर्णकर्पटिकादिरूपा, सा च विचित्रा न प्रतिनियतरूपतया व्यपदेष्टुं शक्यते, तथाहि—मनुष्यस्य श्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी भ्रुवां चोपरितने श्रवणबन्धापेक्षया समे वाजिनो नेत्रयोरुपरि तीक्ष्णे चाग्रभागे इत्यादिजातिभेदान्नानाविधा, आभ्यन्तरा तु निर्वृत्तिः सर्वेषामपि जन्तूनां समाना, तामेव चाधिकृत्य प्रस्तुतसूत्रोक्तं संस्थानमवसेयं, केवलं स्पर्शनेन्द्रियनिर्वृत्तेः प्रायो न बाह्याभ्यन्तरभेदः, तत्त्वार्थमूलटीकायां तथाऽभिधानात्, उपकरणं—खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिकाऽभ्यन्तरा निर्वृत्तिः तस्याः शक्तिविशेषः, इदं चोपकरणरूपं द्रव्येन्द्रियमन्तर्निर्वृत्तेः कथञ्चिदर्थान्तरं, शक्तिशक्तिमतोः कथञ्चिद्भेदात्, कथञ्चिद्भेदश्च सत्यामपि तस्यामन्तर्निर्वृत्तौ द्रव्यादिनोपकरणस्य विघातसम्भवात्, तथाहि—सत्यामपि कदम्बपुष्पाद्याकृतिरूपायामन्तर्निर्वृत्तावतिकठोरतरघनगर्जितादिना शक्त्युपघाते सति न परिच्छेत्तुमीशते जन्तवः शब्दादिकमिति, भावेन्द्रियमपि द्विधा—लब्धिरुपयोगश्च, तत्र लब्धिः—श्रोत्रेन्द्रियादिविषयः सर्वात्मप्रदेशानां तदावरणकर्मक्षयोपशमः, उपयोगः—स्वस्वविषये लब्धिरूपेन्द्रियानुसारेणात्मनो व्यापारप्रणिधान-

मिति, तच्च पञ्चधा—श्रोत्रादिभेदात्, तत्र श्रोत्रमाभ्यन्तरीं निर्वृत्तिमधिकृत्य कदम्बपुष्पाकारं मांसगोलकरूपं चक्षुः किञ्चित्समुन्नतमध्यपरिमण्डलाकारमसूराख्यधान्यविशेषसदृशं घ्राणमतिमुक्तककुसुमदलचन्द्रकवत् किञ्चिद् वृत्ताकारमध्यविततं प्रदीर्घत्र्यस्रसंस्थितं कर्णाटकायुधं क्षुरप्रस्तत्परिसंस्थितं—तदाकारं रसनेन्द्रियमिति ॥ ५ ॥ तथा—'नाणे'त्यादि, स्पर्शनेन्द्रियं पुनर्नानाकारं—अनेकसंस्थानसंस्थितं, शरीरस्यासङ्ख्येयभेदत्वात्, तथा बाहल्यतः सर्वाण्यपीन्द्रियाण्यङ्गुलस्यासङ्ख्येयो भागः। ननु यदि स्पर्शनेन्द्रियस्याप्यङ्गुलासङ्ख्येयभागो बाहल्यं ततः कथं खड्गाद्यभिघाते अन्तः शरीरस्य वेदनानुभवः?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, त्वगिन्द्रियस्य हि विषयः शीतादयः स्पर्शाः, यथा चक्षुषो रूपं, न च खड्गाद्यभिघाते अन्तः शरीरस्य शीतादिस्पर्शने वेदनमस्तीति, किन्तु केवलं दुःखवेदनं, तच्चात्मा सकलेनापि शरीरेणानुभवति, न केवलेन त्वगिन्द्रियेण, ज्वरादिवेदनावत्, ततो न कश्चिद्दोषः, अथ शीतलपानकादिपाने अन्तः शीतस्पर्शवेदनाऽप्यनुभूयते, ततः कथं सा घटते?, उच्यते, इह त्वगिन्द्रियं सर्वत्रापि प्रदेशपर्यन्तवर्ति विद्यते, तथा पूर्वसूरिभिर्व्याख्यानात्, तथा च प्रज्ञापनामूलटीका—"सर्वप्रदेशपर्यन्तवर्तित्वात्त्वचोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगस्त्येवे"ति, ततोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यते अन्तरपि शीतस्पर्शवेदनानुभवः, तथा एवमेव—अङ्गुलासङ्ख्येयभागप्रमाणान्येव पृथुत्वतो—विस्तरतोऽपीन्द्रियाणि भवन्ति ॥ ६ ॥ नवरं रसनस्पर्शनयोर्विशेषः, तमेवाह—'अंगुले'त्यादि गाथापूर्वार्धं, अङ्गुलपृथक्त्वविस्तारं रसनेन्द्रियं, स्पर्शनं पुनः शरीरविस्तृतं भणितं, यस्य जीवस्य यावन्मानं शरीरं स्पर्शनमपि तस्य विस्तरतस्तावत्प्रमाणमित्यर्थः ॥ अथेन्द्रियविषयमानमाह—'बारे'त्यादि सार्धा गाथा, द्वादशभ्यो योजनेभ्य आगतं घनगर्जितादिशब्दमुत्कृष्टतो गृह्णाति श्रोत्रं, न परतः, परत आगताः खलु ते शब्दपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रविज्ञानं नोत्पादयितुमीशाः, श्रोत्रेन्द्रियस्य च तथाविध-

मत्यद्भुतं वलं न विद्यते येन परतोऽप्यागतं शब्दं शृणुयादिति, तथा चक्षुरिन्द्रियमुत्कर्षतः सातिरेकाद्योजनलक्षादारभ्य कटकुट्यादिभिरव्यवहितं रूपं गृह्णाति—परिच्छिनत्ति, परतोऽव्यवहितस्यापि परिच्छेदे चक्षुषः शक्त्यभावात्, एतच्चाभासुरद्रव्यमधिकृत्योच्यते, भासुरं तु द्रव्यमधिकृत्य प्रमाणाङ्गुलनिष्पन्नेभ्य एकविंशतियोजनलक्षेभ्योऽपि परतः पश्यन्ति, यथा पुष्करवरद्वीपार्धे मानुषोत्तरनगनिकटवर्तिनो नराः कर्कसंक्रान्तौ सूर्यबिम्बं, उक्तं च—"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं । तह पंच सया भणिया सत्ततीसाएँ अइरित्ता ॥ १ ॥ इइ नयणविसयमाणं पुक्खरदीवड्ढवासिमणुयाणं । पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं ॥ २ ॥" तथा शेषाणि—घ्राणरसनस्पर्शनेन्द्रियाणि क्रमेण गन्धं रसं स्पर्शं च प्रत्येकमुत्कर्षतो नवभ्यो योजनेभ्य आगतं गृह्णन्ति, न परतः, परत आगतानां मन्दपरिणामत्वभावात् घ्राणादीन्द्रियाणां च तथारूपाणामपि तेषां परिच्छेदं कर्तुमशक्तत्वात् ॥ ७ ॥ ८ ॥ अथ जघन्यं विषयमानमाह—'अंगुले'त्यादि, चक्षुरिन्द्रियं मुक्त्वा शेषाणि चत्वारि श्रोत्रादीनि जघन्यतोऽङ्गुलासङ्ख्येयभागादागतं स्वस्वविषयं शब्दादिकं जानन्ति, प्राप्तार्थपरिच्छेदकत्वात्, चक्षुः पुनरप्राप्तकारित्वाज्जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रव्यवस्थितं पश्यति, न तु ततोऽप्यर्वाक्तरमिति, प्रतिप्राणि प्रतीतश्चायमर्थः, तथा च नातिसन्निकृष्टमञ्जनरजोमलादिकं चक्षुः पश्यतीति, इह च पृथुत्वपरिमाणं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणां चतुर्णामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यं, स्पर्शनेन्द्रियस्य तूत्सेधाङ्गुलेन, विषयपरिमाणं पुनः सर्वेषामप्यात्माङ्गुलेनैव, अत्र चोभयत्राप्युपपत्तिः सविस्तरतरा भाष्यादवसातव्या १८८ ॥ ९ ॥ इदानीं 'लेसाउ'त्ति एकोननवत्यधिकशततमं द्वारमाह—

**पुढवीआउवणस्सइबायरपत्तेसु लेस चत्तारि । गब्भे तिरियनरेसुं छल्लेसा तिन्नि सेसाणं ॥ १० ॥**

बादरशब्दः प्रत्येकमभिसम्बध्यते, प्रत्येकवनस्पतीनां च स्वरूपोपदर्शनार्थमेव व्यभिचाराभावात्, पर्याप्त इति विशेषणं च सामर्थ्याद्

द्रष्टव्यं, अन्यथा तेजोलेश्याया अयोगात्, ततो बादरपर्याप्तेषु पृथिवीकायिकेष्वप्कायिकेषु प्रत्येकवनस्पतिषु चाद्याश्चतस्रः कृष्णनीलकापोततेजोरूपा लेश्या भवन्ति, तेजोलेश्या कथमवाप्यते इति चेद्, उच्यते, ईशानान्तदेवानामेतेषूत्पादात्कियन्तमपि कालं तेजोलेश्यापि सम्भवति, यल्लेश्या हि जन्तवो म्रियन्ते परभवेऽपि तल्लेश्या एवोत्पद्यन्ते, न पुनः पाश्चात्यभवान्त्यसमयेऽन्यो लेश्यापरिणामोऽन्यश्चागामिकभवाद्यसमये, यदागमः—"जल्लेसाइं दव्वाइं आइत्ता कालं करेइ तल्लेसेसु उववज्जइ"त्ति, [ यल्लेश्यानि द्रव्याणि आदाय कालं करोति तल्लेश्येषूत्पद्यते ] केवलं तिर्यङ्नरा आगामिभवसम्बन्धिलेश्याया अन्तर्मुहूर्तेऽतिक्रान्ते सुरनारकास्तु स्वस्वभवसम्बन्धिलेश्याया अन्तर्मूहूर्ते शेषे सति परभवमासादयन्ति, गर्भजतिर्यङ्मनुष्येषु षडपि लेश्याः तेषामनवस्थितलेश्याकत्वात्, तथाहि—तिरश्चां पृथिवीकायिकादीनां नराणां सम्मूर्छिमगर्भजानां शुक्ललेश्यावर्जा याः काश्चिल्लेश्याः सम्भवन्ति ताः प्रत्येकं जघन्यत उत्कर्षतश्चान्तर्मुहूर्तस्थितयः, शुक्ललेश्या तु जघन्यतोऽन्तर्मुहूर्तावस्थाना उत्कर्षतः किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणेति, इयं चोत्कृष्टा स्थितिः पूर्वकोटेरूर्द्ध्वं संयमावाप्तेरभावात् पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्द्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया, अन्येषां तूत्कर्षतोऽप्यन्तर्मुहूर्तावस्थानैवेति, शेषाणां—तेजोवायूनां सूक्ष्मपृथिव्यम्बूवनस्पतीनां साधारणानामपर्याप्तबादरपृथिव्यम्बुप्रत्येकवनस्पतीनां द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमपञ्चेन्द्रियतिर्यङ्नराणां च तिस्रः—कृष्णनीलकापोतनामानो लेश्या भवन्तीति १८९॥ १०॥ इदानीं 'एयाण जत्थ गइ'त्ति नवत्यधिकशततमं द्वारमाह—

**एगेंदियजीवा जंति नरतिरिच्छेसु जुयलवज्जेसुं। अमणातिरियावि एवं नरयंमिवि जंति ते पढमे ॥ ११ ॥ तह संमुच्छिमतिरिया भवणाहिववंतरेसु गच्छंति। जं तेसिं उववाओ पलियासंखेज्जआऊसुं ॥ १२ ॥ पंचिंदियतिरियाणं उववाउक्कोसओ सहस्सारे। नरएसु समग्गेसुवि वियला**

अजुयलतिरिनरेसु ॥ १३ ॥ नरतिरिअसंखजीवी जोइसवज्जेसु जंति देवेसु । नियआउयसम-
हीणाउएसु ईसाणअंतेसु ॥ १४ ॥ उववाओ तावसाणं उक्कोसेणं तु जाव जोइसिया । जावंति
बंभलोगो चरगपरिव्वायउववाओ ॥ १५ ॥ जिणवयउक्किट्ठतवकिरियाहिं अभवभव्वजीवाणं ।
गेविज्जेसुक्कोसा गई जहन्ना भवणवईसु ॥ १६ ॥ छउमत्थसंजयाणं उववाउक्कोसओ अ सव्वट्ठे ।
उववाओ सावयाणं उक्कोसेणऽच्चुओ जाव ॥ १७ ॥ उववाओ लंतगंमि चउदसपुव्विस्स होइ उ
जहन्नो । उक्कोसो सव्वट्ठे सिद्धिगमो वा अकम्मस्स ॥ १८ ॥ अविराहियसामन्नस्स साहुणो साव-
यस्सऽवि जहन्नो । सोहम्मे उववाओ वयभंगे वणयराईसुं ॥ १९ ॥ सेसाण तावसाईण जहन्नओ
वंतरेसु उववाओ । भणिओ जिणेहिं सो पुण नियकिरियठियाण विन्नेओ ॥ २० ॥

इह 'एगेंदियजीव'त्ति सामान्योक्तावपि न तेजोवायवो गृह्यन्ते, तेषां मनुष्येष्वेवानुत्पादात्, उक्तं च—'सत्तममहिनेरइया तेऊ वाऊ अणंतरुव्वट्टा । नवि पावे माणुस्सं तहा असंखाउया सव्वे ॥१॥' [ सप्तममहीनैरयिकास्तेजोवायू अनन्तरोद्वृत्ताः । नैव प्राप्नुवन्ति मानुष्यं तथाऽसंख्यायुषः सर्वे ॥ १ ॥ ] तत एकेन्द्रियजीवाः—पृथिव्यम्बुवनस्पतयो युगलवर्जेषु—युगलधार्मिकवर्जितेषु सङ्ख्यातायुष्केष्वित्यर्थः नरेषु तिर्यक्षु च यान्ति—उत्पद्यन्ते, न देवनारकासङ्ख्येयवर्षायुस्तिर्यग्नरेष्विति भावः, तथाऽमनस्कतिर्यञ्चोऽपि—असंज्ञिपञ्चेन्द्रियतिर्यञ्चोऽप्येवं—पूर्ववत्, सङ्ख्येयायुष्केषु नरतिर्यक्षु समुत्पद्यन्त इति भावः, नरकेऽपि च प्रथमे ते गच्छन्ति, इदमुक्तं भवति—असंज्ञिपञ्चेन्द्रियतिर्यञ्चश्च चतसृष्वपि गतिषूत्पद्यन्ते, केवलं नरकदेवगत्योरुत्पद्यमानानाममीषां विशेषः, तत्र नरकगतौ प्रथमपृथिव्यामेव, न शेषासु, तत्रा-

प्युत्कृष्टतोऽपि पल्योपमासङ्ख्येयभागायुष्केष्वेव जायन्ते, नाधिकायुष्केष्विति ॥ ११ ॥ देवगतौ पुनरुत्पद्यमानानां विशेषमाह——'तहे'-त्यादिगाथानवकं, तथा संमूर्छिमतिर्यञ्चो देवेपूत्पद्यमाना भवनपतिव्यन्तरेष्वेव जायन्ते, न ज्योतिष्कादिषु, यस्मात्तेषां—सम्मूर्छिमतिरश्चां देवेषु पल्योपमासङ्ख्यातभागमात्रायुष्केष्वेवोपपातो, नाधिकस्थितिष्विति ॥ १२ ॥ पञ्चेन्द्रियतिरश्चामुत्कर्षत उपपातः सहस्रारं यावद्भवति, नरकेष्वपि समग्रेपु—सर्वास्वपि नरकपृथिवीषु, इदमत्र तात्पर्यं—सङ्ख्यातायुष्कसंज्ञितिर्यक्पञ्चेन्द्रियाश्चतसृष्वपि गतिपूत्पद्यन्ते, केवलं देवगतौ सहस्रारकल्पमेव यावदुत्पद्यन्ते, न तु परत आनतादिषु, तथाविधयोग्यताऽभावादिति, तथा विकला—द्वित्रिचतुरिन्द्रिया युगलवर्जेषु तिर्यक्षु मनुष्येषु चोत्पद्यन्ते, न देवनारकेषु ॥ १३ ॥ असङ्ख्यजीविनः—असङ्ख्यवर्षायुषो नरास्तिर्यञ्चश्च ज्योतिष्कवर्जितेषु देवेषु यान्ति, देवगतिं विमुच्य शेषे गतित्रये मोक्षे च नैव ते गच्छन्तीत्यर्थः, इह च यद्यपि सामान्येनासङ्ख्येयवर्षायुष्का नरतिर्यञ्चो भणितास्तथापि 'सूचकत्वात् सूत्रस्य' विशिष्टा एव खेचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च वेदितव्याः, तथाहि—असङ्ख्येयवर्षायुषो देवेपूत्पद्यमाना निजायुषः समस्थितिषु हीनस्थितिषु चोत्पद्यन्ते, नाधिकस्थितिषु, ततः पल्योपमासङ्ख्येयभागमात्रेणासङ्ख्येयवर्षायुषः खेचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च ज्योतिष्कवर्जेषु, उपलक्षणमेतत्, ज्योतिष्कसौधर्मेशानवर्जेपूत्पद्यन्ते, न ज्योतिष्कादिष्वपि, अधिकस्थितिपूत्पादाभावात्, ज्योतिष्केषु हि जघन्यतोऽपि पल्योपमाष्टमभागः सौधर्मेशानयोश्च पल्योपमं स्थितिरिति, शेषास्त्वसङ्ख्येयवर्षायुषो हैमवतादिक्षेत्रभाविनस्तथा सुषमसुषमादिषु त्रिष्वरकेषु भरतैरवतभाविनश्च तिर्यग्मनुष्या निजायुषः समहीनायुष्केषु सर्वेष्वपीशानान्तेषु गच्छन्ति, तत ऊर्द्ध्वं तु सर्वथा निषेधः, यत ईशानादूर्द्ध्वं सनत्कुमारादिषु जघन्यतोऽपि सागरोपमद्वयादिकैव स्थितिः, असङ्ख्यातवर्षायुषां तिर्यङ्मनुष्याणां पुनरुत्कर्षतोऽपि त्रीण्येव पल्योपमानीति ॥ १४ ॥ तापसा—वनवासिनो मूलकन्दफलाहारा बालतप-

स्विनः तेषामुपपात उत्कर्षतो भवति यावज्ज्योतिष्काः, तत ऊर्द्ध्वं नोत्पद्यन्त इति भावः, तथा चरकपरिव्राजका—धाटिभैक्षोपजीविनस्त्रिदण्डिनः अथवा चरकाः—कच्छोटकादयः परिव्राजकाः—कपिलमुनिसूनवः चरकाश्च परिव्राजकाश्च तेषामुत्कर्षत उपपातो यावद्ब्रह्मलोकः ॥ १५ ॥ जिनोक्तानि यानि व्रतानि—प्राणातिपातविरमणादीनि यथोत्कृष्टं—विशिष्टमष्टमादितपो याश्च क्रियाः—प्रतिदिनानुष्ठेयप्रत्युपेक्षणादिकाः एतैः सर्वैरपि भव्यानामभव्यानां च मिथ्यादृशां जीवानां देवेषूत्पद्यमानानामुत्कृष्टा गतिर्ग्रैवेयकेषु, इयमत्र भावना—ये किल भव्या अभव्या वा सम्यक्त्वविकलाः सन्तः श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणश्च तेऽपि केवलक्रियाकलापप्रभावत उपरितनग्रैवेयकान् यावदुत्पद्यन्ते एव, असंयताश्चैते, सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वादिति, जघन्या तु गतिर्भवनपतिषु, एतच्च देवेषूत्पादापेक्षया द्रष्टव्यं, (ग्रन्थाग्रं ८००) अन्यथा देवत्वादन्यत्रापि यथाध्यवसायमुत्पादो भवतीति ॥ १६ ॥ छाद्यते—आव्रियते यथाऽवस्थितमात्मनः स्वरूपं येन तच्छद्म—ज्ञानावरणीयादिकर्म तस्मिन् तिष्ठन्तीति छद्मस्थाः ते च ते संयताश्च छद्मस्थसंयताः तेषामुत्कर्षत उपपातः सर्वार्थसिद्धे महाविमाने, श्रावकाणां—देशविरतिमनुष्याणां पुनरुपपात उत्कर्षतोऽच्युतं—द्वादशदेवलोकं यावदिति ॥ १७ ॥ उपपातो लान्तके—षष्ठदेवलोके चतुर्दशपूर्वधरस्य जघन्यतो भवति, उत्कृष्टतस्तु सर्वार्थसिद्धे, अकर्मकस्य—क्षीणाष्टकर्मणः पुनश्चतुर्दशपूर्विणः उपलक्षणत्वादन्येषां मनुष्याणां क्षीणकर्मणां सिद्धिगमो—मोक्षावाप्तिर्भवतीति ॥ १८ ॥ साधोः प्रव्रज्याकालादारभ्याविराधितश्रामण्यस्य—अखण्डितसर्वविरतिरूपचारित्रस्य, श्रावकस्य चाविराधितश्रामण्यस्य—अखण्डितयथागृहीतदेशचारित्रस्य जघन्यत उपपातः सौधर्मे—प्रथमदेवलोके, केवलं तत्रापि साधोर्जघन्या स्थितिः पल्योपमपृथक्त्वं श्रावकस्य तु पल्योपममिति, तथा साधूनां श्रावकाणां च निजनिजव्रतभङ्गे जघन्यत उपपातो वनचरादिषु, वनचरा—व्यन्तरास्तेषामादयः—प्रथमाः, भवनपतिव्यन्तरादिक्रमेणागमे

देवानां प्रसिद्धत्वात् भवनपतय इत्यर्थः तेपु, तथा चोक्तं प्रज्ञापनायां—"विराहियसंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं सोहम्मे कप्पे" तथा "विराहियसंजमासंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं जोइसिएसु"त्ति अत्र च 'विराधितसंयमानां' विराधितः—सर्वात्मना खण्डितो न पुनः प्रायश्चित्तप्रतिपत्त्या भूयः संधितः संयमः संयमासंयमश्च यैस्ते तथा तेषां ॥ १९ ॥ शेषाणां तापसादीनां—तापसचरकपरिव्राजकादीनां जघन्यत उपपातो जिनैः—तीर्थकरैर्भणितो व्यन्तरेपु, प्रज्ञापनायां तु तापसादीनां 'जहन्नेणं भवणवासीसु' इत्युक्तं, स पुनरुपपातविधिर्निजक्रियास्थितानां—निजनिजागमोक्तानुष्ठाननिरतानां, न स्वाचारहीनानामिति १९० ॥ २० ॥ इदानीं 'एएसिं जत्तो आगइ'त्ति एकनवत्यधिकशततमं द्वारमाह—

**नेरइयजुयलवज्जा एगिंदिसु इंति अवरगइजीवा । विगलत्तेणं पुण ते हवंति अनिरय अमरजुयला ॥ २१ ॥ हुंति हु अमणातिरिच्छा नरतिरिया जुयलधम्मिए मोत्तुं । गब्भचउप्पयभावं पावंति अजुयलचउगइया ॥ २२ ॥ नेरइया अमरावि य तेरिच्छा माणवा य जायंति । मणुयत्तेणं वज्जित्तु जुयलधम्मियनरतिरिच्छे ॥ २३ ॥**

'नेरइये'त्यादिगाथात्रयं, नैरयिकयुगलधार्मिकवर्जिता अपरगतिजीवाः सङ्ख्यातवर्षायुपः एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्नराः सनत्कुमारादिदेवानामेकेन्द्रियेष्वनुत्पादात् भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाश्च एकेन्द्रियेपु—पृथिव्यादिष्वागच्छन्ति, केवलं तथाभवस्वाभाव्याद्देवास्तेजोवायुवर्जितेपु पर्याप्तबादरेपु समायान्तीत्यवसेयं, तथा नैरयिकदेवयुगलधार्मिकवर्जितास्ते—तिर्यङ्नरजीवा विकलेन्द्रियत्वेन—द्वित्रिचतुरिन्द्रियत्वेन भवन्ति, द्वित्रिचतुरिन्द्रियेष्वागच्छन्तीति भावः ॥ २१ ॥ युगलधार्मिकांस्तिरश्चो नरांश्च वर्जयित्वा शेषा नरा-

स्तिर्यञ्चश्च भवन्त्यमनस्कतिर्यञ्चः, उपलक्षणत्वादमनस्का मनुजाश्च, इदमुक्तं भवति—सङ्ख्यातवर्षायुष्कनरतिर्यञ्च एवासंज्ञिपञ्चेन्द्रियतिर्यक्नरेषूत्पद्यन्ते, न देवनारका इति, तथा युगलधार्मिकनरतिर्यग्वर्जिताश्चतुर्गतिका अपि जीवा गर्भजचतुष्पदभावं प्राप्नुवन्ति, केवलं देवाः सहस्रारादर्वाग् द्रष्टव्याः, आनतादिदेवानां मनुष्येष्वेवोत्पादात्, एवं शेषाणामपि गर्भजतिर्यक्पञ्चेन्द्रियाणां द्रष्टव्यं, जीवाभिगमादौ चतुर्गतिकजीवानां जलचरादिषूत्पादस्योक्तत्वात् ॥ २२ ॥ नैरयिका अमराश्च तथा युगलधार्मिकनरतिर्यग्वर्जितास्तिर्यञ्चो मनुष्याश्च मनुजत्वेन—गर्भजमनुष्यत्वेनोत्पद्यन्ते १९१ ॥ २३ ॥ सम्प्रति 'उप्पत्तिमरणविरहो जायंतमरंतसंखा उ'त्ति द्विनवतित्रिनवत्यधिकशततमं द्वारयुग्ममाह—

भिन्नमुहुत्तो विगलेंदियाण संमुच्छिमाण य तहेव । बारस मुहुत्त गब्भे सव्वेसु जहन्नओ समओ
॥ २४ ॥ उव्वट्टणावि एवं संखा समएण सुरवरु तुल्ला । नरतिरियसंख सव्वेसु जंति सुरनारया गब्भे
॥ २५ ॥ बारस मुहुत्त गब्भे मुहुत्त सम्मुच्छिमेसु चउवीसं । उक्कोसविरहकालो दोसुवि य जहन्नओ समओ ॥ २६ ॥ एमेव य उव्वट्टणसंखा समएण सुरवरतुल्ला । मणुएसुं उववज्जेऽसंखाउय मोत्तु सेसाओ ॥ २७ ॥

'भिन्ने'त्यादिगाथाचतुष्कं, विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमाणां च—असंज्ञिपञ्चेन्द्रियाणां तिरश्चां प्रत्येकं भिन्नः—खण्डो मुहूर्तोऽन्तर्मुहूर्तमित्यर्थः, उत्कृष्ट उपपातविरहकालः, तथा 'गब्भे'त्ति गर्भजपञ्चेन्द्रियतिरश्चामुत्कृष्ट उपपातविरहकालो द्वादश मुहूर्ताः, जघन्यतः पुनः सर्वेष्वपि विकलेन्द्रियादिषूपपातविरहकाल एकसमयः ॥ २४ ॥ विकलेन्द्रियाणां सम्मूर्छजानां गर्भव्यु-

क्रान्तानां च पञ्चेन्द्रियतिरश्चां उपपातविरहकालसमतया उद्वर्तनापि—उद्वर्तनाविरहकालोऽपि वक्तव्यः, तथा एतेषामेव द्वीन्द्रियादीनामेकेन समयेन—एकस्मिन् समये उपपाते उद्वर्तनायां च सङ्ख्या सुरवरैस्तुल्या भणनीया, सा चैवं—'एगो व दो व तिन्नि व संखमसंखा य एगसमएणं । उववज्जन्तेवइया उव्वट्टंतावि एमेव ॥ १ ॥' तथा नरास्तिर्यञ्चश्च सङ्ख्यातवर्षायुषः सर्वेष्वपि स्थानेषु यान्ति, चतसृष्वपि गतिषूत्पद्यन्ते इति भावः, 'सुरनारया गब्भे'त्ति सूत्रस्य सूचामात्रपरत्वात् सुरा नारकाश्च गर्भजपर्याप्तसङ्ख्यातवर्षायुष्कतिर्यङ्मनुष्येषु गच्छन्ति, नान्यत्र, नवरं सुरा एकेन्द्रियेष्वपि, उक्तं च—'बायरपज्जत्तेसुं सुराण भूदगवणेसु उप्पत्ती । ईसाणंताणं चिय तत्थवि न उ उड्डगाणंपि ॥ १ ॥' ॥ २५ ॥ उक्तस्तिरश्चामुपपातच्यवनयोर्विरहकाल एकसमयसङ्ख्या च प्रसङ्गतः सामान्येन गतिद्वारं च, अथ मनुष्याणामेतदेवाह—'बारसे'त्यादि, गर्भजेषु मनुष्येषु उत्कर्षत उपपातविरहकालो द्वादश मुहूर्ताः, संमूर्च्छिममनुष्येषु चतुर्विंशतिर्मुहूर्ताः, जघन्यतस्तूभयत्राप्येकः समयः, तथा उद्वर्त्तनाऽपि—उद्वर्तनाविरहकालोऽप्येवमेव—उपपातविरहकालवद्वेदितव्यः, सङ्ख्या पुनरेकस्मिन् समये उत्पद्यमानानामुद्वर्तमानानां च नराणां सुरवरैस्तुल्या, सा चैवं—'एगो व दो व तिन्नि व संखमसंखा उ एगसमएणं । उववज्जंतेवइया उव्वट्टंतावि एमेव ॥ १ ॥' इति, नवरमसङ्ख्यातत्वं सामान्यतो गर्भजसम्मूर्छिमसङ्ग्रहापेक्षया द्रष्टव्यं, तथा असङ्ख्यातवर्षायुषो नरतिरश्चः उपलक्षणत्वात् सप्तमपृथिवीनारकतेजोवायूंश्च मुक्त्वा शेषाः सर्वेऽपि सुरनरतिर्यङ्नारका मनुष्येषूत्पद्यंत इति । १९२–१९३ ॥ २६ ॥ ॥ २७ ॥ सम्प्रति 'भवणवइवाणमन्तरजोइसियविमाणवासिदेवाण ठिइ'त्ति चतुर्नवत्यधिकशततमं द्वारमाह—

**भवणवइवाणमंतरजोइसियविमाणवासिणो देवा । दस १ अट्ठ २ पंच ३ छवीस ४ संखजुत्ता कमेण इमे ॥ २८ ॥ असुरा १ नागा २ विज्जू ३ सुवन्न ४ अग्गी ५ य वाउ ६ थणिया ७ य । उदही**

८ दीव ९ दिसाविय १० दस भेया भवणवासीणं ॥ २९ ॥ पिसाय १ भूया २ जक्खा ३ य रक्खसा ४ किन्नरा ५ य किंपुरिसा ६। महोरगा ७ य गंधव्वा ८ अट्ठविहा वाणमंतरिया ॥ ३० ॥ अणपन्निय १ पणपन्निय २ इसिवाइय ३ भूयवाइए ४ चेव। कंदिय ५ तह महकंदिय ६ कोहंडे ७ चेव पयगे ८ य ॥ ३१ ॥ इय पढमजोयणसए रयणाए अट्ठ वंतरा अवरे। तेसु इह सोलसिंदा रुयगअहो दाहिणुत्तरओ ॥ ३२ ॥ चंदा १ सूरा २ य गहा ३ नक्खत्ता ४ तारया ५ य पंच इमे। एगे चलजोइसिया घंटायारा थिरा अवरे ॥ ३३ ॥ सोहंमी १ साण २ सणंकुमार ३ माहिंद ४ बंभलोयमिहा ५। लंतय ६ सुक्क ७ सहस्सार ८ आणय ९ प्पाणया १० कप्पा ॥ ३४ ॥ तह आरण ११ अच्चुया १२ विहु इण्हिं गेविज्जवरविमाणाइं। पढमं सुदरिसणं १३ तह बिईयं सुप्पबुद्धंति १४ ॥ ३५ ॥ तइयं मणोरमं १५ तह विसालनामं १६ च सव्वओभद्दं १७। सोमणसं १८ सोमाणस १९ महपीइकरं च २० आइच्चं २१ ॥ ३६ ॥ विजयं च २२ वेजयंतं २३ जयंत २४ मपराजियं २५ च सव्वट्ठं २६। एयमणुत्तरपणगं एएसिं चउव्विहसुराणं ॥ ३७ ॥ चमरबलि सारमहियं सेसाण सुराण आउयं वोच्छं। दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं ॥ ३८ ॥ अच्छुट्ठ अद्धपंचमपलिओवम असुरजुयलदेवीणं। सेसवणदेवयाण य देसूणद्धपलियमुक्कोसं ॥ ३९ ॥ दस भवणवणयराणं वाससहस्सा ठिई जहण्णेणं। पलिओवममुक्कोसं वंतरियाणं वियाणिज्जा ॥ ४० ॥

**पलियं सवरिसलक्खं ससीण पलियं रवीण सयसहस्सं। गहणक्खत्तताराण पलियमद्धं चउब्भागो ॥ ४१ ॥ तद्देवीणवि तट्ठिइअद्धं अहियं तमंतदेविदुगे। पाओ जहन्नमट्ठसु तारयतारीणमट्ठंसो ॥ ४२ ॥ दो साहि सत्त साहिय दस चउदस सत्तरेव अयराइं। सोहम्मा जा सुक्को तदुवरि एक्केक्कमारोवे ॥ ४३ ॥ तेत्तीसऽयरुक्कोसा विजयाइसु ठिइ जहन्न इगतीसं। अजहन्नमणुक्कोसा सवट्ठे अयरं तेत्तीसं ॥ ४४ ॥पलियं अहियं सोहंमीसाणेसुं तओऽहकप्पठिई। उवरिल्लंमि जहन्ना कमेण जावेक्कतीसऽयरा ॥ ४५ ॥ सपरिग्गहेयराणं सोहंमीसाण पलियसाहीयं। उक्कोस सत्त वन्ना नव पणपन्ना य देवीणं ॥ ४६ ॥**

'भवणे'त्यादिगाथा एकोनविंशतिः, दीव्यन्तीति देवाः—प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषाः, ते च मूलभेदतस्तावच्चतुर्विधाः, तद्यथा—भवनपतयो व्यन्तरा ज्योतिष्का विमानवासिनश्च, तत्र भवनानां पतयः—तन्निवासित्वात्स्वामिनो भवनपतयः, तन्निवासित्वं च बाहुल्यतो नागकुमाराद्यपेक्षया द्रष्टव्यं, ते हि प्रायो भवनेषु वसन्ति कदाचिदावासेषु, असुरकुमारास्तु प्राचुर्येणावासेषु कदाचिद्भवनेषु, भवनानामावासानां चायं विशेषः—भवनानि बहिर्वृत्तान्यन्तः समचतुरस्राणि अधःकर्णिकासंस्थानानि, आवासास्तु कायमानस्थानीया महामण्डपा विचित्रमणिरत्नप्रभाभासितसकलदिक्चक्रा इति। तथा विविधमन्तरं—शैलान्तरं कन्दरान्तरं वनान्तरं वा आश्रयरूपं येषां ते वनान्तराः, यदिवा विगतमन्तरं—विशेषो मनुष्येभ्यो येषां ते व्यन्तराः, तथाहि—मनुष्यानपि चक्रवर्तिवासुदेवप्रभृतीन् भृत्यवदुपचरन्ति केचिद्व्यन्तरा इति मनुष्येभ्यो विगतान्तराः, प्राकृतत्वाच्च सूत्रे 'वाणमंतरा' इति पाठः, यद्वा 'वानमन्तरा' इति

पदसंस्कारः, तत्रापि वनानामन्तराणि वनान्तराणि तेषु भवा वानमन्तराः, पृषोदरादित्वादुभयपदान्तरालवर्ती मागमः, इदं तु व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तं तु सर्वत्रापि जातिभेद एवानुसर्तव्यः । तथा द्योतयन्ति—प्रकाशयन्ति जगदिति ज्योतींषि—विमानानि तेषु भवा ज्योतिष्काः । तथा विविधं मान्यन्ते—उपभुज्यन्ते पुण्यवद्भिर्जीवैरिति विमानानि तेषु वसन्तीत्येवंशीला विमानवासिनः । एते च भवनपत्यादयो देवाः 'क्रमेण' यथासङ्ख्यं दशाष्टपञ्चषड्विंशतिसङ्ख्यैर्भेदैर्युक्ता भवन्ति ॥ २८ ॥ सम्प्रत्येतानेव क्रमेण भेदानभिधित्सुः प्रथमं तावद्भवनपतिभेदानाह—'असुरे'त्यादि, भवनवासिनां अवान्तरजातिभेदमधिकृत्य दश भेदा भवन्ति, तद्यथा—'असुरा' इति पदैकदेशे पदसमुदायोपचारादसुरकुमाराः एवं नागकुमारा इत्याद्यपि परिभावनीयं, अथ कस्मादेते कुमारा इति व्यपदिश्यन्ते ?, उच्यते, कुमारवच्चेष्टनात्, तथाहि—सर्वे एवैते कुमारा इव शृङ्गाराभिप्रायकृतविशिष्टोत्तरोत्तररूपक्रियासमुद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहना अत्युल्बणरागाः क्रीडनपराश्च, ततः कुमारा इव कुमारा इति, गाथानुबन्धानुलोम्यादिकारणाच्च कुतश्चिदेते एवं पठिताः, प्रज्ञापनादौ त्वमुनैव क्रमेण पठ्यन्ते, तथाहि—"असुरा नाग सुवन्ना विज्जू अग्गी य दीव उदही य । दिसिपवणथणियनामा दसहा एए भवणवासी ॥ १ ॥" ॥ २९ ॥ व्यन्तरभेदानाह—'पिसाये'त्यादि, सुगमा ॥ ३० ॥ इहापरेऽप्यष्टौ व्यन्तरभेदाः सन्तीत्यतस्तानप्याह—'अणे'त्यादिगाथाद्वयं, अप्रज्ञप्तिकाः पञ्चप्रज्ञप्तिकाः ऋषिवादिताः भूतवादिताः क्रन्दिताः महाक्रन्दिताः कूष्माण्डाः पतङ्गाश्चेत्येवमपरे—पिशाचादिव्यतिरिक्ता अष्टौ व्यन्तरनिकायाः, रत्नप्रभायाः पृथिव्याः प्रथमे—उपरितने योजनशते भवन्ति, एतदुक्तं भवति—रत्नप्रभाया उपरितने रत्नकाण्डरूपे योजनसहस्रे अध उपरि च प्रत्येकं योजनशतरहिते पिशाचादयोऽष्टौ व्यन्तरनिकायाः सन्ति, तत्र च यदुपरि योजनशतं मुक्तं तत्राध उपरि च दशयोजनरहितेऽप्रज्ञप्तिकादयोऽष्टाविति, तेषु च—अप्रज्ञप्तिकादिष्वष्टसु व्यन्तरनिकायेषु रुचकस्याधस्ता-

दक्षिणत उत्तरतश्च द्वयोर्द्वयोरिन्द्रयोर्भावात् षोडश इन्द्रा भवन्ति, एवं पिशाचादिष्वप्यष्टसु षोडश भवनपतिषु च दशसु विंशतिः, अत एव विंशतिर्भवनपतीन्द्राणां द्वात्रिंशतो व्यन्तरेन्द्राणां असङ्ख्यातत्वेऽपि चन्द्रार्काणां जातिमात्राश्रयणाद् द्वयोश्चन्द्रसूर्ययोर्ज्योतिष्केन्द्रयोः दशानां च सौधर्मादिकल्पेन्द्राणां मीलने चतुःषष्टिरिन्द्रा इति ॥ ३१ ॥ ३२ ॥ ज्योतिष्कभेदानाह—'चंदे'त्यादि, चन्द्राः सूर्याः ग्रहाः नक्षत्राणि तारकाश्चेत्येवं पञ्च ज्योतिष्कभेदा भवन्ति, तत्र चैके—मनुष्यक्षेत्रवर्तिनो ज्योतिष्काश्चला—मेरोः प्रादक्षिण्येन सर्वकालं भ्रमणशीलाः अपरे पुनर्ये मानुषोत्तरपर्वतात्परेण स्वयंभूरमणसमुद्रं यावद्वर्तन्ते ते सर्वेऽपि स्थिराः—सदावस्थानस्वभावाः, अत एव घण्टाकारा अचलनधर्मकत्वेन घण्टावत् स्थानस्था एव तिष्ठन्तीत्यर्थः ॥ ३३ ॥ वैमानिकभेदानाह—'सोहंमी'त्यादिगाथाचतुष्कं, इह वैमानिका द्विविधाः—कल्पोपपन्नाः कल्पातीताश्च, तत्र कल्पः—आचारः, स चात्र इन्द्रसामानिकत्रायस्त्रिंशादिव्यवस्थारूपः तं प्रतिपन्नाः कल्पोपपन्नाः, ते च द्वादश, तद्यथा—सौधर्मदेवलोकनिवासिनः सौधर्माः ईशानदेवलोकनिवासिन ईशानाः एवं सर्वत्रापि भावनीयं, भवति च 'तात्स्थ्यात्तद्व्यपदेशो' यथा पञ्चालदेशनिवासिनः पाञ्चाला इति, यथोक्तरूपं कल्पमतीताः—अतिक्रान्ताः कल्पातीताः—ग्रैवेयका अनुत्तरविमानवासिनः, सर्वेषामपि तेषामहमिन्द्रत्वात्, तत्र लोकपुरुषस्य ग्रीवाप्रदेशे भवानि विमानानि ग्रैवेयकानि, तानि च नव, तद्यथा—सुदर्शनं १ सुप्रबुद्धं २ मनोरमं ३ विशालं ४ सर्वतोभद्रं ५ सुमनः ६ सौमनसं ७ प्रीतिंकरं ८ आदित्यं ९ चेति, तथा न विद्यन्ते उत्तराणि—प्रधानानि विमानानि येभ्यस्तान्यनुत्तराणि तानि च पञ्च, तद्यथा—विजयं वैजयन्तं जयन्तं अपराजितं सर्वार्थसिद्धं च, एतन्निवासिनो देवा एतन्नामानो द्रष्टव्याः, मिलिताश्च वैमानिकाः षड्विंशतिः। एतेषां मूलभेदापेक्षया चतुर्विधानां भवनपत्यादिदेवानां 'ठिइ'त्ति स्थितिरायुष्कलक्षणा प्रतिपाद्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ तामेवाह—'चमरे'त्यादि, इहासुरकुमारादयो दश भवनपतिनिकायाः;

एकैके च द्विधा—मेरोर्दक्षिणदिग्भागवर्तिनो मेरोरेवोत्तरदिग्भागवर्तिनश्च, तत्रासुरकुमाराणां दक्षिणदिग्भाविनामिन्द्रश्चमरः उत्तरदिग्भाविनां च बलिः; तत्र 'चमरबलि सारमहियं'ति पदैकदेशेऽपि पदसमुदायोपचारात् 'सार'मिति सागरोपमं द्रष्टव्यं, प्राकृतत्वाच्चमरबलिशब्दाभ्यां परतः षष्ठीविभक्तेर्लोपः, ततोऽयमर्थः—चमरबल्योः क्रमेण सागरोपममधिकं चोत्कृष्टमायुः, किमुक्तं भवति ?—चमरस्यासुरेन्द्रस्य दक्षिणदिग्वर्तिन उत्कृष्टमायुरेकं परिपूर्णं सागरोपमं, बलेरसुरेन्द्रस्य उत्तरदिग्वर्तिनः सागरोपमं किञ्चित्समधिकमिति, सम्प्रति शेषाणां चमरबलिव्यतिरिक्तानां सुराणां—देवानां नागकुमाराद्यधिपतीनामित्यर्थः आयुर्वक्ष्ये, तदेव कथयति—'दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं' इत्यादि, दाक्षिणात्यानां नागकुमाराद्यधिपतीनां—धरणप्रमुखानां नवानामिन्द्राणामुत्कृष्टमायुः द्वितीयमर्धं यस्य तद् द्व्यर्धं पल्योपमं, सार्धं पल्योपममित्यर्थः, 'उत्तरिल्लाणं'ति उत्तराहाणां—उत्तरदिग्भाविनां नागकुमारादीन्द्राणां भूतानन्दप्रभृतीनां नवानां देशोने—किञ्चिदूने द्वे पल्योपमे, उत्तरदिग्वर्तिनो ह्येते स्वभावादेव शुभाश्चिरायुषश्च भवन्ति, दक्षिणदिग्वर्तिनस्तु तद्विपरीता इति ॥ ३८ ॥

इत्युक्तं भवनवासिनां देवानां उत्कृष्टमायुः, सम्प्रति भवनवासिव्यन्तरदेवीनामाह—'अद्धुट्ठे'त्यादि, असुरयोः—असुरेन्द्रयोश्चमरबलिनाम्नोर्युगलं असुरयुगलं तस्य देवीनां यथाक्रममुत्कृष्टमायुरर्धचतुर्थानि अर्धपञ्चमानि च पल्योपमानि, चमरेन्द्रदेवीनां सार्धानि त्रीणि बलीन्द्रदेवीनां तु सार्धानि चत्वारि पल्योपमानीत्यर्थः, शेषाणां नागकुमाराद्यधिपतीनां तूत्तरदिग्वर्तिनां तथा 'वण'त्ति वनचराणां—व्यन्तराणामुत्तरदक्षिणदिग्वर्तिनां चशब्दात् दक्षिणदिग्भाविनागकुमाराद्यधिपतीनां च सम्बन्धिनीनां देवीनां यथाक्रममुत्कृष्टमायुर्देशोनं पल्योपममर्धपल्योपमं च, इयमत्र भावना—उत्तरदिग्भाविनागकुमाराद्यधिपतिदेवीनामुत्कृष्टमायुर्देशोनं पल्योपमं, दक्षिणदिग्भाविनागकुमाराद्यधिपतिदेवीनां दक्षिणोत्तरदिग्भाविव्यन्तराधिपतिदेवीनां चोत्कृष्टमायुरर्धं पल्योपममिति, केचिद्व्यन्तरीणां पल्योपममुत्कृष्टमायुराहुः

“श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितय” इति वचनश्रवणात्, तत्र तेषामागमानवगमविजृम्भितं, यदुक्तं प्रज्ञापनायाम्— “वाणमंतरीणं भंते! केवइकालं ठिई पन्नत्ता?, गोयमा! जहन्नेणं दस वाससहस्साइं उक्कोसेणं अद्धपलिओवम”मिति, श्रीप्रभृतयस्तु भवनपतिदेव्यः, तथा च सङ्ग्रहणीटीकायां हरिभद्रसूरिः—“तासां भवनपतिनिकायान्तर्गतत्वादि”ति ॥ ३९ ॥ अथ भवनपतिव्यन्तरदेवदेवीनां जघन्यां व्यन्तरदेवानामुत्कृष्टां च स्थितिमाह—‘दसे’त्यादि, सूचकत्वात्सूत्रस्य ‘भवण’त्ति भवनपतिदेवानां, उपलक्षणत्वात्तद्देवीनां च वनचराणां—व्यन्तरदेवानां तद्देवीनां च जघन्येन स्थितिर्दश वर्षसहस्राणि, जघनं—अधस्तान्निकृष्टो भागः तत्र भवं जघन्यं—रोममलादि तच्च किल स्तोकं ततोऽन्यदपि स्तोकं लक्षणया जघन्यमित्युच्यते, केवलं भावप्रधानत्वान्निर्देशस्य जघन्येन—जघन्यतया सर्वस्तोकतयेत्यर्थः, तथा व्यन्तराणां—व्यन्तरदेवानामुत्कृष्टां स्थितिं विजानीयात् पल्योपमप्रमाणां, तद्देवीनां तु पल्योपमार्धमुत्कृष्टा स्थितिः प्रागेवोक्तेति ॥ ४० ॥ सम्प्रति ज्योतिष्कदेवदेवीनामुत्कृष्टां जघन्यां च स्थितिमाह—‘पलिये’त्यादिगाथाद्वयं, ज्योतिष्कदेवास्तावच्चन्द्रादित्यग्रहनक्षत्रतारकभेदात्पञ्चविधाः तद्देव्योऽपि पञ्चविधा इति सर्वेऽपि दशविधाः, तत्र शशिनां—असङ्ख्येयद्वीपसमुद्रवर्तिचन्द्रविमानवासिदेवानां सवर्षलक्षं—वर्षाणां लक्षेणाधिकं पल्योपममुत्कृष्टमायुः, एवं रवीणां—आदित्यानामशेषाणां ससहस्रं—वर्षाणां सहस्रेणाधिकं पल्योपममुत्कृष्टमायुः, तथा ग्रहनक्षत्रताराणां पल्योपमं पल्योपमार्धं पल्योपमचतुर्भागश्च यथाक्रममुत्कृष्टमायुः, इयमत्र भावना—ग्रहाणां—भौमबुधादीनां परिपूर्णं पल्योपमं नक्षत्राणां—अश्विन्यादीनां पल्योपमार्धं तारकदेवानां च पल्योपमस्य चतुर्थो भाग उत्कृष्टमायुरिति, तथा तेषां—चन्द्रादित्यग्रहनक्षत्रतारकदेवानां सम्बन्धिन्याः स्थितेरर्धं—समप्रतिभागरूपं तेषामेव सम्बन्धिनीनां देवीनां क्रमेणोत्कृष्टमायुः, केवलमन्त्यदेवीद्विके—नक्षत्रतारकदेवीद्वये तदेवार्धमधिकं—विशेषाधिकमवसेयं, इदमुक्तं भवति—चन्द्रविमानवासिनीनां देवीनां पल्योपमार्धं पञ्चा-

शद्वर्षसहस्राधिकं सूर्यदेवीनां पल्योपमार्धं पञ्चवर्षशताधिकं ग्रहदेवीनां च पूर्णं पल्योपमार्धमुत्कृष्टमायुः, तथा नक्षत्रदेवीनां पल्योपमस्य चतुर्थो भागो विशेषाधिकमुत्कृष्टमायुः, तारकदेवीनां पल्योपमस्याष्टमो भागः किञ्चिदधिकमुत्कृष्टमायुरिति, तथा तारकदेवदेव्योः पृथगभिधानात् शेषेष्वष्टसु—चन्द्रादित्यग्रहनक्षत्रदेवतद्देवीरूपेषु भेदेषु पादः—पल्योपमस्य चतुर्थो भागो जघन्यमायुः, तथा तारकदेवानां तारकदेवीनां च पल्योपमस्याष्टांशः—अष्टमो भाग इति ॥ ४१ ॥ ४२ ॥ अथ वैमानिकदेवानामुत्कृष्टां स्थितिमाह—'दो साही'त्यादि, सौधर्मात्—सौधर्मकल्पाद्यावत् शुक्रो—महाशुक्रकल्पस्तावदनेन क्रमेणोत्कृष्टा स्थितिः प्रतिपत्तव्या, तथाहि—सौधर्मे कल्पे देवानामुत्कृष्टा स्थितिर्द्वे अतरे, तरीतुमशक्यं प्रभूतकालतरणीयत्वादतरं सागरोपमं, द्वे सागरोपमे इत्यर्थः, ईशाने ते एव द्वे सागरोपमे साधिके—किञ्चित्समधिके, सनत्कुमारे सप्त सागरोपमाणि, माहेन्द्रे तान्येव सप्त सागरोपमाणि साधिकानि, ब्रह्मलोके दश सागरोपमाणि लान्तके चतुर्दश महाशुक्रे सप्तदश, 'तदुवरि एक्केक्कमारोवे' इति तस्य—महाशुक्रस्य कल्पस्योपरि सहस्रारादिषु प्रतिकल्पं प्रतिग्रैवेयकं च पूर्वस्मात् पूर्वस्मादधिकमेकैकं सागरोपमं उत्कृष्टायुश्चिन्तायामारोपयेत्, तद्यथा—सहस्रारेऽष्टादश सागरोपमाण्युत्कृष्टा स्थितिः आनते एकोनविंशतिः प्राणते विंशतिः आरणे एकविंशतिः अच्युते द्वाविंशतिः अधस्तनाधस्तनग्रैवेयके त्रयोविंशतिः अधस्तनमध्यमे चतुर्विंशतिः अधस्तनोपरितने पञ्चविंशतिः मध्यमाधस्तने षड्विंशतिः मध्यममध्यमे सप्तविंशतिः मध्यमोपरितनेऽष्टाविंशतिः उपरितनाधस्तने एकोनत्रिंशत् उपरितनमध्यमे त्रिंशत् उपरितनोपरितनग्रैवेयके एकत्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिः ॥ ४३ ॥ एकैकवृद्ध्या च एकत्रिंशतोऽनन्तरमनुत्तरेषु द्वात्रिंशदेव स्यात् अतस्तेषु पृथगाह—'तेत्तीसे'त्यादि, विजयादिषु—विजयवैजयन्तजयन्तापराजितेषु चतुर्षु अनुत्तरविमानेषु त्रयस्त्रिंशदतराणि—सागरोपमाण्युत्कृष्टा स्थितिः, जघन्या पुनरेतेषु विजयादिषु चतुर्षु एक-

त्रिंशत्सागरोपमाणि, तथा सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमाण्यजघन्योत्कृष्टा स्थितिरिति ॥ ४४ ॥ अथ वैमानिकदेवानामेव जघन्यां स्थितिमाह—'पलिय'मित्यादि, इह यथाक्रमं पदसम्बन्धात् सौधर्मे कल्पे एकं पल्योपमं ईशाने तदेव किञ्चित्समधिकं जघन्या स्थितिः, तत ऊर्द्धं सनत्कुमारादिषु ग्रैवेयकानुत्तरविमानावसानेषु अधःकल्पस्थितिः—अधोवर्त्तिनः कल्पस्य वा उत्कृष्टा स्थितिः उपर्युपरिवर्त्तिनि सैव जघन्या स्थितिः, अनेन च क्रमेण तावत्प्रतिपत्तव्यं यावदेकत्रिंशदतराणि, तथाहि—यैव सौधर्मे सागरोपमद्वयरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि सनत्कुमारे जघन्या, यैव चेशाने सातिरेकसागरोपमद्वयस्वरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि माहेन्द्रे जघन्या, सनत्कुमारोत्कृष्टस्थितिस्तु सागरोपमसप्तकलक्षणा तदुपरिवर्तिनि ब्रह्मलोके जघन्या, तथा चोक्तं प्रज्ञापनायाम्—'बंभलोए कप्पे देवाणं केवइयकालं ठिई पन्नत्ता ?, गोयमा ! जहन्नेणं सत्त सागरोवमाइं"ति, तत्त्वार्थभाष्ये तु या माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमाणि सा ब्रह्मलोके जघन्या भवतीत्युक्तं, ब्रह्मलोकोत्कृष्टस्थितिस्तु दशसागरोपमात्मिका लान्तके जघन्या, लान्तकोत्कृष्टस्थितिरपि चतुर्दशसागरोपमरूपा महाशुक्रे जघन्या, तदुत्कृष्टस्थितिस्तु सप्तदशसागरोपमस्वरूपा सहस्रारे जघन्या, तदुत्कृष्टस्थितिः पुनरष्टादशसागरोपमलक्षणा आनते जघन्या, तदुत्कृष्टस्थितिस्त्वेकोनविंशतिसागरोपमस्वरूपा प्राणते जघन्या, तदुत्कृष्टस्थितिरपि विंशतिसागरोपमात्मिका आरणे जघन्या, तदुत्कृष्टस्थितिस्त्वेकविंशतिसागरोपमस्वरूपा अच्युते जघन्या, तदुत्कृष्टस्थितिस्तु द्वाविंशतिसागरोपमरूपा अधस्तनाधस्तनग्रैवेयके जघन्या, एवमेकैकं सागरोपमं वर्धयता तावन्नेयं यावदनुत्तरचतुष्के—विजयवैजयन्तजयन्तापराजितरूपे एकत्रिंशत्सागरोपमाणि जघन्या, स्थितिः, सर्वार्थसिद्धे पुनर्जघन्या स्थितिर्नास्ति, अजघन्योत्कृष्टायास्त्रयस्त्रिंशत्सागरोपमरूपाया एव स्थितेस्तत्राभिधानादिति ॥४५॥ सम्प्रति वैमानिकदेवीनां जघन्यामुत्कृष्टां च स्थितिमाह—'सपरी'त्यादि, इह वैमानिकदेवीनामुत्पत्तिः सौधर्मेशानयोरेव, ताश्च द्विधा-

परिगृहीताः कुलाङ्गना इव अपरिगृहीताश्च वेश्या इव, तत्र सपरिग्रहाणां—परिगृहीतानामितरासां च—अपरिगृहीतानां जघन्या स्थितिः सौधर्मे ईशाने च यथासङ्ख्यं पल्यं—पल्योपमं साधिकं च, किमुक्तं भवति ?—सौधर्मे परिगृहीतानां देवीनामपरिगृहीतानां च देवीनां जघन्यायुः पल्योपमं ईशाने परिगृहीतानामपरिगृहीतानां च देवीनां साधिकं पल्योपममिति, तथा सौधर्मे परिगृहीतानामपरिगृहीतानां (ग्रन्थाग्रं १४०००) चोत्कृष्टमायुर्यथाक्रमं सप्त पञ्चाशच्च पल्योपमानि ईशाने नव पञ्चपञ्चाशच्च, इयमत्र भावना—सौधर्मे परिगृहीतानामुत्कृष्टमायुः सप्त पल्योपमानि अपरिगृहीतानां पञ्चाशत्, ईशाने परिगृहीतानामुत्कृष्टमायुर्नव पल्योपमानि अपरिगृहीतानां च पञ्चपञ्चाशदिति १९४ ॥ ४६ ॥ सम्प्रति 'भवण'त्ति पञ्चनवत्यधिकशततमं द्वारमाह—

सत्तेव य कोडीओ हवंति बावत्तरी सयसहस्सा । एसो भवणसमासो भवणवईणं वियाणिज्जा ॥ ४७ ॥ चउसट्ठी असुराणं नागकुमाराण होइ चुलसीई । बावत्तरि कणगाणं वाउकुमाराण छन्नउई ॥ ४८ ॥ दीवदिसाउदहीणं विज्जुकुमारिंदथणियअग्गीणं । छण्हंपि जुयलाणं बावत्तरिमो सयसहस्सा ॥ ४९ ॥ इह संति वणयराणं रम्मा भोमनयरा असंखिज्जा । तत्तो संखिज्जगुणा जोइसियाणं विमाणाओ ॥ ५० ॥ बत्तीसऽट्ठावीसा बारस अट्ठ य चउरो सयसहस्सा । आरेण बंभलोया विमाणसंखा भवे एसा ॥ ५१ ॥ पंचास चत्त छच्चेव सहस्सा लंत सुक्क सहस्सारे । सय चउरो आणयपाणएसु तिन्नारणच्चुयए ॥ ५२ ॥ एक्कारसुत्तरं हेट्ठिमेसु सत्तुत्तरं च मज्झिमए ।

**सयमेगं उवरिमए । पंचेव अणुत्तरविमाणा ॥ ५३ ॥ चुलसीई सयसहस्सा सत्ताणउई भवे सहस्साइं । तेवीसं च विमाणा विमाणसंखा भवे एसा ॥ ५४ ॥**

भवनवासिनां देवानां दशस्वपि निकायेषु सम्पिण्ड्य चिन्त्यमानानि सर्वाण्यपि भवनानि सप्त कोटयो द्वासप्ततिश्च शतसहस्राणि—लक्षाः भवन्ति ७७२००००० एप भवनपतीनां भवनसमासो—भवनसर्वसङ्ख्या इति विजानीयात्, एतानि च अशीतिसहस्राधिकलक्षयोजनवाहल्याया रत्नप्रभाया अध उपरि च प्रत्येकं योजनसहस्रमेकं मुक्त्वा शेषेऽष्टसप्ततिसहस्राधिकलक्षयोजनमाने मध्यभागेऽवगन्तव्यानि, अन्ये त्वाहुः—नवतेर्योजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनं च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासम्भवमावासा इति ॥ ४७ ॥ सम्प्रति भवनवासिनामेव प्रतिनिकायं भवनसङ्ख्यामाह—'चउ' इत्यादि, असुराणां—असुरकुमाराणां दक्षिणोत्तरदिग्भाविनां सर्वसङ्ख्यया भवनानि चतुःषष्टिः शतसहस्राणि—लक्षा भवन्ति, एवं नागकुमाराणां चतुरशीतिर्लक्षाः कनकानां—सुवर्णकुमाराणां द्विसप्ततिर्लक्षाः वायुकुमाराणां षण्णवतिलक्षाः द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्निकुमाराणां षण्णामपि दक्षिणोत्तरदिग्वर्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिः षट्सप्ततिर्लक्षा भवन्ति भवनानां, एषां च सर्वेषामप्येकत्र मीलने प्रागुक्ताः सङ्ख्या भवन्ति ॥ ४८ ॥ ४९ ॥ सम्प्रति व्यन्तरनगरवक्तव्यतामाह—'इहे'त्यादि, इह—तिर्यग्लोके रत्नप्रभायाः प्रथमे योजनसहस्रे रत्नकाण्डरूपे अध उपरि च प्रत्येकं योजनशतविरहिते वनचराणां—व्यन्तराणां रम्याणि—रमणीयानि भूमौ भवानि भौमानि—भूम्यन्तर्वर्तीनि नगराण्यसङ्ख्यातानि सन्ति, रम्यता चैतेषु नित्यमुदितैर्व्यन्तरैर्गतस्यापि कालस्यावेदनात्, यदाह—"तहिं देवा वंतरिया वरतरुणीगीयवाइयरवेणं । निच्चं सुहिया पमुइया गयंपि कालं न याणंति ॥ १ ॥" [ तत्र देवा व्यन्तरा वरतरुणीगीतवादित्ररवेण । नित्यं सुखितप्र-

मुदिता गतमपि कालं न जानन्ति ॥ १ ॥ ] यास्तु मनुष्यक्षेत्राद्बहिर्द्वीपेषु समुद्रेषु च व्यन्तराणां नगर्यस्ता जीवाभिगमादिशास्त्रेभ्योऽव-सेयाः, तेभ्योऽपि व्यन्तरनगरेभ्यः सङ्ख्येयगुणानि ज्योतिष्काणां—ज्योतिष्कदेवानां विमानानि ॥ ५० ॥ सम्प्रति वैमानिकदेवविमानानां सङ्ख्यामाह—'बत्तीसे'त्यादि गाथाचतुष्कं, ब्रह्मलोकाद्—ब्रह्मलोकचरमपर्यन्तादारतः—अर्वाक्, किमुक्तं भवति ?—ब्रह्मलोकमभिव्याप्य एषा विमानसङ्ख्या भवति, तद्यथा—सौधर्मे कल्पे द्वात्रिंशद्विमानानां शतसहस्राणि ईशानेऽष्टाविंशतिः सनत्कुमारे द्वादश माहेन्द्रेऽष्टौ ब्रह्मलोके चत्वारि ॥ ५१ ॥ तथा—'पंचासे'त्यादि, अत्रापि पूर्वार्धे कल्पक्रमेण सङ्ख्यापदयोजना, लान्तके पञ्चाशद्विमानानां सहस्राणि महाशुक्रे चत्वारिंशत् सहस्रारे षट् सहस्राः, तथा आनतप्राणतयोर्द्वयोः समुदितयोश्चत्वारि विमानशतानि, तथा आरणाच्युतयोर्द्वयोः समुदितयोस्त्रीणि विमानशतानि ॥५२॥ तथा—'एगारे'त्यादि,अधस्तनेषु त्रिषु ग्रैवेयकेषु समुदितेषु विमानानामेकादशोत्तरं शतं मध्यमे ग्रैवेयकत्रिके समुदिते सप्तोत्तरं शतं उपरितनग्रैवेयकत्रिके समुदिते शतमेकं, सर्वान्तिमप्रतरे तु विजयादीनि पञ्चैवानुत्तरविमानानि ॥ ५३ ॥ अथ विमानानां सर्वसङ्ख्यामाह—'चुलसीई'त्यादि, अनन्तरगाथात्रयाभिहितानां विमानानामेषा सर्वसङ्ख्या—चतुरशीतिः शतसहस्राणि सप्तनवतिः सहस्राणि त्रयोविंशतिश्च विमानानीति ( ८४९७०२३ ) १९५ ॥ ५४ ॥ सम्प्रति 'देहमाणं'ति पण्णवत्यधिकशततमं द्वारमाह—

**भवणवणजोइसोहम्मीसाणे सत्त हुंति रयणीओ । एक्केक्कहाणि सेसे दुदुगे य दुगे चउक्के य ॥५५॥**
**गेविज्जेसुं दोन्नि य एगा रयणी अणुत्तरेसु भवे । भवधारणिज्ज एसा उक्कोसा होइ नायव्वा ॥५६॥**
**सव्वेसुक्कोसा जोयणाण वेउव्विया सयसहस्सं । गेविज्जणुत्तरेसुं उत्तरवेउव्विया नत्थि ॥५७॥ अंगु-**
**लअसंखभागो जहन्न भवधारणिज्ज पारंभे । संखेज्जा अवगाहण उत्तरवेउव्विया सावि ॥ ५८ ॥**

'भवणे'त्यादिगाथाचतुष्टयं, भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानेषु देवानामुत्सेधाङ्गुलेन देहमानमुत्कर्षतः सप्त रत्नयो—हस्ता भवन्ति, शेषे द्विके द्विके द्विके चतुष्के च एकैकहानिः—एकैकहस्तविषया हानिर्वक्तव्या, तद्यथा—सनत्कुमारमाहेन्द्रयोरुत्कर्षतः षट् हस्ताः शरीरप्रमाणं ब्रह्मलोकलान्तकयोः पञ्च शुक्रसहस्रारयोश्चत्वारः आनतप्राणतारणाच्युतेषु त्रय इति, तथा ग्रैवेयकेषूत्कर्षतः शरीरप्रमाणं द्वौ रत्नी एकश्च रत्निरनुत्तरेषु भवेत्, एषा च सप्तहस्तप्रमाणादिका उत्कृष्टावगाहना भवधारणीया वेदितव्या ॥ ५५ ॥ ५६ ॥ साम्प्रतमुत्तरवैक्रियरूपावगाहनामानमाह—'सव्वेसु' इत्यादि, भवनपत्यादिषु अच्युतदेवलोकपर्यन्तेषु सर्वेषामपि देवानामुत्तरवैक्रिया तनुरुत्कर्षतो योजनानां शतसहस्रं, योजनलक्षप्रमाणा भवतीत्यर्थः, ग्रैवेयकेषु अनुत्तरेषु च देवानामुत्तरवैक्रिया तनुर्नास्ति, सत्यामपि शक्तौ प्रयोजनाभावतस्तदकरणात्, उत्तरवैक्रियं ह्यत्र गमनागमननिमित्तं परिचारणानिमित्तं वा क्रियते, न चैतेषामेतदस्तीति ॥ ५७ ॥ सम्प्रति जघन्यतो भवधारणीयामुत्तरवैक्रियां चाह—'अंगुले'त्यादि, सर्वेषामपि भवनपत्यादीनां भवधारणीया—स्वाभाविक्यवगाहना जघन्याऽङ्गुलस्यासङ्ख्येयो भागः, सा च प्रारम्भे उत्पत्तिप्रथमसमये समवसेया, उत्तरवैक्रिया पुनरवगाहना जघन्याऽङ्गुलस्य सङ्ख्येयो भागः, पर्याप्तत्वेन तस्य तथाविधजीवप्रदेशसङ्कोचाभावात्, साऽपि प्रारम्भे उत्तरवैक्रियशरीरनिर्माणप्रथमसमये द्रष्टव्या १९६ ॥ ५८ ॥ साम्प्रतं 'लेसाउ'त्ति सप्तनवत्यधिकशततमं द्वारमाह—

**किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया । जोइससोहंमीसाण तेऊलेसा मुणेयव्वा ॥ ५९ ॥**
**कप्पे सणंकुमारे माहिंदे चेव बंभलोए य । एएसु पम्हलेसा तेण परं सुक्कलेसाओ ॥ ६० ॥**

भवनपतयो व्यन्तराश्च कृष्णनीलकापोततेजोलेश्याकाः, कृष्णा नीला कापोती तैजसी चैषां लेश्या भवन्तीत्यर्थः, तत्रापि परमाधा-

र्मिकाः कृष्णलेश्याः, तथा ज्योतिष्केषु सौधर्मेशानयोश्च देवास्तेजोलेश्याका ज्ञातव्याः, तथा सनत्कुमारमाहेन्द्रब्रह्मलोकाख्येषु त्रिषु कल्पेषु देवाः पद्मलेश्याकाः, ततो—ब्रह्मलोकात्परं—ऊर्द्धं लान्तकादिषु अनुत्तरविमानान्तेषु देवाः शुक्ललेश्या ज्ञातव्याः, सर्वा अपि लेश्या यथोत्तरस्थानं विशुद्धविशुद्धतरा बोद्धव्याः, एताश्च भावलेश्याहेतवो भवस्थिताः कृष्णादिद्रव्यरूपा द्रव्यलेश्या एवेह प्रतिपत्तव्याः न भावलेश्याः, तासामनवस्थितत्वात्, नापि बाह्यवर्णरूपा, बाह्यवर्णस्य देवानां प्रज्ञापनादौ पार्थक्येनोक्तत्वात्, एतच्च नारकलेश्याद्वारे प्रागेवोक्तं, भावलेश्यास्तु देवानां प्रतिनिकायं यथासम्भवं षडपि भवन्ति, तथा च तत्त्वार्थमूलटीकायां हरिभद्रसूरिः—"भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकाय"मिति १९७ ॥ ५९ ॥ ६० ॥ इदानीं 'ओहिनाणं'त्यष्टनवत्यधिकशततमं द्वारमाह—

**सक्कीसाणा पढमं दोचं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थिं ॥ ६१ ॥**
**आणयपाणयकप्पे देवा पासंति पंचमीं पुढवीं । तं चेव आरणच्चुय ओहिणाणेण पासंति ॥ ६२ ॥**
**छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिन्नलोगनालिं पासंति अणुत्तरा देवा**
**॥ ६३ ॥ एएसिमसंखेज्जा तिरियं दीवा य सागरा चेव । बहुययरं उवरिमया उड्ढं च सकप्पथू-**
**भाइं ॥ ६४ ॥ संखेज्जजोयणाइं देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा जहन्नयं पन्नवीसं तु**
**॥ ६५ ॥ भवणवइवणयराणं उड्ढं बहुओ अहो य सेसाणं । जोइसिनेरइयाणं तिरियं ओरालिओ**
**चित्तो ॥ ६६ ॥**

'सक्की'त्यादिगाथाषट्कं, शक्रेशानौ—सौधर्मेशानकल्पेन्द्रौ उपलक्षणमेतत् इन्द्रसामानिकादयश्चोत्कृष्टायुषः, एवमन्यत्राप्युपलक्षणव्याख्यानं

द्रष्टव्यं, प्रथमां—रत्नप्रभाख्यां पृथिवीं यावत्, रत्नप्रभायाः पृथिव्याः सर्वाधस्तनं भागं यावदुत्कृष्टतोऽवधिना पश्यतः, सनत्कुमारमाहेन्द्राविन्द्रौ द्वितीयां—शर्कराप्रभां पृथिवीं यावत्, शर्कराप्रभायाः पृथिव्या अधस्तनं सर्वान्तिमं चरमं भागं यावदित्यर्थः, एवमुत्तरत्रापि भावनीयं, ब्रह्मलोकलान्तकौ तृतीयां—वालुकाप्रभां यावत्, शुक्रसहस्रारौ चतुर्थीं पङ्कप्रभां यावत्, तथा आनतप्राणतकल्पयोर्देवाः—इन्द्रतत्सामानिकादयः पञ्चमीं पृथिवीं—धूमप्रभां यावदवधिना पश्यन्ति, आरणाच्युतदेवा अपि तामेव पञ्चमीं पृथ्वीं यावत्, तथा आनतप्राणतदेवेभ्य आरणाच्युतदेवास्तामेव विशुद्धतरां बहुपर्यायां च, तत्राप्यानतदेवेभ्यः प्राणतदेवाः आरणदेवेभ्यश्चाच्युतदेवाः सविशेषां पश्यन्ति, उत्तरोत्तरदेवानां विमलविमलतरावधिज्ञानसद्भावात्, एवं प्रागुत्तरत्र च सर्वत्र भावनीयं, तथा अधस्तनमध्यमग्रैवेयकाः 'आधेये आधारोपचारात्' तन्निवासिनो देवाः षष्ठीं—तमःप्रभां पृथिवीं यावत्पश्यन्ति, उपरितनग्रैवेयकवासिनो देवाः सप्तमीं पृथिवीं यावत्, अनुत्तरविमानवासिनस्तु देवाः सम्भिन्नां—परिपूर्णां लोकनाडीं—लोकमध्यवर्तिनीं त्रसनाडीमधस्तादवधिना पश्यन्ति, उक्तं च तत्त्वार्थभाष्ये—"अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनालिं पश्यन्ती"ति, अन्ये तु स्वविमानध्वजादूर्द्धमदर्शनात् किञ्चिदूनां लोकनाडीं पश्यन्तीत्याहुः, तदेवमधस्तादवधिविषयभूतं क्षेत्रमुक्तं ॥ ६१ ॥ ६२ ॥ ६३ ॥ सम्प्रति तदेव तिर्यगूर्द्ध्वं चाह—'एएसि'मित्यादि, एतेषां—शक्रेशानादिदेवानां तिर्यक्—तिरश्चीनमवधिविषयं क्षेत्रमसङ्ख्येया द्वीपाः सागराश्च, असङ्ख्यातान् द्वीपानसङ्ख्यातांश्च समुद्रानवधिना तिर्यक्पश्यन्तीत्यर्थः, केवलमेतदेव द्वीपसमुद्रासङ्ख्येयकं 'उवरिमया' इति उपर्युपरिवर्तिकल्पवासिनो देवा बहुकतरं, उपलक्षणमेतत् बहुकतमं च तिर्यगवधिना पश्यन्ति, उपर्युपरिदेवलोकनिवासिनां विशुद्धविशुद्धतरावधिज्ञानसद्भावात्, ऊर्द्ध्वं पुनः सर्वेऽपि शक्रादयो देवाः स्वकल्पस्तूपादीन्—स्वस्वविमानचूलाध्वजादिकं यावत्पश्यन्ति न परतः, तथा भवस्वाभाव्यात्, जघन्यतः पुनरमी सर्वेऽपि सौधर्मादयोऽनुत्तरवि-

मानवासिपर्यन्ता अङ्गुलासङ्ख्येयभागमात्रं क्षेत्रं पश्यन्ति, तथा चावश्यकचूर्णिः—"वेमाणिया सोहम्माओ आरब्भ जाव सव्वट्ठसिद्धगा देवा ताव जहन्नेण अंगुलस्स असंखेज्जइभागं ओहिणा जाणंति पासंति," नन्वङ्गुलासङ्ख्येयभागमात्रक्षेत्रप्रमितोऽवधिः सर्वजघन्यो भवति, सर्वजघन्यश्चावधिस्तिर्यग्मनुष्येष्वेव न शेषेषु, यदुक्तं—'उक्कोसो मणुएसु मणुस्सतेरिच्छएसु य जहन्नो ।' इति [ उत्कृष्टो मनुष्येषु मनुष्यतिर्यक्षु च जघन्यः ] तत्कथमिह वैमानिकानां सर्वजघन्य उक्तः ?, उच्यते, सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः सम्भवति, स च सर्वजघन्योऽपि कदाचिदवाप्यते, उपपातानन्तरं तु देवभवप्रत्ययजः, ततो न कदाचिद्दोषः, यदाह जिनभद्रगणिक्षमाश्रमणः—"वेमाणियाणमंगुलभागमसंखं जहन्नओ होइ । उववाओ परभविओ तब्भवजो होइ तो पच्छा ॥ १ ॥' [ वैमानिकानामङ्गुलासंख्यभागो जघन्यतो भवति । औपपातिकः ( उपपाते ) पारभविकः तद्भवजो भवति तत् पश्चात् ॥ १ ॥ ] पारभविकत्वान्नायं सूत्रकृता नोक्त इति ॥ ६४ ॥ उक्तं वैमानिकानामधस्तिर्यगूर्द्ध्वं चावधिक्षेत्रं, अथ सामान्यतः शेषदेवानामाह—'संखेज्जे'त्यादि, देवानां—भवनपतिव्यन्तरज्योतिष्काणामर्धसागरोपमप्रमाणे किञ्चिदूनायुषि सति संख्येयान्येव योजनानि अवधिपरिच्छेद्यक्षेत्रं, ततः परं संपूर्णार्धसागरोपमादिके आयुषि सति पुनः असङ्ख्येयानि योजनानि, केवलमायुर्वृद्ध्या योजनासङ्ख्यातकस्यापि वृद्धिर्वाच्या, जघन्यं तु पुनरवधिक्षेत्रं पञ्चविंशतिर्योजनानि, तानि च येषां सर्वजघन्यं—दशवर्षसहस्रप्रमाणं आयुस्तेषामेव भवनपतिव्यन्तराणां द्रष्टव्यानि न शेषाणां, आह च भाष्यकृत्—"पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसिं'मिति [ पञ्चविंशतिर्योजनानि दशवर्षसाहस्रिका स्थितिर्येषां ] ज्योतिष्काः पुनरसङ्ख्येयस्थितिकत्वाज्जघन्यतोऽपि सङ्ख्येययोजनप्रमितान् सङ्ख्येयान् द्वीपसमुद्रानवधिज्ञानतः पश्यन्ति, उत्कर्षतोऽपि तानेव, केवलमधिकतरान्, उक्तं च प्रज्ञापनायाम्—"जोइसिया णं भंते! केवइयं खेत्तं ओहिणा जाणंति पासंति ?,

गोयमा! जहन्नेणवि संखेज्जे दीवसमुद्दे उक्कोसेणवि संखेज्जे दीवसमुद्दे" इति ॥ ६५ ॥ अथ नारकतिर्यङ्नरामराणां मध्ये कस्य कस्यां दिशि प्रभूतोऽवधिरिति प्रतिपादयन्नाह—'भवणे'त्यादि, भवनपतीनां व्यन्तराणां चावधिरूर्द्ध्वं वहुकः—प्रभूतः, शेपासु च दिक्षु स्वल्पविषय एवावधिः, एवमग्रेऽपि भावनीयं, शेपाणां तु वैमानिकदेवानां पुनरधः प्रभूतोऽवधिः ज्योतिष्कनारकाणां तिर्यक्प्रभूतः, तथा तिर्यग्मनुष्याणां सम्वंध्यवधिरौदारिकावधिरुच्यते अयं तु चित्रो—नानाप्रकारः, केषाञ्चिदूर्द्ध्वं वहुः अन्येपां त्वधः परेषां तु तिर्यक् केषाञ्चित् तुल्य इति भावः १९८ ॥ ६६ ॥ सम्प्रति 'उप्पत्तीए विरहो'त्ति नवनवत्यधिशततमं द्वारमाह—

**भवणवणजोइसोहंमीसाण चउवीसई मुहुत्ता उ। उक्कोस विरहकालो सव्वेसु जहन्नओ समओ ॥ ६७ ॥ नव दिण वीस मुहुत्ता बारस दस चेव दिण मुहुत्ता उ। बावीसा अद्धं चिय पणयाल असीइ दिवससयं ॥ ६८ ॥ संखिज्ज मास आणयपाणय तह आरणच्चुए वासा। संखेज्जा विन्नेया गेविज्जेसुं अओ वोच्छं ॥ ६९ ॥ हिट्ठिमे वाससयाइं मज्झिम सहसाइं उवरिमे लक्खा। संखिज्जा विन्नेया जहसंखेणं तु तीसुंपि ॥ ७० ॥ पलिया असंखभागा उक्कोसो होइ विरहकालो उ। विजयाइसु निद्दिट्ठो सव्वेसु जहन्नओ समओ ॥ ७१ ॥**

'भवणे'त्यादिगाथाचतुष्कं, इह भवनपत्यादिपु देवाः प्रायः सततमुत्पद्यन्ते कदाचिदेव त्वन्तरं, तच्च सामान्येन चतुर्विधेष्वपि समुदितेषु देवेपु द्वादश मुहूर्ताः, तदनन्तरमवश्यमन्यतमस्मिन् कश्चिद्देव उत्पद्यते एव, उक्तं च—"गब्भयतिरिनरसुरनारयाण विरहो मुहुत्त बारसग" [गर्भजतिर्यङ्नरसुरनारकाणां विरहो मुहूर्त्तानां द्वादशकं] मिति, विशेषतस्तु भवनवासिपु व्यन्तरेषु ज्योतिष्केषु सौधर्मे

ईशाने च प्रत्येकमुत्कर्षत उपपातविरहकालश्चतुर्विंशतिर्मुहूर्ताः, इयमत्र भावना—भवनवास्यादिषु मध्ये प्रत्येकमेकस्मिन् बहुषु वा देवेषूत्पन्नेषु सत्सु अन्य उत्कृष्टमन्तरं चतुर्विंशतिं मुहूर्त्तान् कृत्वा नियमतः समुत्पद्यते इति, जघन्यत उपपातविरहकालः सर्वेष्वपि भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानरूपेषु एकः समयः, किमुक्तं भवति?—एतेषु पञ्चस्वपि स्थानेषु प्रत्येकमेकस्मिन् बहुषु वा समुत्पन्नेष्वन्यः समयमेकमन्तरं कृत्वा समुत्पद्यत इति, शेषः सर्वोऽप्युपपातविरहकालो मध्यमो वेदितव्य इति ॥ ६७ ॥ सनत्कुमारे कल्पे देवानामुत्कर्षत उपपातविरहकालो नव दिनानि—रात्रिन्दिवानि विंशतिश्च मुहूर्ताः माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः ब्रह्मलोके सार्धानि द्वाविंशतिर्दिनानि लान्तके पञ्चचत्वारिंशद्दिनानि महाशुक्रेऽशीतिर्दिनानि सहस्रारे दिवसशतं—अहोरात्रशतं ॥ ६८ ॥ आनते प्राणते च प्रत्येकमुत्कर्षत उपपातविरहकालः सङ्ख्येया मासाः, केवलमानतापेक्षया प्राणते प्रभूता वेदितव्याः, ते च वर्षादर्वागेव, तथा आरणे अच्युते च प्रत्येकं सङ्ख्येयानि वर्षाणि, नवरमत्राप्यारणापेक्षयाऽच्युते प्रभूतानि, तानि च वर्षशतादर्वागेव, अतः परं ग्रैवेयकेषूत्कर्षत उपपातविरहकालं वक्ष्ये ॥ ६९ ॥ प्रतिज्ञातमेवाह—'हिट्ठिमे'त्यादि, त्रिष्वपि अधस्तनमध्यमोपरितनग्रैवेयकत्रिकेषु यथासङ्ख्येन सङ्ख्येयानि वर्षशतानि वर्षसहस्राणि वर्षलक्षाणि च विज्ञेयानि, तथाहि—अधस्तनग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षशतानि, तानि च वर्षसहस्रादारतः, मध्यमग्रैवेयकत्रिके सङ्ख्येयानि वर्षसहस्राणि, तानि च वर्षलक्षादर्वाक्, उपरितनग्रैवेयकत्रिके सङ्ख्येयानि वर्षलक्षाणि, तानि च वर्षकोट्या आरतो द्रष्टव्यानि, अन्यथा कोटीग्रहणमेव कुर्यादित्येवं सर्वत्र भावनीयं, इयं च व्याख्या हरिभद्रसूरिकृतसङ्ग्रहणीटीकानुसारतः, अन्ये तु सामान्येनैव व्याचक्षत इति ॥ ७० ॥ साम्प्रतमनुत्तरविमानेषु उपपातविरहकालमानमाह—'पलिये'त्यादि, विजयादिषु—विजयवैजयन्तजयन्तापराजितरूपेषु चतुर्षु विमानेषूत्कृष्ट उपपातविरहकालोऽद्धापल्योपमासङ्ख्येयभागः, तुशब्दस्यानुक्तसमुच्चयार्थत्वात्स-

र्वार्थसिद्धे पल्योपमस्य सङ्ख्येयो भागः, तथा च प्रज्ञापना—'सव्वट्ठसिद्धदेवा णं भंते ! केवइकालं विरहिया उववाएणं पन्नत्ता ?, गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं पलिओवमस्स संखेज्जइभाग"मिति, जघन्यतः पुनः सर्वेष्वपि—सनत्कुमारादिष्वनुत्तरान्तेषु उपपातविरहकाल एकः समय इति १९९ ॥ ७१ ॥ सम्प्रति 'उव्वट्टणाए विरहो'त्ति द्विशततमं द्वारमाह—

**उववायविरहकालो एसो जह वण्णिओ य देवेसु । उव्वट्टणावि एवं सव्वेसिं होइ विन्नेया ॥ ७२ ॥**

उपपतनमुपपातः—तदन्यगतिकानां सत्त्वानां देवत्वेनोत्पादः तस्य विरहकालः—अन्तरकालः एषः—चतुर्विंशतिमुहूर्तादिक उत्कृष्टो जघन्यतश्च यथा देवेषु प्रागुपवर्णितः एवं—अनेनैव प्रकारेण सर्वेषां देवानामुद्वर्तनाऽपि विज्ञेया, तद्यथा—भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानदेवानामुत्कृष्ट उद्वर्तनाविरहकालश्चतुर्विंशतिर्मुहूर्ताः, सनत्कुमारे नव दिनानि विंशतिश्च मुहूर्ताः माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः ब्रह्मलोके सार्धा द्वाविंशतिर्दिनाः लान्तके पञ्चचत्वारिंशद्दिनाः शुक्रे अशीतिर्दिनाः सहस्रारे दिनशतं आनतप्राणतयोः सङ्ख्येया मासाः आरणाच्युतयोः सङ्ख्येयानि वर्षाणि अधस्तनेषु त्रिषु ग्रैवेयकेषु सङ्ख्येयानि वर्षशतानि मध्यमेषु त्रिषु सङ्ख्येयानि वर्षसहस्राणि उपरितनेषु त्रिषु सङ्ख्येयानि वर्षलक्षाणि विजयादिषु चतुर्षु पल्योपमासङ्ख्येयभागः सर्वार्थसिद्धे च पुनः पल्योपमसङ्ख्येयभागः, जघन्यतः पुनः सर्वेषामप्युद्वर्तनाविरहकाल एकः समय इति २०० ॥ ७२ ॥ इदानीं 'इमाण संख'त्येकोत्तरद्विशततमं द्वारमाह—

**एक्को व दो व तिन्नि व संखमसंखा य एगसमएणं । उववज्जंतेवइया उव्वट्टंतावि एमेव ॥ ७३ ॥**

भवनवास्यादिषु प्रत्येकमेकस्मिन् समये जघन्यतः एको द्वौ वा त्रयो वा उत्पद्यन्ते, उत्कर्षतः सङ्ख्याता असङ्ख्याता वा, केवलं सहस्रारादूर्ध्वं सर्वत्रोत्कर्षतः सङ्ख्याता एव वक्तव्याः नासङ्ख्याताः, यतो मनुष्या एव सहस्रारादूर्ध्वं गच्छन्ति न तिर्यञ्चो, मनुष्याश्च

सङ्ख्याता एव, 'उवट्टंतावि एमेव' त्ति उद्वर्तमाना अपि सन्तो भवनपतिव्यन्तरादिभ्य इत्थमेवोद्वर्तन्ते, ते च जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतः सङ्ख्याता असङ्ख्याता वा यावत्सहस्रारकल्पः, सहस्रारकल्पादूर्द्धमुत्कर्षतः सङ्ख्याता एव च्यवन्ते, आनतादिच्युता हि मनुष्येष्वेवागच्छन्ति, न तिर्यक्षु, मनुष्याश्च सङ्ख्याता एवेति २०१ ॥७३॥ इदानीं 'जम्मि एयाण गई'त्ति द्व्युत्तरद्विशततमं द्वारमाह—

**पुढवीआउवणस्सइ गब्भे पज्जत्तसंखजीवीसुं । सग्गचुयाण वासो सेसा पडिसेहिया ठाणा ॥७४॥**
**बायरपज्जत्तेसुं सुराण भूदगवणेसु उप्पत्ती । ईसाणंताणं चिय तत्थवि न उवट्टगाणंपि ॥ ७५ ॥**
**आणयपभिईहिंतो जाणुत्तरवासिणो चवेऊणं । मणुएसुं चिय जायइ नियमा संखिज्जजीविसुं ॥७६॥**

स्वर्गात्—देवोत्पादस्थानाच्च्युतानां सामान्येन भवनपतिव्यन्तरज्योतिष्कवैमानिकानां देवानां वासो—वसनमुत्पत्तिरित्यर्थः पृथिवीकाये अप्काये वनस्पतिकाये तथा गर्भजेषु पर्याप्तेषु सङ्ख्यातवर्षजीविषु तिर्यग्मनुष्येषु भवति, शेषाणि पुनः स्थानानि—तेजस्कायवायुकायद्वित्रिचतुरिन्द्रियासङ्ख्यातायुष्कसम्मूर्छिमापर्याप्ततिर्यग्नरदेवनारकरूपाणि प्रतिषिद्धानि तीर्थकरगणधरैः ॥ ७४ ॥ अत्रैव विशेषमाह—'बायरे'-त्यादिगाथाद्वयं, पृथिव्युदकप्रत्येकवनस्पतिष्वपि बादरपर्याप्तेष्वेव सुराणां—देवानामुत्पत्तिः, न पुनः सूक्ष्मपृथिव्यप्कायिकेषु साधारणवनस्पतिषु अपर्याप्तेषु बादरपृथिव्यप्प्रत्येकवनस्पतिष्वेवेति, तत्रापीशानान्तानामेव देवानामेकेन्द्रियेषूत्पत्तिः न तूर्द्धगानां सनत्कुमारादीनां, ते हि पञ्चेन्द्रियतिर्यङ्मनुष्येष्वेवोत्पद्यन्ते, तथा आनतप्रभृतिभ्यः—आनतकल्पदेवानारभ्य यावदनुत्तरवासिनो देवाः स्वस्थानाच्च्युत्वा नियमतः सङ्ख्यातवर्षायुष्केषु मनुष्येष्वेव जायन्ते, नैकेन्द्रियेषु नापि तिर्यक्ष्विति भावः २०२ ॥ ७५ ॥ ७६ ॥ इदानीं 'जत्तो आगई एसिं'ति त्र्युत्तरद्विशततमं द्वारमाह—

**परिणामविसुद्धीए देवाउयकम्मबंधजोगाए। पंचिंदियाउ गच्छे नरतिरिया सेसपडिसेहो ॥७७॥**
**आईसाणा कप्पा उववाओ होइ देवदेवीणं। तत्तो परं तु नियमा देवीणं नत्थि उववाओ ॥७८॥**

परिणमनं परिणामो—मानसिको व्यापारविशेषः, स च द्विधा—विशुद्धोऽविशुद्धश्च, तत्र यो विशुद्धः स देवगतिकारणमिति तत्प्रतिपादनार्थं विशुद्धिग्रहणं, परिणामस्य विशुद्धिः परिणामविशुद्धिः तया, प्रशस्तेन मानसव्यापारेणेत्यर्थः, एतेन शुभाशुभगत्यवाप्तौ मनोव्यापारस्यैव प्राधान्यमाह, सापि च परिणामविशुद्धिः काऽप्युत्कर्षं प्राप्ता मुक्तिपदस्यैव प्रापिका, अतस्तन्निवृत्त्यर्थमाह—देवायुःकर्मबन्धनयोग्यया हेतुभूतया पञ्चेन्द्रियाः, तुशब्द एवकारार्थः पञ्चेन्द्रिया एव नैकेन्द्रियद्वीन्द्रियादय इत्यर्थः, नरा—मनुष्यास्तिर्यञ्चश्च देवेषु मध्ये गच्छन्ति, शेषाणां तु सुरनारकाणां देवगतिगमने प्रतिषेधो ज्ञातव्यः, न खलु देवा नारका वा स्वायुःक्षयेऽनन्तरं देवत्वेनोत्पद्यन्त इति ॥ ७७ ॥ सम्प्रति प्रसंगतो देवदेवीनामुत्पत्तिस्थानमाह—'**आईसाणे**'त्यादि, आ ईशानात्—ईशानकल्पमभिव्याप्य, किमुक्तं भवति ?—भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेषु देवानां देवीनां चोपपातो—जन्म भवति, ततः—ईशानात्परमूर्द्ध्वं सनत्कुमारादिषु देवीनामुपपातो नास्ति, किन्तु देवानामेव केवलानां, केवलं सनत्कुमारादिदेवानां रतामिलाषे सति देव्यः खल्वपरिगृहीताः सौधर्मादीशानाच्च सहस्रारं यावद्गच्छन्ति न परत इति, तथा अच्युतात्परतः सुराणामपि गमागमौ न स्तः, तत्राधस्तनानामूर्द्ध्वं शक्त्यभावात्, उपरितनानां त्विहागमने प्रयोजनाभावात्, ग्रैवेयकानुत्तरसुरा हि जिनजन्ममहिमादिष्वपि नात्रागच्छन्ति, किन्तु स्वस्थानस्था एव भक्तिमातन्वते, संशयप्रश्ने चावधिज्ञानतो भगवत्प्रयुक्तानि मनोद्रव्याणि साक्षाद्वेत्य तदाकारान्यथानुपपत्त्या जिज्ञासितमर्थं निश्चिन्वन्ति, न चान्यत्प्रयोजनं, तन्न तेषामिहागम इति २०३ ॥ ७८ ॥ सम्प्रति '**विरहो सिद्धिगईए**'त्ति चतुरुत्तरद्विशततमं द्वारमाह—

एक्कसमओ जहन्नो उक्कोसेणं तु जाव छम्मासा । विरहो सिद्धिगईए उवट्टणवज्जिया नियमा ॥७९॥

एकः समयो जघन्यतः सिद्धिगतौ विरहः—अन्तरं भवति, उत्कर्षतस्तु यावत् षण्मासाः, सा च सिद्धिगतिर्नियमात्—निश्चयेनोद्वर्तनवर्जिता, न खलु सिद्धास्ततः कदाचनाप्युद्वर्तन्ते, तद्धेतूनां कर्मणां निर्मूलमुन्मूलितत्वात्, उक्तं च—"दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" २०४ ॥ ७९ ॥ सम्प्रति 'जीवाणाहारगहणऊसास'त्ति पञ्चोत्तरद्विशततमं द्वारमाह—

सरिरेणोयाहारो तयाय फासेण रोमआहारो । पक्खेवाहारो पुण कावलिओ होइ नायव्वो ॥८०॥
ओयाहारा जीवा सव्वे अपजत्तगा मुणेयव्वा । पज्जत्तगा य लोमे पक्खेवे हुंति भइयव्वा ॥ ८१ ॥
रोमाहारा एगिंदिया य नेरइयसुरगणा चेव । सेसाणं आहारो रोमे पक्खेवओ चेव ॥८२॥ ओयाहारा मणभक्खिणो य सव्वेऽवि सुरगणा होंति । सेसा हवंति जीवा लोमाहारा मुणेयव्वा ॥ ८३ ॥
अपज्जत्ताण सुराणऽणाभोगनिवत्तिओ य आहारो । पज्जत्ताणं मणभक्खणेण आभोगनिम्माओ ॥ ८४ ॥ जस्स जइ सागराइं ठिइ तस्स य तेत्तिएहिं पक्खेहिं । ऊसासो देवाणं वाससहस्सेहिं आहारो ॥ ८५ ॥ दसवाससहस्साइं जहन्नमाऊ धरंति जे देवा । तेसिं चउत्थाहारो सत्तहिं थोवेहिं ऊसासो ॥ ८६ ॥ दसवाससहस्साइं समयाई जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता आहारूसास सेसाणं ॥ ८७ ॥

'सरीरे'त्यादिगाथाष्टकं, शरीरेणैव केवलेन य आहारः स ओजाहारः, एतदुक्तं भवति—यद्यप्यौदारिकवैक्रियाहारकतैजसकार्मणभेदतः शरीरं पञ्चधा तथाऽपीह तैजसेन तत्सहचारिणा कार्मणेन च शरीरेण पूर्वशरीरत्यागे विग्रहेणाविग्रहेण चोत्पत्तिदेशं प्राप्तः सन् जन्तुर्यत्प्रथममौदारिकादिशरीरयोग्यान् पुद्गलानाहारयति यच्च द्वितीयादिसमयेष्वप्यौदारिकादिमिश्रेणाहारयति यावच्छरीरनिष्पत्तिः एप सर्वोऽप्योजआहारः, ओजसा—तैजसशरीरेणाहार ओजआहारः, सकारवर्णलोपादोजाहारो वा, यद्वा ओजः—स्वजन्मस्थानोचितः शुक्रानुविद्धशोणितादिपुद्गलसङ्घातस्तस्याहार ओजाहारः, तथा त्वचा—त्वगिन्द्रियेण यः स्पर्शस्तेन य आहारः शरीरोपष्टम्भकानां शिशिरप्रावृट्कालादिभाविनां शीतजलादिपुद्गलानां ग्रहणं स लोममिः—लोमरन्ध्रैराहारः प्रचुरतरमूत्राद्यभिव्यङ्ग्यो लोमाहारः, यः पुनराहारः कावलिकः—कवलैर्निष्पन्नो भवति स प्रक्षेपाहारो ज्ञातव्यः, प्रक्षेपणं—मुखे प्रवेशनं प्रक्षेपः तेनौदनादेराहारः प्रक्षेपाहारः, अथवा प्रक्षिप्यत इति प्रक्षेपः—ओदनकवलादिस्तस्याहारः प्रक्षेपाहारः ॥ ८० ॥ अथ यस्यामवस्थायां जीवानां य आहारस्तदाह—'ओयाहारे'त्यादि, ओजः—उत्पत्तिदेशे स्वशरीरयोग्यः पुद्गलसमूहस्तदाहारयन्तीत्योजआहाराः यद्वा ओजः—तैजसशरीरं तेनाहारो येषां ते ओजआहारा जीवाः सर्वेऽप्येकेन्द्रियादयः पञ्चेन्द्रियान्ता अपर्याप्ता मन्तव्याः, अपर्याप्तत्वं च शरीरपर्याप्तिमपेक्ष्य नाहारपर्याप्तिं, तदपर्याप्तानामनाहारकत्वात्, सर्वाभिः स्वयोग्यपर्याप्तिभिरपर्याप्ता ओजआहारा इत्यन्ये, तथा पर्याप्ताः—शरीरपर्याप्त्या पर्याप्ताः मतान्तरेण सर्वाभिः स्वयोग्यपर्याप्तिभिः पर्याप्ताः सर्वे जीवा लोम्नि—लोमाहारे नियमतो भवन्ति, पर्याप्तानां सर्वेषामपि जीवानां सर्वदापि लोमाहारो भवत्येवेति भावः, तथा च घर्माद्यभितप्तारछायया शीतलानिलसलिलस्पर्शनेन वा प्रीयन्ते प्राणिनः, प्रक्षेपे—प्रक्षेपाहारे भवन्ति भजनीयाः—यदैव कवलप्रक्षेपं कुर्वन्ति तदैव प्रक्षेपाहारो नान्यदा, लोमाहारता तु पवनादिस्पर्शनात् सदैवेति ॥ ८१ ॥ अथैकेन्द्रियादीनां पृथगाहारनैय-

त्यमाह—'रोमे'त्यादि, शरीरपर्याप्त्या पर्याप्ताः मतान्तरेण सर्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा
एव ज्ञातव्याः, न पुनः प्रक्षेपाहाराः, तत्र एकेन्द्रियाणां प्रक्षेपाहाराभावो मुखाभावात्, नैरयिकदेवानां तु वैक्रियशरीरतया तथास्वभा-
वात्, उक्तं च—"एगिंदियदेवाणं नेरइयाणं च नत्थि पक्खेवो । सेसाणं जीवाणं संसारत्थाण पक्खेवो ॥ १ ॥" [ एकेन्द्रियदेवानां
नैरयिकाणां च नास्ति प्रक्षेपः । शेषाणां जीवानां संसारस्थानां प्रक्षेपः ॥ १ ॥ ] शेषाणां—द्वित्रिचतुरिन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां
मनुष्याणां चाहारो लोम्नि—लोमविषयः प्रक्षेपतश्च भवति, उभयरूपस्याप्याहारस्य तेषां सम्भवात् ॥ ८२ ॥ अथ देवानामाहारविषयं
विशेषमाह—'ओये'त्यादि, सर्वेऽपि भवनपत्यादयः सुरगणा अपर्याप्तावस्थायामोजआहाराः, पर्याप्तावस्थायां मनोभक्षिणो—मनसा
चिन्तितोपनतान् सकलेन्द्रियाह्लादकमनोज्ञपुद्गलान् भक्षयन्तीव भक्षयन्ति—वैक्रियशरीरेणात्मसात्कुर्वतीत्येवंशीला मनोभक्षिणः, इयमत्र
भावना—यथा शीतपुद्गलाः शीतयोनिकस्य प्राणिनः सुखित्वायोपकल्पन्ते उष्णाः पुद्गला वा उष्णयोनिकस्य तथा देवैरपि मनसाऽभ्यव-
ह्रियमाणाः पुद्गलास्तेषां तृप्तये परमसन्तोषाय चोपकल्पन्ते, तत आहारविषयाभिलाषनिवृत्तिर्भवतीति, शेषाः—सुरव्यतिरिक्ता जीवा नैर-
यिकादयोऽपर्याप्तावस्थायामोजआहाराः, पर्याप्तास्तु लोमाहारा ज्ञातव्याः, न पुनर्मनोभक्षिणः, मनोभक्षणलक्षणो ह्याहारः स उच्यते
ये तथाविधशक्तिवशान्मनसा स्वशरीरपुष्टिजनकाः पुद्गला अभ्यवह्रियन्ते यदभ्यवहरणानन्तरं च तृप्तिपूर्वः परमसन्तोष उपजायते, न
चैतन्नैरयिकादीनामस्ति प्रतिकूलकर्मोदयवशतस्तेषां तथारूपशक्त्यभावात् ॥ ८३ ॥ पुनरत्रैव विशेषमाह—'अपज्जे'त्यादि, आभोगनमा-
भोगः—आलोचनमभिसन्धिरित्यर्थः आभोगेन निर्वर्तितः—उत्पादित आभोगनिर्वर्तितः आहारयामीतीच्छापूर्वं निर्मापित इतियावत्, तद्वि-
परीतोऽनाभोगनिर्वर्तितः, आहारयामीति विशिष्टेच्छामन्तरेण निष्पाद्यते यः प्रावृट्काले प्रचुरतरमूत्राद्यभिव्यङ्ग्यशीतपुद्गलाद्याहारवत् सोऽ-

नाभोगनिर्वर्तित इति भावः, अत्रापर्याप्तकानां सुराणामोजआहारोऽनाभोगनिर्वर्तितः—अनाभोगसम्पादितो भवति, मनःपर्याप्तेरभावात् आभोगासम्भवात्, पर्याप्तानां पुनर्यो मनोभक्षणेन—मनसा सञ्चिन्त्य विशिष्टपुद्गलाभ्यवहरणेनाहारः स आभोगनिर्मितः—आभोगसम्पादितो भवति ॥ ८४ ॥ सम्प्रति सागरोपमसङ्ख्यया आहारोच्छ्वासयोः कालमानमाह—'जस्से'त्यादि, देवानां मध्ये यस्य देवस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावद्भिः पक्षैरुच्छ्वासः—शरीरान्तर्गतप्राणपवनोत्सर्पणं प्रवर्तते, तावद्भिश्च वर्षसहस्रैराहारः—आहाराभिलापः, यथा—यस्य देवस्यैकं सागरोपमं स्थितिस्तस्यैकस्मिन् पक्षेऽतिक्रान्ते उच्छ्वासः एकस्मिन् वर्षसहस्रे आहारः, यस्य द्वे सागरोपमे तस्य पक्षद्वये उच्छ्वासो वर्षसहस्रद्वये आहारः, यावत् त्रयस्त्रिंशत्सागरोपमाणि यस्य स्थितिस्तस्य त्रयस्त्रिंशत्पक्षातिक्रमे उच्छ्वासः त्रयस्त्रिंशद्वर्षसहस्रातिक्रमे आहारः, देवेषु हि यो यथा महायुः स तथा सुखी, सुखितानां च यथोत्तरं महानुच्छ्वासनिःश्वासक्रियाविरहकालः, दुःखरूपत्वादुच्छ्वासनिःश्वासक्रियायाः, ततो यथा यथाऽऽयुषः सागरोपमवृद्धिस्तथा तथोच्छ्वासक्रियाविरहप्रमाणस्यापि पक्षवृद्धिः, आहारक्रियायास्तु ततोऽप्यतिदुःखरूपत्वाद्वर्षसहस्रवृद्धिः ॥ ८५ ॥ अथ जघन्यायुषामाहारोच्छ्वासयोः कालमानमाह—'दसे'त्यादि, ये देवा—भवनपतयो व्यन्तराश्च जघन्यं दशवर्षसहस्राण्यायुर्धरन्ति तेषामाहारः—आहाराभिलापश्चतुर्थाद्—अहोरात्राद्उत्पद्यते, सति चाहाराभिलापे मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणैव कायेनाहारतया परिणमन्ति, तथा तेषामेव—दशवर्षसहस्रधारिणां देवानां सप्तभिः स्तोकैः—आधिव्याधिरहितमनुष्यसत्कोच्छ्वासनिःश्वाससप्तकप्रमाणैः कालविशेषैरुच्छ्वासः, सप्तसप्तस्तोकातिक्रमे एवोच्छ्वसन्ति, शेषकालं च तदावाधया रहिताः स्तिमिता एव तिष्ठन्तीत्यर्थः ॥ ८६ ॥ अथ वर्षसहस्रदशकस्थितेरूर्ध्वं यावत्सागरोपमं पूर्णमेतावत्यन्तराले आहारोच्छ्वासकालमानमाह—'दसवे'त्यादि येषामुक्तेभ्यः शेषाणां देवानां दशवर्षसहस्राणि समयादीनि—समयावलिकामुहूर्तदिवसमाससंवत्सरयुगाद्य-

धिकानि यावत्किञ्चिदूनं सागरोपममायुःस्थितिः तेषां दिवसपृथक्त्वादाहारो मुहूर्तपृथक्त्वादुच्छ्वासश्च, सूत्रे च—'पुहुत्ते'ति एकवचननिर्देशो जात्यपेक्षः, ततोऽयं भावार्थः—दशवर्षसहस्रेभ्य ऊर्द्ध्वं समयादिवृद्धौ यथाक्रममाहारोच्छ्वासयोर्दिवसमुहूर्तपृथक्त्वानि तावद्वर्धनीयानि यावत्परिपूर्णसागरोपमायुषां पक्षादुच्छ्वासो वर्षसहस्रादाहार इति, तथा एकेन्द्रियाणामाहाराभिलाषः सततं, विकलेन्द्रियनारकाणामुत्कर्षतोऽन्तर्मुहूर्तात् पञ्चेन्द्रियतिरश्चामहोरात्रद्वयातिक्रमात् मनुष्याणां चाहोरात्रत्रयातिक्रमादिति, उच्छ्वासोऽपि नारकाणां निरन्तरं एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्नराणां पुनरनियतमात्रः २०५ ॥ ८७ ॥ सम्प्रति **'तिन्नि सया तेवट्ठा पासंडीणं'**ति षडुत्तरद्विशततमं द्वारमाह—

**असीइसयं किरियाणं १८० अकिरियवाईण होइ चुलसीई ८४ । अन्नाणिय सत्तट्ठी ६७ वेणइयाणं च बत्तीसं ३२ ॥ ८८ ॥ जीवाइनवपयाणं अहो ठविज्जंति सयपरयसद्दा । तेसिंपि अहो निच्चानिच्चा सद्दा ठविज्जन्ति ॥ ८९ ॥ काल १ स्सहाव २ नियई ३ ईसर ४ अप्पत्ति ५ पंचवि पयाइं । निच्चानिच्चाणमहो अणुक्कमेणं ठविज्जंति ॥ ९० ॥ जीवो इह अत्थि सओ निच्चो कालाउ इय पढमभंगो । बीओ य अत्थि जीवो सओ अनिच्चो य कालाओ ॥ ९१ ॥ एवं परओऽवि हु दोन्नि भंगया पुव्वदुगजुया चउरो । लद्धा कालेणेवं सहावपमुहाऽवि पावंति ॥ ९२ ॥ पंचहिवि चउक्केहिं पत्ता जीवेण वीसई भंगा । एवमजीवाईहिवि य किरियावाई असिइसयं ॥ ९३ ॥ इह जीवाइपयाइं पुन्नं पावं विणा ठविज्जन्ति । तेसिमहोभायम्मि ठविज्जए सपरसद्ददुगं ॥ ९४ ॥**

तस्सवि अहो लिहिज्जइ काल १ जहिच्छा य २ पयदुगसमेयं। नियइ १ स्सहाव २ ईसर ३ अप्पत्ति ४ इमं पयचउक्कं ॥ ९५ ॥ पढमे भंगे जीवो नत्थि सओ कालओ तयणु वीए। परओऽवि नत्थि जीवो काला इय भंगगा दोन्नि ॥ ९६ ॥ एव जइच्छाईहिवि पएहिं भंगदुगं दुगं पत्तं। मिलियावि ते दुवालस संपत्ता जीवतत्तेणं ॥ ९७ ॥ एवमजीवाईहिवि पत्ता जाया तओ उ चुलसीई। भेया अकिरियवाईण हुंति इमे सबसंखाए ॥ ९८ ॥ संत १ मसंतं २ संतासंत ३ मवत्तव ४ सयअवत्तवं ५। असयअवत्तवं ६ सयवत्तवं ७ (सयसयवत्तवं) च सत्त पया ॥ ९९ ॥ जीवाइनवपयाणं अहोकमेणं इमाइं ठविऊणं। जह कीरइ अहिलावो तह साहिज्जइ निसामेह ॥ १२०० ॥ संतो जीवो को जाणइ ? अहवा किं व तेण नाएणं?। सेसपएहिवि भंगा इय जाया सत्त जीवस्स ॥१॥ एवमजीवाईणऽवि पत्तेयं सत्त मिलिय तेसट्ठी। तह अन्नेऽवि हु भंगा चत्तारि इमे उ इह हुंति ॥ २ ॥ संती भावुप्पत्ती को जाणइ किंच तीऍ नायाए?। एवमसंती भावुप्पत्ती सदसत्तिया चेव ॥ ३ ॥ तह अवत्तवावि हु भावुप्पत्ती इमेहिं मिलिएहिं। भंगाण सत्तसट्ठी जाया अन्नाणियाण इमा ॥ ४ ॥ सुर १ निवइ २ जइ ३ न्नाई ४ थविरा ५ वम ६ माइ ७ पिइसु ८ एएसिं। मण १ वयण २ काय ३ दाणेहिं ४ चउविहो कीरए विणओ ॥ ५ ॥ अट्ठवि चउक्कगुणिया वत्तीस हवंति वेणइयभेया। सवेहिं पिंडिएहिं तिन्नि सया हुंति तेसट्ठा ॥ ६ ॥

'असीई'त्यादिगाथा एकोनविंशतिः, न कर्तारमन्तरेण क्रिया—पुण्यवन्धादिलक्षणा सम्भवति, तत एवं परिज्ञाय तां क्रियामात्मसम-
वायिनीं वदन्ति तच्छीलाश्च ये ते क्रियावादिनः—आत्माद्यस्तित्वप्रतिपत्तिलक्षणाः तेषामशीत्यधिकं शतं भवति, वक्ष्यमाणप्रकारेण अशी-
त्यधिकशतसङ्ख्यास्ते इति भावः, तथा न कस्यचित्प्रतिक्षणमवस्थितस्य पदार्थस्य क्रिया सम्भवति उत्पत्त्यनन्तरमेव विनाशादित्येवं ये वद-
न्ति तेऽक्रियावादिनः—आत्मादिनास्तित्वप्रतिपत्तिलक्षणाः, तथा चाहुः—"क्षणिकाः सर्वसंस्कारा, अस्थिराणां कुतः क्रिया ? । भूतिर्येषां
क्रिया सैव, कारकं सैव चोच्यते ॥ १ ॥" तेषां चतुरशीतिर्भवति, तथा कुत्सितं ज्ञानमज्ञानं तदेषामस्ति तेन वा चरन्तीत्यज्ञानिकाः—
असंचिन्त्यकृतवन्धवैफल्यादिप्रतिपादनपराः, तथाहि ते एवमाहुः—न ज्ञानं श्रेयः तस्मिन् सति परस्परं विवादयोगेन चित्तकालुष्यादि-
भावतो दीर्घतरसंसारप्रवृत्तेः, तथाहि—केनचित्पुरुषेणान्यथा देशिते वस्तुनि विवक्षितो ज्ञानी ज्ञानगर्वोध्मातमानसस्तस्योपरि कलुषचित्तः
तेन सह विवादमारभते, विवादे च क्रियमाणे तीव्रतीव्रतरचित्तकालुष्यभावतोऽहङ्कारतश्च प्रभूतप्रभूततराशुभकर्मबन्धसम्भवः, तस्माच्च दीर्घ-
दीर्घतरसंसारः, तथा चोक्तम्—'अन्नेण अन्नहा देसियंमि भावंमि नाणगव्वेणं । कुणइ विवायं कलुसियचित्तो तत्तो य से वंधो ॥ १ ॥"
[ अन्येनान्यथा देशिते भावे ज्ञानगर्वेण । करोति विवादं कलुषितचित्तस्ततश्च तस्य बन्धः ॥ १ ॥ ] यदा पुनरज्ञानमाश्रीयते तदा नाह-
ङ्कारसम्भवो नापि परस्योपरि चित्तकालुष्यभावः ततो न कर्मवन्धसम्भवः, अपिच—यः सञ्चिन्त्य क्रियते कर्मवन्धः स दारुणविपाकः
अत एवावश्यंवेद्यः, तस्य तीव्राध्यवसायतो निष्पन्नत्वात्, यस्तु मनोव्यापारमन्तरेण कायवचनकर्मवृत्तिमात्रतो विधीयते न तत्र मनसोऽभि-
निवेशः ततो नासाववश्यंवेद्यो नापि तस्य दारुणो विपाकः, केवलं अतिशुष्कसुधापङ्कधवलितभित्तिगतरजोराजिरिव स कर्मसङ्गः स्वत एव
शुभाध्यवसायपवनविक्षोभितोऽपयाति, मनसोऽभिनिवेशाभावश्चाज्ञानाभ्युपगमे समुपजायते, ज्ञाने सत्यभिनिवेशसम्भवात्, तस्मादज्ञानमेव

मुमुक्षुणा—मुक्तिमार्गप्रवृत्तेनाभ्युपगन्तव्यं [ग्रन्थाग्रं ३००] न ज्ञानमिति, किञ्च—भवेद्युक्तो ज्ञानस्याभ्युपगमो यदि ज्ञानस्य निश्चयः कर्तुं पार्यते, परं यावता स एव न पार्यते, तथाहि—सर्वेऽपि दर्शनिनः परस्परं भिन्नमेव ज्ञानं प्रतिपन्नाः, ततो न निश्चयः कर्तुं शक्यते—किमिदं ज्ञानं सम्यगुत नेदमिति, यदुक्तम्—'सव्वे य मिहो भिन्नं नाणं इह नाणिणो जओ बिंति। तीरइ तओ न काउं विणिच्छओ एवमेयन्ति ॥ १ ॥" [सर्वे च मिथो भिन्नं ज्ञानं इह ज्ञानिनो यतो ब्रुवते, शक्यते ततो न कर्तुं विनिश्चय एवमेतदिति ॥ १ ॥] तेषामज्ञानिकानां सप्तषष्टिर्भेदाः, तथा विनयेन चरन्तीति वैनयिकाः—एते चानवधृतलिङ्गाचारशास्त्राः केवलं विनयप्रतिपत्तिप्रधानाः, एषां च द्वात्रिंशद्भेदा इति ॥ ८८ ॥ अथ 'यथोद्देशं निर्देश' इति न्यायात् क्रियावादिनामशीत्युत्तरशतसङ्ख्याभङ्गानयनोपायमाह—'जीवे'त्यादिगाथाद्वयं, जीवादीनि नव पदानि—जीवअजीवआश्रवबन्धसंवरनिर्जरापुण्यपापमोक्षलक्षणान्नव पदार्थान् परिपाट्या पट्टिकादौ विरचय्य तेषामधः प्रत्येकं स्वतः परत इति शब्दौ स्थाप्येते, तयोरपि—स्वतः परत इति शब्दयोरधः प्रत्येकं नित्यानित्यशब्दौ स्थाप्येते, ततोऽपि—नित्यानित्यशब्दयोरधस्तादनुक्रमेण—परिपाट्या कालस्वभावनियतीश्वरात्मस्वरूपाणि पञ्च पदानि स्थाप्यन्ते ॥ ८९ ॥ ९० ॥ अथैतेषामेव भेदानामभिलापमाह—'जीवो' इत्यादिगाथात्रयं, इह अस्ति जीवः स्वतो नित्यः कालतः प्रथमो भङ्गो—विकल्पः, अस्य च विकल्पस्यायमर्थः—इह—अस्मिन् जगति अस्ति—विद्यते खल्वयं जीवः—आत्मा स्वतः—स्वेन रूपेण, न तु परोपाध्यपेक्षया, ह्रस्वत्वदीर्घत्वे इव, नित्यः—शाश्वतो, न क्षणिकः, पूर्वोत्तरकालयोरवस्थितत्वात्, कालवादिनो मतेन, कालवादिनश्च ते मन्तव्या ये कालकृतमेव सर्वं जगन्मन्यन्ते, तथा च ते एवमाहुः—न कालमन्तरेण सहकारचम्पकाशोकादिकुसुमोद्गमफलानुबन्धादयो हिमकणानुषक्तशीतप्रपातनक्षत्रगर्भाधानवर्षादयो वा ऋतुविभागसम्पादिता बालकुमारयौवनवलिपलितागमादयो वा अवस्थाविशेषा घटन्ते, प्रतिनियतकालविभाग एव तेषामुपलभ्यमान-

त्वात्, अन्यथा सर्वमव्यवस्थया भवेत्, न चैतद् दृष्टमिष्टं वा, अपिच—मुद्गादिपक्तिरपि न कालमन्तरेण लोके भवन्ती दृश्यते, किन्तु कालक्रमेण, अन्यथा स्थालीन्धनादिसामग्रीसम्पर्कसम्भवे प्रथमसमयेऽपि मुद्गादिपक्तेर्भावप्रसङ्गः, न च तद्भवति, तस्माद्यत्कृतकं तत्सर्वं कालकृतमिति, यदाहुः—'न कालव्यतिरेकेण, गर्भबालशुभादिकम् । यत्किंचिज्जायते लोके, तदसौ कारणं किल ॥ १ ॥ किंच कालादृते नैव, मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिसंनिधानेऽपि, ततः कालादसौ मता ॥ २ ॥" द्वितीयश्च भङ्गोऽयं—अस्ति जीवः स्वतोऽनित्यः कालतः, एवमुक्तप्रकारेण परतोऽपि द्वौ भङ्गौ कर्तव्यौ, यथा—अस्ति जीवः परतो नित्यः कालतः, अस्ति जीवः परतोऽनित्यः कालतः, सर्वेषामपि हि पदार्थानां परपदार्थस्वरूपापेक्षया स्वस्वरूपपरिच्छेदः, यथा दीर्घत्वापेक्षया ह्रस्वत्वस्य ह्रस्वत्वापेक्षया च दीर्घत्वस्य, इत्येवमेवात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुन्यात्मबुद्धिः प्रवर्तत इति, अतो यदात्मनः स्वरूपं तत्परत एवावधार्यते न स्वतः, पूर्वेण च स्वत एव इति पदलब्धेन भङ्गद्विकेन युक्तावेतौ भङ्गौ चत्वारो भवन्ति, ते च कालपदेन लब्धाः, एवमनेन प्रकारेण स्वभावप्रमुखा अपि—स्वभावनियतीश्वरात्मपदान्यपि प्रत्येकं चतुरश्चतुरो विकल्पान् प्राप्नुवन्ति, तथाहि—अस्ति जीवः स्वतो नित्यः स्वभावतः १ अस्ति जीवः स्वतोऽनित्यः स्वभावतः २ अस्ति जीवः परतो नित्यः स्वभावतः ३ अस्ति जीवः परतोऽनित्यः स्वभावतः ४, ते हि स्वभाववादिन एवमाहुः—इह सर्वे भावाः स्वभाववशादुपजायन्ते, तथाहि—मृदः कुम्भो भवति न पटादिः तन्तुभ्योऽपि पट उत्पद्यते न कुम्भादिः, एतच्च प्रतिनियतं भवनं तथास्वभावतामन्तरेण न घटते, तस्मात्सकलमिदं स्वभावकृतमवसेयं, अन्यच्च—आस्तामन्यत्कार्यजातं, इह मुद्गादिपक्तिरपि न स्वभावमन्तरेण भवितुमर्हति, तथाहि—स्थालीन्धनकालादिसमग्रसामग्रीसम्भवेऽपि न काङ्कटुकमुद्गानां पक्तिरुपलभ्यते, तस्माद्यद्भावे भवति यदभावे च न भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति

स्वभावकृता मुद्गपक्तिरप्येष्टव्या, ततः सकलमेवेदं वस्तुजातं स्वभावहेतुकमवसेयमिति । तथा अस्ति जीवः स्वतो नित्यो नियतितः १ तथाऽस्ति जीवः स्वतोऽनित्यो नियतितः २ अस्ति जीवः परतो नित्यो नियतितः ३ अस्ति जीवः परतोऽनित्यो नियतितः ४, नियतिवादिनो ह्येवमाहुः—नियतिर्नाम तत्त्वान्तरमस्ति यद्वशादेते भावाः सर्वेऽपि नियतेनैव रूपेण प्रादुर्भवन्ति, नान्यथा, तथाहि—यद्यदा यतो भवति तत्तदा तत एव नियतेनैव रूपेण भवदुपलभ्यते, अन्यथा कार्यकारणभावव्यवस्था प्रतिनियतरूपव्यवस्था च न भवेत्, नियामकाभावात्, तत एवं कार्यनैयत्यतः प्रतीयमानामेनां नियतिं को नाम निराकर्तुमलं ?, तथा चोक्तम्—"नियतेनैव रूपेण, सर्वे भावा भवन्ति यत् । ततो नियतिजा ह्येते, तत्स्वरूपानुभेदतः ॥ १ ॥ यद्यदैव यतो यावत्, तत्तदैव ततस्तथा । नियतं जायते न्यायात्, क एनां बाधितुं क्षमः ? ॥ २ ॥" तथा अस्ति जीवः स्वतो नित्य ईश्वरतः १ अस्ति जीवः स्वतोऽनित्य ईश्वरतः २ अस्ति जीवः परतो नित्य ईश्वरतः ३ अस्ति जीवः परतोऽनित्य ईश्वरतः ४, ईश्वरवादिनो हि सर्वं जगदीश्वरकृतं मन्यन्ते, ईश्वरं च सहजसिद्धज्ञानवैराग्यधर्मैश्वर्यरूपचतुष्टयं प्राणिनां च स्वर्गापवर्गयोः प्रेरकमिति, तदुक्तम्—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥ अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ॥ २ ॥" इत्यादि । तथा अस्ति जीवः स्वतो नित्य आत्मनः १ अस्ति जीवः स्वतोऽनित्य आत्मनः २ अस्ति जीवः परतो नित्य आत्मनः ३ अस्ति जीवः परतोऽनित्य आत्मनः ४, आत्मवेदिनो हि विश्वपरिणतिरूपमात्मानमेवैकं प्रतिपन्नाः, यत उक्तम्—'एक एव हि भूतात्मा, देहे देहे व्यवस्थितः । एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥ तथा "पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्य"मित्यादि, तदेवं पञ्चभिरपि चतुष्कैर्मिलितैर्विंशतिर्भङ्गा जाताः, एते च जीवपदेन प्राप्ताः, एवमजीवादिभिरप्यष्टभिः पदैः प्रत्येकं विंशतिर्विकल्पाः प्राप्यन्ते,

यथा अस्त्यजीवः स्वतो नित्यः कालत इत्यादि सर्वं भावनीयं, इत्यतो विंशतिर्नवभिर्गुणिता शतमशीत्युत्तरं क्रियावादिनां भवति ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ इदानीमक्रियावादिनां चतुरशीतिसङ्ख्यभङ्गानयनोपायमाह—'इहे'त्यादिगाथाद्वयं, इह अक्रियावादिभेदानयनप्रक्रमे जीवादीनि पूर्वोक्तानि पुण्यपापवर्जितानि सप्त पदानि परिपाट्या पट्टिकादौ स्थाप्यन्ते, तेषां च जीवादिपदानामधोभागे प्रत्येकं स्वपरशब्दद्विकं स्थाप्यते, स्वतः परत इति द्वे पदे न्यस्येते इत्यर्थः, असत्त्वादात्मनो नित्यानित्यविकल्पौ न स्तः, तद्धर्मिसिद्ध्यापत्तेः, तस्यापि च—स्वपर-शब्दद्विकस्याधस्तात्कालयदृच्छारूपपदद्वयसमेतमेतन्नियतिस्वभावेश्वरात्मलक्षणं पदचतुष्कं लिख्यते, कालयदृच्छानियतिस्वभावेश्वरात्म-स्वरूपाणि षट् पदानि स्थाप्यन्त इत्यर्थः, इह यदृच्छावादिनः सर्वेऽप्यक्रियावादिन एव, न केचिदपि क्रियावादिनः, ततः प्राग्यदृच्छा नोपन्यस्ता ॥ ९४ ॥ ९५ ॥ अथ विकल्पाभिलापमाह—'पढमे'त्यादिगाथात्रयं, नास्ति जीवः स्वतः कालत इति प्रथमो भङ्गः, तदनु नास्ति जीवः परतः कालत इति द्वितीयो भङ्गः, एतौ द्वौ च भङ्गौ कालेन लब्धौ, एवं यदृच्छादिभिरपि पञ्चभिः पदैः प्रत्येकं द्वौ द्वौ विकल्पौ प्राप्येते, सर्वेऽपि मिलिता द्वादश, अमीषां च विकल्पानामर्थः प्राग्वद्भावनीयः, नवरं यदृच्छात इति—यदृच्छावादिनां मते, अथ के ते यदृच्छावादिनः ?, उच्यते, इह ये भावानां संतानापेक्षया न प्रतिनियतं कार्यकारणभावमिच्छन्ति किंतु यदृच्छया ते यदृ-च्छावादिनः, तथा च एत एवमाहुः—न खलु प्रतिनियतो वस्तूनां कार्यकारणभावः, तथाप्रमाणेनाग्रहणात्, तथाहि—शालूकादपि शालूको जायते गोमयादपि, अग्नेरप्यग्निर्जायते अरणिकाष्ठादपि, जायते धूमादपि धूमोऽग्नीन्धनसंपर्कादपि, कन्दादपि जायते कदली वीजादपि, वटादयोऽपि वीजादुपजायन्ते शाखैकदेशादपि, ततो न प्रतिनियतः कचिदपि कार्यकारणभाव इति यदृच्छातः कचिदपि किंचिद्भवतीति प्रतिपत्तव्यं, न खल्वन्यथा वस्तुसद्भावं पश्यन्तोऽन्यथाऽऽत्मानं प्रेक्षावन्तः परिक्लेशयन्ति, एते च द्वादश विकल्पा जीव-

तत्त्वेन—जीवपदेन संप्राप्ता—लब्धाः, एवमजीवादिभिरपि षड्भिः पदैः प्रत्येकं द्वादश द्वादश विकल्पाः प्राप्ताः, ततो द्वादशभिः सप्त
गुणिता जाताश्चतुरशीतिः, सर्वसङ्ख्यया चाक्रियावादिनामेते भेदा भवंतीति ॥ ९६ ॥ ९७ ॥ ९८ ॥ इदानीमज्ञानिकानां सप्तषष्टिसङ्ख्य-
भेदानयनोपायमाह—'संते'त्यादिगाथाद्वयं, सत्त्वं १ असत्त्वं २ सदसत्त्वं ३ अवक्तव्यत्वं ४ सदवक्तव्यत्वं ५ असदवक्तव्यत्वं ६ सद-
सदवक्तव्यत्वं ७ चेति सप्त पदानि—सप्त भङ्गाः, तत्र सत्त्वं—स्वरूपेण विद्यमानत्वं, असत्त्वं—पररूपेणाविद्यमानत्वं, सदसत्त्वं—स्वपररूपाभ्यां
विद्यमानत्वाविद्यमानत्वं, तत्र यद्यपि सर्वं वस्तु स्वपररूपाभ्यां सर्वदैव स्वभावत एव सदसत् तथापि कचित् किञ्चित्कदाचिदुद्भूतं प्रमात्रा
विवक्ष्यते तत एवं त्रयो विकल्पा भवन्ति, तथा तदेव सत्त्वमसत्त्वं च यदा युगपदेकेन शब्देन वक्तुमिष्यते तदा तद्वाचकः शब्दः कोऽपि
न विद्यते इति अवक्तव्यत्वं, यदा त्वेको भागः सन्नपरश्चावक्तव्यो युगपद्विवक्ष्यते तदा सदवक्तव्यत्वं, यदा त्वेको भागोऽसन्नपरश्चावक्तव्यो
युगपद्विवक्ष्यते तदाऽसदवक्तव्यत्वं, यदा त्वेको भागः सन्नपरश्चासन् अपरश्चावक्तव्यस्तदा सदसदवक्तव्यत्वमिति। न चैतेभ्यः सप्तविकल्पे-
भ्योऽन्यो विकल्पः संभवति, सर्वस्यैतेष्वेव मध्येऽन्तर्भावात्, इह च घटमाश्रित्य किञ्चिद्भावना प्रदर्श्यते, तथाहि—ओष्ठग्रीवाकपालकुक्षि-
बुध्नादिभिः स्वपर्यायैः सद्भावेन विशेषितः कुम्भः कुम्भो भण्यते, सन् घट इति प्रथमो भङ्गो भवतीत्यर्थः १ तथा पटादिगतैस्त्वक्त्राणा-
दिभिः परपर्यायैरसद्भावेन विशेषितोऽकुम्भो भवति, सर्वस्यापि घटस्य परपर्यायैरसत्त्वविवक्षायामसन् घट इति द्वितीयो भङ्गो भवतीत्यर्थः
२ तथा एकस्मिन् देशे स्वपर्यायसत्त्वेन अन्यत्र तु देशे परपर्यायासत्त्वेन विवक्षितो घटः संश्चासंश्च भवति, घटोऽघटश्च भवतीत्यर्थः ३
तथा सर्वोऽपि घटः स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यां विशेषितो युगपद्वक्तुमिष्टोऽवक्तव्यो भवति, स्वपरपर्यायसत्त्वासत्त्वाभ्यामेकेन
केनाप्यसांकेतिकेन शब्देन सर्वस्यापि तस्य युगपद्वक्तुमशक्यत्वात् ४ तथा एकस्मिन् देशे स्वपर्यायैः सत्त्वेन विशेषितोऽन्यत्र तु देशे स्वप-

रोभयपर्यायैः सत्त्वासत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चावक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वादेशे चावक्तव्यत्वादिति ५ तथा एकदेशे परपर्यायैरसत्त्वेन विशेषितोऽन्यस्मिंस्तु देशे स्वपरपर्यायैः सत्त्वासत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भोऽसन्नवक्तव्यश्च भवति, अकुम्भोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्याकुम्भत्वात् देशे चावक्तव्यत्वादिति ६ तथा एकदेशे स्वपर्यायैः सत्त्वेन विशेषितः एकस्मिंस्तु देशे परपर्यायैरसत्त्वेन विशेषितोऽन्यस्मिंस्तु देशे स्वपरोभयपर्यायैः सत्त्वासत्त्वाभ्यां युगपदेकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चासंश्चावक्तव्यश्च भवति, घटोऽघटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वादेशेऽघटत्वाद्देशेऽवक्तव्यत्वादिति ७, एवं सप्तभेदो घटः, एवं पटादिरपि द्रष्टव्य एवेति, एतानि च सप्त पदानि जीवादीनां नवानां पदानां परिपाट्या पट्टिकादौ विन्यस्तानामधस्तात्क्रमेण प्रत्येकं स्थापयित्वा यथा—येन प्रकारेण क्रियतेऽभिलापस्तथा साहिष्यत इति—कथ्यते निशामयत—शृणुत, एतच्च शिष्याणामवहितत्वोत्पादनार्थमुक्तमिति ॥ ९९ ॥ १२०० ॥ तमेवाभिलापमाह—'संतो' इत्यादिगाथाद्वयं, सन् जीव इति को वेत्ति? किं वा तेन ज्ञातेनेति प्रथमो भङ्गः, अस्य चायमर्थः—न कस्यचिद्विशिष्टं ज्ञानमस्ति योऽतीन्द्रियमात्मानमवभोत्स्यते, न च तेन ज्ञातेनापि किञ्चित्फलमस्ति, तथाहि—यदि नित्यः सर्वगतोऽमूर्तो ज्ञानादिगुणोपेत एतद्गुणव्यतिरिक्तो वाऽऽत्मा ततः कतमस्य पुरुषार्थस्य सिद्धिरिति, तस्मादज्ञानमेव श्रेयः, एवं शेषैरप्यसदादिभिः षड्भिः पदैर्जीवभङ्गा भवन्ति, असन् जीवः को वेत्ति? किं वा तेन ज्ञातेनेत्यादि, इति जाता जीवपदस्य सप्त भङ्गाः, एवमजीवादीनामप्यष्टानां पदानां प्रत्येकं सप्त सप्त भङ्गा भवन्ति, सर्वेऽपि मिलितास्त्रिषष्टिः, तथाऽन्येऽपि—अमी वक्ष्यमाणाः हुशब्दस्यावधारणार्थत्वाच्चत्वार एव भङ्गा इह—अज्ञानिकप्ररूपणप्रक्रमे भवन्ति ॥ १ ॥ ॥ २ ॥ तानेवाह—'संती'त्यादिगाथाद्वयं, सती भावोत्पत्तिः को जानाति? किं वाऽनया ज्ञातया ? १ एवमसती भावोत्पत्तिः को

वेत्ति ? किं वाऽनया ज्ञातया ? २ सदसती भावोत्पत्तिः को वेत्ति ? किं वाऽनया ज्ञातया ? ३ अवक्तव्या भावोत्पत्तिः को वेत्ति ? किं वाऽनया ज्ञातया ? ४ एतेषां च भङ्गानामयं तात्पर्यार्थः—इह पदार्थस्योत्पत्तिः किं सतोऽसतः सदसतोऽवाच्यस्य वेति को जानाति ? ज्ञातेन वा न किञ्चिदपि प्रयोजनमिति, शेषविकल्पत्रयं तु उत्पत्त्युत्तरकालं पदार्थावयवापेक्षमतोऽत्र न संभवतीति नोक्तम्, एतैश्चतुर्भि- भंङ्गैर्मिलितैः त्रिषष्टिमध्ये प्रक्षिप्तैर्जाता एषा भङ्गकानां सप्तषष्टिरज्ञानिकानामिति ॥ ३ ॥ ४ ॥ इदानीं वैनयिकानां द्वात्रिंशद्भेदानाह— 'सुरे'त्यादिगाथाद्वयं, सुरा—देवाः नृपतयो—राजानः यतयो—मुनयः ज्ञातयः—स्वजनाः स्थविरा—वृद्धाः अवमा—अनुकम्पनीयाः कार्पटि- कादयः मातापितरौ प्रतीतौ एतेषामष्टानां प्रत्येकं मनोवचनकायदानैश्चतुर्विधो विनयः क्रियते, तद्यथा—सुराणां विनयं करोति मनसा तथा वाचा तथा कायेन तथा देशकालोपपन्नदानेन इत्यादि, एते च विनयादेव केवलात्स्वर्गापवर्गमार्गमभ्युपगच्छन्ति, विनयश्च नीचैर्वृ- त्त्यनुत्सेकलक्षणः, सर्वत्र चैवंविधेन विनयेन देवादिपूपतिष्ठन् स्वर्गापवर्गभाग्भवतीति, तदेवमेतेऽष्टावपि भङ्गा चतुष्केण गुणिता द्वात्रिं- शद्वैनयिकभेदा भवन्तीति । सर्वैरप्येतैः पूर्वोक्तैः क्रियाऽक्रियाऽज्ञानवैनयिकवादिभेदैः पिंडितैः—एकीकृतैस्त्रीणि त्रिषष्ट्यधिकानि पाखण्डिनां शतानि भवन्तीति । एतेषां च प्रतिक्षेपः सूत्रकृताङ्गादिभ्यः समवसेयः २०६ ॥ ५ ॥ ६ ॥ सम्प्रति 'अट्ठहा पमाय'त्ति सप्तोत्तर- द्विशततमं द्वारमाह—

पमाओ य मुणिंदेहिं, भणिओ अट्ठभेयओ । अन्नाणं १ संसओ २ चेव, मिच्छानाणं ३ तहेव य
॥ ७ ॥ रागो ४ दोसो ५ मइब्भंसो ६, धम्मंमि य अणायरो ७ । जोगाणं दुप्पणिहाणं ८, अट्ठहा
वज्जियव्वओ ॥ ८ ॥

प्रमाद्यति—मोक्षमार्गं प्रति शिथिलोद्यमो भवत्यनेन प्राणीति प्रमादः, स च मुनीन्द्रैः—तीर्थकृद्भिर्भणितः—प्रतिपादितो भवति, अष्टभेदः—अष्टप्रकारः, तद्यथा—अज्ञानं—मूढता संशयः—किमेतदेवं स्यादुतान्यथेति संदेहः मिथ्याज्ञानं—विपर्यस्ता प्रतिपत्तिः रागः—अभिष्वङ्गः द्वेषः—अप्रीतिः स्मृतिभ्रंशो—विस्मरणशीलता धर्मे चार्हत्प्रणीतेऽनादरः—अनुद्यमः योगानां—मनोवाक्कायानां दुष्प्रणिधानं—दुष्टताकरणं, अयं चाष्टविधोऽपि प्रमादः कर्मबन्धहेतुत्वाद्वर्जयितव्यः—परिहर्तव्य इति २०७ ॥ ७ ॥ ८ ॥ सम्प्रति 'भरहाहिव'त्ति अष्टोत्तरद्विशततमं द्वारमाह—

**भरहो १ सगरो २ मघवं ३ सणंकुमारो य रायसद्दूलो ४ । संती ५ कुंथू ६ य अरो ७ हवइ सुभूमो ८ य कोरव्वो ॥ ९ ॥ नवमो य महापउमो ९ हरिसेणो १० चेव रायसद्दूलो । जयनामो ११ य नरवई बारसमो बंभदत्तो य १२ ॥ १० ॥**

भरतः प्रथमश्चक्रवर्ती द्वितीयः सगरः—सगरनामा तृतीयो मघवान् चतुर्थः सनत्कुमारो राजशार्दूलः, शार्दूलशब्दः सिंहपर्यायः, राज्ञां शार्दूल इव राजसु वा शार्दूलश्चक्रवर्तीत्यर्थः, पञ्चमः शान्तिनाथः षष्ठः कुन्थुनाथः सप्तमोऽरस्वामी अष्टमः सुभूमो भवति कौरव्यः—कौरव्यगोत्रः नवमो महापद्मः दशमो हरिषेणो राजशार्दूलः—चक्रवर्ती एकादशो जयनामा नरपतिः द्वादशो ब्रह्मदत्तः २०८ ॥ ९ ॥ १० ॥ इदानीं 'हलधर'त्ति नवोत्तरद्विशततमं द्वारमाह—

**अयले १ विजये २ भद्दे ३, सुप्पभे य ४ सुदंसणे ५ । आणंदे ६ नंदणे ७ पउमे ८, रामे यावि ९ अपच्छिमे ॥ ११ ॥**

प्रथमो बलदेवोऽचलः द्वितीयो विजयः तृतीयो भद्रः चतुर्थः सुप्रभः पञ्चमः सुदर्शनः षष्ठ आनन्दः सप्तमो नन्दनः अष्टमः पद्मः

सीताभर्ता राम इत्यर्थः नवमो रामः—कृष्णसहचरः अपश्चिमः—सर्वान्तिमो, न विद्यते पश्चिमो यस्मादिति व्युत्पत्तेः, २०९ ॥ ११ ॥ सम्प्रति 'हरिणो'त्ति दशोत्तरद्विशततमं द्वारमाह—

**तिविट्ठू य १ दुविट्ठू य २ सयंभु ३ पुरिसुत्तमे ४ पुरिससीहे ५। तह पुरिसपुंडरीए ६ दत्ते ७ नारा-**
**यणे ८ कण्हे ९ ॥ १२ ॥**

त्रिपृष्ठः प्रथमो वासुदेवः प्राकृतत्वादार्षत्वाच्च सूत्रे 'तिविट्ठू'त्ति निर्देशः, द्वितीयो द्विपृष्ठः तृतीयः स्वयम्भूः चतुर्थः पुरुषोत्तमः पञ्चमः पुरुषसिंहः षष्ठः पुरुषपुण्डरीकः सप्तमो दत्तः अष्टमो नारायणो रामभ्राता लक्ष्मण इत्यर्थः, नवमः कृष्णः २१० ॥ १२ ॥ इदानीं 'पडिवासुदेव'त्त्येकादशोत्तरद्विशततमं द्वारमाह—

**आसग्गीवे १ तारय २ मेरए ३ मधुकेढवे ४ निसुंभे ५ य। बलि ६ पहराए ७ तह रावणे य ८**
**नवमे जरासिंधू ९ ॥ १३ ॥**

अश्वग्रीवः प्रथमः प्रतिवासुदेवः तारको द्वितीयः मेरकस्तृतीयः मधुकैटभश्चतुर्थः, अस्य च मधुरित्येव नाम केवलं कैटभाभिधभ्रातृसंबन्धान्मधुकैटभ इत्युच्यते, निशुम्भः पञ्चमः बलिः षष्ठः प्रभाराजः प्रह्लादो वा सप्तमः रावणोऽष्टमः जरासन्धो नवमः, एते सर्वेऽपि त्रिपृष्ठादीनां नवानामपि वासुदेवानां यथाक्रमं प्रतिशत्रवः, तथा सर्वेऽपि चक्रयोधिनः सर्वेऽपि च हताः स्वचक्रैः, यतस्तान्येव प्रतिवासुदेवचक्राणि प्रतिवासुदेवैर्वासुदेवव्यापत्तये क्षिप्तानि पुण्योदयवशाद्वासुदेवान् प्रणम्य वासुदेवहस्ते चटितानि तैः क्षिप्तानि तान्येव प्रतिवासुदेवान् व्यापादयन्ति २११ ॥ १३ ॥ सम्प्रति 'रयणाइं चउदस'त्ति द्वादशोत्तरद्विशततमं द्वारमाह—

**सेणावइ १ गाहावइ २ पुरोहिय ३ तुरय ४ गय ५ वड्डई ६ इत्थी ७ । चक्कं ८ छत्तं ९ चम्मं १० मणि ११ कागिणि १२ खग्ग १३ दंडो १४ य ॥ १४ ॥ चक्कं १ खग्गं २ च धणू ३ मणी ४ य माला ५ तहा गया ६ संखो ७ । एए सत्त उ रयणा सव्वेसिं वासुदेवाणं ॥ १५ ॥ चक्कं छत्तं दंडं तिन्निवि एयाइं वाममित्ताइं । चम्मं दुहत्थदीहं बत्तीसं अंगुलाइं असी ॥ १६ ॥ चउरंगुलो मणी पुण तस्सद्धं चेव होइ विच्छिन्नो । चउरंगुलप्पमाणा सुवन्नवरकागिणी नेया ॥ १७ ॥**

सेनापतिः १ गृहपतिः २ पुरोहितः ३ तुरगः ४ गजः ५ वर्धकिः ६ स्त्री ७ चक्रं ८ छत्रं ९ चर्म १० मणिः ११ काकिनी १२ खड्गो १३ दण्ड १४ श्चेत्येतानि चतुर्दशापि रत्नानि निगन्द्यते, 'रत्नं निगद्यते तज्जातौ जातौ यदुत्कृष्ट'मिति वचनात् सेनापत्यादिजातिषु वीर्यत उत्कृष्टत्वेन रत्नानीत्युच्यन्ते, तत्र सेनापतिः—दलनायको गङ्गासिन्धुपरपारविजये बलिष्टः १ गृहपतिः—चक्रवर्तिगृहसमुचितेतिकर्तव्यतापरः शाल्यादिसर्वधान्यानां समस्तस्वादुसहकारादिफलानां सकलशाकविशेषाणां निष्पादकश्च २ पुरोहितः—शान्तिकर्मादिकृत् ३ तुरङ्गमगजौ प्रकृष्टवेगमहापराक्रमादिगुणसमन्वितौ ४—५ वर्धकिः—गृहनिवेशादिसूत्रणाकारी, यस्तमिस्रगुहायां खण्डप्रपातगुहायां चोन्मग्नजलानिमग्नजलयोर्नद्योश्चक्रवर्त्तिसैन्योत्तरणाय काष्ठमयं सेतुबन्धं करोति ६ स्त्रीरत्नमत्यद्भुतकामसुखनिधानं ७ चक्रं समस्तायुधातिशायि दुर्दमरिपुजयकरं ८ छत्रं चक्रवर्तिहस्तसंस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं सत् वैताढ्यनगोत्तरविभागवर्तिम्लेच्छानुरोधिमेघकुमारवृष्टाम्बुभरनिरसनसमर्थं नवनवतिसहस्रकाञ्चनशलाकापरिमण्डितं निर्व्रणसुप्रशस्तकाञ्चनमयोद्दण्डदण्डं बस्तिप्रदेशे पञ्जरविराजितं राजलक्ष्मीचिह्नमर्जुनाभिधानपाण्डुरस्वर्णप्रत्यवस्तृतपृष्ठदेशं शारदसंपूर्णपूर्णिमामृगाङ्कमण्डलमनोहरं तपनातपवातवृष्टिप्रभृतिदोषक्षयकारकं ९

चर्मरत्नं छत्रस्याधस्ताच्चक्रवर्तिहस्तस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं प्रातरुप्तापराह्णसंपन्नोपभोग्यशाल्यादिसम्पत्तिकरं १० मणिरत्नं वैडूर्यमयं त्र्यस्रं षडंशं यथाक्रममूर्द्ध्वाधःस्थितयोश्छत्रचर्मरत्नयोरपान्तराले छत्रतुम्बे न्यस्तं सद् द्वादशयोजनविस्तारिणः समस्तस्यापि चक्रवर्तिकटकस्य निरुपमप्रकाशकारि तमिस्रगुहायां खण्डप्रपातगुहायां च प्रविशतश्चक्रवर्तिनो हस्तिरत्नदक्षिणशिरसि निबद्धं च द्वादश योजनानि यावत्पूर्वापरपुरतोरूपासु तिसृषु दिक्षु निबिडतममपि तमःस्तोममपहरति, यस्य च हस्ते शिरसि वा बद्ध्यते तस्य दिव्यतिर्यग्मनुष्यकृतसमस्तोपद्रवसमस्तरोगापहारं करोति, एतच्च मूर्ध्न्यन्यत्र वाऽङ्गे व्यवस्थाप्य संग्रामे प्रविष्टः सन् शस्त्रैरवध्यो भवति सर्वभयविमुक्तश्चोपजायते, अन्यच्च—तस्मिन् मणिरत्ने सदा मणिबन्धादौ व्यवस्थितेऽवस्थितयौवनोऽवस्थितकेशनखश्चोपजायते पुमान् ११ काकिणीरत्नमष्टसौवर्णिकं समचतुरस्रसंस्थानसंस्थितं विषापहारसमर्थं यत्र चन्द्रप्रभा सूर्यप्रभा वह्निदीप्तिर्वा न तमःस्तोममपहर्तुमलं भवति तत्र तमिस्रगुहायामतिनिबिडतिमिरतिरस्करणदक्षं, यस्य दिव्यप्रभावकलिततया द्वादश योजनानि यावत्तमिस्रविसरविनाशिका गभस्तयो विवर्धन्ते, यच्च सर्वकालं चक्रवर्ती निजस्कन्धावारे रात्रौ स्थापयति, तद्धि दिवसालोकभूतं प्रकाशं रजन्यामादधाति, यस्य च प्रभावेण चक्रवर्ती द्वितीयमर्धभरतमभिजेतुं सकलसैन्यसमेतस्तमिस्रगुहायां प्रविशति, तथा च तत्र प्रविष्टः सन् स पूर्वभित्तितटे पश्चिमभित्तितटे च प्रत्येकं योजनान्तरितानि पञ्चधनुःशतायामविष्कम्भान्युभयपार्श्वयोर्योजनोद्योतकराणि चक्रनेमिसंस्थानानि चन्द्रमण्डलप्रतिनिभानि वृत्तहिरण्यरेखारूपाणि गोमूत्रिकान्यानेनैकस्यां भित्तौ पञ्चविंशतिरपरस्यां तु चतुर्विंशतिरित्येकोनपञ्चाशतं मण्डलान्यालिखन् व्रजति, तानि च मण्डलानि यावच्चक्रवर्ती चक्रवर्तिपदं परिपालयति तावदवतिष्ठन्ते, गुहाऽपि तथैवोद्घाटिता तिष्ठति, उपरते तु चक्रिणि तत्सर्वमुपरमते १२ खड्गरत्नं—संग्रामभूमावप्रतिहतशक्तिः १३ दण्डरत्नं रत्नमयपञ्चलताकं वज्रसारमयं सर्वशत्रुसैन्यविनाशकारकं, चक्रवर्तिनः

स्कन्धावारे विषमोन्नतविभागेषु समत्वकारि शान्तिकरं चक्रवर्तिनो हितेप्सितमनोरथपूरकं दिव्यमप्रतिहतं प्रयत्नविशेषतश्च व्यापार्यमाणं योजनसहस्रमप्यधः प्रविशति १४ । एतानि चतुर्दश रत्नानि प्रत्येकं यक्षसहस्राधिष्ठितानि भवन्ति, तथैतानि सेनापत्यादीनि सप्त पञ्चेन्द्रियाणि चक्रादीनि सप्त एकेन्द्रियाणि पृथिवीपरिणामरूपाणि प्रत्येकं जम्बूद्वीपे जघन्यपदेऽष्टाविंशतिरेककालं प्राप्यन्ते, जघन्यतोऽपि चक्रवर्तिचतुष्टयसद्भावात्, उत्कृष्टतस्तु दशोत्तरद्विशतसङ्ख्यानि, चक्रवर्तिनो ह्येककालं त्रिंशद्भवन्ति, यथा अष्टाविंशतिर्विदेहे एकैको भरतैरवतयोः, सप्तानां च त्रिंशता गुणने द्वे शते दशोत्तरे भवत इति ॥ १४ ॥ अथ रत्नप्रस्तावाद्वासुदेवस्यापि रत्नान्याह—'चक्क'मित्यादि, चक्रखड्गधनुर्मणयः प्रतीताः माला सदैव चाम्लाना देवार्पिता गदा—कौमोदकी नाम प्रहरणविशेषः शङ्खः—पाञ्चजन्यो द्वादशयोजनविस्तारिध्वानः, एतानि सप्त रत्नानि सर्वेषामपि वासुदेवानां भवन्ति॥ १५ ॥ अथ सप्तानामप्येकेन्द्रियरत्नानां प्रमाणमाह—'चक्क'मित्यादि गाथाद्वयं, चक्रं छत्रं दण्डमित्येतानि त्रीण्यपि रत्नानि व्यामप्रमाणानि, व्यामो नाम प्रसारितोभयबाह्वोः पुंसस्तिर्यग्हस्तद्वयाङ्गुलयोरन्तरालं, चर्मरत्नं द्विहस्तदैर्घ्यं, द्वात्रिंशदङ्गुलदीर्घोऽसिः—खड्गरत्नं, तथा दैर्घ्यमधिकृत्य मणिः पुनश्चतुरङ्गुलप्रमाणः, तस्य—दैर्घ्यस्यार्धं द्वे अङ्गुले इत्यर्थः विस्तीर्णो—विस्तृतः, तथा चतुरङ्गुलप्रमाणा सुवर्णवरकाकिनी—जात्यसुवर्णमयी काकिनीनाम रत्नं ज्ञेया, एतानि सप्ताप्येकेन्द्रियरत्नानि सर्वचक्रवर्तिनामात्माङ्गुलेन ज्ञेयानि, शेषाणि तु सप्त पञ्चेन्द्रियरत्नानि तत्तत्कालीनपुरुषोचितमानानीति २१२ ॥ १६ ॥ ॥ १७ ॥ सम्प्रति 'नव निहिओ'त्ति त्रयोदशोत्तरद्विशततमं द्वारमाह—

**नेसप्पे १ पंडुयए २ पिंगलए ३ सव्वरयण ४ महपउमे ५ । काले य ६ महाकाले ७ माणवग ८**
**महानिही संखे ९ ॥ १८ ॥ नेसप्पंमि निवेसा गामागरनगरपट्टणाणं च । दोणमुहमडंबाणं खंधा-**

राणं गिहाणं च ॥ १९ ॥ गणियस्स य गीयाणं माणुम्माणस्स जं पमाणं च । धन्नस्स य बीयाणं उप्पत्ती पंडुए भणिया ॥ २० ॥ सव्वा आहरणविही पुरिसाणं जा य जा य महिलाणं । आसाण य हत्थीण य पिंगलगनिहिम्मि सा भणिया ॥ २१ ॥ रयणाइं सव्वरयणे चउदस पवराइं चक्कवट्टीणं । उप्पज्जंति एगिंदियाइं पंचिंदियाइं च ॥ २२ ॥ वत्थाण य उप्पत्ती निप्फत्ती चेव सव्वभत्तीणं । रंगाण य धाऊण य सव्वा एसा महापउमे ॥ २३ ॥ काले कालन्नाणं भव्व पुराणं च तिसुवि वंसेसु । सिप्पसयं कम्माणि य तिन्नि पयाए हियकराइं ॥ २४ ॥ लोहस्स य उप्पत्ती होइ महाकाल आगराणं च । रूप्पस्स सुवण्णस्स य मणिमोत्तियसिलपवालाणं ॥ २५ ॥ जोहाण य उप्पत्ती आवरणाणं च पहरणाणं च । सव्वा य जुद्धनीई माणवगे दंडनीई य ॥ २६ ॥ नट्टविही नाडयविही कव्वस्स चउव्विहस्स निप्फत्ती । संखे महानिहिम्मि उ तुडियंगाणं च सव्वेसिं ॥ २७ ॥ चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य विक्खंभे । बारस दीहा मंजूससंठिया जण्हवीएँ मुहे ॥ २८ ॥ वेरुलियमणिकवाडा कणयमया विविहरयणपडिपुन्ना । ससिसूरचक्कलक्खण अणुसमवयणोववत्तीया ॥ २९ ॥ पलिओवमट्ठिईया निहिसरिनामा य तत्थ खलु देवा । जेसिं ते आवासा अक्केज्जा आहिवच्चाय ॥ ३० ॥ एए ते नव निहिणो पभूयधणरयणसंचयसमिद्धा । जे वसमुवगच्छंति सव्वेसिं चक्कवट्टीणं ॥ ३१ ॥

नैसर्पः पाण्डुकः पिङ्गलकः सर्वरत्नः महापद्मः कालः महाकालः माणवकः महानिधिः शङ्खश्च, एते नव निधयः, एतेषु च निधिषु कल्पपुस्तकानि शाश्वतानि वर्तन्ते, तेषु च विश्वस्थितिराख्यायते ॥ १८ ॥ तत्र यस्मिन्निधौ यदाख्यायते तदाह—'नेसप्पंमी'त्यादिगाथा एकादश, नैसर्पे—नैसर्पाभिधे निधौ ग्रामाकरनगरपत्तनानां द्रोणमुखमडम्बानां स्कन्धावाराणां गृहाणां चशब्दादापणानां च निवेशाः—स्थापनान्याख्यायन्ते, तत्र ग्रामो—वृत्त्यावृतः आकरो—यत्र सन्निवेशे लवणाद्युत्पद्यते नगरं—राजधानी पत्तनं—जलस्थलनिर्गमप्रवेशं द्रोणमुखं—जलनिर्गमप्रवेशं अर्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं मडम्बं स्कन्धावारः—कटकनिवेशः गृहं—भवनं आपणो—हट्ट इति ॥ १९ ॥ गणितस्य—दीनारादिपूगफलादिलक्षणस्य तथा गीतानां—स्वरकरणपाटकरणधूपकागारुकटिकिकाप्रभृतीनां प्रवन्धानां, तथा मानं—सेतिकादि तद्विषयं यत्तदपि मानमेव धान्यादि मेयमिति भावः तथा उन्मानं—तुलाकर्षादि तद्विषयं यत्तदप्युन्मानं, खण्डगुडादि धरिममित्यर्थः, ततः समाहारद्वन्द्वः ततस्तस्य यत्प्रमाणं, तथा धान्यबीजानां च—शाल्यादीनां देशकालौचित्येनोत्पत्तिः—निष्पत्तिः पाण्डुकनिधौ भणिता—व्यावर्णिता ॥ २० ॥ सर्वोऽप्याभरणविधिर्यः पुरुषाणां यश्च महिलानां तथा अश्वानां हस्तिनां च स यथौचित्येन पिङ्गलनामके महानिधौ भणितः ॥ २१ ॥ इह चक्रवर्तिनश्चतुर्दश रत्नानि सर्वोत्तमानि भवन्ति, तद्यथा—चक्रप्रमुखाणि सप्त एकेन्द्रियाणि सेनापतिप्रमुखाणि सप्त पञ्चेन्द्रियाणि, तानि चतुर्दशापि सर्वरत्नाख्ये महानिधौ उत्पद्यन्ते, तदुत्पत्तिस्तत्र व्यावर्णितेत्यर्थः, अन्ये त्वेवमाहुः—उत्पद्यन्ते एतत्प्रभावात् स्फीतिमन्ति च भवन्तीत्यर्थः ॥ २२ ॥ सर्वेषामपि वस्त्राणां या उत्पत्तिः तथा सर्वेषामपि वस्त्रादिगतानां भक्तिविशेषाणां सर्वेषामपि च रङ्गाणां—मञ्जिष्ठाकृमिरागकुसुम्भादीनां धातूनां च—लोहताम्रादीनां 'धोव्वाण य'त्ति पाठे तु सर्वेषां वस्त्रादिप्रक्षालनविधीनां या निष्पत्तिः सर्वा चैषा महापद्मे निधावभिधीयते ॥ २३ ॥ काले—कालनामनि निधौ कालज्ञानं—समस्तज्योतिःशास्त्रानुगतं ज्ञानमिति

भावः, तथा जगति त्रयो वंशाः, वंशः प्रवाह आवलिकेत्यनर्थान्तरं, तद्यथा—तीर्थकरवंशश्चक्रवर्तिवंशो बलदेववासुदेववंशश्च, तेषु त्रिष्वपि वंशेषु यद्भव्यं—भावि यच्च पुराणं—अतीतं, उपलक्षणमेतत् वर्तमानं च, 'तिसुवि वासेसु'त्तिपाठे तु अनागतवस्तुविषयमतीतवस्तुविषयं च कालज्ञानं क्रमेणानागतातीतवर्षत्रयगोचरमिति, कचिद् 'भवपुराणं च तिसुवि कालेसु'त्ति पाठः, तत्र च त्रिष्वपि कालेषु—वर्तमानातीतानागतेषु भव्यं—शुभं पुराणं च—अशुभं कालज्ञानमिति, तथा यत् शिल्पशतं—घटलोहचित्रवस्त्रनापितशिल्पानां पञ्चानामपि प्रत्येकं विंशतिभेदत्वात् यानि च कृषिवाणिज्यादीनि जघन्यमध्यमोत्कृष्टभेदभिन्नानि त्रीणि कर्माणि प्रजाया हितकराणि तदेतत्सर्वमभिधीयते ॥ २४ ॥ महाकाले निधौ लोहस्य नानाभेदभिन्नस्योत्पत्तिराख्यायते, रूप्यसुवर्णमणिमुक्ताशिलाप्रवालानां संबन्धिनामाकराणां च, तत्र रूप्यसुवर्णे प्रतीते मणयः—चन्द्रकान्तादयः मुक्ता—मौक्तिकानि शिलाः—स्फाटिकादिका प्रवालानि—विद्रुमाणीति ॥ २५ ॥ माणवके निधौ योधानां—शूरपुरुषाणामावरणानां—खेटकादीनां प्रहरणानां—खड्गादीनां च यत्र यथा वा उत्पत्तिर्भवति तथाऽभिधीयते, तथा सर्वाऽपि युद्धनीतिः—व्यूहरचनादिलक्षणा, सर्वाऽपि च दण्डनीतिः—सामादिचतुर्विधाऽऽख्यायते ॥ २६ ॥ शङ्खाभिधाने पुनर्महानिधौ सर्वोऽपि नर्तनविधिः—नृत्यकरणप्रकारः सर्वोऽपि च नाटकविधिः—अभिनेयप्रबन्धप्रपञ्चनप्रकारः, तथा धर्मार्थकाममोक्षलक्षणपुरुषार्थप्रतिबद्धस्य यद्वा संस्कृतप्राकृतापभ्रंशसंकीर्णभाषानिबद्धस्य गद्यपद्यगेयचौर्णपदबद्धस्य वा चतुर्विधस्यापि काव्यस्य तथा सर्वेषां त्रुटिताङ्गानामातोद्यापरपर्यायाणामुत्पत्तिराख्यायते । अन्ये त्वेते पूर्वोक्ताः पदार्थाः सर्वेऽपि नवसु निधिषु साक्षादेव समुत्पद्यन्ते इति व्याख्यानयन्ति ॥२७॥ अथ नवानामपि निधीनां साधारणं स्वरूपमाह—'चक्कठपई'त्यादि, प्रत्येकमष्टसु चक्रेषु प्रतिष्ठानं—अवस्थानं येषां ते अष्टचक्रप्रतिष्ठानाः, प्राकृतत्वादष्टशब्दस्य परनिपातः, अष्टौ योजनानि उत्सेधः—उच्चैस्त्वं येषां ते तथा, नव च योजनानि विष्कम्भेण नवयोजनविस्तारा इत्यर्थः, द्वादशयोजनदीर्घाः,

मञ्जूपासंस्थानसंस्थिताः सदैव जाह्नव्या–गंगाया मुखेऽवस्थिताः चक्रवर्त्तिन उत्पत्तिकाले च भरतविजयानन्तरं चक्रवर्तिना सह पातालेन चक्रवर्तिपुरमनुगताः ॥ २८ ॥ वैडूर्यमणिमयानि कपाटानि येषां ते तथा, मयट्प्रत्ययस्य वृत्त्या उक्तार्थता, कनकमयाः–सौवर्णाः विविधरत्नपरिपूर्णाः, शशिसूरचक्राकाराणि लक्षणानि–चिह्नानि येषां ते तथा, प्राकृतत्वात्प्रथमाबहुवचनस्य लोपः, 'अणुसमवयणोववत्तीय'त्ति अनुरूपा समा–अविषमा वदनोपपत्तिः–द्वारघटना येषां ते तथा, 'अणुवम'त्तिपाठे तु न विद्यते उपमावचनस्योपपत्तिः–घटना येषां स्वरूपव्यावर्णने ते अनुपमवचनोपपत्तिकाः–उपमया प्रतिपादयितुमशक्याः, उपमाया एवाभावादिति भावः, क्वचित् 'अणुसमयचयणोववत्तीय'त्तिपाठः, तत्र अनुसमयं–प्रतिसमयं पुद्गलानां च्यवनमुपपत्तिश्च येषां ते तथा, यावन्तस्तेभ्यः पुद्गला गलन्ति तावन्त एवानुसमयं लगन्तीत्यर्थः, स्थानाङ्गे तु 'अणुसमजुगबाहुवयणा य'त्ति पठ्यते, तत्र चायमर्थः–अनुसमा–अनुरूपा अविषमा जुगत्ति–यूपस्तदाकारा वृत्तत्वाद्दीर्घत्वाच्च बाहवो–द्वारशाखा वदनेषु–मुखेषु येषां ते तथा ॥ २९ ॥ तेषु च निधिषु पल्योपमस्थितिका निधिसदृशनामानस्ते देवा भवन्ति येषां देवानां त एव निधय आवासा–आश्रयाः आधिपत्याय–आधिपत्यनिमित्तमक्रेयाः, न तेषामाधिपत्यं क्रयेण लभ्यमिति भावः ॥ ३० ॥ एते ते नव निधयः प्रभूतधनरत्नसंचयसमृद्धाः ये सर्वेषामपि भरतक्षेत्राधिपचक्रवर्तिनां वशमुपयान्तीति २१३ ॥ ३१ ॥ इदानीं 'जीवसंखा उ'त्ति चतुर्दशोत्तरद्विशततमं द्वारं विभणिषुः स्वकृतमेव जीवसङ्ख्याप्रतिपादकं कुलकमत्र ग्रन्थे निक्षिप्तवान् ग्रन्थकारः, तत्र चेयमादिगाथा—

**नमिउं नेमिं एगाइजीवसंखं भणामि समयाओ । चेयणजुत्ता एगे १ भवत्थसिद्धा दुहा जीवा २ ॥ ३२ ॥ तस थावरा य दुविहा २ तिविहा थीपुंनपुंसगविभेया ३ । नारयतिरियनरामरगइभे-**

याओ चउब्भेया ४ ॥ ३३ ॥ अहव तिवेयअवेयगसरूवओ वा हवंति चत्तारि ४। एगबितिचउपणिंदियरूवा पंचप्पयारा ते ॥ ३४ ॥ एए चिय छ अणिंदियजुत्ता ६ अहवा छ भूजलग्गिनिला। वणतससहिया ६ छप्पिय ते सत्त अकायसंवलिया ॥ ३५ ॥ अंडय १ रसय २ जराउय ३ संसेयय ४ पोयया ५ समुच्छिमया ६। उब्भिय ७ तहोववाइय ८ भेएणं अट्ठहा जीवा ॥ ३६॥ पुढवाइ पंच बितिचउपणिंदि ४ जुत्ता य नवविहा ९ हुंति। नारयनपुंस तिरिनरतिवेय सुरथीपुमेवं वा ॥ ९ ॥ ३७ ॥ पुढवाइ अट्ठ असन्नि सन्नि दस ते ससिद्ध इगदसउ ११। पुढवाइया तसंता अपज्जपज्जत्त बारसहा ॥ ३८ ॥ बारसवि अतणुजुत्ता तेरस सुहुमियरेगिंदियेइंदी। तिय चउ असन्नि सन्नी अपज्जपज्जत्त चउदसहा ॥ ३९ ॥ चउदसवि अमलकलिया पनरस तह अंडगाइ जे अट्ठ। ते अपज्जत्तगपजत्तभेयओ सोलस हवंति ॥ ४० ॥ सोलसवि अकायजुया सतरस नपुमाइ नव अपज्जत्ता। पज्जत्ता अट्ठारस अकम्मजुअ ते इगुणवीसं ॥ ४१ ॥ पुढवाइ दस अपज्जा पज्जत्ता हुंति वीस संखाए। असरीरजुएहिं तेहिं वीसई होइ एगहिया ॥ ४२ ॥ सुहुमियरभूजलानलवाउवणाणंत दस सपत्तेआ। बितिचउअसन्निसन्नी अपज्जपज्जत्त बत्तीसं ॥ ४३ ॥ तह नरयभवणवणजोइकप्पगेवेज्जऽणुत्तरुप्पन्ना। सत्तदसऽडपणयारस नवपणछप्पन्नवेउव्वा ॥ ४४॥ हुंति अडवन्नसंखा ते नरतेरिच्छसंगया सव्वे। अपजत्तपजत्तेहिं सोलसुत्तरसयं तेहिं ॥ ४५॥ सन्नि-

दुगहीण बत्तीससंगयं तं सयं छयत्तालं। तं भवाभवगदूरभव आसन्नभवं च॥ ४६ ॥ संसारनिवासीणं जीवाण सयं इमं छयत्तालं। अप्पं व पालियवं सिवसुहकंखीहिं जीवेहिं ॥ ४७ ॥ सिरिअम्मएवमुणिवइविणेयसिरिनेमिचंदसूरीहिं। सपरहियत्थं रइयं कुलयमिणं जीवसंखाए॥ ४८ ॥

नत्वा—प्रणम्य नेमिं—द्वाविंशतीर्थकरं एकादिकां—एकद्वित्र्यादिकां जीवसङ्ख्यां भणामि—कथयामि समयात्—सिद्धान्तात्, न पुनः स्वमनीषिकयेति। तत्र चेतनायुक्ताः—चैतन्योपेता जीवा एके—एकविधाः, उपयोगलक्षणत्वाज्जीवानां, सिद्धसंसार्यवस्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात्, सततावबोधाभावे चाजीवत्वप्रसङ्गात्, तथा भवस्थसिद्धभेदेन द्विधा जीवाः, तत्र भवस्थाः—संसारवर्तिनः सिद्धा—मुक्तिपदप्राप्ताः ॥ ३२ ॥ अथवा त्रसस्थावरभेदेन द्विधा जीवाः, तत्र त्रसा—द्वीन्द्रियादयः स्थावराः—पृथिव्यादय एकेन्द्रियाः, तथा त्रिविधाः स्त्रीपुंनपुंसकभेदतः, इह स्त्र्यादयः स्त्र्यादिवेदोदयात् योन्यादिसंगता गृह्यन्ते, तथा चोक्तम्—"योनिर्मृदुत्वमस्थैर्यं, मुग्धताऽबलता स्तनौ। पुंस्कामितेति लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते ॥ १ ॥ मेहनं खरता दार्ढ्यं, शौण्डीर्यं श्मश्रु धृष्टता। स्त्रीकामितेति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते ॥ २ ॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम्। नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम् ॥ ३ ॥" तथा नारकतिर्यग्नरामरगतिभेदतश्चतुर्भेदा जीवाः ॥ ३३ ॥ अथवा त्रिवेदावेदस्वरूपतो भवन्ति चतुर्विधा जीवाः, वाशब्दः समुच्चये, तत्र त्रिवेदास्त्रयः—पुरुषाः स्त्रियो नपुंसकाश्च, न विद्यते वेद उपशमितत्वात् क्षपितत्वाद्वा येषां ते अवेदाः—अनिवृत्तिबादरादयो भवस्थाः सिद्धाश्च। तथा एकद्वित्रिचतुःपञ्चेन्द्रियभेदतः पञ्चप्रकारास्ते जीवाः ॥ ३४ ॥ एत एव एकेन्द्रियादयः पञ्चप्रकारा जीवा अनिन्द्रिययुक्ताः षड्विधा भवन्ति, न विद्यन्ते इन्द्रियाणि—स्पर्शनादीनि येषां तेऽनिन्द्रियाः—सिद्धाः, अथवा पृथिव्यप्तेजोवायुवनस्पतित्रसभेदतः षड्विधा जीवाः,

तथा पूर्वोक्ता एव पृथिव्यादयः षड्विधा जीवा अकायसहिताः सप्तविधा भवन्ति, न विद्यते कायः—पञ्चप्रकारमपि शरीरं येषां तेऽकायाः—सिद्धाः ॥ ३५ ॥ अण्डजादिभेदतोऽष्टविधा जीवा भवन्ति, तत्र अण्डाज्जाता अण्डजाः—पक्षिगृहकोकिलामत्स्यसर्पादयः रसाज्जाता रसजाः—तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा जीवविशेषाः, जरायोः—गर्भवेष्टनाज्जातास्तद्वेष्टिता इत्यर्थः जरायुजा—मनुष्यगोमहिष्यादयः, संस्वेदाज्जाताः संस्वेदजा—मत्कुणयूकाशतपदिकादयः, पोतं—वस्त्रं तद्वज्जाताः पोतादिव बोहित्थाज्जाता अजरायुवेष्टिता इत्यर्थः पोतजा—हस्तियल्गुलीचर्मजलूकाप्रभृतयः, संमूर्च्छनेन निर्वृत्ताः संमूर्छिमाः—कृमिपिपीलिकामक्षिकाशालिकादयः, उद्भेदाद्—भूमिभेदाज्जाता उद्भेदजाः—पतङ्गखञ्जनकादयः, उपपाते—देवशयनीयादौ भवा औपपातिकाः—देवा नारकाश्चेति ॥ ३६ ॥ पृथिव्यादयः—पृथिव्यप्तेजोवायुवनस्पतयः पञ्च द्वित्रिचतुःपञ्चेन्द्रिययुक्ता नवविधा जीवा भवन्ति, अथवा नारका नपुंसकत्वेनैकविधाः तिर्यञ्चो नराश्च त्रिवेदत्वेन—स्त्रीपुंनपुंसकवेदत्वेन प्रत्येकं त्रिभेदाः सुराश्च स्त्रीपुरुषभेदत्वेन द्विविधाः इत्येवं नवविधा जीवाः ॥ ३७ ॥ पृथिव्यादयः—पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियलक्षणा अष्टौ जीवाः असंज्ञिसंज्ञिपञ्चेन्द्रियेण सहिता दशविधा भवन्ति, तथा त एव दशविधा जीवाः ससिद्धाः—सिद्धसहिता एकादशविधा भवन्ति, तथा पृथिव्यादयस्त्रसान्ताः, पृथिव्यप्तेजोवायुवनस्पतित्रसा इत्यर्थः, प्रत्येकमपर्याप्तपर्याप्तभेदतो द्वादशविधा भवन्ति ॥ ३८ ॥ ते द्वादशापि अतनुयुक्तास्त्रयोदश भवन्ति, न विद्यते तनुः—शरीरं येषां तेऽतनवः—सिद्धाः, तथा एकेन्द्रिया द्विधा—सूक्ष्मा बादराश्च, तथा द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियास्तु द्विविधाः—असंज्ञिनः संज्ञिनश्च, एते सप्तापि प्रत्येकमपर्याप्ताः पर्याप्ताश्चेति चतुर्दशविधा जीवाः ॥ ३९ ॥ एत एव चतुर्दश अमलसहिताः पञ्चदशविधाः, न विद्यते मल इव मलो—निसर्गनिर्मलजीवमालिन्यापादनहेतुत्वादष्टप्रकारं कर्म येषां तेऽमलाः—सिद्धाः, तथा येऽण्डजरसजादयः पूर्वमष्टौ जीवभेदा भणितास्तेऽप-

र्याप्तपर्याप्तभेदतः षोडश भवन्ति ॥ ४० ॥ एत एव षोडश अकायेन—सिद्धेन युक्ताः सप्तदशविधाः । तथा पूर्वोक्ता नपुंसकादिभेदा —नारकनपुंसकस्त्रीपुंनपुंसकतिर्यक्स्त्रीपुंनपुंसकमानवस्त्रीपुंवेददेवलक्षणा नवविधा अपि जीवाः प्रत्येकमपर्याप्ताः पर्याप्ताश्च सन्तोऽष्टादशभेदाः । तथा ते एव चाष्टादश अकर्मभिः—सिद्धैर्युक्ता एकोनविंशतिः ॥ ४१ ॥ पूर्वं ये पृथिव्यादयो दशविधा जीवा भणिताः त एवापर्याप्तपर्याप्तभेदाभ्यां विंशतिसङ्ख्या भवन्ति, तथा तैरेव पृथिव्यादिभिर्विंशतिसङ्ख्यैर्भेदैरशरीरयुतैः—सिद्धसहितैः सद्भिरेकविंशतिर्जीवभेदा भवन्ति ॥४२॥ पृथिव्यप्तेजोवाय्वनन्तवनस्पतयः पञ्च प्रत्येकं सूक्ष्मबादरभेदतो दश भवन्ति, ते च सप्रत्येकाः—प्रत्येकवनस्पतिसहिता एकादश, द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रियाश्च पञ्च मिलिताः षोडश, एते च प्रत्येकमपर्याप्तपर्याप्तभेदभिन्ना द्वात्रिंशद्भवन्ति, इयमत्र भावना—पृथिवीकायो द्विधा—सूक्ष्मो बादरश्च, पुनरेकैको द्विधा—अपर्याप्तः पर्याप्तश्चेति चतुर्विधः पृथ्वीकायः, एवं जलानलवायवोऽपि, वनस्पतिर्द्विधा —साधारणः प्रत्येकश्च, तत्र साधारणो द्विधा—सूक्ष्मो बादरश्च, पुनरेकैको द्विधा—अपर्याप्तः पर्याप्तश्च, प्रत्येकस्तु बादर एव, स चापर्याप्तपर्याप्तभेदेन द्विविध इति षोढा वनस्पतिकायः, द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रियाः पुनः प्रत्येकमपर्याप्तपर्याप्तभेदतो द्विधा, मिलिताश्च द्वात्रिंशदिति ॥ ४३ ॥ नारकभवनपतिवनचरज्योतिष्ककल्पग्रैवेयकानुत्तरविमानोत्पन्ना जीवा यथाक्रमं सप्तदशअष्टपञ्चद्वादशनवपञ्चभेदा भवन्ति, एवं च वैक्रियशरीरिणः षट्पञ्चाशद्भेदाः, एतदुक्तं भवति—रत्नप्रभादिपृथिवीसप्तकनिवासित्वेन नारकाः सप्तविधाः भवनपतयोऽसुरकुमारादिभेदतो दशविधाः व्यन्तराः पिशाचादिभेदादष्टविधाः ज्योतिष्काश्चन्द्रादिभेदेन पञ्चविधाः कल्पोपपन्नाः सौधर्मादिद्वादशदेवलोकोत्पन्नत्वेन द्वादशविधाः ग्रैवेयकोत्पन्ना अधस्तनाधस्तनादिग्रैवेयकनवकनिवासित्वेन नवविधाः अनुत्तरविमानोत्पन्नास्तु विजयादिविमानपञ्चकोत्पन्नत्वेन पञ्चविधाः, सर्वमीलने च षट्पञ्चाशदिति ॥ ४४ ॥ ते सर्वेऽपि वैक्रियशरीरिणो नरतिर्यक्संगताः सन्तोऽष्टप-

श्वाशत्सङ्ख्या भवन्ति, तथा तैरेवाष्टपञ्चाशत्सङ्ख्यैः प्रत्येकमपर्याप्तपर्याप्तभेदभिन्नैः षोडशोत्तरशतं भवन्ति ॥ ४५ ॥ संज्ञिद्विकं—पर्याप्तापर्याप्तसंज्ञिरूपं तेन हीना—रहिता पूर्वोक्ता या द्वात्रिंशत् तया संगतं—मिलितमेतदेव षोडशोत्तरं शतं षट्चत्वारिंशं शतं भवति, संज्ञिद्विकस्य तु षोडशोत्तरशतग्रहणेनैव ग्रहणाद्वर्जनमिति । तच्च षट्चत्वारिंशं शतं भव्याभव्यदूरभव्यासन्नभव्यलक्षणैश्चतुर्भिर्भेदैः संगृह्यते, इदमत्र तात्पर्य—पूर्वोक्तस्य षट्चत्वारिंशदुत्तरशतस्य मध्ये केचिज्जीवा भव्याः केचिदभव्याः केचिद् दूरभव्याः केचिदासन्नभव्या इति, तत्र मुक्तिपर्यायेण भविष्यन्तीति भव्याः—सिद्धिगमनयोग्याः, न पुनरवश्यं सिद्धिगामिन एव, भव्यानामपि केषाञ्चित्सिद्धिगमनासंभवात्, उक्तं च—“भव्वावि न सिज्झिस्संति केइ” इत्यादि, भव्यविपरीता अभव्याः, तथा च ते न कदाचिदपि संसाराकूपारस्य पारं प्राप्नुवन्तः प्राप्नुवन्ति प्राप्स्यन्ति चेति, इदं च भव्यानां भव्यत्वमनादिकालसिद्धं शाश्वतमेव, न पुनः सामग्र्यन्तरेण पश्चाद्भवत्यपगच्छति वा, अभव्यत्वमप्यभव्यानामित्थमेव द्रष्टव्यं, यद्यपि च भव्यत्वाभव्यत्वाभ्यामेव सर्वेऽप्यमी जीवभेदाः संगृहीतास्तथापि भव्यविशेषत्वादेतौ दूरभव्यासन्नभव्यलक्षणौ भेदौ पृथगुपात्तौ, तत्र दूरेण—दीर्घतरेण कालेन भव्या—मुक्तिगामिनो दूरभव्याः—ये गोशालकवच्चिरान्मोक्षं यास्यन्ति, ये पुनस्तेनैव भवेन द्वित्र्यादिभिर्वा भवैर्मोक्षं यास्यन्ति ते आसन्नभव्याः । इह च भव्यत्वाभव्यत्वलक्षणमेवमाचक्षते वृद्धाः—यः संसारविपक्षभूतं मोक्षं मन्यते तदवाप्त्यभिलापं च सस्पृहं वहति किमहं भव्योऽभव्यो वा ? यदि भव्यस्तदा शोभनं अथाभव्यस्तदा धिङ्मामित्यादिचिन्तां च कदाचिदपि करोति स इत्यादिप्रकारेण चिह्नेन ज्ञायते भव्य इति, यस्य तु जातुचिदपि नेयं चिन्ता समुत्पन्ना समुत्पद्यते समुत्पत्स्यते वा स ज्ञायतेऽभव्य इति, उक्तं **चाचाराङ्गटीकायां**—“अभव्यस्य हि भव्याभव्यशंकाया अभावादि”त्यादि ॥ ४६ ॥ संसारनिवासिनां—भववर्तिनां जीवानां—प्राणिनामेतत् षट्चत्वारिंशदुत्तरं शतमात्मवत् पालनीयं—रक्षणीयं शिवसुखकाङ्क्षिभिः—

मोक्षसुखाभिलाषुकैर्जीवैरिति ॥ ४७ ॥ श्रीआम्रदेवसूरिशिष्यैः श्रीनेमिचंद्रसूरिभिः स्वपरहिताय, आत्मनोऽविस्मृतये परेषां चावबोधाय इत्यर्थः, जीवसङ्ख्यायाः प्रतिपादकमिदं कुलकं—गाथासमुदायात्मकं रचितं—कृतमिति २१४ ॥ ४८ ॥ इदानीं **'कम्माइं अट्ठ'**त्ति पञ्चदशोत्तरद्विशततमं द्वारमाह—

**पढमं नाणावरणं १ बीयं पुण दंसणस्स आवरणं २। तइयं च वेयणीयं ३ तहा चउत्थं च मोहणीयं ४ ॥ ४९ ॥ पंचममाउं ५ गोयं ६ छट्ठं सत्तमगमंतरायमिह ७। बहुतमपयडित्तेणं भणामि अट्ठमपए नामं ८ ॥ ५० ॥**

प्रथमं—आद्यं ज्ञानावरणं द्वितीयं पुनर्दर्शनावरणं तृतीयं च वेदनीयं तथा चतुर्थं च मोहनीयं पञ्चममायुः गोत्रं षष्ठं सप्तमं चान्तरायं इह च बहुतमोत्तरप्रकृतित्वेन बहुवक्तव्यत्वात् भणामि अष्टमपदे अष्टमपदस्थाने वा नामकर्मेति, ग्रन्थान्तरे हि आयुर्नाम गोत्रमन्तरायं चेत्यनेन क्रमेण पठ्यते, इह तु बहूत्तरप्रकृतितया पर्यन्ते नामकर्मेति । तत्र ज्ञायते—परिच्छिद्यते वस्त्वनेनेति ज्ञानं—सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः आव्रियते—आच्छाद्यतेऽनेनेत्यावरणं—मिथ्यात्वादिसचिवजीवव्यापाराहृतकर्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः ज्ञानस्य—मत्यादेरावरणं ज्ञानावरणं १ तथा दृश्यतेऽनेनेति दर्शनं—सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधः तस्यावरणं दर्शनावरणं २ तथा वेद्यते—आह्लादादिरूपेणानुभूयते यत्तद्वेदनीयं, यद्यपि सर्वं कर्म वेद्यते तथापि पङ्कजादिशब्दवद्वेदनीयशब्दस्य रूढिविषयत्वात् सातासातमेव कर्म वेदनीयमित्युच्यते, न शेषं ३ तथा मोहयति—सदसद्विवेकविकलं करोत्यात्मानमिति मोहनीयं ४ तथा एति—आगच्छति प्रतिबन्धकतां स्वकृतकर्मावाप्तनरकादिकुगतेर्निष्क्रमितुमनसो जन्तोरित्यायुः अथवा आ—समन्तादेति—गच्छति

भवाद्भवान्तरसंक्रान्तौ जन्तूनां विपाकोदयमित्यायुः ५ तथा गूयते—शब्द्यते उच्चावचैः शब्दैर्यत्तद्गोत्रं—उच्चनीचकुलोत्पत्तिलक्षणः पर्यायविशेषः तद्विपाकवेद्यं कर्मापि गोत्रं, कारणे कार्योपचारात् ६ तथा अन्तरा—दातृप्रतिग्राहकयोरन्तर्विघ्नहेतुतया अयते—गच्छतीत्यन्तरायं, यज्जीवस्य दानादिकं कर्तुं न ददातीत्यर्थः ७ तथा नामयति—गत्यादिविविधभावानुभवनं प्रति प्रवणयति जीवमिति नाम ८। एता अष्टौ मूलप्रकृतयः २१५ ॥ ५० ॥ साम्प्रतं 'तेसिं उत्तरपयडीण अट्ठवन्नसयं'ति षोडशोत्तरद्विशततमं द्वारमाह—

**पंचविहनाणवरणं नव भेया दंसणस्स दो वेए। अट्ठावीसं मोहे चत्तारि य आउए हुंति ॥ ५१ ॥ गोयम्मि दोन्नि पंचंतराइए तिगहियं सयं नामे । उत्तरपयडीणेवं अट्ठावन्नं सयं होइ ॥ ५२ ॥ मइ १ सुय २ ओही ३ मण ४ केवलाणि जीवस्स आवरिज्जंति। जस्स प्पभावओ तं नाणावरणं भवे कम्मं ॥ ५३ ॥ नयणे१यरो२हि३केवल४दंसणआवरणयं भवे चउहा । निद्दा ५ पयलाहिं छहा ६ निद्दाइदुरुत्त ७-८ थीणद्धी ९ ॥ ५४ ॥ एवमिह दंसणावरणमेयमावरइ दरिसणं जीवे। सायमसायं च दुहा वेयणियं सुहदुहनिमित्तं ॥ ५५ ॥ कोहो माणो माया लोभोऽणंताणुबंधिणो चउरो। एवमपच्चक्खाणा पच्चक्खाणा य संजलणा ॥ ५६ ॥ सोलस इमे कसाया एसो नवनोकसायसंदोहो । इत्थीपुरिसनपुंसकरूवं वेयत्तयं तंमि ॥ ५७ ॥ हासरईअरईभयसोगदुगुंछत्ति हासछक्कमिमं। दरिसणतिगं तु मिच्छत्तमीससम्मत्तजोएणं ॥ ५८ ॥ इय मोहे अट्ठवीसा नारयतिरिनरसुराउय चउक्कं। गोयं नीयं उच्चं च अंतरायं तु पंचविहं ॥ ५९ ॥ दाउं न लहइ लाहो**

न होइ पावइ न भोगपरिभोगं। निरुओऽवि असत्तो होइ अंतरायप्पभावेणं ॥ ६० ॥ नामे बायालीसा भेयाणं अहव होइ सत्तट्ठी। अहवावि हु तेणउई तिग अहियसयं हवइ अहवा ॥६१॥ पढमा बायालीसा ४२ गइ १ जाइ २ सरीर ३ अंगुवंगे ४ य। बंधण ५ संघायण ६ संघयण ७ संठाण ८ नामं च ॥ ६२ ॥ तह वन्न ९ गंध १० रस ११ फास १२ नाम अगुरुलहुयं च १३ बोद्धवं। उवघाय १४ पराघाया १५ णुपुव्वि १६ ऊसासनामं च १७ ॥ ६३ ॥ आयावु १८ ज्जोय १९ विहायगई २० तस २१ थावराभिहाणं च २२। बायर २३ सुहुमं २४ पज्जत्ता २५ पज्जत्तं च २६ नायव्वं ॥ ६४ ॥ पत्तेयं २७ साहारण २८ थिर २९ मथिर ३० सुभा ३१ सुभं ३२ च नायव्वं। सूभग ३३ दूभग ३४ नामं सूसर ३५ तह दूसरं ३६ चेव ॥ ६५ ॥ आएज्ज ३७ मणाएज्जं ३८ जसकित्ती नाम ३९ अजसकित्ती ४० य। निम्माणं ४१ तित्थयरं ४२ भेयाणवि हुंतिमे भेया ॥ ६६ ॥ गइ होइ चउप्पयारा जाईवि य पंचहा मुणेयव्वा। पंच य हुंति सरीरा अंगोवंगाइं तिन्नेव ॥ ६७ ॥ छस्संघयणा ६ जाणसु संठाणावि य हवंति छच्चेव ६। वन्नाईण चउक्कं ४ अगुरुलहु १ वघाय १ परघायं १ ॥ ६८ ॥ अणुपुव्वी चउभेया ४ उस्सासं १ आयवं १ च उज्जोयं १। सुहअसुहा विहयगई २ तसाइवीसं च २० निम्माणं ॥ ६९ ॥ तित्थयरेणं सहिया १ सत्तट्ठी एव हुंति पयडीओ ६७। संमामीसेहिँ विणा तेवन्ना सेसकम्माणं ॥ ७० ॥ एवं वीसुत्तरसयं १२० बंधे पयडीण होइ

नायव्वं । बंधणसंघायावि य सरीरगहणेण इह गहिया ॥ ७१ ॥ बंधणभेया पंच उ संघायावि य हवंति पंचेव । पण वन्ना दो गंधा पंच रसा अट्ठ फासा य ॥ ७२ ॥ दस सोलस छव्वीसा एया मेलिवि सत्तसट्ठीए । तेणउई होइ तओ बंधणभेया उ पन्नरस ॥ ७३ ॥ वेउव्वाहारोरालियाण सगतेयकम्मजुत्ताणं । नव बंधणाणि इयरदुसहियाणं तिन्नि तेसिंपि ॥७४॥ सव्वेहिंवि छूढेहिं तिगअहियं सयं तु होइ नामस्स । इय उत्तरपयडीणं कम्मट्ठग अट्ठवन्नसयं ॥ ७५ ॥

पञ्चविधं ज्ञानावरणं नव भेदा दर्शनस्य—दर्शनावरणस्य द्वौ वेदनीये अष्टाविंशतिर्मोहनीये चत्वारश्च आयुषि भवन्ति गोत्रे द्वौ पञ्च अन्तरायके त्रिभिरधिकं शतं नामकर्मणि, उत्तरप्रकृतीनामेवं सर्वमीलनेऽष्टपञ्चाशदधिकं शतं भवतीति ॥ ५१ ॥ ५२ ॥ तत्र यथास्वं तानेव भेदान् क्रमेण नामग्राहमाह—'मई'त्यादिगाथात्रयोविंशतिः, तत्र मतिश्रुतावधिमनःपर्यवकेवलानि जीवस्याव्रियन्ते—आच्छाद्यन्ते यत्प्रभावतस्तद् ज्ञानावरणं भवेत्कर्म, किमुक्तं भवति ?—ज्ञानावरणं पञ्चप्रकारं, तद्यथा—मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यवज्ञानावरणं केवलज्ञानावरणं चेति । तथा दर्शनावरणं बन्धे उदये सत्तायां च त्रिधा प्राप्यते, तद्यथा—कदाचिच्चतुर्धा कदाचित् षोढा कदाचिच्च नवधा, तत्र कथं चतुर्धा ? कथं षोढा ? कथं वा नवधेति त्रीनपि प्रकारान् दर्शयन् प्रथमतश्चतुर्धा दर्शयति—दर्शनावरणं चतुर्धा—चतुष्प्रकारं भवति, कथमित्याह—नयनेतरावधिकेवलेषु—नयनेतरावधिकेवलविषयं तत्, सूत्रे तु सप्तम्या अदर्शनं लोपात्, लोपश्च प्राकृतत्वात्, एष चात्र भावार्थः—दर्शनावरणं यदा चतुर्धा बन्धे उदये सत्तायां वा विवक्ष्यते तदेवंरूपं तदवगन्तव्यं, यथा नयनदर्शनावरणमितरदर्शनावरणमचक्षुर्दर्शनावरणमित्यर्थः अवधिदर्शनावरणं केवलदर्शनावरणं चेति, तदेव दर्शनावरणचतुष्टयं निद्राप्रचलाभ्यां

वतो दातुं न लभते जीवस्तद्दानान्तरायं, एवं यत्प्रभावतो जीवस्य लाभो न भवति तल्लाभान्तरायं, यत्प्रभावतो भोगान् परिभोगांश्च न प्राप्नोति तत्क्रमेण भोगान्तरायं परिभोगान्तरायं च, यत्प्रभावतश्च नीरुजोऽपि—नीरोगोऽपि जीवोऽशक्तः—असमर्थो भवति तद्वीर्यान्तरायं, इयमत्र भावना—यदुदयवशात् सति विभवे समागते च गुणवति पात्रे दत्तमस्मै महाफलमिति जानन्नपि दातुं नोत्सहते तद्दानान्तरायं, तथा यदुदयवशाद्दानगुणेन प्रसिद्धादपि दातुर्गृहे विद्यमानमपि देयमर्थजातं याच्याकुशलोऽपि गुणवानपि याचको न लभते तल्लाभान्तरायं, तथा यदुदयवशात् सत्यामपि विशिष्टाहारादिप्राप्तावसति च प्रत्याख्यानपरिणामे वैराग्ये वा केवलं कार्पण्यान्नोत्सहते भोक्तुं तद्भोगान्तरायं, एवं परिभोगान्तरायमपि भावनीयं, नवरं भोगपरिभोगयोरयं विशेषः—सकृद्भुज्यते इति भोगः—आहारमाल्यादिः, पुनः पुनः परिभुज्यते इति परिभोगो—भवनवनितादिः, तथा यदुदयवशात्सत्यपि नीरुजि शरीरे यौवनिकायामपि वर्तमानोऽल्पप्राणो भवति यद्वा बलवत्यपि शरीरे साध्येऽपि प्रयोजने हीनसत्त्वतया न प्रवर्तते तद्वीर्यान्तरायमिति, तथा विवक्षान्तरतः कारणान्तरतश्च नामकर्म नानाप्रकारं, तद्यथा—द्विचत्वारिंशद्भेदं सप्तषष्टिभेदं त्रिनवतिभेदं त्र्युत्तरशतभेदं च ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥ तत्र तावद् द्विचत्वारिंशद्भेदानाह—'**पढमे**'त्यादिगाथानवकं, प्रथमा द्विचत्वारिंशदियं द्रष्टव्या, तद्यथा—गतिनाम जातिनाम शरीरनाम अङ्गोपाङ्गनाम बन्धननाम संघातनाम संहनननाम संस्थाननाम वर्णनाम गन्धनाम रसनाम स्पर्शनाम अगुरुलघुनाम उपघातनाम पराघातनाम आनुपूर्वीनाम उच्छ्वासनाम आतपनाम उद्योतनाम विहायोगतिनाम त्रसनाम स्थावरनाम बादरनाम सूक्ष्मनाम पर्याप्तनाम अपर्याप्तनाम प्रत्येकनाम साधारणनाम स्थिरनाम अस्थिरनाम शुभनाम अशुभनाम सुभगनाम दुर्भगनाम सुस्वरनाम दुःस्वरनाम आदेयनाम अनादेयनाम यशःकीर्तिनाम अयशःकीर्तिनाम निर्माणनाम तीर्थकरनाम चेति । तथा एतेषामेव गत्यादीनां

भेदानां यदा नारकगत्यादयः प्रतिभेदा विवक्षिता भवन्ति तदा सप्तषष्टिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तामेव सप्तषष्टिमाह— 'गई'त्यादिगाथापञ्चकं, गतिनाम चतुर्धा—नरकगतितिर्यग्गतिमनुष्यगतिदेवगतिभेदात्, जातिनाम पञ्चधा एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियजातिभेदात्, शरीरनाम पञ्चधा औदारिकवैक्रियाहारकतैजसकार्मणशरीरभेदात्, अङ्गोपाङ्गनाम त्रिधा औदारिकवैक्रियाहारकाङ्गोपाङ्गभेदात्, संहनननाम षोढा—वज्रऋषभनाराचऋषभनाराचनाराचअर्धनाराचकीलिकासेवार्तसंहननभेदात्, संस्थाननाम षोढा समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुंडसंस्थानभेदात्, वर्णादिचतुष्कं—वर्णगंधरसस्पर्शलक्षणं, तथा अगुरुलघूपघातपराघातं च, आनुपूर्वीनाम चतुर्धा नारकतिर्यग्मनुष्यदेवानुपूर्वीभेदात्, तथा उच्छ्वासं आतपं उद्योतं, विहायोगतिर्द्विधा—शुभाशुभविहायोगतिभेदात्, त्रसादिविंशतिः—त्रसस्थावरादिका यशःकीर्तिअयशःकीर्तिपर्यन्ता, निर्माणं च, एताः प्रकृतयस्तीर्थकरनाम्ना सहिताः सप्तषष्टिर्भवन्ति, एता एव च बन्धमुदयं चाश्रित्य नामकर्मण उत्तरप्रकृतयः परिगृह्यन्ते, शेषाणां च कर्मणां सम्यक्त्वमिश्रैर्विना त्रिपञ्चाशत्, बन्धचिंतायां हि दर्शनमोहनीयोत्तरप्रकृती सम्यक्त्वमिश्रे न गृह्येते, तयोर्बन्धासंभवात्, मिथ्यात्वपुद्गला एव हि तथाविधविशोधिवशात् सम्यक्त्वरूपतया मिश्ररूपतया च परिणमन्तीति । एवं च सप्तषष्टेर्नामकर्मभेदानां त्रिपञ्चाशतश्च शेषकर्मभेदानां मीलने बन्धे विंशत्युत्तरं प्रकृतीनां शतं भवति ज्ञातव्यं । ननु पूर्वोक्तद्विचत्वारिंशदुत्तरप्रकृतिमध्ये ये बन्धनसंघातनाम्नी प्रतिपादिते ते सप्तषष्टिमध्ये कथं न गण्येते ? इत्याह—'बंधणे'त्यादि, बन्धनसंघातौ शरीरग्रहणेन शरीरनामकर्मान्तर्भूतत्वेनेह—सप्तषष्टिभेदचिंतायां गृहीताविति पृथग्न विवक्षितौ, तथा सत्तायां चिन्त्यमानायां नामकर्मप्रकृतयस्त्रिनवतिसङ्ख्या मतान्तरेण त्र्युत्तरशतसङ्ख्याश्चाधिक्रियन्ते ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ततः क्रमेण त्रिनवतिं त्र्युत्तरशतं चाह—'बंधणे'त्यादिगाथाचतुष्कं, औदारिकवैक्रियाहारकतैजसकार्मणबन्धनभेदाद्बन्धननाम पञ्चधा, संघातनामापि

औदारिकवैक्रियाहारकतैजसकार्मणसंघातभेदात् पञ्चधा, एवमेता दश, तथा वर्णनाम कृष्णनीललोहितहारिद्रसितभेदात् पञ्चधा, गन्धनाम सुरभिदुरभिगन्धभेदाद् द्विधा, रसनाम तिक्तकटुकषायाम्लमधुरभेदात् पञ्चधा, स्पर्शनाम कर्कशमृदुलघुगुरुशीतोष्णस्निग्धरूक्षभेदादष्टधा, एवमेता विंशतिः प्रकृतयः, एतासां मध्याद्वर्णगन्धरसस्पर्शानां सामान्यतश्चतुर्णां सप्तषष्टिपक्षेऽपि गृहीतत्वात्तदपगमे शेषाः षोडश बन्धनसंघातदशकेन सह षड्विंशतिः प्रकृतयो भवन्ति, एताश्च अनन्तरोक्तसप्तषष्टिमध्ये प्रक्षिप्यन्ते, ततो नामप्रकृतीनां त्रिनवतिर्भवतीति । तथा प्रकारान्तरेण बन्धनस्य पञ्चदश भेदाः, के ते इत्याह—'वेउव्वे'त्यादि, वैक्रियाहारकौदारिकाणां प्रत्येकं स्वकतैजसकार्मणयुक्तानां, स्वकं—आत्मीयं, किमात्मीयमिति चेदुच्यते वैक्रियस्य वैक्रियं आहारकस्याहारकं औदारिकस्यौदारिकं तेन स्वकेन तैजसेन कार्मणेन च प्रत्येकं सहितानां बन्धनानि चिन्त्यमानानि नवनवसङ्ख्यानि भवन्ति, तद्यथा—वैक्रियवैक्रियबन्धनं वैक्रियतैजसबन्धनं वैक्रियकार्मणबन्धनं आहारकाहारकबन्धनं आहारकतैजसबन्धनं आहारककार्मणबन्धनं औदारिकौदारिकबन्धनं औदारिकतैजसबन्धनं औदारिककार्मणबन्धनमिति, तत्र पूर्वगृहीतवैक्रियपुद्गलानां स्वैरेव वैक्रियपुद्गलैर्गृह्यमाणैः सह संबन्धो वैक्रियवैक्रियबन्धनं, तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धो वैक्रियतैजसबन्धनं, तथा तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धो वैक्रियकार्मणबन्धनं, तथा पूर्वगृहीतानामाहारकपुद्गलानां स्वैरेवाहारकपुद्गलैर्गृह्यमाणैः सह यः संबन्धः स आहारकाहारकबन्धनं तथा तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध आहारकतैजसबन्धनं, तथा तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध आहारककार्मणबन्धनं, तथा पूर्वगृहीतानामौदारिकपुद्गलानां स्वैरेवौदारिकपुद्गलैर्गृह्यमाणैः सह यः संबन्धः

पूर्वगृहीतैश्च सह संबन्ध औदार-
स औदारिकौदारिकबन्धनं, तेषामेवौदारिकपुद्गलानां गृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध औदारिक-
कतैजसबन्धनं, तथा तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध औदारिक-
कार्मणबन्धनं, तथा 'इयरदुसहियाणं तिन्नि'त्ति इतराभ्यां—तैजसकार्मणाभ्यां द्वाभ्यां समुदिताभ्यां सहितानां वैक्रियाहारकौदारिकाणां
त्रीणि बन्धनानि भवन्ति, तद्यथा—वैक्रियतैजसकार्मणबन्धनं आहारकतैजसकार्मणबन्धनं औदारिकतैजसकार्मणबन्धनं च, तत्र वैक्रिय-
पुद्गलानां तैजसपुद्गलानां कार्मणपुद्गलानां च पूर्वगृहीतानां गृह्यमाणानां वा यः परस्परं संबन्धस्तद्वैक्रियतैजसकार्मणबन्धनं, एवमाहारक-
तैजसकार्मणबन्धनौदारिकतैजसकार्मणबन्धनयोरपि भावनाऽनुसर्तव्या, अनेन च बन्धनत्रिकेण सह पूर्वोक्तानि नव बन्धनानि द्वादश
भवन्ति, तथा 'तेसिं च'त्ति तयोश्च—तैजसकार्मणयोः स्वस्थाने परस्परं बन्धनचिंतायां त्रीणि बन्धनानि भवन्ति, तद्यथा—तैजसतै-
जसबन्धनं तैजसकार्मणबन्धनं कार्मणकार्मणबन्धनं चेति, तत्र तैजसपुद्गलानां पूर्वगृहीतानां स्वैरेव तैजसपुद्गलैर्गृह्यमाणैः सह यः परस्परं
संबन्धस्तत्तैजसतैजसबन्धनं, तेषामेव तैजसपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धस्तैजस-
कार्मणबन्धनं, कार्मणपुद्गलानां पूर्वगृहीतानां स्वैरेव कार्मणपुद्गलैर्गृह्यमाणैः सह संबन्धः कार्मणकार्मणबन्धनं, एतैश्च त्रिभिर्बन्धनैः सहि-
तानि पूर्वोक्तानि द्वादश बन्धनानि पञ्चदश भवन्ति, एतन्निमित्तभूतानि च यानि बन्धननामकर्माणि तान्यपि पञ्चदश, एतैश्च सर्वैरपि
बन्धनभेदैर्बन्धनपञ्चकरहितपूर्वोक्तत्रिनवतिमध्ये प्रक्षिप्तैर्नामकर्मण उत्तरप्रकृतीनां त्र्युत्तरं शतं भवति । इत्येवं सर्वसङ्ख्यया अष्टानामपि
कर्मणामुत्तरप्रकृतीनामष्टपञ्चाशदधिकं शतं भवतीति । तदेवमुक्ताः सर्वा अपि नामत उत्तरप्रकृतयः, साम्प्रतमेतासामेवार्थः कथ्यते, तत्र
'मन ज्ञाने' मननं मतिः यद्वा मन्यते—इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिः—योग्यदेशावस्थितवस्तुविषय इन्द्रियमनो-

निमित्तोऽवगमविशेषः मतिश्चासौ ज्ञानं च मतिज्ञानं, तच्च द्विविधं—श्रुतनिश्रितमश्रुतनिश्रितं च, तत्र प्रायः श्रुताभ्यासमन्तरेणापि यत्सह-जविशिष्टक्षयोपशमवशादुत्पद्यते तदश्रुतनिश्रितं—औत्पत्तिक्यादिबुद्धिचतुष्टयं, यत्तु पूर्वं श्रुतपरिकर्मितमतेर्व्यवहारकाले तु अश्रुतानुसारि-तया समुत्पद्यते तत् श्रुतनिश्रितं, तच्चतुर्धा, तद्यथा—अवग्रहः ईहा अवायः धारणा चेति, पुनरवग्रहो द्विधा—व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते—प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जनं—उपकरणेन्द्रियस्य कदम्बपुष्पाद्याकृतेः श्रोत्रघ्राणरसनस्पर्शनलक्षणस्य शब्दगन्ध-रसस्पर्शपरिणतद्रव्याणां च यः परस्परं संबन्धः प्रथममुपश्लेषमात्रं, अपरं च—इन्द्रियेणाप्यर्थस्य व्यज्यमानत्वादिन्द्रियमपि व्यञ्जनमु-च्यते, ततश्च व्यञ्जनेन—इन्द्रियलक्षणेन व्यञ्जनस्य—विषयसंबन्धलक्षणस्यावग्रहणं—परिच्छेदनमेकस्य व्यञ्जनशब्दस्य लोपात् व्यञ्जनाव-ग्रहः, किमपीदमिति अव्यक्तज्ञानरूपार्थावग्रहादधोऽव्यक्ततरं ज्ञानमात्रमित्यर्थः, अयं च नयनमनोवर्जेन्द्रियचतुष्टयभेदाच्चतुर्धा, नयनमन-सोरप्राप्यकारित्वेन विषयसंबन्धाभावाद्, अस्य चेन्द्रियविषययोः संबन्धग्राहकत्वादिति भावः, अर्थ्यत इत्यर्थः तस्य शब्दरूपादिभेदाना-मन्यतरेणापि भेदेनानिर्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रहः, किमपीदमित्यव्यक्तज्ञानमित्यर्थः, स च मनःसहितेन्द्रियपञ्चकजन्य-त्वात् षोढा । अवगृहीतस्यैव वस्तुनोऽपि किमयं भवेत् स्थाणुरेव न तु पुरुष इत्यादि वस्तुधर्मान्वेषणात्मकं ज्ञानचेष्टनमीहा, ईहनं ईहेति-कृत्वा, 'अरण्यमेतत् सविताऽस्तमागतो, न चाधुना संभवतीह मानवः । प्रायस्तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना ॥१॥' इत्याद्यन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभिमुखताऽऽलिङ्गितो ज्ञानविशेष ईहा इति हृदयं, साऽपि मनःसहितेन्द्रियपञ्चकजन्यत्वात् षोढैव । ईहितस्यैव वस्तुनः स्थाणुरेवायमित्यादिनिश्चयात्मको बोधविशेषोऽवायः, अयमपि पूर्ववत् षोढा । तथा निश्चितस्यैवाविच्युतिस्मृ-तिवासनारूपं धरणं धारणा, साऽपि पूर्ववत् षोढैव । तदेवमर्थावग्रहादीनां चतुर्णां प्रत्येकं षड्विधत्वाद्व्यञ्जनावग्रहभेदचतुष्टयेन सह श्रुत-

निश्रितं मतिज्ञानमष्टाविंशतिविधं, अश्रुतनिश्रितेन चौत्पत्तिक्यादिबुद्धिचतुष्टयेन सह द्वात्रिंशद्विधं भवति, जातिस्मरणमपि समतिक्रान्तसं-ख्यातभवावगमस्वरूपं मतिज्ञानभेद एव, तथा चाचाराङ्गटीका—"जातिस्मरणं त्वाभिनिबोधकविशेष" इति, एतावद्भेदभिन्नस्यास्य एतावद्भेदमेव यदावरणस्वभावं कर्म तन्मतिज्ञानावरणमेकग्रहणेन गृह्यते । तथा श्रवणं श्रुतं—वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु घटशब्दवाच्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानीकृतसमानपरिणामः शब्दार्थपर्यालोचनानुसारीन्द्रियमनोनिमित्तो ज्ञानविशेष इत्यर्थः, श्रुतं च तद् ज्ञानं च श्रुतज्ञानं, तद्भेदाश्च नन्द्यादिभ्योऽवसेयाः, तस्य सभेदस्याप्यावरणस्वभावं कर्म श्रुतज्ञानावरणं । तथा अवशब्दोऽधःशब्दार्थः, अव—अधोऽधो विस्तृतं वस्तु धीयते—परिच्छिद्यतेऽनेनेत्यवधिः यद्वाऽवधिः—मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः अवधिश्चासौ ज्ञानं च अवधिज्ञानं, तच्चानन्तद्रव्यभावविषयत्वात्तत्तारतम्यविवक्षयाऽनन्तभेदं असङ्ख्येयक्षेत्रकालविषयत्वात्तु तत्तारतम्यविवक्षयाऽसङ्ख्येयभेदं प्रकारान्तरविवक्षया त्वनुगामिकादिभेदत आवश्यकादिभ्योऽनुसरणीयं, तस्यैतावद्भेदभिन्नस्यावरणस्वरूपं कर्म अवधिज्ञानावरणं । तथा संज्ञिभिर्जीवैः काययोगेन मनोवर्गणाभ्यो गृहीतानि मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि द्रव्याणि मनांसीत्युच्यन्ते तेषां पर्यायाः—चिन्तानुगुणाः परिणामास्तेषु ज्ञानं मनःपर्यायज्ञानं, इदं चार्धतृतीयसमुद्रान्तर्वर्तिसंज्ञिमनोगतद्रव्यालम्बनं, तच्च द्वेधा—ऋजुमति विपुलमति च, एतत्स्वरूपं च लब्धिद्वारे वक्ष्यते, तस्यैवंभेदभिन्नस्यावरणस्वभावं कर्म मनःपर्यायज्ञानावरणं । तथा केवलं एकं मत्यादिज्ञाननिरपेक्षत्वात् शुद्धं वा केवलं तदावरणमलकलङ्कविगमात् सकलं वा केवलं प्रथमत एवाशेषतदावरणविगमतः संपूर्णोत्पत्तेः असाधारणं वा केवलमनन्यसदृशत्वात् अनंतं वा केवलं ज्ञेयानन्तत्वात् केवलं च तद् ज्ञानं च केवलज्ञानं तस्यावरणं केवलज्ञानावरणं । अत्र चाद्यानि चत्वार्यावरणानि

देशघातीनि केवलज्ञानावरणोद्धरितज्ञानदेशघातित्वात्, केवलज्ञानावरणं तु सर्वघाति, एतानि मतिज्ञानावरणादीनि पञ्चोत्तरप्रकृतयः, तन्निष्पन्नं तु सामान्येन ज्ञानावरणं मूलप्रकृतिः, यथाऽङ्गुलीपञ्चकनिष्पन्नो मुष्टिः घृतगुडकणिकादिभिर्निष्पन्नो वा मोदक इत्यादि, एवं-मेतनेष्वपि भावना कार्या । तथा नयनाभ्यां दर्शनं—सामान्यावबोधरूपं नयनदर्शनं तस्यावरणं नयनदर्शनावरणं चक्षुर्दर्शनावरणमित्यर्थः, इतरैः—चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनमितरदर्शनं तस्यावरणमितरदर्शनावरणं, अचक्षुर्दर्शनावरणमित्यर्थः, अवधिरेव दर्शनमवधिदर्शनं तस्यावरणमवधिदर्शनावरणं, केवलमेव दर्शनं केवलदर्शनं तस्यावरणं केवलदर्शनावरणं, तथा 'द्रा कुत्सायां गतौ' नियतं द्राति—कुत्सित-त्वमविस्पष्टत्वं गच्छति चैतन्यमनयेति निद्रा—नखच्छोटिकादिमात्रेणैव सुखावबोधा स्वापावस्थेत्यर्थः, कारणे कार्योपचारात् तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रेत्युच्यते, तथोपविष्ट ऊर्द्धस्थितो वा प्रचलति—विघूर्णयत्यस्यां स्वापावस्थायामिति प्रचला, तद्विपाकवेद्या कर्मप्रकृतिरपि प्रचला, तथा निद्रातोऽतिशायिनी निद्रा निद्रानिद्रेति मध्यपदलोपी समासः, दुःखप्रबोधा स्वापावस्थेत्यर्थः, तस्यां हि चैतन्यस्यात्यन्तम-स्फुटतरीभूतत्वाद्बहुभिर्घोलनाप्रकारैः प्रबोधो भवति, अतः सुखप्रबोधनिद्रातोऽस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रानिद्रा, तथा प्रचलातोऽतिशायिनी प्रचला प्रचलाप्रचला, सा हि चङ्क्रमणादिकमपि कुर्वतः स्यादुर्भवतीति स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यास्या अतिशायिनीत्वं, तथा स्त्याना—बहुत्वेन संघातमापन्ना गृद्धिः—अभिकाङ्क्षा जाग्रदवस्थाऽध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः, तस्यां हि जाग्रदवस्थाऽध्यवसितमर्थमुत्थाय साधयति, स्त्याना वा—पिण्डीभूता ऋद्धिः—आत्मशक्तिरूपाऽस्यामिति स्त्यानर्द्धिरि-त्यप्युच्यते, तद्भावे हि उत्कर्षतः प्रथमसंहननस्य केशवार्धबलसदृशी शक्तिरुपजायते, तथा च प्रवचने श्रूयते—कश्चित्प्रदेशे कोऽपि क्षुल्लको विपाकप्राप्तस्त्यानर्द्धिनिद्रासहितो द्विरदेन दिवा खलीकृतः, ततस्तस्मिन् द्विरदे बद्धाभिनिवेशो निशि स्त्यानर्द्ध्युदये वर्तमानः समुत्थाय तद्-

न्तयुगलमुत्पाट्य स्वोपाश्रयद्वारि च प्रक्षिप्य पुनः प्रसुप्तवान् इत्यादि, तद्विपाकवेद्या कर्मप्रकृतिरपि स्त्यानगृद्धिः स्त्यानर्द्धिर्वोच्यते । तथा वेदनीयं कर्म, वेद्यते—सुखं दुःखं वा आत्मना ज्ञायते तद्वेदनीयं, तच्च द्विधा—सातमसातं च, यदुदयवशादारोग्यविषयोपभोगादिजनिताह्लादरूपं सातं—सुखं वेद्यते तत्सातवेदनीयं, यदुदयवशाद्रोगादिजनितं परितापरूपमसातं—दुःखमनुभूयते तदसातवेदनीयं । तथा कष्यन्ते—हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः—संसारः कषमयन्ते—गच्छन्त्येभिर्जन्तव इति कषायाः—क्रोधमानमायालोभाः, तत्र क्रोधः—अक्षान्तिपरिणतिरूपः मानो—गर्वो जात्याद्युद्भवममार्दवं माया—वञ्चनाद्यात्मिका जीवपरिणतिः लोभः—असंतोषात्मको जीवपरिणामः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्धा, ततः षोडश, तत्र पारम्पर्येणानन्तं भवमनुबध्नन्ति—अनुसंदधतीत्येवंशीला अनन्तानुबन्धिनः, यद्यप्येतेषामन्यकषायोदयरहितानामुदयो नास्ति तथाऽप्यवश्यमनन्तभवभ्रमणमूलकारणमिथ्यात्वोदयापेक्षकत्वादेतेषामेवैतन्नाम, न पुनः सहजोदयानामन्यकषायाणामपि, तेषामवश्यं मिथ्यात्वोदयापेक्षकत्वाभावात्, नञोऽल्पार्थत्वादल्पं प्रत्याख्यानमप्रत्याख्यानं—देशविरतिरूपं तदप्यावृण्वन्तीत्यप्रत्याख्यानावरणाः, प्रत्याख्यानं—सर्वविरतिरूपमावृण्वन्तीति प्रत्याख्यानावरणाः, परीषहोपसर्गादिसंपाते सति चारित्रिणमपि सं—ईषत् ज्वलयन्तीति संज्वलनाः, तथा नोशब्दः साहचर्ये, ततः कषायैः सहचारिणः—सहवर्तिनो ये ते नोकषायाः, कैः कषायैः सहचारिण इति चेद्, उच्यते, आद्यैर्द्वादशभिः, तथाहि—नाद्येषु द्वादशसु कषायेषु क्षीणेषु नोकषायाणामवस्थानसंभवः, तदनन्तरमेव तेषामपि क्षपणाय क्षपकस्य प्रवृत्तिः, अथवा एते प्रादुर्भवन्तोऽवश्यं कषायानुद्दीपयन्ति, ततः कषायसहचारिणः, ते च नोकषाया नव, तत्र यदुदये स्त्रियाः पित्तोदये मधुरद्रव्याभिलाषवत् पुंस्यभिलाषः समुत्पद्यते स कुकूलाग्निसमानः स्त्रीवेदः, यदुदये पुंसः स्त्रियामभिलाषो भवति श्लेष्मोदयेऽम्लाभिलाषवत् स तृणाग्निज्वालासमानः पुंवेदः, यदुदये पण्डकस्य पित्तश्लेष्मोदये

मार्जिकाऽभिलाषवदुभयोरपि स्त्रीपुरुषयोरभिलाषः समुदेति स नगरमहादाहसमानो नपुंसकवेदः, तथा यदुदये सनिमित्तमनिमित्तं वा हसति तत् हास्यमोहनीयं, यदुदयाद्बाह्याभ्यन्तरेषु वस्तुषु प्रीतिरुपजायते तद्रतिमोहनीयं, एतेष्वेव यदुदयादप्रीतिरुपजायते तदरतिमोहनीयं, यदुदयात्सनिमित्तमनिमित्तं वा तथारूपस्वसंकल्पतो बिभेति तद्भयमोहनीयं, यदुदयात्प्रियविप्रयोगादौ स्वोरस्ताडमाक्रन्दति परिदेवते भूपीठे च लुठति दीर्घं निःश्वसिति तच्छोकमोहनीयं, यदुदयवशात्पुनः पुरीषादिबीभत्सपदार्थेषु जुगुप्सावान् भवति तज्जुगुप्सामोहनीयं, तथा यदुदयाज्जिनप्रणीततत्त्वार्थानामश्रद्धानं विपरीतश्रद्धानं वा तन्मिथ्यात्वं, यदुदयात्पुनर्जिनप्रणीतं तत्त्वं न सम्यक् श्रद्धत्ते नापि निन्दति तन्मिश्रं, सम्यग्मिथ्यात्वमित्यर्थः, यदुदयवशात्पुनर्जिनप्रणीतं तत्त्वं सम्यक् श्रद्धत्ते तत्सम्यक्त्वमिति । तथा नारकस्य सतो वेद्यमानमायुष्कं नारकायुष्कं तिरश्चां तिर्यगायुष्कं मनुष्याणां नरायुष्कं देवानां सुरायुष्कमिति । तथा यदुदयवशादुत्तमजातिकुलतपोरूपैश्वर्यश्रुतसत्काराभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिसंभवस्तदुच्चैर्गोत्रं, यदुदयवशात्पुनर्ज्ञानादिसंपन्नोऽपि निन्दां लभते हीनजात्यादिसंभवं च तन्नीचैर्गोत्रं । अन्तरायभेदाश्च नामोत्कीर्तनावसरे सूत्रकृतैव व्याख्याता इति । तथा गम्यते—तथाविधकर्मसचिवैर्जीवैः प्राप्यत इति गतिः—नारकत्वादिपर्यायपरिणतिः तद्विपाकवेद्या कर्मप्रकृतिरप्युपचाराद्गतिः सैव नाम गतिनाम, एवमन्यत्रापि द्रष्टव्यं, ततश्च नरकविषये गतिनाम नरकगतिनाम, नारकशब्दव्यपदेश्यपर्यायनिबन्धनं नरकगतिनामेति तात्पर्यं, एवं तिर्यग्मनुष्यदेवगतिनामापि वाच्यमिति । तथा एकेन्द्रियादीनां एकेन्द्रियत्वादिरूपसमानपरिणामलक्षणमेकेन्द्रियादिव्यपदेशभाग् यत्सामान्यं सा जातिः, इदमत्र तात्पर्यं—द्रव्यरूपमिन्द्रियं अङ्गोपाङ्गनामेन्द्रियपर्याप्तिनामसामर्थ्यात् सिद्धं, भावरूपं तु स्पर्शनादीन्द्रियावरणक्षयोपशमसामर्थ्यात्, 'क्षायोपशमिकानीन्द्रियाणी'ति वचनात्, यत्पुनरेकेन्द्रियादिशब्दप्रवृत्तिनिबन्धनं तथारूपसमानपरिणतिलक्षणं सामान्यं तदनन्यसाध्यत्वाज्जातिनामनिबन्ध-

नमिति, उक्तं च—"अव्यभिचारिणा सादृश्येनैकीकृतोऽर्थोऽसौ जाति"रिति, तन्निमित्तं जातिनाम, तत्र एकस्य स्पर्शनेन्द्रियज्ञानस्यावरणक्षयोपशमात्तदेकविज्ञानभाज एकेन्द्रियाः, एवं यस्य यावन्तीन्द्रियाणि तस्य तान्याश्रित्यानेनाभिलापेन तावज्ज्ञेयं यावत्पञ्चानां स्पर्शनरसनघ्राणचक्षुःश्रोत्रज्ञानानामावरणक्षयोपशमात् पञ्चविज्ञानभाजः पञ्चेन्द्रियाः, तेषामेकेन्द्रियाणां जातिनाम एकेन्द्रियजातिनाम एवं यावत् पञ्चेन्द्रियजातिनाम । शीर्यत इति शरीरं—प्रतिक्षणं प्रागवस्थातश्चयापचयाभ्यां विनश्यतीत्यर्थः, तत्र यस्य कर्मण उदयादौदारिकवर्गणापुद्गलान् गृहीत्वा औदारिकशरीरत्वेन परिणमयति तदौदारिकशरीरनाम, एवं वैक्रियाहारकतैजसकार्मणशरीरनामस्वपि वाच्यं, यावद् यस्य कर्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनाम, इदं च सत्यपि समानवर्गणापुद्गलमयत्वे स्वकार्यभूतात्कार्मणशरीरादन्यदेव, इयं हि कार्मणशरीरस्य कारणभूता नामकर्मण उत्तरप्रकृतिः, कार्मणशरीरं तु पुनरेतदुदयसंभवित्वादेतत्कार्यं निःशेषकर्मणां प्ररोहभूमिराधारो वा संसार्यात्मनां च गत्यन्तरसंक्रमणे साधकतमं कारणमित्यन्यदेव स्वकार्यात्कार्मणशरीरात्कारणभूतं प्रस्तुतं कार्मणशरीरनामकर्मेति । तथा अङ्गानि—शिरउरउदरपृष्ठबाहूरुसंज्ञितान्यष्टौ तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि, अङ्गानि च उपाङ्गानि च अङ्गोपाङ्गानि चेति द्वन्द्वे एकपदशेषे अङ्गोपाङ्गानि, तानि च यस्य कर्मण उदयाद् येषु त्रिषु शरीरेषु भवन्ति तत् त्रिविधं अङ्गोपाङ्गनाम, तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभागेन परिणतिर्भवति तदौदारिकशरीराङ्गोपाङ्गनाम, एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यं, तैजसकार्मणयोस्तु जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यङ्गोपाङ्गसंभव इति । तथा बध्यतेऽनेनेति बन्धनं—औदारिकादिपुद्गलानां गृहीतानां गृह्यमाणानां च परस्परसंश्लेषकारि, तच्च शरीरपञ्चकभेदात् पञ्चधा, तत्र पूर्वगृहीतैरौदारिकपुद्गलैः सह गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा बध्नात्यात्मा—

परस्परसंसक्तान् करोति तदौदारिकबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्लेषद्रव्यवत्, एवं वैक्रियादिबन्धनचतुष्केऽपि वाच्यं, अथवा औदारिकौदारिकबन्धननामभेदादि पञ्चदशधा, तच्च प्रागेव व्याख्यातं, यदि त्विदं शरीरपुद्गलानामन्योऽन्यसंश्लेषकारि बन्धननाम न स्यात् तत्तेषां शरीरपरिणत्या संहितानामप्यसंबद्धत्वात्पवनापहृतकुण्डस्थितसंहतास्तिमितसक्तूनामिव एकत्र स्थैर्यं न स्यादिति । तथा संघात्यन्ते—पिण्डीक्रियन्ते औदारिकादिपुद्गला येन तत्संघातनं, तदपि च शरीरपञ्चभेदत्वात्पञ्चधा, तत्र यस्य कर्मण उदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा संघातयति—पिण्डयत्यन्योऽन्यसंनिधानेन व्यवस्थापयति तदौदारिकसंघातनाम, इत्येवं वैक्रियादिशरीरचतुष्टयेऽपि वाच्यं, यदि च पुद्गलसंहतिमात्रनिमित्तं संघातनाम न स्यात्तदा बन्धोऽपि न भवेत्, 'नासंहतस्य बंधन'मिति न्यायात् । तथा संहन्यमानशरीरपुद्गलानां लोहपट्टादिवत् उपकारि संहननं—अस्थिरचनाविशेषः, तत्पुनरौदारिकशरीर एव नान्येषु, अस्थ्यादिरहितत्वात्तेषां, तच्च षोढा—वज्रऋषभनाराचादि, तत्र वज्रं—कीलिका ऋषभः—परिवेष्टनपट्टः नाराचः—उभयतो मर्कटबन्धः, ततश्च द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्रनामकमस्थि भवति यत्र तद्वज्रऋषभनाराचं प्रथमं, वज्रवर्जं ऋषभनाराचं द्वितीयं, ऋषभवर्जं वज्रनाराचमित्यन्ये, वज्रऋषभवर्जं नाराचं तृतीयं, एकतो मर्कटबन्धं द्वितीयपार्श्वे कीलिकाविद्धमर्धनाराचं चतुर्थं, ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयसंचितं कीलिकाख्यं पञ्चमं, यत्र पुनः परस्परं पर्यन्तमात्रसंस्पर्शलक्षणां सेवां ऋतानि—आगतान्यस्थीनि भवन्ति नित्यमेव च स्नेहाभ्यङ्गादिरूपां परिशीलनामाकाङ्क्षति तत्सेवार्तं षष्ठं संहननमिति । तथा संस्थानं—अवयवरचनात्मिका शरीराकृतिः, तदपि षोढा—समचतुरस्रादि, तत्र समाः—शरीरलक्षणशास्त्रोक्तप्रमाणलक्षणाविसंवा(ग्रन्थाग्रं १५०००)दिन्यस्रतस्रोऽस्रयः—चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रं, समासान्तोऽत्प्रत्ययः, न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलं,

यथा न्यग्रोध उपरि संपूर्णावयवोऽधस्तु हीनस्तथेदमपि नाभेरुपरि विस्तारबहुलं संपूर्णलक्षणादिमाग् अधस्तु न तथेति, तथा आदिः— इहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, ततः सह आदिना—नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्तत इति सादि, यद्यपि च सर्वमपि शरीरमादिना सह वर्तते तथापि सादित्वविशेषणान्यथानुपपत्त्या विशिष्ट एव प्रमाणलक्षणोपपन्न आदिरिह लक्ष्यते, तत उक्तं- यथोक्तप्रमाणलक्षणेनेति, इदमुक्तं भवति—यत्संस्थानं नाभेरधः प्रमाणोपपन्नमुपरि च हीनं तत्सादि इति, अपरे तु साचीति पठन्ति, तत्र साचीति प्रवचनवेदिनः शाल्मलीतरुमाचक्षते, ततः साचीव यत्संस्थानं तत्साचि, यथा शाल्मलीतरोः स्कन्धकाण्डमतिपुष्टमुपरि च न तदनुरूपा महाविशालता तद्वदस्यापि संस्थानस्याधो भागः परिपूर्णो भवति उपरितनभागस्तु नेति भावः, तथा वामनं मडहकोष्ठं पाणिपादशिरोग्रीवं यथोक्तप्रमाणलक्षणोपेतं शेषं तूरउदरादिरूपं कोष्ठं शरीरमध्यं मडहं—लक्षणरहितं तद् यत्र तद्वामनमित्यर्थः, अधस्त- नकायमडहं कुब्जं पाणिपादशिरोग्रीवालक्षणोऽधस्तनकायो मडहो—लक्षणविसंवादी यत्र शेषं तु मध्यकोष्ठं यथोक्तलक्षणयुक्तं तत्कुब्जं, वामनविपरीतमित्यर्थः, अन्ये तु दर्शितलक्षणव्यत्ययेन प्रथमं कुब्जं ततो वामनं पठन्तीति, हुण्डं तु सर्वावयवेषु प्रायो लक्षणविनिर्मुक्तं, यस्यैकोऽप्यवयवः प्रायो न लक्षणयुक्तो भवति तत्सर्वत्रासंस्थितं हुण्डमित्यर्थः । तथा वर्ण्यते—अलङ्क्रियते गुणवत्क्रियते शरीराद्यनेनेति वर्णः—कृष्णादिः पञ्चधा, तत्र कृष्णः कज्जलादाविव नीलः प्रियङ्गुपर्णादाविव लोहितो हिङ्गुलकादाविव हारिद्रो हरिद्रादाविव शुक्लः खटिकादाविव । तथा गन्ध्यते आघ्रायत इति गन्धः, स द्विधा—सुरभिः श्रीखण्डादाविव दुरभिर्लसुनादाविव । तथा रस्यते—आस्वाद्यत इति रसः तिक्तादिः पञ्चधा, तत्र तिक्तः कोशातक्यादाविव कटुः शुण्ठ्यादाविव, शास्त्रे हि यत्परिणाममङ्गीकृत्यातिदारुणं तत्कटुकमु- च्यते, यच्च परिणामेऽतिशीतलं तन्निम्बादिकं लोके कटुकमपि शास्त्रे तिक्तमिति व्यपदिश्यते, कषायोऽपक्वकपित्थादाविव अम्ल आम्लवे-

तसादाविव मधुरः शर्करादाविव । तथा स्पृश्यत इति स्पर्शः—कर्कशादिरष्टधा, तत्र कर्कशः पाषाणादाविव मृदुर्हंसरुतादाविव लघुरर्कतूलादाविव गुरुर्वज्रादाविव शीतो मृणालादाविव उष्णो वह्न्यादाविव स्निग्धो घृतादाविव रूक्षो भस्मादाविव, एवमेते वर्णादयो यदुदयवशाज्जन्तुशरीरेषु भवन्ति तान्यपि कर्माण्येतन्नामकानि वाच्यानीति। तथा सर्वप्राणिनां शरीराणि यदुदयवशादात्मीयात्मीयापेक्षया नैकान्तेन लघूनि नापि गुरूणि किंतु अगुरुलघुपरिणामपरिणतानि भवन्ति तदगुरुलघुनाम, एकान्तगुरुत्वे हि वोढुमशक्यानि स्युः एकान्तलघुत्वे तु वायुना विक्षिप्यमाणानि धारयितुं न पारयेरन्निति। तथा स्वशरीरावयवैरेव प्रतिजिह्वागलवृन्दलम्बकचौरदन्तादिभिः शरीरान्तर्वर्धमानैर्यदुदयादुपहन्यते—पीड्यते जन्तुस्तदुपघातनाम, तथा यदुदयादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा नृपसभामपि गतः सभ्यानामपि क्षोभमापादयति प्रतिपक्षप्रतिघातं च विधत्ते तत्पराघातनाम, तथा कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतुःसमयप्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटी इहाऽऽनुपूर्वी, तत्र नरकगत्या सहचरिताऽऽनुपूर्वी नरकगत्यानुपूर्वी, तत्समयं च वेद्यमानत्वात्सहचारित्वं, एवं तिर्यग्मनुष्यदेवानुपूर्व्योऽपि वाच्याः । तथा यदुदयादुच्छ्वासनिःश्वासलब्धिरात्मनो भवति तदुच्छ्वासनाम, सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न संभवतीति चेत्, नैतदस्ति, वैक्रियाहारकादिलब्धीनां औदयिकीनामपि संभवाद्, वीर्यान्तरायक्षयोपशमोऽपि च तत्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यते । ननु यदि उच्छ्वासनामकर्मोदयादुच्छ्वासनिःश्वासौ तदा उच्छ्वासपर्याप्तिनाम्नः कोपयोगः ?, उच्यते, उच्छ्वासनाम्न उच्छ्वासनिःश्वासग्रहणमोक्षविषया लब्धिरुपजायते, सा च लब्धिर्नोच्छ्वासपर्याप्तिमन्तरेण स्वफलं साधयति, न खल्विषुक्षेपणशक्तिमानपि धनुर्ग्रहणशक्तिमन्तरेणेषुं क्षेप्तुमलं, तत उच्छ्वासलब्धिनिर्वर्तनार्थमुच्छ्वासपर्याप्तिनाम्न उपयोगः, एवमन्यत्रापि भिन्नविषयता यथायोगं सूक्ष्म-

धिया भावनीया। तथा यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम, तद्विपाकश्च भानुमण्ड-लादिगतेषु पृथिवीकायेष्वेव, न वह्नौ, प्रवचने प्रतिषेधात्, तत्रोष्णत्वमुष्णस्पर्शनामोदयात् उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति। तथा यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यनुष्णप्रकाशात्मकमुद्योतमातन्वन्ति यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रताराविमानरत्नौ-षधयस्तदुद्योतनाम, तथा विहायसा—नभसा गतिः—प्रवृत्तिर्विहायोगतिः, ननु सर्वगतत्वाद्विहायसस्ततोऽन्यत्र गतिर्न संभवतीति किमर्थं विहायसा विशेषणं?, व्यवच्छेद्याभावात्, सत्यमेतत्, किंतु यदि गतिरित्येवोच्यते ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्या-शङ्का स्यात्, अतस्तद्व्यवच्छित्तये विहायसा विशेषणं, विहायसा गतिर्न तु नारकत्वादिपर्यायपरिणतिरूपेति विहायोगतिः, सा च द्वेधा-प्रशस्ता अप्रशस्ता च, तत्र प्रशस्ता हंसहस्तिवृषभादीनां, अप्रशस्ता तु खरोष्ट्रमहिषादीनामिति। तथा त्रस्यन्ति—उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसा—द्वीन्द्रियादयः तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम, तथा तिष्ठन्तीत्येवंशीला उष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थाः स्थावराः—पृथिव्यादय एकेन्द्रियादयः तत्पर्यायविपाकवेद्यं कर्मापि स्थावर-नाम, तेजोवायूनां तु स्थावरनामोदयेऽपि चलनं स्वाभाविकमेव, न तूष्णाद्यभितापेन द्वीन्द्रियादीनामिव विशिष्टमिति। तथा यदुदयाज्जीवा वादरा भवन्ति तद्वादरनाम, वादरत्वं चात्र परिणामविशेषः, यद्वशात्पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि वहूनां समु-दाये चक्षुषा ग्रहणं भवति, तद्विपरीतं सूक्ष्मनाम, यदुदयाद्बहूनामपि समुदितानां जन्तुशरीराणां चक्षुर्ग्राह्यत्वं न भवति, तथा यदुदया-त्स्वयोग्यपर्याप्तिनिर्वर्तनसमर्थो भवति तत्पर्याप्तकनाम, यदुदयाच्च स्वयोग्यपर्याप्तिपरिसमाप्तिसमर्थो न भवति तदपर्याप्तकनाम, पर्याप्तिस्व-रूपं तु द्वाविंशत्यधिकद्विशततमद्वारे विशेषेण वक्ष्यते, तथा यदुदयात् जीवं जीवं प्रति भिन्नं शरीरमुपजायते तत्प्रत्येकनाम, तस्योदयः

प्रत्येकशरीरिणां, प्रत्येकशरीरिणश्च नारकामरमनुष्यद्वीन्द्रियादयः पृथिव्यादयः कपित्थादितरवश्च, ननु यदि प्रत्येकनाम्न उदयः कपित्थादिपादपादीनामिष्यते तर्हि तेषां जीवं जीवं प्रति भिन्नं शरीरं भवेत्, तच्च न भवति, यतः कपित्थाश्वत्थपीलुशेल्वादीनां मूलस्कन्धत्वक्शाखादयः प्रत्येकमसङ्ख्येयजीवा उच्यन्ते, यत उक्तं प्रज्ञापनायां एकास्थिकबहुबीजवृक्षप्ररूपणावसरे—"एएसिं मूला असंखेज्जजीविया कंदावि खंधावि तयावि सालावि पवालावि, पत्ता पत्तेयजीविया" इत्यादि, मूलादयश्च फलपर्यन्ताः सर्वेऽप्येकशरीराकारा उपलभ्यन्ते, देवदत्तशरीरवत्, यथा हि देवदत्तशरीरमखण्डमेकरूपमुपलभ्यते तद्वन्मूलादयोऽपि, तत एकशरीरात्मकाः कपित्थादयस्ते चासङ्ख्येयजीवाः ततः कथं ते प्रत्येकशरीरिणः?, उच्यते, प्रत्येकशरीरिण एव, तेषां मूलादिष्वसङ्ख्येयानामपि जीवानां भिन्नभिन्नशरीरसंभवात्, केवलं श्लेषद्रव्यविमिश्रितसकलसर्षपवर्तिरिव प्रबलरागद्वेषोपचिततथारूपप्रत्येकनामकर्मपुद्गलोदयतस्ते तथा परस्परविमिश्रशरीरा जायन्ते, तथा चोक्तं प्रज्ञापनायामेव—"जह सगलसरिसवाणं सिलेसमिस्साण वट्टिया वट्टी। पत्तेयसरीराणं तह होंति सरीरसंघाया ॥ १ ॥ जह वा तिलपप्पडिया बहुएहिं तिलेहिं मीसिया संती। पत्तेयसरीराणं तह होंति सरीरसंघाया ॥ २ ॥" गाथाद्वयस्याप्ययमक्षरार्थः—यथा सकलसर्षपाणां श्लेषद्रव्येण मिश्रीकृतानां वर्तिता—वलिता वर्तिः यथा च बहुभिस्तिलैर्विमिश्रिता सती तिलपर्पटिका भवति तथा प्रत्येकशरीरिणां शरीरसङ्घाताः, इयमत्र भावना—यथा तस्यां वर्तौ सकलसर्षपाः परस्परं भिन्ना नान्योऽन्यानुवेधभाजस्तथा अदर्शनात् अत एव सकलग्रहणं येन स्पष्टमेव अन्योऽन्यानुवेधाभावः प्रतीयते, एवं वृक्षादावपि मूलादिषु प्रत्येकमसङ्ख्येया अपि जीवाः परस्परं विभिन्नशरीराः, यथा च ते सर्षपाः श्लेषद्रव्यसंपर्कमाहात्म्यात् परस्परं विमिश्रा जातास्तथा प्रत्येकशरीरिणोऽपि ते तथारूपप्रत्येकनामकर्मपुद्गलोदयात्परस्परं संहता जाता इति । तथा यदुदयवशादनन्तानां जीवानामेकं शरीरं भवति तत्साधारणनाम, ननु कथमन-

न्तानां जीवानामेकं शरीरमुपजायते ?, तथाहि—य एव प्रथममुत्पत्तिदेशमागतस्तेन तच्छरीरं निष्पादितं, अन्योऽन्यानुगमनेन च सव
त्मना क्रोडीकृतं, ततः कथं तत्रान्येषां जीवानामवकाशः ?, न खलु देवदत्तशरीरे देवदत्तेनान्योऽन्यानुवेधेन क्रोडीकृते देवदत्त श
सकलशरीरेण सहान्योऽन्यानुगमपुरस्सरमन्येऽपि जीवाः प्रादुष्षन्ति, तथाऽदर्शनात्, अपि च—सत्यप्यवकाशे येनैव तच्छरीरं निष्पाद्या-
न्योऽन्यानुगमेन क्रोडीकृतं स एव तत्र प्रधान इति, तस्यैव पर्याप्तापर्याप्तव्यवस्था प्राणापानादियोग्यपुद्गलोपादानं च भवेत्, न शेषाणा-
मिति, तदेतदसम्यक्, सम्यग्जिनवचनपरिज्ञानाभावात्, ते ह्यनन्ता अपि जीवास्तथाविधकर्मोदयसामर्थ्यतः समकमेवोत्पत्तिदेशमधि-
तिष्ठन्ति समकमेव च तच्छरीराश्रिताः पर्याप्तीर्निर्वर्तयितुमारभन्ते समकमेव च पर्याप्ता भवन्ति, समकालमेव च प्राणापानादियोग्यान् पुद्ग-
लानाददते, यच्चैकस्य पुद्गलाभ्यवहरणं तदन्येषामनन्तानामपि साधारणं, यच्चानन्तानां तद्विवक्षितस्यापि जीवस्य, ततो न कदाचिदनुपप-
त्तिरिति, उक्तं च प्रज्ञापनायाम्—"समयं वक्कंताणं समयं तेसिं सरीरनिप्फत्ती । समयं आणुग्गहणं समयं ऊसासनिस्सासा ॥ १ ॥
एगस्स उ जं गहणं बहूण साहारणाण तं चेव । जं बहुयाणं गहणं समासओ तंपि एगस्स ॥ २ ॥ साहारणमाहारो साहारणमाणुपा-
णगहणं च । साहारणजीवाणं साहारणलक्खणं एयं ॥ ३ ॥" इति [समकं व्युत्क्रान्तानां समकं तेषां शरीरनिष्पत्तिः । समकमानापा-
नग्रहणं समकमुच्छ्वासनिःश्वासौ ॥ १ ॥ एकस्य तु यद्ग्रहणं बहूनां साधारणानां तदेव । यद् बहूनां ग्रहणं समासतस्तदपि एकस्य ॥ २ ॥
साधारण आहारः साधारणमानापानग्रहणं च । साधारणजीवानां साधारणलक्षणमेतत् ॥ ३ ॥] तथा यदुदयात् शरीरावयवानां शिरोऽ-
स्थिदन्तानां स्थिरता भवति तत् स्थिरनाम, तथा यदुदयवशाज्जिह्वादीनां शरीरावयवानामस्थिरता भवति तदस्थिरनाम, तथा यदुदयान्ना-
भेरुपरितनाः शिरःप्रभृतयोऽवयवाः शुभा भवन्ति तच्छुभनाम, शिरःप्रभृतिभिर्हि स्पृष्टः परो हृष्यतीति तेषां शुभत्वं, तथा यस्योदया-

नाभेरधस्तनाः पादादयोऽवयवा अशुभा भवन्ति तदशुभनाम, तैः स्पृष्टः परो रुष्यतीति तेषामशुभत्वं, कामिन्याः पादेनापि स्पृष्टस्तुष्यति ततो व्यभिचार इति चेत्, न, तत्तोषस्य मोहनीयनिबन्धनत्वात्, वस्तुस्थितिश्चेह चिन्त्यते, ततो न दोषः, तथा यदुदयादनुपकार्यपि सर्वस्य मनःप्रह्लादकारी भवति तत्सुभगनाम, तथा यदुदयादुपकारकृदपि जनद्वेष्यो भवति तद् दुर्भगनाम, तथा यदुदयान्मधुरगम्भीरोदारस्वरो भवति तत्सुस्वरनाम, तथा यदुदयात्खरभिन्नदीनहीनस्वरो भवति तद् दुःस्वरनाम, तथा यदुदयेन यत्किञ्चिदपि ब्रुवाणः सर्वस्योपादेयवचनो भवति तदादेयनाम, तथा यदुदयाद् युक्तमपि ब्रुवाणः परिहार्यवचनस्तदनादेयनाम, तथा तपःशौर्यत्यागादिना समुपार्जितेन यशसा कीर्तनं—संशब्दनं श्लाघनं यशःकीर्तिः, अथवा यशः—सामान्येन ख्यातिः कीर्तिः—गुणोत्कीर्तनरूपा प्रशंसा यद्वा सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्तनीयगुणता यशः एकदिग्गामिनी दानपुण्यकृता वा कीर्तिः, यशश्च कीर्तिश्च यशःकीर्ती ते यदुदयाद्भवतस्ततो यशःकीर्तिनाम, ननु च कथमेते यशःकीर्ती तन्नामोदयनिबन्धने ?, तद्भावेऽपि कचित्तयोरभावात्, तदुक्तम्—"तस्सेव केइ जसकित्तिकित्तया अजसकित्तआ अन्ने । पायाराई जं बेंति अइसए इंदयालत्तं ॥ १ ॥" [ तस्यैव केचित् यशःकीर्त्तिकीर्त्तकाः अयशःकीर्त्तिकीर्त्तका अन्ये । यस्मात् प्राकारादीनतिशयानां इन्द्रजालत्वं ब्रुवते ॥ १ ॥ ] नैप दोषः, सद्गुणमध्यस्थपुरुषापेक्षयैव यशःकीर्तिनामोदयस्याभ्युपगतत्वात्, उक्तं च—"जइ कहवि धाउवेसम्मयाए दुद्धंपि जायए कडुयं । निंबो महुरो कस्सई न पमाणं तहवि तं होइ ॥ १ ॥" [ यदि कथमपि धातुवैषम्येण दुग्धमपि भवति कटुकं । निम्बश्च कस्यचिन्मधुरो न तथापि तत्प्रमाणं भवति ॥ १ ॥ ] अपि तु—"विवरीयदव्वगुणभासयाए अपमाणता उ तस्सेव । सग्गुणविसयं तम्हा जाणह जसकित्तिनामं तु ॥ १ ॥" [ द्रव्यगुणविपरीतभासकतया तस्यैवाप्रमाणता । तस्मात् सद्गुणविषयं यशःकीर्त्तिनाम जानीहि ॥ १ ॥ ] तद्विपरीतमयशःकीर्तिनाम यदुदयवशान्म-

ऽन्यस्यापि जनस्याप्रशस्यो भवति, तथा यदुदयवशाज्जन्तुशरीरेषु स्वस्वजात्यनुसारेणाङ्गप्रत्यङ्गानां प्रतिनियतस्थानवर्तिता भवति तन्निर्माणनाम, तच्च सूत्रधारकल्पं, तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वर्तितानामपि शिरउदरादीनां स्थानप्रवृत्तेरनियमो भवेत्, तथा यदुदयवशादष्टमहाप्रातिहार्यप्रमुखाश्चतुर्त्रिंशदतिशयाः प्रादुष्षन्ति तत्तीर्थकरनामेति ॥ ७५ ॥ २१६ ॥ इदानीं 'बंधोदयोदीरणसत्ताणं किंचि सरूवं'ति सप्तदशोत्तरद्विशततमं द्वारमाह—

सत्तट्ठछेगबंधा संतुदया अट्ठ सत्त चत्तारि । सत्तट्ठछपंचदुगं उदीरणाठाणसंखेयं ॥ ७६ ॥
बंधेऽट्ठ सत्तऽणाउग छविहममोहाउ इगविहं सायं । संतोदएसु अट्ठ उ सत्त अमोहा चउ अघाई ॥ ७७ ॥
अट्ठ उदीरइ सत्त उ अणाउ छव्विहमवेयणीआऊ । पण अवियणमोहाउग अकसाई नाम गोत्तदुगं ॥ ७८ ॥
बंधे वीसुत्तरसय १२० सयबावीसं तु होइ उदयंमि १२२ । उदीरणाए एवं १२२ अडयालसयं तु सन्तंमि १४८ ॥ ७९ ॥

'सत्ते'त्यादिगाथापञ्चकं, मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनो वह्न्ययस्पिण्डवदन्योऽन्यानुगमलक्षणः संबन्धो बन्धः, तस्य चत्वारि स्थानानि, तद्यथा—सप्त अष्टौ षट् एकमिति, तथा तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावेऽपि सति सद्भावः सत्ता, तस्या अपि त्रीणि स्थानानि, तद्यथा—अष्टौ सप्त चत्वारि, तथा तेषामेव कर्मपुद्गलानां यथास्वस्थितिबद्धानामपवर्तनादिकरणविशेषतः स्वभावतो वा उदयसमयप्राप्तानां विपाकवेदनमुदयः, तस्यापि त्रीणि स्थानानि, तद्यथा—अष्टौ सप्त चत्वारि, तथा उदयावलिकातो बहिर्वर्तिनीनां स्थितीनां दलिकं कषायैः

सहितेन असहितेन वा योगसंज्ञकेन वीर्यविशेषेण समाकृष्योदयावलिकायां प्रवेशनमुदीरणा, तस्याः पुनः पञ्च स्थानानि, तद्यथा—सप्त अष्टौ षट् पञ्च द्वे, इत्येषां बन्धादीनां स्थानसङ्ख्या ॥ ७६ ॥ साम्प्रतमेतेषां बन्धादिस्थानानामेव स्वरूपमाह—'बंधे'त्यादिगाथाद्वयं, आयुर्बन्धकाले ज्ञानावरणादिका अष्टौ प्रकृतयो बन्धे प्राप्यन्ते, शेषकालं त्वनायुष्काः—आयुर्बन्धविवर्जिताः सप्त, 'अमोहाउ'त्ति मोहायुर्वर्जाः षट् प्रकृतीर्बध्नतः षड्विधो बन्धः, ज्ञानदर्शनावरणान्तरायनामगोत्रबन्धव्यवच्छेदे एकमेव सातं बध्नत एकविधो बन्धः । तथा सत्तायामुदये च सर्वप्रकृतिसमुदाये अष्टौ प्राप्यन्ते, मोहनीयस्य उदयसत्ताव्यवच्छेदे सप्त, घातिकर्मणां—ज्ञानदर्शनावरणान्तरायाणामुदयसत्ताव्यवच्छेदे चतस्रः । तथा सर्वप्रकृतिसमुदायेऽष्टौ प्रकृतीरुदीरयति, आयुष उदीरणायामपगतायामायुर्वर्जाः सप्त, वेदनीयायुषोरुदीरणायामपगतायां षड्विधं कर्मोदीरयति, वेदनीयमोहायुषामुदीरणाऽपगमे पञ्च प्रकृतीरुदीरयति, अकषायी—केवली नामगोत्रलक्षणे द्वे कर्मणी उदीरयति । अथैतान्येव बन्धादिस्थानानि विनेयव्युत्पत्तये गुणस्थानकयोजनया विभाव्यन्ते—मिथ्यादृष्ट्यादयो मिश्रवर्जिता अप्रमत्तान्ता अष्ट सप्त वा कर्माणि बध्नन्ति, आयुः कदाचिदेव बध्यते इत्यायुर्बन्धकाले अष्ट आयुर्बन्धाभावे तु सप्तैव, मिश्रापूर्वकरणानिवृत्तिबादरास्तु सप्तैव बध्नन्ति, तेषामायुर्बन्धाभावात्, तत्र मिश्रस्य तथास्वाभाव्यात् इतरयोः पुनरतिविशुद्धत्वात् आयुर्बन्धस्य च घोलनापरिणामहेतुत्वात्, तथा सूक्ष्मसंपरायो मोहनीयायुर्वर्जानि षट् कर्माणि बध्नाति, मोहनीयबन्धस्य बादरकषायोदयहेतुत्वात् तस्य च तदभावात् आयुर्बन्धाभावस्त्वतिविशुद्धतरत्वादवसेयः, तथा उपशान्तमोहक्षीणमोहसयोगिकेवलिन एकविधं सातवेदनीयं कर्म बध्नन्ति, न शेषाणि, तद्बन्धहेत्वभावात्, अयोगिकेवली तु योगस्यापि बन्धहेतोरभावादबन्धकः । तथा मिथ्यादृष्टिगुणस्थानकादारभ्य यावत्सूक्ष्मसंपरायगुणस्थानं तावदष्टावपि कर्मप्रकृतय उदये सत्तायां च प्राप्यन्ते, सर्वत्रापि मोहनीयोदयसत्तयोः प्राप्यमाणत्वात्, उपशान्तमोहे

उदये सप्त प्राप्यन्ते, मोहनीयस्योपशान्तत्वेनोदयाभावात्, सत्तायां त्वष्टौ, मोहनीयस्य विद्यमानत्वात्, क्षीणमोहे सत्तायामुदये च सप्त, मोहनीयस्य क्षीणत्वेनोदयसत्तयोरभावात्, सयोग्ययोगिकेवलिनोस्तु चत्वार्यघातिकर्माणि उदये सत्तायां च प्राप्यन्ते, न शेषाणि, तेषां क्षीणत्वात्, तथा मिथ्यादृष्टेरारभ्य यावत्प्रमत्तसंयतगुणस्थानं तावज्जीवो निरन्तरमष्टानामपि कर्मणामुदीरकः, केवलमनुभूयमानभवायुष्कावलिकावशेषे सत्यायुष आवलिकाप्रविष्टत्वेनोदीरणाया अभावात् सप्तानामुदीरकः, सम्यग्मिथ्यादृष्टिगुणस्थानके तु वर्तमानः सर्वदैवाष्टानामुदीरकः, आयुष आवलिकावशेषत्वे मिश्रगुणस्थानकस्यासंभवात्, तथाहि—अन्तर्मुहूर्तावशेष एवायुषि मिश्रगुणस्थानकात्प्रतिपत्य सम्यक्त्वं मिथ्यात्वं वा जीवो गच्छतीति, अप्रमत्तापूर्वकरणानिवृत्तिवादरा वेदनीयायुर्वर्जानां शेषाणां षण्णां कर्मणामुदीरकाः, न तु वेदनीयायुषोः, अतिविशुद्धतया तदुदीरणायोग्याध्यवसायस्थानाभावात्, सूक्ष्मसंपरायस्तु षण्णां पञ्चानां वा उदीरकः, तत्र यावन्मोहनीयमावलिकावशेषं न भवति तावत्पूर्वोक्तानामेव षण्णामुदीरकः, आवलिकावशेषे च मोहनीये तस्याप्युदीरणाया अभावात्पञ्चानामुदीरकः, उपशान्तमोहोऽपि वेदनीयायुर्मोहनीयवर्जानां पञ्चानामुदीरकः, तत्र वेदनीयायुषोः कारणं प्रागेवोक्तं, मोहनीयं तूदयाभावान्नोदीर्यते, 'वेद्यमानमेवोदीर्यत' इति वचनात्, क्षीणमोहोऽप्यनन्तरोक्तानां पञ्चानां कर्मणामुदीरकः, तानि च तावदुदीरयति यावद् ज्ञानदर्शनावरणान्तरायाणि आवलिकाप्रविष्टानि न भवन्ति, आवलिकामात्रप्रविष्टेषु तेषु तेषामप्युदीरणाया अभावात् द्वे एव नामगोत्रलक्षणे कर्मणी उदीरयतीति, सयोगिकेवली पुनर्नामगोत्रे उदीरयति, न शेषाणि, घातिकर्मचतुष्टयस्य निर्मूलत एव क्षीणत्वात्, वेदनीयायुषोस्तु पूर्वोक्तकारणान्नोदीरणेति, अयोगिकेवली त्वनुदीरकः, योगसव्यपेक्षत्वात् उदीरणायास्तस्य च योगाभावादिति ॥ ७७ ॥ ७८ ॥ अथ वन्धादिषु सर्वसङ्ख्यया यावत्य उत्तरप्रकृतयो भवन्ति तावतीर्दर्शयितुमाह—'वन्धे' इत्यादि, वन्धे—वन्धचिन्तायां विंशत्युत्तरं प्रकृतीनां शतं भवतीति,

उदये च द्वाविंशत्युत्तरं शतं भवतीति, उदीरणायामप्येवं, द्वाविंशत्युत्तरमेव शतमित्यर्थः, सत्तायां पुनरष्टचत्वारिंशदधिकं शतं भवति, इयमत्र भावना—बन्धे उदये च चिन्त्यमाने बन्धननामानि संघातननामानि च स्वस्वशरीरान्तर्गतान्येव विवक्ष्यन्ते, तथा ये वर्णगन्धरसस्पर्शानामुत्तरभेदा यथाक्रमं पञ्चद्विपञ्चाष्टसङ्ख्याः तेऽपि बन्धे उदये च न विवक्ष्यन्ते, किंतु वर्णादय एव चत्वारः, तथा बन्धे चिन्त्यमाने सम्यक्त्वसम्यग्मिथ्यात्वे न गृह्येते, मिथ्यात्वपुद्गलानामेव तथापरिणतेः, तथा च सति बन्धचिन्तायां बन्धनपञ्चकं संघातनपञ्चकं वर्णादिषोडशकं च नाम्नस्त्रिनवतेरपनीयते शेषाः सप्तषष्टिः परिगृह्यन्ते, मोहनीयप्रकृतयश्च सम्यक्त्वसम्यग्मिथ्यात्वहीनाः शेषाः षड्विंशतिः, ततः सर्वप्रकृतिसङ्ख्यामीलने बन्धे विंशत्युत्तरं प्रकृतिशतं भवति, उदये च चिन्त्यमाने सम्यक्त्वमिश्रे अप्युदयमायात इति ते अपि परिगृह्येते, तत उदये द्वाविंशं प्रकृतिशतं, उदये सत्येवोदीरणा भवतीत्यत उदीरणायामपि द्वाविंशं शतं, सत्तायां तु चिन्त्यमानायां बन्धनपञ्चकं संघातनपञ्चकं वर्णादिषोडशकं च पूर्वापनीतं परिगृह्यते, ततः सर्वसङ्ख्यया प्रकृतीनामष्टचत्वारिंशं शतं भवति, उक्तं च **कर्मस्तवे**—"अडयालं पयडिसयं खविय जिणं निव्वुयं वंदे" [ अष्टचत्वारिंशं प्रकृतीनां शतं क्षपयित्वा निर्वृतं जिनं वन्दे ] ॥ यदा पुनर्गर्गर्षिशिवशर्मप्रभृत्याचार्याणां मतेनाष्टपञ्चाशदधिकं प्रकृतिशतं सत्तायामधिक्रियते तदा बन्धनानि पञ्चदश विवक्ष्यन्ते ततोऽष्टचत्वारिंशदधिकस्य प्रकृतिशतस्य पूर्वोक्तस्योपरि बन्धनगता दश प्रकृतयोऽधिकाः प्राप्यन्ते इति भवत्यष्टपञ्चाशदधिकं प्रकृतिशतमिति ॥ ७९ ॥ २१७ ॥

इदानीं 'कम्मट्ठिई सावाह'त्ति अष्टादशोत्तरद्विशततमं द्वारमाह—

**मोहे कोडाकोडीउ सत्तरी वीस नामगोयाणं । तीसियराण चउण्हं तेत्तीसऽयराइं आउस्स ॥ ८० ॥ एसा उक्कोसठिई इयरा वेयणिय बारस मुहुत्ता । अट्ठट्ठ नामगोत्तेसु सेसएसु मुहु-**

**न्तंतो ॥ ८१ ॥ जस्स जइ कोडकोडीउ तस्स तेत्तियसयाइं वरिसाणं । होइ अबाहाकालो आउम्मि पुणो भवतिभागो ॥ ८२ ॥**

मोहे—मोहनीये षष्ठीसप्तम्योरर्थं प्रत्यभेदात् मोहनीयस्य कर्मण उत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्यः, इह द्विधा स्थितिः, तद्यथा—कर्मरूपतावस्थानलक्षणा अनुभवयोग्या च, तत्र कर्मरूपतावस्थानलक्षणामेव स्थितिमधिकृत्योत्कृष्टं जघन्यं वा प्रमाणमभिधातुमिष्टमवगन्तव्यं, अनुभवयोग्या पुनरबाधाकालहीना, येषां च कर्मणां यावत्यः सागरोपमकोटीकोट्यः तेषां तावन्ति वर्षशतान्यबाधाकालः, तेन मोहनीयस्योत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्य इति तस्य सप्ततिर्वर्षशतान्यबाधाकालः, तथाहि—तन्मोहनीयमुत्कृष्टस्थितिकं बद्धं सत् सप्ततिवर्षशतानि यावन्न काञ्चिदपि स्वोदयतो जीवस्याबाधामुत्पादयति, अबाधाकालहीनश्च कर्मदलिकनिषेकः, किमुक्तं भवति ?—सप्ततिवर्षशतप्रमाणेषु समयेषु मध्ये न वेद्यदलिकनिक्षेपं करोति, किंतु तत ऊर्द्ध्वमिति, तथा नामगोत्रयोरुत्कृष्टा स्थितिर्विंशतिसागरोपमकोटीकोट्यो, द्वे वर्षसहस्रे अबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः, तथा इतरेषां चतुर्णां—ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, त्रीणि वर्षसहस्राण्यबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, आयुष उत्कृष्टा स्थितिस्त्रयस्त्रिंशदतराणि—सागरोपमाणि पूर्वकोटित्रिभागोऽबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, सूत्रकृता त्वसौ पूर्वकोटित्रिभागोऽबाधारूपतयैवापयाति न पुनरुदयमायाति अतो यावती स्थितिरायुषो वेद्यते तावत्येवाबाधारहितोपात्तेति ॥ ८० ॥ अथ उत्कृष्टस्थितिनिगमनपूर्वं जघन्यां स्थितिमाह—'एसे'त्यादि, एषा—पूर्वोक्ता उत्कृष्टा स्थितिः, इतरा—जघन्या पुनर्वेदनीये—वेदनीयस्य द्वादश मुहूर्ताः, इह द्विधा वेदनीयस्य जघन्या स्थितिः प्राप्यते—सकषायानकषायांश्च प्रतीत्य, तत्राकषायाणां वेदनीयस्थितिर्द्विसमयस्थितिका,

यतस्तत्कर्म प्रथमसमये वद्धं द्वितीयसमये वेदितं तृतीयसमयेऽकर्मतामनुभवति, अकषायाणां कषायरहितत्वेन वहुतरस्थितिवन्धासंभवात्, सकषायाणां तु सूत्रोपात्ता द्वादशमुहूर्ता जघन्या स्थितिः, अन्तर्मुहूर्तमवाधा अवाधाकालहीनश्च कर्मदलिकनिषेकः, तथा नामगोत्रयोः प्रत्येकमष्टौ अष्टौ मुहूर्ता जघन्या स्थितिः अन्तर्मुहूर्त्तमवाधा अवाधाकालहीनश्च कर्मदलिकनिषेकः, तथा शेषाणां—ज्ञानावरणदर्शनावरणान्तरायमोहनीयायुषां जघन्या स्थितिर्मुहूर्तान्तः—अन्तर्मुहूर्तं, अत्राप्यन्तर्मुहूर्तमवाधा, नवरं तल्लघुतरमवसेयं, अवाधाकालहीनश्च कर्मदलिकनिषेकः, तदेवमुक्ता मूलप्रकृतीनामुत्कृष्टा जघन्या च स्थितिः, उत्तरप्रकृतीनां तु कर्मप्रकृत्यादिग्रन्थेभ्योऽवसेया ॥ ८१ ॥ साम्प्रतमेतेषामेव कर्मणामुत्कृष्टस्थित्यवाधाकालपरिमाणमाह—'जस्से'त्यादि, यस्य कर्मणो यावत्यः सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः प्रतिपादिता तस्य कर्मणस्तावन्मात्राणि वर्षशतानि भवत्युत्कृष्टोऽवाधाकालः, यथा मोहनीयस्य सप्ततिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः ततस्तस्य सप्ततिवर्षशतान्यवाधा, एवं सर्वत्रापि भावनीयं, आयुषि पुनरुत्कृष्टोऽवाधाकालो भवत्रिभागः—पूर्वकोटित्रिभागलक्षणः, पूर्वकोटित्रिभागमध्ये वध्यमानायुर्दलिकनिषेकं न विदधातीत्यर्थः, वेद्यमानस्य ह्यायुषो द्वयोस्त्रिभागयोरतिक्रान्तयोस्तृतीये भागेऽवशिष्टे परभवायुषो वन्धः ततः पूर्वकोटित्रिभागो लभ्यते, जघन्या त्ववाधा सर्वेषामपि कर्मणामन्तर्मुहूर्तप्रमाणेति ॥ ८२ ॥ २१८ ॥ इदानीं 'वायालीसा य पुन्नपयडीओ'त्ति एकोनविंशत्युत्तरद्विशततमं द्वारमाह—

सायं १ उच्चागोयं २ नरतिरिदेवाउ ५ नाम एयाओ । मणुयदुगं ७ देवदुगं ९ पंचिंदियजाइ १०
तणुपणगं १५ ॥ ८३ ॥ अंगोवंगतिगंपि य १८ संघयणं वज्जरिसहनारायं १९ । पढमं चिय संठाणं
२० वन्नाइचउक्क सुपसत्थं २४ ॥ ८४ ॥ अगुरुलहु २५ पराघायं २६ उस्सासं २७ आयवं च २८

तित्थयरेणं
उज्जोयं २९। सुपसत्था विहगगई ३० तसाइदसगं च ४० निम्माणं ४१ ॥ ८५ ॥
सहिया पुन्नपयडीओं हुंति बायाला ४२। सिवसिरिकडक्खियाणं सयावि सत्ताणमेयाउ॥ ८६ ॥

सातं—सातवेदनीयं तथा उच्चैर्गोत्रं तथा नरायुस्तिर्यगायुर्देवायुश्च, तथा एताश्च नामकर्मप्रकृतयस्तद्यथा—मनुष्यद्विकं—मनुष्यगतिमनुष्या-नुपूर्वीलक्षणं देवद्विकं—देवगतिदेवानुपूर्वीलक्षणं पञ्चेन्द्रियजातिः तनुपञ्चकं—औदारिकवैक्रियाहारकतैजसकार्मणलक्षणं अङ्गोपाङ्गत्रिकं—औदारिकवैक्रियाहारकाङ्गोपाङ्गलक्षणं, संहननं वज्रर्षभनाराचाख्यं, प्रथमं चैव संस्थानं—समचतुरस्राख्यं, तथा वर्णादिचतुष्कं—वर्णगन्ध-रसस्पर्शस्वरूपं सुप्रशस्तं—शुभं, तत्र वर्णाः शुक्लपीतरक्ताः गन्धः सुरभिः रसा मधुराम्लकषायाः स्पर्शा मृदुलघुस्निग्धोष्णा इति, अगुरुलघु पराघातं उच्छ्वासं आतपं उद्योतं सुप्रशस्ता विहायोगतिः त्रसादिदशकं च—त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिलक्षणं निर्माणं च, एता एव तीर्थकरनाम्ना सहिता द्विचत्वारिंशत्पुण्यप्रकृतयः शुभसंज्ञिकाः प्रकृतयो भवन्ति, एताश्च शिवश्रीकटाक्षितानां सत्त्वानां सदैव प्राप्यन्त इति ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ २१९॥ इदानीं 'बासीई पावपयडीओ'त्ति विंशत्युत्तरद्विशततमं द्वारमाह—

नाणंतरायदसगं १० दंसण ११ मोहपयइ छवीसा २६ । अस्सायं निरयाउं नीयागोएण अड-
याला ॥ ८७ ॥ नरयदुगं २ तिरियदुगं ४ जाइचउक्कं ८ च पंच संघयणा १३। संठाणावि य पंच
उ १८ वन्नाइचउक्कमपसत्थं २२ ॥ ८८ ॥ उवघाय २३ कुविहायगई २४ थावरदसगेण होंति
चोत्तीसा ३४। सव्वाओं मीलियाओ बासीई पावपयडीओ ८२ ॥ ८९ ॥

ज्ञानावरणपञ्चकं अन्तरायपञ्चकं दर्शनावरणनवकं, सम्यक्त्वमिश्रे उदयमेव केवलमाश्रित्याशुभे, न बन्धमपि, तयोर्बन्धासंभवात्, अतस्त-

द्वर्जा मोहनीयस्य षड्विंशतिः प्रकृतयः, असातं नरकायुष्कं नीचैर्गोत्रं चेत्येता अष्टचत्वारिंशत्प्रकृतयः, नरकद्विकं—नरकगतिनरकानुपूर्वीस्वरूपं तिर्यग्द्विकं—तिर्यग्गतितिर्यगानुपूर्वीलक्षणं, जातिचतुष्कं—एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणं, पञ्च संहननानि प्रथमवर्जानि संस्थानान्यपि आद्यवर्जानि पञ्च, वर्णादिचतुष्कमप्रशस्तं, तत्र वर्णौ नीलकृष्णौ गन्धो दुरभिः रसौ तिक्तकटुकौ स्पर्शाश्च गुरुखररूक्षशीतरूपा इति, उपघातं कुत्सिता च—अप्रशस्ता विहायोगतिः, स्थावरदशकं च—स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्ति-लक्षणं एताश्चतुस्त्रिंशन्नामकर्मप्रकृतयः, मिलिताश्च सर्वा द्व्यशीतिः पापप्रकृतयः—अशुभसंज्ञाः प्रकृतय इत्यर्थः, वर्णादिचतुष्कं हि शुभप्रकृतिसङ्ख्यायामशुभप्रकृतिसङ्ख्यायां च परिगृह्यते, तस्य द्विधा संभवात्, अतो बन्धोक्ताया विंशत्युत्तरशतलक्षणसङ्ख्याया न व्याघात इति ॥ ८७ ॥ ८८ ॥ ८९ ॥ २२८ ॥ इदानीं 'भावच्छक्कं सपडिभेयं'त्येकविंशत्युत्तरद्विशततमं द्वारमाह—

भावा छच्चोवसमिय १ खइय २ खओवसम ३ उदय ४ परिणामा ५। दु २ नव ९ ट्ठारि १८ग-वीसा २१ तिग ३ भेया सन्निवाओ य ॥ ९० ॥ सम्मचरणाणि पढमे दंसणनाणाइं दाणलाभा य। उवभोगभोगवीरिय सम्मचरित्ताणि य बिइए ॥ ९१ ॥ चउनाणमणाणतिगं दंसणतिग पंच दाणलद्धीओ । सम्मत्तं चारित्तं च संजमासंजमो तइए ॥ ९२ ॥ चउगइ चउक्कसाया लिंगतिगं लेसछक्कमन्नाणं । मिच्छत्तमसिद्धत्तं असंजमो तह चउत्थम्मि ॥ ९३ ॥ पंचमगंमि य भावे जीवाभवत्तभव्वया चेव । पंचण्हवि भावाणं भेया एमेव तेवन्ना ॥ १२९४ ॥ ओदयिय-खओवसमियपरिणामेहिं चउरो गइचउक्के । खइयजुएहिं चउरो तदभावे उवसमजुएहिं ॥ ९५ ॥

एक्केक्को उवसमसेढीसिद्धकेवलिसु एवमविरुद्धा । पन्नरस सन्निवाइयभेया वीसं असंभविणो
॥ ९६ ॥ दुगजोगो सिद्धाणं केवलिसंसारियाण तियजोगो । चउजोगजुअं चउसुवि गईसु
मणुयाण पणजोगो ॥ ९७ ॥ मोहस्सेवोवसमो खाओवसमो चउण्ह घाईणं । उदयक्खयपरि-
णामा अट्ठण्हवि हुंति कम्माणं ॥ ९८ ॥

विशिष्टहेतुभिः स्वभावतो वा जीवानां तेन तेन रूपेण भवनानि भावाः—वस्तुपरिणामविशेषाः, अथवा भवन्त्येभिरुपशमादिभिः पर्या-
यैरिति भावाः, 'छच्चे'ति चशब्दस्यावधारणार्थत्वात् षडेव—षट्सङ्ख्या एव, तद्यथा—औपशमिकः क्षायिकः क्षायोपशमिकः औदयिकः
पारिणामिकः सान्निपातिकश्च, तत्रोपशमो—भस्मच्छन्नाग्नेरिवानुद्रेकावस्था प्रदेशतोऽप्युदयाभाव इतियावत्, इत्थंभूतश्चोपशमः सर्वोपशम
उच्यते, स च मोहनीयस्यैव कर्मणो न शेषस्य, 'सव्वुवसमो मोहस्सेव उ' इति वचनात्, तत्र चैवं शब्दव्युत्पत्तिः—उपशम एवौपश-
मिकः स्वार्थिक इकण्प्रत्ययः यद्वा उपशमेन निर्वृत्त औपशमिकः—क्रोधाद्युदयाभावफलरूपो जीवस्य परमशान्तावस्थालक्षणः परिणाम-
विशेषः, क्षयः—कर्मणामत्यन्तोच्छेदः क्षय एव क्षायिकः क्षयेण वा निर्वृत्तः क्षायिकः—तत्कर्माभावफलरूपो विचित्रो जीवस्य परिणति-
विशेषः, उदीर्णस्यांशस्य क्षयः अनुदीर्णस्य चांशस्य विपाकमधिकृत्योपशमः क्षयोपशमः स एव क्षायोपशमिकः तेन वा निर्वृत्तो घातिक-
र्मक्षयोपशमसंपाद्यो मतिज्ञानादिलब्धिरूप आत्मनः परिणामविशेषः क्षायोपशमिकः, अष्टानां कर्मणां यथास्वमुदयसमयप्राप्तानामात्मी-
यात्मीयस्वरूपेणानुभवनमुदयः उदय एवौदयिकः यद्वा उदयेन निर्वृत्त औदयिको भावो—नारकत्वादिपर्यायपरिणतिरूपः, परिणमनं परि-
णामः—कथञ्चिदवस्थितस्य वस्तुनः पूर्वावस्थापरित्यागेनोत्तरावस्थागमनं स एव तेन वा निर्वृत्तः पारिणामिकः। एषामेव यथाक्रमं भेदानाह

—'दुनवे'त्यादि, द्वौ नव अष्टादश एकविंशतिस्त्रयश्च यथाक्रमेण भेदा येषां ते तथा, सान्निपातिकश्च षष्ठो भावः, सन्निपतनं सन्निपातो—मिलनं स एव तेन वा निर्वृत्तः सान्निपातिकः, औदयिकादिभावद्व्यादिसंयोगनिष्पाद्योऽवस्थाविशेष इत्यर्थः ॥ ९० ॥ सांप्रतमौपशमिकक्षायिकभेदान् द्विनवसङ्ख्यान् व्याख्यातुमाह—'सम्मे'त्यादि, सम्यक्त्वं चारित्रं चौपशमिकं, प्रथमे औपशमिके भावे वर्तेते, औपशमिकं हि सम्यक्त्वं दर्शनसप्तके चारित्रं तु चारित्रमोहनीये उपशान्ते संभवति, अत औपशमिकभाववर्तित्वमनयोरिति, तथा 'दंसणनाणाइं'ति 'सूचकत्वात् सूत्रस्य' केवलदर्शनं केवलज्ञानं दानलाभोपभोगपरिभोगवीर्यलब्धयः क्षायिकसम्यक्त्वं क्षायिकचारित्रं च द्वितीये क्षायिके भावे भवन्ति, तथाहि—केवलदर्शनं केवलज्ञानं च निजनिजावरणक्षय एवोपजायते, क्षायिकदानादिलब्धयस्तु पञ्चापि पञ्चविधान्तरायक्षय एव, क्षायिकसम्यक्त्वमपि दर्शनमोहसप्तकक्षये, क्षायिकचारित्रं पुनश्चारित्रमोहनीयक्षये इति ॥ ९१ ॥ अधुना क्षायोपशमिकभावभेदानष्टादशसङ्ख्यानाह—'चउ'इत्यादि, चत्वारि ज्ञानानि—मतिश्रुतावधिमनःपर्यायरूपाणि अज्ञानत्रिकं—मतिश्रुताज्ञानविभङ्गरूपं, दर्शनत्रिकं—चक्षुरचक्षुरवधिदर्शनस्वभावं 'पंचे'ति सङ्ख्या दानेनोपलक्षिता लब्धयो दानलब्धयः, दानलाभोपभोगपरिभोगवीर्यलब्धयः, सम्यक्त्वं—सम्यग्दर्शनं, चारित्रं च—सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपरायलक्षणं, संयमासंयमो—देशविरतिरूप इत्येतेऽष्टादश भेदास्तृतीये क्षायोपशमिके भावे भवन्ति, तथाहि—ज्ञानचतुष्कमज्ञानत्रिकं च यथास्वमावारकस्य मतिज्ञानावरणादिकर्मणः क्षयोपशम एव भवति, दर्शनत्रिकं तु चक्षुर्दर्शनावरणादिक्षयोपशमे, दानादिकाः पुनः पञ्च लब्धयोऽन्तरायकर्मक्षयोपशमे भवन्ति । ननु दानादिलब्धयः पूर्वं क्षायिकभाववर्तिन्य उक्ताः इह तु क्षायोपशमिक इति कथं न विरोधः ?, नैतदेवं, अभिप्रायापरिज्ञानात्, दानादिलब्धयो हि द्विधा भवन्ति—अन्तरायकर्मणः क्षयसंभविन्यः क्षयोपशमसंभविन्यश्च, तत्र याः क्षायिक्यः पूर्वमुक्तास्ताः क्षयसंभूतत्वेन केवलिन एव भवन्ति,

यास्त्विह क्षायोपशमिक्य उच्यन्ते ताः क्षयोपशमसंभूताः छद्मस्थानामेवेति, सम्यक्त्वमपि क्षायोपशमिकं दर्शनसप्तकक्षयोपशमे, चारित्रचतुष्कं तु चारित्रमोहनीयक्षयोपशमे, संयमासंयमश्चाप्रत्याख्यानावरणकषायमोहनीयक्षयोपशमे इति ॥ ९२ ॥ सांप्रतमेकविंशतिमौदयिकभावभेदानाह—'चउगई'त्यादि, एते सर्वेऽपि गत्यादयो भावाश्चतुर्थे औदयिके भावे भवन्ति, तथाहि—चतस्रो नरकादिगतयो नरकगत्यादिनामकर्मोदयादेव जीवे प्रादुष्षन्ति, कषाया अपि क्रोधादयश्चत्वारः कषायमोहनीयकर्मोदयात्, लिङ्गत्रिकमपि—स्त्रीवेदादिरूपं स्त्रीवेदपुंवेदनपुंसकवेदमोहनीयकर्मोदयात्, लेश्याषट्कं तु 'योगपरिणामो लेश्या' इत्याश्रयणेन योगत्रिकजनककर्मोदयात्, येषां तु मते कषायनिस्स्यंदो लेश्यास्तदभिप्रायेण कषायमोहनीयकर्मोदयात्, येषां तु कर्मनिस्स्यंदो लेश्यास्तन्मतेन तु संसारित्वासिद्धत्ववदष्टप्रकारकर्मोदयादिति, अज्ञानमपि—विपर्यस्तबोधरूपं मत्यज्ञानादिकं ज्ञानावरणमिथ्यात्वमोहनीयोदयात्, यत्तु पूर्वमस्यैव मत्याद्यज्ञानस्य क्षायोपशमिकत्वमुक्तं तद्वस्त्ववबोधमात्रापेक्षया, सर्वमपि हि वस्त्ववबोधमात्रं विपर्यस्तमविपर्यस्तं च ज्ञानावरणीयकर्मक्षयोपशम एव भवति, यत्पुनस्तस्यैव विपर्यासलक्षणमज्ञानत्वं तद् ज्ञानावरणमिथ्यात्वमोहनीयकर्मोदय एव संपद्यते, इत्येकस्यैवाज्ञानस्य क्षायोपशमिकत्वमौदयिकत्वं च न विरुध्यते, इत्येवमन्यत्रापि विरोधपरिहारः कर्तव्य इति, मिथ्यात्वं मिथ्यात्वमोहनीयोदयात्, असिद्धत्वं—कर्माष्टकोदयात्, असंयमः—अविरतत्वं तदप्यप्रत्याख्यानावरणकषायोदयादुपजायत इति । ननु निद्रापञ्चकासातादिवेदनाहास्यरत्यरतिप्रभृतयः प्रभूततरभावा अन्येऽपि कर्मोदयजन्याः सन्ति तत् किमित्येतावन्त एवैते निर्दिष्टाः?, सत्यं, उपलक्षणमात्रत्वादमीषां संभविनोऽन्येऽपि द्रष्टव्या इति ॥ ९३ ॥ अथ पारिणामिकभेदांस्त्रीनाह—'पंचे'त्यादि, पञ्चमके च—पारिणामिकत्वलक्षणे भावे जीवत्वाभव्यत्वभव्यत्वानि वर्तन्ते, जीवत्वमभव्यत्वं भव्यत्वं चानादिपारिणामिको भाव इत्यर्थः, उपलक्षणं चैतत्, तेन ये गुडघृततण्डुलासवघटादीनां नवपुराणत्वादयोऽवस्थावि-

शेषाः ये च वर्षधरपर्वतभवनविमानकूटरत्नप्रभादीनां पुद्गलविचटनचटनसंपाद्या अवस्थाविशेषाः यानि च गंधर्वनगराणि यच्च कपिहसितमुल्कापातो गर्जितं महिका दिग्दाहो विद्युत् चन्द्रपरिवेषः सूर्यपरिवेषश्चन्द्रसूर्यग्रहणमिन्द्रधनुरित्यादिः सर्वः सादिपारिणामिको भावः, लोकस्थितिरलोकस्थितिर्धर्मास्तिकायत्वमित्यादिरूपस्त्वनादिपारिणामिक इति । उक्ताः प्रत्येकं भावभेदाः, सम्प्रत्येतेषामेव भेदानां सर्वसङ्ख्यामाह—'पंचण्हवी'त्यादि, पञ्चानामप्यौपशमिकादीनां भावानां भेदाः समुदिताः सन्त एवमेव—पूर्वोक्तप्रकारेण त्रिपञ्चाशत्सङ्ख्या भवन्ति, द्विनवाष्टादशैकविंशतित्रयाणां मीलनेनैतत्सङ्ख्यायाः सद्भावादिति । षष्ठस्तु सान्निपातिको भाव एतेषामेव द्व्यादिसंयोगनिष्पाद्यः, तत्र चागमोक्तक्रमेण औदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकरूपाणां पञ्चानां पदानां सामान्यतः षड्विंशतिर्भङ्गा उत्पद्यन्ते, तद्यथा—दश द्विकसंयोगे दश त्रिकसंयोगे पञ्च चतुष्कसंयोगे एकः पञ्चकसंयोगे इति, तत्र द्विकसंयोगे दश—औदयिक औपशमिक इत्येको भङ्गः औदयिकः क्षायिक इति द्वितीयः औदयिकः क्षायोपशमिक इति तृतीयः औदयिकः पारिणामिक इति चतुर्थः औपशमिकः क्षायिक इति पञ्चमः औपशमिकः क्षायोपशमिक इति षष्ठः औपशमिकः पारिणामिक इति सप्तमः क्षायिकः क्षायोपशमिक इत्यष्टमः क्षायिकः पारिणामिक इति नवमः क्षायोपशमिकः पारिणामिक इति दशमः, तथा दश त्रिकसंयोगे—औदयिक औपशमिकः क्षायिक इत्येको भङ्गः औदयिक औपशमिकः क्षायोपशमिक इति द्वितीयः औदयिक औपशमिकः पारिणामिक इति तृतीयः औदयिकः क्षायिकः क्षायोपशमिक इति चतुर्थः औदयिकः क्षायिकः पारिणामिक इति पञ्चमः औदयिकः क्षायोपशमिकः पारिणामिकः इति षष्ठः औपशमिकः क्षायिकः क्षायोपशमिक इति सप्तमः औपशमिकः क्षायिकः पारिणामिक इत्यष्टमः औपशमिकः क्षायोपशमिकः पारिणामिक इति नवमः क्षायिकः क्षायोपशमिकः पारिणामिक इति दशमः, तथा चतुष्कसंयोगे—औदयिक औपशमिकः क्षायिकः क्षायोप-

शमिक इत्येको भङ्गः औदयिक औपशमिकः क्षायिकः पारिणामिक इति द्वितीयः औदयिकः औपशमिकः क्षायोपशमिकः पारिणामिक
इति तृतीयः औदयिकः क्षायिकः क्षायोपशमिकः पारिणामिक इति चतुर्थः औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिक इति
पञ्चमः, षड्विंशतितमस्तु भङ्गः पंचकसंयोगे जायमानः सुप्रतीत एव, एते च षड्विंशतिर्भङ्गा भङ्गरचनामात्रमधिकृत्य दर्शिता वेदि-
तव्याः, संभविनः पुनरेतेषु मध्ये परमार्थतः षडेव, तद्यथा—एको द्विकसंयोगे ९ द्वौ त्रिकसंयोगे ५—६ द्वौ चतुष्कसंयोगे ३—४ एकः
पञ्चकसंयोगे ॥ ९४ ॥ एते चावान्तरभेदतः पंचदश भवन्त्यतस्तान् सूत्रकृदाह—'ओदई'त्यादिगाथाद्वयं, औदयिकक्षायोपशमिकपा-
रिणामिकैर्भावैर्निष्पन्नस्य सान्निपातिकस्य नारकतिर्यग्नरसुरस्वरूपगतिचतुष्कविषयतया चिन्त्यमानस्य चत्वारो भेदा भवन्ति, इदमुक्तं
भवति—औदयिकः क्षायोपशमिकः पारिणामिक इत्ययं त्रिकसंयोगनिष्पन्नो भङ्गो गतिभेदाच्चतुर्धा भिद्यते, तद्यथा—निरयगतावौदयिकं
नैरयिकत्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, तिर्यग्गतावौदयिकं तिर्यग्योनित्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं
जीवत्वादि, एवं नरसुरगत्योरपि भावना कार्या, तथा एतैरेवौदयिकादिभिस्त्रिभिः क्षायिकसहितैर्निष्पन्नस्य सान्निपातिकस्य भावस्य
चत्वारो भेदा भवन्ति, अयमर्थः—अमीषामेव त्रयाणां भावानां मध्ये यदा क्षायिको भावश्चतुर्थः प्रक्षिप्यते तदा चतुष्कसंयोगो भवति,
एवं चाभिलपनीयः—औदयिकः क्षायिकः क्षायोपशमिकः पारिणामिकः, एषोऽपि गतिभेदाच्चतुर्धा, तद्यथा—औदयिकी नरकगतिः
क्षायिकं सम्यक्त्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, एवं तिर्यग्नरसुरगतिष्वपि भावनीयं, प्रकारान्तरेण चतुःसंयोगे
एव चतुर्भेदानाह—तदभावे—अनन्तरप्रक्षिप्तक्षायिकभावाभावे औपशमिकभावयुक्तैरौदयिकादिभिरेव चत्वारो भेदा भवन्ति, एतदुक्तं
भवति—यदा क्षायिकभावस्थाने औपशमिको भावः प्रक्षिप्यते तदापि चतुष्कसंयोगो भवति, एवं चाभिलापः—औदयिक औपशमिकः

क्षायोपशमिकः पारिणामिकः, एषोऽपि गतिभेदात्प्रागिव चतुर्धा भावनीयः, नवरमौपशमिकं सम्यक्त्वमवगन्तव्यं, तथा एककः—एकसङ्ख्यः सान्निपातिको भेद उपशमश्रेणिसिद्धकेवलिषु भवति, तत्र औदयिक औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिक इत्येवंरूप एकः पञ्चकसंयोगो यः क्षायिकः सम्यग्दृष्टिः सन्नुपशमश्रेणिं प्रतिपद्यते तस्य संभवति, तथाहि—औदयिकं मनुष्यत्वादि औपशमिकं चारित्रं क्षायिकं सम्यक्त्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, सिद्धेषु पुनरेको द्विकसंयोगलक्षणः सान्निपातिकभेदः, तद्यथा—क्षायिकः पारिणामिक इति, तत्र क्षायिकं सम्यक्त्वकेवलज्ञानादि पारिणामिकं जीवत्वं, केवलिनां त्वेकस्त्रिकसंयोगलक्षणः सान्निपातिकभेदः, तद्यथा—औदयिकः क्षायिकः पारिणामिकः, तत्रौदयिकं मनुष्यत्वादि क्षायिकं केवलज्ञानादि पारिणामिके जीवत्वभव्यत्वे, एवमनेन गत्यादिषु संयोगषट्कचिन्तनप्रकारेणाविरुद्धाः परस्परविरोधाभावेन संभविनः पञ्चदश सान्निपातिकभेदाः षट्कभावविकल्पा भवन्ति, विंशतिसङ्ख्याः पुनर्भङ्गा असंभविनः संयोगोत्थानमात्रतयैव संभवंति न पुनर्जीवेषु कदाचिदपि प्राप्यन्ते इति ॥ ९५ ॥ ९६ ॥ अथैत एव संभविनः षड् भङ्गा येषु जीवेषु संभवन्ति तानाह—'दुगे'त्यादि, दशसु द्विकसंयोगेषु मध्ये क्षायिकपारिणामिकभावद्वयनिष्पन्नो नवमो द्विकसंयोगः सिद्धानां संभवति, शेषास्तु नव प्ररूपणामात्रं, अन्येषां तु जीवानामौदयिकी गतिः क्षायोपशमिकानीन्द्रियाणि पारिणामिकं तु जीवत्वमित्येतद्भावत्रयं जघन्यतोऽपि लभ्यत इति, तथा केवलिनां संसारिणां च त्रिकसंयोगः, तत्र दशसु त्रिकसंयोगेषु मध्ये केवलिनां औदयिकक्षायिकपारिणामिकभावत्रयनिष्पन्नः पञ्चमो भङ्गः संभवति, औपशमिकस्य मोहनीयाश्रितत्वेन तत्क्षयवतां केवलिनामसंभवात्, क्षायोपशमिकस्यापि इन्द्रियाद्यभावतोऽसंभवाद् 'अतीन्द्रियाः केवलिन' इति वचनात्, संसारिणां तु चतुर्गतिकजीवानामौदयिकक्षायोपशमिकपारिणामिकभावत्रयनिष्पन्नः षष्ठस्त्रिकसंयोगः संभवति, शेषास्त्वष्टौ प्ररूप-

णामात्रं, क्वाप्यसंभवादिति, तथा पञ्चसु चतुष्कसंयोगेषु मध्ये चतुर्योगयुगं—चतुःसंयोगभङ्गद्वयं चतसृष्वपि गतिषु संभवति, तथाहि—
औपशमिकसम्यग्दृष्टेरौदयिकौपशमिकक्षायोपशमिकपारिणामिकभावचतुष्टयनिष्पन्नस्तृतीयो भङ्गः, क्षायिकसम्यग्दृष्टेस्तु औदयिकः
क्षायिकः क्षायोपशमिकः पारिणामिक इत्येवंरूपश्चतुर्थो भङ्गश्चतसृष्वपि गतिषु प्राप्यत इति, तथा मनुष्याणां पञ्चकयोगः—पूर्वोक्तभाव-
पञ्चकसंयोगः संभवति, केवलं क्षायिकसम्यग्दृष्टयः सन्तो ये उपशमश्रेणिं प्रतिपद्यन्ते तेषामेव न पुनरन्येषां, समुदितभावपञ्चकस्य
तेषामेव भावादिति ॥ १७ ॥ उक्ता जीवानधिकृत्य सर्वेऽपि भावाः, इदानीं को भावः कस्मिन् कर्मणि भवतीत्येतन्निरूपयितुमाह—
'मोहस्सेवे'त्यादि, अष्टानां कर्मणां मध्ये मोहनीयस्यैवोपशमो—विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य विष्कम्भणं नान्येषां, उपशम-
स्त्विह सर्वोपशमो विवक्षितो न देशोपशमः, तस्य सर्वेषामपि कर्मणां संभवात्, तथा उदयावलिकाप्रविष्टस्यांशस्य क्षयेणानुदयावलिका-
प्रविष्टस्योपशमेन—विपाकोदयनिरोधलक्षणेन निर्वृत्तः क्षायोपशमिकः, स चतुर्णामेव घातिकर्मणां—ज्ञानावरणदर्शनावरणमोहनीयान्तराय-
रूपाणां भवति न शेषकर्मणां, चतुर्णामपि च केवलज्ञानावरणकेवलदर्शनावरणरहितानां, तयोर्विपाकोदयविष्कम्भाभावतः क्षयोपशमासं-
भवात्, उदयक्षयपरिणामा अष्टानामपि कर्मणां भवन्ति, तत्र उदयो—विपाकानुभवनं, तस्य सर्वेषामपि संसारिजीवानामष्टानामपि कर्मणां
दर्शनात्, क्षयः—आत्यन्तिकोच्छेदः, स च मोहनीयस्य सूक्ष्मसंपरायगुणस्थानकस्य चरमसमये, शेषाणां तु त्रयाणां घातिकर्मणां क्षीणक-
षायगुणस्थानकस्य, अघातिकर्मणामयोगिकेवलिनः, तथा परिणमनं परिणामः—जीवप्रदेशैः सह संलुलिततया मिश्रीभवनं यद्वा तत्तद्-
द्रव्यक्षेत्रकालाध्यवसायापेक्षया तथातथासंक्रमादिरूपतया यत्परिणमनं स परिणामः, एष चात्र तात्पर्यार्थः—मोहनीयस्य औपशमिकक्षा-

यिकक्षायोपशमिकौदयिकपारिणामिकलक्षणाः पञ्चापि भावाः संभवन्ति, ज्ञानावरणदर्शनावरणान्तरायाणामौपशमिकवर्जाः शेषाश्चत्वारः, नामगोत्रवेदनीयायुषां क्षायिकौदयिकपारिणामिकलक्षणास्त्रय इति ॥ ९८ ॥ अथ गुणस्थानकेषु भावपञ्चकं चिन्तयन्नाह—

**सम्माइचउसु तिग चउ भावा चउ पणुवसामगुवसंते । चउ खीणऽपुव्वे तिन्नि सेसगुणठाणगेग-जिए ॥ ९९ ॥**

'सम्माई'त्यादि, सम्यग्दृष्ट्यादिषु चतुर्षु—अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतलक्षणेषु गुणस्थानकेषु त्रयश्चत्वारो वा भावाः प्राप्यन्त इति शेषः, तत्र क्षायोपशमिकसम्यग्दृष्टेश्चतुर्ष्वपि गुणस्थानकेषु त्रयो भावा लभ्यन्ते, तद्यथा—यथासंभवमौदयिकी गतिः क्षायोपशमिकमिन्द्रियसम्यक्त्वादि पारिणामिकं जीवत्वमिति, क्षायिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेश्च चत्वारो भावा लभ्यन्ते, त्रयस्तावत्पूर्वोक्ता एव चतुर्थस्तु क्षायिकसम्यग्दृष्टेः क्षायिकसम्यक्त्वलक्षणः औपशमिकसम्यग्दृष्टेस्त्वौपशमिकसम्यक्त्वलक्षण इति, तथा चत्वारः पञ्च वा भावा द्वयोरप्युपशमकोपशान्तयोर्भवन्ति, किमुक्तं भवति ?—अनिवृत्तिबादरसूक्ष्मसंपरायलक्षणगुणस्थानकद्वयवर्ती जन्तुरुपशमकः उपशान्तमोहगुणस्थानकवर्ती चोपशान्तः, तत्रानिवृत्तिबादरसूक्ष्मसंपराययोश्चत्वारः पूर्ववदेव, उपशान्तमोहे तु चतुर्थ औपशमिकसम्यक्त्वचारित्ररूपः, पञ्चमः पुनस्त्रयाणामपि दर्शनसप्तकक्षये उपशमश्रेणिं प्रतिपद्यमानानां, तथाहि—क्षायिकसम्यक्त्वस्य औपशमिकचारित्रस्य च सद्भावादिति, तथा चत्वारो भावाः क्षीणापूर्वयोः—क्षीणमोहगुणस्थानके अपूर्वकरणगुणस्थानके च, तत्र त्रयः पूर्ववदेव चतुर्थस्तु क्षीणमोहे क्षायिकसम्यक्त्वचारित्ररूपः, अपूर्वकरणे तु क्षायिकसम्यक्त्वरूप औपशमिकसम्यक्त्वरूपो वेति, 'तिन्नि सेसगुणठाणगे'ति त्रयः—त्रिसङ्ख्या भावा भवन्ति, केष्वित्याह—विभक्तेर्लोपात् शेषगुणस्थानकेषु—मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिसयोगिकेवल्ययोगि-

केवलिलक्षणेषु, तत्र मिथ्यादृष्ट्यादीनां त्रयाणामौदयिकक्षायोपशमिकपारिणामिकलक्षणास्त्रयः सयोग्ययोगिकेवलिनोस्त्वौदयिकक्षायिकपारिणामिकरूपा इति । नन्वमी त्रिप्रभृतयो भावा गुणस्थानकेषु चिन्त्यमानाः किं सर्वजीवाधारतया चिन्त्यन्ते ? आहोश्विदेकजीवाधारतयेत्याह—'एगजिए'त्ति एकजीवे—एकजीवाधारतयेत्थं भावचिन्ता मन्तव्या, नानाजीवापेक्षया तु संभविनः सर्वेऽपि भावा भवन्तीति २२१ ॥ ९९ ॥ इदानीं 'जीवचउदसगो'त्ति द्वाविंशत्युत्तरद्विशततमं द्वारमाह—

**इह सुहुमबायरेगिंदियबितिचउ असन्नि सन्नि पंचिंदी । पज्जत्तापज्जत्ता कमेण चउदस जियट्ठाणा ॥ १३०० ॥**

इह—जगति प्रवचने वा अनेन क्रमेण चतुर्दश जीवस्थानानि भवन्ति, तिष्ठन्ति जीवास्तत्तत्कर्मपारतन्त्र्यादेष्विति स्थानानि—सूक्ष्मपर्याप्तैकेन्द्रियत्वादयोऽवान्तरविशेषाः जीवानां स्थानानि जीवस्थानानि, केन क्रमेणेत्याह—सूक्ष्मबादरभेदाद् द्विविधा एकेन्द्रियाः तथा द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्चासंज्ञिसंज्ञिभेदतो द्विधा मिलिताश्च सप्त, एते च सूक्ष्मैकेन्द्रियादयः प्रत्येकं द्विविधाः—पर्याप्ता अपर्याप्ताश्चेति, तथा विशेषश्चात्र—अपर्याप्तका द्विधा—लब्ध्या करणेन च, तत्र ये अपर्याप्तका एव सन्तो म्रियन्ते न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयन्ते ते लब्ध्यपर्याप्तकाः, ये पुनः स्वयोग्यकरणानि—शरीरेन्द्रियादीनि न तावत् निर्वर्तयन्ति अथ चावश्यं पुरस्तान्निर्वर्तयिष्यन्ति ते करणापर्याप्तकाः, इह चैवमागमः—लब्ध्यपर्याप्तका अपि नियमादाहारशरीरेन्द्रियपर्याप्तिपरिसमाप्तावेव म्रियन्ते नार्वाक्, यस्मादागामिकभवायुर्बद्ध्वा म्रियन्ते सर्व एव देहिनः, तच्चाहारशरीरेन्द्रियपर्याप्त्या पर्याप्तानामेव बध्यत इति २२२ ॥ १३०० ॥

इदानीं '**अजीव चउदसगो**'त्ति त्रयोविंशत्युत्तरद्विशततमं द्वारमाह—

**धम्मा १ ऽधम्मा २ ऽऽगासा ३ तियतियभेया तहेव अद्धा य १०। खंधा ११ देस १२ पएसा १३ परमाणु १४ अजीव चउदसहा ॥ १ ॥**

इह अजीवा द्विविधाः—रूपिणोऽरूपिणश्च, रूपमेषामस्तीति रूपिणः, रूपग्रहणं गन्धादीनामुपलक्षणं, तद्व्यतिरेकेण तस्यासंभवात्, अथवा रूपं नाम स्पर्शरूपादिसंमूर्च्छनात्मिका मूर्त्तिः तदेपामस्तीति रूपिणः—पुद्गलाः, तेपामेव रूपादिमत्त्वात्, रूपव्यतिरेकिणोऽरूपिणो—धर्मास्तिकायादयः, तत्र रूपिणश्चतुर्धा अरूपिणश्च दशधा, वहुवक्तव्यत्वाच्च प्रथममरूपिण आह—धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायाः—पूर्वोक्तस्वरूपास्त्रयोऽपि प्रत्येकं त्रिभेदाः, तद्यथा—धर्मास्तिकायद्रव्यं धर्मास्तिकायदेशाः धर्मास्तिकायप्रदेशाः, तत्र धर्मास्तिकायद्रव्यरूपं सकलदेशप्रदेशात्मकाविभागधर्मानुगतसमानपरिणामवत् अवयविद्रव्यं धर्मास्तिकायद्रव्यं, तथा तस्यैव धर्मास्तिकायद्रव्यस्य देशाः—बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागा धर्मास्तिकायदेशाः, तथा धर्मास्तिकायस्य प्रकृष्टा देशा—निर्विभागा भागा धर्मास्तिकायप्रदेशाः, ते चासङ्ख्येया लोकाकाशप्रदेशप्रमाणत्वात्तेषां, एवमधर्मास्तिकायाकाशास्तिकाययोरपि प्रत्येकं त्रिभेदता वाच्या, नवरमाकाशास्तिकायप्रदेशा अनन्ता द्रष्टव्याः, अलोकस्यानन्तत्वात्, दशमश्च अद्धाकालः, अस्य च वर्तमानसमयरूपस्यैव परमार्थसत्त्वाद्देशकल्पनाविरहः । तथा स्कन्धा देशाः प्रदेशाः परमाणवश्चेति चतुर्विधा रूप्यजीवाः, तत्र स्कन्दन्ति—शुष्यन्ति धीयन्ते च—पुष्यन्ति विचटनेन संघातेन चेति स्कन्धाः—अनन्तानन्तपरमाणुप्रचयरूपा मांसचक्षुर्ग्राह्याः कुम्भस्तम्भादयः तदग्राह्या अचित्तमहास्कन्धादयोऽपि, पृषोदरादित्वाच्च रूपनिष्पत्तिः, अत्र वहुवचनं पुद्गलस्कन्धानामानन्त्यख्यापनार्थं, देशाः—स्कन्धानामेव स्कन्धत्वपरिणाममजहतां बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागाः, अत्रापि वहुवचनमनन्तप्रादेशिकेपु तथाविधेषु स्कन्धेपु देशानन्तत्वसंभावनार्थं, प्रदेशास्तु स्कन्धानां—स्क-

न्धत्वपरिणामपरिणतानां बुद्धिपरिकल्पिताः प्रकृष्टा देशा निर्विभागा भागा इत्यर्थः, अत्रापि बहुवचनं प्रदेशानन्तत्वसंभावनार्थं, परमाश्च ते अणवश्च परमाणवो—निर्विभागद्रव्यरूपाः । ननु प्रदेशपरमाण्वोः कः प्रतिविशेषः ?, उभयोरपि निर्विभागरूपत्वात्, उच्यते, स्कन्धप्रतिबद्धा निर्विभागाः प्रदेशाः, ये तु स्कन्धत्वपरिणामरहिता विशकलिता एकाकिन एवास्मिन् लोके वर्तन्ते ते परमाणवः, तदेवमजीवाः—जीवव्यतिरिक्ताश्चतुर्दशविधा भवन्ति २२३ ॥ १ ॥ इदानीं 'गुण चउदसगु'त्ति चतुर्विंशत्युत्तरद्विशततमं द्वारमाह—

**मिच्छे १ सासण २ मिस्से ३ अविरय ४ देसे ५ पमत्त ६ अपमत्ते ७ । नियट्टि ८ अनियट्टि ९**
**सुहुमु १० वसम ११ खीण १२ सजोगि १३ अजोगि १४ गुणा ॥ २ ॥**

'सूचनात् सूत्र'मिति न्यायात् 'पदैकदेशेऽपि पदसमुदायोपचाराद्वा' इहैवं गुणस्थानकनिर्देशो द्रष्टव्यः, तद्यथा—मिथ्यादृष्टिगुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानं अविरतसम्यग्दृष्टिगुणस्थानं देशविरतिगुणस्थानं प्रमत्तसंयतगुणस्थानं अप्रमत्तसंयतगुणस्थानं अपूर्वकरणगुणस्थानं अनिवृत्तिवादरसंपरायगुणस्थानं सूक्ष्मसंपरायगुणस्थानं उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानं सयोगिकेवलिगुणस्थानं अयोगिकेवलिगुणस्थानं इत्येतानि चतुर्दश गुणस्थानानि भवन्ति । तत्र मिथ्या—विपर्यस्ता दृष्टिः—अर्हत्प्रणीततत्त्वप्रतिपत्तिर्यस्य भक्षितधत्तूरपुरुषस्य सिते पीतप्रतिपत्तिवत् स मिथ्यादृष्टिः, गुणा—ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, तिष्ठन्ति गुणा अस्मिन्निति स्थानं—ज्ञानादिगुणानामेव शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, गुणानां स्थानं गुणस्थानं, मिथ्यादृष्टेर्गुणस्थानं—सासादनाद्यपेक्षया ज्ञानादिगुणानां शुद्ध्यपकर्षकृतः स्वरूपभेदो मिथ्यादृष्टिगुणस्थानं । ननु यदि मिथ्यादृष्टिरसौ कथं तस्य गुणस्थानसंभवः ?, गुणा हि ज्ञानदर्शनचारित्ररूपाः, तत्कथं ते दृष्टौ ज्ञानादिविपर्यस्तायां भवेयुः ?, उच्यते, इह यद्यपि

तत्त्वार्थश्रद्धानलक्षणात्मगुणसर्वघातिप्रबलमिथ्यात्वमोहनीयविपाकोदयवशाद्वस्तुप्रतिपत्तिरूपा दृष्टिरसुमतो विपर्यस्ता भवति तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्ताऽपि भवति, यथाऽतिबहलघनपटलसमाच्छादितायामपि चन्द्रार्कप्रभायां काचित्प्रभा, तथाहि—समुन्नतनूतनघनाघनघनपटलेन रविरजनिकरकरनिकरतिरस्कारेऽपि नैकान्तेन तत्प्रभाविनाशः संपद्यते, प्रतिप्राणिप्रसिद्धदिनरजनिविभागाभावप्रसङ्गात्, उक्तं च—"सुट्ठुवि मेहसमुदए होइ पहा चंदसूराण"मिति, [सुष्ठ्वपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः] एवमिहापि प्रबलमिथ्यात्वोदयेऽपि काचिदविपर्यस्तापि दृष्टिर्भवतीति तदपेक्षया मिथ्यादृष्टेरपि गुणस्थानसंभवः, यद्येवं ततः कथमसौ मिथ्यादृष्टिरेव मनुष्यपश्वादिप्रतिपत्त्यपेक्षया अन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्त्यपेक्षया वा सम्यग्दृष्टित्वादपि ?, नैष दोषः, यतो भगवदर्हत्प्रणीतं सकलमपि प्रवचनार्थमभिरोचयमानोऽपि यदि तद्गतमेकमप्यक्षरं न रोचयति तदानीमप्येष मिथ्यादृष्टिरेवोच्यते, तस्य भगवति सर्वज्ञे प्रत्ययनाशात्, उक्तं च—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥" किं पुनः शेषो भगवदर्हदभिहितयथावज्जीवाजीवादिवस्तुतत्त्वप्रतिपत्तिविकलः ?, ननु सकलप्रवचनार्थाभिरोचनात्तद्गतकतिपयार्थानां चारोचनादेष न्यायतः सम्यग्मिथ्यादृष्टिरेव भवितुमर्हति, कस्मान्मिथ्यादृष्टिः ?, तदसत्, वस्तुतत्त्वापरिज्ञानात्, इह यदा सकलं वस्तु जिनप्रणीततया सम्यक् श्रद्धत्ते तदानीमसौ सम्यग्दृष्टिः, यदा त्वेकस्मिन्नपि वस्तुनि पर्याये वा मतिदौर्बल्यादिना एकान्तेन सम्यक्परिज्ञानमिथ्यापरिज्ञानाभावतो न सम्यक् श्रद्धानं नाप्येकान्ततो विप्रतिपत्तिः तदा सम्यग्मिथ्यादृष्टिः, उक्तं च शतकबृहच्चूर्णौ—"जहा नालिकेरदीववासिस्स खुहाइयस्सवि इत्थ समागयस्स पुरिसस्स ओयणाइए अणेगविहे ढोइए तस्स आहारस्सोवरिं न रुई न य निंदा, जेण तेण सो ओयणाइओ

आहारो न कयावि दिट्ठो नावि सुओ, एवं सम्मामिच्छादिट्ठिस्सवि जीवाइपयत्थाणं उवरिं न य रुई नावि निंद"त्ति, यदा पुनरेक-
स्मिन्नपि वस्तुनि पर्याये वा एकान्ततो विप्रतिपत्तिं प्रतिपद्यते तदा मिथ्यादृष्टिरेवेत्यदोषः १ । तथा आयं—औपशमिकसम्यक्त्वलाभलक्षणं
सादयति—अपनयतीति नैरुक्ते यशब्दलोपे आसादनं—अनन्तानुबंधिकषायवेदनं, सति ह्यस्मिन् परमानन्दसुखफलदो निःश्रेयसतरुबीज-
भूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेण उत्कृष्टतः षड्भिरावलिकाभिरपगच्छतीति, सह आसादनेन वर्तत इति सासादनः
सम्यग्—अविपर्यस्ता दृष्टिः—जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः तस्य गुणस्थानं
सासादनसम्यग्दृष्टिगुणस्थानं, अथवा सह आसातनया—अनन्तानुबन्ध्युदयलक्षणया वर्तत इति सासातनः स चासौ सम्यग्दृष्टिश्च २ तस्य
गुणस्थानं सासातनसम्यग्दृष्टिगुणस्थानं, सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठः, तत्र सह सम्यक्त्वलक्षणरसास्वादनेन वर्तत इति
सास्वादनः, यथा हि भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्व-
स्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति ततः स चासौ सम्यग्दृष्टिश्च २ तस्य गुणस्थानं, एतच्चैवं भवति—इहापारसं-
सारपारावारान्तर्वर्ती जन्तुर्मिथ्यादर्शनमोहनीयादिप्रत्ययमनन्तपुद्गलपरावर्तान् यावदनेकशारीरिकमानसिकदुःखलक्षाण्यनुभूय कथमपि
तथाभव्यत्वपरिपाकवशतो गुरुतरगिरिसरित्प्रवाहवाह्यमानोपलघोलनाकल्पेनाध्यवसायविशेषरूपेणानाभोगनिर्वर्तितेन यथाप्रवृत्तिकरणेनाऽऽ-
युर्वर्जानि ज्ञानावरणादिकर्माणि सर्वाण्यपि पृथक्पल्योपमसङ्ख्येयभागन्यूनैकसागरोपमकोटीकोटीस्थितिकानि करोति, अत्र चान्तरे कर्कश-
कर्मपटलापहस्तितवीर्यविशेषाणामसुमतामतिकठोरतरनिबिडचिरप्ररूढगहनतरुग्रन्थिवद् दुर्भेदः कर्मपरिणामजनितो जीवस्य घनरागद्वेषप-
रिणामरूपोऽभिन्नरूपो ग्रन्थिर्भवति, इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति, ततो

ग्रन्थिभेदं कर्तुमसमर्थाः पुनरपि व्यावृत्त्य संक्लेशवशादुत्कृष्टस्थितीनि कर्माणि कुर्वन्ति, कश्चित्पुनर्महात्मा समासन्नपरमनिर्वृतिसुखः समुल्लसितप्रभूतदुर्निवार्यवीर्यप्रसरो निसिताकुण्ठकुठारधारयेवापूर्वकरणरूपया परमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधाय मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्तमुदयक्षणादुपरि गत्वा अनिवृत्तिकरणसंज्ञितेनान्तर्मुहूर्तकालमानं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति, अत्र च यथाप्रवृत्तापूर्वानिवृत्तिकरणानामयं क्रमो, यथा—"जा गंठी ता पढमं गंठिं समइच्छओ भवे वीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १ ॥" [ यावत् ग्रन्थिस्तावद् प्रथमं ग्रन्थिं समतिक्रामतो भवेद् द्वितीयं । अनिर्वृत्तिकरणं पुनः पुरस्कृतसम्यक्त्वे जीवे ॥ १ ॥ ] **'गंठिं समइच्छओ'**त्ति ग्रन्थिं समतिक्रामतो भिन्दानस्येतियावत्, **'सम्मत्तपुरक्खडे'**त्ति सम्यक्त्वं पुरस्कृतं येन स तथा तस्मिन्, आसन्नसम्यक्त्वे जीवे अनिवृत्तिकरणं भवतीत्यर्थः । एतस्मिंश्चान्तरकरणे कृते तस्य कर्मणः स्थितिद्वयं भवति, अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तमाना, तस्मादेव चान्तरकरणादुपरितनी द्वितीया, स्थापना चेयं ०̣, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाऽभावात्, यथा हि वनदवानलः पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनवनदवोऽप्यन्तरकरणमवाप्य विध्यायति, तथा च सति तस्यौपशमिकसम्यक्त्वलाभः, तस्यां चान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायां उत्कृष्टतः षडावलिकाशेषायां कस्यचिन्महाबिभीषिकोत्थानकल्पस्तथाविधं किंचिन्निमित्तमाश्रित्यानन्तानुबन्ध्युदयो भवति, तदुदये चासौ सासादनसम्यग्दृष्टिगुणस्थाने वर्तते, उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं यातीति कार्मग्रन्थिमतं, सिद्धान्तमते तु श्रेण्याः समाप्तौ प्रतिपतितः प्रमत्तगुणस्थानेऽप्रमत्तगुणस्थाने वा तिष्ठते, कालगतस्तु देवेष्वविरतो भवतीति, सासादनोत्तरकालं चावश्यं

मिथ्यात्वोदयादयं मिथ्यादृष्टिर्भवतीति २। तथा सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिः तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानं, इहानन्तरोक्तविधिना लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं कर्म शोधयित्वा त्रिधा करोति, तद्यथा—शुद्धमर्धविशुद्धमविशुद्धं चेति, स्थापना ० ● •, तत्र त्रयाणां पुञ्जानां मध्ये यदा अर्धविशुद्धपुञ्ज उदेति तदा तदुदयवशाज्जीवस्यार्धविशुद्धमर्हदभिहिततत्त्वश्रद्धानं भवति, तेन तदासौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्तकालं स्पृशति, तत ऊर्द्धमवश्यं सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ३। तथा विरमति स्म—सावद्ययोगेभ्यो निवर्तते स्मेति विरतः न विरतोऽविरतः अथवा विरमणं विरतं—सावद्ययोगप्रत्याख्यानं नास्य विरतमस्तीत्यविरतः स चासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टिः, इदमुक्तं भवति—यः पूर्ववर्णितौपशमिकसम्यग्दृष्टिः शुद्धदर्शनमोहपुञ्जोदयवर्ती वा क्षायोपशमिकसम्यग्दृष्टिः क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिरविरतप्रत्ययं दुरन्तनरकादिदुःखफलकर्मबन्धं सावद्ययोगविरतिं च परममुनिप्रणीतसिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नपि न विरतिमभ्युपगच्छति न च तत्पालनाय यतते, अप्रत्याख्यानावरणोदयविघ्नितत्वात्, ते हि अल्पमपि प्रत्याख्यानमावृण्वन्ति, स इहाविरतसम्यग्दृष्टिरुच्यते ४। तथा सर्वसावद्ययोगस्य देशे—एकव्रतविषयस्थूलसावद्ययोगादौ सर्वव्रतविषयानुमतिवर्जसावद्ययोगान्ते विरतं—विरतिर्यस्यासौ देशविरतिः, सर्वसावद्ययोगविरतिस्त्वस्य नास्ति; प्रत्याख्यानावरणकषायोदयात्, सर्वविरतिरूपं हि प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा उच्यन्ते इति, देशविरतस्य गुणस्थानं देशविरतगुणस्थानं ५। तथा संयच्छति स्म—सर्वसावद्ययोगेभ्यः सम्यगुपरमति स्मेति संयतः प्रमाद्यति स्म—मोहनीयादिकर्मोदयप्रभावतः संज्वलनकषायनिद्राद्यन्यतमप्रमादयोगतः संयमयोगेषु सीदति स्मेति प्रमत्तः स चासौ संयतश्च प्रमत्तसंयतः तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानं—विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, तथाहि—देशविरतगुणापेक्षया एतद्गुणानां विशुद्धिप्रकर्षोऽ-

शुद्ध्यपकर्षश्च, अप्रमत्तसंयतगुणापेक्षया तु विपर्ययः, एवमन्येष्वपि गुणस्थानकेषु पूर्वोत्तरगुणापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षयोजना द्रष्टव्या ६ । तथा न प्रमत्तोऽप्रमत्तो—निद्रादिप्रमादरहितः स चासौ संयतश्चाप्रमत्तसंयतस्तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानं ७ । तथा अपूर्वमभिनवमनन्यसदृशमितियावत् करणं—स्थितिघातरसघातगुणश्रेणिगुणसंक्रमस्थितिबन्धानां पञ्चानां पदार्थानां निर्वर्तनं यस्यासावपूर्वकरणः, तथाहि—बृहत्प्रमाणाया ज्ञानावरणादिकर्मस्थितेरपवर्तनाकरणेन खण्डनं—अल्पीकरणं स्थितिघातः, रसस्यापि—कर्मपरमाणुगतस्निग्धलक्षणस्य प्रचुरीभूतस्य सतोऽपवर्तनाकरणेन खण्डनं रसघातः, एतौ च द्वावपि पूर्वगुणस्थानकेषु विशुद्धेरल्पत्वादल्पावेव कृतवान् अत्र पुनर्विशुद्धेः प्रकृष्टतरत्वाद् बृहत्प्रमाणतयाऽपूर्वाविमौ करोति, तथा उपरितनस्थितेर्विशुद्धिवशादपवर्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्तं यावदुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रतिक्षणमसङ्ख्येयगुणवृद्ध्या यद्विरचनं सा गुणश्रेणिः, स्थापना ⁘ एतां च पूर्वगुणस्थानेष्वविशुद्धतरत्वात् कालतो द्राघीयसीं दलिकविरचनामाश्रित्याप्रथीयसीं च दलिकस्याल्पस्यापवर्तनाद्विरचितवान्, इह तु तामेव विशुद्धत्वादपूर्वां कालतो ह्रस्वतरां दलिकविरचनामाश्रित्य पुनः पृथुतरां बहुतरदलिकस्यापवर्तनाद्विरचयतीति, तथा बध्यमानशुभाशुभप्रकृतिषु अबध्यमानशुभाशुभप्रकृतिदलिकस्य प्रतिक्षणमसङ्ख्येयगुणवृद्ध्या विशुद्धिवशान्नयनं गुणसंक्रमः, तमप्यसाविह अपूर्वं करोति, तथा स्थितिं च कर्मणामशुद्धत्वात् प्राग्द्राघीयसीं बद्धवान्, इह तु तामपूर्वां पल्योपमासङ्ख्येयभागेन हीनां हीनतरां हीनतमां च विशुद्धिवशाद्बध्नाति, अयं चापूर्वकरणो द्विधा—क्षपक उपशमकश्च, क्षपणोपशमनार्हत्वाच्चैवमुच्यते राज्यार्हकुमारराजवत्, न पुनरसौ क्षपयत्युपशमयति वा किमपि सर्वात्मना कर्म, तस्य गुणस्थानमपूर्वकरणगुणस्थानं, अस्मिंश्च गुणस्थानके कालत्रयवर्तिनो नानाजीवानाश्रित्य प्रतिसमयं यथोत्तरमधिकवृद्ध्या असङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति, तथाहि—येऽस्यान्तर्मुहूर्तप्रमाणस्य

गुणस्थानस्य प्रथमसमयं प्रतिपन्नाः प्रतिपद्यन्ते प्रतिपत्स्यन्ते च तान् सर्वानपेक्ष्य जघन्यादीन्युत्कृष्टान्तान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि लभ्यन्ते, कचित्कदाचित्केषाञ्चित्प्रथमसमयवर्तिनां परस्परमध्यवसायस्थाने नानात्वस्यापि भावात्, तस्य च नानात्वस्यैतावत एव केवलज्ञानेनोपलब्धत्वात्, अत एव चेदमपि न वाच्यं कालत्रयवर्तिनामेतद्गुणस्थानकप्रथमसमयप्रतिपत्तॄणामानन्त्यात्परस्परमध्यवसायस्थानानां नानात्वाच्चानन्तान्यध्यवसायस्थानानि प्राप्नुवन्ति, बहूनां प्राय एकाध्यवसायस्थानवर्तित्वात्, ततो द्वितीयसमये तदन्यान्यधिकतराण्यध्यवसायस्थानानि लभ्यन्ते तृतीयसमये तदन्यान्यधिकतराणि चतुर्थसमये तदन्यान्यधिकतराणीत्येवं यावच्चरमसमयः, एतानि च स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति, स्थापना ⁘ ननु द्वितीयादिसमयेष्वध्यवसायस्थानानां वृद्धौ किं कारणं?, उच्यते, स्वभावविशेषः, एतद्गुणस्थानकप्रतिपत्तारो हि प्रतिसमयं विशुद्धिप्रकर्षमासादयन्तः खलु स्वभावत एव बहवो विभिन्नेषु विभिन्नेष्वध्यवसायस्थानेषु वर्तन्त इति, अत्र च प्रथमसमयजघन्याध्यवसायस्थानात् प्रथमसमयोत्कृष्टमध्यवसायस्थानमनन्तगुणविशुद्धं प्रथमसमयोत्कृष्टाच्चाध्यवसायस्थानाद् द्वितीयसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धं तस्मात्तदुत्कृष्टमनन्तगुणविशुद्धं इत्येवं यावद् द्विचरमसमयोत्कृष्टाध्यवसायस्थानाच्चरमसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धं तस्मादपि तदुत्कृष्टमनन्तगुणविशुद्धमिति, एकसमयगतानि चामून्यध्यवसायस्थानानि परस्परं षट्स्थाननिपतितानि, युगपदेतद्गुणस्थानकप्रविष्टानां च परस्परमध्यवसायस्थानस्य व्यावृत्तिलक्षणा निवृत्तिरप्यस्ति, यथोक्तमनन्तरमितिकृत्वा निवृत्तिगुणस्थानकमप्येतदुच्यते ८। तथा युगपद्गुणस्थानकं प्रतिपन्नानां बहूनामपि जीवानामन्योऽन्यमध्यवसायस्थानस्य व्यावृत्तिः—निवृत्तिः सा नास्ति अस्येत्यनिवृत्तिः, समकालमेतद्गुणस्थानकमारूढस्यापरस्य यस्मिन् समये यदध्यवसायस्थानमन्योऽपि विवक्षितः पुरुषस्तस्मिन् समये तदेवाध्यवसायस्थानं समनुवर्तते इत्यर्थः, संपरैति—पर्ये-

टति संसारमनेनेति संपरायः—कषायोदयः बादरः—सूक्ष्मकिट्टीकृतसंपरायापेक्षया स्थूरः संपरायो यस्य स बादरसंपरायः अनिवृत्तिश्चासौ बादरसंपरायश्च २ तस्य गुणस्थानमनिवृत्तिबादरसंपरायगुणस्थानं, तस्यां चानिवृत्तिबादरगुणस्थानकाद्धायामान्तर्मौहूर्तिक्यां प्रथमसमयादारभ्य प्रतिसमयमनन्तगुणविशुद्धं यथोत्तरमध्यवसायस्थानं भवति, यावन्तश्चान्तर्मुहूर्ते समयास्तावन्त्येवाध्यवसायस्थानानि तत्प्रविष्टानां भवन्ति नाधिकानि, एकसमयप्रविष्टानां सर्वेषामप्येकाध्यवसायस्थानत्वात्, स चानिवृत्तिबादरो द्वेधा—क्षपक उपशमकश्च, क्षपयति उपशमयति वा कषायाष्टकादिकमितिकृत्वा ९। तथा सूक्ष्मः—किट्टीकृतः संपरायो—लोभकषायोदयरूपो यस्य स सूक्ष्मसंपरायः, स द्विधा—क्षपक उपशमकश्च, क्षपयति उपशमयति वा अनिवृत्तिबादरेण किट्टीकृतं लोभमेकमितिकृत्वा, तस्य गुणस्थानं सूक्ष्मसंपरायगुणस्थानं १०। तथा छादयति ज्ञानादिकं गुणमात्मन इति छद्म—ज्ञानावरणीयादिघातिकर्मोदयः छद्मनि तिष्ठतीति छद्मस्थः, स च सरागोऽपि भवतीति तद्व्यवच्छेदार्थं वीतरागग्रहणं, वीतो—विगतो रागो—मायालोभकषायोदयरूपः उपलक्षणत्वादस्य द्वेषोऽपि—क्रोधमानोदयरूपो यस्य स वीतरागः स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः, स च क्षीणकषायोऽपि भवति तस्यापि यथोक्तरागापगमात् ततस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणं, उपशान्ताः—उपशमिता विद्यमाना एव सन्तः संक्रमणोद्वर्तनापवर्तनादिकरणैर्विपाकोदयप्रदेशोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः स चासौ वीतरागच्छद्मस्थश्च २ तस्य गुणस्थानमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानं ११। तथा क्षीणा—अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु क्षपकश्रेणिद्वारोक्तयुक्तया क्वापि कियतामपि कषायाणां क्षीणत्वसंभवात् क्षीणकषायव्यपदेशः संभवति ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणं, क्षीणकषायवीतरागत्वं च केवलिनामप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणं, यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणं, वीतरागश्चासौ छद्मस्थश्च

वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽप्यस्तीति तद्व्यवच्छेदार्थं क्षीणकषायग्रहणं, क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च २ तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानं १२। तथा योजनं योगो—व्यापारः, उक्तं च—"कायवाङ्मनःकर्म योगः" (तत्त्व० ६–१) सह योगेन वर्तन्ते ये ते सयोगा—मनोवाक्कायाः ते यस्य विद्यन्ते स सयोगी, तत्र भगवतः काययोगश्चङ्क्रमणनिमेषोन्मेषादिः वाग्योगो देशनादिः मनोयोगो मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य मनसैव देशना, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनावधिज्ञानेन च पश्यन्ति, दृष्ट्वा च ते हि विवक्षितवस्त्वालोचनाऽऽकारार्थानुपपत्त्या अलोकस्वरूपादिकमपि बाह्यमर्थं पृष्टमवगच्छंति, केवलं ज्ञानं दर्शनं च विद्यते यस्य स केवली सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थानं सयोगिकेवलिगुणस्थानं १३। तथा योगः—पूर्वोक्तो विद्यते यस्यासौ योगी न योगी अयोगी स चासौ केवली च अयोगिकेवली तस्य गुणस्थानमयोगिकेवलिगुणस्थानं, अयोगित्वं पुनरेवं—इह त्रिविधोऽपि योगः प्रत्येकं द्विधा—सूक्ष्मो बादरश्च, तत्र केवलोत्पत्तेरनन्तरं जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो देशोनां पूर्वकोटीं विहृत्यान्तर्मुहूर्तावशेषायुष्कः सयोगिकेवली शैलेशीं प्रतिपित्सुः पूर्वं बादरकाययोगेन बादरवाग्योगं निरुणद्धि ततो बादरमनोयोगं ततः सूक्ष्मकाययोगेन बादरकाययोगं, सति तस्मिन् सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात्, ततस्तेनैव सूक्ष्मवाग्योगं ततः सूक्ष्ममनोयोगं ततः सूक्ष्मक्रियमनिवृत्ति शुक्लध्यानं ध्यायन् सूक्ष्मकाययोगं स्वात्मनैव निरुणद्धि, अन्यस्यावष्टम्भनीययोगान्तरस्य तदाऽसत्त्वात्, तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोच्चारणमात्रकालं शैलेशीकरणं प्रविष्टो भवति, शीलस्य—योगलेश्याकलङ्कविप्रमुक्तयथाख्यातचारित्रलक्षणस्य य ईशः स शीलेशस्तस्येयं शैलेशी, त्रिभागोनस्वदेहावगाहनायामुदरादिरन्ध्रपूरणवशात् संकोचितस्वप्रदेशस्य शैलेशस्यात्मनोऽत्यन्तस्थिरावस्थितिरित्यर्थः तस्यां करणं—पूर्वरचितशैलेशीसमयसमानगुणश्रेणिकस्य वेदनीयनामगोत्राख्यस्याघातिकर्मत्रित-

यस्यासङ्ख्येयगुणया श्रेण्या आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणं, तत्रासौ प्रविष्टोऽयोगिकेवली भवति, अयं च भवस्थः, ततः शैलेशीकरणचरमसमयानन्तरं कोशबन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादेरण्डफलमिव भगवानपि कर्मसम्बन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादूर्द्ध्वं गच्छति, स चोर्द्ध्वं गच्छन् ऋजुश्रेण्यां यावत्स्वाकाशप्रदेशेषु इहावगाढस्तावत एव प्रदेशानूर्द्ध्वमप्यवगाहमानो विवक्षितसमयाच्चान्यत्समयान्तरमस्पृशन् लोकान्ते गच्छति, न परतोऽपि, गत्युपष्टम्भकधर्मास्तिकायाभावात्, तत्र च गतः सन् शाश्वतं कालमवतिष्ठते १४।२२४ ॥ २ ॥ इदानीं 'मग्गणचउदसगो'त्ति पञ्चविंशत्युत्तरद्विशततमं द्वारमाह—

**गइ १ इंदिए य २ काये ३ जोए ४ वेए ५ कसाय ६ नाणेसुं ७ । संजम ८ दंसण ९ लेसा १०**
**भव ११ सम्मे १२ सन्नि १३ आहारे १४ ॥ ३ ॥**

गतिः इन्द्रियाणि कायाः योगाः वेदाः कषायाः ज्ञानानि संयमः दर्शनानि लेश्याः भव्याः सम्यक्त्वं संज्ञी आहारक इति मूलभेदापेक्षया चतुर्दश मार्गणास्थानानि, मार्गणं—जीवादीनां पदार्थानामन्वेषणं मार्गणा तस्याः स्थानानि—आश्रया मार्गणास्थानानि, उत्तरभेदापेक्षया तु द्वाषष्टिः, तथाहि—सुरनरतिर्यग्नारकगतिभेदाद् गतिश्चतुर्धा, स्पर्शनरसनघ्राणचक्षुःश्रोत्रेन्द्रियभेदात् पञ्च इंद्रियाणि, पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात् कायः षोढा, मनोवचनकायाख्या योगास्त्रयः, स्त्रीपुंनपुंसकस्वरूपा वेदास्त्रयः, क्रोधमानमायालोभलक्षणाः कषायाश्चत्वारः, मतिश्रुतावधिमनःपर्यायकेवलभेदात् पञ्च ज्ञानानि, ज्ञानग्रहणेन चाज्ञानमपि तत्प्रतिपक्षभूतमुपलक्ष्यते, तच्च त्रिधा—मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदात्, एवमष्टौ, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातभेदात् संयमः पञ्चधा, तत्प्रतिपक्षत्वाच्च देशसंयमोऽसंयमश्च गृह्यते, एवं सप्त, चक्षुरचक्षुरवधिकेवलभेदाच्चत्वारि दर्शनानि, कृष्णा नीला कापोती

तैजसी पद्मा शुक्ला चेति षट् लेश्याः, भव्यस्तत्प्रतिपक्षत्वेन चाभव्य इति द्वयं, क्षायोपशमिकक्षायिकौपशमिकभेदात् सम्यक्त्वं त्रिधा, सम्यक्त्वग्रहणेन च तत्प्रतिपक्षभूतानि मिश्रसासादनमिथ्यात्वान्यपि गृह्यन्ते एवं षट्, संज्ञी तत्प्रतिपक्षश्चासंज्ञीति द्वयं, आहारकस्तत्प्रतिपक्षोऽनाहारक इति द्वयं, सर्वमीलने च द्वाषष्टिरिति २२५ ॥३॥ इदानीं 'उवओग बारस'त्ति षड्विंशत्युत्तरद्विशततमं द्वारमाह—

**मइ १ सुय २ ओही ३ मण ४ केवलाणि ५ मइ ६ सुयअन्नाण ७ विब्भंगा ८। अचक्खु ९ चक्खु १० अवही ११ केवलचउदंसणु १२ वउगा ॥ ४ ॥**

उपयुज्यते—वस्तुपरिच्छेदं प्रति व्यापार्यते जीव एभिरित्युपयोगाः—बोधरूपा जीवस्य स्वतत्त्वभूता व्यापाराः, ते च द्विधा—साकारा अनाकाराश्च, तत्र आकारः—प्रतिवस्तु प्रतिनियतो ग्रहणपरिणामरूपो विशेषः 'आगारो उ विसेसो' इति वचनात् सह आकारेण वर्तन्ते इति साकाराः, सामान्यविशेषात्मके वस्तुनि विशेषांशग्राहिण इत्यर्थः, तद्विपरीतास्त्वनाकाराः, सामान्यांशग्राहिण इत्यर्थः, तत्र मतिश्रुतावधिमनःपर्यायकेवलाख्यानि पञ्च ज्ञानानि, मत्यज्ञानश्रुताज्ञानविभङ्गरूपाणि त्रीणि चाज्ञानानि इत्यष्टौ साकाराः, अचक्षुश्चक्षुरवधिकेवलाख्यानि चत्वारि दर्शनान्यनाकाराः, तदेवं मिलिता द्वादश उपयोगाः, तत्र ज्ञानानि दर्शनानि च प्रागेवोक्तानि, तथा मतिश्रुतावधिज्ञानान्येव नञः कुत्सार्थत्वान्मिथ्यात्वकलुषिततया यदा कुत्सितानि भवन्ति तदा यथाक्रमं मत्यज्ञानश्रुताज्ञानविभङ्गव्यपदेशभाञ्जि भवन्ति, 'विभंग'त्ति विपरीतो भङ्गः—परिच्छित्तिप्रकारो यस्मिन् तद्विभङ्गमिति २२६ ॥ ४ ॥ इदानीं 'योगा पन्नरस'त्ति सप्तविंशत्युत्तरं द्विशततमं द्वारमाह—

**सच्चं १ मोसं २ मीसं ३ असच्चमोसं ४ मणो तह वई य ४। उरल १ विउव्वा २ हारा ३ मीस ३ कम्मयग १ मिय जोगा ॥ ५ ॥**

यद्यपि मनोवाक्कायावष्टम्भसमुत्थो जीवस्य परिस्पन्द एव योग उच्यते तथाऽपीह योगशब्देन कारणे कार्योपचारात्तत्सहकारिभूतं मनःप्रभृत्येव विवक्षितमिति तैः सह योगस्य सामानाधिकरण्यं, तत्र मनश्चतुर्धा, तद्यथा—सत्यं मृषा मिश्रमसत्यामृषा च, तत्र सन्तो—मुनयः पदार्था वा जीवादयस्तेषु यथासङ्ख्यं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन च साधु सत्यं, यथा—अस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपतया यथावस्थितवस्तुविकल्पनचिन्तनपरं, सत्यंविपरीतमसत्य, यथा—नास्ति जीव एकान्तसद्रूपो वेत्यादि अयथावस्थितवस्तुप्रतिभासनपरं, सत्यं च मृषा चेति मिश्रं, यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति विकल्पनपरं, अत्र हि कतिपयाशोकवृक्षाणां सद्भावात् सत्यता अन्येषामपि धवादीनां सद्भावादसत्यता, व्यवहारनयमतापेक्षया चैवमुच्यते, परमार्थतः पुनरिदमसत्यमेव, यथाविकल्पितार्थायोगात्, तथा यन्न सत्यं नापि मृषा नापि सत्यमृषा तदसत्यामृषा, इह विप्रतिपत्तौ सत्यां यद्वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते यथा अस्ति जीवः सदसद्रूप इति तत्किल सत्यं परिभाषितं आराधकत्वात्, यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं विकल्प्यते यथा नास्ति जीव एकान्तनित्यो वेति तदसत्यं विराधकत्वात्, यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रपर्यालोचनपरं यथा हे देवदत्त ! घटमानय गां देहि मह्यमित्यादिचिन्तनं तदसत्यामृषा, इदं हि स्वरूपमात्रपर्यालोचनपरत्वान्न यथोक्तलक्षणं सत्यं नापि मृषेति, इदमपि व्यवहारनयमतेन द्रष्टव्यं, निश्चयनयमतेन तु विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति अन्यथा तु सत्ये इति । यथा मनः सत्यादिभेदाच्चतुर्धा तथा वागपि सत्यादिभेदाच्चतुर्धा । तथौदारिकवैक्रियाहारकाणि शरीराणि,

तत्र उदारं—प्रधानं, प्राधान्यं च तीर्थकरगणधरशरीरापेक्षया द्रष्टव्यं, ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वात्, अथवा उदारं—सातिरेकयोजनशतसहस्रमानत्वाच्छेषशरीरेभ्यो बृहत्प्रमाणं, बृहत्ता चास्य वैक्रियमाश्रित्य भवधारणीयसहजशरीरापेक्षया द्रष्टव्या, अन्यथोत्तरवैक्रियं योजनलक्षमानमपि लभ्यते इति, उदारमेवौदारिकं, तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियं, तथाहि—तदेकं भूत्वाऽनेकं भवति अनेकं च भूत्वा एकं तथा अणु भूत्वा महद्भवति महद् भूत्वा अणु इत्यादि, तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधकार्योत्पत्तौ विशिष्टलब्धिवशादाह्रियते—निर्वर्त्यत इत्याहारकं, तथा मिश्रशब्दः प्रत्येकं संबध्यते, औदारिकमिश्रं वैक्रियमिश्रमाहारकमिश्रं च, तत्रौदारिकमिश्रं कार्मणेन, तच्चापर्याप्तावस्थायां केवलिसमुद्घातावस्थायां वा, उत्पत्तिदेशे हि पूर्वभवादनन्तरागतो जीव आद्यसमये कार्मणेनैव केवलेनाहारयति, ततः परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरस्य निष्पत्तिः, केवलिसमुद्घातावस्थायां तु द्वितीयषष्ठसप्तमसमयेषु कार्मणेन मिश्रमौदारिकं प्रतीतमेव, तथा वैक्रियमिश्रं कार्मणेनौदारिकेण वा, तत्र कार्मणेन मिश्रं देवनारकाणामपर्याप्तावस्थायामाद्यसमयानन्तरं द्रष्टव्यं, बादरपर्याप्तकवायोः पञ्चेन्द्रियतिर्यग्मनुष्याणां च वैक्रियलब्धिमतां वैक्रियारम्भकाले वैक्रियपरित्यागकाले वा औदारिकेण मिश्रं, तथा सिद्धप्रयोजनस्य चतुर्दशपूर्वविद आहारकं त्यजत औदारिकं गृह्णत आहारकं वा प्रारभमाणस्याहारकमिश्रमौदारिकेण ज्ञेयं, तथा 'कम्मयगं'ति कर्मजकं कर्मणो जातं कर्मजं कर्मात्मकमित्यर्थः तदेव कर्मजकं, किमुक्तं भवति ?—कर्मपरमाणव एवात्मप्रदेशैः सह क्षीरनीरवदन्योऽन्यानुगताः सन्तः शरीररूपतया परिणताः कर्मजशरीरमिति, अत एव तदन्यत्र कार्मणमित्युक्तं, कर्मणो विकारः कार्मणमिति, तथा चोक्तम्—"कम्मविवागो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥ १ ॥" [ कर्मविपाकः कार्मणमष्टविधविचित्रकर्मनिष्पन्नं । सर्वेषां शरीराणां कार-

णभूतं ज्ञातव्यं ॥ १ ॥ ] अत्र 'सव्वेसिं' इति सर्वेषामौदारिकादीनां शरीराणां कारणभूतं–बीजभूतं कार्मणं शरीरमिति, न खल्वामूलसमुच्छिन्ने भवप्रपञ्चप्ररोहबीजभूते कार्मणे वपुषि शेषशरीरप्रादुर्भावः, इदं च कर्मजं शरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं कारणं, तथाहि–कर्मजेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमभिसर्पति, ननु यदि कार्मणवपुःपरिकरितो गत्यन्तरं संक्रामति तर्हि स गच्छन्नागच्छन् वा कस्मान्न दृश्यते?, उच्यते, कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात्, तथा च परतीर्थिकैरप्युक्तम्—"अन्तरा भवदेहोऽपि, सूक्ष्मत्वान्नोपलभ्यते । निष्क्रामन्वा प्रविशन्वा, नाभावोऽनीक्षणादपि ॥ १ ॥" तदेवं चतुर्धा मनोयोगश्चतुर्धा वाग्योगः सप्तधा च काययोगः इति पञ्चदश योगाः । ननु तैजसमपि शरीरं विद्यते यद् भुक्ताहारपरिणमनहेतुः यद्वशाच्च विशिष्टतपोविशेषसमुत्थलब्धिविशेषस्य पुंसस्तेजोलेश्याविनिर्गमः तत्किमिह नोक्तमिति?, उच्यते, सदा कार्मणेन सहाव्यभिचारितया तस्य तद्ग्रहणेनैव गृहीतत्वादिति २२७ ॥ ५ ॥ इदानीं 'परलोयगई गुणठाणएसु'त्ति अष्टाविंशत्युत्तरद्विशततमं द्वारमाह—

**मिच्छे सासाणे वा अविरयभावंमि अहिगए अहवा । जंति जिया परलोयं सेसेक्कारसगुणे मोत्तुं ॥ ६ ॥**

मिथ्यात्वे सासादनत्वे वा अथवा अविरतभावे–अविरतसम्यग्दृष्टित्वेऽधिगते–प्राप्ते सति, मिथ्यात्वादिना गृहीतेनेत्यर्थः, परलोकं–भवान्तरं जीवा व्रजन्ति, शेषांस्तु मिश्रदेशविरत्यादीनेकादश गुणस्थानकान् मुक्त्वा–इह भव एव सर्वथा परित्यज्य जीवाः परलोकं यान्ति, इयमत्र भावना–मिथ्यात्वेन गृहीतेन भवान्तरगमनं प्रतीतमेव, तस्य च सर्वत्रापि संभवात्, एवं सासादनभावेऽपि 'अणुबंधोदयमाउगबन्धं कालं च सासणो कुणइ ।' [ सास्वादनोऽनन्तानुबन्धिबन्धोदयमायुर्बन्धं कालं च करोति ] इति वचनात्, तथा गृहीतसम्य-

क्त्वस्यापि देवादिपूत्पादादविरतसम्यग्दृष्टित्वेऽपि परलोकगमनं, तथा गृहीतमिश्रभावो न भवान्तरं गच्छति, 'न सम्ममिच्छो कुणइ कालं' [ न सम्यग्मिथ्यादृष्टिः कालं करोति ] इति वचनात्, देशविरत्यादिगुणस्थानकानां तु विरतिसद्भाव एव भावात्, विरतिश्च यावज्जीवितावधिकत्वान्न तेषु परलोकसंभव इति २२८ ॥ ६ ॥ इदानीं 'गुणठाणयकालमाणं'त्येकोनत्रिंशदुत्तरद्विशततमं द्वारमाह—

**मिच्छत्तमभव्वाणं अणाइयमणंतयं च विन्नेयं । भव्वाणं तु अणाई सपज्जवसियं च सम्मत्ते ॥ ७ ॥**
**[मीसाखीणसजोगे न मरंतिक्कारसेसु अ मरंति । तेसुवि तिसु गहिएसुं परलोअगमो न अट्ठेसु ॥ ८ ॥] छावलियं सासाणं समहियतेत्तीससायर चउत्थं । देसूणपुव्वकोडी पंचमगं तेरसं च पुढो ॥८॥ लहुपंचक्खर चरिमं तइयं छट्ठाइ बारसं जाव । इह अट्ठ गुणट्ठाणा अंतमुहुत्ता पमाणेणं॥९॥**

इह च मिथ्यात्वकालचिन्तायां चतुर्भङ्गी, तद्यथा—अनाद्यनन्तः १ अनादिसान्तः २ साद्यनन्तः ३ सादिसान्तश्च ४, तत्र मिथ्यात्वं—विपरीतरुचिरूपमभव्यानामनाद्यनन्तं च विज्ञेयं, अनादिकालात्तेषु तत्सद्भावात् आगामिकालेऽपि च तदभावासंभवादिति भावः, भव्यानां पुनर्मिथ्यात्वमनादि सपर्यवसितं, चशब्दस्यानुक्तसमुच्चयार्थत्वात् सादिसपर्यवसितं च विज्ञेयं, सपर्यवसितत्वं च सम्यक्त्वे—सम्यक्त्वावाप्तौ सत्यां, इदमुक्तं भवति—योऽनादिमिथ्यादृष्टिः सन् भव्यजीवः सम्यक्त्वं लप्स्यते तस्य मिथ्यात्वमनादिसान्तं, अनादिकालात्तेषु तस्य सद्भावात् आगामिकाले तु भव्यत्वान्यथानुपपत्तेरवश्यं सम्यक्त्वावाप्तौ पर्यवसानाच्च, यस्त्वनादिमिथ्यादृष्टिः सम्यक्त्वं लब्ध्वा केनापि कारणेन पुनर्मिथ्यात्वं याति तस्य तत्सादि, सम्यक्त्वलाभादनन्तरं तत्प्राप्तेः सादित्वात्, मिथ्यात्वे च जघन्यतोऽन्तर्मुहूर्तं उत्कृष्टतस्त्वर्हदाशातनादिपापबहुलतयाऽपार्धपुद्गलपरावर्तं यावत् स्थित्वा यदा पुनरपि सम्यक्त्वं लभते तदा तत्सान्तं,

साद्यनंतमितितृतीयभङ्गस्तु शून्य एव, प्रतिपतितसम्यग्दृष्टीनामेव हि मिथ्यात्वं सादि, तेषां चावश्यं सम्यक्त्वभावतो मिथ्यात्वस्यानन्तत्वासंभवादिति, तथा सासादनगुणस्थानकं उत्कर्षतः षडावलिकाप्रमाणं, तत ऊर्द्ध्वमवश्यं मिथ्यात्वोपगमात्, आवलिका चासङ्ख्यातसमयसमुदायरूपा, चतुर्थ—अविरतसम्यग्दृष्टिगुणस्थानकं त्रयस्त्रिंशत्सागरोपमाणि साधिकानि, तथाहि—कश्चिदितः स्थानादुत्कृष्टस्थितिष्वनुत्तरविमानेषूत्पन्नः तत्र चाविरतसम्यग्दृष्टित्वेन त्रयस्त्रिंशत्सागरोपमाणि स्थितः ततश्च्युत्वाऽत्राप्यायातो यावदद्यापि विरतिं न लभते तावत्तद्भावेनैव स्थित इत्यतो मनुष्यभवसंबद्धकतिपयवर्षाधिकत्रयस्त्रिंशत्सागरोपमसंभवः, पञ्चमं—देशविरतिगुणस्थानकं त्रयोदशं—सयोगिगुणस्थानकं, एते द्वे अपि पृथक् प्रत्येकं किञ्चिदूनपूर्वकोटिप्रमाणे, गर्भस्थो हि किल सातिरेकान्नव मासान् गमयति, जातोऽपि चाष्टौ वर्षाणि यावद्विरत्यनर्हो भवति, तत ऊर्द्ध्वं देशविरतिं प्रतिपद्य सर्वविरतिप्रतिपत्त्या केवलज्ञानं वोत्पाद्य यौ देशविरतिसयोगिकेवलिनौ प्रत्येकं पूर्वकोटिं जीवतस्तयोः किञ्चिदूनवर्षनवकलक्षणेन देशेन न्यूना पूर्वकोटिरिति, तथा चरमं—अयोगिकेवलिगुणस्थानं लघुपञ्चाक्षरं, किमुक्तं भवति?—नातिद्रुतं नातिविलम्बितं च किंतु मध्यमेन प्रकारेण यावता कालेन ङञणनम इत्येवंरूपाणि पञ्चाक्षराण्युच्चार्यन्ते तावत्कालमानमिति, तत ऊर्द्ध्वं मुक्त्यवाप्तेः, तृतीयं—सम्यग्मिथ्यादृष्टिगुणस्थानं, तथा षष्ठादि द्वादशं यावत्प्रमत्ताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहरूपाणीत्यर्थः इत्येतान्यष्टौ गुणस्थानानि प्रत्येकमन्तर्मुहूर्तप्रमाणानि, परतो गुणस्थानकान्तरगमनात् कालकरणाद्वेति, एतच्चोत्कृष्टतः कालप्रमाणमुक्तं, जघन्यतस्तु सासादनप्रमत्ताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहानामेकः समयः, तदूर्द्ध्वं मरणभावेनान्यत्रोपगमात्, मिथ्यादृष्टिमिश्राविरतदेशविरतक्षीणमोहसयोगिकेवलिनां चान्तर्मुहूर्तं,

अयोगिकेवलिनस्तु जघन्योत्कृष्टतः पूर्वोक्तमेवेति २२९ ॥ ७ ॥ ८ ॥ ८ ॥ ९ ॥ इदानीं 'निरयतिरिनरसुराणं उक्कोस विउव्वणाकालो'त्ति त्रिंशदुत्तरद्विशततमं द्वारमाह—

**अंतमुहुत्तं नरएसु हुंति चत्तारि तिरियमणुएसुं । देवेसु अद्धमासो उक्कोस विउव्वणाकालो ॥ १० ॥**

अन्तर्मुहूर्तं नरकेषूत्कर्षतो विकुर्वणावस्थानकालः, तिर्यक्षु मनुष्येषु च चत्वार्यन्तर्मुहूर्तानि, देवेषु—भवनपत्यादिषु अर्धमासः—पञ्चदशदिनान्युत्कृष्टतो विकुर्वणाकाल इति २३० ॥ १० ॥ इदानीं 'सत्त समुग्घाय'त्त्येकत्रिंशदधिकद्विशततमं द्वारमाह—

**वेयण १ कसाय २ मरणे ३ वेउव्विय ४ तेयए य ५ आहारे ६ । केवलियसमुग्घाए ७ सत्त इमे हुंति मणुयाणं ॥ ११ ॥ एगिंदीणं केवलिआहारगवज्जिया इमे पंच । पंचावि अवेउव्वा विगलासन्नीण चत्तारि ॥ १२ ॥ केवलियसमुग्घाओ पढमे समयंमि विरयए दंडं । बीए पुणो कवाडं मंथाणं कुणइ तइयंमि ॥ १३ ॥ लोयं भरइ चउत्थे पंचमए अंतराइं संहरइ । छट्ठे पुण मंथाणं हरइ कवाडंपि सत्तमए ॥ १४ ॥ अट्ठमए दंडंपि हु उरलंगो पढमचरमसमएसुं । सत्तमछट्ठबिइज्जेसु होइ ओरालमिस्सेसो ॥ १५ ॥ कम्मणसरीरजोई चउत्थए पंचमे तइज्जे य । जं होइ अणाहारो सो तंमि तिगेऽवि समयाणं ॥ १६ ॥**

समित्येकीभावे उत् प्राबल्येन हननं—वेदनीयादिकर्मप्रदेशानां निर्जरणं घातः, एकीभावेन प्राबल्येन घातः समुद्घातः, केन सहैकीभावगमनमिति चेद्, उच्यते, अर्थाद्वेदनादिभिः, तथाहि—यदाऽऽत्मा वेदनादिसमुद्घातं गतस्तदा वेदनाद्यनुभवज्ञानपरिणत एव भवति नान्यज्ञानप-

रिणत इति वेदनाद्यनुभवज्ञानेन सहैकत्वापत्तिर्जीवस्यावगन्तव्या, प्राबल्येन घातः कथमिति चेद्, उच्यते, इह वेदनादिसमुद्घातपरिणतो जन्तुर्वेहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय च निर्जरयति, आत्मप्रदेशैः सह संश्लिष्टान् शातयतीति भावः, स च सप्तधा, तद्यथा—वेदनासमुद्घातः कषायसमुद्घातः मारणान्तिकसमुद्घातः वैक्रियसमुद्घातः तैजससमुद्घातः आहारकसमुद्घातः केवलिसमुद्घातश्चेति, तत्र वेदनया—असद्वेदनोदयजनितया पीडया हेतुभूतया समुद्घातो वेदनासमुद्घातः, स चासातवेदनीयकर्माश्रयः, तथाहि—वेदनाकरालितो जीवः स्वप्रदेशान् अनन्तानन्तकर्मस्कन्धानुविद्धान् शरीराद्बहिरपि विक्षिपति, तैश्च वदनजठरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्तं यावत्तिष्ठति, तस्मिंश्चान्तर्मुहूर्ते प्रभूतासातवेदनीयकर्मपुद्गलपरिशाटं करोति, ततः समुद्घातान्निवृत्त्य स्वरूपस्थो भवति १, कषायैः—क्रोधादिभिर्हेतुभूतैः समुद्घातः कषायसमुद्घातः, स च कषायाख्यचारित्रमोहनीयकर्माश्रयः, तथाहि—तीव्रकषायोदयाकुलो जीवः स्वप्रदेशान् बहिर्विक्षिप्य तैः प्रदेशैर्वदनोदरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च देहमात्रं क्षेत्रमभिव्याप्य वर्तते, तथाभूतश्च प्रभूतान् कषायकर्मपुद्गलान् परिशातयति २, मरणमेव प्राणिनामन्तकारित्वादन्तो मरणान्तस्तत्र भवो मारणान्तिकः स चासौ समुद्घातश्च मारणान्तिकसमुद्घातः, स चान्तर्मुहूर्तशेषायुःकर्माश्रयः, तथाहि—कश्चिज्जीवोऽन्तर्मुहूर्तशेषे स्वायुषि बहिः स्वदेशान् विक्षिप्य तैर्वदनोदरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्य विष्कम्भबाहल्याभ्यां स्वशरीरप्रमाणमायामतः स्वशरीरातिरेकतो जघन्येनाङ्गुलासङ्ख्येयभागमुत्कर्षतोऽसङ्ख्येयानि योजनान्येकदिशि क्षेत्रमभिव्याप्य वर्तते, तथाभूतश्च प्रभूतानायुःकर्मपुद्गलान् परिशातयति ३, वैक्रिये प्रारभ्यमाणे समुद्घातो वैक्रियसमुद्घातः, स च वैक्रियशरीरनामकर्मविषयः, तथाहि—वैक्रियलब्धिमान् जीवो वैक्रियकरणकाले स्वप्रदेशान् शरीरा-

द्बहिर्निष्काश्य विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतः सङ्ख्येययोजनप्रमाणं दण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, यत उक्तम्—"वेउव्वियसमुग्घायेणं समोहणइ समोहणित्ता संखेज्जाइं जोयणाइं दंडं निसिरइ निसिरित्ता अहाबायरे पुग्गले परिसाडेति' ४, तेजसि विषये भवस्तैजसः, स चासौ समुद्घातश्च तैजससमुद्घातः, स च तेजोलेश्याविनिर्गमकालभावी तैजसशरीरनामकर्माश्रयः, तथाहि—तेजोनिसर्गलब्धिमान् क्रुद्धः साध्वादिः सप्ताष्टौ पदानि अवष्वक्य विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु सङ्ख्येययोजनप्रमाणं जीवप्रदेशदण्डं शरीराद्बहिः प्रक्षिप्य क्रोधविषयीकृतं मनुष्यादि निर्दहति, तत्र च प्रभूतांस्तैजसशरीरनामकर्मपुद्गलान् शातयति ५, आहारकशरीरे प्रारभ्यमाणे समुद्घात आहारकसमुद्घातः, स चाहारकशरीरनामकर्मविषयः, तथाहि—आहारकशरीरलब्धिमानाहारकशरीरं चिकीर्षुर्विष्कम्भबाहल्याभ्यां देहमानं आयामतः सङ्ख्येययोजनप्रमाणं शरीराद्बहिः स्वप्रदेशदण्डं निसृज्य यथास्थूलान् प्रभूतानाहारकशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयतीति ६, एते च षडपि समुद्घाताः प्रत्येकमान्तर्मुहूर्तिकाः, तथा केवलिन्यन्तर्मुहूर्तभाविपरमपदे भवः कैवलिकः स चासौ समुद्घातश्च कैवलिकसमुद्घातः, स च सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रयः, अमुं च सूत्रकारः स्वयमेव पुरस्तात्प्रपञ्चयिष्यतीति । अथैतानेव समुद्घातान् जीवेषु चिंतयति—'सत्त इमे हुंति मणुयाणं'ति सप्ताप्येते पूर्वोक्ताः समुद्घाता मनुष्याणां भवन्ति, मनुष्येषु सर्वभावसंभवात् । 'एगेंदी'त्यादि, एकेन्द्रियाणां—पृथिव्यादीनां कैवलिकाहारकसमुद्घातवर्जिता इमे आद्याः पञ्च समुद्घाता भवन्ति, पञ्चापि चैते वैक्रियवर्जिताश्चत्वारः समुद्घाता विकलेन्द्रियाणामसंज्ञिपञ्चेन्द्रियाणां च भवन्ति, इयं च गाथा प्रज्ञापनापंचसंग्रहजीवसमासादिभिः शास्त्रान्तरैः सह विसंवदति, तेष्वेकेन्द्रियादीनां तैजससमुद्घातस्य प्रतिषिद्धत्वात्, तथा च चतुर्विंशतिदण्डकक्रमेण प्रज्ञापनासूत्रं—"नेरइयाणं भंते! कइ समु-

ग्घाया पन्नत्ता ?, गोयमा ! चत्तारि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए। असुरकुमाराणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए तेयसमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, एवं जाव थणियकुमाराणं। पुढविकाइयाणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! तिन्नि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए, एवं जाव चउरिंदियाणं, नवरं वाउकाइयाणं चत्तारि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, पंचिंदियतिरिक्खजोणियाणं जाव वेमाणियाणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए तेयसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, नवरं मणुस्साणं सत्तविहा समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए जाव केवलिसमुग्घाए" इति, एतच्च सुखार्थं किंचिद्व्याख्यायते—नैरयिकाणामाद्याश्चत्वारः समुद्घाताः, तेषां भवप्रत्ययेन तेजोलेश्यालब्ध्याहारकलब्धिकेवलित्वाभावतः शेषसमुद्घातत्रयासंभवात्, असुरकुमारादीनां दशानामपि भवनपतीनां तेजोलब्धेरपि भावादाद्याः पञ्च, पृथिव्यप्तेजोवनस्पतिद्वित्रिचतुरिन्द्रियाणामाद्यास्त्रयः, तेषां वैक्रियलब्धेरप्यसंभवात्, वायूनामाद्याश्चत्वारस्तेषां बादरपर्याप्तानां वैक्रियलब्धिसंभवाद्वैक्रियसमुद्घातस्यापि संभवात्, पञ्चेन्द्रियतिरश्चामाद्याः पञ्च, केषांचित्तेषां वैक्रियतेजोलेश्यालब्धेरपि संभवात्, मनुष्याणां सप्तापि, व्यन्तरज्योतिष्कवैमानिकानां त्वाद्याः पञ्चेति ॥ १२ ॥ अथ केवलिसमुद्घातं सूत्रकृदेव व्याचष्टे—'केवली'त्यादिगाथाचतुष्कं, केवलिसमुद्घातः प्रतिपाद्यत इति शेषः, तत्रान्तर्मुहूर्तावशेषायुः केवली कश्चित्कर्मणां समीकरणार्थं समुद्घातं करोति यस्य वेदनीयादिकमायुषः सकाशादधिकतरं भवति, अन्यस्तु न करोत्येव, तं च कुर्वन् प्रथमसमये बाहल्यतः स्वशरीरप्रमाणं ऊर्द्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां

दण्डाकारत्वेन विस्तारणाद्दण्डं विरचयति, द्वितीये पुनः समये तमेव दण्डं पूर्वापरं दक्षिणोत्तरं वाऽऽत्मप्रदेशानां प्रसारणात्पार्श्वतो लोका-
न्तगामि कपाटमिव कपाटं करोति, तृतीयसमये तमेव कपाटं दक्षिणोत्तरं पूर्वापरं वा दिग्द्वयप्रसारणान्मथिसदृशं मन्थानं लोकान्तप्रा-
पिणमारचयति, एवं च लोकस्य प्रायो बहु पूरितं भवति मथ्यन्तराणि त्वपूरितानि, जीवप्रदेशानामनुश्रेणि गमनात्, चतुर्थसमये
तान्यपि मथ्यन्तराणि सह लोकनिष्कुटैः पूरयति, तथा च समस्तोऽपि लोकः पूरितो भवति, तदनन्तरं च पञ्चमे समये यथोक्तप्र-
क्रमात् प्रतिलोममथ्यन्तराणि संहरति, प्रसृतान् जीवप्रदेशान् सकर्मकान् मथ्यन्तर्गतान् संकोचयतीत्यर्थः, षष्ठे पुनः समये मन्थान-
मुपसंहरति, घनतरसंकोचात्, सप्तमे समये कपाटमपि संहरति, दण्डात्मनि संकोचात्, अष्टमे तु समये दण्डमपि संहृत्य स्वशरीरस्थ
एव भवति, तदेवमष्टसामयिकः कैवलिकः समुद्‌घातः, एतेषु चाष्टस्वपि समयेषु केवली प्रभूतान् वेदनीयनामगोत्रकर्मपुद्गलान् शात-
यति। सम्प्रति समुद्‌घातगतस्य योगव्यापारश्चिन्त्यते—योगाश्च—मनोवाक्कायाः तत्र समुद्‌घातगतस्य काययोग एव केवलो व्याप्रियते,
न मनोवाग्योगौ, प्रयोजनाभावात्, तत्र प्रथमचरमसमययोरौदारिकाङ्गो भवति, औदारिककायव्यापारप्राधान्यादौदारिकयोगयुक्त एवे-
त्यर्थः, सप्तमषष्ठद्वितीयेषु औदारिकमिश्रः, समुद्‌घातमापन्न औदारिके तस्माच्च बहिः कार्मणवीर्यपरिस्पन्दादौदारिककार्मणमिश्रकाययो-
गयुक्त इत्यर्थः, चतुर्थपञ्चमतृतीयसमयेषु पुनर्बहिरेवौदारिकाद्बहुतरप्रदेशव्यापारसद्भावात् कार्मणशरीरयोगयुक्त एव, तन्मात्रचेष्टनात्,
अत्रैव हेतुमाह—'जं होइ अणाहारो सो तंमि तिगेवि समयाणं'ति यद्—यस्मात्कारणात् स तस्मिन् समयत्रिकेऽप्यनाहारको भवति,
यश्चानाहारकः स नियमादेव केवलकार्मणशरीरयोगीति २३१ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इदानीं 'छप्पज्जत्तीओ'त्ति द्वात्रिंश-
दुत्तरद्विशततमं द्वारमाह—

**आहार १ सरीरिं २ दिय ३ पज्जत्ती ४ आणपाण ४ भास ५ मणे ६ । चत्तारि पंच छप्पिय एगिंदियविगलसन्नीणं ॥ १७ ॥ पढमा समयपमाणा सेसा अंतोमुहुत्तिया य कमा । समगंपि हुंति नवरं पंचम छट्ठा य अमराणं ॥ १८ ॥**

पर्याप्तिर्नाम आहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः, सा च पुद्गलोपचयादुपजायते, किमुक्तं भवति ?—उत्पत्तिदेशमागतेन प्रथमं ये गृहीताः पुद्गलास्तेषां तथा अन्येषामपि प्रतिसमयं गृह्यमाणानां तत्संपर्कतस्तद्रूपतया जातानां यः शक्तिविशेषः—आहारादिपुद्गलखलरसादिरूपतापादनहेतुः यथोदरान्तर्गतानां पुद्गलविशेषाणामाहारपुद्गलखलरसरूपतापरिणमनहेतुः शक्तिविशेषः सा पर्याप्तिः, सा च षोढा, तद्यथा—आहारपर्याप्तिः शरीरपर्याप्तिरिन्द्रियपर्याप्तिः प्राणापानपर्याप्तिर्भाषापर्याप्तिर्मनःपर्याप्तिश्च, तत्र यया शक्त्या करणभूतया जन्तुर्बाह्यमाहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्तिः, यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः, यया तु धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां वा इन्द्रियाणां प्रायोग्यानि द्रव्याण्युपादाय एकद्वित्र्यादीन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः, यया पुनरुच्छ्वासयोग्यवर्गणादलिकमादाय उच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा प्राणापानपर्याप्तिः, यया तु भाषाप्रायोग्यदलिकमादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः, यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः, आह—किं सर्वेषामपि जीवानां सर्वा अप्येताः पर्याप्तयः प्राप्यन्ते ?, नेत्याह—'चत्तारी'त्यादि, इह यथासङ्ख्येन संवन्धः, तद्यथा—आद्याश्चतस्र एवैकेन्द्रियाणां, भाषामनसोस्तेष्वभावात्, विकलशब्देन चात्र मनोविकला गृह्यन्ते, ते च पारिशे-

ष्याद् द्वित्रिचतुरिन्द्रिया असंज्ञिपञ्चेन्द्रियाश्च लभ्यन्ते, तेषामाद्याः पञ्चैव पर्याप्तयो न तु मनःपर्याप्तिः मनसस्तेष्वभावादिति, संज्ञिपञ्चेन्द्रियाणां पुनः षडपि पर्याप्तयः प्राप्यन्ते, मनसोऽपि तेषां सद्भावादिति, एताभिश्च स्वस्वयोग्यपर्याप्तिभिरपर्याप्ता एव ये कालं कुर्वन्ति तेऽप्याद्यपर्याप्तित्रयं समाप्य ततोऽन्तर्मुहूर्तेनायुर्बद्ध्वा तदनन्तरमबाधाकालरूपमन्तर्मुहूर्तं जीवित्वैव च म्रियन्ते इति ॥ १७ ॥ अथासां निष्पत्तिकालमानमाह—'पढमे'त्यादि, प्रथमा—आहारपर्याप्तिः समयप्रमाणा, शेषाः—शरीरपर्याप्त्यादयः पञ्च पर्याप्तयः क्रमेण प्रत्येकमान्तर्मौहूर्तिक्यः, इदमुक्तं भवति—एताः पर्याप्तयः सर्वा अप्युत्पत्तिप्रथमसमये एव यथास्वं युगपज्जन्तुना निष्पादयितुमारभ्यन्ते, क्रमेण च निष्ठामुपयान्ति, तद्यथा—प्रथममाहारपर्याप्तिः ततः शरीरपर्याप्तिरिन्द्रियपर्याप्तिरित्यादि, आस्वाहारपर्याप्तिश्च प्रथमसमय एव निष्पाद्यते, शेषास्तु पञ्चापि प्रत्येकमन्तर्मुहूर्तेन कालेन, अथ आहारपर्याप्तिः प्रथमसमय एव निष्पद्यते इति कथमवसीयते ?, उच्यते, इह भगवता आर्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि—"आहारपज्जत्तीए अपज्जत्तए णं भंते ! किं आहारए अणाहारए ?, गोयमा ! नो आहारए अणाहारए" इति, तत आहारपर्याप्त्या अपर्याप्तो विग्रहगतावेवोपपद्यते नोपपातक्षेत्रसमागतोऽपि, उपपातक्षेत्रसमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रमागतोऽपि आहारपर्याप्त्या अपर्याप्तः स्यात्तत एवं व्याकरणसूत्रं पठेत्—'सिय आहारए सिय अणाहारए' यथा शरीरादिषु पर्याप्तिषु 'सिय आहारए सिय अणाहारए' इति, सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्तप्रमाणः, एतच्च सूत्रे यद्यपि सामान्येनोक्तं तथाप्यौदारिकशरीरिणामेव द्रष्टव्यं, वैक्रियाहारकशरीरिणां त्वाहारेन्द्रियानप्राणभाषामनःपर्याप्तयः पञ्चाप्येकैकेनैव समयेन समाप्यन्ते, शरीरपर्याप्तिः पुनरन्तर्मुहूर्तेन, उक्तं च—"वेउव्वाहाराणं सरीर अन्नाउ पण इगिगसमया । पिहु पण अंतमुहुत्ता उराल आहार इगसमया ॥ १ ॥" [ वैक्रियाहारक-

योः शरीरमन्याः पञ्चैकैकसामयिकाः। पृथक् पञ्च आन्तर्मुहूर्त्तिका औदारिके आहारपर्याप्तिरेकसामयिकी ॥ १ ॥] अथ देवानां विशेषमाह—'समगंपि हुंति नवरं पंचम छट्ठा य अमराणंति' नवरं—केवलं पञ्चमी—भाषापर्याप्तिः षष्ठी च—मनःपर्याप्तिः एते द्वे अपि पर्याप्ती अमराणां—देवानां समकमपि—युगपदपि भवतः, केनाप्यभिप्रायेण **व्याख्याप्रज्ञप्त्यादिषु** देवानामनयोः पर्याप्त्योरेकत्वप्रतिपादनात्, तथा च **व्याख्याप्रज्ञप्तिटीका**—"पंचविहाए पज्जत्तीए'त्ति पर्याप्तिः—आहारशरीरादीनामभिनिर्वृत्तिः, सा चान्यत्र षोढा उक्ता इह तु पञ्चधा, भाषामनःपर्याप्त्योर्बहुश्रुताभिमतेन केनापि कारणेन एकत्वविवक्षणादि"ति २३२॥ १७॥१८॥ इदानीं **'अणाहारया चउरो'**त्ति त्रयस्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**विग्गहगइमावन्ना केवलिणो समोहया अजोगी य। सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ १९ ॥**

विग्रहगतिः—भवात् भवान्तरे विश्रेण्या गमनं तामापन्नाः—प्राप्ताः सर्वेऽपि जीवाः तथा केवलिनः समुद्धताः—कृतसमुद्घाताः तथा अयोगिनः—शैलेश्यवस्थाः तथा सिद्धाः—क्षीणकर्माष्टकाः, सर्वेऽप्येतेऽनाहाराः, एतद्व्यतिरिक्ताः शेषाः सर्वेऽप्याहारकाः, इह परभवं गच्छतां जीवानां गतिर्द्विधा—ऋजुगतिर्विग्रहगतिश्च, तत्र यदा जीवस्य मरणस्थानादुत्पत्तिस्थानं समश्रेण्यां प्राञ्जलमेव भवति तदा ऋजुगतिः, सा चैकसमया, समश्रेणिव्यवस्थितत्वेनोत्पत्तिदेशस्याद्यसमय एव प्राप्तेः, नियमादाहारकश्चास्यां, हेयग्राह्यशरीरमोक्षग्रहणान्तरालाभावेनाहाराव्यवच्छेदात्, यदा तु मरणस्थानादुत्पत्तिस्थानं वक्रं भवति तदा विग्रहगतिः, वक्रश्रेण्या अन्तरालरूपेण विग्रहेणोपलक्षिता गतिर्विग्रहगतिरितिकृत्वा, तत्र विग्रहगत्योत्पन्ना उत्कर्षतस्त्रीन् समयान् यावदनाहारकाः, तथाहि—अस्यां वक्रगतौ स्थितो जन्तुरेकेन

द्वाभ्यां त्रिभिश्चतुर्भिर्वा वक्रैरुत्पत्तिदेशमायाति, तत्रैकवक्रायां द्वौ समयौ, तयोश्च नियमादाहारकः, तथाहि—आद्यसमये पूर्वशरीरमोक्षः तस्मिंश्च समये तच्छरीरयोग्याः केचित्पुद्गला जीवयोगाल्लोमाहारतः संबन्धमायान्ति, औदारिकवैक्रियाहारकपुद्गलादानं चाहारः, तत आद्यसमये आहारकः, द्वितीये च समये उत्पत्तिदेशे तद्भवयोग्यशरीरपुद्गलादानादाहारकः, द्विवक्रायां गतौ त्रयः समयाः, तत्राद्ये अन्त्ये च प्राग्वदाहारको मध्यमे त्वनाहारकः, त्रिवक्रायां चत्वारः समयाः, ते चैवं—त्रसनाड्या बहिरधस्तनभागादूर्ध्वमुपरितनभागादधो वा जायमानो जन्तुर्विदिशो दिशि दिशो वा विदिशि यदोत्पद्यते तदैकेन समयेन विदिशो दिशि याति द्वितीयेन त्रसनाडीं प्रविशति तृतीयेनोपर्यधो वा याति चतुर्थेन बहिरुत्पद्यते, दिशो विदिशि उत्पादे त्वाद्ये समये त्रसनाडीं प्रविशति द्वितीये उपर्यधो वा याति तृतीये बहिर्गच्छति चतुर्थे विदिश्युत्पद्यते, अत्राद्यन्तयोः प्राग्वदाहारकः मध्यमयोस्त्वनाहारकः, चतुर्वक्रायां पञ्च समयाः, ते च त्रसनाड्या बहिरेव विदिशो विदिश्युत्पादे प्राग्वद्भावनीयाः, अत्राप्याद्यन्तयोराहारकः त्रिषु त्वनाहारकः, तथा केवलिनः समुद्घातेऽष्टसामयिके तृतीयचतुर्थपञ्चमरूपान् केवलकार्मणयोगयुतांस्त्रीन् समयान्, अयोगिनः शैलेश्यवस्थायां ह्रस्वपञ्चाक्षरोच्चारणमात्रं, सिद्धास्तु सादिमपर्यवसितं कालमनाहारका इति २३३ ॥ १९ ॥ इदानीं 'सत्त भयट्ठाणाइं'ति चतुस्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**इह १ परलोया २ ऽऽयाणा ३ मकम्ह ४ आजीव ५ मरण ६ मसिलोए ७ । सत्त भयट्ठाणाइं**
**इमाइं सिद्धंतभणियाइं ॥ २० ॥**

भयं—भयमोहनीयप्रकृतिसमुत्थ आत्मपरिणामः तस्य स्थानानि—आश्रया भयस्थानानि, तत्र मनुष्यादिकस्य सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्यद्भयं तदिहलोकभयं, इहाधिकृतभीतिमतो जन्तोर्जातौ यो लोकस्ततो भयमिति व्युत्पत्तेः, तथा परस्मात्—विजा-

तीयात्तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद्भयं तत्परलोकभयं, तथा आदीयते इत्यादानं तदर्थं मम सकाशादयमिदमादास्यतीति यच्चौरादिभ्यो भयं तदादानभयं, तथा अकस्मादेव—बाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य रात्र्यादौ भयमकस्माद्भयं, तथा धनधान्यादिहीनोऽहं दुष्काले कथं जीविष्यामीति दुष्कालपतनाद्याकर्णनाद्भयमाजीविकाभयं, नैमित्तिकादिना मरिष्यसि त्वमधुनेत्यादिकथिते भयं मरणभयं, अकार्यकरणोन्मुखस्य विवेचनायां जनापवादमुत्प्रेक्ष्य भयमश्लोकभयमिति, इमानि सप्त भयस्थानानि सिद्धांते भणितानि २३४ ॥ २० ॥ इदानीं 'छब्भासाओ अप्पसत्थाओ'त्ति पंचत्रिंशदुत्तरद्विशततमं द्वारमाह—

**हीलिय १ खिंसिय २ फरुसा ३ अलिआ ४ तह गारहत्थिया भासा ५। छट्ठी पुण उवसंताहि-
गरणउल्लाससंजणणी ६ ॥ २१ ॥**

भाष्यन्ते—प्रोच्यन्ते भाषा—वचनानि ताश्च अप्रशस्ता—गुरुकर्मबन्धहेतुत्वादशोभना हीलितादिभेदतः षड् भवन्ति, तत्र हीलिता सासूयमवगणयन् वाचक! ज्येष्ठार्येत्यादि जल्पनं १ खिंसिता जन्मकर्माद्युद्घाटनं २ परुषा दुष्टशैक्षेत्यादि कर्कशवचनं ३ अलीका किं दिवा प्रचलयसीत्यादिप्रश्ने न प्रचलयामीत्यादि भणनं ४ (ग्रन्थाग्रं १५०००) तथा गृहस्थानामियं भाषा गार्हस्थी सा च पुत्र मामक भागिनेयेत्यादिरूपा ५ षष्ठी पुनर्भाषा 'उपशान्ताधिकरणोल्लाससंजननी' उपशान्तस्य—उपशमं नीतस्याधिकरणस्य—कलहस्य य उल्लासः—प्रकामं प्रवर्तनं तस्य संजननी—समुत्पादयित्रीत्यर्थः २३५ ॥२१॥ इदानीं 'भंगा अणुव्वयाणं'ति षट्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**दुविहा २ अट्ठविहा वा ८ बत्तीसविहा य ३२ सत्तपणतीसा ७३५। सोलस य सहस्स भवे
अट्ठ सयट्ठोत्तरा १६८०८ वइणो ॥ २२ ॥ दुविहा विरयाविरया दुविहंतिविहाइणट्ठहा हुंति। वय-**

मेगेगं छव्विहगुणियं दुगमिलिय बत्तीसं ॥ २३ ॥ तिन्नि तिया तिन्नि दुया तिन्निक्केक्का य हुंति जोएसु । तिं दु एक्कं ति दु एक्कं ति दु एक्कं चेव करणाइं ॥ २४ ॥ मणवयकाइयजोगे करणे कारावणे अणुमईए । एक्कगदुगतिगजोगे सत्ता सत्तेव गुणवन्ना ॥ २५ ॥ पढमेक्को तिन्नि तिया दोन्नि नवा तिन्नि दो नवा चेव । कालतिगेण य गुणिया सीयालं होइ भंगसयं ॥ २६ ॥ पंचाणुव्वयगुणियं सीयालसयं तु नवरि जाणाहि । सत्त सया पणतीसा सावयवयगहणकालंमि ॥ २७ ॥ सीयालं भंगसयं जस्स विसुद्धीएँ होइ उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥ २८ ॥ दुविहतिविहाइ छव्विह तेसिं भेया कमेणिमे हुंति । पढमेक्को दुन्नि तिया दुगेग दो छक्क इगवीसं ॥ २९ ॥ एगवए छब्भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पयवुड्ढीए सत्तगुणा छज्जुया कमसो ॥ ३० ॥ इगवीसं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय बावीसगुणा इगवीसं पक्खिवेयव्वा ॥ ३१ ॥ एगवए नव भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय दसगुण काउं नव पक्खेवंमि कायव्वा ॥ ३२ ॥ इगवन्नं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पन्नासगुणा गुणवन्नं पक्खिवेयव्वा ॥ ३३ ॥ एगाई एगुत्तरपत्तेयपयंमि उवरि पक्खेवो । एक्केक्कहाणिअवसाणसंखया हुंति संयोगा ॥ ३४ ॥ अहवा पयाणि ठविउं अक्खे घित्तूण चारणं कुज्जा । एक्कगदुगाइजोगा भंगाणं संख कायव्वा ॥ ३५ ॥ बारस १ छावट्ठीवि य २ वीसहिया दो

य ३ पंच नव चउरो ४ । दो नय सत्त य ५ चउ दोन्नि नव य ६ दो नव य सत्तेव ७ ॥ ३६ ॥ पण नव चउरो ८ वीसा य दोन्नि ९ छावट्ठि १० वारसे ११ क्को १२ य । सावयभंगाणमिमे सव्वाणवि हुंति गुणकारा ॥ ३७ ॥ छच्चेव य १ छत्तीसा २ सोल दुगं चेव ३ छ नव दुगमिक्कं ४ । छ सत्त सत्त सत्त य ५ छप्पन्न छसट्ठि चउ छट्ठे ६ ॥ ३८ ॥ छत्तीसा नवनउई सत्तावीसा य ७ सोल छन्नउई । सत्त य सोलस भंगा अट्ठमठाणे वियाणाहि ८ ॥ ३९ ॥ छन्नउई छावत्तरि सत्त दु सुन्नेक्क हुंति नवमम्मि ९ । छाहत्तरि इगसट्ठी छायाला सुन्न छच्चेव १० ॥ ४० ॥ छप्पन्न सुन्न सत्त य नव सत्तावीस तह य छत्तीसा ११ ॥ छत्तीसा तेवीसा अडहत्तरि छहत्तरीगवीसा १२ ॥ ४१ ॥ दुविहतिविहेण पढमो दुविहं दुविहेण वीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ ४२ ॥ एगविहं दुविहेणं एक्कविहेण छट्ठओ होइ । उत्तरगुण सत्तमओ अविरयओ अट्ठमो होइ ॥ ४३ ॥ पंचण्हमणुवयाणं एक्कगदुगतिगचउक्कपणगेहिं । पंचगदसदसपणएक्कगो य संजोय नायव्वा ॥ ४४ ॥ छच्चेव य छत्तीसा सोल दुगं चेव छ नव दुग एक्कं । छस्सत्त सत्त सत्त य पंचण्ह वयाण गुणणपयं ॥ ४५ ॥ वयएक्कगसंजोगाण हुंति पंचण्ह तीसई भंगा । गुणसंजोग दसण्हंपि तिन्नि सट्ठा सया हुंति ॥ ४६ ॥ तिगसंजोग दसण्हं भंगसया एक्कवीसइ सट्ठा । चउ-संजोगप्पणगे चउसट्ठि सयाण असियाणि ॥ ४७ ॥ सत्तसरी सयाइं छहत्तराइं तु पंचमे हुंति ।

**उत्तरगुण अविरयमेलियाण जाणाहि सवग्गं ॥ ४८ ॥ सोलस चेव सहस्सा अट्ठ सया चेव हुंति अट्ठहिया । एसो वयपिंडत्थो दंसणमाई उ पडिमाओ ॥ ४९ ॥**

व्रतं—नियमविशेषस्तद्विद्यते येषां ते व्रतिनः श्रावका इत्यर्थः, ते द्विधा—वक्ष्यमाणयुक्त्या द्विप्रकाराः, अथवा अष्टविधाः, अथवा द्वात्रिंशद्भेदाः, अथवा सप्त शतानि पञ्चत्रिंशदधिकानि, अथवा षोडश सहस्रा अष्टौ शतान्यष्टोत्तराणि व्रतिनो भवन्ति । अत्र च व्रतिन इत्युक्ते सामान्येन श्रावका गृह्यन्ते नतु देशविरता एव, अविरतसम्यग्दृष्टीनामपि सम्यक्त्वप्रतिपत्तिलक्षणस्य नियमस्य सद्भावात् ॥ २२ ॥ अथैतानेव भेदान् प्रत्येकं व्याचिख्यासुराद्यं भेदत्रयमाह—'दुविहे'त्यादि, द्विविधाः श्रावकाः—विरता अविरताश्च, तत्र विरताः—प्रतिपन्नदेशविरतयः अविरताः—अभ्युपेतक्षायिक(कादि)सम्यक्त्वाः सत्यकिश्रेणिककृष्णादय इव, 'दुविहं तिविहाइणट्ठहा होंति'त्ति द्विविधः—कृतकारितरूपः त्रिविधो—मनोवाक्कायभेदेन यत्र स द्विविधत्रिविध एको भङ्गः स आदिर्यस्य द्विविधत्रिविधादेर्भङ्गजालस्य तेन द्विविधत्रिविधादिना भङ्गजालेनाष्टविधाः श्रावका भवन्ति, यद्वक्ष्यति—"दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं एक्केक्कविहेण छट्ठओ होइ । उत्तरगुण सत्तमओ अविरयओ अट्ठमो होइ ॥ २ ॥" अनयोश्च सोपयोगत्वादत्रैव व्याख्या क्रियते—इह व्रतं प्रतिपित्सुः कोऽपि किञ्चित्प्रतिपद्यते, श्रावकव्रतप्रतिपत्तेर्बहुभङ्गत्वात्, तत्र द्विविधं—कृतकारितभेदं त्रिविधेन—मनसा वचसा कायेनेति प्रथमो भङ्गः, एवं च भावना—स्थूलहिंसादिकं न करोत्यात्मना न कारयत्यन्येन मनसा वचसा कायेन चेति, अस्य चानुमतिरप्रतिषिद्धा, आपत्यादिपरिग्रहसद्भावात्तैर्हिंसादिकरणे च तस्यानुमतिप्राप्तेः, अन्यथा परिग्रहापरिग्रहयोरविशेषेण प्रव्रजिताप्रव्रजितयोरभेदापत्तेः, यत्पुनर्व्याख्याप्रज्ञप्त्यादौ त्रिविधं त्रिविधेनेत्यपि प्रत्याख्यानमुक्तमगारिणस्तद्विशेषविषयं विज्ञेयं, तथाहि—यः किल प्रविव्रजिषुरेव पुत्रादि-

संततिपालनाय विलम्बमानः प्रतिमाः प्रतिपद्यते यो वा विशेषं स्वयम्भूरमणादिगतं मत्स्यमांसदन्तिदन्तचित्रकचर्मादिकं स्थूलहिंसादि वा कचिदवस्थाविशेषेण प्रत्याख्याति स एव त्रिविधं त्रिविधेनेति करोति इत्यल्पविषयत्वादत्र न विवक्षितमिति, द्विविधं द्विविधेनेति द्वितीयो भङ्गः, अत्र चोत्तरभङ्गास्त्रयः, तत्र द्विविधमिति—स्थूलहिंसादिकं न करोति न कारयति, द्विविधेनेति मनसा वचसा १ यद्वा मनसा कायेनेति २ यद्वा वाचा कायेनेति ३, तत्र यदा मनसा वाचा न करोति न कारयति तदा मनसाऽभिसन्धिरहित एव वाचाऽपि हिंसादिकमब्रुवन्नेव कायेनैव दुश्चेष्टितादिना असंज्ञिकवत्करोति, यदा तु मनसा कायेन न करोति न कारयति तदा मनसाऽभिसन्धिरहित एव कायेन दुश्चेष्टितादि परिहरन्नेवानाभोगाद्वाचैव हन्मि घातयामि चेति ब्रूते, यदा तु वाचा कायेन न करोति न कारयति तदा मनसैवाभिसन्धिमधिकृत्य करोति कारयति च, अनुमतिस्तु त्रिभिरपि सर्वत्रैवास्ति, एवं शेषविकल्पा अपि भावनीयाः, द्विविधमेकविधेनेति तृतीयः, अत्राप्युत्तरभङ्गास्त्रयः, द्विविधं करणं कारणं च एकविधेन मनसा १ यद्वा वचसा २ यद्वा कायेन ३, एकविधं त्रिविधेनेति चतुर्थः, अत्र च द्वौ प्रतिभङ्गौ, एकविधं करणं मनसा वाचा कायेन च, अथवा एकविधं कारणं मनसा वाचा कायेन, एकविधं द्विविधेनेति पञ्चमः, अत्र चोत्तरभेदाः षट्, एकविधं करणं द्विविधेन मनसा वाचा १ यद्वा मनसा कायेन २ यद्वा वाचा कायेन ३, अथवा एकविधं कारणं द्विविधेन मनसा वाचा ४ यद्वा मनसा कायेन ५ यद्वा वाचा कायेन ६, एकविधमेकविधेनेति षष्ठो मूलभङ्गः, अत्राप्युत्तरभङ्गाः षट्, एकविधं करणं एकविधेन मनसा १ यद्वा वाचा २ यद्वा कायेन ३ अथवा एकविधं कारणं एकविधेन मनसा ४ यद्वा वाचा ५ यद्वा कायेनेति ६, तदेवं मूलभङ्गाः षट्, षण्णामपि च मूलभङ्गानामुत्तरभङ्गाः सर्वसङ्ख्ययैकविंशतिः, तथा च वक्ष्यति—"दुविहतिविहा य छच्चिय तेसिं भेया कमेणिमे होंति । पढमेक्को दोन्नि तिया दुगेग दो छच्च इगवीसं ॥ १ ॥" एषाऽपि प्रक्रमादिहैव व्याख्यायते—अनन्तरोक्ता एव

द्विविधत्रिविधादयः षड्भङ्गाः स्थाप्यन्ते, तेषां षण्णां भङ्गानां क्रमेणैते वक्ष्यमाणा भेदा—उत्तरविकल्पा भवन्ति, तथाहि—प्रथममेकः स्था-
प्यते, तदनन्तरं क्रमेण द्वौ त्रिकौ तत एको द्विकः तदनु क्रमेण द्वौ षट्कौ, इयमत्र भावना—प्रागुक्तायाः पड्भङ्ग्याः प्रथमे भङ्गे एक एव
भेदः, द्वितीयभङ्गे उत्तरभेदास्त्रयः, तृतीयेऽपि त्रयः, चतुर्थे द्वौ, पञ्चमे षट्, षष्ठेऽपि मूलभङ्गे उत्तरभङ्गाः षडित्येवं पड्भङ्ग्यामुत्तरभ-
ङ्गका मिलिता एकविंशतिरिति, स्थापना चेयं

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | २ | २ | १ | १ | १ | योगाः |
| ३ | २ | १ | ३ | २ | १ | करणानि |
| १ | ३ | ३ | २ | ६ | ६ | भङ्गाः |

इति करणकारणमनोवाक्कायैरुत्तरभेदाः, 'उत्तरगुण सत्त-
मओ'त्ति प्रतिपन्नोत्तरगुणः सप्तमो भेदः, श्राव-काणां हि द्विधा नियमो—मूलगुणविषय उत्तरगुणविष-
यश्च, तत्र मूलभूता गुणा मूलगुणाः—पञ्चा-णुव्रतानि उत्तरभूता गुणा उत्तरगुणाः—त्रीणि अणुव्रतानि
चत्वारि च शिक्षाव्रतानि, इह च संपूर्णासंपूर्णोत्तरगुणभेदमनादृत्य सामान्येनैक एव भेदो विवक्षितः, 'अविरयओ अट्ठमो
होइ'त्ति अविरतः—अविरतसम्यग्दृष्टिरष्टमो भेदः, तदेवमुक्ता अष्टविधाः श्रावकाः । अथ द्वात्रिंशद्विधानाह—'वयमेगेगं' इत्यादि,
एकैकं स्थूलप्राणातिपातविरमणादिकं व्रतं षड्भिर्विधाभिः—भेदैर्गुणितं—ताडितं द्विविधत्रिविधादिकया पूर्वोक्तया पड्भङ्ग्या गुणितमित्य-
र्थः, प्रतिपन्नोत्तरगुणाविरतसम्यग्दृष्टिलक्षणभेदद्विकमिलितं द्वात्रिंशद्भवन्ति, तथाहि—स्थूलप्राणातिपातविरतिं पड्भङ्गीमध्यात्कश्चिदाद्येन
भङ्गेन गृह्णाति कश्चिद् द्वितीयेन कश्चित् तृतीयेन कश्चिच्चतुर्थेन कश्चित्पञ्चमेन कश्चित् षष्ठेनेति प्राणातिपातविरतेः षड् भङ्गाः, एवं
मृषावादादत्तादानमैथुनपरिग्रहेष्वपि प्रत्येकं षड् भङ्गा वाच्याः मिलिताश्च त्रिंशत् । आवश्यके पुनरेवं त्रिंशद्भङ्गाः—यथा कश्चित्पञ्चा-
प्यणुव्रतानि समुदितान्येव गृह्णाति, तत्र च द्विविधत्रिविधादयः षड्भेदाः, अन्यो व्रतचतुष्टयं गृह्णाति तत्रापि षट्, अपरो व्रतत्रयं तत्रापि
गा. ६६ षट्, अन्यो व्रतद्वयं तत्रापि षट्, अन्यस्त्वेकमेवाणुव्रतं गृह्णाति तत्रापि षडेव भङ्गाः, एवमेते पञ्च षट्कास्त्रिंशद्भवन्ति, उत्तरगुणा-

विरतसहितास्तु द्वात्रिंशत् ॥ २३ ॥ एवं तावदावश्यकनिर्युक्त्यभिप्रायेण कृता भङ्गप्ररूपणा, सांप्रतं पञ्चत्रिंशदुत्तरसप्तशतसङ्ख्यान् श्रावकभेदान् प्रतिपिपादयिषुर्भगवत्यभिप्रायेण नवभङ्गीमाह—'तिन्नी'त्यादि, योगेषु—करणकारणानुमतिरूपेषु त्रयस्त्रिकाः त्रयो द्विकाः त्रय एककाश्च भवन्ति क्रमेण स्थाप्या इति शेषः, तदधस्ताच्च क्रमेण त्रीणि द्वे एकं त्रीणि द्वे एकं त्रीणि द्वे एकं चैव करणानि—मनोवाक्कायलक्षणानि स्थाप्यानि भवन्तीति पदघटना, भावार्थः पुनरयं—त्रिविधं त्रिविधेनेति प्रथमो भङ्गः, कश्चिद् गृही सावद्यं योगं न करोति न कारयति नान्यं समनुजानीते मनसा वचसा कायेन चेत्येको भङ्ग इति भावः, त्रिविधं द्विविधेनेति द्वितीयो मूलभङ्गः, अत्रोत्तरभङ्गात्रयः, तथाहि—न करोति न कारयति नानुजानीते मनसा वाचा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३, त्रिविधमेकविधेनेति तृतीयो भङ्गः, अत्राप्युत्तरभङ्गात्रयस्तथाहि—न करोति न कारयति नानुजानीते मनसा १ यद्वा वचसा २ यद्वा कायेन ३, द्विविधं त्रिविधेनेति चतुर्थो भङ्गः, अत्राप्युत्तरभङ्गात्रयः, तथाहि—न करोति न कारयति मनसा वचसा कायेन १ यद्वा न करोति नानुजानीते त्रिभिरपि करणैः २, यद्वा न कारयति नानुजानीते त्रिभिरपि करणैः ३, द्विविधं द्विविधेनेति पञ्चमो भङ्गः, अत्र चोत्तरभेदा नव, तथाहि—न करोति न कारयति मनसा वचसा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३ अथवा न करोति नानुजानीते मनसा वचसा ४ यद्वा मनसा कायेन ५ यद्वा वचसा कायेन ६ अथवा न कारयति नानुजानीते मनसा वचसा ७ यद्वा मनसा कायेन ८ यद्वा वचसा कायेन ९, द्विविधमेकविधेनेति षष्ठो भङ्गः, अत्राप्युत्तरभेदा नव, तथाहि—न करोति न कारयति मनसा १ यद्वा वचसा २ यद्वा कायेन ३ अथवा न करोति नानुजानीते मनसा ४ यद्वा वचसा ५ यद्वा कायेन ६ अथवा न कारयति नानुजानीते मनसा ७ यद्वा वचसा ८ यद्वा कायेन ९, एकविधं त्रिविधेनेति सप्तमो भङ्गः, अत्र चोत्तरभङ्गात्रयः, तथाहि

—न करोति मनसा वचसा कायेन १ यद्वा न कारयति त्रिभिरपि करणैः २ यद्वा नानुजानीते त्रिभिरपि करणैः ३, एकविधं द्विविधेनेत्यष्टमो भङ्गः, अत्र चोत्तरविकल्पा नव, तथाहि—न करोति मनसा वचसा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३ अथवा न कारयति मनसा वचसा ४ यद्वा मनसा कायेन ५ यद्वा वचसा कायेन ६, अथवा नानुजानीते मनसा वचसा ७ यद्वा मनसा कायेन ८ यद्वा वचसा कायेन ९, एकविधं एकविधेनेति नवमो मूलभङ्गः, अत्राप्युत्तरविकल्पा नव, तथाहि—न करोति मनसा १ यद्वा वचसा २ यद्वा कायेन ३ अथवा न कारयति मनसा ४ यद्वा वचसा ५ यद्वा कायेन ६ अथवा नानुजानीते मनसा ७ यद्वा वचसा ८ यद्वा कायेनेति ९। तदेवं मूलभङ्गा नव उत्तरभङ्गास्तु मीलिताः सर्वसङ्ख्यया एकोनपञ्चाशत्, उक्तं च—"तिविहंतिविहेण पढमो तिविहं दुविहेण बीयओ होइ। तिविहं एगविहेणं दुविहं तिविहेण ति चउत्थो ॥ १ ॥ दुविहदुविहेण पंचम दुविहेक्कविहेण छट्ठओ होइ। एक्कविहं तिविहेणं दुविहेण य सत्तमट्ठमओ ॥ २ ॥ एक्कविहेक्कविहेणं नवमो पढमंमि एक्कभङ्गो उ। सेसेसु तिन्नि तिन्नि य तिन्नि य नव नव य तह तिन्नि ॥ ३ ॥ नव नव य होंति कमसो एए सव्वेवि इगुणवन्नासं ॥" स्थापना

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

इति करणकारणानुमतिमनोवाक्कायाः, ननु च वाक्कायाभ्यां तावत्प्रत्यक्षादिप्रमाणत एव करणकारणानुमतयो दृश्यन्ते, मनसस्तु ताः कथं प्रत्येतव्याः?, अन्तर्व्यापारत्वेन परैरनुपलक्ष्यमाणत्वात्, उच्यते, निर्व्यापारकायवचनो यदा सावद्ययोगकरणादि मनसा विकल्पयति तदा मुख्यतया कायवचनवन्मनस्यपि करणादीनि संभवन्ति, तथाहि—सावद्ययोगमेनमहं करोमीत्येवं यदा मनसा चिन्तयति तदा करणं, यदा तु मनसा चिन्तयति करोत्वेष सावद्यं असावपि चेङ्गितज्ञोऽभिप्रायादेव प्रवर्तते तदा कारणं, यदा पुनः सावद्यव्यापारं विधाय मनसा चिन्तयति—सुष्ठु कृत-

सिद्धं मया तदा मानसी अनुमतिरिति, तदेवं सूत्रकृन्निगदितां नवभङ्गीं विवृण्वद्भिरस्माभिः प्रसङ्गादेकोनपञ्चाशद्भङ्ग्यपि प्रदर्शिता ॥ २४ ॥ संप्रति प्रकारांतरेण सूत्रकार एवैनां प्रतिपादयितुमाह—'मणे'त्यादि, इह च प्राकृतत्वाद्विभक्तिव्यत्ययोऽवगन्तव्यः, ततः करणस्य कारणस्यानुमतेश्च मनोवाक्कायलक्षणैः त्रिभिः करणैः सह योगे—संबन्धे सति एकद्विकत्रिकयोगे—प्रत्येकमेकसंयोगद्विकसंयोगत्रिकसंयोगचिन्तया सप्त सप्तका भवन्ति, तथाहि—स्थूलहिंसादिकं न करोति मनसा १ वाचा २ कायेन च ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन च ७, एते करणेन सप्त भङ्गाः, एवं कारणेन सप्त, अनुमत्या सप्त, तथा स्थूलहिंसादिकं न करोति न कारयति च मनसा १ वाचा २ कायेन ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन ७, एते करणकारणाभ्यां सप्त भङ्गाः, एवं कारणानुमतिभ्यामपि सप्त, करणानुमतिभ्यां सप्त, करणकारणानुमतिभिरपि सप्त, एवं सप्त सप्तका मीलिता एकोनपञ्चाशद्भवन्ति ॥ २५ ॥ अत्र सूत्रकारः पूर्वोक्ताया एव नवभङ्ग्या उत्तरभङ्गप्रतिपादनपूर्वं सप्तचत्वारिंशदुत्तरशतसङ्ख्यान् भङ्गकानाह—'पढमे' इत्यादि, 'तिन्नि तिये'त्यादिगाथोक्तानां नवभङ्गीप्रतिपादकानामङ्कानामधस्तात्प्रथमे स्थाने एककः स्थाप्यते, ततः क्रमेण त्रयस्त्रिकाः, ततो द्वौ नवकौ, तत एकस्त्रिकः, पुनरपि द्वौ नवकौ, अयमत्र तात्पर्यार्थः—त्रिविधं त्रिविधेनेत्यत्र प्रथमभङ्गे एक एव विकल्पः, सर्वप्रकारैः प्रत्याख्यातत्वाद्विकल्पान्तराभाव इति भावः, तदन्येषु पुनर्द्वितीयतृतीयचतुर्थेषु त्रयस्त्रयः पञ्चमषष्ठयोर्नव नव सप्तमे त्रयः अष्टमनवमयोर्नव नवेत्येवं सर्वेऽप्येकोनपञ्चाशत्, एते च त्रिकालविषयत्वात्प्रत्याख्यानस्य कालत्रिकेण—अतीतानागतवर्तमानलक्षणेन गुणिताः सप्तचत्वारिंशं शतं भङ्गानां भवन्ति, त्रिकालविषयता चातीतस्य निन्दया साम्प्रतिकस्य संवरणेन अनागतस्य च प्रत्याख्यानेनेति, यदाह—"अईयं निंदामि पडुप्पन्नं संवरेमि अणागयं च पच्चक्खा-

मि''त्ति ॥ २६ ॥ साम्प्रतं पञ्चत्रिंशदुत्तरसप्तशतसङ्ख्यान् श्रावकभेदानाह—'पंचे'त्यादि, इह नवरिशब्द आनन्तर्यार्थः, 'आनन्तर्ये णवरी'ति प्राकृतलक्षणवचनात्, आनन्तर्यं च पूर्वोक्तापेक्षया, ततोऽयमर्थः—एतदेव सप्तचत्वारिंशं शतं पञ्चस्वप्यणुव्रतेषु प्रत्येकं सप्तचत्वारिंशदधिकस्य भङ्गशतस्य भावात्पञ्चभिरणुव्रतैर्गुणितं सप्त शतानि पञ्चत्रिंशदधिकानि जानीहि—बुध्यस्व श्रावकव्रतग्रहणकाले—श्रावकाणां पञ्चाणुव्रतप्रतिपत्तिप्रस्तावे इति ॥ २७ ॥ एते च भङ्गा यस्यार्थतोऽवगताः स एव प्रत्याख्यानप्रवीण इति दर्शयन्नाह—'सीयाल'मित्यादि, विशुद्धिर्नाम जीवस्य विशुद्धिकारित्वात्प्रत्याख्यानमुच्यते तद्विषयं 'सीयालं'ति सप्तचत्वारिंशदुत्तरभङ्गानां—ग्रहणप्रकाररूपाणां शतं यस्योपलब्धं—अर्थतः सम्यक्परिज्ञातं भवति स खलु—स एव प्रत्याख्याने—नियमविशेषप्रतिपत्तिरूपे कुशलो—निष्णातः, शेषा—एतद्व्यतिरिक्ताः पुनरकुशला—अनभिज्ञाः । इह च यद्यप्यनन्तरं पञ्चत्रिंशदुत्तराणि सप्त शतान्यभिहितानि तथापि सप्तचत्वारिंशच्छतमूलत्वात्तेषां मुख्यतया सूत्रे सप्तचत्वारिंशच्छतमेवमुक्तमिति ॥ २८ ॥ अथ षड्भङ्ग्या एवोत्तरभङ्गरूपामेकविंशतिभङ्गीमाह—'दुविहे'त्यादि, इयं च प्राग्व्याख्यातैव, इह च द्विविधत्रिविधादिना पूर्वभणितेन भङ्गकनिकुरम्बेन श्रावकार्हपञ्चाणुव्रतादिव्रतसंहतिभङ्गकदेवकुलिकाः सूचिताः, ताश्च एकैकव्रतं प्रत्यभिहितया षड्भङ्ग्या तथा एकविंशतिभङ्ग्या तथा नवभङ्ग्या तथा एकोनपञ्चाशद्भङ्ग्या च निष्पद्यन्ते । अथ देवकुलिका इति कः शब्दार्थः?, उच्यते, एकादिव्रतप्रतिबद्धभङ्गककदम्बकप्रतिपादका अङ्काः पट्टादिषु न्यस्ता देवकुलिकाकारत्वेन प्रतिभासनादेवकुलिका इति व्यपदिश्यन्ते, सर्वास्वपि च देवकुलिकासु प्रत्येकं त्रयस्त्रयो राशयो भवन्ति, तद्यथा—आदौ गुण्यराशिः मध्ये गुणकारकराशिः अन्ते चागतराशिरिति ॥ २९ ॥ तत्र प्रथमं तावदेतासामेव देवकुलिकानां षड्भङ्ग्यादिक्रमेण विवक्षितव्रतभङ्गकसर्वसङ्ख्यारूपानेवंकारकराशीनाह—'एगे'त्यादिगाथाचतुष्कं, एकस्मिन् व्रते—स्थूलप्राणातिपातविरमणादिके ये द्विवि-

यत्रिविधादयः पङ्क्ताः सूत्रे—आवश्यकनिर्युक्त्यादौ श्रावकाणां निर्दिष्टाः—कथितास्त एव पङ्क्ताः सप्तगुणाः—सप्तभिस्ताडिताः षड्युताश्च क्रमेण सर्वभङ्गकसङ्ख्याराशिं जनयन्तीति शेषः, कथं पुनः पङ्क्ताः सप्तभिर्गुण्यन्ते ? इत्याह—पदगुरुका—मृषावादादीनेकव्रतपृच्छया, यावन्ति व्रतानि विवक्ष्यन्ते तावतीर्वारा गुण्यन्ते इति तात्पर्यं, स्थूलं च न्यायमाश्रित्यैवमुच्यते यावता एकव्रतभङ्गकराशेरधो व्यवस्थापितत्वाद्विवक्षितव्रतेभ्य एकेन हीना वारा गुण्यन्ते इति, इयमत्र भावना—एकव्रते तावत् पङ्क्ताः, ते च सप्तभिर्गुणिता जाता द्विचत्वारिंशत् तत्र षट् क्षिप्यन्ते जाता अष्टचत्वारिंशत् एषाऽपि सप्तभिर्गुण्यते षट् च क्षिप्यन्ते जातं ३४२ अत्रापि सप्तभिर्गुणिते षट्सु प्रक्षिप्तेषु जातं २४०० पुनः सप्तभिर्गुणिते षट्प्रक्षेपे च जातं १६८०६, एवं सप्तगुणनषट्प्रक्षेपक्रमेण तावन्नेतव्यं यावदेकादश्यां वेलायामागतं १३८४१२८७२०२, एते चाष्टचत्वारिंशदादयो द्वादशाप्यागतराशय उपर्यधोभावेन व्यवस्थाप्यमाना अर्द्धदेवकुलिकाकारां भूमिकामास्तृण्वन्तीति खण्डदेवकुलिकेत्युच्यते, तदेवमुक्ता पङ्क्तीप्रतिबद्धा खण्डदेवकुलिका ॥ एकविंशतिभङ्ग्यादिखण्डदेवकुलिका अप्येवमेव भावनीयाः, केवलमेकविंशतिभङ्गीपक्षे एकविंशतिरधो व्यवस्थाप्य वारंवारं द्वाविंशत्या गुण्यन्ते एकविंशतिस्तु प्रक्षिप्यते यावदेकादशवेलायां द्वादशव्रतभङ्गसर्वसङ्ख्यायामागतं १२८५५००२६३१०४९२१५ । नवभङ्गीपक्षेऽप्येवं, नवरमधो नव, ते च वारंवारं दशभिर्गुण्यन्ते नव च प्रक्षिप्यन्ते यावदेकादश्यां वारायां सर्वव्रतभङ्गसर्वसङ्ख्यायामागतं ९९९९९९९९९९९ । एकोनपञ्चाशद्भङ्गीपक्षे पुनरधावेकोनपञ्चाशत्, सा च वारंवारं पञ्चाशता गुण्यते एकोनपञ्चाशच्च प्रक्षिप्यन्ते यावदेकादश्यां वारायां सर्वव्रतभङ्गकसङ्ख्यायामागतं २४४१४०६२४९९९९९९९९९९९९ । अक्षरार्थस्तु सुगम एवेति, तथा सप्तचत्वारिंशच्छतभङ्गपक्षेऽप्येवं, नवरं तत्र सप्तचत्वारिंशच्छतमधो व्यवस्थाप्यते, वारंवारमष्टचत्वारिंशच्छतेन गुण्यते, सप्तचत्वारिंशच्छतं च प्रक्षिप्यते यावदेकादश्यां

वेलायामागतं ११०४४३६०७७१९६११५३३२५६९५७६९५, उक्तं च—"सीयालं भङ्गसयं वयवुड्ढाऽडयालसयगुणं काउं। सीयालसएण जुयं सव्वग्गं जाण भङ्गाणं ॥ १ ॥" [सप्तचत्वारिंशं भङ्गशतं व्रतवृद्धाष्टचत्वारिंशच्छतगुणं कृत्वा। सप्तचत्वारिंशच्छतेन युतं सर्वाग्रं जानीहि भङ्गानां ॥ १ ॥] तदेवं प्रतिपादिताः पञ्चापि खण्डदेवकुलिकाः। साम्प्रतं संपूर्णदेवकुलिकानामवसरः, तत्र च प्रतिव्रतमेकैकदेवकुलिकासद्भावेन षड्भङ्ग्यादिषु प्रत्येकं द्वादश द्वादश देवकुलिकाः प्रादुर्भवन्ति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ तासु च सर्वास्वप्युच्यमानासु महान् ग्रन्थविस्तरो भवतीत्यतो दिग्मात्रप्रदर्शनाय षड्भङ्ग्यामेव द्वादशीं देवकुलिकामभिधित्सुरेककद्विकादिसंयोगसूचकगुणकारकराशिसमानयनोपायमाह—'एगाई'त्यादि, 'एगाई एगुत्तर'त्ति यावत्प्रमाणानां पदानामेककद्विकादिसंयोगाः समानेतुमिष्यन्ते तावत्प्रमाणा एव एकादय एकोत्तरया वृद्ध्या उपर्युपरि क्रमेण स्थाप्यन्ते, इह च द्वादशानां व्रतानां संयोगाः समानेतव्याः तत एकादयो द्वादश यावन्न्यसनीयाः, स्थापना

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |

ततः 'पत्तेयपयंमि'त्ति प्रत्येकं एकैकस्मिन् पदे 'उवरि'त्ति प्रक्षेपाङ्कोपरिस्थिते 'पक्खेवो'त्ति अधस्तनाङ्कस्य प्रक्षेपः कार्यः, अधस्तनाङ्कस्तु तथैव ध्रियते, कथं प्रक्षेपः कार्यः? इत्याह—'एकेकहाणि'त्ति एकैकस्योपरितनाङ्कस्य हानिः—वर्जनं यथा भवति तथा, क्षेपे २ उपरितनोऽङ्कोऽधस्तनाङ्कक्षेपरहितः कार्य इति भावः, 'अवसाणसंखया हुंति संयोग'त्ति अवसानक्रमेण सर्वाङ्कप्रक्षेपपरिसमाप्तिरूपे ये अङ्काः क्रमशस्तत्सङ्ख्याः—तत्प्रमाणाः संयोगा—एकद्वित्र्यादिपदमीलनरूपा भवन्ति, इयमत्र भावना—प्रथममेकादिद्वादशान्ता ऊर्द्ध्वायता पङ्क्तिः स्थाप्या, तत एकको द्विके क्षिप्यते जातास्त्रयः, ते च त्रिषु क्षिप्यन्ते जाताः षट्, ते च चतुष्के क्षिप्यन्ते जाता दश, ते च पञ्चके क्षिप्यन्ते जाता पञ्चदश, ते च षट्के जाता एकविंशतिः, सा च सप्तके जाता अष्टाविंशतिः सा चाष्टके जाता षट्-

त्रिंशत् सा च नवके जाता पञ्चचत्वारिंशत् सा च दशके जाता पञ्चपञ्चाशत् सा च एकादशे क्षिप्यते जाता पट्पष्टिः, एषा च नोपरिस्थे द्वादशके क्षिप्यते, किंतु द्वादशकस्तदवस्थ एव ध्रियते, 'एकेकहाणि'त्ति वचनात्, इति प्रथमप्रक्षेपः। पुनश्चैककस्त्रिके क्षिप्यते जाताश्चत्वारः, ते च पट्के क्षिप्यन्ते, जाता दश, ते च दशके जाता विंशतिः, सा च पञ्चदशके जाता पञ्चत्रिंशत्, सा चैकविंशतौ जाता पट्पञ्चाशत्, सा चाष्टाविंशतौ जाता चतुरशीतिः, सा च पड्विंशतौ जातं विंशत्युत्तरं शतं, तच्च पञ्चचत्वारिंशति जातं पञ्चपष्ट्यधिकं शतं, तदपि पञ्चपञ्चाशति प्रक्षिप्यते, जातं विंशत्युत्तरं शतद्वयं, एतच्चोपरिस्थितपट्पष्टौ न क्षिप्यते, 'एकेकहाणि'त्ति वचनात्, इति द्वितीयः क्षेपः। एवं च वारंवारं चरममङ्कं वर्जयित्वोपर्युपरि तावदङ्काः प्रक्षेप्तव्या यावदेकादशः क्षेपः, एककस्त्वन्त्यत्वान्न कुत्रापि क्षिप्यते इति द्वादशस्य क्षेपस्यासंभवः। स्थापना तदेवं एककसंयोगा द्वादश द्विकसंयोगाः पट्पष्टिः त्रिकसंयोगा द्वे शते विंशत्युत्तरे चतुष्कसंयोगाश्चत्वारि शतानि पञ्चनवत्यधिकानि पञ्चकसंयोगाः सप्त शतानि द्विनवत्यधिकानि पट्कसंयोगा नव शतानि चतुर्विंशत्यधिकानि सप्तकसंयोगाः सप्त शतानि द्विनवत्यधिकानि अष्टकसंयोगाश्चत्वारि शतानि पञ्चनवत्युत्तराणि नवकसंयोगा द्वे शते विंशत्युत्तरे दशकसंयोगाः पट्पष्टिः एकादशसंयोगा द्वादश द्वाद-

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | | | | | | | | | | | | |
| ११ | ६६ | | | | | | | | | | | |
| १० | ५५ | २२० | | | | | | | | | | |
| ९ | ४५ | १६५ | ४९५ | | | | | | | | | |
| ८ | ३६ | १२० | ३३० | ७९२ | | | | | | | | |
| ७ | २८ | ८४ | २१० | ४६२ | ९२४ | | | | | | | |
| ६ | २१ | ५६ | १२६ | २५२ | ४६२ | ७९२ | | | | | | |
| ५ | १५ | ३५ | ७० | १६६ | २१० | ३३० | ४९५ | | | | | |
| ४ | १० | २० | ३५ | ६६ | ८४ | १२० | १२५ | २२० | | | | |
| ३ | ६ | १० | १५ | २१ | २८ | ३६ | ४५ | ५५ | ६६ | | | |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | | |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

शकसंयोगः पुनरेक एवेति ॥ ३४ ॥ अथवा प्रकारान्तरेण संयोगसङ्ख्यापरिज्ञानोपायमाह—'अहवे'त्यादि, अथवा पदानि–विवक्षितव्रतलक्षणानि पट्टिकादौ स्थापयित्वा अक्षान् गृहीत्वा क्रमेण चारणां कुर्यात्, तत एकद्विकादिसंयोगविषये भङ्गाः समुत्पद्यन्ते, तेषां सङ्ख्या कर्तव्या, इह च यद्यपि द्वादशी देवकुलिका वक्तुमुपक्रान्ता तथापि लाघवार्थं पञ्चाणुव्रतान्येवाश्रित्य भावनाऽभिधीयते, तत्र पञ्चानां पदानामेकसंयोगे एकैकचारणया पञ्च भङ्गाः, द्विकसंयोगे दश, ते चैवं–प्रथमद्वितीयप्रथमतृतीयप्रथमचतुर्थप्रथमपञ्चमचारणया चत्वारः, द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमचारणया त्रयः तृतीयचतुर्थतृतीयपञ्चमचारणया द्वौ चतुर्थपञ्चमचारणया त्वेकः सर्वे दश, तथा त्रिकयोगेऽपि दश, ते चैवं—प्रथमद्वितीयतृतीय–प्रथमद्वितीयचतुर्थ–प्रथमद्वितीयपञ्चम–प्रथमतृतीयचतुर्थ–प्रथमतृतीयपञ्चम–प्रथमचतुर्थपञ्चमचारणया षट्, द्वितीयतृतीयचतुर्थ–द्वितीयतृतीयपञ्चम–द्वितीयचतुर्थपञ्चमचारणया त्रयः, तृतीयचतुर्थपञ्चमचारणया त्वेकः, सर्वे दश, चतुःसंयोगे पञ्च, ते चैवं—प्रथमद्वितीयतृतीयचतुर्थचारणया एकः प्रथमद्वितीयतृतीयपञ्चमचारणया द्वितीयः प्रथमद्वितीयचतुर्थपञ्चमचारणया तृतीयः प्रथमतृतीयचतुर्थपञ्चमचारणया चतुर्थः द्वितीयतृतीयचतुर्थपञ्चमचारणया तु पञ्चमः, पञ्चकयोगे पुनश्चारणाया असंभवादेक एव भङ्ग इति ॥ ३५ ॥ एवं सर्वत्रापि चारणा करणीया, अथ सूत्रकारः साक्षादेव द्वादश्या देवकुलिकायाः क्रमेण गुणकारकराशीनाह—'बारसे'त्यादि गाथाद्वयं, द्वादश षट्षष्टिर्विंशत्यधिके द्वे शते 'पंच नव चउरो'त्ति पञ्च नव चत्वारश्च, गणितव्यवस्थावशतो व्युत्क्रमेण स्थाप्यन्ते, ततो भवन्ति पञ्चनवत्युत्तराणि चत्वारि शतानि, एवमग्रेऽपि, 'दो नव सत्त य'त्ति द्विनवत्यधिकानि सप्त शतानि, 'चउ दोन्नि नव य'त्ति चतुर्विंशत्युत्तराणि नव शतानि, 'दो नव य सत्तेव'त्ति द्विनवत्यधिकानि सप्त शतानि, 'पण नव चउरो'त्ति पञ्चनवत्युत्तराणि चत्वारि शतानि, विंशत्युत्तरे द्वे शते षट्षष्टिर्द्वादश

एकश्चेत्येते राशयः सर्वेपामपि श्रावकभङ्गानां पट्पट्त्रिंशदादिरूपाणां गुण्यराशीनां यथाक्रमं गुणकारा भवन्ति, सर्वमहणं चेदं ज्ञापयति—न पञ्चश्यामेव केवलायामेते गुणकाराः किंत्वेकविंशतिभङ्गादिष्वपि, गुणकारकराशीनां सर्वत्राप्येकस्वरूपत्वात् ॥ ३६ ॥ ॥ ३७ ॥ इदानीं द्वादश्या एव देवकुलिकायाः क्रमेण गुण्यराशीनाह—'छच्चेव ये'त्यादिगाथाचतुष्कं, षडेव पट्त्रिंशत् 'सोल दुगं चेव'त्ति द्वे शते पोडशोत्तरे २१६ 'छन्नव दुगेकं'ति एकसहस्रं पण्णवत्यधिके च द्वे शते १२९६ 'छ सत्त सत्त सत्त य'त्ति सप्त सहस्राः सप्त शतानि पट्सप्तत्यधिकानि ७७७६ 'छपन्नछछ्छिछचउ'त्ति पट्चत्वारिंशत्सहस्राणि पट् शतानि पट्पञ्चाशदधिकानि ४६६५६ 'छट्ठे'त्ति आद्यपट्कापेक्षया षष्ठे स्थाने इत्यर्थः 'छत्तीसा नवनउई सत्तावीसा य'त्ति द्वे लक्षे एकोनाशीतिः सहस्रा नव शतानि पट्त्रिंशच्चेति २७९९३६ 'सोलस छन्नउई सत्त य सोलस भंग'त्ति सोलत्ति–पोडश लक्षाः एकोनाशीतिः सहस्राणि पट् शतानि पोडश भङ्गानष्टमस्थाने विजानीहि–अवबुध्यस्व १६७९६१६ 'छन्नउई छावत्तरि सत्त दुसुन्नेके'त्ति एका कोटिः सप्तसप्ततिः सहस्राः पट् शतानि पण्णवतिश्च भवन्ति नवमे स्थाने १००७७६९६ 'छाहत्तरि इगसठी छायाला सुन्न छच्चेव'त्ति पट् कोट्यश्चतस्रो लक्षाः पट्पष्टिः सहस्राः शतमेकं पट्सप्ततिश्चेति ६०४६६१७६ 'छप्पन्न सुन्न सत्त य नव सत्तावीस तहय छत्तीस'त्ति पट्त्रिंशत्कोटयः सप्तविंशतिर्लक्षाः सप्तनवतिः सहस्राः पट्पञ्चाशच्चेति, ३६२७९७०५६ 'छत्तीसा तेवीसा अट्ठहत्तरी छहत्तरीगवीस'त्ति द्वे कोटीशते सप्तदश कोटयः सप्तपष्टिर्लक्षाः द्व्यशीतिः सहस्राणि त्रीणि शतानि पट्त्रिंशदधिकानि २१७६७८२३३६ एतेषां च राशीनामानयनोपायो यथा—आद्याः पट् षड्भिर्गुण्यन्ते जाताः पट्त्रिंशत्, सापि षड्भिर्गुण्यते जाते द्वे शते पोडशोत्तरे, एवं वारंवारं तावत् षड्भिर्गुणनं विधेयं यावद् द्वादशापि गुण्यराशयः संपूर्णाः संपद्यन्ते इति, एत एव पड् देवकुलिकाः पट्त्रिंशदादयो द्वादश गुण्यराशयः

क्रमशो द्वादशषट्षष्टिप्रभृतिभिर्द्वादशभिर्गुणकारकराशिभिर्गुणिता आगतराशयो भवन्ति, उक्तं च—"पढमवए छब्भंगा छहिँ छहिँ गुणिया य वारसवि ठाणा । संजोगेहि य गुणिया सावयवयभंगया हुंति ॥ १ ॥" इह च सूत्रकारेणागतराशयो विस्तरभयान्नोक्ताः, वयं तु विनेयानुग्रहाय गाथाभिरुपदर्शयामः—वाहत्तरि १ छाहत्तरि तेवीसा २ सुन्न दु पण सीयाला ३ । वीसा पनरस चउसट्ठि ४ दु नव पणसीइ पनर छ य ५ ॥ १ ॥ चोयालसयं दस एकतीस चउ ६ वार ति नव सयरी य । इग दु दु ७ वीसा नव नव चालीसा एग तेयासी ८ ॥ २ ॥ वीस इगतीस नव सयरि एग वावीस ९ सोल छस्सत्त । छस्सत्त सुन्न नव नव तिन्नि य १० दसमंमि ठाणंमि ॥ ३ ॥ वाहत्तरि छायाला छप्पन्न तिपन्न ति चउ ११ छत्तीसा । तेवीसा अडहत्तरि छहत्तरि एकवीसा य १२ ॥ ४ ॥ गाथाचतुष्टयस्याप्यर्थः प्राग्वदवसेयः, तदेवमुक्ता गुण्यगुणकारकागतराशित्रयप्रदर्शनेन द्वादशी देवकुलिका, एतदनुसारेणाप्रोक्ता अन्या अप्येकादश देवकुलिकाः स्वयमभ्युह्याः, यथा च षड्भङ्ग्यां द्वादश देवकुलिकाः एवमेकविंशतिनवैकोनपञ्चाशत्सप्तचत्वारिंशशतभङ्गपक्षेऽप्यनया दिशा प्रत्येकं द्वादश द्वादश देवकुलिकाः समवसेयाः, सर्वसंख्यया च षष्टिर्देवकुलिका भवन्तीति, सर्वासामप्यासां देवकुलिकानां स्थापना बहुश्रुतसूरिसूत्रितेभ्यः पटेभ्यः प्रतिपत्तव्याः, भावार्थस्तु पुरस्ताद्व्यक्तीकरिष्यते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ अथ 'दुविहं तिविहाइणऽट्ठहा होंति'त्ति यत्पूर्वमुक्तं तद्विवृण्वन्नाह—'दुविहे'त्यादिगाथाद्वयं, एतच्च प्रागेव व्याख्यातं ॥ ४२ ॥ ४३ ॥ इदानीमष्टोत्तरशताधिकषोडशसहस्रसंख्यान् श्रावकभेदानभिधित्सुः पञ्चाणुव्रतदेवकुलिकाप्रतिपादनाय प्रथममेकादिसंयोगपरिमाणप्रदर्शनपरान् गुणकारकराशीनाह—'पंचण्ह' मित्यादि, पञ्चानामणुव्रतानामेककद्विकत्रिकचतुष्कपञ्चकैश्चिन्त्यमानानां यथासंख्येन पञ्च दश दश पञ्चैकश्चेत्येवं संयोगा ज्ञातव्याः, अयमर्थः—पञ्चानामणुव्रतानामेककसंयोगाः पञ्च द्विकसंयोगा दश त्रिकसंयोगा अपि दश चतुष्कसंयोगाः पञ्च

पञ्चकसंयोगस्त्वेक एवेति, एते च संयोगा 'एगाई एगुत्तरे'त्यादिना करणेनाक्षसंचारणया वा समानेतव्याः, भावना तु प्रागेव प्रदर्शिता ॥ ४४ ॥ अथ पञ्चमदेवकुलिकाया गुण्यराशीनाह—'छच्चेवे'त्यादि, आदौ षडेव ततः षट्त्रिंशत् 'सोलदुगं चेव'त्ति द्वे शते षोडशोत्तरे, 'नव दुग एक्क'मिति द्वादश शतानि षण्णवत्यधिकानि 'छ सत्त सत्त सत्त य'त्ति सप्तसहस्राः सप्त शतानि षट्सप्तत्युत्तराणि, पञ्चानामपि व्रतानामेतद्गुणनस्य—ताडनस्य पदं—स्थानं, गुण्यराशयः इत्यर्थः ॥ ४५ ॥ अथ पञ्चमदेवकुलिकाया एवागतराशीनाह—'वये'त्यादिगाथात्रयं, व्रतसंबन्धिनामेककसंयोगानां पञ्चानां त्रिंशद्भङ्गा भवन्ति, द्विकसंयोगानां दशानामपि त्रीणि शतानि षष्ट्यधिकानि भवन्ति, त्रिकसंयोगानां दशानामेकविंशतिर्भङ्गशतानि षष्ट्यधिकानि—षष्ट्यधिकशतोत्तरे द्वे सहस्रे इत्यर्थः, चतुःसंयोगपञ्चके पञ्चानां चतुष्कसंयोगानां चतुःषष्टिः शतान्यशीत्युत्तराणि भवन्ति, पञ्चके—पञ्चकसंयोगे पुनः सप्तसप्ततिः शतानि षट्सप्तत्युत्तराणि भङ्गानां भवन्ति। इयमत्र भावना—कश्चित्स्थूलप्राणातिपातविरमणादीनि पञ्चाणुव्रतानि प्रतिपद्यते, तत्र किल पञ्चैककसंयोगाः, एकैकस्मिंश्च एककसंयोगे द्विविधत्रिविधादयः षट् षड्भङ्गा भवन्ति, ततः षट् पञ्चभिर्गुण्यन्ते जातास्त्रिंशत्, एतावन्तः पञ्चानां व्रतानामेककसंयोगे भङ्गाः, तथा एकैकस्मिन् द्विकसंयोगे षट्त्रिंशत् षट्त्रिंशद्भङ्गाः,तथाहि—प्राणातिपातव्रतसंबन्धी द्विविधत्रिविधलक्षणः प्रथमो भङ्गकोऽवस्थितो मृषावादसत्कान् षड्भङ्गान् लभते, एवं प्राणातिपातव्रतसंबन्धी द्विविधद्विविधलक्षणो द्वितीयोऽपि भङ्गकोऽवस्थितो मृषावादसत्कान् षड्भङ्गान् लभते, एवं प्राणातिपातव्रतसंबन्धी द्विविधैकविधलक्षणस्तृतीयोऽपि भङ्गकः एकविधत्रिविधलक्षणः चतुर्थोऽपि एकविधद्विविधलक्षणः पञ्चमोऽपि एकविधैकविधलक्षणः षष्ठोऽपि भङ्गकोऽवस्थितः एवं मृषावादसत्कान् षट्षड्भङ्गान् प्रत्येकं लभते, ततश्च षट् षड्भिर्गुणिताः षट्त्रिंशत्, दश चात्र द्विकसंयोगा भवन्तीत्यतः षट्त्रिंशद्दशभिर्गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि, एतावन्तः

पञ्चानां व्रतानां द्विकसंयोगे भङ्गाः, भङ्गामिलापश्चैवं—स्थूलप्राणातिपातं प्रत्याख्याति द्विविधं त्रिविधेन स्थूलमृषावादमपि द्विविधं त्रिविधेन १ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं तु द्विविधं द्विविधेन २ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं तु द्विविधमेकविधेन ३ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं त्वेकविधं त्रिविधेन ४ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं त्वेकविधं द्विविधेन ५ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं पुनरेकविधमेकविधेन ६, एवं स्थूलादत्तादानमैथुनपरिग्रहेष्वपि प्रत्येकं षट् पञ्चङ्गाः, सर्वेऽपि मिलिताश्चतुर्विंशतिः, एते च द्विविधत्रिविधलक्षणं प्राणातिपातप्रथमभङ्गममुञ्चता लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठेष्वपि प्राणातिपातभङ्गेषु चतुर्विंशतिश्चतुर्विंशतिर्भङ्गा भवन्ति, एते सर्वेऽपि चतुश्चत्वारिंशदुत्तरं शतं, तथा स्थूलमृषावादं प्रत्याख्याति द्विविधं त्रिविधेन स्थूलादत्तादानमपि द्विविधं त्रिविधेन, स्थूलमृषावादं द्विविधं त्रिविधेन स्थूलादत्तादानं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण पञ्चङ्गा ज्ञेयाः, एवं मैथुनपरग्रहेष्वपि प्रत्येकं षट् पञ्चङ्गाः, सर्वेऽप्यष्टादश, एते च मृषावादप्रथमभङ्गममुञ्चता लब्धाः, एवं द्वितीयादिष्वप्यष्टादश २ भवन्ति, मिलिताश्चाष्टोत्तरं शतं, तथा स्थूलादत्तादानं स्थूलमैथुनं च प्रत्याख्याति द्विविधं त्रिविधेन, स्थूलादत्तादानं द्विविधं त्रिविधेन स्थूलमैथुनं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण षड् भङ्गा ज्ञेयाः, एवं मैथुनपरिग्रहेष्वपि षड् भङ्गाः, सर्वेऽपि द्वादश, एते च स्थूलादत्तादानप्रथमभङ्गकममुञ्चता लब्धाः, एवं द्वितीयादिष्वपि द्वादश द्वादश भवन्ति, मिलिताश्च द्वासप्ततिः, तथा स्थूलमैथुनं स्थूलपरिग्रहं च प्रत्याख्याति द्विविधं त्रिविधेन स्थूलमैथुनं द्विविधं त्रिविधेन स्थूलपरिग्रहं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण षड् भङ्गाः, एते च स्थूलमैथुनप्रथमभङ्गकममुञ्चता लब्धाः, एवं द्वितीयादिष्वपि प्रत्येकं षट् पञ्चवन्ति, मिलिताश्च षट्त्रिंशत्, एते च मूलादारभ्य सर्वेऽपि चतुश्चत्वारिंशं शतं अष्टोत्तरं शतं द्वासप्ततिः षट्त्रिंशच्च मिलितास्त्रीणि शतानि षष्ट्यधिकानि भवन्तीति;

एवं त्रिकसंयोगादिष्वपि भङ्गाभिलापः कार्यः, विस्तरभयान्नेह प्रदर्श्यते । तथा एकैकस्मिन् त्रिकसंयोगे षोडशोत्तरं शतद्वयं प्रत्येकं भङ्गानां भवन्ति, तथाहि—मृषावादसंबन्धी प्रथमो भङ्गोऽवस्थितोऽदत्तादानसत्कान् षड्भङ्गान् लभते, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठा अपि षड्भङ्गान् लभन्ते, ततोऽत्रापि षट्त्रिंशद् भङ्गाः, ते च प्राणातिपातप्रथमभङ्गकेन लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठैरपि प्राणातिपातसंबन्धिभिर्भङ्गैः षट्त्रिंशत् षट्त्रिंशल्लब्धाः, षट्त्रिंशतश्च षड्भिर्गुणने द्वे शते षोडशोत्तरे, अत्र च त्रिकसंयोगा दश भवन्ति, ततो द्वे शते षोडशोत्तरे दशभिर्गुण्येते जातान्येकविंशतिः शतानि षष्ट्यधिकानि, एतावन्तः पञ्चानां व्रतानां त्रिकसंयोगे भङ्गाः, तथा एकैकस्मिन् चतुष्कसंयोगे द्वादश शतानि षण्णवत्यधिकानि प्रत्येकं भङ्गानां भवन्ति, तथाहि—अदत्तादानसंबन्धी प्रथमो भङ्गोऽवस्थितो मैथुनव्रतसत्कान् षड्भङ्गान् लभते, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठा अपि षड् भङ्गान् लभन्ते, जाताः षट्त्रिंशद् भङ्गाः, ते च मृषावादप्रथमभङ्गकेन लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठैरपि मृषावादभङ्गैः षट्त्रिंशत् षट्त्रिंशल्लब्धाः, जाते द्वे शते षोडशोत्तरे, एते च प्राणातिपातभङ्गकैः षड्भिरपि प्रत्येकं प्राप्यन्ते, जातानि १२९६, चतुष्कसंयोगाश्चात्र पञ्च, ततो द्वादश शतानि षण्णवत्यधिकानि पञ्चभिर्गुण्यन्ते, जातानि चतुःषष्टिशतान्यशीत्यधिकानि, एतावन्तः पञ्चानां व्रतानां चतुष्कसंयोगे भङ्गाः, तथा पञ्चकसंयोगे मैथुनव्रतसंबन्धिनः प्रथमाद्याः षडपि भङ्गाः प्रत्येकं परिग्रहसत्कान् षट् षड्भङ्गान् लभन्ते, जातं ३६, सा च षट्त्रिंशत् अदत्तादानभङ्गैः षड्भिरपि प्रत्येकं प्राप्यते, जातं २१६, एते च द्वे शते षोडशोत्तरे मृषावादभङ्गैः षड्भिरपि प्रत्येकं प्राप्यते, जातं १२९६, एतानि च द्वादश शतानि षण्णवत्यधिकानि प्राणातिपातव्रतसंबन्धिभिः षड्भिरपि भङ्गैः प्रत्येकं प्राप्यन्ते, जातानि ७७७६, एक एव चात्र पञ्चकसंयोगः, ततः सप्तसप्ततिशतानि षट्सप्तत्युत्तराणि एकेन गुण्यन्ते, 'एकेन च गुणितं तदेव भवती'ति गुण्यराशेर्वृद्ध्यभावात्सप्तसप्तति-

| | | |
|---|---|---|
| ६ | ५ | ३० |
| ३६ | १० | ३६० |
| २१६ | १० | २१६० |
| १२९६ | ५ | ६४८० |
| ७७७६ | १ | ७७७६ |

| प्रा | मृ | अ | मै | प |
|---|---|---|---|---|
| २३ | २३ | २३ | २३ | २३ |
| २२ | २२ | २२ | २२ | २२ |
| २१ | २१ | २१ | २१ | २१ |
| १३ | १३ | १३ | १३ | १३ |
| १२ | १२ | १२ | १२ | १२ |
| ११ | ११ | ११ | ११ | ११ |

शतानि षट्सप्तत्यधिकानीत्यवस्थितैव सङ्ख्या जाता, एतावन्तः पञ्चानां व्रतानां पञ्चकसंयोगे भङ्गाः, व्रतयन्त्रक-स्थापना चेयं, तदेवं गुणकारकगुण्यागतराशित्रिकेण निष्पन्ना परिपूर्णा पञ्चमी देवकुलिका, एतदनुसारेण सर्वासामपि देवकुलिकानां निष्पत्तिर्निपुणत्वेन स्वयमवसेया, 'उत्तरगुणअविरयमेलियाण जाणाहि सव्वग्गं'ति प्रतिपन्नोत्तरगुणाविरतसम्यग्दृष्टिलक्षणभेदद्वयीमिलितानामनन्तरोक्तानां त्रिंशत्प्रभृतीनां भङ्गानां सर्वाग्रं—सर्वसङ्ख्यां जानीहि ॥ ४६ ॥ ४७ ॥ ४८ ॥ एतदेवाह—'सोलसे'त्यादि, षोडश सहस्रा अष्टौ शतान्यष्टाधिकानि भवन्ति, एषः—पूर्वोक्तो व्रतानां पञ्चसङ्ख्यानां पिंडार्थः—सर्वसमुदायसङ्ख्यास्वरूपः। दर्शनादयस्तु प्रतिमा—अभिग्रहविशेषाः, न पुनर्व्रतानि, ताभ्यो व्रतानां विभिन्नस्वरूपत्वादिति भावः, एते च श्रावकाणां भेदाः पञ्चैवाणुव्रतान्याश्रित्योक्ताः, द्वादशव्रतविवक्षया तु भूयंस्तरा अपि भेदा भवन्ति, ॥ ४९ ॥ तथा चाह—

**तेरसकोडिसयाइं चुलसीइजुयाइं बारस य लक्खा। सत्तासीई सहस्सा दो य सया तह दुरुत्ता य ॥५०॥**

'तेरसे'त्यादि, त्रयोदश कोटिशतानि चतुरशीतिकोटयो द्वादश लक्षाः सप्ताशीतिसहस्राणि द्वे शते द्व्युत्तरे १३८४१२८७२०२, एतच्च षड्भङ्गीप्रतिबद्धाया द्वादश्या देवकुलिकायाः समागतसर्वराशिसंपिण्डनेन उत्तरगुणाविरतरूपभेदद्वयप्रक्षेपेण च भवतीति। एते च सर्वेऽपि श्रावकाणामेव व्रतभङ्गा इह प्रतिपादिताः, साधूनां पुनः सप्तविंशतिरेव भङ्गा भवन्ति, तथाहि—यन्न करोति तन्मनसा वचसा कायेन, एवं न कारयत्यपि मनसा वाचा कायेन, एवं न समनुजानीते मनसा वचसा कायेनेत्येवं वर्तमाने काले नव

भङ्गाः, एवमतीतेऽपि नव, भविष्यत्यपि नवेत्येवं सप्तविंशतिः, आह च भाष्यकृत्—"करणतिगेणेक्केक्कं कालतिए तिघणसंखियमिसीणं। सव्वंति जओ गहियं सीयालसयं पुण गिहीणं ॥ १ ॥ [ किरणत्रिकेणैकैकं (योगं) कालत्रिकेण त्रिघनसङ्ख्यमृषीणां। सर्वमिति यतो गृहीतं सप्तचत्वारिंशं शतं पुनर्गृहिणां ॥ १ ॥ ३×३×३=२७ ] अत्र न करोमि न कारयामीत्यादिकमेकैकं योगं मनः-प्रभृतिना करणत्रयेण सह कालत्रिके चारयेत्, ततश्च त्रयाणां यो घनः—सप्तविंशतिलक्षणस्तत्सङ्ख्यैव—भङ्गकसङ्ख्यामाश्रित्य तत्सङ्ख्याप्रमाणमृषीणां—साधूनामवबुध्येतेति शेषः। कस्मादित्याह—यतः सर्वसावद्ययोगं प्रत्याख्यानीति साधुभिः प्रत्याख्यानं गृहीतं, ततस्तत्प्रत्याख्यानभङ्गकानामेतत्सङ्ख्याप्रमाणता, असर्वसावद्ययोगप्रत्याख्यायिनां पुनर्गृहिणां प्रत्याख्यानस्य सप्तचत्वारिंशदुत्तरं भङ्गकशतं विज्ञेयमिति २३६ ॥ ५० ॥ अधुना 'अट्ठारस पावठाणगाइ'न्ति सप्तत्रिंशदधिकद्विशततमं द्वारमाह—

**सव्वं पाणइवायं १ अलिय २ मदत्तं ३ च मेहुणं सव्वं ४। सव्वं परिग्गहं ५ तह राईभत्तं ६ च वोसरिमो ॥ ५१ ॥ सव्वं कोहं ७ माणं ८ मायं ९ लोहं १० च राग ११ दोसे १२ य। कलहं १३ अब्भक्खाणं १४ पेसुन्नं १५ परपरीवायं १६ ॥ ५२ ॥ मायामोसं १७ मिच्छादंसणसल्लं १८ तहेव वोसरिमो। अंतिमऊसासंमि देहंपि जिणाइपच्चक्खं ॥ ५३ ॥**

सर्वं—सप्रभेदं प्राणातिपातं १ तथा सर्वमलीकं—मृषावादं २ तथा सर्वमदत्तं—अदत्तादानं ३ तथा सर्वं मैथुनं ४ तथा सर्वं परिग्रहं ५ तथा सर्वं रात्रिभक्तं च—रजनिभोजनं ६ व्युत्सृजामः—परिहरामः, तथा सर्वं क्रोधं ७ मानं ८ मायां ९ लोभं च १० रागद्वेषौ च ११-१२ तथा कलहं १३ अभ्याख्यानं १४ पैशून्यं १५ परपरिवादं १६ मायामृषा १७ मिथ्यात्वदर्शनशल्यं च १८ तथैव—सप्रभेदं

व्युत्सृजामः, एतान्यष्टादश पापहेतूनि स्थानकानि पापस्थानकानि, न केवलमेतान्येव, किंतु अन्तिमे उच्छ्वासे, परलोकगमनसमये इत्यर्थः, देहमपि निजं शरीरमिति व्युत्सृजामः, तत्रापि ममत्वमोचनात् जिनादिप्रत्यक्षं—तीर्थकरसिद्धादीनां समक्षमिति, तत्र प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रिभक्तक्रोधमानमायालोभाः प्रतीताः, तथा रागः—अनभिव्यक्तमायालोभलक्षणस्वभावभेदमभिष्वङ्गमात्रं, 'दोसो'त्ति द्वेषणं द्वेषः दूषणं वा दोषः, स चानभिव्यक्तक्रोधमानलक्षणभेदस्वभावोऽप्रीतिमात्रं, कलहो—राटी अभ्याख्यानं—प्रकटमसद्दोषारोपणं पैशून्यं—पिशुनकर्म प्रच्छन्नं सदसद्दोषाविर्भावनं, तथा परेषां परिवादः परपरिवादो—विकत्थनमित्यर्थः, तथा माया च—निकृतिः मृषा च—मृषावादः मायया वा सह मृषा मायामृषा प्राकृतत्वान्मायामोसं मायामुसं वा दोषद्वययोगः, इदं च मानमृषादिदोषसंयोगोपलक्षणं, वेशान्तरकरणेन लोकप्रतारणमित्यन्ये, तथा मिथ्यादर्शनं—विपर्यस्ता दृष्टिः तदेव तोमरादिशल्यमिव शल्यं दुःखहेतुत्वान्मिथ्यादर्शनशल्यमिति, स्थानाङ्गे च रात्रिभोजनं पापस्थानमध्ये न पठितं किंतु परपरिवादाग्रतोऽरतिरतिः, तस्य चायमर्थः—अरतिश्च—तन्मोहनीयोदयजश्चित्तविकार उद्वेगलक्षणः रतिश्च—तथाविधानन्दरूपा अरतिरतिरित्येकमेव विवक्षितं, यतः क्वचन विषये या रतिस्तामेव विषयान्तरापेक्षयाऽरतिं व्यपदिशन्ति, एवमरतिमेव रतिमित्यौपचारिकमेकत्वमनयोरस्तीति, तथा रागपदस्थाने पिज्जपदं च पठन्ति, तत्र च प्रियस्य भावः कर्म वा प्रेम, अर्थस्तु रागपदवाच्य एवेति, २३७ ॥ ५१ ॥ ५२ ॥ ५३ ॥ इदानीं 'मुणिगुण सत्तावीसं'त्यष्टत्रिंशदधिकद्विशततमं द्वारमाह—

**छव्वय छकायरक्खा पंचिंदियलोहनिग्गहो खंती । भावविसुद्धी पडिलेहणाइकरणे विसुद्धी य**

**॥ ५४ ॥ संजमजोए जुत्तय अकुसलमणवयणकायसंरोहो । सीयाइपीडसहणं मरणंउ(तु)वसग्ग-सहणं च ॥ ५५ ॥**

षट् व्रतानि—प्राणातिपातविरमणादीनि रजनिभोजनपर्यवसानानि षण्णां कायानां—पृथिव्यादित्रसान्तानां रक्षा—संघट्टपरितापादिपरिहारेण सम्यगनुपालनं पञ्चानामिन्द्रियाणां—श्रोत्रादीनां निग्रहो—नियन्त्रणं, इष्टेतरेषु शब्दादिषु रागद्वेषाकरणमित्यर्थः, लोभस्य च निग्रहो—विरागता क्षान्तिः—क्रोधनिग्रहः भावविशुद्धिः—अकलुषान्तरात्मता प्रतिलेखनादिकरणे च विशुद्धिः, शुद्धेनाध्यवसायेन सम्यगुपयुक्ततया प्रत्युपेक्षणादिक्रियाकरणमित्यर्थः, तथा संयमोपष्टम्भको योऽसौ योगो—व्यापारस्तत्र युक्तता—तत्परता अकुशलानां—अप्रशस्तानां मनोवचःकायानां संरोधो—निषेधः, प्रशस्तानामेव तेषां करणमिति तात्पर्यं, शीतवातातपादिजनितायाः पीडायाः—वेदनायाः सहनं—सम्यगमर्षणं, 'मरणान्तोपसर्गसहनं च' मरणमन्ते येषां ते मरणान्ता—मरणहेतव इत्यर्थः ते च ते उपसर्गाश्च मरणान्तोपसर्गास्तेषां सहनं—कल्याणमित्रबुद्ध्या सम्यक्तितिक्षणं, एते सप्तविंशतिर्मुनीनां—अनगाराणां गुणाः—चारित्रविशेषा भवन्ति। अन्यत्र पुनरित्थमनगारगुणा उक्ताः—महाव्रतानि पञ्च ५ इन्द्रियनिग्रहाश्च पञ्च १० क्रोधादिविवेकाश्चत्वारः १४ सत्यानि त्रीणि, तत्र—भावसत्यं—शुद्धान्तरात्मता करणसत्यं—यथोक्तप्रतिलेखनादिक्रियाकरणं योगसत्यं—मनःप्रभृतीनामवितथत्वं १७ क्षमा—अनभिव्यक्तक्रोधमानस्वरूपस्य द्वेषसंज्ञितस्याप्रीतिमात्रस्याभावः, अथवा क्रोधमानयोरुदयनिरोधः, क्रोधमानशब्दाभ्यां तूदयप्राप्तयोस्तयोर्निरोधः प्रागभिहित इति न पौनरुक्त्यं १८ विरागता—अभिष्वङ्गमात्रस्याभावः, यद्वा मायालोभयोरनुदयो, मायालोभविवेकशब्दाभ्यां तूदयप्राप्तयोस्तयोर्निरोधः प्रागभिहित इतीहापि न पुनरु-

कता १९ मनःप्रभृतिनिरोधाः २२ ज्ञानादिसंपन्नतास्तिस्रः २५ वेदनाधिसहनता २६ मरणान्तोपसर्गसहनं च २७ ॥ २३८ ॥ ५४ ॥ ॥ ५५ ॥ इदानीं 'इगवीसा सावयगुणाणं'त्येकोनचत्वारिंशदधिकद्विशततमं द्वारमाह—

**धम्मरयणस्स जोगो अक्खुद्दो १ रूववं २ पगइसोमो ३। लोयप्पिओ ४ अक्रूरो ५ भीरू ६ अस-**
**ठो सदक्खिन्नो ८ ॥ ५६ ॥ लज्जालुओ ९ दयालू १० मज्झत्थो ११ सोमदिट्ठि १२ गुणरागी १३।**
**सक्कहसुपक्खजुत्तो १४ सुदीहदंसी १५ विसेसन्नू १६ ॥ ५७ ॥ वुड्ढाणुगो १७ विणीओ १८ कय-**
**न्नुओ १९ परहियत्थकारी य २०। तह चेव लद्धलक्खो २१ इगवीसगुणो हवइ सड्ढो ॥ ५८ ॥**

परतीर्थिकप्रणीतानां सर्वेषामपि धर्माणां मध्ये प्रधानत्वेन यो रत्नमिव वर्तते स धर्मरत्नं—जिनोदितो देशविरत्यादिरूपः समाचारः तस्य योग्यः—उचित ईदृक्स्वरूप एव श्रावको भवति, तद्यथा—अक्षुद्र इत्यादि, तत्र यद्यपि क्षुद्रः—तुच्छः क्षुद्रः—क्रूरः क्षुद्रो—दरिद्रः क्षुद्रो—लघुरित्यनेकार्थः क्षुद्रशब्दः तथाऽपीह तुच्छार्थो गृह्यते तस्यैव प्रस्तुतोपयोगित्वात्, ततः क्षुद्रः—तुच्छोऽगम्भीर इत्यर्थः तद्विपरीतोऽक्षुद्रः स च सूक्ष्ममतित्वात् सुखेनैव धर्ममवबुध्यते १ रूपवान्—संपूर्णाङ्गोपाङ्गतया मनोहराकारः, स च तथारूपसंपन्नः सदाचारप्रवृत्त्या भविकलोकानां धर्मे गौरवमुत्पादयन् प्रभावको भवति, ननु नन्दिषेणहरिकेशबलप्रभृतीनां कुरूपाणामपि धर्मप्रतिपत्तिः श्रूयते, अतः कथं रूपवानेव धर्मेऽधिक्रियते ?, सत्यं, इह द्विविधं रूपं—सामान्यमतिशायि च, तत्र सामान्यं संपूर्णाङ्गत्वादि, तच्च नन्दिषेणादीनामप्यासीदेवेति न विरोधः, प्रायिकं चैतच्छेषगुणसद्भावे कुरूपत्वस्याप्यदुष्टत्वात्, एवमग्रेऽपि, अतिशायि पुनर्यद्यपि तीर्थकरादीनामेव संभवति तथापि येन क्वचिद्देशे काले वयसि वा वर्तमानो रूपवानयमिति जनानां प्रतीतिमुपजनयति तदेवेहाधिकृतं

मन्तव्यं २ प्रकृत्या—स्वभावेन सौम्यः—अभीषणाकृतिर्विश्वसनीयरूप इत्यर्थः, एवंविधश्च प्रायेण न पापव्यापारे व्याप्रियते सुखाश्रयणीयश्च भवति ३ लोकस्य—सर्वजनस्य इहपरलोकविरुद्धवर्जनेन दानशीलादिगुणैश्च प्रियो—वल्लभो लोकप्रियः, सोऽपि सर्वेषां धर्मे बहुमानं जनयति ४, अक्रूरः—अक्लिष्टाध्यवसायः, क्रूरो हि परच्छिद्रान्वेषणलम्पटः कलुषमनाः स्वानुष्ठानं कुर्वन्नपि न फलभाग्भवतीति ५ भीरुः—ऐहिकामुष्मिकापायेभ्यस्त्रसनशीलः, स हि कारणेऽपि सति न निःशङ्कमधर्मे प्रवर्तते ६ अशठः—अच्छद्मानुष्ठाननिष्ठः, शठो हि वञ्चनप्रपञ्चचतुरतया सर्वस्याप्यविश्वसनीयो भवति ७ सदाक्षिण्यः—स्वकार्यपरिहारेण परकार्यकरणैकरसिकान्तःकरणः, स च कस्य नाम नानुवर्तनीयो भवति? ८ 'लज्जालु य'त्ति प्राकृतशैल्या लज्जावान्, स खल्वकृत्यासेवनवार्तयाऽपि व्रीडते, स्वयमङ्गीकृतमनुष्ठानं च परित्यक्तुं न शक्नोति ९ दयालुः—दयावान्, दुःखितजन्तुजातत्राणाभिलाषुक इत्यर्थः, 'धर्मस्य हि दया मूल'मिति प्रतीतमेव १० मध्यस्थो—रागद्वेषत्यक्तधीः, स हि सर्वत्रारक्तद्विष्टतया विश्वस्यापि वल्लभो भवति ११ सौम्यदृष्टिः—कस्याप्यनुद्वेजकः, स हि दर्शनमात्रेणापि प्राणिनां प्रीतिं पल्लवयति १२ गुणेषु—गाम्भीर्यस्थैर्यप्रमुखेषु रज्यतीत्येवंशीलो गुणरागी, स हि गुणपक्षपातित्वादेव सद्गुणान् बहु मन्यते निर्गुणांश्चोपेक्षते १३ सत्कथाः—सदाचारचारित्वात्सुचरित्रचर्याकथनरुचयो न तु दुश्चारित्रचर्याकथनरुचयो ये सपक्षाः—सहाया जनास्तैर्युक्तः—अन्वितो, धर्माविघ्नकपरिवार इति भावः, एवंविधश्च न केनचिदुन्मार्गं नेतुं शक्यते १४ अन्ये तु सत्कथः सुपक्षयुक्तश्चेति पृथग्गुणद्वयं मन्यन्ते, मध्यस्थः सोमदृष्टिश्चेति द्वाभ्यामप्येकमेवेति, तथा सुदीर्घदर्शी—सुपर्यालोचितपरिणामपेशलकार्यकारी, स किल पारिणामिक्या बुद्ध्या सुन्दरपरिणाममैहिकमपि कार्यमारभते १५ विशेषज्ञः—सारेतरवस्तुविभागवेदी, अविशेषज्ञस्तु दोषानपि गुणत्वेन गुणानपि दोषत्वेनाध्यवस्यति १६ वृद्धान्—परिणतमतीननुगच्छति—गुणार्जनबुद्ध्या सेवत इति वृद्धानुगः, वृद्धजना-

नुगत्या हि प्रवर्तमानः पुमान् न जातुचिदपि विपदः पदं भवति १७ विनीतो—गुरुजनगौरवकृत्, विनयवति हि संपदि संपदः प्रादुर्भवन्ति १८ स्वल्पमप्युपकारमैहिकं पारत्रिकं वा परेण कृतं जानाति न निह्नुते इति कृतज्ञः, कृतघ्नो हि सर्वत्राप्यमन्दां निन्दां समासादयति १९ परेषां—अन्येषां हितान्—पथ्यानर्थान्—प्रयोजनानि कर्तुं शीलं यस्य स परहितार्थकारी, सदाक्षिण्योऽभ्यर्थित एव करोति अयं पुनः स्वत एव परहिताय प्रवर्तते इत्यनयोर्भेदः, यश्च प्रकृत्यैव परहितकरणे नितरां निरतो भवति स निरीहचित्ततयाऽन्यानपि सद्धर्मे स्थापयति २० तथा लब्धमिव लब्धं लक्ष्यं—शिक्षणीयानुष्ठानं येन स लब्धलक्षः, पूर्वभवाभ्यस्तमिव सर्वमपि धर्मकृत्यं झटित्येवाधिगच्छतीति भावः, ईदृशो हि वन्दनप्रत्युपेक्षणादिकं धर्मकर्म सुखेनैव शिक्षयितुं शक्यते २१, तदेवमेकविंशतिगुणसंपन्नः श्राद्धः—श्रावको भवतीति २३९ ॥ ५६ ॥ ५७ ॥ ५८ ॥ इदानीं 'तेरिच्छीणुक्किट्ठ गब्भट्ठिइ'त्ति चत्वारिंशदधिकशततमं द्वारमाह—

**उक्किट्ठा गब्भठिई तिरियाणं होइ अट्ठ वरिसाइं । माणुस्सीणुक्किट्ठं इत्तो गब्भट्ठिइं वुच्छं ॥ ५९ ॥**

उत्कृष्टा गर्भस्थितिः—गर्भावस्थानं तिरश्चीनां—तिर्यग्योषितां भवत्यष्टौ वर्षाणि, ततः परं गर्भस्य विपत्तिः प्रसवो वेति २४० ॥ इदानीं 'माणुसीणुक्किट्ठा गब्भठिइ'त्ति तथा 'तग्गब्भस्स कायट्ठिइ'त्येकचत्वारिंशदधिकद्विचत्वारिंशदधिकद्विशततमे द्वारे आह—

**गब्भट्ठिइ मणुस्सीणुक्किट्ठा होइ वरिसबारसगं । गब्भस्स य कायठिई नराण चउवीस वरिसाइं ॥ ६० ॥**

मानुषीणां—मनुष्यस्त्रीणामुत्कृष्टा गर्भस्थितिर्भवति वर्षद्वादशकं—द्वादशवर्षप्रमाणा; अयमर्थः—कश्चिज्जन्तुराविर्भूतप्रभूतपापाभिभूतवपुर्वातपित्तादिदूषिते देवादिस्तम्भिते वा गर्भे द्वादश वर्षाणि निरन्तरं तिष्ठतीति, इयं च भवस्थितिरुक्ता, कायस्थितिः पुनर्नराणां गर्भस्य

चतुर्विंशतिर्वर्षाणि, इदमुक्तं भवति—कश्चिज्जीवो द्वादश वर्षाणि जीवित्वा तदन्ते च मृत्वा तथाविधकर्मवशात्तत्रैव गर्भस्थिते कलेवरे समुत्पद्य पुनर्द्वादश वर्षाणि जीवतीत्येवं चतुर्विंशतिर्वर्षाण्युत्कृष्टतो गर्भे जन्तुस्तिष्ठतीति २४१, २४२ ॥ ६० ॥ इदानीं 'गब्भट्ठिय-जीवआहारो'त्ति त्रिचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पढमे समये जीवा उप्पन्ना गब्भवासमज्झंमि । ओयं आहारंती सव्वप्पणयाइ पूयव ॥ ६१ ॥**

**ओयाहारा जीवा सव्वे अपज्जत्तया मुणेयव्वा । पज्जत्ता उण लोमे पक्खेवे हुंति भइयव्वा ॥ ६२ ॥**

प्रथमे समये जीवा उत्पन्ना गर्भवासमध्ये ओज आहारयन्ति—ओजआहारं कुर्वन्ति, 'सव्वप्पयणयाए'त्ति सर्वात्मना, सर्वैरप्यात्मप्रदेशैरित्यर्थः, किंवदित्याह—अपूपा इव, यथा हि तैलभृततप्ततापिकायां प्रथमसमय एवापूपाः सकलमपि तैलमापिबन्ति, एवं जीवा अपि गर्भोत्पत्तिप्रथमसमये ओज आहारयन्ति, पितुः संबन्धि शुक्रं मातुः संबन्धि शोणितमेतद्द्वयमप्येकत्र मिलितं ओज इत्युच्यते, अथ कस्यामवस्थायां जीवस्याहारः क इत्येतत्प्रसङ्गतः प्राह—'ओये'त्यादि, इयं च प्रागेव पञ्चोत्तरद्विशततमद्वारे व्याख्याता २४३ ॥ ६१ ॥ ॥ ६२ ॥ इदानीं 'रिउरुहिरसुक्कजोए जेत्तियकालेण गब्भसंभूई'त्ति चतुश्चत्वारिंशदधिकद्विशततमं द्वारमाह—

**रिउसमयण्हायनारी नरोवभोगेण गब्भसंभूई । बारसमुहुत्त मज्झे जायइ उवरिं पुणो नेय ॥६३॥**

मासावसाने त्रीणि दिनानि यावद्युवतीनां यदजस्रमस्रं श्रवति तदृतुरित्युच्यते, तत्र ऋतुसमये स्नातायाश्चतुर्थदिवसे शुद्धिहेतोः कृतस्नानायाः नार्याः स्त्रियो नरोपभोगेन—पुरुषसंभोगेन गर्भसंभूतिर्भवति, सा च द्वादशानामेव मुहूर्तानां मध्ये जायते, चतुर्विंशतिघटिकानां मध्ये इत्यर्थः, ऊर्ध्वं पुनर्नैव गर्भसंभूतिः, द्वादश मुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं ध्वंसमुपगच्छत

इति भावः २४४ ॥ ६३ ॥ इदानीं 'जत्तिय पुत्ता गब्भे'त्ति तथा 'जत्तिय पियरो य पुत्तस्स'त्ति पञ्चचत्वारिंशदधिकषट्चत्वा-
रिंशदधिके च द्विशततमे द्वारे प्राह—

**सुयलक्खपुहुत्तं होइ एगनरभुत्तनारिगब्भंमि । उक्कोसेणं नवसयनरभुत्तत्थीइ एगसुओ ॥ ६४ ॥**

सुतलक्षपृथक्त्वं भवत्येकपुरुषभुक्ताया नार्या गर्भे, पृथक्त्वं चेह द्विप्रभृतिरानवभ्य इति समयोक्तं ज्ञेयं, अयमर्थः—एकस्याः स्त्रियः पुरुषेणोपभुक्ताया गर्भे जघन्यत एको द्वौ त्रयो वा यावत् उत्कृष्टतस्तु नव लक्षाणि जीवानामुत्पद्यन्ते, निष्पत्तिं तु प्राय एको वा द्वौ वा गच्छतः, शेषास्तु स्वल्पकालं जीवित्वा तत एव म्रियन्ते इति, तथोत्कृष्टतो नवशतसङ्ख्यैर्नरैरुपभुक्तायाः स्त्रियो गर्भे एकः सुतो भवति, कोऽर्थः ?—काचिद् दृढसंहनना कामातुरा च तरुणी यदा द्वादशमुहूर्तमध्ये उत्कर्षतो नवभिर्नरशतैः संभुज्यते तदा तद्बीजे यः पुत्रो जायते स नवानां पितृशतानां पुत्रो भवतीति २४५–२४६ ॥ ६४ ॥ इदानीं 'महिलाण गब्भअभवणकालो पुरिसअबीय-कालो'त्ति सप्तचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पणपन्नाएँ परेणं जोणी पमिलायए महिलियाणं । पणहत्तरीएँ परओ होइ अबीयओ नरो पायं ॥ ६५ ॥ वाससयाउयमेयं परेण जा होइ पुव्वकोडीओ । तस्सद्धे अमिलाया सव्वाउयवीसभाये य ॥ ६६ ॥ बीयं सुक्कं तह सोणियं च ठाणं तु जणणिगब्भंमि । ओयं तु उवट्ठंभस्स कारणं तस्स-रूवं तु ॥ ६७ ॥ अट्ठारसपिट्ठकरंडयस्स संधीउ हुंति देहंमि । बारस पंसुलियकरंडया इहं तह च्छ पंसुलिए ॥ ६८ ॥ होइ कडाहे सत्तंगुलाइं जीहा पलाइ पुण चउरो । अच्छीउ दो पलाइं सिरं**

चतुर्विंशतिर्वर्षाणि, इदमुक्तं भवति—कश्चिज्जीवो द्वादश वर्षाणि जीवित्वा तदन्ते च मृत्वा तथाविधकर्मवशात्तत्रैव गर्भस्थिते कलेवरे समुत्पद्य पुनर्द्वादश वर्षाणि जीवतीत्येवं चतुर्विंशतिर्वर्षाण्युत्कृष्टतो गर्भे जन्तुस्तिष्ठतीति २४१, २४२ ॥ ६० ॥ इदानीं 'गब्भट्ठिय-जीवआहारो'त्ति त्रिचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पढमे समये जीवा उप्पन्ना गब्भवासमज्झंमि । ओयं आहारंती सव्वप्पणयाइ पूयव्व ॥ ६१ ॥**

**ओयाहारा जीवा सव्वे अपज्जत्तया मुणेयव्वा । पज्जत्ता उण लोमे पक्खेवे हुंति भइयव्वा ॥ ६२ ॥**

प्रथमे समये जीवा उत्पन्ना गर्भवासमध्ये ओज आहारयन्ति—ओजआहारं कुर्वन्ति, 'सव्वप्पयणयाए'त्ति सर्वात्मना, सर्वैरप्यात्मप्रदेशैरित्यर्थः, किंवदित्याह—अपूपा इव, यथा हि तैलभृततप्ततापिकायां प्रथमसमय एवापूपाः सकलमपि तैलमापिबन्ति, एवं जीवा अपि गर्भोत्पत्तिप्रथमसमये ओज आहारयन्ति, पितुः संबन्धि शुक्रं मातुः संबन्धि शोणितमेतद्द्वयमप्येकत्र मिलितं ओज इत्युच्यते, अथ कस्यामवस्थायां जीवस्याहारः क इत्येतत्प्रसङ्गतः प्राह—'ओये'त्यादि, इयं च प्रागेव पञ्चोत्तरद्विशततमद्वारे व्याख्याता २४३ ॥ ६१ ॥ ६२ ॥ इदानीं 'रिउरुहिरसुक्कजोए जेत्तियकालेण गब्भसंभूइ'त्ति चतुश्चत्वारिंशदधिकद्विशततमं द्वारमाह—

**रिउसमयण्हायनारी नरोवभोगेण गब्भसंभूई । बारसमुहुत्त मज्झे जायइ उवरिं पुणो नेय ॥६३॥**

मासावसाने त्रीणि दिनानि यावद्युवतीनां यद्रजस्रमस्रं श्रवति तदृतुरित्युच्यते, तत्र ऋतुसमये स्नातायारुयहादूर्ध्वं शुद्धिहेतोः कृतस्नानायाः नार्याः स्त्रियो नरोपभोगेन—पुरुषसंभोगेन गर्भसंभूतिर्भवति, सा च द्वादशानामेव मुहूर्तानां मध्ये जायते, चतुर्विंशतिघटिकानां मध्ये इत्यर्थः, ऊर्ध्वं पुनर्नैव गर्भसंभूतिः, द्वादश मुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं ध्वंसमुपगच्छत

इति भावः २४४ ॥ ६३ ॥ इदानीं 'जत्तिय पुत्ता गब्भे'त्ति तथा 'जत्तिय पियरो य पुत्तस्स'त्ति पञ्चचत्वारिंशदधिकषट्चत्वा-
रिंशदधिके च द्विशततमे द्वारे प्राह—

**सुयलक्खपुहुत्तं होइ एगनरभुत्तनारिगब्भंमि । उक्कोसेणं नवसयनरभुत्तत्थीइ एगसुओ ॥ ६४ ॥**

सुतलक्षपृथक्त्वं भवत्येकपुरुषभुक्ताया नार्या गर्भे, पृथक्त्वं चेह द्विप्रभृतिरानवभ्य इति समयोक्तं ज्ञेयं, अयमर्थः—एकस्याः स्त्रियः पुरुषेणोपभुक्ताया गर्भे जघन्यत एको द्वौ त्रयो वा यावत् उत्कृष्टतस्तु नव लक्षाणि जीवानामुत्पद्यन्ते, निष्पत्तिं तु प्राय एको वा द्वौ वा गच्छतः, शेषास्तु स्वल्पकालं जीवित्वा तत एव म्रियन्ते इति, तथोत्कृष्टतो नवशतसङ्ख्यैर्नरैरुपभुक्तायाः स्त्रियो गर्भे एकः सुतो भवति, कोऽर्थः ?—काचिद् दृढसंहनना कामातुरा च तरुणी यदा द्वादशमुहूर्तमध्ये उत्कर्षतो नवभिर्नरशतैः संभुज्यते तदा तद्बीजे यः पुत्रो जायते स नवानां पितृशतानां पुत्रो भवतीति २४५—२४६ ॥ ६४ ॥ इदानीं 'महिलाण गब्भअभवणकालो पुरिसअवीय-
कालो'त्ति सप्तचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पणपन्नाएँ परेणं जोणी पमिलायए महिलियाणं । पणहत्तरीएँ परओ होइ अबीयओ नरो पायं ॥ ६५ ॥ वाससयाउयमेयं परेण जा होइ पुव्वकोडीओ । तस्सद्धे अमिलाया सव्वाउयवीसभाये य ॥ ६६ ॥ बीयं सुक्कं तह सोणियं च ठाणं तु जणणिगब्भंमि । ओयं तु उवट्ठंभस्स कारणं तस्स-रूवं तु ॥ ६७ ॥ अट्ठारसपिट्ठकरंडयस्स संधीउ हुंति देहंमि । बारस पंसुलियकरंडया इहं तह च्छ पंसुलिए ॥ ६८ ॥ होइ कडाहे सत्तंगुलाइं जीहा पलाइ पुण चउरो। अच्छीउ दो पलाइं सिरं**

तु भणियं चउक्कवालं ॥ ६९ ॥ अद्धुट्टपलं हिययं बत्तीसं दसण अट्ठिखंडाइं । कालेज्जयं तु स-
मए पणवीस पलाइ निद्दिट्ठं ॥ ७० ॥ अंताइं दोन्नि इहयं पत्तेयं पंच पंच वामाओ । सट्ठिसयं
संधीणं मम्माण सयं तु सत्तहियं ॥ ७१ ॥ सट्ठिसयं तु सिराणं नाभिप्पभवाण सिरमुवगयाणं ।
रसहरणिनामधेज्जाण जाणऽणुग्गहविघाएसु ॥ ७२ ॥ सुइचक्खुघाणजीहाणणुग्गहो होइ तह
विघाओ य । सट्ठसयं अन्नाणवि सिराणऽहोगामिणीण तहा ॥ ७३ ॥ पायतलमुवगयाणं जंघा-
बलकारिणीणऽणुवघाए । उवघाए सिरवियणं कुणंति अंधत्तणं च तहा ॥ ७४ ॥ अवराण गुदप-
विट्ठाण होइ सट्ठं सयं तह सिराणं । जाण बलेण पवत्तइ वाऊ मुत्तं पुरीसं च ॥ ७५ ॥ अरिसा
उ पांडुरोगो वेगनिरोहो य ताण य विघाए । तिरियगमाण सिराणं सट्ठसयं होइ अवराणं
॥ ७६ ॥ बाहुबलकारिणीओ उवघाए कुच्छिउयरवियणाओ । कुव्वंति तहऽन्नाओ पणवीसं सिंभ-
धरणीओ ॥ ७७ ॥ तह पित्तधारिणीओ पणवीसं दस य सुक्कधरणीओ । इय सत्त सिरसयाइं
नाभिप्पभवाइं पुरिसस्स ॥ ७८ ॥ तीसूणाइं इत्थीणं वीसहीणाइं हुंति संढस्स । नव ण्हारूण
सयाइं नव धमणीओ य देहंमि ॥ ७९ ॥ तह चेव सव्वदेहे नवनउई लक्ख रोमकूवाणं । अद्धुट्ठा
कोडीओ समं पुणो केसमंसूहिं ॥ ८० ॥ मुत्तस्स सोणियस्स य पत्तेयं आढयं वसाए उ । अद्धाढयं
भणंति य पत्थं मत्थुलुयवत्थुस्स ॥ ८१ ॥ असुइमल पत्थछक्कं कुलओ कुलओ य पित्तसिंभाणं ।

**सुक्कस्स अद्धकुलओ दुट्ठं हीणाहियं होज्जा ॥ ८२ ॥ एक्कारस इत्थीए नव सोयाइं तु हुंति पुरिसस्स । इय किं सुइत्तणं अट्ठिमंसमलरुहिरसंघाए? ॥ ८३ ॥**

वर्षाणां पञ्चपञ्चाशतः परत आर्तवाभावान्महिलानां योनिः प्रम्लायति–गर्भोत्पत्तिकारणतां न प्रतिपद्यते, भावार्थस्तु निशीथचूर्ण्यक्षरैरुपदर्श्यते—"इत्थीए जाव पणपन्न वासा न पूरंति ताव अमिलिया(लाणा) जोणी, आर्तवं भवति गर्भं च गृह्णातीत्यर्थः, पणपन्नवासाए पुण कस्सइ अत्तवं भवति न पुण गब्भं गिण्हइ, पणपन्नाए परओ नो अत्तवं नो गब्भं गिण्हइ"त्ति, तथा वर्षाणां पञ्चसप्ततेः परतः प्रायेण नरः–पुमान् भवत्यबीजो–गर्भाधानयोग्यवीर्यविवर्जितः ॥६५॥ कियत्प्रमाणायुषां पुनरेतन्मानं द्रष्टव्यमित्याह–'वासे'त्यादि, वर्षशतायुषामैदंयुगीनानामेवैतद्–गर्भधारणादिकालमानमुक्तं द्रष्टव्यं, परेण तर्हि का वार्ता? इत्याह—'परेण जा होइ पुव्वकोडीओ' इत्यादि, वर्षशतात्परतो वर्षशतद्वयं त्रयं चतुष्टयं चेत्यादि यावन्महाविदेहादिमनुष्याणां या पूर्वकोटिः सर्वायुष्के भवति तस्य सर्वायुषोऽर्धं तदर्धं यावदम्लाना–गर्भधारणक्षमा युवतीनां योनिर्द्रष्टव्या, ततः परतः सकृत्प्रसवधर्मिणोऽम्लानयोनयश्चावस्थितयौवनत्वात्, पुरुषाणां तु सर्वस्यापि पूर्वकोटिपर्यन्तस्य स्वायुषोऽन्त्यो विंशतितमो भागोऽबीजो भवति २४७ ॥ ६६ ॥ इदानीं 'सुक्काईण पमाणं'त्यष्टचत्वारिंशदधिकद्विशततमं द्वारमाह–'बीय' मित्यादि, बीजं–कारणं तत्र शरीरस्य शुक्रं तथा शोणितं च, पितुः शुक्रं मातुः शोणितं एतद् द्वयमपि शरीरस्य कारणमित्यर्थः, स्थानं तु तस्यादौ जननीगर्भे–मातुरुदरमध्यभागे, शुक्रशोणितसमुदाय ओज इत्युच्यते, शरीरोपष्टम्भस्यापि प्रथमतस्तदेव हेतुः कारणमित्यर्थः, तस्य शरीरस्य स्वरूपं तु 'अट्ठारसपिट्ठकरंडयस्स' इत्याद्यनन्तरवक्ष्यमाणलक्षणमिति शेषः ॥ ६७ ॥ तदेवाह—'अट्ठे'त्यादिगाथाद्वयं, देहे–मनुष्यशरीरे पृष्ठकरण्डकस्य–पृष्ठवंशस्याष्टादश ग्रन्थिरूपाः संधयो भवन्ति, यथा वंशस्य पर्वाणि,

तेषु चाष्टादशसु सन्धिषु मध्ये द्वादशभ्यः सन्धिभ्यो द्वादश पंशुलिका निर्गत्योभयपार्श्वावावृत्त्य वक्षःस्थलमध्योर्द्ध्ववर्त्यस्थि लगित्वा पञ्ज-काकारतया परिणमन्ति, अत आह—इह शरीरे द्वादश पंशुलिकारूपाः करण्डका—वंशका भवन्ति, 'तह छपंसुलिए होइ कडाहे'त्ति तथा तस्मिन्नेव पृष्ठवंशे शेषषट्संधिभ्यः षट् पांशुलिका निर्गत्य पार्श्वद्वयं चावृत्त्य हृदयस्योभयतो वक्षःपञ्जरादधस्ताद् शिथिलकुक्षितस्तू-परिष्टात्परस्परासंमिलितास्तिष्ठन्ति, अयं च कटाह इत्युच्यते, जिह्वा—मुखाभ्यन्तर्वर्तिमांसखण्डरूपा दैर्घ्येणात्माङ्गुलतः सप्ताङ्गुलप्रमाणा भवति, तौल्ये तु मगधदेशप्रसिद्धेन पलेन चत्वारि पलानि भवन्ति, अक्षिमांसगोलकौ तु द्वे पले, शिरस्तु अस्थिखण्डरूपैश्चतुर्भिः कपा-लैर्निष्पद्यते इति ॥ ६८ ॥ ६९ ॥ तथा 'अद्धुट्ठे'त्यादि, हृदयान्तर्वर्तिमांसखण्डं सार्धपलत्रयं भवति, द्वात्रिंशच्च मुखे दन्ता—अस्थिख-ण्डरूपाः प्रायः प्राप्यन्ते, कालेयजं तु—वक्षोऽन्तर्गूढमांसविशेषरूपं पञ्चविंशतिपलान्यागमे निर्दिष्टं ॥ ७० ॥ तथा—'अंताइं' इत्यादि, इह शरीरे द्वे अन्त्रे भवतः, प्रत्येकं पञ्चपञ्चवामप्रमाणे, तथा संधयः—अङ्गुल्याद्यस्थिखण्डमेलापकस्थानानि तेषां षष्ठ्यधिकं शतं भवन्ति, मर्माणि—सक्थ्याणिकाविरकादीनि, तेषां तु सप्ताधिकं शतं भवति ॥ ७१ ॥ अथ पुरुषशरीरे शिरासङ्ख्यामाह—'सट्ठिसय'मित्यादिगाथा-सप्तकं, इह पुरुषस्य शरीरे नाभिप्रभवाणि शिराणां—स्नसानां सप्त शतानि भवन्ति, तत्र षष्ठ्यधिकं शतं शिराणां नाभेः शिरसि गच्छति, ताश्च रसहरणीनामधेयाः, रसो ह्रियते—विकीर्यते यकाभिरितिकृत्वा, यासां चानुग्रहविघातयोः सतोर्यथासङ्ख्यं श्रोत्रचक्षुर्घ्राण-जिह्वानामनुग्रहो विघातश्च भवति, तथा अन्यासामप्यधोगामिनीनां पादतलमुपगतानामनुपघाते जङ्घाबलकारिणीनां स्नसानां षष्ठ्यधिकं शतं भवति, उपघाते तु ता एव शिरोवेदनाऽन्धत्वादीनि कुर्वन्ति, तथाऽपरासां गुदप्रविष्टानां शिराणां षष्ठ्यधिकं शतं भवति, यासां बलेन वायुर्मूत्रं पुरीषं च प्राणिनां प्रवर्तते, एतासां च विघातेऽर्शांसि पाण्डुरोगो वेगनिरोधश्च भवति, तथा अपरासां तिर्यग्गामिनीनां

शिराणां षष्ट्यधिकं शतं भवति, ताः पुनर्बाहुबलकारिण्यः, उपघाते च सति कुक्षिउदरवेदनाः कुर्वन्ति, तथाऽन्याः पञ्चविंशतिः शिराः श्लेष्मधारिण्यो भवन्ति, तथा पित्तधारिण्योऽपि पञ्चविंशतिः शिराः, दश च शिराः शुक्राख्यसप्तमधातुधारिण्यः, इत्येवं नाभिप्रभवाणि सप्तशिराशतानि पुरुषस्य शरीरे भवन्ति ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ अथ स्त्रीनपुंसकयोः कियन्त्य एता भवन्तीत्याशङ्क्याह—'तीसूणाइं' इत्यादिगाथाचतुष्कं, त्रिंशता न्यूनानि स्त्रीणां सप्त शिराशतानि भवन्ति, विंशत्या च हीनानि सप्त शतानि शिराणां भवन्ति षण्ढस्य—नपुंसकस्य, तथा स्नायूनाम्—अस्थिबन्धनशिराणां शतानि नव च धमन्यो रसवहा—नाड्यो देहे ॥ ७९ ॥ तथा सर्वस्मिन्नपि देहे नवनवतिर्लक्षा रोमकूपाणां भवन्ति, रोम्णां—तनूरुहाणां कूपा इव कूपा रोमकूपा—रोमरन्ध्राणीत्यर्थः, एतच्च संख्यानं श्मश्रुकेशैर्विनाऽवसेयं, तैस्तु सह सार्धास्तिस्रः कोट्यो रोमकूपानां जायन्ते, तत्र श्मश्रूणि—कूर्चकचाः, केशास्तु—शिरोरुहा इति ॥८०॥ शरीरे सर्वदैव मूत्रस्य शोणितस्य च प्रत्येकमवस्थितमाढकं मगधदेशप्रसिद्धमानविशेषरूपं भणन्ति, उक्तं च—"दो असईओ पसई, दो पसइओ सेइया, चत्तारि सेइयाउ कुलओ, चत्तारि कुडवा पत्थो, चत्तारि पत्था आढयं, चत्तारि आढया दोणो" इत्यादि, धान्यभृतोऽवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते, वसायास्त्वर्धाढकं भणन्ति, मस्तकभेज्जको मस्तुलुङ्गवस्तु, अन्ये त्वाहुः—मेदपिप्फिसादि मस्तुलुङ्गं, तस्यापि प्रस्थं यथोक्तरूपं वदन्ति ॥ ८१ ॥ अशुचिरूपो योऽसौ मलस्तस्य प्रस्थषट्कं भवति, पित्तश्लेष्मणोः प्रत्येकं यथानिर्दिष्टस्वरूपः कुलवो भवति, शुक्रस्त्वर्धकुलवः, एतच्चाढकप्रस्थादिकं मानं बालकुमारतरुणादीनां 'दो असइओ पसई'त्यादिक्रमेणात्मीयात्मीयहस्तेनानेतव्यं, उक्तमानाच्च शुक्रशोणितादेर्यत्र हीनाधिक्यं भवति तत्र वातादिदूषितत्वेनेति ज्ञेयं ॥ ८१ ॥ अथ श्रोत्राणि शरीरे यावन्ति भवन्ति तावंत्युपदर्श्योपसंहरति—'एक्कारसे'त्यादि, द्वौ कर्णौ द्वे चक्षुषी द्वे घ्राणे मुखं स्तनौ पायुरुपस्थश्चेत्येवमेकादश श्रोत्राणि

स्त्रियो भवन्ति, स्तनवर्जानि शेषाणि नव पुरुषस्य, एतच्च मनुजगतिमाश्रित्य प्रोक्तं, तिर्यग्गतौ तु अजादीनां द्विस्तनीनामेकादश श्रोत्राणि, गवादीनां चतुःस्तनीनां त्रयोदश, सूकर्यादीनामष्टस्तनीनां सप्तदश, निर्व्याघाते एवं, व्याघाते पुनरेकस्तन्या अजाया दश, त्रिस्तन्याश्च गोर्द्वादशेति, इत्येवमस्थ्यादिसंघातरूपे शरीरे किं नाम स्वरूपतः शुचित्वं ?, न किञ्चिदित्यर्थः ॥ २४८ ॥ ८३ ॥ इदानीं **'सम्मत्ताईणुत्तमगुणाण लाहंतरं तु उक्कोसं'** इत्येकोनपञ्चाशदधिकद्विशततमं द्वारमाह—

**सम्मत्तंमि य लद्धे पलियपुहुत्तेण सावओ होइ । चरणोवसमखयाणं सायरसंखंतरा हुंति ॥ ८४ ॥**

यावत्यां कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात्पल्योपमपृथक्त्वलक्षणे स्थितिखण्डे क्षपिते श्रावको—देशविरतो भवेत्, ततश्चरणोपशमक्षयाणामन्तरा संख्यातानि सागरोपमाणि भवन्ति, इयमत्र भावना—देशविरतिप्राप्त्यनन्तरं संख्यातेषु सागरोपमेषु क्षपितेषु चारित्रमवाप्नोति, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषूपशमश्रेणिं प्रतिपद्यते, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु क्षपकश्रेणिर्भवति, ततस्तद्भवे मोक्ष इति, एवमप्रतिपतितसम्यक्त्वस्य देवमनुष्यजन्मसु संसरणं कुर्वतोऽन्योऽन्यमनुष्यभवे देशविरत्यादिलाभो भवति, यदिवा तीव्रशुभपरिणामवशात्क्षपितबहुकर्मस्थितेरेकस्मिन्नपि भवेऽन्यतरश्रेणिवर्ज्यान्येतानि सर्वाण्यपि भवन्ति, श्रेणिद्वयं त्वेकस्मिन् भवे सैद्धान्तिकाभिप्रायेण न भवत्येव, किंत्वेकैवोपशमश्रेणिः क्षपकश्रेणिर्वा भवतीति, उक्तं च—"एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं ॥१॥" [एवमप्रतिपतिते सम्यक्त्वे देवमनुजजन्मसु अन्यतरश्रेणिवर्जानि एकभवेनैव सर्वाणि ॥१॥] ॥ २४९ ॥ ८४ ॥ इदानीं **'न लहंति माणुसत्तं सत्ता जेऽणंतरुवट्टा'**त्ति पञ्चाशदधिकद्विशततमं द्वारमाह—

**सत्तममहिनेरइया तेऊ वाऊ अणंतरुवट्टा । न लहंति माणुसत्तं तहा असंखाउया सव्वे ॥ ८५ ॥**

सप्तमपृथिवीनैरयिकास्तैजसकायिका वायुकायिकास्तथा असङ्ख्यातवर्षायुषः सर्वे तिर्यङ्मनुष्याश्चानन्तरमुद्धृता मानुष्यं न लभन्ते, मृत्वाऽनन्तरभवे मनुजेषु नोत्पद्यन्ते इत्यर्थः, शेषास्तु सुरनरतिर्यग्नारका नरेषूत्पद्यन्ते ॥ २५० ॥ ८५ ॥ इदानीं 'पुव्वंगपरिमाणं'ति एकपञ्चाशदधिकद्विशततमं द्वारमाह—

**वरिसाणं लक्खेहिं चुलसीसंखेहिं होइ पुव्वंगं । एयं चिय एयगुणं जायइ पुव्वं तयं तु इमं ॥ ८६ ॥**

वर्षाणां लक्षैश्चतुरशीतिसङ्ख्यैर्भवति पूर्वाङ्गं—पूर्वाख्यस्य सङ्ख्याविशेषस्य कारणं, अनेनैवैतद्गुणेन तस्य जायमानत्वात्, तथा चाह—'एयं चिय' इत्यादि, एतदेव—पूर्वाङ्गं चतुरशीतिवर्षलक्षलक्षणं एतद्गुणं—चतुरशीतिलक्षैर्गुणितं सञ्जायते पूर्वं, तत्पुनरिदं—अनन्तरद्वारे वक्ष्यमाणस्वरूपमिति ॥ २५१ ॥ ८६ ॥ साम्प्रतं 'माणं पुव्वस्स'त्ति द्विपञ्चाशदधिकद्विशततमं द्वारमाह—

**पुव्वस्स उ परिमाणं सयरिं खलु वासकोडिलक्खाओ । छप्पन्नं च सहस्सा बोद्धव्वा वासकोडीणं ॥ १ ॥ ८७ ॥**

पूर्वाभिधानस्य सङ्ख्याविशेषस्य परिमाणं वर्षकोटीनां सप्ततिः कोटिलक्षाः षट्पञ्चाशत् सहस्राणि, ७०५६०००००००००० । ॥ २५२ ॥ ८७ ॥ इदानीं 'लवणसिहमाणं'ति त्रिपञ्चाशदधिकद्विशततमं द्वारमाह—

**सोलससहस्स उच्चा सहस्समेगं तु ओगाढा ॥ २ ॥ ८८ ॥ दसजोयणाण सहसा लवणसिहा चक्कवालओ रुंदा ।**

लवणस्य शिखा लवणशिखा, सा दशयोजनानां सहस्राणि चक्रवालतो रुन्द्रा—रथचक्रवद्विस्तीर्णा, ततो लवणसमुद्रे योजनलक्षद्वयविष्कम्भे मध्यमेषु दशसु योजनसहस्रेषु नगरप्राकार इव जलमूर्ध्वं गतं, तस्योत्सेधवृद्धिः शिखेव शिखा, भूतलसमजलपट्टादूर्ध्वं षोडशयोजनसहस्राण्युच्चा एकं तु सहस्रमधोऽवगाढा, इयमत्र भावना—लवणसमुद्रे जम्बूद्वीपाद्धातकीखण्डद्वीपाच्च प्रत्येकं पञ्चनवतिपञ्चनवतियोजनसह-

स्राणि गोतीर्थं, गोतीर्थं नाम तडागादिष्विव प्रवेशमार्गरूपो नीचो नीचतरो भूप्रदेशो, गोतीर्थमिव गोतीर्थमिति व्युत्पत्तेः, मध्यभागावगा-
हस्तु दशयोजनसहस्रप्रमाणविस्तारः, गोतीर्थं च जम्बूद्वीपवेदिकान्तसमीपे धातकीखण्डवेदिकान्तसमीपे चाङ्गुलासङ्ख्येयभागः, ततः परं
समतलाद् भूभागादारभ्य क्रमेण प्रदेशहान्या तावन्नीचत्वं नीचतरत्वं परिभावनीयं यावत्पञ्चनवतियोजनसहस्राणि, पञ्चनवतियोजनस-
हस्रपर्यन्ते च समतलं भूभागमपेक्ष्य उण्डत्वं योजनसहस्रमेकं, तथा जम्बूद्वीपवेदिकातो धातकीखण्डद्वीपवेदिकातश्च समतले भूभागे
प्रथमतो जलवृद्धिरङ्गुलसङ्ख्येयभागः, ततः समतलभूभागमेवाधिकृत्य प्रदेशवृद्ध्या जलराशिः क्रमेण परिवर्धमानः परिवर्धमानः तावत्प-
रिभावनीय यावदुभयतोऽपि पञ्चनवतियोजनसहस्राणि, पञ्चनवतियोजनसहस्रपर्यन्ते चोभयतोऽपि समभूभागमपेक्ष्य जलवृद्धिः सप्त
योजनशतानि, किमुक्तं भवति ?—तत्र प्रदेशे समभूभागमपेक्ष्यावगाहो योजनसहस्रं, तदुपरि जलवृद्धिः सप्त योजनशतानीति, ततः
परं मध्ये भूभागे दशयोजनसहस्रविस्तारेऽवगाहो योजनसहस्रं जलवृद्धिः षोडश योजनसहस्राणि, पातालकलशगतवायुक्षोभे च तेषामु-
परि अहोरात्रमध्ये द्वौ वारौ किञ्चिन्न्यूने द्वे गव्यूते उदकमतिरेकेण परिवर्धते पातालकलशगतवायूपशान्तौ च हीयते ॥ २५३ ॥ ८८ ॥
इदानीं 'उस्सेहंगुलआयंगुलपमाणंगुलपमाणं'ति चतुःपञ्चाशदधिकद्विशततमं द्वारमाह—

**उस्सेहंगुल १ मायंगुलं च २ तइयं पमाणनामं च ३ । इय तिन्नि अंगुलाइं वावारिज्जंति समयंमि
॥ ८९ ॥ सत्थेण सुतिक्खेणवि छेत्तुं भेत्तुं च जं किर न सक्का । तं परमाणुं सिद्धा वयंति
आइं पमाणाणं ॥ ९० ॥ परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो
अट्ठगुणविवड्ढिया कमसो ॥ ९१ ॥ वीसंपरमाणुलक्खा सत्तानउई भवे सहस्साइं । सयमेगं**

बावन्नं एगंमि उ अंगुले हुंति ॥ ९२ ॥ परमाणू इच्चाइक्कमेण उस्सेहअंगुलं भणियं । जं पुण
आयंगुलमेरिसेण तं भासियं विहिणा ॥ ९३ ॥ जे जंमि जुगे पुरिसा अट्ठसयंगुलसमूसिया
हुंति । तेसिं जं नियमंगुलमायंगुलमेत्थ तं होइ ॥ ९४ ॥ जे पुण एयपमाणा ऊणा अहिगा
व तेसिमेयं तु । आयंगुलं न भन्नइ किंतु तदाभासमेवत्ति ॥ ९५ ॥ उस्सेहंगुलमेगं हवइ पमाणं-
गुलं सहस्सगुणं । उस्सेहंगुलदुगुणं वीरस्सायंगुलं भणियं ॥ ९६ ॥ आयंगुलेण वत्थुं उस्सेहपमा-
णओ मिणसु देहं । नगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥ ९७ ॥

अगि रगीत्यादिदण्डके अगिर्गत्यर्थो धातुः, गत्यर्थाश्च ज्ञानार्था अपि भवन्त्यतोऽग्यन्ते—प्रमाणतो ज्ञायन्ते पदार्था अनेनेत्यङ्गुलं—मा-
नविशेषः, तच्च त्रिविधं, तद्यथा—आद्यमुत्सेधाङ्गुलं द्वितीयमात्माङ्गुलं तृतीयं च प्रमाणाङ्गुलनामकं, इत्येतानि त्रीण्यङ्गुलानि समये—
सिद्धान्ते तत्तद्वस्तुमानविषयतया व्यापार्यन्ते, तानि च वस्तूनि यथायथमेभिर्मीयन्ते इत्यर्थः ॥ ८९ ॥ नन्वमीषामङ्गुलानां मध्ये उत्सेधा-
ङ्गुलं तावत् किंप्रमाणं भवतीत्याशङ्क्य तत्प्रमाणनिष्पत्तिक्रमनिरूपणार्थमाह—'सत्थेणे'त्यादि, शस्त्रेण—खड्गादिना सुतीक्ष्णेनापि छेत्तुं—
द्विधाकर्तुं भेत्तुं वा—खंडशो विदारयितुं सच्छिद्रं वा कर्तुं यं पुद्गलविशेषं न शक्ताः पुमांसस्तं परमाणुं घटाद्यपेक्षयाऽतिसूक्ष्मं सिद्धाः—सैद्धा-
न्तिकतया प्रसिद्धा यद्वा ज्ञानप्रसिद्धाः केवलिनः, न तु मुक्तिप्राप्ताः, तेषां शरीराद्यभावेन वचनस्यासंभवात्, वदन्ति—ब्रुवते प्रमाणानां—
अङ्गुलहस्तादीनामादिं—मूलं, किलशब्देन चेदं सूच्यते—लक्षणमेवेदं परमाणोः, न पुनस्तं छेत्तुं भेत्तुं वा कोऽप्यारभते, अतिश्लक्ष्णत्वेन छे-
दनभेदनाविषयत्वात्प्रयोजनाभावाच्चेति, अयं चेह व्यवहारनयमतेनैव परमाणुत्वेनोच्यते, यावताऽनन्ताणुकस्कन्ध एवासौ, केवलं सूक्ष्मप-

रिणामापन्नत्वेन चक्षुर्ग्रहणच्छेदनभेदनाद्यविषयत्वात्स्कन्धमपि व्यवहारनयः परमाणुं मन्यत इतीह परमाणुत्वेनोपन्यस्त इति ॥ ११ ॥ उक्तं
परमाणुस्वरूपं, इदानीं तदुपरिवर्तिनः शेषानुत्सेधाङ्गुलनिष्पत्तिकारणभूतानन्यानपि परिमाणविशेषानाह—'परमाणू' इत्यादि, इह
परमाणोरनन्तरं उपलक्षणस्य व्याख्यानादुच्छ्लक्ष्णश्लक्ष्णिकादीनि त्रीणि पदानि गाथायामनुक्तान्यपि द्रष्टव्यानि, अनुयोगद्वारादिषु तथै-
वाभिधानाद्युक्तिसंगतत्वाच्च, ततश्चानन्तैः परमाणुभिरेकस्या उच्छ्लक्ष्णश्लक्ष्णिकाया आगमेऽभिधानात्परमाणुं वर्जयित्वा सर्वेऽप्येते उच्छ्-
लक्ष्णश्लक्ष्णिकाश्लक्ष्णश्लक्ष्णिकोर्ध्वरेणुत्रसरेणुरथरेण्वादयो यवपर्यन्ताः परिमाणविशेषा यथोत्तरमष्टगुणाः क्रमेण वक्तव्याः, तत्र उत्सेधाङ्गुलं
निष्पद्यते, इयमत्र भावना—पूर्वोक्तव्यावहारिकपरमाणवोऽनन्ता मिलिताः सन्त एका उच्छ्लक्ष्णश्लक्ष्णिका भवति, अतिशयेन श्लक्ष्णा-
श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका उत्तरप्रमाणापेक्षया उत्—प्राबल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, अष्टाभिरुच्छ्लक्ष्णश्लक्ष्णिका-
भिरेका श्लक्ष्णश्लक्ष्णिका, प्राक्तनप्रमाणापेक्षयाऽष्टगुणत्वात् ऊर्ध्वरेण्वपेक्षया चाष्टमभागवर्तित्वात्, अष्टाभिः श्लक्ष्णश्लक्ष्णिकाभिरेक ऊर्ध्व-
रेणुः, जालप्रभाऽभिव्यङ्ग्यः स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्मा रेणुरूर्ध्वरेणुः, अष्टभिरूर्ध्वरेणुभिरेकस्त्रसरेणुः, त्रस्यति—पूर्वादि-
वातप्रेरितो गच्छति यो रेणुः स त्रसरेणुः, अष्टभिस्त्रसरेणुभिरेको रथरेणुः, भ्रमद्रथचक्रोत्खातो रेणू रथरेणुः, पूर्वः पौरस्त्यादिवातेषु
चलति अयं तु तत्सद्भावेऽपि रथचक्राद्युत्खननमन्तरेण न चलतीत्यस्मात्पूर्वोऽल्पप्रमाणः, इह च कासुचित् सूत्रादर्शेषु 'परमाणू रहरेणू तस-
रेणू' इत्यादिरेव पाठो दृश्यते, स चासङ्गत एव लक्ष्यते, रथरेणुमाश्रित्य त्रसरेणोरष्टगुणत्वानुपपत्तेः, उक्तन्यायेन विपर्ययस्यैव घटना-
दिति, यदपि संग्रहिण्यां 'परमाणू रहरेणू तसरेणू' इत्यादिरेव पाठो दृष्ट इत्युच्यते तत्रापि समानः पन्थाः, तस्यापि घटमानकत्वस्य
चिन्त्यत्वादागमेन सह विरोधाद्युक्त्यसंगतत्वाच्चेति, अष्टभी रथरेणुभिर्देवकुरूत्तरकुरुमनुष्याणां संबंधि एकं वालाग्रं भवति, तैरष्टभिर्हरिव-

र्यरम्यकमनुष्यवालाग्रं भवति तैरष्टभिर्हैमवतैरण्यवतमनुष्यवालाग्रं तैरष्टभिः पूर्वविदेहापरविदेहमनुष्यवालाग्रं तैरष्टमिर्भरतैरवतमनुष्यवालाग्रं, इह चैवं वालाग्राणां भेदे सत्यपि वालाग्रजातिसामान्यविवक्षया वालाग्रमिति सामान्येनैकमेव सूत्रे निर्दिष्टमिति, अष्टमिर्भरतैरवतमनुष्यवालाग्रैरेका प्रतीतस्वरूपैव लिक्षा जायते, ताभिरष्टाभिरेका यूका, ताभिरप्यष्टाभिर्यवशब्दसूचितमेकं यवमध्यं, अष्टभिर्यवमध्यैरेकमुत्सेधाङ्गुलं निष्पद्यत इति, इत ऊर्ध्वं सूत्रानुक्तमप्युपयोगित्वादुच्यते—एतानि षडङ्गुलान्यङ्गुलषट्कविस्तीर्णः पादस्य मध्यतलप्रदेशः पादैकदेशत्वात्पादो भवति, द्वौ च युग्मीकृतावेतौ पादौ द्वादशाङ्गुलप्रमाणा वितस्तिः, द्वे वितस्ती हस्तः, चत्वारो हस्ता धनुः, द्वौ धनुःसहस्रौ गव्यूतं, चत्वारि गव्यूतानि योजनमिति, उक्तं च—"अट्ठेव य जवमज्झाणि अंगुलं छच्च अंगुला पाओ । पाया य दो विहत्थी दो य विहत्थी भवे हत्थो ॥ १ ॥ चउहत्थं पुण धणुहं दुन्नि सहस्साइं गाउयं तेसिं । चत्तारि गाउया पुण जोयणमेगं मुणेयव्वं ॥ २ ॥" ॥ ९१ ॥ अथैकस्मिन्नुत्सेधाङ्गुले कियन्तः परमाणवो भवन्तीत्येतदाशङ्क्याह—'वीसे'त्यादि, विंशतिर्लक्षाः परमाणूनां सप्तनवतिसहस्राणि शतं चैकं द्विपञ्चाशदधिकं एकस्मिन्नुत्सेधाङ्गुले एतावन्तः परमाणवो भवन्ति, इयं च संख्या 'परमाणू तसरेणू' इत्यादिगाथायां साक्षादुपात्तानेव परमाणुविशेषानाश्रित्य द्रष्टव्या, उपलक्षणव्याख्यानलब्धोच्छ्लक्ष्णश्लक्ष्णिकादित्रयापेक्षया पुनरतिभूयसी परमाणुसंख्या संपद्यत इति ॥ ९२ ॥ अथोत्सेधाङ्गुलोपसंहारपूर्वमात्माङ्गुलं संबन्धयन्नाह—'परमाणु' इत्यादि, परमाण्वादिक्रमेण भणितं प्रथममुत्सेधाङ्गुलं, उत्सेधो—देवादिशरीराणामुच्चत्वं तन्निर्णयकर्तृकत्वेन तद्विषयमङ्गुलमुत्सेधाङ्गुलं, यद्वा उत्सेधो 'अणंताणं सुहुमपरमाणुपुग्गलाणं समुदयसमिइसमागमेणं एगे ववहारपरमाणू' इत्यादिक्रमेणोच्छ्रयो—वृद्धिस्तस्माज्जातमङ्गुलमुत्सेधाङ्गुलं, यत्पुनरात्माङ्गुलं पूर्वमुद्दिष्टं तदीदृशेन—वक्ष्यमाणस्वरूपेण विधिना—प्रकारेण भाषितं—प्रतिपादितं तीर्थकृद्गणधरैः ॥ ९३ ॥ तमेव विधिमाह—'जे जंमी' त्यादि, ये

पुरुषाः—चक्रवर्तिवासुदेवादयो यस्मिन् युगे—सुषमदुष्षमादिकाले निजाङ्गुलेनैवाष्टोत्तरं शतमङ्गुलानामुच्छ्रिता—उच्चा भवन्ति तेषां च स्वकीयाङ्गुलेनाष्टोत्तराङ्गुलशतोच्चानां पुरुषाणां यन्निजं—आत्मीयमङ्गुलं तत्पुनरात्माङ्गुलं भवति, इह च ये यस्मिन् काले प्रमाणयुक्ताः पुरुषा भवन्ति तेषां संबन्धी आत्मा गृह्यते तत आत्मनोऽङ्गुलमात्माङ्गुलं ॥९४॥ इदं च पुरुषाणां कालादिभेदेनानवस्थितमानत्वादनियतप्रमाणं द्रष्टव्यं । 'जे पुणे' त्यादि, ये पुनः पुरुषा एतस्मादष्टोत्तराङ्गुलशतलक्षणात्प्रमाणान्न्यूनाः समधिका वा तेषां संबन्धि यदङ्गुलमेतदात्माङ्गुलं न भण्यते, किंतु तदाभासमेव—आत्माङ्गुलाभासमेव, परमार्थत आत्माङ्गुलं तन्न भवतीत्यर्थः, लक्षणशास्त्रोक्तस्वरादिशेषलक्षणवैकल्यसहायं च यथोक्तप्रमाणाद्धीनाधिक्यमिह प्रतिषिद्धं न केवलमिति संभाव्यते, भरतचक्रवर्त्यादीनां स्वाङ्गुलतो विंशत्यधिकाङ्गुलशतमानानामप्यत्र निर्णीतत्वान्महावीरादीनां च केषाञ्चिन्मतेन चतुरशीत्याद्यङ्गुलप्रमाणत्वादिति ॥ ९५ ॥ साम्प्रतं क्रमसंप्राप्तं प्रमाणाङ्गुलमाह— 'उस्सेहंगुले' त्यादि, उत्सेधाङ्गुलं—अनन्तरोक्तस्वरूपं सहस्रगुणं सदेकं प्रमाणाङ्गुलं भवति, परमं—प्रकर्षरूपं प्रमाणं प्राप्तमङ्गुलं प्रमाणाङ्गुलं, नातः परं बृहत्तरमङ्गुलमस्तीति भावः, यदिवा समस्तलोकव्यवहारराज्यादिस्थितिप्रथमप्रणेतृत्वेन प्रमाणभूतोऽस्मिन्नवसर्पिणीकाले तावद्युगादिदेवो भरतचक्रवर्ती वा तस्य प्रमाणभूतपुरुषस्याङ्गुलं प्रमाणाङ्गुलं, तच्च भरतचक्रवर्तिन आत्मांगुलं, तदा आत्माङ्गुलस्य प्रमाणाङ्गुलस्य च तुल्यत्वात्, ननु यदि भरतचक्रिणः संबन्ध्यङ्गुलं प्रमाणाङ्गुलमित्युच्यते एवं सत्युत्सेधाङ्गुलात्प्रमाणाङ्गुलं चतुःशतगुणमेव स्यात्, न सहस्रगुणं, तथाहि—भरतचक्रवर्ती आत्मीयाङ्गुलेन किल विंशं शतमङ्गुलानामनुयोगद्वारचूर्ण्यादिषु निर्णीतः, उत्सेधाङ्गुलेन तु पञ्चधनुःशतमानत्वात् प्रतिधनुश्च षण्णवत्यङ्गुलसद्भावादष्टचत्वारिंशत्सहस्राण्यङ्गुलानामसौ संपद्यते, एवं च सत्येकस्मिन् प्रमाणाङ्गुले उत्सेधाङ्गुलानां चत्वार्येव शतानि भवन्ति, विंशत्यधिकशतेन प्रमाणाङ्गुलानामष्टचत्वारिंशत्सहस्रसंख्यस्योत्सेधाङ्गुलराशेर्भागापहारे एता-

वत एव लाभात्, ततश्चैवं भरतसंबन्ध्यङ्गुललक्षणं प्रमाणाङ्गुलमुत्सेधाङ्गुलाच्चतुःशतगुणमेव स्यात् न सहस्रगुणमिति, सत्यमुक्तं, किंतु प्रमाणाङ्गुलस्यार्धतृतीयोत्सेधाङ्गुलरूपं पृथुत्वमस्ति, ततो यदा स्वकीयपृथुत्वेन युक्तं यथावस्थितमेवेदं चिन्त्यते तदोत्सेधाङ्गुलात्प्रमाणाङ्गुलं चतुःशतगुणमेव भवति, यदा त्वर्धतृतीयोत्सेधाङ्गुललक्षणेन विष्कम्भेण शतचतुष्टयलक्षणं प्रमाणाङ्गुलदैर्ध्यं गुण्यते तदोत्सेधाङ्गुलविष्कम्भा सहस्राङ्गुलदीर्घा च प्रमाणाङ्गुलसूचिर्जायते, इदमुक्तं भवति—अर्धतृतीयोत्सेधाङ्गुलविष्कम्भे प्रमाणाङ्गुले तिस्रः श्रेणयः कल्प्यन्ते, प्रथमा उत्सेधाङ्गुलेनैकाङ्गुलविष्कम्भा शतचतुष्टयदीर्घा द्वितीयापि तावन्मानैव तृतीयापि दैर्घ्येण चतुःशतमानैव विष्कम्भतस्त्वर्धाङ्गुलप्रमाणा, ततश्चैतस्या दैर्घ्याच्छतद्वयं गृहीत्वा विष्कम्भोऽङ्गुलप्रमाणः संपाद्यते, तथा च सत्यङ्गुलशतद्वयदीर्घा अङ्गुलविष्कम्भा इयमपि सिद्धा, ततस्तिसृणामप्येतासामुपर्युपरि व्यवस्थापने उत्सेधाङ्गुलेनाङ्गुलसहस्रदीर्घा अङ्गुलविष्कम्भा प्रमाणाङ्गुलस्य सूचिः सिद्धा भवति, तत इमां सूचिमधिकृत्य उत्सेधाङ्गुलात्प्रमाणाङ्गुलं सहस्रगुणदीर्घमुक्तं, वस्तुतस्तु चतुःशतगुणदीर्घमेव, अत एव पृथ्वीपर्वतद्वीपपयोराशिविमानादिमानान्यनेनैव चतुःशतगुणेनार्धतृतीयाङ्गुललक्षणस्वविष्कम्भान्वितेनानीयन्ते न तु सहस्रगुणया अङ्गुलविष्कम्भया सूच्या इति तावद् वृद्धसम्प्रदायादवगतं, तत्त्वं तु केवलिनो विदन्तीति । तथा तदेवोत्सेधाङ्गुलं द्विगुणं सद् वीरस्य भगवतोऽपश्चिमतीर्थकृत एकमात्माङ्गुलं भणितं पूर्वाचार्यैः, वर्धमानस्वामी हि भगवान् आदेशान्तरादात्माङ्गुलेन चतुरशीतिरङ्गुलानि, उत्सेधाङ्गुलतस्तु सप्तहस्तमानत्वादष्टपष्ट्यधिकं शतं, तथा चानुयोगद्वारचूर्णिः—"वीरो आएसंतरओ आयंगुलेण चुलसीइअंगुलमुव्विद्धो उत्सेहंगुलओ सयमट्ठसट्ठं हवइ" इति, ततो द्वे उत्सेधाङ्गुले वीरस्यैकमात्माङ्गुलं भवति, अत्र च मतान्तराण्यधिकृत्य बहु वक्तव्यं तच्च नोच्यते ग्रन्थगौरवभयात् । इदं च त्रिविधमप्यङ्गुलं पुनः प्रत्येकं त्रिधा भवति, तद्यथा—सूच्यङ्गुलं प्रतराङ्गुलं घनाङ्गुलं च, तत्र दैर्घ्येणाङ्गुलायता बाहल्य-

तस्त्वेकप्रादेशिकी नभःप्रदेशश्रेणिः सूच्यङ्गुलमुच्यते, एतच्च सद्भावतोऽसंख्येयप्रदेशमप्यसत्कल्पनया सूच्याकारव्यवस्थापितप्रदेशत्रयनिष्पन्नं द्रष्टव्यं, स्थापना चेयं ०००, सूची सूच्यैव गुणिता प्रतराङ्गुलं, इदमपि परमार्थतोऽसंख्येयप्रदेशात्मकं असद्भावतस्त्वेषैवानन्तरदर्शिता त्रिप्रदेशात्मिका सूचिः तयैव गुण्यते, अतः प्रत्येकं प्रदेशत्रयनिष्पन्नसूचीत्रयात्मकं नवप्रदेशसंख्यं संपद्यते, स्थापना चेयं ⁝⁝⁝, प्रतरश्च सूच्या गुणितो दैर्घ्यविष्कम्भबाहल्येषु समसंख्यं घनाङ्गुलं भवति, दैर्घ्यादिषु त्रिष्वपि स्थानेषु समतालक्षणस्यैव समयचर्यया घनस्येह रूढत्वात्, प्रतराङ्गुलं तु दैर्घ्यविष्कम्भाभ्यामेव प्रदेशैः समं पिण्डतस्तस्य तत्रैकप्रदेशमात्रत्वादिति भावः, इदमपि सद्भावतो दैर्घ्यविष्कम्भबाहल्येषु प्रत्येकमसंख्येयमानमसत्प्ररूपणया तु सप्तविंशतिप्रदेशात्मकं, पूर्वोक्तत्रिप्रदेशात्मकसूच्याऽनन्तरप्रदर्शिते नवप्रदेशात्मके प्रतरे गुणिते एतावतामेव प्रदेशानां भावात्, एषां च स्थापनानन्तरनिर्दिष्टनवप्रदेशात्मकप्रतरस्याध उपरि च नव नव प्रदेशान् दत्त्वा भावनीया, तथा च सत्यायामविष्कम्भपिण्डैस्तुल्यविषयमापद्यत इति ॥ ९६ ॥ अथ येनाङ्गुलेन यन्मीयते तदाह—'आय' मित्यादि, आत्माङ्गुलेन वास्तु मिमीष्व, तच्च वास्तु त्रिधा—खातमुच्छ्रितमुभयं च, तत्र खातं—कूपभूमिगृहतडागादि उच्छ्रितं—धवलगृहादि उभयं—भूमिगृहादियुक्तं धवलगृहादि, तथा देहं—देवादीनां शरीरमुत्सेधप्रमाणतः—उत्सेधाङ्गुलेन मिमीष्व, प्रमाणाङ्गुलेन पुनर्नगपृथ्वीविमानादीनि मिमीष्व, तत्र नगा—मेर्वाद्याः पृथिव्यो—घर्माद्याः विमानानि—सौधर्मावतंसकादीनि, आदिशब्दाद्भवननरकावासद्वीपसमुद्राद्यपि प्रमाणाङ्गुलेन मिमीष्वेति २५४ ॥ ९७ ॥ इदानीं 'तमकायसरूवं'ति पञ्चपञ्चाशदधिकद्विशततमं द्वारमाह—

**जंबूदीवाउ असंखेज्जइमा अरुणवरसमुद्दाओ । बायालीससहस्से जगईउ जलं विलंघेउं ॥ ९८ ॥**
**समसेणीए सतरस एक्कवीसाइं जोयणसयाइं । उल्लसिओ तमरूवो वलयागारो अउक्काओ**

॥ ९९ ॥ तिरियं पवित्थरमाणो आवरयंतो सुरालयचउक्कं । पंचमकप्पे रिट्ठंमि पत्थडे चउद्दिसिं मिलिओ ॥ १४०० ॥ हेट्ठा मल्लयमूलट्ठिइट्ठिओ उवरि बंभलोयं जा । कुक्कुडपंजरगागारसंठिओ सो तमक्काओ ॥ १ ॥ दुविहो से विक्खंभो संखेज्जो अत्थि तह असंखेज्जो । पढमंमिवि विक्खंभो संखेज्जा जोयणसहस्सा ॥ २ ॥ परिहीऍ ते असंखा बीए विक्खंभपरिहिजोएहिं । हुंति असंखसहस्सा नवरमिमं होइ वित्थारो ॥ ३ ॥

जम्बूद्वीपादसङ्ख्येयतमो योऽसावरुणवरसमुद्रस्तमाश्रित्य द्विचत्वारिंशद्योजनसहस्राणि जगत्या जलं विलङ्घ्य समश्रेण्या—समभित्तितया एकविंशत्यधिकानि सप्तदश योजनशतानि यावद्वलयाकारस्तमोरूपो देवानामपि तत्रोद्योताभावेन महान्धकारात्मकत्वादप्काय उल्लसितः, अयमर्थः—एतस्माज्जम्बूद्वीपात्तिर्यगसङ्ख्यातद्वीपसमुद्रान् व्यतिक्रम्यारुणवरनामा द्वीपः समस्ति, तद्वेदिकापर्यन्ताद् द्विचत्वारिंशद्योजनसहस्राण्यरुणवरं समुद्रमवगाह्यात्रान्तरे जलोपरितनतलादूर्ध्वमेकविंशत्युत्तराणि सप्तदश योजनशतानि यावत्समभित्त्याकारतया गत्वा वलयाकृतिरप्कायमयो महान्धकाररूपस्तमस्कायः समुल्लसित इति, अयं च तिर्यक्प्रविस्तरन् सुरालयचतुष्कं—सौधर्मेशानसनत्कुमारमाहेन्द्ररूपं देवलोकचतुष्टयमावृण्वन्—आच्छादयन्नूर्ध्वं तावद्गतो यावत् पञ्चमे ब्रह्मलोकनामके कल्पे तृतीयेऽरिष्ठविमानप्रस्तटे चतसृष्वपि दिक्षु मिलित इति ॥ ९८ ॥ ९९ ॥ १०० ॥ अथ तमस्कायस्य संस्थानमाह—'हेट्ठे'त्यादि, अधस्ताद्—अधोभागे मल्लकमूलस्थितिस्थितो—मल्लकं—शरावं तस्य मूलं—बुध्नं तस्य स्थितिः—संस्थानं तया स्थितो—व्यवस्थितः, शरावबुध्नाकार इति भावः, उपरिष्टाच्च ब्रह्मलोकं यावत् कुर्कुटपञ्जरकाकारसंस्थितः सः—पूर्वोक्तस्वरूपस्तमस्कायो भवति, तमसां—तमिस्रपुद्गलानां कायो—राशिस्तमस्काय इति ॥ १ ॥ अथास्य

तमस्कायस्य विष्कम्भं परिधिं च प्राह—'दुविहो' इत्यादिगाथाद्वयं, द्विविधो—द्विप्रकारः 'से'त्ति तस्य तमस्कायस्य विष्कम्भो—विस्तारो भवति—सङ्ख्यातस्तथा असङ्ख्यातश्च, तत्र प्रथमे विष्कम्भे आदित आरभ्य ऊर्ध्वं सङ्ख्येययोजनानि यावत्सङ्ख्येया योजनसहस्राः प्रमाणतो भवन्ति, परिधौ—परिक्षेपे पुनस्त एव योजनसहस्रा असङ्ख्याताः, अधस्तमस्कायस्य सङ्ख्यातयोजनविस्तृतत्वेऽप्यसङ्ख्याततमद्वीपपरिक्षेपतो बृहत्तरत्वात्तत्परिक्षेपस्यासङ्ख्यातयोजनसहस्रप्रमाणत्वमविरुद्धं, आन्तरवहिःपरिक्षेपविभागस्तु नोक्तः, उभयस्याप्यसङ्ख्याततया तुल्यत्वादिति। तथा द्वितीये विष्कम्भे विष्कम्भपरिधियोगाभ्यां—विष्कम्भेन परिधिना च प्रत्येकमसङ्ख्याता योजनसहस्रा भवन्ति, नवरं—केवलमिदमसङ्ख्यातयोजनसहस्ररूपं प्रमाणं विस्तारे भवति, वलयाकारादूर्ध्वं यदाऽसौ तमस्कायः क्रमेण विस्तरति तदानीमिदं प्रमाणमवसेयमिति भावः, अस्य च तमस्कायस्य महत्त्वमित्थमागमविदः प्रवेदयन्ति, यथा—यो देवो महर्द्धिको यया गत्या तिसृभिश्चपुटिकाभिरेकविंशतिवारान् सकलं जम्बूद्वीपमनुपरिवृत्त्यागच्छेत् स एव देवस्तयैव गत्या षड्भिरपि मासैः सङ्ख्यातयोजनविस्तारमेव तमस्कायं व्यतिव्रजेत् नेतरमिति, यदा च कश्चिद्देवः परदेव्यासेवाहेवाकपररत्नापहारादिभिरपराधमाधत्ते तदा वलवद्देवभयात् प्रपलाय्य देवानामपि भूरिभयाविर्भावकत्वेन गमनविघातहेतौ तस्मिंस्तमस्काये निलीयत इति ॥२५५॥२॥३॥ सम्प्रति 'अणंतछक्कं'ति षट्पञ्चाशदधिकद्विशततमं द्वारमाह—

**सिद्धा १ निगोयजीवा २ वणस्सई ३ काल ४ पोग्गला ५ चेव। सव्वमलोगागासं ६ छप्पेएऽणंतया नेया ॥ ४ ॥**

सर्वे एव सिद्धाः—अपगतसकलकर्मकलंकाः तथा सर्वेऽपि सूक्ष्मवादरभेदभिन्ना निगोदजीवा—अनन्तकायिकजन्तवः तथा सर्वे वनस्पतयः—प्रत्येकानन्तवनस्पतिजीवाः काल इति—सर्वेऽतीतानागतवर्तमानसमयाः सर्वे पुद्गलाः—समस्तपुद्गलास्तिकायगताः परमाणवः तथा

सर्वं—समस्तमलोकाकाशं, अयं च सर्वशब्दः प्रत्येकं लिङ्गवचनपरिणामेन सर्वत्र संबन्धनीयः, स च तथैव संबन्धितः, एते—प्रदर्शितस्वरूपाः षडपि राशयोऽनन्तका ज्ञेयाः ॥ २५६ ॥ ४ ॥ इदानीं 'अट्ठंगनिमित्ताणं'ति सप्तपञ्चाशदधिकद्विशततमं द्वारमाह—

अंगं १ सुविणं २ च सरं ३ उप्पायं ४ अंतरिक्ख ५ भोमं च ६ । वंजण ७ लक्खण ८ मेव य
अट्ठपयारं इह निमित्तं ॥५॥ अंगप्फुरणाईहिं सुहासुहं जमिह भन्नइ तमंगं १ । तह सुसुमिणय-
दुस्सुमिणएहिं जं सुमिणयंति तयं २ ॥ ६ ॥ इट्ठमणिट्ठं जं सरविसेसओ तं सरंति विन्नेयं ३ ।
रुहिरवरिसाइ जंमिं जायइ भन्नइ तमुप्पायं ४ ॥ ७ ॥ गहवेहभूयअट्टहासपमुहं जमंतरिक्खं
तं ५ । भोमं च भूमिकंपाइएहिं नज्जइ वियारेहिं ६ ॥ ८ ॥ इह वंजणं मसाई ७ लंछणपमुहं तु
लक्खणं भणियं ८ । सुहअसुहसूयगाइं अंगाईयाइं अट्ठावि ॥ ९ ॥

अङ्गं स्वप्नः स्वर उत्पात आन्तरिक्षं भौमं व्यञ्जनं लक्षणं चेत्येवमष्टप्रकारं—अष्टविधमिह—शास्त्रे निमित्तं भवति, अतीतानागतवर्तमानानामतीन्द्रियभावानामधिगमे निमित्तं—हेतुर्यद्वस्तुजातं तन्निमित्तं, सूत्रे स्वप्नादिपदेषु प्राकृतत्वान्नपुंसकत्वमिति ॥ ५ ॥ साम्प्रतमष्टप्रकारमपि निमित्तं क्रमेण व्याख्यातुमाह—'अंगे'त्यादिगाथाचतुष्कं, अङ्गस्फुरणादिभिः—शरीरावयवस्पन्दप्रमाणादिभिर्यदिह वर्तमानमतीतमनागतं वा शुभं वा—प्रशस्तमशुभं वा—अप्रशस्तं अन्यस्मै कथ्यते तद्भण्यतेऽङ्गाख्यं निमित्तं, यथा—"दक्षिणपार्श्वे स्पन्दनमभिधास्ये तत्फलं स्त्रिया वामे । पृथिवीलाभः शिरसि स्थानविवृद्धिर्ललाटे स्यात् ॥ १ ॥" इत्यादि, १ तथा सुस्वप्नदुःस्वप्नाभ्यां यत्कथ्यते शुभाशुभं तत्स्वप्नाख्यं निमित्तं, यथा—"देवेज्यात्मजबान्धवोत्सवगुरुच्छत्राम्बुजप्रेक्षणं, प्राकारद्विरदाम्बुदद्रुमगिरिप्रासादसंरोहणम् । अम्भोधेस्तरणं सुरा-

मृतपयोऽभ्रां च पानं तथा, चन्द्रार्कग्रसनं स्थितं शिवपदे स्वापे प्रशस्तं नृणाम् ॥ १ ॥" इत्यादि २, इष्टमनिष्टं च यत्स्वरविशेषतः षड्जादिस्वरसप्तकविभागतः शकुनरुतरूपाद्वा परस्मै कथ्यते तत् स्वरनामकं निमित्तं, यथा—"सज्जेण लब्भए वित्तिं, कयं च न विणस्सइ। गावो मित्ता य पुत्ता य, नारीणं चेव वल्लहो ॥ १ ॥" इत्यादि, यद्वा—'चिलिचिलिसद्दो पुन्नो सामाए सूलिसूलि धन्नो उ। चेरी चेरी दित्तो चिक्कुली लाभहेउत्ति ॥१॥' इत्यादि ३, सहजरुधिरवृष्ट्यादि यस्मिन् जायते (भण्यते) तदुत्पाताभिधं निमित्तं, आदिशब्दादस्थिवृष्ट्यादिपरिग्रहः, यथा—"मज्जानि रुधिरास्थीनि, धान्याङ्गारान् वसां तथा। मघवा वर्षते यत्र, भयं विद्याच्चतुर्विधम् ॥१॥" इत्यादि ४, ग्रहवेधभूताट्टहासप्रमुखमान्तरिक्षं निमित्तं, तत्र ग्रहवेधो—ग्रहस्य ग्रहमध्येन निर्गमः, भूताट्टहासः—अतिमहानाकाशे आकस्मिकः किलकिलारावः, यथा—"भिनत्ति सोमं मध्येन, ग्रहेष्वन्यतमो यदा। तदा राजभयं विद्यात्, प्रजाक्षोभं च दारुणम् ॥ १ ॥" इत्यादि, प्रमुखग्रहणाद्गन्धर्वनगरादिपरिग्रहः, यथा—"कपिलं शस्यघाताय, माञ्जिष्ठं हरणं गवाम्। अव्यक्तवर्णं कुरुते, बलक्षोभं न संशयः ॥ १ ॥ गंधर्वनगरं स्निग्धं, सप्राकारं सतोरणम्। सौम्यां दिशं समाश्रित्य, राज्ञस्तद्विजयङ्करम् ॥ २ ॥" इत्यादि ५, भूमिकम्पादिभिर्विकारैः शुभाशुभं यद् ज्ञायते तद्भौमं निमित्तं, यथा—"शब्देन महता भूमिर्यदा रसति कम्पते। सेनापतिरमात्यश्च, राजा राष्ट्रं च पीड्यते ॥ १" ६, इह—अस्मिन् शास्त्रे व्यञ्जनं—मषादि, लाञ्छनप्रमुखं तु लक्षणं भणितं, यथा—"नाभ्यधस्ताद्र्ध्वेयस्या, लाञ्छनं मशकोऽपि वा। कुङ्कुमोदकसङ्काशं, सा प्रशस्ता निगद्यते ॥१॥" इत्यादि, **निशीथग्रन्थे** पुनरित्थमुक्तं—"माणाइगं लक्खणं मसाइगं वंजणं, अहवा जं सरीरेण सह समुप्पन्नं तं लक्खणं पच्छा उप्पन्नं वंजण" मिति, तदेवं शुभाशुभसूचकान्यङ्गादीन्यष्टावपि प्रतिपादितानीति, लक्षणानि च पुरुषविभागेनेत्थं **निशीथे** प्रोक्तानि—"पागयमणुयाणं बत्तीसं अट्ठसयं बलदेववासुदेवाणं अट्टसहस्सं चक्कव-

द्वितित्थगराणं, जे फुडा हत्थपायाइसु लक्खिज्जंति तेसिं पमाणं भणियं, जे पुण अंतो स्वभावसत्त्वादयः तेहिं सह बहुतरा भवता-
त्यादि, २५७, ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ संप्रति 'माणुम्माणपमाणं'ति अष्टपञ्चाशदधिकद्विशततमं द्वारमाह—

**जलदोणमद्धभारं समुहाइं समूसिओ उ जो नव उ। माणुम्माणपमाणं तिविहं खलु लक्खणं नेयं ॥ १० ॥**

मानं—जलद्रोणप्रमाणता, उन्मानं—तुलारोपितस्यार्धभारप्रमाणता, यस्य स्वमुखानि नवैव समुच्छ्रितः स पुमान् प्रमाणोपेतो भवति,
अयमर्थः—पानीयपरिपूर्णायां पुरुषप्रमाणादीषदतिरिक्तायां महत्यां कुण्डिकायां प्रवेशितो यः पुरुषो जलस्य द्रोणं—सर्वार्धघटिकाघटस्वरूपं
निष्कासयति द्रोणेन जलस्योनां वा तां पूरयति स पुरुषो मानयुक्तो भवति, तथा सारपुद्गलोपचितत्वात् तुलायामारोपितः सन्नर्धभारं
यः पुरुषस्तुलयति स उन्मानयुक्तो भवति, तथा यद्यस्यात्मीयमङ्गुलं तेनात्मनोऽङ्गुलेन द्वादशाङ्गुलानि मुखं प्रमाणयुक्तं भवति, अनेन च
मुखप्रमाणेन नव मुखानि सर्वोऽपि पुरुषः प्रमाणयुक्तो भवति, प्रत्येकं द्वादशाङ्गुलैर्नवभिर्मुखैरष्टोत्तरं शतमङ्गुलानां संपद्यते, ततश्चैतावदु-
च्छ्रयः पुमान् प्रमाणयुक्तो भवतीति, तदेवं मानोन्मानप्रमाणरूपमेतत् त्रिविधं लक्षणमुत्तमपुरुषाणां खलु निश्चयेन ज्ञेयमिति, २५८
॥ १० ॥ इदानीं 'अट्ठारस भक्खभोज्जाइं'त्येकोनषष्ट्यधिकद्विशततमं द्वारमाह—

**सूओ १ यणो २ जवन्नं ३ तिन्नि य मंसाइं ६ गोरसो ७ जूसो ८। भक्खा ९ गुललावणिया १०**
**मूलफला ११ हरियगं १२ डागो १३ ॥ ११ ॥ होइ रसालू य १४ तहा पाणं १५ पाणीय १६**
**पाणगं १७ चेव। अट्ठारसमो सागो १८ निरुवहओ लोइओ पिण्डो ॥ १२ ॥ जलथलखहयर-**

**मंसाइं तिन्नि जूसो उ जीरयाइजुओ । मुग्गरसो भक्खाणि य खंडखज्जयपमोक्खाणि ॥ १३ ॥ गुललावणिया गुडप्पपडीउ गुलहाणियाउ वा भणिया । मूलफलंतिक्कपयं हरियगमिह जीरयाईयं ॥ १४ ॥ डाओ वत्थुलराईण भज्जिया हिंगुजीरयाइजुया । सा य रसालू जा मज्जियत्ति तल्लक्खणं चेयं ॥१५॥ दो घयपला महु पलं दहियस्सऽद्धाढयं मिरिय वीसा । दस खंडगुलपलाइं एस रसालू निवइजोगो ॥ १६ ॥ पाणं सुराइयं पाणियं जलं पाणगं पुणो एत्थ । दक्खावाणियपमुहं सागो सो तक्कसिद्धं जं ॥ १७ ॥**

सूपः ओदनः यवान्नं त्रीणि मांसानि गोरसो यूपः भक्ष्याणि गुडलावणिका मूलफलानि हरितकं डाकः, तथा भवति रसाला, आर्षत्वा रसालू इति निर्देशः, तथा पानं पानीयं पानकं अष्टादशश्च शाकः, एपोऽष्टादशविधो निरुपहतो—निर्गत उपहतः—दोषो यस्मादसौ निरुपहतो—निर्दोष इत्यर्थः, लौकिको—निर्विवेकलोकप्रतीतः पिण्डः—आहार इति ॥ ११ ॥ १२ ॥ तत्र सूपो—दालिः ओदनः—कूरः, यवान्नं—यवनिष्पन्नं परमान्नं, गोरसो—दुग्धदधिघृतप्रभृतिकः, शेषं च सूत्रकृदेव क्रमेण विवृणोति—'जले'त्यादिकं गाथापञ्चकं, जलंचरस्थलचरखचरजीवसंबन्धीनि त्रीणि मांसानि, तत्र जलचरा—मत्स्यादयः स्थलचरा—हरिणादयः खचरा—लावकादयः, तथा जूषो—जीरककटुभाण्डादिमियुतः सुसंभृतो मुद्गरसः, तथा भक्ष्याणि—खण्डखाद्यकप्रमुखाणि, खाद्यकं—खज्जकं, तत्र खण्डेन खरण्टितं, तत्प्रमुखाणि, तथा गुललावणिका—गुडपर्पटिका, पूर्वदेशीयप्रधानगुडकृता या पर्पटिकेत्यर्थः, अथवा गुडमिश्रा धाना गुडधाना भणिता गुललावणिकेति, 'मूलकफल'मिति त्वेकमेव पदं माह्यं, नतु द्वयं, तत्र मूलानि अश्वगन्धादीनां फलानि सहकारादीनां, तथा हरितकमिह जीर-

कादिपत्रनिर्मितं, तथा डाको वस्तुलराजिकादीनां मर्जिकाहिङ्गुजीरकादिभिर्युता सुसंस्कृता, सा च रसाला ज्ञेया या मार्जितेति लोके प्रसिद्धा, तस्याश्चेदं—वक्ष्यमाणं स्वरूपं। तदेवाह—'दो घयपले' त्यादि, द्वे पले घृतस्य एकं पलं मधुनः अर्धाढको दध्नः विंशतिर्मरिचानि वर्तितानि दश च पलानि खण्डस्य गुडस्य वा, एतैः पदार्थैर्मिलितै रसाला निष्पद्यते, एषा च नृपतीनां—राज्ञामुपलक्षणत्वादीश्वरलोकस्य योग्या—उचितेति, तथा पानं—सुरादि, आदिशब्दात्सर्वमद्यभेदपरिग्रहः, तथा पानीयं—सुशीतलं सुस्वादु च जलं, पानकं पुनरत्र—द्राक्षाखर्जूरादिकृतं पानकप्रमुखं, तथा शाकः स उच्यते यत्तक्रेण सिद्धं—निष्पन्नं वटकादीति, २५९ ॥ १३ ॥ १४ ॥१५॥ १६ ॥ १७॥

सम्प्रति 'छट्ठाणवुड्ढिहाणि'त्ति षष्ट्यधिकद्विशततमं द्वारमाह—

**वुड्ढी वा हाणीवा अणंत १ अस्संख २ संखभागेहिं ३। वत्थूण संख ४ अस्संख ५ णंत ६ गुणणेण**
**य विहेया ॥ १८ ॥**

अनन्ताऽसङ्ख्यातसङ्ख्यातभागैः सङ्ख्यातासङ्ख्यातानन्तगुणेन च वस्तूनां—पदार्थानां वृद्धिर्वा हानिर्वा विधेया, इह षट्स्थानके त्रीणि स्थानानि भागेन—भागहारेण वृद्धानि हीनानि वा भवन्ति, त्रीणि च स्थानानि गुणनेन—गुणकारेण, **'भागो तिसु गुणणा तिसु'** इति वचनात्, तत्र भागहारेऽनन्तासङ्ख्यातसङ्ख्यातलक्षणः क्रमः, गुणकारे च सङ्ख्यातासङ्ख्यातानन्तलक्षण इति, अयमर्थः—सर्वविरतिविशुद्धिस्थानादीनां वस्तूनां वृद्धिर्वा हानिर्वा चिन्त्यमाना षट्स्थानगता प्राप्यते, तद्यथा—अनन्तभागवृद्धिः असङ्ख्यातभागवृद्धिः सङ्ख्यातभागवृद्धिः सङ्ख्यातगुणवृद्धिः असङ्ख्यातगुणवृद्धिः अनन्तगुणवृद्धिश्च, एवं हानिरपि, तत्र किञ्चित्सुगमत्वात्सर्वविरतिविशुद्धिस्थानान्येवाश्रित्य लेशतो भाव्यते—इह हि सर्वोत्कृष्टादपि देशविरतिविशुद्धिस्थानात् सर्वजघन्यमपि सर्वविरतिविशुद्धिस्थानमनन्तगुणं,

अनन्तगुणता च सर्वत्रापि षट्स्थानकचिन्तायां सर्वजीवानन्तकप्रमाणेन गुणकारेण द्रष्टव्या, इयमत्र भावना—सर्वजघन्यमपि सर्वविरतिविशुद्धिस्थानं केवलिप्रज्ञाच्छेदनकेन विच्छिद्यते, छित्त्वा च निर्विभागा भागाः पृथक्क्रियन्ते, ते च निर्विभागा भागाः सर्वसंकलनया विभाव्यमाना यावन्तः सर्वोत्कृष्टदेशविरतिविशुद्धिस्थानगता निर्विभागाः भागाः सर्वजीवानन्तकरूपेण गुणकारेण गुण्यमाना जायन्ते तावत्प्रमाणाः प्राप्यन्ते, अत्राप्ययं भावार्थः—इह किलासत्कल्पनया सर्वोत्कृष्टस्य देशविरतिविशुद्धिस्थानस्य निर्विभागा भागा दश सहस्राणि, सर्वजीवानन्तकप्रमाणश्च राशिः शतं, ततस्तेन शतसङ्ख्येन सर्वजीवानन्तकमानेन राशिना दशसहस्रसङ्ख्याः सर्वोत्कृष्टदेशविरतिविशुद्धिस्थानगता निर्विभागा भागा गुण्यन्ते, जाता दश लक्षाः, एतावन्तः किल सर्वजघन्यस्यापि सर्वविरतिविशुद्धिस्थानस्य निर्विभागा भागा भवन्ति, एते च सर्वजघन्यचारित्रसत्कविशुद्धिस्थानगता निर्विभागा भागाः समुदिताः सन्तः सर्वजघन्यं संयमस्थानं भण्यते, तस्मादनन्तरं यद् द्वितीयं संयमस्थानं तत् पूर्वस्मादनन्तभागवृद्धं, किमुक्तं भवति ?—प्रथमसंयमस्थानगतनिर्विभागभागापेक्षया द्वितीयसंयमस्थाने निर्विभागा भागा अनन्ततमेन भागेनाधिका भवन्तीति, तस्मादपि यदनन्तरं तृतीयं तत्ततोऽनन्तभागवृद्धं, एवं पूर्वस्मात् पूर्वस्मादुत्तरोत्तराणि निरन्तरमनन्तभागवृद्धानि संयमस्थानानि अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणानि वाच्यानि, एतानि च समुदितानि संयमस्थानान्येकं कण्डकं भवति, कण्डकं नाम समयपरिभाषया अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणा सङ्ख्याऽभिधीयते, उक्तं च—"कण्डंति एत्थ भन्नइ अंगुलभागो असंखेज्जो" [कण्डकमिति भण्यतेऽङ्गुलभागोऽसङ्ख्येयः] तस्माच्च कण्डकात् परतो यदन्यदनंतरं संयमस्थानं तत् पूर्वस्मादसङ्ख्येयभागाधिकं, एतदुक्तं भवति—पाश्चात्यकण्डकसत्कचरमसंयमस्थानगतनिर्विभागभागापेक्षया कण्डकानन्तरे संयमस्थाने निर्विभागभागगतप्रदेशा असङ्ख्येयतमेन भागेनाधिकाः प्राप्यन्ते, ततः पराणि

पुनर्यान्यन्यानि संयमस्थानानि अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणानि तानि यथोत्तरमनन्तभागवृद्धान्यवसेयानि, एतानि च समुदितानि द्वितीयं कण्डकं, तस्य च द्वितीयकण्डकस्योपरि यदन्यत् संयमस्थानं तत्पुनरपि द्वितीयकण्डकसत्कचरमसंयमस्थानगतनिर्विभागभागापेक्षयाऽसङ्ख्येयभागवृद्धं, ततो भूयोऽपि ततः पराणि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरप्येकमसङ्ख्येयभागवृद्धं संयमस्थानं, एवमनन्तभागाधिकैः कण्डकप्रमाणैः संयमस्थानैर्व्यवहितान्यसङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्तान्यपि कण्डकमात्राणि भवन्ति, चरमादसङ्ख्येयभागाधिकसंयमस्थानात् पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि संयमस्थानानि वाच्यानि, ततः परमेकं सङ्ख्येयभागाधिकं संयमस्थानं, ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि तेनैव क्रमेणाभिधाय पुनरप्येकं सङ्ख्येयभागाधिकं संयमस्थानं वाच्यं, इदं च द्वितीयं सङ्ख्येयभागाधिकं स्थानं, ततोऽनेनैव क्रमेण तृतीयं वाच्यं, अमूनि चैवं सङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति, तत उक्तक्रमेण भूयोऽपि सङ्ख्येयभागाधिकस्थानप्रसंगे सङ्ख्येयगुणाधिकमेकं स्थानं वक्तव्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्राग्व्यतिक्रान्तानि तावन्ति भूयोऽपि तथैव वाच्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं स्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वाच्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं स्थानं, अमून्यप्येवं सङ्ख्येयगुणाधिकानि स्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति; ततस्तेनैव क्रमेण पुनः सङ्ख्येयगुणाधिकस्थानप्रसंगेऽसङ्ख्येयगुणाधिकं स्थानं वाच्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव भूयोऽपि वाच्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं संयमस्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वाच्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं, अमूनि चैवमसङ्ख्येयगुणाधिकानि संयमस्था-

नानि तावद्वाच्यानि यावत्कण्डकमात्राणि, ततः पूर्वपरिपाट्या पुनरप्यसङ्ख्येयगुणाधिकस्थानप्रसङ्गेऽनन्तगुणाधिकं संयमस्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागुक्तानि भवन्ति तावन्ति तथैव वाच्यानि, ततो भूयोऽप्येकमनन्तगुणाधिकं स्थानं, ततः पुनरपि मूलादारभ्य तावन्ति स्थानानि तथैव वाच्यानि, ततः पुनरप्येकमनन्तगुणाधिकं स्थानं, एवमनन्तगुणाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति, ततो भूयोऽपि तेषामुपरि पञ्चवृद्ध्यात्मकानि संयमस्थानानि मूलादारभ्य तथैव वाच्यानि, यत्पुनरनन्तगुणवृद्धिस्थानं तन्न प्राप्यते, षट्स्थानकस्य परिसमाप्तत्वात्, इत्थंभूतान्यसङ्ख्येयानि कण्डकानि समुदितानि एकं षट्स्थानकं भवति, अस्माच्च षट्स्थानकादूर्ध्वमुक्तक्रमेणैव द्वितीयं षट्स्थानकमुत्तिष्ठति, एवमेव च तृतीयं, एवं षट्स्थानकान्यपि तावद्वाच्यानि यावदसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति, उक्तं च—"छट्ठाणगअवसाणे अन्नं छट्ठाणयं पुणो अन्नं। एवमसंखा लोगा छट्ठाणाणं मुणेयव्वा ॥ १ ॥" अस्मिंश्च षट्स्थानके यादृशोऽनन्ततमो भागोऽसङ्ख्येयतमः सङ्ख्येयतमो वा गृह्यते यादृशस्तु सङ्ख्येयोऽसङ्ख्येयोऽनन्तो वा गुणकारः स निरूप्यते—तत्र यदपेक्षयाऽनन्तगुणवृद्धता तस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागो ह्रियते हृते च भागे यल्लब्धं सोऽनन्ततमो भागः तेनाधिकमुत्तरं संयमस्थानं, किमुक्तं भवति ?—प्रथमस्य संयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति ये लभ्यन्ते तावत्प्रमाणैर्निर्विभागैर्भागैर्द्वितीयसंयमस्थाने निर्विभागा भागा अधिकाः प्राप्यन्ते, द्वितीयसंयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति यावन्तो लभ्यन्ते तावत्प्रमाणैर्निर्विभागैर्भागैरधिकास्तृतीये संयमस्थाने निर्विभागा भागाः प्राप्यन्ते, एवं यद्यत्संयमस्थानमनन्तभागवृद्धमुपलभ्यते तत्तत्पाश्चात्यस्य संयमस्थानस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति यद्यल्लभ्यते तावत्प्रमाणेनानन्ततमेन भागेनाधिक्यमवगन्तव्यं। असङ्ख्येयभा-

गाधिकानि पुनरप्येवं–पाश्चात्यस्य संयमस्थानस्य सत्कानां निर्विभागभागानामसङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यद्यल्लभ्यते सोऽसङ्ख्येयतमो भागः, ततस्तेनासङ्ख्येयतमेन भागेनाधिकान्यसङ्ख्येयभागाधिकानि स्थानानि वेदितव्यानि, सङ्ख्येयभागाधिकानि त्वेवं–पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्योत्कृष्टेन सङ्ख्येयेन भागे हृते सति यद्यल्लभ्यते स सङ्ख्येयतमो भागः, ततस्तेन सङ्ख्येयतमेन भागेनाधिकानि स्थानानि वेदितव्यानि, सङ्ख्येयगुणवृद्धानि पुनरेवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य ये ये निर्विभागा भागास्ते ते उत्कृष्टेन सङ्ख्येयकमानेन राशिना गुण्यन्ते गुणिते च सति यावन्तो यावन्तो भवन्ति तावत्तावत्प्रमाणानि सङ्ख्येयगुणाधिकानि स्थानानि द्रष्टव्यानि, एवमसङ्ख्येयगुणवृद्धान्यनन्तगुणवृद्धानि च भावनीयानि, नवरमसङ्ख्येयगुणवृद्धौ पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य निर्विभागा भागा असङ्ख्येयलोकाकाशप्रदेशप्रमाणेनासङ्ख्येयेन गुण्यन्ते, अनन्तगुणवृद्धौ तु सर्वजीवप्रमाणेनानन्तेनेति । अयं च षट्स्थानकविचारः स्थापनां विना मन्दबुद्धिभिः सम्यगवबोध्धुं न शक्यते, सा च स्थापना कर्मप्रकृतिपटेभ्यः प्रतिपत्तव्या, विस्तरभयात्तु नेह प्रदर्श्यते, केवलं कियन्तमपि स्थानाशून्यार्थं स्थापनाप्रकारं प्रकाशयामः, तथाहि—प्रथमं तावत्तिर्यक्पङ्क्तौ चत्वारो विन्दवः स्थाप्यन्ते, तेषां च कण्डकमिति संज्ञा, सर्वेषामपि चैतेषामन्योऽन्यमनन्तभागवृद्ध्या वृद्धिरवसेया, ततस्तेषामग्रतोऽसङ्ख्यातभागवृद्धिसंज्ञक एककः स्थाप्यते, ततो भूयोऽपि चत्वारो विन्दवः, तत एकक इत्यादि तावदवसेयं यावद्विंशतिविन्दवश्चत्वारश्चैकका जाताः, तदनु सङ्ख्यातभागवृद्धिसंज्ञको द्विकः स्थाप्यते, ततः पुनरपि विंशतिर्विन्दवश्चत्वारश्चैककाः, ततो द्वितीयो द्विकः, एवं विंशतेर्विंशतेर्विन्दूनामन्तराऽन्तरा चतुर्णां चतुर्णामेककानामवसाने तृतीयचतुर्थावपि द्विकौ क्रमेण स्थाप्यौ, तदनु भूयोऽपि चतुर्थद्विकस्याग्रे विंशतिविन्दवश्चत्वारश्चैकका:, एवं च जातं विन्दूनां शतं, एककानां विंशतिश्चत्वारश्च द्विकाः, अत्रान्तरे चतुर्णां विन्दूनामग्रतः सङ्ख्यातगुणवृद्धिसंज्ञकः प्रथमस्त्रिकः

संस्थाप्यते, ततः पुनरपि बिन्दूनां शतादेककानां विंशतेर्द्विकानां चतुष्टयाच्च परतो द्वितीयस्त्रिकः स्थाप्यते, एवं बिन्दूनां शते एककानां विंशतौ द्विकानां च चतुष्टये चतुष्टयेऽतिक्रान्ते तृतीयश्चतुर्थावपि त्रिकौ स्थाप्यौ, तदनु चतुर्थत्रिकस्याप्यग्रे बिन्दूनां शतमेककानां विंशतिर्द्विकानां चतुष्टयं च स्थाप्यते, ततो जातानि पञ्च शतानि बिन्दूनां शतमेककानां विंशतिर्द्विकानां चत्वारश्च त्रिकाः, अत्रान्तरे चतुर्णां बिन्दूनामग्रतोऽसङ्ख्यातगुणवृद्धिसंज्ञकः प्रथमचतुष्कः स्थाप्यते, ततो भूयोऽपि पञ्च शतानि बिन्दूनां, शतमेककानां विंशतिर्द्विकानां चत्वारश्च त्रिकाः प्रागिव स्थाप्यन्ते, ततो द्वितीयचतुष्कः स्थाप्यः, एवं बिन्दूनां शतपञ्चके एककानां शते द्विकानां विंशतौ त्रिकाणां चतुष्टये चतुष्टये चातिक्रान्ते तृतीयचतुर्थावपि चतुष्कौ क्रमेण स्थाप्यौ, ततश्चतुर्थचतुष्कस्याग्रे पञ्चमचतुष्कयोग्यं दलिकं स्थापयित्वा अनन्तगुणवृद्धिसंज्ञकः प्रथमः पञ्चको न्यस्यते, एवमनेनैवानन्तरोक्तेन क्रमेण द्वितीयतृतीयचतुर्थां अपि पञ्चका न्यसनीयाः, ततश्चतुर्थपञ्चकस्याप्यग्रे पञ्चमपञ्चकोचितं दलिकं लिख्यते, न च पञ्चकः स्थाप्यते, तत आद्यन्तयोः प्रत्येकं बिन्दुचतुष्टयेन प्रथमं षट्स्थानं समाप्यते, यदा पुनः प्रथमानन्तरं द्वितीयं षट्स्थानकं स्थापयितुमिष्यते तदा तदपेक्षया प्रथमं पृथक्चत्वारो बिन्दवः स्थाप्यन्ते, तदनन्तरमेककादिः सर्वोऽपि पूर्वोक्तविधिः क्रमेण कर्तव्य इति, साम्प्रतमङ्कानां बिन्दूनां च सर्वसङ्ख्या कथ्यते—तत्रैकस्मिन् षट्स्थानके चत्वारः पञ्चका भवन्ति, ततः पञ्चभिर्वा गुणयेदिति करणवशाच्चतुर्णां पञ्चकानां पञ्चभिर्गुणने लब्धा विंशतिचतुष्काः, एतेषामपि पञ्चभिर्गुणने लब्धं शतं त्रिकाणां, तेषामपि पञ्चभिर्गुणने लब्धानि पञ्च शतानि द्विकानां, तेषामपि च पञ्चभिर्गुणने लब्धे द्वे सहस्रे सार्धे एककानां, तेषामपि च पञ्चभिर्गुणने लब्धानि द्वादश सहस्राणि सार्धानि बिन्दूनां १२५००, इयमेकस्मिन् षट्स्थाने सर्वसङ्ख्या, एवं शेषेष्वपि षट्स्थानकेषु प्रतिपत्तव्यमिति, २६०॥१८॥ इदानीं 'अवहरिउं जाइं नेव तीरंति'त्येकषष्ट्यधिकद्विशततमं द्वारमाह—

समणी १ मवगयवेयं २ परिहार ३ पुलाय ४ मप्पमत्तं ५ च । चउदसपुव्विं ६ आहारगं च ७ न य कोइ संहरइ ॥ १९ ॥

श्रमणीं—अजिह्मब्रह्मचरणशरणां साध्वीं अपगतवेदं—क्षपितवेदं 'परिहार'त्ति प्रतिपन्नपारिहारिकतपश्चरणं पुलाकं—लब्धिपुलाकं अप्रमत्तं—अप्रमत्तसंयतं चतुर्दशपूर्विणं—चतुर्दशपूर्वधरं आहारकं च—आहारकशरीरिणं नैव कोऽपि—विद्याधरदेवादिः (ग्रन्थाग्रं १७०००) संहरति—प्रत्यनीकतयाऽनुकम्पया अनुरागेण वोत्क्षिप्यान्यत्र क्षिपति, इह च न सर्वोऽपि चतुर्दशपूर्वधर आहारकलब्धिमान् भवति, किंतु कश्चिदेवेति ज्ञापनार्थमाहारकग्रहणं ॥ २६१ ॥ १९ ॥ इदानीं 'अंतरदीव'त्ति द्विषष्ट्यधिकं द्विशततमं द्वारमाह—

चुल्लहिमवंतपुव्वावरेण विदिसासु सायरं तिसए । गंतूणंतरदीवा तिन्नि सए हुंति विच्छिन्ना ॥ २० ॥ अउणावन्ननवसए किंचूणे परिहि तेसिमे नामा । एगोरुअ १ आभासिय २ वेसाणी चेव ३ नंगूली ४ ॥ २१ ॥ एएसिं दीवाणं परओ चत्तारि जोयणसयाणि । ओगाहिऊण लवणं सपडिदिसिं चउसयपमाणा ॥ २२ ॥ चत्तारंतरदीवा हय ५ गय ६ गोकन्न ७ संकुलीकन्ना ८ । एवं पंचसयाइं छस्सय सत्तट्ठ नव चेव ॥ २३ ॥ ओगाहिऊण लवणं विक्खंभोगाहसरिसया भणिया । चउरो चउरो दीवा इमेहिं नामेहिं नायव्वा ॥ २४ ॥ आयंसमिंढगमुहा अयोमुहा गोमुहा य चउरोए १२ । अस्समुहा हत्थिमुहा सीहमुहा चेव वग्घमुहा १६ ॥ २५ ॥ तत्तो य आसकन्ना हरिकन्न अकन्न कन्नपावरणा २० । उक्कमुहा मेहमुहा विज्जुमुहा विज्जुदंता य २४ ॥ २६ ॥

**घणदंत लट्ठदंता य गूढदंता य सुद्धदंता य २८। वासहरे सिहरिंमि य एवं चिय अट्ठवीसावि ॥ २७ ॥ तिन्नेव हुंति आई एगुत्तरवड्ढिया नवसयाओ। ओगाहिऊण लवणं तावइयं चेव विच्छिन्ना ॥ २८ ॥**

इह जम्बूद्वीपे भरतस्य हैमवतस्य च क्षेत्रस्य सीमाकारी पूर्वापरपर्यन्ताभ्यां लवणार्णवजलसंस्पर्शी महाहिमवदपेक्षया क्षुल्लो–लघुर्हिमवन्नामा पर्वतः समस्ति, तस्य लवणार्णवजलसंस्पर्शादारभ्य पूर्वस्यां पश्चिमायां च दिशि प्रत्येकं द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, तत्र ईशान्यां दिशि या निर्गता दंष्ट्रा तस्यां हिमवतः पर्यन्तादारभ्य त्रीणि योजनशतानि लवणसमुद्रं गत्वा–अवगाह्य अत्रान्तरे योजनशतत्रयायामविष्कम्भः किञ्चिन्न्यूनैकोनपञ्चाशदधिकनवयोजनशतपरिरय एकोरुकनामा द्वीपो वर्तते, अयं च पञ्चधनुःशतप्रमाणविष्कम्भया गव्यूतद्वयोच्छ्रितया पद्मवरवेदिकया वनखण्डेन च सर्वतः परिमण्डितः, एवं सर्वेऽप्यन्तरद्वीपाः प्रत्येकं पद्मवरवेदिकया वनखण्डेन च परिक्षिप्तपरिसराः समवसेयाः, एवं तस्यैव हिमवतः पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीय दंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्तते, तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्यन्तादारभ्य दक्षिणपश्चिमायां दिशि नैर्ऋतकोणे इत्यर्थः त्रीणि योजनशतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि यथोक्तप्रमाणो वैपाणिकनामा द्वीपः, तथा तस्यैव हिमवतः पश्चिमायामेव दिशि पर्यन्तादारभ्य पश्चिमोत्तरस्यां दिशि वायव्यकोणे इत्यर्थः त्रीणि योजनशतानि लवणसमुद्रमध्ये चतुर्थी दंष्ट्रामतिक्रम्यात्रान्तरे पूर्वप्रमाणो नाङ्गोलिकनामा द्वीपः, एवमेते हिमवतश्चतसृष्वपि विदिक्षु तुल्यप्रमाणाश्चत्वारोऽन्तरे–लवणसमुद्रमध्ये द्वीपा अन्तरद्वीपा अवतिष्ठन्ते, तत एतेषामेकोरुकादीनां चतुर्णां द्वीपानां परतः 'सपडिदिसं'ति प्रत्येकं पूर्वो-

त्तरादिविदिक्षु चतसृष्वपि चत्वारि चत्वारि योजनशतानि लवणसमुद्रमवगाह्य चतुर्योजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातश्चतुर्योजनशतप्रमाणान्तरा हयकर्णगजकर्णगोकर्णशष्कुलीकर्णनामानश्चत्वारोऽन्तरद्वीपाः, तद्यथा—एकोरुकस्य परतो हयकर्णः आभासिकस्य परतो गजकर्णः वैषाणिकस्य परतो गोकर्णः नङ्गोलिकस्य परतः शष्कुलीकर्ण इति, एवमग्रेऽपि भावना कार्या, तत एतेषामपि हयकर्णादीनां चतुर्णां द्वीपानां परतः पुनरपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं पञ्च पञ्च योजनशतानि व्यतिक्रम्य पञ्चयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः पञ्चयोजनशतप्रमाणान्तरा आदर्शमुखमेण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपाः, एतेषामप्यादर्शमुखादीनां चतुर्णां द्वीपानां परतो भूयोऽपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं षट् षट् योजनशतानि व्यतिक्रम्य षट्षड्योजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः षड्योजनशतप्रमाणान्तरा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानश्चत्वारो द्वीपाः, एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो भूयो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं सप्तयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः सप्तयोजनशतप्रमाणान्तरा अश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः, एतेषामप्यश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकमष्टावष्टौ योजनशतान्यतिक्रम्याष्टयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातोऽष्टयोजनशतप्रमाणान्तरा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः, ततोऽमीषामप्युल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं नवनवयोजनशतान्यतिक्रम्य नवयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातो नवयोजनशतप्रमाणान्तरा घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपाः, एवमेते हिमवति पर्वते चतसृषु विदिक्षु व्यवस्थिताः सर्वसंख्यया अष्टाविंशतिः, एवं शिखरिण्यपि वर्षधरे—पर्वते लवणोदार्णवजलसंस्पर्शादारभ्य यथोक्तप्रमाणान्तराश्चतसृषु विदिक्षु व्यवस्थिता एकोरुकादिनामानोऽष्टाविंशतिसङ्ख्या द्वीपा वक्तव्याः, ततः सर्वस-

एवमया षट्पञ्चाशदन्तरद्वीपा भवन्तीति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अथैतेषु वर्तमानानां मनुष्याणां स्वरूपमाह—'संती' त्यादिगाथात्रयं,

**संति इमेसु नरा वज्जरिसहनारायसंहणणजुत्ता । समचउरंसगसंठाणसंठिया देवसमरूवा ॥ २९ ॥ अट्ठधणुस्सयदेहा किंचूणाओ नराण इत्थीओ । पलियअसंखिज्जइभागआऊया लक्खणोवेया ॥ ३० ॥ दसविहकप्पदुमपत्तवंछिया तह न तेसु दीवेसु । ससिसूरगहणमक्कूणजूयामसगाइया हुंति ॥ ३१ ॥**

एतेषु सर्वेष्वप्यन्तरद्वीपेषु नराः—पुरुषाः सन्ति—सदैव परिवसन्ति, ते च वज्रर्षभनाराचसंहननिनः समचतुरस्रसंस्थानसंस्थिता देवलोकानुकारिरूपलावण्याकारशोभितविग्रहा अष्टधनुःशतप्रमाणशरीरोच्छ्रयाः, स्त्रीणां त्विदमेव प्रमाणं किञ्चिन्न्यूनं द्रष्टव्यं, तथा पल्योपमासङ्ख्येयभागप्रमाणायुषः समग्रशुभलक्षणतिलकमषाद्युपेताः स्त्रीपुरुषयुगलव्यवस्थिता दशविधकल्पपादपावाप्तवाञ्छितोपभोगसम्पदः प्रकृत्यैव प्रतनुक्रोधमानमायालोभाः संतोषिणो निरौत्सुक्या मार्दवार्जवसंपन्नाः सत्यपि मनोहारिणि मणिकनकमौक्तिकादिके ममत्वकारणे ममत्वाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धाः परस्परप्रेष्यप्रेषकभावरहितत्वादहमिन्द्राः हस्त्यश्वकरभगोमहिष्यादिसद्भावेऽपि तत्परिभोगपराङ्मुखाः पादविहारचारिणो ज्वरादिरोगभूतपिशाचादिग्रहव्यसनविरहिताः, चतुर्थान्ताहारमेते गृह्णन्ति, आहारश्च शाल्यादिधान्यसद्भावेऽपि न तन्निष्पन्नः, किंतु शर्करातोऽप्यनन्तगुणमाधुर्या मृत्तिका चक्रवर्तिभोजनादप्यधिकमधुराणि कल्पद्रुमपुष्पफलानि चेति, चतुःषष्टिश्च पृष्ठकरण्डकास्तेषां, षण्मासावशेषायुषश्चामी स्त्रीपुरुषयुगलं प्रसुवते, एकोनाशीतिदिनानि च तत्परिपालयन्ति, स्तोकस्नेहकषाय-

तया च ते मृत्वा दिवं व्रजन्ति, मरणं च तेषां जृम्भाकासक्षुतादिमात्रपुरस्सरं न शरीरपीडयेति, तथा तेषु द्वीपेष्वनिष्टसूचकाश्चन्द्रसूर्योपरागादयः शरीरोपद्रवकारिणश्च मत्कुणयूकामशकमक्षिकादयो न भवन्ति, येऽपि च जायन्ते भुजगव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधितुमलं, नाप्यन्योऽन्यं हिंस्यहिंसकभावे वर्तन्ते, क्षेत्रानुभावतो रौद्रभावरहितत्वात्, अत एव तेऽपि मृत्वा दिवमेव व्रजन्ति, भूमिरपि तत्र रेणुपङ्ककण्टकादिरहिता सकलदोषपरित्यक्ता सर्वत्र समतला रमणीया च वर्तत इति, यच्चात्र सूत्रातिरिक्तमुक्तं तत्सर्वमुपलक्षणत्वाद् द्रष्टव्यं २६२ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ इदानीं 'जीवाजीवाणं अप्पबहुयं'ति त्रिषष्ट्यधिकद्विशततमं द्वारमाह—

**नर १ नेरइया २ देवा ३ सिद्धा ४ तिरिया ५ कमेण इह हुंति। थोव १ असंख २ असंखा ३ अणंतगुणिया ४ अनंतगुणा ५ ॥ ३२ ॥ नारी १ नर २ नेरइया ३ तिरिच्छि ४ सुर ५ देवि ६ सिद्ध ७ तिरिया ८ य। थोव असंखगुणा चउ संखगुणाऽणंतगुण दोन्नि ॥ ३३ ॥ तस तेउ पुढवि जल वाउकाय अकाय वणस्सइ सकाया। थोव असंखगुणाहिय तिन्नि दोऽणंतगुणअहिया ॥ ३४ ॥ पण चउ ति दु य अणिंदिय एगिंदि सइंदिया कमा हुंति। थोवा तिन्नि य अहिया दोऽणंतगुणा विसेसहिया ॥ ३५ ॥ जीवा पोग्गल समया दव्व पएसा य पज्जवा चेव। थोवाणंताणंता विसेसअहिआ दुवेऽणंता ॥ ३६ ॥**

इह सर्वत्र यथासङ्ख्येन पदयोजना, तत्र सर्वस्तोकास्तावन्नरा—मनुष्याः सङ्ख्येयकोटीकोटीमात्रप्रमाणत्वात्, तेभ्यो नैरयिका असङ्ख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि प्रथमवर्गमूले तृतीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनी-

कृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात्, तेभ्यो देवा असङ्ख्येयगुणाः, व्यन्तराणां ज्योतिष्काणां च प्रत्येकं प्रतरासङ्ख्येयभागवर्तिश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सिद्धा अनन्तगुणाः, कालस्यानन्तत्वात् षण्मासान्ते च कस्यचिदवश्यं सिद्धिगमनात् तत्प्राप्तस्य च पुनरावृत्त्यभावात्, तेभ्योऽपि तिर्यञ्चोऽनन्तगुणाः, अनन्तेनापि कालेनैकनिगोदानन्तभागवर्तिजीवराशेः सिद्धत्वात् तिर्यग्गतौ त्वसङ्ख्येयनिगोदसद्भावात् प्रतिनिगोदं च सिद्धानन्तगुणजीवराशिभावात् ॥ ३२ ॥ उक्तं नैरयिकतिर्यग्योनिकमनुष्यदेवसिद्धरूपाणां पञ्चानामल्पबहुत्वं, इदानीं नैरयिकतिर्यग्योनिकतिर्यग्योनिकीमनुष्यमानुषीदेवदेवीसिद्धलक्षणानामष्टानामल्पबहुत्वमाह—'नारी'त्यादि, सर्वस्तोका नार्यो—मनुष्यस्त्रियः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, ताभ्यो नरा—मनुष्या असङ्ख्येयगुणाः, इह नरा इति संमूर्च्छिमजा अपि मनुष्या गृह्यन्ते, वेदस्याविवक्षणात्, ते च संमूर्च्छिमजा वान्तादिषु नगरनिर्धमनान्तेषु जायमाना असङ्ख्येयाः प्राप्यन्ते, तेभ्यो नैरयिका असङ्ख्येयगुणाः, मनुष्या ह्युत्कृष्टपदेऽपि श्रेण्यसङ्ख्येयभागगतप्रदेशराशिप्रमाणा लभ्यन्ते, नैरयिकास्त्वङ्गुलमात्रक्षेत्रप्रदेशराशिसत्कतृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रमाणश्रेणिगताकाशप्रदेशराशिप्रमाणाः, ततो भवन्त्यसङ्ख्येयगुणाः, तेभ्यस्तिर्यग्योनिकाः स्त्रियोऽसङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, ताभ्योऽपि देवा असङ्ख्येयगुणाः, असङ्ख्येयगुणप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगतप्रदेशराशिमानत्वात्, तेभ्योऽपि देव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात्, ताभ्योऽपि सिद्धा अनन्तगुणाः, तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः, अत्र युक्तिः प्रागेवोक्ता ॥ ३३ ॥ अथ सामान्येनैव जन्तूनां कायविशेषणविशेषितानामल्पबहुत्वमाह—'तसे'त्यादि, सर्वस्तोकास्त्रसकायिकाः, द्वीन्द्रियादीनामेव त्रसकायत्वात्, तेषां च शेषकायापेक्षयाऽत्यल्पत्वात्, तेभ्यस्तेजसकायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः पृथिवीकायिका

विशेषाधिकाः, प्रभूतासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्योऽप्कायिका विशेषाधिकाः, प्रभूततरासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यो वायुकायिका विशेषाधिकाः, प्रभूततमासङ्ख्येयलोकाकाशप्रदेशमानत्वात्, तेभ्योऽकायिका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यो वनस्पतिकायिका अनन्तगुणाः, अनन्तलोकाकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सकाया विशेषाधिकाः, पृथिवीकायिकादीनामपि तत्र प्रक्षेपात् ॥ ३४ ॥ साम्प्रतमेकेन्द्रियत्वादिविशेषणविशिष्टानां जन्तूनामल्पबहुत्वमाह—'पणे'त्यादि, सर्वस्तोकाः पञ्चेन्द्रियाः, सङ्ख्येययोजनकोटीकोटीप्रमाणविष्कम्भसूचीप्रमितप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यश्चतुरिन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूतसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि त्रीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूततरसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि द्वीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूततमसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽनिन्द्रिया अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽप्येकेन्द्रिया अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्योऽपि सेन्द्रिया विशेषाधिकाः, द्वीन्द्रियादीनामपि तत्र प्रक्षेपात् ॥ ३५ ॥ अथ जीवपुद्गलादीनामल्पबहुत्वमाह—'जीवे'त्यादि, वक्ष्यमाणापेक्षया सर्वस्तोका जीवाः, तेभ्यः पुद्गला अनन्तगुणाः, इह हि परमाणुद्विप्रदेशिकादीनि पृथक्पृथग्द्रव्याणि, तानि च सामान्यतस्त्रिधा—प्रयोगपरिणतानि मिश्रपरिणतानि विस्रसापरिणतानि च, तत्र प्रयोगपरिणतान्यपि तावज्जीवेभ्योऽनन्तगुणानि, एकैकस्य जीवस्यानन्तैः प्रत्येकं ज्ञानावरणीयादिकर्मपुद्गलस्कन्धैरावेष्टितत्वात्, किं पुनः शेषाणि ?, यतः प्रयोगपरिणतेभ्यो मिश्रपरिणतान्यनन्तगुणानि तेभ्योऽपि विस्रसापरिणतान्यनन्तगुणानि ततो युक्तं जीवेभ्यः पुद्गला अनन्तगुणाः, तेभ्योऽद्धासमया अनन्तगुणाः, यत एकस्यापि परमाणोर्द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भावसमया उपलब्धाः, यथैकस्य परमाणोस्तथा सर्वेषां परमाणूनां सर्वेषां

च प्रत्येकं द्विप्रदेशिकादीनां स्कन्धानामेवमन्यान्यद्रव्यक्षेत्रकालभावसम्बन्धिनामनन्ताः समया अतीता अनागता अपीति सिद्धं पुद्गलेभ्यः समयानामनन्तगुणत्वं, तेभ्यः सर्वद्रव्याणि विशेषाधिकानि, कथमिति चेद् उच्यते इह ये अनन्तरमद्धासमयाः पुद्गलेभ्योऽनन्तगुणा उक्तास्ते प्रत्येकं द्रव्याणि, ततो द्रव्यचिन्तायां तेऽपि गृह्यन्ते, तेषु मध्ये सर्वजीवद्रव्याणि सर्वपुद्गलद्रव्याणि धर्माधर्माकाशास्तिकायद्रव्याणि च प्रक्षिप्यन्ते, तानि च समुदितान्यप्यद्धासमयानामनन्तभागकल्पानीति तेषु प्रक्षिप्तेष्वपि मनागधिकत्वं जातमित्यद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि, तेभ्यः सर्वप्रदेशा अनन्तगुणाः, एकस्याप्यलोकाकाशद्रव्यस्य सर्वद्रव्यानन्तगुणप्रदेशत्वात्, तेभ्यः सर्वपर्यवा अनन्तगुणाः, एकैकस्मिन्नाकाशप्रदेशेऽनन्तानामगुरुलघुपर्यायाणां सद्भावादिति ॥ २६३ ॥ ३६ ॥ इदानीं '**जुगप्पहाणसूरिसंख**'त्ति चतुःषष्ट्यधिकद्विशततमं द्वारमाह—

**जा दुप्पसहो सूरी होहिंति जुगप्पहाण आयरिया । अज्जसुहम्मप्पभिई चउरहिया दुन्नि य सहस्सा ॥ ३७ ॥**

इहावसर्पिण्यां दुष्षमावसानसमये द्विहस्तोच्छ्रितवपुर्विंशतिवर्षायुष्कः पुष्कलतपःक्षपितकर्मतया समासन्नसिद्धिसौधः शुद्धान्तरात्मा दशवैकालिकमात्रसूत्रधरोऽपि चतुर्दशपूर्वधर इव शक्रपूज्यो दुप्रसभनामा सर्वान्तिमः सूरिर्भविष्यति, ततस्तं दुष्प्रसभं यावत्तमभिव्याप्यैवेत्यर्थः, आर्यसुधर्मप्रभृतयः आरात्—सर्वहेयधर्मेभ्योऽर्वाग्याताः आर्यः स चासौ सुधर्मस्तत्प्रभृतयः, प्रभृतिग्रहणाच्च जम्बूस्वामिप्रभवशय्यम्भवाद्या गणधरपरम्परा गृह्यते, युगप्रधानाः—तत्कालप्रचरत्पारमेश्वरप्रवचनोपनिषद्वेदित्वेन विशिष्टतरमूलगुणोत्तरगुणसंपन्नत्वेन च तत्कालापेक्षया भरतक्षेत्रमध्ये प्रधाना आचार्याः—सूरयश्चतुरधिकसहस्रद्वयप्रमाणा भविष्यन्ति, अन्ये तु चतूरहितसहस्रद्वयप्रमाणा इत्याहुः,

तत्त्वं तु सर्वविदो विदन्ति, यच्च महानिशीथग्रन्थे जघन्य ग्रन्थकारः—"इत्थं चायरियाणं पणपन्ना हाँति कोडिलक्खाओ । कोडिसहस्से कोडीसए य तह इत्तिए चेवत्ति ॥ १ ॥" [इत्थं चाचार्याणां पञ्चपञ्चाशत्कोटीलक्षाः कोटीसहस्रा कोटीशतं तथैतावन्त एवेति ॥ १ ॥] (५५५५१५५ कोट्यः) तत्सामान्यमुनिपत्यपेक्षया द्रष्टव्यं, तथा च तत्रैवोक्तम्—"एएसिं मज्झाओ एगे निव्वडइ गुणगणाइन्ने । सव्वुत्तमभंगेणं तित्थयरस्साणुसरिस गुरू ॥ १ ॥" [एतेषां मध्यात् एके निपतन्ति गुणगणाकीर्णाः सर्वोत्तमभङ्गे तीर्थकरानुसदृशा गुरवः ॥ १ ॥] २६४ ॥ ३७ ॥ इदानीं 'उस्सप्पिणिअंतिमजिणतित्थप्पमाणं'ति पञ्चषष्ठ्यधिकद्विशततमं द्वारमाह—

**ओसप्पिणअंतिमजिण तित्थं सिरिरिसहनाणपज्जाया । संखेज्जा जावइया तावयमाणं धुवं भविही ॥ ३८ ॥**

इह श्रीऋषभस्वामिनः केवलज्ञानपर्यायो वर्षसहस्रोन एकः पूर्वलक्षः, तत एवंस्वरूपा ज्ञानपर्यायाः सङ्ख्येया यावन्तो भवन्ति तावत्प्रमाणमुत्सर्पिण्यामन्तिमजिनस्य चतुर्विंशतितमस्य भद्रकृन्नाम्नस्तीर्थकृतस्तीर्थं ध्रुवं—निश्चितं भविष्यति, सङ्ख्येयपूर्वलक्षमानं तत्तीर्थमित्यर्थः, २६५ ॥ ३८ ॥ इदानीं 'देवाण पवियारो'त्ति षट्षष्ठ्यधिकद्विशततमं द्वारमाह—

**दो कायप्पवियारा कप्पा फरिसेण दोन्नि दो रूवे । सद्दे दो चउर मणे नत्थि वियारो उवरि यत्थी ॥ ३९ ॥ गेविज्जणुत्तरेसुं अप्पवियारा हवंति सव्वसुरा । सप्पवियारठिईणं अणंतगुणसोक्खसंजुत्ता ॥ ४० ॥**

द्वौ कल्पाविति मर्यादायां कल्पशब्देन च तात्स्थ्यात् कल्पस्था देवाः, ततोऽयमर्थः—भवनपत्यादय ईशानान्ता देवाः क्लिष्टोदर्कपुंवेदा-

नुभावान्मनुष्यवन्मैथुने निमज्जन्तः सर्वाङ्गीणं कायक्लेशजं स्पर्शानन्दमासाद्य तृप्यन्ति नान्यथेति, कायेन—शरीरेण मनुष्यस्त्रीपुंसानामिव प्रवीचारो—मैथुनोपसेवनं ययोस्तौ कायप्रवीचारौ, तथा स्पर्शेन द्वौ सनत्कुमारमाहेन्द्रौ सप्रवीचारौ, तद्देवा हि मैथुनाभिलाषिणो देवीनां स्तनाद्यवयवस्पर्शलीलयैव कायप्रवीचारदेवेभ्योऽनन्तसुखमवाप्नुवन्ति तृप्ताश्च जायन्ते, देवीनामपि देवैः स्पर्शे कृते सति दिव्यप्रभावतः शुक्रपुद्गलसंचारेणानन्तगुणं सुखमुत्पद्यते, एवमग्रेऽपि भावना कार्या, तथा द्वौ ब्रह्मलोकलान्तकौ रूपदर्शने सप्रवीचारौ, देवीनां दिव्योन्मादजनकरूपावलोकनेनैव तत्र सुराः सुरतसुखजुषो जायन्त इत्यर्थः, तथा द्वौ शुक्रसहस्रारौ देवीशब्दे श्रुते सति सप्रवीचारौ, सुरसुन्दरीणां सविलासगीतहसितभाषितभूषणादिध्वनिमाह्लादकमाकर्ण्य उपशांतवेदास्तत्र देवा भवन्तीत्यर्थः, तथा चत्वारः—आनतप्राणतारणाच्युताभिधानदेवलोकदेवा मनसा सप्रवीचारा भवन्ति, ते हि यदा प्रवीचारचिकीर्षया देवीश्चित्तस्य गोचरीकुर्वन्ति तदैव तास्तत्संकल्पाज्ञानेऽपि तथाविधस्वभावतः कृताद्भुतशृङ्गाराः स्वस्थानस्थिता एव उच्चावचानि मनांसि दधाना मनसैव भोगायोपतिष्ठन्ते, तत इत्थमन्योऽन्यं मनःसङ्कल्पे दिव्यप्रभावादेव देवीषु शुक्रपुद्गलसंक्रमत उभयेषां कायप्रवीचारादनन्तगुणं सुखं संपद्यते तृप्तिश्चोल्लसतीति, उपरि च—ग्रैवेयकादिषु स्त्रीप्रवीचारः—स्त्रीसेवा सर्वथा नास्तीति ॥ ३९ ॥ अत एवाह—'गेवेज्जे'त्यादि, ग्रैवेयकेषु नवसु अनुत्तरविमानेषु पञ्चसु अप्रवीचारा—मैथुनसेवाविरहिता भवन्ति सर्वेऽपि सुरा—देवाः, नन्वेवं तेषामप्रवीचाराणां सुखं किंचिन्न भविष्यतीत्याह—सप्रवीचारस्थितिभ्यो देवेभ्यः सकाशादनन्तगुणसौख्यसंयुक्तास्ते ग्रैवेयका अनुत्तरसुराश्च भवन्ति, प्रतनुमोहोदयतया प्रशमसुखान्तर्लीनत्वात्, ते च तथाभवस्वभावत्वेन चारित्रपरिणामाभावान्न ब्रह्मचारिण इति २६६ ॥ ४० ॥ संप्रति 'कण्हराईण सरूवं'ति सप्तपष्ट्यधिकद्विशततमं द्वारमाह—

पंचमकप्पे रिट्ठंमि पत्थडे अट्ठ कण्हराईओ । समचउरंसक्खोडयठिइओ दो दो दिसिचउक्के ॥४१॥
पुव्वावरउत्तरदाहिणाहि मज्झिल्लियाहि पुट्ठाओ । दाहिणउत्तरपुव्वा अवरा बहिकण्हराईओ ॥४२॥
पुव्वावरा छलंसा तंसा पुण दाहिणुत्तरा बज्झा । अब्भंतरचउरंसा सव्वावि य कण्हराईओ ॥ ४३ ॥
आयामपरिक्खेवेहिं ताण असंखजोयणसहस्सा । संखेज्जसहस्सा पुण विक्खंभे कण्हराईणं
॥ ४४ ॥ ईसाणदिसाईसुं एयाणं अंतरेसु अट्ठसुवि । अट्ठ विमाणाइं तहा तम्मज्झे एक्कगविमाणं
॥ ४५ ॥ अच्चिं १ तहऽच्चिमालिं २ वइरोयण ३ पभंकरे य ४ चंदाभं ५ । सूराभं ६ सुक्काभं ७
सुपइट्ठाभं च ८ रिट्ठाभं ९ ॥ ४६ ॥ अट्ठायरट्ठिईया वसंति लोगंतिया सुरा तेसुं । सत्तट्ठभवभ-
वंता गिज्जंति इमेहिं नामेहिं ॥४७॥ सारस्सय १ माइच्चा २ वण्ही ३ वरुणा य ४ गद्दतोया ५ य ।
तुसिया ६ अव्वाबाहा ७ अग्गिच्चा ८ चेव रिट्ठा य ९ ॥ ४८ ॥ पढमजुयलंमि सत्त उ सयाणि
बीयंमि चउद्दस सहस्सा । तइए सत्त सहस्सा नव चेव सयाणि सेसेसु ॥ ४९ ॥

पञ्चमे ब्रह्मलोकनामके कल्पे तृतीये रिष्टप्रस्तटे अष्टौ कृष्णराज्यो भवन्ति, कृष्णाः सचित्ताचित्तपृथिवीपरिणामरूपा राज्यो—भित्त्याकारव्यवस्थिताः पङ्क्तयः कृष्णराज्यः, कथंभूतास्ता इत्याह—'समचतुरस्राः' समाः—सर्वास्वपि दिक्षु तुल्याः चतुरस्राः चतुष्कोणाः अत एवाखाटकस्थितयः, इहाखाटकाः प्रेक्षास्थाने आसनविशेषलक्षणाः, प्रज्ञप्तिटीकायां तथा व्याख्यानात्, तत्स्थितयः—तत्सदृशाकाराः, यथा चैता व्यवस्थितास्तथा दर्शयति—'दो दो दिसिचउक्के'त्ति दिक्चतुष्के—चतसृष्वपि पूर्वादिषु दिक्षु द्वे द्वे कृष्णराज्यौ व्यवस्थिते,

तथाहि–पूर्वस्यां दक्षिणोत्तरायते तिर्यग्विस्तीर्णे द्वे कृष्णराज्यौ, एवं दक्षिणस्यां पूर्वापरायते अपरस्यां दक्षिणोत्तरायते उत्तरस्यां पूर्वापरायते इति ॥ ४१ ॥ अथ तासामेव पुनः स्वरूपमाह—'पुव्वे'त्यादि, पूर्वापरोत्तरदक्षिणाभिर्मध्यवर्तिनीभिः कृष्णराजीभिः क्रमेण दक्षिणोत्तरपूर्वापराबहिर्वर्तिन्यः कृष्णराज्यः स्पृष्टाः, अयमर्थः–पौरस्त्याभ्यन्तरा कृष्णराजी दक्षिणबाह्यां कृष्णराजीं स्पृशति, एवं दक्षिणाभ्यन्तरा पश्चिमबाह्यां पश्चिमाऽभ्यन्तरा उत्तरबाह्यां उत्तराभ्यन्तरा च पूर्वबाह्यामिति ॥४२॥ स्थापना चेयं । कोणविभागस्त्वेवं—'पुव्वावरे'त्यादि, पौरस्त्यपाश्चात्ये द्वे बाह्ये कृष्णराज्यौ षडस्रे–षट्कोटिके, उत्तरादाक्षिणात्ये पुनर्बाह्ये द्वे कृष्णराज्यौ त्र्यस्रे अभ्यन्तराः सर्वा अपि–चतस्रोऽपि कृष्णराज्यश्चतुरस्राः ॥ ४३ ॥ साम्प्रतमेतासामेव प्रमाणमाह—'आयामे'त्यादि, आयामपरिक्षेपाभ्यां–दैर्घ्यपरिधिभ्यां तासां–कृष्णराजीनामसङ्ख्याता योजनसहस्रा भवन्ति, विष्कम्भे–विस्तारे पुनः कृष्णराजीनां सङ्ख्याता योजनसहस्रा इति ॥ ४४ ॥ अथैतासां मध्ये विमानसंयोजनामाह–'ईसाणे'त्यादि, एतासामष्टानां कृष्णराजीनामीशानदिगादिष्वष्टस्वप्यन्तरेषु–राजीद्वयमध्यलक्षणेष्ववकाशान्तरेष्वष्टौ विमानानि भवन्ति, तथा तन्मध्ये–तासां बहुमध्यभागे एकं विमानं ॥ ४५ ॥ तान्येव विमानानि नामतः प्राह—'अच्ची'त्यादि, अयमर्थः–अभ्यन्तरोत्तरपूर्वयोः कृष्णराज्योरन्तरे अर्चिर्विमानं १ एवं पूर्वयोरर्चिर्मालिः २ अभ्यन्तरपूर्वदक्षिणयोर्वैरोचनं ३ दक्षिणयोः प्रभङ्करं ४ अभ्यन्तरदक्षिणपश्चिमयोश्चन्द्राभं ५ पश्चिमयोः सूराभं ६ अभ्यन्तरपश्चिमोत्तरयोः शुक्राभं ७ उत्तरयोः सुप्रतिष्ठाभं ८ सर्वकृष्णराजीमध्यभागे तु रिष्टाभमिति ९ ॥ ४६ ॥ अथैतन्निवासिनो देवानाह—'अट्ठाये'त्यादि, तेष्वेवाकाशान्तरवर्तिष्वष्टासु अर्चिःप्रभृतिषु विमानेषु 'लोकान्तिकाः' लोकस्य–ब्रह्मलोकस्यान्ते–समीपे भवाः सुरा–देवाः परिवसन्ति, कथंभूता इत्याह—'अष्टातरस्थितयः' अष्टावतराणि–सागरोपमाणि स्थितिर्येषां ते तथा, तथा सप्तमिरष्टमिर्वा भवैर्भवान्तो मुक्तिर्येषां ते सप्ताष्टभवभवान्ताः एतैश्च–वक्ष्यमा-

गैर्नाममिरमी गीयन्ते—कथ्यन्ते ॥ ४७ ॥ तान्येव नामानि विमानक्रमेणाह—'सारे'त्यादि, सारस्वताः १ मकारोऽलाक्षणिकः आदित्याः २ वह्नयः ३ वरुणाः ४ गर्दतोयाः ५ तुषिताः ६ अव्याबाधाः ७ आग्नेयाः ८ एते संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति 'तात्स्थ्यात्तद्व्यपदेश' इति रिष्टविमानाधारा रिष्टाः ९, एते च सारस्वतादयो लोकान्तिकसुराः प्रव्रज्यासमयात्संवत्सरेणार्वागेव स्वयंसम्बुद्धमपि जिनेन्द्रं कल्प इतिकृत्वा भगवन्! सर्वजनजीवहितं तीर्थं प्रवर्तयेति बोधयन्ति ॥ ४८ ॥ अथैतेषां देवानां परिवारमाह—'पढमे'त्यादि, अयमत्राभिप्रायः—सारस्वतादित्ययोः समुदितयोः सप्त देवाः सप्त च देवशतानि परिवारः, एवं वह्निवरुणयोश्चतुर्दश देवाश्चतुर्दश च देवसहस्राः, गर्दतोयतुषितयोः सप्त देवाः सप्त च देवसहस्राः, शेषेषु त्वव्याबाधाग्नेयरिष्टेषु नव देवा नव च देवशतानीति, ॥ २६७ ॥ ४९ ॥ इदानीं 'सज्झायस्स अकरणं' त्यष्टषष्ट्यधिकद्विशततमं द्वारमाह—

संजमघा १ उप्पाये २ सादिव्वे ३ वुग्गहे य ४ सारीरे ५। महिया १ सचित्तरओ २ वासम्मि य ३ संजमे तिविहं ॥ ५० ॥ महिया उ गब्भमासे सचित्तरओ य ईसिआयंबे। वासे तिन्नि पगारा बुब्बुय तवज्ज फुसिए य ॥५१॥ दव्वे तं चिय दव्वं खेत्ते जहियं तु जच्चिरं कालं। ठाणाइभास भावे मोत्तुं उस्सासउम्मेसे ॥ ५२ ॥ पंसू य मंसरुहिरे केससिलावुट्ठि तह रयुग्घाए। मंसरुहिरे अहरत्तं अवसेसे जच्चिरं सुत्तं ॥ ५३ ॥ पंसू अचित्तरओ रयस्सलाओ दिसा रउग्घाओ। तत्थ सवाए निव्वायए य सुत्तं परिहरंति ॥ ५४ ॥ गंधव्वदिसा विज्जुक्क गज्जिए जूव जक्खआलित्ते। एक्केक्कपोरिसिं गज्जियं तु दो पोरिसी हणइ ॥ ५५ ॥ दिसिदाहो छिन्नमूलो उक्क सरेहा पगाससंजुत्ता।

संझाछेयावरणो उ जूवओ सुक्कि दिण तिन्नि॥ ५६ ॥ चंदिमसूरुवरागे निग्घाए गुंजिए अहोरत्तं । संझाचउ पडिवए जं जहि सुगिम्हए नियमा ॥ ५७ ॥ आसाढी इंदमहो कत्तिय सुगिम्हए य बोद्धवे । एए महामहा खलु एएसिं जाव पाडिवयां ॥ ५८ ॥ उक्कोसेण दुवालस चंदो जहन्नेण पोरिसी अट्ठ । सूरो जहन्न बारस पोरिसि उक्कोस दो अट्ठ ॥ ५९ ॥ सग्गहनिवुड्ड एवं सूराई जेण हुंतिऽहोरत्ता । आइन्नं दिणमुक्के सोच्चिय दिवसो य राई य ॥ ६० ॥ वुग्गहदंडियमाई संखोभे दंडिए व कालगए । अणरायए य सभए जच्चिरऽनिद्दोच्चऽहोरत्तं ॥ ६१ ॥ तद्दिवसभोइआइ अंतो सत्तण्ह जाव सज्झाओ । अणहस्स य हत्थसयं दिट्ठिविवित्तंमि सुद्धं तु ॥ ६२ ॥ मयहर पगए बहुपक्खिए य सत्तघर अंतर मयंमि । निहुक्खत्ति य गरिहा न पढंति सणियगं वावि ॥ ६३ ॥ तिरिपंचिंदिय दव्वे खेत्ते सट्ठिहत्थ पोग्गलाइन्नं । तिकुरत्थ महंतेगा नगरे बाहिं तु गामस्स ॥ ६४ ॥ काले तिपोरिसि अट्ठ व भावे सुत्तं तु नंदिमाईयं । सोणिय मंसं चम्मं अट्ठीवि य अहव चत्तारि ॥ ६५ ॥ अंतो बहिं व धोयं सट्ठी हत्थाउ पोरिसी तिन्नि । महकाइ अहोरत्तं रत्ते वूढे य सुद्धं तु ॥ ६६ ॥ अंडगमुज्झिय कप्पे न य भूमि खणंति इयरहा तिन्नि । असज्झाइयप्पमाणं मच्छियपाया जहिं बुड्डे ॥ ६७ ॥ अजराउ तिन्नि पोरिसि जराउयाणं जरे पडे तिन्नि । रायपह-बिंदुपडिए कप्पे वूढे पुणो नत्थि ॥ ६८ ॥ माणुस्सयं चउद्धा अट्ठिं मोत्तूण सयमहोरत्तं । परि-

**थावन्नविवन्ने सेसे तिय सत्त अट्ठेव ॥ ६९ ॥ रत्तुक्कडा उ इत्थी अट्ठ दिणे तेण सत्त सुक्कहिए । तिण्ह दिणाण परेणं अणोउगं तं महारत्तं ॥ ७० ॥ दंते दिट्ठे विगिंचण सेसट्ठि बारसेव वरिसाइं । दड्ढट्ठीसु न चेव य कीरइ सज्झायपरिहारो ॥ ७१ ॥**

आ–मर्यादया सिद्धान्तोक्तन्यायेन अध्ययनं–पठनं आध्यायः सुष्ठु–शोभन आध्यायः स्वाध्यायः स एव स्वाध्यायिकं यत्र नास्ति तदस्वाध्यायिकं–रुधिरादि, तन्मूलभेदापेक्षया द्विधा–आत्मसमुत्थं परसमुत्थं च, आत्मनः–स्वाध्याय चिकीर्षोः समुद्भूतमात्मसमुत्थं, परस्मात्–स्वाध्यायकर्तुरन्यस्मात्समुद्भूतं परसमुत्थं, तत्र बहुवक्तव्यत्वात्प्रथमतः परसमुत्थमेव प्रतिपाद्यते, तच्च पञ्चविधं, तद्यथा–संयमघाति–संयमौपघातिकं १ औत्पातिकं–उत्पातनिमित्तं २ सदेवं–देवताप्रयुक्तं ३ व्युद्ग्रहः–संग्रामः ४ शारीरं च–शरीरसंभवं ५, एतेषु च पञ्चस्वप्यस्वाध्यायिकेषु स्वाध्यायं विदधतः साधोस्तीर्थकृदाज्ञाभङ्गादयो दोषा भवन्ति । तत्र संयमे–संयमोपघातविषयमस्वाध्यायिकं त्रिविधं–महिका सचित्तरजो वर्षं चेति । त्रीनपि भेदान् क्रमेण व्याख्यानयति—'महि'त्यादि, महिका गर्भमासे पतन्ती धूमरी प्रतीता, गर्भमासो नाम कार्तिकादिर्यावन्माघमासः, सा च पतनसमकालमेव सर्वमप्कायभावितं करोति, सचित्तरजो नाम व्यवहारसचित्ता अरण्यवातोद्धूता श्लक्ष्णा धूलिः, तच्च सचित्तरजो वर्णत ईषदाताम्रं दिगन्तरेषु दृश्यते, गाथायां पुंस्त्वं प्राकृतत्वात्, तदपि निरन्तरपातेन त्रयाणां दिनानां परतः सर्वं पृथ्वीकायभावितं करोति, वर्षस्य पुनस्त्रयः प्रकारा भवन्ति, तानेवाह—'बुब्बुय'त्ति यत्र वर्षे निपतति पानीयमध्ये बुद्बुदाः—तोयशलाकारूपा उत्तिष्ठन्ति तद्वर्षमप्युपचाराद् बुद्बुदमित्युच्यते, तद्वर्ज–तैर्बुद्बुदैर्वर्जितं द्वितीयं वर्षं, तृतीयं 'फुसिअय'त्ति जलस्पर्शिका निपतन्त्यः, तत्र बुद्बुदे

वर्षे निपतति यामाष्टकादूर्ध्वं, अन्ये तु व्याचक्षते—त्रयाणां दिनानां परतः, तद्वर्जं पञ्चानां दिनानां परतः, जलस्पर्शिकारूपे सप्तानां दिनानां परतः सर्वमप्कायस्पृष्टं भवति। अथ संयमघातिभेदानां सर्वेषामपि चतुर्विधं परिहारमाह—'दब्वे' इत्यादि, द्रव्ये—द्रव्यतस्तदेवास्वाध्यायिकं महिका सचित्तरजो वर्षं वा वर्ज्यन्ते, क्षेत्रे यावति क्षेत्रे महिकादि पतति तावत्क्षेत्रं, कालतो 'जच्चिरं' यावन्तं कालं पतति तावन्तं कालं, भावे—भावतो मुक्त्वा उच्छ्वासमुन्मेषं च, तद्वर्जने जीवितव्यव्याघातसंभवात्, शेषं—स्थानादिकं आदिशब्दाद्गमनागमनप्रतिलेखनादिपरिग्रहः कायिकीं चेष्टां भाषां च वर्जयन्ति, इह च न निष्कारणेन कामपि लेशतोऽपि चेष्टां कुर्वन्ति, ग्लानादिकारणे तु समापतिते यतनया हस्तसंज्ञया अक्षिसंज्ञया अङ्गुलीसंज्ञया वा व्यवहरन्ति पोतावरिता वा भाषन्ते वर्षाकल्पावृताश्च गच्छन्तीति। गतं संयमोपघात्यस्वाध्यायिकं इदानीमौत्पातिकमाह—'पंसू ये'त्यादि, अत्र वृष्टिशब्दः प्रत्येकमभिसंबध्यते, पांशुवृष्टौ मांसवृष्टौ रुधिरवृष्टौ केशवृष्टौ शिलावृष्टौ च, तत्र पांशुवृष्टिर्नाम यदचित्तं रजो निपतति, मांसवृष्टिर्मांसखण्डानि पतन्ति, रुधिरवृष्टिर्यत्र रुधिरबिन्दवः पतन्ति, केशवृष्टिर्यदुपरिभागात्केशाः पतन्ति, शिलावृष्टिः—पाषाणनिपतनं करकादिशिलावर्षमित्यर्थः, तथा रजउद्घाते—रजस्वलासु दिक्षु सूत्रं न पठ्यते, शेषाः सर्वा अपि चेष्टाः क्रियन्ते, तत्र मांसे रुधिरे च पतति एकमहोरात्रं वर्ज्यते, अवशेषे—पांशुवृष्ट्यादौ यावच्चिरं—यावन्तं कालं पांशुप्रभृति पतति तावन्तं कालं सूत्रं—नन्यादि न पठ्यते, शेषकालं तु पठ्यते। सम्प्रति पांशुरजउद्घातयोर्व्याख्यानमाह—'पंसू'इत्यादि, पांशवो नाम धूमाकारमापाण्डुरमचित्तरजः, रजउद्घातो रजस्वला दिशो यासु सतीषु समन्ततोऽन्धकारमिव दृश्यते, तत्र पांशुवृष्टौ रजउद्घाते वा सवाते निर्वाते च पतति यावत्पतनं तावत्सूत्रं परिहरन्ति। ॥ ५४ ॥ गतमौत्पातिकं, इदानीं सदेवमाह—'गंधव्वे'त्यादि, गन्धर्वनगरं नाम यच्चक्रवर्त्यादिनगरस्योत्पातसूचनाय संध्यासमये तस्य नगरस्योपरि द्वितीयं नगरं प्राकाराट्टा-

लकादिसंस्थितं दृश्यते, 'दिस'त्ति दिग्दाहः, विज्जुत्—तडित् उल्का—सरेखा प्रकाशयुक्ता वा गर्जितं—जीमूतध्वनिः यूपको—वक्ष्यमाणलक्षणः यक्षादीप्तं नाम—एकस्यां दिशि अन्तराऽन्तरा यद् दृश्यते विद्युत्सदृशः प्रकाशः, एतेषु मध्ये गन्धर्वनगरादिकमेकैकां पौरुषीं हन्ति, एकैकं प्रहरं यावत्स्वाध्यायो न विधीयते इति भावः, गर्जितं पुनः द्विपौरुषीं हन्ति, इह च गन्धर्वनगरं नियमात् सदेवम्, अन्यथा तस्याभावात्, शेषकाणि तु दिग्दाहादीनि भाज्यानि—कदाचित्स्वाभाविकानि भवन्ति कदाचिद्देवकृतानि, तत्र स्वाभाविकेषु स्वाध्यायो न परिह्रियते, किंतु देवकृतेषु, परं येन कारणेन स्फुटं वैविक्त्ये न तानि न ज्ञायन्ते तेन तेषामविशेषेण परिहारः, उक्तं च—"गंधव्वनगर नियमा सादिव्वं सेसगाणि भइयाणि । जेण न नज्जंति फुडं तेण उ तेसिं तु परिहारो ॥ १ ॥" [गान्धर्वनगरं नियमात् सदैवं शेषकाणि भक्तानि । येन न ज्ञायन्ते स्फुटं तेन तु तेषां परिहार एव ॥ १ ॥] अथ दिग्दाहादिव्याख्यानमाह—'दिसी'त्यादि, दिशि—पूर्वादिकायां छिन्नमूलो दाहः—प्रज्वलनं दिग्दाहः, किमुक्तं भवति ?—अन्यतमस्यां दिशि महानगरं प्रदीप्तमिवोपरि प्रकाशोऽधस्तादन्धकार इति दिग्दाहः, उल्का पृष्ठतः सरेखा प्रकाशयुक्ता वा तारकस्येव पातः, यूपको नाम शुक्लपक्षे त्रीणि दिनानि यावद्, द्वितीयस्यां तृतीयस्यां चतुर्थ्यां चेत्यर्थः, सन्ध्याछेदः—सन्ध्याविभागः स आव्रियते येन स सन्ध्याच्छेदावरणश्चन्द्रः, इयमत्र भावना—शुक्लपक्षे द्वितीयातृतीयाचतुर्थीरूपेषु त्रिषु दिनेषु सन्ध्यागतश्चन्द्र इतिकृत्वा सन्ध्या न विभाव्यते ततस्तानि शुक्लपक्षे त्रीणि दिनानि यावच्चन्द्रः सन्ध्याच्छेदावरणः स यूपक इति, एतेषु त्रिषु दिनेषु प्रादोषिकं कालं न गृह्णन्ति प्रादोषिकीं च सूत्रपौरुषीं न कुर्वन्ति, सन्ध्याच्छेदाविभावनेन कालवेलापरिज्ञानाभावादिति, न केवलं अमूनि सदेवानि, किंत्वन्यान्यपि, तान्येवाह—'चंदी'त्यादि, चन्द्रस्य—चन्द्रविमानस्योपरागो—राहुविमानतेजसोपरञ्जनं चन्द्रोपरागो ग्रहणमित्यर्थः, एवं सूर्योपरागोऽपि, ततश्चन्द्रोपरागे सूर्योपरागे च तद्दिनेऽपगते इति वाक्यशेषः, तथा साभ्रे निरभ्रे वा

नभसि व्यन्तरकृतो महागर्जितसमो ध्वनिर्निर्घातः, गर्जितस्येव विकारो गुञ्जावद्गुञ्जमानो महाध्वनिर्गुञ्जितं, तस्मिन्निर्घाते गुञ्जिते च प्रत्येकमहोरात्रं यावत्स्वाध्यायपरिहारः, अयं चात्र विशेषः—यस्यां वेलायां निर्घातो गुञ्जितं वाऽधिकृते दिनेऽभवत् द्वितीयेऽपि दिने यावत्सैव वेला प्राप्ता भवति तावदस्वाध्याय एव, उक्तं च—"निग्घायगुञ्जिएसुं विसेसो–विइयदिणे जाव सा वेला अहोरत्तच्छेएण ण छिज्जइ, जहा अन्नेसु असज्झाइएसु" इति । 'संझाचउ'त्ति चतस्रः संध्यास्तिस्रो रात्रौ, तद्यथा–प्रस्थिते सूर्ये अर्धरात्रे प्रभाते च, चतुर्थी दिनस्य मध्यभागे, एतासु चतसृष्वपि सन्ध्यासु स्वाध्यायो न विधीयते, शेषक्रियाणां तु प्रतिलेखनादीनां तु न प्रतिषेधः, 'पाडिवए'त्ति प्रतिपद्ग्रहणेन प्रतिपत्पर्यन्ताश्चत्वारो महामहाः सूचिताः, ततश्चतुर्णां महामहानां चतसृषु प्रतिपत्सु तथैव स्वाध्याय एव न क्रियते, न शेषक्रियाणां प्रतिषेधः 'जं जहिं सुगिम्हए नियम'त्ति, एवमन्योऽपि य उत्सवः पशुवधादिबहुलो यस्मिन् ग्रामनगरादौ यावन्तं कालं प्रवर्तते स तत्र तावन्तं कालं वर्जनीयः, सुग्रीष्मकः–चैत्रमासभावी पुनर्महामहः सर्वेषु देशेषु शुक्लपक्षप्रतिपद आरभ्य चैत्रपौर्णमासीप्रतिपत्पर्यन्तो नियमात् प्रसिद्ध इति । के पुनस्ते चत्वारो महामहाः?, तत्र सूत्रकृदाह—'आसाढी'त्यादि, आषाढी–आषाढपौर्णमासीमह इन्द्रमहः–अश्वयुक्पौर्णमासी कार्त्तिकी–कार्त्तिकपौर्णमासी सुग्रीष्मकः–चैत्रपौर्णमासी, खलुशब्दस्यावधारणार्थत्वादेत एव चत्वारो महान्तः—सर्वातिशायिनो महा–उत्सवा महामहा बोद्धव्याः, एतेषां च चतुर्णां महामहानां मध्ये यो महामहो यस्मिन् देशे यतो दिवसादारभ्य यावन्तं कालं प्रवर्तते तस्मिन् देशे ततो दिवसादारभ्य तावन्तं कालं न स्वाध्यायं कुर्वन्ति, इह च यद्यपि सर्वेऽपि महामहाः पौर्णमासीपर्यन्ता एव प्रसिद्धास्तथापि क्षणानुवृत्तिसंभवेन प्रतिपदोऽप्यवश्यं वर्जनीयाः, अत एवाह—'जाव पाडिवइ'त्ति गतार्थं । सम्प्रति जघन्यत उत्कर्षतश्च चन्द्रोपरागं सूर्योपरागं चाधिकृत्य स्वाध्यायविघातकालमानमाह—'उक्कोसेणे'त्यादिगाथाद्वयं, चन्द्र उत्कर्षतो द्वादशपौरुषीं हन्ति जघ-

न्यतस्त्वष्टौ, कथमिति चेदुच्यते—उद्गच्छंश्चन्द्रमा राहुणा गृहीतः, ततश्चतस्रः पौरुषी रात्रेर्हन्ति चतस्र आगामिनो दिवसस्य एवमष्टौ, द्वादश पुनरेवं—प्रभातकाले चन्द्रमाः सग्रहण एवास्तमुपगतः ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगामिन्या रात्रेश्चतस्रो द्वितीयस्य दिवसस्य, अथवा औत्पातिकग्रहणेन सर्वरात्रिकं ग्रहणं सञ्जातं सग्रह एव निमग्नः, तत्र संदूषितरात्रेश्चतस्रः पौरुषीरन्यच्चाहोरात्रं, अथवा अभ्रच्छन्नतया विशेषपरिज्ञानाभावाच्च न ज्ञातं कस्यां वेलायां ग्रहणं? प्रभाते च सग्रहो निमज्जन् दृष्टस्ततः समग्रा रात्रिः परिहृता अन्यच्चा-होरात्रमिति द्वादश। तथा सूर्यो जघन्येन द्वादश पौरुषीर्हन्ति उत्कर्षतो द्वावष्टौ—षोडश पौरुषीरित्यर्थः, कथमिति चेदुच्यते—सूर्यः सग्रह एवास्तमुपयातः, ततश्चतस्रः पौरुषी रात्रेर्हन्ति चतस्र आगामिनो दिवसस्य चतस्रस्ततः परस्या रात्रेरेवं द्वादश, षोडश पुनरेवं—सूर्य उद्गच्छन् राहुणा गृहीतः सकलं च दिवसमुत्पातवशात्सग्रहः स्थित्वा सग्रह एवास्तं गतः, ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगामिन्या रात्रेश्चतस्रोऽपरदिवसस्य ततोऽपि चतस्रोऽपरस्या रात्रेः एवं षोडश पौरुषीर्हन्ति सग्रह उद्गतः सग्रह एवास्तमितः, तथा चोक्तम्—"एयं उग्गच्छंतगहिए सग्गहनिवुड्ढे दट्ठव्व" मिति, कथमिति चेदुच्यते—'सूराई जेण होंतऽहोरत्त'त्ति सूर्यादयो येनाहोरात्राः, यतः सूर्योदिरहोरात्रस्ततो दिनमुक्ते सूर्ये स एव दिवसः सैव च रात्रिरस्वाध्यायिकतया परिह्रियन्ते, चन्द्रे तु तस्यामेव रात्रौ मुक्ते यावदपरश्चन्द्रो नोदेति तावदस्वाध्याय इति सैव रात्रिरपरं च दिनमित्येवमहोरात्रमस्वाध्यायः, अन्ये पुनराहुः आचीर्णमिदं—चन्द्रो रात्रौ गृहीतो रात्रावेव मुक्तस्तस्या एव रात्रेः शेषं वर्जनीयं, यस्मादागामिसूर्योदये समाप्तिरहोरात्रस्य जाता, सूर्योऽपि यदि दिवा गृहीतो दिवैव च मुक्तस्ततस्तस्यैव दिवसस्य शेषं रात्रिश्च वर्जनीयेति। गतं सदैवमस्वाध्यायिकं, इदानीं व्युद्ग्रहजमाह—'वुग्गहे'त्यादि गाथाद्वयं, व्युद्ग्रहे—परस्परविग्रहे दण्डिकादीनां, आदिशब्दात्सेनापत्यादीनां च परस्परं विग्रहेऽस्वाध्यायः, इयमत्र भावना—द्वौ दण्डिकौ सस्क-

न्धावारौ परस्परं संग्रामं कर्तुकामौ यावन्नोपशाम्यतस्तावत्स्वाध्यायं कर्तुं न कल्पते, एवं द्वयोः सेनाधिपत्योर्द्वयोर्वा तथाविधप्रसिद्धिपात्रयोः स्त्रियोः परस्परं व्युद्ग्रहे वर्तमाने अथवा मल्लयुद्धे तथा द्वयोर्ग्रामयोः परस्परं कलहभावे वहवस्तरुणाः परस्परं लोष्टैर्युध्यन्ति यदिवा वाहुयुद्धादिभिः स्वतो लोष्टादिभिर्वा परस्परं कलहे देशप्रसिद्धे रजःपर्वणि वा यावन्नोपशमो भवति सेनाधिपादिव्युद्ग्रहस्य तावदस्वाध्यायः, किं कारणमिति चेदुच्यते तत्र वानमन्तराः कौतुकेन स्वस्वपक्षेण समागच्छन्ति ते छलयेयुः, भूयसां च लोकानामप्रीतिर्यथा वयमेवं भीता वर्तामहे कामप्यापदं प्राप्स्यामः एते च श्रमणका निर्दुःखाः सुखं पठन्ति, तथा दण्डिके कालगते 'अणरायए य'त्ति यावदन्यो राजा नाभिषिक्तो भवति तावत्प्रजानां महान् संक्षोभो भवति तस्मिन् संक्षोभे सति स्वाध्यायो न कल्पते, सभयं—म्लेच्छादिभयाकुलं तस्मिन्नपि स्वाध्यायो न कर्तव्यः, एतेषु सर्वेषु व्युद्ग्रहादिष्वस्वाध्यायविधिमाह—'जच्चिरऽनिदोच्चऽहोरत्तं'ति व्युद्ग्रहादिषु यच्चिरं—यावन्तं कालं 'अनिदोच्चं' इत्यनिर्भयमस्वास्थ्यमित्यर्थः, तावन्तं कालमस्वाध्यायः, स्वस्थीभवनानन्तरमप्येकमहोरात्रं परिहृत्य स्वाध्यायः कर्तव्यः, उक्तं च—"निद्दोच्चीभूएवि अहोरत्तमेगं परिहरित्ता सज्झाओ कीरइ" इति । इह 'संखोभे दंडिए य कालगए' इत्यनेनान्यदपि सूचितमस्ति ततस्तदभिधित्सुराह—'तद्दिवसे'त्यादि, भोजिके—ग्रामस्वामिनि आदिशब्दाद्वक्ष्यमाणमहत्तरादिपरिग्रहः-सप्तानां गृहाणामन्तः—मध्ये कालगते सति तद्दिवसमहोरात्रं यावदस्वाध्यायः—स्वाध्यायपरिहारः, प्रसङ्गादन्यदपि प्रतिपादयति—'अणाहस्स' इत्यादि, कोऽप्यनाथो हस्तशताभ्यन्तरे मृतः तस्मिन्ननाथे हस्तशताभ्यन्तरे कालगते स्वाध्यायो न क्रियते, तत्रेयं यतना—शय्यातरस्यान्यस्य वा तथाविधस्य श्रावकस्य यथा वार्ता कथ्यते स्वाध्यायान्तरायमस्माकमनाथमृतकेन कृतमस्ति, ततः सुन्दरं भवति यदीदं छर्यते, एवमभ्यर्थितो यदि शय्यातरादिः परिष्ठापयेत्ततः शुभं भवतीति स्वाध्यायः कार्यः, अथवा (च) शय्यातरादिर्न कोऽपि परिष्ठापयि-

तुमिच्छति तदाऽन्यस्यां वसतौ व्रजन्ति, यद्यन्या वसतिर्नास्ति तदा रात्रौ सागारिकासंलोके वृषभास्तदनाथमृतकमन्यत्र प्रक्षिपन्ति, अथ तत्कलेवरं श्वशृगालादिभिः समन्ततो विकीर्णं ततः समन्ततो निभालयन्ति यद् दृष्टं तत्सर्वमपि त्यजन्ति इतरस्मिंस्तु प्रयत्ने कृतेऽप्यदृष्टे अशठा इतिकृत्वा शुद्धाः, स्वाध्यायं कुर्वन्ति, अपि न प्रायश्चित्तभाज इति भावः। संप्रति 'तद्दिवसभोइयाई' इत्यत्रोक्तमादिशब्दं व्याख्यानयति—'मयहरे'त्यादि, महत्तरके–ग्रामप्रधाने प्रकृते–ग्रामाधिकारनियुक्ते बहुपाक्षिके–बहुस्वजने, चकारात् शय्यातरे, अन्यस्मिन् वा प्राकृते मनुष्ये स्ववसत्यपेक्षया सप्तगृहाभ्यन्तरे मृते तद्दिवसं–एकमहोरात्रमस्वाध्यायः, किं कारणमत आह–निर्दुःखा अमी इत्यप्रीत्या गर्हासंभवात्, ततो न पठन्ति, (शनैर्वा पठन्ति) यथा न कोऽपि शृणोतीति, महिलारुदितशब्दोऽपि यावत् श्रूयते तावन्न पठन्ति। गतं व्युद्ग्रहजं, इदानीं शारीरिकस्यावसरः, तच्च द्विविधं–मानुषं तैरश्चं च, तत्र तैरश्चं त्रिधा–जलजं–मत्स्यादितिर्यग्भवं एवं गवादीनां स्थलजं मयूरादीनां च खजं, पुनर्जलजादिकं प्रत्येकं द्रव्यादिभेदतश्चतुर्विधं, तानेव द्रव्यादीन् चतुरो भेदानाह—'तिरी'त्यादि, द्रव्ये–द्रव्यतस्तिर्यक्पञ्चेन्द्रियाणां जलजादीनां रुधिरादिद्रव्यमस्वाध्यायिकं, न विकलेन्द्रियाणां, क्षेत्रे–क्षेत्रतः षष्टिहस्ताभ्यन्तरे परिहरणीयं, न परतः, अथ तत्स्थानं तैरश्चेन पौद्गलेन–मांसेन समन्ततः काककुक्कुरादिभिर्विक्षिप्तेनाकीर्णं–व्याप्तं तदा यदि स ग्रामस्तर्हि तस्मिन् तिसृभिः कुरथ्याभिरन्तरिते विकीर्णे पौद्गले स्वाध्यायः क्रियते, अथ नगरं तदा तत्र यस्यां राजा सबलवाहनो गच्छति देवयानो रथो वा विविधानि वा वाहनानि गच्छन्ति तया महत्याऽप्येकया रथ्यया अन्तरिते स्वाध्यायः कार्यः, अथ स ग्रामः समस्तोऽपि विकीर्णेन पौद्गलेनाकीर्णो विद्यते न तिसृभिः कुरथ्याभिरन्तरितं तत्पौद्गलमवाप्यते तदा ग्रामस्य बहिः स्वाध्यायो विधेयः। गता क्षेत्रतो मार्गणा, सम्प्रति कालतो भावतश्च तामाह—'काले'त्यादि, काले–कालतस्तज्जलजादिगतं रुधिरादि संभवकालादारभ्य तिस्रः

पौरुषीर्हन्ति, 'अट्ठेवे'ति यत्र महाकायपञ्चेन्द्रियस्य मूषकादेर्मार्जारादिना मारणं तत्राष्टौ पौरुषीर्यावदस्वाध्यायः, गता कालतोऽपि मार्गणा, भावत आह—भावे—भावतो नन्द्यादिकं सूत्रं न पठन्ति। अथवा जलजादिकं प्रत्येकं रुधिरादिभेदतश्चतुर्विधं, तद्यथा—शोणितं मांसं चर्म अस्थि चेति, चत्वार्यप्येतानि प्रतीतानि। अत्रैव विशेषमाह—'अंतो'इत्यादि, यदि षष्टेर्हस्तानां अन्तः—मध्ये मांसं धौतं—प्रक्षालितं तदा तस्मिन् वहिर्नीतेऽपि यतस्ततस्तत्र नियमात् केचिदवयवाः पतिता भवन्ति ततस्तिस्रः पौरुषीः परिहर्तव्यः स्वाध्यायः, एवं पाकेऽप्यवसेयं, षष्टिहस्तेभ्यो वहिः—परतः पुनः प्रक्षालिते पक्वे वा पिशिते स्वाध्यायः कर्तव्यः, न कश्चिद्दोषः, 'अट्ठेवे'ति प्राग्युक्तं तदिदानीं भावयति—'महकाए अहोरत्तं'ति एतच्च प्रागेव व्याख्यातं, अत्रैके प्राहुः—यदि मार्जारादिना मूषकादिरविभिन्न एव सन् मारितो मारयित्वा च गृहीत्वा अथवा गिलित्वा यदि ततः स्थानात्पलायते तदा पठन्ति साधवः सूत्रं, न कश्चिद्दोषः, अन्ये नेच्छंति यतः कस्तं जानाति अविभिन्नो भिन्नो वा मारित इति, अपरे पुनरेवमाहुः—यत्र मार्जारादिः स्वयं मृतोऽन्येन वा केनाप्यविभिन्न एव सन्मारितस्तत्र यावत्तत्कलेवरं न भिद्यते तावन्नास्वाध्यायिकं, विभिन्ने त्वस्वाध्यायिकमिति, तदेतदसमीचीनं, यतश्चर्मादिभेदतश्चतुर्विधमस्वाध्यायिकं तस्मादविभिन्नेऽप्यस्वाध्याय एव, 'रत्ते वूढे य सुद्धं'ति यत्तत्र षष्टिहस्ताभ्यन्तरे पतितं रक्तं—रुधिरं तेनावकाशेन पानीयप्रवाह आगतस्तेन व्यूढं तदा पौरुषीत्रयमध्येऽपि शुद्धमस्वाध्यायिकमिति स्वाध्यायः कार्यः। तैरश्चास्वाध्यायिकप्रस्तावादन्यदप्याह—'अण्डगे'त्यादि, षष्टिहस्ताभ्यन्तरे अण्डके पतिते यदि तदण्डकमभिन्नमद्याप्यस्ति तदा तस्मिन्नुज्झिते स्वाध्यायः कल्पते, अथ पतितं सत्तदण्डकं भिन्नं तस्य च कललविन्दुर्भूमौ पतितस्तदा न कल्पते, न च भूमिं खनन्ति, इतरथा—भूमिखनने यदि तदस्वाध्यायिकमपनयन्ति तथापि तिस्रः पौरुषीर्यावदस्वाध्यायः, अथ कल्पे पतितं सत्तदण्डकं भिन्नं कललविन्दुर्वा तत्र लग्नस्तदा तस्मिन् षष्टिह-

स्तेभ्यः परतो वहिर्नीत्वा धौते कल्पते, अण्डकविन्दोरसृग्विन्दोर्वाऽस्वाध्यायिकस्य प्रमाणं यत्र मक्षिकापादा निमज्जन्ति, किमुक्तं भवति ?—यावन्मात्रे मक्षिकापादो निमज्जति तावन्मात्रेऽप्यण्डकविन्दौ रुधिरविन्दौ वा भूमौ पतितेऽस्वाध्यायः । किंच—"अजराउ"इत्यादि, अजरायुः—जरायुरहिता हस्तिन्यादिका प्रसूता तिस्रः पौरुषीः स्वाध्यायं हन्ति, अहोरात्रं छेदं मुक्त्वा—अहोरात्रे तु छिन्ने आसन्नायामपि प्रसूतायां कल्पते स्वाध्यायः, जरायुजादीनां पुनर्गवादीनां यावज्जरायुर्लम्बते तावदस्वाध्यायः, जरायौ पतितेऽपि सति तदनन्तरं तिस्रः पौरुषीर्यावदस्वाध्यायः, तथा राजपथे यद्यस्वाध्यायिकविन्दवः पतितास्तदा कल्पते स्वाध्यायः, किं कारणमिति चेदुच्यते यत्तस्त्वयोगत आगच्छतां गच्छतां च मनुष्यतिरश्चां पदनिपातैरेवोत्क्षिप्तं भवति, जिनाज्ञा चात्र प्रमाणमतो न कश्चित् दोषः, अथ पुनस्तदस्वाध्यायिकं तैरश्चं राजपथादन्यत्र षष्टिहस्ताभ्यन्तरे पतितं तदा तस्मिन् व्यूढे वर्षोदकेन उपलक्षणमेतत् दग्धे वा प्रदीपनकेन शुद्ध्यति स्वाध्यायः । गतं तैरश्चमधुना मानुषमाह—'माणुस्से'त्यादि, मानुषमस्वाध्यायिकं चतुर्धा—चर्म रुधिरं मांसं अस्थि च, एतेष्वस्थि मुक्त्वा शेषेषु सत्सु क्षेत्रतो हस्तशताभ्यन्तरे न कल्पते स्वाध्यायः कालतोऽहोरात्रं, 'परियावन्नविवन्ने'त्ति मानुषं तैरश्चं वा यद्रुधिरं तद्यदि पर्यापन्नत्वेन—परिणामान्तरापन्नत्वेन स्वभावाद्वर्णाद्विवर्णीभूतं भवति खदिरकल्कसदृशं तदा तदस्वाध्यायिकं न भवतीति क्रियते तस्मिन् पतितेऽपि स्वाध्यायः, 'सेस'त्ति पर्यापन्नं विवर्णं मुक्त्वा शेषमस्वाध्यायिकं भवति, 'तिग'त्ति यदविरताया मासे २ आर्तवमस्वाध्यायिकमागच्छति तत्स्वभावतस्त्रीणि दिनानि गलति, ततस्तानि त्रीणि दिनानि यावदस्वाध्यायः, त्रयाणां दिवसानां परतोऽपि कस्याश्चिद्गलति परं न तदार्तवं भवति किंतु तन्महारक्तं नियमात् पर्यापन्नं विवर्णं भवतीति नास्वाध्यायिकं गण्यते, तथा यदि प्रसूताया दारको जातस्तदा सप्त दिनान्यस्वाध्यायिकं अष्टमे दिवसे कर्तव्यः स्वाध्यायः, अथ दारिका जाता तर्हि सा रक्तोत्कटेति तस्यां जाता-

यामष्टौ दिनान्यस्वाध्यायः, नवमे दिने स्वाध्यायः कल्पते । एनमेव गाथावयवं व्याचिख्यासुराह—'रत्तु'इत्यादि, निषेककाले यदि रक्तोत्कटता तदा स्त्री इति तस्यां जातायां दिनान्यष्टावस्वाध्यायः, दारकः शुक्राधिकस्ततस्तस्मिन् जाते सप्त दिनान्यस्वाध्यायः, तथा स्त्रीणां त्रयाणां दिनानां परतस्तन्महारक्तमनार्तवं भवति ततो न गणनीयं । अस्थि मुक्त्वेति यत्पूर्वमुक्तं तस्येदानीं विधिमाह—'दंते' इत्यादि, यत्र हस्तशताभ्यन्तरे दारकादीनां दन्तः पतितो भवति तत्र प्रयत्नतो निभालनीयः, यदि दृश्यते तदा परिष्ठाप्यः, अथ सम्यग्मृग्यमाणैरपि न दृष्टस्तदा शुद्धमिति कल्पते स्वाध्यायः, अन्ये तु ब्रुवते—तस्यावहेठनार्थं कायोत्सर्गः करणीयः, दन्तं मुक्त्वा शेषे अङ्गोपाङ्गसम्बन्धिन्यस्थिनि हस्तशताभ्यन्तरे पतिते द्वादश वर्षाणि न कल्पते स्वाध्यायः, अथास्थीन्यग्निना दग्धानि तदा हस्तशताभ्यन्तरे स्थितेष्वपि तेषु नैव क्रियते स्वाध्यायस्य—वाचनादेः परिहारः, अनुप्रेक्षा तु न कदाचनापि प्रतिषिध्यते इति २६८ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ ७१ ॥ इदानीं 'नंदीसरदीवठिय'इत्येकोनसप्तत्यधिकद्विशततमं द्वारमाह—

विक्खंभो कोडिसयं तिसट्ठिकोडी उ लक्खतचुलसीई। नंदीसरो पमाणंगुलेण इय जोयणपमाणो ॥ ७२ ॥ एयंतो अंजणरयणसामकरपसरपूरिओवंता । बालतमालवणावलिजुयव्व घणपडलकलियव्व ॥ ७३ ॥ चउरो अंजणगिरिणो पुव्वाइदिसासु ताणमेक्केक्को । चुलसीसहस्सउच्चो ओगाढो जोयणसहस्सं ॥७४॥ जुम्मं। मूले सहस्सदसगं विक्खंभे तस्स उवरि सयदसगं। तेसु घणमणिमयाइं सिद्धायणाणि चत्तारि ॥ ७५ ॥ जोयणसयदीहाइं बावत्तरि ऊसियाइं रम्माइं । पन्नास वित्थ-

डाइं चउदुवाराइं सधयाइं ॥ ७६ ॥ पइदारं मणितोरणपेच्छामंडवविरायमाणाइं । पञ्चधणुस्सय-
ऊसियअठ्ठुत्तरसयजिणजुयाइं ॥ ७७ ॥ मणिपेढिया महिंदज्झया य पोक्खरिणिया य पासेसुं ।
कंकेल्लिसत्तवन्नयचंपयचूयावणजुयाओ ॥ ७८ ॥ नंदुत्तरा य नंदा आणंदा नंदिवद्धणा नाम ।
पुक्खरिणीओ चउरो पुवंजणचउदिसिं संति ॥ ७९ ॥ विक्खंभायामेहिं जोयणलक्खप्पमाणजु-
त्ताओ । दसजोयणूसियाओ चउदिसितोरणवणजुयाओ ॥ ८० ॥ तासिं मज्झे दहिमुह मही-
हरा दुद्धदहियसियवन्ना । पोक्खरिणीकल्लोलाहणणोब्भवफेणपिण्डुव ॥ ८१ ॥ चउसट्ठिसहस्सुच्चा
दसजोयणसहस्सवित्थडा सवे । सहसमहो उवगाढा उवरिं अहो पल्लयागारा ॥ ८२ ॥ अंजण-
गिरिसिहरेसु व तेसुवि जिणमंदिराइं रुंदाइं । वावीणमंतरालेसु पवयदुगं दुगं अत्थि ॥ ८३ ॥ ते
रइकराभिहाणा विदिसिठिया अठ्ठ पउमरायाभा । उवरिठ्ठियजिणिंदसिणाणघुसिणरससंगपिं-
गुव ॥८४॥ अच्चंतमसिणफासा अमरेसरविंदविहियआवासा । दसजोयणसहस्सुच्चा उविद्धा गाउ-
यसहस्सं ॥८५॥ झल्लरिसंठाणठिया उच्चत्तसमाणवित्थडा सवे । तेसुवि जिणभवणाइं नेयाइं ज-
हुत्तमाणाइं ॥ ८६ ॥ दाहिणदिसाएँ भद्दा विसालवावी य कुमुयपुक्खरिणी । तह पुंडरीगिणी
मणितोरणआरामरमणीया ॥ ८७ ॥ पुक्खरिणी नंदिसेणा तहा अमोहा य वावि गोथूभा । तह
य सुदंसणवावी पच्छिमअंजणचउदिसासु ॥८८॥ विजया य वेजयंती जयंति अपराजिया उ वावी-

ओ । उत्तरदिसाएँ पुव्वुत्तवावीमाणा उ बारसवि ॥ ८९ ॥ सव्वाओ वावीओ दहिमुहसेलाण ठाण-भूयाओ । अंजणगिरिपमुहं गिरितेरसगं विज्जइ चउदिसिंपि ॥ ९० ॥ इय बावन्नगिरीसरसिहरट्ठियवीयरायबिम्बाणं । पूयणकए चउव्विहदेवनिकाओ समेइ सया ॥ ९१ ॥

इतो जम्बूद्वीपादष्टमो वलयाकारः कामं कमनीयतया सकलसुरविसरानन्दी नन्दीश्वरो नाम द्वीपोऽस्ति, नन्द्या—अत्युदारजिनमन्दिरोद्यानपुष्करिणीपर्वतप्रभृतिप्रभूतपदार्थसार्थसमुद्भूतयाऽत्यद्भूतया समृद्ध्या ईश्वरः—स्फातिमान्नन्दीश्वरः, स च विष्कम्भे—चक्रवालविष्कम्भतः एकं कोटिशतं त्रिषष्टिः कोट्यश्चतुरशीतिर्लक्षाः १६३८४००००० इत्येतावद्योजनप्रमाणः, योजनानि चात्र प्रमाणाङ्गुलनिष्पन्नान्यवसेयानि । अथाञ्जनशैलादिवक्तव्यतामाह—'एयन्तो'इत्यादि गाथात्रिकं, एतस्य नन्दीश्वरस्य द्वीपस्यान्तः—मध्यभागे पूर्वादिषु दिक्षु एकैकस्यां दिशि एकैकभावेन चत्वारः सर्वात्मनाऽञ्जनरत्नमया अञ्जनगिरयः प्रज्ञप्ताः, तद्यथा—पूर्वस्यां दिशि देवरमणः दक्षिणस्यां नित्योद्योतः पश्चिमायां स्वयंप्रभः उत्तरस्यां रमणीयः, उक्तं च—"पुव्वदिसि देवरमणो निच्चुज्जोओ य दाहिणदिसाए । अवरदिसाएँ सयंपभ रमणिज्जो उत्तरे पासे ॥ १ ॥" कथंभूतास्ते इत्याह—अञ्जनरत्नानां—कृष्णरत्नविशेषाणां ये श्यामाः करप्रसराः—प्रभापटलानि तैः पूरिताः—परिपूर्णतां नीता उपान्ताः—पर्यन्तभागा येषां ते तथा, एवंविधाश्चोत्प्रेक्ष्यन्ते—बालतमालवनावलीयुता इव—तरुणतरतमालतरुवनमण्डलीवलयिता इव, तथा घनपटलकलिता इव—प्रावृषेण्यपयोदपङ्क्तियुक्ता इव, धाराधरा हि विविधोद्यानहृद्याः सजलजलदजालमालिनो हि भवन्तीति, तथा तेषामञ्जनकपर्वतानामेकैकोऽञ्जनकः पर्वतः प्रत्येकं चतुरशीतियोजनसहस्राणि उच्चः—उच्छ्रितः एकं योजनसहस्रमवगाढो—भूमिप्रविष्टः, तथा तस्यैकैकस्याञ्जनगिरेर्मूले—धरणितले सहस्रदशकं—दश योजनसहस्राणि भवन्ति विष्कम्भे—विस्तरतः, तदनन्तरं च

एवं चैते चत्वारोऽप्यञ्जनगिरयो मूले वि-
मात्रया मात्रया परिहीयमानस्य तस्य उपरि–पर्यन्तभागे शतदशकं–योजनसहस्रं विष्कम्भेन, एकैकस्मिन्नेकैक-
स्तीर्णा मध्ये संक्षिप्ता उपरि च तनुकाः संवृत्ताः, तेषु चाञ्जनगिरिषु घनमणिमयानि–नानाविधनिःसपत्नरत्ननिर्मितानि सिद्धायतनानि भवन्ति । अथैतेषामेव प्रमा-
सद्भावाच्चत्वारि सिद्धायतनानि–शाश्वतानि सिद्धानां वा–शाश्वतीनामर्हत्प्रतिमानामायतनानि योजनशतमेकं दीर्घाणि–पूर्वपश्चिमतः द्वासप्ततिर्योजनान्युच्छ्रि-
णादिप्रतिपादनायाह—'जोयणे'त्यादि गाथात्रयं, तानि सिद्धायतनानि दक्षिणोत्तरतः, तथा एकैकस्यां दिशि एकैकसद्भावेन चत्वारि
तानि रम्याणि–रमणीयानि पञ्चाशद्योजनानि विस्तृतानि–विस्तीर्णानि मणयः–चन्द्रकान्तादिरत्नविशेषास्तन्निष्पन्नैस्तोरणैः,
द्वाराणि येषु तानि चतुर्द्वाराणि, सध्वजानि–सपताकानि, तथा प्रतिद्वारमेकैकस्मिन् द्वारे तथा पञ्चधनुःशतसमुच्छ्रितैरष्टोत्तर-
प्रेक्षा–प्रेक्षणकं तदर्थं मण्डपाः–प्रेक्षामण्डपास्तैश्च प्रसिद्धस्वरूपैर्विशेषेण राजमानानि–शोभमानानि, मणिमय्यः–सर्वा-
शतसङ्ख्यैः ऋषभवर्धमानचन्द्राननवारिषेणाख्यैर्जिनैः शाश्वतप्रतिमाभिर्युतानि–संयुक्तानि । तेषां सिद्धायतनानां मध्ये अथवा
त्मना रत्नमय्यः पीठिका–वेदिकाः प्रज्ञप्ताः, तासामुपरि महेन्द्रध्वजाः, महेन्द्रा इत्यतिमहान्तः समयभाषया ते च ते ध्वजाश्चेति, पुष्करिण्यो–
महेन्द्रस्यैव–शक्रादेर्ध्वजा महेन्द्रध्वजाः, तेषां च पुरतः प्रत्येकं योजनशतायामाः पञ्चाशद्योजनविष्कम्भा दशयोजनोद्वेधाः सप्तच्छदवनं
वाप्यः प्रज्ञप्ताः, ताश्च पार्श्वेषु चतसृषु दिक्षु कङ्केल्लिसप्तपर्णचम्पकचूतवनयुक्ताः, तत्र पूर्वस्यां दिशि अशोकवनं दक्षिणस्यां गाथाद्वयं,
पश्चिमायां चम्पकवनं उत्तरस्यां च सहकारवनमिति । उक्ता अञ्जनगिरिवक्तव्यता, अथ पुष्करिणीवक्तव्यतामाह—'नन्दु'इत्यादि पुष्करिण्यः
तेषु चतुर्षु अञ्जनगिरिषु मध्ये योऽसौ पूर्वः–पूर्वदिग्भावी अञ्जनगिरिस्तस्य चतुर्दिशि–चतसृषु दिक्षु लक्षमेकं गत्वा चतस्रः योजन-
सन्ति, तद्यथा–पूर्वस्यां नन्दोत्तरा दक्षिणस्यां नन्दा अपरस्यां आनन्दा उत्तरस्यां नन्दिवर्धना च, ताश्च विष्कम्भायामाभ्यां

लक्षप्रमाणयुक्ता दश योजनान्युच्छ्रिता—उद्विद्धाः, तथा चतसृषु दिक्षु नानामणिमयस्तम्भसंनिविष्टैरुत्तुङ्गैस्तोरणैः पूर्वादिदिक्क्रमेणाशोकसप्तच्छदचम्पकचूतवनैश्च युक्ताः—परिक्षिप्ताः। एवं शेषाञ्जनगिरिसम्बन्धिनीनामपि पुष्करिणीनां वाच्यं। तासां मध्ये—बहुमध्यदेशभागे सर्वात्मना स्फटिकमया दधिमुखनामानो महीधराः—पर्वताः सन्ति, ते च दुग्धदधिवत् सितः—श्वेतो वर्णः—कान्तिर्येषां ते तथा, अतश्चोत्प्रेक्ष्यन्ते—पुष्करिणीनां—वापीनां ये कल्लोलाः—समुल्लसन्तस्तरङ्गास्तेषां यदाहननं—परस्परं प्रतिस्फालनं तत्समुद्भूताः फेनपिण्डा इव। एते दधिमुखपर्वताः सर्वेऽपि चतुःषष्टियोजनसहस्राण्युच्छ्रिता दश योजनसहस्राणि विस्तीर्णाः एकं योजनसहस्रमधोऽवगाढाः उपर्यधश्च सर्वत्र समाः अत एव पल्यङ्कसंस्थानसंस्थिताः। तेष्वपि दधिमुखपर्वतेषु रुन्द्राणि—विशालानि जिनमन्दिराणि—सिद्धायतनानि वक्तव्यानि, यथाऽञ्जनगिरिशिखरेषु अञ्जनपर्वतोपरिवर्तिसिद्धायतनवक्तव्यतात्रापि वक्तव्येति भावः, तथैतासामेव वापीनामपान्तरालेषु द्वौ द्वौ पर्वतौ स्तः। तत्स्वरूपमाह—'ते'इत्यादि गाथात्रयं, पूर्वाञ्जनगिरेर्विदिक्षु व्यवस्थिता द्वयोर्द्वयोर्वाप्योरन्तराले बहिःकोणयोः प्रत्यासत्तौ प्रत्येकं पर्वतद्वितयभावादष्टौ रतिकरनामानः पर्वताः सन्ति, ते च 'पद्मरागाभाः' पद्मरागः—शोणमणिविशेषस्तद्वदाभा—प्रभा येषां ते तथा, अत उत्प्रेक्ष्यन्ते—उपरिस्थिताः—तदुपरि वर्तमाना ये जिनेन्द्राः—शाश्वतप्रतिमास्तेषां यत् स्नानं—कुङ्कुमजलं तत्संपर्कतः पाटला इव, सर्वेऽपि चैते रतिकराः प्रकामकोमलस्पर्शाः तथा सुरपतिसमूहकृतावासाः दश योजनसहस्राण्युच्छ्रिता गव्यूतसहस्रं—सार्धयोजनशतद्वयमुद्विद्धाः उच्चत्वसमानविस्तारा दशयोजनसहस्रविस्तीर्णा इत्यर्थः सर्वतः समा झल्लरीसंस्थानसंस्थिता इति, तेष्वपि रतिकरेषु यथोक्तमानानि पूर्वोक्तप्रमाणानि जिनभवनानि ज्ञेयानि, तदेवमुक्ता पूर्वाञ्जनगिरिवक्तव्यता, एतदनुसारेण च शेषदिगञ्जनगिरीणामपि सर्वं वाच्यं, नवरं पुष्करिणीनां नामसु विशेषः, तमेवाह—'दाहिणे'त्यादि गाथाचतुष्कं, दक्षिणस्यां दिशि दक्षिणाञ्जने इत्यर्थः पूर्वस्यां दिशि भद्रा वापी दक्षिणस्यां

दिशि विशाला अपरस्यां दिशि कुमुदा उत्तरस्यां पुण्डरीकिणी, एताश्च सर्वा अपि मणिमयतोरणारामरमणीयाः । तथा पश्चिमाञ्जनगिरौ पूर्वस्यां दिशि नन्दिषेणा वापी दक्षिणस्याममोघा अपरस्यां गोस्तूभा उत्तरस्यां सुदर्शना तथोत्तराञ्जनगिरौ पूर्वस्यां दिशि विजया दक्षिणस्यां वैजयन्ती अपरस्यां जयन्ती उत्तरस्यामपराजिता, द्वादशानामप्यमूषां वापीनां प्रमाणादिकं सर्वं पूर्वाञ्जनगिरिवापीवद् वक्तव्यं, सर्वा अपि षोडशाप्येता वाप्यो दधिमुखशैलानां स्थानभूताः—आधारभूता एव, एतासु वापीषु मध्यभागे दधिमुखशैला व्यवस्थिता इत्यर्थः, तदेवं नन्दीश्वरद्वीपे चतसृष्वपि दिक्षु प्रत्येकमञ्जनगिरिप्रमुखं गिरित्रयोदशकं विद्यते, तथाहि—एकैकस्यां दिशि एकैकोऽञ्जनगिरिश्चत्वारो दधिमुखाः अष्टौ रतिकराः मिलिताश्च त्रयोदश, ते च चतसृष्वपि दिक्षु प्रत्येकमेतावतामद्रीणां सद्भावाच्चतुर्भिर्गुण्यन्ते, जाता द्विपञ्चाशद्गिरयः । साम्प्रतं सर्वोपसंहारमाह—'इये'त्यादि, इति—प्रागुक्तप्रकारेण द्विपञ्चाशत्सङ्ख्यगिरीश्वरशिखरेषु स्थितानां वीतरागविम्बानां पूजाकृते चतुर्विधो—भवनपतिव्यन्तरज्योतिष्कवैमानिकलक्षणो देवनिकायः—सुरसमूहः सदा—सर्वकालं समेति, इह च नन्दीश्वरवक्तव्यतायां बहु वक्तव्यं तत्तु नोच्यते ग्रन्थगौरवभयात्, विशेषार्थिना च **जीवाभिगमादि**शास्त्राणि परिभावनीयानि, यच्चात्र **जीवाभिगमद्वीपसागरप्रज्ञप्तिसंग्रहिण्यादिभ्यः** किञ्चिदन्यथात्वं दृश्यते तन्मतान्तरमवसेयमिति २६९ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ इदानीं '**लद्धीओ**'त्ति सप्तत्यधिकद्विशततमं द्वारमाह—

**आमोसहि १ विप्पोसहि २ खेलोसहि ३ जल्लओसही ४ चेव । सव्वोसहि ५ संभिन्ने ६ ओही ७**
**रिउ ८ विउलमइलद्धी ९ ॥ ९२ ॥ चारण १० आसीविस ११ केवलिय १२ गणहारिणो य १३**

पुव्वधरा १४ । अरहंत १५ चक्कवट्टी १६ बलदेवा १७ वासुदेवा १८ य ॥ ९३ ॥ खीरमहुसप्पिआसव १९ कोट्ठयबुद्धी २० पयाणुसारी २१ य । तह बीयबुद्धि २२ तेयग २३ आहारग २४ सीयलेसा २५ य ॥ ९४ ॥ वेउव्विदेहलद्धी २६ अक्खीणमहाणसी २७ पुलाया २८ य । परिणामतववसेणं एमाई हुंति लद्धीओ ॥ ९५ ॥ संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो वावि (वयवा) । अन्ने विडित्ति विट्ठा भासंति पइत्ति पासवणं ॥ ९६ ॥ एए अन्ने य बहू जेसिं सव्वेवि सुरहिणोऽवयवा । रोगोवसमसमत्था ते हुंति तओसहिं पत्ता ॥ ९७ ॥ जो सुणइ सव्वओ मुणइ सव्वविसए उ सव्वसोएहिं । सुणइ बहुएवि सद्दे भिन्ने संभिन्नसोओ सो ॥ ९८ ॥ रिउ सामन्नं तम्मत्तगाहिणी रिउमई मणोनाणं । पायं विसेसविमुहं घडमेत्तं चिंतियं मुणइ ॥ ९९ ॥ विउलं वत्थुविसेसण नाणं तग्गाहिणी मई विउला । चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं ॥ १५०० ॥ आसी दाढा तग्गय महाविसाऽऽसीविसा दुविहभेया । ते कम्मजाइभेएण णेगहा चउविहविकप्पा ॥१॥ खीरमहुसप्पिसाओवमाणवयणा तयासवा हुंति । कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ॥ २ ॥ जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो । जो अत्थपएणऽत्थं अणुसरइ स बीयबुद्धीओ ॥ ३ ॥ अक्खीणमहाणसिया भिक्खं जेणाणियं पुणो तेणं । परिभुत्तं चिय खिज्जइ बहुएहिवि न उण अन्नेहिं ॥ ४ ॥ भवसिद्धियपुरिसाणं एयाओ हुंति भणियलद्धीओ । भवसिद्धियम-

हिलाणवि जत्तिय जायंति तं वोच्छं ॥५॥ अरहंतचक्किकेसवबलसंभिन्ने य चारणे पुव्वा । गणहर-पुलायआहारगं च न हु भवियमहिलाणं ॥ ६ ॥ अभवियपुरिसाणं पुण दस पुव्विल्लाउ केवलित्तं च । उज्जुमई विउलमई तेरस एयाउ न हु हुंति ॥ ७ ॥ अभवियमहिलाणंपि हु एयाओ हुंति भणियलद्धीओ । महुखीरासवलद्धीवि नेय सेसा उ अविरुद्धा ॥ ८ ॥

लब्धिशब्दस्य प्रत्येकमभिसम्बन्धात् आमर्शौषधिलब्धिः विप्रुडौषधिलब्धिः खेलौषधिलब्धिः जल्लौषधिलब्धिः सर्वौषधिलब्धिः सम्भिन्नेति 'सूचकत्वात्सूत्रस्य' सम्भिन्नश्रोतोलब्धिः अवधिलब्धिः ऋजुमतिलब्धिः विपुलमतिलब्धिः चारणलब्धिः आशीविषलब्धिः केवलिलब्धिः गण-धरलब्धिः पूर्वधरलब्धिः अर्हल्लब्धिः चक्रवर्तिलब्धिः बलदेवलब्धिः वासुदेवलब्धिः क्षीरमधुसर्पिराश्रवलब्धिः कोष्ठकबुद्धिलब्धिः पदानुसारिल-ब्धिः तथा बीजबुद्धिलब्धिः तेजोलेश्यालब्धिः आहारकलब्धिः शीतलेश्यालब्धिः वैकुर्विकदेहलब्धिः अक्षीणमहानसीलब्धिः पुलाकलब्धिः, एवमेता अष्टाविंशतिसङ्ख्याः आदिशब्दादन्याश्च जीवानां शुभशुभतरशुभतमपरिणामवशादसाधारणतपःप्रभावाच्च नानाविधलब्धयः ऋद्धिवि-शेषा भवन्ति। अथैताः क्रमेण व्याचिख्यासुः पूर्वं तावदामर्शौषध्यादिलब्धिपञ्चकं प्रपञ्चयितुमाह—'संफरिसे'त्यादि गाथाद्वयं, संस्पर्शनमा-मर्शः स एवौषधिर्यस्यासावामर्शौषधिः—करादिसंस्पर्शमात्रादेव विविधव्याधिव्यपनयनसमर्थो लब्धिलब्धिमतोरभेदोपचारात् साधुरेवाम-र्शौषधिरित्यर्थः, इदमत्र तात्पर्य—यत्प्रभावात् स्वहस्तपाद्यवयवपरामर्शमात्रेणैवात्मनः परस्य वा सर्वेऽपि रोगाः प्रणश्यन्ति सा आमर्शौ-षधिः, 'मुत्तपुरीसाण विप्पुसो वावि'(ऽवयवा)त्तिमूत्रपुरीषयोर्विप्रुषः—अवयवाः इह विप्रुडुच्यते, 'विप्पुसो वाऽवि'त्ति पाठस्तु ग्रन्थान्तरे-ष्वदृष्टत्वादुपेक्षितः, अथचावश्यमेतद्व्याख्यानेन प्रयोजनं तदेत्थं व्याख्येयं—वाशब्दः समुच्चये अपिशब्द एवकारार्थो भिन्नक्रमश्च, ततो

मूत्रपुरीषयोरेवावयवा इह विप्रुडुच्यते इति, अन्ये तु भाषन्ते—विडिति विष्ठा पत्ति प्रश्रवणं मूत्रं, 'सूचकत्वात् सूत्रस्ये'ति, तत 'एए'त्ति एतौ विप्रुण्मूत्रावयवौ 'अन्ने य'त्ति अन्ये च खेलजल्लकेशनखादयो बहवः सर्वे च समुदिता अवयवा येषां साधूनां सुरभयो रोगोपशमसमर्थाश्च ते साधवो भवन्ति, कथंभूता इत्याह—'तओसहिं पत्ति'त्ति ते च ते औषधयश्च तदौषधयो—विण्मूत्रखेलजल्लकेशनखाद्यौषधयः सर्वौषधयश्च ताः प्राप्तास्तदौषधिप्राप्ताः, विण्मूत्राद्यौषधयः सर्वौषधयश्च साधवो भवन्तीत्यर्थः, एतदुक्तं भवति—यन्माहात्म्यान्मूत्रपुरीषावयवमात्रमपि रोगराशिप्रणाशाय संपद्यते सुरभि च सा विप्रुडौषधिः, तथा खेलः—श्लेष्मा जल्लो—मलः कर्णवदननाशिकानयनजिह्वासमुद्भवः शरीरसम्भवश्च तौ खेलजल्लौ यत्प्रभावतः सर्वरोगापहारकौ सुरभी च भवतः सा क्रमेण खेलौषधिर्जल्लौषधिश्च, तथा यन्माहात्म्यतो विण्मूत्रकेशनखादयश्च सर्वेऽप्यवयवाः समुदिताः सर्वत्र भेषजीभावं सौरभं च भजंते सा सर्वौषधिरिति । सम्प्रति सम्भिन्नश्रोतोलब्धिमाह—'जो'इत्यादि, यः सर्वतः—सर्वैरपि शरीरदेशैः शृणोति स सम्भिन्नश्रोताः, अथवा यः सर्वानपि शब्दादीन् विषयान् सर्वैरपि श्रोतोभिः—इन्द्रियैर्जानाति, एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विषयान् योऽवगच्छतीत्यर्थः, स सम्भिन्नश्रोतोलब्धिमान्, अथवा द्वादशयोजनविस्तृतस्य चक्रवर्तिकटकस्य युगपद्ब्रुवाणस्य तत्तूर्यसङ्घातस्य वा समकालमास्फाल्यमानस्य सम्भिन्नान्—लक्षणतो विधानतश्च परस्परं विभिन्नान् जननिवहसमुत्थान् शङ्खकाहलाभेरीभाणकढक्कादितूर्यसमुत्थान् वा युगपदेव च सुबहून् शब्दान् यः शृणोति स संभिन्नश्रोताः सम्भिन्नश्रोतोलब्धिरिति । अथ ऋजुमतिलब्धिं विपुलमतिलब्धिं चाह—'रिउ'इत्यादि गाथाद्वयं, ऋजु—सामान्यं वस्तुमात्रं तद्ग्राहिणी मतिः—संवेदनं ऋजुमति मनोज्ञानं—मनःपर्यायज्ञानमेव, सा च प्रायो—बाहुल्येन विशेषविमुखं—देशकालाद्यनेकपर्यायपरित्यक्तं घटमात्रं परेण चिन्तितं जानाति, तथा विपुलं वस्तुनो घटादेर्विशेषाणां देशक्षेत्रकालादीनां मानं—सङ्ख्यास्वरूपं तद्ग्राहिणी मतिर्विपुला, सा

च परेण चिन्तितं घटं प्रसङ्गतः पर्यवशतैरुपेतमनुसरति—सौवर्णः पाटलिपुत्रकोऽद्यतनो महानपवरकस्थित इत्याद्यपि प्रभूतविशेषैर्विशिष्टं
घटं परेण चिन्तितमवगच्छतीत्यर्थः, इदमत्र तात्पर्य—मनःपर्यायज्ञानं द्वेधा—ऋजुमतिर्विपुलमतिश्च, तत्र सामान्यघटादिवस्तुमात्रचिन्तनप्र-
वृत्तमनःपरिणामग्राहि किञ्चिदविशुद्धतरमर्धतृतीयाङ्गुलहीनमनुष्यक्षेत्रविषयं ज्ञानं ऋजुमतिलब्धिः, पर्यायशतोपेतघटादिवस्तुविशेषचिन्तन-
प्रवृत्तमनोद्रव्यग्राहि स्फुटतरं संपूर्णमनुष्यक्षेत्रविषयं ज्ञानं विपुलमतिलब्धिः। सम्प्रत्याशीविषलब्धिमाह—'आसी'त्यादि, आश्यो—दंष्ट्रास्तासु
गतं—स्थितं महद्विषं येषां भवति ते आशीविषाः, ते च द्विभेदाः—कर्मभेदेन जातिभेदेन च, तत्र कर्मभेदेन पञ्चेन्द्रियतिर्यग्योनयो मनुष्या
देवाश्च सहस्रारान्ता इत्यनेकविधाः, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकभुजङ्गादिसाध्यां क्रियां कुर्वन्ति, शापप्र-
दानादिना परं व्यापादयन्तीति भावः, देवास्त्वपर्याप्तावस्थायां तच्छक्तिमन्तो मन्तव्याः, ते हि पूर्वं मनुष्यभवे समुपार्जिताशीविषलब्धयः
सहस्रारान्तदेवेष्वभिनवोत्पन्ना अपर्याप्तावस्थायां प्राग्भविकाशीविषलब्धिसंस्कारादाशीविषलब्धिमन्तो व्यवह्रियन्ते, ततः परं तु पर्याप्ता-
वस्थायां संस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः, यद्यपि च नाम पर्याप्ता अपि देवाः शापादिना परं व्यापादयन्ति तथापि न
लब्धिव्यपदेशः, भवप्रत्ययतस्तथारूपसामर्थ्यस्य सर्वसाधारणत्वात्, गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरिति प्रसिद्धेः, जातिभेदेन च
वृश्चिकमण्डूकसर्पमनुष्यभेदाश्चतुर्विधाः क्रमेण बहुबहुतरबहुतमातिबहुतमविषाः, वृश्चिकविषं ह्युत्कृष्टतोऽर्धभरतक्षेत्रप्रमाणं वपुर्व्याप्नोति मण्डू-
कविषं भरतक्षेत्रप्रमाणं भुजङ्गविषं जम्बूद्वीपप्रमाणं मनुष्यविषं तु समयक्षेत्रप्रमाणमिति। अथ क्षीरमधुसर्पिराश्रवलब्धिं कोष्ठकबुद्धिलब्धिं
चाह—'खीरे'त्यादि, क्षीरं—दुग्धं मधु—मधुरद्रव्यं सर्पिः—घृतं एतत्स्वादोपमानं वचनं वैरस्वाम्यादिवत्तदाश्रवाः—क्षीरमधुसर्पिराश्रवा
भवन्ति, इयमत्र भावना—पुण्ड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्धार्धक्रमेण दीयते यावदेकस्याः पीतगोक्षीरायाः क्षीरं, तत्किल चातुरि-

क्यमित्यागमे गीयते, तद्यथोपभुज्यमानमतीव मनःशरीरप्रह्लादहेतुरुपजायते तथा यद्वचनमाकर्ण्यमानं मनःशरीरसुखोत्पादनाय प्रभवति ते क्षीराश्रवाः, क्षीरमिव वचनमा—समन्तात् श्रवन्तीति व्युत्पत्तेः, एवं मध्वपि किमप्यतिशायिशर्करादिमधुरद्रव्यं द्रष्टव्यं, घृतमपि पुण्ड्रेक्षुचारिगोक्षीरसमुत्थं मन्दाग्निकथितं विशिष्टवर्णाद्युपेतं, मध्विव वचनमाश्रवन्तीति मध्वाश्रवाः, घृतमिव वचनमाश्रवन्तीति घृताश्रवाः, उपलक्षणत्वाच्च अमृताश्रविण ईक्षुरसाश्रविण इत्यादयोऽप्येवमवसेयाः, अथवा येषां पात्रपतितं कदन्नमपि क्षीरमधुसर्पिरादिरसवीर्यविपाकं जायते ते क्रमेण क्षीराश्रविणो मध्वाश्रविणः सर्पिराश्रविण इत्यादि । तथा कोष्ठकनिक्षिप्तधान्यानीव सुनिर्गला—अविस्मृतत्वाच्चिरस्थायिनः सूत्रार्थौ येषां ते कोष्ठकधान्यसुनिर्गलसूत्रार्थाः कोष्ठबुद्धयः, कोष्ठे इव धान्यं या बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति न किमपि तयोः सूत्रार्थयोः कालान्तरेऽपि गलति सा कोष्ठबुद्धिलब्धिरिति भावः । अथ पदानुसारिलब्धिं बीजबुद्धिलब्धिं चाह—'जो' इत्यादि, योऽध्यापकादेः केनापि सूत्रपदेनाधीयते(ऽनुधावति—अधीते) बह्वपि सूत्रं स्वप्रज्ञयाऽभ्युह्य तदवस्थमेव गृह्णाति स पदानुसारलब्धिमान्, तथा उत्पादव्ययध्रौव्ययुक्तं सदित्यादिवदर्थप्रधानं पदमर्थपदं तेनैकेनापि बीजभूतेनाधिगतेन योऽन्यमश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते स बीजबुद्धिलब्धिमान्, इयं च बीजबुद्धिलब्धिः सर्वोत्तमप्रकर्षप्राप्ता गणभृतां भगवतां, ते हि उत्पादादिपदत्रयमवधार्य सकलमपि द्वादशाङ्ग्यात्मकं प्रवचनमभिसूत्रयन्तीति । इदानीमक्षीणमहानसीलब्धिमाह—'अक्खीणे'त्यादि, येनानीतं भैक्षं बहुभिरपि—लक्षसङ्ख्यैरप्यन्यैस्तृप्तितोऽपि भुक्तं न क्षीयते यावदात्मना भुङ्क्ते, किंतु तेनैव भुक्तं निष्ठां याति तस्याक्षीणमहानसीलब्धिः, अत्र चावधिचारणकेवलिगणधारिपूर्वधरअर्हच्चक्रवर्तिबलदेववासुदेवतेजोलेश्याऽऽहारकशीतलेश्यावैक्रियपुलाकलब्धयः प्रायेण प्रागेव परमार्थतः प्रतिपादितत्वात्प्रतीतत्वाच्च सूत्रकृता न विवृता इति, तेजोलेश्याशीतलेश्यालब्धी च स्थानाशून्यार्थं किञ्चिद्व्याख्यायेते—तत्र तेजोले-

श्यालब्धिः क्रोधाधिक्यात्प्रतिपन्थिनं प्रति मुखेनानेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनदक्षतीव्रतरतेजोनिसर्जनशक्तिः; शीतलेश्यालब्धि-स्त्वगण्यकारुण्यवशादनुग्राह्यं प्रति तेजोलेश्याप्रशमनप्रत्यलशीतलतेजोविशेषविमोचनसामर्थ्यं, पुरा किल **गोशालकः** कूर्मग्रामे करुणा-रसिकान्तःकरणतया स्नानाभावाविर्भूतयूकासन्ततितायिनं **वैशिकायिनं** बालतपस्विनमकारणकलहकलनतया 'अरे यूकाशय्यातर' इत्या-द्ययुक्तोक्तिभिः कोपाटोपाध्मायमानमानसमकरोत्, तदनु वैशिकायिनस्तस्य दुरात्मनो दाहाय वज्रदहनदेश्यां तेजोलेश्यां विससर्ज, तत्का-लमेव च भगवान् **वर्धमानस्वामी** प्रगुणितकरुणस्तत्प्राणत्राणाय प्रचुरपरितापोच्छेदच्छेकां शीतलेश्याममुञ्चदिति, इह च यः खलु-नियमात् निरन्तरं षष्ठं तपः करोति पारणकदिने च सनखकुल्माषमुष्ट्या जलचुलुकेन चैकेनात्मानं यापयति तस्य षण्मासान्ते तेजो-लेश्यालब्धिरियमुत्पद्यते, तथा **'एमाई हुंति लद्धीओ'** इत्यत्रादिशब्दादन्या अप्यणुत्वमहत्त्वलघुत्वगुरुत्वप्राप्तिप्राकाम्येशित्ववशित्वाप्र-तिघातित्वान्तर्धानकामरूपित्वादिका लब्धयो बोद्धव्याः, तत्राणुत्वं—अणुशरीरता येन विशच्छिद्रमपि प्रविशति तत्र च चक्रवर्तिभोगानपि भुङ्क्ते, महत्त्वं मेरोरपि महत्तरशरीरकरणसामर्थ्यं, लघुत्वं—वायोरपि लघुतरशरीरता, गुरुत्वं—वज्रादपि गुरुतरशरीरतया इन्द्रादिभि-रपि प्रकृष्टबलैर्दुःसहता, प्राप्तिः—भूमिस्थस्य अङ्गुल्यग्रेण मेरुपर्वताग्रप्रभाकरादेः स्पर्शसामर्थ्यं, प्राकाम्यम्—अप्सु भूमाविव प्रविशतो गमन-शक्तिः, तथाऽप्स्विव भूमावुन्मज्जननिमज्जने, ईशित्वं—त्रैलोक्यस्य प्रभुता तीर्थकरत्रिदशेश्वरऋद्धिविकरणं, वशित्वं—सर्वजीववशीकरण-लब्धिः; अप्रतिघातित्वम्—अद्रिमध्येऽपि निःसङ्गगमनं, अन्तर्धानम्—अदृश्यरूपता, कामरूपित्वं—युगपदेव नानाकाररूपतया विकुर्वणशक्ति-रिति । अथ भव्यत्वाभव्यत्वविशिष्टानां पुरुषाणां महिलानां च यावत्यो लब्धयो भवन्ति तत् प्रतिपादयति—**'भवे'**त्यादि गाथाच-तुष्कं, भवा—भाविनी सिद्धिः—मुक्तिपदं येषां ते भवसिद्धिका भव्या इत्यर्थः ते च ते पुरुषाश्च ते तथा तेषामेताः—पूर्वोक्ताः सर्वा अपि

लब्धयो भवन्ति, तथा भवसिद्धिकमहिलानामपि यावत्यो लब्धयो न जायन्ते तद्वक्ष्ये। प्रतिज्ञातमेव निर्वाहयति—'अरिहंते'त्यादि, अर्हच्चक्रवर्तिवासुदेवबलदेवसम्भिन्नश्रोतश्चारणपूर्वधरगणधरपुलाकाहारकलब्धिलक्षणा एता दश लब्धयो भव्यमहिलानां—भव्यस्त्रीणां 'न हु' नैव भवन्ति, शेषास्त्वष्टादश लब्धयो भव्यस्त्रीणां भवन्तीति सामर्थ्याद्गम्यते, यच्च मल्लिस्वामिनः स्त्रीत्वेऽपि यत्तीर्थकरत्वमभूत्तदाश्चर्यभूतत्वान्न गण्यते, तथा अनन्तरमुक्तास्तावद्दश लब्धयः केवलित्वं च—केवलिलब्धिरन्यच्च ऋजुमतिविपुलमतिलक्षणं लब्धिद्वयमित्येतास्त्रयोदश लब्धयः पुरुषाणामप्यभव्यानां नैव कदाचनापि भवन्ति, शेषाः पुनः पञ्चदश भवन्तीति भावः, अभव्यमहिलानामप्येताः पूर्वभणितास्त्रयोदश लब्धयो न भवन्ति, चतुर्दशी मधुक्षीराश्रवलब्धिरपि नैव तासां भवति, शेषास्त्वेतद्व्यतिरिक्ताश्चतुर्दशलब्धयोऽविरुद्धाः, भवन्तीत्यर्थः, ॥ २७० ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १५०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ इदानीं 'तव'त्येकसप्तत्यधिकद्विशततमं द्वारमाह—

**पुरिमड्ढेक्कासणनिव्विगइयआयंबिलोववासेहिं। एगलया इय पंचहिं होइ तवो इंदियजउत्ति ॥ ९ ॥ निव्विगइयमायामं उववासो इय लयाहिं तिहिं भणिओ। नामेण जोगसुद्धी नवदिणमाणो तवो एसो ॥ १०॥ नाणंमि दंसणंमि य चरणंमि य तिन्नि तिन्नि पत्तेयं। उववासो तप्पूयापुव्वं तन्नामगतवंमि ॥ ११ ॥ एक्कासणगं तह निव्विगइयमायंबिलं अभत्तट्ठो। इय होइ लयचउक्कं कसायविजए तवचरणे ॥ १२ ॥ खमणं एक्कासणगं एक्कगसित्थं च एगठाणं च। एक्कगदत्तं नीव्वियमायंबिलमट्ठकवलं च ॥ १३॥ एसा एगा लइया अट्ठहिं लइयाहिं दिवस चउसट्ठी। इय अट्ठकम्मसूडणतवंमि**

सत्त छगं।
भणिया जिणिंदेहिं ॥ १४ ॥ इग दुग इग तिग दुग चउ तिग पण चउ छक्क पंच सत्त छगं।
अट्ठग सत्तग नवगं अट्ठग नव सत्त अट्ठेव ॥ १५ ॥ छग सत्तग पण छक्कं चउ पण तिग चउर
दुग तिगं एगं। दुग एक्कग उववासा लहुसिहनिक्कीलियतवंमि ॥ १६ ॥ चउपन्नं खमणसयं दिणाण
तह पारणाणि तेत्तीसं। इह परिवाडिचउक्के वरिसदुगं दिवस अडवीसा ॥ १७ ॥ विगईओ
निव्विगईयं तहा अलेवाडयं च आयामं। परिवाडिचउक्कंमि य पारणएसुं विहेयव्वं ॥ १८॥ इग दुग
इग तिग दुग चउ तिग पण चउ छक्क पंच सत्त छगं। अड सत्त नवऽड दस नव एक्कारस दस य
बारसगं ॥ १९ ॥ एक्कार तेर बारस चउदस तेरस य पनर चउदसगं। सोलस पनरस सोला होइ
विवरीयमेक्कंतं ॥ २० ॥ एए उ अभत्तट्ठा इगसट्ठी पारणाणमिह होइ। एसा एगा लइया चउ-
ग्गुणाए पुण इमाए ॥ २१ ॥ वरिसछगं मासदुगं दिवसाइं तहेव बारस हवंति। एत्थ महासीह-
निक्कीलियंमि तिव्वे तवच्चरणे ॥ २२ ॥ एक्को दुगाइ एक्कग अंतरिया जाव सोलस हवंति। पुण
सोलस एगंता एक्कंतरिया अभत्तट्ठा ॥ २३ ॥ पारणयाणं सट्ठी परिवाडिचउक्कगंमि चत्तारि।
वरिसाणि हुंति मुत्तावलीतवे दिवससंखाए ॥ २४ ॥ इग दु ति काहलियासुं दाडिमपुप्फेसु हुंति
अट्ठ तिगा। एगाइसोलसंता सरियाजुयलंमि उववासा ॥ २५ ॥ अंतंमि तस्स पयगं तत्थंकट्ठाण-
मेक्कमह पंच।सत्त य सत्त य पण पण तिन्निक्कंतेसु तिगरयणा ॥२६॥ पारणयदिणट्ठासी परिवाडि-

चउक्कगे वरिसपणगं । नव मासा अट्ठारस दिणाणि रयणावलितवंमि ॥ २७ ॥ रयणावलीकमेणं कीरइ कणगावली तवो नवरं । कुज्जा दुगा तिगपए दाडिमपुप्फेसु पयगे य ॥ २८ ॥ परिवाडि-चउक्के वरिसपंचगं दिणदुगूणमासतिगं । पढमतवुत्तो कज्जो पारणयविही तवप्पणगे ॥ २९ ॥ भद्दाइतवेसु तहाऽऽइया लया इग दु तिन्नि चउ पंच । तह ति चउ पंच इग दु तह पणग इग दोन्नि ति चउक्कं ॥ ३० ॥ तह दु ति चउ पणगेगं तह चउ पणगेग दोन्नि तिन्नेव । पणहत्तरि उववासा पारणयाणं तु पणवीसा ॥ ३१ ॥ पभणामि महाभद्दं इग दुग तिग चउ पणच्छ सत्तेव । तह चउ पण छग सत्तग इग दु ति तह सत्त एक्कं दो ॥ ३२ ॥ तिन्नि चउ पंच छक्कं तह तिग चउ पण छ सत्तगेगं दो । तह छग सत्तग इग दो तिग चउ पण तह दुगं ति चउ ॥३३॥ पण छग सत्तेक्कं तह पण छग सत्तेक्क दोन्नि तिय चउरो । पारणयाण गुणवन्ना छण्णउयसयं चउत्थाणं ॥ ३४ ॥ भद्दो-त्तरपडिमाए पण छग सत्तट्ठ नव तहा सत्त । अड नव पंचच्छ तहा नव पण छग सत्त अट्ठेव ॥३५॥ तह छग सत्तट्ठ नव पण तहट्ठ नव पणट्ठ सत्तऽभसट्ठा । पणहत्तरसयसंखा पारणगाणं तु पणवीसा ॥ ३६ ॥ पडिमाएँ सव्वभद्दाए पण छ सत्तट्ठ नव दसेक्कारा । तह अड नव दस एक्कार पण छ सत्त य तहेक्कारा ॥ ३७ ॥ पण छग सत्तग अड नव दस तह सत्तट्ठ नव दसेक्कारा । पण छ तहा दस एक्कार पण छ सत्तट्ठ नव य तहा ॥ ३८ ॥ छग सत्तड नव दसगं एक्कारस पंच तह नवग

दुसगं । एक्कारस पण छक्कं सत्तट्ठ य इह तवे होंति ॥ ३९ ॥ तिन्नि सया बाणउया इत्थुववासाण होंति संखाए । पारणया गुणवन्ना भद्दाइतवा इमे भणिया ॥ ४० ॥ पडिवइया एक्कचिय दुगं दुइज्जाण जाव पन्नरस । खमणेहऽमावसाओ होइ तवो सव्वसंपत्ती ॥ ४१ ॥ रोहिणिरिक्खदिणे रोहिणीतवो सत्त मासवरिसाइं । सिरिवासुपुज्जपूयापुव्वं कीरइ अभत्तट्ठो ॥ ४२ ॥ एक्कारस सुयदेवीतवंमि एक्कारसीओ मोणेणं । कीरंति चउत्थेहिं सुयदेवीपूयणापुव्वं ॥ ४३ ॥ सव्वंगसुंदरतवे कुणंति जिणपूयखंतिनियमपरा । अट्ठुववासे एगंतरंबिले धवलपक्खंमि ॥ ४४ ॥ एवं निरुजसिहोवि हु नवरं सो होइ सामले पक्खे । तंमि य अहिओ कीरइ गिलाणपडिजागरणनियमो ॥ ४५ ॥ सो परमभूसणो होइ जंमि आयंबिलाणि बत्तीसं । अंतरपारणयाइं भूसणदाणं च देवस्स ॥ ४६ ॥ आयइजणगोऽवेवं नवरं सव्वासु धम्मकिरियासुं । अणिगूहियबलविरियप्पवित्तिजुत्तेहिं सो कज्जो ॥ ४७ ॥ एगंतरोववासा सव्वरसं पारणं च चेत्तंमि । सोहग्गकप्परुक्खो होइ तहा दिज्जए दाणं ॥ ४८ ॥ तवचरणसमत्तीए कप्पतरू जिणपुरो ससत्तीए । कायव्वो नाणाविहफलविलसिरसाहियासहिओ ॥ ४९ ॥ तित्थयरजणणिपूयापुव्वं एक्कासणाइं सत्तेव । तित्थयरजणणिनामगतवंमि कीरंति भद्दवए ॥ ५० ॥ एक्कासणाइएहिं भद्दवयचउक्कगंमि सोलसहिं । होइ समोसरणतवो तप्पूयापुव्वविहिएहिं ॥ ५१ ॥ नंदीसरपडपूया निययसामत्थसरिसतवचरणा ।

होइ अमावस्सतवो अमावसावासरुद्दिट्ठो ॥ ५२ ॥ सिरिपुंडरीयनामगतवंमि एगासणाइ कायव्वं । चेत्तस्स पुन्निमाए पूएयव्वा य तप्पडिमा ॥५३॥ देवग्गठवियकलसो जा पुन्नो अक्खयाण मुट्ठीए । जो तत्थ सत्तिसरिसो तवो तमक्खयनिहिं बिंति ॥ ५४ ॥ वड्ढइ जहा कलाए एक्केक्काएऽणुवासरं चंदो । संपुन्नो संपज्जइ जा सयलकलाहिं पव्वंमि ॥ ५५ ॥ तह पडिवयाए एक्को कवलो बीयाइ पुन्निमा जाव । एक्केक्ककवलवुड्ढी जा तेसिं होइ पन्नरसगं ॥ ५६ ॥ एक्केक्कं किण्हंमि य पक्खंमि कलं जहा ससी मुयइ । कवलोवि तहा मुच्चइ जाऽमावासाइ सो एक्को ॥ ५७ ॥ एसा चंदप्पडिमा जवमज्झा मासमित्तपरिमाणा । इण्हिं तु वज्जमज्झं मासप्पडिमं पवक्खामि ॥ ५८ ॥ पन्नरस पडिवयाए एक्कगहाणीएँ जावऽमावस्सा । एक्केणं कवलेणं जाया तह पडिवईऽवि सिआ ॥ ५९ ॥ बीयाइयासु इक्कगवुड्ढी जा पुन्निमाएँ पन्नरस । जवमज्झवज्जमज्झाओ दोवि पडिमाओं भणियाओ ॥ ६० ॥ दिवसे दिवसे एगा दत्ती पढमंमि सत्तगे गिज्झा । वड्ढइ दत्ती सह सत्तगेणं जा सत्त सत्तमए ॥ ६१ ॥ इगुवन्नवासरेहिं होइ इमा सत्तसत्तमी पडिमा । अट्ठट्ठमिया नवनवमिया य दसदसमिया चेव ॥ ६२ ॥ नवरं वड्ढइ दत्ती सह अट्ठगनवगदसगवुड्ढीहिं । चउसट्ठी एक्कासी सयं च दिवसाणिमासु कमा ॥ ६३ ॥ एगाइयाणि आयंबिलाणि एक्केक्कवुड्ढिमंताणि । पज्जंतअभत्तट्ठाणि जाव पुन्नं सयं तेसिं ॥ ६४ ॥ एयं आयंबिलवद्धमाणनामं महातवच्चरणं । वरिसाणि

एत्थ चउदस मासतिगं वीस दिवसाणि ॥ ६५ ॥ गुणरयणवच्छरंमी सोलस मासा हवंति तवच-रणे । एगंतरोववासा पढमे मासंमि कायवा ॥ ६६ ॥ ठायवं उक्कुडुआसणेण दिवसे निसाएँ गुण निच्चं । वीरासणिएण तहा होयवमवाउडेणं च ॥ ६७ ॥ बीयाइसु मासेसुं कुज्जा एगुत्तराए वुड्ढीए । जा सोलसमे सोलस उववासा हुंति मासंमि ॥ ६८ ॥ जं पढमगंमि मासे तमणुट्ठाणं समग्गमा-सेसु । पंच सयाइं दिणाणं वीसूणाइं इमंमि तवे ॥ ६९ ॥ तह अंगोवंगाणं चिइवंदणपंचमंगलाईणं । उवहाणाइ जहाविहि हवंति नेयाइं तह समया ॥ ७० ॥

तपति-निर्दहति दुष्कर्माणीति तपः, तच्च नानाविधोपाधिनिबन्धनत्वादनेकप्रकारं, तत्रेन्द्रियजयमूलत्वाज्जिनधर्मस्य प्रथममिन्द्रियजयाह्वयं तपः प्राह—प्रथमदिने पूर्वार्धं द्वितीयदिने एकाशनकं तृतीयदिने निर्विकृतिकं चतुर्थदिने आचामाम्लं पञ्चमदिने उपवासः इत्येवं पञ्चमि-स्तपोदिनैरेका लता, लता श्रेणिः परिपाटी चेत्येकार्थाः, एकैकं चेन्द्रियमाश्रित्यैवंस्वरूपा एकैका लता क्रियते, ततः पञ्चमिर्लतामिः पञ्च-विंशत्या दिवसैरिन्द्रियजयाख्यस्तपोविशेषो भवति, इन्द्रियाणां—स्पर्शनादीनां पञ्चानामपि जयो—दमनं यस्मादसाविन्द्रियजयः, इन्द्रियज-यहेतुत्वाद्वा इन्द्रियजयः, यद्यपि सर्वाण्यपि तपांसीन्द्रियजये प्रभविष्णूनि तथापीन्द्रियजयमालम्ब्य क्रियमाणत्वादस्यैव तपसस्तद्धेतुत्वं पूर्वसूरिमिरमिहितं, एवमुत्तरत्रापि वाच्यं ॥ ९ ॥ योगशुद्धितपः प्राह—'निविगइये'त्यादि, निर्विकृतिकं आचामाम्लं उपवासश्च इत्येका लता, एकैकं च योगमाश्रित्यैवंविधा एकैका लता क्रियते, ततस्तिसृमिर्लतामिर्योगशुद्धिनामकं दिननवकप्रमाणमेतत्तपो भणितं पूर्वर्षिमिः, सूत्रे च पुंस्त्वं प्राकृतत्वात्, योगानां—मनोवाकायव्यापाराणां शुद्धिः—अनवद्यता यस्मात्तत्तपो योगशुद्धिः ॥ १० ॥ ज्ञानदर्शनचारित्रतपांसि

प्राह—'नाणंमी'त्यादि, ज्ञाने—ज्ञानशुद्धिनिमित्तं दर्शने—दर्शनशुद्धिनिमित्तं चरणे—चारित्रशुद्धिनिमित्तं तत्पूजापूर्वं—ज्ञानादिपूजापुरस्सरं तन्नामके—ज्ञानादिनामके तपसि प्रत्येकं त्रयस्त्रय उपवासा भवन्ति, इदमुक्तं भवति—ज्ञानस्य सिद्धिहेतोस्त्रिभिरुपवासैः कृतैर्ज्ञानतपो भवति, तत्र च यथाशक्ति ज्ञानस्य—सिद्धान्तादेः पुस्तकन्यस्तस्य सुप्रशस्तपरिधापनिकादिकरणं ज्ञानवतां च पुरुषाणामेषणीयवस्त्रान्न-पानप्रदानादिरूपा पूजा कर्तव्या, एवं त्रिभिरुपवासैर्दर्शनतपो भवति, नवरं तत्र दर्शनप्रभावकाणां सम्मत्यादिग्रन्थानां सद्गुरूणां च पूजा विधेया, तथा त्रिभिरुपवासैश्चारित्रतपो भवति, तत्रापि चारित्रिणां पूजा करणीयेति ॥ ११ ॥ कषायविजयतपः प्राह—'एके'त्यादि, एकाशनकं निर्विकृतिकं आचाम्लं अभक्तार्थश्च—उपवासः इत्येका लता, प्रतिकषायं चैकैका लता क्रियते तत्कषाय-विजयं तपश्चरणं, कषायाणां—क्रोधमानमायालोभलक्षणानां चतुर्णां विशेषेण जयः—अभिभवनं यस्मादितिकृत्वा, अस्मिंश्च तपसि चतस्रो लताः षोडश दिवसानि ॥ १२ ॥ अष्टकर्मसूदनं तपः प्राह—'खमण'मित्यादिगाथाद्वयं, क्षमणम्-उपवासः १ एकाशनं २ एक-सिक्थकं ३ एकस्थानकं ३ एका दत्तिः ५ निर्विकृतिकं ६ आचाम्लं ७ अष्टकवलं च ८ एषा एका लता, एकैकं च कर्माश्रित्यैवंरूपा एकैका लता क्रियते, ततोऽष्टाभिर्लताभिर्दिवसानां चतुःषष्टिर्भणिता जिनेन्द्रैरष्टकर्मसूदनतपसि, अष्टानां कर्मणां—ज्ञानावरणादीनां सूदनं—विनाशनं यस्मात्तदष्टकर्मसूदनं तपः, एतत्समाप्तौ च जिनपतीनां स्नपनविलेपनपूजनपरिधापनिकादि विधेयं, पुरतो विशिष्टबलिमध्ये कनक-मयी कर्मतरुदारिका कुठारिका च ढौकनीया ॥ १२ ॥ लघुसिंहनिष्क्रीडितं तपः प्रतिपादयितुमाह—'इगे'त्यादिगाथाद्वयं, अनन्तरवक्ष्य-माणमहासिंहनिष्क्रीडितापेक्षया लघु—ह्रस्वं सिंहस्य निष्क्रीडितं—गमनमित्यर्थः सिंहनिष्क्रीडितं तदिव यत्तपस्तत्सिंहनिष्क्रीडितमिति, सिंहो हि गच्छन् गत्वाऽतिक्रान्तं देशमवलोकयति एवं यत्र तपस्यतिक्रान्ततपोविशेषं पुनरासेव्याग्रेतनं तं प्रकरोति तत् सिंहनिष्क्रीडितमिति,

तत्र द्व्यादीनां नवान्तानामग्रे प्रत्येकमे-

एतस्य चैवं रचना—एकाद्यो नवान्ताः क्रमेण स्थाप्यन्ते, पुनरपि प्रत्यागत्या नवाद्य एकान्ताः, ततश्च द्व्यादीनां नवान्तानामग्रे प्रत्येकमे-
काद्योऽष्टान्ताः स्थाप्यन्ते, ततो नवाद्येकान्तप्रत्यागतपङ्क्तावष्टादीनां द्व्यन्तानामादौ सप्ताद्य एकान्ताः स्थाप्यन्ते इति, स्थापना चेयं, अय-

| | | | |
|---|---|---|---|
| १ | | | १ |
| २ | १ | १ | २ |
| ३ | २ | २ | ३ |
| ४ | ३ | ३ | ४ |
| ५ | ४ | ४ | ५ |
| ६ | ५ | ५ | ६ |
| ७ | ६ | ६ | ७ |
| ८ | ७ | ७ | ८ |
| ९ | ८ | | ९ |

मर्थः—प्रथममेक उपवासः क्रियते ततः पारणकं एवमन्तरा सर्वत्र पारणकं ज्ञेयं, ततो द्वौ तत एकः ततस्त्रय उपवासा ततो द्वौ ततश्चत्वारः ततस्त्रयः ततः पञ्च ततश्चत्वारः ततः षट् ततः पञ्च ततः सप्त ततः षट् ततोऽष्टौ ततः सप्त ततो नव ततोऽष्टौ ततो नव ततः सप्त ततोऽष्टौ ततः षट् ततः सप्त ततः पञ्च ततः षट् ततश्चत्वारः ततः पञ्च ततस्त्रयः ततश्चत्वारः ततो द्वौ ततस्त्रयः तत एकः ततो द्वौ तत एक इति, एते लघुसिंहनिष्क्रीडिते तपस्युपवासाः ॥ १३ ॥ अथो-
पवासदिवसानां पारणकदिनानां च सङ्ख्यामाह—'चउ'इत्यादि, लघुसिंहनिष्क्रीडिते तपसि क्षमणदिनानां—उपवास-
दिवसानां शतमेकं चतुष्पञ्चाशदधिकं, तथाहि—द्वे नवसङ्कलने तत एका ४५, पुनः ४५, अष्टसङ्कलना चैका ३६
सप्तसङ्कलनाप्येकैव २८, सर्वमीलने च यथोक्ता सङ्ख्या भवति १५४, तथा पारणकानि त्रयस्त्रिंशत्, तदेवं सर्वदि-
नसङ्ख्या १८७, ते च षण्मासाः सप्तदिनाधिका भवन्ति, एतच्च तपः परिपाटीचतुष्टयेन क्रियते, तत एतेषु चतुर्गुणितेषु द्वे वर्षे अष्टाविं-
शतिदिनाधिके भवतः ॥ १४ ॥ अथ परिपाटीचतुष्टयेऽपि प्रत्येकं पारणस्वरूपं निरूपयति—'विगई'त्यादि, प्रथमपरिपाट्यां पारणकेषु
विकृतयो भवन्ति, सर्वरसोपेतं पारणकमिति भावः, द्वितीयपरिपाट्यां निर्विकृतिकं—विकृतिविरहः, तृतीयपरिपाट्यामलेपकारि—वल्लचण-
कादि, चतुर्थपरिपाट्यामाचाम्लं परिमितभैक्ष्यमिति, एवमस्य तपसः पारणकभेदेन चतस्रः परिपाट्यो विधेयाः ॥ १५ ॥ महासिंहनि-

ष्क्रीडितं तप आह—'इगे'त्यादि गाथाद्वयं, इह एकादयः षोडशान्ताः षोडशादयश्चैकान्ताः स्थाप्यन्ते, ततश्च द्व्यादीनां षोडशान्तानामग्रे प्रत्येकमेकादयः पञ्चदशान्ताः षोडशादिषु त्वेकान्तेषु पञ्चदशादीनां द्व्यन्तानामादौ प्रत्येकं चतुर्दशादयः एकान्ताः स्थाप्यन्ते, स्थापना चेयं,

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ | १५ | १४ | १६ | १६ |
| महासिंहनिष्क्रीडितं तपः | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ | १५ | १४ | १६ | |

अयमर्थः—प्रथममेक उपवासः ततो द्वौ तत एकः ततस्त्रयः ततो द्वौ ततश्चत्वारः ततस्त्रयः ततः पञ्च ततश्चत्वारः ततः षट् ततः पञ्च ततः सप्त ततः षट् ततोऽष्टौ ततः सप्त ततो नव ततोऽष्टौ ततो दश ततो नव तत एकादश ततो दश ततो द्वादश तत एकादश ततस्त्रयोदश ततो द्वादश ततश्चतुर्दश ततस्त्रयोदश ततः पञ्चदश ततश्चतुर्दश ततः षोडश ततः पञ्चदशोपवासा इति, एवं प्रत्यागत्याऽपि षोडशोपवासाः ततश्चतुर्दशेत्यादि तावद्वसेयं यावत्पर्यंत एक उपवास इति ॥ १६ ॥ अथोक्तशेषं दिनसर्वसङ्ख्यां चाह—'एए'इत्यादि गाथाद्वयं, अस्मिन्महासिंहनिष्क्रीडिते तीव्रे—अतिदुश्चरे तपश्चरणे एते—पूर्वोक्तपङ्क्तिद्वितयोदिता अभक्तार्था—उपवासा भवन्ति, ते च सर्वसङ्ख्यया चत्वारि शतानि सप्तनवत्युत्तराणि, तथाहि—अत्र द्वे षोडशसङ्कलने १३६—१३६ एका पञ्चदशसङ्कलने (ना) १२० एकैव चतुर्दशसङ्कलने (ना) १०५, तथा एकषष्टिः पारणकानि भवन्ति, ततः सर्वैकत्वे वर्षमेकं षण्मासा अष्टादश च दिनानीत्येषा परिपाटी, एतदपि च तपः पूर्ववत्पारणकभेदेन चतसृभिः परिपाटीभिः परिसमाप्यते, ततोऽस्य राशेश्चतुर्भिर्गुणने वर्षाणि षट् मासौ द्वौ दिनानि च द्वादश भवन्तीति ॥ १७ ॥ मुक्तावलीतपः प्राह—'एको'इत्यादि गाथा-

द्वयं, मुक्तावली—मौक्तिकहारस्तदाकारस्थापनया यत्तपस्तन्मुक्तावलीत्युच्यते, तत्रादौ तावदेककः स्थाप्यते ततो द्विकत्रिकादय एककान्तरिता भवन्ति यावत् पर्यन्ते षोडश, ततः पुनः प्रत्यागत्या षोडशादय एककपर्यन्ता एककान्तरिताः स्थाप्यन्ते, स्थापना चेयं, अयमर्थः—पूर्वं तावदेक उपवासः ततो द्वौ ततः पुनरेकः ततस्त्रयः

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ |
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ |

तत एकः ततश्चत्वारः तत एकः ततः पञ्च तत एकः ततः षट् तत एकः ततः सप्त तत एकः ततोऽष्टौ तत एकः ततो नव तत एकः ततो दश तत एकः तत एकादश तत एकः ततो द्वादश तत एकः ततस्त्रयोदश तत एकः ततश्चतुर्दश तत एकः ततः पञ्चदश तत एकः ततः षोडशोपवासाः, एवमर्धं मुक्तावल्या निष्पन्नं, द्वितीयमप्यर्धमेवं द्रष्टव्यं, केवलमत्र प्रतिलोमगत्या उपवासान् करोति, तद्यथा—षोडशोपवासान् कृत्वा एकमुपवासं करोति, ततः पञ्चदश तत एकमित्येवमेकोपवासान्तरितमेकोत्तरहान्या तावन्नेयं यावत्पर्यन्ते द्वावुपवासौ कृत्वा एकमुपवासं करोतीति, एतेऽभक्तार्था—उपवासाः सर्वाग्रेण त्रीणि शतानि, तथाहि—द्वे षोडशसङ्कलने १३६—१३६ अष्टाविंशतिश्च चतुर्थानि तथा षष्टिः पारणकानि ततो जातं वर्षमेकं, एतदपि तपः प्राग्वच्चतसृभिः परिपाटीभिः समाप्यते, ततो भवन्ति मुक्तावलीतपसि दिवससङ्ख्यया चत्वारि वर्षाणीति, अंतकृद्दशासु पुनर्य एव प्रथमपङ्क्तिपर्यन्तवर्तिनः षोडश द्वितीयपङ्क्तिप्रारम्भेऽपि त एव, एक एव षोडशक इति तात्पर्यं ॥ १८ ॥ रत्नावलीतपः प्राह—'दुगे'त्यादि गाथात्रयं, रत्नावली—आभरणविशेषः रत्नावलीव रत्नावली, यथा हि रत्नावली उभयत आदिसूक्ष्मस्थूलस्थूलतरविभागकाहलिकाख्यसौवर्णावयवद्वययुक्ता तदनु दाडिमपुष्पोभयोपशोभिता ततोऽपि सरलसरिकायुगलशालिनी पुनर्मध्यदेशे सुश्लिष्टपदकसमलङ्कृता च भवति, एवं यत्तपः पट्टादावुपदर्श्यमानमिममाकारं

धारयति तद्रत्नावलीत्युच्यते, तत्रैककद्विकत्रिका उत्तराधर्यक्रमेण काहलिकयोः स्थाप्या भवन्ति, तदनु द्वयोरपि दाडिमपुष्पयोः प्रत्येकमष्टौ त्रिकाः, ते चोभयतो रेखाचतुष्टयेन नव कोष्ठकान् विधाय मध्ये च शून्यं कृत्वा स्थाप्यन्ते, ततश्चाधोऽधः सरिकायुगले एकादयः षोडशान्ताः स्थाप्याः, तस्य च सरिकायुगलस्यान्ते—पर्यन्ते पदकं—पङ्क्तयष्टकेन चतुर्स्त्रिंशदङ्कस्थानानि, कोष्ठकाः इत्यर्थः, तत्र प्रथमायां पङ्क्तावेकमङ्कस्थानं द्वितीयस्यां पञ्च तृतीयस्यां सप्त चतुर्थ्यामपि सप्त पञ्चम्यां पञ्च षष्ठ्यामपि पञ्च सप्तम्यां त्रीणि अष्टम्यां त्वेकमेवाङ्कस्थानं, तेषु चतुस्त्रिंशत्यपि कोष्ठकेषु त्रिकरचना, त्रिकाः स्थाप्यन्ते इति

१ २ ३ | ३ ३ ३ / ३ ० ३ / ३ ३ ३ | १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

३
३ ३ ३ ३ ३
३ ३ ३ ३ ३ ३ ३
३ ३ ३ ३ ३ ३ ३
३ ३ ३ ३ ३
३ ३ ३ ३ ३
३ ३ ३
३

१ २ ३ | ३ ३ ३ / ३ ० ३ / ३ ३ ३ | १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६

भावः, स्थापना चेयं, इदमत्र तात्पर्य—रत्नावलीतपसि प्रथममेकमुपवासं करोति ततो द्वौ ततस्त्रीन् इत्येका काहलिका; अंतरा च सर्वत्र

पारणकं वाच्यं, ततोऽष्टावष्टमानि—उपवासत्रिकात्मकानि करोति, एतैः किल काहलिकाया अधस्ताद्दाडिमपुष्पं निष्पद्यते, ततश्चैकमु-
पवासं करोति ततोऽपि द्वौ ततस्त्रीन् ततोऽपि चतुर इत्येवं पञ्च षट् सप्ताष्टौ नव दशैकादश द्वादश त्रयोदश चतुर्दश पञ्चदश षोडशो-
पवासान् करोति, एषा हि दाडिमपुष्पस्याधस्तादेका सरिका, ततश्चतुस्त्रिंशदष्टमानि करोति, एतैः किल पदकं संपद्यते, ततः षोडशो-
पवासान् करोति ततः पञ्चदश ततश्चतुर्दश इत्येवमेकैकहान्या तावन्नेयं यावदेक उपवासः, एषा द्वितीया सरिका भवति, ततश्चाष्टाव-
ष्टमानि करोति, एतैरपि द्वितीयं दाडिमपुष्पं निष्पद्यते, ततस्त्रीनुपवासान् करोति ततो द्वौ तत एकमुपवासं करोति, एतैर्द्वितीया काहलिका
निष्पद्यते, एवं सति परिपूर्णा रत्नावली सिद्धा भवति, अस्मिंश्च रत्नावलीतपसि काहलिकायास्तपोदिनानि १२ दाडिमपुष्पयोः षोड-
शभिरष्टमैर्दिनानि ४८ सरिकायुगले द्वाभ्यां षोडशसंकलनाभ्यां दिनानि २७२ पदके चतुस्त्रिंशताऽष्टमैर्दिनानि १०२, सर्वैकत्वे चत्वारि
शतानि चतुस्त्रिंशदुत्तराणि, अष्टाशीतिश्च पारणकदिनानि, उभयमीलने पञ्च शतानि द्वाविंशत्युत्तराणि, पिण्डितास्तु वर्षमेकं मासाः
पञ्च दिनानि च द्वादश, इदमपि च तपः पूर्ववच्चतसृभिः परिपाटीभिः समर्थ्यते, ततश्चतुर्भिर्गुणने वर्षाणि पञ्च मासा नव अष्टादश
च दिनानीति ॥ १९ ॥ २० ॥ २१ ॥ कनकावलीतपः प्राह—'रयणे'त्यादि गाथाद्वयं, कनकमयमणिकनिष्पन्नो भूषणविशेषः कन-
कावली तदाकारं स्थापनया यत्तपस्तत्कनकावलीत्युच्यते, एतच्च कनकावलीतपो रत्नावलीतपःक्रमेणैव क्रियते, नवरं—केवलं दाडिम-
पुष्पयोः पदके च त्रिकपदे—त्रिकाणां स्थाने उपवासद्वयसूचका द्विकाः कर्तव्याः, शेषं पुनः सर्वमपि तथैवेति, अस्मिंश्च तपसि काह-
लिकयोस्तपोदिनानि द्वादश दाडिमपुष्पयोर्द्वात्रिंशत् सरिकायुगले द्वे शते द्वासप्तत्युत्तरे पदके चाष्टषष्टिः, सर्वसङ्ख्यया त्रीणि शतानि
चतुरशीत्यधिकानि, अष्टाशीतिश्च पारणकदिवसाः, तत्प्रक्षेपाच्चत्वारि दिनशतानि द्वासप्तत्युत्तराणि, सर्वाग्रपिण्डस्तु वर्षमेकं त्रयो मासा द्वावि-

शतिर्दिवसाः, अत्रापि पूर्ववच्चतुर्भिर्गुणने वर्षाणि पञ्च मासौ द्वौ दिनानि चाष्टाविंशतिरिति, अन्तकृद्दशादिषु तु कनकावल्यां पदके दाडिमद्वये च द्विकस्थाने त्रिका उक्ताः रत्नावल्यां च द्विका इति। तथा प्रथमतपसि लघुसिंहनिष्क्रीडिते यः सर्वरसाहारादिकः पारणकविधिरुक्तः स तपःपञ्चकेऽपि—लघुवृहत्सिंहनिष्क्रीडितमुक्तावलीरत्नावलीकनकावलीलक्षणे कर्तव्यः, एतच्च सर्वं यथायथं भावितमेवेति ॥ २२ ॥ अथ भद्रतपः प्राह—'भद्दे'त्यादि गाथाद्वयं, भद्रादिषु—भद्रमहाभद्रभद्रोत्तरसर्वतोभद्रेषु तपस्सु मध्ये पूर्वं भद्रतपः प्रतिपादयामि, तद्यथा—आदौ भवेदेक उपवासः ततो द्वौ ततस्त्रयः ततश्चत्वारः ततः पञ्च इत्येका लता एवं त्रयश्चत्वारः पञ्च एको द्वौ इति द्वितीया पञ्च एको द्वौ त्रयश्चत्वार इति तृतीया द्वौ त्रयश्चत्वारः पञ्च एक इति चतुर्थी चत्वारः पञ्च एको द्वौ त्रय इति पञ्चमी, इह पञ्चमिलताभिः पञ्चसप्ततिरुपवासाः पञ्चविंशतिश्च पारणकानि, उभयमीलने च शतमेकं दिनानामिति ॥ २३ ॥ स्थापना चेयं।

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |
| ३ | ४ | ५ | १ | २ |
| ५ | १ | २ | ३ | ४ |
| २ | ३ | ४ | ५ | १ |
| ४ | ५ | १ | २ | ३ |

महाभद्रं तपः प्राह—'पभणामी'त्यादि गाथात्रयं, प्रकर्षेण भणामि—प्रतिपादयामि महाभद्रनामकं तपः, तद्यथा—पूर्वमेक उपवासः ततो द्वौ त्रयश्चत्वारः पञ्च षट् सप्तेत्येका लता, चत्वारः पञ्च षट् सप्त एको द्वौ त्रय इति द्वितीया, सप्त एको द्वौ त्रयश्चत्वारः पञ्च षडिति तृतीया, त्रयश्चत्वारः पञ्च षट् सप्त एको द्वाविति चतुर्थी, षट् सप्तैको द्वौ त्रयश्चत्वारः पञ्चेति पञ्चमी, द्वौ त्रयश्चत्वारः पञ्च षट् सप्त एक इति षष्ठी, पञ्च षट् सप्त एको द्वौ त्रयश्चत्वार इति सप्तमी, इहैकोनपञ्चाशत्पारणकानि, षण्णवत्यधिकं शतं चतुर्थानां—उपवासानामित्यर्थः, एवं चास्मिन्महाभद्रे तपसि द्वे शते पञ्चचत्वारिंशदुत्तरे दिनानां भवत इति। स्थापना चेयं($\frac{४३८}{१}$) ॥२४॥ साम्प्रतं भद्रोत्तरं तपः प्राह—'भद्दो'इत्यादि गाथाद्वयं, प्रतिमा नाम प्रतिज्ञाविशेषः, ततो भद्रोत्तरप्रतिमायां—भद्रोत्तरतपसि पञ्च षट् सप्ताष्टौ नवेत्याद्या लता, सप्ताष्टौ नव पञ्च षडिति

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ४ | ५ | ६ | ७ | १ | २ | ३ |
| ७ | १ | २ | ३ | ४ | ५ | ६ |
| ३ | ४ | ५ | ६ | ७ | १ | २ |
| ६ | ७ | १ | २ | ३ | ४ | ५ |
| २ | ३ | ४ | ५ | ६ | ७ | १ |
| ५ | ६ | ७ | १ | २ | ३ | ४ |

द्वितीया, नव पञ्च षट् सप्ताष्टाविति तृतीया, षट् सप्ताष्टौ नव पञ्चेति चतुर्थी, अष्टौ नव पञ्च षट् सप्तेति पञ्चमी, इह पञ्चसप्तत्युत्तरं शतमभक्तार्थानां—उपवासानां पञ्चविंशतिस्तु पारणकानां, एवं च भद्रोत्तरतपसि शतद्वयं दिनानां भवति, स्थापना चेयं ॥ साम्प्रतं सर्वतोभद्रतपः प्राह—'पडिमे'त्यादि गाथा-चतुष्कं, प्रतिमायां सर्वभद्रायां सर्वतोभद्रतपसीत्यर्थः, पञ्च षट् सप्त अष्टौ नव दश एकादश उपवासा इति प्रथमा लता, अष्टौ नव दश एकादश पञ्च षट् सप्तेति द्वितीया, एकादश पञ्च षट् सप्ताष्टौ नव दशेति तृतीया, सप्त अष्टौ नव दश एकादश पञ्च षडिति चतुर्थी,

| | | | | |
|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ |
| ७ | ८ | ९ | ५ | ६ |
| ९ | ५ | ६ | ७ | ८ |
| ६ | ७ | ८ | ९ | ५ |
| ८ | ९ | ५ | ६ | ७ |

दश एकादश पञ्च षट् सप्त अष्ट नवेति पञ्चमी, षट् सप्त अष्टौ नव दश एकादश पञ्चेति षष्ठी, नव दश एकादश पञ्च षट् सप्त अष्टाविति सप्तमी, स्थापना चेयं, अत्र च सर्वसङ्ख्यया त्रीणि शतानि द्विनवत्युत्तराणि उपवासानां भवन्ति, एकोनपञ्चाशच्च पारणकानां, उभयमीलने चत्वारि शतान्येकचत्वारिंशदधिकानि दिनानां भवन्तीति । तदेवमेतानि भद्रादीनि—भद्रमहाभद्रभद्रोत्तरसर्वतोभद्ररूपाणि चत्वारि तपांसि भणितानि, ग्रंथान्तरे पुनरमून्यन्यथाऽपि दृश्यन्ते, एतेष्वपि चतुर्षु तपस्सु प्राग्वत्पारणकभेदतः प्रत्येकं चातुर्विध्यं च द्रष्टव्यं, दिनसङ्ख्या च यथायथमानेतव्येति ॥ २५ ॥ अथ सर्वसौख्यसम्पत्तितपः प्राह—'पडिवे'त्यादि, प्रतिपदेकैव द्विकं द्वितीययोः एवं यावत्पञ्चदश अमावास्याः क्षमणैः—उपवासैर्यत्र भवन्ति, अयमर्थः—एका प्रतिपद् द्वे द्वितीये तिस्रस्तृतीयाः चत-

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ८ | ९ | १० | ११ | ५ | ६ | ७ |
| ११ | ५ | ६ | ७ | ८ | ९ | १० |
| ७ | ८ | ९ | १० | ११ | ५ | ६ |
| १० | ११ | ५ | ६ | ७ | ८ | ९ |
| ६ | ७ | ८ | ९ | १० | ११ | ५ |
| ९ | १० | ११ | ५ | ६ | ७ | ८ |

गा. ७४

स्त्रश्चतुर्थ्यः एवं यावत्पञ्चदश पञ्चदश्यः कृतोपवासा यत्र भवन्ति तत्तपः सर्वसंपत्तिः 'सूचकत्वात्सूत्रस्य' सर्वसौख्यसंपत्तिस्तपो भवति, सर्वेषां सौख्यानां संपत्तिः—प्राप्तिर्यस्मादितिकृत्वा, यद्वा सर्वसंपत्तिरित्येव नाम, तथाहि—तत्किमपि वस्तु नास्ति भुवस्तले यदस्य सम्यगासेवितस्य तपसः प्रभावतः प्रायेण प्राणिनां न संपद्यते इति। इह चामावास्याशब्दश्रवणादन्यत्र च 'इय जाव पन्नरस पुन्निमासु कीरंति जत्थ उववासा' इत्यादिवचनाकर्णनादवसीयते इह च यथेदं तपः कृष्णपक्षे शुक्लपक्षे वा प्रारभ्यते न कश्चिद्दोषः, अत्र च विंशत्युत्तरं शतमुपवासानां भवति १५ ॥ ४१ ॥ रोहिणीतपः प्राह—'रोहिणी'त्यादि, रोहिणी—देवताविशेषः तदाराधनार्थं तपो रोहिणीतपः तस्मिन् रोहिणीतपसि सप्तमासाधिकसप्तवर्षाणि यावद्रोहिणीनक्षत्रोपलक्षिते दिने उपवासः क्रियते, इह च वासुपूज्यजिनप्रतिमायाः प्रतिष्ठा पूजा च विधेया १६ ॥ ४२ ॥ श्रुतदेवतातपः प्राह—'एक्के'त्यादि, श्रुतदेवताराधनार्थं तपः श्रुतदेवीतपः तस्मिन् श्रुतदेवीतपस्येकादश एकादश्यः श्रुतदेवतापूजापुरस्सरमुपवासा मौनव्रतेन विधीयन्ते, उपलक्षणं चैतत्, ततोऽम्बातपोऽप्यत्र द्रष्टव्यं, तच्च पञ्चसु पञ्चमीषु नेमिजिनाम्बिकापूजापूर्वमेकाशनादिना भवति १७ ॥ ४३ ॥ सर्वाङ्गसुन्दरतपः प्राह—'सव्वंगे'त्यादि, सर्वाङ्गानि सुन्दराणि—सौंदर्योपेतानि भवन्ति यस्मात्तत्सर्वाङ्गसुन्दरं तपः तस्मिन् सर्वाङ्गसुन्दरे तपसि क्षान्तिमार्दवार्जवाद्यभिग्रहकृताग्रहास्तीर्थकरपूजामुनिदीनादिदाननिरताश्चाष्टावुपवासान् एकान्तरितानाचाम्लेन कृतपारणकान् धवलपक्षे कुर्वन्ति, अस्य च तपसः सर्वाङ्गसुन्दरत्वमानुपङ्गिकमेव फलं, मुख्यं तु सर्वज्ञाज्ञया क्रियमाणानां सर्वेपामेव तपसां मोक्षावाप्तिरेव फलमिति भावनीयं, एवं सर्वत्रापि १८ ॥ ४४ ॥ निरुजशिखतपः प्राह—'एव'मित्यादि, रुजानां—रोगाणामभावो निरुजं तदेव प्रधानफलविवक्षया शिखेव शिखा—चूला यत्रासौ निरुजशिखस्तपोविशेषः सोऽप्येवमेव—सर्वाङ्गसुन्दरतपोवदष्टभिरुपवासैराचाम्लपारणकैर्द्रष्टव्यः, नवरं—केवलं स—निरुजशिखस्तपोविशेषः श्यामले—कृष्णपक्षे

भवति, अधिकश्च तत्र क्रियते ग्लानप्रतिजागरणनियमो—ग्लानो मया पथ्यादिदानतः प्रतिचरणीयः इत्येवंरूपप्रतिज्ञाग्रहणमित्यर्थः, शेषं तु जिनपूजादिकं तथैवेति १९ ॥ ४५ ॥ परमभूषणतपः प्राह—'सो' इत्यादि, परमाणि—शक्रचक्रवर्त्याद्युचितानि प्रकृष्टानि हारकेयूर-कुण्डलादीनि भूषणानि—आभरणानि यस्मादसौ परमभूषणः, तस्मिन् द्वात्रिंशदाचाम्लानि पारणकान्तरितानि शक्तिसद्भावे निरन्तराणि वा करोति, तत्समाप्तौ च देवस्य मुकुटतिलकाद्याभरणवितरणं यथाशक्ति यतिदानादिकं च कर्तव्यमिति २० ॥ ४६ ॥ आयतिजनकं तपः प्राह—'आयई'त्यादि, आयतिं—आगामिकालेऽभीष्टफलं जनयति—करोति योऽसावायतिजनकस्तपोविशेषः सोऽप्येवं—परमभूषणत-पोवद् द्वात्रिंशताऽऽचाम्लैर्द्रष्टव्यः, नवरं—केवलं सर्वासु धर्मक्रियासु—वन्दनकप्रतिक्रमणस्वाध्यायसाधुसाध्वीवैयावृत्त्यादिषु सर्वधर्मकृत्ये-ष्वनिगूहितबलवीर्यप्रवृत्तियुक्तैः—अगोपायितशरीरप्राणचित्तोत्साहप्रवर्तनप्रधानैः सः—आयतिजनकः कार्यः २१ ॥ ४७ ॥ सौभाग्यकल्प-वृक्षमाह—'एगंते'त्यादिगाथाद्वयं, कल्पवृक्ष इव कल्पवृक्षः सौभाग्यफलदाने कल्पवृक्षः सौभाग्यकल्पवृक्षः, तत्र सौभाग्यकल्पवृक्षतपसि चैत्रमासे एकान्तरा—एकदिनव्यवहिता उपवासाः समग्रमपि मासं भवन्ति, पारणकं च सर्वरसं—सविकृतिकमित्यर्थः, तथाऽत्र यथाशक्ति साध्वादिभ्यो दानं दीयते, अस्य च तपश्चरणस्य समाप्तौ शक्त्यनुसारतो जिनपतेः पुरतः पूजाकरणादिपूर्वं विशालस्थालावलिमध्ये महा-रजतमयः सरलतण्डुलमयो वा विविधफलपटलविलसदसंख्यशाखाशिखः कल्पशाखी कर्तव्य इति २२ ॥ ४८ ॥ ४९ ॥ तीर्थकरमा-तृतप आह—'तित्थे'त्यादि, तीर्थकरजननीपूजापूर्वमेकाशनानि—एकभक्तानि सप्तैव तीर्थकरजननीनामके तपसि क्रियन्ते, अस्य च तपसो भाद्रपदे मासि शुक्लसप्तम्यामारम्भः त्रयोदश्यां च समाप्तिः, वर्षत्रयं च यावदिदं तपः क्रियते २३ ॥ ५० ॥ समवसरणतप आह—'एक्कासे'त्यादि, भाद्रपदमासि कृष्णप्रतिपद आरभ्य तत्पूजापूर्वं—समवसरणप्रतिमापूजनपुरस्सरं स्वशक्त्यनुसारेणैकाशननिर्विकृ-

तिकाचाम्लोपवासैः षोडशभिर्भाद्रपदचतुष्के—चतुर्षु भाद्रपदेषु प्रत्येकं विहितैः समवसरणतपो भवति, अत्र च चतुर्षु भाद्रपदेषु चतुःषष्टिस्तपोदिनानि स्युः, अयं भावः—समवसरणस्यैकैकं द्वारमाश्रित्य प्रत्येकं दिनचतुष्टयं क्रियते, तत एवास्य द्वारिकेति प्रसिद्धिः २४ ॥ ५१ ॥ अमावास्यातपः प्राह—'नन्दी'त्यादि, पटलिखितनन्दीश्वरसुरभुवनजिनार्चनान्वितं निजसामर्थ्यसदृशेन—स्वशक्त्यनुरूपेणोपवासादीनामन्यतमेन तपश्चरणेन भवत्यमावास्यातपोऽमावास्यावासरोद्दिष्टं, अमावास्यादिवस इत्यर्थः, इदं च तपो दीपोत्सवामावास्यायामारभ्यते वर्षसप्तकेन च समाप्यत इति २५ ॥ ५२ ॥ पुण्डरीकतप आह—'सिरी'त्यादि, श्रीपुण्डरीकनामके तपसि चैत्रमासस्य पूर्णिमायाः प्रारभ्य द्वादश पूर्णिमासीः मतान्तरेण सप्त वर्षाणि यावदेकाशनादि तपः स्वशक्त्या कर्तव्यं, पूजनीया च तत्प्रतिमा—नाभेयजिनप्रथमगणधरस्य पुण्डरीकस्य प्रतिकृतिरिति, इह च चैत्रमासपूर्णिमास्यामस्य तपसः प्रारम्भे पुण्डरीककेवलोत्पत्तिरेव कारणं, पुण्डरीकस्य हि भगवतश्चैत्रपूर्णिमायामुदपादि केवलज्ञानं, तथा चाचक्ष्महि श्रीपद्मप्रभचरित्रे पुण्डरीकगणधरवक्तव्यतायां—"घणघाइकम्मकलुसं पक्खालिय सुक्कझाणसलिलेणं । चेत्तस्स पुन्निमाए संपत्तो केवलालोयं ॥ १ ॥" [ घनघातिकर्मकलुषं प्रक्षाल्य शुक्लध्यानसलिलेन । चैत्रस्य पूर्णिमायां संप्राप्तः केवलालोकं ॥ १ ॥ ] इति, एवमन्यत्रापि उपयुज्य कारणं वाच्यं २६ ॥ ५३ ॥ अक्षयनिधिमाह—'देवे'त्यादि, देवाग्रे—सर्वज्ञप्रतिमायाः पुरतः स्थापितः कलशः प्रतिदिनं क्षिप्यमाणयाऽक्षतमुष्ट्या यावद्भिर्दिनैः पूर्यते तावन्ति दिनानि स्वशक्त्यनुरूपं यत्तप एकाशनाद्यन्यतरं तद् बुधा ब्रुवते अक्षयनिधिं, अक्षयः—सदैव परिपूर्णो निधिः—निधानं यस्मादितिकृत्वा २७ ॥ ५४ ॥ साम्प्रतं यवमध्यां चन्द्रप्रतिमामाह—'वड्ढई'त्यादिगाथाचतुष्कं, चन्द्र इव कलावृद्धिहानिभ्यां या प्रतिमा सा चन्द्रप्रतिमा—चन्द्रायणाख्यं तप इति; सा द्विधा—यवमध्या वज्रमध्या च, यवस्येव मध्ये स्थूलस्य पर्यन्तभागयोस्तु तनुकस्य मध्यं यस्याः सा यवमध्या, वज्रस्येव

मध्ये तनुकस्य पर्यंतयोस्तु स्थूलस्य मध्यं यस्याः सा वज्रमध्या, तत्रादौ यवमध्यां व्याख्यानयति—यथा शुक्लपक्षे प्रतिपदः प्रारभ्यानुवासरं—प्रतिदिवसमेकैकया कलया चन्द्रो वर्धते यावत्पर्वणि—पूर्णिमायां सकलाभिरपि कलाभिः संपूर्णः संपद्यते, तथा—तेनैव प्रकारेण प्रतिपदि एकः कवलः, उपलक्षणमेतत्, ततो भिक्षा दत्तिर्वा एकैव गृह्यते, द्वितीयायां द्वौ कवलौ तृतीयायां त्रयः कवलाः एवमेकैककवलवृद्ध्या यावत्पूर्णिमायां तेषां कवलानां पञ्चदशकं भवति, पञ्चदश कवला अभ्यवह्रियन्ते इत्यर्थः, कृष्णे पक्षे च यथा प्रतिदिनमेकैकां कलां शशी मुञ्चति तथा कवलोऽपि मुच्यते यावदमावास्यायां 'सो'त्ति स कवल एको भवति, कोऽर्थः ?—कृष्णपक्षप्रतिपदि पञ्चदश कवला गृह्यन्ते द्वितीयायां चतुर्दश तृतीयायां त्रयोदश इत्येवं यावदमावास्यायामेक एव कवल इति, एषा यवमध्या चन्द्रप्रतिमा मासमात्रप्रमाणा भणिता २८ ॥ इदानीं पुनर्मासप्रमितां—मासप्रमाणां वज्रमध्यां चन्द्रप्रतिमां प्रकर्षेण वक्ष्यामि ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ तामेवाह—'पक्खे'त्यादिगाथाद्वयं, कृष्णपक्षप्रतिपदि पञ्चदश कवला गृह्यन्ते, तत एकैकहान्या तावन्नीयते यावदमावास्यायामेकेन कवलेन जाता, अमावास्यायामेक एव कवलो गृह्यते इति भावः, तथा प्रतिपदपि सिता—शुक्ला एकेन कवलेन जाता, कोऽर्थः ?,—शुक्लप्रतिपद्येक एव कवलो गृह्यते, ततो द्वितीयाया आरभ्यैकोत्तरवृद्ध्या तावन्नेयं यावत्पूर्णिमास्यां पञ्चदश कवला दत्तयो वा गृह्यन्ते इति, तदेवमिमे यवमध्यवज्रमध्ये द्वे अपि प्रतिमे भणिते इति, एष च पञ्चाशकादिग्रन्थाभिप्रायः, व्यवहारचूर्ण्यभिप्रायः पुनरयं—शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्य दृश्यस्य पञ्चदशभागीकृतस्य एका कला दृश्यते चतुर्दश कला न दृश्यन्ते द्वितीयस्यां द्वे कले तृतीयस्यां तिस्रः कलाः एवं यावत्पञ्चदश्यां परिपूर्णायां पञ्चदश कलाः, ततो बहुलपक्षस्य प्रतिपदि एकया कलया ऊनो दृश्यते चतुर्दश कला दृश्यन्ते द्वितीयस्यां त्रयोदश तृतीयायां द्वादश यावदमावास्यायामेकापि न दृश्यते, तदेवमयं मास आदावूनो मध्ये संपूर्णोऽन्ते पुनरपि परिहीनो,

यवोऽप्यादावन्ते च तनुको मध्ये विपुलः, एवं साधुरपि भिक्षां गृह्णाति शुक्लपक्षस्य प्रतिपद्येकां द्वितीयस्यां द्वे तृतीयस्यां तिस्रो यावत्पञ्चदश्यां पञ्चदश ततो बहुलपक्षस्य प्रतिपदि पुनश्चतुर्दश द्वितीयायां त्रयोदश यावच्चतुर्दश्यामेकां अमावास्यामुपोषितः, ततश्चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च भिक्षायास्तनुत्वान्मध्ये विपुलत्वाद्यवमध्योपमितमध्यभागा, तथा चामुमेव यवमध्यां चन्द्रप्रतिमामधिकृत्यान्यत्रोक्तं—"एकैकां वर्धयेद्भिक्षां, शुक्ले कृष्णे च ह्रापयेत् । भुञ्जीत नामावास्यायामेष चान्द्रायणो विधिः ॥ १ ॥" वज्रमध्यायां चन्द्रप्रतिमायां बहुलपक्ष आदौ क्रियते, तत एवं भावना—बहुलपक्षस्य प्रतिपदि चन्द्रविमानस्य चतुर्दश कला दृश्यन्ते द्वितीयस्यां त्रयोदश तृतीयस्यां द्वादश यावच्चतुर्दश्यामेका अमावास्यायामेकापि न ततः पुनरपि शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्य एका कला दृश्यते द्वितीयायां द्वे यावत्पञ्चदश्यां पञ्चदशापि, तदयं मास आदावन्ते च पृथुलो मध्ये तनुको वज्रमप्यादावन्ते च विपुलं मध्ये तनुकमेवं साधुरपि भिक्षां गृह्णाति बहुलपक्षस्य प्रतिपदि चतुर्दश द्वितीयस्यां त्रयोदश यावच्चतुर्दश्यामेकाममावास्यायां चोपवासयति ततः पुनरपि शुक्लपक्षस्य प्रतिपद्येकां भिक्षां गृह्णाति द्वितीयस्यां द्वे यावत्पञ्चदश्यां पञ्चदशेति, तत एषापि चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च विपुलतया मध्ये च तनुकतया वज्रमध्योपमितमध्यभागा वज्रमध्येति २९ ॥ ५९ ॥ ६० ॥ साम्प्रतं सप्तसप्तमिकाद्याश्चतस्रः प्रतिमाः प्रतिपादयति—'दिवसे' इत्यादिगाथात्रयं, प्रथमे सप्तके दिवसे २ एका दत्तिर्ग्राह्या, ततः सप्तकेन सह दत्तिर्वर्धते यावत्सप्तमे सप्तके प्रतिदिनं सप्त दत्तयो भवन्ति, इयमत्र भावना—सप्तसप्तमिकायां प्रतिमायां सप्तसप्तका दिनानां भवन्ति, तत्र प्रथमे सप्तके प्रतिदिवसमेकैकां दत्तिं गृह्णाति द्वितीये सप्तके प्रतिदिवसं द्वे द्वे दत्ती एवं तृतीये सप्तके तिस्रः २ चतुर्थे चतस्रः २ पञ्चमे पञ्च २ षष्ठे षट् २ सप्तमे सप्त सप्तेति, एताश्च भोजनविषया एवं दत्तय उक्ताः, एवमेतत्सङ्ख्या एव पानकविषया अपि प्रतिपत्तव्याः, तथा

चाष्टमाङ्गसूत्रम्—"पढमे सत्तए एक्केक्कं भोयणस्स दत्तिं पडिगाहेइ, एक्केक्कं पाणयस्स, एवं जाव सत्तमे सत्त दत्तीउ भोयणस्स पडिगाहेइ, सत्त पाणयस्से"त्यादि, अन्ये पुनरन्यथा प्रतिपादयन्ति—प्रथमे सप्तके प्रथमदिवसे एकां दत्तिं गृह्णाति द्वितीये द्वे तृतीये तिस्रः चतुर्थे चतस्रः पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त, एवं द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमे च सप्तके द्रष्टव्यं, उक्तं च व्यवहारभाष्ये—"अहवा एक्केक्कियं दत्तिं जा सत्तेक्केकस्स सत्तए। आएसो अत्थि एसोऽवि"त्ति, तदेवमेकोनपञ्चाशता वासरैरियं सप्तसप्तकिका प्रतिमा भवति, सप्त सप्तका दिनानां यस्यां सा सप्तसप्तकिका, सप्तशब्दककारस्य मकारः प्राकृतत्वात्, अथवा सप्त सप्तमानि दिनानि यस्यां सा सप्तसप्तमिका, यस्यां हि सप्त दिनसप्तकानि भवन्ति तस्यां सप्त सप्तमानि दिनानि भवन्त्येवेति। तथा अष्टाष्टमिका नवनवमिका दशदशमिका च प्रतिमा एवं—प्रागुक्तप्रकारेणैव द्रष्टव्या, नवरं—केवलमयं विशेषः—अष्टकनवकदशकवृद्धिभिः सह प्रत्येकं दत्तिर्वर्धते, इदमुक्तं भवति—अष्टाष्टमिकायां प्रतिमायामष्टावष्टकानि भवन्ति, तत्र प्रथमेऽष्टके प्रतिदिनमेकैका दत्तिर्गृह्यते, द्वितीयेऽष्टके प्रतिदिनं द्वे दत्ती एवं तृतीये तिस्रः चतुर्थे चतस्रः एवमेकैकदत्तिवृद्ध्या तावदवगन्तव्यं यावदष्टमेऽष्टके प्रतिदिनमष्टावष्टौ दत्तयो गृह्यन्ते, अस्यां हि चतुःषष्टिर्दिनानि भवन्ति। तथा नवनवमिकायां प्रतिमायां नव नवकानि भवन्ति, तत्र प्रथमे नवके प्रतिदिनमेकैका दत्तिः द्वितीये नवके प्रतिदिनं दत्तिद्वयं तृतीये नवके प्रतिदिनं दत्तित्रयं एवमेकैकदत्तिवृद्ध्या तावदवसेयं यावन्नवमे नवके प्रतिदिनं नव नव दत्तयः, अत्र चैकाशीतिर्दिनानि। तथा दशदशमिकायां प्रतिमायां दश दशकानि भवन्ति, तत्र प्रथमे दशके प्रतिदिनमेका दत्तिर्गृह्यते, द्वितीये दशके प्रतिदिनं दत्तिद्वयं, एवमेकैकदत्तिवृद्ध्या तावन्नेतव्यं यावद्दशमे दशके प्रतिदिनं दश दश दत्तयः, अत्र दिनानां शतमेकं। तदेवं नवभिर्मासैश्चतुर्विंशत्या दिनैश्चतस्रोऽप्येताः प्रतिमाः समाप्यन्ते, इह च सप्तसप्तमिकायां प्रतिमायां दत्तिपरि-

माणं पण्णवत्यधिकं शतं, अष्टाष्टमिकायामष्टाशीत्युत्तरे द्वे शते दत्तीनां, नवनवमिकायां पञ्चोत्तराणि चत्वारि शतानि, दशदशमिकायां पञ्चाशदधिकानि पञ्च शतानि दत्तीनामिति ३० ॥ ६१ ॥ ६२ ॥ ६३ ॥ इदानीमाचाम्लवर्धमानं तपः प्राह—'एगे'त्यादिगाथाद्वयं, एकादिकान्येकैकवृद्धिमन्ति पर्यन्ताभक्तार्थान्याचाम्लानि क्रियन्ते यावत्तेषामाचाम्लानां शतं परिपूर्णं भवति, एतदाचाम्लवर्धमाननामकं महातपश्चरणं, आचाम्लं वर्धमानं यत्र तपश्चरणे तदाचाम्लवर्धमानं, अयमर्थः—प्रथमं तावदाचाम्लं क्रियते तत उपवासः ततश्च द्वे आचाम्ले पुनरुपवासः त्रीण्याचाम्लानि पुनरुपवासः चत्वार्याचाम्लानि पुनरुपवासः पञ्च आचाम्लानि पुनरुपवासः एवमुपवासान्तरितान्येकोत्तरवृद्ध्या तावदाचाम्लानि वर्धनीयानि यावत्पर्यन्ते शतमाचाम्लानां कृत्वा एकमुपवासं करोतीति, इह च शतं चतुर्थानां तथा पञ्चाशदधिकानि पञ्च सहस्राण्याचाम्लानां भवन्ति, उभयमीलने वर्षाणि चतुर्दश मासास्त्रयो दिनानि च विंशतिरिति ३१ ॥ ६४ ॥ ॥ ६५ ॥ अथ गुणरत्नवत्सरं तपः प्राह—'गुणे'त्यादिगाथाचतुष्टयं, गुणानां—निर्जरादी(मेळा)नां निर्जराविशेषाणां रचनं—करणं वत्सरेण सत्रिभागवर्षेण यस्मिंस्तपसि तद्गुणरचनवत्सरं अथवा गुणा एव रत्नानि यत्र स तथा गुणरत्नो वत्सरो यत्र तद्गुणरत्नवत्सरं तपः एतस्मिन् गुणरत्नवत्सरे तपश्चरणे षोडश मासा भवन्ति, तत्र प्रथमे मासे एकान्तरा उपवासाः कर्तव्याः, तथा दिवसे निरन्तरमुत्कटुकासनेन स्थातव्यं निशायां पुनर्नित्यमेव वीरासनकेन—वीरासनोपविष्टेन तथा निशि भवितव्यमप्रावृतेन—निरावरणेनेत्यर्थः, एवं द्वितीयादिष्वपि मासेष्वेकोत्तरया वृद्ध्या तावदुपवासाः कर्तव्या यावत्षोडशे मासे षोडशोपवासा भवन्ति, अयमर्थः—प्रथमे मासे पारणकदिनान्तरित एकैक उपवासः कर्तव्यः द्वितीये मासे द्वौ द्वावुपवासौ तृतीये मासे त्रयस्त्रय उपवासाः चतुर्थे चत्वारो यावत् षोडशमासे षोडश षोडश उपवासा भवन्ति, अत्र च त्रयोदश मासाः सप्तदश दिनाधिकास्तपःकालः त्रिसप्ततिश्च दिनानि पारणककालः, एवं चायं—'पन्नरस

वीसं चउवीस चेवं चउवीसं पन्नवीसा य। चउवीस एक्कवीसा चउवीसा सत्तवीसा य ॥ १ ॥ तीसा तेत्तीसाविय चउवीस छवीस अट्ठवीसा य। तीसा वत्तीसावि य सोलसमासेसु तवदिवसा ॥ २ ॥ पन्नरस दसऽट्ठ छप्पञ्च चउर पञ्चसु य तिन्नि तिन्निन्ति। पञ्चसु दो दो य तहा सोलसमासेसु पारणगा ॥ ३ ॥' इह च यत्र मासेऽष्टमादितपसो यावन्ति दिनानि न पूर्यन्ते तावन्त्यग्रेतनमासादाकृष्य पूरणीयानि अधिकानि चाग्रेतनमासे क्षेप्तव्यानि, तथा यत्प्रथमेत्यादिगाथायामुत्कटुकासनाद्यनुष्ठानं पूर्वमुक्तं तत्समग्रेष्वपि मासेसु करणीयं, सर्वसङ्ख्यया चास्मिंस्तपसि विंशत्यूनानि पञ्च शतानि दिनानां भवन्तीति, तदेवमपारः प्रवचनपारावारः तत्प्रतिपादिततपसां च प्रभूताः कर्तार इत्यतोऽनेकानि स्कन्दकप्रमुखपुरुषविशेषैराचीर्णानि तपांसि श्रूयन्ते ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ कियन्तीह वैविक्त्येन वक्तुं शक्यन्ते?, दिङ्मात्रं च किञ्चिदेतदुपदर्शितं ततः शेषाणां तपोविशेषाणामतिदेशमाह—'तहे'त्यादि, तथाशब्दः प्रागुक्तापेक्षया समुच्चये, अङ्गानां—आचारादीनां उपाङ्गानां—औपपातिकादीनां चैत्यवन्दनाया—ऐर्यापथिकीशक्रस्तवस्थापनार्हत्स्तवनामस्तवश्रुतस्तवसिद्धस्तवस्वरूपायाः पंचमङ्गलमहाश्रुतस्कन्धस्य आदिशब्दात्प्रकीर्णकानां च देवेन्द्रस्तवादीनामुपधानानि—तपोविशेषरूपाणि येन विधिना भणितानि तथैव समयात्—सिद्धान्ताद् भवन्ति ज्ञेयानि, इह च साम्प्रतं मुग्धलोकहिताय वहुश्रुतसूरिपरम्पराप्रवर्तितान्यपराण्यपरिमितानि तपांसि प्रचरन्ति दृश्यन्ते, परं नेह तानि प्रतन्यन्ते, ग्रन्थप्रपञ्चप्रसङ्गात्, तदर्थिना चास्मदुपरचिता सामाचारी निरीक्षणीया २७१ ॥ ७० ॥

इदानीं 'पायालकलस'त्ति द्विसप्तत्युत्तरद्विशततमं द्वारमाह—

**पणनउइ सहस्साइं ओगाहित्ता चउद्दिसिं लवणं। चउरोऽलिंजरसंठाणसंठिया होंति पायाला ॥ ७१ ॥ वलयामुह केयूरे जुयगे तह ईसरे य बोद्धव्वे। सव्ववइरामयाणं कुड्डा एएसि दससइया,**

॥ ७२ ॥ जोयणसहस्सदसगं मूले उवरिं च होंति विच्छिन्ना । मज्झे य सयसहस्सं तत्तियमित्तं च ओगाढा ॥ ७३ ॥ पलिओवमट्ठिईया एएसिं अहिवई सुरा इणमो । काले य महाकाले वेलंब पभंजणे चेव ॥ ७४ ॥ अन्नेवि य पायाला खुड्डालिंजरगसंठिया लवणे । अट्ठ सया चुलसीया सत्त सहस्सा य सव्वेसिं ॥ ७५ ॥ जोयणसयविच्छिन्ना मूलुवरिं दस सयाणि मज्झंमि । ओगाढा य सहस्सं दसजोयणिया य सिं कुड्डा ॥ ७६ ॥ पायालाण विभागा सव्वाणवि तिन्नि तिन्नि बोद्धव्वा । हिट्ठिमभागे वाऊ मज्झे वाऊ य उदगं च ॥ ७७ ॥ उवरिं उदगं भणियं पढमगबीएसु वाउसंखुभिओ । उड्ढं वामे उदगं परिवड्ढइ जलनिही खुभिओ ॥ ७८ ॥ परिसंठिअंमि पवणे पुणरवि उदगं तमेव संठाणं । वड्ढेइ तेण उदही परिहायइऽणुक्कमेणेव ॥ ७९ ॥

जम्बूद्वीपमध्यमध्यासीनस्य मन्दराचलस्य चतसृषु पूर्वादिषु दिक्षु प्रत्येकं पञ्चनवतियोजनसहस्राणि लवणार्णवमवगाह्य अत्रान्तरे चतसृषु दिक्षु प्रत्येकमेकैकभावेन चत्वारः पातालाः—'पदैकदेशे पदसमुदायोपचारात्' पातालकलशाः, ते च किंसंस्थाना इत्याह—अलिञ्जरं—महापिहिडं तत्संस्थानसंस्थितास्तदाकारा इत्यर्थः ॥ ७१ ॥ अथ तेषां नामादिकमाह—'वलये'त्यादिगाथात्रयं, मेरोः पूर्वस्यां दिशि पातालकलशो वडवामुखो—वडवामुखनामा वलयामुखो वा, दक्षिणस्यां केयूपः केयूरो वा, समवायाङ्गटीकायां तु केतुकः, अपरस्यां तु यूपः उत्तरस्यामीश्वरः, एते चत्वारोऽपि सर्ववज्रमयाः—सर्वात्मना वज्रमयाः, तेषां च—सर्ववज्रमयानां कुड्यानि—ठिक्करिकाः सर्वत्र बाहल्यमधिकृत्य दश शतकानि, दश योजनशतप्रमाणानि ॥ ७२ ॥ चत्वारोऽपि ते महापातालकलशा मूले—बुध्ने उपरि—मुखे च प्रत्येकं योज-

नसहस्रदशकं—दश योजनसहस्राणि विस्तीर्णा भवन्ति, मध्ये—उदरप्रदेशे पुनः शतसहस्रं—योजनलक्षं विस्तीर्णाः, तथा तावन्मात्रं—योजनलक्षमात्रमवगाढा—भूमौ प्रविष्टाः, इदमुक्तं भवति—चत्वारोऽप्येते पातालकलशा एकैकं योजनलक्षमुद्वेधेन, तथा मूले दश योजनसहस्राणि विष्कम्भेन, तत ऊर्द्धमेकप्रादेशिक्याः श्रेण्या विष्कम्भतः प्रवर्धमानाः २ मध्ये एकैकं योजनलक्षं विष्कम्भेन, तत ऊर्द्ध भूयोऽप्येकप्रादेशिक्या श्रेण्या विष्कम्भतो हीयमाना हीयमाना उपरि—मुखमूले दश योजनसहस्राणि विष्कम्भत इति ॥ ७३ ॥ साम्प्रतमेतेषां पातालकलशानामधिपतीन् देवानाह—एतेषां पातालकलशानामधिपतयः सुराः पल्योपमस्थितयो महर्धिका इमे—एवंनामानः, तद्यथा—वडवामुखे कालः केयूरे महाकालः यूपे वेलम्बः ईश्वरे प्रभञ्जन इति ॥ ७४ ॥ सम्प्रति लघुपातालकलशवक्तव्यतामाह—'अन्नेऽवी'त्यादिगाथाद्वयं, लवणे—लवणसमुद्रे तेषां पातालकलशानामन्तरेषु तत्र तत्र प्रदेशेषु बहवोऽन्येऽपि क्षुल्ला—लघवः पातालाः—पातालकलशाः, क्षुल्लालिञ्जरसंस्थिता—लघुपिहडकसंस्थानसंस्थिताः सन्ति, तत्र सर्वेषामपि सर्वसङ्ख्या सप्त सहस्राण्यष्टौ शतानि चतुरशीत्युत्तराणि, एकैकस्य महापातालकलशस्य परिवारे एकसप्तत्यधिकैकोनविंशतिशतसङ्ख्यानां लघुपातालकलशानां भावादिति ॥७५॥ एते च लघुपातालकलशाः प्रत्येकमर्धपल्योपमस्थितिकैर्देवैः परिगृहीताः । सम्प्रत्येतेषां प्रमाणमाह—सर्वेऽपि लघुपातालकलशा मूले—बुध्ने उपरि—मुखे प्रत्येकं योजनशतं विस्तीर्णाः, मध्ये—मध्यभागे जठरप्रदेशे दश शतानि—दश योजनशतानि विस्तीर्णाः, तथाऽवगाढा—भूमौ प्रविष्टाः सहस्रं—योजनसहस्रं, तथा 'सिं'ति एतेषां लघुपातालकलशानां कुड्यानि—ठिक्करिका बाहल्यमधिकृत्य दशयोजनकानि—दशयोजनप्रमाणानि ॥ ७६ ॥ सम्प्रति गुरूणां लघूनां च पातालकलशानां वाय्वादिविभागमाह—'पायालाणे'त्यादिगाथात्रयं, सर्वेषामपि गुरूणां लघूनां च पातालकलशानां त्रयस्त्रयो विभागा भवन्ति, तद्यथा—अधस्तनो मध्यम उपरितनश्च, तत्र महापातालकलशानामेकैकस्त्रिभागस्त्रयस्त्रिंश-

योजनसहस्राणि त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि त्रिभागश्च योजनस्य, लघुपातालकलशानां तु त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि त्रिभागश्च योजनस्य, एतेषु च सर्वेषु महापातालकलशेषु लघुपातालकलशेषु च मध्ये प्रत्येकमधस्तने त्रिभागे वायुः मध्यमे त्रिभागे वायुरुदकं च उपरितने त्रिभागे उदकं भणितं तीर्थकरगणधरैः, तत्र तथाजगत्स्वाभाव्यादेव समकालं प्रतिनियते कालविभागे सर्वेष्वपि पातालकलशेषु प्रत्येकं प्रथमे द्वितीये च त्रिभागे वह्वोऽन्येऽन्ये उदारा वायवः संमूर्च्छन्ति, तदनन्तरं क्षुभ्यन्ते, जातमहाद्भुतशक्तिकाः संत ऊर्द्धमितस्ततो विप्रसरन्तीत्यर्थः, क्षणेन च तथा परिणमन्ति यथा तैरुदकमतितरामूर्द्धमुच्छाल्यते, ततः प्रथमद्वितीयेषु त्रिभागेषु वायुः संक्षुब्धः सन्नूर्द्धमुदकं वमयति—निःसारयति, तेन चोर्द्धं निःसार्यमाणेन जलनिधिः क्षुभितः सन् परिवर्धते, परिसंस्थिते—उपशमं गते पुनः पवने पुनरप्युदकं तदेव संस्थानमाश्रयति, भूयोऽपि कलशेषु मध्ये प्रविशतीति भावः, तेन कारणेनानुक्रमेणैव परिहीयते, अहोरात्रमध्ये च द्विकृत्वः प्रतिनियते कालविभागे—पक्षमध्ये चतुर्दश्यादिषु तिथिष्वतिरेकेण ते वायवः क्षुभ्यन्ते, तेन प्रत्यहोरात्रं द्वौ वारौ पक्षमध्ये चतुर्दश्यादिषु तिथिषु वार्धिर्वर्धते हीयते चेति, एते च सर्वेऽपि गुरवो लघवश्च पातालकलशा लवणवारिनिधावेव विद्यन्ते, न पुनः शेषसमुद्रेष्विति २७२ ॥ ७७ ॥ ७८ ॥ ७९ ॥ इदानीं 'आहारगस्सरूवं'ति त्रिसप्तत्यधिकद्विशततमं द्वारमाह—

समओ जहन्नमंतरमुक्कोसेणं तु जाव छम्मासा । आहारसरीराणं उक्कोसेणं नव सहस्सा ॥ ८० ॥
चत्तारि य वाराओ चउदसपुव्वी करेइ आहारं । संसारम्मि वसंतो एगभवे दोन्नि वाराओ ॥८१॥
तित्थयररिद्धिसंदंसणत्थमत्थोवगहणहेउं वा । संसयवुच्छेयत्थं वा गमणं जिणपायमूलंमि ॥८२॥

चतुर्दशपूर्वधरैस्तथाविधप्रयोजनप्रसाधनाय विशिष्टलब्धिवशादाह्रियन्ते—निर्वर्त्यन्ते इत्याहारकाणि शरीराणि, 'कृद्बहुल'मिति वचना-

त्कर्मणि वुच्, यथा पादहारक इत्यत्र, तानि च वैक्रियशरीरापेक्षयाऽत्यन्तशुभानि स्वच्छस्फटिकशिलाशकलवदतिशुभ्रपुद्गलसमूहघटनात्मकानि पर्वतादिभिरप्यप्रतिहतानि, तत्रैतानि कदाचिल्लोके सर्वथा न भवन्त्येव, ततोऽभवनलक्षणमन्तरमेषाम्—आहारकशरीराणां जघन्यत एकः समयः उत्कर्षतः षण्मासाः, उक्तं च—"आहारगाइं लोए छम्मासा जा न होंतिवि कयाई । उक्कोसेणं नियमा एकं समयं जहन्नेणं ॥ १ ॥" [ आहारकशरीराणि लोके षण्मासान् यावन्न भवन्त्यपि कदाचित् । उत्कर्षेण नियमात् एकं समयं जघन्येन ॥ १ ॥ ] यत्पुनर्जीवसमासादिषु—'आहारमिस्सजोगे वासपुहुत्तं' इत्यादिवचनत आहारकमिश्रस्य वर्षपृथक्त्वमन्तरमुक्तं तन्मतान्तरं संभाव्यते इति, यदापि भवन्ति तदापि जघन्यत एकं द्वे त्रीणि वा उत्कर्षतः सहस्रनवकं, अवगाहना चाहारकशरीरस्य जघन्यतो देशोना किञ्चिदूना रत्निः—हस्तः, तथाविधप्रयत्नभावतस्तथाऽऽरम्भकद्रव्यविशेषतश्च प्रारम्भसमयेऽपि तस्या एतावत्या एव भावात्, न त्वौदारिकादेरिवाङ्गुलासङ्ख्येयभागमात्रता प्रारम्भकाले इति भावः, उत्कर्षतः पुनः परिपूर्णा रत्निः, उक्तं च **समवायाङ्गे**—"आहारगसरीरस्स जहन्नेणं देसूणा रयणी, उक्कोसेणं पडिपुण्णा रयणी"ति ॥ ८० ॥ साम्प्रतमेकजीवस्य सर्वभवेष्वेकभवे च कियन्त्याहारकशरीराणि भवन्तीत्येतत्प्रतिपादनायाह—'**चत्तारी**'त्यादि, चतुर्दशपूर्वधरः संसारे निवसन्नुत्कर्षतोऽपि वारचतुष्टयमेवाहारकशरीरं करोति, चतुर्थवेलायां कृते तद्भव एव मुक्त्यवाप्तेरिति भावः, एकस्मिंस्तु भवे वारद्वयमेवेति ॥ ८१ ॥ अथ चतुर्दशपूर्वधरोऽपि किमर्थमाहारकशरीरमारचयति ?, उच्यते, तीर्थकरपादपीठोपकण्ठगमनाय, तदपि किंनिमित्तमित्यत आह—'**तित्थयरे**'त्यादि, तीर्थकरर्द्धिसंदर्शनार्थं अर्थावग्रहणहेतोर्वा यद्वा संशयव्यवच्छेदार्थं जिनपादमूले चतुर्दशपूर्वविदो गमनं भवति, इदमैदम्पर्यमत्र—सकलत्रैलोक्यातिशायिनीमष्टमहाप्रातिहार्यादिकामनुपमामार्हतीं समृद्धिमखिलामालोकयितुमुत्पन्नकुतूहलस्तथाविधान् वा नवनवार्थसार्थान् जिघृक्षुः अथवा कस्मिंश्चिदर्थेऽत्यन्तगहने संदि-

ह्यानस्तदर्थविनिश्चितये कश्चिच्चतुर्दशपूर्वविद्विदेहादिक्षेत्रवर्तिवीतरागचरणकमलमूलमाहारकशरीरेण समुत्सर्पति, न खल्वौदारिकेण वपुषा शक्यते तत्र गन्तुं, तत्र च भगवन्तमालोकितसमस्तलोकालोकमालोक्य परिनिष्ठितप्रयोजनः पुनरागत्य तमेव देशं यत्र प्रागगच्छतौदारिकमनाबाधबुद्ध्या न्यासकवन्निक्षिप्तं स्वप्रदेशजालावबद्धं तदवस्थमास्ते ततो याचितोपकरणवद्विमुच्याहारकमुपसंहृत्यात्मप्रदेशजालं द्रागौदारिकमेवानुप्रविशति, एष च प्रारम्भात्प्रभृति विमोचनावसानः सर्वोऽप्यन्तर्मुहूर्तपरिमाणः कालो भवतीति २७३ ॥ ८२ ॥ साम्प्रतं 'देसा अणारिय'त्ति चतुःसप्तत्युत्तरद्विशततमं द्वारमाह—

**सग जवण सबर बब्बर काय मुरुंडोड्ड गोण पक्कणया । अरबाग होण रोमय पारस खस खासिया चेव ॥ ८३ ॥ दुंबिलय लउस बोक्कस भिल्लंध पुलिंद कुंच भमररुआ । कोवाय चीण चंचुय मालव दमिला कुलग्घा या ॥ ८४ ॥ केकय किराय हयमुह खरमुह गयतुरयमिंढयमुहा य । हयकन्ना गयकन्ना अन्नेऽवि अणारिया बहवे ॥ ८५ ॥ पावा य चंडकम्मा अणारिया निग्घिणा निरणुतावी । धम्मोत्ति अक्खराइं सुमिणेऽवि न नज्जए जाणं ॥ ८६ ॥**

शकाः यवनाः शबराः बर्बराः कायाः मुरुण्डाः उड्राः गौड्राः पक्कणगाः अरवागाः हूणाः रोमकाः पारसाः खसाः खासिकाः द्रुम्बिलकाः लकुशाः बोक्कशाः भिल्लाः अन्ध्राः पुलिन्द्राः कुञ्चाः भ्रमररुचाः कोर्पकाः चीनाः चञ्चुकाः मालवाः द्रविडाः कुलार्घाः केकयाः किराताः हयमुखाः खरमुखाः गजमुखाः तुरङ्गमुखाः मिण्ढकमुखाः हयकर्णाः गजकर्णाश्चेत्येते देशा अनार्याः, आराद्—दूरेण हेयधर्मेभ्यो याताः—प्राप्ता उपादेयधर्मैरित्यार्याः, 'पृषोदरादय' इति रूपनिष्पत्तिः, तद्विपरीता अनार्याः, शिष्टासंमतनिखिलव्यवहारा इत्यर्थः, न केव-

लमेत एव, किंत्वपरेऽप्येवंप्रकारा बहवोऽनार्या देशाः प्रश्नव्याकरणादिग्रन्थोक्ता विज्ञेयाः ॥ ८३ ॥ ८४ ॥ ८५ ॥ अथ सामान्यतोऽनार्यदेशस्वरूपमाह—'पावे'त्यादि, एते सर्वेऽप्यनार्यदेशाः 'पापाः' पापं—अपुण्यप्रकृतिरूपं तद्बन्धनिबन्धनत्वात्पापाः, तथा चण्डं—कोपोत्कटतया रौद्राभिधानरसविशेषप्रवर्तितत्वादतिरौद्रं कर्म—समाचरणं येषां ते चण्डकर्माणः, तथा न विद्यते घृणा—पापजुगुप्सालक्षणा येषां ते निर्घृणाः, तथा निरनुतापिनः—समासेवितेऽप्यकृत्ये मनागपि न पश्चात्तापभाज इति भावः, किंच—येषु धर्म इत्यक्षराणि स्वप्नेऽपि सर्वथा न ज्ञायन्ते, केवलमपेयपानाभक्ष्यभक्षणागम्यगमनादिनिरताः शास्त्राद्यप्रतीतवेषभाषादिसमाचाराः सर्वेऽप्यमी अनार्यदेशा इति २७४ ॥ ८६ ॥ सम्प्रति 'आयरियदेस'त्ति पञ्चसप्तत्यधिकद्विशततमं द्वारमाह—

रायगिह मगह १. चंपा अंगा २ तह तामलित्ति वंगा य ३। कंचणपुरं कलिंगा ४ वणारसी चेव कासी य ५ ॥ ८७ ॥ साकेयं कोसला ६ गयपुरं च कुरु ७ सोरियं कुसट्टा य ८। कंपिल्लं पंचाला ९ अहिछत्ता जंगला चेव १० ॥ ८८ ॥ बारवई य सुरट्ठा ११ मिहिल विदेहा य १२ वत्थ कोसंबी १३। नंदिपुरं संडिल्ला १४ भद्दिलपुरमेव मलया य १५ ॥ ८९ ॥ वइराड मच्छ १६ वरुणा अच्छा १७ तह मत्तियावइ दसन्ना १८। सोत्तीमई य चेई १९ वीयभयं सिंधुसोवीरा २० ॥ ९० ॥ महुरा य सूरसेणा २१ पावा भंगी य २२ मासपुरी वट्टा २३। सावत्थी य कुणाला २४ कोडीवरिसं च लाढा य २५ ॥ ९१ ॥ सेयवियावि य नयरी केयइअद्धं २५ ॥ च आरियं भणियं। जत्थुप्पत्ति जिणाणं चक्कीणं रामकण्हाणं ॥ ९२ ॥

राजगृहं नगरं मगधो देशः चम्पानगरी अङ्गदेशः तथा तामलिप्ती नगरी वङ्गा जनपदः काञ्चनपुरं नगरं कलिङ्गदेशः वाणारसी नगरी काशयो देशः साकेतं नगरं कोशला जनपदः गजपुरं नगरं कुरवो देशः सौरिकं नगरं कुशार्तो देशः काम्पिल्यं नगरं पाञ्चालो देशः अहिच्छत्रा नगरी जङ्गलो देशः द्वारवती नगरी सुराष्ट्रो देशः मिथिला नगरी विदेहा जनपदः वत्सा देशः कौशाम्बी नगरी नन्दिपुरं नगरं शण्डिल्यो शाण्डिल्या वा देशः भद्दिलपुरं नगरं मलयादेशः वैराटो देशो वत्सा राजधानी, अन्ये तु वत्सा देशो वैराटं पुरं नगरमित्याहुः, वरुणानगरं अच्छादेशः, अन्ये तु वरुणेषु अच्छपुरीत्याहुः, तथा मृत्तिकावती नगरी दशार्णो देशः शुक्तिमती नगरी चेदयो देशः वीतभयं नगरं सिन्धुसौवीरा जनपदः मथुरा नगरी सूरसेनाख्यो देशः पापा नगरी भङ्गयो देशः मासपुरी नगरी वर्तो देशः, अन्ये त्वाहुः—चेदिषु सौक्तिकावती वीतभयं सिन्धुषु सौवीरेषु मथुरा सूरसेनेषु पापाः भङ्गिषु मासपुरीवट्टेति, तदतिव्यवहृतं, परं बहुश्रुतसंप्रदायः प्रमाणं, तथा श्रावस्ती नगरी कुणालादेशः कोटीवर्षं नगरं लाढादेशः श्वेतम्बिका नगरी केकयजनपदस्यार्धं, एतावदर्धषड्विंशतिजनपदात्मकं क्षेत्रमार्यं भणितं, कुत इत्याह—'जत्थुप्पत्ती'त्यादि, यस्मादत्र एतेष्वर्धषड्विंशतिसङ्ख्येषु जनपदेषूत्पत्तिर्जिनानां—तीर्थकराणां चक्रिणां—चक्रवर्तिनां रामाणां—बलदेवानां कृष्णानां—वासुदेवानां च तत आर्यं, एतेन क्षेत्रस्यार्यानार्यव्यवस्था दर्शिता—यत्र तीर्थकरादीनामुत्पत्तिस्तदार्यं शेषमनार्यमिति, आवश्यकचूर्णौ पुनरित्थमार्यानार्यव्यवस्था उक्ता—"जेसु केसुवि पएसेसु मिहुणगादिपइट्ठिएसु हक्काराइया नीई परूढा ते आरिया, सेसा अणायरिया" इति, एते च प्रत्यासत्त्या भरतक्षेत्रवर्तिन एवार्या उक्ताः, उपलक्षणत्वाचैषामन्येऽपि महाविदेहान्तर्वर्तिविजयमध्यमखण्डादिष्वमी बहवो द्रष्टव्या इति २७५ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ इदानीं 'सिद्धेगत्तीसगुण'त्ति षट्सप्तत्यधिकद्विशततमं द्वारमाह—

**नव दरिसणंमि ९ चत्तारि आउए ४ पंच आइमे अंते ५ । सेसे दो दो भेया ८ खीणभिलावेण इगतीसं ॥ ९३ ॥ पडिसेहण संठाणे य वन्नगंधरसफासवेए य । पण ५ पण ५ दु २ पण ५ ट्ठ ८ तिह्रा एगतीसमकाय १ ऽसंग २ ऽरुहा ३ ॥ ९४ ॥**

दर्शने—दर्शनावरणीये कर्मणि चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनावरणनिद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्धिलक्षणा नव भेदाः तथाऽऽयुषि नारकतिर्यग्नरामरायुर्लक्षणाश्चत्वारः तथाऽऽदिमे—ज्ञानावरणीये मतिश्रुतावधिमनःपर्यवकेवलज्ञानावरणीयस्वरूपाः पञ्च अन्त्येऽप्यन्तरायाख्ये कर्मणि दानलाभभोगोपभोगवीर्यान्तरायरूपाः पञ्चैव भेदाः, शेषे च कर्मचतुष्के प्रत्येकं द्वौ द्वौ भेदौ, तत्र वेदनीये सातासातात्मकौ मोहनीये दर्शनमोहनीयचारित्रमोहनीयलक्षणौ नामकर्मणि शुभनामाशुभनामकौ गोत्रे चोच्चैर्गोत्रनीचैर्गोत्राभिधौ भेदौ भवत इति, तदेवमेते सर्वेऽपि भेदाः क्षीणाभिलापेन—क्षीणशब्दविशेषितत्वेन प्रोच्चार्यमाणा एकत्रिंशत्सङ्ख्याः सिद्धानां गुणा भवन्ति, क्षीणचक्षुर्दर्शनावरण इत्यादिकश्चाभिलापः कार्यः ॥ ९३ ॥ अथवा प्रकारान्तरेणैकत्रिंशत्सिद्धगुणानाह—'पडिसेहे'त्यादि, प्रतिषेधेन—निषेधेन संस्थानवर्णगन्धरसस्पर्शवेदानां क्रमेण पञ्चपञ्चद्विपञ्चाष्टत्रिभेदानां तथा अकायासङ्गारुहपदत्रितयेन चैकत्रिंशत्सिद्धगुणा भवन्ति, तत्र संतिष्ठन्ते एभिरिति संस्थानानि—आकाराः, तानि च पञ्च परिमण्डलवृत्तत्र्यस्रचतुरस्रायतभेदात्, तत्र परिमण्डलं संस्थानं बहिर्वृत्ततावस्थितप्रदेशजनितमन्तःशुषिरं यथा वलयस्य, तदेवान्तः पूर्णं वृत्तं यथा दर्पणस्य, त्र्यस्रं—त्रिकोणं यथा शृङ्गाटकस्य, चतुरस्रं—चतुष्कोणं यथा स्तम्भाधारकुम्भिकायाः, आयतं—दीर्घं यथा दण्डस्य, घनप्रतरादिप्रतिभेदव्याख्या च बृहदुत्तराध्ययनटीकादिभ्योऽवसेया, तथा वर्णाः पञ्च श्वेतपीतरक्तनीलकालभेदात्, गन्धो द्विधा—सुरभीतरभेदात्, रसाः पञ्च तिक्तकटुकषायाम्लमधुरभेदात्,

स्पर्शा अष्टौ गुरुलघुमृदुकर्कशशीतोष्णस्निग्धरूक्षभेदात्, वेदास्त्रयः स्त्रीपुंनपुंसकभेदात्, तथा सिद्धा अकाया—औदारिकादिकायपञ्चक-विप्रमुक्ताः तेषां सिद्धत्वप्रथमसमय एव सर्वात्मना त्यक्तत्वात्, तथा असङ्गा—बाह्याभ्यन्तरसङ्गरहितत्वात्, तथा अरुहा—न रोहन्ति भूयः संसारे समुत्पद्यन्ते इत्यरुहाः, संसारकारणानां कर्मणां निर्मूलकाषंकषितत्वात्, उक्तं च—"दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः। कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" तदेवमष्टाविंशतिसङ्ख्यानां संस्थानादीनां निषेधादकायत्वासङ्गत्वारुहत्वविधानाच्च सिद्धानामेकत्रिंशद्गुणा भवन्ति । संस्थानाद्यभावाकायत्वादिसद्भावौ च सिद्धानां सुप्रसिद्धावेव, तथा चाचाराङ्गे—"से न दीहे न वट्टे न तंसे न चउरंसे न परिमंडले न किण्हे न नीले न लोहिए न हालिद्दे न सुक्किले न सुब्भिगंधे न दुब्भिगंधे न तित्ते न कडुए न कसाए न अंबिले न महुरे न कक्खडे न मउए न गरुए न लहुए न सीए न उण्हे न निद्धे न लुक्खे न काए न संगे न रुहे न इत्थीए न पुरिसे न नपुंसे" इत्यादि, एतच्च सिद्धगुणप्रतिपादकद्वारं प्रकृष्टमङ्गलभूतं शास्त्रस्य शिष्यप्रशिष्यादिवंशगतत्वेनाव्यवच्छित्तिर्भूयादिति अन्तमङ्गलत्वेन पर्यन्ते सूत्रकारेणोपन्यस्तमिति २७६ ॥ ९३ ॥ ९४ ॥ तदेवं व्याख्यातानि षट्सप्तत्यधिकद्विशतसङ्ख्यानि द्वाराणि, तद्व्याख्यानाच्च समर्थितः समग्रोऽप्ययं ग्रन्थः ॥ सांप्रतं प्रस्तुतप्रकरणकर्ता निजान्वयप्रकटनपूर्वकं स्वकीयं नाम प्रदर्शयन्नेतत्प्रकरणे कारणमात्मनोऽनुद्धतत्वं च प्रतिपादयितुमाह—

धम्मधुरधरणमहावराहजिणचंदसूरिसिस्साणं । सिरिअम्मएवसूरीण पायपंकयपराएहिं ॥ ९५ ॥
सिरिविजयसेणगणहरकणिट्ठजसदेवसूरिजिट्ठेहिं । सूरिनेमिचंदसूरिहिं सविणयं सिस्सभणिएहिं ॥ ९६ ॥ समयरयणायराओ रयणाणं पिव समत्थदाराइं । निउणनिहालणपुव्वं गहिउं संजत्ति-

एर्हि व ॥ ९७ ॥ पवयणसारुद्धारो रइओ सपरावबोहकज्जंमि । जंकिंचि इह अजुत्तं बहुस्सुआ तं विसोहंतु ॥ ९८ ॥ जुम्मं ।

धर्मः—सर्वज्ञप्रणीतः स एव जीवादिपदार्थाधारत्वेन धरा—पृथिवी तस्या यदुद्धरणं—स्वरूपभ्रंशरक्षणाद्यथावस्थितत्वेनावस्थापनं तद्विषये महावराहा—आदिवराहा ये श्रीजिनचन्द्रसूरयस्तच्छिष्याणां श्रीआम्रदेवसूरीणां पादपङ्कजपरागैः—क्रमकमलकिञ्जल्कभूतैः श्रीमद्विजयसेनगणधरकनिष्ठैर्यशोदेवसूरीणां च ज्येष्ठैः श्रीनेमिचन्द्रसूरिभिः सविनयं शिष्यभणितैः सांयात्रिकैरिव—प्रावहणिकैरिव समयरत्नाकरात्—सिद्धान्तसमुद्राद्रत्नानीव सदर्थानि—शोभनाभिधेयानि षट्सप्तत्युत्तरद्विशतसङ्ख्यानि द्वाराणि निपुणनिभालनपूर्वं गृहीत्वा प्रवचनसारोद्धारो नाम ग्रन्थः स्वपरावबोधकार्यनिमित्तं रचितो—निर्मितः, यच्चेह किञ्चिदयुक्तमुक्तं तद्बहुश्रुता विशोधयन्तु ॥ इह यद्यपि यद्भवितव्यं तदेव भवति तथापि शुभाशयफलत्वाच्छोभनार्थेष्वाशंसा विधेयेति दर्शनार्थमाशंसां कुर्वन्नाह—

जा विजयइ भुवणत्तयमेयं रविससिसुमेरुगिरिजुत्तं । पवयणसारुद्धारो ता नंदउ बुहु पढिज्जंतो ॥ १५९९ ॥

यावदेतद्विजयते भुवनत्रयं—स्वर्गमर्त्यपाताललक्षणं रविशशिसुमेरुगिरियुक्तं—दिनकरतुहिनकरसुरगिरिपरिगतं तावदयं प्रवचनसारोद्धारग्रन्थो बुधैः—तत्त्वाववोधबन्धुरबुद्धिभिः पठ्यमानो नन्दतु—शिष्यप्रशिष्यपरम्पराप्रचारितरूपां समृद्धिमासादयतु ॥ १५९९ ॥

( ग्रन्थाग्रं १८००० ) इति श्रीसिद्धसेनसूरिविरचिता प्रवचनसारोद्धारवृत्तिः समाप्ता ॥

सिद्धान्तादिविचित्रशास्त्रनिकरव्यालोकनेन क्वचित्, क्वाप्यात्मीयगुरूपदेशवशतः स्वप्रज्ञया च क्वचित्। ग्रन्थेऽस्मिन् गहनेऽपि शिष्यनिवहैरत्यर्थमभ्यर्थितस्तत्त्वज्ञानविकाशिनीमहमिमां वृत्तिं सुबोधां व्यधाम् ॥ १ ॥ मेधामन्दतया चलाचलतया चित्तस्य शिष्यावलीशास्त्रार्थप्रतिपादनादिविषयव्याक्षेपभूयस्तया। यत्सिद्धान्तविरुद्धमत्र किमपि ग्रन्थे निबद्धं मया, तद् भूतावहितैः प्रपञ्चितहितैः शोध्यं सुधीभिः स्वयम् ॥ २ ॥ श्रीचन्द्रगच्छगगने प्रकटितमुनिमण्डलप्रभाविभवः। उदगान्नवीनमहिमा श्रीमदभयदेवसूरिरविः ॥ ३ ॥ तार्किकागस्त्यविस्तारिसत्प्रज्ञाचुलुकैश्चिरम्। वर्धते पीयमानोऽपि, येषां वादमहार्णवः ॥ ४ ॥ तदनु धनेश्वरसूरिर्जज्ञे यः प्राप पुण्डरीकाख्यः। निर्मथ्य वादजलधिं जयश्रियं मुञ्जनृपपुरतः ॥ ५ ॥ भास्वानभून्नवीनः श्रीमदजितसिंहसूरिरथ यस्य। तमसोल्लासितमहिमा ज्ञानोद्योतः क्व न स्फुरितः ? ॥ ६ ॥ श्रीवर्धमानसूरिस्ततः परं गुणनिधानमजनिष्ट। अतनिष्ट सोममूर्तेरपि यस्य सदा कलाविभवः ॥ ७ ॥ अथ देवचन्द्रसूरिः श्रीमान् गोभिर्जगज्जनं धिन्वन्। रजनीजानिरिवाजनि नास्पृश्यत यः परं तमसा ॥ ८ ॥ श्रीचन्द्रप्रभमुनिपतिरवति स्म ततः स्वगच्छमच्छमनाः। अचलेन येन महता सुचिरं चक्रे क्षमोद्धरणम् ॥ ९ ॥ अथ भद्रभुवोऽभूवन्, श्रीभद्रेश्वरसूरयः। ये दधुर्विधुतारीणि, तपांसि ज यशांसि च ॥ १० ॥ शिष्यास्तेषामभवन् श्रीमदजितसिंहसूरयः शमिनः। भ्रमरहितैः कुसुमैरिव शिरसि सदा यैः स्थितं गुणिनाम् ॥ ११ ॥ श्रीदेवप्रभसूरिप्रभवोऽभूवन्नथोन्मथितमोहाः। सूरिषु रेखा येषामाद्यैव बभूव भूवलये ॥ १२ ॥ अप्रमेयप्रमेयोर्मिनिर्माणेऽर्णवसन्निभाः। यैः प्रमाणप्रकाशोऽयं, मथ्यते विबुधैर्ननु ॥ १३ ॥ श्रीश्रेयांसचरित्रादिप्रबन्धाङ्गनसङ्गिनी। यद्वाणी लास्यमुल्लास्य, कस्य नो मुदमादधे ? ॥ १४ ॥ प्रज्ञावैभवजृंभणादहरहर्दैवेज्यसब्रह्मभिर्यैर्वाग्ब्रह्म विनेयवृन्दहृदयक्षेत्रान्तरुप्तं तथा। नित्याभ्यासघनाम्बुवृष्टिघटनादङ्कूरितं पूर्णतामायातं फलति स्म वादिविजयैर्दत्तप्रमोदं यथा ॥ १५ ॥ नाप्ताव्यंत क्वति स्मयोद्धुरधियो

यद्ग्रथगुम्फोर्मिभिः, यद्वाग्वैभवभङ्गिभिः कति नहि प्राप्यन्त हर्षं नृपाः । यत्तीव्रव्रतमुद्रया कति न चानीयन्त चित्रं जना, यद्वा किं बहु जल्पितेन निखिलं यत्कृत्यमत्यद्भुतम् ॥ १६ ॥ तेषां गुणिषु गुरूणां शिष्यः श्रीसिद्धसेनसूरिरिमाम् । प्रवचनसारोद्धारस्य वृत्तिमकरोदतिस्पष्टाम् ॥ १७ ॥ करिसागररविसङ्ख्ये १२४८ श्रीविक्रमनृपतिवत्सरे चैत्रे । पुष्यार्कदिने शुक्लाष्टम्यां वृत्तिः समाप्ताऽसौ ॥ १८ ॥ तारकमुक्ताफले शशिकलशे गगनमरकतच्छत्रे । दण्ड इव भवति यावत् कनकगिरिर्जयतु तावदियम् ॥ १९ ॥

इति श्रीमद्विद्वद्धुरन्धरनेमिचन्द्राचार्यकृतमूलः

श्रीमत्सिद्धसेनसूरिपुरन्दरसूत्रितवृत्तियुतः

**श्रीमान् प्रवचनसारोद्धारः समाप्तिमगमत्**

श्रेष्ठि देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ६४.

# विषयानुक्रमणिका.

# साक्षिगाथाद्यकाराद्यनुक्रमः ।

# विशेषनामानि.

| विशेषनाम | | विशेषनाम | | विशेषनाम | | विशेषनाम | |
|---|---|---|---|---|---|---|---|
| द्रौपदी | २५७ | पूरणः | २५९ | मल्लिः | २५७–२६१ | रोहिणी | १११ |
| द्वीपायनः | १११ | पूर्वगणभृतः | (हरिभद्राः) १३ | महाकालम् | २७७–३२२ | वइरस्वामी | ४३१ |
| धनेश्वरसूरिः | ४४८ | पोट्टिलकः | १११ | महागिरिः | ३ | वज्रस्वामी | ६४–२२९ |
| धर्मघोषः | २९–१८८ | प्रभवः | ३ | महाबलः | २५६ | वनमाला | २५९ |
| नन्दिषेणः | ४०० | प्रभावती | २५६ | महावीरः | २५६ | वरधर्म्मः | २५६ |
| नारदः | १११–२५७ | प्रसन्नचन्द्रः | १७८ | माषतुषः | २८४ | वर्धमानसूरिः | ४४८ |
| नेमिचन्द्रसूरिः | ३५६–४४८ | बलदेवः | १११ | मुञ्जनृपः | ४४८ | वर्धमानस्वामी | २३५ |
| नेमिजिनः | ३० | भद्रबाहुः | ३ | मुनिसुव्रतः | २५८ | वात्स्यायनः | ३१४ |
| नेमिनाथः | २६१ | भद्रेश्वरः | ४४८ | यशोदेवः | ४४८ | वारत्रकः | १८८ |
| पद्मनाभः | २५७ | भाष्यकारः | (पातञ्जलिः) ४७ | यशोभद्रः | ३ | वासुदेवः | ३१–१११ |
| पद्मः | २७८ | भाष्यकृत | ३३९–३९८ | युधिष्ठिरः | २५७ | विक्रमसिंहः | २९ |
| पाण्डवः | २५७ | मरीचिः | २५६–२६१ | रेवती | १११ | विजयसेनः | ४४८ |
| पालकः | ३१ | मरुदेवी | ११२–११३–११७ | रैवतकः | ३१ | वीरकः | ३०–२५९ |

# क्षेत्रनामानि.

# अथ शास्त्रनामानि.

॥ श्रीजिनाय नमः ॥

# श्रीमन्नेमिचन्द्रसूरिप्रवरनिर्मितः प्रवचनसारोद्धारः ।

नमिऊण जुगाइजिणं वोच्छं भवाण जाणणनिमित्तं । पवयणसारुद्धारं गुरूवएसा समासेणं ॥ १ ॥ चिइवंदण वंदणयं पडिकमणं पच्चखाणमुस्सग्गो । चउवीससमहियसयं गिहिपडिकमाइयाराणं ॥ २ ॥ भरहंमि भूयसंपइभविस्सतित्थंकराण नामाइं । एरवयंमिवि ताइं जिणाण संपइभविस्साणं ॥ ३ ॥ उसहाइजिणिंदाणं आइमगणहरपवित्तिणीनामा । अरिहंतऽज्जणठाणा जिणजणणीजणयनाम गईं ॥ ४ ॥ उक्किट्ठजहण्णेहिं संखा विहरंततित्थनाहाणं । जम्मसमएऽवि संखा उक्किट्ठजहण्णिया तेसिं ॥ ५ ॥ जिणगणहर मुणि समणी वेउव्वियं वाइ अवहि केवलिणो । मणनाणि चउदसपुव्वि सड्ढ सड्ढीण संखा उ ॥ ६ ॥ जिणजक्खा देवीओ तणुमाणं लंछणाणि वन्ना य । वयपरिवारो सव्वाउयं च सिवगमणपरिवारो ॥ ७ ॥ निव्वाणगमणठाणं जिणंतराइं च तित्थवुच्छेओ । दस चुलसी वा आसायणाउ तह पाडिहेराइं ॥ ८ ॥ चउतीसाइसयाणं दोसा अट्ठारसारिहचउक्कं । निक्खमणे नाणंमि य निव्वाणंमि य जिणाण तवो ॥ ९ ॥ भाविजिणेसरजीवा संखा

उड्ढाहतिरियसिद्धाणं । तह एक्कसमयसिद्धाण ते य पन्नरसभेएहिं ॥ १० ॥ अवगाहणाय सिद्धा उक्किट्ठजहन्नमज्झिमाए य । गिहिलिंगअन्नलिंगसलिंगसिद्धाणं संखा उ ॥ ११ ॥ बत्तीसाई सिज्झंति अविरयं जाव अट्ठअहियसयं । अट्ठसमएहिं एक्केक्कूणं जावेक्कसमयंतं ॥ १२ ॥ थीवेए पुंवेए नपुंसए सिज्झमाणपरिसंखा । सिद्धाणं संठाणं अवठिइठाणं च सिद्धाणं ॥ १३ ॥ अवगाहणा य तेसिं उक्कोसा मज्झिमा जहन्ना य । नामाइ चउण्हंपि हु सासयजिणनाहपडिमाणं ॥ १४ ॥ उवगरणाणं संखा जिणाण थविराण साहुणीणं च । जिणकप्पियाण संखा उक्किट्ठा एगवसहीए ॥ १५ ॥ छत्तीसं सूरिगुणा विणओ बावन्नभेयपडिभिन्नो । चरणं करणं जंघाविज्जाचारणगमणसत्ती ॥ १६ ॥ परिहारविसुद्धि अहालंदा निज्जामयाण अडयाला । पणवीस भावणाओ सुहाउ असुहाउ पणवीसं ॥ १७ ॥ संखा महव्वयाणं किइकम्माण य दिणे तहा खित्ते । चारित्ताणं संखा ठियकप्पो अठियकप्पो य ॥ १८ ॥ चेइयं पुत्थयं दंडयं तणं चम्मं दुसाइ पंच पत्तेयं । पंच अवग्गहभेया परीसहा मंडली सत्त ॥ १९ ॥ दसठाणववच्छेओ खवगस्सेढी य उवसमस्सेढी । थंडिल्लाण सहस्सो अहिओ चउसहियवीसाए ॥ २० ॥ पुव्वाणं नामाइं पयसंखासंजुयाइं चउदसवि । निग्गंथा समणावि य पत्तेयं पंच पंचेव ॥ २१ ॥ गासेसणाण पणगं पिंडे पाणे य एसणा सत्त । भिक्खारिया वीहीणमट्ठगं पायछित्ताणं ॥ २२ ॥ सामायारी ओहंमि पयविभागंमि तह य दसहा उ ( चक्कवालंमि ) । निग्गंथत्तं जीवस्स पंचवाराओ भववासे ॥ २३ ॥ साहुविहारसरूवं अप्पडिबद्धो य सो विहेयव्वो । जायाअजायकप्पो परिठवणुच्चारकरणदिसा ॥ २४ ॥ अट्ठारस पुरिसेसु वीसं इत्थीसु दस नपुंसेसुं । पव्वावणाअणरिहा तह वियलंगस्सरूवा य ॥ २५ ॥ जंमुल्लं जइकप्पं वत्थं सेज्जायरस्स पिंडो य । जत्तिय सुत्ते सम्मं जह

निग्गंथावि [११४]चउगइया ॥ २६ ॥ [११५]खित्ते [११६]मग्गे [११७]काले तहा [११८]पमाणे अईयमकप्पं । [११९][१२०]दुहसुहसेज्जचउक्कं तेरस किरियाण [१२१]ठाणाइं
॥ २७ ॥ एगंमि बहुभवेसु य आगरिसा चउविहेऽवि [१२२]सामइए । सीलंगाणऽट्ठारस [१२३]सहस्स [१२४]नयसत्तगं चेव ॥ २८ ॥ [१२५]वत्थ-
ग्गहणविहाणं [१२६]ववहारा पंच तह [१२७]अहाजायं । निसि[१२८]जागरणंमि विही आलोयण[१२९]दाययऽन्नेसा ॥ २९ ॥ गुरुपमुहाणं कीरइ
[१३०]असुद्धसुद्धेहिं जत्तियं कालं । उवहीधोयण[१३१]कालो भोयण[१३२]भाया [१३३]वसहिसुद्धी ॥ ३० ॥ संलेहणा [१३४]दुवालस वरिसे वसहेण
वसहिसं[१३५]गहेणं । उसिणस्स [१३६]फासुयस्सवि जलस्स सच्चित्तयाकालो ॥ ३१ ॥ तिरिइत्थीओ तिरियाण माणवीओ नराण
देवीओ । देवाण [१३७]जग्गुणाओ जत्तियमेत्तेण अहियाओ ॥ ३२ ॥ [१३८]अच्छेरयाण दसगं चउरो [१३९]भासा उ [१४०]वयणसोलसगं ।
[१४१]मासाण पंच भेया भेया [१४२]वरिसाण पंचेव ॥ ३३ ॥ [१४३]लोगसरूवं [१४४]सन्नाओ तिन्नि [१४५]चउरो व [१४६]दस व [१४७]पनरस । तह सत्तसट्ठि-
[१४८]लक्खणभेअविसुद्धं च सम्मत्तं ॥ ३४ ॥ एगविह दुविह तिविहं चउहा पंचविह दसविहं सम्मं । दवाइकारगाईउवसमभे-
एहिं वा [१४९]सम्मं ॥ ३५ ॥ [१५०]कुलकोडीणं संखा जीवाणं जोणिलक्ख [१५१]चुलसीई । तेकालाईवित्तत्थ[१५२]विवरणं [१५३]सड्ढपडिमाउ ॥ ३६ ॥
[१५४]धन्नाणमबीयत्तं खेत्ताईयाण [१५५]तहे अचित्तत्तं । धन्नाइं [१५६]चउवीसं मरणं [१५७]सत्तरसमेयं च ॥ ३७ ॥ पलिओवमं [१५८][१५९]अयरऽ[१६०]वसप्पि-
णीण [१६१]उस्सप्पिणीणवि सरूवं । दव्वे खेत्ते काले भावे [१६२]पोग्गलपरावट्टो ॥ ३८ ॥ पन्नरस [१६३]कम्मभूमी अकम्मभूमीउ तीसं [१६४]
अट्ठ [१६५]मया । दोन्नि सया तेयाला भेया [१६६]पाणाइवायस्स ॥ ३९ ॥ परिणामाणं [१६७]अट्ठोत्तरसयं [१६८]बंभमट्ठदसभेयं । कामाण [१६९]चउ-
वीसा-दस [१७०]पाणा दस य [१७१]कप्पदुमा ॥ ४० ॥ [१७२]नरया नेरइयाणं [१७३]आवासा [१७४]वेयणाऽऽउ[१७५][१७६]तणुमाणं । उप्पत्ति[१७७]नासविरहो [१७८]लेसाऽवहि[१७९]
परम[१८०]हम्मा य ॥ ४१ ॥ नरयुवट्टाणं लद्धिसंभवो [१८१]तेसु जेसि [१८२]उववाओ । संखा [१८३]उप्पज्जंताण तह य [१८४]उवट्टमाणाणं ॥ ४२ ॥

कायठिई भवठिइओ एगिंदियविगलसन्निजीवाणं । तणुमाणमेसिं इंदियसरूवविसया य लेसाओ ॥ ४३ ॥ एयाणं जत्थ
गई जत्तो ठाणेहि आगई एसिं । उप्पत्तिमरणविरहो जायंतमरंतसंखा य ॥ ४४ ॥ भवणवइवाणमंतरजोइसवेमाणवासि-
देवाणं । ठिई भवण देहमाणं लेसाओ ओहिनाणं च ॥ ४५ ॥ उप्पत्तीए तहुवट्टणाय विरहो इमाण संखा य । जम्मि य
एयाण गई जत्तो वा आगई एसिं ॥ ४६ ॥ विरहो सिद्धिगईए जीवाणाहारगहणऊसासा । तिन्नि सया तेसट्ठा पासंडी-
णऽट्ठ य पमाया ॥ ४७ ॥ अरहाहिवा हलहरा हरिणो पडिवासुदेवरायाणो । रयणाइ चउदस नव निहीओ तह जीवसं-
खाओ ॥ ४८ ॥ कम्माइं अट्ठ तेसिं उत्तरपयडीण अट्ठवन्नसयं । वंधोदयाणुदीरणसत्ताण य किंपि हु सरूवं ॥ ४९ ॥
कम्मट्ठिइ सवाहा वायालीसा उ पुण्णपयडीओ । नासी य पावपयडीओ भावछक्कं सपडिभेयं ॥ ५० ॥ जीवाण अजीवाण
य गुणाण तह मग्गणाण पत्तेयं । चउदसगं उवओगा वारस जोगा य पण्णरस ॥ ५१ ॥ परलोगगई गुणठाणएसु तह
ताण कालपरिमाणं । नरयतिरिनरसुराणं उक्कोसविउव्वणाकालो ॥ ५२ ॥ सत्तेव समुग्घाया छप्पज्जत्तीऽणहारया चउरो ।
सत्त भयट्ठाणाइं छब्भासा अप्पसत्थाओ ॥ ५३ ॥ भंगा गिहिवयाणं अट्ठारस पावठाणगाइंपि । मुणिगुणा सत्तावीसा इग-
वीसा सावयगुणाणं ॥ ५४ ॥ तेरिच्छीणुक्किट्ठा गब्भठिई तह य सा मणुस्सीणं । गब्भस्स य कायठिई गब्भट्ठियजीवआ-
हारो ॥ ५५ ॥ रिउरुहिरसुक्कजोए जत्तियकालेण गब्भसंभूई । जत्तिय पुत्ता गब्भे जत्तिय पियरो य पुत्तस्स ॥ ५६ ॥
महिला गब्भअजोगा जेत्तियकालेणऽवीयओ पुरिसो । सुक्काईण सरीरट्ठियाण सव्वाण परिमाणं ॥ ५७ ॥ सम्मत्ताईणु-
त्तमगुणाण लाहंतरं जमुक्कोसं । न लहंति माणुसत्तं सत्ता जेऽणंतरुवट्टा ॥ ५८ ॥ पुव्वंगपरीमाणं माणं पुव्वस्स लवणसि-

हमाणं । उस्सेहआयअंगुलपमाणअंगुलपमाणाइं ॥ ५९ ॥ तमकायसरूवमणंतछक्कगं अट्ठगं निमित्ताणं । माणुम्माणपमाणं अट्ठारस भक्खभोज्जाइं ॥ ६० ॥ छट्ठाणवुड्ढिहाणी अवहरिउं जाइ नेव तीरंति । अंतरदीवा जीवाजीवाणं अप्पवहुयं च ॥ ६१ ॥ संखा निस्सेसजुगप्पहाणसूरीण वीरजिणतित्थे । ओसप्पिणिअन्तिमजिणतित्थअविच्छेयमाणं च ॥ ६२ ॥ देवाणं पवियारो सरूवमट्ठण्ह कण्हराईणं । सज्झायस्स अकरणं नंदीसरदीवठिइभणणं ॥ ६३ ॥ लद्धीओ तवं पायालकलस आहारगस्सरूवं च । देसा अणारिया आरिया य सिद्धेगतीसगुणा ॥ ६४ ॥ तेसट्ठीदारगाहाओ ॥ समयसमुद्धरियाणं आसत्थसमत्तिमेसि दाराणं । नामुक्कित्तणपुव्वा तव्विसयवियारणा नेया ॥ ६५ ॥

[ सोलस पुण आगारा दोसा एगूणवीस उस्सग्गे । छच्चिय निमित्त हुंति य पंचेव य हेयवो भणिया ॥ १ ॥ अहिगारा पुण वारस दंडा पंचेव होंति नायव्वा । तिन्नेव वंदणिज्जा थुइओ पुण होंति चत्तारि ॥ २ ॥ तिन्निनिसीहीए माइ तीस तह संपयाओ सत्तणऊ । चियवंदणंमि नेयं सत्तणऊसयं तु ठाणाणं ॥ ३ ॥ अगणीओ छिंदिज्ज व वोहीखोहाइ दीहडक्को वा । इय एवमाइएहिं अब्भग्गो होज्ज उस्सग्गो ॥४॥] तिन्नि निसीहिय तिन्नि य पयाहिणा तिन्नि चेव य पणामा । तिविहा पूया य तहा अवत्थतियभावणं चेव ॥६६॥ तिदिसिनिरिक्खणविरई तिविहं भूमीपमज्जणं चेव । वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं ॥६७॥ इय दहतियसंजुत्तं वंदणयं जो जिणाण तिक्कालं । कुणइ नरो उवउत्तो सो पावइ निज्जरं विउलं ॥६८॥ घरजिणहरजिणपूयावावारच्चायओ निसीहितिगं । पुप्फक्खयत्थुईहिं तिविहा पूया मुणेयव्वा ॥६९॥ होइ छउम-

(१) अव्याख्याता अननुमताः सोपयोगाश्च गाथा एताः लिखितेष्वादर्शेष्वदृष्टा अपि मुद्रिते दृष्टा इत्यत्र न्यस्ताः.

त्थके[3]वलिसि[3]द्धत्तेहिं जिणे अवत्थतिगं। वण्णत्[3]थाऽऽलंबणओ वण्णाइतियं वियाणिज्जा ॥७०॥ जिणमुद्दा जोगमुद्दा मुत्तासुत्ती उ तिन्नि मुद्दाओ । कायमणोवयणनिरोहणं च तिविहं च पणिहाणं ॥७१॥ पंचंगो पणिवाओ थयपाढो होइ जोगमुद्दाए । वंदण जिणमुद्दाए पणिहाणं मुत्तसुत्तीए ॥७२॥ दो जाणू दुन्नि करा पंचमगं होइ उत्तमंगं तु । संमं संपणिवाओ नेओ पंचंगपणिवाओ ॥७३॥ अन्नोऽन्नंतरअंगुलि कोसागारेहिं दोहिं हत्थेहिं । पेट्टोवरिकुप्परसंठिएहिं तह जोगमुद्दत्ति ॥७४॥ चत्तारि अंगुलाइं पुरओ ऊणाइं जत्थ पच्छिमओ। पायाणं उस्सग्गे एसा पुण होइ जिणमुद्दा ॥७५॥ मुत्तासुत्तीमुद्दा समा जहिं दोवि गब्भिया हत्था । ते पुण निलाडदेसे लग्गा अण्णे अलग्गत्ति ॥७६॥ दाहिणवामंगठिओ नरनारिगणोऽभिवंदए देवे । उक्किट्ठ सट्ठिहत्थुग्गहे जहन्नेण करनवगे ॥ ७७ ॥ अट्ठट्ठनवट्ठ य अट्ठवीस सोलस य वीस वीसामा । मंगलइरियावहिया सक्कत्थयपमुहदंडेसु ॥ ७७ ॥ पंचपरमेट्ठिमंते पए पए सत्त संपया कमसो । पज्जन्तसत्तरक्खरपरिमाणा अट्ठमी भणिआ ॥७९॥ इच्छ १ गम २ पाण ३ ओसा ४ जे मे ५ एगिंदि ६ अभिहया ७ तस्स ८ । इरियाविस्सामेसुं पढमपया हुंति दट्ठव्वा ॥८०॥ अरिहं १ आइग २ पुरिसो ३ लोगोऽ ४ भय ५ धम्म ६ अप्प ७ जिण ८ सव्वा ९ । सक्कत्थयसंपयाणं पढमुल्लिंगणपया नेया ॥ ८१ ॥ अरिहं १ वंदण २ सद्धा ३ अण्णत्थू ४ सुहुम ५ एव ६ जा ७ ताव ८ । अरिहंतचेइयथए विस्सामाणं पया पढमा ॥ ८२ ॥ अट्ठावीसा सोलस वीसा य जहक्कमेण निद्दिट्ठा । नामजिणट्ठवणाइसु वीसामा पायमाणेणं ॥ ८३ ॥ दु[3]ण्णेगं दु[3]ण्णि दु[3]गं पंचेवं कमेण हुंति अहिगारा । सक्कत्थयाइसु इहं थोयववि सेसविसया उ ॥ ८४ ॥ पढमं नमोऽत्थु १ जे अइयसिद्ध २ अरहंतचेइयाणंति ३ । लोगस्स ४ सव्वलोए ५ पुक्खर ६ तमतिमिर ७ सिद्धाणं ८ ॥ ८५ ॥

जो देवाणवि ९ उज्जिंतसेल १० चत्तारि अट्ठ दस दो य ११ । वेयावच्चगराण य १२ अहिगारुलिंगणपयाइं ॥ ८६ ॥ पढमे छट्ठे नवमे दसमे एक्कारसे य भावजिणे । तइयंमि पंचमंमि य ठवणजिणे सत्तमे नाणं ॥ ८७ ॥ अट्ठमवीयचउत्थेसु सिद्धदवारिहंतनामजिणे । वेयावच्चगरसुरे सरेमि वारसमअहिगारे ॥ ८८ ॥ साहूण सत्त वारा होइ अहोरत्तमज्झयारंमि । गिहिणो पुण चिइवंदण तिय पंच य सत्त वा वारा ॥८९॥ पडिकमणे चेइहरे भोयणसमयंमि तह य संवरणे । पडिकमणं सुयण पडिवोहकालियं सत्तहा जइणो ॥ ९० ॥ पडिकमओ गिहिणोवि हु सत्तविहं पंचहा उ इयरस्स । होइ जहण्णेण पुणो तीसुवि संझासु इय तिविहं ॥ ९१ ॥ नवकारेण जहन्ना दंडकथुइजुयल मज्झिमा नेया । उक्कोसा विहिपुव्वगसक्कत्थय-पंचनिम्माया ॥ ९२ ॥ १ द्वारम् ॥

मुहणंतयदेहाऽऽवस्सएसु पणवीस हुंति पत्तेयं । छट्ठाणा छच्च गुणा छच्चेव हवंति गुरुवयणा ॥ ९३ ॥ अहिगारिणो य पंच य इयरे पंचेव पंच पडिसेहा । एक्कोऽवग्गह पंचाभिहाण पंचेव आहरणा ॥ ९४ ॥ आसायण तेत्तीसं दोसा वत्तीस कारणा अट्ठ । वाणउयसयं ठाणाण वंदणे होइ नायव्वं ॥ ९५ ॥ दिट्ठिपडिलेहणेगा नव अक्खोडा नवेव पक्खोडा । पुरिमिल्ला छच्च भवे मुहपुत्ती होइ पणवीसा ॥ ९६ ॥ वाहूसिरमुहहियये पाएसु अ हुंति तिन्नि पत्तेयं । पिट्ठीइ हुंति चउरो एसा पुण देहपणवीसा ॥९७॥ दुओणयं अहाजायं, किइकम्मं वारसावयं । चउस्सिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं ॥९८॥ इच्छा य अणुण्णवणा अव्वावाहं च जत्त जवणा य । अवराहखामणावि य छट्ठाणा हुंति वंदणए ॥ ९९ ॥ विणओवयार माणस्स भंजणा पूअणा गुरुजणस्स । तित्थयराण य आणा सुयधम्माराहणाऽकिरिया ॥ १०० ॥ छंदेणऽणुजाणामि तहत्ति

तुब्भंपि वंदए एवं। अहमवि खामेमि तुमे वयणाइं वंदणऽरिहस्स ॥ १०१ ॥ आयरियं उवज्झाए[3] पवत्तिं थेरे[4] तहेव रायणिए। एएसिं किइकम्मं कायव्वं निज्जरट्ठाए ॥ १०२ ॥ पासत्थो १ ओसन्नो २ होइ कुसीलो ३ तहेव संसत्तो ४। अहछंदोवि अ एए अवंदणिज्जा जिणमयंमि ॥ १०३ ॥ सो पासत्थो दुविहो सव्वे देसे य होइ नायव्वो। सव्वंमि नाणदंसणचरणाणं जो उ पासंमि ॥१०४॥ देसंमि य पासत्थो सेज्जायरऽभिहडरायपिण्डं च। नीयं च अग्गपिण्डं भुंजइ निक्कारणे चेव ॥ १०५ ॥ ओसन्नोवि य दुविहो सव्वे देसे य तत्थ सव्वंमि। अवबद्धपीढफलगो ठवियगभोई य नायव्वो ॥ १०६ ॥ आवस्सयसज्झाए पडिलेहणभिक्खझाणभत्तट्ठे। आगमणे निग्गमणे ठाणे य निसीयणतुयट्टे ॥ १०७ ॥ आवस्सयाइयाइं न करेइ अहवा विहीणमहियाइं। गुरुवयणवला य तहा भणिओ देसावसन्नोत्ति ॥ १०८ ॥ तिविहो होइ कुसीलो नाणे तह दंसणे चरित्ते य। एसो अवंदणिज्जो पन्नत्तो वीयरागेहिं ॥ १०९ ॥ नाणे नाणायारं जो उ विराहेइ कालमाईयं। दंसण दंसणयारं चरणकुसीलो इमो होइ ॥११०॥ कोउय[1] भूईकम्मे[2] पसिणापसिणे[3] निमित्तमाजीवी[4]। कक्ककरुयाई[5] लक्खणं[6] उवजीवइ विज्जमंताई ॥ १११ ॥ सोहग्गाइनिमित्तं परेसि ण्हवणाइ कोउयं भणियं। जरियाइभूइदाणं भूईकम्मं विणिदिट्ठं ॥ ११२ ॥ सुविणगविज्जाकहियं आइंखणघंटियाइकहणं वा। जं सासइ अन्नेसिं पसिणापसिणं हवइ एयं ॥ ११३ ॥ तीयाइभावकहणं होइ निमित्तं इमं तु आजीवं। जाइकुलसिप्पकम्मे तवगणसुत्ताइ सत्तविहं ॥ ११४ ॥ कक्ककुरुया य माया नियडीए डंभणंति जं भणियं। थीलक्खणाइ लक्खण विज्जामंताइया पयडा ॥ ११५ ॥ संसत्तो उ इयाणिं सो पुण गोभत्तलंदए चेव। उच्छिट्ठमणुच्छिट्ठं जं किंचिच्छुब्भए सव्वं ॥११६॥ एमेव य मूलुत्तरदोसा य गुणा य जत्तिया केई।

ते तंमी(मिय) सन्निहिया संसत्तो भण्णए तम्हा ॥११७॥ सो दुविगप्पो भणिओ जिणेहिँ जियरागदोसमोहेहिँ । एगो उ
संकिलिट्ठो असंकिलिट्ठो तहा अन्नो ॥ ११८ ॥ पंचासवप्पसत्तो जो खलु तिहिं गारवेहिं पडिवद्धो । इत्थिगिहिसंकिलिट्ठो
संसत्तो संकिलिट्ठो उ ॥ ११९ ॥ पासत्थाईएसुं संविग्गेसुं च जत्थ मिलई उ । तहिँ तारिसओ होई पियधम्मो अहव
इयरो उ ॥ १२० ॥ उस्सुत्तमायरंतो उस्सुत्तं चेव पन्नवेमाणो । एसो उ अहाछंदो इच्छाछंदोत्ति एगट्ठा ॥ १२१ ॥
उस्सुत्तमणुवइट्ठं सच्छंदविगप्पियं अणणुवाई । परतत्तिपवत्ती तिंतिणो य इणमो अहाच्छंदो ॥१२२॥ सच्छंदमइविगप्पिय
किंची सुहसायविगइपडिवद्धो । तिहिँ गारवेहिं मज्जइ तं जाणाही अहाछंदं ॥ १२३ ॥ वक्खित्तपराहुत्ते पमत्ते मा कयाइ
वंदिज्जा । आहारं व करिंते नीहारं वा जइ करेइ ॥ १२४ ॥ पसंते आसणत्थे य, उवसंते उवट्ठिए । अणुन्नवित्तु मेहावी,
किइकम्मं पउंजए ॥ १२५ ॥ आयप्पमाणमित्तो चउदिसिं होइ उग्गहो गुरुणो । अणणुन्नायस्स सया न कप्पए तत्थ
पविसेउं ॥ १२६ ॥ वंदणचिइकिइकम्मं पूयाकम्मं च विणयकम्मं च । वंदणयस्स इमाइं हवंति नामाइं पंचेव ॥ १२७ ॥
सीयले १ खुड्डुए २ कण्हे ३, सेवए ४ पालए ५ तहा । पंचेए दिट्ठंता, किइकम्मे हुंति नायव्वा ॥ १२८ ॥ पुरओ
पक्खासन्ने गंताचिट्ठणनिसीयणायमणे । आलोयणऽपडिसुणणे पुव्वालवणे य आलोए ॥ १२९ ॥ तह उवदंस
निमंतण खद्धाईयणे तहा अपडिसुणणे । खद्धंत्ति य तत्थगए किं तुम तज्जाय नोसुमणे ॥ १३० ॥ नो सरसि हंक
छित्ता परिसं भित्ता अणुट्ठियाइ कहे । संथारपायघट्टण चिट्ठोच्चसमासणे यावि ॥ १३१ ॥ पुरओ अग्गपएसे पक्खे पासंमि
पच्छ आसन्ने । गमणेण तिन्नि ठाणेण तिन्नि तिण्णि य निसीयणए ॥ १३२ ॥ विणयब्भंसाइगदूसणाउ आसायणाओ

नव एया । सेहस्स वियारगमे रायणियपुव्वमायमणे ॥ १३३ ॥ पुव्वं गमणागमणालोए सेहस्स आगयस्स तओ । राओ सुत्तेसु जागरस्स गुरुभणियऽपडिसुणणा ॥ १३४ ॥ आलवणाए अरिहं पुव्वं सेहस्स आलवेंतस्स । रायणियाओ एसा तेरसमाऽऽसायणा होइ ॥ १३५ ॥ असणाईयं लद्धुं पुव्विं सेहे तओ य रायणिए । आलोए चउदसमी एवं उवदंसणे नवरं ॥ १३६ ॥ एवं निमंतणेऽवि य लद्धुं रयणाहिगेण तह सद्धिं । असणाइ अपुच्छाए खद्धंति वहुं दलंतस्स ॥ १३७ ॥ संगहगाहाए जो न खद्धसद्दो निरूविओ वीसुं । तं खद्धाइयणपए खद्धत्ति विभज्ज जोएज्जा ॥ १३८ ॥ एवं खद्धाइयणे खद्धं वहुयंति अयणमसणंति । आईसद्दा डायं होइ पुणो दत्तसागं तं ॥ १३९ ॥ वन्नाइजुयं उसढं रसियं पुण दाडिमंबगाईयं । मणइट्ठं तु मणुण्णं मन्नइ मणसा मणामं तं ॥ १४० ॥ निद्धं नेहवगाढं रुक्खं पुण नेहवज्जियं जाण । एवं अप्पडिसुणणे नवरिमिणं दिवसविसयंमि ॥ १४१ ॥ खद्धंति वहु भणंते खरकक्कसगुरुसरेण रायणियं । आसायणा उ सेहे तत्थ गए होइमा चऽण्णा ॥ १४२ ॥ सेहो गुरुणा भणिओ तत्थ गओ सुणइ देइ उल्लावं । एवं किंति च भणई न मत्थएणं तु वंदामि ॥१४३॥ एवं तुमंति भणई कोऽसि तुमं मज्झ चोयणाए उ ? । एवं तज्जाएणं पडिभणणाऽऽसायणा सेहे ॥१४४॥ अज्जो ! किं न गिलाणं पडिजग्गसि पडिभणाइ किं न तुमं ? । रायणिए य कहंते कहं च एवं असुमणत्ते ॥ १४५ ॥ एवं नो सरसि तुमं एसो अत्थो न होइ एवंति । एवं कहमच्छिंदिय सयमेव कहेउमारभइ ॥ १४६ ॥ तह परिसं चिय भिंदइ तह किंची भणइ जह न सा मिलइ । ताए अणुट्ठियाए गुरुभणिअ सवित्थरं भणइ ॥ १४७ ॥ सेज्जं संथारं वा गुरुणो संघट्टिऊण पाएहिं । खामेइ न जो सेहो एसा आसायणा तस्स ॥१४८॥ गुरुसेज्जासंथारगचिट्ठणनिसियणतुयट्टणेऽहऽवरा ।

गुरुउच्चसमासणचिट्ठणाइकरणेण दो चरिमा ॥ १४९ ॥ अणाढियं च थद्धं च, पविद्धं परिपिंडियं । टोलगइ अंकुसं चेव, तहा कच्छवरिंगियं ॥१५०॥ मच्छुवत्तं मणसा पउट्ठं तह य वेइयांबद्धं । भयसा चेव भयंतं मित्ती गारव कारणा ॥१५१॥ तेणियं पडिणीयं च, रुट्ठं तज्जियमेव य । सढं च हीलियं चेव, तहा विप्पलिउंचियं ॥ १५२ ॥ दिट्ठमदिट्ठं च तहा, सिंगं च करं मोयणं । आलिट्ठमणालिट्ठं, ऊणं उत्तरचूलियं ॥ १५३ ॥ मूयं च ढड्ढरं चेव, चुडुलियं च अपच्छिमं । वत्तीसदोसपरिसुद्धं, किइकम्मं पउंजए ॥ १५४ ॥ आयरकरणं आढा तव्विवरीयं अणाढियं होई । दव्वे भावे थद्धो चउभंगो दव्वओ भइओ ॥१५५॥ पविद्धमणुवयारं जं अप्पिंतो णिजंतिओ होइ । जत्थ व तत्थ व उज्झइ कियकिच्चोवक्खरं चेव ॥ १५६ ॥ संपिंडिए व वंदइ परिपिंडियवयणकरणओ वावि। टोलोव्व उप्फिडंतो ओसक्कहिसक्कणे कुणई ॥ १५७ ॥ उवगरणे हत्थंमि व घेत्तु निवेसेइ अंकुसं विंति । ठिउविट्ठरिंगणं जं तं कच्छवरिंगियं जाणे ॥ १५८ ॥ उट्ठिंतनिवेसिंतो उवत्तइ मच्छउव्व जलमज्झे । वंदिउकामो वऽन्नं झसो व परियत्तए तुरियं ॥ १५९ ॥ अप्पपरपत्तिएणं मणप्पंओसो य वेइयापणगं । तं पुण जाणूवरि १ जाणुहिट्ठाओ २ जाणुवाहिं ३ वा ॥ १६० ॥ कुणइ करे जाणुं वा एगयरं ठवइ करजुयलमज्झे ४ । उच्छंगे करइ करे ५ भयं तु निज्जूहणाईयं ॥१६१॥ भयइ व भयिस्सइत्ति य इअ वंदइ ण्होरयं निवेसंतो । एमेव य मित्तीए गारव सिक्खाविणीओऽहं ॥१६२॥ नाणाइतिगं मोत्तुं कारणमिहलोयसाहयं होइ । पूयागारवहेऊं नाणग्गहणेवि एमेव ॥१६३॥ हाउं परस्स दिट्ठिं वंदंते तेणियं हवइ एयं। तेणोविव अप्पाणं गूहइ ओभावणा मा मे ॥१६४॥ आहारस्स उ काले नीहारस्सावि होइ पडिणीयं । रोसेण धमधमंतो जं वंदइ रुट्ठमेयं तु ॥ १६५ ॥ नवि कुप्पसि न पसीयसि कट्ठसिवो चेव तज्जियं

यः पटमुपदश्ये लोकमावजयति, इत्थंभूतं च परभावक्रीतं त्रयो दोषाः—एकं तावत्क्रीतं द्वितीयमन्यस्माद् गृहादानीतमित्यभ्याहृतं आनी-
यानीय चैकत्र साधुनिमित्तं स्थाप्यत इति स्थापितमिति ४—८। 'पामिच्चे'त्ति अपमित्यं—भूयोऽपि तव दास्यामीत्येवमभिधाय यत्साधुनिमि-
त्तमुच्छिन्नं गृह्यते तदपमित्यं प्रामित्यकं वा, इह यदपमित्य गृह्यते तदप्युपचारादपमित्यमित्युक्तं, तद् द्विविधं—लौकिकं लोकोत्तरं च, तत्र
लौकिकं यद् गृहस्थेन परस्मादुच्छिन्नं गृहीत्वा घृतादिकं वस्तु व्रतिभ्यो वितीर्यते, दोषाश्च दासत्वनिगडनियन्त्रणादयः, लोकोत्तरं च
वस्त्रादिविषयं साधूनामेव परस्परमवसेयं, तत्तु द्विधा—कोऽपि कस्यापि सत्कमेवं वस्त्रादि गृह्णाति—यथा कियद्दिनानि परिभुज्य पुनरपि ते
समर्पयिष्यामि, कोऽपि पुनरेवं—एतावद्दिनानामुपरि तवैतत्सदृशमपरं वस्त्रादि दास्यामि, तत्र प्रथमे प्रकारे शरीरादिमलेन मलिनीकृते
यदिवा पाटिते चौरादिना वा हृते मार्गे पतिते वा तस्मिन् वस्त्रादिके कलहादयो दोषाः, द्वितीये च प्रकारे अन्यद्वस्त्रादिकं याचमानस्य
तस्य दुष्कररुचेर्विशिष्टतरेऽपि दत्ते महता कष्टेन रुचिरापादयितुं शक्यते, ततः तमाश्रित्य कलहादयो दोषाः सम्भवन्तीति ९। 'परि-
यट्टिए'त्ति परिवर्तितं यत्साधुनिमित्तं कृतपरावर्तं, तद् द्विविधं—लौकिकं लोकोत्तरं च, एकैकमपि द्विधा—तद्द्रव्यविषयमन्यद्रव्यविषयं
च, तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णातीत्यादि, अन्यद्रव्यविषयं यथा कोद्रवकूरं समर्पयित्वा
साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि, इदं च लौकिकमेव, लोकोत्तरमपि साधोः साधुना सह वस्त्रादिपरावर्तनस्वरूपं इति द्विधा भाव-
नीयं, दोषाश्चात्रापि प्राग्वदेव १०। 'अभिहडे'त्ति अभि-साध्वभिमुखं हृतं-गृहस्थेन स्थानान्तरादानीतमभिहृतं, तद् द्विधा—अनाचीर्ण-
माचीर्णं च, तत्रानाचीर्णं द्विविधं—प्रच्छन्नं प्रकटं च, सर्वथा साधुना अभ्याहृतत्वेन यदपरिज्ञातं तत्प्रच्छन्नं, यत्पुनरभ्याहृतत्वेन ज्ञातं
तत्प्रकटं, एकैकमपि द्विविधं—स्वग्रामविषयं परग्रामविषयं च, यस्मिन् ग्रामे साधुर्निवसति स किल स्वग्रामः, शेषस्तु परग्रामः, तत्र

कांचित् श्राविका भक्तियुक्ता साधूनां प्रतिलाभनायाभ्याहृताशङ्कानिवृत्त्यर्थं प्रहेणकमिषेणोपाश्रये मोदकाद्यानीय साधुसंमुखमेवं वदति—यथा भगवन्! मया भ्रातृगेहादौ सङ्खड्यां वा गतया इदं लब्धं यद्वा मया स्वजनानां गृहे प्रहेणकमिदं स्वगृहान्नीतं, तैश्च रोगादिना केनापि कारणेन न गृहीतं, सम्प्रति वन्दनार्थमत्र प्रविष्टा, ततो यदि युष्माकमिदमुपकरोति तर्हि प्रतिगृह्यतामिति, ततः सा यद्ददाति तत् प्रच्छन्नं स्वग्रामविषयमभ्याहृतं, तथा क्वचिद् ग्रामे बहवः श्रावकाः सन्ति, ते च सर्वेऽप्येककुटुम्बवर्तिनः, अन्यदा तेषां गृहे विवाहः समजनि, निवृत्ते च विवाहे प्रचुरमोदकाद्युद्धरितं, ततस्तैरचिन्ति—यथैतत्साधुभ्यो दीयतां येन महत्पुण्यमस्माकमुपजायते, अथ केचित् साधवो दूरेऽवतिष्ठन्ते केचित्पुनः प्रत्यासन्नाः, परमन्तराले नदी विद्यते, ततस्तेऽप्यप्कायविराधनाभयतो नागमिष्यन्ति, आगता अपि च प्रचुरमोदकादिकमालोक्य शुद्धमिति कथ्यमानमप्याधाकर्मशङ्कया न गृहीष्यन्ति, ततो यत्र ग्रामे साधवो निवसन्ति तत्रैव प्रच्छन्नं गृहीत्वा व्रजाम इति, तथैव च कृतं, ततो भूयोऽपि चिन्तयन्ति—यदि साधूनाहूय दास्यामस्ततस्तेऽशुद्धमाशङ्क्य न गृहीष्यन्ति, तस्माद् द्विजादिभ्योऽपि किमपि किमपि दद्मः, तच्च तथा दीयमानमपि यदि साधवो न प्रेक्षिष्यन्ते ततस्तदवस्थैव तेषामशुद्धाशङ्का भविष्यति ततो यत्र यत्रोच्चारादिकार्यार्थं निर्गताः सन्तः साधवः प्रेक्षन्ते तत्र दद्म इति, एवं च चिन्तयित्वा विवक्षिते कस्मिंश्चित्प्रदेशे द्विजादिभ्यः स्तोकं स्तोकं दातुमारब्धं, तत उच्चारादिकार्यार्थं निर्गताः केचन साधवो दृष्टाः, ततस्ते निमन्त्रिता—यथा भो साधवोऽस्माकमुद्धरितं मोदकादिकं प्रचुरमवतिष्ठते, ततो यदि युष्माकं किमप्युपकरोति तर्हि तत्प्रतिगृह्यतामिति, साधवोऽपि शुद्धमित्यवगम्य प्रत्यगृह्णन्, एतत्प्रच्छन्नं परग्रामविषयमभिहृतं, परम्परया ज्ञाते च परिष्ठापनीयं, तथा कश्चित्साधुर्भिक्षामटन् क्वापि गृहे प्रविष्टः, तत्र च गौरवार्हं स्वजनभोजनादिकं प्रकृतं वर्तते, ततो न तदानीं साधवे भिक्षां दातुं प्रपारिता इत्यादिभिः कारणैः काचित् श्राविका स्वगृहात्साधोरुपाश्रये मोदकादिकमा-

नीय यद्दाति तत्प्रकटं स्वग्रामविषयमभिहृतं, एवं परग्रामविषयमपि प्रकटमनाचीर्णमवसेयं, आचीर्णं पुनर्द्विविधं—क्षेत्रविषयं गृहविषयं च, क्षेत्रविषयमपि त्रिविधं—उत्कृष्टं मध्यमं जघन्यं च, तत्र कस्मिंश्चिन्महति गृहे भूरिभुञ्जानकजनपङ्क्तिरुपविष्टा वर्तते, तस्याश्चैकस्मिन् पर्यन्ते साधुसङ्घाटको द्वितीये तु देयमशनादिकं तिष्ठति, न च साधुसङ्घाटकश्छुप्तिभयादिना देयस्याशनादेः समीपं गन्तुं शक्नोति, ततो हस्तशतप्रमितक्षेत्रादानीतं यद् गृह्णाति तदुत्कृष्टं क्षेत्राभिहृतमाचीर्णं, हस्तशतात्परतस्त्वानीतं प्रतिषिद्धमेव, मध्यमं क्षेत्राभ्याहृतं पुनः करपरिवर्त्तादुपरि यावद्धस्तशतं किञ्चिन्न्यूनं भवति तावद्विज्ञेयं, करपरिवर्ते तु जघन्यं क्षेत्राचीर्णमभ्याहृतं, करपरिवर्तो नाम हस्तस्य किञ्चिच्चलनं, यथा काचिद्दात्री ऊर्द्ध्वा उपविष्टा वा स्वयोगेनैव निजकरगृहीतमोदकमण्डकादिका प्रसारितबाहुस्तिष्ठति, सा च तथास्थिता साधुसङ्घाटकं दृष्ट्वा करस्थितैर्मोदकादिभिस्तं निमन्त्रयते, स च करस्याधः पात्रकं धारयति, सा च भुजमचालयन्ती किञ्चिन्मुष्टिं शिथिलयति, ततो मण्डकादिकं पात्रके पततीति, इदं क्षेत्रविषयमाचीर्णं, गृहविषयमभ्याहृतमाचीर्णं पुनरित्थं भवति—पङ्क्तिस्थितानि त्रीणि गृहाणि सन्ति, तत्र च यदा साधुसङ्घाटको भिक्षां गृह्णाति तदा एकः साधुरेकत्र धर्मलाभिते गृह्यमाणभिक्षे गृहे उपयोगं ददानो भिक्षां गृह्णाति, पश्चाद्भागवर्ती द्वितीयसङ्घाटकस्तु धर्मलाभितगृहादितरयोर्गृहयोरानीयमानभिक्षयोरुपयोगं दायकहस्तादिविषयं ददातीति गृहत्रयादानीतमाचरितमशनादिकं, चतुर्थादेस्तु गृहान्नाचरितमिति ११ । 'उब्भिन्ने'त्ति उद्भेदनमुद्भिन्नं—साधुभ्यो घृतादिदाननिमित्तं कुतुपादेर्मुखस्य गोमयादिस्थगितस्योद्घाटनं, तद् द्विधा—पिहितोद्भिन्नं कपाटोद्भिन्नं च, तत्र यच्छगणकामितापितजतुसचित्तपृथिवीकायप्रभृतिभिः श्लेषद्रव्यैः पिहितद्वारं प्रतिदिनमपरिभोगं खण्डगुडादिभृतघटकुतुपकुशूलादिकं साधुदाननिमित्तमुद्घाट्य खण्डादिकं साधुभ्यो दीयते तद्दीयमानं खण्डादि पिहितोद्भिन्नं पिहितमुद्भिन्नं, यत्र तत्पिहितोद्भिन्नमिति व्युत्पत्तेः, यत्पुनः खण्डघृतगुडादियुक्तापवरकादेर्निश्चलनिभृतदत्त-

कपाटस्य प्रतिदिनमनुद्घाटितद्वारस्य साधुदाननिमित्तमुद्घाट्य कपाटानि गुडखण्डादि साधुभ्यो दीयते तत्कपाटोद्भिन्नं, व्युत्पत्तिः प्राग्वत्, दोषाश्चात्र षड्जीवनिकायविराधनादयः, तथाहि—कुतुपादिमुखाद् घृतादिकं साधवे दत्त्वा शेषस्य रक्षणार्थं भूयोऽपि कुतुपादिमुखं सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिम्पति, ततः पृथिवीकायविराधनाऽप्कायविराधना च, पृथिवीकायमध्ये च मुद्गादयः कीटिकादयश्च सम्भवन्ति ततस्तेषामपि विराधना, तथा कोऽप्यभिज्ञानार्थं जतु तापयित्वा कुतुपादिमुखस्योपरि जतुमुद्रां ददाति तदा तेजस्कायविराधनाऽपि, यत्राग्निस्तत्र वायुरिति वायुकायविराधना च, तथा कुतुपादिलेपननिमित्तं मृत्तिकादि गवेषयन् दाता कदाचिद् वृश्चिकादिना दश्यते पीड्यते चासौ, ततो जना वदन्ति—अहो महाप्रभावा एते यतयो येषां दानमात्रेऽपि दात्रा फलं झगित्येवंविधं प्राप्तमित्येवं लोके उपहासः, तथा प्रथमतः कुतुपादिमुखे साध्वर्थमुद्घाटिते सति पुत्रादिभ्यो घृतादिप्रदाने तथा क्रये विक्रये च पापप्रवृत्तिः, तथा तस्मिन् कुतुपादिमुखे पिधातुं विस्मृते मूषकादयो जीवा निपत्य विनश्यन्तीति, कपाटोद्भिन्नेऽप्येत एव दोषाः, तथाहि—यदा कपाटात्प्राकथमपि पृथिवीकायो जलभृतः करवको वा वीजपूरकादिकं वा मुक्तं भवति तदा तस्मिन्नुद्घाट्यमाने कपाटे तद्विराधना भवति, जलभृते च करवकादौ लुठ्यमाने भिद्यमाने वा पानीयं प्रसर्पन् प्रत्यासन्नचुल्ल्यादावपि प्रविशेत्, तथा च सत्यग्निविराधना, यत्राग्निस्तत्र वायुरिति वायुविराधना च, मूषिकादिविवरप्रविष्टकीटिकागृहगोधिकादिसत्त्वविनाशे त्रसकायविराधना च, तथैव च दानक्रयविक्रयेभ्योऽधिकरणप्रवृत्तिरिति, ततो द्विविधमप्युद्भिन्नं न ग्राह्यं, यदा तु कुतुपादीनां मुखबन्धः प्रतिदिवसं बध्यते छोट्यते च, तत्रापि यदि जतुमुद्राव्यतिरेकेण केवलवस्त्रमात्रग्रन्थिर्दीयते नापि च सचित्तपृथिवीकायादिलेपस्तदा तस्मिन् साध्वर्थमुद्भिन्नेऽपि यद्दीयते तत्साधुभिर्गृह्यते, तथा कपाटोद्भिन्नेऽपि यत्र प्रतिदिनमुद्घाट्यते कपाटमुद्घालकश्च भूमिघर्षकस्तथाविधो न भवति तत्रोद्घाटितेऽपि कपाटादावपवरकादिस्थितमशनादिकं कल्पते

एवेति १२। 'मालोहडे यँ'त्ति मालात्—सिककादेरपहृतं—साध्वर्थमानीतं यद्भक्तादि तन्मालापहृतं, तच्चतुर्भेदं—ऊर्द्धमालापहृतमधोमालापहृतं उभयमालापहृतं तिर्यग्मालापहृतं च, तत्रोर्द्धमालापहृतं जघन्योत्कृष्टमध्यमभेदात् त्रिविधं, तत्रोर्द्धविलगितोच्चसिककादेर्ग्रहीतुमशक्तत्वेनोत्पाटिताभ्यां पार्ष्णिभ्यां पादाधोभागरूपाग्रेतनफणाभ्यां च भूमिन्यस्ताभ्यां दात्र्या निजचक्षुपाऽदृष्टं यद् गृहीतमशनादि तत्पार्ष्ण्युत्पाटनमात्रस्तोकक्रियागृहीतत्वाज्जघन्यमूर्ध्वमालापहृतं, यच्च निश्रेण्यादिकमारुह्य प्रासादोपरितलाद्दात्र्या गृहीतं तन्निश्रेण्यारोहणादिगुरुक्रियागृहीतत्वादुत्कृष्टं मालापहृतं, अनयोर्मध्यवर्ति मध्यममिति, तथा साध्वर्थं भूमिगृहादौ प्रविश्य तत्र स्थितं भक्तादिकं यदानीय ददाति तदधोवर्तिभूमिगृहादेरपहृतमितिकृत्वाऽधोमालापहृतं, तथोष्ट्रिकाकलशमञ्जूषाकोष्ठकादिस्थितं किञ्चिरसकष्टं यद्दात्री ददाति तदुभयस्मादूर्द्धाधोगतव्यापारादुष्ट्रिकाकलशमंजूषाकुम्भ्यादेरपहृतमितिकृत्वोभयमालापहृतं, तथाहि—गृहत्तरोच्चैस्तरकुम्भ्यादिमध्यस्थितस्य देयस्य ग्रहणाय येन दाता पार्ष्ण्युत्पाटनं करोति तेनोर्द्धाश्रितव्यापारता, येन त्वधोमुखं बाहुं व्यापारयतीति तेनाधोगतव्यापारता, यदा च पृथुलभित्त्यादिस्थिते स्कंधसमोच्चप्रदेशप्राये दीर्घगवाक्षादौ तिर्यक्प्रसारितबाहुः क्षिप्तेन हस्तेन गृहीत्वा यद्देयं प्रायेण दृष्टाऽदृष्टं दाता दत्ते तदा तत्तिर्यग्मालापहृतं, तिर्यग्मालाद्—भित्त्यादिस्थितगवाक्षादिरूपादपहृतमितिकृत्वा, न चेदमत्र वक्तव्यं—मालाशब्देनोच्चप्रदेश एवाभिधीयते तत्कथं भूमिगृहादीनामधोभूमिस्थितानां मालशब्दाभिधेयत्वमिति ?, यतो लोकरूढ्या उच्चैःप्रदेशवाचको नात्र मालशब्दो गृह्यते, किन्तु समयप्रसिद्ध्या, समये च भूमिगृहादिकमपि मालशब्देनाभिधीयत इति, दोषाश्चात्र मञ्चकमञ्चिकोदूखलादिष्वारुह्य पार्ष्णी चोत्पाट्य उर्द्धविलगितसिककादिस्थितमोदकादिग्रहणे कथमपि यदि मञ्चकादिल्हसनतो दात्री निपतति तदा तदधःस्थितानां पिपीलिकादीनां पृथिव्यादिकायादीनां च विनाशः दात्र्याश्च हस्तादिभङ्गः, यदिवा विसंस्थुलपतनतः कथमप्यस्थानाभिघातसम्भवात् प्राणव्यपरोपणमपि, तथा प्रवचनस्यो-

ह्राहो यथा साध्वर्थमेषा भिक्षामाहरन्ती परासुरभूत् तस्मान्नामी साधवः कल्याणकारिणः, एवंविधमपि दात्र्या अनर्थमेते न जानन्तीत्येवं लोकमध्ये मूर्खताप्रवादश्चेत्येवमादयः, तस्मान्मालापहृतं साधुभिर्न ग्राह्यं, यत्पुनर्दर्दरसोपानादीने सुखावताराण्यारुह्य ददाति तन्मालापहृतं न भवति, केवलं साधुरप्येषणाशुद्धिनिमित्तं प्रासादस्योपरि दर्दरादिना चटति, अपवादेन भूयोऽप्यानीतं गृह्णातीति १३। 'अच्छिज्जे'त्ति आच्छिद्यते—अनिच्छतोऽपि भृतकपुत्रादेः सकाशात् साधुदानाय परिगृह्यते यत्तदाच्छेद्यं, तत् त्रिविधं—स्वामिविषयं प्रभुविषयं स्तेनविषयं च, तत्र ग्रामादिनायकः स्वामी स्वगृहमात्रनायकः प्रभुः स्तेनः—चौरः, ततो ग्रामादिस्वामी यतीन् दृष्ट्वा भद्रकतया कलहेनाकलहेन वा बलादपि साधुनिमित्तं कौटुम्बिकेभ्यः सकाशादशनाद्याच्छिद्य यतिभ्यो यद्ददाति तत् स्वामिविषयमाच्छेद्यं, तथा यद्गोरक्षककर्मकरपुत्रपुत्रिकावधूभार्यादिसत्कमेतेभ्योऽनिच्छद्भ्योऽपि सकाशाद् गृहीत्वा गृहनायकः साधुभ्यो दुग्धादिकं दद्यात्तत्प्रभुविषयमाच्छेद्यं, तथा स्तेना अपि केचित् संयतान् प्रति भद्रका भवन्ति, ततस्ते मार्गे आगच्छन्तः कदाचित्तथाविधसार्थेन सार्धमागतान् भोजनार्थं कृतावस्थितेः सार्थस्य मध्ये भिक्षामटतः परिपूर्णान्नमप्राप्नुवतश्च संयतान् दृष्ट्वा तन्निमित्तमात्मनो वाऽर्थाय सार्थिकेभ्यो बलादाच्छिद्य पाथेयादि यदि साधुभ्यो दद्युस्तत् स्तेनविषयमाच्छेद्यं, एतत् त्रिविधमपि आच्छेद्यं साधूनां न कल्पते, अप्रीतिकलहात्मघातान्तरायप्रद्वेषाद्यनेकदोषसम्भवात्, केवलं स्तेनाच्छेद्येऽयं विशेषः—यथा येषां सम्बन्धि भक्तादि बलादाच्छिद्य चौराः साधुभ्यः प्रयच्छन्ति, त एव सार्थिका यदि स्तेनैर्बलाद्दाप्यमाना एवं ब्रुवते—अस्माकमवश्यं चौरैर्गृहीतव्यं, ततो यदि चौरा अपि यदि युष्मभ्यं दापयन्ति तदा महानस्माकं सन्तोष इति, तत एवं सार्थिकैरनुज्ञाताः साधवो दीयमानं गृह्णन्ति, पश्चाच्चौरेष्वपगतेषु भूयोऽपि तद् द्रव्यं गृहीतं तेभ्यः समर्पयन्ति, यथा तदानीं चौरप्रतिभयादस्माभिर्गृहीतं सम्प्रति ते गतास्तत एतदात्मीयं द्रव्यं यूयं गृह्णीथेति, एवं चोक्ते सति यदि तेऽपि समनुजानते यथा युष्मभ्य-

मेव सदस्वामिर्दत्तमिति तर्हि भुञ्जते कल्पनीयत्वादिति १४। 'अणिसिट्ठे'त्ति न निसृष्टं—सर्वैः स्वामिभिः साधुदानार्थमनुज्ञातं यत्तदनिसृष्टं, तत् त्रिधा—साधारणानिसृष्टं चोल्लकानिसृष्टं जड्डानिसृष्टं च, तत्र साधारणं—बहुजनसामान्यं चोल्लकं—स्वामिना पदातिभ्यः प्रसादीक्रियमाणं कौटुम्बिकेन वा क्षेत्रादिस्थितकर्मकरेभ्यो दीयमानं देशीभाषया भक्तमुच्यते जड्डो—हस्ती तैरनिसृष्टं—अननुज्ञातं न कल्पते साधूनां, तत्र साधारणानिसृष्टं च यन्त्रहट्टगृहादिस्थिततिलकुट्टितैलवस्त्रलड्डुकदध्यादिदेयवस्तुभेदेनानेकवस्तुविषयं, तत्र घाणकादियन्त्रे तिलकुट्टितैलादिकं हट्टे वस्त्रादिकं गृहेऽशनादिकं बहुजनसाधारणं च सर्वैः स्वामिभिरननुज्ञातं यदेकः कश्चित्साधुभ्यः प्रयच्छति तत् साधारणानिसृष्टं, तथा चोल्लको द्विविधः—छिन्नोऽच्छिन्नश्च, तत्र कोऽपि कौटुम्बिकः क्षेत्रगतहालिकानां कस्यापि पार्श्वे कृत्वा भोजनं प्रस्थापयति, स यदा एकैकहालिकयोग्यं पृथग्पृथग्भाजने कृत्वा प्रस्थापयति तदा स चोल्लकश्छिन्नः, यदा तु सर्वेषामपि हालिकानां योग्यमेकस्यामेव स्थाल्यां कृत्वा प्रेषयति तदा सोऽच्छिन्नः, तत्र यश्चोल्लको यस्य निमित्तं छिन्नः स तेन दीयमानो मूलस्वामिना कौटुम्बिकेन दृष्टोऽदृष्टो वा साधूनां कल्पते, तेन छेदनेन तस्य स्वकीयीकृतस्य दत्तत्वात्, अच्छिन्नोऽपि कौटुम्बिकेन येषां हालिकानां योग्यः स चोल्लकस्तैश्च साधुभ्यो दानायानुज्ञातो दृष्टोऽदृष्टो वा कल्पते, तैः पुनरननुज्ञातोऽन्यतरेणानुज्ञातो वा न कल्पत एव, प्रद्वेषान्तरायपरस्परकलहादिदोषसम्भवात्, तथा जड्डानिसृष्टं हस्तिनो भक्तं मेण्ठेनानुज्ञातमपि राज्ञा हस्तिना चाननुज्ञातत्वान्न कल्पते, हस्तिनो हि भक्तं राज्ञः सम्बन्धि, ततो राजाननुज्ञातस्य ग्रहणे ग्रहणाकर्षणवेपोद्दालनादयो दोषा भवेयुः, तथा मदीयाज्ञामन्तरेणैष साधवे पिण्डं ददातीति रुष्टः सन् राजा कदाचिन्मेण्ठं स्वाधिकाराद्भ्रंशयति, ततस्तस्य वृत्तिच्छेदः साधुनिमित्त इति साधोरन्तरायदोषः राजाननुज्ञातत्वाददत्तादानदोषश्च, तथा गजस्य पश्यतो मेण्ठस्यापि सत्कं न गृह्णीयात्, गजो हि सचेतनः ततो मदीयकवलमध्यादनेन मुण्डेन पिण्डो गृह्यते इत्येवं कदाचिद् रुष्टः

सन् यथायोगं मार्गे परिभ्रमन्नुपाश्रये तं साधुं दृष्ट्वा तमुपाश्रयं स्फोटयेत् साधुं च कथमपि प्राप्य मारयेदिति १५। 'अज्झोयरए य'त्ति अधि—आधिक्येनावपूरणं—स्वार्थदत्ताधिश्रयणादेः साध्वागमनमवगम्य तद्योग्यभक्तसिद्ध्यर्थं प्राचुर्येण भरणमध्यवपूरः स एव स्वार्थिककप्रत्ययविधानादध्यवपूरकः तद्योगाद्भक्ताद्यप्यध्यवपूरकः, स च त्रिधा—स्वगृहयावदर्थिकमिश्रः स्वगृहसाधुमिश्रः स्वगृहपाखण्डिमिश्रश्च, स्वगृहश्रमणमिश्रस्तु स्वगृहपाखण्डिमिश्रे अन्तर्भावित इति पृथङ् नोक्तः, तत्र यावदर्थिकाद्यागमनात्प्रथममेवाग्निसन्धुक्षणस्थालीजलप्रक्षेपादिरूपे आरम्भे स्वार्थं निष्पादिते पश्चाद्यथासम्भवं त्रयाणां यावदर्थिकादीनामर्थायाधिकतरान् तण्डुलादीन् प्रक्षिपति एषोऽध्यवपूरकः, अत एवास्य मिश्रजाताद्भेदः, यतो मिश्रजातं तदुच्यते यत्प्रथमत एव यावदर्थिकाद्यर्थमात्मार्थं च मिश्रं निष्पाद्यते, यत्पुनः प्रथमत आरभ्यते स्वार्थं पश्चात्प्रभूतान् यावदर्थिनः पाखण्डिनः साधून् वा समागतानवगम्य तेषामर्थायाधिकतरजलतण्डुलादि प्रक्षिप्यते सोऽध्यवपूरक इति, अत्र च स्वगृहयावदर्थिकमिश्रे अध्यवपूरके शुद्धभक्तमध्ये यावन्तः कणाः कार्पटिकाद्यर्थं पश्चात्क्षिप्तास्तावन्मात्रे स्थाल्याः पृथक्कृते कार्पटिकेभ्यो वा दत्ते सति शेषमुद्धरितं यद्भक्तं तत्साधूनां कल्पते, अत एव चायं विशोधिकोटिर्वक्ष्यते, तथा स्वगृहपाखण्डिमिश्रे स्वगृहसाधुमिश्रे च शुद्धभक्तमध्यपतिते यदि तावन्मात्रं स्थाल्याः पृथक्कृतं दत्तं वा पाखण्ड्यादिभ्यस्तथापि शेषं न कल्पते, यतः सकलमपि तद्भक्तं पूतिदोषदुष्टं भवतीति १६। उक्ताः षोडश उद्गमदोषाः; अथ उत्पादनादोषानाह—

**धाई १ दूई २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा ६ य। कोहे ७ माणे ८ माया ९ लोभे**
**१० य हवंति दस एए ॥ ५६७ ॥ पुव्विं पच्छा संथव ११ विज्जा १२ मंते १३ य चुण्ण १४ जोगे**
**१५ य। उप्पाणाय दोसा सोलसमे मूलकम्मे १६ य ॥ ५६८ ॥**

'धाई'त्यादिगाथाद्वयं, तत्र धयन्ति—पिबन्ति बालकास्तामिति धीयते—धार्यते बालानां दुग्धपानाद्यर्थमिति वा धात्री—बालपालिका, सा च पञ्चधा—क्षीरधात्री मज्जनकधात्री मण्डनधात्री क्रीडनधात्री उत्सङ्गधात्री च, इह धात्रीत्वस्य यत्करणं कारणं वा तद्धात्रीशब्देनोक्तं द्रष्टव्यं, तथाविवक्षणात्, ततो धात्र्याः पिण्डो धात्रीपिण्डः, धात्रीत्वस्य करणेन कारणेन च य उत्पाद्यते पिण्डः स धात्रीपिण्ड इत्यर्थः, एवं दूत्यादिष्वपि भावनीयं, इयमत्र भावना—कश्चित्साधुर्भिक्षार्थं पूर्वपरिचितगृहे प्रविष्टो रुदन्तं बालकं विलोक्य तन्मातरमाह—यथाऽयं हि बालकोऽद्यापि क्षीराहारः, ततः क्षीरमन्तरेणावसीदन् रोदिति, तस्मान्मह्यं शीघ्रं भिक्षां देहि पश्चादेनं बालकं स्तन्यं पायय यद्वा प्रथमत एनं स्तन्यं पायय पश्चान्मह्यं भिक्षां देहि यदिवा अलं मे सम्प्रति भिक्षया पायय स्तन्यं बालकमेव पुनरप्यहमन्यगृहे गत्वाऽत्र समेष्यामि यद्वा तिष्ठ त्वं निराकुला अहमेवास्मै कुतोऽप्यानीय क्षीरं दास्यामि, एवं स्वयं धात्रीत्वं करोति, तथा मतिमान् रोगरहितो दीर्घायुश्च बालः स्तन्यं पायितः स्यात्, अपमानितस्तु विपरीतः, तथा दुर्लभं खलु लोके पुत्रमुखदर्शनं, तस्मात्सर्वाण्यन्यानि कर्माणि मुक्त्वा त्वमेनं बालकं स्तन्यं पाययेति, एवं च क्रियमाणे बहवो दोषा भवेयुः, तथाहि—बालकमाता भद्रकत्वादावर्जितमानसा सत्याधाकर्मादिकं कुर्यात्, तथा बालकस्वजनोऽन्यो वा प्रातिवेश्मिकादिर्बालकमात्रादिना सह सम्बन्धं साधोः सम्भावयेच्चाटुकरणदर्शनात्, यदि च प्रान्ता बालजननी भवेत्तदा प्रद्वेषं व्रजेत्, अहो प्रव्रजितस्यास्य महती परकीया तप्तिः, तथा वेदनीयकर्मविपाकवशात्कदाचिद्बालकस्य ज्वरादिमान्द्ये सञ्जाते त्वया मदीयपुत्रो ग्लानीकृत इत्यादि साधुना सह कलहकरणात्प्रवचनमालिन्यं स्यादिति, अथवा कस्यापीश्वरस्य गेहे बालधापनपरां धात्रीं स्वबुद्धिप्रपञ्चेनोत्सार्यान्यां तत्र स्थापयन् धात्रीत्वलक्षणं दोषमासादयति, तथाहि—भिक्षाचर्यायां प्रविष्टः कश्चित्साधुः कचिद्गेहे महिलां काञ्चित् सशोकामवलोक्य पप्रच्छ—किं त्वमद्याधृतिपरा दृश्यसे?, सा प्राह—धार्मिक यते! दुःखं दुःखसहा-

कथितदुःखप्रतीकारं कुरुते, मुनिराह—मां मुक्त्वा कोऽन्यस्तथा- यस्यैव कथ्यते, यतिराह—को दुःखसहायो भण्यते ?, सा प्राह—यः कथितदुःखप्रतीकारं कुरुते, मुनिराह—मां मुक्त्वा कोऽन्यस्तथा-भूतः ?, सा प्राह—भगवंस्तर्हि स्फेटितसपरधात्र्या अमुकस्मिन् गृहे मम धात्रीत्वं तेनाहं विषण्णेति, ततः साधुरुत्पन्नाभिमानो यावत्त्वां न तत्र तथा स्थापयामि न तावत्त्वदीयां भिक्षां गृह्णामीत्यभिधाय स्फेटयितुमिष्टाया धात्र्या अदृष्टत्वात् तत्स्वरूपमजानानस्तस्या एव पार्श्वे पृच्छति—सा किं तरुणी मध्यमा वृद्धा वा ? प्रतनुस्तनी स्थूलस्तनी कूर्परस्तनी वा ? मांसला कृशा वा ? कृष्णा गौरी वेत्यादि, पृष्ट्वा च तत्रेश्वरगृहे गतः सन् तं बालकमालोक्य गृहस्वाम्यादिसमक्षं धात्रीदोषान् ब्रूते, यथा वृद्धा धात्री अबलस्तन्या स्यात् तां धयन् बालोऽप्यबलः सम्पद्यते, कृशा च धात्री स्तोकस्तन्या भवेत् तां धयन् शिशुरपि परिपूर्णस्तन्याभावात् सीदन् कृश एव भवति, स्थूलस्तन्याः स्तन्यं धयन् कोमलाङ्गत्वात् कुचचम्पितवक्त्रघ्राणः सन् चिपिटघ्राणः स्यात्, कूर्पराकारस्तनीं च धयन् बालः सर्वदैव स्तनाभिमुखदीर्घीकृतमुखतया सूचीसदृशवदनः स्यात्, उक्तं च—"निःस्यामा स्थविरां धात्रीं, सूच्यास्यः कूर्परस्तनीम् । चिपिटः स्थूलवक्षोजां, धयं-स्तन्वीं कृशो भवेत् ॥ १ ॥ जाड्यं भवति स्थूलायास्तनुक्यास्त्वबलङ्करम् । तस्मान्मध्यबलस्थायाः, स्तन्यं पुष्टिकरं स्मृतम् ॥ २ ॥" तथा अभिनवस्थापिता धात्री येन वर्णेन कृष्णादिना उत्कटा भवति तेन वर्णेन तां निन्दति, यथा—"कृष्णा भ्रंशयते वर्णं, गौरी तु बलवर्जिता । ततः श्यामा भवेद्धात्री, बलवर्णैः प्रशंसिता ॥ १ ॥" इत्यादि, एतद् गृहस्वामी श्रुत्वा स्थविरत्वादिस्वरूपां च वर्तमानधात्रीं परिभाव्य स्फेटयति साधुसम्मतां च धात्रीं करोति, सा च प्रमुदिता तस्मै साधवे मनोज्ञां विपुलां भिक्षां प्रयच्छतीति धात्रीपिण्डः, अत्र च बहवो दोषाः, तथाहि—या स्फेटिता धात्री सा विद्वेषं याति, तथा सति साधुरयमनया सह स्वेच्छमास्ते इत्यालं ददाति, अतिद्विष्टा च सती विषादिदानतः कदाचिन्मारयत्यपीति, याऽपि चिरन्तनीं स्फेटयित्वा संप्रति स्थापिता साऽपि कदाचिदेवं चिन्तयति, यथाऽह-

मनेनामेतनीं स्फेटयित्वा धात्री कृता तथाऽन्यया कदाचिदभ्यर्थितो मामपि धात्रीत्वात् स्फेटयिष्यति ततस्तथा करोमि यथाऽयमेव न भवतीति विचिन्त्य विषादिप्रयोगेण मारयेदिति, एवं मज्जनधात्रीत्वकारणे स्वयं वा करणे मण्डनधात्रीत्वकारणे स्वयंकरणे वा क्रीडनकधात्रीत्वकारणे स्वयंकरणे वा अङ्कधात्रीत्वकारणे स्वयंकरणे वा दोषाः परिभाव्य भणनीया इति १ ॥ 'दूइ'त्ति दूती—परस्परसंदिष्टार्थकथिका, ततो दूतीत्वकरणेन—परस्परसन्दिष्टार्थकथनेन यः पिण्ड उपार्ज्यते यतिना स दूतीपिण्डः, सा च दूती द्विधा—स्वग्रामे परग्रामे च, तत्र यस्मिन् ग्रामे साधुर्वसति तस्मिन्नेव ग्रामे यदि सन्देशं कथयति तदा स्वग्रामदूती, यदा तु परग्रामे गत्वा सन्देशं कथयति तदा परग्रामदूती, एकैकाऽपि च द्विधा—प्रकटा प्रच्छन्ना च, प्रच्छन्ना पुनरपि द्विधा—एका लोकोत्तरविषया, द्वितीयसङ्घाटकसाधोरपि गुप्तेत्यर्थः, द्वितीया पुनर्लोकलोकोत्तरविषया, पार्श्ववर्तिनो जनस्य सङ्घाटकद्वितीयसाधोरपि च गुप्तेति भावः, तत्र कश्चित्साधुर्भिक्षाकृते व्रजन् विशेषतस्तल्लाभार्थं तस्यैव ग्रामस्य सम्बन्धिनः पाटकान्तरे ग्रामान्तरे वा जनन्यादेः सत्कं पुत्रिकादेरग्रतो गत्वा सन्देशकं कथयति यथा सा तव माता स तव पिता वा स भ्रात्रादिर्वा त्वयाऽद्यात्रागन्तव्यमित्यादि त्वत्सम्मुखं वदतीत्येवं स्वपक्षपरपक्षयोः शृण्वतोर्निःशङ्कं कथनात् प्रकटं स्वग्रामपरग्रामविषयं दूतीत्वं, तथा कश्चिद्यतिः कयाचिद् दुहित्रा मात्रादिकं प्रति स्वग्रामे परग्रामे वा सन्देशकथनायाभ्यर्थितः, ततस्तत्सन्देशकमवधार्य तज्जनन्यादिपार्श्वे गतः सन्नेवं चिन्तयति—दूतीत्वं खलु गर्हितं सावद्यत्वात्, ततो द्वितीयसङ्घाटकसाधुर्मा मां दूतीदोषदुष्टं ज्ञासीदित्येवमर्थं भङ्ग्यन्तरेणेदं भणति—यथा श्राविके! अतिमुग्धा सा तव दुहिता यैवं सावद्ययोगरहितानस्मान् प्रति वदति—यथेदं प्रयोजनं मदीयागमनादिकं मम मातुस्त्वया कथनीयमिति, साऽपि दक्षतयाऽभिप्रायं ज्ञात्वा द्वितीयसङ्घाटकसाधुचित्तरक्षणार्थं प्रतिभणति—यथा वारयिष्येऽहं तां तवाभिमुखं पुनरेवं वदन्तीमित्येवं सङ्घाटकसाधोरिदं गोपायितुमिष्टं

न लोकस्येति लोकोत्तरप्रच्छन्नं स्वग्रामपरग्रामविषयं दूतीत्वं, उभयप्रच्छन्नं पुनरेवं—काचित् श्राविका साधुं प्रति वदति—यथा मज्जनन्या देस्त्वमेवं कथयेः—तत्कार्यं तव प्रतीतं यथा त्वं जानासि तथैव सम्पन्नमिति, इह च साधुसङ्घाटकस्य शेषलोकानां च सन्देशार्थोनवगमादुभयप्रच्छन्नत्वं, दोषाश्च सर्वत्र गृहस्थव्यापारणादिना जीवोपमर्दोदयः २ ॥ 'निमित्त'न्ति निमित्तं—अतीताद्यर्थपरिज्ञानहेतुः शुभाशुभचेष्टादि तद्धेतुकं ज्ञानमपि उपचारान्निमित्तं तत्करणेन पिण्डो निमित्तपिण्डः, अयमर्थः—कश्चिद् व्रती पिण्डादिलाभनिमित्तं गृहिणामग्रतो निमित्तं कथयति, यथाऽतीते दिने तवेदं सुखदुःखादिकं जातं तथा भाविनि कालेऽमुकस्मिन् दिने तव राजादेः सत्कः प्रसादो भविष्यति, सम्प्रति चाद्यैव दिने तवेदमिदं च भविष्यतीति, तेऽपि च गृहस्था लाभालाभसुखदुःखजीवितमरणादिविषयं निमित्तं पृष्टमपृष्टं वा धृष्टेन तेन कथ्यमानं श्रुत्वा आवर्जितमानसास्तस्मै मुनये मोदकादिकां विशिष्टां विपुलां च भिक्षां यत्प्रयच्छन्ति स निमित्तपिण्ड उच्यते, न चायं यतीनां कल्पते, आत्मपरोभयविषयाणां वधादिदोषाणामनेकेषामत्र सम्भवादिति ३ ॥ 'आजीवि'त्ति आजीवनमाजीवो जीविकेत्यर्थः, स पञ्चविधो—जातिविषयः कुलविषयो गणविषयः कर्मविषयः शिल्पविषयश्च, एकैकोऽपि च द्विधा—सूचयाऽसूचया च, सूचया—वचनभङ्गविशेषेण कथनं असूचया तु स्फुटवचनेनेति, तत्र साधुः सूचया असूचया च स्वजातिप्रकटनात् जातिमुपजीवति, यथा कश्चिद्भिक्षार्थमटन् ब्राह्मणगेहं प्रविवेश, तत्र च ब्राह्मणसुतं होमादिक्रियां सम्यक्कुर्वाणं वीक्ष्य तज्जनकाभिमुखं स्वजातिप्रकटनाय जल्पति—यथा समिन्मन्त्राहुतिस्थानयागकालघोषादीनाश्रित्य सम्यगसम्यग्वा क्रिया भवेत्, तत्र पिप्पलादीनामार्द्रप्रतिशाखादिखण्डरूपाः समिधः मन्त्राः—प्रणवादिका वर्णपद्धतयः आहुतिः—अग्नौ घृतादेः प्रक्षेपः स्थानं—उत्कटुकादिः यागः—अश्वमेधादिः कालः—प्रभातादिः उदात्तानुदात्तादयश्च घोषा यत्र यथावत्प्रयुज्यन्ते सा सम्यक्क्रिया, यत्र च समिधादयो न्यूनतयाऽधिक-

तया विपर्ययेण वा प्रयुज्यन्ते सा न सम्यक्क्रियेति, अयमपि च त्वत्पुत्रः सम्यग्होमादिक्रियाकरणाद् ज्ञायते यथा श्रोत्रियस्य पुत्र इति, यदिवा वेदादिशास्त्रपारगस्य कस्यचिदुपाध्यायस्य पार्श्वे सम्यक् पठित इति, तत एवमुक्ते स ब्राह्मणो वदति—साधो! त्वमवश्यं ब्राह्मणो येनेत्थं होमादीनामवितथत्वं जानासि, साधुश्च मौनेनावतिष्ठते, एतच्च सूचया स्वजातिप्रकटनं, असूचया तु जात्याजीवनं पृष्टोऽपृष्टो वा आहाराद्यर्थं स्वजातिं प्रकटयति यथाऽहं ब्राह्मण इति, अत्र चानेके दोषाः, तथाहि—यदि स ब्राह्मणो भद्रकस्तर्हि स्वजातिपक्षपातात्प्रभूतमाहारादिकं तन्निमित्तं पक्त्वा ददाति तत आधाकर्मदोषः, अथ प्रान्तस्तर्हि भ्रष्टोऽयं पापात्मा ब्राह्मण्यं परित्यक्तवानिति विचिन्त्य स्वगृहान्निष्काशनादि करोति, एवं क्षत्रियादिजातिष्वपि, एवं कुलादिष्वपि भवनीयमिति ४ ॥ 'वणीमगे'त्ति 'वनु याचने' वनुते प्रायो दायकाभिमतेषु श्रमणादिष्वात्मानं भक्तं दर्शयित्वा पिण्डं याचते इति वनीपकः, कश्चिद्यतिर्निर्ग्रन्थशाक्यतापसपरिव्राजकाजीवकद्विजप्राघूर्णकश्वानकाकशुकादिभक्तानां गृहिणां गृहे भिक्षां भ्रमन् प्रविष्टः, ततस्तेषां पुरतोऽशनादिलाभार्थं निर्ग्रन्थादिगुणवर्णनेनात्मानं तद्भक्तं दर्शयति, तथाहि—स कदाचित्प्रविष्टो निर्ग्रन्थभक्तश्रावकगृहे निर्ग्रन्थानाश्रित्य वदति, यथा भोः श्रावककुलतिलक! तवैते गुरवः सातिशयज्ञानादिविभूषिता बहुश्रुताः शुद्धक्रियानुष्ठानपालनपरा विशदसामाचारीसमाचरणचमत्कृतचतुरधार्मिकजनमनसः शिवनगरमार्गसार्थवाहा इत्यादि, तथा शाक्योपासकगेहे प्रविष्टः शाक्यान् भुञ्जानानवलोक्य तदुपासकानां पुरतस्तत्प्रशंसां कुरुते, यथा अहो महानुभावाः शाक्यशिष्याश्चित्रलिखिता इव निश्चलाः प्रशान्तचित्तवृत्तयो भुञ्जते, महात्मनामित्थमेव भोक्तुं युक्तं, दयालवो दानशीलाश्चैते इत्यादि, एवं तापसपरिव्राजकाजीवकद्विजानप्याश्रित्य तद्गुणतद्दानप्रशंसाकरणेन वनीपकत्वं विज्ञेयं, तथाऽतिथिभक्तानां पुरत एवं वदति—इह प्रायेण लोकः परिचितेषु यद्वाऽऽश्रितेषु उपकारिषु वा ददाति, यः पुनरध्वखिन्नमतिथिं पूजयति तस्यैव दानं

जगति प्रधानमिति, श्वानभक्तांस्तु प्रति—नैते श्वानः श्वान एव किन्तु कैलाशपर्वतादागत्य यक्षा एव श्वानरूपेण पृथिव्यां सञ्चरन्ति, तत एतेषां पूजा महते हिताय भवतीति, एवं काकादिष्वपि भावनीयं, तदित्थं वनीपकत्वकरणेनोत्पादितः पिण्डो वनीपकपिण्डः, बहुदोषश्चायं, यतो धार्मिकेऽधार्मिके वा पात्रे दानं दत्तं निष्फलं न भवतीत्येवमप्युक्तेऽपात्रदानस्य पात्रदानसमतया प्रशंसनेन सम्यक्त्वातीचारः स्यात्, किं पुनः कुपात्रानेव शाक्यादीन् साक्षात्प्रशंसतः?, उक्तं च—दाणं न होइ अफलं पत्तमपत्तेसु संनिजुज्जंतं। इय भणिएऽवि य दोसो पसंसओ किं पुण अपत्ते? ॥ १ ॥" [दानं न भवत्यफलं पात्रेष्वपात्रेषु च सन्नियोज्यमानं। इति भणितेऽपि दोषः प्रशंसतः किं पुनरपात्राणि ॥ १ ॥] एवं हि शाक्यादिप्रशंसने लोके मिथ्यात्वं स्थिरीकृतं भवति, तथाहि—साधवोऽप्यमून् प्रशंसन्ति तस्मादेतेषां धर्मः सत्य इति, तथा यदि ते शाक्यादिभक्ता भद्रका भवेयुस्तत इत्थं साधुप्रशंसामुपलभ्य तद्योग्यमाधाकर्मादि समाचरेयुः, ततस्तल्लुब्धतया कदाचित् शाक्यादिव्रतं प्रतिपद्येरन्, तथा लोके चाटुकारिण एते जन्मान्तरेऽप्यदत्तदाना आहाराद्यर्थं श्वान इवात्मानं दर्शयन्तीत्यवर्णवादः, अथ प्रत्यनीकास्तर्हि गृहनिष्काशनादि कुर्युः, तथा सर्वसावद्यनिरतानां तेषां प्रशंसने मृषावादप्राणातिपातादयोऽपि चानुमोदिताः स्युरिति ५ ॥ 'चिकिच्छे'त्ति चिकित्सनं चिकित्सा—रोगप्रतीकारः रोगप्रतीकारोपदेशो वा, सा द्विविधा—सूक्ष्मा बादरा च, तत्र सूक्ष्मा औषधवैद्यज्ञापनेन, बादरा स्वयं चिकित्साकरणेन अन्यस्मात्कारणेन वा, तत्र कश्चिज्ज्वरादिरोगाक्रान्तो गृही भिक्षाद्यर्थं गृहे साधुं प्रविष्टं दृष्ट्वा पृच्छति—भगवन्नेतस्य मदीयस्य व्याधेर्जानीषे कमपि प्रतीकारमिति, स प्राह—भोः श्रावक! यादृशस्तवायं रोगस्तादृशो ममाप्येकदा सञ्जात आसीत्, स चामुकेनौषधेन ममोपशमं गत इति, एवं च अज्ञस्य गृहस्थस्य रोगिणो भैषज्यकरणाभिप्रायोत्पादनादौषधसूचनं कृतं, अथवा रोगिणा चिकित्सां पृष्टो वदति—किमहं वैद्यो! येन रोगप्रतीकारं जाने इति, एवं

चोक्ते रोगिणोऽनभिज्ञस्य सतोऽस्मिन् विषये वैद्यं पृच्छेति सूचनं कृतमिति सूक्ष्मा चिकित्सा, यदा तु स्वयं वैद्यीभूय साक्षादेव वमनविरेचनकाथादिकं करोति कारयति वाऽन्यस्मात्तदा बादरा चिकित्सेति, एवमुपकृतो हि प्रमुदितो गृही मम भिक्षां प्रकृष्टां दास्यतीति यतिरिमां द्विविधामपि कुरुते, न चैवं तुच्छपिण्डकृते व्रतिनां कर्तुमुचितमनेकदोषसम्भवात्, तथाहि—चिकित्साकरणकाले कन्दफलमूलादिजीववधेन काथकथनादिपापव्यापारकरणादसंयमो भवेत् तस्य, तथा नीरुक्कृतो गृहस्थस्तप्तायोगोलकसमानः प्रगुणीकृतदुर्बलान्धव्याघ्रवद् अनेकजीवघातं कुर्यात्, तथा यदि दैवदुर्योगात्साधुना चिकित्स्यमानस्यापि रोगिणो व्याधेराधिक्यं जायते तदा कुपितस्तत्पुत्रादिराकृष्य राजकुलादौ ग्राहयेत्, तथाऽऽहारादिलुब्धा एते इत्थमित्थं च वैद्यकादि कुर्वन्तीति प्रवचनमालिन्यं स्यादिति ६ ॥ 'कोहे'त्ति क्रोधः—कोपः तद्धेतुकः पिण्डः क्रोधपिण्डः, किमुक्तं भवति?—कस्यचित्साधोः सम्यन्धिनमुच्चाटनमारणादिकं विद्याप्रभावं शापदानादिकं तपःप्रभावं सहस्रयोधित्वादिकं बलं राजकुले वल्लभत्वं वा ज्ञात्वा यद्वा शापदानेन कस्यचिन्मारणाद्यनर्थरूपं कोपफलं साक्षादेव दृष्ट्वा भयाद् गृहस्थेन यत्तस्मै दीयते स क्रोधपिण्डः, अथवा अन्येभ्यो ब्राह्मणादिभ्यो दीयमाने याचमानोऽपि साधुर्यदा न लभते तदाऽलब्धिमान् सन् कुप्येत, कुपिते च सति तस्मिन् 'साधुः कुपितो भव्यो न भवती'ति यद्दीयते स क्रोधपिण्ड इति, अत्र च सर्वत्र कोप एव पिण्डोत्पादने मुख्यं कारणं द्रष्टव्यं, विद्यातपःप्रभृतीनि तु तत्सहकारिकारणान्येवेति न विद्यापिण्डादिभिः सहास्य लक्षणसाङ्कर्यमाशङ्कनीयं ७ ॥ 'माणे'त्ति मानो—गर्वस्तद्धेतुकः पिण्डो मानपिण्डः, अयमर्थः—कश्चिद्यतिः कैश्चिदपरैः साधुभिस्त्वं लब्धिमान् ज्ञास्यसे यद्यस्मानिदमिदं च भोजयिष्यसीत्यादिवचनैरुत्तेजितो न किमपि त्वया सिद्ध्यतीत्येवमपमानितो वा गर्वाध्मातचेताः अथवाऽऽत्मनो लब्धिप्रशंसादिकमपरैर्विरच्यमानमाकर्ण्य यत्र कुत्राप्यहं व्रजामि तत्र सर्वथाऽपि लभे तथैव च जनो मां प्रशंसतीत्येवं प्रवर्धमानामिमा-

नमानसः कस्यापि गृहिणः पार्श्वे गत्वा तं गृहिणं तैस्तैर्वचनजातैर्दानविषयेऽभिमाने चटापयति, स च गृही तथाऽभिमानपरः शेषै कलत्रादिके निजलोके दातुमनिच्छत्यपि यदशनादिकं ददाति स मानपिण्डः ८ ॥ 'माय'त्ति माया—परवञ्चनात्मिका बुद्धिः तया कश्चित्साधुर्मन्त्रयोगाद्युपायकुशलः सन् स्वकीयरूपपरावर्तादिकं कृत्वा यन्मोदकादिकं पिण्डमुपार्जयति स मायापिण्डः ९ ॥ 'लोभे य'त्ति लोभो—गृद्धिस्तेन यो गृह्यते पिण्डः स लोभपिण्डः, इयमत्र भावना—कश्चित्साधुरद्याहममुकं सिंहकेसरमोदकादिकं ग्रहीष्यामीतिबुद्ध्या अन्यद्वल्लचणकादिकं लभ्यमानमपि यन्न गृह्णाति किन्तु तदेवेप्सितं स लोभपिण्डः, अथवा पूर्वं तथाविधबुद्ध्यभावेऽपि यथाभावं लभ्यमानं प्रचुरं लपनश्रीप्रभृतिकं भद्रकरसमितिकृत्वा यद् गृह्णाति स लोभपिण्डः, यदिवा पायसादौ लब्धे यदि खण्डशर्करादिकं कुतोऽपि लभ्यते तदा भव्यतरं भवतीतिकृताध्यवसायः पर्यटन् यल्लभते खण्डादिकं स लोभपिण्ड इति, इदं च क्रोधादिपिण्डचतुष्टयं साधूनां न कल्पते, प्रद्वेषकर्मबन्धप्रवचनलाघवादिदोषसम्भवात् १० ॥ 'पुव्विं पच्छा संथव'त्ति संस्तवो द्विधा—वचनसंस्तवः सम्बन्धिसंस्तवश्च, तत्र वचनं—श्लाघा तद्रूपो यः संस्तवः स वचनसंस्तवः, सम्बन्धिनो—मात्रादयः श्वश्र्वादयश्च तद्रूपतया यः संस्तवः स सम्बन्धिसंस्तवः, एकैकोऽपि च द्विधा—पूर्वसंस्तवः पश्चात्संस्तवश्च, तत्र देयेऽलब्धे सति पूर्वमेव दातारं यद्गुणैर्वर्णयति स पूर्वसंस्तवः, यत्तु देये लब्धे सति दातारं गुणैर्वर्णयति स पश्चात्संस्तवः, इयमत्र भावना—कश्चित्साधुर्भिक्षामटन् कस्मिंश्चिद् गृहे कञ्चिदीश्वरं दातारं निरीक्ष्य दानात्पूर्वमेव सत्यैरसत्यैर्वा औदार्यादिभिर्गुणैः स्तौति, यथा अहो दानपतिरस्माभिर्यः पूर्वं वार्ताभिः श्रुतः सोऽयं प्रत्यक्षेणैव वीक्षितः, तथा इतस्ततो भ्राम्यद्भिरस्माभिर्नेदृशा औदार्यादयो गुणा अपरस्य कस्यापि दृष्टाः श्रुता वा, तथा धन्यस्त्वं यस्येदृशा गुणाः सर्वत्रास्खलिताः सर्वदिग्वलयव्यापिनः प्रसरन्तीत्येवं पूर्वसंस्तवः, तथा दाने गृहिणा दत्ते सति यत् स्तौति यथा त्वदीयदर्शनेनाद्यास्माकं लोचने मनश्च शीतलमजायत, न चेदम-

द्भुतं, यतो दातरि गुणिनि च दृष्टे कः प्रमोदभाङ् न भवति ? इत्येष पश्चात्संस्तवः, उभयरूपेऽपि चास्मिन् संस्तवे मायामृषावादासंयतानुमोदनादयो दोषा भवेयुरिति, तथा मातापित्रादिरूपतया यः संस्तवः—परिचयः स पूर्वसम्बन्धिसंस्तवः, मात्रादीनां पूर्वकालभावित्वात्, यस्तु श्वश्रूश्वशुरादिरूपतया संस्तवः स पश्चात्सम्बन्धिसंस्तवः, श्वश्र्वादीनां पश्चात्कालभावित्वात्, तत्र कश्चित्साधुर्भिक्षार्थं कस्मिंश्चिद् गृहे प्रविष्टः सन्नाहारलम्पटतया आत्मवयः परवयश्च ज्ञात्वा तदनुरूपं सम्बन्धं घटयति, तथाहि—यदि च सा वयोवृद्धा स्वयं च मध्यमवयास्तदा तां निजमात्रादिसमानां महेलामालोक्य मातृस्थानेन मनागश्रुविमोचनं विधत्ते, ततः सा पृच्छति—साधो! किं त्वमधृतो दृश्यसे ?, साधुरपि प्राह—मम त्वत्सदृशी माताऽभूत्, यदि पुनः साऽपि मध्यमवयास्तदा ममेदृशी स्वसाऽभूदिति वदति, अथ सा बालवयास्ततो ममेदृशी दुहिता आसीदित्यादि भाषते इति, एवं पश्चात्संस्तवेऽपि भावना कार्या, अत्रापि च बहवो दोषाः, तथाहि—ते गृहिणो यदि भद्रकास्तदा साधौ प्रतिबन्धो भवेत्, प्रतिबन्धे च सत्याधाकर्मादिकं कृत्वा दद्युः, अथ प्रान्तास्तर्हि अयमस्माकं स्वस्य कार्पटिकप्रायस्य जनन्यादिकल्पनेनापभ्राजनां विधत्ते, तत एवं विचिन्त्य स्वगृहान्निष्काशनादि कुर्युः, अधृत्या अश्रुमोचनादि कुर्वन् मायावी एषोऽस्माकमावर्जननिमित्तं चाटूनि करोतीति निन्दा चेति, तथा ममेदृशी माता आसीदित्युक्ते मृतस्य पुत्रस्य स्थानेऽयं मे पुत्र इति बुद्ध्या तस्मै स्नुषादिदानं कुर्यात्, श्वश्रूरीदृशी ममासीदित्युक्ते च विधवां कुरण्डां वा निजसुतां दद्यादित्यादयश्च दोषाः, ततः संस्तवपिण्डो यतीनां न कल्पत इति ११ ॥ 'विज्जामंते'त्ति द्वारद्वयं प्रतिपाद्यते, तत्र विद्या—प्रज्ञप्त्यादि स्त्रीरूपदेवताधिष्ठिता जपहोमादिसाध्या वा अक्षरविशेषपद्धतिः पुरुषरूपदेवताधिष्ठिता पाठमात्रसिद्धा वाऽक्षरविशेषपद्धतिर्मन्त्रः तद्व्यापारेण य उपार्ज्यते पिण्डः स विद्यापिण्डो मन्त्रपिण्डश्च, दोषाश्चात्र—यो विद्ययाऽभिमन्त्रितः सन् दानं दाप्यते स स्वभावस्थो जातः कदाचित् प्रद्विष्टोऽन्यो वा तत्पक्षपाती प्रद्विष्टः सन् प्रतिविद्यया स्तम्भ-

नोच्चाटनमारणादि कुर्यात्, तथा विद्यादिना परद्रोहकरणरूपेण जीवनशीलाः शठाश्चैते इति लोके जुगुप्सा, तथा कार्मणकारिण इमे इति राजकुले ग्रहणाकर्षणवेषपरित्याजनकदर्थनमारणादीनि कुर्यादित्यादयः १२–१३ ॥ 'चुण्णजोगे' इति द्वारद्वयं, तत्र चूर्णो—नयनाञ्जनादिरन्तर्धानादिफलः योगः—पादप्रलेपादिः सौभाग्यदौर्भाग्यकरः एतद्व्यापारणेन य उपार्ज्यते पिण्डः स चूर्णपिण्डो योगपिण्डश्च, दोषाश्चात्रापि पूर्ववत्, ननु चूर्णयोगयोर्द्वयोः क्षोदरूपत्वे सति परस्परं को विशेषः? येन योगद्वारं पृथगुच्यते, सत्यमेतत्, परं कायस्य बहिरुपयोगी चूर्णः बहिरन्तश्चोपयोगी योग इति, यतोऽसावभ्यवहार्यानाहार्यभेदाद् द्विविधो भवेत्, तत्र जलपानादिना अभ्यवहार्यः—आहार्यः पादप्रलेपादिश्चेतर इति अनयोर्विशेषः १४–१५॥ 'उप्पायणाय दोसा सोलसमे मूलकम्मे य' इति एतेऽनन्तरोक्ता उत्पादनाया दोषाः, षोडशो दोषो मूलकर्म—अतिगहनभववनस्य मूलं—कारणं प्ररोहहेतुः कर्म—सावद्यक्रिया ततो मूलं च तत्कर्म च मूलकर्म, तत्र गर्भस्तम्भनगर्भाधानगर्भपाताक्षतयोनित्वकरणक्षतयोनित्वकरणादिना य उपार्ज्यते पिण्डः स मूलकर्मपिण्डः, अयं च साधूनां न कल्पते, प्रद्वेषप्रवचनमालिन्यजीवघाताद्यनेकदोषसम्भवात्, तथाहि—गर्भस्तम्भने गर्भशातने च साधुना कृते ज्ञाते सति प्रद्वेषो भवति, ततः शरीरस्यापि विनाशः, गर्भाधानाक्षतयोनित्वकरणयोश्च यावज्जीवं मैथुनप्रवृत्तिः गर्भाधानाद्धि पुत्रोत्पत्तौ प्राय इष्टा भवति, क्षतयोनित्वकरणे पुनर्भोगान्तरायादीनि १६ ॥ ५६७ ॥ उक्ताः षोडशाप्युत्पादनादोषाः, अथ दश एषणादोषानाह—

**संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ मिस्से ७ । अपरिणय ८**
**लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥ ५६८ ॥**

शङ्कितं—सम्भाविताधाकर्मादिदोषं, तत्र च चतुर्भङ्गी—ग्रहणे शङ्कितो भोजने चेति प्रथमो भङ्गः १ ग्रहणे शङ्कितो न भोजने इति

द्वितीयः २ भोजने शङ्कितो न ग्रहणे इति तृतीयः ३ न ग्रहणे नापि भोजने इति चतुर्थः ४, तत्राद्येषु त्रिषु भङ्गेषु षोडशोद्गमदोषन- वैषणादोषरूपाणां पञ्चविंशतिदोषाणां मध्ये येन दोषेण शङ्कितं भवति तं दोषमाप्नोति, किमुक्तं भवति ?—यदा आधाकर्मत्वेन शङ्कितं गृह्णाति भुंक्ते वा तदा आधाकर्मदोषेण सम्बध्यते यदि पुनरौद्देशिकत्वेन तत औद्देशिकेनेत्यादि, चतुर्थे तु भङ्गे वर्तमानः शुद्धो, न केनापि दोषेण सम्बध्यते इत्यर्थः, एतेषां चैवं सम्भवः—यथा कोऽपि साधुः स्वभावतो लज्जावान् भवति, तत्र क्वापि गृहे स भिक्षार्थं प्रविष्टः सन् प्रचुरां भिक्षां लभमानः स्वचेतसि शङ्कते—किमत्र प्रचुरा भिक्षा दीयते ?, न च लज्जया प्रष्टुं शक्नोति, तत एवं शङ्कया गृहीत्वा शङ्कित एव तद् भुङ्क्ते इति प्रथमभङ्गवर्ती, तथा भिक्षार्थं गतः कोऽपि साधुः क्वापि गेहे तथैव शङ्कितमनाः प्रचुरां भिक्षामादाय स्ववसतिमाग- मत्, ततो भोजनसमये तं दोलायमानमानसं समालोक्य कश्चिदपरसाधुर्विज्ञातभिक्षादायिगृहव्यतिकरस्तदभिप्रायं ज्ञात्वा भणति—भो साधो! यत्र त्वया विपुला भिक्षा लब्धा तद्गृहेऽद्य महत्प्रकरणं वर्तते लाभनकं वा महत्कुतोऽप्यागतमित्येवं तद्वचः श्रुत्वा शुद्धमेतदिति निश्चित्य विगतशङ्कस्तद् भुङ्क्ते इति द्वितीयभङ्गवर्ती, तथा कश्चित्साधुरीश्वरगेहान्निःशङ्कितः प्रचुरां भिक्षां गृहीत्वा वसतावागतोऽन्यान् साधून् गुरोः पुरतः स्वभिक्षातुल्यां भिक्षामालोचयतः श्रुत्वा सञ्जातशङ्कश्चिन्तयति—यथा यादृश्येव मया भिक्षा प्रचुरा लब्धा तादृश्ये- वान्यैरपि सङ्घाटकैः तन्नूनमेतदाधाकर्मादिदोषदुष्टं भविष्यतीति भुञ्जानस्तृतीयभङ्गवर्ती १ ॥ 'मक्खिय'त्ति म्रक्षितं—पृथिव्यादिनाऽवगु- ण्ठितं, तद् द्विधा—सचित्तम्रक्षितमचित्तम्रक्षितं च, तत्र सचित्तम्रक्षितं त्रिविधं—पृथिवीकायम्रक्षितं अप्कायम्रक्षितं वनस्पतिकायम्रक्षितं च, तत्र शुष्केणार्द्रेण वा सचित्तपृथिवीकायेन देयं मात्रकं हस्तो वा यदि म्रक्षितो भवति तदा सचित्तपृथ्वीकायम्रक्षितं, अप्कायम्रक्षिते चत्वारो भेदाः—पुरःकर्म पश्चात्कर्म सस्निग्धं उदकार्द्रं च, तत्र भक्तादेर्दानात्पूर्वं यत् साध्वर्थं कर्म हस्तमात्रादेर्जलप्रक्षालनादि क्रियते तत्पुरः-

कर्म, यत्पुनर्भक्तादेर्दानात् पश्चात्क्रियते तत्पश्चात्कर्म, सस्निग्धं—ईषल्लक्ष्यमाणजलखरण्टितं हस्तादि, उदकार्द्रं—स्फुटोपलभ्यमानजलसंसर्गं, तथा चूतफलादीनां सद्यःकृतैः श्लक्ष्णखण्डैः खरण्टितं यद्धस्तादि तद्वनस्पतिकायम्रक्षितं, शेषैस्तु तेजःसमीरत्रसकायैर्म्रक्षितं न भवति, तेजस्कायादिसंसर्गेऽपि लोके म्रक्षितशब्दप्रवृत्त्यदर्शनात्, अचित्तम्रक्षितं पुनर्द्विविधं—गर्हितमितरच्च, गर्हितं वसादिना लिप्तं इतरत् घृतादिना, इह च सचित्तम्रक्षितं तावत् साधूनां सर्वथा न कल्पते, अचित्तम्रक्षितं तु लोकानिन्दितेन घृतादिना म्रक्षितं कल्पते, निन्दितेन पुनर्वसादिना म्रक्षितं न कल्पते एवेति २ ॥ 'निक्खित्त'त्ति निक्षिप्तं—सचित्तस्योपरि स्थापितं, तच्च पृथिव्यप्तेजोवायुवनस्पतित्रसनिक्षिप्तभेदेन षोढा, पुनरेकैकं द्विधा—अनन्तरं परम्परं च, अनन्तरं—अव्यवधानेन परम्परं च—व्यवधानेन, तत्र सचित्ते—मृदादौ यत् पक्वान्नमण्डकादिकमानन्तर्येण व्यवस्थापितं तदनन्तरनिक्षिप्तं, सचित्तमृदादेरेवोपरिस्थिते पिठरकादौ यन्निक्षिप्तं पक्वान्नादि तत् परम्परनिक्षिप्तं, तथा यन्नवनीतस्त्यानीभूतघृतादिकं सचित्ते उदके निक्षिप्तं तदनन्तरनिक्षिप्तं, तदेव नवनीतादि पक्वान्नादि वा जलमध्ये स्थितेषु नावादिषु स्थितं परम्परनिक्षिप्तं, तथा वह्नौ पर्पटादि यत्प्रक्षिप्यते तदनन्तरनिक्षिप्तं, यत्पुनरग्नेरुपरि स्थापिते पिठरादौ क्षिप्तं तत्परम्परनिक्षिप्तं, तथा वातोत्पाटिताः शालिपर्पटकादयोऽनन्तरनिक्षिप्तं, यद् येनोत्पाट्यते तत्तत्र निक्षिप्तमुच्यते इति विवक्षया, परम्परनिक्षिप्तं तु पवनापूरितदृत्याद्युपरिस्थितमण्डकादि, तथा वनस्पत्यनन्तरनिक्षिप्तं सचित्तव्रीहिकाफलादिषु पूपमण्डकादि न्यस्तं, परम्परनिक्षिप्तं तु हरितादीनामेवोपरिस्थितेषु पिठरादिषु निक्षिप्ता अपूपादयः, तथा त्रसेऽनन्तरनिक्षिप्तं बलीवर्दादिपृष्ठेऽपूपमोदकादयो निक्षिप्ताः, परम्परनिक्षिप्तं तु बलीवर्दादिपृष्ठनिवेशितकुतुपादिभाजनेषु निक्षिप्ता घृतमोदकादय इति, अत्र च पृथिव्यादिषु सर्वेष्वप्यनन्तरनिक्षिप्तं देयं वस्तु यतीनामकल्पनीयमेव, सचित्तपृथिवीकायाद्युपरिस्थितत्वेन सङ्घट्टादिदोषसम्भवात्, परम्परनिक्षिप्तं पुनः सचित्तसङ्घट्टादिपरिहारेण यतनया ग्राह्यमपीति,

केवलं तेजस्काये परम्परनिक्षिप्तस्य ग्रहणमाश्रित्य विशेषः प्रतिपाद्यते—यथेक्षुरसः पाकस्थाने अभेरुपरिस्थिते कटाहादौ यदि कटाहः सर्वतः पार्श्वेषु मृत्तिकयाऽवलिप्तो भवति दीयमाने चेक्षुरसे यदि परिशाटिर्नोपजायते सोऽपि च कटाहो यदि विशालमुखो भवति सोऽपि चेक्षुरसोऽचिरक्षिप्त इतिकृत्वा यदि नात्युष्णो भवति तदा स दीयमान इक्षुरसः कल्पते, इह यदि दीयमानस्येक्षुरसस्य कथमपि बिन्दुर्बहिः पतति तर्हि स लेप एव वर्तते, न तु चुल्लीमध्यस्थिततेजस्कायमध्ये पतति, ततो मृत्तिकयाऽवलिप्त इत्युक्तं, तथा विशालमुखादाकृष्यमाण उदञ्चनः पिठरस्य कर्णे न लगति ततो न पिठरस्य भङ्ग इति न तेजस्कायविराधनेत्यतो विशालमुख इत्युक्तं, तथा अत्युष्णे इक्षुरसादौ दीयमाने यस्मिन् भाजने तदत्युष्णं गृह्णाति तेन तप्तं सद् भाजनं हस्तेन साधुर्गृह्णन् दह्यते इत्यात्मविराधना, येनापि स्थानेन [दर्व्यादिना] सा दात्री ददाति तेनाप्यत्युष्णेन सा दह्यते, अन्यच्च—अत्युष्णमिक्षुरसादि कष्टेन दात्री दातुं शक्नोति, कष्टेन च दाने कथमपि साधुसम्बन्धिभाजनाद्बहिरुज्झने हानिर्दीयमानस्येक्षुरसादेस्तस्य च भाजनस्य, साधुना वसतावानयनायोत्पाटितस्य पतद्ग्रहादेः दाज्या वा दानायोत्पाटितस्योदञ्चनस्य दण्डरहितस्यात्युष्णतया झगिति भूमौ मोचने भङ्गः स्यात्, तथा च षड्जीवनिकायविराधनेति संयमविराधना चेत्यतोऽनत्युष्णमित्युक्तं ३ ॥ 'पिहिय'त्ति पिहितं—सचित्तेन स्थगितं, तदपि षोढा पृथिवीकायादिपिहितभेदात्, एकैकमपि द्विधा—अनन्तरं परम्परं च, तत्र सचित्तपृथिवीकायेनावष्टब्धं मण्डकादि सचित्तपृथ्वीकायानन्तरपिहितं, सचित्तपृथिवीकायगर्भपिठरादिपिहितं सचित्तपृथिवीकायपरम्परपिहितं, तथा हिमादिनाऽवष्टब्धं मण्डकादिकं सचित्ताप्कायानन्तरपिहितं, हिमादिगर्भपिठरादिना पिहितं सचित्ताप्कायपरम्परपिहितं, तथा स्थाल्यादौ संस्वेदिमादीनां मध्ये अङ्गारं स्थापयित्वा हिङ्ग्वादिवासो यदा दीयते तदा तेनाङ्गारेण केषाञ्चित्संस्वेदिमादीनां संस्पर्शोऽस्तीति तेजस्कायानन्तरपिहितं, एवं चनकादिकमपि मुर्मुरादिक्षिप्तमनन्तरपिहितमवगन्तव्यं, अङ्गारभृतेन शरावादिना

स्थगितं पिठरादि परम्परपिहितं, तथा तत्रैवाङ्गारधूपनादौ अव्यवहितमनन्तरपिहितं वायौ द्रष्टव्यं 'यत्राग्निस्तत्र वायु'रिति वचनात्, समीरणभूतेन तु बस्तिना पिहितं परम्परपिहितं, तथा फलादिना अतिरोहितेन पिहितं वनस्पत्यनन्तरपिहितं, फलभृच्छब्बकादिना पिहितं परम्परपिहितं, तथा मण्डकमोदकादिकमुपरिसञ्चरत्पिपीलिकापङ्क्तिकं त्रसानन्तरपिहितं, कीटिकाद्याकीर्णेन तु शरावादिना पिहितं त्रसपरम्परपिहितमिति, तत्र च पृथिवीकायादिभिरनन्तरपिहितं न कल्पत एव यतीनां, सङ्घट्टादिदोषसंभवात्, परम्परपिहितं तु यतनया ग्राह्यमपि, तथा अचित्तेनाप्यचित्ते देये वस्तुनि पिहिते चतुर्भङ्गी, यथा—गुरुकं गुरुकेण पिहितं १ गुरुकं लघुकेन २ लघुकं गुरुकेण ३ लघुकं लघुकेन ४, तत्र च प्रथमतृतीययोर्भङ्गयोरग्राह्यं, गुरुद्रव्यस्योत्पाटने हि कथमपि तस्य पाते पादादिभङ्गसम्भवात्, द्वितीयचतुर्थयोस्तु ग्राह्यमुक्तदोषाभावात्, देयवस्त्वाधारस्य पिठरादेर्गुरुत्वेऽपि ततः करोटिकादिना दानसम्भवात् ४॥ 'साहरिय'त्ति संहृतम्—अन्यत्र प्रक्षिप्तं, तत्र येन करोटिकादिना कृत्वा भक्तादिकं दातुमिच्छति दात्री तत्रान्यददातव्यं किमपि सचित्तमचित्तं मिश्रं वाऽस्ति ततस्तददेयमन्यत्र स्थानान्तरे क्षिप्त्वा तेन ददाति एतत्संहृतमुच्यते, तच्चादेयं कदाचित्सचित्तेषु पृथिव्यादिषु मध्ये क्षिपति कदाचिदचित्तेषु कदाचिन्मिश्रेषु तदा मिश्रस्य सचित्त एवान्तर्भावात्सचित्ताचित्तपदाभ्यां चतुर्भङ्गी, यथा सचित्ते सचित्तं संहृतं १ सचित्ते अचित्तं २ अचित्ते सचित्तं ३ अचित्ते अचित्तमिति ४, तत्राद्येषु त्रिषु भङ्गेषु सचित्तसङ्घट्टादिदोषसम्भवान्न कल्पते चतुर्थे भङ्गे तु तथाविधदोषासम्भवे सति कल्पतेऽपीति, अत्राप्यनन्तरपरम्परप्ररूपणा पूर्ववत्कर्तव्या, यथा सचित्तपृथिवीकायमध्ये यदा संहरति तदाऽनन्तरसचित्तपृथिवीकायसंहृतं, यदा तु सचित्तपृथिवीकायस्योपरिस्थिते पिठरादौ संहरति तदा परम्परसचित्तपृथिवीकायसंहृतं, एवमप्कायादिष्वपि भावनीयं, अनन्तरसंहृते न ग्राह्यं, परम्परसंहृते तु सचित्तपृथिवीकायाद्यसङ्घट्टने ग्राह्यमिति ५॥ 'दायग'त्ति दायकदोषदुष्टं, दायकश्चानेकप्रकारः, तथाहि—स्थविरो १ ऽप्रभु २-

नपुंसकः ३ कम्पमानकायो ४ ज्वरितो ५ ऽन्धो ६ बालो ७ मत्त ८ उन्मत्त ९ छिन्नकर १० छिन्नचरणो ११ गलत्कुष्ठो १२ बद्धः १३ पादुकारूढः १४ तथा कण्डयन्ती १५ पिंषन्ती १६ भर्जमाना १७ कृन्तन्ती १८ लोढयन्ती १९ विक्ष्णुवती २० पिञ्जयन्ती २१ दलयन्ती २२ विरोलयन्ती २३ भुञ्जाना २४ आपन्नसत्त्वा २५ बालवत्सा २६ षट् कायान् सङ्घट्टयन्ती २७ तानेव विनाशयन्ती २८ सप्रत्यपाया २९ चेति, तत एवमादिस्वरूपे दातरि ददति न कल्पते, तत्र स्थविरः सप्ततिवर्षाणां मतान्तरापेक्षया षष्टिवर्षाणां वोपरिवर्ती, स च प्रायो गलल्लालो भवति, ततो देयमपि वस्तु लालया खरण्टितं भवतीति तद्ग्रहणे लोके जुगुप्सा, तथा कम्पमानहस्तश्च भवति, ततो हस्तकम्पनवशाद्देयं वस्तु भूमौ निपतति, तथा च षट्जीवनिकायविराधना, तथा स्वयं वा स्थविरो ददत् निपतेत्, तथा सति तस्य पीडा भूम्याश्रितषड्जीवनिकायविराधना च १ अपि च—प्रायः स्थविरो गृहस्याप्रभुर्भवति, ततस्तेन दीयमाने कोऽधिकारोऽस्य वृद्धस्य दाने इति विचिन्त्य गृहे स्वामित्वेन नियुक्तस्य प्रद्वेषः स्यात्, तथा वृद्धोऽपि यदि प्रभुर्भवति कम्पमानश्च यद्यन्येन विधृतो वर्तते स्वरूपेण वा दृढशरीरो भवति तर्हि ततः कल्पते २ तथा नपुंसकादभीक्ष्णं भिक्षाग्रहणे अतिपरिचयात्तस्य नपुंसकस्य साधोर्वा वेदोदयो भवेत्, ततो नपुंसकस्य साध्वालिङ्गनाद्यासेवनेन द्वयस्यापि कर्मबन्धः, तथा अहो एते नपुंसकादपि निकृष्टात् गृह्णन्तीति जननिन्दा भवेत्, अपवादतस्तु वर्धितकचिप्पितमन्त्रोपहतऋषिशप्तदेवशप्तादिषु केषुचिदप्रतिसेविषु नपुंसकेषु ददत्सु गृह्यतेऽपि भिक्षेति ३ तथा कम्पमानकायोऽपि भिक्षादानसमये देयमानयन् भूमौ परिशाटयेत् तथा साधुभाजनाद्बहिर्भिक्षां क्षिपेत् देयमात्रकं वा पातनेन स्फोटयेदिति, सोऽपि च यदि दृढभिक्षाभाजनग्राही भवेत् पुत्रादिभिर्वा दृढहस्तो भिक्षां दाप्यते तदा ततोऽपि गृह्यते ४ एवं ज्वरितेऽपि दोषा भावनीयाः, किञ्च—ज्वरिताद्भिक्षाग्रहणे ज्वरसङ्क्रमणमपि साधोर्भवेत्, तथा जने उड्डाहो यथा अहो अमी आहारलम्पटा यदित्थं ज्वर-

पीडितादपि गृह्णन्ति, अथासश्चरिष्णुर्ज्वरो भवेत्तदा यतनया कदाचिद् गृह्यतेऽपीति ५ तथा अन्धाद्भिक्षाग्रहणे उड्डाहः, स चायं—अहोऽमी औदरिका यदन्धादपि भिक्षां च दातुमशक्नुवतो भिक्षां गृह्णन्तीति, तथा अन्धोऽपश्यन् पादाभ्यां भूम्याश्रितषड्जीवनिकायघातं विदधाति, तथाऽन्धो लेष्ट्वादौ स्खलितः सन् भूमौ निपतेत्, तथा च सति भिक्षादानायोत्पाटितहस्तगृहीतस्थाल्यादेर्भङ्गः स्यात्, साधुपात्रकाद् वहिःक्षेपणे च परिशाटिर्भवेदिति, सोऽपि पुत्रादिना धृतहस्तो यदि दद्यात्तदा यतनया गृह्यते ६ तथा बालो—जन्मतो वर्षाष्टकाभ्यन्तरवर्ती तस्मिन् देयमानमजानति मात्राद्यसमक्षमतिप्रभूतां भिक्षां ददति अहो लुण्टाका एते न साधुसद्वृत्ता इत्युड्डाहो भवेत् मात्रादीनां व्रतिनामुपरि द्वेषश्च सञ्जायते, यदि च मात्रादिभिः कार्यवशादन्यत्र गच्छद्भिर्बालकस्य कथितमिदमिदं च व्रतिनामत्रागतानां त्वया देयमिति, यदि च जनन्याद्यनुपदिष्टेऽपि स्तोकमेव किञ्चिद्ददाति बालकस्तदा तेनापि दीयमानं गृह्यते, एवं मात्रादिभिः क्रियमाणस्य कलहादेरभावादिति ७ तथा मत्तः—पीतमदिरादिः, स च भिक्षां ददत् कदाचिन्मत्ततया साधोरालिङ्गनं विदधाति भाजनं वा भिनत्ति यद्वा कदाचिद्भिक्षां ददानः पीतमासवं वमति वमंश्च साधुं साधुपात्रं वा खरण्टयति ततो लोके जुगुप्सा—धिगमी साधवोऽशुचयो ये मत्तादपीत्थं भिक्षां गृह्णन्तीति, तथा कोऽपि मत्तो मदविह्वलतया रे मुण्ड! किमत्रायातस्त्वमिति ब्रुवन् घातमपि विदधाति ८ तथा उन्मत्तो—दृप्तो ग्रहगृहीतो वा, तस्मिन्नप्येत एवालिङ्गनादयो दोषा वमनवर्जा भावनीया इति, तथा मत्तोऽपि यदि भद्रकोऽलक्ष्यमदश्च भवति यदि च सागारिकः कोऽपि तत्र तथाविधो न विद्यते तर्हि तद्धस्तात् कल्पते नान्यथा, उन्मत्तोऽपि चेत् शुचिर्भद्रकश्च भवति तदा कल्पत इति ९ तथा छिन्नकरो मूत्राद्युत्सर्गादौ जलशौचाद्यभावादशुचिरेव, तेन च दीयमाने जनो निन्दां करोति, तथा हस्ताभावे येन भाजनेन कृत्वा भिक्षां ददाति यद्वा देयं वस्तु तस्य पतनमपि भवति, तथा च सति षड्जीवनिकायव्याघातः, तथा छिन्नचरणेऽप्येत एव दोषा द्रष्टव्याः,

केवलं पादाभावात्तस्य भिक्षादानाय चलतः प्रायो नियमतः पतनं भवेत्, तथा च सति भूम्याश्रितपिपीलिकाप्रभृतिप्राणिप्रणाशः, छिन्नकरोऽपि यदि सागारिकाभावे ददाति तदा यतनया गृह्यते, छिन्नचरणोऽपि च यद्युपविष्टो ददाति असागारिकं च स्थानं भवेत्तदा गृह्यते १०-११ तथा गलत्कुष्ठाद् गृह्यमाणे तदीयोच्छ्वासत्वक्संस्पर्शार्धपक्वरुधिरस्वेदमललालादिभिः साधोः कुष्ठसङ्क्रमो भवेत्, सोऽपि चेन्मण्डलप्रसूतिरूपकुष्ठाकीर्णकायः सन् सागारिकाभावे ददाति तर्हि ततः कल्पते न शेषकुष्ठिनः सागारिके वा पश्यति, तत्र मण्डलानि—वृत्ताकारदद्रुविशेषरूपाणि प्रसूतिः—नखविदारणेऽपि वेदनाया असंवेदनमिति १२ तथा करविषयकाष्ठमयबन्धनरूपेण हस्ताण्डुना पादविषयलोहबन्धनरूपेण निगडेन च बद्धे दातरि भिक्षां प्रयच्छति दुःखं तस्य स्यात् तथा मूत्राद्युत्सर्गादौ च शौचकरणासम्भवात्ततो भिक्षाग्रहणे लोके जुगुप्सा, यथा अमी अशुचयो यदेतस्मादप्यशुचीभूताद्भिक्षामाददत इति, तथा पादबद्धश्चेदितश्चेतश्च पीडामन्तरेण गन्तुं शक्तस्ततस्तस्मादपि कल्पते, इतरस्तु य इतश्चेतश्च गन्तुमशक्तः स चेदुपविष्टः सन् ददाति न च कोऽपि तत्र सागारिको विद्यते तर्हि ततोऽपि कल्पते, हस्तबद्धस्तु भिक्षां दातुमपि न शक्नोतीति तत्र प्रतिषेध एव न भजना १३ तथा पादुकयोः—काष्ठमयोपानहोरारूढस्य भिक्षादानाय प्रचलतः कदाचिद् दुःस्थितत्वेन पतनं स्यात्, पादुकारूढोऽपि यद्यचलो भवति तदा कारणे कल्पते १४ तथा कण्डूयन्त्या—उदूखले तण्डुलादिकं छटयन्त्या न गृह्यते, यत इयमुदूखलक्षिप्तशाल्यादिबीजसङ्घट्टादि करोति, भिक्षादानात्पूर्वं भिक्षादानोत्तरकालं वा जलेन हस्तधावनात्पुरःकर्मदोषं पश्चात्कर्मदोषं वा विदध्यादित्यादयो दोषाः, अत्रापि कण्डयन्त्या कण्डनायोत्पाटितं मुशलं न च तस्मिन् मुशले किमपि काश्च्यां बीजं लग्नमस्ति अत्रान्तरे च समायातः साधुः ततो यदि सा पतनाद्यनर्थरहिते गृहकोणादौ मुशलं स्थापयित्वा भिक्षां ददाति तदा कल्पते १५ तथा पिंषन्ती—शिलायां तिलामलकादि प्रमृद्नन्ती यदा भिक्षादानायोत्तिष्ठति तदा पिष्यमाणतिलादिसत्काः काश्चिन्नखिकाः सचित्ता अपि

हस्तादौ लगिताः सम्भवन्ति ततो भिक्षादानाय हस्तादिप्रस्फोटने भिक्षां वा ददत्या भिक्षासम्पर्कतस्तासां विराधना भवति, भिक्षां च
दत्त्वा भिक्षावयवखरण्टितौ हस्तौ जलेन प्रक्षालयेत् ततोऽप्कायविराधना, एषाऽपि पेषणसमाप्तौ प्राशुकं वा पिंषन्ती यदि ददाति तदा
कल्पते १६ तथा भर्जमाना—चुल्ल्यां कडिल्लकादौ चनकादीन् स्फोटयन्ती, तस्यां हि भिक्षां ददत्यां वेलालगनेन कडिल्लकक्षिप्तगोधूमचनका-
दीनां दाहे सति प्रद्वेषादयो दोषाः स्युः, अत्रापि यत्सचित्तं गोधूमादिकं कडिल्लके क्षिप्तं तद्भ्रष्टोत्तारितं अन्यच्च नाद्यापि करे गृह्णाति
एतस्मिन्नन्तरे भिक्षाकृते साधुः समागतः ततो यद्युत्थाय ददाति तदा कल्पते १७ तथा कृन्तत्यां—यन्त्रेण रूतपोणिकां सूत्ररूपां कुर्वत्यां १८
तथा लोढयन्त्यां—लोढिन्यां कर्पासं कणकेन रूततया विदधत्यां १९ तथा विक्षुवत्यां—रूतं कराभ्यां पौनःपुन्येन विरलं कुर्वत्यां २० तथा
पिञ्जयन्त्यां—पिञ्जनेन रूतं विरलं कुर्वत्यां न गृह्यते, देयलिप्तहस्तधावनरूपस्य पुरःकर्मपश्चात्कर्मादेर्दोषस्य सम्भवात् कार्पासिकादिसचित्त-
सङ्घट्टसम्भवाच्चेति २१, इह च कर्तने यदि सूत्रस्य श्वेतताातिशयोत्पादनाय शङ्खचूर्णेन हस्तौ न खरण्टयति खरण्टने वा यदि जलेन न प्रक्षा-
लयति तदा कल्पते, लोढनेऽपि यदि हस्ते धृतः कार्पासो न स्यात् कार्पासिकान् वा यदि उत्तिष्ठन्ती न घट्टयति तदा गृह्यते, विक्षु-
वत्यां पिञ्जयन्त्यां च यदि पश्चात्कर्म न भवति तदा कल्पते, तथा दलयन्ती—घरट्टेन गोधूमादि चूर्णयन्ती, तस्यां हि ददत्यां घरट्टक्षिप्त-
बीजसङ्घट्टः हस्तधावने जलविराधना च, दलयन्त्यपि सचित्तमुद्गादिना दल्यमानेन सह घरट्टं मुक्तवती अत्रान्तरे च साधुरायातस्ततो यद्यु-
त्तिष्ठति अचेतनं वा भृष्टं मुद्गादिकं दलयति तर्हि तद्धस्तात्कल्पते २२ तथा विरोलयन्ती—दध्यादि मथ्नन्ती, यदि तद्दध्यादि संसक्तं मथ्नाति
तर्हि तेन संसक्तदध्यादिना लिप्तकरत्वाद्भिक्षां ददती तेषां रसजीवानां वधं विदध्यात्, अत्रापि चेदसंसक्तं दध्यादि मथ्नाति तदा कल्पते २३
तथा भुञ्जाना दात्री भिक्षादानार्थमाचमनं करोति आचमने च क्रियमाणे उदकं विराध्यते अथ न करोत्याचमनं तर्हि लोके जुगुप्सा,

उक्तं च—"छक्कायदयावंतोऽवि संजओ दुल्लहं कुणइ बोहिं । आहारे नीहारे दुगुंछिए पिंडगहणे य ॥ १ ॥" [ षट्कायदयावानपि संयतो दुर्लभां करोति बोधिं। आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥१॥ ] २४ तथा आपन्नसत्त्वायां भिक्षां ददत्यां न ग्राह्यं, यतस्तस्या भिक्षादानार्थमूर्द्ध्वीभवन्त्या भिक्षां दत्त्वा आसने उपविशन्त्याश्च गर्भबाधा भवेत्, तत्रापि स्थविरकल्पिकानां मासाष्टकं यावत् तत्करेण कल्पते वेलामासे तु न कल्पते, ऊर्द्ध्वीभवनाद्यायासमन्तरेण स्वभावस्थितयैव तया यदि दीयते तदा वेलामासेऽपि गृह्यते २५ तथा बालवत्सा बालकं भूमौ मञ्चिकादौ वा निक्षिप्य यदि भिक्षां ददाति तर्हि तं बालकं मार्जारसारमेयादयो मांसखण्डं शशकशिशुरिति वा कृत्वा विनाशयेयुः, तथा आहारखरण्टितौ शुष्कौ हस्तौ कर्कशौ भवतः ततो भिक्षां दत्त्वा पुनर्दात्र्या हस्ताभ्यां गृह्यमाणस्य बालस्य पीडा स्यात्, यस्यास्तु बाल आहारेऽपि लगति भूमौ च मुक्तः सन्न रोदिति तस्या हस्तात्कल्पते स्थविरकल्पिकानां, आहारं हि गृह्णन् बालः प्रायः शरीरेण महान् भवेत् ततो न मार्जारादिविराधनाप्रसङ्गः, ये तु भगवन्तो जिनकल्पिकास्ते निरपवादत्वात्सूत्रबलेन गर्भाधानादि ज्ञात्वा मूलत एवापन्नसत्त्वां बालवत्सां च सर्वथा परिहरन्ति २६ तथा षट्कायान् पृथिव्यप्तेजोवायुवनस्पतित्रसस्वरूपान् संघट्टयन्ती—हस्त-पादादिना शरीरावयवेन स्पृशन्ती ततः सजीवलवणोदकाग्निवायुपूरितवस्तिबीजपूरफलादिमत्स्यादीन् हस्तस्थान् सिद्धार्थकदूर्वापल्लवमल्लिकाशतपत्रिकाप्रमुखपुष्पाणि शिरःस्थानि मालतीमालादीन्युरःस्थानि जपाकुसुमान्याभरणतया कर्णस्थानि परिधानाद्यन्तःस्थापितसरससवृन्तताम्बूलपत्रादीनि कटीस्थानि सचित्तजलकणादीनि पादलग्नानि धारयन्ती यदि ददाति तदा न कल्पते सङ्घट्टादिदोषसद्भावात् २७ तथा तानेव षट्कायान् पृथिव्यादीन् विनाशयन्ती—व्यापादयन्ती, तत्र कुश्यादिना भूम्यादिखननेन पृथिवीकायं मज्जनवस्त्रादिधावनवृक्षादिसेचनादिभिरप्कायं उल्मुकघट्टनादिभिरग्निकायं चुल्लग्रामग्निफूत्करणादिभिः सचित्तवातभृतबस्त्यादेरितस्ततः प्रक्षेपणेन वा वायुकायं निर्भेटि-

कादिच्छेदनेन वनस्पतिकायं मञ्चादेर्मत्कुणादिपातनेन च त्रसकायं विनाशयन्त्यां दात्र्यां न गृह्यते २८ तथा सप्रत्यपाया—सम्भाव्यमानापाया, इह अपायास्त्रिविधाः, तद्यथा—तिर्यगूर्द्ध्वमधश्च, तत्र तिर्यग्गवादिभ्यः ऊर्द्ध्वमुत्तरङ्गकाष्ठादेः अधः सर्पकण्टकादेः, इत्थं च त्रिविधानामप्यपायानामन्यतममपायं बुद्ध्या सम्भावयन् न ततो मिश्रां गृह्णीयादिति, अत्र च षट् कायान् सङ्घट्टयन्त्यां तथा तानेव विनाशयन्त्यां सप्रत्यपायायां चापवादो नास्ति, ततः सर्वथा न कल्पते एव शेषेषु पुनरपवादो दर्शित एव, २९ एवमन्येऽपि दायकदोषाः स्वयं शास्त्रान्तरतश्च परिभाव्य परिहरणीयाः ६॥ 'उम्मीसे'त्ति उन्मिश्रं—सचित्तसम्मिश्रं, इह कश्चिद् गृहस्थः केवलं वस्त्विदं व्रतिने वितीर्यमाणमल्पं स्यादिति लज्जया पृथग्वस्तुद्वयदाने वेला लगतीत्यौत्सुक्येन मीलितं वस्तुद्वयं मृष्टं भवतीति भक्त्या सचित्तभक्षणभङ्गो भवतु एतेषामिति प्रत्यनीकतया अनाभोगेन वा साधूनां कल्पनीयतया उचितं पूरणादिकं अकल्पनीयतया मुनीनामनुचितेन करमर्दकदाडिमकुलिकादिना मिश्रयित्वा यद्ददाति तदुन्मिश्रं, अत्र च कल्पनीयाकल्पनीये द्वे अपि वस्तुनी च मिश्रयित्वा यद्ददाति तदुन्मिश्रं संहरणं तु यद्भाजनस्थमदेयं वस्तु तदन्यत्र क्वापि स्थगनिकादौ संहृत्य ददातीत्ययं मिश्रसंहृतयोर्भेदः ७॥ 'अपरिणय'त्ति अपरिणतं—अप्रासुकीभूतं, तत्सामान्यतस्तावद् द्विधा—द्रव्यतो भावतश्च, पुनरेकैकं द्विधा—दातृविषयं ग्रहीतृविषयं च, तत्र द्रव्यरूपमपरिणतं यत्पृथिवीकायादिकं स्वरूपेण सजीवं, यत्पुनर्जीवेन विप्रमुक्तं तत्परिणतमिति, तच्च यदा दातुः सत्तायां वर्तते तदा दातृविषयं यदा तु ग्रहीतुः सत्तायां तदा ग्रहीतृविषयं, तथा द्वयोर्बहूनां वा साधारणे देयवस्तुनि यद्येकस्य कस्यचिद्ददामीत्येवं भावः परिणमति न शेषाणां एतद्भावतो दातृविषयमपरिणतं, साधारणानिसृष्टं दायकपरोक्षत्वे दातृभावापरिणतं तु दायकसमक्षत्वे इत्यनयोर्भेदः, तथा द्वयोः साध्वोः सङ्घाटकरूपेण भिक्षाकृते गृहिगृहं गतयोरेकस्य साधोरेतल्लभ्यमानमशनादिकं शुद्धमिति मनसि परिणतं न द्वितीयस्येति ग्रहीतृविषयं भावापरिणतं, एतच्च साधूनां न कल्पते

शङ्कितत्वात् कलहादिदोषसम्भवाच्च ८॥ 'लित्त'त्ति हस्तमात्रकादिलेपकारित्वाल्लिप्तं—दुग्धदधितेमनादि तत्पुनरुत्सर्गतः साधुभिर्न ग्राह्यं रसाभ्यवहारलाम्पट्यवृद्धिप्रसङ्गात् दध्यादिलिप्तहस्तप्रक्षालनादिरूपपश्चात्कर्माद्यनेकदोषसद्भावाच्च, किन्तु अलेपकृदेव वल्लचनकौदनादिकं, तथाविधशक्त्यभावे च निरन्तरस्वाध्यायाध्ययनादिकं किमपि पुष्टं कारणमाश्रित्य लेपकृदपि कल्पते, तत्र च लेपकृति गृह्यमाणे दातुः सम्बधी हस्तः संसृष्टोऽसंसृष्टो वा भवति, येन च कृत्वा भिक्षां ददाति तदपि मात्रकं करोटिकादिकं संसृष्टमसंसृष्टं वा, द्रव्यमपि देयं सावशेषं निरवशेषं वा, एतेषां च त्रयाणां पदानां संसृष्टहस्तासंसृष्टमात्रसावशेषद्रव्यरूपाणां सप्रतिपक्षाणां परस्परं योगतोऽष्टौ भङ्गा भवन्ति, ते चामी—संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं १ संसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं २ संसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ३ संसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ४ असंसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं ५ असंसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं ६ असंसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ७ असंसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ८, एतेषु चाष्टसु भङ्गेषु मध्ये विषमेषु भङ्गेषु—प्रथमतृतीयपञ्चमसप्तमेषु ग्रहणं कर्तव्यं न समेषु—द्वितीयचतुर्थषष्ठाष्टमरूपेषु, इयमत्र भावना—इह हस्तो मात्रं द्वे वा स्वयोगेन संसृष्टे वा भवेतामसंसृष्टे वा न तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि द्रव्यवशेन ?, तथाहि—यत्र द्रव्यं सावशेषं तत्र तेन साध्वर्थं खरण्टितेऽपि न दात्री प्रक्षालयति भूयोऽपि परिवेषणसम्भवात्, यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतस्तद्द्रव्याधारस्थालीं हस्तं मात्रं वा प्रक्षालयति, ततो द्वितीयादिषु भङ्गेषु द्रव्ये निरवशेषे पश्चात्कर्मसम्भवान्न कल्पते, प्रथमादिषु तु पश्चात्कर्मासम्भवात्कल्पत इति ९॥ 'छड्डिय'त्ति छर्दितं उज्झितं त्यक्तमिति पर्यायाः, तच्च त्रिधा—सचित्तमचित्तं मिश्रं च, तदपि च कदाचिच्छर्दितं सचित्तमध्ये कदाचिदचित्तमध्ये कदाचिन्मिश्रमध्ये, तत्र उभयत्रापि मिश्रस्य सचित्त एवान्तर्भावात् छर्दने

सचित्ताचित्तद्रव्ययोराधारभूतयोराधेयभूतयोश्च संयोगतश्चतुर्भङ्गी भवति, तद्यथा—सचित्ते सचित्तं अचित्ते सचित्तं सचित्ते अचित्तं अचित्ते अचित्तं, अत्र चाद्येषु त्रिषु भङ्गेषु सचित्तसङ्घट्टादिदोषसद्भावान्न कल्पते, चरमे पुनः परिशाटिसद्भावात्, परिशाटौ च महान् दोषः, तथाहि—उष्णस्य द्रव्यस्य छर्दने भिक्षां ददमानो दह्येत भूम्याश्रितानां वा पृथिव्यादीनां दाहः स्यात् शीतद्रव्यस्य च भूमौ पतने भूम्याश्रिताः पृथिव्यादयो विराध्यन्ते इति १० ॥५६८॥ एते दश एषणादोषा भवन्ति, उक्तास्तावत्सङ्क्षेपतो द्विचत्वारिंशदपि दोषाः, विस्तरतस्तु पिण्डनिर्युक्तेरवगन्तव्याः ॥ अथ पिण्डविशुद्धेः सर्वसङ्ग्रहमाह—

**पिंडेसणा य सव्वा संखित्तोयरइ नवसु कोडीसु । न हणइ न किणइ न पयइ कारावणअणुमईहि नव ॥ ५६९ ॥**

पिण्डैषणा—पिण्डविशुद्धिः सर्वोऽपि सङ्क्षिप्ता—सङ्क्षेपेण भण्यमाना अवतरति—अन्तर्भवति नवसु कोटीषु—विभागेषु, ता एवाह—न स्वयं हन्ति न च क्रीणाति न च पचति इति त्रयं, एवं कारणानुमतिभ्यामपि, तथा नान्येन घातयति न क्रापयति न च पाचयति तथा नापरेण हन्यमानं न क्रीयमाणं न च पच्यमानमनुमोदते, मिलिताश्चैता नव कोटयः, एतैर्नवभिः पदैः पिण्डविशुद्धिः सर्वोऽपि सङ्गृह्यत इति भावः ॥ ५६९ ॥ इह च पूर्वं षोडशविध उद्गम उक्तः, स च सामान्यतो द्विधा भवति, तद्यथा—विशोधिकोटिरूपोऽविशोधिकोटिरूपश्च, तत्र यद्दोषदुष्टे भक्ते तावन्मात्रेऽपनीते सति शेषं कल्पते स दोषो विशोधिकोटिः शेषस्त्वविशोधिकोटिः, तत्र ये दोषा अविशोधिकोटिरूपा ये च विशोधिकोटिरूपास्तानाह—

**कम्मुद्देसियचरिमे तिय पूइयमीसचरिमपाहुडिया । अज्झोयर अविसोही विसोहिकोडी भवे सेसा ॥ ५७० ॥**

सूचामात्रत्वात्सूत्रस्य 'कम्म'त्ति आधाकर्म सप्रभेदं औद्देशिकस्य–विभागौद्देशिकस्य चरमत्रिकं–कर्मभेदसत्कमन्त्यमेव भेदत्रयं, पूतिर्भक्तपानरूपा 'मीस'त्ति मिश्रजातं पाखण्डिगृहिमिश्रं साधुगृहिमिश्रं चरमा–अन्त्या बादरेत्यर्थः प्राभृतिका 'अज्झोयर'त्ति अध्यवपूरकस्य स्वगृहिपाखण्डिमिश्रस्वगृहिसाधुमिश्ररूपमन्त्यं भेदद्वयं, एते उद्गमदोषा अविशोधिकोटिः, अस्याश्चाविशोधिकोट्या अवयवेन शुष्कसिक्थादिना तथा तक्रादिना लेपेन वल्लचणकादिना च अलेपेन संसृष्टं यत् शुद्धं भक्तं तस्मिन्नुज्झितेऽपि यदकृतकल्पत्रये पात्रे शुद्धमपि भक्तं पश्चात्परिगृह्यते तत्पूतिरवगन्तव्यं, 'विसोहिकोडी भवे सेस'त्ति शेषाः–ओघौद्देशिकं नवविधमपि च विभागौद्देशिकमुपकरणपूतिर्मिश्रस्याद्यो भेदः स्थापना सूक्ष्मप्राभृतिका प्रादुष्करणं क्रीतं प्रामित्यकं परिवर्तितमभ्याहृतमुद्भिन्नं मालापहृतमाच्छेद्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेत्येवंरूपा विशोधिकोटिः, विशुद्ध्यति शेषं शुद्धं भक्तं यस्मिन्नुद्धृते यद्वा विशुद्ध्यति पात्रकमकृतकल्पत्रयमपि यस्मिन्नुज्झिते सा विशोधिः सा चासौ कोटिश्च–भेदश्च विशोधिकोटिः, उक्तं च—"उद्देसियंमि नवगं उवगरणे जं च पूइयं होइ । जावंतियमीसगयं अज्झोयरए य पढमपयं ॥ १ ॥ परियट्टिए अभिहडे उब्भिन्ने मालोहडे इय । अच्छिज्जे अणिसट्ठे पाओयर कीय पामिच्चे ॥ २ ॥ सुहुमा पाहुडियाऽविय ठवियगपिंडो य जो भवे दुविहो । सव्वोऽवि एस रासी विसोहिकोडी मुणेयव्वो ॥ ३ ॥" [ औद्देशिके नवकमाद्यमुपकरणे यच्च पूतिकं भवति । यावदर्थिकं मिश्रगतं अध्यवपूरके च प्रथमपदम् ॥१॥ परिवर्तितं अभ्याहृतं उद्भिन्नं मालापहृतं च। आच्छेद्यमनिसृष्टं प्रादुष्करणमपमित्यं क्रीतं ॥ २ ॥ सूक्ष्मा प्राभृतिका स्थापनापिण्डश्च यो भवेत् द्विविधः। सर्वोऽप्येष राशिर्विशोधिकोटी ज्ञातव्यः॥ ३ ॥]

इह च भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं गृहीतं ततस्तत्रैवानाभोगादिकारणवशतो विशोधिकोटिदोषदुष्टं गृहीतं पश्चाच्च कथमपि ज्ञातं यथैतद्विशोधिकोटिदोषदुष्टं मया गृहीतमिति ततो यदि तेन विनाऽपि निर्वहति तर्हि सकलमपि तद्विधिनाऽऽहारादि परिष्ठापयति, अथ न निर्वहति तदा यदेव विशोधिकोटिदोषदुष्टं तदेव तावन्मात्रं सम्यक्परिज्ञाय परित्यजति, यदि पुनरलक्षितेन सदृशवर्णगन्धादितया पृथक्परिज्ञातुमशक्येन मिश्रितं भवति यद्वा द्रवेण तक्रादि तदा सर्वस्यापि तस्य विवेकः, कृते च सर्वात्मना विवेके यद्यपि केचित्सूक्ष्मा अवयवा लगिता भवन्ति तथापि तत्र पात्रेऽकृतकल्पेऽप्यन्यत्परिगृह्णन् शुद्धः साधुःत्यक्तभक्तादेर्विशोधिकोटित्वादिति ॥५७०॥ अथ समितीराह—

**इरिया १ भासा २ एसण ३ आयाणाईसु ४ तह परिट्ठवणा ५ । सम्मं जा उ पवित्ती सा समिई पंचहा एवं ॥ ५७१ ॥**

ईरणमीर्या—गतिः भाषणं—भाषा एषणमेषणा आदीयते—गृह्यते इत्यादानं तदादिर्येषां निक्षेपादिक्रियाविशेषाणां ते आदानादयः ईर्या च भाषा च एषणा च आदानादयश्च ते तथा(तेषु), परिष्ठापने—त्यजने सम्यगागमानुसारेण या प्रवृत्तिः—चेष्टा सा समितिः, पञ्चानां चेष्टानां तान्त्रिकीयं संज्ञा, तत ईर्यासमितिर्भाषासमितिरेषणासमितिरादाननिक्षेपसमितिः परिष्ठापनासमितिरित्येवमुक्तन्यायेन पञ्चप्रकारा समितिः, तत्र त्रसस्थावरजन्तुजाताभयदानदीक्षितस्य यतेरावश्यके प्रयोजने लोकैरत्यन्तक्षुण्णेषु रविरश्मिप्रतापितेषु प्रासुकविविक्तेषु मार्गेषु गच्छतो जन्तुरक्षानिमित्तं स्वशरीररक्षानिमित्तं च पादाग्रादारभ्य युगमात्रक्षेत्रं यावन्निरीक्ष्य या ईर्या—गतिस्तस्यां समितिरीर्यासमितिः, यदुक्तं—"पुरओ जुगमायाए, पेहमाणो महिं चरे । वज्जेंतो वीयहरियाइं, पाणे य दगमट्टियं ॥ १ ॥ ओवायं विसमं खाणुं, विज्जलं परिवज्जए । संकमेण न गच्छिज्जा, विज्जमाणे परक्कमे ॥ २ ॥" [ पुरतो युगमात्रेण प्रेक्षमाणो महीं चरेत् । वर्जयन् बीजहरितानि प्राणांश्च दकमृत्तिके

॥ १ ॥ अवपातं विषमं स्थाणुं कर्दमं परिवर्जयेत् । संक्रमेण न गच्छेत् विद्यमाने सरले पथि ॥ २ ॥ ] एवंविधोपयोगेन गच्छतो यतेर्यदि कथमपि प्राणिवधो भवति तथाऽपि तस्य पापं न भवति, यदाहुः—"उच्चालियंमि पाए इरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ १ ॥ न हु तस्स तन्निमित्तो बंधो सुहुमोऽवि देसिओ समए । अणवज्जो उ पओगेण सव्वभावेण सो जम्हा ॥ २ ॥" [ उच्चालिते पादे ईर्यासमितेन संक्रमार्थाय । व्यापद्येत द्वीन्द्रियादिर्म्रियेत तद्योगमासाद्य ॥ १ ॥ नैव तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि दर्शितः समये । अनवद्यस्तु प्रयोगेण सर्वभावेन स यस्मात् ॥ २ ॥ ] तथा—"जियदु व मरदु व जीवो अजदाचारस्स निच्छओ हिंसा । पयदस्स नत्थि बंधो हिंसामित्तेण समिदस्स ॥ १ ॥" [ जीवतु वा प्राणी म्रियतां वा अयताचारस्य निश्चयतो हिंसा । प्रयतस्य नास्ति बन्धः हिंसामात्रेण समितस्य ।। १ ॥ ] तथा वाक्यशुद्ध्यध्ययनप्रतिपादितां सावद्यां भाषां धूर्तकामुककव्यादचौरचार्वाकादिभाषितानि च निर्दम्भतया वर्जयतः सर्वजनीनं स्वल्पमप्यतिबहुप्रयोजनसाधकमसन्दिग्धं च यद्भाषणं सा भाषासमितिः, तथा गवेषणग्रहणग्रासैषणादोषैरदूषितस्यान्नपानादे रजोहरणमुखवस्त्रिकाद्यौघिकोपधेः शय्यापीठफलकचर्मदण्डाद्यौपग्रहिकोपधेश्च विशुद्धस्य यद् ग्रहणं सा एषणासमितिः, तथा आसनसंस्तारकपीठफलकवस्त्रपात्रदण्डादिकं चक्षुषा निरीक्ष्य प्रतिलिख्य च सम्यगुपयोगपूर्वं रजोहरणादिना यद् गृह्णीयाद् यच्च निरीक्षितप्रतिलेखितभूमौ निक्षिपेत् सा आदाननिक्षेपसमितिः, अनुपयुक्तस्य तु प्रतिलेखनापूर्वमप्यादाने निक्षेपे च न शुद्धा समितिः, यदवाचि—"पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥ १ ॥ पुढवी आउक्काए वाऊ तेऊ वणस्सइतसाणं । पडिलेहणापमत्तो छण्हंपि विराहओ भणिओ ॥२॥" [ प्रतिलेखनां कुर्वाणो मिथः कथां करोति जनपदकथां वा । ददाति वा प्रत्याख्यानं वाचयति स्वयं प्रतीच्छति वा ॥ १ ॥ पृथ्व्यप्कायवायु-

तेजोवनस्पतित्रसानां पण्णामपि प्रतिलेखनाप्रमत्तो विराधको भणितः ॥ २ ॥] तथा पुरीषप्रश्रवणनिष्ठीवनश्लेष्मशरीरमलानुपकारिवसनान्नपानादीनां यज्जन्तुजातरहिते स्थण्डिले उपयोगपूर्वकं परित्यजनं सा परिष्ठापनासमितिः ॥५७१॥ इदानीं भावनाः प्रतिपादयति—

**पढममणिच्च १ मसरणं २ संसारो ३ एगया य ४ अन्नत्तं ५। असुइत्तं ६ आसव ७ संवरो ८ य**
**तह निज्जरा ९ नवमी ॥ ५७२ ॥ लोगसहावो १० बोहि य दुलहा ११ धम्मस्स साहओ अरहा १२।**
**एयाउ हुंति बारस जहक्कमं भावणीयाओ ॥ ५७३ ॥**

तत्र प्रथममनित्यभावना १ द्वितीया अशरणभावना २ तृतीया संसारभावना ३ चतुर्थी एकत्वभावना ४ पञ्चमी अन्यत्वभावना ५ षष्ठी अशुचित्वभावना ६ सप्तमी आश्रवभावना ७ अष्टमी संवरभावना ८ तथा नवमी निर्जराभावना ९ दशमी लोकस्वभावभावना १० एकादशी बोधिदुर्लभत्वभावना ११ द्वादशी धर्मकथकोऽर्हन्निति १२, एतास्तु भावना द्वादश भवन्ति यथाक्रमं—भणितक्रमेण भावनीया—अहर्निशमभ्यसनीया इति ॥ एतासां च स्वरूपं किञ्चिन्निरूपयामः, तत्रैवमनित्यभावना—प्रस्यन्ते वज्रसाराङ्गास्तेऽप्यनित्यत्वरक्षसा । किं पुनः कदलीगर्भनिःसारानिह देहिनः ? ॥ १ ॥ विषयसुखं दुग्धमिव स्वादयति जनो बिडाल इव मुदितः । नोत्पाटितलकुटमिवोत्पश्यति यममहह किं कुर्मः ? ॥ २ ॥ धराधरधुनीनीरपूरपारिप्लवं वपुः । जन्तूनां जीवितं वातधूतध्वजपटोपमम् ॥ ३ ॥ लावण्यं ललनालोकलोचनाञ्चलचञ्चलम् । यौवनं मत्तमातङ्गकर्णतालचलाचलम् ॥ ४ ॥ स्वाम्यं स्वप्नावलीसाम्यं, चपलाचपलाः श्रियः । प्रेम द्वित्रिक्षणस्थेम, स्थिरत्वविमुखं सुखम् ॥ ५ ॥ सर्वेषामपि भावानां, भावयन्नित्यनित्यताम् । प्राणप्रियेऽपि पुत्रादौ, विपन्नेऽपि न शोचति ॥ ६ ॥ सर्ववस्तुषु नित्यत्वग्रहग्रस्तस्तु मूढधीः । जीर्णतार्णकुटीरेऽपि, भग्ने रोदित्यहर्निशम् ॥ ७ ॥ ततस्तृष्णाविनाशेन, निर्ममत्वविधा-

यिनीम् । शुद्धधीर्भावयेन्नित्यमित्यनित्यत्वभावनाम् ॥८॥ १ । अथाशरणभावना—पितुर्मातुर्भ्रातुस्तनयदयितादेश्च पुरतः, प्रभूताऽऽधिव्याधिव्रजनिगडिताः कर्मचरटैः । रटन्तः क्षिप्यन्ते यममुखगृहान्तस्तनुभृतो, हहा कष्टं लोकः शरणरहितः स्थास्यति कथम् ? ॥ १ ॥ ये जानन्ति विचित्रशास्त्रविसरं ये मन्त्रतन्त्रक्रियाप्रावीण्यं प्रथयन्ति ये च दधति ज्योतिःकलाकौशलम् । तेऽपि प्रेतपतेरमुष्य सकलत्रैलोक्यविध्वंसिनोऽप्यस्य प्रतिकारकर्मणि न हि प्रागल्भ्यमाबिभ्रति ॥ २ ॥ नानाशस्त्रपरिश्रमोद्भटभटैरावेष्टिताः सर्वतो, गत्युद्दाममदान्धसिन्धुरशतैः केनाप्यगम्याः क्वचित् । शक्रश्रीपतिचक्रिणोऽपि सहसा कीनाशदासैर्बलादाकृष्टा यमवेश्म यान्ति हहहा निस्त्राणता प्राणिनाम् ॥ ३ ॥ उद्दंडं ननु दण्डसात्सुरगिरिं पृथ्वीं पृथुच्छत्रसात्, ये कर्तुं प्रभविष्णवः कृशमपि क्लेशं विनैवात्मनः । निःसामान्यबलप्रपञ्चचतुरास्तीर्थङ्करास्तेऽप्यहो, नैवाशेपजनौघघस्मरमपाकर्तुं कृतान्तं क्षमाः ॥ ४ ॥ कलत्रमित्रपुत्रादिस्नेहग्रहनिवृत्तये । इति शुद्धमतिः कुर्यादशरण्यत्वभावनाम् ॥ ५ ॥ २ । अथ संसारभावना—सुमतिरमतिः श्रीमानश्रीः सुखी सुखवर्जितः, सुतनुरतनुः स्वाम्यस्वामी प्रियः स्फुटमप्रियः । नृपतिरनृपः स्वर्गी तिर्यङ् नरोऽपि च नारकस्तदिति बहुधा नृत्यत्यस्मिन् भवी भवनाटके ॥ १ ॥ बद्धा पापमनेककल्मषमहारम्भादिभिः कारणैर्गत्वा नारकभूमिपूद्भटतमःसङ्घट्टनष्टाध्वसु । अङ्गच्छेदनभेदनप्रदहनक्लेशादिदुःखं महज्जीवो यल्लभते तदत्र गदितुं ब्रह्मापि जिह्वाननः ॥ २ ॥ मायार्त्यादिनिबन्धनैर्बहुविधैः प्राप्तस्तिरश्चां गतिं, सिंहव्याघ्रमतङ्गजैणवृषभच्छागादिरूपस्पृशाम् । क्षुत्तृष्णावधबन्धताडनरुजावाहादिदुःखं सदा, यज्जीवः सहते न तत्कथयितुं केनाप्यहो शक्यते ॥ ३ ॥ खाद्याखाद्यविवेकशून्यमनसो निर्ह्रीकताऽऽलिङ्गिताः, सेव्यासेव्यविधौ समीकृतधियो निःशूकतावल्लभाः । तत्रानार्यनरा निरन्तरमहारम्भादिभिर्दुस्सहं, क्लेशं सङ्कलयन्ति कर्म च महादुःखप्रदं चिन्वते ॥ ४ ॥ मर्त्याः क्षत्रियवाडवप्रभृतयो येऽप्यार्यदेशोद्भवास्तेऽप्यज्ञानदरिद्रताव्यसनितादौर्भाग्यरोगादिभिः । अन्य-

प्रेषणमानभञ्जनजनावज्ञादिमिश्रानिशं, दुःखं तद्विषहन्ति यत्कथयितुं शक्यं न कल्पैरपि ॥ ५ ॥ रम्भागर्भसमः सुखी शिखिशिखाव-
र्णाभिरुच्चैरयःसूचीभिः प्रतिरोमभेदितवपुस्तारुण्यपुण्यः पुमान् । यद् दुःखं लभते तदष्टगुणितं स्त्रीकुक्षिमध्यस्थितौ, सम्पद्येत तदप्य-
नन्तगुणितं जन्मक्षणे प्राणिनाम् ॥ ६ ॥ बाल्ये मूत्रपुरीषधूलिलुठनाज्ञानादिभिर्निन्दिता, तारुण्ये विभवार्जनेष्टविरहानिष्टागमादिर्व्यथा ।
वृद्धत्वे तनुकम्पदृक्क्षयपटुता श्वासाद्यसुस्थात्मता, तत्का नाम दशाऽस्ति सा सुखमिह प्राप्नोति यस्यां जनः ? ॥ ७ ॥ सम्यग्दर्शनपालनादि-
मिरथ प्राप्ते भवे त्रैदशे, जीवाः शोकविषादमत्सरमयस्वल्पार्धिकत्वादिभिः । ईर्ष्याकाममदक्षुधाप्रभृतिमिश्चात्यन्तपीडार्दिताः, क्लेशेन क्षप-
यन्ति दीनमनसो दीर्घं निजं जीवितम् ॥ ८ ॥ इत्थं शिवफलाधायिभववैराग्यवीरुधः । सुधावृष्टिं सुधीः कुर्यादेनां संसारभावनाम् ॥९॥
३ । अथैकत्वभावना—उत्पद्यते जन्तुरिहैक एव, विपद्यते चैकक एव दुःखी । कर्मार्जयत्येकक एव चित्रमासेवते तत्फलमेक एव ॥ १ ॥
यज्जीवेन धनं स्वयं बहुविधैः कष्टैरिहोपार्ज्यते, तत्सम्भूय कलत्रमित्रतनयभ्रात्रादिभिर्भुज्यते । तत्तत्कर्मवशाच्च नारकनरस्वर्वासितिर्यग्भवे-
ष्वेकः सैष सुदुःसहानि सहते दुःखान्यसङ्ख्यान्यहो ॥ २ ॥ जीवो यस्य कृते भ्रमत्यनुदिशं दैन्यं समालम्बते, धर्माद्भ्रश्यति वञ्चयत्य-
तिहितान् न्यायादपक्रामति । देहः सोऽपि सहात्मना न पदमप्येकं परस्मिन् भवे, गच्छत्यस्य ततः कथं वदत भोः साहाय्यमाधास्यति ?
॥ ३ ॥ स्वार्थैकनिष्ठं स्वजनस्वदेहमुख्यं ततः सर्वमवेत्य सम्यग् । सर्वत्र कल्याणनिमित्तमेकं, धर्मं सहायं विदधीत धीमान् ॥ ४ ॥ ४ ।
अथान्यत्वभावना—जीवः कायमपि व्यपास्य यदहो लोकान्तरं याति तद्भिन्नोऽसौ वपुषोऽपि कैव हि कथा द्रव्यादिवस्तुव्रजे ? । तस्मा-
ल्लिम्पति यस्तनुं मलयजैर्यो हन्ति दण्डादिभिर्यः पुष्णाति धनादि यश्च हरते तत्रापि साम्यं श्रयेत् ॥ १ ॥ अन्यत्वभावनामेवं, यः क-
रोति महामतिः । तस्य सर्वस्वनाशेऽपि, न शोकांशोऽपि, जायते ॥२॥ ५ । अथाशुचित्वभावना—लवणाकरे पदार्थाः पतिता लवणं यथा

भवन्तीह । काये तथा मलाः स्युस्तदसावशुचिः सदा कायः ॥ १ ॥ कायः शोणितशुक्रमीलनभवो गर्भे जरावेष्टितो, मात्रास्वादितखाद्यपेयरसकैर्वृद्धिं क्रमात्प्रापितः । क्लिद्यद्धातुसमाकुलः कृमिरुजागण्डूपदाद्यास्पदं, कैर्मन्येत सुबुद्धिभिः शुचितया सर्वैर्मलैः कश्मलः ? ॥ २ ॥ सुस्वादं शुभगन्धिमोदकदधिक्षीरेक्षुशाल्योदनद्राक्षापर्पटिकामृताघृतपूरस्वर्गच्युताम्रादिकम् । भुक्तं यत्सहसैव यत्र मलसात्सम्पद्यते सर्वतस्तं कायं सकलाशुचिं शुचिमहो मोहान्धिता मन्वते ॥ ३ ॥ अम्भःकुम्भशतैर्वपुर्ननु बहिर्मुग्धाः शुचित्वं कियत्कालं लम्भयथोत्तमं परिमलं कस्तूरिकाद्यैस्तथा । विष्ठाकोष्ठकमेतदङ्गकमहो मध्ये तु शौचं कथङ्कारं नेष्यथ सूत्रयिष्यथ कथङ्कारं च तत्सौरभम् ? ॥ ४ ॥ दिव्यामोदसमृद्धिवासितदिशः श्रीखण्डकस्तूरिकाकर्पूरागुरुकुङ्कुमप्रभृतयो भावा यदाश्लेषतः । दौर्गन्ध्यं दधति क्षणेन मलतां चाबिभ्रते सोऽप्यहो, देहः कैश्चन मन्यते शुचितया वैधेयतां पश्यत ॥ ५ ॥ इत्यशौचं शरीरस्य, विभाव्य परमार्थतः । सुमतिर्ममतां तत्र, न कुर्वीत कदाचन ॥ ६ ॥ ६ ॥ अथ **स्रवभावना**—मनोवचोवपुर्योगः, कर्म येनाशुभं शुभम् । भविनामास्रवन्त्येते, प्रोक्तास्तेनास्रवा जिनैः ॥ १ ॥ मैत्र्या सर्वेषु सत्त्वेषु, प्रमोदेन गुणाधिके । माध्यस्थ्येनाविनीतेषु, कृपया दुःखितेषु च ॥ २ ॥ सततं वासितं स्वान्तं, कस्यचित्पुण्यशालिनः । वितनोति शुभं कर्म, द्विचत्वारिंशदात्मकम् ॥ ३ ॥ रौद्रार्त्तध्यानमिथ्यात्वकषायविषयैर्मनः । आक्रान्तमशुभं कर्म, विदधाति द्व्यशीतिधा ॥ ४ ॥ सर्वज्ञगुरुसिद्धान्तसङ्घसद्गुणवर्णकम् । ऋतं हितं च वचनं, कर्म सञ्चिनुते शुभम् ॥ ५ ॥ श्रीसङ्घगुरुसर्वज्ञधर्मधार्मिकदूषकम् । उन्मार्गदेशि वचनमशुभं कर्म पुष्यति ॥ ६ ॥ देवार्चनगुरूपास्तिसाधुविश्रामणादिकम् । वितन्वती सुगुप्ता च, तनुर्वितनुते शुभम् ॥ ७ ॥ मांसाशनसुरापानजन्तुघातनचौरिकाः । पारदार्यादि कुर्वाणमशुभं कुरुते वपुः ॥ ८ ॥ एनामाश्रवभावनामविरतं यो भावयेद्भावतस्तस्यानर्थपरम्परैकजनकाद् दुष्टाश्रवौघात् मनः । व्यावृत्त्याखिलदुःखदावजलदे निःशेषशर्मावलीनिर्माणप्रवणे शुभाश्रवगणे नित्यं रतिं पुष्यति

॥ ९ ॥ ७ । अथ **संवरभावना**—आश्रवाणां निरोधो यः, संवरः स प्रकीर्तितः। सर्वतो देशतश्चेति, द्विधा स तु विभज्यते ॥ १ ॥ अयोगिकेवलिष्वेव, सर्वतः संवरो मतः । देशतः पुनरेकद्विप्रभृत्याश्रवरोधिषु ॥ २ ॥ प्रत्येकमपि स द्वेधा, द्रव्यभावविभेदतः । यत्कर्मपुद्गलादानमात्मन्याश्रवतो भवेत् ॥ ३ ॥ एतस्य सर्वदेशाभ्यां, छेदनं द्रव्यसंवरः। भवहेतुक्रियायास्तु, त्यागोऽसौ भावसंवरः ॥ ४ ॥ युग्मम् । मिथ्यात्वकषायादीनामाश्रवाणां मनीषिभिः । निरोधाय प्रयोक्तव्या, उपायाः प्रतिपन्थिनः ॥ ५ ॥ यथा—मिथ्यात्वमार्त्तरौद्राख्यकुध्याने च सुधीर्जयेत् । दर्शनेनाकलङ्केन, शुभध्यानेन च क्रमात् ॥ ६ ॥ क्षान्त्या क्रोधं मृदुत्वेन, मानं मायामृजुत्वतः । सन्तोषेण तथा लोभं, निरुन्धीत महामतिः ॥ ७ ॥ शब्दादिविषयानिष्टानिष्टांश्चापि विषोपमान् । रागद्वेषप्रहाणेन, निराकुर्वीत कोविदः ॥ ८ ॥ य एतद्भावनासङ्गी, सौभाग्यं भजते नरः । एति स्वर्गापवर्गश्रीरवश्यं तस्य वश्यताम् ॥ ९ ॥ ७ । अथ **निर्जराभावना**—संसारहेतुभूताया, यः क्षयः कर्मसन्ततेः । निर्जरा सा पुनर्द्वेधा, सकामाकामभेदतः ॥ १ ॥ श्रमणेषु सकामा स्यादकामा शेषजन्तुषु । पाकः स्वत उपायाच्च, कर्मणां स्याद् यथाऽऽम्रवत् ॥ २ ॥ कर्मणां नः क्षयो भूयादित्याशयवतां सताम् । वितन्वतां तपस्यादि, सकामा शमिनां मता ॥ ३ ॥ एकेन्द्रियादिजन्तूनां, सज्ज्ञानरहितात्मनाम् । शीतोष्णवृष्टिदहनच्छेदभेदादिभिः सदा ॥ ४ ॥ कष्टं वेदयमानानां, यः शाटः कर्मणां भवेत् । अकामनिर्जरामेनामामनन्ति मनीषिणः ॥ ५ ॥ युग्मम् । तपःप्रभृतिभिर्वृद्धिं, व्रजन्ती निर्जरा यतः । ममत्वं कर्म संसारं, हन्यात्तां भावयेत्ततः ॥६॥ ९ । अथ **लोकस्वभावभावना**—वैशाखस्थानस्थितकटिस्थकरयुगनराकृतिर्लोकः । भवति द्रव्यैः पूर्णः, स्थित्युत्पत्तिव्ययाक्रान्तैः ॥ १ ॥ ऊर्द्धतिर्यगधोभेदैः, स त्रेधा जगदे जिनैः । रुचकादष्टप्रदेशान्मेरुमध्यव्यवस्थितात् ॥ २ ॥ नवयोजनशत्यूर्द्धमधोभागेऽपि सा तथा । एतत्प्रमाणकस्तिर्यग्लोकश्चित्रपदार्थभृत् ॥ ३ ॥ ऊर्द्धलोकस्तदुपरि, सप्तरज्जुप्रमाणकः । एतत्प्रमाणसंयुक्तश्चाधोलोको-

ऽपि कीर्तितः ॥ ४ ॥ रत्नप्रभाप्रभृतयः, पृथिव्यः सप्त वेष्टिताः । घनोदधिघनवाततनुवातैस्तमोघनाः ॥ ५ ॥ तृष्णाक्षुधावधाघातभेदनच्छेदनादिभिः । दुःखानि नारकास्तत्र, वेदयन्ते निरन्तरम् ॥ ६ ॥ प्रथमा पृथिवी पिण्डे, योजनानां सहस्रकाः । अशीतिर्लक्षमेकं च, तत्रोपरि सहस्रकम् ॥ ७ ॥ अधश्च मुक्त्वा पिण्डस्य, शेषस्याभ्यन्तरे पुनः । भवनाधिपदेवानां, भवनानि जगुर्जिनाः ॥ ८ ॥ युग्मम् । असुरा नागास्तडितः, सुपर्णा अग्नयोऽनिलाः । स्तनिताब्धिद्वीपदिशः, कुमारान्ता दशेति ते ॥ ९ ॥ व्यवस्थिताः पुनः सर्वे, दक्षिणोत्तरयोर्दिशोः । तत्रासुराणां चमरो, दक्षिणावासिनां विभुः ॥ १० ॥ उदीच्यानां बलिर्नागकुमारादेर्यथाक्रमम् । धरणो भूतानन्दश्च, हरिर्हरिसहस्तथा ॥ ११ ॥ वेणुदेवो वेणुदाली, चाग्निशिखाग्निमाणवौ । वेलम्बः प्रभञ्जनश्च, सुघोषमहाघोषकौ ॥ १२ ॥ जलकान्तो जलप्रभस्ततः पूर्णो वशिष्टकः । अमितो मितवाहनः, इन्द्रा ज्ञेया द्वयोर्दिशोः ॥ १३ ॥ अस्या एव पृथिव्या उपरितने मुक्तयोजनसहस्रे । योजनशतमध उपरि च मुक्त्वाऽष्टसु योजनशतेषु ॥ १४ ॥ पिशाचाद्यष्टभेदानां, व्यन्तराणां तरस्विनाम् । नगराणि भवन्त्यत्र, दक्षिणोत्तरयोर्दिशोः ॥ १५ ॥ पिशाचा भूता यक्षाश्च, राक्षसाः किन्नरास्तथा । किम्पुरुषा महोरगा, गन्धर्वा इति तेऽष्टधा ॥ १६ ॥ दक्षिणोत्तरभागेन, तेषामपि च तस्थुषाम् । द्वौ द्वाविन्द्रौ समाम्नातौ, यथासङ्ख्यं सुबुद्धिभिः ॥ १७ ॥ कालस्ततो महाकालः, सुरूपः प्रतिरूपकः । पूर्णभद्रो माणिभद्रो, भीमो भीमो महादिकः ॥ १८ ॥ किन्नरकिम्पुरुषौ सत्पुरुषमहापुरुषनामकौ तदनु । अतिकायमहाकायौ गीतरतिश्चैव गीतयशाः ॥ १९ ॥ अस्या एव पृथिव्या उपरि च योजनशतं हि यन्मुक्तं । तन्मध्यादध उपरि च योजनदशकं परित्यज्य ॥ २० ॥ मध्येऽशीताविह योजनेषु तिष्ठन्ति वनचरनिकायाः । अप्रज्ञप्तिकमुख्या अष्टावल्पर्धिकाः किञ्चित् ॥ २१ ॥ अत्र प्रतिनिकायं च, द्वौ द्वाविन्द्रौ महाद्युती । दक्षिणोत्तरभागेन, विज्ञातव्यौ मनीषिभिः ॥ २२ ॥ योजनलक्षोन्नतिना स्थितेन मध्ये सुवर्णमयवपुषा । मेरुगि-

रिणा विशिष्टे जम्बूद्वीपे भवन्त्यत्र ॥ २३ ॥ वर्षाणि भारतादीनि, सप्त वर्षधरास्तथा । पर्वता हिमवन्मुख्याः, षट् शाश्वतजिनाख्याः ॥ २४ ॥ योजनलक्षप्रमिताज्जम्बूद्वीपात्परो द्विगुणमानः । लवणसमुद्रः परतस्तद्द्विगुणद्विगुणविस्ताराः ॥ २५ ॥ बोद्धव्या धातकीखण्ड-कालोदाद्या असङ्ख्यकाः । स्वयम्भूरमणान्ताश्च, द्वीपवारिधयः क्रमात् ॥ २६ ॥ युग्मम् । प्रत्येकरससम्पूर्णाश्चत्वारस्तोयराशयः । त्रयो जलरसा अन्ये, सर्वेऽपीक्षुरसाः स्मृताः ॥ २७ ॥ सुजातपरमद्रव्यहृद्यमद्यसमोदकः । वारुणीवरवार्धिः स्यात्, क्षीरोदजलधिः पुनः ॥ २८ ॥ सम्यक्क्कथितखण्डादिसुग्धदुग्धसमोदकः । घृतवरः सुतापितनव्यगव्यघृतोदकः ॥ २९ ॥ लवणाब्धिस्तु लवणास्वादपानीयपूरितः । कालोदः पुष्करवरः, स्वयम्भूरमणस्तथा ॥ ३० ॥ मेघोदकरसाः किन्तु, कालोदजलधेर्जलम् । कालं गुरुपरिणामं, पुष्करोदजलं पुनः ॥ ३१ ॥ हितं लघुपरिणामं, स्वच्छस्फटिकनिर्मलम् । स्वयम्भूरमणस्यापि, जलधेर्जलमीदृशम् ॥ ३२ ॥ त्रिभागावर्तसुचतुर्जातकेक्षुरसो-पमम् । शेषासङ्ख्यसमुद्राणां, नीरं निगदितं जिनैः ॥ ३३ ॥ समभूमितलादूर्ध्वं, योजने शतसप्तके । गते नवतिसंयुक्ते, ज्योतिषां स्यादध-स्तलः ॥ ३४ ॥ तस्योपरि च दशसु, योजनेषु दिवाकरः । तदुपर्यशीतिसङ्ख्ययोजनेषु निशाकरः ॥ ३५ ॥ तस्योपरि च विंशत्यां, योज-नेषु ग्रहादयः । स्यादेवं योजनशतं, ज्योतिर्लोको दशोत्तरम् ॥ ३६ ॥ जम्बूद्वीपे भ्रमन्तौ च, द्वौ चन्द्रौ द्वौ च भास्करौ । चत्वारो लव-णाम्भोधौ, चन्द्राः सूर्याश्च कीर्तिताः ॥ ३७ ॥ धातकीखण्डके चन्द्राः, सूर्याश्च द्वादशैव हि । कालोदे द्विचत्वारिंशच्चन्द्राः सूर्याश्च कीर्तिताः ॥ ३८ ॥ पुष्करार्धे द्विसप्ततिश्चन्द्राः सूर्याश्च मानुषे । क्षेत्रे द्वात्रिंशमिन्दूनां, सूर्याणां च शतं भवेत् ॥ ३९ ॥ मानुषोत्तरतः पञ्चाशद्योजनसहस्रकैः । चन्द्रैरन्तरिताः सूर्याः, सूर्यैरन्तरिताश्च ते ॥ ४० ॥ मानुषक्षेत्रचन्द्रार्कप्रमाणार्धप्रमाणकाः । तत्क्षेत्रपरिधेर्वृद्ध्या, वृद्धिमन्तश्च सङ्ख्यया ॥ ४१ ॥ स्वयम्भूरमणं व्याप्य, घण्टाकारा असङ्ख्यकाः । शुभलेश्या मन्दलेश्यास्तिष्ठन्ति सततं स्थिराः ॥ ४२ ॥

समभूमितलादूर्द्ध्वं, सार्धरज्जौ व्यवस्थितौ । कल्पावनल्पसम्पत्ती, सौधर्मेशाननामकौ ॥ ४३ ॥ सार्धरज्जुद्वये स्यातां, समानौ दक्षिणोत्तरौ । सनत्कुमारमाहेन्द्रौ, देवलोकौ मनोहरौ ॥ ४४ ॥ ऊर्द्ध्वलोकस्य मध्ये च, ब्रह्मलोकः प्रकीर्तितः । तदूर्द्ध्वं लान्तकः कल्पो, महाशुक्रस्ततः परम् ॥ ४५ ॥ देवलोकः सहस्रारोऽथाष्टमो रज्जुपञ्चके । एकेन्द्रौ चन्द्रवद् वृत्तावानतप्राणतौ ततः ॥ ४६ ॥ रज्जुषट्के ततः स्यातामेकेन्द्रावारणाच्युतौ । चन्द्रवद्वर्तुलावेवं, कल्पा द्वादश कीर्तिताः ॥ ४७ ॥ ग्रैवेयकास्त्रयोऽधस्यास्त्रयो मध्यमकास्तथा । त्रयश्चोपरितनाः स्युरिति ग्रैवेयका नव ॥ ४८ ॥ अनुत्तरविमानानि, तदूर्द्ध्वं पञ्च तत्र च । प्राच्यां विजयमपाच्यां, वैजयन्तं प्रचक्षते ॥४९॥ प्रतीच्यां तु जयन्ताख्यमुदीच्यामपराजितम् । सर्वार्थसिद्धं तन्मध्ये, सर्वोत्तममुदीरितम् ॥ ५० ॥ स्थितिप्रभावलेश्याभिर्विशुद्ध्यवधिदीप्तिभिः । सुखादिभिश्च सौधर्माद्यावत्सर्वार्थसिद्धिकम् ॥ ५१ ॥ पूर्वपूर्वत्रिदशेभ्यस्तेऽधिका उत्तरोत्तरे । हीनहीनतरा देहगतिगर्वपरिग्रहैः ॥ ५२ ॥ घनोदधिप्रतिष्ठाना, विमानाः कल्पयोर्द्वयोः । त्रिषु वायुप्रतिष्ठानास्त्रिषु वायूदधिस्थिताः ॥ ५३ ॥ ते व्योमविहितस्थानाः, सर्वेऽप्युपरिवर्तिनः । इत्यूर्द्ध्वलोकविमानप्रतिष्ठानविधिः स्मृतः ॥ ५४ ॥ सर्वार्थसिद्धाद् द्वादशयोजनेषु हिमोज्ज्वला । योजनपञ्चचत्वारिंशल्लक्षायामविस्तरा ॥ ५५ ॥ मध्येऽष्टयोजनपिण्डा, शुद्धस्फटिकनिर्मला । सिद्धशिलेषत्प्राग्भारा, प्रसिद्धा जिनशासने ॥ ५६ ॥ तस्या उपरि गव्यूतत्रितयेऽतिगते सति । तुर्यगव्यूतषड्भागे, स्थिताः सिद्धा निरामयाः ॥ ५७ ॥ अनन्तसुखविज्ञानवीर्यसद्दर्शनाः सदा । लोकान्तस्पर्शिनोऽन्योऽन्यावगाढाः शाश्वताश्च ते ॥ ५८ ॥ एनां भव्यजनस्य लोकविषयामभ्यस्यतो भावनां, संसारैकनिबन्धने न विषयग्रामे मनो धावति । किन्त्वन्यान्यपदार्थभावनसमुन्मीलत्प्रबोधोद्धुरं, धर्मध्यानमिहाविह स्थिरतरं तज्जायते संततम् ॥ ५९ ॥ १० । अथ **बोधिदुर्लभत्वभावना**—पृथ्वीनीरहुताशवायुतरुषु क्लिष्टैर्निजैः कर्मभिर्भ्राम्यन् भीमभवेऽत्र पुद्गलपरावर्ताननन्तानहो । जीवः कामम-

कामनिर्जरतया सम्प्राप्य पुण्यं शुभं, प्राप्नोति त्रसरूपतां कथमपि द्वित्रीन्द्रियाद्यामिह ॥ १ ॥ आर्यक्षेत्रसुजातिसत्कुलवपुर्नीरोगतासम्पदो, राज्यं प्राज्यसुखं च कर्मलघुताहेतोरवाप्नोत्ययम् । तत्त्वातत्त्वविवेचनैककुशलां वोधिं न तु प्राप्तवान्, कुत्राप्यक्षयमोक्षसौख्यजननीं श्रीसर्वविद्देशिताम् ॥ २ ॥ वोधिर्लब्धा यदि भवेदेकदाऽन्यत्र जन्तुभिः । इयत्कालं न तेषां तद्भवे पर्यटनं भवेत् ॥ ३ ॥ द्रव्यचारित्रमप्येतैर्वहुशः समवाप्यत । सज्ज्ञानकारिणी क्वापि, न तु वोधिः कदाचन ॥ ४ ॥ येऽसिध्यन् ये च सिद्ध्यन्ति, ये सेत्स्यन्ति च केचन । ते सर्वे वोधिमाहात्म्यात्तस्माद्बोधिरुपास्यताम् ॥ ५ ॥ ११ । अथ **धर्मकथकोऽर्हन्निति भावना**—अर्हन्तः केवलालोकालोकितालोकलोकका: । यथार्थं धर्ममाख्यातुं, पटिष्ठा न पुनः परे ॥ १ ॥ वीतरागा हि सर्वत्र, परार्थकरणोद्यताः । न कुत्राप्यनृतं ब्रूयुस्ततस्तद्धर्मसत्यता ॥ २ ॥ क्षान्त्यादिभेदैर्धर्मं च, दशधा जगदुर्जिनाः । यं कुर्वन् विधिना जन्तुर्भवाब्धौ न निमज्जति ॥ ३ ॥ पूर्वापरविरुद्धानि, हिंसादेः कारकाणि च । वचांसि चित्ररूपाणि, व्याकुर्वद्भिर्निजेच्छया ॥ ४ ॥ कुतीर्थिकैः प्रणीतस्य, सद्गतिप्रतिपन्थिनः । धर्मस्य सकलस्यापि, कथं स्वाख्याततता भवेत्? ॥ ५ ॥ यच्च तत्समये क्वापि, दयासत्यादिपोषणम् । दृश्यते तद्वचोमात्रं, बुधैर्ज्ञेयं न तत्त्वतः ॥ ६ ॥ यस्योद्दाममदान्धसिन्धुरघटं साम्राज्यमासाद्यते, यन्निःशेषजनप्रमोदजनकं सम्पद्यते वैभवम् । यत्पूर्णेन्दुसमद्युतिर्गुणगणः सम्प्राप्यते यत्परं, सौभाग्यं च विजृम्भते तदखिलं धर्मस्य लीलायितम् ॥ ७ ॥ यन्न प्लावयति क्षितिं जलनिधिः कल्लोलमालाकुलो, यत्पृथ्वीमखिलां धिनोति सलिलासारेण धाराधरः । यच्चन्द्रोष्णरुची जगत्युदयतः सर्वान्धकारच्छिदे, तन्निःशेषमपि ध्रुवं विजयते धर्मस्य विस्फूर्जितम् ॥ ८ ॥ अवन्धूनां वन्धुः सुहृदसुहृदां सम्यगगदो, गदार्त्तिक्रान्तानां धनमधनभावार्तमनसाम् । अनाथानां नाथो गुणविरहितानां गुणनिधिः, जयत्येको धर्मः परमिह हितव्रातजनकः ॥ ९ ॥ अर्हता कथितो धर्मः, सत्योऽयमिति भावयन् । सर्वसम्पत्करे धर्मे, धीमान् दृढतरो

भवेत् ॥ १० ॥ १२ ॥ एकामप्यमलामिमासु सततं यो भावयेद्भावनां, भव्यः सोऽपि निहन्त्यशेषकलुषं दत्तासुखं देहिनाम् । यस्त्व-भ्यस्तसमस्तजैनसमयस्ता द्वादशाप्यादराद्भ्यस्येल्लभते स सौख्यमतुलं किं तत्र कौतूहलम्? ॥ १ ॥ ५७२—५७३ ॥ अथ प्रतिमाः प्रतिपादयति—

मासाई सत्तंता ७ पढमा ८ थिइ ९ तइय सत्तराइदिणा १० । अहराइ ११ एगराई १२ भिक्खु-पडिमाण बारसगं ॥ ५७४ ॥ पडिवज्जइ एयाओ संघयणधिइजुओ महासत्तो । पडिमाओ भा-वियप्पा सम्मं गुरुणा अणुन्नाओ ॥ ५७५ ॥ गच्छेच्चिय निम्माओ जा पुव्वा दस भवे असं-पुण्णा । नवमस्स तइय वत्थुं होइ जहण्णो सुआभिगमो ॥ ५७६ ॥ वोसट्ठचत्तदेहो उवसग्ग-सहो जहेव जिणकप्पी । एसण अभिग्गहीया भत्तं च अलेवडं तस्स ॥ ५७७ ॥ गच्छा विणि-क्खमित्ता पडिवज्जइ मासियं महापडिमं । दत्तेगा भोयणस्सा पाणस्सवि तत्थ एगं भवे ॥५७८॥ जत्थऽत्थमेइ सूरो न तओ ठाणा पयंपि संचलइ । नाएगराइवासी एगं च दुगं च अण्णाए ॥५७९॥ दुट्ठाण हत्थिमाईण नो भएणं पयंपि ओसरइ । एमाइनियमसेवी विहरइ जाऽखण्डिओ मासो ॥ ५८० ॥ पच्छा गच्छमुवेई एव दुमासी तिमासि जा सत्त । नवरं दत्ती वड्ढइ जा सत्त उ सत्त-मासीए ॥ ५८१ ॥ तत्तो य अट्ठमीया भवई इह पढम सत्तराइंदी । तीइ चउत्थचउत्थेणऽपा-णएणं अह विसेसो ॥ ५८२ ॥ उत्ताणगपासल्ली नेसज्जी वावि ठाण ठाइत्ता । सहउवसग्गे घोरे

दिव्वाई तत्थ अविकंपो ॥ ५८३ ॥ दोच्चावि एरिसच्चिय बहिया गामाइयाण नवरं तु । उक्कुडल-
गंडसाई दण्डाययउव्व ठाइत्ता ॥ ५८४ ॥ तच्चावि एरिसच्चिय नवरं ठाणं तु तस्स गोदोही ।
वीरासणमहवावि चिट्ठिज्जा अंबखुज्जो वा ॥ ५८५ ॥ एमेव अहोराई छट्ठं भत्तं अपाणगं नवरं ।
गामनगराण बहिया वग्घारियपाणिए ठाणं ॥ ५८६ ॥ एमेव एगराई अट्ठमभत्तेण ठाण बाहि-
रओ । ईसीपब्भारगए अणिमिसनयणेगदिट्ठीए ॥ ५८७ ॥ साहट्टु दोवि पाए वग्घारियपाणि
ठायए ठाणं । वाघारियलंबियभुओ अंते य इमीइ लद्धित्ति ॥ ५८८ ॥

'मासाई'त्यादि गाथापञ्चदशकं, 'मासादयः' मासप्रभृतयः 'सप्तान्ताः' सप्तमासावसाना एकैकमासवृद्ध्या सप्त प्रतिमा भवन्ति, तत्र मासः परिमाणमस्या मासिकी प्रथमा एवं द्विमासिकी द्वितीया त्रिमासिकी तृतीया यावत् सप्तमासिकी सप्तमी, 'पढमा बिइ तइय सत्तराइदिण'त्ति सप्तानां प्रतिमाणामुपरि प्रथमा द्वितीया तृतीया च सप्त रात्रिदिनानि—रात्रिन्दिवानि प्रमाणतो यस्यां सा तथा प्रतिमा भवति, तदभिलापश्चै-वं—प्रथमा सप्तरात्रिन्दिवा द्वितीया सप्तरात्रिन्दिवा तृतीया सप्तरात्रिन्दिवा च, एताश्च तिस्रोऽपि क्रमेणाष्टमी नवमी दशमी चेति, 'अहराइ'त्ति अहोरात्रं परिमाणमस्याः साऽहोरात्रिकी एकादशी प्रतिमा, 'एगराइ'त्ति एका रात्रिर्यस्यां सा एकरात्रिः एकरात्रिरेवैकरात्रिकी द्वादशी प्रतिमा, इत्येवं 'भिक्षुप्रतिमाणां' साधुप्रतिज्ञाविशेषाणां द्वादशकं संभवतीति ॥ ५७४ ॥ अथ य एताः प्रतिपद्यते तमाह—'पडिवज्जइ' इत्या-दिगाथात्रयं, प्रतिपद्यते—अभ्युपगच्छत्येताः—अनन्तरोक्ताः प्रतिमाः 'संहननधृतियुतः' तत्र संहननं—वज्रर्षभनाराचादेरन्यतरत् एतद्युक्तो ह्यत्यन्तं परीषहसहनसमर्थो भवति धृतिः—चित्तस्वास्थ्यं तद्युक्तश्च रत्यरतिभ्यां न बाध्यते, महासत्त्वः—सात्त्विकः स ह्यनुकूलप्रतिकूलोप-

सर्गेषु हर्षविषादौ न विधत्ते, 'भावितात्मा' सद्भावनाभावितान्तःकरणः प्रतिमानुष्ठानेन वा भावितात्मा, तद्भावना च तुलनापञ्चकेन
स्यात्, तद्यथा—"तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य । तुलणा पंचहा वुत्ता, पडिमं पडिवज्जओ ॥ १ ॥" [ तपसा सत्त्वेन सूत्रेण
एकत्वेन बलेन च । तुलना पञ्चधोक्ता प्रतिमां प्रतिपद्यमानस्य ॥ १ ॥] एतद्व्याख्या च प्रागेवोक्ता, कथं भावितात्मेत्याह—'सम्यक्'
यथाऽऽगमं, तथा 'गुरुणा' आचार्येणानुज्ञातः—अनुमतः, अथ गुरुरेव प्रतिपत्ता तदा व्यवस्थापिताचार्येण गच्छेन वाऽनुमत इति ॥५७५॥
तथा 'गच्छ एव' साधुसमुदायमध्य एव तिष्ठन् 'निर्मातः' आहारादिविषये प्रतिमाकल्पपरिकर्मणि परिनिष्ठितः, आह च—"पडिमाकप्पि-
यतुल्लो गच्छे चिय कुणइ दुविहपरिकम्मं । आहारोवहिमाइसु तहेव पडिवज्जई कप्पं ॥ १ ॥" [ प्रतिमाकल्पिकतुल्यो गच्छ एव करोति
द्विविधपरिकर्म । आहारोपध्यादिषु तथैव प्रतिपद्यते कल्पं ॥ १ ॥ ] आहारादिप्रतिकर्म चाग्रेतनगाथायां कथयिष्यते, परिकर्मपरिमाणं
चैवं—मासिक्यादिषु सप्तसु या यत्परिमाणा प्रतिमा तस्यास्तत्परिमाणमेव परिकर्म, तथा वर्षासु नैताः प्रतिपद्यते न च परिकर्म करोति, तथा
आद्यद्वयमेकत्रैव वर्षे, तृतीयचतुर्थ्यौ चैकैकस्मिन् वर्षे, अन्यासां तु तिसृणामन्यत्र वर्षे परिकर्म अन्यत्र वर्षे प्रतिपत्तिः, तदेवं नवभिर्वर्षैराद्याः
सप्त समाप्यन्त इति । अथ तस्य कियान् श्रुताभिगमो भवतीत्याह—'जा पुव्वे'त्यादि, यावत्पूर्वाणि दश 'असम्पूर्णानि' किञ्चिदूनानि, सम्पू-
र्णदशपूर्वधरो हि अमोघवचनत्वाद्धर्मदेशनया भव्योपकारित्वेन तीर्थवृद्धिकारित्वात्प्रतिमादिकल्पं न प्रतिपद्यते, 'भवेत्' स्यात् श्रुताधिगम
इति योगः, उत्कृष्टश्चायं जघन्यस्य वक्ष्यमाणत्वात्, अथ तमेवाह—नवमस्य पूर्वस्य—प्रत्याख्याननामकस्य तृतीयं वस्तु—आचाराख्यं तद्भा-
गविशेषं यावदिति वर्तते स्यात् अस्य जघन्यः—अल्पीयान् श्रुताधिगमः—श्रुतज्ञानं सूत्रतोऽर्थतश्च, एतत्श्रुतविरहितो हि निरतिशयज्ञानत्वात्का-
लादि न जानातीति ॥५७६॥ तथा व्युत्सृष्टः परिकर्माभावेन त्यक्तो ममत्वत्यागेन देहः—कायो येन सः तथा, 'उपसर्गसहो' दिव्यमानुषतैर-

श्चोपद्रवसोढा 'यथैव' यद्वदेव 'जिनकल्पी' जिनकल्पिकः तद्वदुपसर्गसह इत्यर्थः, 'एषणा' पिण्डग्रहणप्रकारः, सा च सप्तविधा— "संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥" [ असंसृष्टा संसृष्टा उद्धृता तथाऽल्पलेपिका चैव । अवगृहीता प्रगृहीता उज्झितधर्मा च सप्तमी ॥ १ ॥ ] इति वक्ष्यमाणस्वरूपा 'अभिगृहीता' अभिग्रहवती, अभिग्रहाश्चैवं—तासां सप्तानामेषणानां मध्ये आद्ययोर्द्वयोरग्रहणं पञ्चसु ग्रहणं, पुनरपि विवक्षितदिवसे अन्त्यानां पञ्चानां मध्ये द्वयोरभिग्रहः—एका भक्ते एका च पानके इति, तथा भक्तं च—अन्नं पुनरलेपकृतं—अलेपकारकं वल्लचनकादि 'तस्य' प्रतिमां प्रतिपत्तुकामस्य परिकर्म कुर्वतः, चशब्दादुपधिश्चास्य स्वकीयैषणाद्वयलब्ध एव, तदभावे यथाकृतोऽप्युचितप्राप्तिं यावत्स्यात्, जाते तूचिते तं व्युत्सृजति, उक्तं च—"उवगरणं सुद्धेसणमाणजुअं जमुचिअं सकप्पस्स । तं गिण्हइ तयभावे अहागडं जाव उचियं तु ॥ १ ॥ जाए उचिए य तयं वोसिरइ अहागडं विहाणेणं । इय आणानिरयस्सिह विन्नेयं तंपि तेग समं ॥ २ ॥" [ उपकरणं शुद्धैषणामानयुतं यदुचितं स्वकल्पस्य । तत् गृह्णाति यथाकृतं तदभावे यावदुचितं तु ॥ १ ॥ जाते उचिते च तत् व्युत्सृजति यथाकृतं विधानेन । इत्याज्ञानिरतस्येह विज्ञेयं तदपि तेन सदृशं ॥ २ ॥ ] कल्पोचितं चोपधिमुत्पादयति स्वकीयेनैषणाद्वयेन, एतच्च एषणाचतुष्टयेऽन्तिमं, एषणाचतुष्टयं पुनरिदं—कार्पासिकाद्युद्दिष्टमेव वस्त्रं ग्रहीष्यामि १ प्रेक्षितमेव २ परिभुक्तप्रायमेवोत्तरीयादितया ३ तदप्युज्झितधर्मकमेवेति ४ ॥ ५७५–५७६–५७७ ॥

अथैवं कृतपरिकर्मा यत्करोति तदाह—'गच्छात्' साधुसमूहाद्विनिष्क्रम्य—तं विमुच्येत्यर्थः, तत्र यद्याचार्यादिः प्रतिमाप्रतिपत्ता तदा अल्पकालिकं साध्वन्तरे स्वपदनिक्षेपं कृत्वा शुभेषु द्रव्यादिषु शरत्काले सकलसाध्वामन्त्रणक्षामणपूर्वकं, उक्तं च—"खामेइ तओ संघं सबालवुड्ढं जहोचियं एवं । अच्चंतं संविग्गो पुव्वविरुद्धे विसेसेणं ॥ १ ॥ जं किंचि पमाएणं न सुट्ठु भे वट्टियं मए पुव्विं । तं भे खामेमि

अहं निस्सङ्गो निक्कसाओत्ति ॥ २ ॥" [ क्षमयति ततः सङ्घं सबालवृद्धं यथोचितं एवं । अत्यन्तं संविग्नः पूर्वविरुद्धान् विशेषेण ॥ १ ॥ यत् किञ्चित् प्रमादेन न सुष्ठु भवतां वर्तितं मया पूर्वं । तद् भवतां क्षमयामि अहं निश्शल्यो निष्कषाय इति ॥ २ ॥ ] प्रतिपद्यते—अभ्युपगच्छति 'मासिकीं' मासप्रमाणां 'महाप्रतिमां' गुरुकप्रतिज्ञां, तत्र च दत्तिः—अविच्छिन्नदानरूपा 'एका' एकैव भोजनस्य—अन्नस्याज्ञातोञ्छरूपस्य उद्धृताद्युत्तरैषणापञ्चकोपात्तस्यालेपकारिणः कृपणादिभिरजिघृक्षितस्य एकस्वामिसत्कस्यैवागुर्विणीबालवत्सापीयमानस्तनीभिः एलुकस्यान्तः पादमेकं विन्यस्यापरं बहिर्व्यवस्थाप्य दीयमानस्य तथा 'पानस्यापि' पानकाहारस्य चैकैव 'तत्र' मासिक्यां प्रतिमायां दत्तिर्भवेदिति ॥ तथा 'यत्र' जलस्थलदुर्गादौ स्थितस्येति गम्यते 'अस्तमेति' पर्यन्तं याति 'सूर्ये' रविः 'न' नैव 'ततः' तस्मात्स्थानाज्जलादेः 'पदमपि' पादप्रमाणमपि क्षेत्रमास्तां दूरं 'सञ्चरति' गच्छति आदित्योदयं यावत्, तथा 'ज्ञातः' प्रतिमाप्रतिमाप्रतिपन्नोऽयमित्येवं जनेनावसितः सन्नेकरात्रवासी—एकत्र ग्रामादावहोरात्रमेवावतिष्ठते, न त्वधिकमित्यर्थः, तथा 'अज्ञातो' यत्र ग्रामादौ प्रतिमाप्रतिपन्नतया अविदितस्तत्र एकं वा—एकरात्रं द्विकं वा—रात्रिद्वयं वसति, न परत इति ॥ तथा 'दुष्टानां' मारकाणां हस्त्यादीनां आदिशब्दात्सिंहव्याघ्रादीनां च 'भयेन' मरणभीत्या 'पदमपि' पादविक्षेपमात्रमपि, किं पुनः दूरतः ?, नैवापसरति—अपगच्छति, दुष्टो हि मारणार्थमागच्छन्नपसृतेऽपि साधौ हरितादि विराधयिष्यतीत्यतो नापसरति, अदुष्टस्त्वपसृते साधौ मार्गेणैव गच्छति ततो हरितादिविराधना न स्यादित्यदुष्टादपसरतीति, 'एवमादिनियमसेवी' एतत्प्रभृतिकाभिग्रहानुपालकः सन् आदिशब्दाच्छायाया उष्णं उष्णाच्छायायां च नोपसर्पतीत्याद्यभिग्रहो विहरति—ग्रामानुग्रामं सञ्चरति यावदखण्डितः—परिपूर्णो मासो जात इति शेषः, आदिशब्दादन्येऽपि बहवो नियमविशेषाः प्रतिपत्तव्याः, यथा संस्तारकोपाश्रयादीनां याचनार्थं संशयितसूत्रार्थयोर्गृहादेर्वा प्रश्नार्थं तृणकाष्ठादीनामनुज्ञापनार्थं प्रश्नितानां सूत्रादीनां सकृद् द्विर्वा

कथनार्थमेव चायं प्रतिमाप्रतिपन्नो वक्ति न तु भाषान्तरमिति, तथा आगन्तुकागारविवृतगृहवृक्षमूललक्षण एव वसतित्रये वसति न त्वन्यत्र, तत्र आगन्तुकागारं-यत्र कार्पटिकादय आगत्य वसन्ति विवृतगृहं-यदधः कुड्याभावादुपरि चाच्छादनाभावादनावृतं वृक्षमूलं-करीरादितरुमूलं साधुवर्जनीयदोषरहितं, उक्तं च—"जायणपुच्छाणुन्नवणपुट्ठवागरणभासगो चेव। आगमणवियडगिहरुक्खमूलगावास-यतिगोत्ति ॥ १ ॥" [ याचनापृच्छानुज्ञापनपृष्टव्याकरणभाषक एव। आगमनविवृतगृहवृक्षमूलत्रयावासक इति ॥ १ ॥ ] तथा वह्नेर्न बिभेति-प्रदीप्तादप्युपाश्रयान्न निर्गच्छति, अथ कश्चिद् बाह्वादौ गृहीत्वाऽऽकर्षति तदा निर्यात्यपि, तथा चरणप्रविष्टं दारुकण्टकशर्करादिकं न स्फेटयति अक्षिगतं रेणुतृणमलादिकं च नापनयति, तथा करचरणमुखादिकमङ्गं प्रासुकजलेनापि न क्षालयति, तदन्यसाधवो हि पुष्टा-लम्बने पटादि प्रक्षालयन्त्यपीति ॥ ५७८-५७९-५८० ॥ पश्चात्-मासपूरणानन्तरं गच्छं-साधुसमूहमुपैति विभूत्या, तथाहि-गच्छस्थानासन्नग्रामे आगच्छत्यसौ, आचार्यास्तु तत्प्रवृत्तिमन्विच्छन्ति, ततो नृपादीनां निवेद्यते यथा परिपालितप्रतिमारूपमहातपाः साधुरत्रागतः, ततो नृपादिलोकैः श्रमणसङ्घेन चाभिनन्द्यमानस्तत्र प्रवेक्ष्यते तपोबहुमानार्थं तस्य तदन्येषां श्रद्धावृद्ध्यर्थं प्रवचनप्रभावनार्थं चेति, एवमाद्या उक्ता शेषाः षडतिदिशन्नाह-'एवं' अनेनैव क्रमेण द्वैमासिकी त्रैमासिकी यावत्सप्तमप्रतिमा सप्तमासिक्यन्ता, 'नवरं' केवलं प्रथमायाः-मासिक्याः प्रतिमायाः सकाशाद् द्वैमासिक्यादीनामयं विशेषः-यथा दत्तयस्तासु वर्धन्ते, तत्र द्वैमासिक्यां भक्तस्य पानस्य च प्रत्येकं दत्तिद्वयं त्रैमासिक्यां भक्तस्य पानस्य च प्रत्येकं दत्तित्रयं, एवं यावत्सप्तमासिक्यां भक्तस्य पानस्य च सप्त सप्त दत्तय इति ॥ ५८१ ॥ अथाष्टमीमाह—'ततश्च' सप्तम्या अनन्तरमष्टमी प्रथमसप्तरात्रिन्दिवा प्रतिमा भवति 'इह' प्रक्रमे, तस्यां प्रथमसप्त-रात्रिन्दिवायां चतुर्थचतुर्थेन-एकान्तरोपवासेन आसितव्यमिति शेषः, 'अपानकेन' पानकाहाररहितेन चतुर्विधाहाररहितेनेत्यर्थः, 'अ-

थे'त्ययं उक्तो वक्ष्यमाणश्च 'विशेषो' भेदः प्राक्तनप्रतिमाभ्यः, इह च पारणके आचाम्लं कर्तव्यं, दत्तिनियमस्तु नास्तीति ॥ तथा 'उत्तानक' ऊर्ध्वमुखशयितः 'पासल्ली'ति पार्श्वशयितः 'निसज्जी'ति निषद्यावान् समपुततयोपविष्टः 'वापी'ति विकल्पार्थः 'स्थानं' उक्तमेव कायचेष्टाविशेषरूपं 'स्थित्वा' कृत्वा ग्रामादिभ्यो वहिरिति शेषः, 'सहते' क्षमते 'उपसर्गान्' उपद्रवान् 'घोरान्' रौद्रान् 'दिव्यादीन्' देवकृतादीन्, आदिशब्दान्मानुपतैरश्चादिग्रहः, 'तत्र' तस्यां प्रतिमायामविकम्पो–मनःशरीराभ्यामचल इति ॥ ५८२–५८३ ॥ नवमीमाह—'द्वितीयाऽपि' द्वितीयसप्तरात्रिन्दिवाप्रतिमाऽपि 'ईदृश्येव' प्रथमसप्तरात्रिन्दिवप्रतिमासदृश्येव तपःपारणकसाधर्म्याद् ग्रामादिवहिर्वृत्तिसाधर्म्याच्च, अत एवाह—'वहिस्तादेव' वहिरेव ग्रामादिसन्निवेशविशेषाणां, नवरं–केवलमयं विशेषः, तुशब्दोऽवधारणे, स च योजित एव, 'उत्कटुको' भूमावन्यस्तपुततया उपविष्टः, तथा लगण्डं–दुःसंस्थितं काष्ठं तद्वच्छेते य एवंशीलोऽसौ लगण्डशायी, मस्तकपार्ष्णिकाभिरेव पृष्ठदेशेनैव वा स्पृष्टभूभागः, तथा दण्डवद्–यष्टिवदायतो–दीर्घो दण्डायतः–पादप्रसारणेन भूमिन्यस्तायतशरीरः स एव दण्डायतकः वाशब्दो विकल्पार्थः, स्थित्वा–अवस्थाय देवाद्युपसर्गान् सहत इति प्रक्रमः ॥ ५८४ ॥ दशमीमाह—'तृतीयाऽपि' तृतीयसप्तरात्रिन्दिवप्रतिमाऽपि 'ईदृश्येव' उक्तस्वरूपैव तपःपारणकग्रामादिवहिर्वृत्तिसाधर्म्यात्प्रथमरात्रिन्दिवप्रतिमातुल्यैवेत्यर्थः, 'नवरं' केवलं 'स्थानं' शरीरावस्थानं 'तस्य' प्रतिमाप्रतिपत्तुर्गोदोहीति–गोदोहकसमाकारत्वाद्गोदोहिका गोदोहनप्रवृत्तस्येव पुतयोः पार्ष्णिभ्यां संयोगे अग्रपादतलाभ्यामवस्थानक्रिया, सा विधेयेति शेषः, तथा वीराणां–दृढसंहननानामासनं वीरासनं, सिंहासनाद्यधिरूढस्य भूमिन्यस्तपादस्य सिंहासनाद्यपनयने सत्यचलितस्य तथैवावस्थानरूपं तदपि स्थानं, तस्येति प्रक्रमः, यद्वा वामपादो दक्षिणस्योरोरुपरि दक्षिणश्च पादो वामस्योरोरुपरि यत्र क्रियते दक्षिणकरतलस्योपरि वामतलं वामकरतलस्य चोपरि दक्षिणकरतलमुत्तानं नामिलमं च यत्र विधीयते

तद्वीरासनं 'अहवावि'त्ति अथवेति प्रकारान्तरोद्योतनार्थ अपिः समुच्चये 'तिष्ठेद्' अवतिष्ठेत् 'आम्रकुब्जो वा' आम्रफलवद्वक्राकारेणावस्थितः, एवमेतास्तिस्रोऽपि प्रथमसप्तरात्रिन्दिवाद्याः प्रतिमा एकविंशत्या दिवसैर्यान्तीति ॥ ५८५ ॥ एकादशीमाह—'एवमेव' अनन्तरोक्तनीत्या अहोरात्रिकी प्रतिमा भवति, नवरं—केवलं षष्ठं भक्तं—भोजनं वर्जनीयतया यत्र तत् षष्ठभक्तं—उपवासद्वयरूपं तपः, तत्र ह्युपवासद्वये चत्वारि भक्तानि वर्ज्यन्ते, एकाशनेन च तदारभ्यते तेनैव च निष्ठां यातीत्येवं षड्भक्तवर्जनरूपं तदिति, षष्ठमित्यत्र चानुस्वारोऽनागमिकः, अपानकं—पानकाहाररहितं तस्यां विधेममिति शेषः, तथा ग्रामनगरेभ्यो बहिस्तात् 'व्याघारितपाणिके' प्रलम्बितभुजस्य स्थानं—अवस्थानं भवति प्रतिमाप्रतिपन्नस्येति । इयं च अहोरात्रिकी प्रतिमा दिनत्रयेण याति अहोरात्रस्यान्ते षष्ठभक्तकरणात्, यदाह—'अहोराइया तिहिं, पच्छा छट्ठं करेइ'त्ति ॥ ५८६ ॥ द्वादशीमाह—एवमेव—अहोरात्रिकीवदेव च एकरात्रिकी प्रतिमा भवति, विशेषमाह—अष्टमभक्तेन—उपवासत्रयरूपेण पानकाहाररहितेन स्थानं—अवस्थानं तत्कर्तुर्बहिस्ताद् ग्रामादेः, तथाहि—ईषत्प्राग्भारगतः—ईषत्कुब्जो नद्यादिदुस्तटीस्थितो वाऽसौ स्यात्, तथाऽनिमिषनयनो—निर्निमेषनेत्रः, तथैकदृष्टिकः—एकपुद्गलगतदृष्टिर्यथास्थितगात्रो गुप्तसर्वेन्द्रिय इति । 'साहट्टु'त्ति संहृत्य द्वावपि 'पादौ' क्रमौ जिनमुद्रया व्यवस्थाप्येत्यर्थः व्याघारितपाणिः—वक्ष्यमाणार्थः 'ठायए'त्ति तिष्ठति करोति 'स्थानं' कायावस्थानविशेषं । अथ 'वाघारियपाणि'त्ति पदं सूत्रकृदेव व्याख्याति—'वाघारि'त्ति व्याघारितपाणिर्लम्बितभुजोऽवलम्बितबाहुरुच्यते, सम्यक् पालने चास्या यत् स्यात्तदाह—अन्ते च—सम्यक्पर्यन्तं नयने पुनरस्याः—एकरात्रिकीप्रतिमाया लब्धिः—लाभविशेषः स्यात्, आह च—"एगराइयं च णं भिक्खुपडिमं सम्मं अणुपालेमाणस्स इमे तओ ठाणा हियाए भवन्ति, तंजहा—ओहिनाणे वा समुपज्जेज्जा, मणपज्जवनाणे वा समुपज्जेज्जा, केवलनाणे वा असमुप्पण्णपुव्वे समुपज्जेज्जा" विराधने पुनः "उम्मायं वा लभेज्जा, दीह-

कालियं वा रोगायंकं पाउणेज्जा, केवलिपन्नत्ताओ धम्माओ भंसिज्जा" [एकरात्रिकीं च भिक्षुप्रतिमां सम्यगनुपालयत इमानि त्रीणि स्थानानि हिताय भवन्ति, तद्यथा-अवधिज्ञानं वा समुत्पद्येत मनःपर्यवज्ञानं वा समुत्पद्येत असमुत्पन्नपूर्वं वा केवलज्ञानं समुत्पद्येत ॥ उन्मादं वा लभेत दीर्घकालिकं वा रोगातङ्कं प्राप्नुयात् केवलिप्रज्ञप्तात् धर्मात् भ्रश्येत ] इतिशब्दः समाप्तौ, इयं च प्रतिमा रात्रेरनन्तरमष्टमकरणाच्चतूरात्रिन्दिवमाना स्यात्, यदाह-'एगराइया चउहिं, पच्छा अट्ठमं करेइ'त्ति । अत्र च 'साहट्टु दोवि पाए वाघारियपाणि ठायए ठाणं । वाघारियलंबियभुओ अंते य इमीय लद्धित्ति ॥ १ ॥" इयं गाथा केपुचित्सूत्रपुस्तकेपु न दृश्यत इति ॥ ५८८ ॥ अथेन्द्रियनिरोधमाह—

**फासण १ रसणं २ घाणं ३ चक्खू ४ सोयंति ५ इंदियाणेसिं । फास १ रस २ गंध ३ वण्णा ४ सद्दा ५ विसया विणिद्दिट्ठा ॥ ५८९ ॥**

स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं चेति इन्द्रियाणि पञ्च, स्पर्शो रसो गन्धो वर्णः शब्दश्चेति तेपामिन्द्रियाणां यथाक्रमं विपया विनिर्दिष्टाः, अत्र च गाथायां यद्यपीन्द्रियनिरोधवचनं नास्ति तथाऽपीन्द्रियनिरोधस्य प्रस्तुतत्वादेतेपु विपयेपु इन्द्रियाणामासक्तिर्वर्जनीयेत्यर्थो ज्ञेयः । अनियन्त्रितानि हीन्द्रियाणि पदे पदे क्लेशसागर एव पातयन्ति, यदभ्यधायि—"सक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः । कृपणपतङ्गो रूपे भ्रमरो गन्धेन च विनष्टः ॥ १ ॥ पञ्चसु सक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः । एकः पञ्चसु सक्तः प्रयाति भस्मान्ततां मूढः ॥ २ ॥ तुरगैरिव तरलतरैर्दुर्दान्तैरिन्द्रियैः समाकृष्य । उन्मार्गे नीयन्ते तमोघने दुःखदे जीवाः ॥ ३ ॥ इन्द्रियाणां जये तस्माद्यत्नः कार्यः सुबुद्धिभिः । तज्जयो येन भविनां, परत्रेह च शर्मणे ॥ ४ ॥ ५८९ ॥ अथ प्रतिलेखनामाह—

पडिलेहणाण गोसावरण्हउग्घाडपोरिसीसु तिगं । तत्थ पढमा अणुग्गय सूरे पडिक्कमणकरणाओ ॥ ५९० ॥ मुहपोत्ति १ चोलपट्टो २ कप्पातिगं ३–४–५ दो निसिज्ज ६–७ रयहरणं ८ । संथारु ९ त्तरपट्टो १० दस पेहाऽणुग्गए सूरे ॥५९१॥ उवगरणचउद्दसगं पडिलेहिज्जइ दिणस्स पहरतिगे । उग्घाडपोरिसीए उ पत्तनिज्जोगपडिलेहा ॥ ५९२ ॥ पडिलेहिऊण उवहिं गोसंमि पमज्जणा उ वसहीए । अवरण्हे पुण पढमं पमज्जणा तयणु पडिलेहा ॥ ५९३ ॥ दोन्नि य पमज्जणाओ उडुंमि वासासु तइय मज्झण्हे । वसहिं बहुसो पमज्जण अइसंघट्टऽन्नहिं गच्छे ॥ ५९४ ॥

प्रतिदिवसं साधुजनस्य प्रतिलेखनानां त्रिकं–तिस्रः प्रतिलेखनाः कर्तव्या भवन्ति, तद्यथा–एका 'गोस'त्ति प्रभाते द्वितीया 'अवरण्हे'त्ति अपराह्णे तृतीयप्रहरान्ते, तृतीया 'उग्घाडपोरिसि'त्ति उद्घाटपौरुष्यां समयभाषया पादोनप्रहरे, तत्र तासु तिसृषु प्रतिलेखनासु मध्ये प्रथमा तावत् प्रतिपाद्यते–यथा प्रभाते प्रतिक्रमणकरणानन्तरं अनुद्गते सूरे–सूर्योद्गमादर्वागमीषां दशानां स्थानानां प्रतिलेखना भवति ॥५९०॥ कानि पुनर्दश स्थानानीत्याह–मुखपोतिका १ चोलपट्टः २ कल्पत्रिकं–एक ऊर्णामयो द्वौ सूत्रमयौ ३–४–५ द्वे निषद्ये रजोहरणस्य, एका सूत्रमयी अभ्यन्तरनिषद्या ६ द्वितीया बाह्या पादप्रोञ्छनरूपा ७ रजोहरणं ८ संस्तारकः ९ उत्तरपट्टश्च १०, एतेषां दशानामपि स्थानानां 'प्रेक्षायां' प्रतिलेखनायां कृतायामुद्गच्छति सूरः, कोऽर्थः ?–एतेषु दशसु स्थानेषु प्रत्युपेक्षितेषु सत्सु यथा सूर्य उद्गच्छति तथा प्रतिलेखना कर्तव्येति, अन्ये त्वेकादशं दण्डकमाहुः, यदुक्तं निशीथचूर्णौ—'अन्ने भणंति–एक्कारसमो दंडओ'त्ति, कल्पचूर्णावप्युक्तं—'दंडओ एक्कारसमो'त्ति, शेषं च वसत्यादिकमुदिते एव सूर्ये प्रत्युपेक्ष्यते इति, इह च सूत्रे प्रत्युपेक्षणीयस्थानमानमेवोक्तं न तु प्रतिलेख-

नाक्रमः, तस्यागमेऽन्यथैवाभिधानात्, तदुक्तं निशीथचूर्णौ—"उवहिंमि पच्चूसे पढमं मुहपोत्ति तओ रयहरणं तओ अंतोनिसिज्जा तओ वाहिरनिसिज्जा चोलपट्टो कप्पउत्तरपट्टसंथारपट्टदंडगो य, एस कमो, अन्नहा उक्कमो, पुरिसेसु पुव्वं आयरियस्स, पच्छा परिन्ना तओ गिलाणसेहाइयाण, अन्नहा उक्कमो'त्ति अत्र 'परिन्नि'त्ति अनशनिन उपधिं आचार्योपधिप्रतिलेखनानन्तरं प्रत्युपेक्षते, शेषं सुगमं॥५९१॥ अथ द्वितीयतृतीयप्रतिलेखनास्वरूपमाह—दिनस्य प्रहरत्रिके अतिक्रान्ते सति उपकरणचतुर्दशकं स्थविरकल्पिकसत्कौघिकस्वरूपं प्रत्युपेक्षते, तत्र प्रथमं मुखवस्त्रिका ततश्चोलपट्टः ततो गोच्छकः ततः पात्रप्रतिलेखनिका ततः पात्रवन्धः ततः पटलानि ततो रजस्त्राणं ततः पात्रस्थापनं ततो मात्रकं ततः पतद्ग्रहः ततो रजोहरणं ततः कल्पत्रिकमिति, उपलक्षणमेतत्, ततोऽन्योऽप्यौपग्रहिकोपधिः प्रत्युपेक्षणीय इति । तथा उद्घाटपौरुष्यां सप्तविधपात्रनिर्योगप्रत्युपेक्षा भवति, तत्रासने समुपविष्टः प्रथमं मुखवस्त्रिकां प्रत्युपेक्ष्य गोच्छकं प्रत्युपेक्षते ततः पटलानि ततः पात्रकेसरिकां ततः पात्रवन्धं ततो रजस्त्राणं ततः पात्रं ततः पात्रस्थापनमिति, प्रत्युपेक्षणविधिस्तु विस्तरभयान्न लिख्यते तत ओघनिर्युक्तिपञ्चवस्तुकादेः स्वयमेवावसेयः ॥ ५९२ ॥ अत्रैव विशेषमाह—गोसे—प्रत्युपसि मुखवस्त्रिकादिलक्षणं पूर्वोक्तमुपधिं प्रत्युपेक्ष्य तदनु वसतेः—यतिनिवासलक्षणाया उपयुक्तेन साधुना प्रमार्जना विधेया, अपराह्णे पुनः प्रथमं वसतेः प्रमार्जना पश्चात्प्रत्युपेक्षणा उपधेरिति ॥ ५९३ ॥ यत्रापि वसतेर्जीवसंसक्तिर्न भवति तत्रापि ऋतुवद्धे काले द्वे प्रमार्जने विधेये प्रत्युपसि अपराह्णे च, द्वौ वारौ वसतिरवश्यतया प्रमार्जनीयेति भावः 'वर्षासु' वर्षाकाले पुनस्तृतीयाऽपि वसतेः प्रमार्जना भवति, द्वे पूर्वोक्ते एव तृतीया तु मध्याह्ने भवति, तथा ऋतुवद्धे वर्षासु वा कुन्थुप्रभृतिभिः प्राणिभिः संसक्तौ सत्यां वहुशोऽपि वसतिं प्रमार्जयेत्, चशब्दो विकल्पप्रदर्शनार्थः, विकल्पश्चायं—यदि संसक्ताऽपि वसतिः पूर्वोक्तप्रमार्जनाप्रमाणेनैवासंसक्ता भवति ततो नातिरिक्ता प्रमार्जना, नो चेत्तदा वहुशोऽपि प्रमा-

जेना कर्तव्या, अथ बहुशो वसतेः प्रमार्जने प्राणिनामतिसङ्घट्टो भवति तदाऽन्यत्र—वसत्यन्तरे ग्रामान्तरे वा गच्छंतीति ॥ ५९४ ॥ अथ गुप्तीराह—

**मणगुत्तिमाइयाओ गुत्तीओ तिन्नि हुंति नायव्वा । अकुसलनिवित्तिरूवा कुसलपवित्तिस्सरूवा य ॥ ५९५ ॥**

मनोगुप्त्यादयो—मनोगुप्तिवाग्गुप्तिकायगुप्तिलक्षणा गुप्तयस्तिस्रो भवन्ति ज्ञातव्याः, तासां स्वरूपमाह—'अकुशलनिवृत्तिरूपा' अकुशलानां—अशुभानां मनोवचनकायानां निवृत्तिः—निरोधस्तद्रूपाः 'कुशलप्रवृत्तिस्वरूपाश्च' कुशलानां—शुभानां मनोवचनकायानां प्रवृत्तिः—व्यापारणं तत्स्वरूपाश्च ता इति, अयमभिप्रायः—इह मनोगुप्तिस्त्रिधा-आर्त्तरौद्रध्यानानुबन्धिकल्पनानिचयवियोगः प्रथमा, शास्त्रानुसारिणी परलोकसाधिका धर्मध्यानानुबन्धिनी माध्यस्थ्यपरिणतिर्द्वितीया, कुशलाकुशलमनोवृत्तिनिरोधेन योगनिरोधावस्थाभाविनी स्वात्मारामता तृतीयेति, वाग्गुप्तिर्द्विभेदा—मुखनयनभ्रूविकाराङ्गुल्याच्छोटनोर्द्ध्वीभावकासितहुंकृतलोष्टक्षेपणादीनामर्थसूचिकानां चेष्टानां परिहारेणाद्य मया न वक्तव्यमित्यभिग्रहकरणमेका वाग्गुप्तिः, चेष्टाविशेषेण हि निजप्रयोजनानि सूचयतो मौनकरणाभिग्रहो निष्फल एवेति, तथा वाचनप्रच्छनपरपृष्टार्थव्याकरणादिषु लोकागमाविरोधेन मुखपोतिकाच्छादितमुखकमलस्य भाषमाणस्यापि वाग्वृत्तेर्नियन्त्रणं द्वितीया वाग्गुप्तिः, आभ्यां भेदाभ्यां वाग्गुप्तेः सर्वथा वाग्निरोधः सम्यग्भाषणं च स्वरूपं प्रतिपादितं भवति, भाषासमितौ तु सम्यग्वाक्प्रवृत्तिरेवेति वाग्गुप्तिभाषासमित्योर्भेदः, यदाहुः—"समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भयणिज्जो । कुसलवयमुदीरंतो जं वइगुत्तोवि समिओऽवि ॥ १ ॥" [ समितो नियमाद् गुप्तो गुप्तः समितत्वे भजनीयः । कुशलवच उदीरयन् यद् वचोगुप्तोऽपि समितोऽपि ॥ १ ॥]

कायगुप्तिर्द्वेधा—चेष्टानिवृत्तिलक्षणा यथागमचेष्टानियमलक्षणा च, तत्र दिव्यमानुषाद्युपसर्गसद्भावेऽपि क्षुत्पिपासादिपरीषहादिसम्भवेऽपि च यत्कायोत्सर्गकरणादिना कायस्य निश्चलताकरणं सर्वयोगनिरोधावस्थायां च सर्वथा यत्कायचेष्टानिरोधनं सा प्रथमा कायगुप्तिः, तथा गुरुप्रच्छनशरीरसंस्तारकभूम्यादिप्रतिलेखनप्रमार्जनादिसमयोक्तक्रियाकलापपुरःसरं शयनादि साधुना विधेयं, ततः शयनासननिक्षेपादानादिषु स्वच्छन्दचेष्टापरिहारेण नियता या कायचेष्टा सा द्वितीया कायगुप्तिरिति ॥ ५९५ ॥ इदानीमभिग्रहानाह—

**दव्वे खित्ते काले भावे य अभिग्गहा विणिद्दिट्ठा। ते पुण अणेगभेया करणस्स इमं सरूवं तु ॥ ५९६ ॥**

द्रव्ये क्षेत्रे काले भावे वाऽभिग्रहा विनिर्दिष्टाः—कथिताः जिनैः, ते पुनः सर्वेऽप्यनेकभेदाः, यथा त्रैलोक्यस्वामिना श्रीमन्महावीरेण छद्मस्थचर्यायां विहरता कौशाम्ब्यां गृहीताः, तत्र द्रव्याभिग्रहो यद्यहं कुल्माषवाकुलान् सूर्पैककोणे स्थितान् लप्स्ये तथा क्षेत्राभिग्रहो निगडनियन्त्रितचरणा यद्येकं पादमुदुम्बरस्य मध्ये द्वितीयं च बहिस्तात् दात्री करिष्यति तथा कालाभिग्रहो यदि दिवसद्वितीयपौरुष्यां अतिक्रान्तायां दास्यति तथा भावाभिग्रहो यदि मुण्डितशिरा रुदती सती सा दास्यति तदाऽहं भिक्षां गृहीष्यामि नान्यथेति, एवंविधाभिग्रहैर्भगवतः षण्मासाः पञ्चदिवसोनास्तपस्यतः सञ्जाताः इत्यनया दिशा द्रव्याद्यभिग्रहा विज्ञेयाः ॥ करणस्येदं—उक्तप्रकारेण स्वरूपमिति, अस्यापि करणस्य सप्ततिभेदान् श्रीगुरवः कथयन्ति, ते चैवं—आधाकर्मादयो द्विचत्वारिंशदपि दोषाः पिण्डशय्यावस्त्रपात्रलक्षणवस्तुचतुष्टयविषयत्वेन चत्वार एव गण्यन्ते समितयः पञ्च भावना द्वादश प्रतिमा अपि द्वादश इन्द्रियनिरोधाः पञ्च प्रतिलेखनाः पञ्चविंशतिः गुप्तयस्तिस्रः अभिग्रहाश्चत्वार इति सर्वमीलने च सप्ततिः ॥ ननु चरणकरणयोः कः प्रतिविशेषः?, उच्यते, नित्यानुष्ठानं चरणं यत्तु

प्रयोजने आपन्ने क्रियते तत्करणमिति, तथा च व्रतादि सर्वकालमेव चर्यते, न पुनर्व्रतशून्यः कश्चित्काल इति, पिण्डविशुद्ध्यादयस्तु प्रयोजन एवापन्नेऽनुष्ठीयन्ते इति ॥ ५९६ ॥ ६७ ॥ सम्प्रति 'जङ्घाविज्जाचारणगमणसत्ति'त्ति अष्टषष्टं द्वारमाह—

**अइसयचरणसमत्था जंघाविज्जाहिं चारणा मुणओ । जंघाहिं जाइ पढमो निस्सं काउं रविकरेऽवि ॥ ५९७ ॥ एगुप्पाएण गओ रुयगवरंमि य तओ पडिनियत्तो । बीएणं नंदीसरंमि एइ तइएण समएणं ॥ ५९८ ॥ पढमेण पंडगवणं बीउप्पाएण नंदणं एइ । तइउप्पाएण तओ इह जंघाचारणो एइ ॥ ५९९ ॥ पढमेण माणुसोत्तरनगं तु नंदीसरं तु बीएणं । एइ तओ तइएणं कयचेइयवंदणो इहयं ॥ ६०० ॥ पढमेण नंदणवणे बीउप्पाएण पंडगवणंमि । एइ इहं तइएणं जो विज्जाचारणो होइ ॥ ६०१ ॥**

चरणं—गमनं तद्विद्यते येषां ते चारणाः, 'ज्योत्स्नादिभ्योऽण्' इति (पा० ५—२—१३ वा०) मत्वर्थीयोऽण् प्रत्ययः, तत्र गमनमन्येषामपि मुनीनामस्ति ततो विशेषणान्यथानुपपत्त्या चरणमिह विशिष्टं गमनमागमनं चाभिगृह्यते, अत एवातिशायने मत्वर्थीयोऽयं, यथा रूपवती कन्येत्यत्र, ततोऽतिशयचरणसमर्था—अतिशयगमनागमनलब्धिसम्पन्नाश्चारणाः, ते च द्विभेदाः—जङ्घाचारणा विद्याचारणाश्च, तत्र ये चारित्रतपोविशेषप्रभावतः समुद्भूतगमनागमनविषयलब्धिसम्पन्नास्ते जङ्घाचारणाः, ये पुनर्विद्यावशतः समुत्पन्नगमनागमनलब्धयस्ते विद्याचारणाः, जङ्घाचारणा रुचकवरद्वीपं यावद्गन्तुं समर्थाः विद्याचारणाश्च नन्दीश्वरं, तत्र जङ्घाचारणा यत्र कुत्रापि गन्तुमिच्छवस्तत्र रविकरानपि निश्रीकृत्य गच्छंति, ॥५९७॥ विद्याचारणास्त्वेवमेव, जङ्घाचारणश्च रुचकवरद्वीपं गच्छन्नेकेनैवोत्पातेन गच्छति प्रतिनिवर्तमानस्त्वेकेनोत्पातेन

नन्दीश्वरमायाति द्वितीयेन स्वस्थानमिति त्रय उत्पाताः, ॥५९८॥ यदि पुनर्मेरुशिखरं जिगमिषुस्तदा प्रथमेनैवोत्पातेन पण्डकवनमधिरोहति, प्रतिनिवर्त्तमानस्त्वेकेनोत्पातेन नन्दनवनमागच्छति द्वितीयेन स्वस्थानमिति, जङ्घाचारणो हि चारित्रातिशयप्रभावतो भवति, ततो लब्ध्युपजीवने औत्सुक्यभावतः प्रमादसम्भवाच्चारित्रातिशयनिबन्धना लब्धिरपहीयते, ततः प्रतिनिवर्तमानो द्वाभ्यामुत्पाताभ्यां स्वस्थानमायाति ॥५९९॥ विद्याचारणः पुनः प्रथमेनोत्पातेन मानुषोत्तरपर्वतं गच्छति, द्वितीयेन तु नन्दीश्वरं, तत्र च गत्वा चैत्यानि वन्दते, ततः प्रतिनिवर्तमानस्त्वेकेनैवोत्पातेन स्वस्थानमायाति, तथा मेरुं गच्छन् प्रथमेनोत्पातेन नन्दनवनं गच्छति द्वितीयेन पण्डकवनं, तत्र चैत्यानि वंदित्वा ततः प्रतिनिवर्तमान एकेनैवोत्पातेन स्वस्थानमायाति, ॥६००॥ विद्याचारणो हि विद्यावशात् भवति, विद्या च परिशील्यमाना स्फुटा स्फुटतरोपजायते, ततः प्रतिनिवर्त्तमानस्य शक्त्यतिशयसंभवात् एकेनैवोत्पातेन स्वस्थानागमनमिति, एतच्च चारणभेदद्वयमुपलक्षणं, अन्येऽपि बहवश्चारणा भवन्ति, तद्यथा—आकाशगामिनः पर्यङ्कासनसन्निविष्टाः कायोत्सर्गस्थिता वा पादोत्क्षेपनिक्षेपरहिता व्योमचारिणः, अपरे वापीसरित्समुद्रादिषु जलमुपेत्याप्कायिकजीवानविराधयन्तो जले भूमाविव पादोत्क्षेपनिक्षेपकुशला जलचारणाः, अपरे भुव उपरि चतुरङ्गुलप्रमिते आकाशे जङ्घोत्क्षेपनिक्षेपनिपुणा जङ्घाचारणाः, अन्ये नानाद्रुमलतागुल्मपुष्पाण्युपादाय पुष्पसूक्ष्मजीवानविराधयन्तः कुसुमदलपटलमवलम्बमानाः पुष्पचारणाः, अपरे चतुर्योजनशतोच्छ्रितस्य निषधस्य नीलस्य च गिरेष्टङ्कच्छिन्नां श्रेणिमुपादायोपर्यधो वा पादपूर्वकं उत्तरणावतरणनिपुणाः श्रेणिचारणाः, अन्येऽग्निशिखामुपादाय तेजस्कायिकानविराधयन्तः स्वयमदह्यमानाः पादविहारनिपुणा अग्निशिखाचारणाः, अपरे धूमवर्त्तिं तिरश्चीनामूर्द्ध्वगामिनीं वाऽऽलम्ब्यास्खलितगमनास्कन्दिनो धूमचारणाः, कुब्जवृक्षान्तरालभाविनभःप्रदेशेषु कुब्जवृक्षादिसम्बद्धमर्कटकतन्त्वालम्बनतः पादोत्क्षेपनिक्षेपक्षमा मर्कटकतन्तूनच्छिदन्तो यान्तो मर्कटकतन्तुचारणाः, चन्द्रार्कग्रहनक्षत्राद्य-

न्यतमज्योतीरश्मिसम्बन्धेन भुवीव चरणचङ्क्रमणप्रवणा ज्योतीरश्मिचारणाः, प्रतिलोमानुलोमवृत्तिषु नानादिग्मुखोन्मुखेषु मारुतेषु तत्प्रदेशश्रेणिमुपादाय गतिमस्खलितक्रमविन्यासामास्कन्दन्तो वायुचारणाः, परे नीहारमवष्टभ्याप्कायिकजीवपीडामजनयन्तो गतिमसङ्गां कुर्वाणा नीहारचारणाः, एवमादयोऽन्येऽपि जलदचारणावश्यायचारणफलचारणादयो वक्तव्याः ॥ ६०१ ॥ ६८ ॥ इदानीं 'परिहारविसुद्धितवो'त्ति एकोनसप्ततितमं द्वारमाह—

परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं ॥ ६०२ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ । अट्ठममिहमुक्कोसो एत्तो सिसिरे पवक्खामि ॥ ६०३ ॥ सिसिरे तु जहन्न तवो छट्ठाई दसमचरमगो होइ । वासासु अट्ठमाई बारसपज्जंतगो नेओ ॥ ६०४ ॥ पारणगे आयामं पंचसु गहो दोसुऽभिग्गहो भिक्खे । कप्पट्ठियावि पइदिण करेंति एमेव आयामं ॥ ६०५ ॥ एवं छम्मासतवं चरिउं परिहारिया अणुचरंति । अणुचरगे परिहारियपरिट्ठिए जाव छम्मासा ॥ ६०६ ॥ कप्पट्ठिओऽवि एवं छम्मासतवं करेइ सेसा उ । अणुपरिहारियभावं वयंति कप्पट्ठियत्तं च ॥ ६०७ ॥ एवं सो अट्ठारसमासपमाणो य वन्निओ कप्पो । संखेवओ विसेसो विसेससुत्ताउ नायव्वो ॥ ६०८ ॥ कप्पसम्मत्तीएँ तयं जिण-

१ एगो वायणायरिओ चउरो तविणो तदणुचरा चउरो । मुणिनवगं निगच्छइ परिहारविसुद्धिचरणाय ॥ १ ॥ इत्यविवृता गाथा क्वचिट्टीकापुस्तकादर्शे सोपयोगा च ।

**कप्पं वा उविंति गच्छं वा। पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥ ६०९ ॥ तित्थयरसमीवासेवगस्स पासे व नो व अन्नस्स। एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥ ६१० ॥**

'परी'त्यादिगाथानवकं, परिहरणं परिहारः—तपोविशेषस्तेन चरन्तीति पारिहारिकाः, ते द्विधा—निर्विशमानका निर्विष्टकायिकाश्च, तत्र निर्विशमानका—विवक्षिततपोविशेषासेवकाः निर्विष्टकायिकाः—आसेवितविवक्षिततपोविशेषाः, इह च नवको गणः—चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिण एकः कल्पस्थितो वाचनाचार्यः, यद्यपि च सर्वेऽपि श्रुतातिशयसंपन्नास्तथापि कल्पत्वात्तेषामेकः कश्चित् कल्पस्थितोऽवस्थाप्यते, तेषां च परिहारिकाणां निर्विशमाननिर्विष्टकायिकानां तपस्त्रिधा—जघन्यं मध्यममुत्कृष्टं च, तच्च त्रिविधमपि शीतकाले उष्णकाले वर्षाकाले च प्रत्येकं भणितं धीरैः—तीर्थकृद्भिरिति ॥६०२॥ तत्र ग्रीष्मकाले तप आह—'तत्र' तेषु त्रिषु कालेषु मध्ये ग्रीष्मे—उष्णकालेऽतिरूक्षत्वाज्जघन्यं तपश्चतुर्थं—एक उपवासः मध्यमं पुनः षष्ठं—द्वावुपवासौ अष्टमं—त्रय उपवासा उत्कृष्टं तपो भवति, तपःशब्दस्य सूत्रे सर्वत्र प्राकृतत्वात् पुंस्त्वं, इत ऊर्द्ध्वं शिशिरे—शीतकाले तपः प्रवक्ष्यामि ॥ ६०३ ॥ तदेवाह—शिशिरे—शीतकाले ग्रीष्मतः किञ्चित्साधारणे पुनर्जघन्यादि—जघन्यमध्यमोत्कृष्टं यथाक्रमं षष्ठादिदशमपर्यन्तं तपो भवति, कोऽर्थः ?—जघन्यं षष्ठं मध्यममष्टमं उत्कृष्टं दशममुपवासचतुष्टयलक्षणमिति, तथा वर्षासु साधारणे कालेऽष्टमादिद्वादशपर्यन्तं क्रमेण जघन्यमध्यमोत्कृष्टं तपो ज्ञेयं, कोऽर्थः ?—जघन्यं अष्टमं मध्यमं दशमं उत्कृष्टं च द्वादशमुपवासपञ्चकलक्षणं तप इति ॥६०४॥ पारणके त्रिष्वपि कालेषु—ग्रीष्मशीतवर्षालक्षणेषु तेषामाचाम्लं भवति, तथा संसृष्टादयः सप्त भिक्षा भवन्ति, तत्र पञ्चसु उत्तरासु—उद्धृतादिषु ग्रहो—ग्रहणं, संसृष्टासंसृष्टे आद्ये द्वे भिक्षे वर्जयित्वा उद्धृतादयः पञ्चैव ग्रहीतव्या इत्यर्थः, पुनरपि विवक्षितदिनेऽन्यानां पञ्चानां मध्ये द्वयोरभिग्रहः—अद्य मया द्वे एव विवक्षिते भिक्षे ग्राह्ये इत्येवंस्वरूपः, तत्राप्येका भक्ते एका

च पानके इति, इदं चतुर्णां पारिहारिकाणां तपः; ये तु कल्पस्थितादयः पञ्च एको वाचनाचार्यश्चत्वारश्चानुचारिणः, ते सर्वेऽपि एवमेव—पूर्वोक्तभिक्षाभिग्रहयुक्ताः सन्तः प्रतिदिनमाचाम्लं कुर्वन्तीति ॥ ६०५ ॥ एवं षण्मासान् तपश्चरित्वा पारिहारिका अनुचरन्ति—अनुचरा भवन्ति, वैयावृत्त्यकरा इत्यर्थः, ये चानुचरका आसन् ते पारिहारिकतपसि परि—सामस्त्येन स्थिता भवन्ति यावत् षण्मासाः, अयमर्थः—ये पूर्वमनुचारिण आसन् ते पूर्वोक्तप्रकारेणैव षण्मासान् यावत् निर्विशमानका भवन्ति, ये च पूर्वं तपःप्रविष्टा आसन् तेऽनुचारिणो भवन्ति ॥ ६०६ ॥ मासद्वादशकानन्तरं कल्पस्थितोऽपि—वाचनाचार्योऽप्येवं—पूर्वोक्तन्यायेन षण्मासान् यावत् परिहारिकतपः करोति, शेषास्तु अष्टौ अनुपारिहारिकभावं—वैयावृत्त्यकरत्वं कल्पस्थितत्वं च—वाचनाचार्यत्वं व्रजन्ति, शेषाणामष्टानां मध्ये सप्त वैयावृत्त्यकरा भवन्ति एकस्तु वाचनाचार्य इत्यर्थः ॥ ६०७ ॥ एवमसौ कल्पोऽष्टादशमासप्रमाणो वर्णितः सङ्क्षेपतः, यस्त्वत्र विशेषः कश्चित् स विशेषसूत्रात् —कल्पादेर्ज्ञातव्यः ॥ ६०८ ॥ कल्पसमाप्तौ च यत्कर्तव्यं तदाह—'कप्पसम्मत्तीए' इत्यादि गाथापूर्वार्द्धं, कल्पस्य—पारिहारिकानुष्ठानरूपस्य समाप्तौ 'तयं'ति तकं तमेव पारिहारिककल्पं जिनकल्पं वा उपयान्ति—प्रतिपद्यन्ते गच्छं वा अनुसरन्ति । परिहारविशुद्धिका हि द्विविधाः—इत्वरा यावत्कथिकाश्च, तत्र ये कल्पसमाप्त्यनन्तरं तमेव कल्पं गच्छं वा समुपयान्ति ते इत्वराः, ये पुनः कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपद्यन्ते ते यावत्कथिकाः, उक्तं च—"इत्तरिय थेरकप्पे जिणकप्पे आवकहिय"त्ति, [ इत्वराः स्थविरकल्पे यावत्कथिका जिनकल्पे ] अत्र स्थविरकल्पग्रहणमुपलक्षणं, स्वकल्पे चेति द्रष्टव्यं, इह चेत्वराणां कल्पप्रभावादेव देवमानुषतिर्यग्योनिककृता उपसर्गाः सद्योघातिन आतङ्का अतीवाविषह्याश्च वेदना न प्रादुर्भवन्ति, यावत्कथिकानां तु सम्भवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः सम्भवन्तीति, उक्तं च—"इत्तरियाणुवसग्गा आयंका वेयणा य न

हवंति । आवकहियाण भइया" इति [ इत्वराणामुपसर्गा आतङ्का वेदनाश्च न भवन्ति । यावत्कथिकानां भक्ताः ] अथायं कल्पो यस्य समीपे प्रतिपद्यते तं सार्धगाथया प्राह—'पडिवज्जे'त्यादि प्रतिपद्यमानकाः—पारिहारिककल्पं प्रतिपत्तुकामाः पुनर्जिनसकाशे—तीर्थकरपार्श्वे प्रतिपद्यन्ते, तीर्थकरसमीपासेवकस्य वा पार्श्वे, येनैतत्तपस्तीर्थकरसमीपे प्रतिपन्नपूर्वं भवति तत्सकाशे वा प्रतिपद्यन्ते इत्यर्थः, एतद्द्वयं मुक्त्वा न पुनरन्यस्य पार्श्वे प्रतिपत्तिरिति, एतेषां यच्चरणं—चारित्रं तत्परिहारविशुद्धिकमभिधीयते, परिहारेण—तपोविशेषेण विशुद्धिः—निर्मलता यस्मिन् चारित्रे इति व्युत्पत्तेः ६०९-१०। अथैते परिहारविशुद्धिकाः कस्मिन् क्षेत्रे काले वा सम्भवन्ति ?, उच्यते, इह क्षेत्रादिनिरूपणार्थं बहूनि द्वाराणि प्रवचने निरूप्यन्ते अस्माभिस्तु ग्रन्थगौरवभीरुभिर्विनेयजनानुग्रहाय कानिचिद्दर्श्यन्ते—(ग्रन्थाग्रं ६०००) तत्र क्षेत्रद्वारे द्विधा मार्गणा—जन्मतः सद्भावतश्च, तत्र यत्र क्षेत्रे जन्म तत्र जन्मतो मार्गणा, यत्र च कल्पं प्रतिपद्यते तत्र सद्भावतः, तत्र जन्मतः सद्भावतश्च पञ्चसु भरतेषु पञ्चसु चैरवतेषु प्राप्यन्ते नतु महाविदेहेषु, न चैतेषां संहरणमस्ति येन जिनकल्पिका इव संहरणतः सर्वासु कर्मभूमिष्वकर्मभूमिषु वा प्राप्येरन्, उक्तं च—'खेत्ते भरहेरवएसु होंति संहरणवज्जिया नियमा'। [ क्षेत्रे भरतैरवतयोर्भवन्ति संहरणवर्जिता नियमात् ।] १ । कालद्वारे अवसर्पिण्यां तृतीये चतुर्थे वाऽरके जन्म सद्भावः पञ्चमेऽपि, उत्सर्पिण्यां द्वितीये तृतीये चतुर्थे वा जन्म सद्भावः पुनस्तृतीये चतुर्थे वा, उक्तं च—' ओसप्पिणीए दोसुं जम्मणओ तीसु संतिभावे य । उस्सप्पिणि विवरीओ जम्मणओ संतिभावे य ॥ १ ॥" [ अवसर्पिण्यां द्वयोर्जन्मतस्तिसृषु सद्भावे च । उत्सर्पिण्यां विपरीतो जन्मतः सद्भावतश्च ॥ १ ॥ ] नोत्सर्पिण्यवसर्पिणीरूपे तु चतुर्थारकप्रतिभागकाले न सम्भवन्त्येव, महाविदेहक्षेत्रे तेषामसम्भवात् २ । तीर्थद्वारे परिहारविशुद्धिको नियमतस्तीर्थे प्रवर्तमान एव सम्भवति न तूच्छेदे नानुत्पत्त्या वा तदभावे जातिस्मरणादिना, उक्तं च—"तित्थेत्ति नियमओच्चिय होइ स तित्थंमि न उण तदभावे । विगएऽणु-

त्पण्णे वा जाईसरणाइएहिं तु ॥ १ ॥" [ तीर्थे इति नियमत एव भवति स तीर्थे नतु तदभावे । विगतेऽनुत्पन्ने वा जातिस्मरणादिकैस्तु ॥ १ ॥ ] ३ । पर्यायद्वारे पर्यायो द्विधा—गृहस्थपर्यायो यतिपर्यायश्च, एकैकोऽपि द्विधा—जघन्य उत्कृष्टश्च, तत्र गृहस्थपर्यायो जघन्य एकोनत्रिंशद्वर्षाणि यतिपर्यायो विंशतिः, द्वावपि चोत्कर्षतो देशोनपूर्वकोटीप्रमाणौ, उक्तं च पञ्चवस्तुके—"एयस्स एस नेओ गिहिपरियाओ जहन्न गुणतीसा । जइपरियाओ वीसा दोसुवि उक्कोस देसूणा ॥ १ ॥" [ एतस्यैष ज्ञेयो गृहिपर्यायो जघन्यत एकोनत्रिंशत् यतिपर्यायो विंशतिः द्वयोरप्युत्कर्षतो देशोना (पूर्वकोटी) ॥ १ ॥ ] यत्पुनरत्र सूत्रे—"जम्मेण तीसवरिसो परियाएण गुणवीसवरिसो य । परिहारं पट्ठविउं कप्पइ मणुओ हु एरिसओ ॥ १ ॥" इत्युक्तं तदसङ्गतमिव लक्ष्यते, कल्पादिभिर्व्यभिचारात्, यदुक्तं कल्पभाष्ये—"गिहिपरियाए जहन्नओ गुणतीसा । जइपरियाए वीसा दोसुं उक्कोसदेसूणा ॥ १ ॥" [ गृहिपर्याये जघन्यत एकोनत्रिंशत् यतिपर्याये विंशतिः द्वयोरुत्कर्षतो देशोना ॥ १ ॥ ] ४ । आगमद्वारे अपूर्वमागमं स नाधीते, यस्मात्तं कल्पमधिकृत्य गृहीतोचितयोगाराधनत एव स कृतकृत्यतां भजते, पूर्वाधीतं विश्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनाः सम्यक्प्रायोऽनुस्मरति, आह च—"अप्पुव्वं नाहिज्जइ आगममेसो पडुच्च तं कप्पं । जमुचियपगहियजोगाराहणओ एस कयकिच्चो ॥ १ ॥ पुव्वाहीयं तु तयं पायं अणुसरइ निच्चमेवेसो । एगग्गमणो सम्मं विस्सोयसियाएँ खयहेऊ ॥ २ ॥" [ अपूर्वं नाधीते आगममेष प्रतीत्य तं कल्पं । यदुचितप्रगृहीतयोगाराधनात एष कृतकृत्यः ॥१॥ पूर्वाधीतं तु तं नित्यमेवैषोऽनुस्मरति । एकाग्रमनाः सम्यक् विस्रोतसिकायाः क्षयहेतोः ॥ २ ॥ ] ५ । वेदद्वारे प्रवृत्तिकाले वेदः पुरुषवेदो वा भवेन्नपुंसकवेदो वा, न स्त्रीवेदः, स्त्रियाः परिहारविशुद्धिकल्पप्रतिपत्त्यसम्भवात्, अतीतनयमधिकृत्य पुनः पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेदवेदो वा, तत्र सवेदः श्रेणिप्रतिपत्त्यभावे उपशमश्रेणिप्रतिपत्तौ क्षपकश्रेणिप्रतिपत्तौ वा त्ववेदः, उक्तं च—"वेदो

पविसिकाले इत्थीवज्जो उ होइ एगयरो । पुव्वपडिवन्नगो पुण होइ सवेदो अवेदो वा ॥ १ ॥" [ वेदः प्रवृत्तिकाले स्त्रीवर्जस्तु भवत्ये- कतरः । पूर्वप्रतिपन्नकः पुनर्भवति सवेदोऽवेदो वा ॥ १ ॥ ] ६ । कल्पद्वारे स्थितकल्प एवायं, नास्थितकल्पे, 'ठियकप्पंमि य नियमा' इति वचनात्, तत्र आचेलक्यादिषु दशस्वपि स्थानेषु ये स्थिताः साधवस्तत्कल्पः स्थितकल्प उच्यते, ये पुनश्चतुर्षु शय्यातरपिण्डादिष्व- वस्थितेषु कल्पेषु स्थिताः शेषेषु चाचेलक्यादिषु षट्सु अस्थितास्तत्कल्पोऽस्थितकल्पः ७ । लिङ्गद्वारे नियमतो द्विविधेऽपि लिङ्गे भवन्ति, तद्यथा–द्रव्यलिङ्गे भावलिङ्गे च, एकेनापि विना विवक्षितकल्पोचितसामाचार्ययोगात् ८ । ध्यानद्वारे धर्मध्यानेन प्रवर्धमानेन परिहारविशुद्धिकं कल्पं प्रतिपद्यते, पूर्वप्रतिपन्नः पुनरार्त्तरौद्रयोरपि भवति, केवलं प्रायेण निरनुबन्धः ९ । गणनाद्वारे जघन्यतस्त्रयो गणाः प्रतिपद्यन्ते उत्कर्षतः शतसङ्ख्याः, पूर्वप्रतिपन्ना जघन्यत उत्कर्षतो वा शतशः, पुरुषगणनया जघन्यतः प्रतिपद्यमानाः सप्तविंशतिः उत्कर्षतः सहस्रं, पूर्वप्रतिपन्नाः पुनर्जघन्यतः शतशः उत्कर्षतः सहस्रशः, आह च—"गणओ तिन्नेव गणा जहन्न पडिवत्ति सयस उक्कोसो । उक्कोस जहन्नेण य सयसोच्चिय पुव्वपडिवन्ना ॥ १ ॥ सत्तावीस जहन्ना सहस्समुक्कोसओ य पडिवत्ती । सयसो सहस्ससो वा पडिवन्न जहन्न उक्कोसो ॥ २ ॥" [ गणतस्त्रय एव गणा जघन्यतः प्रतिपत्तौ शतश उत्कृष्टतः । उत्कृष्टतो जघन्यतश्च शतशः एव पूर्वप्रतिपन्नाः ॥ १ ॥ सप्तविंशतिर्जघन्यतः सहस्रमुत्कृष्टतश्च प्रतिपत्तौ । शतशः सहस्रशो वा प्रतिपन्ना जघन्यात् उत्कृष्टाच्च ॥ २ ॥ ] अन्यच्च यदा पूर्वप्रतिप- न्नकल्पमध्यादेको निर्गच्छति अन्यः प्रविशति तदा न्यूनप्रक्षेपे प्रतिपत्तौ कदाचिदेकोऽपि भवति पृथक्त्वं वा, पूर्वप्रतिपन्नोऽप्येवं भजनया कदाचिदेकः प्राप्यते पृथक्त्वं वा, उक्तं च—"पडिवज्जमाण भयणाएँ होज्ज एकोऽवि ऊणपक्खेवो । पुव्वपडिवन्नयावि य भइया एको पुहुत्तं वा ॥ १ ॥" । [ प्रतिपद्यमाना भजनया ऊनप्रक्षेपे एकोऽपि भवेत् पूर्वप्रतिपन्ना अपि च भक्ताः एकः पृथक्त्वं वा ॥ १ ॥ ] १० ।

अभिग्रहद्वारे अभिग्रहाश्चतुर्विधाः—द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च, तत्र परिहारविशुद्धिकस्यैतेऽभिग्रहा न भवन्ति, यस्मादेतस्य कल्प एव यथोक्तस्वरूपोऽभिग्रहो वर्तते, उक्तं च—"दव्वाईय अभिग्गह विचित्तरूवा न हुंति पुण केई । एयस्स जाव कप्पो कप्पोच्चियऽभिग्गहो जेणं ॥ १ ॥ एयम्मि गोयराई नियमा नियमेण निरववादा य । तप्पालणं चिय परं एयस्स विसुद्धिठाणं तु ॥ २ ॥" [ द्रव्यादिका अभिग्रहा विचित्ररूपा न भवन्ति पुनः केचित् । एतस्य यावत् कल्पः कल्प एव येनाभिग्रहः ॥ १ ॥ एतस्मिन् गोचरादिनियमा नियमेन निरपवादाश्च तत्पालनमेव परमेतस्य विशुद्धिस्थानं ॥ २ ॥ ] ११ । प्रव्रज्याद्वारे नासावन्यं प्रव्राजयति कल्पस्थितिरियमितिकृत्वा, आह च—'पव्वावेइ न एसो अन्नं कप्पट्ठिइत्ति काऊणं ।' [ प्रव्राजयति नैषोऽन्यं कल्प इतिकृत्वा ] इति, उपदेशं पुनर्यथाशक्ति प्रयच्छति १२ । निष्प्रतिकर्मताद्वारे एष महात्मा निष्प्रतिकर्मशरीरोऽक्षिमलादिकमपि न कदाचिदपनयति, न च प्राणान्तिकेऽपि समापतिते व्यसने अपवादपदमासेवते, उक्तं च—"निप्पडिकम्मसरीरो अच्छिमलाईवि नावणेइ सया । पाणंतिएवि य तहा वसणंमि न वट्टए वीए ॥ १ ॥ अप्पवहुत्तालोयणविसयाईओ उ होइ एसत्ति । अहवा सुहभावाओ वहुगंऽपेयं चिय इमस्स ॥ २ ॥" [ निष्प्रतिकर्मशरीरोऽक्षिमलाद्यपि नापनयति सदा । प्राणान्तिकेऽपि च तथा व्यसने न वर्त्तते द्वितीये ( अपवादे ) ॥ १ ॥ अल्पवहुत्वालोचनविषयातीतस्तु भवत्येष इति । अथवा शुभभावात् वहुकमप्येतदेवास्य ॥ २ ॥ ] १३ । भिक्षाद्वारे पथिद्वारे च भिक्षा विहारक्रमश्चास्य तृतीयस्यां पौरुष्यां भवति, शेषासु च पौरुषीषु कायोत्सर्गः, निद्राऽपि चास्य स्वल्पा द्रष्टव्या, यदि पुनः कथमपि जङ्घाबलमस्य परिक्षीणं भवति तथाप्येषोऽविहरन्नपि महाभागो नापवादपदमासेवते, किन्तु तत्रैव यथाकल्पमात्मीयं योगं विदधाति, उक्तं च—"तइयाइ पोरसीए भिक्खाकालो विहारकालो य । सेसासु य उस्सग्गो पायं अप्पा य निद्दत्ति ॥ १ ॥ जङ्घाबलंमि खीणे अविहरमाणोऽवि न

वरमावज्जे । तत्थेव अहाकप्पं कुणइ उ जोगं महाभागो ॥ २ ॥" [ तृतीयस्यां पौरुष्यां भिक्षाकालो विहारकालश्च शेषासु चोत्सर्गः प्रायोऽल्पा च निद्रेति ॥ १ ॥ जङ्घाबले क्षीणे अविहरन्नपि न परं ( अपवादं ) आपद्यते । तत्रैव यथाकल्पं करोति योगं तु महाभागः ॥ २ ॥ ] १४, १५ ॥ ६९ ॥ इदानीं 'अहालंद'त्ति सप्ततितमं द्वारमाह—

लंदं तु होइ कालो सो पुण उक्कोस मज्झिम जहन्नो । उद्उल्लकरो जाविह सुकइ सो होइ उ जहन्नो ॥ ६११ ॥ उक्कोस पुव्वकोडी मज्झे पुण होंति णेगठाणाइं । एत्थ पुण पंचरत्तं उक्कोसं होइ अहलंदं ॥ ६१२ ॥ जम्हा उ पंचरत्तं चरंति तम्हा उ हुंतिऽहालंदी । पंचेव होइ गच्छो तेसिं उक्कोसपरिमाणं ॥ ६१३ ॥ जा चेव य जिणकप्पे मेरा सा चेव लंदियाणंपि । नाणत्तं पुण सुत्ते भिक्खायरिमासकप्पे य ॥ ६१४ ॥ अहलंदिआण गच्छे अप्पडिबद्धाण जह जिणाणं तु । नवरं कालविसेसो उउवासे पणग चउमासो ॥ ६१५ ॥ गच्छे पडिबद्धाणं अहलंदीणं तु अह पुण विसेसो । उग्गह जो तेसिं तु सो आयरियाण आभवइ ॥ ६१६ ॥ एगवसहीऍ पणगं छव्वीहीओ य गामि कुव्वंति । दिवसे दिवसे अन्नं अडंति वीहीसु नियमेणं ॥ ६१७ ॥ पडिबद्धा इयरेऽवि य एक्केक्का ते जिणा य थेरा य । अत्थस्स उ देसम्मि य असमत्ते तेसि पडिबंधो ॥ ६१८ ॥ लग्गाइसु तूरंते तो पडिवज्जित्तु खित्तबाहिठिया । गिण्हंति जं अगहियं तत्थ य गंतूण आयरिओ ॥ ६१९ ॥ तेसिं तयं पयच्छइ खेत्तं इंताण तेसिमे दोसा । वंदंतमवंदंते लोगंमि य होइ परिवाओ

॥ ६२० ॥ न तरेज्ज जई गंतुं आयरिओ ताहे एइ सो चेव । अंतरपल्लिं पडिवसभ गामबहि अ-
ण्णवसहिं वा ॥ ६२१ ॥ तीए य अपरिभोगे ते वंदंते न वंदई सो उ । तं घेत्तु अपडिबद्धा ताहि
जहिच्छाइ विहरंति ॥ ६२२ ॥

'लंद' मित्यादिगाथाद्वादशकं, लन्दं तु भवति कालः, समयपरिभाषया लन्दशब्देन कालो भण्यत इत्यर्थः, स पुनः कालस्त्रेधा—उत्कृष्टो मध्यमो जघन्यश्च, तत्र उदकार्द्रकरो यावता कालेन 'इह' सामान्येन लोके शुष्यति तावान् कालविशेषो भवति जघन्यः, अस्य चेह जघन्यत्वं प्रत्याख्याननियमविशेषादिषु विशेषत उपयोगित्वात्, अन्यथा अतिसूक्ष्मतरस्यापि समयादिलक्षणस्य सिद्धान्तोक्तस्य कालस्य सम्भवात् ॥ ६११ ॥ उत्कृष्टः पूर्वकोटीप्रमाणः, अयमपि चारित्रकालमानमाश्रित्य उत्कृष्टः उक्तः, अन्यथा पल्योपमादिरूपस्यापि कालस्य सम्भवात्, मध्ये पुनर्भवन्त्यनेकानि स्थानानि वर्षादिभेदेन कालस्य, अत्र पुनर्यथालन्दकल्पप्रक्रमे पञ्चरात्रं 'यथे'त्यागमानतिक्रमेण लन्दं—काल उत्कृष्टं भवति, तेनैवात्रोपयोगात् ॥ ६१२ ॥ यस्मात्पञ्चरात्रं चरन्ति पेटार्धपेटाद्यन्यतमायां वीथ्यां भैक्षनिमित्तं पञ्चरात्रिन्दिवान्यटन्ति तस्माद्भवन्ति यथालन्दिनः, विवक्षितयथालन्दभावात्, तथा पञ्चैव पुरुषा भवन्ति गच्छो—गणस्तेषां—यथालन्दिकानां, पञ्चको हि गणोऽमुं कल्पं प्रतिपद्यते इत्युत्कृष्टमेकैकस्य गणस्य पुरुषपरिमाणमेतदिति ॥६१३॥ अत्र बहुवक्तव्यत्वान्निरवशेषाभिधाने ग्रन्थगौरवप्रसक्त्या यथालन्दिककल्पस्यातिदेशमाह—यैव च जिनकल्पे—जिनकल्पविषया मेरा—मर्यादा पञ्चविधतुलनादिरूपा सैव च यथालन्दिकानामपि प्रायशः, नानात्वं—भेदः पुनर्जिनकल्पिकेभ्यो यथालन्दिकानां 'सूत्रे' सूत्रविषयं तथा भिक्षाचर्यायां मासकल्पे च, चकारात्प्रमाणविषयं चेति ॥ ६१४ ॥ अथातिदेशपूर्वकमल्पवक्तव्यत्वात्प्रथमं मासकल्पनानात्वमेवाह—यथालन्दिका द्विविधाः—गच्छे प्रतिबद्धा अप्रतिबद्धाश्च, गच्छे च प्रतिब-

न्धोऽमीषां कारणतः किञ्चिदश्रुतस्यार्थस्य श्रवणार्थमिति मन्तव्यं, ततो यथालन्दिकानां गच्छे अप्रतिबद्धानामुपलक्षणत्वात्प्रतिबद्धानां च 'तवेण सत्तेण' इत्यादिभावनारूपा सर्वापि सामाचारी यथा जिनकल्पिकानां पूर्वमुक्ता तथैव समवसेया, नवरं—केवलं द्विविधानामपि यथालन्दिकानां जिनकल्पिकेभ्यः काले—कालविषये विशेषो—भेदो ज्ञातव्यः, तमेवाह—'उउ वासे पणग चउमासो'त्ति ऋतौ—ऋतुवद्धकाले वर्षे—वर्षाकाले च यथासङ्ख्यं दिनपञ्चकं मासचतुष्टयं चैकत्रावस्थानं भवति, इयमत्र भावना—ऋतुवद्धे काले यथालन्दिकाः साधवो यदि विस्तीर्णो ग्रामादिर्भवति तदा तं गृहपङ्क्तिरूपाभिः षड्भिर्वीथीभिः परिकल्प्य एकैकस्यां वीथ्यां पञ्च पञ्च दिवसानि भिक्षामटन्ति, तत्रैव च वसन्ति, एवं षड्भिर्वीथीभिरेकस्मिन् ग्रामे मासः परिपूर्णो भवति, तथाविधविस्तीर्णग्रामाभावे तु निकटतमेषु षट्सु ग्रामेषु पञ्च पञ्च दिवसान् वसन्ति, उक्तं च कल्पभाष्ये—"एकेक्कं पंचदिणे पण पणएण य निट्ठिओ मासो। एतच्चूर्णिश्च—जइ एगो चेव गामो सवियारोत्ति—वित्थिण्णो ता छ वीहीओ काउं एक्केकीए पंच पंच दिवसाणि हिंडन्ति बीयाएवि पंच दिवसे जाव छट्ठीएवि पंच दिवसा, एवं एगगामे मासो भवइ, अह नत्थि एगो गामो सवियारो तो इवंतऽहालंदियाण छग्गामा खेत्तस्स परियंतेणं, तेसिं एक्केक्कं पंच दिवसाणि अच्छन्ति, एवं मासो विभज्जमाणो पणपणएण निट्ठिओ होइ"त्ति ॥६१५॥ अथ यथालन्दिकानामेव परस्परं भेदमाह—गच्छप्रतिवद्धानां पुनर्यथालन्दिकानां गच्छाप्रतिवद्धेभ्यः सकाशात् विशेषो—भेदो भवति, तमेवाह—तेषां गच्छप्रतिबद्धयथालन्दिकानां यः क्रोशपञ्चकलक्षणः क्षेत्रावग्रहः स आचार्याणामेव भवति, यस्याचार्यस्य निश्रया ते विहरन्ति तस्यैव स क्षेत्रावग्रहो भवतीति भावः, गच्छाप्रतिवद्धानां तु जिनकल्पिकवत् क्षेत्रावग्रहो नास्तीति ॥ ६१६ ॥ अथ द्विविधानामपि यथालन्दिकानां भिक्षाचर्यानानात्वं विवक्षुराह—ऋतुवद्धे काले एकस्यां वसतौ 'पञ्चकं' पञ्च दिवसानि यावदवतिष्ठन्ते, वर्षासु पुनश्चतुरो मासान् यावदेकस्यां वसतौ तिष्ठन्ति, ग्रामे षड्

वीथीः कुर्वन्ति, अयमर्थः—यथालन्दिका गृहपङ्क्तिरूपाभिः षड्भिर्वीथीभिर्ग्रामं परिकल्पयन्ति, एकैकस्यां च वीथ्यां पञ्च पञ्च दिवसानि
भिक्षां पर्यटन्ति, तत्रैव च वसतिं विदधति, उक्तं च पञ्चकल्पचूर्णौ—"छब्भागे गामो कीरइ, एगेगे पञ्चदिवसं भिक्खं हिंडंति,
तत्थेव वसंति, वासासु एगत्थ चउम्मासो"त्ति, तासु च वीथीषु दिवसे दिवसे नियमतोऽन्यामन्यां भिक्षामटन्ति, उद्धृतादिभिक्षापञ्च-
कमध्यादेकस्मिन् दिवसे यां भिक्षामटन्ति न पुनर्द्वितीयेऽपि दिने तामेवाटन्ति किन्त्वन्यामिति भावः, इत्थं तावदस्माभिर्व्याख्यातं सुधिया
तु समयाविरोधेनान्यथाऽपि व्याख्येयमिति ॥ ६१७ ॥ अथ सूत्रनानात्वं निर्दिदिक्षुर्यथालन्दिकभेदानेवाह—यथालन्दिका द्विविधाः—गच्छ-
प्रतिबद्धा इतरे च—गच्छाप्रतिबद्धाः, ते पुनरेकैकशो द्विभेदाः—जिनकल्पिकाः स्थविरकल्पिकाश्च, तत्र यथालन्दिककल्पपरिसमात्यनन्तरं
ये जिनकल्पं प्रतिपत्स्यन्ते ते जिनकल्पिकाः, ये तु स्थविरकल्पमेवाश्रयिष्यन्ति ते स्थविरकल्पिकाः, इह च ये गच्छे प्रतिबद्धास्तेषां प्रति-
बन्धोऽनेन कारणेन भवति—'अत्थस्से'त्यादि, अर्थस्यैव न सूत्रस्य, देशः—एकदेशोऽद्याप्यसमाप्तो—न गुरुसमीपे परिपूर्णो गृहीत इति
तद्ग्रहणाय गच्छे प्रतिबन्धस्तेषां, तस्यावश्यं गुरुसमीपे ग्रहीष्यमाणत्वादिति ॥ ६१८ ॥ अथ परिपूर्णं सूत्रार्थं गुरुसमीपे गृहीत्वैव कथं
कल्पं न प्रतिपद्यन्ते ? इत्याह—लग्नादिषु त्वरमाणेषु—शुभेषु लग्नयोगचन्द्रबलादिषु झगित्यागतेषु सत्सु अन्येषु च लग्नादिषु दूरकालवर्तिषु
न तथाभव्येषु वाऽगृहीतपरिपूर्णसूत्रार्था अपि लग्नादिभव्यतया कल्पं प्रतिपद्यन्ते, ततः प्रतिपद्य तं कल्पं गच्छान्निर्गत्य गुर्वधिष्ठितात्क्षे-
त्राद् ग्रामनगरादेर्बहिर्दूरदेशे स्थिता विशिष्टतरनिष्ठुरनिखिलनिजानुष्ठाननिरता गृह्णंति यदगृहीतं—अनधीतमर्थजातं, तत्र चायं विधिः—
यदुत आचार्यः स्वयं तत्र गत्वा तेभ्यो यथालन्दिकेभ्यः 'तयं'ति तमर्थशेषं प्रयच्छति—ददाति, अथ त एवाचार्यसमीपमागत्य किमिति
तमर्थशेषं न गृह्णन्तीत्याह—'खेत्तं इंताणे'त्यादि, क्षेत्रमध्यं समागच्छतां तेषां—यथालन्दिकानामेते—वक्ष्यमाणा दोषाः, तथाहि—वंदमा-

**ज्ज ऊणपक्खेवे । होंति जहण्णा एए सयग्गसो चेव उक्कोसा ॥ ६२७ ॥ पुव्वपडिवन्नगाणवि उक्कोसजहण्णसो परीमाणं । कोडिपुहुत्तं भणियं होइ अहालंदियाणं तु ॥ ६२८ ॥**

जिनकल्पिकाश्च यथालन्दिकास्तदा—कल्पकाले मारणान्तिकेऽप्यातङ्के समुत्पन्ने न कामपि चिकित्सां ते कारयन्ति, यथाकल्पस्थितेः, अपिच निष्प्रतिकर्मशरीराः—प्रतिकर्मरहितदेहास्ते भगवन्तः, तत आस्तां तावदन्यत्, अक्षिमलमपि नापनयन्त्यप्रमादातिशयादिति ॥ ६२३ ॥ स्थविरकल्पिकयथालन्दिकानां जिनकल्पिकयथालन्दिकेभ्यो नानात्वं—भेदः, यथा अशक्नुवन्तं व्याधिबाधितं सन्तं स्वसाधुसमर्पयन्ति गच्छस्य—गच्छवासिसाधुसमूहस्य, स्वकीयपञ्चकगणपरिपूरणार्थं च तस्य स्थाने विशिष्टधृतिसंहननादिसमन्वितमन्यं मुनिं स्वकल्पे प्रवेशयन्ति, तेऽपि च गच्छवासिनः साधवः 'से'त्ति तस्याशक्नुवतः प्रासुकेन—निरवद्येनान्नपानादिना कुर्वन्ति सर्वमपि परिकर्म—प्रतिजागरणमिति ॥ ६२४ ॥ किञ्च—स्थविराः—स्थविरकल्पिकयथालन्दिका अवश्यमेव एकैकपतद्ग्रहकाः—प्रत्येकमेकैकपतद्ग्रहधारिणः तथा सप्रावरणाश्च भवन्ति, ये पुनरेषां—यथालन्दिकानां मध्ये जिनकल्पे भविष्यन्ति जिनकल्पिकयथालन्दिका इत्यर्थः भाज्ये तेषां वस्त्रपात्रे—सप्रावरणाप्रावरणपतद्ग्रहधारिपाणिपात्रभेदभिन्ना भाविजिनकल्पापेक्षया केषाञ्चिद्वस्त्रपात्रलक्षणमुपकरणं भवति केषांचिच्च नेत्यर्थः ॥ ६२५ ॥ अथ सामान्येन यथालन्दिकप्रमाणमाह—गणमानतो—गणमाश्रित्य जघन्यतस्त्रयो गणाः प्रतिपद्यमानका भवन्ति, शताग्रशश्च—शतपृथक्त्वमुत्कृष्टतो गणमानं, पुरुषप्रमाणं त्वेतेषां प्रतिपद्यमानकानां जघन्यतः पञ्चदश, पञ्चको हि गणोऽमुं कल्पं प्रतिपद्यते गणाश्च जघन्यतस्त्रयः ततः पञ्च त्रिभिर्गुणिताः पञ्चदश, उत्कृष्टतः पुनः पुरुषप्रमाणं सहस्रशः—सहस्रपृथक्त्वं ॥ ६२६ ॥ पुरुषप्रमाणमेवाश्रित्य पुनर्विशेषमाह—प्रतिपद्यमानका एते जघन्यत एकादयो वा भवेयुः न्यूनप्रक्षेपे सति, यथालन्दिककल्पे हि पञ्चमुनिमयो गच्छः, तत्र च

यदा ग्लानत्वादिकारणवशतो गच्छसमर्पणादिना तेषां न्यूनता भवति तदैकादिकः साधुस्तं कल्पं प्रवेश्यते येन पञ्चको गच्छो भवति, एवं जघन्या एते प्रतिपद्यमानकाः, तथा शताग्रश उत्कृष्टाः प्रतिपद्यमानका एवेति ॥ ६२७ ॥ पूर्वप्रतिपन्नानामपि सामान्येनोत्कृष्टतो जघन्यतश्च परिमाणं कोटिपृथक्त्वं भणितं भवति यथालन्दिकानां, उक्तं च **कल्पचूर्णौ**—"पडिवज्जमाणगा जहण्णेणं तिन्नि गणा उक्कोसेणं सयपुहुत्तं, पुरिसपमाणेणं पडिवज्जमाणगा जहण्णेणं पन्नरस पुरिसा, उक्कोसेणं सहस्सपुहुत्तं, पुव्वपडिवन्नगाणं जहण्णेणं कोडिपुहुत्तं, उक्कोसेणवि कोडिपुहुत्त"मिति, केवलं जघन्यादुत्कृष्टं विशिष्टतरं ज्ञेयमिति ७७ ॥ ६२८ ॥ इदानीं **'निज्जामयाण अडयाल'**त्ति एकसप्ततितमं द्वारमाह—

**उवत्त १ दार २ संथार ३ कहग ४ वाईय ५ अग्गदारंमि ६ । भत्ते ७ पाण ८ वियारे ९-१० कहग ११ दिसा जे समत्था य १२ ॥ ६२९ ॥ एएसिं तु पयाणं चउक्कगेणं गुणिज्जमाणाणं । निज्जामयाण संखा होइ जहासमयनिद्दिट्ठा ॥ ६३० ॥ उव्वत्तंति परावत्तयंति पडिवण्णअणसणं चउरो १ । तह चउरो अब्भंतर दुवारमूलंमि चिट्ठंति २ ॥ ६३१ ॥ संथारयसंथरया चउरो ३ चउरो कहिंति धम्मं से ४ । चउरो य वाइणो ५ अग्गदारमूले मुणिचउक्कं ६ ॥ ६३२ ॥ चउरो भत्तं ७ चउरो य पाणियं तदुचियं निहालंति ८ । चउरो उच्चारं परिट्ठवंति ९ चउरो य पासवणं १० ॥६३३॥ चउरो बाहिं धम्मं कहिंति ११ चउरो य चउसुवि दिसासु । चिट्ठंति १२ उवद्दवरक्खया सह-**

**रसजोहिणो मुणिणो ॥ ६३४ ॥ ते सब्बाभावे ता कुज्जा एक्केक्कगेण ऊणा जा । तप्पासट्ठिय एगो जलाइअण्णेसओ बीओ ॥ ६३५ ॥**

'उव्वत्ते'त्यदिगाधाद्वयं, निर्यामका—ग्लानप्रतिचारिणः, ते च पार्श्वस्थावसन्नत्वादिदोषदुष्टा अगीतार्थाश्च न कर्तव्याः किन्तु कालौचित्येन गीतार्थतादिगुणयुक्ता विशेषतो वैयावृत्त्यकरणोद्यताः, एते च उत्कर्षतोऽष्टचत्वारिंशद्भवन्ति, तद्यथा—'उवत्त'त्ति उद्वर्तनादिशरीरपरिचेष्टाकारिणः १ 'दार'त्ति अभ्यन्तरद्वारमूलस्थायिनः २ 'संथार'त्ति संस्तारककर्तारः ३ 'कहग'त्ति अनशनिनः पुरतो धर्मकथकाः ४ 'वाइय'त्ति वादिनः ५ 'अग्गदारंमि'त्ति अग्रद्वारमूलावस्थायकाः ६ 'भत्त'त्ति तदुचितभक्तानयनयोग्याः ७ 'पान'त्ति पानानयनयोग्याः ८ 'वियार'त्ति उच्चारप्रश्रवणयोर्ग्रहणं, ततः उच्चारपरिष्ठापकाः ९ प्रश्रवणपरिष्ठापकाश्च १० 'कहग'त्ति' बहिर्धर्मकथकाः ११ 'दिसा जे समत्था य'त्ति दिशासु पूर्वाद्यासु चतसृष्वपि ये समर्थाः—सहस्रयोधिप्रभृतयः १२ ॥ 'एएसिं तु पयाणं'ति एतेषां पूर्वोक्तानां द्वादशानामपि पदानां प्रत्येकं साधुचतुष्टयसद्भावात् चतुष्ककेण गुण्यमानानां निर्यामकसङ्ख्या भवति यथा—येन प्रकारेण समये—सिद्धान्ते निर्दिष्टा—कथिता अष्टचत्वारिंशल्लक्षणेत्यर्थः, अन्ये तु उच्चारप्रश्रवणपरिष्ठापने मिलितेऽपि चतुरोऽभिधाय ततो दिक्षु प्रत्येकं द्वौ द्वावित्यष्टौ महायोधान्मन्यन्ते इत्येवमष्टचत्वारिंशतं प्रतिपादयन्तीति ॥ ६२९–६३० ॥ अथ सूत्रकृदेवैतान् विवृणोति—'उवत्तंते'त्यादि गाथाचतुष्टयं, इह च उत्सर्गतस्तावदनशनिना स्वयमेवोद्वर्त्तनादि विधेयं, अथ न शक्नोति तदा तं प्रतिपन्नानशनं चत्वारः साधव उद्वर्तयन्ति परावर्त्तयन्ति च, उपलक्षणमेतत्, उत्थापनोपवेशनबहिर्निर्गमनान्तःप्रवेशनोपधिप्रत्युपेक्षणादिकमपि तदीयं परिकर्म त एव कुर्वन्ति, तथा अभ्यन्तरद्वारमूले जनसम्मर्दरक्षणार्थं चत्वारः साधवस्तिष्ठन्ति, जनसम्मर्दे हि कदाचिदनशनिनोऽसमाधिरप्युत्पद्येत, तथा चत्वारस्तद-

नुकूलसुखस्पर्शाद्युपेतं समाधिसंवर्धनाय संस्तारकमास्तृणन्ति, तथा चत्वारः साधवो विशिष्टदेशनालब्धिसम्पन्नाः सततं कथयन्ति 'से'
तस्य विदितवस्तुतत्त्वस्यापि संवेगसमुल्लासकं धर्मं, तथा तस्यानशनिनः प्रभावनामतिशायिनीं श्रावकलोकैः क्रियमाणां दृष्ट्वा केचिद् दुरा-
त्मानस्तामसहमानाः सर्वज्ञमतनिराकरणाय वाददानायोपतिष्ठन्ते ततस्तेषां तिरस्करणाय वादिनो—वावदूकाश्चत्वारः प्रमाणप्रवीणाः प्रगु-
णीभूतास्तिष्ठन्ति, तथाऽग्रद्वारमूले प्रत्यनीकादिप्रवेशरक्षार्थं मुनिचतुष्कं—चत्वारः साधवः सामर्थ्योपेतास्तिष्ठन्ति, तथा प्रत्याख्यातेऽप्याहारे
परीषहपीडितो यद्यसौ कथमप्याहारमभिलषति तदा मा कथञ्चिदसौ प्रत्यनीकदेवताधिष्ठितो याचते इति परीक्षार्थं प्रथमतस्तावत्पृच्छ्यते
यथा—कस्त्वं गीतार्थो वा अगीतार्थो वा ? प्रतिपन्नाशन एवमेव वा ? इदानीं दिनं वर्तते रात्रिर्वेत्यादि, एवं च पृष्टे यद्यसौ प्रस्तुतं वक्ति
तदा ज्ञायते न देवताधिष्ठितः किन्तु परीषहपीडित इति ज्ञात्वा समाधिसम्पादनाय किञ्चिदाहारो दीयते, ततस्तद्बलेन परीषहान् परिभूय
प्रस्तुतपारगामी भवति, अथ वेदनार्दित आहारं न करोति तदाऽऽर्त्तध्यानोपगतस्तिर्यक्षु भवनपतिव्यन्तरेषु वा समुत्पद्येत, प्रत्यनीकेषु च
भवनपतिव्यन्तरेषूत्पन्नः कोपवशात्कदाचित्पाश्चात्ययतीनामुपद्रवमपि कुर्यादिति ततश्चत्वारो मुनयस्तस्यानशनिन उचितं—योग्यं आहारं
'निभालयन्ति' गवेषयन्ति, तथा चत्वारो देहदाहाद्युपशमसमर्थं पानीयमन्वेषयन्ति, तथा चत्वार उच्चारं—पुरीषं परिष्ठापयन्ति—परित्य-
जन्ति, तथा चत्वारः प्रश्रवणं—मूत्रं परिष्ठापयन्ति, तथा चत्वारो बहिर्भागे जनानां पुरतश्चेतश्चमत्कारकारिणं मनोहारिणं धर्मं कथयन्ति,
तथा चत्वारश्चतसृष्वपि दिक्षु क्षुद्रोपद्रवरक्षकाः सहस्रयोधिनो—महामल्ला मुनयस्तिष्ठन्ति, क्षुद्रोपद्रवनिवारणार्थमेकैकश्चतसृष्वपि दिक्षु तिष्ठ-
तीत्यर्थः ॥ ६३१—६३२—६३३—६३४ ॥ अथैते परिपूर्णा यदा न प्राप्यन्ते तदा किमित्याह—ते—निर्यामकाः सर्वेषामष्टचत्वारिं-
शत्सङ्ख्यानामभावे एकैकहान्या तावत्कार्या यावज्जघन्यतोऽवश्यं द्वौ निर्यामकौ, तत्रैकस्तत्पार्श्वस्थितः—तस्य—प्रतिपन्नानशनस्य सर्वदैव

समीपावस्थायी, द्वितीयस्तु जलाद्यन्वेषको भक्तपानाद्यानयनार्थं पर्यटतीति, एकेन पुनर्निर्यामकेन न कर्तव्यैवानशनप्रतिपत्तिः, यदुक्तं— 'एगो जइ निज्जवगो अप्पा चत्तो परो पवयणं च । सेसाणमभावेऽवि हु ता बीओऽवस्स कायव्वो ॥ १ ॥' त्ति [ यद्येको निर्यामकस्तर्हि आत्मा त्यक्तः परः प्रवचनं च । तस्मात् शेषाणामभावेऽपि चावश्यं द्वितीयः कर्त्तव्यः (निर्यामकः) ॥ १ ॥] ७१ ॥ ६३५ ॥ इदानीं 'पणवीसं भावणाओ' इति द्वासप्ततितमं द्वारमाह—

**इरियासमिए सया जए १ उवेह भुंजेज्ज व पाणभोयणं २ । आयाणनिक्खेवदुगुंछ ३ संजए समाहिए संजयए मणो ४ वई ५ ॥ ६३६ ॥ अहस्ससच्चे ६ अणुवीय भासए ७, जे कोह ८ लोह ९ भय १० मेव वज्जए । से दीहरायं समुपेहिया सया, मुणी हु मोसंपरिवज्जए सिया ॥ ६३७ ॥ सयमेव उ उग्गहजायणे ११ घडे मइमं निसम्मा १२ सइ भिक्खु उग्गहं १३ । अणुन्नविय भुंजीय पाणभोयणं १४ जाइत्ता साहम्मियाण उग्गहं १५ ॥ ६३८ ॥ आहारगुत्ते १६ अविभूसियप्पा १७ इत्थी न निज्झाय १८ न संथवेज्जा १९ । बुद्धे मुणी खुड्डकहं न कुज्जा २० धम्माणुपेही संधए बंभचेरं ॥ ६३९ ॥ जे सद्द २१ रूव २२ रस २३ गंधमागए २४, फासे य संपप्प मणुण्णपावए २५ । गेहिं पओसं न करेज्ज पंडिए, से होइ दंते विरए अकिंचणे ॥ ६४० ॥**

'ईरियासमिए' इत्यादि वृत्तपञ्चकं, प्राणातिपातादिनिवृत्तिलक्षणमहाव्रतानां दार्ढ्योपादनार्थं भाव्यन्ते—अभ्यस्यन्ते इति भावनाः, अनभ्यस्यमानाभिर्भावनाभिरनभ्यस्यमानविद्यावन्मलीमसीभवन्ति महाव्रतानीति, ताश्च प्रतिमहाव्रतं पञ्च पञ्च भवन्ति, तत्र प्रथममहाव्रतस्य

ताः कथ्यन्ते, ईरणं इर्या—गमनं तत्र समितः—उपयुक्तः, असमितो हि प्राणिनो हिंस्यादिति प्रथमा भावना १ तथा सदा—सर्वकालं 'यतः' सम्यगुपयुक्तः सन् 'उवेह'त्ति अवलोक्य भुञ्जीत वाशब्दाद् गृह्णीत वा पानभोजनं, अयमर्थः—प्रतिगृहं पात्रमध्यपतितः पिण्डश्चक्षुराद्युपयुक्तेन तत्समुत्थागन्तुकसत्त्वरक्षणार्थं प्रत्यवेक्षणीयः, आगत्य च वसतौ पुनः प्रकाशवति प्रदेशे स्थित्वा सुप्रत्यवेक्षितं पानभोजनं विधाय प्रकाशप्रदेशावस्थितेन भोक्तव्यं, अनवलोक्य भुञ्जानस्य हि प्राणिहिंसा सम्भवतीति द्वितीया, २ तथा 'आदाननिक्षेपौ' पात्रादेर्ग्रहणमोक्षावागमप्रतिषिद्धौ 'जुगुप्सति' न करोतीति आदाननिक्षेपजुगुप्सकः, आगमानुसारेण प्रत्यवेक्षणप्रमार्जनपूर्वमुपयुक्तः सन्नुपधेरादाननिक्षेपौ करोतीत्यर्थः, अजुगुप्सको हि सत्त्वव्यापादनं विदध्यादिति तृतीया ३ तथा 'संयतः' साधुः 'समाहितः' समाधानपरः सन् 'संयतते' प्रवर्तयत्यदुष्टं मनो, दुष्टं हि मनः क्रियमाणं कायसंलीनतादिकेऽपि सति कर्मबन्धाय सम्पद्यते, श्रूयते हि प्रसन्नचन्द्रो राजर्षिर्मनोगुप्त्यभाविताऽहिंसाव्रतो हिंसामकुर्वन्नपि सप्तमनरकपृथ्वीयोग्यं कर्म निर्मितवानिति चतुर्थी ४ एवं वाचमप्यदुष्टां प्रवर्तयेत्, दुष्टां (हि तां) प्रवर्तयन् जीवान् विनाशयेदिति पञ्चमी ५, तत्त्वार्थे तु अस्याः स्थाने एषणासमितिलक्षणा भावना भणिता, इति प्रथमव्रतभावनाः पञ्च। अथ द्वितीयमहाव्रतभावना भण्यन्ते—अत्र अहास्यात्—हास्यपरिहारात् 'सत्यः' सत्यवाक्, हास्येन ह्यनृतमपि ब्रूयादिति प्रथमा १ तथा 'अनुविचिन्त्य' सम्यग्ज्ञानपूर्वकं पर्यालोच्य 'भाषको' वक्ता, अनालोचितभाषी हि कदाचिन्मृषाऽप्यभिदधीत, ततश्चात्मनो वैरपीडादयः सत्त्वोपघातश्च भवेदिति द्वितीया २ तथा यः क्रोधं लोभं भयमेव वा वर्जयेत्—परिहरेत् स एव मुनिर्दीर्घरात्रं—मोक्षं 'समुपेक्षिता' सामीप्येन मोक्षावलोकनशीलः सन् 'सदा' सर्वकालं हु—निश्चयेन 'मोसं'ति अनुस्वारस्यालाक्षणिकत्वान्मृषापरिवर्जकः 'सिया' स्यात्, अयमर्थः—क्रोधपरवशो हि वक्ता स्वपरनिरपेक्षो यत्किञ्चनभाषी मृषाऽपि भाषेत अतः क्रोधस्य निवृत्तिरनुत्पादो वा श्रेयानिति तृतीया

३ तथा लोभाभिभूतचित्तोऽप्यत्यर्थमर्थकाङ्क्षया कूटसाक्षित्वादिना वितथभाषी भवति, अतः सत्यव्रतमनुपालयता लोभः प्रत्याख्येय इति चतुर्थी ४ तथा भयार्त्तः निजप्राणादिरक्षणेच्छया सत्यवादितां व्यभिचरति ततो निर्भयवासनाऽऽधानमात्मनि विधेयमिति पञ्चमी ५ इति द्वितीयमहाव्रतभावनाः पञ्च । अथ तृतीयमहाव्रतभावनाः प्रोच्यन्ते, तत्र स्वयमेव—आत्मनैव न तु परमुखेन साधुः प्रभुं प्रभुसन्दिष्टं वा सम्यक्परिज्ञाय अवग्रहस्य—देवेन्द्रराजगृहपतिशय्यातरसाधर्मिकभेदभिन्नस्य याचने—याच्ञायां प्रवर्तते, परमुखेन हि याचनेऽस्वामियाचने च परस्परविरोधेन च अकाण्डधाटनादयोऽदत्तपरिभोगादयश्च दोषा इति प्रथमा १ तथा तत्रैवानुज्ञापितावग्रहे तृणादिग्रहणार्थं मतिमान् घटेत—चेष्टेत निशम्य—आकर्ण्यावग्रहप्रदातुस्तृणाद्यनुज्ञावचनं, अन्यथा तददत्तं स्यादिति द्वितीया २ तथा 'सदा' सर्वकालं भिक्षुरवग्रहं स्पष्टमर्यादया याचेत, अयमर्थः—सकृद्दत्तेऽपि स्वामिनाऽवग्रहे भूयो भूयोऽवग्रहयाचनं कर्तव्यं, पूर्वलब्धेऽवग्रहे ग्लानाद्यवस्थायां मूत्रपुरीषोत्सर्गपात्रकरचरणप्रक्षालनस्थानानि दायकचित्तपीडापरिहारार्थं याचनीयानीति तृतीया ३ तथाऽनुज्ञाप्य गुरुमन्यं वा भुञ्जीत पानभोजनं, अयमर्थः—सूत्रोक्तेन विधिना प्रासुकमेषणीयं लब्धमानीयालोचनापूर्वं गुरवे निवेद्य गुरुणाऽनुज्ञातो मण्डल्यामेकको वाऽभीयात्, उपलक्षणमेतत्, अन्यदपि यत्किञ्चिदौधिकौपग्रहिकभेदमुपकरणं धर्मसाधनं तत्सर्वं गुरुणाऽनुज्ञातमेव भोक्तव्यं अन्यथाऽदत्तमेव परिभुक्तं स्यादिति चतुर्थी ४ तथा समानो धर्मः सधर्मस्तेन चरन्तीति साधर्मिकाः—प्रतिपन्नैकशासनाः संविग्नाः साधवः, तेषां पूर्वपरिगृहीतक्षेत्राणामवग्रहं मासादिकालमानेन पञ्चक्रोशादिक्षेत्ररूपं याचित्वा स्थानादि कार्यं, तदनुज्ञातं हि तत्र उपाश्रयादि समस्तं गृह्णीयात्, अन्यथा चौर्यं स्यादिति पञ्चमी ५ एतास्तृतीयव्रतभावनाः पञ्च । इदानीं चतुर्थव्रतभावनाः प्रतिपाद्यन्ते—तत्र आहारे गुप्तः स्यात् न पुनः स्निग्धमतिमात्रं भुञ्जीत, यतो निरन्तरवृष्यस्निग्धमधुररसप्रीणितः प्रधानधातुपरिपोषणेन वेदोदयादब्रह्मापि सेवेत, अतिमात्राहारस्य तु

न केवलं ब्रह्मव्रतविलोपविधायित्वाद्वर्जनं कायक्लेशकारित्वादपीति प्रथमा १ तथा अविभूषितात्मा—विभूषाविरहितः, देहस्नानविलेपनादि-विविधविभूषानिरतो हि नितान्तमुद्रिक्तचित्ततया ब्रह्मविराधकः स्यादिति द्वितीया २ तथा स्त्रियं न निरीक्षेत, तदव्यतिरेकात्तदङ्गान्यपि वदनस्तनप्रभृतीनि सस्पृहं न प्रेक्षेत, निरन्तरमनुपमवनितावयवविलोकने हि ब्रह्मबाधासम्भव इति तृतीया ३ तथा स्त्रियं न संस्तुवीत-स्त्रीभिः सह परिचयं न कुर्यात् तत्संसक्तवसतितदुपभुक्तशयनासनादिसेवनेन, अन्यथा ब्रह्मव्रतभङ्गः स्यादिति चतुर्थी ४ तथा बुद्धः—अव-गततत्त्वो मुनिः क्षुद्रां—अप्रशस्यां ब्रह्मचर्यप्रस्तावात् स्त्रीविषयां कथां न कुर्यात्, तत्कथाऽऽसक्तस्य हि मानसोन्मादः सम्पद्येत इति पञ्चमी ५ एताभिः पञ्चभिर्भावनाभिर्भावितान्तःकरणो धर्मानुप्रेक्षी—धर्मसेवनतत्परः साधुः सन्धत्ते—सम्यक्पुष्टिं नयति ब्रह्मचर्यमिति चतुर्थमहाव्रतभा-वनाः । अथ पञ्चमव्रतभावना निगद्यन्ते—तत्र यः साधुः शब्दरूपरसगन्धान् आगतान्—इन्द्रियविषयीभूतान्, मकारोऽयमलाक्षणिकः, स्पर्शांश्च सम्प्राप्य—समासाद्य मनोज्ञान्—मनोहारिणः पापकान्—विरूपान् इष्टानिष्टांश्चेत्यर्थः, गृद्धिं—अभिष्वङ्गलक्षणां प्रद्वेषं च—अप्रीति-लक्षणं यथाक्रमं न कुर्यात् पण्डितो—विदिततत्त्वः सन् स दान्तो जितेन्द्रियो विरतः—सर्वसावद्ययोगेभ्यो भवत्यकिञ्चनः—किञ्चन बाह्या-भ्यन्तरपरिग्रहभूतं नास्यास्तीतिव्युत्पत्त्या परिग्रहविरतिव्रतवानित्यर्थः, अन्यथा शब्दादिषु मूर्च्छादिसद्भावात् पञ्चमव्रतविराधना स्यादिति पञ्चसु विषयेष्वभिष्वङ्गप्रद्वेषवर्जनात् पञ्चमव्रतस्य पञ्च भावनाः, मिलितास्तु पञ्चविंशतिरिति, एताश्च समवायाङ्गतत्त्वार्थादिषु किञ्चिदन्यथाऽपि दृश्यन्ते इति ॥ ६३६ ॥ ६३७ ॥ ६३८ ॥ ६३९ ॥ ६४० ॥७२॥ इदानीं 'असुहाओ पणवीसं'ति त्रिसप्ततितमं द्वारमाह—

**कंदप्पदेव १ किब्बिस २ अभिओगा ३ आसुरी ४ य सम्मोहा ५ । एसा हु अप्पसत्था पंचविहा**

**भावणा तत्थ ॥ ६४१ ॥ कंदप्पे १ कुक्कुइए २ दोसीलत्ते य ३ हासकरणे ४ य । परविम्हियजणणेऽवि य ५ कंदप्पोऽणेगहा तह य ॥ ६४२ ॥ सुयनाण १ केवलीणं २ धम्मायरियाण ३ संघ ४ साहूणं । माई अवण्णवाई किव्विसियं भावणं कुणइ ॥ ६४३ ॥ कोउय १ भूईकम्मे २ पसिणेहिं ३ तह य पसिणपसिणेहिं ४ । तहय निमित्तेणं ५ चिय पंचवियप्पा भवे सा य ॥ ६४४ ॥ सइ विग्गहसीलत्तं १ संसत्ततवो २ निमित्तकहणं च ३ । निक्किवयावि य ४ अवरा पंचमगं निरणुकंपत्तं ५ ॥ ६४५ ॥ उम्मग्गदेसणा १ मग्गदूसणं २ मग्गविपडिवित्ती य ३ । मोहो य ४ मोहजणणं ५ एवं सा हवइ पंचविहा ॥ ६४६ ॥**

कन्दर्पः—कामस्तत्प्रधाना निरन्तरं नर्मादिनिरततया विटप्राया देवविशेषाः कन्दर्पास्तेषामियं कान्दर्पी, एवं देवानां मध्ये किल्बिषाः—पापा अत एवास्पृश्यादिधर्मका देवाश्च ते किल्विषाश्चेति वा देवकिल्विपास्तेषामियं किल्विषी, आ—समन्तात् आभिमुख्येन युज्यन्ते—प्रेष्यकर्मणि व्यापार्यन्ते इत्याभियोग्याः—किङ्करस्थानीया देवविशेषास्तेषामियमाभियोगी, असुरा—भुवनवासिदेवविशेषास्तेषामियमासुरी, संमुह्यन्तीति सम्मोहा—मूढात्मानो देवविशेषास्तेषामियं सम्मोही, एषा हु—स्फुटं 'पञ्चविधा' पञ्चप्रकारा 'अप्रशस्ता' सङ्क्लिष्टा भावना तत्तत्स्वभावाभ्यासरूपा भणितेति शेषः, आसां च मध्ये संयतोऽपि सन् यो यस्यां भावनायां वर्तते कथञ्चिद्भावमान्द्यात् स तद्विधेष्वेव—कन्दर्पादिप्रकारेषु देवेषु गच्छति चारित्रलेशप्रभावात्, उक्तं च—'जो संजओऽवि एयासु अप्पसत्थासु वट्टइ कहिंचि । सो तव्विहेसु गच्छइ सुरेसु भइओ चरणहीणो ॥१॥' [ यः संयतोऽपि एतासु अप्रशस्तासु वर्तते कथंचित् स तद्विधेषु गच्छति सुरेषु भक्तश्चरणहीनः ॥१॥] अत्र

'भइओ चरणहीणो'त्ति यः पुनः सर्वथापि चारित्ररहितः स भाज्यो—विकल्पनीयः,कदाचित्तद्विधेष्वेव सुरेषूत्पद्यते कदाचिच्च नारकतिर्यङ्मानुषेष्विति ॥६४१॥ एताश्च पञ्चापि भावनाः प्रत्येकं पञ्चविधाः, तत्र प्रथमं पञ्चविधां कन्दर्पभावनामाह—'कंदप्पे'त्यादि, कन्दर्पे कौकुच्ये दुःशीलत्वे हास्यकारणे परविस्मयजननेऽपि च विषये भवति कन्दर्पः—कन्दर्पविषया भावना कान्दर्पिकी इत्यर्थः, 'अनेकविधा'पञ्चप्रकारा, तत्र उच्चैःस्वरेण हसनं तथा परस्परं परिहासः तथा गुर्वादिनाऽपि सह निष्ठुरवक्रोक्त्यादयः स्वेच्छालापाः तथा कामकथाकथनं तथा एवं चैवं च कुर्विति विधानद्वारेण कामोपदेशः तथा कामविषया प्रशंसा च कन्दर्पशब्देनोच्यते, तदुक्तम्—'कहकहकहस्स हसणं कंदप्पो अणिहुया य संलावा । कंदप्पकहाकहणं कंदप्पुवएस संसा य ॥ १ ॥" [ कहकहकहेति हसनं कन्दर्पः अनिभृताश्च संलापाः । कन्दर्पकथाकथनं कन्दर्पोपदेशः कन्दर्पप्रशंसा च ॥१॥ ] तथा कुकुचो—भाण्डचेष्टा तस्य भावः कौकुच्यं, तद् द्वेधा—कायकौकुच्यं वाक्कौकुच्यं च, तत्र कायकौकुच्यं यत्स्वयमहसन्नेव भ्रूनयनादिभिर्देहावयवैर्हासकारकैस्तथा तथा चेष्टां करोति यथा परो हसतीति, यदुक्तम्—'भुमनयणवयणदसणच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह हस्सए परो अत्तणा अहसं ॥ १ ॥" [ भ्रूनयनवदनदशनच्छदेन करचरणकर्णादिभिः । तत्तत् करोति यथा परो हसति आत्मनाऽहसन् ॥ १ ॥ ] वाक्कौकुच्यं तु यत्परिहासप्रधानैस्तैस्तैर्वचनजातैर्विविधजीवविरुतैर्मुखातोद्यवादितया च परं हासयतीति, यदुक्तम्—"वाया कुक्कुइओ पुण तं जंपइ जेण हस्सए अन्नो । नाणाविहजीवरुए कुव्वइ मुहतूरए चेव ॥ १ ॥" [ वाक्कौत्कुचिकः पुनस्तत् जल्पति येन हसति अन्यः । नानाविधजीवरुतानि मुखतूर्यमेव च करोति ॥ १ ॥ ] तथा दुष्टं शीलं—स्वभावो यस्य स दुःशीलः तद्भावो दुःशीलत्वं, तत्र यत्सम्भ्रमावेशवशादपर्यालोच्य द्रुतं द्रुतं भाषते यच्च शरत्काले दर्पोद्धुरप्रधानबलीवर्द इव द्रुतं द्रुतं गच्छति यच्च सर्वत्रासमीक्षितं कार्यं द्रुतं द्रुतं करोति यच्च स्वभावस्थितोऽपि तीव्रोद्रेकवशाद्दर्पेण स्फुटतीव

स्फुटति च एतद् दुःशीलत्वं, यदुक्तम्—"भासइ दुयं दुयं गच्छए य दरिओव्व गोव सो सरए । सव्वंदुयद्दुयकारी फुट्टइ व ठिओवि दप्पेणं ॥ १ ॥" [ भापते द्रुतं द्रुतं गच्छति च दृप्तो गौरिव शरदि । सर्व्वद्रुतद्रुतकारी स्थितोऽपि दर्पेण स्फुटतीव ॥ १ ॥ ] तथा भाण्ड इव परेपां छिद्राणि—विरूपवेषभाषाविषयाणि निरन्तरमन्वेपयन् विचित्रैस्तादृशैरेव वेपवचनैर्यद् द्रष्टृणामात्मनश्च हासं जनयति तद् हास्यकारणं, यदुक्तम्—"वेसवयणेहिं हासं जणयंतो अप्पणो परेसिं च । अह हासणोत्ति भन्नइ घयणोव्व छले नियच्छन्तो ॥१॥" [ वेषवचनाभ्यां हास्यमात्मनः परेषां च जनयन् । अथ हास्यकारक इति भण्यते भाण्ड इव छलं पश्यन् ॥ १ ॥ ] 'घयणो'त्ति भाण्डः, तथा इन्द्रजालप्रभृतिभिः कुतूहलैः प्रहेलिकाकुहेटिकादिभिश्च तथाविधग्राम्यलोकप्रसिद्धैर्यात्स्वयमविस्मयमानो वालिशप्रायस्य जनस्य मनोविभ्रममुत्पादयति तत्परविस्मयजननं, यदुक्तम्—"सुरजालमाइएहिं तु विम्हयं कुणइ तव्विहजणस्स । तेसु न विम्हयइ सयं आहट्टकुहेडएहिं च ॥ १ ॥" [ तद्विधजनस्येन्द्रजालादिभिर्विस्मयं करोति । तः न स्वयं विस्मयते प्रहेलिकाकुहेडकैः ॥ १ ॥ ] अत्र 'आहट्ट'त्ति-प्रहेलिका कुहेडकः—आभाणकप्रायः प्रसिद्ध एव ॥ ६४२ ॥ अथ दैवकिल्विषीं भावनां पञ्चविधामाह—'सुये'त्यादि, श्रुतज्ञानस्य—द्वादशाङ्गीरूपस्य केवलिनां—केवलज्ञानवतां धर्माचार्याणां—धर्मोपदेष्टॄणां सङ्घस्य—साधुसाध्वीश्रावकश्राविकासमुदायरूपस्य साधूनां—यतीनां अवर्णवादी मायी च—स्वशक्तिनिगूहनादिना मायावान् देवकिल्विषीं भावनां करोति, तत्र अवर्णः—अश्लाघा असद्दोपोद्घट्टनमितियावत्, स चैवं श्रुतज्ञानस्य—पृथिव्यादयः कायाः षड्जीवनिकायामपि व्यावर्ण्यन्ते शस्त्रपरिज्ञाध्ययनादिष्वपि वहुशस्त एव, एवं व्रतान्यपि—प्राणातिपातनिवृत्त्यादीनि तान्येव पुनः पुनस्तेपु तेषु सूत्रेपु प्रतिपाद्यन्ते, तथा त एव प्रमादा—मद्यादयः अप्रमादाश्च—तद्विपक्षभूता भूयो भूयश्च तत्र तत्र कथ्यन्ते, न पुनरधिकं किञ्चिदपीति पुनरुक्तदोषः, अन्यत्र मोक्षार्थं घटयितव्यमितिकृत्वा किं सूत्रे **सूर्यप्रज्ञप्त्यादिना**

ज्योतिःशास्त्रेण ?, तथा मोक्षार्थमभ्युद्यतानां यतीनां किं योनिप्राभृतोपनिबन्धेन ?, भवहेतुत्वाज्ज्योतिषयोनिप्राभृतप्रभृतीनामिति, उक्तं च—"काया वया य तेच्चिय ते चेव पमाय अप्पमाया य। मोक्खाहिगारियाणं जोइसजोणीहिं किं कज्जं ? ॥ १ ॥" [ कायाः व्रतानि च तान्येव त एव प्रमादा अप्रमादाश्च। मोक्षाधिकारिणां ज्योतिषयोनिभिः किं कार्यम् ?॥१॥ ] केवलिनामवर्णवादो यथा—किमेषां ज्ञानदर्शनोपयोगौ क्रमेण भवत उत युगपत् ?, तत्र यदि क्रमेणेति पक्षः कक्षीक्रियते तदा ज्ञानकाले न दर्शनं दर्शनकाले च न ज्ञानमिति परस्परावरणतैव प्राप्ता, अथ युगपदिति द्वितीयः पक्षः सोऽप्ययुक्तः, यत एककालत्वाद् द्वयोरप्येकताऽऽपत्तिः प्राप्नोति, उक्तं च—"एगतरसमुप्पाए अन्नोऽन्नावरणया दुवेण्हंपि। केवलदंसणणाणाणमेगकाले य एगत्तं ॥ १ ॥" [ एकतरसमुत्पादे अन्योऽन्यावरणता द्वयोरपि केवलज्ञानदर्शनयोः एककाले एकत्वं ॥ १ ॥ ] धर्माचार्याणामवर्णवादो यथा—न शोभनैतेषां जातिः नैते लोकव्यवहारकुशलाः न चैते औचित्यं विदन्तीत्यादि विविधं गुरून् प्रति भाषते, न चैतेषां विनयवृत्त्या वर्तते, तथा अहितश्छिद्राण्यन्वेषयन् सर्वसमक्षं गुरूणामेवासतोऽपि दोषान् वदति, सर्वदैव च तेषां प्रतिकूलतामाचरतीति, उक्तं च—"जच्चाईहिं अवण्णं विभासइ वट्टइ न यावि उववाए। अहिओ छिद्दप्पेही पगासवाई अणणुकूलो ॥१॥" [ जात्यादिभिरवर्णं विभाषते न चाप्युपपाते वर्त्तते। अहितश्छिद्रप्रेक्षी प्रकाशवाद्यननुकूलः ॥ १ ॥ ] सङ्घस्यावर्णवादो यथा—बहवश्च पशुशृगालादीनां सङ्घाः तत्कोऽयमिह सङ्घो भवतामाराध्य इत्यादि वदति, साधूनामवर्णवादो यथा—नामी साधवः परस्परमपि सहन्ते अत एव देशान्तरं परस्परस्पर्धया परिभ्रमन्ति अन्यथा एकत्रैव संहत्या तिष्ठेयुः, तथा मायावितया सर्वदैव लोकावर्जनाय मन्दगामिनः, महतोऽपि च प्रति प्रकृत्यैव निष्ठुराः, तदैव रुष्टास्तदैव तुष्टाश्च, तथा गृहिभ्यस्तैस्तैश्चाटुवचनैरात्मानं रोचयन्ति, सर्वदा सर्ववस्तुसञ्चयपराश्च, उक्तं च—"अविसहणाऽतुरियगई अणाणुवित्ती य अवि गुरूणंपि। खणमित्तपी-

इरोसा गिहिवच्छलगा य संचइगा ॥ १ ॥" [ अविपहणा अत्वरितगतयः गुरूणामप्यननुवृत्तयः । क्षणमात्रप्रीतिरोपाः गृहिवत्सलकाश्च
संचयिकाः ॥ १ ॥ ] अन्यैरप्युक्तं—"अनित्यताशब्दमुदाहरन्ति, भग्नां च तुम्बीं परिशोचयन्ति । यथा तथाऽन्यं च विकत्थयन्ति, हरी-
तकीं नैव परित्यजन्ति ॥ १ ॥" अन्यत्र तु 'सव्वसाहूणं'ति पठित्वा 'मायी'ति भिन्नैव पञ्चमी भावना प्रतिपादिता, यथा—"गूहइ
आयसहावं छायइ य गुणे परस्स संतेवि । चोरोव्व सव्वसंकी गूढायारो हवइ माई ॥१॥" [ गूहते आत्मस्वभावं परस्य च सतोऽपि गुणान्
आच्छादयति । चौर इव सर्वशङ्की गूढाचारो भवति मायी ॥१॥ ] ॥६४३॥ अथ आभियोगीं भावनां पञ्चभेदामाह—'कोउये'त्यादि,
अत्र सप्तमी तृतीयार्थे ततः कौतुकेन १ भूतिकर्मणा २ प्रश्नेन ३ प्रश्नाप्रश्नेन ४ निमित्तेन ५ च पञ्चविकल्पा—पञ्चभेदा भवेत् सा च—आ-
भियोगिकी भावना, तत्र बालादीनां रक्षादिकरणनिमित्तं स्नपनकरभ्रमणाभिमन्त्रणथुक्करणधूपदानादि यत्क्रियते तत्कौतुकं, उक्तं च—
"विण्हवणहोमसिरपरिरया य खारडहणाइं धूवे य । असरिसवेसग्गहणं अवतासणउच्छुभणबंधा ॥ १ ॥" [ अपि स्नपनहोमशिरःपरि-
रयाश्च क्षारदहनानि धूपश्च । असदृशवेषग्रहणं अवत्रासनं क्षेपणं बन्धः ॥१॥ ] तथा च सति शरीरभाण्डकरक्षार्थं भस्मसूत्रादिना यत्प-
रिवेष्टनकरणं तद् भूतिकर्म, उक्तं च—"भूईए मट्टियाइ व सुत्तेण व होइ भूइकम्मं तु । वसहीसरीरभंडयरक्खा अभिओगमाईया
॥ १ ॥" [ भूत्या मृत्तिकया वा सूत्रेण वा भवति भूतिकर्म तु । वसतिशरीरभाण्डरक्षा अभियोगादिकाश्च ॥ १ ॥ ] तथा यत्परस्य पार्श्वे
लाभालाभादि पृच्छयते स्वयं वा अङ्गुष्ठदर्पणखड्गतोयादिषु दृश्यते स प्रश्नः, उक्तं च—"पण्हो य होइ पसिणं जं पासइ वा सयं तु
तं पसिणं । अंगुट्ठुच्छिट्ठपए दप्पणअसितोयकुड्डाई ॥ १ ॥" [ प्रश्नश्च भवति प्रच्छनं यत् पश्यति वा स्वयं तु स प्रश्नः । अङ्गुष्ठोच्छिष्ट-
पदे दर्पणासितोयकुड्यादिषु ॥ १ ॥ ] तथा स्वप्ने स्वयं विद्यया कथितं घण्टिकाद्यवतीर्णदेवतया वा कथितं सत् यदन्यस्मै शुभाशुभ-

जीवितमरणादि परिकथयति स प्रश्नाप्रश्नः, उक्तं च—"पसिणापसिणं सुमिणे विज्जासिट्ठं कहेइ अन्नस्स । अहवा आइंखणियाघंटियसिट्ठं परिकहेइ ॥ १ ॥" [ प्रश्नाप्रश्नः स्वप्ने विद्याशिष्टं अन्यस्मै कथयति । अथवा आखिंणिकाघण्टिकाशिष्टं परिकथयति ॥ १ ॥ ] तथा निमित्तं—अतीतानागतवर्तमानवस्तुपरिज्ञानहेतुर्ज्ञानविशेषः, उक्तं च—"तिविहं होइ निमित्तं तीयपडुप्पण्णऽनागयं चेव । तेण विणा उ न नेयं नज्जइ तेणं निमित्तं तु ॥ १ ॥" [ त्रिविधं भवति निमित्तमतीतं वर्तमानमनागतं चैव । तेन विना तु न ज्ञेयं ज्ञायते तेन निमित्तं तु ॥ १ ॥ ] एतानि च कौतुकभूतिकर्मादीनि गौरवादिनिमित्तं कुर्वाणः साधुरभियोगनिर्वृत्तं कर्म वध्नाति, अपवादपदेन तु गौरवरहितः सन्नतिशयज्ञाने सति निःस्पृहवृत्त्या यदा करोति तदाऽसौ आराधक एव उच्चं च गोत्रं बध्नातीति तीर्थोन्नतिकरणात्, उक्तं च—"एयाणि गारवट्ठा कुणमाणो आभियोगियं वंधे । बीयं गारवरहिओ कुव्वइ आराहगुच्चं च ॥१॥" [ एतानि गौरवार्थं कुर्वन् आभियोगिकं बध्नाति द्वितीयं पदं गौरवरहितः करोति आराधक उच्चैर्गोत्रं च ॥१॥] ॥६४४॥ अथ आसुरीं भावनां पञ्चभेदामाह—'सइ'त्यादि, सदा विग्रहशीलत्वं १ संसक्ततपः २ निमित्तकथनं च ३ निष्कृपताऽपि चापरा ४ पञ्चमकं च निरनुकम्पत्व ५ मिति, तत्र 'सदा' सर्वकालं 'विग्रहशीलत्वं' पश्चादननुतापितया क्षमणादावपि प्रसत्त्यप्राप्त्या च विरोधानुवन्धः, यदाह—"निच्चं विग्गहसीलो काऊण य नाणुतप्पई पच्छा । न य खामिओ पसीयइ सपक्खपरपक्खओ यावि ॥ १ ॥" [ नित्यं विग्रहशीलः कृत्वा च पश्चान्नानुतप्यते न च क्षमितः प्रसीदति स्वपक्षपरपक्षतो वाऽपि ॥ १ ॥ ] तथा संसक्तस्य—आहारोपधिशय्यादिषु सदा प्रतिवद्धभावस्य आहाराद्यर्थमेव च तपः—अनशनादितपश्चरणं संसक्ततपः, यदाह—"आहारउवहिसेज्जासु जस्स भावो उ निच्चसंसत्तो । भावोवहओ कुणइ व तवोवहाणं तदट्ठाए ॥ १ ॥" [ आहारोपधिशय्यासु यस्य तु भावो नित्यं संसक्तः । उपहतभावो वा करोति तपउपधानं तदर्थाय ॥ १ ॥ ] तथा त्रैकालिकस्य लाभालाभ-

सुखदुःखजीवितमरणविषयस्य निमित्तस्य कथनं—अभिमानाभिनिवेशाद्व्याकरणं, यदाह—“तिविहनिमित्तं एक्केक छव्विहं जं तु वन्नियं पुव्वं । अभिमाणाभिनिवेसा वागरियं आसुरं कुणइ ॥ १ ॥” [ त्रिविधं निमित्तमेकैकं षड्विधं यत्तु पूर्वं वर्णितं । अभिमानादभिनिवेशाच्च व्याकृतमासुरीं करोति ॥ १ ॥ ] तथा स्थावरादिसत्त्वेष्वजीवप्रतिपत्त्या गतघृणः कार्यान्तरव्यासक्तः सन् गमनासनादि यः करोति कृत्वा च नानुतप्यते केनचिदुक्तः सन् स निष्कृपः तद्भावो निष्कृपता, यदाहुः—“चंकमणाईसु सत्तो सुनिक्किवो थावराइसत्तेसुं । काउं च नाणुतप्पइ एरिसओ निक्किवो होइ ॥ १ ॥” [ चङ्क्रमणादिषु सक्तः सुनिष्कृपः स्थावरादिसत्त्वेषु कृत्वा च नानुतप्यते ईदृशो निष्कृपो भवति ॥ १ ॥ ] तथा यः कृपापात्रं कुतश्चिद्धेतोः कम्पमानमपि परं दृष्ट्वा क्रूरतया कठिनभावः सन् नानुकम्पाभाग्भवति स निरनुकम्पः तस्य भावो निरनुकम्पत्वं, यदाह—“जो उ परं कंपंतं दट्ठूण न कंपए कढिणभावो । एसो य निरणुकंपो पन्नत्तो वीयरागेहिं ॥१॥” [ यस्तु परं कम्पमानं दृष्ट्वा नानुकम्पते कठिनभावः । एष च निरनुकम्पः प्रज्ञप्तो वीतरागैः ॥१॥ ] ॥६४५॥ अथ सांमोहीं भावनां पञ्चविधामाह—‘उम्मग्गे’त्यादि, उन्मार्गदेशना १ मार्गदूषणं २ मार्गविप्रतिपत्तिः ३ मोहः ४ मोहजननं च ५ एवं सा सांमोही भावना भवति पञ्चविधा, तत्र पारमार्थिकानि ज्ञानादीन्यदूषयन्नेव तद्विपरीतं धर्ममार्गं यदुद्दिशति सा उन्मार्गदेशना, आह च—“नाणादि अदूसिंतो तव्विवरीयं तु उवदिसइ मग्गं । उम्मग्गदेसगो एस आयअहिओ परेसिं च ॥ १ ॥” [ ज्ञानादि अदूषयन् तद्विपरीतं तु देशयति मार्गम् । उन्मार्गदेशक एष आत्मनोऽहितः परेषां च ॥ १ ॥ ] तथा पारमार्थिकं ज्ञानदर्शनचारित्रलक्षणं भावमार्गं तत्प्रतिपन्नांश्च साधून् पण्डितमानी स्वमनीषानिर्मितैर्जातिदूषणैर्यद् दूषयति तन्मार्गदूषणं, आह च—“नाणाइतिहामग्गं दूसइ जो जे य मग्गपडिवन्ना । अबुहो जाईए खलु भन्नइ सो मग्गदूसत्ति ॥ १ ॥” [ ज्ञानादित्रिधामार्गं दूषयति यः ये च मार्गप्रतिपन्नाः (तान्) अबुधो जात्या

भणति स खलु मार्गदूषक इति भण्यते ॥ १ ॥ ] तथा तमेव ज्ञानादिमार्गमसद्दूषणैर्दूषयित्वा जमालिवद्देशत उन्मार्गं यत्प्रतिपद्यते सा मार्गविप्रतिपत्तिः, आह च—"जो पुण तदेव मग्गं दूसित्ता अपंडिओ सतक्काए । उम्मग्गं पडिवज्जइ विप्पडिवण्णो स मग्गस्स ॥ १ ॥" [ यः पुनस्तमेव मार्गं दूषयित्वाऽपण्डितः स्वतर्केण उन्मार्गं प्रतिपद्यते स मार्गात् विप्रतिपन्नः ॥ १ ॥ ] तथा निकाममुपहतमतिः सन्नतिगहनेषु ज्ञानादिविचारेषु यन्मुह्यति यच्च परतीर्थिकसम्बन्धिनीं नानाविधां समृद्धिमालोक्य मुह्यति स संमोहः, आह च—"तह तह उवहयमइओ मुज्झइ नाणचरणंतरालेसु । इड्ढीओ य बहुविहा दट्ठुं जत्तो तओ मोहो ॥१॥" [ तथा तथा उपहमतिकः ज्ञानचरणान्तरेषु मुह्यति बहुविधा ऋद्धीश्च दृष्ट्वा यतः ततो मोहः ॥१॥ ] तथा स्वभावेन कपटेन वा दर्शनान्तरेषु परस्य मोहमुत्पादयति तन्मोहजननं, आह च—"जो पुण मोहेइ परं सब्भावेणं च कइयवेणं वा । संमोहभावणं सो पकरेइ अबोहिलाभाय ॥ १ ॥" [ यो मोहयति पुनः परान् सद्भावेन कैतवेन वा स सम्मोहीभावनां प्रकरोति अबोधिलाभाय ॥ १ ॥ ] एताश्च पञ्चविंशतिरपि भावनाः सम्यक्चारित्रविघ्नविधायित्वादशुभा इति यतिभिः परिहर्तव्याः, यदुक्तम्—"एयाओ विसेसेणं परिहरइ चरणविग्घभूयाओ । एयनिरोहाउ चिय सम्मं चरणंपि पावंति ॥ १ ॥" [ एता विशेषेण परिहरति चरणविघ्नभूताः । एतन्निरोधादेव सम्यक् चरणमपि प्राप्नुवन्ति ॥१॥ ] ति ७३ ॥ ६४६ ॥ इदानीं 'संखा महव्वयाणं'ति चतुःसप्ततं द्वारमाह—

**पंचवओ खलु धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमयाण जिणाणं चउविहो होइ विन्नेओ ॥ ६४७ ॥**

पञ्चव्रतः खलु—प्राणातिपातमृषावादादत्तादानाब्रह्मपरिग्रहविरतिलक्षणपञ्चमहाव्रत एव धर्मः—चारित्रधर्मः पूर्वस्य च—प्रथमस्य च

ऋषभजिनस्य पश्चिमस्य च—चरमस्य वर्धमानजिनस्य मुनीनामिति शेषः, मध्यमकानां—अजितनाथादीनां पार्श्वनाथान्तानां द्वाविंशतेर्जिनानां सम्बन्धिसाधूनां चतुर्व्रतः—चतुर्यामो भवति विज्ञेयः, इह हि तत्तत्कालस्वभावादेव त्रिविधाः पुरुषा भवन्ति—ऋजुजडा वक्रजडा ऋजुप्रज्ञाश्च, तत ऋजवः—शाठ्यरहितास्ते च ते जडाश्च—तथाविधोहापोहव्यपोहादुक्तमात्रार्थग्राहिण ऋजुजडाः—केऽपि प्रथमतीर्थकरसाधवः, ते च नटावलोकनज्ञातेन ज्ञातव्याः, तथाहि—किल केचित् प्रथमतीर्थकरसाधवो विचारगोचराच्चिरेण वसतावागताः, पृष्टाश्च गुरुभिः—किमिति भोश्चिराद्यूयमागताः?, ते च ऋजुत्वादवोचन्—यथा नटं नृत्यन्तमालोकयन्तो वयमस्थाम, ततो गुरुस्तानन्वशात्—यदुत रागादिनिबन्धनं नटनृत्तावलोकनं मा पुनर्भवन्तो व्यधुः, तेऽपि तथैव गुरूणां गिरं प्रतिपेदिरे, अपरेद्युश्च तथैव ते गुरुपृष्टा व्यजिज्ञपन्—यथा नटीं नृत्यन्तीं पश्यन्तः स्थिताः, गुरुभिर्भणितं—ननु पूर्वमेव निषिद्धा यूयं, अथ ते ऋजुजडत्वादूचुः—नटनृत्तनिरीक्षणं भवद्भिः प्रत्यषिध्यत न नटीनृत्तनिरीक्षणमिति, नटे हि निषिद्धे रागनिमित्तत्वान्नटी निषिद्धैवेति प्रत्येतुं तैर्न शकितमिति ते ऋजुजडाः, तथा वक्रजडाः—शठत्वमुग्धत्वधर्मद्वययुक्ताः केचिच्चरमतीर्थकरसाधवः, तेऽप्येवमेव नटदृष्टान्तेनावगन्तव्याः, नवरं ते तथैव गुरुभिर्निवारिताः पुनरन्यदा नटीनिरीक्षणं कृत्वा चिरादागताः पृष्टाश्च वक्रजडत्वादुदरबाधाद्यसदुत्तराणि वितेरुः, निर्बन्धेन च गुरुभिः पृष्टा अस्माभिर्नटी निरीक्षितेत्युक्तवन्तः, सुतरामुपालब्धाश्च सन्तो जडत्वात्कथितवन्तो—यथा नट एव न द्रष्टव्य इत्यस्माभिरधिगतमासीदिति, तथा आर्जवयुक्ताः प्रज्ञावन्तश्च ऋजुप्रज्ञा मध्यमद्वाविंशतिजिनसाधवो महाविदेहव्रतिनश्च, तेऽपि तथैव नटोदाहरणादेव प्रतिपत्तव्याः, ते हि किल तथैव नटनिरीक्षणं प्रति प्रतिषिद्धाः प्राज्ञत्वात्स्वयं विमृश्य रागादिहेतुतया नटीनिरीक्षणमपि परिहृतवन्तः, ततश्च मध्यमजिनसाधव ऋजुत्वेन यथोपदिष्टानुपालनात् प्राज्ञत्वेनोपदेशमात्रादप्यशेषहेयार्थाद्यूहनेन तत्परिहारसमर्थत्वाच्च सुखप्रतिबोध्याः, अतो न अपरिगृहीतायाः

स्त्रियः परिभोगः स्यादिति परिग्रहविरमणेनैव मैथुनविरतिं प्रतिपद्यन्ते इत्यतस्तेषां परमार्थतः पञ्चयामोऽपि चतुर्यामः, प्रथमजिनसाधूनां तु ऋजुजडत्वेन बहुधा बहुमिश्रोपदेशैः समस्तहेयार्थज्ञानसम्भवात् चरमजिनसाधूनां च वक्रजडत्वात्तेन तेन व्याजेन हेयार्थसेवासम्भवात्परिग्रहविरतिव्रतेनैव मैथुनविरतिव्रतं सङ्गृहीतमिति न प्रतिपत्तिः ततः पञ्चयाम एव तेषां धर्म इति ७४ ॥ ६४७ ॥ इदानीं 'किइकम्माण य दिणे संख'त्ति पञ्चसप्ततं द्वारमाह—

**चत्तारि पडिक्कमणे किइकम्मा तिण्णि हुंति सज्झाए । पुव्वण्हे अवरण्हे किइकम्मा चउदस हवंति ॥ ६४८ ॥**

चत्वारि प्रतिक्रमणे कृतिकर्माणि—वन्दनकानि भवन्ति, तत्र आलोचनवन्दनकं प्रथमं क्षामणकवन्दनकं द्वितीयं आचार्यप्रभृतिसर्वसङ्घस्य क्षमणपूर्वमाश्रयणाय वन्दनकं तृतीयं प्रत्याख्यानवन्दनकं चतुर्थं, तथा स्वाध्याये त्रीणि वन्दनकानि, तत्र स्वाध्यायप्रस्थापने एकं वन्दनं स्वाध्यायप्रवेदने द्वितीयं स्वाध्यायकरणानन्तरं च तृतीयं, एवं पूर्वाह्णे—प्रत्युषसि सप्त वन्दनकानि अपराह्णेऽप्येतान्येव सप्त, कालग्रहणोद्देशसमुद्देशानुज्ञादिवन्दनकानां स्वाध्यायवन्दनेष्वेवान्तर्भावात्, तदेवमेतानि ध्रुवाणि कृतिकर्माणि प्रतिदिवसं चतुर्दश भवन्ति अभक्तार्थिकस्य, भक्तार्थिकस्य तु अपराह्णे प्रत्याख्यानवन्दनेनाभ्यधिकानीति ७५ ॥ ६४८ ॥ सम्प्रति 'खेत्ते चारित्ताणं संख'त्ति षट्सप्ततितमं द्वारमाह—

**तिण्णि य चारित्ताइं बावीसजिणाण एरवयभरहे । तह पंचविदेहेसुं बीयं तइयं च नवि होइ ॥ ६४९ ॥**

त्रीण्येव चारित्राणि—सामायिकसूक्ष्मसम्परायथाख्यातलक्षणानि पञ्चसु भरतेषु पञ्चसु चैरवतेषु प्रथमचरमवर्जितानां द्वाविंशतेर्मध्यमजिनानां काले, तथा पञ्चस्वपि महाविदेहेषु साधूनां भवंति, द्वितीयं—छेदोपस्थापनीयं तृतीयं च—परिहारविशुद्धिकं कदाचनापि न भवतीति, प्रथमचरमतीर्थकरयोश्च भरतैरवतेषु पञ्चापि सामायिकादीनि चारित्राणि भवन्तीत्यर्थादुक्तं भवतीति ७६ ॥ ६४९ ॥ इदानीं 'ठियकप्पो'त्ति सप्तसप्ततं द्वारमाह—

**सिज्जायरपिंडंमि य १ चाउज्जामे य २ पुरिसजिट्ठे य ३ । किइकम्मस्स य करणे ४ ठिइकप्पो मज्झिमाणं तु ॥ ६५० ॥**

इह कल्पः—साधुसमाचारः स च सामान्येन दशधा—"आचेलुक्कु १ देसिय २ सेज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥" एष च दशविधोऽपि सततासेवनेन प्रथमचरमजिनसाधूनामवस्थितः कल्पः, मध्यमजिनसाधूनां चतुर्षु स्थानेषु स्थितत्वात् षट्सु चास्थितत्वाद्दशस्थानकापेक्षयाऽनवस्थितः कल्पः, उक्तं च—"ठिय अट्ठियओ य कप्पो आचेलुक्काइएसु ठाणेसु । सव्वेसु ठिया पढमो चउ ठिय छसु अट्ठिया वीओ ॥ १ ॥" [ स्थितोस्थितश्च कल्प आचेलक्यादिकेषु स्थानेषु । सर्वेषु स्थिताः प्रथमः चतुर्षु स्थिताः षट्स्वस्थिता द्वितीयः ॥ १ ॥ ] तथा मध्यमजिनसाधूनामपि चतुर्षु स्थानेषु सदैवावस्थितत्वेन षट्सु च स्थानेषु कादाचित्कावस्थानेन स्थितोऽस्थितश्च द्विधा कल्पः सम्भवति, तत्र तेषां स्थितकल्पस्तावदुच्यते—शय्यातरपिण्डे—वक्ष्यमाणस्वरूपे तथा चतुर्णां यामानां—व्रतानां समाहारश्चतुर्यामं तदेव चातुर्यामं तत्र तथा पुरुष एव ज्येष्ठो—रत्नाधिकः पुरुषज्येष्ठस्तत्र तथा कृतिकर्मणो—वन्दनकस्य करणे—विधाने स्थितः—अवस्थितः कल्पो—मर्यादा मध्यमानां—मध्यमद्वाविंशतिसाधूनां तुशब्दा-

न्महाविदेहसाधूनां च, एतदुक्तं भवति—मध्यमजिनसाधवो महाविदेहसाधवश्च प्रथमचरमजिनसाधुवदवश्यमेव शय्यातरपिण्डं परिहरन्ति-तथा परिग्रहविरमणान्तर्भूतमैथुनविरतिव्रतत्वेन सर्वदैव चतुर्यामं धर्मं मन्यन्ते तथा प्रथमपश्चिमजिनसाधूनां महाव्रतारोपणलक्षणया उपस्थापनया यथा ज्येष्ठत्वं तद्वन्मध्यमजिनसाधूनामपि सर्वेषां प्रव्रज्यया ज्येष्ठत्वं सर्वदैव ज्ञेयं, तथा अभ्युत्थानलक्षणं द्वादशावर्त्तादिरूपं च द्विविधमपि कृतिकर्म साधुभिः साध्वीभिश्च यथापर्यायवृद्धि विधेयं साध्व्यश्च पर्यायज्येष्ठा अपि अद्यदिनदीक्षितैरपि साधुभिर्न वन्दनीयाः पुरुषप्रधानत्वाद् धर्मस्य अनेकदोषसम्भवाच्च, ते चामी—"तुच्छत्तणेण गव्वो जायइ न य संकए परिभवेणं । अन्नोवि होज्ज दोसो थियासु माहुज्जाहिज्जासु ॥ १ ॥" [ तुच्छत्वेन गर्वो जायते न च शङ्कते परिभवे । अन्योऽपि भवेद्दोषः स्त्रीषु माधुर्यहार्यासु ॥ १ ॥ ] स्त्रीषु माधुर्यहार्यासु'माधुर्येण—कोमलवचनेन हर्तुं शक्यास्वित्यर्थः, तदेवमेतानि चत्वार्यपि स्थानानि सर्वेषामपि साधूनां नित्यमवस्थितानीति स्थितकल्पः ७७ ॥ ६५० ॥ इदानीं 'अट्ठियकप्पो'त्ति अष्टासप्ततं द्वारमाह—

**आचेलक्कु १ देसिय २ पडिक्कमणे ३ रायपिंड ४ मासेसु ५ । पज्जुसणाकप्पंमि य ६ अट्ठियकप्पो मुणेयव्वो ॥ ६५१ ॥ आचेलक्को धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं होइ सचेलो अचेलो वा ॥ ६५२ ॥ मज्झिमगाणं तु इमं कडं जमुद्दिस्स तस्स चेवत्ति । नो कप्पइ सेसाणं तु कप्पइ तं एस मेरत्ति ॥ ६५३ ॥ सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमयाण जिणाणं कारणजाए पडिक्कमणं ॥ ६५४ ॥ असणाइचउक्कं वत्थपत्त-कंबलयपायपुंछणए । निवपिंडंमि न कप्पति पुरिमअंतिमजिणजईणं ॥ ६५५ ॥ पुरिमेयरतित्थक-**

**राण मासकप्पो ठिओ विणिद्दिट्ठो । मज्झिमगाण जिणाणं अट्ठियओ एस विण्णेओ ॥ ६५६ ॥**
**पज्जोसवणाकप्पो चेवं पुरिमेयराइभेएणं । उक्कोसेयरभेओ सो नवरं होइ विन्नेओ ॥ ६५७ ॥ चा-**
**उम्मासुक्कोसो सत्तरि राइंदिया जहन्नो उ । थेराण जिणाणं पुण नियमा उक्कोसओ चेव ॥ ६५८ ॥**

आचेलक्ये औद्देशिके प्रतिक्रमणे राजपिंडे मासकल्पे पर्युषणाकल्पे च सततसेवनीयत्वाभावान्मध्यमजिनसाधूनामस्थितकल्पो ज्ञातव्यः,
ते ह्येतानि स्थानानि कदाचिदेव पालयन्तीति ॥६५१॥ तत्र आचेलक्यस्वरूपं तावदाह–'आचे'इत्यादि, अविद्यमानं नञ् कुत्सार्थे कुत्सितं वा
चेलं यस्यासावचेलकस्तद्भाव आचेलक्यं तद्योगाद्धर्मोऽपि चारित्रलक्षण आचेलक्यः स पूर्वस्य च–युगादिदेवस्य पश्चिमस्य च–श्रीमहावीर-
जिनस्य सम्बन्धिसाधूनां भवति, अयमत्र भावार्थः–अचेला द्विधा–अविद्यमानवस्त्रा विद्यमानवस्त्राश्च, तत्र तीर्थकरा अविद्यमानवस्त्राः
सन्तोऽचेला भवन्ति पुरुहूतोपनीतदेवदूष्यापगमानन्तरं, तीर्थकरव्यतिरिक्तास्तु साधवो विद्यमानैरपि वस्त्रैरचेलाः, स्वल्पमूल्यश्वेतखण्डि-
तवस्त्राश्रयणात्, दृश्यते च लोके विवक्षितवस्त्राभावे सचेलत्वेऽपि विशिष्टार्थाप्रसाधकत्वेनासत्त्वाविशेषादचेलव्यवहारः, यथा काचित्पु-
रन्ध्री परिजीर्णशाटिकापरिधाना तन्तुवायमाह–नग्नाऽहं देहि मे शाटिकामिति, मध्यमकानां पुनर्द्वाविंशतेर्जिनानां सम्बन्धिसाधूनां
भवति–स्यात्सचेलः–सवस्त्रोऽचेलो वा–निर्वस्त्रो धर्मः, कुतः ?–तेषामृजुप्राज्ञत्वान्महामूल्यपञ्चवर्णानामितरेषां च वस्त्राणां परिभोगानुज्ञा-
नात्, प्रथमपश्चिमजिनसाधूनां तु ऋजुजडत्वेन वक्रजडत्वेन च महाधनादिवस्त्राणामननुज्ञानात् श्वेतखण्डितादीनामेव चानुज्ञानादचेलक इति
॥६५२॥ 'उद्देसिय'त्ति व्याख्यायते–'मज्झिमे'त्यादि, उद्देशेन–साधुसङ्कल्पेन निर्वृत्तमौद्देशिकं–आधाकर्म अत्र स्थितास्थितकल्पविचारे विव-
क्षितं ततो मध्यमजिनसाधूनामिदं–औद्देशिकं यमेव–साध्वादिकमुद्दिश्य कृतं–निर्वर्तितं तस्यैव न कल्पते, इतिः वाक्यसमाप्तौ, शेषाणां तु–

उद्दिष्टसाधुभ्योऽन्येषां तदौद्देशिकं ग्रहीतुं कल्पते, कस्मादेवमित्याह—'एषा' अनन्तरोक्ता 'मेर'त्ति मर्यादा ऋजुप्राज्ञसाधून् प्रज्ञापनीयलो-
कांश्चाधिकृत्य जिनैः कृतेतिकृत्वा, प्रथमपश्चिमजिनतीर्थे तु यमुद्दिश्य कृतमाधाकर्म तत्तस्यापि न कल्पते शेषसाधूनामपीति ॥६५३॥ 'पडि-
क्कमण'त्ति प्रतन्यते—सप्रतिक्रमणः—'सपडि'इत्यादि, उभयकालं षड्विधावश्यककरणयुक्तो धर्मः—चारित्रधर्मः पूर्वस्य च पश्चिमस्य च जिन-
स्य संबन्धिसाधूनां, मध्यमजिनसाधूनां तु कारणे—प्रतिक्रमणविशोधनीयातिचाररूपे जाते—समुत्पन्ने सति प्रतिक्रमणं कर्तव्यं, कारणाभावे
सर्वदाऽपि ते न प्रतिक्रामन्ति, अयमभिप्रायः—प्रथमपश्चिमजिनसाधूनामतिचारो भवतु वा मा वा तथाऽप्यवश्यतया प्रभाते प्रदोषे च षड्वि-
धाऽऽवश्यकप्रतिक्रमणं गमनागमननद्यवतारादिषु च नियमेनेर्यापथिकाप्रतिक्रमणं कर्तव्यं, ऋजुजडवक्रजडतया तेषामुपकारित्वात्, मध्य-
मजिनमुनीनां पुनः प्रायेणातीचार एव न सम्भवति ऋजुप्रज्ञत्वात्तेषां, अथ कथञ्चित्कदाचनापि सम्भवति तदा तत्क्षणादेव रोगचिकित्सो-
दाहरणेन प्रतिक्रमणमुक्तरूपं कुर्वन्ति, यथा हि जातमात्र एव रोगे चिकित्सा क्रियमाणा सुखावहा भवति, एवं तत्काल एवातीचारविशुद्धये
विधीयमानं प्रतिक्रमणमपीति ॥६५४॥ 'रायपिंड'त्ति व्याख्यानयन्नाह—'असणे'त्यादि, अशनादिचतुष्कं—अशनपानखादिमस्वादिमरूपा
आहाराश्चत्वारः वस्त्रं पात्रं कम्बलं पादप्रोञ्छनकं चेत्येतान्यष्टौ 'नृपपिण्डे' नृपपिण्डविषये चक्रवर्त्यादिसत्कानीत्यर्थः प्रथमान्तिमजिन-
यतीनां न कल्पन्ते, अनेकदोषसम्भवात्, तथाहि—राजकुले भिक्षार्थं व्रजतां यतीनामनवरतमस्तोकराजकुललोकनिर्गमप्रवेशादिभिः संम-
र्दादमङ्गलबुद्ध्या वा पात्रभङ्गदेहघातादयः सम्भवन्ति, चौरहेरिकघातकादिसम्भावनया राजकोपात्कुलगणसङ्घाद्युपघातश्च लोकमध्ये च
गर्हा यथा अहो राजप्रतिग्रहमेते गर्हणीयमपि न परित्यजन्ति, गर्हणीयता च तस्य स्मार्तैरेवमुच्यते—"राजप्रतिग्रहदग्धानां, ब्राह्मणानां
युधिष्ठिर! । खिन्नानामिव बीजानां, पुनर्जन्म न विद्यते ॥ १ ॥" मध्यमजिनसाधूनां पुनर्नृपपिण्डः कल्पतेऽपि, ते हि ऋजुप्रज्ञत्वा-

द्विशेषतोऽप्रमादित्वेनोक्तदोषपरिहारप्रभविष्णवो भवन्ति, इतरे तु ऋजुजडवक्रजडत्वेन न तथेति ॥६५५॥ 'मास'त्ति प्रकटयन्नाह—'पुरी'-त्यादि, पूर्वेतरतीर्थकराणां—प्रथमपश्चिमजिनसाधूनां मासकल्पः—एकत्र मासावस्थितिरूपः समाचारः स्थितः—अवस्थितो निर्दिष्टः—कथितः, तेषां मासकल्पाभावेऽनेकदोषसम्भवात्, उक्तं च—"पडिबंधो लहुयत्तं न जणुवयारो न देसविन्नाणं। नाणाराहणमेए दोसा अविहारपक्खंमि ॥ १ ॥ अस्या व्याख्या—प्रतिबन्धः—शय्याशय्यातरादिवस्तुष्वभिष्वङ्गो भवति, तथा लघुत्वं—लाघवं, एते हि स्वगृहं परित्यज्य गृहान्तरादिषु व्यासक्ता एवं लोकसम्भावनोत्पादनात्, तथा न जनोपकारो—न विविधदेशस्थितभव्यजनानामुपदेशदानादिभिर्गुणः कृतो भवति अथवा न देशान्तरस्थितसुविहितजनस्योपचारो—वन्दनादिपूजा जनेभ्यो वा सकाशादुपचारो न लब्धो भवति सुविहितजनव्यवहारो वा न परिपालितः स्यात् तथा न—नैव देशेषु—विविधमण्डलेषु सञ्चरतां विज्ञानं—विचित्रलोकलोकोत्तरव्यवहारपरिज्ञानं तथा न—नैव आज्ञाराधनं—आगमोक्तार्थानुपालनं, आगमो ह्येवं—'मुत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि य विहारो।' [मुक्त्वा मासकल्पं नास्त्यन्यः सूत्रे विहारः] एते—अनन्तरोक्ता दोषाः—दूषणान्यविहारपक्षे—मासकल्पेन विहाराभ्युपगमाभावे इति। अथ कदाचिद् दुर्भिक्षादिकालदोषसंयमाननुगुणत्वादिक्षेत्रदोषशरीराननुकूलभक्तलाभादिद्रव्यदोषग्लानत्वज्ञानहान्यादिभावदोषवशतो यद्यप्येष मासकल्पो न बहिर्वृत्त्या क्रियते तथाप्यवश्यम्भावेन भावतो वसतिसंस्तारकव्यत्ययादिभिः क्रियमाणत्वादवस्थितः, यदुक्तं—"कालाइदोसओ जइ न दव्वओ एस कीरई नियमा। भावेण उ कायव्वो संथारगवसहियाईहिं ॥ १ ॥" [कालादिदोषतो यदि न द्रव्यत एष क्रियते। भावेन तु नियमात् संस्तारकव्यत्ययादिभिः कर्त्तव्यः ॥ १ ॥] मध्यमजिनसाधूनां पुनरस्थितकः—अनवस्थितः एषः—मासकल्पो विज्ञेयो—ज्ञातव्यः, ऋजुप्रज्ञत्वेन तेषामधिकावस्थानेऽपि पूर्वोक्तदोषासम्भवात्, उक्तं च—"दोसासइ मज्झिमगा अच्छंति उ जाव पुव्वकोडीवि। विहरंति य वासासुवि

अकद्दमे पाणरहिए य ॥ १ ॥ सिन्नंपि मासकप्पं करंति तणुयंपि कारणं पप्प । जिणकप्पियावि एवं एमेव महाविदेहेसुं ॥ २ ॥" [ दोपेष्वसत्सु मध्यमास्तिष्ठन्ति यावत् पूर्वकोटीमपि । विहरन्ति वर्षास्वपि च अकर्दमे प्राणरहिते च ॥१॥ मासकल्पमपूर्णमपि कुर्वन्ति तनुकमपि कारणं प्राप्य । जिनकल्पिका अप्येवं एवमेव महाविदेहेषु ॥२॥ ] 'पज्जोसवण'त्ति व्याख्यानयन्नाह—'पज्जो'इत्यादि, परि—सर्वथा वसनं—एकत्र निवासो निरुक्तविधिना पर्युषणा तद्रूपः कल्पः पर्युषणाकल्पः—न्यूनोदरताकरणं विकृतिनवकपरित्यागः पीठफलकादिसंस्तारकादानं उच्चारादिमात्रकसङ्ग्रहणं लोचकरणं शैक्षाप्रव्राजनं प्राग्गृहीतानां भस्मडगलकादीनां परित्यजनं इतरेषां ग्रहणं द्विगुणवर्षोपग्रहोपकरणधरणं अभिनवोपकरणाग्रहणं सक्रोशयोजनात्परतो गमनवर्जनमित्यादिको वर्षाकालसमाचार इत्यर्थः, सोऽपि न केवलं मासकल्प एव, एवं—उक्तक्रमेण, तमेवाह—पूर्वेतरादिभेदेन—आदिमान्तिममध्यमसाधुविशेषेण, अयमर्थः—प्रथमपश्चिमजिनयतीनां पर्युषणाकल्पोऽवस्थितो मध्यमजिनमुनीनां त्वनवस्थित इति, अत्रैव विशेषमाह—उत्कर्षेतरभेदः—उत्कृष्टजघन्यभेदः स पर्युषणाकल्पः, नवरं—केवलं भवति—स्याद्विज्ञेयः—अवसेय इति ॥ ६५७ ॥ एतावेव भेदौ व्याचष्टे—'चाउ०' चतुर्णां मासानां समाहारश्चतुर्मासं तदेव चातुर्मासं तद्यावदुत्कर्षः—उत्कृष्टः पर्युषणाकल्पः, आषाढपूर्णिमायाः कार्तिकपूर्णिमां यावदित्यर्थः, जघन्यः पुनः सप्तर्ति रात्रिन्दिवानि—अहोरात्राणि भाद्रशुक्लपञ्चम्याः कार्तिकपूर्णिमां यावदित्यर्थः, केषामयं पर्युषणाकल्प इत्याह—स्थविराणां—प्रथमपश्चिमजिनसम्बन्धिस्थविरकल्पिकसाधूनां जिनानां पुनः—पूर्वातिमतीर्थकृज्जिनकल्पिकानां नियमात्—निश्चयेन उत्कृष्ट एव—मासचतुष्टयप्रमाण एव पर्युषणाकल्पः, निरपवादत्वात्तेषामिति ॥ ६५८ ॥

इदानीं 'चेइय'त्ति एकोनाशीतितमं द्वारमाह—

**भत्ती १ मंगलचेइय २ निस्सकड ३ अनिस्सकडचेइयं ४ वावि । सासयचेइय ५ पंचममुवइट्ठं**

जिणवरिंदेहिं ॥ ६५९ ॥ गिहि जिणपडिमाए भत्तिचेइयं १ उत्तरंगघडियंमि । जिणबिंबे मंगलचेइयंति २ समयन्नुणो बिंति ॥ ६६० ॥ निस्सकडं जं गच्छस्स संतियं तदियरं अनिस्सकडं ४ । सिद्धाययणं च ५ इमं चेइयपणगं विणिद्दिट्ठं ॥ ६६१ ॥ नीयाइं सुरलोए भत्तिकयाइं च भरहमाईहिं । निस्सानिस्सकयाइं मंगलकयमुत्तरंगंमि ॥ ६६२ ॥ वारत्तयस्स पुत्तो पडिमं कासीय चेइए रम्मे । तत्थ य थली अहेसी साहम्मियचेइयं तं तु ॥ ६६३ ॥

'भत्ती०' गाथापंचकं, चैत्यशब्दस्य प्रत्येकमभिसम्बन्धाद्भक्तिचैत्यं मङ्गलचैत्यं निश्राकृतं चैत्यमनिश्राकृतं चैत्यं शाश्वतचैत्यं च पञ्चममुपदिष्टं—नामतः कथितं जिनवरेन्द्रैरिति ॥ ६५९ ॥ एतान्येव व्याचष्टे—'गिही'त्यादि गाथाद्वयं, गृहे जिनप्रतिमायां यथोक्तलक्षणाद्युपेतायां प्रतिदिनं त्रिकालं पूजावन्दनाद्यर्थं कारितायां भक्तिचैत्यं, तथा उत्तरङ्गस्य—गृहद्वारोपरिवर्तितिर्यक्काष्ठस्य मध्यभागे घटिते—निष्पादिते जिनबिम्बे मङ्गलचैत्यमिति 'समयज्ञाः' सिद्धान्तवेदिनो 'ब्रुवते' वदन्ति, मथुरायां हि नगर्यां गृहे कृते मङ्गलनिमित्तमुत्तरङ्गेषु प्रथममर्हत्प्रतिमाः प्रतिष्ठाप्यन्ते, अन्यथा तद् गृहं पतति, तथा चावोचाम स्तुतिषु—"जंमि सिरिपासपडिमं संतिकए करइ पडिगिहदुवारे । अज्जवि जणो पुरिं तं महुरमधन्ना न पेच्छंति ॥ १ ॥" [ यस्यां श्रीपार्श्वप्रतिमां शान्तिकृते करोति प्रतिगृहे द्वारि । अद्यापि जनः तां पुरीं मथुरामधन्या न प्रेक्षन्ते ॥ १ ॥ ] तथा 'निश्राकृतं' यद्गच्छस्य कस्यापि सत्कं स एव गच्छस्तत्र प्रतिष्ठादिप्रयोजनेष्वधिक्रियते अन्यः पुनस्तत्र किञ्चित्प्रतिष्ठादिकं कर्तुं न लभते इत्यर्थः, तथा 'तदियरं'ति तस्मात्—निश्राकृतादितरत्—अनिश्राकृतं, यत्र सर्वेऽपि गच्छाः प्रतिष्ठाप्रव्राजनकमालारोपणादीनि प्रयोजनानि कुर्वते इति, तथा 'सिद्धायतनं च' शाश्वतजिनायतनं च, इदं चैत्यपञ्चकं 'विनिर्दिष्टं'

विशेषेण कथितमिति ॥ ६६० ॥ ६६१ ॥ अथवाऽन्येन प्रकारेण पञ्च चैत्यानि भवन्ति, तत्राह—'नीयाइं' इत्यादिगाथाद्वयं, 'नित्यानि' शाश्वतानि चैत्यानि, तानि च 'सुरलोके' देवभूमौ, उपलक्षणत्वान्मेरुशिखरे कूटनन्दीश्वररुचकवरादिषु च भवन्ति, तथा भक्तिकृतानि भरतादिभिः कारितानि, मकारोऽयमलाक्षणिकः, तानि च निश्राकृतानि अनिश्राकृतानि चेति द्वेधा, तथा मङ्गलार्थं कृतं मङ्गलकृतं चैत्यं मथुरादिपुरीषु उत्तरङ्गप्रतिष्ठापितं । तथा वारत्तकमुनेः पुत्रो 'रम्ये' रमणीये 'चैत्ये' देवगृहे 'प्रतिमां' तस्यैव वारत्तकमुनेः प्रतिकृतिमकार्षीत्, तत्र च स्थलीति रूढिरभूत्, तत्तु साधर्मिकचैत्यमिति, भावार्थस्तु कथानकादवसेयः, तच्चेदं—वारत्तकं नगरं, अभयसेनो राजा, तस्य च वारत्तको नाम मन्त्री, एकदा च धर्मघोषनामा मुनिर्भिक्षार्थं तस्य गेहं प्रविष्टः, तद्भार्या च तस्मै भिक्षादानाय घृतखण्डसम्मिश्रपायसपरिपूर्णं पात्रमुत्पाटितवती, अत्रान्तरे च कथमपि ततः खण्डसम्मिश्रो घृतबिन्दुर्भूमौ पतितः, ततः स महात्मा धर्मघोषमुनिर्भगवदुपदिष्टभिक्षाग्रहणविधिविधानविहितोद्यमश्छर्दितदोषदुष्टेयं भिक्षा तस्मान्न कल्पते ममेति मनसि विचिन्त्य भिक्षामगृहीत्वा गृहान्निर्जगाम, वारत्तकमन्त्रिणा च मत्तवारणोपविष्टेन दृष्टो भगवान्निर्गच्छन्, चिन्तितं च—किमनेन मुनिना मदीया भिक्षा न गृहीतेति ?, एवं च यावच्चिन्तयति तावत्तं भूमौ निपतितं खण्डयुक्तघृतबिन्दुं मक्षिकाः समेत्याशिश्रियन् तासां च भक्षणाय प्रधाविता गृहगोधिका तस्या अपि वधाय प्रधावितः सरटः तस्यापि च भक्षणाय प्रधावति स्म मार्जारी तस्या अपि वधाय प्रधावितः प्राघूर्णकः श्वा तस्यापि च वधाय प्रतिद्वन्द्वी प्रधावितोऽन्यो वास्तव्यः श्वा ततो द्वयोरपि तयोः शुनोरभूदन्योऽन्यं युद्धं निजनिजशुनकपराभवपीडया च प्रधावितयोर्द्वयोरपि तत्स्वामिनोरभूत्परस्परं लकुटालकुटि महायुद्धं, दृष्टं चैतत्सर्वमपि वारत्तकमन्त्रिणा, परिभावितं च घृतादेर्बिन्दुमात्रेऽपि भूमौ पतिते यत एवंविधाऽधिकरणप्रवृत्तिः अत एवाधिकरणभीरुर्भगवान्, अहो सुदृष्टो भगवता धर्मः, को हि नाम भगवन्तं

वीतरागमन्तरेणैवमनपायं धर्ममुपदेष्टुमलंभविष्णुः, ततो ममापि स एव देवता तदुक्तमेवानुष्ठानमनुष्ठातुमुचितमिति विचिन्त्य संसारसुखविमुखः शुभध्यानोपगतः सञ्जातजातिस्मरणो देवताऽर्पितसाधुलिङ्गो दीर्घकालं संयममनुपाल्य केवलज्ञानमासादितवान्, कालक्रमेण च सिद्धः, ततस्तत्पुत्रेण स्नेहापूरितमानसेन देवगृहं कारयित्वा रजोहरणमुखपोत्तिकापरिग्रहधारिणी पितृप्रतिमा तत्र स्थापिता सत्रशाला च तत्र प्रवर्तिता सा च साधर्मिकस्थलीति सिद्धान्ते भण्यते ७९ ॥ ६६२ ॥ ६६३ ॥ इदानीं 'पुत्थगपंचगं'ति अशीतितमं द्वारमाह—

**गंडी १ कच्छवि २ मुट्ठी ३ संपुडफलए ४ तहा छिवाडी य ५। एयं पोत्थयपणगं वक्खाणमिणं भवे तस्स ॥ ६६४ ॥ बाहल्लपुहुत्तेहिं गंडीपोत्थो उ तुल्लगो दीहो १। कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥ ६६५ ॥ चउरंगुलदीहो वा वट्टागिइ मुट्ठिपुत्थगो अहवा। चउरंगुलदीहो च्चिय चउरंसो होइ विन्नेओ ॥ ६६६ ॥ संपुडगो दुगमाई फलया वोच्छं छिवाडिमित्ताहे। तणुपत्तूसियरूवो होइ छिवाडी बुहा बेंति ॥ ६६७ ॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो। तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥ ६६८ ॥**

'गंडी०' गाथापंचकं, गण्डिकापुस्तकं कच्छपीपुस्तकं मुष्टिकापुस्तकं संपुटफलकपुस्तकं छेदपाटिपुस्तकं च, एतत्पुस्तकपञ्चकं च ज्ञातव्यमिति शेषः, तस्य च—पुस्तकपञ्चकस्य इदं—वक्ष्यमाणं व्याख्यानं भवेदिति ॥ ६६४ ॥ तदेवाह—'बाहल्ले'त्यादि गाथाचतुष्टयं, बाहल्यं—पिण्डः पृथुत्वं—विस्तरः ताभ्यां तुल्यः—समानश्चतुरस्रो दीर्घश्च गण्डीपुस्तको ज्ञेयः, तथा कच्छपीपुस्तक उभयपार्श्वयोरन्ते—पर्यन्तभागे तनुकः—सूक्ष्मो मध्यभागे च पृथुलो—विस्तृतोऽल्पबाहल्यो ज्ञातव्यः, तथा चतुरङ्गुलः—अङ्गुलचतुष्टयप्रमाणः प्राकृतत्वात् सेर्लोपः

दीर्घो वा—आयतो वृत्ताकृतिः—वर्तुलाकारो मुष्टिपुस्तकः, अथवा चतुरङ्गुलदीर्घ एव—अङ्गुलचतुष्कायाम एव चतुरस्रः—चतुष्कोणो मुष्टिपुस्तको भवति विज्ञेयः; तथा सम्पुटफलकपुस्तको यत्र द्व्यादीनि उभयोः पार्श्वयोः फलकानि—पृष्ठकानि भवन्ति, वणिग्जनस्य उद्धारनिक्षेपाद्याधारः सम्पुटकाख्य उपकरणविशेष इति भावः, इदानीं वक्ष्ये छेदपाटीपुस्तकं, यथा तनुभिः—स्तोकैः पत्रैरुच्छ्रितरूपः—किञ्चिदुन्नतो भवति छेदपाटीपुस्तक इति बुधा ब्रुवते, लक्षणान्तरमाह—दीर्घो वा—महान् ह्रस्वो वा—लघुर्यः पृथुलो—विस्तृतोऽल्पबाहल्यश्च—स्वल्पपिण्डो भवति तं ज्ञातसमयसाराश्छेदपाटीपुस्तकं भणन्तीह—शासने, न चैतत्स्वमनीषिकया व्याख्यायते, यदुक्तं **निशीथचूर्णौ**—'दीहो बाहल्लपुहुत्तेण तुल्लो चतुरस्सो गंडीपुत्थगो, अंते तणुओ मज्झे पिहुलो अप्पबाहल्लो कच्छभी, चतुरङ्गुलो दीहो वा वृत्ताकृति मुट्ठीपुत्थगो, अहवा चतुरङ्गुलदीहो चउरस्सो मुट्ठिपुत्थगो, दुगाइफलगा संपुडगं, दीहो ह्रस्सो वा पिहुलो अप्पबाहल्लो छिवाडी, अहवा तणुपत्तेहिं उस्सिओ छिवाडी"त्ति ८० ॥ ६६५ ॥ ६६६ ॥ ६६७ ॥ ६६८ ॥ इदानीं 'दंडपंचगं'ति एकाशीतितमं द्वारमाह—

**लट्ठी १ तहा विलट्ठी २ दंडो य ३ विदंडओ य ४ नाली अ ५ । भणियं दंडयपणगं वक्खाणमिणं भवे तस्स ॥ ६६९ ॥ लट्ठी आयपमाणा विलट्ठी चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमित्तो उ ॥ ६७० ॥ लट्ठीए चउरंगुल समूसिया दंडपंचगे नाली । नइपमुहजलुत्तारे तीए थग्घिज्जए सलिलं ॥ ६७१ ॥ बज्झइ लट्ठीए जवणिया विलट्ठीएँ कत्थइ दुवारं । घट्टिज्जइ ओवस्सयतणयं तेणाइरक्खट्ठा ॥ ६७२ ॥ उउबद्धम्मि उ दंडो विदंडओ घिप्पए वरिसयाले ।**

**जं सो लहुओ निज्जइ कप्पंतरिओ जलभएणं ॥ ६७३ ॥ विसमाइ वद्धमाणाइं दस य पव्वाइं एगवन्नाइं । दंडेसु अपोल्लाइं सुहाइं सेसाइं असुहाइं ॥ ६७४ ॥**

'लट्ठी०' गाथाषट्कं, यष्टिस्तथा वियष्टिस्तथा दण्डस्तथा विदण्डस्तथा नालिका एतद्दण्डपञ्चकं भणितं तीर्थकरगणधरैः, तस्य च—दण्डपञ्चकस्य इदं—वक्ष्यमाणस्वरूपं व्याख्यानं भवेत्। एतदेवाह—'लट्ठी' इत्यादि सार्धगाथा, यष्टिरात्मप्रमाणः—सार्धहस्तत्रयमानः, वियष्टिर्यष्टेः सकाशाच्चतुर्भिरङ्गुलैः परिहीनो—न्यूनो भवति, दण्डो बाहुप्रमाणः—स्कन्धप्रदेशप्रमाणः विदण्डः कक्षामात्रकः—कक्षाप्रमाणः, नालिका यष्टेः सकाशाच्चतुरङ्गुलसमुच्छ्रिता—आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता षोडशाङ्गुलाधिकहस्तत्रयमानेत्यर्थः, दण्डपञ्चके—दण्डपञ्चकमध्ये नाली नाम दण्डः पञ्चम इति ॥ इदानीं एतेषां पञ्चानामपि दण्डानां प्रयोजनं प्रतिपिपादयिषुरनानुपूर्व्या अपि व्याख्याङ्गत्वात्प्रथमं नालिकायाः प्रयोजनमाह—'**नइपमुहजलुत्तारे तीए थग्घिज्जए सलिलं ।**' नदीप्रमुखजलोत्तारे—नदीह्रदादिकमुत्तरीतुमनोभिर्मुनिभिस्तया नालिकया स्ताध्यते—सलिलं इदं गाधमगाधं वा इति परिमीयते ॥ ६६९ ॥ ६७० ॥ ६७१ ॥ अथ यष्ट्यादीनां प्रयोजनमाह—'वज्झे'त्यादि, यष्ट्या—यष्टिदण्डकेन उपाश्रये भोजनादिवेलायां सागारिकादिरक्षणार्थं यवनिका—तिरस्करिणी वध्यते, तथा वियष्ट्या—वियष्टिदण्डकेन कुत्रापि प्रत्यन्तग्रामादौ तस्करादिरक्षणार्थमुपाश्रयसत्कं द्वारं घट्टयते—आहन्यते, येन खाट्कारश्रवणात् तस्करशुनकादयो नश्यन्तीति, तथा ऋतुवद्धे काले भिक्षाभ्रमणादिवेलायां दण्डको गृह्यते, तेन हि प्रद्विष्टानां द्विपदानां मनुष्यादीनां चतुष्पदानां गवाश्वादीनां बहुपदानां शरभादीनां निवारणं क्रियते, दुर्गस्थानेषु च व्याघ्रचौरादिभये प्रहरणं भवति, वृद्धस्य च अवष्टम्भनहेतुर्भवतीत्यादिप्रयोजनं, वर्षाकाले विदण्डको गृह्यते, यद्—यस्मात्स लघुको भवति ततः कल्पान्तरितः—कल्पस्याभ्यन्तरे कृतः सुखेनैव नीयते,

जलभयेन—यथाऽप्कायेन न स्पृश्यत इति ॥ ६७२ ॥ ६७३ ॥ इदानीमेतेषां दण्डानां शुभाशुभस्वरूपप्रतिपादनायाह—'विसे'त्यादि, पूर्वोक्तेषु पञ्चसु दण्डकेषु पर्वाणि—ग्रन्थिमध्यानि एवंविधानि शुभानि भवन्तीति सम्बन्धः, तत्र विषमाणि—एकत्रिपञ्चसप्तनवरूपाणि तथा दश च—दशसङ्ख्यानि तथा वर्धमानानि—उपर्युपरि प्रवर्धमानमानानि तथा एकवर्णानि—न पुनश्चित्तलकानि तथा 'अपोल्लाइं' अशुषिराणि निबिडानीत्यर्थः एवंविधविशेषणविशिष्टपर्वोपेताः स्निग्धवर्णा मसृणा वर्तुलाश्च दण्डका यतिजनस्य प्रशस्ता इति भावः, 'सेसाई असुहाई'ति शेषाणि—पूर्वोक्तविशेषणविपरीतस्वरूपाणि पर्वाणि अशुभानि—अप्रशस्तानीति, एकादिपर्वाणां च शुभाशुभफलमित्थमोघनिर्युक्तावुक्तं, यथा—"एगपव्वं पसंसंति, दुपव्वा कलहकारिया । तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ १ ॥ पंचपव्वा य जा लट्ठी, पंथे कलहनिवारिणी । छपव्वाए य आयंको, सत्तपव्वा निरोगिया ॥ २ ॥ अट्ठपव्वा असंपत्ती, नवपव्वा जसकारिया । दसपव्वा उ जा लट्ठी, तहियं सव्वसंपया ॥ ३ ॥" इति ८१ ॥ ६७४ ॥ इदानीं 'तणपणगं'ति द्व्यशीतितमं द्वारमाह—

**तणपणगं पुण भणियं जिणेहिँ जियरागदोसमोहेहिं । साली १ वीहिय २ कोद्दव ३ रालय ४ रन्ने तणाइं च ५ ॥ ६७५ ॥**

तृणपञ्चकं पुनर्भणितं जिनैर्जितरागद्वेषमोहैर्यथा शालिव्रीहिककोद्रवरालकसम्बन्धीनि तृणानि—पलालप्रायाणि अरण्ये—अरण्यविषयाणि च, तत्र शालयः—कलमशालिप्रभृतयः व्रीहयः—षष्टिकादयः कोद्रवो—धान्यविशेषः प्रतीतः रालकः—कङ्गुविशेषः अरण्यतृणानि—श्यामाकप्रमुखानि ॥ ८२ ॥ ६७५ ॥ इदानीं 'चम्मपंचगं'ति त्र्यशीतितमं द्वारमाह—

**अय १ एल २ गावो ३ महिसी ४ मिगाणमजिणं च ५ पंचमं होइ। तलिगा १ खल्लग २ वद्धे ३ कोसग ४ कित्ती य ५ वीयं तु ॥ ६७६ ॥**

अजाः—छगलिकाः एडका—अजविशेषाः गावो महिष्यश्च प्रतीताः मृगा—हरिणाः, एतेषां सम्बन्धीनि पश्च अजिनानि—चर्माणि भवन्ति, अथवा द्वितीयादेशेन इदं चर्मपञ्चकं, यथा—'तलिग'त्ति उपानहस्ताश्च एकतलिकाः, तदभावे यावच्चतुस्तलिका अपि गृह्यन्ते, अचक्षुर्विषये रात्रौ गम्यमाने सार्थवशाद्दिवापि मार्गं मुक्त्वा उन्मार्गेण गम्यमाने स्तेनश्वापदादिभयेन वा त्वरितं गम्यमाने कण्टकादिसंरक्षणार्थमेताः पादयोः क्रियन्ते, यद्वा कश्चित्सुकुमारपादत्वाद्गन्तुमसमर्थो भवति ततः सोऽपि गृह्णातीति, तथा खल्लकानि—पादत्राणानि, यस्य हि पादौ विचर्चिकावातेन स्फुटितौ भवतः स मार्गे गच्छन् तृणादिभिर्दूयते यद्वा कस्यचित्सुकुमारपादत्वात् शीतेन पार्ष्ण्यादिप्रदेशेषु विपादिकाः स्फुटन्ति ततस्तद्रक्षणार्थं तानि पादयोः परिधीयन्ते, तथा 'वद्धे'त्ति वर्ध्रास्ते च त्रुटितोपानह्रादिसन्धानार्थं गृह्यन्ते, तथा कोशकः—चर्ममय उपकरणविशेषः, यदि हि कस्यचित्पादनखाः पाषाणादिषु प्रतिस्खलिता भज्यन्ते तदा तेषु कोशकेष्वङ्गुल्योऽङ्गुष्ठो वा क्षिप्यन्ते, अथवा नखरदनिकाधारः कोशकः, तथा कृत्तिः—मार्गे दावानलभयाद्गच्छे यच्चर्म ध्रियते यत्र वा प्रचुरः सचित्तपृथिवीकायो भवति तत्र पृथिवीकाययतनार्थं कृत्तिमास्तीर्य अवस्थानादि क्रियते यद्वा कदाचित्तस्करैर्मुषिता भवेयुस्ततोऽन्यप्रावरणाभावे तामपि प्रावृण्वन्तीत्येतद् द्वितीयं यतिजनयोग्यं चर्मपञ्चकं भवति ८३ ॥ ६७६ ॥ इदानीं 'दूसपंचगं'ति चतुरशीतितमं द्वारमाह—

**अप्पडिलेहियदूसे तूली १ उवहाणगं च २ नायव्वं। गंडुवहाणा ३ ऽऽलिंगिणि ४ मसूरए ५ चेव पोत्तमए ॥ ६७७ ॥ पल्हवि १ कोयवि २ पावार ३ नवयए ४ तह य दाढिगाली य ५। दुप्पडि-**

**लेहियदूसे एयं बीयं भवे पणगं ॥ ६७८ ॥ पल्हवि हत्थुत्थरणं कोयवओ रूयपूरिओ पडओ। दढगाली धोयपोत्ती सेस पसिद्धा भवे भेया ॥ ६७९ ॥ खरडो १ तह वोरुट्टी २ सलोमपडओ ३ तहा हवइ जीणं ४। सदसं वत्थं ५ पल्हविपमुहाणमिमे उ पज्जाया ॥ ६८० ॥**

'अप्पे' त्यादिगाथाचतुष्कं, दूष्यं—वस्त्रं, तद् द्विविधं—अप्रत्युपेक्ष्यं दुष्प्रत्युपेक्ष्यं च, तत्र यत्सर्वथाऽपि न प्रत्युपेक्षितुं शक्यते तदप्रत्यु-पेक्ष्यं, यच्च सम्यक् न शक्यते प्रत्युपेक्षितुं तद् दुष्प्रत्युपेक्ष्यं, तत्र अप्रत्युपेक्षितदूष्यपञ्चकं यथा—तूली—सुसंस्कृतरूतभृतोऽर्कतूलादिभृतो वा विस्तीर्णः शयनीयविशेषः, तथा उपधानकं—हंसरोमादिपूर्णमुच्छीर्षकं, तथा उपाधानकस्योपरि कपोलप्रदेशे या दीयते सा गण्डो-पधानिका गल्लमसूरिकेत्यर्थः, तथा जानुकूर्परादिषु या दीयते सा आलिङ्गिनी, तथा वस्त्रकृतं चर्मकृतं वा वृत्तं बूर्यादिपूर्णमासनं मसूरकः, एतानि सर्वाण्यपि पोतमयानि—वस्त्रमयानि प्रायेणेति ॥ ६७७ ॥ अथ दुष्प्रत्युपेक्षितपञ्चकमाह—पल्लविः कोयविः प्रावारकः नवतकं तथा दढगालिश्च एतद् दुष्प्रत्युपेक्षितदूष्यविषयं द्वितीयं पञ्चकं भवेत् ॥ ६७८ ॥ अथैतदेव व्याख्यानयन्नाह—पल्हविः—हस्त्यास्तरणं, हस्तिनः पृष्ठे यदास्तीर्यते खरड इत्यर्थः ये चान्ये आस्तरकादयोऽल्परोमयुक्ता बहुरोमयुक्ता वा ते सर्वेऽप्यत्रान्तर्भवन्ति, यदुक्तं निशीथचूर्णौ—"जे य वड्डुअत्थरगइयाई माणभेआ मट्ठरोमा उल्लुतरोमा वा ते सव्वे इत्थ निवयंति"त्ति 'वड्डुअत्थरगाइ'त्ति यः किल उष्ट्रोपरि न्य-स्यते, तथा कोयविको—रूतपूरितः पटः, वूरुट्टीति यदुच्यते, ये चान्ये उल्वणरोमाणो नेपालकम्बलप्रभृतयस्ते सर्वे अत्रान्तर्भवन्ति, उक्तं च—"जे अन्ने एवमाइभेआ उव्वणरोमा कंबलगाइआ ते सव्वे इत्थ निवयंति"त्ति, तथा दढगालिर्धौतपोतिका ब्राह्मणानां सम्बन्धि सदशं परिधानवस्त्रमित्यर्थः, ये चान्ये द्विसरसूत्रपटीप्रभृतयो भेदास्ते सर्वेऽत्र निपतन्ति, उक्तं च—"विरलिमाई भूरिभेआ सव्वे इत्थ

निवयंति"त्ति, विरलिमाइत्ति—दोरियाप्रमुखाः, शेषौ च—प्रावारनवतकलक्षणौ प्रसिद्धावेव भेदौ, तत्र प्रावारः—सलोमकः पटः, स च माणिकीप्रभृतिकाः, अन्ये तु प्रावारको—बृहत्कम्बलः परियच्छिर्वेत्याहुः, नवतं च—जीणमिति ॥ ६७९ ॥ अथ पल्हविप्रमुखाणां पञ्चनामपि सुखाववोधार्थं क्रमेण पर्यायानाह—'खरे'त्यादि, इयं च व्याख्यातार्था ८४ ॥ ६८० ॥ इदानीं 'पञ्च अवग्गहभेय'त्ति पञ्चाशीतितमं द्वारमाह—

**देविंद १ राय २ गिहवइ ३ सागरि ४ साहम्मि ५ उग्गहे पंच । अणुजाणाविय साहूण कप्पए सव्वया वसिउं ॥ ६८१ ॥ अणुजाणावेयव्वो जईहिं दाहिणदिसाहिवो इंदो १ । भरहंमि भरहराया २ जं सो छक्खंडमहिनाहो ॥ ६८२ ॥ तह गिहवईवि देसस्स नायगो ३ सागरित्ति सेज्जवई ४ । साहम्मिओ य सूरी जंमि पुरे विहियवरिसालो ५ ॥ ६८३ ॥ तप्पडिवद्धं तं जाव दोण्णि मासे अओ जईण सया । अणणुन्नाए पंचहिवि उग्गहे कप्पइ न ठाउं ॥ ६८४ ॥**

'देविंदे' त्यादिगाथाचतुष्कं, देवेन्द्रराजगृहपतिसागारिकसाधर्मिकाणां सम्बन्धिनः पञ्चावग्रहाः—आभवनव्यवहारा भवन्ति, ततस्ताननुज्ञाप्य साधूनां—व्रतिनां कल्पते सर्वदा वस्तुं—वासं कर्तुं, नान्यथेति ॥ ६८१ ॥ एतदेव व्यक्तं व्याचष्टे—'अणुजाणावेयव्वे'त्यादि गाथात्रयं, इह लोकमध्यवर्तिनो मेरुमहामहीधरस्य वहुमध्यभागे ऊर्द्धाधःप्रतररूपा तिर्यक् च एकप्रादेशिकी श्रेणिरस्ति, तया च सर्वोऽपि लोको द्विधाकृतो—दक्षिणार्धमुत्तरार्धं च, तत्र दक्षिणार्धं शक्रस्याभवति उत्तरार्धं च ईशानस्य, ततो दक्षिणार्धवर्तिभिर्यतिभिर्दक्षिणदिशाया—दक्षिणलोकार्धस्याधिपतिरिन्द्रः शक्राभिधोऽनुज्ञापयितव्यः उत्तरार्धवर्तिव्रतिभिस्तु ईशानेन्द्रः १, तथा चक्रवर्त्यादयो राजानो

यावन्मात्रस्य क्षेत्रस्य प्रभवन्ति तावत्प्रमाणं क्षेत्रं राजावग्रहः, तत्र तिर्यग् मागधादिषु तीर्थेषु यावच्चक्रवर्तिनः शरो व्रजति ऊर्द्धमपि क्षुल्लहिमवद्गिरौ चतुःषष्टिं सूत्रादेशेन द्विसप्ततिं वा योजनानि यावत्, उक्तं च कल्पचूर्णौ—'उड्ढं जाव सरो चेव चुल्लहिमवंतकुमारस्स मेराए वच्चति चउसट्ठिं जोयणाणि सुत्ताएसेण बावत्तरिं'ति, अधस्तु गर्तावटादिषु, ततो भरतक्षेत्रे भरतश्चक्री यतिभिरनुज्ञापयितव्यः, यद्—यस्मात्कारणात् स षट्खण्डमहीनाथः, उपलक्षणमेतत् ततः स्वस्वकाले सगरादयोऽप्यनुज्ञापयितव्याः, एवमैरवतादिष्वपि निजनिजचक्रवर्तिनः २, तथा गृहपतिः—देशस्य—मण्डलस्य नायकः—अधिपतिः तदवग्रहे—तदधिष्ठितमण्डलरूपे वसद्भिः सोऽप्यनुज्ञापयितव्यः ३, तथा सागारिकः—शय्यापतिर्वसतिस्वामीत्यर्थः तमप्यनुज्ञाप्य वृत्तिवरण्डकादिपरिक्षिप्तगृहादिरूपे तदवग्रहे स्थातव्यं, एप च तिर्यक् विज्ञेयः, अधस्तु द्वयोरपि गृहपतिसागारिकयोर्वापीकूपभूमिगृहादिपर्यन्तः ऊर्द्ध्वं पुनः पर्वतपादपादिशिखरान्तोऽवग्रह इति ४, तथा समानो धर्मः सधर्मस्तेन चरतीति साधर्मिकः सूरिः—आचार्यः, उपलक्षणत्वादुपाध्यायादिश्च, ततः स आचार्यादिर्यस्मिन् पुरे—नगरे विहितवर्षाकालः—कृतचतुर्मासकस्तन्नगरं गव्यूतपञ्चकादर्वाक् तस्याचार्यादेः प्रतिबद्धं तदवग्रह इत्यर्थः, अयं च क्षेत्रतः, कालतस्तु वर्षाकालानन्तरमपि द्वौ मासौ, एते पञ्च अवग्रहाः, अतः पञ्चभिरेतैर्देवेन्द्रादिभिरननुज्ञाते अवग्रहे यतीनां सदा—सर्वकालं न कल्पते स्थातुं—अवस्थानं कर्तुमिति, अत्र चोत्तरोत्तरेणावग्रहेण पूर्वः पूर्वो बाधितो बोद्धव्यः, यथा राजावग्रहेण देवेन्द्रावग्रहो बाधितः, तथाहि—राजावग्रहे राज्ञ एव प्राधान्यं, न देवेन्द्रस्य, ततस्तत्र राजैवानुज्ञापयितव्यो न तु देवेन्द्र इति, एवं राजावग्रहमपि गृहपत्यवग्रहो बाधते, तमपि सागारिकावग्रहः, तमपि साधर्मिकावग्रह इति ॥ ८५ ॥ ६८२ ॥ ६८३ ॥ ६८४ ॥ इदानीं 'परीसह'त्ति पडशीतं द्वारमाह—

**खुहा १ पिवासा २ सी ३ उण्हं ४, दंसा ५ चेला ६ रइ ७ त्थिओ ८ । चरिया ९ निसीहिया**

१० सेज्जा ११, अक्कोस १२ वह १३ जायणा १४ ॥ ६८५ ॥ अलाभ १५ रोग १६ तणफासा १७, मल १८ सक्कार १९ परीसहा । पन्ना २० अन्नाण २१ सम्मत्तं २२, इइ बावीसं परीसहा ॥ ६८६ ॥ दंसणमोहे दंसणपरीसहो पन्नऽनाण पढमंमि । चरमेऽलाभपरीसह सत्तेव चरित्तमोहम्मि ॥६८७॥ अक्कोस अरइ इत्थी निसीहियाऽचेल जायणा चेव । सक्कारपुरक्कारे एक्कारस वेयणिज्जंमि ॥ ६८८ ॥ पंचेव आणुपुव्वी चरिया ६ सेज्जा ७ तहेव जल्ले य ८ । वह ९ रोग १० तणफासा ११ सेसेसुं नत्थि अवयारो ॥ ६८९ ॥ बावीसं बायरसंपराय चउद्दस य सुहुमरायम्मि । छउमत्थवीयरागे चउद्दस एक्कारस जिणंमि ॥ ६९० ॥ वीसं उक्कोसपए वट्टंति जहन्नओ य एक्को य । सीओसिण-चरियनिसीहिया य जुगवं न वट्टंति ॥ ६९१ ॥

'खुहे' त्यादिगाथासप्तकं, मार्गाच्यवनार्थं निर्जरार्थं च परि–सामस्त्येन सह्यन्त इति परीषहाः, तत्र मार्गाच्यवनार्थं दर्शनपरीषहः प्रज्ञापरीषहश्च, शेषा विंशतिर्निर्जरार्थं, एते च द्वाविंशतिसङ्ख्याः क्षुत्पिपासाशीतोष्णदंशाचेलारतिस्त्रीचर्यानैषेधिकीशय्याऽऽक्रोशवधयाच्ञाऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानसम्यक्त्वानि, अमीषां च यथाक्रमं सङ्क्षेपतोऽयमर्थः–क्षुद्वेदनामुदितामशेषवेदनातिशायिनीं सम्यग्विषहमाणस्य जठरान्तर्विदाहिनीमागमविहितेन भक्तेन शमयतोऽनेषणीयं च परिहरतः क्षुत्परीषहविजयो भवति, अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः, अयं चाशेषपरीषहाणां मध्येऽतिदुस्सह इत्यादावुपन्यस्तः १ तदनु बुभुक्षापीडितस्य तदुपशमनायोच्चावचेषु गृहेषु हिण्डमानस्य श्रमवशात् तृष्णा जायते, ततः पिपासापरीषहो द्वितीयस्थाने, एवमग्रेतनपरीषहाणामप्युत्तरोत्तरभणने कारणं ज्ञातव्य-

मिति, तत्र पातुमिच्छा—पिपासा सैवात्यन्तव्याकुलीकरणहेतुरपि शीतलजलाद्यप्रार्थनतः परिषह्यमाणा पिपासापरीषहः, एषणीयभावे तु प्राणिदयालुना समप्रमनेषणीयं परिहरता शरीरस्थितिः कार्या २ तथा 'श्यैङ्गता'वित्यस्य गत्यर्थत्वात् कर्तरि क्तः, ततो 'द्रवमूर्तिस्पर्शयोः श्य' ( पा० ६–१–२४ ) इति सम्प्रसारणे स्पर्शवाचित्वाच्च 'श्योऽस्पर्शे' ( पा० ८–२–४७ ) इति नत्वाभावे शीतं—शिशिरस्पर्शः तदेव परीषहः शीतपरीषहः, शीते महत्यपि पतति जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय आगमोक्तेन विधिना एषणीयमेव कल्पादि गवेषयेत् परिभुञ्जीत वा, नापि शीतार्तो ज्वलनं ज्वालयेत् अन्यज्वालितं वा न सेवेत, एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति ३ तथा 'उष् दाहे' इत्यस्य उणादिनक्प्रत्ययान्तस्योष्णं—निदाघादितापात्मकं तदभितप्तशिलादिरूपं च तदेव परीषह उष्णपरीषहः, उष्णतप्तोऽपि न जलावगाहनस्नानव्यजनवातादिकं वांछेत, न चातपत्राद्युष्णत्राणायाददीत, किन्तूष्णमापतितं सम्यक्सहेत, एवमनुतिष्ठतोष्णपरीषहजयः कृतो भवति ४ तथा दशन्ति—भक्षयन्ति इति पचाद्यचि दंशाः मशकयूकामत्कुणादिक्षुद्रसत्त्वोपलक्षणमेतत् त एव परीषहो दंशपरीषहः, दंशमशकादिभिर्दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, नापि व्यजनादिना तन्निवारयेदित्येवं दंशादिपरीषहजयः कृतः स्यात्, एवमन्यत्रापि क्रिया योज्या ५ तथा चेलस्याभावोऽचेलं जिनकल्पिकादीनां अन्येषां तु यतीनां भिन्नं स्फुटितमल्पमूल्यं च चेलमप्यचेलमुच्यते, यथा कुत्सितं शीलमशीलमिति, तदेव परीषहोऽचेलपरीषहः, अमहामूल्यानि खण्डितानि मलिनानि च वासांसि साधुर्धारयेत्, न च तथाविधवस्त्रः सन् मम प्राक्परिगृहीतं वस्त्रं नास्ति नापि तथाविधो दातेति दैन्यं गच्छेत्, अन्यलाभसम्भावनया प्रमुदितमानसश्च न भवेदिति ६ तथा रमणं रतिः—संयमविषया धृतिस्तद्विपरीता त्वरतिः सैव परीषहोऽरतिपरीषहः, विहरतस्तिष्ठतो वा यद्यरतिरुत्पद्यते तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव भवितव्यं ७ तथा स्त्यायतेः स्तृणातेर्वा त्रटि टित्वात्

ङीपि स्त्री सैव तद्गतरागहेतुगतिविभ्रमेङ्गिताकारविलोकनेऽपि 'त्वग्रुधिरमांसमेदस्नाय्वस्थिसिरावणैः सुदुर्गन्धि । कुचनयनजघनवदनोरुमूर्च्छितो मन्यते रूपम् ॥ १ ॥ तथा—निष्ठीवनं जुगुप्सत्यधरस्थं पिबति मोहितः प्रसभम् । कुचजघनपरिश्रावं नेच्छति तन्मोहितो भजते ॥ २ ॥' इत्यादितत्स्वरूपपरिभावनातः परिषह्यमाणत्वात्परीषहः स्त्रीपरीषहः, अयमर्थः—न स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितविभ्रमागाश्चित्ताक्षेपकारिणीश्चेष्टाश्चिन्तयेत्, न जातुचिच्चक्षुरपि तत्र निक्षिपेत् मोक्षमार्गार्गलासु ललनासु कामबुद्ध्येति ८ तथा चरणं चर्या द्रव्यतो ग्रामानुग्रामविहरणात्मिका भावतस्त्वेकस्थानमधितिष्ठतोऽप्यप्रतिबद्धता सैव परीषहश्चर्यापरीषहः, वर्जितालस्यो ग्रामनगरकुलादिष्वनियतवसतिर्निर्ममत्वात्प्रतिमासं चर्यामाचरेदिति ९ तथा निषेधनं निषेधः—पापकर्मणां गमनादिक्रियायाश्च प्रतिषेधः स प्रयोजनं यस्याः सा नैषेधिकी—शून्यागारश्मशानादिका स्वाध्यायादिभूमिः सैव परीषहो नैषेधिकीपरीषहः, अन्यत्र तु निषद्येत्येवं पठ्यते, तत्र निषीदन्त्यस्यामिति निषद्या—स्थानं स्त्रीपशुपण्डकविवर्जितं तत्र इष्टानिष्टोपसर्गान् अनुद्विग्नः सम्यक्सहेत १० तथा शेरतेऽस्यामिति शय्या—उपाश्रयः संस्तारको वा सैव परीषहः शय्यापरीषहः समविषमभूमिकं पांशूत्करप्रचुरमतिशिशिरं बहुघर्मकं वा उपाश्रयं वा मृदुकठिनादिभेदेनोच्चावचं संस्तारकं वा प्राप्य न कदाचिदप्युद्विजेत् ११ तथा आक्रोशनमाक्रोशः—अनिष्टवचनं स एव परीषहः आक्रोशपरीषहः तद्यदि सत्यं तर्हि कः कोपः? शिक्षयति हि मामयमुपकारी, न पुनरेवं करिष्यामीति, अनृतं चेत् सुतरां कोपो न कर्तव्यः, उक्तं च—"आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या । यदि सत्यं कः कोपः? स्यादनृतं किमिह कोपेन? ॥ १ ॥" इत्यादि परिभाव्य न कोपं कुर्यात् १२ तथा हननं वधः—ताडनं स एव परीषहो वधपरीषहः, परैर्हि दुरात्मकैः पाणिपार्ष्णिलत्ताकशादिभिः प्रद्वेषादितस्ताडनं क्रियमाणं सम्यक्सहेत, न पुनः कोपकलुषितान्तःकरणो भवेत्, चिन्तयेच्च—अन्यदेवेदं शरीरमात्मनः पुद्गलसंहतिरूपं, आत्मा पुनर्न शक्यत एव ध्वंस-

यितुं, अतः स्वकृतफलमुपनतमिदं ममेति १३ तथा याचनं याञ्चा प्रार्थनेत्यर्थः सैव परीषहो याञ्चापरीषहः, भिक्षोर्हि वस्त्रपात्रान्नपानप्रतिश्रयादि परत एव सर्वमपि लभ्यं, शालीनतया च यद्यपि याञ्चां कर्तुं न शक्नोति तथापि त्रपामपहाय प्रागल्भ्यभाजा सञ्जाते कार्ये स्वधर्मकायपरिपालनाय याचनमवश्यं कार्यमिति १४ तथा लम्भनं लाभो न लाभोऽलाभः—अभिलषितविषयाप्राप्तिः स एव परीषहोऽलाभपरीषहः, याचनीयालाभेऽपि—"वहुं परघरे अत्थि, विविहं खाइमसाइमं । न तत्थ पंडिओ कुप्पे, इच्छा दिज्ज परो न वा ॥१॥" [ वहु परगृहेऽस्ति विविधं खाद्यस्वाद्यं । न तत्र पण्डितः कुप्येत् इच्छा परो दद्यात् न वा ॥ १ ॥ ] इत्यादि परिभाव्य प्रसन्नचेतसाऽविकृतवदनेन च भवितव्यं १५ तथा रोगः—कण्डूज्वरादिरूपः स एव परीषहो रोगपरीषहः, ज्वरकासश्वासादिके सत्यपि न गच्छनिर्गता जिनकल्पिकादयश्चिकित्साविधापने प्रवर्तन्ते, किन्तु सम्यगेव तदधिसहन्ते स्वकर्मणः फलमिदमुदितमिति चिन्तयन्तः, गच्छवासिनस्त्वल्पवहुत्वालोचनया सम्यग् सहन्ते प्रवचनोक्तेन वा विधिना चिकित्सामपि कारयन्तीति १६ तथा तरन्तीति तृणानि, औणादिको नक् ह्रस्वत्वं च, तेषां स्पर्शस्तृणस्पर्शः स एव परीषहस्तृणस्पर्शपरीषहः, अशुषिरतृणस्य हि दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छवासिनां च यतीनां, तत्र येषां शयनमनुज्ञातं निष्पन्नानां ते तान् दर्भान् भूमावीपदार्द्रतादियुक्तायामास्तीर्य संस्तारोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चौरापहृतोपकरणो वा अत्यन्तजीर्णत्वात्प्रतनुसंस्तारकपट्टको वा तदुपरि शेते, तत्र च शयानस्य यद्यपि कठिनतीक्ष्णाग्रभागैस्तृणैरत्यन्तपीडा समुपजायते तथापि परुषदर्भादितृणस्पर्श सम्यक् सहेतेति १७ तथा मलः—प्रस्वेदजलसम्पर्कतः कठिनीभूतं रजः स एव परीषहो मलपरीषहः, मलो हि वपुषि स्थिरतां गतो ग्रीष्मोष्मसन्तापजनितघर्मजलार्द्रतां प्राप्तो दुर्गन्धिर्महान्तमुद्वेगमापादयति, तदपनयनाय न कदाचिदभिषेकाद्यभिलाषं कुर्यादिति १८ तथा सत्कारो—भक्तपानान्नवस्त्रपात्रप्रदानवन्दनाभ्युत्थानासनसम्पादनस-

द्भूतगुणोत्कीर्तनादिरूपा प्रतिपत्तिः स एव परीषहः सत्कारपरीषहः, सत्कारं हि परस्माज्जायमानं दृष्ट्वा नोत्कर्षाद्याकुलं चेतः कुर्यात् असत्कारितो वा न प्रद्वेषं व्रजेत् १९ तथा प्रज्ञायतेऽनया वस्तुतत्त्वमिति प्रज्ञा—बुद्ध्यतिशयः स एव परीषहः प्रज्ञापरीषहः, मनोज्ञप्रज्ञाप्राग्भारप्राप्तौ हि न गर्वमुद्वहेत्, प्रज्ञाप्रतिपक्षेणाप्यबुद्धिकत्वेन परीषहो भवति नाहं किञ्चिज्जाने मूर्खोऽहं सर्वैः परिभूत इत्येवं परितापमुपागतस्य कर्मविपाकोऽयमिति मत्वा तदकरणात्तत्परीषहजयः २० तथा ज्ञायते वस्तुतत्त्वमनेनेति ज्ञानं—श्रुताख्यं तदभावोऽज्ञानं स एव परीषहोऽज्ञानपरीषहः, आगमशून्योऽहमिति न मनसि खेदं विदध्यात्, एतत्प्रतिपक्षेणापि ज्ञानेन परीषहो भवति, ततः समग्रश्रुतपारगोऽहमिति नोत्सेकं गच्छेदिति २१ तथा सम्यक्त्वं—सम्यग्दर्शनं तदेव क्रियादिवादिनां विचित्रमतश्रवणेऽपि सम्यक् परिषह्यमाणं निश्चलचित्ततया धार्यमाणं परीषहः सम्यक्त्वपरीषहः, आवश्यके तु असम्यक्त्वपरीषह इति पठितं, तत्र चैवं व्याख्या—सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निस्सङ्गश्चाहं तथापि धर्माधर्मात्मदेवनारकादिभावान्न प्रेक्षे ततो मृषा समस्तमेवेदमिति असम्यक्त्वपरीषहः, तत्रैवमालोचयेत्—धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ ततस्तयोः कार्यदर्शनादनुमानसमधिगम्यत्वं, अथ क्षमाक्रोधादिकौ धर्माधर्मौ ततः स्वानुभवादात्मपरिणामरूपत्वात्प्रत्यक्षविरोधः, देवास्त्वत्यन्तसुखासक्तत्वान्मनुष्यलोके च कार्यस्याभावाद् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति, नारकाः पुनर्निरन्तरमेवातितीव्रवेदनार्त्ताः पूर्वकृतदुष्कर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमिह समायान्तीत्यादि परिभावयतोऽसम्यक्त्वपरीषहजयो भवतीति, इतिशब्द इयत्ताप्रदर्शनार्थः, एते क्षुदादयः सम्यक्त्वान्ता द्वाविंशतिरिति न न्यूनाधिकाः परीषहा भवन्तीति । सम्प्रत्येतेषां द्वाविंशतेरपि परीषहाणां समवतारश्चिन्त्यते—स च द्वेधा-प्रकृतिसमवतारो गुणस्थानकसमवतारश्च, तत्र प्रकृतिसमवतारे ज्ञानावरणवेदनीयमोहनीयान्तरायलक्षणासु चतसृषु प्रकृतिषु द्वाविंशतिरपि परीषहाः समवतरन्ति

'दंसणे'त्यादि गाथात्रयं, मोहनीयं द्विधा-चारित्रमोहनीयं दर्शनमोहनीयं च, तत्र
॥ ६८५ ॥ ६८६ ॥ तत्र च यस्य यत्रावतारस्तमाह— 'दंसणे'त्यादि गाथात्रयं, मोहनीयं द्विधा-चारित्रमोहनीयं दर्शनमोहनीयं च, तत्र ... तदुदये तस्य भावात्, तथा 'पन्नऽनाण'त्ति प्राकृत-
दर्शनमोहे—मिथ्यात्वादित्रयलक्षणे दर्शनपरीषहः—सम्यक्त्वपरीषह एकोऽवतरति, तदुदये तस्य भावात्, तथा 'पन्नऽनाण'त्ति प्राकृत-
त्वेन प्रथमाद्विवचनलोपात् प्रज्ञाऽज्ञाने—प्रज्ञापरीषहोऽज्ञानपरीषहश्च प्रथमे—ज्ञानावरणकर्मण्यवतरतः, तत्क्षयोपशमोदयाभ्यामनयोः सद्भा-
वात्, तथा चरमे—अन्तरायकर्मणि अलाभपरीषहोऽवतरति, लाभान्तरायोदयनिबन्धनत्वादलाभस्य, तथा चारित्रमोहे—चारित्रमोहनीयनाम्नि
मोहनीयभेदे आक्रोशारतिस्त्रीनैषेधिक्यचेलयाच्ञासत्कारपुरस्कारलक्षणाः सप्तैव परीषहा अवतरन्ति, अयमर्थः—क्रोधोदयादाक्रोशपरीषहः
अरतिमोहनीयोदयादरतिपरीषहः पुंवेदोदयात्स्त्रीपरीषहः भयकर्मोदयान्नैषेधिकीपरीषहः जुगुप्सोदयादचेलपरीषहः मानोदयाद्याच्ञापरी-
षहः लोभोदयात्सत्कारपुरस्कारपरीषह इति, अत्र च सत्कारो—वस्त्रादिभिः पूजनं पुरस्कारः—अभ्युत्थानादिप्रतिपत्तिः यद्वा सत्कारेण पुर-
स्कारः—पुरस्करणं ततस्तावेव स एव वा परीषहः सत्कारपुरस्कारपरीषह इति, तथा एकादश परीषहा वेदनीयेऽवतरन्ति तदुदयाद्भव-
न्तीत्यर्थः, ते चैते 'पञ्चेव आणुपुव्वि' पञ्चैव—पञ्चसङ्ख्या एव, ते च कचिदनानुपूर्व्या अपि व्याख्याङ्गत्वात्तयाऽपि स्युरित्याह—आनु-
पूर्व्या—परिपाट्या क्षुत्पिपासाशीतोष्णदंशमशकाख्या इतियावत् तथा चर्या शय्या 'जल्ले य'त्ति जल्लो—मलः, वधो रोगस्तृणस्पर्शश्चेत्येकादश,
शेषेषु—पूर्वोक्तकर्मचतुष्टयव्यतिरिक्तेषु दर्शनावरणायुर्नामगोत्राख्येषु कर्मसु नास्ति परीषहाणामवतारः—अन्तर्भावः, तदुदये परीषहाणामसम्भ-
वात् ॥ ६८७ ॥ ६८८ ॥ ६८९ ॥ अधुना गुणस्थानकसमवतारमाह— 'बावीसं'गाहा, द्वाविंशतिरित्यपिशब्दस्य लुप्तनिर्दिष्टत्वाद् द्वाविं-
शतिरपि परीषहा बादरसम्परायनाम्नि गुणस्थानके, कोऽर्थः ?—अनिवृत्तिबादरसंपरायं नवमगुणस्थानं यावत् सर्वेऽपि परीषहाः सम्भव-
न्तीति, तथा चतुर्दश चशब्दस्यैवकारार्थत्वाच्चतुर्दशसङ्ख्या एव—क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधालाभरोगतृणस्पर्शमलप्रज्ञाऽज्ञा-

नरूपाः परीपहाः सूक्ष्मराग–सूक्ष्मसम्परायनाम्नि दशमगुणस्थानके उदयमासादयन्ति, मोहनीयस्य क्षपितत्वेन उपशमितत्वेन वा सप्तानां चारित्रमोहनीयप्रतिवद्धानां दर्शनमोहनीयप्रतिवद्धस्य चैकस्य तत्रासम्भवादिति भावः, तथा छद्म–आवरणं तत्र स्थितश्छद्मस्थः वीतः–अपगतो रागः समस्तमोहोपशमात्सकलमोहक्षयाच्च यस्य स तथा ततः कर्मधारयः, छद्मस्थवीतरागशब्देन उपशान्तमोहक्षीणमोहलक्षणं गुणस्थानकद्वयं परिगृह्यते, तत्रापि उक्तरूपा एव चतुर्दश परीपहाः सम्भवन्तीति, तथा जिने–सयोगिकेवल्ययोगिकेवलिलक्षणे त्रयोदश-चतुर्दशगुणस्थानकद्वये परीपहकारणभूतस्य वेदनीयस्यैव सद्भावात्तत्प्रतिवद्धा एव एकादश परीपहाः सम्भवन्ति, उक्तं च—"क्षुत्पिपासा च शीतोष्णे, दंशाश्चर्या वधो मलः। शय्या रोगतृणस्पर्शौ, जिने वेद्यस्य सम्भवात् ॥ १ ॥" इति ॥ ६९० ॥ नन्वेते परीपहा एकस्मिन् काले उत्कृष्टतो जघन्यतश्च एकस्मिन् प्राणिनि कियन्तः प्राप्यन्ते?, तत्राह—'वीसं'गाहा विंशतिरुत्कृष्टपदे चिन्त्यमाने परीपहा वर्तन्ते युगपदेकत्र प्राणिनि, जघन्यतश्च–जघन्यपदमाश्रित्य एक एव परीपहः, ननूत्कृष्टपदे किं न द्वाविंशतिरपि परीपहा एकत्र वर्तन्ते? इत्याह शीतोष्णे चर्यानिपेधिक्यौ च युगपद्–एककालमेकत्र न वर्तेते–न सम्भवतः, परस्परपरिहारस्थितिलक्षणत्वादमीषां, तथाहि—न शीतमुष्णेन सह भवति नोष्णं शीतेन सह न चर्यायां नैपेधिकी न च नैपेधिक्यां सत्यां चर्येति, अतो यौगपद्येनामीपामसम्भवाद् द्वयोरभावान्नोत्कृष्टतोऽपि द्वाविंशतिरेकदा परीपहा वर्तन्त इति, ननु नैपेधिकीवत्कथं शय्यापि चर्यया सह न विरुध्यते?, अत्रोच्यते, निरोधवाधादितस्त्वङ्गनिकादेरपि तत्र सम्भवात्, नैपेधिकी तु स्वाध्यायादीनां भूमिष्वेव प्रायः स्थिरतायामेवानुज्ञाता इति तस्या एव चर्यया विरोध इति, तत्त्वार्थे तु उत्कृष्टतोऽप्येकोनविंशतिरेवोक्ताः, चर्याशय्यानिपद्यादीनामेकस्य सम्भवे द्वयोरभावात्, तथाहि—चर्यायां सत्यां

निषद्याशय्ये न स्तः निषद्यायां तु शय्याचर्ये शय्यायां पुनर्निषद्याचर्ये न भवत इति ८६ ॥ ६९१ ॥ इदानीं 'मंडलि सत्त'त्ति सप्ताशीतं द्वारमाह—

**सुत्ते १ अत्थे २ भोयण ३ काले ४ आवस्सए य ५ सज्झाए ६ । संथारे ७ चेव तहा सत्तेया मंडली जइणो ॥ ६९२ ॥**

सूत्रे—सूत्रविषयेऽर्थे—अर्थविषये भोजने काले—कालग्रहे आवश्यके—प्रतिक्रमणे स्वाध्यायप्रस्थापने संस्तारके चैव सप्तैता मण्डल्यो यतेः, एतासु चैकैकेनाचाम्लेन प्रवेष्टुं लभ्यते नान्यथेति ८७ ॥ ६९२ ॥ इदानीं 'दसठाणववच्छेओ'त्ति अष्टाशीतं द्वारमाह—

**मण १ परमोहि २ पुलाए ३ आहारग ४ खवग ५ उवसमे ६ कप्पे ७ । संयमतिय ८ केवल ९ सिज्झणा य जंबुंमि वोच्छिन्ना ॥ ६९३ ॥**

पदैकदेशेऽपि पदसमुदायदर्शनात् मनःपर्ययज्ञानं तथा परमः—प्रकृष्टस्तदुत्पत्तावश्यमेव केवलज्ञानलाभादवधिः—मूर्त्तद्रव्यपरिच्छेदी ज्ञानविशेषः परमावधिः स च क्षेत्रतोऽलोकेऽपि लोकप्रमाणासङ्ख्येयखण्डविषयः कालतस्तु असङ्ख्येयोत्सर्पिण्यवसर्पिणीविषयः तथा पुलाकलब्धिस्तथा आहारकशरीरलब्धिस्तथा क्षपकश्रेणिस्तथोपशमश्रेणिस्तथा कल्पो—जिनकल्पः तथा संयमत्रिकं परिहारविशुद्धिसूक्ष्मसम्परायथाख्यातलक्षणचारित्रत्रयं तथा केवलं—केवलज्ञानं तथा सेधना—सिद्धिगमनं इत्येते दश पदार्था जम्बूस्वामिनि व्यवच्छिन्नाः—जम्बूस्वाम्यनन्तरमेतेषामभाव इत्यर्थः, इह च केवलिग्रहणेन सिज्झणाग्रहणेन वाऽऽगते यत् उभयोरुपादानं तत् यः केवली स नियमात्सिद्ध्यति यश्च सिद्ध्यति स नियमात् केवली सन्निति ख्यापनार्थं, तथा प्रथमसंहननं—वज्रर्षभनाराचं प्रथमं संस्थानं—समचतुरस्रं, यश्चान्तर्मुहूर्तेन

चतुर्दशानामपि पूर्वाणामुपयोगोऽनुप्रेक्षणं एते त्रयोऽप्यर्था अपश्चिमे चतुर्दशपूर्वधरे स्थूलभद्रस्वामिनि व्यवच्छिन्नाः उक्तं च—"संघयणं संठाणं च पढमगं जो य पुव्वउवओगो । एए तिन्निवि अत्था वोच्छिन्ना थूलभद्दंमि ॥ १ ॥" [प्रथमकं संहननं संस्थानं यश्च पूर्वोपयोगः एते त्रयोऽप्यर्था व्यवच्छिन्नाः स्थूलभद्रे ॥ १ ॥] ॥ ८८ ॥ ६९३ इदानीं 'खवगसेढि'त्ति एकोननवतितमं द्वारमाह—

अणमिच्छमीससम्मं अट्ठ नपुंसित्थीवेयछक्कं च । पुंवेयं च खवेइ कोहाईएवि संजलणे ॥ ६९४ ॥
कोहो माणो माया लोहोऽणंताणुबंधिणो चउरो । खविऊण खवइ संढो मिच्छं मीसं च सम्मत्तं
॥ ६९५ ॥ अप्पचक्खाणे चउरो पच्चक्खाणे य सममवि खवेइ । तयणु नपुंसगइत्थीवेयदुगं खविय खवइ समं ॥ ६९६ ॥ हासरइअरइपुंवेयसोयभयजुयदुगुंछ सत्त इमा । तह संजलणं कोहं माणं मायं च लोभं च ॥ ६९७ ॥ तो किट्टीकयअस्संखलोहखंडाइं खविय मोहखया । पावइ लोयालोयप्पयासयं केवलं नाणं ॥ ६९८ ॥ नवरं इत्थी खवगा नपुंसगं खविय खवइ थीवेयं ।
हासाइछगं खविउं खवइ सवेयं नरो खवगो ॥ ६९९ ॥

इह क्षपकश्रेणिप्रतिपत्ता पुमान् वर्षाष्टकस्योपरि वर्तमानो वज्रर्षभनाराचसंहननी शुद्धध्यानार्पितमना अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः केवलं यद्यप्रमत्तसंयतः पूर्ववित्तर्हि शुक्लध्यानोपगतः शेषस्तु सर्वोऽपि धर्मध्यानोपगतः, तत्र प्रथमतोऽनन्तानुबन्धिनां विसंयोजनाऽभिधीयते—इह श्रेणिमप्रतिपद्यमाना अपि अविरताश्चतुर्गतिका अपि क्षायोपशमिकसम्यग्दृष्टयो देशविरतास्तिर्यञ्चो मनुष्या वा सर्वविरतास्तु मनुष्या एव सर्वाभिः पर्याप्तिभिः पर्याप्ता यथासम्भवं विशुद्ध्या परिणमन्तोऽनन्तानुबन्धिनां क्षपणार्थं यथाप्रवृत्तकरणापूर्व-

करणानिवृत्तिकरणाख्यानि त्रीणि करणानि कुर्वन्ति, करणवक्तव्यता च सर्वाऽपि कर्मप्रकृत्यादिभ्योऽवसेया, अनिवृत्तिकरणं च प्राप्तः सन् अनन्तानुवन्धिनां स्थितिं कर्मप्रकृत्यभिहितस्वरूपेणोद्वलनासङ्क्रमेणाधस्तादावलिकामात्रं मुक्त्वा उपरि निरवशेषाननन्तानुवन्धिनो विनाशयति, आवलिकामात्रं तु स्तिवुकसङ्क्रमेण वेद्यमानासु प्रकृतिषु सङ्क्रमयति, तदेवं क्षपितानन्तानुवन्धिचतुष्को दर्शनमोहक्षपणार्थं यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति, अनिवृत्तिकरणाद्धायां च वर्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासङ्क्रमेणोद्वलयति यावत्पल्योपमासङ्ख्येयभागमात्रमवतिष्ठते, ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तथैवं—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसङ्ख्येयगुणं एवं यावदन्तर्मुहूर्तचरमसमये आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसङ्क्रमितदलिकादसङ्ख्येयगुणं सङ्क्रमयति, आवलिकागतं तु स्तिवुकसङ्क्रमेण सम्यक्त्वे प्रक्षिपति, एवं मिथ्यात्वं क्षपितं, ततोऽन्तर्मुहूर्तेन सम्यग्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति, ततः सम्यग्मिथ्यात्वमपि क्षपितं, ततः सम्यक्त्वमपवर्तयितुं तथा लग्नो यथाऽन्तर्मुहूर्तेन तदप्यन्तर्मुहूर्तमात्रस्थितिकं जातं, तच्च क्रमेणानुभूयमानमनुभूयमानं सत् समयाधिकावलिकाशेषं जातं, ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदः, ततो विपाकानुभवेनैव केवलेन वेदयति यावच्चरमसमयः, ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते, इह यदि वद्धायुः क्षपकश्रेणिमारभते अनन्तानुवन्धिक्षयानन्तरं च मरणसम्भवतो व्युपरमते ततः कदाचिन्मिथ्यात्वोदयाद्भूयोऽप्यनन्तानुवन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्, क्षीणमिथ्यादर्शनस्तु नोपचिनोति वीजाभावात्, क्षीणसप्तकस्त्वप्रतिपतितपरिणामोऽवश्यं त्रिदशेपूत्पद्यते, प्रतिपतितपरिणामस्तु नानामतिसम्भवाद्यथापरिणामं सर्वगतिभाग्भवति, वद्धायुष्कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे नियमादवतिष्ठते, न तु चारित्रमोहक्षपणाय यत्नमादधाति, अथ क्षीणसप्तको गत्यन्तरं सङ्क्रामन् कतितमे भवे मोक्षमुपयाति ?, उच्यते, तृतीये चतुर्थे वा भवे,

तथाहि—यदि देवगतिं नरकगतिं वा सङ्क्रामति तदा देवभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षं याति, अथ तिर्यक्षु मनुष्येषु वा समुत्पद्यते तर्हि सोऽवश्यमसङ्ख्येयवर्षायुष्केषु मध्ये गच्छति न सङ्ख्येयवर्षायुष्केषु, ततस्तद्भवानन्तरं देवभवे देवभवाच्च च्युत्वा मनुष्यभवे ततो मोक्षं यातीति चतुर्थे भवे मोक्षगमनं, तथा क्षीणसप्तकः पूर्वबद्धायुष्कोऽपि यदि तदानीं कालं न करोति तर्हि कश्चिद्वैमानिकेष्वेव बद्धायुष्कश्चारित्रमोहनीयोपशमार्थमपि यतते, न शेषभवेषु बद्धायुष्कः ॥ ननु यदि दर्शनत्रिकमपि क्षयमुपगतं तर्हि किमसौ सम्यग्दृष्टिरुतासम्यग्दृष्टिः ?, उच्यते, सम्यग्दृष्टिः, सम्यग्दर्शनाभावे सम्यग्दृष्टित्वमनुपपन्नमिति चेत्, तदसत्, इह निर्मदनीकृतकोद्रवकल्पा अपगतमिथ्यात्वभावा मिथ्यात्वपुद्गला एव यत्सम्यग्दर्शनं तदेव क्षीणं यत्पुनरात्मपरिणतिस्वभावं तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तन्न क्षीणं, अपि च—तदतीव श्लक्ष्णशुभ्राभ्रपटलविगमे मनुष्यदृष्टिरिव विशुद्धतरस्वरूपं भवति, यदि पुनरबद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहनीयक्षपणाय यत्नमारभते, चारित्रमोहनीयं च क्षपयितुं यतमानो यथाप्रवृत्तादीनि त्रीणि करणानि करोति, तद्यथा—यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके अपूर्वकरणमपूर्वकरणगुणस्थानके अनिवृत्तिकरणमनिवृत्तिबादरसम्परायगुणस्थानके, तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं तथा क्षपयति स्म यथाऽनिवृत्तिकरणाद्धाप्रथमसमये तत्पल्योपमासङ्ख्येयभागमात्रस्थितिकं जातं, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु सत्सु स्त्यानर्द्धित्रिकनरकतिर्यग्गतिनरकतिर्यगानुपूर्व्येकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणानां षोडशप्रकृतीनामुद्वलनासङ्क्रमेणोद्वल्यमानानां पल्योपमासङ्ख्येयभागमात्रा स्थितिर्जाता, ततो बध्यमानासु प्रकृतिषु तानि षोडशापि कर्माणि गुणसङ्क्रमेण प्रतिसमयं प्रक्षिप्यमाणानि निःशेषतोऽपि क्षीणानि भवन्ति, इहाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं तन्नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषो-

डशकं क्षपितं पश्चात्तदपि कषायाष्टकमन्तर्मुहूर्तेन क्षपयतीत्येष सूत्रादेशः, अन्ये त्वाहुः—षोडश कर्माण्येव पूर्वं क्षपयितुमारभते केवलम-
पान्तरालेऽष्टौ कषायान् क्षपयति पश्चात् षोडश कर्माणीति, ततोऽन्तर्मुहूर्तेन नवानां नोकषायाणां चतुर्णां च सञ्ज्वलनानामन्तरकरणं
करोति, स्थापना, तच्च कृत्वा नपुंसकवेददलिकमुपरितनस्थितिगतमुद्वलनविधिना क्षपयितुमारभते, तच्चान्तर्मुहूर्तेन पल्योपमासङ्ख्येयभाग-
मात्रं जातं, ततः प्रभृति वक्ष्यमानासु प्रकृतिषु गुणसङ्क्रमेण तद्दलिकं प्रक्षिपति, तच्चैवं प्रक्षिप्यमाणं अन्तर्मुहूर्तेन निःशेषं क्षीणं, अध-
स्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति अन्यथा त्वावलिकामात्रं तद्भवति तच्च वेद्यमानासु प्रकृ-
तिषु स्तिबुकसङ्क्रमेण सङ्क्रमयति तदेवं क्षपितो नपुंसकवेदः, ततोऽन्तर्मुहूर्तेन स्त्रीवेदोऽप्यनेनैव क्रमेण क्षिप्यते, ततः षट् नोकषायान्
युगपत्क्षपयितुमारभते, ततः प्रभृति च तेषामुपरितनस्थितिगतं दलिकं न पुरुषवेदे सङ्क्रमयति किन्तु सञ्ज्वलनक्रोध एव, एतेऽपि च
पूर्वोक्तविधिना क्षिप्यमाणा अन्तर्मुहूर्तेन निःशेषाः क्षीणाः, तत्समयमेव च पुंवेदस्य बन्धोदयोदीरणाव्यवच्छेदः समयोनावलिकाद्विकबद्धं
मुक्त्वा शेषदलिकक्षयश्च, ततोऽसाविदानीमवेदको जातः, क्रोधं च वेदयतः सतस्तस्य क्रोधाद्धायास्त्रयो विभागा भवन्ति, तद्यथा—अश्व-
कर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च, तत्राश्वकर्णकरणाद्धायां वर्तमानः प्रतिसमयमनन्तान्यपूर्वस्पर्धकानि चतुर्णामपि सञ्ज्वल-
नानामन्तरकरणादुपरितनस्थितौ करोति, अथ किमिदं स्पर्धकमिति ?, उच्यते, इह तावदनन्तानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः
कर्मतया गृह्णाति, तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यरसः परमाणुस्तस्यापि रसः केवलिप्रज्ञया छिद्यमानः सर्वजीवेभ्योऽनन्तगुणान्
रसभागान् प्रयच्छति अपरस्तानप्येकाधिकान् अन्यस्तु द्व्यधिकान् एवमेकोत्तरया वृद्ध्या तावन्नेयं यावदन्यपरमाणुरभव्यानन्तगुणान्
सिद्धानन्तभागेनाधिकान् रसभागान् प्रयच्छति, तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणेत्युच्यते

अन्येषां त्वेकाधिकरसभागयुक्तानां समुदायो द्वितीया वर्गणा अपरेषां तु द्व्यधिकरसभागयुक्तानां समुदायस्तृतीया वर्गणा एवमनया दिशा एकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणाः सिद्धानन्तभागकल्पा अभव्यानन्तगुणा वाच्याः, एतासां च समुदायः स्पर्धकमित्युच्यते, स्पर्धन्त इवोत्तरोत्तरवृद्ध्या परमाणुवर्गणा अत्रेतिकृत्वा, इत ऊर्द्धमेकोत्तरया निरन्तरया वृद्ध्या प्रवर्धमानो रसो न लभ्यते किन्तु सर्वजीवानन्तगुणैरेव रसभागैः, ततस्तेनैव क्रमेण ततः प्रभृति द्वितीयं स्पर्धकमारभ्यते, एवमेव च तृतीयं, एवं तावद्वाच्यं यावदनन्तानि स्पर्धकानि, एतेभ्य एव चेदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत्स्पर्धकानि करोति, न चैवंभूतानि पूर्वं कदाचनापि कृतानि ततोऽपूर्वाणीत्युच्यन्ते, अस्यां चाश्वकर्णकरणाद्धायां वर्तमानः पुंवेदं समयोनावलिकाद्विकेन क्रोधे गुणसङ्क्रमेण सङ्क्रमयन् चरमसमये सर्वसङ्क्रमेण सङ्क्रमयति, तदेवं क्षीणः पुंवेदः, अश्वकर्णकरणाद्धायां च समाप्तायां किट्टिकरणाद्धायां च वर्तमानश्चतुर्णामपि सञ्ज्वलनानां उपरितनस्थितिदलिकस्य किट्टीः करोति, किट्टयो नाम पूर्वस्पर्धकेभ्यः प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादत्यन्तहीनरसाः कृत्वा तासामेकोत्तरवृद्धित्यागेन वृहदन्तरालतया व्यवस्थापनं, यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरादि वाऽऽसीत् तासामेव विशुद्धिप्रकर्षवशादनुभागभागानां दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति, एताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूलजातिभेदापेक्षया द्वादश कल्प्यन्ते, एकै–( ग्रन्थाग्रं ७००० ) कस्य कषायस्य तिस्रस्तिस्रः, तद्यथा–प्रथमा द्वितीया तृतीया च, एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यं, यदा तु मानेन प्रतिपद्यते तदा उद्वलनविधिना क्रोधे क्षपिते सति शेषाणां त्रयाणां पूर्वक्रमेण नव किट्टीः करोति, मायया चेत्प्रतिपन्नस्तर्हि क्रोधमानयोरुद्वलनविधिना क्षपितयोः सतोः शेषद्विकस्य पूर्वक्रमेण षट् किट्टीः करोति, यदि पुनर्लोभेन प्रतिपद्यते तत उद्वलनविधिना क्रोधादित्रिके क्षपिते सति लोभस्य किट्टित्रिकं करोति, एष किट्टीकरण-

विधिः, किट्टीकरणाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः सन् क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततोऽनन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तिसृष्वपि चामूषु किट्टिवेदनाद्धासुपरितनस्थितिगतं दलिकं गुणसङ्क्रमेणापि प्रतिसमयमसङ्ख्येयगुणवृद्धिलक्षणेन सञ्ज्वलने माने प्रक्षिपति, तृतीयकिट्टिवेदनाद्धायाश्चरमसमये सञ्ज्वलनक्रोधस्य बन्धोदयोदीरणानां युगपद् व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यन्नास्ति, सर्वस्य माने प्रक्षिप्तत्वात्, ततो मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, क्रोधस्यापि च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन मानगुणसङ्क्रमेण सङ्क्रमयन् चरमसमये सर्वं सङ्क्रमयति, मानस्यापि च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत् समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धमेव, शेषस्य क्रोधशेषस्येव माने मायायां प्रक्षिप्तत्वात्, ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तमात्रं, सञ्ज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन गुणसङ्क्रमेण मायायां सर्वं प्रक्षिपति, मायाया अपि च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थिति-

गतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत् समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मायाया वन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्याः समयोनावलिकाद्विकवद्धमात्रमेव, शेपस्य गुणसङ्क्रमेण लोभे प्रक्षिप्तत्वात्, ततो लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, सञ्ज्वलनमायायाश्च वन्धादौ व्यवच्छिन्ने सति तस्या दलिकं समयोनावलिकाद्विकेन गुणसङ्क्रमेण लोभे सर्वं सङ्क्रमयति, सञ्ज्वलनलोभस्य च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकामात्रं शेषं जातं, ततो लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद्यावद् द्वितीयकिट्टिदलिकस्य प्रथमस्थितिकृतस्य समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये सञ्ज्वलनलोभस्य वन्धव्यवच्छेदो वादरकपायोदयोदीरणाव्यवच्छेदोऽनिवृत्तिवादरसम्परायगुणस्थानककालव्यवच्छेदश्च युगपज्जायते, ततः सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तदानीमसौ सूक्ष्मसम्पराय उच्यते, पूर्वोक्ताश्चावलिकास्तृतीयकिट्टिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिवुकसङ्क्रमेण सङ्क्रमयति, प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्ट्यन्तर्गता वेद्यन्ते, सूक्ष्मसम्परायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकवद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत्क्षपयति यावत्सूक्ष्मसम्परायाद्धायाः सङ्ख्येया भागा गता भवन्ति एकोऽवशिष्यते, ततस्तस्मिन् सङ्ख्येये भागे सञ्ज्वलनलोभं सर्वापवर्तनयाऽपवर्त्य सूक्ष्मसम्परायाद्धासमं करोति, सा च सूक्ष्मसम्परायाद्धा अद्याप्यन्तर्मुहूर्तमाना, ततः प्रभृति च मोहस्य स्थितिघातादयो निवृत्ताः शेषकर्मणां तु प्रवर्तन्त एव, तां च लोभस्यापवर्तितां स्थितिमुदयो-

दीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा स्थिता, तत उदयेनैव केवलेन तां वेदयते यावच्चरमसमयः, तस्मिंश्च चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणां षोडशकर्मणां बन्धव्यवच्छेदः मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति, ततोऽसौ क्षीणकषायो जायते, तस्य च शेषकर्मणां स्थितिघातादयः पूर्ववत्प्रवर्तन्ते यावत्क्षीणकषायाद्धायाः सङ्ख्येया भागा गता भवन्ति, एकः सङ्ख्येयो भागोऽवतिष्ठते, तस्मिंश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयनिद्राद्विकरूपाणां षोडशकर्मणां स्थितिसत्कर्म सर्वापवर्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति, केवलं निद्राद्विकस्य स्वस्वरूपापेक्षया समयन्यूनं सामान्यतः कर्मरूपतया तु तुल्यं, सा च क्षीणकषायाद्धा अद्याप्यन्तर्मुहूर्त्तमाना, ततः प्रभृति च तेषां स्थितिघातादयः स्थिताः, शेषाणां तु भवन्त्येव, तानि च षोडश कर्माणि निद्राद्विकहीनानि उदयोदीरणाभ्यां वेदयमानस्ताव द्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा निवृत्ता, तत आवलिकामात्रं यावदुदयेनैव केवलेन तानि वेदयते यावत्क्षीणकषायाद्धाया द्विचरमसमयः, तस्मिंश्च द्विचरमसमये निद्राद्विकं स्वरूपसत्तापेक्षया क्षीणं, चतुर्दशानां च प्रकृतीनां चरमसमये क्षयः, ततोऽनन्तरसमये केवली जायत इति ॥६९४॥ अथैनां गाथां प्रतिपदं स्वयमेव सूत्रकृद्व्याख्याति—'कोहो' इत्यादि गाथाद्वयं, क्रोधो मानो माया लोभ इत्येताननन्तानुबन्धिनश्चतुरः कषायान् युगपत्क्षपयित्वा 'संढो'त्ति नपुंसकः श्रेणिप्रतिपत्ता मिथ्यात्वं मिश्रं सम्यक्त्वं च क्रमेणान्तर्मुहूर्तेन क्षपयति, सर्वत्रापि च क्षपणाकालोऽन्तर्मुहूर्तमानः, श्रेणिपरिसमाप्तिकालोऽप्यन्तर्मुहूर्तमात्र एव, अन्तर्मुहूर्तानामसङ्ख्येयभेदत्वात् ॥ ६९५ ॥ ततोऽप्रत्याख्यानप्रत्याख्यानावरणान् अष्टौ कषायान् 'सममपि' युगपदेव क्षपयति, तदनु नपुंसकस्त्रीवेदद्विकं युगपत्क्षपयति, स्त्रीवेदनपुंसकवेदक्षयसमकालमेव च पुंवेदस्य बन्धो व्यवच्छिद्यते, तच्च क्षपयित्वाऽनन्तरं क्षपयति समं—युगपदेव इमा वक्ष्यमाणाः सप्त प्रकृतीः ॥ ६९६ ॥ ता एवाह—'हासे'त्यादि, हास्यरत्यरतिपुंवेदशोक-

भयजुगुप्साख्या इमाः सप्त, तदनन्तरं सञ्ज्वलनक्रोधं ततः सञ्ज्वलनं मानं ततः सञ्ज्वलनां मायां ततः सञ्ज्वलनं लोभं च क्षपयतीति योगः, लोभस्य त्वयं विशेषः ॥ ६९७ ॥ 'तो किट्टी' गाहा, श्लक्ष्णीकृतानि ततो—मायाक्षपणानन्तरं लोभस्य खण्डान्यसङ्ख्येयानि किट्टीकृतानि क्षपयित्वा सकलमोहक्षयात्प्राप्नोति लोकालोकप्रकाशकं केवलज्ञानमिति, इदं च लोभकिट्टिकरणं लोभेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यं, यदा तु क्रोधेन श्रेणिं प्रतिपद्यते तदा क्रोधादीनां चतुर्णामपि किट्टीः करोति, मानेन तु मानादीनां त्रयाणां, मायया च मायालोभयोः किट्टीकरणं ज्ञेयमिति ॥६९८॥ अयं च क्षपणाक्रमः सूत्रे नपुंसकं क्षपकमाश्रित्योक्तः, यदा तु स्त्री प्रारम्भिका तदाऽयं विशेषः—'नवर'मित्यादि, नवरं—केवलं स्त्री क्षपिका पूर्वं नपुंसकवेदं क्षपयति, ततः स्त्रीवेदं, स्त्रीवेदक्षयसमकालमेव च पुंवेदस्य बन्धव्यवच्छेदः, ततोऽवेदकः पूर्वोक्ताः पुंवेदहास्यादिषट्करूपाः सप्त प्रकृतीर्युगपत्क्षपयति, शेषं तथैव, यदा तु पुरुषः प्रतिपत्ता भवति तदा पूर्वं नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं क्षपयित्वा पश्चात्स्ववेदं-पुंवेदं क्षपयति, शेषं तथैवेति ८९ ॥ ६९९ ॥ सम्प्रति 'उवसमसेढि'त्ति नवतितमं द्वारमाह—

**अणदंसनपुंसित्थीवेयछक्कं च पुरिसवेयं च । दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥ ७०० ॥ कोहं माणं मायं लोभमणंताणुबंधमुवसमइ । मिच्छत्तमिस्ससम्मत्तरूवपुंजत्तयं तयणु ॥ ७०१ ॥ इत्थिनपुंसगवेए तत्तो हासाइछक्कमेयं तु । हासो रई य अरई य सोगो य भयं दुगुंछा य ॥ ७०२ ॥ तो पुंवेयं तत्तो अपच्चक्खाणपच्चखाणा य । आवरणकोहजुयलं पसमइ संजलणकोहंपि ॥७०३॥ एयक्कमेण तिन्निवि माणे माया उ लोह तियगंपि। नवरं संजलणाभिह- [illegible] किट्टीकयाइं खंडाइं पसमइ कमेणं। पुणरवि चरिमं लोहतिभागे इय विसेसो ॥ ७०४ ॥**

खंडं असंखखंडाइं काऊण ॥ ७०५ ॥ अणुसमयं एक्केक्कं उवसामइ इह हि सत्तगोवसमे । होइ अपुव्वो तत्तो अनियट्टी होइ नपुमाइ ॥ ७०६ ॥ पसमंतो जा संखेयलोहखंडाओ चरिमखंडस्स । संखाईए खंडे पसमंतो सुहुमराओ सो ॥ ७०७ ॥ इय मोहोवसमम्मि कयम्मि उवसंतमोहगुणठाणं । सव्वट्ठसिद्धिहेऊं संजायइ वीयरायाणं ॥ ७०८ ॥

इहोपशमश्रेणिप्रारम्भकोऽप्रमत्तसंयत एव, उपशमश्रेणिपर्यवसाने त्वप्रमत्तसंयतप्रमत्तसंयतदेशविरताविरतानामन्यतमो भवति, अन्ये त्वाहुः—अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमोऽनन्तानुबन्धिनः कषायानुपशमयति, दर्शनत्रिकादिकं तु संयमे एव वर्तमानः, तत्र प्रथममनन्तानुबन्धिनामुपशमनाऽभिधीयते, अविरतादीनामन्यतमोऽन्यतमस्मिन् योगे वर्तमानस्तेजःपद्मशुक्ललेश्यान्यतमलेश्यायुक्तः साकारोपयोगयुक्तोऽन्तःसागरोपमकोटीकोटीस्थितिसत्कर्मा करणकालात् पूर्वमप्यन्तर्मुहूर्तं यावद्विशुद्ध्यमानचित्तसन्ततिरवतिष्ठते, तथाऽवतिष्ठमानश्च परावर्तमानाः प्रकृतीः शुभा एव बध्नाति नाशुभाः, प्रतिसमयं चाशुभानां कर्मणामनुभागमनन्तगुणहान्या करोति शुभानां चानन्तगुणवृद्ध्या, स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासङ्ख्येयभागहीनं करोति, पूर्णे चान्तर्मुहूर्ते क्रमेण यथाप्रवृत्तकरणापूर्वकरणानिवृत्तिकरणाख्यानि प्रत्येकमान्तर्मुहूर्तिकानि त्रीणि करणानि करोति, चतुर्थीं तूपशान्ताद्धां, करणवक्तव्यता च सर्वाऽपि कर्मप्रकृतेरवसेया, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्तमानमन्तरकरणमन्तर्मुहूर्तेन करोति, अन्तरकरणदलिकं चोत्कीर्यमाणं बध्यमानासु परप्रकृतिषु प्रक्षिपति, प्रथमस्थित्यावलिकागतं च दलिकं स्तिबुकसङ्क्रमेण वेद्यमानासु परप्रकृतिषु प्रक्षिपति, अन्तरकरणे च कृते द्वितीयसमयेऽनन्ता-

नुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते, तद्यथा—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसंख्यातगुणं तृतीयसमयेऽपि ततोऽसङ्ख्ये-
यगुणं यावदन्तर्मुहूर्तेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति, उपशमिता नाम यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिपिच्याभि-
पिच्य द्रुघणादिभिर्निकुट्टितो निस्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशुद्धिवारिपूरेण परिपिच्य परिपिच्यानिर्वृत्तिकरणरूपद्रुघणनिकु-
ट्टितः सङ्क्रमणोदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यो भवति, अन्ये तु अनन्तानुबन्धिनामुपशमनां न मन्यन्ते, किन्तु विसंयो-
जनां क्षपणां, सा च प्रागेवोक्ता, सम्प्रति दर्शनत्रिकस्योपशमना भण्यते, इह क्षायोपशमिकसम्यग्दृष्टिः संयमे वर्तमानोऽन्तर्मुहूर्तेन दर्श-
नत्रिकमुपशमयति, उपशमयंश्च पूर्वोक्तकरणत्रयनिर्वर्तनेन विशुद्ध्या वर्धमानोऽनिर्वृत्तिकरणाद्धाया असङ्ख्येयेषु भागेषु गतेषु अन्तरकरणं
करोति, तच्च कुर्वन् सम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्तमानां स्थापयति मिथ्यात्वमिश्रयोश्चावलिकामात्रं, उत्कीर्यमाणं च दलिकं त्रयाणा-
मपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति, मिथ्यात्वमिश्रयोः प्रथमस्थितिदलिकं सम्यक्त्वस्य प्रथमस्थितिदलिकमध्ये स्तिबुकसङ्क्रमेण सङ्क्र-
मयति, सम्यक्त्वस्य पुनः प्रथमस्थितौ विपाकानुभवतः क्रमेण क्षीणायामुपशमसम्यग्दृष्टिर्भवति, उपरितनदलिकस्य चोपशमना त्रया-
णामपि मिथ्यात्वादीनामनन्तानुबन्धिनामुपरितनस्थितिदलिकस्येवावसेया, एवमुपशान्तदर्शनत्रिकः प्रमत्ताप्रमत्तपरिवृत्तिशतानि कृत्वा
चारित्रमोहमुपशमयितुकामः पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति, केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थाने अपूर्वकरणं
चापूर्वकरणगुणस्थाने, अपूर्वकरणे च स्थितिघातादिभिर्विशुद्ध्य ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रविशति, अनिवृत्तिकरणाद्धायाश्च सङ्ख्ये-
येषु भागेषु गतेषु दर्शनसप्तकवर्जितानामेकविंशतेर्मोहनीयप्रकृतीनामन्तरकरणं करोति, तत्र यस्य वेदस्य सञ्ज्वलनस्य च उदयोऽस्ति
तयोः स्वोदयकालमानां प्रथमस्थितिं करोति, शेषाणां त्वेकादशकषायाणामष्टानां च नोकषायाणामावलिकामात्रं, वेदत्रिकसञ्ज्वलनचतु-

ष्कोदयकालमानं अन्तरकरणगतदलिकप्रक्षेपस्वरूपं च ग्रन्थविस्तरभयान्न लिख्यते, अन्तरकरणं च कृत्वा ततो नपुंसकवेदमन्तर्मुहूर्तेनोपशमयति, तथाहि—प्रथमसमये स्तोकं द्वितीयसमये ततोऽसङ्ख्येयगुणं एवं च प्रतिसमयमसङ्ख्येयगुणं तावदुपशमयति यावच्चरमसमयः, परप्रकृतिषु प्रतिसमयमुपशमितदलिकापेक्षया तावदसङ्ख्येयगुणं प्रक्षिपति यावद् द्विचरमसमयः, चरमसमये तूपशम्यमानं दलिकं परप्रकृतिषु सङ्क्रम्यमाणदलिकापेक्षयाऽसङ्ख्येयगुणं द्रष्टव्यं, उपशान्ते च नपुंसकवेदे स्त्रीवेदं प्रागुक्तविधिनाऽन्तर्मुहूर्तेनोपशमयति, ततोऽन्तर्मुहूर्तेन हास्यादिषट्कं तस्मिंश्चोपशान्ते तत्समयमेव पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सकलमपि पुंवेदमुपशमयति, ततो युगपदन्तर्मुहूर्तमात्रेणाप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सञ्ज्वलनक्रोधमुपशमयति, ततोऽन्तर्मुहूर्तेनाप्रत्याख्यानप्रत्याख्यानावरणौ मानौ युगपदुपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन सञ्ज्वलनमानमुपशमयति, ततो युगपदन्तर्मुहूर्तेनाप्रत्याख्यानप्रत्याख्यानावरणमाये उपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः, ततोऽसौ लोभवेदको जातः, लोभवेदनाद्धायाश्च त्रयो विभागास्तद्यथा—अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च, तत्राद्ययोर्द्वयोस्त्रिभागयोर्वर्तमानः सञ्ज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च, अश्वकर्णकरणाद्धायां च वर्तमानः प्रथमसमय एव त्रीनपि लोभानप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपान् युगपदुपशमयितुमारभते, विशुद्ध्या वर्धमानश्चापूर्वाणि स्पर्धकानि करोति, अपूर्वस्पर्धकशब्दार्थश्च प्रागेवोक्तः, सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति ततः समयोनावलिकाद्विकेन सञ्ज्वलनमायामुपशमयति, एवमश्वकर्णकरणाद्धायां गतायां किट्टिकरणाद्धायां प्रविशति, तत्र च पूर्वस्पर्धकेभ्यो-

ऽपूर्वस्पर्धकेभ्यश्च द्वितीयस्थितिगतं दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति, किट्टिकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानप्रत्याख्यानावरणलोभावुपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनलोभबन्धव्यवच्छेदो बादरसञ्ज्वलनलोभोदयोदीरणाव्यवच्छेदश्च, ततोऽसौ सूक्ष्मसम्परायो भवति, तदा चोपरितनस्थितेः सकाशात्कतिपयाः किट्टीः समाकृष्य प्रथमस्थितिं सूक्ष्मसम्परायाद्धातुल्यां करोति वेदयते च, सूक्ष्मसम्परायाद्धा चान्तर्मुहूर्तमाना, शेषं च सूक्ष्मं किट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति, सूक्ष्मसम्परायाद्धायाश्च चरमसमये सञ्ज्वलनलोभ उपशान्तो भवति, ततोऽनन्तरसमयेऽसावुपशान्तमोहो भवति, स च जघन्येनैकसमयमुत्कर्षतोऽन्तर्मुहूर्तं यावल्लभ्यते, तत ऊर्ध्वं नियमादसौ प्रतिपतति, प्रतिपातश्च द्विधा-भवक्षयेण अद्धाक्षयेण च, तत्र भवक्षयो म्रियमाणस्य अद्धाक्षय उपशान्ताद्धायां समाप्तायां, अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति, यत्र यत्र बन्धोदयो व्यवच्छिन्नस्तत्र तत्र प्रतिपतता सता तेन ते अद्धाक्षयेण आरभ्यन्ते इतियावत्, प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकं, कश्चित्पुनस्ततोऽप्यधस्तनं गुणस्थानकद्विकं याति, कोऽपि सासादनभावमपि, यः पुनर्भवक्षयेण प्रतिपतति स नियमादनुत्तरविमानवासिषूत्पद्यते, उत्पन्नश्च प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीत्येष विशेषः, उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते, यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः, यः पुनरेकवारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपीत्येष कार्मग्रन्थिकाभिप्रायः, आगमाभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते, तदुक्तम्—'मोहोपशम एकस्मिन्, भवे द्विः स्यादसन्ततः । यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न ॥ १ ॥" इति, ननूपशमश्रेणिमविरतादय एवारभन्ते ते च यथासम्भवं सम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानामुपशमाद्भवन्ति अन्यथा तेषामुदये सम्यक्त्वादिलाभायोगात् ततः कथमिदानीं

तेपामुपशमो भण्यते ?, तदसत्, पूर्वं हि तेषां क्षयोपशम एवासीत् नोपशमस्तत इदानीमुपशमः क्रियते, ननु क्षयोपशमोऽप्युदिते क-
र्मांशे क्षीणेऽनुदिते चोपशान्ते भवति उपशमोऽपि चेत्थंभूत एव ततः कोऽनयोर्विशेषः ? येनैवमुच्यते पूर्वं क्षयोपशम आसीन्नोपशम
इति, सत्यं, इह क्षयोपशमे तदावारकस्य कर्मणः प्रदेशतोऽनुभवोऽस्ति उपशमे तु नेति विशेषः, ननु यदि सत्यपि क्षयोपशमे मिथ्यात्वा-
नन्तानुवन्ध्यादिकषायाणां प्रदेशानुभवोऽस्ति तर्हि कथं न सम्यक्त्वादिगुणविघातो भवति ?, तदुदये ह्यवश्यं सम्यक्त्वादिलाभः सन्नप्यप-
गच्छति यथा सासादनसम्यग्दृष्टेरिति, नैप दोपः, प्रदेशानुभवस्य मन्दानुभावत्वात्, मन्दानुभावो ह्युदयो न स्वावार्यगुणविघातमाधातुमलं,
यथा चतुर्ज्ञानिनो मतिज्ञानावरणादीनां विपाकतोऽप्युदयः, तथाहि—मतिज्ञानावरणादिकं कर्म ध्रुवोदयं ध्रुवोदयत्वाच्चावश्यं विपाकतो-
ऽनुभवनीयं, विपाकानुभवापेक्षयैव ध्रुवोदयत्वाभिधानात्, अथ च तत्सकलचतुर्ज्ञानिनो न मत्यादिज्ञानविघातकृद्भवति, तदुदयस्य मन्दा-
नुभावत्वात्, तद्यदि विपाकतोऽप्यनुभूयमानं मन्दानुभावोदयत्वान्न स्वावार्यगुणविघाताय प्रभवति ततः प्रदेशतोऽनुभूयमानमनन्तानुब-
न्ध्यादि सुतरां न भविष्यति, तदुदयस्यातीव मन्दानुभावत्वादिति । अथ गाथाक्षरार्थः कथ्यते-एकदेशेन समुदायोपचारात् 'अण'त्ति अन-
न्तानुवन्धिनः क्रोधमानमायालोभान् उपशमयति, इयं च क्रिया सर्वत्र योज्या, ततो दर्शनं दर्शस्तत् त्रिविधं मिथ्यात्वमिश्रसम्यक्त्व-
स्वरूपं पुञ्जत्रयं ततो नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिपट्कं—हास्यरत्यरतिशोकभयजुगुप्सालक्षणं ततः पुरुषवेदं ततो द्वौ द्वौ क्रो-
धाद्यौ एकान्तरितौ—सञ्ज्वलनक्रोधाद्यन्तरितौ सदृशौ—क्रोधादित्वेन तुल्यौ सदृशं—तुल्यं युगपदिति भावः; अयमर्थः—अप्रत्याख्यानप्र-
त्याख्यानावरणक्रोधयुगलं युगपत् प्रशमयति, ततः सञ्ज्वलनक्रोधमित्यादि ॥ ७०० ॥ अथैनां गाथां स्वयमेव सूत्रकृद्व्याख्याति——
'कोहं' गाहा, गतार्था, 'इत्थी' गाहा सुगमा, नवरं दर्शनत्रयोपशमानन्तरं नपुंसकवेदस्त्रीवेदौ युगपदुपशमयति, अयं च नपुंसकवेदेन

श्रेणिं प्रतिपन्नस्य क्रम उक्तः, इहायं सम्प्रदायः—स्त्रीवेदेन पुरुषवेदेन वा उपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तद्दूरं यावन्नपुंसकवेदेनापि श्रेणिं प्रतिपन्नः सन् नपुंसकवेदमेव केवलमुपशमयति, तत ऊर्ध्वं पुनर्नपुंसकवेदं स्त्रीवेदं च युगपदुपशमयितुं लग्नः, स च तावद्गतो यावन्नपुंसकवेदोदयाद्धाया द्विचरमसमयः, तस्मिंश्च समये स्त्रीवेद उपशान्तः, नपुंसकवेदस्य च एका समयमात्रा उदयस्थितिर्वर्तते, शेषं सर्वमुपशान्तं, तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भवति, ततः पुरुषवेदादिकाः सप्त प्रकृतीर्युगपदुपशमयितुं यतते, शेषं तथैव, यदा तु स्त्रीवेदेन श्रेणिं प्रतिपद्यते तदा प्रथमतो नपुंसकवेदमुपशमयति, पश्चात् स्त्रीवेदं, तं च तावदुपशमयति यावत्स्वोदयस्य द्विचरमसमयः, तस्मिंश्च समये एकां चरमसमयमात्रामुदयस्थितिं वर्जयित्वा शेषं सकलमपि स्त्रीवेदस्य सत्कं दलिकमुपशमितं, ततश्चरमसमये गतेऽवेदका सती पुरुषवेदहास्यादिषट्करूपाः सप्त प्रकृतीर्युगपदुपशमयति, शेषं तथैव, पुरुषवेदेन पुनः श्रेणिं प्रतिपद्यमानस्य स्वरूपं प्रथमगाथायामेवोक्तं ॥ ७०१ ॥ ७०२ ॥ 'तो पुंवेयं' गाहा, उत्तानार्था, 'एवे'त्यादि अनेनैव क्रोधोपशमक्रमेण त्रीनप्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनाख्यान्मानान् तिस्रश्च माया लोभत्रिकं च प्रशमयतीति योगः, नवरं—केवलं सञ्ज्वलनाभिधलोभस्य त्रिभागे किट्टिवेदनाद्धालक्षणे लोभे इति—वक्ष्यमाणो विशेषः, तमेवाह ॥ ७०३ ॥ ७०४ ॥ 'संखेयाइं' इत्यादि, गाथाचतुष्टयं, किट्टीकृतानि—श्लक्ष्णीकृतानि सञ्ज्वलनलोभखण्डानि सङ्ख्यातानि क्रमेणानुसमयं प्रशमयति, चरमं च खण्डं पुनरप्यसङ्ख्येयानि खण्डानि कृत्वाऽनुसमयमेकैकमुपशमयति ॥७०५॥७०६॥७०७॥ इदानीं याः प्रकृतीरुपशमयन् येषु गुणस्थानकेषु वर्तते तदाह—'इह ही'त्यादि, इह हि श्रेणिप्रतिपत्ताऽनन्तानुबन्धिचतुष्कदर्शनत्रिकरूपसप्तकोपशमे कृते सति भवत्यपूर्वः-अपूर्वकरणगुणस्थानके वर्तत इत्यर्थः, ततः परं 'नपुमाइ'त्ति नपुंसकवेदादिप्रकृतीः प्रशमयन् यावत्सङ्ख्येयानि बादरलोभखण्डानि प्रशमयति तावदनिवृत्तिबादरो भवति, अनिवृत्तियाद-

रगुणस्थाने वर्तते इत्यर्थः, तदनु चरमस्य सूक्ष्मकिट्टीकृतखण्डस्य सङ्ख्यातीतानि—असङ्ख्येयानि खण्डानि प्रशमयन् सूक्ष्मसम्परायगुणस्थानके भवति, इत्येवं मोहनीयोपशमे कृते सति उपशान्तमोहगुणस्थानं भवति, तच्च सर्वार्थसिद्धिहेतुः सञ्जायते वीतरागाणामप्रतिपतितभावानामिति शेष इति ९० ॥ ७०८ ॥ इदानीं 'थंडिल्लाण चउवीस उ सहस्से'त्ति द्वारमेकनवतितममाह—

**अणावायमसंलोए १, परस्साणुवघायए २। समे ३ अज्झुसिरे यावि ४, अचिरकालकयंमि ५ य ॥ ७०९ ॥ विच्छिन्ने ६ दूरमोगाढे ७, नासन्ने ८ बिलवज्जिए ९ । तसपाणबीयरहिए १०, उच्चाराईणि वोसिरे ॥ ७१० ॥**

अनापातमसंलोकं १ परस्य अनौपघातिकं २ समं ३ अशुषिरं ४ अचिरकालकृतं ५ विस्तीर्णं ६ दूरमवगाढं ७ अनासन्नं ८ बिलवर्जितं ९ त्रसप्राणबीजरहितं १० यत्स्थण्डिलं तत्र उच्चारादीनि—पुरीषप्रश्रवणप्रभृतीनि व्युत्सृजेत्, तत्र परस्येत्युभयत्र सम्बन्धात् न विद्यते आपातः—अभ्यागमः परस्य—अन्यस्य स्वपक्षस्य परपक्षस्य वा यस्मिन् स्थण्डिले तदनापातं, न विद्यते संलोको—दर्शनं वृक्षादिच्छन्नत्वाद्यत्र परस्य तदसंलोकं, अत्र च चतुर्भङ्गी, तद्यथा—अनापातमसंलोकमिति प्रथमो भङ्गः अनापातं संलोकवदिति द्वितीयः आपातवदसंलोकमिति तृतीयः आपातवत् संलोकवच्चेति चतुर्थः, अमीषां चतुर्णां भङ्गानां मध्ये प्रथमो भङ्गोऽनुज्ञातः शेषास्तु प्रतिषिद्धाः, इह च चरमभङ्गव्याख्याने अन्ये विधिप्रतिषेधरूपाः सुज्ञाना भवन्तीति चरमभङ्गस्यैव स्वरूपं निरूप्यते—तत्र आपातवत्स्थण्डिलं द्विविधं ज्ञातव्यं, तद्यथा—स्वपक्षापातवत् परपक्षापातवच्च, स्वपक्षः—संयतवर्गः परपक्षो—गृहस्थादिः, स्वपक्षापातवदपि द्विविधं—संयतापातवत् संयत्यापातवच्च, संयता अपि द्विविधाः—संविज्ञा असंविज्ञाश्च, संविज्ञा—उद्यतविहारिणः असंविज्ञाः—शिथिलाः पार्श्वस्थादयः, संविज्ञा अपि

द्विविधाः—मनोज्ञा अमनोज्ञाश्च, मनोज्ञा—एकसामाचारिकाः अमनोज्ञाश्च—विभिन्नसामाचारिकाः, असंविज्ञा अपि द्विविधाः—संविज्ञपाक्षिका असंविज्ञपाक्षिकाश्च, संविज्ञपाक्षिका—निजानुष्ठाननिन्दिनो यथोक्तसुसाधुसमाचारप्ररूपकाः असंविज्ञपाक्षिका—निर्धर्माणः सुसाधुजुगुप्सकाः, उक्तं च—'तत्थावायं दुविहं सपक्खपरपक्खओ य नायव्वं। दुविहं होइ सपक्खे संजय तह संजईणं च ॥ १ ॥ संविग्गमसंविग्गा संविग्गमणुन्नएयरा चेव। असंविग्गावि दुविहा तप्पक्खियएयरा चेव ॥ २ ॥" परपक्षापातवदपि स्थण्डिलं द्विविधं—मनुज्यापातवत् तिर्यगापातवच्च, एकैकमपि त्रिविधं—पुरुपापातवत् स्त्र्यापातवन्नपुंसकापातवच्च, तत्र मानुषपुरुपापातवत् त्रिविधं—दण्डिकपुरुपापातवत् कौटुम्बिकपुरुपापातवत् प्राकृतपुरुपापातवच्च, दण्डिका—राजकुलानुगताः कौटुम्बिकाः—शेपा महर्द्धिकाः इतरे—प्राकृताः, ते च त्रयोऽपि प्रत्येकं द्विविधाः—शौचवादिनोऽशौचवादिनश्च, एवं स्त्र्यापातवन्नपुंसकापातवश्च प्रत्येकं प्रथमतो दण्डिकादिभेदतस्त्रिविधं, ततः शौचवाद्यशौचवादिभेदतः पुनरेकैकं द्विविधमवसेयं, उक्तं च—"परपक्खेऽवि य दुविहं माणुसतेरिच्छगं च नायव्वं। एक्केकंपि च तिविहं पुरिसित्थिनपुंसकं चेव ॥ १ ॥ पुरिसावायं तिविहं दण्डियकोडुंविए य पागइए। ते सोयऽसोयवाई एमेव नपुंसइत्थीसुं ॥ २ ॥" अथ तिर्यगापातवत् कथ्यते—तत्र तिर्यञ्चो द्विविधाः—दृप्ता अदृप्ताश्च, दृप्ता—दर्पवन्तः अदृप्ताः—शान्ताः, तेऽपि प्रत्येकं त्रिविधाः—जघन्या उत्कृष्टा मध्यमाश्च, जघन्या मूल्यमङ्गीकृत्य एडकादयः उत्कृष्टा हस्त्यादयः मध्यमा महीपादयः, एते किल पुरुपा उक्ताः, एवमेव स्त्रीनपुंसका अपि वक्तव्याः, नवरं ते दृप्ता अदृप्ताश्च प्रत्येकं द्विधा विज्ञेयाः, तद्यथा—जुगुप्सिता अजुगुप्सिताश्च, जुगुप्सिता गर्दभ्यादयः इतरेऽजुगुप्सिताः, उक्तं च—"दित्तमदित्ता तिरिया जहन्नउक्कोसमज्झिमा तिविहा। एमेव थीनपुंसा दुगुंछिअदुगुंछिया नवरं ॥ १ ॥" उक्तमापातवत्स्थण्डिलं, संलोकवत्पुनर्मनुज्येष्वेव द्रष्टव्यं, ते च मनुष्यास्त्रिविधाः—तद्यथा—पुरुपाः स्त्रियो नपुंसकाश्च, एकैके प्रत्येकं त्रिविधाः-

प्राकृताः कौटुम्बिका दण्डिकाश्च, ते पुनरेकैके द्विविधाः—शौचवादिनोऽशौचवादिनश्च, उक्तं च—"आलोगो मणुएसुं पुरिसित्थीनपुंसगाण बोद्धव्वो । पागडकुडुंबिदंडिय असोय तह सोयवाईणं ॥ १ ॥" तत्रैवमापातसंलोकौ चरमभङ्गे तृतीये आपातो द्वितीये संलोक उक्तभेदप्रभेदयुक्तः । इदानीमेतेषु स्थण्डिलेषु गमने दोषाः प्रतिपाद्यन्ते—तत्र स्वपक्षसंयतसंविग्नामनोज्ञानामापाते सति न गन्तव्यं, अधिकरणदोषसम्भवात्, तथाहि—आचार्याणां परस्परं विभिन्नाः सामाचार्यः, ततोऽमनोज्ञानां सामाचारीवितथाचरणदर्शने सति शैक्षाणां स्वसामाचारीपक्षपातेन नैषा सामाचारीति कलहः स्यात्, असंविग्नानामपि पार्श्वस्थादीनामापाते न गन्तव्यं, ते हि प्रचुरेण पानीयेन पुतप्रक्षालनं कुर्वन्ति, ततस्तेषां कुशीलानां प्रचुरवारिणा पुतनिर्लेपकरणं दृष्ट्वा शैक्षकाणां शौचवादिनां मन्दधर्माणां च एतेऽपि प्रव्रजिता एवेति वरमेते इत्यनुकूलतया तेषां समीपे गमनं स्यात्, मनोज्ञानामापातेऽपि गमनं कर्तव्यं, संयत्यापातस्तु सर्वथाऽपि परिहर्तव्य इति स्वपक्षापातदोषाः, परपक्षापातेऽपि यदि पुरुषापातं स्थण्डिलं व्रजति तदा नियमतोऽतिप्रचुरमनाविलं च जलं नेतव्यं, अन्यथाऽत्यल्पे कलुषे वा सर्वथा पानीयाभावे वा यदि गतो भवेत्ततस्ते दृष्ट्वा अशुचयोऽमी इत्यवर्णवादं विदध्युः, मा कोऽप्यमीषामशुचीनामन्नपानादि दद्यादिति भिक्षाप्रतिषेधं वा कुर्युः, अभिनवप्रवृत्तस्य च कस्यचित् श्रावकस्य विपरिणामो वा भवेदिति, स्त्रीनपुंसकापाते पुनरात्मनि परे तदुभयस्मिन् वा शङ्कादयो दोषा भवन्ति, तत्रात्मनि साधुः शङ्काविषयीक्रियते यथा एष किमप्युद्भ्रामयति, परे स्त्री नपुंसको वा शङ्क्यते यथैते पापकर्माण एनं साधुं कामयन्ते इति, तदुभयस्मिन् यथा द्वावप्येतौ परस्परमत्र मैथुनार्थमागतौ, तथा स्त्र्यापाते नपुंसकापाते वा स साधुरात्मपरोभयसमुत्थेन दोषेण स्त्रिया पण्डकेन वा सार्धं मैथुनं कुर्यात् तत्र च केनचिदागारिकेण दृष्ट्वा राजकुलादिष्वाकृष्येत ततः प्रवचनस्योड्डाह इत्यादि, दृप्ततिर्यगापातेन शृङ्गादिताडनमारणादयो दोषाः, गर्हिततिर्यक्स्त्रीनपुंसकापाते पुनर्जनस्य मैथुनशङ्का स्यात् कदा-

चिच्च प्रतिसेवनामपि कुर्यादिति ॥ उक्ता आपाते दोषाः, एवमेव संलोकेऽपि तिर्यग्योनिकान् वर्जयित्वा मनुष्येषु द्रष्टव्याः, तिरश्चां हि संलोके नास्ति कश्चिदनन्तरोदितो दोषः, मनुष्याणां पुनः स्त्रीपुरुषनपुंसकानां संलोके ये आपाते दोषा उक्तास्त एव वेदितव्याः, अथ कदाचिदात्मपरोभयसमुत्था मैथुनदोषा न भवेयुस्तथाप्यमी सम्भाव्यन्ते—यथा केचिदेवमाहुर्यदुत यथैव दिशा उच्चारार्थमस्माकं युवतिवर्गो व्रजति तयैव दिशा एतेऽपि प्रव्रजिता व्रजन्ति, तन्नूनमस्मदीयां कामपि कामिनीं कामयमाना दत्तसङ्केता वा तदालोके तिष्ठन्ति, तथा नपुंसकः स्त्री वा स्वभावतो वातदोषेण वा विकृतं सागारिकं दृष्ट्वा तद्विषयाभिलापमूर्च्छामापन्ना तं साधुमुपसर्गयेत्, तस्मात् त्रयाणामपि संलोको वर्जनीयः, तदेवं चरमभङ्गे आपातसंलोकदोषाः तृतीये आपातदोषाः द्वितीये च संलोकदोषा भवन्ति, प्रथमे पुनः स्थण्डिले ते द्वयेऽप्यापातसंलोकदोषा न संति ततस्तत्र गमनं कर्तव्यं, उक्तं च—"आवायदोस तइए वीए संलोगओ भवे दोसा । ते दोवि नत्थि पढमे तहिँ गमणं भणियविहिणा उ ॥ १ ॥" १। तथा उपघातः—उड्डाहादि प्रयोजनमस्य तदौपघातिकं स्थण्डिलं, तत् त्रिविधंआत्मौपघातिकं प्रवचनौपघातिकं संयमौपघातिकं च, तत्रात्मौपघातिकमारामादि, तत्र हि संज्ञां व्युत्सृजतो यतेस्तत्स्वामिनः सकाशात् पिट्टनादिप्रसङ्गः, प्रवचनौपघातिकं पुरीपस्थानं, तद्धि जुगुप्सितमशुच्यात्मकत्वात्, ततस्तत्र संज्ञाव्युत्सर्गे ईदृशा एते इति प्रवचनोपघातः स्यात्, संयमौपघातिकमङ्गारादिदाहस्थानं, तत्र हि संज्ञाव्युत्सर्जने तेऽग्न्यारम्भिणोऽन्यत्रास्थण्डिलेऽग्निप्रज्वालनादि कुर्वन्ति त्यजन्ति वा तां संज्ञामस्थण्डिले ततश्च संयमोपघात इति, यतश्चैते दोषा भवन्त्यतोऽनौपघातिके स्थण्डिले व्युत्सर्जनीयं, एवमन्यत्रापि भावनीयं २। तथा समं—अविषमं, विषमे हि व्युत्सृजतो यतेः पतनं स्यात् तत्र चात्मविराधना, पुरीषं प्रश्रवणं वा प्रलोठत् षट्कायानुपमर्दयतीति संयमविराधना च ३। तथा 'अज्झुसिरं' यत्तृणादिच्छन्नं न भवति, शुषिरे हि संज्ञादि व्युत्सृजतो वृश्चिकदंदशूकादिदशने-

नात्मनो विराधना पुरीषप्रश्रवणाक्रमणेन च त्रसस्थावरप्राणिप्रणाशनतः संयमविराधना ४ । तथा अचिरकालकृतं—स्वल्पकालनिविष्टं, अयमर्थः—यानि स्थण्डिलानि यस्मिन् ऋतावग्निप्रज्वालनादिभिः कारणैरचित्तानि कृतानि तस्मिन्नेव ऋतौ तान्यचिरकालकृतानि भवन्ति, यथा हेमन्ते कृतानि हेमन्त एव अचिरकालकृतानि, ऋत्वन्तरव्यवहितानि तु चिरकालकृतानि, ततः सचित्तत्वान्मिश्रीभूतत्वाद्वा अस्थण्डिलानि तानीति, यत्र पुनरेकं वर्षाकालं सधनो ग्राम उषितस्तत्र द्वादश वर्षाणि यावत्स्थण्डिलं भवति ततः परमस्थण्डिलं ५ । तथा विस्तीर्ण—महत्, तत् त्रिधा—जघन्यं मध्यमुत्कृष्टं च, तत्र जघन्यमायामविष्कम्भाभ्यां हस्तप्रमाणं, उत्कृष्टं द्वादश योजनानि, तच्च चक्रवर्तिस्कन्धावारनिवेशे समवसेयं, शेषं तु मध्यममिति ६ । तथा दूरमवगाढं—गम्भीरं, यत्राधस्ताच्चत्वार्यङ्गुलान्यग्नितापादिना अचित्ता भूमिस्तज्जघन्यं, यस्य पुनरधस्तात्पञ्चाङ्गुलप्रभृतिकं तदुत्कृष्टं दूरमवगाढं, अत्र च वृद्धसम्प्रदायः—'चउरङ्गुलोगाढे सन्ना वोसिरिज्जइ न काइय'त्ति ७ । तथा अनासन्नं—आरामादेर्नातिसमीपस्थं, इह किल आसन्नं द्विविधं—द्रव्यासन्नं भावासन्नं च, तत्र द्रव्यासन्नं देवकुलहर्म्यग्रामारामग्रामक्षेत्रमार्गादीनां निकटं, तत्र च द्वौ दोषौ—संयमोपघात आत्मोपघातश्च, तथाहि—स देवकुलादिस्वामी तत्साधुव्युत्सृष्टं पुरीषं केनचित्कर्मकरेणान्यत्र त्याजयति, ततस्तत्प्रदेशविलेपने हस्तप्रक्षालने च संयमोपघातः, आत्मोपघातश्च स गृहाद्यधिपतिः प्रद्विष्टः सन् कदाचित्ताडयतीति, भावासन्नं नाम तावत्तिष्ठति यावत्संज्ञा मनाग् नागच्छति, ततस्त्वरितं गच्छन् केनचिद्धूर्तेन भावासन्नतामुपगम्य धर्मप्रच्छनादिव्याजेनार्धपथ एव धृतः, ततश्च तस्य पुरीषवेगं धारयत आत्मविराधना, मरणस्य ग्लानत्वस्य वाऽवश्यम्भावात्, अनधिसहेन च सता तेन लोकपुरतोऽस्थाने संज्ञाव्युत्सर्गे पुनर्जङ्घादिलेपने वा प्रवचनविराधना, संयमोपघातादि तत्रैवाप्रत्युपेक्षितस्थण्डिले व्युत्सृजतो भवतीति ८ । तथा विलवर्जितं—भूमिरन्ध्रादिरहितं, बिलयुक्ते हि स्थण्डिले संज्ञां व्युत्सृजतो यदा बिले प्रविशन्त्या संज्ञया प्रश्रवणेन च

तद्गताः पिपीलिकाप्रभृतयः प्राणिनो व्यापाद्यन्ते तदा संयमविराधना सर्पादिभक्षणे चात्मविराधना ९ । तथा त्रसप्राणबीजरहितं—स्थावरजङ्गमजन्तुजातवियुक्तं, तद्युक्ते हि स्थण्डिले संज्ञाव्युत्सर्गं कुर्वाणस्य साधोर्द्वौ दोषौ—संयमविराधना आत्मविराधना च, तत्र त्रसेषु बीजेषु च प्राणव्यपरोपणात् संयमविराधना सुप्रतीता, त्रसेष्वात्मविराधना तेभ्यो भक्षणाद्युपद्रवसम्भवात्, बीजेष्वात्मविराधना अतितीक्ष्णगोक्षुरकादिबीजानां पादेषु लगनतः पादप्रलोठनेन पतनतो वेति १० । अमीषां चानन्तरोदितानां दशानां पदानामेकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशकैः संयोगाः कर्तव्याः, तेषु च भङ्गाः सर्वसङ्ख्यया चतुर्विंशत्यधिकं सहस्रं, अथ कस्मिन् संयोगे कियन्तो भङ्गकाः ?, उच्यन्ते, इह भङ्गानामानयनार्थमियं करणगाथा—"उभयमुहं रासिदुगं हेट्ठिल्लाणंतरेण भय पढमं । लद्धहरासिविभत्ते तस्सुवरि गुणित्तु संजोगा ॥ १ ॥" अस्या अक्षरगमनिका—इह दशानां पदानां द्व्यादिसंयोगभङ्गा आनेतुमभिप्रेतास्ततस्तावत्प्रमाणौ द्वौ राशी उभयमुखौ स्थाप्येते, किमुक्तं भवति ?—एककादीन् दशकपर्यन्तानङ्कान् पूर्वानुपूर्व्योपरि स्थापयित्वा तेषामधस्तात् पश्चानुपूर्व्या भूय एककादयो दशकपर्यन्ता अङ्काः स्थापनीयाः, स्थापना चेयं—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| १ | १० | ४५ | १२० | २१० | २५२ | २१० | १२० | ४५ | १० |

अत्राधस्तनराशिपर्यन्तवर्तिन एककस्योपरि यो दशकस्ते एककसंयोगे दश भङ्गा द्रष्टव्याः, न च तत्र करणगाथाया व्यापारो, द्व्यादिसंयोगभङ्गानयनायैव तस्याः प्रवृत्तत्वात्, ततोऽधस्तनराशिपर्यन्तवर्तिन एककस्यानन्तरेण द्विकलक्षणेनोपरितनराशौ पश्चानुपूर्व्या प्रथममंकं

ततो लब्धाः पञ्च, यतो दश द्विधा विभक्ताः पञ्चैव भवन्ति, 'लद्धहरासिविभत्ते'त्ति अ-
दशकरूपं भजेत्—तस्य भागाकारं कुर्यात्, ततो लब्धाः पञ्च, यतो दश द्विधा विभक्ताः पञ्चैव भवन्ति, 'लद्धहरासिविभत्ते'त्ति अ-
धोराशिना द्विकलक्षणेनोपरितने प्रथमे अङ्के दशकलक्षणे विभक्ते सति लब्धेन अङ्केन पञ्चकेन तस्य द्विकलक्षणस्योपरितनमङ्कं नवकलक्षणं
गुणयेत्—ताडयेत्, जाताः पञ्चचत्वारिंशत्, इत्थं च गुणयित्वा संयोगाः—संयोगभङ्गा वाच्याः, यथा द्विकसंयोगे भङ्गाः पञ्चचत्वारिंश-
दिति, ततो भूयोऽपि त्रिकसंयोगभङ्गानयनाय प्रथमपादरहिता करणगाथा व्यापार्यते, यथाऽधस्तनराशिस्थितेन द्विकादनन्तरेण त्रिकेणो-
परितनराशिव्यवस्थितं त्रिकोपरितनाष्टकरूपाङ्कापेक्षयाऽऽद्यं पञ्चचत्वारिंशल्लक्षणमंकं भजेत्, ततो लब्धाः पञ्चदश, यतः पञ्चचत्वारिंशत्
त्रिधा विभक्ताः पञ्चदशैव भवन्ति, तैश्चाधोराशिनोपरितने अङ्के विभक्ते लब्धैः पञ्चदशभिस्त्रिकलक्षणस्याङ्कस्योपरितनमष्टकलक्षणमङ्कं गुण-
येत्, गुणिते च सति जातं विंशत्युत्तरं शतं, एतावन्तस्त्रिकसंयोगे भङ्गाः, पुनश्चाधस्तनराशिस्थितेन त्रिकादनन्तरेण चतुष्ककेणोपरित-
नराशिस्थितं चतुष्कोपरितनसप्तकरूपाङ्कापेक्षया प्रथमं विंशत्युत्तरशतलक्षणमंकं भजेत्, लब्धा त्रिंशत्, यतो विंशत्युत्तरं शतं चतुर्भिर्भक्तं
त्रिंशदेव भवति, तया च त्रिंशता चतुष्कस्योपरि यः सप्तकः स गुण्यते, जाते द्वे शते दशोत्तरे, एतावन्तश्चतुष्ककसंयोगे भङ्गाः, एवं
पञ्चकादिसंयोगेष्वपि भङ्गा आनेतव्याः यावद्दशकसंयोगे एको भङ्गः, एवं चैकसंयोगे दश भङ्गाः द्विकसंयोगे पञ्चचत्वारिंशत् त्रिक-
संयोगे विंशं शतं चतुष्कसंयोगे द्वे शते दशोत्तरे पञ्चकसंयोगे द्वे शते द्विपञ्चाशदधिके षट्कसंयोगे द्वे शते दशोत्तरे सप्तकसंयोगे विंशं
शतं अष्टकसंयोगे पञ्चचत्वारिंशत् नवकसंयोगे दश दशकसंयोगे एकः, सर्वमीलने च त्रयोविंशत्युत्तरं सहस्रमशुद्धभङ्गानां भवति, चतु-
र्विंशस्तु शुद्धो भङ्गो यद्यपि करणेन नागच्छति तथाप्येतन्मध्ये तं प्रक्षिप्य भङ्गसङ्ख्या पूरणीया, यतः सर्वभङ्गप्रसारे क्रियमाणे पर्यन्ते
शुद्धभङ्गस्यागतिः, उक्तं च—"दस पणयाल विसोत्तरसयं च दोसय दसुत्तरा दो य। बावन्न दो दसुत्तर विसुत्तरं पञ्च चत्ता य ॥ १ ॥

दस एक्को य कमेणं भङ्गा एगादिचारणाएसुं । सुद्धेण समं मिलिया भङ्गसहस्सं चउव्वीसं ॥ २ ॥" ९१ ॥ ७१० ॥ इदानीं 'पुव्वाणं नामाइं पयसंखासंजुयाइं चउदसवि'त्ति द्विनवतं द्वारमाह—

उप्पायं पढमं पुण एक्कारसकोडिपयपमाणेणं । बीयं अग्गाणीयं छन्नउई लक्खपयसंखं ॥ ७११ ॥ विरियप्पवायपुव्वं सत्तरिपयलक्खलक्खियं तइयं । अत्थियनत्थिपवायं सट्ठीलक्खा चउत्थं तु ॥ ७१२ ॥ नाणप्पवायनामं एयं एगूणकोडिपयसंखं । सच्चप्पवायपुव्वं छप्पयअहिएगकोडीए ॥ ७१३ ॥ आयप्पवायपुव्वं पयाण कोडी उ हुंति छत्तीसं । समयप्पवायगवरं असीई लक्खा पयकोडी ॥ ७१४ ॥ नवमं पच्चक्खाणं लक्खा चुलसी पयाण परिमाणं । विज्जप्पवाय पनरस सहस्स एक्कारस उ कोडी ॥ ७१५ ॥ छव्वीसं कोडीओ पयाण पुव्वे अवंझनामंमि । छप्पन्न लक्ख अहिया पयाण कोडी उ पाणाउ ॥ ७१६ ॥ किरियाविसालपुव्वं नव कोडीओ पयाण तेरसमं । अद्धत्तेरसकोडी चउदसमे बिंदुसारम्मि ॥ ७१७ ॥ पढमं आयारंगं अट्ठारस पयसहस्सपरिमाणं । एवं सेसंगाणवि दुगुणादुगुणप्पमाणाइं ॥ ७१८ ॥

'उप्पाये'त्यादिगाथाष्टकं, यत्रोत्पादमङ्गीकृत्य सर्वद्रव्यपर्यायाणां प्ररूपणा कृता तदुत्पादपूर्वं प्रथमं, तच्च पदप्रमाणेन—पदसङ्ख्यामाश्रित्यैकादशकोटिप्रमाणं, प्रथमपूर्वे एकादश पदानां कोटय इत्यर्थः, इह यत्रार्थोपलब्धिस्तत्पदमित्यादिपदलक्षणसद्भावेऽपि तथाविधसम्प्रदायाभावात्तस्य प्रमाणं न सम्यगवगम्यत इति, तथा यत्र सर्वेषां द्रव्याणां पर्यायाणां जीवविशेषाणां चाग्रं—परिमाणं वर्ण्यते तदग्रायणीयं द्वितीयं पूर्वं,

अग्रं—परिमाणं तस्य अयनं—गमनं परिच्छेद इत्यर्थः तस्मै हितमग्रायणीयमिति व्युत्पत्तेः, तस्य पदपरिमाणं षण्णवतिर्लक्षाणि, तथा यत्र जीवानां सकर्मेतराणामजीवानां च वीर्यं प्रोच्यते—प्ररूप्यते तद्वीर्यप्रवादं तृतीयं पूर्वं, तस्य पदपरिमाणं सप्ततिर्लक्षाणि, तथा यल्लोकेऽस्ति वस्तु धर्मास्तिकायादि यच्च नास्ति खरशृङ्गादि अथवा स्याद्वादाभिप्रायेण सर्वं वस्तु स्वरूपेणास्ति पररूपेण नास्तीत्येवं यत्र प्रोच्यते तदस्ति-नास्तिप्रवादं चतुर्थं, तदपि पदपरिमाणतः षष्टिर्लक्षाणि, तथा यत्र ज्ञानं मत्यादिकं पञ्चविधं स्वरूपभेदप्रभेदादिभिः प्रोद्यते तत् ज्ञानप्रवादं नाम पञ्चमं पूर्वं, एतच्च पदपरिमाणमाश्रित्यैकेन पदेन न्यूना एका कोटिः, तथा सत्यं—संयमः सत्यवचनं वा तद्यत्र सभेदं सप्रतिपक्षं च प्रोद्यते तत् सत्यप्रवादं षष्ठं पूर्वं, तस्य पदपरिमाणं षड्भिः पदैरधिका एका कोटिः, तथा यत्रात्मा—जीवोऽनेकनयैः प्रोद्यते तदात्मप्रवादं सप्तमं पूर्वं, तस्य पदपरिमाणं षट्त्रिंशत्कोटयः, तथा समयः—सिद्धान्तार्थः स चात्र कर्मरूपो गृह्यते ततः कर्मस्वरूपं यत्र प्ररूप्यते तत् समयप्रवादं वरं—प्रधानमष्टमं पूर्वं, अन्यत्र तु कर्मप्रवादमित्युच्यते, तत्रापि कर्म—ज्ञानावरणादिकमष्टविधं प्रकृतिस्थित्यनुभागप्रदेशादिभिर्भेदै-रन्यैश्चोत्तरोत्तरभेदैर्यत्र प्रोद्यते तत्कर्मप्रवादं पूर्वं, तस्य पदपरिमाणमेका कोटिरशीतिश्च लक्षाणि, तथा यत्र सर्वप्रत्याख्यानस्वरूपं सप्रभेदं प्रोद्यते तत् प्रत्याख्यानप्रवादं नवमं, तस्य पदानां परिमाणं चतुरशीतिर्लक्षाः, तथा यत्रानेकविधा विद्यातिशयाः साधनानुकूल्येन सिद्धि-प्रकर्षेण वर्ण्यते तद्विद्यानुप्रवादं दशमं, तस्य पदपरिमाणमेकादश कोटयः पञ्चदश च सहस्राणि, तथाऽवन्ध्यनामधेयमेकादशं पूर्वं, वन्ध्यं नाम निष्फलं न वन्ध्यं अवन्ध्यं सफलमित्यर्थः, तत्र हि सर्वे ज्ञानतपःसंयोगाः शुभफलेन सफला वर्ण्यन्ते अप्रशस्ताश्च प्रमादादिकाः सर्वे अशुभफला वर्ण्यन्ते अतोऽवन्ध्यं, अन्ये तु कल्याणमित्याहुः, अर्थस्तु तत्रापि स एव, तस्मिंश्च पदपरिमाणं षड्विंशतिकोटयः, तथा यत्र प्राणा—जीवाः पञ्चेन्द्रियत्रिविधबलोच्छ्वासनिःश्वासरूपा वा आयुश्चानेकधा वर्ण्यते तत् प्राणायुर्द्वादशं पूर्वं, तत्र पदपरिमाणमेका

कोटिः पट्पञ्चाशच्च लक्षाः, तथा यत्र क्रियाः—कायिक्यादिका विशाला—विस्तीर्णाः सभेदत्वादभिधीयन्ते तत् क्रियाविशालं त्रयोदशं पूर्वं, तत्र पदपरिमाणं नव कोटयः, तथा विन्दुसारमिति लोकशब्दोऽत्र लुप्तो द्रष्टव्यः, ततश्च लोके—जगति श्रुतलोके वाऽक्षरस्योपरि विन्दुरिव सारं—सर्वोत्तमं सर्वाक्षरसन्निपातलब्धिहेतुत्वाल्लोकविन्दुसारं, तत्परिमाणमर्धत्रयोदशपदकोट्य इति, समवायांगटीकायां तु पदपरिमाणविषये किंचिदन्यथात्वमपि दृश्यते इति । ननु पूर्वाणीति कः शब्दार्थः ?, उच्यते, यस्मात्तीर्थङ्करस्तीर्थप्रवर्तनाकाले गणधराणां सर्वसूत्राधारत्वेन पूर्वं पूर्वगतसूत्रार्थं भाषते तस्मात् पूर्वाणीति भणितानि, गणधराः पुनः श्रुतरचनां विदधाना आचारादिक्रमेण रचयन्ति स्थापयन्ति च, मतान्तरेण तु पूर्वगतः सूत्रार्थः पूर्वमर्हता भाषितो गणधरैरपि पूर्वगतं श्रुतमेव पूर्वं रचितं पश्चादाचारादिकं, नन्वेवं यदाचारनिर्युक्तावुक्तं—'सव्वेसिं आयारो' इत्यादि तत्कथं ?, उच्यते, तत्र स्थापनामाश्रित्य तथोक्तं इह तु अक्षररचनामधिकृत्य भणितं पूर्वं पूर्वाणि कृतानीति ॥ ७११ ॥ ७१२ ॥ ७१३ ॥ ७१४ ॥ ७१५ ॥ ७१६ ॥ ७१७ ॥ अथ पदसङ्ख्याप्रस्तावादाचारादीनामप्यङ्गानां पदसङ्ख्यामाह—'पढमं' इत्यादिगाथा, प्रथममाचाराङ्गमष्टादशपदसहस्रप्रमाणं, एवम्—अनेनैव प्रकारेण सूत्रकृदङ्गस्थानाङ्गप्रभृतीनि शेषाङ्गान्यपि द्विगुणद्विगुणपदप्रमाणानि, तथाहि—सूत्रकृदङ्गं पट्त्रिंशत्पदसहस्रं स्थानाङ्गं द्विसप्ततिपदसहस्रं एवमुत्तरोत्तराणामपि समवायादीनामङ्गानां क्रमेण द्विगुणता पदानां प्रतिपत्तव्या, यावद्विपाकश्रुते एकादशे अङ्गे पदपरिमाणमेका कोटी चतुरशीतिर्लक्षाः द्वात्रिंशच्च सहस्राणीति । ननु पूर्वं तावत् पूर्वाणि भगवद्भिर्गणभृद्भिः क्रमेण ग्रथ्यन्ते पूर्वं करणात्पूर्वाणीति पूर्वसूरिप्रदर्शितव्युत्पत्तिश्रवणात्, पूर्वेषु च सकलस्यापि वाङ्मयस्यावतारो, न खलु तदस्ति यत्पूर्वेषु नाभिहितं, ततः किं शेषाङ्गविरचनेनाङ्गबाह्यविरचनेन वा ?, उच्यते, इह विचित्रा जगति प्राणिनः, तत्र ये दुर्मेधसस्ते पूर्वाणि नाध्येतुमीशते, पूर्वाणामतिगम्भीरार्थत्वात्, स्त्रीणां च पूर्वाध्ययनेऽनाधिकार एव, तासां तुच्छ-

त्वादिदोषबहुलत्वात्, उक्तं च—"तुच्छा गारवकलिया चलिंदिया दुब्बला य धीईए । इइ अतिसेसज्झयणा भूयावाओ य नो थीणं ॥ १ ॥" [ तुच्छा गौरवकलिताश्चलेन्द्रिया धृत्या च दुर्बला इतिहेतोरतिशायीन्यध्ययनानि भूतवादश्च न स्त्रीणां ॥ १ ॥ ] अत्रातिशेषाध्ययनानि—उत्थानश्रुतादीनि विविधविशिष्टातिशयसम्पन्नानि शास्त्राणि, भूतवादो—दृष्टिवादः । ततो दुर्मेधसां स्त्रीणां चानुग्रहाय शेषाङ्गानामङ्गबाह्यस्य च विरचनमिति ॥ ९२ ॥ ७१८ ॥ इदानीं 'निग्गंथ'त्ति त्रिनवतं द्वारमाह—

पंच नियंठा भणिया पुलाय १ बउसा २ कुसील ३ निग्गंथा ४ । होइ सिणाओ य ५ तहा एक्केक्को सो भवे दुविहो ॥ ७१९ ॥ गंथो मिच्छत्तधणाइओ मओ जे य निग्गया तत्तो । ते निग्गंथा वुत्ता तेसि पुलाओ भवे पढमो ॥ ७२० ॥ मिच्छत्तं वेयतियं हासाई छक्कगं च नायवं । कोहाईण चउक्कं चउदस अब्भिंतरा गंथा ॥ ७२१ ॥ खेत्तं वत्थुं धणधन्नसंचओ मित्तनाइसंजोगो । जाणसयणासणाणि य दासा दासीउ कुवियं च ॥ ७२२ ॥ धन्नमसारं भन्नइ पुलायसद्देण तेण जस्स समं । चरणं सो हु पुलाओ लद्धीसेवाहि सो य दुहा ॥ ७२३ ॥ उवगरणसरीरेसु बउसो दुविहोवि होइ पंचविहो । आभोग १ अणाभोए २ संवुड ३ अस्संवुडे ४ सुहुमे ५ ॥ ७२४ ॥ आसेवणा कसाए दुहा कुसीलो दुहावि पंचविहो । नाणे १ दंसण २ चरणे ३ तवे ४ य अहसुहुमए ५ चेव ॥ ७२५ ॥ उवसामगो १ य खवगो २ दुहा नियंठो दुहावि पंचविहो । पढमसमओ १ अपढमो २ चरम ३ अचरमो ४ अहासुहुमो ५ ॥ ७२६ ॥ पाविज्जइ अट्ठसयं खवगाणुवसामगाण

चउपन्ना । उक्कोसओ जहन्नेणेक्को व दुगं व तिगमहवा ॥ ७२७ ॥ सुहज्झाणजलविसुद्धो कम्ममलावेक्खया सिणाओत्ति । दुविहो य सो सजोगी तहा अजोगी विणिद्दिट्ठो ॥ ७२८ ॥ मूलुत्तरगुणविसया पडिसेवा सेवए पुलाए य । उत्तरगुणेसु बउसो सेसा पडिसेवणारहिया ॥ ७२९ ॥ निग्गंथसिणायाणं पुलायसहियाण तिण्ह वोच्छेओ । समणा बउसकुसीला जा तित्थं ताव होहिंति ॥ ७३० ॥

'पंचे'त्यादिगाथाद्वादशकं, ग्रन्थादान्तरान्मिथ्यात्वादेर्बाह्याच्च धर्मोपकरणवर्जधनादेर्निर्गता निर्ग्रन्थाः—साधवः, ते पञ्चविधा उक्ताः, यथा—पुलाको वकुशः कुशीलो निर्ग्रन्थः स्नातकश्चेति, एतेषां च पुलाकादीनां सर्वेषां सामान्यतश्चारित्रसद्भावेऽपि मोहनीयकर्मक्षयोपशमादिवैचित्र्याद्भेदोऽवगन्तव्यः, एकैकोऽपि स पुलाकादिर्द्विविधो भवेत्, द्वैविध्यं च सूत्रकृदेवाग्रे प्रकटयिष्यति ॥ ७१९ ॥ अथ सूत्रकार एव निर्ग्रन्थशब्दव्युत्पत्तिमाह—'गंथो' गाहा, ग्रथ्यते—बध्यते कषायवशगेनात्मनेति ग्रन्थः यद्वा ग्रथ्नाति—बध्नात्यात्मानं कर्मणेति ग्रन्थः, स द्विभेदः—आभ्यन्तरो बाह्यश्च, तत्राभ्यन्तरो मिथ्यात्वादिश्चतुर्दशविधः बाह्यश्च धनादिको दशविधो 'मतः' कथितः, तस्माच्च द्विभेदादपि ग्रन्थाद् ये निर्गतास्ते निर्ग्रन्था 'उक्ताः' भणिताः, 'तेषां' निर्ग्रन्थानां पञ्चभेदानां मध्ये पुलाकः प्रथमो भवेत् ॥ ७२० ॥ अथ चतुर्दशविधाभ्यन्तरग्रन्थप्रतिपादनामाह—'मिच्छत्तं' गाहा, मिथ्यात्वं—तत्त्वार्थाश्रद्धानं वेदत्रिकं—पुंस्त्रीनपुंसकवेदलक्षणं हास्यादिषट्कं च—हास्यरत्यरतिभयशोकजुगुप्सालक्षणं ज्ञातव्यं, तत्र हास्यं—विस्मयादिषु वक्त्रविकासात्मकं रतिः—असंयमे प्रीतिः अरतिः—संयमेऽप्रीतिः, उक्तं च—"अरई य संजमम्मी होइ रईऽसंजमे यावि"त्ति भयं—इहलोकादिसप्तधा, शोकः—इष्टवियोगान्मानसं दुःखं जुगुप्सा—अज्ञानादिमलिन-

तथा क्रोधादीनां
तनुमुनिहीलना, तथा चाह—"अण्हाणमाइएहिं साहुं तु दुगुंछई दुगुंछ"त्ति [ अस्नानादिभिः साधुं जुगुप्सते जुगुप्सेति ]। तथा क्रोधादीनां
चतुष्कं—क्रोधमानमायालोभलक्षणं एते चतुर्दश आभ्यन्तरा ग्रन्थाः ॥ ७२१ ॥ अथ बाह्यं ग्रन्थमाह—क्षेत्रं—सेत्वादि वास्तु—खातादि धनं च—
हिरण्यादि धान्यं च—शाल्यादि तयोः सञ्चयो—राशिर्धनधान्यसञ्चयः मित्राणि च—सहवर्धितादीनि ज्ञातयश्च—स्वजनास्तैः संयोगः—
सम्बन्धो मित्रज्ञातिसंयोगः, यानानि च—शिविकादीनि शयनानि च—पल्यंकादीनि आसनानि च—सिंहासनादीनि यानशयनासनानि, चः
समुच्चये दासा—अङ्कपतिताः दास्योऽपि—तथाविधा एव कुप्यं च—विविधगृहोपस्करात्मकं, अत्र च धनधान्यसञ्चयो मित्रज्ञातिसंयो-
गश्चेति द्वौ, शेषाश्चाष्टेति दशविधो बाह्यग्रन्थः ॥ ७२२ ॥ अथ पुलाकादीन् व्याचिख्यासुः प्रथमं पुलाकव्याख्यानमाह—'धन्नमसारं'
गाहा, पुलाकशब्देनासारं—निःसारं धान्यं तण्डुलकणशून्यं पलञ्जिरूपं भण्यते तेन पुलाकेन समं—सदृशं यस्य साधोश्चरणं—चारित्रं भवति
स पुलाकः, पुलाक इव पुलाक इतिकृत्वा, अयमर्थः—तपःश्रुतहेतुकायाः सङ्घादिप्रयोजने सबलवाहनस्य चक्रवर्त्यादेरपि चूर्णने समर्थाया
लब्धेरुपजीवनेन ज्ञानाद्यतिचारासेवनेन वा सकलसंयमसारगलनात् पलञ्जिवन्निःसारो यः स पुलाकः, स च द्विधा—लब्ध्या सेवया
च, लब्धिपुलाकः सेवापुलाकश्चेत्यर्थः, तत्र लब्धिपुलाको देवेन्द्रर्द्धिसमसमृद्धिको लब्धिविशेषयुक्तः, यदाह—"संघाइयाण कज्जे चुण्णेज्जा
चक्कवट्टिमवि जीए। तीए लद्धीएँ जुओ लद्धिपुलाओ मुणेयव्वो ॥ १ ॥" [ संघादिकानां कार्ये चूर्णयति चक्रवर्त्तिनमपि यया। तया
लब्ध्या युतो लब्धिपुलाको ज्ञातव्यः ॥ १ ॥ ] अन्ये त्वाहुः—आसेवनतो यो ज्ञानपुलाकस्तस्येयमीदृशी लब्धिः स एव च लब्धिपु-
लाको न तद्व्यतिरिक्तः कश्चिदपर इति, आसेवापुलाकस्तु पञ्चविधः—ज्ञानपुलाकः दर्शनपुलाकः चारित्रपुलाकः लिङ्गपुलाकः यथासू-
क्ष्मपुलाकश्च, तत्र स्खलितमिलितादिभिरतिचारैर्ज्ञानमाश्रित्यात्मानमसारं कुर्वन् ज्ञानपुलाकः, एवं कुदृष्टिसंस्तवादिभिर्दर्शनपुलाकः, मूलो-

त्तरगुणप्रतिषेवणया चारित्रविराधनतश्चरणपुलाकः, यथोक्तलिङ्गाधिकग्रहणान्निष्कारणान्यलिङ्गकरणाद्वा लिङ्गपुलाकः, किञ्चित्प्रमादान्मनसाऽकल्प्यग्रहणाद्वा यथासूक्ष्मपुलाकः, अन्यत्र पुनरेवमुक्तं—“आहासुहुमो य एएसु चेव चउसुवि जो थोवथोवं विराहेइ”त्ति ॥ ७२३ ॥ अथ वकुशमाह—‘उवगरण’ गाहा, वकुशः शवलः कर्वुर इति पर्यायाः, एवम्भूतश्च सातिचारत्वात् संयमोऽत्राभिप्रेतः, ततश्च वकुशसंयमयोगात्साधुरपि वकुशः, सातिचारत्वाच्छुद्ध्यशुद्धिव्यतिकीर्णचरण इत्यर्थः, स द्विविधः—उपकरणविषये शरीरविषये च, उपकरणवकुशः शरीरवकुशश्चेति भावः, तत्राकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिश्चोक्षवासःप्रियः पात्रदण्डकाद्यपि विभूपार्थं तैलमात्रयोज्ज्वलीकृत्य धारयन्नुपकरणवकुशः, तथाऽनागुप्तव्यतिरेकेण करचरणवदनप्रक्षालनमक्षिकर्णनासिकाद्यवयवेभ्योऽपि दूपिकामलाद्यपनयनं दन्तपवनकरणं केशसंस्कारं च देहविभूषार्थमाचरन् शरीरवकुशः, अयं च द्विविधोऽपि सामान्यतः पञ्चविधः, तद्यथा—आभोगवकुशः अनाभोगवकुशः संवृतवकुशः असंवृतवकुशः सूक्ष्मवकुशश्च, अत्राभोगः—साधूनामकृत्यमेतच्छरीरोपकरणविभूपणमित्येवम्भूतं ज्ञानं तत्प्रधानो वकुश आभोगवकुशः, शरीरोपकरणविभूषयोः सहसाकारी अनाभोगवकुशः, संवृतो—गुप्तो लोके अविज्ञातदोपः संवृतवकुशः, प्रकटकारी तु असंवृतवकुशः, मूलोत्तरगुणाश्रितं वा संवृतासंवृतत्वं किञ्चित्प्रमादी नेत्रमलाद्यपनयनात् सूक्ष्मवकुशः, एते च वकुशाः सामान्येन ऋद्धियशस्कामाः सातगौरवाश्रिताः अविविक्तपरिवाराः छेदयोग्यशवलचारित्रयुक्ता अवगन्तव्याः, तत्र ऋद्धिः—प्रचुरवस्त्रपात्रादिंप्राप्तिः यशश्च—गुणवन्तो विशिष्टाः साधव इत्यादिप्रवादरूपख्यातिगुणस्तत्कामाः—तदभिलाषिणः, सातं—सुखं तत्र गौरवं—आदरस्तदाश्रिताः, नातीवाहोरात्राभ्यन्तरानुष्ठेयासु क्रियास्वभ्युद्यता इति भावः, अविविक्तः—असंयमादपृथग्भूतः समुद्रफेनादिना निघृष्टजङ्घस्तैलादिना विहितशरीरमृजः कर्तरिकाकल्पितकेशः स परिवारो येपां तेऽविविक्तपरिवाराः छेदयोग्यं—सर्वदेशच्छेदार्हं शवलं—अतिचारकर्वुरं यथा-

रित्रं तेन युक्ताः छेदयोग्यशवलचारित्रयुक्ताः ॥ ७२४ ॥ अथ कुशीलमाह—**'आसेवणा'** गाहा, मूलोत्तरगुणविराधनात् सञ्ज्वलनकषा-
योदयाद्वा कुत्सितं शीलं—चारित्रं यस्य स कुशीलः, स च द्विधा—आसेवनाकुशीलः कषायकुशीलश्च, आसेवना—संयमस्य विपरीताऽऽराधना
तया कुशील आसेवनाकुशीलः, कषायैः—सञ्ज्वलनक्रोधाद्युदयलक्षणैः कुशीलः कषायकुशीलः, द्विविधोऽपि कुशीलः पञ्चविधो—ज्ञानदर्श-
नचरणतपोयथासूक्ष्मभेदात्, अयमर्थः—प्रतिसेवनाकुशीलः पञ्चविधो ज्ञानदर्शनचारित्रतपःप्रतिसेवकः सूक्ष्मप्रतिसेवकश्च, तत्र ज्ञानदर्श-
नचारित्रतपांस्युपजीवन् तत्प्रतिसेवक उच्यते, अन्ये तु तपःस्थाने लिङ्गं पठन्ति, एष एव शोभनस्तपस्वीत्यादिप्रशंसया यस्तुष्यति स
सूक्ष्मप्रतिसेवकः, कषायकुशीलोऽपि पञ्चविधो—ज्ञानदर्शनचारित्रतपःकषायकुशीलः सूक्ष्मकषायकुशीलश्च, तत्र ज्ञानदर्शनतपांसि सञ्ज्व-
लनक्रोधकषायाद्युपयुक्तो यः स्वस्वविषये व्यापारयति स तत्तत्कषायकुशील उच्यते, कषायाविष्ट एव यः कस्यापि शापं प्रयच्छति स
चारित्रकषायकुशीलः, मनसा तु क्रोधादीन् कुर्वन् सूक्ष्मकषायकुशीलः, अथवा सञ्ज्वलनक्रोधादिकषायाविष्ट एव ज्ञानदर्शनचारित्रतपांसि
यो विराधयति—अतीचारमलिनानि करोति स ज्ञानादिकषायकुशीलः, सूक्ष्मकषायकुशीलस्तु तथैवेति ॥ ७२५ ॥ अथ निर्ग्रन्थमाह—
**'उवसामगो य'** गाहा, निर्गतो मोहनीयकर्मलक्षणात् ग्रन्थादिति निर्ग्रन्थः, स द्विधा—उपशान्तमोहः क्षीणमोहश्च, सूत्रे च 'वर्तमान-
सामीप्ये वर्तमानवद्वे'ति न्यायादतीतकालाभिधानेऽपि 'उवसामगो य खवगो'त्ति वार्तमानिको वुण्प्रत्ययः, उक्तं च—"सो उवसंतक-
साओ खीणकसाओ व"त्ति, तत्र उपशान्तः—उपशमं नीतो विद्यमान एव सङ्क्रमणोद्वर्तनादिकरणायोग्यत्वेन व्यवस्थापितो मोहो—मोह-
नीयं कर्म येन स उपशान्तमोहः, तथा क्षीणो मोहो यस्य स क्षीणमोहः, सूक्ष्मसम्परायावस्थायां सञ्ज्वलनलोभमपि निःशेषं क्षपयित्वा
सर्वथा मोहनीयकर्माभावं प्रतिपन्न इत्यर्थः, स द्विविधोऽपि प्रत्येकं पञ्चविधस्तद्यथा—प्रथमसमयनिर्ग्रन्थोऽप्रथमसमयनिर्ग्रन्थश्चरमसमय-

निर्ग्रन्थोऽचरमसमयनिर्ग्रन्थो यथासूक्ष्मनिर्ग्रन्थश्चेति, तत्रान्तर्मुहूर्तप्रमाणे निर्ग्रन्थकालसमयराशौ प्रथमसमये निर्ग्रन्थत्वं प्रतिपद्यमानः प्रथमसमयनिर्ग्रन्थः १, अन्यसमयेषु च वर्तमानोऽप्रथमसमयनिर्ग्रन्थः २ पूर्वानुपूर्व्या व्यपदिश्यते, तथा चरमे—अन्तिमे समये वर्तमानश्चरमसमयनिर्ग्रन्थः ३ शेषेषु पुनर्वर्तमानोऽचरमसमयनिर्ग्रन्थः पश्चानुपूर्व्या निर्दिश्यते, यथासूक्ष्मनिर्ग्रन्थः पुनः सामान्येन प्रथमादिसमयाविवक्षया सर्वेषु समयेषु वर्तमानो यथासूक्ष्मनिर्ग्रन्थः पञ्चम इति विवक्षया भेद एषामिति ॥ ७२६ ॥ अथैते उपशान्तमोहाः क्षीणमोहाश्च निर्ग्रन्था एकस्मिन् समये यावन्तः प्राप्यन्ते तदाह—'पाविज्जइ' गाहा, एकस्मिन् समये प्रवेशमङ्गीकृत्य प्राप्यतेऽष्टोत्तरशतं क्षपकाणां—क्षीणमोहानां, उपशामकानां—उपशान्तमोहानां पुनश्चतुष्पञ्चाशत्, इदं च उत्कर्षतः, जघन्येन तु क्षीणमोहा उपशान्तमोहाश्च एको वा द्वौ वा त्रयो वा प्राप्यन्ते, अयमभिप्रायः—क्षीणमोहास्तावत्कदाचिद्भवन्ति कदाचिन्न भवन्ति, क्षपकश्रेणेरुत्कर्षतः षण्माससमानस्यान्तरस्य सद्भावान्निरन्तरमसम्भवात्, ततो यदा भवन्ति तदा युगपदेकसमये क्षपकश्रेण्यां जघन्यत एकादयः उत्कृष्टतोऽष्टोत्तरशतप्रमाणा एव प्रविशन्ति नाधिकाः, एतच्च सूत्रे युगपदेकसमयप्रविष्टानङ्गीकृत्योक्तं, नानासमयप्रविष्टानङ्गीकृत्य पुनरुत्कृष्टतः शतपृथक्त्वं, तथाहि—अन्तर्मुहूर्तस्वरूपे क्षपकश्रेणिकाले एकस्मिन् समये युगपदेवैकादयो यावदुत्कृष्टतोऽष्टोत्तरशतप्रमाणा जीवा मोहक्षपणाय प्रविष्टाः अन्यस्मिन्नपि समये एतावन्तोऽपरस्मिन्नपि च समये एतावन्तः प्रविष्टाः एवं नानासमयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वस्मिन्नप्यन्तर्मुहूर्तप्रमाणे क्षपकश्रेणिकाले सामान्येन पञ्चदशस्वपि कर्मभूमिषु कदाचिच्छतपृथक्त्वं क्षीणमोहानां प्राप्यते, ततः परं क्षपकश्रेणेरपि निरन्तरसमभावात् । आह—नन्वन्तर्मुहूर्तमानेऽपि क्षपकश्रेणिकालेऽसङ्ख्याताः समयाः प्राप्यन्ते, तत्र च प्रतिसमयं यद्येकैकः प्रविशति तथाप्यसङ्ख्येया भवन्ति किं पुनरष्टोत्तरशतप्रवेशे इति ?, अत्रोच्यते, स्यादेवं यदि प्रतिसमयमसङ्ख्यातेष्वपि समयेष्वेवं तत्प्रवेशः स्यात्, एतच्च

नास्ति, केषुचिदेव समयेष्वेवं तत्प्रवेशसम्भवात् तथैवातिशायिमिर्दृष्टत्वाद्गर्भजमनुष्याणामपि चासङ्ख्यातानामसम्भवाद्विशेषतस्तु चारि-
त्रिणां, न च गर्भजमनुष्यं चारित्रिणं मुक्त्वाऽन्यः क्षपकश्रेणिं प्रतिपद्यत इति । तथा उपशान्तमोहा अपि कदाचिद्भवन्ति कदाचिन्न
भवन्ति, उपशमश्रेणेरुत्कर्षतो वर्षपृथक्त्वप्रमाणस्यान्तरस्यापि सद्भावात्, तत्र च यदा भवन्त्यमी तदा जघन्यत एकादय उत्कर्षतस्तु चतुष्प-
ञ्चाशत्प्रमाणा एव जीवा एकस्मिन् समये उपशमश्रेणिं प्रतिपद्यन्ते नाधिकाः, नानासमयप्रविष्टाः पुनरुत्कृष्टतः सङ्ख्याताः, एतदुक्तं
भवति—अन्तर्मुहूर्तलक्षणे उपशमश्रेणिकाले एकस्मिन् समये युगपदेव एकादयो यावदुत्कृष्टतश्चतुष्पञ्चाशत् प्रविष्टाः अन्यस्मिन्नपि समये
एतावन्तः अपरस्मिन्नपि समये एतावन्तः प्रविष्टाः, एवं नानासमयप्रविष्टान् सर्वानप्यङ्गीकृत्य सर्वस्मिन्नप्यन्तर्मुहूर्तमाने उपशमश्रेणिकाले
सामान्येन सर्वस्मिन्नपि मनुष्यक्षेत्रे कदाचिदुत्कृष्टतः सङ्ख्याता उपशान्तमोहाः प्राप्यन्ते, ततः परमुपशमश्रेणेर्निरन्तरमभावात्, असङ्ख्येयाः
कथममी न प्राप्यन्ते? इत्याद्याक्षेपपरिहारौ पूर्ववद्वाच्याविति ॥ ७२७ ॥ अथ स्नातकमाह—'सुहझाण' गाहा, शुभं—प्रशस्तं ध्यानं—
शुक्लध्यानलक्षणं तदेव जलं—सलिलं तेन विशुद्धो—निर्मलः स्नातक इति भण्यते,
कर्ममलापेक्षया—घातिकर्ममलपटलप्रक्षालनापेक्षया
क्षालितसकलघातिकर्ममलपटलत्वात् स्नात इव स्नातः स एव स्नातकः केवलीत्यर्थः, स च द्विविधो निर्दिष्टः—सयोगी अयोगी च, तत्र मनो-
वाक्कायव्यापारवान् सयोगी सर्वथा समुच्छिन्नमनोवाक्कायव्यापारस्त्वयोगी, एतेषां च पुलाकादीनां व्याख्याप्रज्ञप्तौ 'पन्नवणवेय' इत्यादि-
ग्रन्थोक्तैः षट्त्रिंशता द्वारैर्विचारोऽस्ति ॥ ७२८ ॥ तत्र बहुतरोपयोगित्वात् शेषद्वारोपलक्षणार्थं प्रतिसेवनाद्वारमाह—'मूलुत्तरगुण'
गाहा, मूलगुणाः—प्राणातिपातनिवृत्त्यादयः उत्तरगुणाः—पिण्डविशुद्ध्यादयः तद्विषया 'प्रतिसेवा' सेवा—सम्यगाराधना तत्प्रतिपक्षस्तु प्रति-
सेवा विराधनेत्यर्थः 'सेवए'त्ति सूचकत्वात्सूत्रस्य प्रतिसेवना कुशीले पुलाके च, अयमर्थः—पुलाकप्रतिसेवना कुशीलप्रतिसेवना, मूलगु-

णानामुत्तरगुणानां चान्यतमस्य विराधना, तत्त्वार्थभाष्ये तु "प्रतिसेवना पञ्चानां मूलगुणानां रात्रिभोजनविरतिषष्ठानां पराभियोगाद् वलात्कारेणान्यतमं प्रतिसेवमानः पुलाको भवति, मैथुनमेवेत्येके, प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु काञ्चिद्विराधनां प्रतिसेवते" इत्युक्तं, तथा उत्तरगुणेषु प्रतिसेवको वकुशः, उत्तरगुणानामेव विराधको न मूलगुणानामित्यर्थः, शेषास्तु कषायकुशीलनिर्ग्रन्थस्नातकाः प्रतिसेवनारहिताः, मूलगुणानामुत्तरगुणानां च अविराधका एवेति भावः, अत्र च यत्पुलाकादीनां मूलोत्तरगुणविराधकत्वेऽपि निर्ग्रन्थत्वमुक्तं तज्जघन्यजघन्यतरोत्कृष्टोत्कृष्टतरादिभेदतः संयमस्थानानामसङ्ख्येयतया तदात्मकतया च चारित्रपरिणतेरिति भावनीयं, चारित्रपर्याया अपि चामीषां पञ्चानामपि प्रत्येकमनन्ताः, यत उक्तम्—"पुलागस्स णं भंते! केवइया चरित्तपज्जवा पन्नत्ता ?, गोयमा! अणंता चरित्तपज्जवा पन्नत्ता, एवं जाव सिणायस्स"त्ति ॥ ७२९ ॥ अथैते पुलाकादयः पञ्चापि कियन्तं कालं यावत्प्राप्यन्ते ?, तत्राह—निर्ग्रन्थस्नातकानां पुलाकसहितानां त्रयाणामपि निर्ग्रन्थभेदानां व्यवच्छेदः—अभावो 'मणपरमोहिपुलाए' इत्यादिवचनात् जम्बूस्वामिनोऽनन्तरमेते त्रयोऽपि न जाता इत्यर्थः, वकुशकुशीललक्षणाः पुनः श्रमणाः—साधवो यावत्तीर्थं तावद्भविष्यन्ति, 'वकुसकुसीलेहिं वट्टए तित्थं' इति वचनात् ९३ ॥ ७३० ॥ इदानीं 'समण'त्ति चतुर्नवतं द्वारमाह—

**निग्गंथ १ सक्क २ तावस ३ गेरुय ४ आजीव ५ पंचहा समणा। तम्मि निग्गंथा ते जे जिणसासणभवा मुणिणो ॥ ७३१ ॥ सक्का य सुगयसीसा जे जडिला ते उ तावसा गीया। जे धाउरत्तवत्था तिदंडिणो गेरुया ते उ ॥ ७३२ ॥ जे गोसालगमयमणुसरंति भन्नंति ते उ आजीवा। समणत्तणेण भुवणे पंचवि पत्ता पसिद्धिमिमे ॥ ७३३ ॥**

श्रमणा भवन्ति, 'तंमि'त्ति प्राकृतत्वादेकवचनं, ततस्तेषु—श्रम-
निर्ग्रन्थाः शाक्यास्तापसा गैरुका आजीवाश्च पञ्चधा—पञ्चभेदाः श्रमणा भवन्ति, 'तंमि'त्ति प्राकृतत्वादेकवचनं, ततस्तेषु—श्रम-
णेषु मध्ये निर्ग्रन्थास्ते भण्यन्ते ये जिनशासनभवाः—प्रतिपन्नपारमेश्वरप्रवचनाः मुनयः—साधवः, तथा शाक्याः सुगतशिष्या—बौद्धा
इत्यर्थः, ये च जटिला—जटाधारिणो वनवासिपाखण्डिनस्ते तापसा गीताः—कथिताः, ये धातुरक्तवस्त्रास्त्रिदण्डिनस्ते तु गैरुकाः परिव्रा-
जका इत्यर्थः, तथा ये गोशालकमतमनुसरन्ति भण्यन्ते ते तु आजीवका इति, एते पञ्चापि श्रमणत्वेन भुवने प्रसिद्धिं प्राप्ता इति ९४॥

॥ ७३१ ॥ ७३२ ॥ ७३३ ॥ इदानीं 'गासेसण'त्ति पञ्चनवतं द्वारमाह—

**संजोयणा १ पमाणे २ इंगाले ३ धूम ४ कारणे ५ चेव । उवगरणभत्तपाणे सबाहिरऽब्भंतरा प-**
**ढमा ॥ ७३४ ॥ कुक्कुडिअंडयमेत्ता कवला बत्तीस भोयणपमाणे । राएणाऽऽसायंतो संगारं करइ**
**सचरित्तं ॥ ७३५ ॥ भुंजंतो अमणुन्नं दोसेण सधूमगं कुणइ चरणं । वेयणआयंकप्पमुहकारणा**
**छच्च पत्तेयं ॥ ७३६ ॥ वेयण १ वेयावच्चे २ इयरिट्ठाए य ३ संजमट्ठाए ४ । तह पाणवत्तियाए ५**
**छट्ठं पुण धम्मचिंताए ६ ॥ ७३७ ॥ आयंके १ उवसग्गे २ तितिक्खया बंभचेरगुत्तीसु ३ । पाणि-**
**दया ४ तवहेऊ ५ सरीरवोच्छेयणट्ठाए ६ ॥ ७३८ ॥**

'संजोयणे'ति गाथापूर्वार्धं, संयोजना प्रमाणं अङ्गारो धूमः कारणं चेति पञ्च ग्रासैषणादोषाः, ग्रासो—भोजनं तद्विषया एषणा—
शुद्धाशुद्धपर्यालोचनं ग्रासैषणा तस्या दोषा ग्रासैषणादोषाः, तत्र प्रथमं संयोजनामाह—'उवगरणे'त्यादि उत्तरार्धं, 'पढम'त्ति दोषप-
ञ्चकापेक्षया प्रथमा—आद्या संयोजनेत्यर्थः, संयोजनं संयोजना—उत्कर्षतोत्पादनार्थं द्रव्यस्य द्रव्यान्तरेण मीलनं, सा द्विधा भवति—उप-

करणविपया भक्तपानविपया च, पुनरेकैका द्विधा—सबाह्याभ्यन्तरा—बाह्याभ्यन्तरभेदयुक्ता, बाह्या अभ्यन्तरा चेत्यर्थः, तत्र उपकरणविपया बाह्या संयोजना यथा कश्चित्साधुः कुत्रापि गृहे भव्यं चोलपट्टादिकं प्राप्य पुनरन्यत्र विभूपार्थं तदुचितं पटीप्रभृतिकं मार्गयित्वा वसतेर्बहिरेव प्रावृणोतीति, अभ्यन्तरा वसतौ निर्मलं चोलपट्टादिकं परिधाय विभूपानिमित्तं तदनुरूपां निर्मलामेव नर्मादिपटीं परिदधातीति, तथा भिक्षार्थं हिण्डमानः सन् क्षीरादिकमनुकूलद्रव्यैः खण्डादिभिः सह रसगृद्ध्या रसविशेपोत्पादनाय बहिरेव संयोजयतीत्येपा बाह्या भक्तपानविपया संयोजना, अभ्यन्तरा पुनर्यद्वसतावागत्य भोजनवेलायां संयोजयतीति, सा च त्रिधा—पात्रकविपया कवलविपया मुखविपया च, तत्र भोजनसमये यत्पायसादि येन खण्डादिना रोचते तद्रसगृद्ध्या तेनैव सहैकस्मिन्नेव पात्रे संयोज्य स्थापयतीति प्रथमा, यदा तु हस्तगतमेव कवलतया उत्पादितं सुकुमारिकादिकं खण्डादिना सह संयोजयति तदा द्वितीया, यदा पुनर्मण्डकादिकं मुखे प्रक्षिप्य पश्चाद्गुडादिकं प्रक्षिपति तदा तृतीयेति, अपवादश्चात्र—एकैकं साधुसङ्घाटकं प्रति प्रचुरघृतादिप्राप्तौ सत्यां भोजनानन्तरं यदि कथमपि कियदप्युद्धरितं भवति तदा तदुद्धरितघृतादिनिर्गमनार्थं खण्डादिभिरपि तस्य संयोजनं न दोपाय, उद्धरितं हि घृतादि न खण्डादिकमन्तरेण मण्डकादिभिरपि सह भोक्तुं शक्यते प्रायस्तृप्तत्वात्, न च परिष्ठापनं युक्तं घृतादिपरिष्ठापने स्निग्धत्वात् पश्चादपि पिपीलिकादिप्राणिप्रणाशसम्भवात्, तथा ग्लानभव्यीकरणार्थं यद्वा भक्तारोचकिनः प्रधानाहारलालितस्य सुखोचितस्य राजपुत्रादेर्वा साधूचितेन संयोगरहिताहारेणाद्यापि सम्यगभावितस्य शैक्षकस्य वा निमित्तं रसगृद्ध्यापि संयोजना कल्पत एवेति ॥ ७३४ ॥ इदानीं प्रमाणमाह—

'कुक्कुडि' इत्यादि गाथापूर्वार्धं, कुर्कुट्यण्डकमात्राः कवला द्वात्रिंशद्भोजनप्रमाणे इति, तत्र कुर्कुटी द्विधा—द्रव्यकुर्कुटी भावकुर्कुटी च, तत्र साधोः शरीरमेव कुर्कुटी तन्मुखमण्डकं, तत्राक्षिकपोलौष्टभ्रुवां विकृतिमनापाद्य यः कवलो मुखे प्रविशति एतत्प्रमाणं कवलस्य, अथवा

कुर्कुटी—पक्षिणी तस्या अण्डकं प्रमाणं कवलस्य, तथा यावन्मात्रेणाहारेण भुक्तेन न न्यूनं नाप्यत्याध्मातमुदरं भवति धृतिश्च विशिष्टा सम्पद्यते ज्ञानदर्शनचारित्राणां च वृद्धिरुपजायते तावत्प्रमाण आहारो भावकुर्कुटी, तस्य द्वात्रिंशत्तिमो भागोऽण्डकं, तत्प्रमाणं कवलस्य, ततो द्वात्रिंशत्कवलाः पुरुषस्याहारप्रमाणं, स्त्रियास्तु अष्टाविंशतिः नपुंसकस्य पुनश्चतुर्विंशतिः, उक्तं च तण्डुलवैचारिके—"बत्तीसं कवला पुरिसस्स आहारो अट्ठावीसं इत्थियाए चउव्वीसं पंडयस्स"त्ति, अधिकाहारस्तु अजीर्यमाणः सन् व्याधये वमनाय मृत्यवे चेति, यदभ्यधायि—"अइवहुयं अइवहुसो अइप्पमाणेण भोयणं भुत्तं। हादेज्ज व वामेज्ज व मारेज्ज व तं अजीरंतं ॥ १ ॥" इति [ अतिवहुकमतिवहुशः अतिप्रमाणेन भोजनं भुक्तं। हादयेद्वा वमयेद्वा मारयेद्वा तदजीर्यमाणं ॥ १ ॥ ] इदानीमङ्गारदोषमाह—'राएणे'त्यादि उत्तरार्धं, रागेण—अन्नस्य तद्दातुर्वा प्रशंसारूपेणास्वादयन्—अभ्यवहरन् प्रासुकमप्याहारं करोति स्वचारित्रं साङ्गारं, चरणेन्धनस्याङ्गारभूतत्वात्, अयमत्र भावार्थः—इह द्विधा अङ्गाराः—द्रव्यतो भावतश्च, तत्र द्रव्यतः कृशानुदग्धाः खदिरादिवनस्पतिविशेषाः, भावतो रागाग्निना निर्दग्धं चरणेन्धनं, ततो यथा दग्धमिन्धनं धूमे गते सति अङ्गार इत्युच्यते एवमिहापि चरणेन्धनं रागाग्निना निर्दग्धं सदङ्गारक इत्युच्यते, ततश्च भोजनगतविशिष्टगन्धरसास्वादवशेन सञ्जाततद्विषयमूर्च्छस्य सतोऽहो सुमृष्टमहो सुसंभृतमहो स्निग्धं सुपक्कं सुरसं चेत्येवं प्रशंसातः सहाङ्गारेण यद्वर्तते तत्साङ्गारमिति ॥ ७३५ ॥ इदानीं धूमदोषमाह—'भुंजंतो' इत्यादि गाथापूर्वार्धं, द्वेषेण—अन्नस्य तद्दायकस्य वा निन्दात्मकेन अमनोज्ञम्—अमधुरमाहारं भुञ्जानश्चरणं—चारित्रं सधूमकं करोति, निन्दात्मककलुषभावस्वरूपधूमसम्मिश्रत्वात्, अत्राप्ययं भावार्थः—इह द्विविधो धूमस्तद्यथा—द्रव्यतो भावतश्च, तत्र द्रव्यतोऽर्धदग्धानां काष्ठानां सम्बन्धी भावतो द्वेषाग्निना दह्यमानस्य चरणेन्धनस्य सम्बन्धी कलुषभावो निन्दात्मकः, ततो यथाऽङ्गारत्वमप्राप्तं ज्वलदिन्धनं सधूममुच्यते एवं द्वेषाग्निना दह्यमानं चरणेन्धनमपि

सधूमं, ततश्च भोजनगतविरूपरसगन्धास्वादतो जाततद्विषयव्यलीकचित्तस्य सतोऽहो विरूपं कथितमपक्वमसंस्कृतमलवणं चेति निन्दाव-
शाद्धूमेन सह यद्वर्तते तत्सधूमं चारित्रमिति ॥ अधुना कारणमाह—'वेयणे'त्याद्युत्तरार्धं, वेदनातङ्कप्रमुखानि षट् कारणानि प्रत्येकं भोजने
अभोजने च ज्ञेयानि, पुंस्त्वं च प्राकृतत्वात्, अयमर्थः—वेदनादिभिः षड्भिः कारणैर्भोजनं कुर्वाणः आतङ्कप्रमुखैश्च षड्भिः कारणैर्भोजनमकु-
र्वाणस्तीर्थकृदाज्ञां नातिक्रामति पुष्टकारणत्वात्, अन्यथा त्वतिक्रामत्येव रागादिभावादिति ॥ ७३६ ॥ तत्र वेदनादीनि षट् भोजनका-
रणानि तावदाह—'वेयण' गाहा, इह पदैकदेशे पदसमुदायोपचारात् सुव्यत्ययाच्च 'वेयण'त्ति क्षुद्वेदनोपशमाय भुञ्जीतेति सर्वत्र क्रिया-
सम्बन्धः, बुभुक्षा हि न शक्यते सोढुं बुभुक्षायाः सर्ववेदनातिशायित्वात्, उक्तं च—'छुहासमा वेयणा नत्थि'त्ति [ क्षुधासमा वेदना नास्ति ]
तथा वैयावृत्त्यकरणाय, बुभुक्षितो हि गुर्वादीनां न शक्नोति वैयावृत्त्यं कर्तुं, तथा ईर्येति—ईर्यासमितिः सैव निर्जरार्थिभिरर्थ्यमानतया-
ऽर्थस्तस्मै, बुभुक्षापीडितस्य हि चक्षुर्भ्यामपश्यतः कथमिव ईर्यासमितिपरिपालनं स्यात्?, तथा संयमार्थाय, क्षुधार्त्तो हि न प्रेक्षोत्प्रेक्षा-
प्रमार्जनादिलक्षणं संयमं विधातुमलं अतः संयमाभिवृद्ध्यर्थं, तथा प्राणा—उच्छ्वासादयो बलं वा प्राणास्तेषां तस्य वा वृत्तिः—पालनं तदर्थं
प्राणसंधारणार्थमित्यर्थः यद्वा प्राणप्रत्ययं—जीवितनिमित्तं, अविधिना ह्यात्मनोऽपि प्राणोपक्रमे हिंसा स्यात्, अत एवोक्तम्—'भाविय-
जिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणंमि परंमि य तो वज्जे पीडमुभओवि ॥ १ ॥' [ भावितजिनवचनानां ममत्व-
रहितानां नास्त्येव विशेषः । आत्मनि परस्मिन्नपि च ततो वर्जयेत् पीडामुभयोरपि ॥ १ ॥ ] षष्ठं पुनरिदं कारणं—यदुत 'धर्मचिन्तायै'
धर्मचिन्ता—धर्मध्यानचिन्ता श्रुतधर्मचिन्ता वा ग्रन्थपरावर्तनचिन्तनवाचनादिरूपा, इयं ह्युभयरूपाऽपि बुभुक्षाऽऽकुलितचेतसो न स्यादार्त्त-
ध्यानसम्भवादिति । इह च यद्यपि वेदनोपशमादीनां शाब्द्या वृत्त्या तदुपलक्षितभोजनफलत्वेन प्रतीतिः तथापि तैर्विना तन्निषेधसूचना-

दार्ढ्या वृत्त्या कारणत्वमेवैषामुपदर्शितं भवति, अत एव षष्ठमित्यत्र कारणमेव सम्बन्धितम् ॥ ७३७ ॥ अथातङ्कादीनि षडेवाभोजनकारणान्याह—'आयंके' गाहा, आतङ्के—ज्वरादौ रोगे समुत्पन्ने सति न भुञ्जीत, उपवासान् कुर्वतो हि प्रायेण ज्वरादयस्त्रुट्यन्ति, उक्तं च—"वलावरोधि निर्दिष्टं, ज्वरादौ लङ्घनं हितम्। ऋतेऽनिलश्रमक्रोधशोककामक्षतज्वरान् ॥ १ ॥" तथोपसर्गे देवमनुष्यतिर्यक्कृते सञ्जाते सति, तितिक्षया हेतुभूतया उपसर्गसहनार्थमित्यर्थः, उपसर्गश्च अनुकूलप्रतिकूलभेदाद् द्विविधः, तत्र मातापितृकलत्रादिस्वजनकृतोऽनुकूलः, ते हि स्नेहादिना प्रव्रज्यामोचनार्थं कदाचिदुपतिष्ठन्ते, तत्रोपसर्गोऽयमिति मत्वा नाश्नीयात्, यतस्तमुपवासान् कुर्वन्तं वीक्ष्य तन्निश्चयावगमनान्मरणादिभयाद्वा मुञ्चन्तीति, प्रतिकूलोपसर्गश्च कुपितराजादिकृतः, तत्रापि न भुञ्जीत, विहितोपवासं हि साधुं समीक्ष्य राजादयोऽपि प्रायेण सञ्जातदया मुञ्चन्तीति, तथा ब्रह्मचर्यगुप्तिषु—ब्रह्मचर्यगुप्तिनिमित्तं मैथुनव्रतसंरक्षणार्थमित्यर्थः, उपवासान् हि विदधतः कामः कामं दूरमपक्रामति, यदुक्तम्—'विषया विनिवर्तन्ते, निराहारस्य देहिनः।' इति, तथा 'पाणिदयातवहेउ'त्ति प्राणिदयाहेतोः—जीवरक्षणार्थं, जलवृष्टौ महिकापाते सचित्तरजःपातादौ प्रभूतसूक्ष्ममण्डूकिकामसिकाकोद्रविकादिसत्त्वसंसक्तायां वा भूमौ प्राणिदयानिमित्तमटनं परिहरन् न भुञ्जीत, तथा तपोहेतोः—तपःकरणनिमित्तं, एकद्वित्र्याद्युपवासकरणेन षण्मासान्तं यावत्तपः कुर्वतो न भोजनसम्भवः, तथा शरीरस्य व्यवच्छेदः—परिहारस्तदर्थं च, इह हि शिष्यनिष्पादनादिसकलकर्तव्यताऽनन्तरं पाश्चात्ये वयसि संलेखनाकरणेन यावज्जीवानशनप्रत्याख्यानकरणयोग्यमात्मानं कृत्वा भोजनं परिहरेत् नान्यथा, शिष्यनिष्पादनाद्यभावे प्रथमे द्वितीये वा वयसि शरीरपरित्यागार्थमनशनप्रत्याख्यानकरणे जिनाज्ञाभङ्गप्रसङ्गात् संलेखनामन्तरेणार्त्तध्यानादिसम्भवाच्च, यदुक्तम्—"देहम्मि असंलिहिए सहसा धाऊहिं खिज्जमाणाहिं। जायइ अट्टज्झाणं सरीरिणो चरिमसमयम्मि ॥ १ ॥" [देहेऽसंलिखिते सहसा धातुषु क्षीयमाणेषु।

जायते आर्त्तध्यानं शरीरिणश्चरमसमये ॥ १ ॥] इत्यादि, कारणत्वभावना चामीषां प्राग्वत् १५ ॥ ७३८ ॥ इदानीं 'पिंडे पाणे य एसणासत्तगं'ति पण्णवतं द्वारमाह—

**संसट्ठ १ मसंसट्ठा २ उद्धड ३ तह अप्पलेविया ४ चेव । उग्गहिया ५ पग्गहिया ६ उज्झिय-धम्मा ७ य सत्तमिया ॥ ७३९ ॥ तंमि य संसट्ठा हत्थमत्तएहिं इमा पढम भिक्खा १ । तव्विव-रीया बीया भिक्खा गिण्हंतयस्स भवे २ ॥ ७४० ॥ नियजोएणं भोयणजायं उद्धरियमुद्धडा भिक्खा ३ । सा अप्पलेविया जा निल्लेवा वल्लचणगाई ४ ॥ ७४१ ॥ भोयणकाले निहिया सराव-पमुहेसु होइ उग्गहिया ५ । पग्गहिया जं दाउं भुत्तुं व करेण असणाई ६ ॥ ७४२ ॥ भोयण-जायं जं छड्डणारिहं नेहयंति दुपयाई । अद्धच्चत्तं वा सा उज्झियधम्मा भवे भिक्खा ॥ ७४३ ॥ पाणेसणावि एवं नवरि चउत्थीएँ होइ नाणत्तं । सोवीरायामाई जमलेवाडत्ति समयुत्ती ॥७४४॥**

'संसट्ठे'त्यादिगाथाषट्कं, पिण्डः—सिद्धान्तभाषया भक्तमुच्यते तस्य एषणा—ग्रहणप्रकारः पिण्डैषणा, सा च सप्तविधा, तद्यथा—असंसृष्टा १ संसृष्टा २ उद्धृता ३ तथा अल्पलेपिका ४ चैव अवगृहीता ५ प्रगृहीता ६ उज्झितधर्मा च सप्तमिका, अत्र च उत्तरोत्तरस्या अतिविशुद्धत्वात् इत्थं क्रमनिर्देशो द्रष्टव्यः, यत्पुनः सूत्रे संसृष्टायाः पूर्वमुपादानं तद्गाथाभङ्गभयादिति, इह च द्वये साधवो—गच्छान्तर्गता गच्छनिर्गताश्च, तत्र गच्छान्तर्गतानामेताः सप्तापि ग्रहीतुमनुज्ञाताः, गच्छनिर्गतानां पुनराद्ययोर्द्वयोरग्रहः पञ्चस्वभिग्रहः ॥ ७३९ ॥ अथैताः स्वयमेव व्याचष्टे—'तंमी'त्यादिगाथाचतुष्टयम्, 'तंमि'त्ति प्राकृतत्वात्तासु भिक्षासु मध्ये संसृष्टा हस्तमात्रकाभ्यां भवति, कोऽर्थः ?—संसृष्टेन—तक्रतीमनादिना

खरण्टितेन हस्तेन संसृष्टेनैव च मात्रकेण—करोटिकादिना गृह्णतः साधोः संसृष्टा नाम भिक्षा भवति, इयं च द्वितीयाऽपि मूलगाथोक्तक्र-
मापेक्षया प्रथमा, अत्र च संसृष्टासंसृष्टसावशेषनिरवशेषद्रव्यैरष्टौ भङ्गाः, तेषु चाष्टमो भङ्गः संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यमित्येष
गच्छनिर्गतानामपि कल्पते, शेषास्तु भङ्गा गच्छान्तर्गतानां सूत्रार्थहान्यादिकं कारणमाश्रित्य कल्पन्त इति, तथा तद्विपरीता—संसृष्टा-
ख्यभिक्षाविपरीता द्वितीया असंसृष्टा नाम भिक्षा भवति, असंसृष्टेन हस्तेन असंसृष्टेन च मात्रकेण भिक्षां गृह्णतः साधोरसंसृष्टेत्यर्थः,
अत्र चासंसृष्टो हस्तोऽसंसृष्टं च मात्रं द्रव्यं पुनः सावशेषं वा स्यान्निरवशेषं वा, तत्र निरवशेषे पश्चात्कर्मदोषः तथापि गच्छस्य वाला-
द्याकुलत्वात्तन्निषेधो नास्ति अत एव सूत्रे तच्चिन्ता न कृता ॥ तथा निजयोगेन—आत्मव्यापारेणैव भोजनजातं मूलस्थाल्यादेः सकाशाद-
न्यत्र स्थाल्यादावुद्धृतं, तच्च साधोर्गृह्णत उद्धृता तृतीया भिक्षा भवति, तथा सा अल्पलेपिका नाम चतुर्थी भिक्षा या निर्लेपा वल्लचण-
कादिः, आदिशब्दात्पृथुकादिपरिग्रहः, अत्र चाल्पशब्दोऽभाववाचकः, ततोऽल्पलेपा निर्लेपा नीरसेत्यर्थः, यद्वाऽल्पः—स्तोको लेपः पश्चा-
त्कर्मादिजनितः कर्मसंवन्धो वा यस्यां सा अल्पलेपा, उक्तं च आचाराङ्गे—'अस्सिं खलु पडिग्गहियंसि अप्पे पच्छाकम्मे अप्पे पज्जव-
जाए'त्ति अत्र च—पृथुकादिके गृहीतेऽप्यल्पं पश्चात्कर्मादि तथा अल्पं पर्यायजातं, अल्पं तुषादि त्यजनीयमित्यर्थः, तथा भोजनसमये
निहितं—निक्षिप्तं शरावप्रमुखेषु—शरावकांस्यपात्रादिषु भाजनेषु भोक्तुकामस्य ढौकितं यद्भोजनजातं कूरादिकं तद् गृह्णतो यतेरवगृहीता
पञ्चमी भिक्षा भवति, अत्र च दात्रा कदाचित्पूर्वमेव उदकेन हस्तो मात्रकं वा धौतं स्यात्ततो यदि परिणतः पाण्यादिपूदकलेपस्तदा
कल्पते अन्यथा तु निषेधः, तथा भोजनवेलायां भोक्तुकामाय दातुमभ्युद्यतेन परिवेषकेण पिठरकादेरुद्धृत्य चट्टुकादिना उत्क्षिप्तं परेण च
न गृहीतं प्रव्रजिताय दापितं यद्वा भोक्त्रा स्वयं भोक्तुं करेण—निजहस्तेन यद् गृहीतमशनादि तद् गृह्णतो यतेः प्रगृहीता नाम षष्ठी भिक्षा

भवति, तथा यद्भोजनजातममनोज्ञत्वादिना कारणेन परित्यागार्हं अन्ये च द्विपदादयो ब्राह्मणश्रमणातिथिकार्पटिकादयो न ईहन्ते—नावकाङ्क्षन्ति तद् अर्धत्यक्तं वा गृह्णतः साधोरुज्झितधर्मा नाम सप्तमी भिक्षा भवेदिति, आसु च सप्तस्वपि पिण्डैषणासु संसृष्टाद्यष्टभङ्गी भणनीया, नवरं चतुर्थ्यां नानात्वं, तस्या अलेपत्वात्संसृष्टाद्यभाव इति ॥ ७४० ॥ ७४१ ॥ ७४२ ॥ ७४३ ॥ अथ पानैषणासप्तकमाह—'पाणेसणा' गाहा, पानैषणाऽप्येवमेव संसृष्टादिका सप्तविधा ज्ञेया, नवरं—केवलं चतुर्थ्यामल्पलेपायां भवति नानात्वं—भेदः, यद्—यस्मात् सौवीरायामादि—काञ्जिकावस्रावणादि आदिशब्दादुष्णोदकतण्डुलोदकादि चालेपकृदिति 'समयोक्तिः' सिद्धान्तभणितिः, शेषं तु इक्षुरसद्राक्षापानकाम्लिकापानकादि लेपकृत्, तद्धि पीयमानं यतेः कर्मलेपं करोति ९६ ॥ ७४४ ॥ इदानीं 'भिक्खायरियावीहीणमट्ठगं'ति सप्तनवतं द्वारमाह—

उज्जुं १ गंतु पच्चागइया २ गोमुत्तिया ३ पयंगविही ४। पेडा य ५ अद्धपेडा ६ अब्भिंतर ७ बाहिसंबुक्का ८ ॥ ७४५ ॥ ठाणा उज्जुगईए भिक्खंतो जाइ वलइ अनडंतो। पढमाए १ बीयाए पविसिय निस्सरइ भिक्खंतो २ ॥ ७४६ ॥ वामाओ दाहिणगिहे भिक्खिज्जइ दाहिणाओ वामंमि। जीए सा गोमुत्ती ३ अड्डवियड्डा पयंगविही ४ ॥ ७४७ ॥ चउदिसि सेणीभमणे मज्झे मुक्कंमि भन्नए पेडा ५। दिसिदुगसंबद्धस्सेणिभिक्खणे अद्धपेडत्ति ६ ॥ ७४८ ॥ अब्भिंतरसंबुक्का जीए भमिरो बहिं विणिस्सरइ ७। बहिसंबुक्का भन्नइ एयं विवरीयभिक्खाए ८ ॥ ७४९ ॥

'उज्जु'मित्यादिगाथापंचकं, भिक्षाचर्याविषया वीथयो—मार्गविशेषा भिक्षाचर्यावीथयः, ताश्च अष्टौ यथा—ऋज्वी १ गत्वा प्रत्यागतिः २

गोमूत्रिका ३ पतङ्गवीथिः ४ पेटा ५ अर्धपेटा ६ 'अब्भिंतरबाहिसंबुक्क'त्ति शम्बूकशब्दस्य प्रत्येकमभिसम्बन्धादभ्यन्तरशम्बूका ७ बहिः शम्बूका ८ च ॥ ७४५ ॥ तत्रैताः क्रमेण व्याचष्टे—'ठाणे'त्यादि, प्रथमायां वीथ्यां कश्चिद्यतिः स्वस्थानात्—निजवसतेः ऋजुगत्या—प्राञ्जलपथेन समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षां भ्रमन् याति यावत्पङ्क्तेश्चरमं गृहं ततोऽनटन्—भिक्षामगृह्णन् ऋजुगत्या तथैव वलति—निवर्तते, द्वितीयायां—गत्वाप्रत्यागतिकायां भ्रमन्—भिक्षां गृह्णन् समस्थितगृहपङ्क्तौ प्रविश्य द्वितीयपङ्क्तौ भिक्षमाण एव निःसरति—प्रत्यागच्छति, कोऽर्थः ?—उपाश्रयान्निर्गतः सन्नेकस्यां गृहपङ्क्तौ भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयायां गृहपङ्क्तौ यस्यां भिक्षते सा गत्वाप्रत्यागतिका, गत्वा प्रत्यागतिर्यस्यामिति च विग्रहः, अन्ये तु ऋज्वीविपर्ययेण गत्वाप्रत्यागतिकां व्याख्यानयन्तीति, तथा वामाद्—वामगृहाद्दक्षिणगृहे दक्षिणगृहाच्च वामगृहे यस्यां भिक्षते सा गोमूत्रिका, गोः—बलीवर्दस्तस्य मूत्रणं गोमूत्रिका तद्वद्या सा तथा, इयं हि परस्पराभिमुखगृहपङ्क्त्योरेकस्यां गत्वा पुनरितरस्यां पुनस्तस्यां पुनरितरस्यां पुनस्तस्यामेवेत्येवं क्रमेण भावनीया, तथा अद्दवितद्दा—अनियता भिक्षा 'पतङ्गवीथिः' पतङ्गः—शलभस्तस्य वीथिका—मार्गस्तद्वद्या सा तथा, पतङ्गगतिर्हि अनियतक्रमा भवति एवं या अनाश्रितक्रमा सा पतङ्गवीथिकेति, तथा पेटा—वंशदलमयं वस्त्रादिस्थानं जनप्रतीतं, सा च चतुरस्रा भवति, ततश्च साधुरभिग्रहविशेषाद्यस्यां चर्यायां ग्रामादिक्षेत्रं पेटावच्चतुरस्रं विभज्य मध्यवर्तीनि च गृहाणि मुक्त्वा चतसृष्वपि दिक्षु समश्रेण्या भिक्षां भ्रमति सा पेटेति भण्यते, तथा दिग्द्वयसम्बद्धयोर्गृहश्रेण्योर्भिक्षणेऽर्धपेटेति, पेटार्धसमानसंस्थानगृहश्रेणिभिक्षणेऽर्धपेटेति भावः, तथा शम्बूकः—शङ्खस्तद्वत् शङ्खभ्रमिवदित्यर्थः या वीथिः सा शम्बूका, इयं च द्वेधा—अभ्यन्तरशम्बूका वहिःशम्बूका च, तत्र यस्यां क्षेत्रमध्यभागात् शङ्खवृत्तत्वगत्या भिक्षां भ्रमन् वहिर्विनिःसरति—क्षेत्रवहिर्भागमागच्छति सा अभ्यन्तरशम्बूका, तथा वहिःशम्बूका भण्यते एतस्या—अभ्यन्तरशम्बूकाया विपरीतभिक्षया—

विपरीतभिक्षणेन, यस्यां वहिर्भागात्तथैव भिक्षामटन् मध्यभागमायाति सा वहिःशम्बूकेति भावः, उक्तं च—'अब्भितरसंबुक्का वाहिरसंबुक्का य, तत्थ अब्भितरसंबुक्काए संखनाभिखेत्तोवमाए आगिइए अंतो आढवइ वाहिरओ संनियट्टइ, इयरीए विवज्जओ"त्ति अन्ये तु अभ्यन्तरशम्बूकावहिःशम्बूकयोः परस्परं लक्षणविपर्ययमाहुः, पञ्चाशकवृत्तौ तु "शम्बूकावृत्ता—शङ्खवद्वृत्तत्तागमनं, सा च द्विविधा—प्रदक्षिणतोऽप्रदक्षिणतश्चे"त्युक्तं, इह च गत्वाप्रत्यागतिकायां ऋज्व्याः प्रक्षेपात् शम्बूकाया एकत्वविवक्षणाच्च षडेव वीथयो ग्रन्थान्तरे प्रतिपादिता इति ९७ ॥ ७४९ ॥ [ इति प्रथमखण्डमेकगाथासहितं ९ सहस्ररूपं ] इदानीं 'दस पायच्छित्ताइं'ति अष्टनवतं द्वारमाह—

आलोयण १ पडिक्कमणे २ मीस ३ विवेगे ४ तहा विउस्सग्गे ५ । तव ६ च्छेय ७ मूल ८ अणवट्ठिया य ९ पारंचिए चेव १० ॥ ७५० ॥ आलोइज्जइ गुरुणो पुरओ कज्जेण हत्थसयगमणे १ । समिइपमुहाण मिच्छाकरणे कीरइ पडिक्कमणं २ ॥ ७५१ ॥ सद्दाइएसु रागाइविरयणं साहिउं गुरूण पुरो । दिज्जइ मिच्छादुक्कडमेयं मीसं तु पच्छित्तं ३ ॥ ७५२ ॥ कज्जो अणेसणिज्जे गहिए असणाइए परिच्चाओ ४ । कीरइ काउस्सग्गो दिट्ठे दुस्सविणपमुहंमि ५ ॥ ७५३ ॥ निव्विगयाई दिज्जइ पुढवाइविघट्टणे तवविसेसो ६ । तवदुद्दमस्स मुणिणो किज्जइ पज्जायवुच्छेओ ७ ॥ ७५४ ॥ पाणाइवायपमुहे पुणव्वयारोवणं विहेयव्वं ८ । ठाविज्जइ नवि एसुं कराइघायप्पदुट्ठमणो ९॥ ७५५ ॥ पारंचियमावज्जइ सलिंगनिवभारियाइसेवाहिं । अव्वत्तलिंगधरणे बारसवरिसाइं सूरीणं १० ॥ ७५६ ॥ नवरं दसमावत्तीएँ नवमज्झावयाण पच्छित्तं । छम्मासे जाव तयं जहन्नमुक्कोसओ

**वरिसं ॥ ७५७ ॥ दस ता अणुसज्जंती जा चउद्दसपुवि पढमसंघयणी । तेण परं मूलंतं दुप्पसहो जाव चारित्ती ॥ ७५८ ॥**

'आलोये'त्यादिगाथानवकं, आङ्—मर्यादायां सा च मर्यादा इयं—'जह वालो जंपंतो कज्जमकज्जं च उज्जुअं भणइ । तं तह आलोएज्जा मायामयविप्पमुक्को य ॥१॥' [यथा वालो जल्पन् कार्यमकार्यं च ऋजुकं भणति । तथा तदालोचयेत् मायामदविप्रमुक्तश्च ॥१॥] अनया मर्यादया 'लोचृ दर्शने' चुरादित्वात् णिच् लोचनं लोचना—प्रकटीकरणं आलोचना, गुरोः पुरतो वचसा प्रकाशनमिति भावः, यत्प्रायश्चित्तमालोचनामात्रेण शुद्ध्यति तदालोचनार्हतया कारणे कार्योपचारादालोचना १, तथा प्रतिक्रमणं—दोषात्प्रतिनिवर्तनं अपुनःकरणतया मिथ्यादुष्कृतप्रदानमित्यर्थः तदर्हं प्रायश्चित्तमपि प्रतिक्रमणं, किमुक्तं भवति ?—यत् प्रायश्चित्तं मिथ्यादुष्कृतमात्रेणैव शुद्धिमासादयति न च गुरुसमक्षमालोच्यते, यथा सहसाऽनुपयोगतः श्लेष्मादिप्रक्षेपादुपजातं प्रायश्चित्तं, तथाहि—सहसाऽनुपयुक्तेन यदि श्लेष्मादि प्रक्षिप्तं भवति न च हिंसादिकं दोषमापन्नस्तर्हि गुरुसमक्षमालोचनामन्तरेणापि मिथ्यादुष्कृतप्रदानमात्रेण स शुद्ध्यति तत्प्रतिक्रमणार्हत्वात्प्रतिक्रमणं २, यस्मिन् पुनः प्रतिसेविते प्रायश्चित्ते यदि गुरुसमक्षमालोचयति आलोच्य गुरुसन्दिष्टः प्रतिक्रामति पश्चाच्च मिथ्यादुष्कृतमिति ब्रूते तदा शुद्ध्यति तदालोचनाप्रतिक्रमणलक्षणोभयार्हत्वान्मिश्रं ३, तथा विवेकः—परित्यागः, यत्प्रायश्चित्तं विवेक एव कृते शुद्धिमासादयति नान्यथा, यथा आधाकर्मणि गृहीते, तद्विवेकार्हत्वाद्विवेकः ४, तथा व्युत्सर्गः—कायचेष्टानिरोधः, यद् व्युत्सर्गेण—कायचेष्टानिरोधोपयोगमात्रेण शुद्ध्यति प्रायश्चित्तं यथा दुःस्वप्नजनितं तत् व्युत्सर्गार्हत्वाद् व्युत्सर्गः ५, 'तवे'त्ति यस्मिन् प्रतिसेविते निर्विकृतिकादिषण्मासान्तं तपो दीयते तत्तपोऽर्हत्वात्तपः ६, यस्मिन् पुनरापतिते प्रायश्चित्ते सन्दूषितपूर्वपर्यायदेशावच्छेदः शेषपर्यायरक्षानिमित्तं दुष्टव्याधिसंदूषितशरीरैकदेशच्छे-

दनमिव शेषशरीरावयवपरिपालनाय क्रियते तच्छेदार्हत्वाच्छेदः ७, 'मूल'त्ति यस्मिन् समापतिते प्रायश्चित्ते निरवशेषपर्यायोच्छेदमाधाय भूयो महाव्रतारोपणं तन्मूलार्हत्वान्मूलं ८, येन पुनः प्रतिसेवितेन उत्थापनाया अप्ययोग्यः सन् कञ्चित्कालं न व्रतेषु स्थाप्यते यावन्नाचापि प्रतिविशिष्टं तपश्चीर्णं भवति पश्चाच्च चीर्णतपास्तद्दोषोपरतौ व्रतेषु स्थाप्यते तदनवस्थार्हत्वादनवस्थितप्रायश्चित्तं, यद्वा यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिङ्गे वा स्थाप्यते इत्यनवस्थाप्यः तस्य भावोऽनवस्थाप्यता ९, 'पारंचिए चेव'त्ति 'अंचू गतौ' यस्मिन् प्रतिसेविते लिङ्गक्षेत्रकालतपसां पारमञ्चति तत्पाराञ्चितं, पाराञ्चितमर्हति 'तदर्हती'ति (पा०५-१-६३) सूत्रेण डः पाराञ्चितं, यद्वा पारं-अन्तं प्रायश्चित्तानां तत उत्कृष्टतरप्रायश्चित्ताभावादपराधानां वा पारमञ्चति-गच्छतीत्येवंशीलं पाराञ्चि तदेव पाराञ्चिकमिति १० ॥ ७५० ॥ अथैतानि स्वयमेव व्याचष्टे—'आलोज्जइ' इत्यादिगाथाषट्कम्, कार्येण-अवश्यकरणीयेन भिक्षाग्रहणादिना हस्तशतात्परतः-ऊर्ध्वं यद्गमनमुपलक्षणत्वादागमनादि च तदालोचर्हस्य गुरोः पुरत आलोच्यते-वचसा प्रकटीक्रियते, इयमत्र भावना-गुरुमापृच्छ्य गुरुणाऽनुज्ञातः सन् स्वयोग्यभिक्षावस्त्रपात्रशय्यासंस्तारकपादप्रोञ्छनादि यदिवा आचार्योपाध्यायस्थविरबालग्लानशैक्षकक्षपकासमर्थप्रायोग्यवस्त्रपात्रभक्तपानौषधादि गृहीत्वा समागतो यद्वा उच्चारभूमेर्विहाराद्वा समागतः अथवा चैत्यवन्दननिमित्तं पूर्वगृहीतपीठफलकादिप्रत्यर्पणनिमित्तं वा बहुश्रुतापूर्वसंविग्नानां वंदनप्रत्ययं वा संशयव्यवच्छेदाय वा श्राद्धस्वज्ञात्यवसन्नविहाराणां श्रद्धावृद्ध्यर्थं वा साधर्मिकाणां वा संयमोत्साहनिमित्तं हस्तशतात्परं दूरमासन्नं वा गत्वा समागतो यथाविधि गुरुसमक्षमालोचयतीति, इयं चालोचना गमनागमनादिष्ववश्यकर्तव्येषु सम्यगुपयुक्तस्यादुष्टभावतया निरतिचारस्य छद्मस्थस्याप्रमत्तस्य यतेर्द्रष्टव्या, सातिचारस्य तूपरितनप्रायश्चित्तसम्भवात्, केवलज्ञानिनश्च कृतकृत्यत्वेनालोचनाया अयोगात्, आह-यानि नामावश्यकर्तव्यानि गमनादीनि

तेषु सम्यगुपयुक्तस्यादुष्टभावतया निरतिचारस्य छद्मस्थस्याप्रमत्तस्य किमालोचनया ?, तामन्तरेणापि तस्य शुद्धत्वात्, यथासूत्रं प्रवृत्तेः, सत्यमेतत्, केवलं याश्चेष्टानिमित्ताः सूक्ष्मप्रमादनिमित्ता वा सूक्ष्मा आश्रवक्रियास्ता आलोचनामात्रेण शुद्ध्यन्तीति तच्छुद्धिनिमित्तमालोचना १। तथा समितिप्रमुखाणां सहसाकारतोऽनाभोगतो वा कथमपि प्रमादे सति मिथ्याकरणे—अन्यथाकरणे प्रतिक्रमणं—मिथ्यादुष्कृतप्रदानलक्षणं प्रायश्चित्तं क्रियते, तत्र समितयः पञ्च, तद्यथा—ईर्यासमितिर्भाषासमितिरेषणासमितिरादानभाण्डमात्रनिक्षेपणासमितिरुच्चारप्रश्रवणखेलसिङ्घानजल्लपारिष्ठापनिकासमितिश्च, प्रमुखग्रहणाद्गुप्त्यादिपरिग्रहः, गुप्तयश्च तिस्रस्तद्यथा—मनोगुप्तिर्वचनगुप्तिः कायगुप्तिश्च, इयमत्र भावना—सहसाकारतोऽनाभोगतो वा ईर्यायां यदि कथां कथयन् व्रजेत् भाषायामपि यदि गृहस्थभाषया ढड्डरस्वरेण वा भाषेत एषणायां भक्तपानगवेषणवेलायामनुपयुक्तो भाण्डोपकरणस्यादाने निक्षेपे वा अप्रमार्जयिता अप्रत्युपेक्षिते स्थण्डिले उच्चारादीनां परिष्ठापयिता न च हिंसादोषमापन्नः तथा यदि मनसा दुश्चिन्तितं स्यात् वचसा दुर्भाषितं कायेन दुश्चेष्टितं तथा यदि कन्दर्पो वा हासो वा स्त्रीभक्तचौरजनपदकथा वा तथा क्रोधमानमायालोभेषु गमनं विषयेषु वा शब्दरूपरसगन्धस्पर्शलक्षणेष्वभिष्वङ्गः सहसाऽनाभोगतो वा कृतः स्यात्तत एतेषु सर्वेषु स्थानेषु आचार्यादिषु च मनसा प्रद्वेषादिकरणे वाचा अन्तरभाषादिकृतौ कायेन पुरोगमनादौ तथा इच्छामिथ्यातथाकारादिप्रशस्तयोगाकरणे च मिथ्यादुष्कृतप्रदानलक्षणं प्रायश्चित्तमिति २। तथा शब्दादिषु—शब्दरूपप्रभृतिष्विष्टानिष्टविषयेषु 'रागादिविरचनं' रागस्य—अभिष्वङ्गलक्षणस्य आदिग्रहणाद् द्वेषस्य—अप्रीतिलक्षणस्य मनोमात्रेण करणं गुरूणां पुरतः 'साहिउं'ति कथयित्वा यद्दीयते मिथ्यादुष्कृतमेतत्प्रायश्चित्तं मिश्रमिति भणितं, इयमत्र भावना—नानाप्रकारान् शब्दादीन् विषयान् इन्द्रियविषयीभूताननुभूय कस्यचिदेवं संशयः स्याद् यथा शब्दादिषु विषयेषु रागद्वेषौ गतो वा न वेति, ततस्तस्मिन् संशयविषये मिश्रं—पूर्वं गुरूणां पुरत आलोचनं तदनन्तरं

गुरुसमादेशेन मिथ्यादुष्कृतदानमित्येवंरूपं प्रायश्चित्तं भावतः प्रतिपद्यते, यदि हि निश्चितं भवति यथा अमुकेषु शब्दादिषु विषयेषु रागं द्वेषं वा गत इति, तत्र तपोऽर्हं प्रायश्चित्तं, अथैवं निश्चयो—न गतो रागं द्वेषं वा, तत्र स शुद्ध एव न प्रायश्चित्तविषयः ३। तथाऽनेषणीये—अशुद्धे अशनादिके—अशनपानखादिमस्वादिमरूपे सकलौविकौपग्रहिकलक्षणे च वस्तुनि गृहीते सति परित्यागः कार्यः, इदमुक्तं भवति—सम्यगुपयुक्तेन केनापि साधुना भक्तपानादिकं गृहीतं पश्चात्कथमप्यप्रासुकमनेषणीयं वा ज्ञातं तत्र प्रायश्चित्तं तस्य गृहीतस्य भक्तपानादेः परित्यागः, उपलक्षणमेतत् तेन एतदपि द्रष्टव्यं—अशठभावेन गिरिराहुमेघमहिकारजःसमावृते सवितरि उद्गतबुद्ध्या अनस्तमितबुद्ध्या वा गृहीतमशनादिकं पश्चाद् ज्ञातमनुद्गते अस्तमिते वा सूर्ये गृहीतं तथा प्रथमपौरुष्यां गृहीत्वा चतुर्थीमपि पौरुषीं यावद् धृतमशनादि शठभावेनाशठभावेन वा अर्धयोजनातिक्रमणेन नीतमानीतं वाऽशनादि तत्र विवेक एव प्रायश्चित्तमिति, शठाशठयोश्चेदं लक्षणं—इन्द्रियविकथामायाक्रीडादिभिः कुर्वन् शठः ग्लानसागारिकास्थण्डिलभयादिकारणतोऽशठः ४, तथा दुःस्वप्नप्रमुखे दृष्टे सति तद्विशोधनाय क्रियते कायोत्सर्गः, तत्र दुःस्वप्नः—प्राणातिपातादिसावद्यबहुलः, प्रमुखग्रहणाद्गमनागमननौसंतरणादिपरिग्रहः, एतेषु विषये कायोत्सर्गलक्षणं प्रायश्चित्तमिति भावः, उक्तं च—"गमणागमणवियारे सुत्ते वा सुमिणदंसणे राओ। नावा नइसंतारे पायच्छित्तं विउस्सग्गो॥ १॥" [गमनागमनयोर्विचारे सूत्रे वा स्वप्नदर्शने रात्रौ। नावा नदीसंतरणे प्रायश्चित्तं व्युत्सर्गः॥ १॥] अत्र 'सुत्ते व'त्ति सूत्रे—सूत्रविषयेषु उद्देशसमुद्देशानुज्ञाप्रस्थापनप्रतिक्रमणश्रुतस्कन्धाङ्गपरिवर्तनादिष्वविधिसमाचरणपरिहाराय प्रायश्चित्तं कायोत्सर्गः ५। वा समुच्चये, तथा पृथिव्यादिविघट्टने—सचित्तपृथिवीकायादिसङ्घट्टने निर्विकृतिकादिकः षण्मासावसानस्तपोविशेषो दीयते छेदग्रन्थानुसारेण जीतकल्पानुसारेण वा, एतत्तपोलक्षणं प्रायश्चित्तमिति ६। तथा तपसा दुर्दमस्य—विशोधयितुमशक्यस्य मुनेः क्रियते पर्यायव्यवच्छेदः

श्रामण्यपर्यायच्छेदनं, तत्र तपोदुर्दमो यः षण्मासक्षपकोऽन्यो वा विकृष्टतपः- महाव्रतारोपणकालादारभ्य अहोरात्रपञ्चकादिना क्रमेण श्रामण्यपर्यायच्छेदनं, तत्र तपोदुर्दमो यः पण्मासक्षपकोऽन्यो वा विकृष्टतपः- करणसमर्थस्तपसा गर्वितो भवति यथा किं ममानेन प्रभूतेनापि तपसा क्रियते ? इति तपःकरणासमर्थो वा ग्लानासहवालवृद्धादिः तथा- विधतपःश्रद्धानरहितो वा निष्कारणतोऽपवादरुचिर्वेति ७। तथा प्राणातिपातप्रमुखे—प्राणिवधमृषावादादिकेऽपराधे सङ्कल्प्य कृते पुनर्व्रता- रोपणं—भूयोऽपि व्रतस्थापनं विधातव्यं, अयमर्थः—आकुट्टया पञ्चेन्द्रियजीववधे विहिते दर्पेण मैथुने सेविते मृषावादादत्तादानपरिग्रहेषु च उत्कृष्टेषु प्रतिसेवितेषु आकुट्टया पुनः पुनः सेवितेषु वा मूलाभिधानमेतत्प्रायश्चित्तं भवतीति ८। तथा करादिभिः—मुष्टियष्टिप्रभृतिभिर्घातो- मरणनिरपेक्षतया आत्मनः परस्य वा स्वपक्षगतस्य परपक्षगतस्य वा घोरपरिणामतः प्रहरणं तेन प्रदुष्टमना—अतिसङ्क्लिष्टचित्ताध्यवसायो न व्रतेषु स्थाप्यते यावदुचितं तपो न कृतं स्यात्, उचितं च तपःकर्म उत्थाननिपदनाद्यशक्तिपर्यन्तं, स हि यदा उत्थानाद्यपि कर्तुमश- क्तस्तदा अन्यान् प्रार्थयते—आर्या! उत्थातुमिच्छामीत्यादि, ते तु तेन सह सम्भाषणमकुर्वाणास्तत्कृत्यं कुर्वन्ति, एतावति तपसि कृते तस्योत्थापना क्रियत इति ९। तथा पाराञ्चिकं नाम दशमं प्रायश्चित्तमापद्यते स्वलिङ्गिनीनृपभार्यादिसेवाभिः, आदिशब्दाज्झिञ्झिघातरा- जवधादिपरिग्रहः, एतच्च अव्यक्तलिङ्गधारिणां जिनकल्पिकप्रतिरूपाणां क्षेत्राद्बहिःस्थितानां सुविपुलं तपः कुर्वतां महासत्त्वानां सूरीणां— आचार्याणामेव जघन्यतः पण्मासान् उत्कृष्टतो द्वादश वर्षाणि यावद्भवति, ततश्च—अतिचारपारगमनानन्तरं प्रव्राज्यते नान्यथेति १० ॥ ७५१॥७५२॥७५३॥७५४॥७५५॥७५६ ॥ अथात्रैव विशेषमाह—'नवर'मित्यादिगाथात्रयं, नवरं—केवलं दशमप्रायश्चित्तापत्तावपि सत्यां नवममेव—अनवस्थाप्यलक्षणं प्रायश्चित्तमध्यापकानां—उपाध्यायानां भवति, अयमर्थः—येषु येष्वपराधेषु पाराञ्चिकमापद्यते तेषु तेष्वपि वहुशः समासेवितेषु उपाध्यायस्यानवस्थाप्यमेव प्रायश्चित्तं भवति, न तु पाराञ्चिकं, उपाध्यायस्यानवस्थाप्यपर्यन्तस्यैव प्रायश्चित्तस्य

प्रतिपादनात्, एवं सामान्यसाधूनामप्यनवस्थाप्यपाराञ्चिकयोग्येष्वपराधेषु सत्सु मूलपर्यन्तमेव प्रायश्चित्तमवगन्तव्यं, तत्रानवस्थाप्यं जघन्यतः पण्मासान् यावद्भवति उत्कृष्टतस्तु वर्षमिति, इदं च आशातनानवस्थाप्यमाश्रित्योक्तं, प्रतिसेवनानवस्थाप्यापेक्षया तु जघन्यतो वर्षमुत्कृष्टतो द्वादश वर्षाणि, उक्तं च—"तत्थ आसायणाअणवट्ठप्पो जहन्नेणं छम्मासा उक्कोसेणं संवच्छरं, पडिसेवणाअणवट्ठप्पो जहन्नेणं वारस मासा उक्कोसेणं वारस संवच्छराणि"त्ति, तत्र तीर्थकरप्रवचनगणधराद्यधिक्षेपकारी आशातनानवस्थाप्यः, हस्तताडनसाधर्मिकान्यधार्मिकस्तैन्यकारी तु प्रतिसेवनानवस्थाप्यः। नन्वेतानि दशापि प्रायश्चित्तानि यावत्तीर्थं तावद्भवन्ति ? उत नेत्याह—'दस ता' गाहा, यावच्चतुर्दशपूर्वी प्रथमसंहननी च तावद्दश प्रायश्चित्तानि अनुपजन्ति—अनुवर्तन्ते, एतौ च चतुर्दशपूर्विप्रथमसंहननिनौ युगपदेव व्यवच्छिन्नौ, तयोश्च व्युच्छिन्नयोरनवस्थाप्यं पाराञ्चितं च व्यवच्छिन्नं, ततः परेण—अनवस्थाप्यपाराञ्चितव्यवच्छेदादनन्तरमालोचनादि मूलान्तमष्टविधं प्रायश्चित्तं तावदनुवर्तमानं बोद्धव्यं यावद् दुष्प्रसभनामा सूरिः, तस्मिंश्च कालगते तीर्थं चारित्रं च व्यवच्छेदमुपयास्यतीति ९८ ॥ ७५८ ॥ इदानीं 'ओहम्मि पयविभागम्मि सामायारीदुगं'ति नवनवतं शततमं द्वारमाह—

**सामायारी ओहंमि ओहनिज्जुत्तिजंपियं सव्वं। सा पयविभागसामायारी जा छेयगंथुत्ता ॥ ७५९ ॥**

समाचरणं समाचारः—शिष्टजनाचरितः क्रियाकलापः समाचार एव सामाचार्यं, भेषजादित्वात् स्वार्थे ष्यञ् ( पा० ५–४–२३ ) स्त्रीविवक्षायां 'षिद्गौरादिभ्यश्चे'ति ( पा० ४–१–४१ ) ङीष्, 'यस्ये' ( यस्येति च पा० ६–४–१४८ ) त्यकारलोपः, यस्य हल ( पा० ६–४–४९ ) इत्यनेन तद्धितयकारलोपः, परगमनं सामाचारी, सा त्रिधा भवति—ओघसामाचारी दशधासामाचारी पदविभागसामाचारी च, तत्र ओघः—सामान्यं तद्विषया सामाचारी—सामान्यतः सङ्क्षेपाभिधानरूपा सा च ओघनिर्युक्तिज-

लिखितं सर्वं ज्ञेयं, तत्र हि व्रतिनामोघतः सर्वसमाचारः प्रत्युपेक्षणादिकः कथ्यते इति, तथा सा पदविभागसामाचारी या छेदग्रन्थेषु- जीतकल्पनिशीथादिषूक्तेति, इह च साम्प्रतकालप्रव्रजितानां तथाविधश्रुतपरिज्ञानशक्तिविकलानामायुष्कादिह्रासमपेक्ष्य ओघसामाचारी नवमात्पूर्वात् तृतीयाद्वस्तुन आचारामिधानात् तत्रापि विंशतितमात्प्राभृतात् तत्राप्योघप्राभृतप्राभृतात् निर्व्यूढा, पदविभागसामाचार्यपि नवमपूर्वादेव निर्व्यूढेति ९९–१०० ॥ ७५९ ॥ इदानीमेकशततमं 'चक्कवालसामायारी'त्ति द्वारमाह—

इच्छा १ मिच्छा २ तहक्कारो ३, आवस्सिया य ४ निसीहिया ५। आपुच्छणा य ६ पडिपुच्छा
७, छंदणा य ८ निमंतणा ९ ॥ ७६० ॥ उवसंपया य १० काले, सामायारी भवे दसविहा उ।
एएसिं तु पयाणं, पत्तेयपरूवणं वोच्छं ॥ ७६१ ॥ जइ अब्भत्थिज्ज परं कारणजाए करेज्ज से कोई।
तत्थ य इच्छाकारो न कप्पइ बलाभिओगो उ १ ॥ ७६२ ॥ संजमजोए अब्भुट्ठियस्स जं किंपि
वितहमायरियं। मिच्छा एयंति वियाणिऊण मिच्छत्ति कायव्वं २ ॥ ७६३ ॥ कप्पाकप्पे परिनि-
ट्ठियस्स ठाणेसु पंचसु ठियस्स। संयमतवड्ढगस्स उ अविकप्पेणं तहक्कारो ३ ॥७६४॥ आवस्सिया
विहेया अवस्सगंतव्वकारणे मुणिणो ४। तम्मि निसीहिया जत्थ सेज्जठाणाइ आयरइ ५॥ ७६५ ॥
आपुच्छणा उ कज्जे ६ पुव्वनिसिद्धेण होइ पडिपुच्छा ७। पुव्वगहिएण छंदण ८ निमंतणा
होअगहिएणं ९ ॥ ७६६ ॥ उवसंपया य तिविहा नाणे तह दंसणे चरित्ते य १०। एसा हु
दसपयारा सामायारी तहऽन्ना य ॥ ७६७ ॥

'इच्छे'त्यादिगाथाष्टकं, एषणमिच्छा करणं—कारः, कारशब्दः प्रत्येकमभिसम्बध्यते, इच्छया—बलाभियोगमन्तरेण करणं इच्छाकारः, तथा च इच्छाकारेण ममेदं कुर्विति, किमुक्तं भवति ?—इच्छाक्रियया न बलाभियोगपूर्विकया ममेदं कुर्विति, तथा मिथ्या वितथमनृतमिति पर्यायाः, मिथ्याकरणं मिथ्याकारो मिथ्याक्रियेत्यर्थः, तथा संयमयोगवितथाचरणे विदितजिनवचनसाराः साधवस्तत्क्रियाया वैतथ्यप्रदर्शनाय मिथ्याकारं विदधते मिथ्याक्रियेयमिति, तथाकरणं तथाकारः, स च सूत्रप्रश्नादिगोचरो यथा भवद्भिरुक्तं तथैवेदमित्येवंस्वरूपः, तथा अवश्यं अवश्यशब्दोऽकारान्तोऽप्यस्ति ततोऽवश्यस्य—अवश्यं कर्तव्यस्य क्रिया आवश्यिकी, चः समुच्चये, तथा निषेधेन—असंवृतगात्रचेष्टानिवारणेन निर्वृत्ता तत्प्रयोजना वा या शय्यादिप्रवेशनक्रिया सा नैषेधिकी, तथा आपृच्छनमापृच्छा, सा विहारभूमिगमनादिषु प्रयोजनेषु गुरोः करणीया, चः पूर्ववत्, तथा प्रतिपृच्छा—प्रतिप्रश्नः, सा च प्रागनियुक्तेनापि करणकाले कार्या निषिद्धेन वा प्रयोजनतः कर्तुकामेनेति, तथा छंदना—पूर्वगृहीतेनाशनादिना आमन्त्रणा विधेया, तथा निमन्त्रणा अगृहीतेनैवाशनादिना अहं भवदर्थमशनाद्यानयामीत्येवंरूपा, तथोपसम्पच्च विधिना देया, इयं काले—कालविषये सामाचारी भवेद् दशविधा, एवं तावत्समासत उक्ता, सम्प्रति प्रपञ्चतः प्रतिपदमभिधित्सुरिदमाह—एतेषां पदानां तुर्विशेषणे विषयप्रदर्शनेन प्रत्येकं पृथक्पृथक्प्ररूपणां वक्ष्ये—कथयिष्यामि ॥ ७६० ॥ ७६१ ॥ तत्रेच्छाकारो येष्वर्थेषु क्रियते तत्प्रदर्शनार्थमाह—'जई'त्यादि, यदीत्यभ्युपगमे अन्यथा साधूनामकारणे अभ्यर्थनैव न कल्पते, ततश्च यदि अभ्यर्थयेत्परं—अन्यं साधुं ग्लानादौ कारणजाते समुत्पन्ने सति, ततस्तेनाभ्यर्थयमानेन इच्छाकारः प्रयोक्तव्यः, यदिवा अनभ्यर्थितोऽपि कोऽप्यन्यः साधुः 'से'त्ति तस्य कर्तुकामस्य कस्यचित्साधोः कारणजाते कुर्यात्, तत्रापि तेनानभ्यर्थितेन साधुना तस्य चिकीर्षितं कर्तुकामेन इच्छाकारः प्रयोक्तव्यः, इह विरलाः केचिदनभ्यर्थिता एव परकार्यकर्तार इति कोऽपीतिग्रहणं, अथ कस्मादिच्छा-

कारप्रयोगः क्रियते ?, उच्यते, वलाभियोगो मा भूदिति हेतोः, तथा चाह—यतो न कल्पते वलाभियोगः साधूनां, तत इच्छाकारप्रयोगः कर्तव्यः, तुशब्दः कचिद्वलाभियोगोऽपि कल्पते इति सूचनार्थः ॥ ७६२ ॥ सम्प्रति मिथ्याकारविषयप्रतिपादनार्थमाह—'संजमजोए' गाहा, संयमयोगः—समितिगुप्तिरूपः तस्मिन् विषयेऽभ्युत्थितस्य सतो यत्किञ्चिद्वितथं—अन्यथाऽऽचरितं—आसेवितं भूतमिति शेषः, मिथ्या विपरीतमेतदिति विज्ञाय, किं ?—मिथ्येति कर्तव्यं—तद्विषये मिथ्यादुष्कृतं दातव्यमित्यर्थः, संयमयोगविषयायां च प्रवृत्तौ वितथासेवने मिथ्यादुष्कृतं दोपापनयनाय समर्थं न तूपेत्यकरणविषयायां नाप्यसकृत्करणगोचरायामिति ॥ ७६३ ॥ इदानीं तथाकारो यस्य दीयते तत्प्रतिपिपादयिषुराह—'कप्पाकप्पे' गाहा, कल्पो विधिराचार इति पर्यायाः कल्पविपरीतस्त्वकल्पो जिनस्थविरकल्पादिर्वा कल्पः चरकसुगतादिदीक्षा पुनरकल्प इति, कल्पश्चाकल्पश्च कल्पाकल्पमित्येकवद्भावः तस्मिन् परि—समन्तान्निष्ठितः परिनिष्ठितो ज्ञाननिष्ठां प्राप्तस्तस्य, अनेन च ज्ञानसम्पदुक्ता, तथा तिष्ठंति मुमुक्षवो येषु तानि स्थानानि—महाव्रतानि तेषु पञ्चसु—पञ्चसङ्ख्येषु स्थितस्य—आश्रितस्य, अनेन च मूलगुणसम्पत्तिरुक्ता, तथा संयमः—प्रत्युपेक्षोत्प्रेक्षादिः तपश्च—अनशनादि ताभ्यामाढ्यस्य—सम्पन्नस्ये-त्यनेनोत्तरगुणयुक्ततामाह, तस्य, किमित्याह—'अविकल्पेन' निर्विकल्पं तदीयवचने वितथत्वाशङ्कामकुर्वाणेनेत्यर्थः तथाकारः, कार्य इत्यध्याहारः, कोऽभिप्रायः ?—एवंविधस्य गुरोर्वाचनादानादौ पृच्छनानन्तरमुत्तरदाने तथा सामाचारीशिक्षणादौ च यथा यूयं वदथ तथैवैतदित्यर्थसंसूचकस्तथाशब्दः प्रयोक्तव्यः ॥ ७६४ ॥ इदानीमावश्यिकीनैषेधिकीद्वारद्वयमाह—'आवे'त्यादि, आवश्यकी विधेया वसतेर्निर्गच्छता साधुना अवश्यं गन्तव्ये ज्ञानादित्रयहेतुभूते भिक्षाटनादौ कारणे सति, अनेन निष्कारणगमननिषेध उक्तः, तथा वहिर्देशा-न्निवृत्तेन तस्मिन् स्थाने नैषेधिकी विधेया यत्र शय्यास्थानाद्याचरति, तत्र शय्या—वसतिस्तस्यां स्थानं—अवस्थानं तच्च प्रस्तावात्प्रवेशलक्षणं

आदिशब्दाच्चैत्यप्रवेशादिपरिग्रहः, बहिर्देशाद्वसत्यादौ प्रविशन् नैषेधिकीं विदध्यादिति भावः ॥ ७६५ ॥ साम्प्रतमापृच्छादिद्वारचतुष्टयमेकगाथया प्राह– 'आपुच्छे'त्यादि, आपृच्छनमापृच्छा सा च कर्तुमभीष्टे कार्ये प्रवर्तमानेन गुरोः कार्या—भगवन् ! अहं इदं करोमीति द्वारं। तथा पूर्वनिषिद्धेन सता यथा त्वयेदं न कर्तव्यमिति, उत्पन्ने च प्रयोजने कर्तुकामेन 'होइ पडिपुच्छ'त्ति भवति प्रतिपृच्छा, पूज्यैरिदं निषिद्धमासीत् इदानीं तेन कार्येण प्रयोजनं यदि पूज्या आदिशन्ति तदा करोमीत्येवंरूपा, पाठान्तरं वा 'पुव्वनिउत्तेण होइ पडिपुच्छ'त्ति पूर्वं नियुक्तेन सता यथा भवतेदं कार्यमिति तत्कर्तुकामेन गुरोः प्रतिपृच्छा भवति कर्तव्या अहं तत्करोमीति, तत्र हि गुरुः कदाचित्कार्यान्तरमादिशति समाप्तं वा तेन प्रयोजनमिति द्वारं। तथा पूर्वगृहीतेनाशनादिना छंदना शेषसाधुभ्यः कर्तव्या, यथा मयेदमशनाद्यानीतं यदि कस्यचिदुपयुज्यते ततोऽसाविच्छाकारेण ग्रहणं करोत्विति द्वारं। तथा निमन्त्रणा भवत्यगृहीतेनाशनादिना, यथाऽहं भवतां योग्यमशनाद्यानयामीति द्वारं ॥ ७६६ ॥ इदानीमुपसम्पद्द्वारमाह–'उवे'त्यादि, उपसम्पदनमुपसम्पत्–कस्माच्चिदप्यपरगुरुकुलादपरस्य विशिष्टश्रुतादियुक्तस्य गुरोः समीपागमनमिति, सा च त्रिधा–ज्ञाने–ज्ञानविषया एवं दर्शनविषया चारित्रविषया च, तत्र ज्ञानदर्शनयोः सम्बन्धिनी त्रिधा भवति–वर्तना सन्धना ग्रहणं च, एतदर्थं हि उपसम्पद्यते इति, तत्र वर्तना–पूर्वगृहीतस्यैवास्थिरस्य सूत्रादेर्गुणनमिति, सन्धना च–तस्यैव सूत्रादेः प्रदेशान्तरे विस्मृतस्य मीलना घट्टना योजनेत्यर्थः ग्रहणं पुनस्तस्यैव तत्प्रथमतया आदानं, एतत् त्रितयमपि सूत्रार्थतदुभयविषयमवगन्तव्यं, एवं ज्ञाने नव भेदाः, तथा दर्शनेऽपि दर्शनप्रभावकसंमत्यादिशास्त्रविषये एत एव भेदा विज्ञेया इति, तथा चारित्रविषया द्विधा सम्पत्–वैयावृत्त्यविषया क्षपणविषया च, अयमाशयः–चारित्रार्थमन्यगच्छसत्काचार्याय कश्चिद्वैयावृत्त्यकरत्वं प्रतिपद्यते, स च कालतः कश्चिदित्वरकालं कश्चिच्च यावज्जीवमिति, अत्राह परः–ननु किमत्रोपसम्पदा कार्यं ?,

स्वगच्छ एवायं चारित्रार्थं किमिति वैयावृत्त्यं न करोति ?, सत्यं, स्वगच्छे न तथाविधा निर्वाहादिसामग्री वैयावृत्त्यादिकरणक्षमा समस्ति ततः परगच्छोपसम्पदं करोतीति, तथा क्षपणविषयैवं भवति—यथा कश्चित्क्षपणार्थमुपसम्पद्यते, स च क्षपको द्विविधः—इत्वरो यावत्कथिकश्च, यावत्कथिक उत्तरकालेऽनशनकर्ता, इत्वरस्तु द्विविधो—विकृष्टक्षपकोऽविकृष्टक्षपकश्च, तत्राष्टमदशमादिकर्ता विकृष्टक्षपकः, षष्ठान्ततपःकारी तु अविकृष्टक्षपक इत्यादिस्वरूपमावश्यकादिभ्यो विज्ञेयमिति, एषा हुः—स्फुटं चक्रवाले—चक्रवालविषया चक्रवत्प्रतिपदं भ्रमन्ती दशविधा सामाचारी विज्ञेयेति शेषः, तथा अन्या च वक्ष्यमाणा सामाचारी दशविधा ज्ञेया ॥ ७६७ ॥ तामेवाह—

**पडिलेहणा १ पमज्जण २ भिक्खि ३ रिया ४ऽऽलोग ५ भुंजणा ६ चेव। पत्तगधुयण ७ वियारा ८ थंडिल ९ आवस्सयाईया १० ॥ ७६८ ॥**

पूर्वाह्नेऽपराह्ने च वस्त्रपात्रादीनां प्रत्युपेक्षणा विधेया १ तथा प्रमार्जना वसतेः पूर्वाह्नेऽपराह्ने च कर्तव्या २ तथा कृतकायिकादिव्यापाराः पात्राणि गृहीत्वा आवश्यकीकरणपूर्वं वसतेर्निर्गत्याहारादिषु मूर्च्छामकुर्वन्तः पिण्डग्रहणैषणायां सम्यगुपयुक्ताः साधवो 'भिक्ख'त्ति भिक्षां गृह्णन्ति ३ तथा भिक्षाग्रहणानन्तरं नैषेधिकीपूर्वं वसतौ प्रविश्य 'नमः क्षमाश्रमणेभ्य' इत्येवंरूपं वाचिकं नमस्कारमुच्चार्य योग्यदेशं चक्षुःप्रत्युपेक्षणापुरस्सरं रजोहरणेन प्रमृज्य 'ईरिय'त्ति ईर्यापथिकीं प्रतिक्रामन्ति ४ कायोत्सर्गे च भिक्षाभ्रमणभाविनो निर्गमनादारभ्य प्रवेशपर्यन्तान् पुरःकर्मादीनतिचारान् गुरुनिवेदनार्थं चिन्तयन्ति, पारयित्वा च चतुर्विंशतिस्तवं पठन्तीति, तथा च चतुर्विंशतिस्तवपाठानन्तरं भावतश्चारित्रपरिणामापन्नाः सन्तो गुरोर्गुरुसम्मतस्य वा ज्येष्ठार्यस्य पुरतो यदोदनादि येन प्रकारेण करोटिकाप्रभृतिभाजनादिना गृहीतं तत्सर्वं तथैव प्रवचनोक्तेन विधिना 'आलोय'त्ति आलोचयन्ति निवेदयन्तीत्यर्थः, तदनन्तरं दुरालोचितभक्तपानयो-

निंमित्तमेषणानेषणयोर्वा निमित्तं कायोत्सर्गं कुर्वन्ति, 'इच्छामि पडिक्कमिउं गोयरचरियाए भिक्खायरियाए जाव तस्स मिच्छामि दुक्कडं, तस्स उत्तरीकरणेणं जाव वोसिरामि'त्ति कायोत्सर्गं कुर्वन्ति च, तत्र नमस्कारं 'जइ मे अणुग्गहं कुज्जा साहू' इत्यादि वा चिन्तयेत्, यदुक्तमोघनिर्युक्तौ—'तहिं दुरालोइयभत्तपाणएसणमणेसणाए उ। अद्धुस्सासे अहवा अणुग्गहाई व झाइज्जा ॥१॥ दशवैकालिके त्वस्मिन् कायोत्सर्गे 'अहो जिणेहिं असावज्जा' इतिगाथाचिन्तनं भणितं, पारयित्वा च चतुर्विंशतिस्तवभणनं, तदनु परिश्रमाद्यपनयनाय मुहूर्त्तमुपविष्टाः स्वाध्यायं विदधतीति, तथा निःसागारिके स्थाने रागद्वेपविरहिताः सन्तो नमस्कारं पठित्वा सन्दिशत पारयाम इत्यभिधाय च गुरुणाऽनुज्ञाता व्रणलेपाद्युपमया भुञ्जन्ति—भोजनं कुर्वन्ति, तथा भोजनानन्तरमच्छोदकेन भाजनेषु समयप्रसिद्धं कल्पत्रयं दत्त्वा 'पत्तगधुवण'त्ति पात्रकाणां धावनं कुर्वन्ति, समयपरिभाषया त्रेप्यन्तीत्यर्थः, तदनु यद्यपि प्रागेवैकाशनकं प्रत्याख्यातं तथाप्यप्रमादार्थं 'सागारिकाकारेणं गुरुअब्भुट्ठाणेणं आउंटणपसारेणं पारिट्ठावणियागारेणं' इत्येषां प्राग्गृहीतानामाकाराणां च निरोधनार्थं प्रत्याख्यानं विधेयमिति, तथा 'वियार'त्ति विचारः—संज्ञाव्युत्सर्जनार्थं वहिर्गमनं तं वक्ष्यमाणविधिना कुर्वन्ति, तथा 'थंडिलं'ति स्थण्डिलं—परानुपरोधि प्रासुकभूभागलक्षणं तिर्यग् जघन्येन हस्तमात्रं प्रतिलेखयन्ति, तच्च सप्तविंशतिविधं, तथाहि—कायिकायोग्यानि वसतेर्मध्ये षट् स्थण्डिलानि वहिर्भागेऽपि षडेव, मिलितानि च द्वादश, एवमुच्चारयोग्यान्यपि द्वादश, त्रीणि च कालग्रहणयोग्यानीति, तथा पूर्वोक्तविधिना 'आवस्सय'त्ति आवश्यकं—प्रतिक्रमणं कुर्वन्ति, आदिशब्दात्कालग्रहणादिपरिग्रहः, इत्येषा प्रकारान्तरेण दशविधा प्रतिदिनसामाचारी समासतो व्याख्याता, विस्तरतस्तु पञ्चवस्तुकद्वितीयद्वारादवसेयेति १०१ ॥ ७६८ ॥ इदानीं 'निग्गंथत्तं जीवस्स पंच वाराओ भववासे'त्ति द्व्युत्तरशततमं द्वारमाह—

**उवसमसेणिचउक्कं जायइ जीवस्स आभवं नूणं । ता पुण दो एगभवे खवगस्सेणी पुणो एगा ॥ ७६९ ॥**

उपशमश्रेणिचतुष्कं—उपशमश्रेणिचतुष्टयमेव जायते—भवति जीवस्याभवं—संसारे वर्तमानस्य तत् नूनं—निश्चितं, उत्कर्षतो नानाभवेषु वारचतुष्टयमुपशमश्रेणिं प्रतिपद्यत इति भावः, ते पुनरुपशमश्रेण्यौ एकस्मिन् भवे उत्कर्षतो द्वे भवतः, क्षपकश्रेणिः पुनरेकैवैकस्मिन् भवे भवति, ततोऽयमर्थः—उपशान्तमोहे क्षीणमोहे च गुणस्थानके निर्ग्रन्थत्वं भवति, तत्रोपशमश्रेणिचतुष्टये क्षपकश्रेणौ चैकस्यां कृतायां पञ्चधा भवत्युत्कर्षतः संसारे वसतो जीवस्येति १०२ ॥ ७६९ ॥ इदानीं 'साहुविहारसरूवं'ति त्र्युत्तरशततमं द्वारमाह—

**गीयत्थो य विहारो बीओ गीयत्थमीसओ भणिओ । एत्तो तइयविहारो नाणुन्नाओ जिणवरेहिं ॥ ७७० ॥ दव्वओ चक्खुसा पेहे, जुगमित्तं तु खेत्तओ । कालओ जाव रीएज्जा, उवउत्ते य भावओ ॥ ७७१ ॥**

गीतो—विज्ञातः कृत्याकृत्यलक्षणोऽर्थो यैस्ते गीतार्था—बहुश्रुताः साधवः तत्सम्बन्धित्वाद्गीतार्थः चशब्दः समुच्चये भिन्नक्रमश्च विहारो-विचरणं प्रथम इति गम्यते, द्वितीयश्च—अन्यो विहारो गीतार्थैर्मिश्राः—समन्विता येऽगीतार्थास्ते गीतार्थमिश्रास्तेषां सत्को गीतार्थमिश्रः स एव गीतार्थमिश्रको भणितः—उक्तो जिनैर्विधेयतया, पाठान्तरं गीतार्थनिश्रित इति, तत्र गीतार्थस्य निश्रा—आश्रयणं गीतार्थनिश्रा सा सञ्जाता अस्येति गीतार्थनिश्रितः, इतः—आभ्यां द्वाभ्यां विहाराभ्यामन्यस्तृतीय एकानेकागीतार्थसाधुरूपो नानुज्ञातो—नानुमतो विधे-

यतया जिनवैररिति ॥ ७७० ॥ विहारश्चतुर्विधो भवति, द्रव्यतः क्षेत्रतः कालतो भावतश्च, एतदेवाह—'दव्वओ'इत्यादि, द्रव्यतश्चक्षुषा प्रेक्षते मार्गस्थितान् जीवानिति शेषः, क्षेत्रतो युगमात्रं क्षेत्रं, युगं—यूपं चतुर्हस्तप्रमाणं तत्प्रमाणां भूमिं निरीक्षेत, अत्यासन्नस्य दृष्टस्यापि कस्यचिज्जीवादे रक्षितुमशक्यत्वात् (ग्रन्थाग्रं ८०००) युगमात्राच्च परतः श्लक्ष्णजीवादेर्द्रष्टुमप्यशक्यत्वादिति युगमात्रग्रहणं, कालतो यावत्कालं मुहूर्त्तप्रहरादिकं 'रीएज्ज'त्ति गच्छेत्, भावतश्च उपयुक्तः—सम्यगुपयोगपर इति १०३ ॥ ७७१ ॥

॥ इति श्रीप्रवचनसारोद्धारवृत्तौ पूर्वभागः ॥

श्रेष्ठि–देवचन्द्र लालभाइ जैनपुस्तकोद्धारे ग्रन्थाङ्कः ५८

॥ इति श्रीप्रवचनसारोद्धारवृत्तौ–पूर्वभागः ॥

इति श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ५८.

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः-६४.

स्वपरसमयज्ञाननिधिश्रीसिद्धसेनसूरिशेखररचितवृत्त्यलङ्कृतः
अवधूतसिद्धान्तहृदयश्रीमन्नेमिचन्द्रसूरिप्रवरनिर्मितः

# श्रीप्रवचनसारोद्धारः (उत्तरभागः)

(समूलो विविधानुक्रमयुतः)

मुद्रणकारिका-श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारसंस्था।
प्रसिद्धिकारकः-जीवनचन्द्र साकरचन्द्र जह्वेरी, अस्याः कार्यवाहकः।
इदं पुस्तकं मोहमय्यां जीवनचंद साकरचंद झह्वेरी इत्यनेन
निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २६-२८ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्।
प्रति १०००.] वीरसंवत् २४५२. विक्रम संवत् १९८२. पण्यं चत्वारो रूप्यकाः क्राइष्टस्य १९२६. [ Rs. 4-0-0.



# श्रेष्ठी देवचंद लालभाई जह्वेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाव्दे | निर्याणम् १९६२ वैक्रमाव्दे |
| कार्तिकशुक्लैकादश्यां, सूर्यपूरे | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 1853 A. D. Surat.** **Died 13th January 1906 A. D. Bombay,**

10000–1–21.

साम्प्रतं 'अप्पडिवद्धविहारो'त्ति चतुरुत्तरशततमं द्वारमाह—

अप्पडिवद्धो अ सया गुरूवएसेण सव्वभावेसुं । मासाइविहारेणं विहरेज्ज जहोचियं नियमा ॥ ७७२ ॥ मुत्तूण मासकप्पं अन्नो सुत्तंमि नत्थि उ विहारो । ता कहमाइग्गहणं कज्जे ऊणाइ-भावेणं ॥ ७७३ ॥ कालाइदोसओ जइ न दव्वओ एस कीरए नियमा । भावेण तहवि कीरइ संथारगवच्चयाईहिं ॥ ७७४ ॥ काऊण (कम्हिपि) मासकप्पं तत्थेव ठियाण तीस मग्गसिरे । सालंवणाण जिट्ठोग्गहो य छम्मासिओ होइ ॥ ७७५ ॥ अह अत्थि पयवियारो चउपाडिवयंमि होइ निग्गमणं । अहवावि अनिंतस्स आरोवण सुत्तनिद्दिट्ठं ॥ ७७६ ॥ एगक्खेत्तनिवासी का-लाइक्कंतचारिणो जइवि । तहवि हु विसुद्धचरणा विसुद्धआलंवणा जेण ॥ ७७७ ॥ सालंवणो पडंतो अत्ताणं दुग्गमेऽवि धारेइ । इय सालंवणसेवी धारेइ जई असढभावं ॥ ७७८ ॥ काहं अ-छित्तिं अदुवा अहिस्सं, तवोवहाणेसु य उज्जमिस्सं । गणं व नीइसु य सारइस्सं, सालंवसेवी समुवेइ मोक्खं ॥ ७७९ ॥

'अप्पडिवद्धो'इत्यादि गाथाऽष्टकं, अप्रतिवद्धश्च सदा—सर्वकालमभिष्वङ्गरहित इत्यर्थः गुरूपदेशेन हेतुभूतेन, केत्याह—सर्वभावेषु—द्रव्यादिषु, तत्र द्रव्ये—श्रावकादौ क्षेत्रे—निर्वातवसत्यादौ काले—शरदादौ भावे—शरीरोपचयादौ अप्रतिवद्धः, किमित्याह—मासादिविहारेण सिद्धान्तप्रसिद्धेन विहरेत्—विहारं कुर्यात्, यथोचितं—संहननाद्यौचित्येन नियमाद्—अवश्यंभावत इति, एतदुक्तं भवति—द्रव्यादिप्र-

कुलप्रतिवन्धादयो वहवो दोपा एव भवन्ति ततः कथमिदं युक्तमित्याह—'एगे'त्यादि, एकस्मिन् क्षेत्रे निवास एकक्षेत्रनिवासः तस्मिन् सति यद्यपि 'कालातिक्रान्तचारिणः' समयभणितकालातिक्रमचारिणो यतयस्तथापि 'हुः' स्फुटं 'विशुद्धचरणा' निरतिचारचारित्रास्ते 'येन' यतः कारणात् 'विशुद्धालम्बना' विशुद्धं—शाठ्येनादूपितं वार्धकजङ्घावलपरिक्षीणताविहारायोग्यक्षेत्रादिकमालम्बनं—कारणं येषां ते विशुद्धालम्बना इति ॥ ७७७ ॥ अथ कस्मादालम्बनमन्वेपणीयमित्याह—'सालंबे'त्यादि, आलम्ब्यते—पतद्भिराश्रीयते इत्यालम्बनं, तच्च द्विविधं—द्रव्यतो भावतश्च, तत्र गर्तादौ प्रपतद्भिर्यद् द्रव्यमालम्ब्यते तद् द्रव्यालम्बनं, तदपि द्रव्यं द्विविधं—पुष्टमपुष्टं च, तत्रापुष्टं—दुर्वलं कुशवल्वजादि पुष्टं तु दृढं कठोरवल्ल्यादि, भावालम्बनमपि पुष्टापुष्टभेदाद् द्विधा, तत्र पुष्टं वक्ष्यमाणं तीर्थाव्यवच्छित्त्यादि, शठतया स्वमतिमात्रोत्प्रेक्षितं त्वपुष्टं, ततश्च सह आलम्बनेन वर्तत इति सालम्बनः, असौ पतन्नप्यात्मानं दुर्गमेऽपि—गर्तादौ पुष्टालम्बनावष्टम्भतो धारयति, 'इति' एवमेव सह आलम्बनेन वर्तत इति सालम्बनः एवम्भूतः सन् किमपि नित्यवासादिकं सेवते—भजते इति सालम्बनसेवी 'यतिः' साधुः संसारगर्तायां पतन्तमात्मानमशठभावं—मातृस्थानरहितं धारयतीत्येप आलम्बनान्वेपणे गुणः ॥ ७७८ ॥ कानि पुनस्तान्यालम्बनानीत्याह—'काह'मित्यादि, यः कश्चिदेवं चिन्तयति यथा करिष्याम्यहमत्र स्थितोऽच्छित्तिं—अव्यवच्छित्तिं जिनधर्मस्येति शेपः, राजादेर्जिनशासनावतारणादिभिः, 'अदुवे'ति अथवा अहमध्येष्ये सूत्रतोऽर्थतश्च द्वादशाङ्गं दर्शनप्रभावकाणि वा शास्त्राणि, यदिवा तपोलब्धिसमन्वितत्वात्तपोविधानेपु नानाप्रकारेपु तपस्सु 'उज्जमिस्सं'ति उद्यंस्यामि उद्यमं करिष्यामि, 'गणं वा' गच्छं वा 'नीइसु य'त्ति सप्तम्यास्तृतीयार्थत्वान्नीतिभिः सूत्रोक्ताभिः सारयिष्यामि—गुणैः प्रवृद्धं करिष्यामि, स एवं सालम्बनसेवी—एवैरनन्तरोदितैरालम्बनैर्यतनया नित्यवासमपि प्रतिसेवमानो जिनाज्ञानुलङ्घनात्समुपैति—प्राप्नोति 'मोक्षं' सिद्धिं, तस्मात्तीर्थाव्यवच्छेदा-

दिकमेव यथोक्तं ज्ञानदर्शनचारित्राणां समुदितानामन्यतरस्य वा यद् वृद्धिजनकं तदालम्बनं जिनाज्ञावशादुपादेयं, नान्यत्, अन्यथा हि—"आलंबणाण भरिओ लोओ जीवस्स अजउकामस्स । जं जं पिच्छइ लोए तं तं आलंबणं कुणइ ॥ १ ॥" इति [अयतितुकामस्य जीवस्य लोक आलम्बनैर्भृतः । यत् यत् प्रेक्षते लोके तत्तद् आलम्बनं करोति ॥ १ ॥] १०४ ॥ ७७९ ॥ इदानीं 'जायाजायकप्प'त्ति पञ्चोत्तरशततमं द्वारमाह—

**जाओ य अजाओ य दुविहो कप्पो य होइ नायव्वो । एक्केक्कोऽवि य दुविहो समत्तकप्पो य असमत्तो ॥ ७८० ॥ गीयत्थ जायकप्पो अगीयओ खलु भवे अजाओ य । पणगं समत्तकप्पो तदूणगो होइ असमत्तो ॥ ७८१ ॥ उउबद्धे वासासुं सत्त समत्तो तदूणगो इयरो । असमत्ताजायाणं ओहेण न किंचि आहव्वं ॥ ७८२ ॥**

'जाओ'इत्यादि गाथात्रयं, द्विविधः खलु कल्पः—समाचारो भवति ज्ञातव्यस्तद्यथा—जातोऽजातश्च, तत्र जाता—निष्पन्नाः श्रुतसम्पदुपेततया लब्धात्मलाभाः साधवः तदव्यतिरेकात्कल्पोऽपि जात उच्यते, एतद्विपरीतः पुनरजातः, एकैकोऽपि च द्विधा—समाप्तकल्पोऽसमाप्तकल्पश्च, समाप्तकल्पो नाम परिपूर्णसहायः तद्विपरीतोऽसमाप्तकल्पः ॥ ७८० ॥ एतानेव चतुरो जातादीन् व्याख्यानयति—'गीयत्थ' इत्यादिगाथाद्वयं, गीतार्थसाधुसम्बन्धित्वाद्गीतार्थो यो विहारः स जातकल्पोऽभिधीयते 'अगीतः खलु' अगीतार्थसाधुसम्बन्धी पुनर्भवेदजातः—अजातकल्पः, तथा द्वितीयगाथावर्तिनः 'उउवद्धे' इत्यस्य पदस्येह सम्बन्धात् 'ऋतुबद्धे' अवर्षासु 'पणगं'ति साधुपञ्चकपरिमाणः समाप्तकल्पो नाम विहारो भवति, 'तदूनकः' तस्मात्पञ्चकात् हीनतरो द्वित्रिचतुराणां साधूनामित्यर्थः कल्पो भवत्यस-

मासोऽपरिपूर्णसहायत्वात्, वर्षासु—वर्षाकाले पुनः साधुसप्तकपरिमाणः समाप्तकल्पः, तदूनकः—तस्मात्सप्तकान्न्यूनतर इतरः—असमाप्तकल्पः, यच्च वर्षासु सप्तानां विहारकरणं तत् किल वर्षासु तेषां ग्लानत्वादिसम्भवे सहायस्यान्यत आगमनासम्भवादल्पसहायता मा भूदिति हेतोः, ततश्चासमाप्ताजातानां—असमाप्तकल्पाजातकल्पवतां साधूनामोघेन—उत्सर्गेण न किञ्चित्क्षेत्रतद्गतशिष्यभक्तपानवस्त्रपात्रादिकमागमप्रसिद्धमाभाव्यमिति १०५ ॥ ७८१ ॥ ७८२ ॥ इदानीं 'परिट्ठवणुच्चारकरणदिसि'त्ति षडुत्तरशततमं द्वारमाह—

दिसा अवरदक्खिणा १ दक्खिणा य २ अवरा य ३ दक्खिणापुव्वा ४ । अवरुत्तरा य ५ पुव्वा ६ उत्तर ७ पुव्वुत्तरा ८ चेव ॥ ७८३ ॥ पउरऽन्नपाण पढमा बीयाए भत्तपाण न लहंति । तइयाए उवहिमाई नत्थि चउत्थीएँ सज्झाओ ॥ ७८४ ॥ पंचमियाए असंखडी छट्ठीए गणस्स भेयणं जाण । सत्तमिया गेलन्नं मरणं पुण अट्ठमे बिंति ॥ ७८५ ॥ दिसिपवणगामसूरियच्छायाए पमज्जिऊण तिक्खुत्तो । जस्सोग्गहोत्ति काऊण वोसिरे आयमेज्जा वा ॥ ७८६ ॥ उत्तरपुव्वा पुज्जा जम्माएँ निसायरा अहिपडंति । घाणारिसा य पवणे सूरियगामे अवन्नो उ ॥ ७८७ ॥ संसत्तग्गहणी पुण छायाए निग्गयाएँ वोसिरइ । छायाऽसइ उण्हंमिवि वोसिरिय मुहुत्तयं चिट्ठे ॥ ७८८ ॥ उवगरणं वामगजाणुगंमि मत्तो य दाहिणे हत्थे । तत्थऽन्नत्थ व पुंछे तिआयमणं अदूरंमि ॥ ७८९ ॥

'दिसे'त्यादिगाथासप्तकं, अचित्तसंयतपरिष्ठापनाय दिक् प्रथमतोऽपरदक्षिणा—नैर्ऋती निरीक्षणीया तस्या अभावे दक्षिणा तस्या

अभावे अपरा—पश्चिमेत्यर्थः तस्या अप्यभावे दक्षिणपूर्वा—आग्नेयीत्यर्थः तस्या अप्यभावेऽपरोत्तरा—वायवीति भावः तस्या अप्यभावे पूर्वा तस्या अप्यलाभे उत्तरा तस्या अप्यलाभे पूर्वोत्तरा ऐशानीत्यर्थः, इह च यत्र ग्रामादौ मासकल्पं वर्षावासं वा गीतार्थाः साधवः संवसन्ति तत्र प्रथममेव पूर्वोक्तासु दिक्षु परिष्ठापने मृतोज्झननिमित्तं त्रीणि महास्थण्डिलानि प्रत्युपेक्षन्ते—आसन्ने मध्ये दूरे च, किं कारणमिति चेत्तत्र ब्रूमः—प्रथमस्थण्डिले कदाचिद्व्याघातो भवेत्, तथाहि—क्षेत्रं तत्र केनापि कृष्टं उदकेन वा तत् प्लावितं हरितकायो वा तत्राजनि कीटिकादिभिर्वा तत्संसक्तं जातं ग्रामो वा तत्र निविष्टः सार्थो वा कश्चित्तत्रावासित इत्यतो द्वितीये स्थण्डिले परिष्ठापनं विधेयं, तस्याप्येतैरेव हेतुभिर्व्याघाते तृतीये स्थण्डिले परिष्ठापनं कार्यमिति ॥ ७८३ ॥ सम्प्रति प्रथमायां दिशि सत्यां शेषदिक्षु परिष्ठापने दोषमाह—'पउरे'त्यादिगाथाद्वयं, **'पउरन्नपाण पढमा'** इत्यत्र प्राकृतत्वात्सप्तम्या लोपः, ततः प्रथमायाम्—अपरदक्षिणायां परिष्ठापने प्रचुरान्नपानवस्त्रपात्रादिलाभतः समाधिरुपजायते, तस्यां सत्यां द्वितीयस्यां—दक्षिणायां परिष्ठापने भक्तपाने न लभन्ते, तृतीयस्यां—पश्चिमायामुपध्यादि न लभन्ते, चतुर्थ्यां—दक्षिणपूर्वस्यां नास्ति स्वाध्यायः स्वाध्यायाभाव इत्यर्थः ॥ ७८४ ॥ पञ्चम्याम्—अपरोत्तरस्यां 'असंखडि'त्ति कलहः संयतगृहस्थान्यतीर्थिकादिभिः सह, षष्ठ्यां—पूर्वस्यां गणस्य—गच्छस्य भेदनं—भेदं जानीहि, गच्छभेदो भवतीत्यर्थः, सप्तम्याम्—उत्तरस्यां ग्लानत्वं—रोगोत्पत्तिः, अष्टमीति प्राकृतत्वाद्विभक्तिलोपे अष्टम्यां—पूर्वोत्तरस्यां दिशि मृतकपरिष्ठापने मरणं पुनर्ब्रुवते, अन्यः कश्चित्संयतो म्रियते इत्यर्थः, इह च पानीयस्तेनभयादिव्याघातसद्भावतः पूर्वपूर्वदिगलाभे उत्तरोत्तरस्यामपि दिशि मृतकपरिष्ठापने प्रचुरान्नपानलाभलक्षणः प्रथमदिक्प्रतिपादित एव गुणोऽवसेयः, यदा पुनः पूर्वपूर्वदिक्सद्भावे उत्तरोत्तरस्यां दिशि परिष्ठापयन्ति तदा पाश्चात्या एव दोषा भवन्तीति ॥ ७८५ ॥ उक्ता अचित्तसंयतपरिष्ठापनदिक्, इदानीमुच्चारकरणदिगभि-

धीयते—'दिसी'त्यादि, साधुना संज्ञां व्युत्सृजता 'दिसि'त्ति पूर्वस्यामुत्तरस्यां च दिशि पृष्ठं न दातव्यं, तथा पवनग्रामसूर्याणां च पृष्ठं न दातव्यं, तथा छायायां निर्गतायां व्युत्सृजेत्, तथा त्रिकृत्वः—त्रीन् वारान् प्रमार्ज्य उपलक्षणमेतत् प्रत्युपेक्ष्य च स्थण्डिलमिति गम्यते व्युत्सृजेत्, तत्र चायं विधिः—अयुगलिता अत्वरमाणा विकथारहिताश्च पुरीषव्युत्सर्जनाय व्रजन्ति, तत उपविश्य पुतनिर्लेपनाय इष्टकादिखण्डरूपाणि डगलकानि गृह्णन्ति, पिपीलिकादिरक्षणार्थं च तेषां प्रस्फोटनं कुर्वन्ति, तदनन्तरमुत्थाय निर्दोषं स्थण्डिलं गत्वा ऊर्द्धमधस्तिर्यक् चावलोकनं कुर्वन्ति, तत्रोर्द्ध्वं वृक्षस्थपर्वतस्थादिदर्शनार्थं अधो गर्तादर्यादुपलब्धये तिर्यक् व्रजद्विश्राम्यदादिनिरीक्षणार्थ-मिति, ततः सागारिकाभावे संदंशकान् सम्प्रमार्ज्य प्रेक्षिते प्रमार्जिते च स्थण्डिले पुरीषं व्युत्सृजन्तीति, तथा यस्यायमवग्रहः सोऽनुजानी-यादित्यनुज्ञां कृत्वा व्युत्सृजेत् आचमेद्वा ॥ ७८६ ॥ सम्प्रत्येनामेव गाथां विवरीतुकाम आह—'उत्तरे'त्यादि, उत्तरदिक्पूर्वदिक्क लोके पूज्येते ततस्तस्याः पृष्ठदाने लोकमध्येऽवर्णवादो भवति, वानमन्तरं वा कश्चित् कोपयेत् तथा च सति जीवितव्यस्य विनाशः, तस्मा-द्दिवा रात्रौ च पूर्वस्यामुत्तरस्यां च पृष्ठं वर्जयेत्, तथा याम्या—दक्षिणा दिक् तस्याः सकाशाद्रात्रौ निशाचराः—पिशाचादयो देवा अभिप-तन्ति—उत्तराभिमुखाः समागच्छन्ति, ततस्तस्यां रात्रौ पृष्ठं न दद्यात्, उक्तं च—"उभे मूत्रपुरीषे च, दिवा कुर्यादुदङ्मुखः । रात्रौ दक्षिणतश्चैव, तथा चायुर्न हीयते ॥ १ ॥" तथा यतः पवनस्ततः पृष्ठदाने अशुभगन्धाघ्राणं नासिकायां च अर्शांस्युपजायन्ते, चशब्दा-ल्लोकोपहासश्च यथा आघ्रन्त्येतदेते इति, तस्मात्पवनस्यापि पृष्ठं न कर्तव्यं, तथा सूर्यस्य ग्रामस्य च पृष्ठकरणेऽवर्णो—लोकमध्येऽश्लाघा, यथा न किञ्चिज्जानन्त्येते यल्लोकोद्योतकरस्यापि सूर्यस्य यस्मिन् ग्रामे स्थीयते तस्यापि च पृष्ठं ददति, ततस्तयोरपि न दातव्यं पृष्ठमिति ॥ ७८७ ॥ 'छायाए' इति व्याख्यानार्थमाह—'संसत्ते'त्यादि, संसक्ता द्वीन्द्रियैर्ग्रहणिः—कुक्षिर्यस्यासौ संसक्तग्रहणिः, स द्वीन्द्रियरक्ष-

णार्थं छायायां पुष्पफलप्रदवृक्षादिसम्बन्धिन्यां निर्गतायां व्युत्सृजति, अथ छायाऽद्यापि न निर्गच्छति मध्याह्ने एव संज्ञाप्रवृत्तेः ततश्छायाया असति–अभावे उष्णेऽपि स्वशरीरच्छायां पुरीषस्य कृत्वा व्युत्सृजति, व्युत्सृज्य च मुहूर्तकं–अल्पं मुहूर्तं तथैव तिष्ठति येन एतावता कालेन स्वयोगतस्ते परिणमन्ति, अन्यथोष्णेन महती परितापना स्यात् ॥ ७८८ ॥ अथ व्युत्सृजन् स्वोपकरणं कथं धरतीत्याह—'उवे'त्यादि, उपकरणं–दण्डकं रजोहरणं च वामे ऊरौ स्थापयति, मात्रकं च दक्षिणे हस्ते क्रियते, डगलानि च वामहस्तेन धरणीयानि, ततः संज्ञां व्युत्सृज्य तत्रान्यत्र वा प्रदेशे डगलकैः पुतं पुंसयति–रूक्षयति, पुंसयित्वा त्रिभिर्नावापूरकैः चुलुकैरित्यर्थः आचमनं–निर्लेपनं करोति, उक्तं च—'तिहिं नावापूरएहिं आयामइ–निल्लेवइ, नावा–पसई' इति, तदपि चाचमनमदूरे करोति, यदि पुनर्दूरे आचमति तत उड्डाहो यथा कश्चिद् दृष्ट्वा चिन्तयेत्–अनिर्लिप्तपुतो गत एव इति ॥ १०६ ॥ ७८९ ॥ इदानीं 'अट्ठारस पुरिसेसु'त्ति सप्तोत्तरशततमं द्वारमाह—

**वाले १ वुड्ढे २ नपुंसे य ३, कीवे ४ जड्डे य ५ वाहिए ६ । तेणे ७ रायावगारी य ८, उम्मत्ते य ९**
**अदंसणे १० ॥ ७९० ॥ दासे ११ दुट्ठे य १२ मूढे य १३, अणत्ते १४ जुंगिए इय १५ । ओबद्धए**
**य १६ भयए १७, सेहनिप्फेडिया इय १८ ॥ ७९१ ॥**

'वाले'त्यादि श्लोकद्वयं, जन्मत आरभ्य अष्टौ वर्षाणि यावद्बालोऽत्राभिधीयते, स किल गर्भस्थो नव मासान् सातिरेकान् गमयति जातोऽप्यष्टौ वर्षाणि यावद्दीक्षां न प्रतिपद्यते, वर्षाष्टकादधो वर्तमानस्य सर्वस्यापि तथास्वाभाव्याद्देशतः सर्वतो वा विरतिप्रतिपत्तेरभावात्, उक्तं च—"एएसि वयपमाणं अट्ठ समाउत्ति वीयराएहिं । भणिअं जहन्नगं खलु" इति [एतेषां वयःप्रमाणमष्ट समा इति वीतरागैर्भणितं जघन्यकं खलु]

अन्ये तु गर्भाष्टमवर्षस्यापि दीक्षां मन्यन्ते, यदुक्तं **निशीथचूर्णौ**—"आदेसेण वा गब्भट्ठमस्स दिक्ख"त्ति [आदेशेन वा गर्भाष्टमस्य दीक्षेति] भगवद्वज्रस्वामिना व्यभिचार इति चेत्, तथाहि—भगवान् वज्रस्वामी षाण्मासिकोऽपि भावतः प्रतिपन्नसर्वसावद्यविरतिः श्रूयते, तथा च सूत्रं—'छम्मासियं छसु जयं माऊए समन्नियं वंदे' [षाण्मासिकं षट्सु यतं मात्रा समन्वितं वन्दे] सत्यमेतत्, किन्त्वियं शैशवेऽपि भगवद्वज्रस्वामिनो भावतश्चरणप्रतिपत्तिराश्चर्यभूता कादाचित्कीति न तया व्यभिचारः, उक्तं च **पञ्चवस्तुके**—"तदधो परिहवखेत्तं न चरणभावोऽवि पायमेएसिं। आहच्चभावकहगं सुत्तं पुण होइ नायव्वं ॥ १ ॥" अस्या व्याख्या—तेषामष्टानामधो वर्तमाना मनुष्याः परिभवक्षेत्रं भवन्ति, येन तेन वाऽतिशिशुत्वात्परिभूयन्ते, तथा चरणभावोऽपि—चरणपरिणामोऽपि प्राय एतेषां—वर्षाष्टकादधोवर्तमानानां न भवति, यत्पुनः सूत्रं 'छम्मासियं छसु जयं माऊए समन्नियं वंदे' इत्येवंरूपं तत् **'आहच्चभावकहगं'** कादाचित्कभावकथकं, ततो वर्षाष्टकादधः परिभवक्षेत्रत्वाच्चरणपरिणामाभावाच्च न दीक्ष्यन्ते इति, अन्यच्च बालदीक्षणायां संयमविराधनादयो दोषाः, स हि अयोगोलकसमानो यतो यतः स्पन्दते ततस्ततोऽज्ञानित्वात् षड्जीवनिकायवधाय भवति, तथा निरनुकम्पा अमी श्रमणाः यदेवं बालानपि बलादीक्षाकारागारे प्रक्षिप्य स्वच्छन्दतामुच्छिदन्तीति जननिन्दा, तत्परिचेष्टायां च मातृजनोचितायां क्रियमाणायां स्वाध्यायपलिमन्थः स्यादिति १। तथा सप्ततिवर्षेभ्यः परतो वृद्धो भण्यते, अपरे त्वाहुः—अर्वागपीन्द्रियादिहानिदर्शनात् षष्टिवर्षेभ्य उपरि वृद्धोऽभिधीयते, तस्यापि च समाधानादि कर्तुं दुःशकं, यदुक्तम्—"उच्चासणं समीहइ विणयं न करेइ गव्वमुव्वहइ। वुड्ढो न दिक्खियव्वो जइ जाओ वासुदेवेणं ॥ १ ॥" [उच्चासनं समीहते विनयं न करोति गर्वमुद्वहति। वृद्धो न दीक्षितव्यो यदि जातो वासुदेवेन ॥ १ ॥] इत्यादि, इदं च वर्षशतायुष्कं प्रति द्रष्टव्यं, अन्यथा यद् यस्मिन् काले उत्कृष्टमायुस्तद्दशधा विभज्याष्टमनवमदशमभागेषु वर्तमानस्य वृद्ध-

त्वमवसेयं २ । तथा स्त्रीपुंसोभयाभिलाषी पुरुषाकृतिः पुरुषनपुंसकः, सोऽपि बहुदोषकारित्वाद्दीक्षितुमनुचितः 'वाले वुड्ढे य थेरे य' इति पाठस्तु निशीथादिष्वदर्शनादुपेक्षितः ३ । तथा स्त्रीभिर्भोगैर्निमन्त्रितोऽसंवृताया वा स्त्रियोऽङ्गोपाङ्गानि दृष्ट्वा शब्दं वा मन्मथोल्लापादिकं तासां श्रुत्वा समुद्भूतकामाभिलाषोऽधिसोढुं यो न शक्नोति स पुरुषाकृतिः पुरुषक्लीवः, सोऽप्युत्कटवेदतया पुरुषवेदोदयाद् वलात्कारेणाङ्गनालिङ्गनादि कुर्यात् तत उड्डाहादिकारित्वाद्दीक्षाया अनर्ह एव ४ । तथा जड्डस्त्रिविधो—भाषया शरीरेण करणेन च, भाषाजड्डः पुनरपि त्रिविधो—जलमूको मन्मनमूक एलकमूकश्च, तत्र जलमग्न इव बुडबुडायमानो यो वक्ति स जलमूकः, यस्य तु वदतः खच्च्यमानमिव वचनं स्खलति स मन्मनमूकः, यश्चैलक इवाव्यक्तं मूकतया शब्दमात्रमेव करोति स एलकमूकः, तथा यः पथि भिक्षाटने वन्दनादिषु वाऽतीव स्थूलतया अशक्तो भवति स शरीरजड्डः, करणं—क्रिया तस्यां जड्डः करणजड्डः, समितिगुप्तिप्रतिक्रमणप्रत्युपेक्षणसंयमपालनादिक्रियां पुनः पुनरुपदिश्यमानामप्यतीव जड्डतया यो ग्रहीतुं न शक्नोति स करणजड्ड इत्यर्थः, तत्र भाषाजड्डस्त्रिविधोऽपि ज्ञानग्रहणेऽसमर्थत्वान्न दीक्ष्यते, शरीरजड्डस्तु मार्गगमनभक्तपानाद्यानयनादिषु असमर्थो भवति, तथा अतिजड्डस्य प्रस्वेदेन कक्षादिषु कुथितत्वं भवति, तेषां जलेन क्षालनादिषु क्रियमाणेषु कीटिकादीनां प्राणिनां प्लावना सम्पद्यते ततः संयमविराधना, तथा लोको निन्दां करोति—अहोऽसौ वहुभक्षकः, कथमन्यथा एवंविधं स्थूलत्वमेतस्य मुण्डितकस्य, न हि गलश्चौर इति, तथा तस्योर्द्ध्वश्वासो भवति, अपरिक्रमश्च सर्पजलज्वलनादिषु समीपमागच्छत्सु स भवति, ततोऽसौ न दीक्षणीयः, तथा करणजड्डोऽपि समितिगुप्त्यादीनां शिक्ष्यमाणोऽप्यग्राहकत्वान्न दीक्षणीय इति ५ । तथा 'वाहिए'त्ति भगन्दरातिसारकुष्ठप्लीहकार्श्यकासज्वरादिरोगैर्ग्रस्तो व्याधितः, सोऽपि न दीक्षार्हः, तस्य चिकित्सने षट्कायविराधना स्वाध्यायादिहानिश्च ६ । तथा क्षत्रखननमार्गपातनादिचौर्यनिरतः स्तेनः, सोऽपि गच्छस्य वधवन्ध-

नताडनादिनानाविधानर्थनिबन्धनतया दीक्षानर्ह एव ७। तथा श्रीगृहान्तःपुरनृपतिशरीरतत्पुत्रादिद्रोहविधायको राजापकारी, चः समुच्चये, तद्दीक्षणे रुष्टराजकृता मारणदेशनिःसारणादयो दोषा भवन्ति ८। तथा यक्षादिभिः प्रबलमोहोदयेन वा परवशतां नीत उन्मत्तः, सोऽपि न दीक्षार्हः, यक्षादिभ्यः प्रत्यवायसम्भवात् स्वाध्यायध्यानसंयमादिहानिप्रसङ्गाच्च ९। तथा न विद्यते दर्शनं—दृष्टिरस्येत्यदर्शनः—अन्धः, स्त्यानर्द्धिनिद्रोदयवानप्यत्र द्रष्टव्यः न विद्यते दर्शनं—सम्यक्त्वमस्येति व्युत्पत्तेः, अयं च दीक्षितः सन् दृग्विकलतया यत्र तत्र वा सञ्चरन् षट् कायान् विराधयेत् विषमकीलकण्टकादिषु च प्रपतेत्, स्त्यानर्द्धिस्तु प्रद्विष्टो गृहिणां साधूनां च मारणादि कुर्यात् १०। ॥ ७९० ॥ तथा गृहदास्याः सञ्जातो दुर्भिक्षादिष्वर्थादिना वा क्रीतः ऋणादिव्यतिकरे वाऽवरुद्धो दास उच्यते तस्यापि दीक्षादाने तत्स्वामिकृता उत्प्रव्राजनादयो दोषाः ११। तथा दुष्टो द्विधा—कषायदुष्टो विषयदुष्टश्च, तत्र गुरुगृहीतसर्षपमर्जिकाव्यतिकराभिनिविष्टसाध्वादिवदुत्कटकषायः कषायदुष्टः, अतीव परयोषिदादिषु गृद्धो विषयदुष्टः, सोऽपि दीक्षानर्होऽतिसंक्लिष्टाध्यवसायत्वात् १२। तथा स्नेहादज्ञानादिपरतन्त्रतया यथावस्थितवस्त्वधिगमशून्यमानसो मूढः, सोऽपि ज्ञानविवेकमूलायामार्हतदीक्षायां नाधिक्रियते, अज्ञानत्वात्कृत्याकृत्यादिविवेकविकलत्वाच्च १३। तथा यो राजव्यवहारिकादीनां हिरण्यादिकं धारयति स ऋणार्त्तः तस्य दीक्षादाने राजादिकृता ग्रहणाकर्षणकदर्थनादयो दोषाः १४। तथा जातिकर्मशरीरादिभिर्दूषितो जुङ्गितः, तत्र मातङ्गकोलिकवरुडसूचिकछिम्पादयोऽस्पृश्या जातिजुङ्गिताः, स्पृश्या अपि स्त्रीमयूरकुर्कुटशुकादिपोषका वंशवरत्रारोहणनखप्रक्षालनसौकरिकत्ववागुरिकत्वादिनिन्दितकर्मकारिणः कर्मजुङ्गिताः, करचरणकर्णादिवर्जिताः पङ्गुकुब्जवामनककाणकप्रभृतयः शरीरजुङ्गिताः, तेऽपि न दीक्षार्हाः, लोकेऽवर्णवादसम्भवात् १५। तथा अर्थग्रहणपूर्वकं विद्यादिग्रहणनिमित्तं वा एतावन्ति दिनानि त्वदीयोऽहमित्येवं येनात्मनः परायत्तता कृता भवति सोऽवबद्धः स

एवावबद्धकः, सोऽपि न दीक्षार्हः कलहादिदोपसम्भवात् १६ । तथा रूप्यकादिमात्रया वृत्त्या धनिनां गृहे दिनपाटिकादिमात्रेण तदादेशकरणाय प्रवृत्तो यः स भृतकः, सोऽपि न दीक्षोचितः, यस्यासौ वृत्तिं गृह्णाति स दीक्ष्यमाणे तस्मिन् महतीमप्रीतिमादधाति १७ । तथा शैक्षस्य—दीक्षितुमिष्टस्य निस्फेटिका—अपहरणं शैक्षनिस्फेटिका तद्योगाद् यो मातापित्रादिभिरनुत्कलितोऽपहृत्य दीक्षितुमिष्यते सोऽपि न दीक्षोचितः, मातापित्रादीनां कर्मबन्धसम्भवात् अदत्तादानादिदोषप्रसङ्गाच्च १८ । इत्येतेऽष्टादश पुरुषस्य—पुरुषाकारवतो दीक्षानर्हा भेदा इति १०७ ॥ ७९१ ॥ इदानीं 'वीसं इत्थीसु'न्ति अष्टोत्तरशततमं द्वारमाह—

**जे अट्ठारस भेया पुरिसस्स तहित्थियाएँ ते चेव । गुव्विणी १ सबालवच्छा २ दुन्नि इमे हुंति अन्नेवि ॥ ७९२ ॥**

येऽष्टादश भेदाः पुरुषेष्वदीक्षणार्हा उक्तास्तथा—तेनैव प्रकारेण स्त्रियोऽपि त एव भेदा अष्टादश विज्ञेयाः, अयमर्थः—यथा पुरुषाकारवतस्तथा स्त्रीजनाकारवतोऽपि व्रतायोग्या बालादयोऽष्टादश भेदास्तावन्त एव, अन्यावपि द्वाविमौ भवतः, यथा गुर्विणी—सगर्भा सह बालेन—स्तनपायिना वत्सेन वर्तते सा सबालवत्सा, एते सर्वेऽपि विंशतिः स्त्रीभेदा व्रतायोग्याः, दोषा अप्यत्र पूर्ववद्वाच्याः १०८ ॥ ७९२ ॥ इदानीं 'दस नपुंसेसु' इति नवोत्तरशततमं द्वारमाह—

**पंडए १ वाइए २ कीवे ३, कुंभी ४ ईसालुयत्ति य ५ । सउणी ६ तक्कमसेवी ७ य, पक्खियापक्खिए ८ इय ॥ ७९३ ॥ सोगंधिए य ९ आसत्ते १०, दस एते नपुंसगा । संकिलिट्ठित्ति साहूणं, पव्वावेउं अकप्पिया ॥ ७९४ ॥**

'पंडए'इत्यादिश्लोकद्वयं, पण्डको वातिकः क्लीवः कुंभी ईर्ष्यालुः शकुनिस्तत्कर्मसेवी पाक्षिकापाक्षिकः सौगन्धिक आसक्तश्च दश एते नपुंसकाः सङ्क्लिष्टचित्ता इति साधूनां प्रव्राजयितुमकल्प्या व्रतायोग्या इत्यर्थः, सङ्क्लिष्टत्वं चैषां सर्वेषामप्यविशेषतो नगरमहादाहसमानकामाध्यवसायसम्पन्नत्वेन स्त्रीपुरुषसेवामाश्रित्य विज्ञेयं, उभयसेविनो ह्येते इति ॥ ७९३ ॥ ७९४ ॥–

तत्र पण्डकस्य लक्षणं–महिलासहावो सरवन्नभेओ, मिंढं महंतं मउया य वाणी। ससद्दयं मुत्तमफेणयं च, एयाणि छप्पंडगलक्खणाणि ॥ १ ॥ इति वृत्तादवसेयं, अस्य व्याख्या–पुरुषाकारधारिणोऽपि महिलास्वभावत्वं पण्डकस्यैकं लक्षणं, तथाहि–गतिस्त्रस्तपदाकुला मन्दा च भवति सशङ्कं च पृष्ठतोऽवलोकमानो गच्छति शरीरं च शीतलं मृदु च भवति योषिदिवानवरतं हत्थोल्लकान् प्रयच्छन् उदरोपरि तिर्यग्व्यवस्थापितवामकरतलस्योपरिष्टाद्दक्षिणकरकूर्परं विन्यस्य दक्षिणकरतले च मुखं कृत्वा बाहू च विक्षिपन् भाषते अभीक्ष्णं च कटिहस्तकं ददाति प्रावरणाभावे स्त्रीवद् बाहुभ्यां हृदयमाच्छादयति भाषमाणश्च पुनः पुनः सविभ्रमं भ्रूयुग्ममुत्क्षिपति केशबन्धनप्रावरणादिकं च स्त्रीवत्करोति योषिदाभरणादिपरिधानं च बहुमन्यते स्नानादिकं च प्रच्छन्ने समाचरति पुरुषसमाजमध्ये च सभयः शङ्कितस्तिष्ठति स्त्रीसमाजे तु निःशङ्कः प्रमदाजनोचितं च रन्धनकण्डनपेषणादिकं कर्म विदधाति इत्यादिमहिलास्वभावत्वं पण्डकलक्षणं १ तथा 'स्वरवर्णभेदः' स्वरः–शब्दो वर्णः–शरीरसम्बन्धी उपलक्षणत्वाद्गन्धरसस्पर्शाश्च स्त्रीपुरुषापेक्षया विलक्षणास्तस्य भवन्तीत्यर्थः २–३ मेहनं–पुरुषचिह्नं महद्भवति ४ मृद्वी च वाणी ललनाया इव जायते ५ तथा स्त्रिया इव सशब्दं मूत्रं जायते फेनरहितं च तद्भवति ६ एतानि षट् पण्डकलक्षणानि १। तथा वातोऽस्यास्तीति वातिकः यः स्वनिमित्ततोऽन्यथा वा मेहने स्तब्धे सति स्त्रीसेवायामकृतायां वेदं धारयितुं न शक्नोति २। तथा क्लीवः–असमर्थः, स चतुर्धा दृष्टिशब्दाश्लिष्टनिमन्त्रणाक्लीवभेदात्, तत्र यो विवस्त्रावस्थां विपक्षं वीक्ष्य

यः पुनः पुरन्ध्रीभिरुपगूढो निमन्त्रितश्च व्रतं विधातुं न शक्नोति
क्षुभ्यति स दृष्टिक्लीबः, यस्तु युवतिशब्दं श्रुत्वा क्षुभ्यति स शब्दक्लीबः, यः पुनः पुरन्ध्रीभिरुपगूढो निमन्त्रितश्च व्रतं विधातुं न शक्नोति स कुम्भी
स यथाक्रममाश्लिष्टक्लीबो निमन्त्रितक्लीबश्च विज्ञेयः ३ । यस्य तु मोहोत्कटतया सागारिकं वृषणौ वा कुम्भवदुत्सूनौ भवतः स कुम्भी
४ । तथा यस्य प्रतिसेव्यमानां वनितां विलोक्य प्रकाममीर्ष्या समुत्पद्यते स ईर्ष्यालुः ५ । तथा चटकवदुत्कटवेदतयाऽभीक्ष्णं प्रतिसे-
वनाप्रसक्तः शकुनिः ६ । तथा मैथुनमासेव्य बीजनिसर्गे सति यः श्वान इव वेदोत्कटतया जिह्वालेहनादिनिन्द्यकर्मणा सुखमात्मनो
मन्यते स तत्कर्मसेवी ७ । तथा यस्य पक्षे—शुक्लपक्षेऽतीव मोहोद्भवो भवति अपक्षे च—कृष्णपक्षे स्वल्पः स पाक्षिकापाक्षिकः ८ । तथा
यः शुभगन्धं मन्वानः स्वकीयं लिङ्गं जिघ्रति स सौगन्धिकः ९ । तथा यो वीर्यपातेऽपि कामिनीमालिङ्ग्य तदङ्गेषु कक्षोपस्थादिष्वनुप्र-
विश्यैव तिष्ठति स आसक्तः १० । पण्डकादीनां च परिज्ञानं तेषां तन्मित्रादेर्वा कथनादेरिति । ननु पुरुषमध्येऽपि नपुंसका उक्ता
इहापि चेति तत्क एतेषां परस्परं प्रतिविशेषः ?, सत्यं, किन्तु तत्र पुरुषाकृतीनां ग्रहणं इह तु नपुंसकाकृतीनामिति, उक्तं च निशीथ-
चूर्णौ—'इयाणिं नपुंसया दस, ते पुरिसेसु चेव वुत्ता नपुंसदारे, जइ जे पुरिसेसु वुत्ता ते चेव इहंपि किंकओ भेदो ?, भन्नइ, तहिं
पुरिसाकिई इह गहणा सेसयाण भवे'त्ति, एवं स्त्रीष्वपि वाच्यं । ननु नपुंसकाः षोडशविधाः श्रुते श्रूयन्ते तत्कथमत्र दशैवोक्ताः ?,
सत्यं, दशैव तद्भेदाः प्रव्रज्याया अयोग्याः ततस्त एवोक्ताः, शेषाः पुनः षट् दीक्षायोग्या एव, तथा चोक्तम्—'वद्धिए चिप्पिए चेव,
मंतोसहिउवहए । इसिसत्ते देवसत्ते य, पव्वावेज्जा नपुंसए ॥ १ ॥' अस्यार्थः—आयत्यां राजान्तःपुरमहल्लकपदप्राप्त्यादिनिमित्तं यस्य बाल-
त्वेऽपि छेदं दत्त्वा वृषणौ गालितौ भवतः स वर्द्धितकः, यस्य तु जातमात्रस्याङ्गुष्ठाङ्गुलीभिर्मर्दयित्वा वृषणौ द्राव्येते स चिप्पितः, एत-
योश्चैवं कृते सति किल नपुंसकवेदोदयः सम्पद्यते, तथा कस्यचिन्मन्त्रसामर्थ्यादन्यस्य तु तथाविधौषधीप्रभावात् पुरुषवेदे स्त्रीवेदे वा

समुपहते सति नपुंसकवेदः समुदेति, तथा कस्यचिन्मदीयतपःप्रभावान्नपुंसको भवत्वयमिति ऋषिशापात्, तथा कस्यचिद्देवशापात्तदुदयो जायते, इत्येतान् षट् नपुंसकान् निशीथोक्तविशेषलक्षणसम्भवे सति प्रव्राजयेदिति १०९ ॥ इदानीं 'विगलंग'त्ति द्वारं दशोत्तरशततममाह—

हत्थे पाए कन्ने नासा उट्ठे विवज्जिए चेव। वामणगवडभखुज्जा पंगुलटुंटा य काणा य ॥ ७९५ ॥
पच्छावि होंति वियला आयरियत्तं न कप्पए तेसिं। सीसो ठावेयव्वो काणगमहिसोव निम्मंमि ॥ ७९६ ॥

'हत्थे'त्यादिगाथाद्वयं, इह सर्वत्र तृतीयार्थे सप्तमी, ततोऽयमर्थः—हस्तेन उपलक्षणत्वात् हस्ताभ्यां वा पादेन पादाभ्यां वा कर्णेन कर्णाभ्यां वा नासया ओष्ठेन वा विवर्जिता—रहिताः तथा वामनका—हीनहस्तपादाद्यवयवाः पृष्ठतोऽग्रतो वा निर्गतशरीरा वडभाः एकपार्श्वहीनाः कुब्जाः पादगमनशक्तिविकलाः पङ्गुलाः विकलपाणयः टुण्टाः काणा—एकाक्षाः एते सर्वेऽपि प्रव्राजनानर्हाः, प्रवचननिन्दादिदोपसम्भवादिति ॥ ७९६ ॥ अथ गृहीते व्रते ये विकलाङ्गा भवन्ति तेषां का वार्ता?, तत्राह—पश्चादपि श्रामण्यस्थिता येऽक्षिगलनादिना विकला—विकलाङ्गा भवन्ति तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्वं न कल्पते, प्रवचनहीलनाप्रसक्तेः, येऽप्याचार्यपदोपविष्टाः सन्तः पश्चाद्विकलाङ्गा जायन्ते तेपामपि न कल्पते धारयितुमाचार्यत्वं, किन्तु तैस्तथा विकलाङ्गैः सद्भिरात्मनः पदे कोऽप्याकृतिमत्त्वादिगुणगणप्रशस्यः शिष्यः स्थापयितव्यः, आत्मा त्वप्रकाशे स्थाने स्थापयितव्यः, क इवेत्यत्राह—'काणकमहिप इव निम्ने' इयमत्र भावना—काणको नाम चोरित उच्यते, यथा चोरितमहिपो मा कोऽप्येनं द्राक्षीदिति हेतोर्ग्रामस्य नगरस्य वा वहिर्गतारूपे निम्ने प्रदेशे

उपलक्षणमेतद्दंतिगुपिले वा वनगहने स्थाप्यते, एवमेषोऽपि, अन्यथा प्रवचनहीलनाप्रसक्तिः आज्ञादिभङ्गदोषप्रसङ्गश्च, केवलमस्यापि यत्कृत्यं तत्सर्वमपि स्थविराः कुर्वन्तीति ११० ॥ ७९७ ॥ इदानीं 'जंमुल्लं जइकप्पं वत्थं'ति एकादशोत्तरशततमं द्वारमाह—

**मुल्लजुयं पुण तिविहं जहन्नयं मज्झिमं च उक्कोसं । जहन्नेणऽट्ठारसगं सयसाहस्सं च उक्कोसं ॥ ७९७ ॥ दो साभरगा दीविचगा उ सो उत्तरावहो एक्को । दो उत्तरावहा पुण पाडलिपुत्तो हवइ एक्को ॥ ७९८ ॥ दो दक्खिणावहा वा कंचीए नेलओ स दुगुणाओ । एक्को कुसुमनगरओ तेण पमाणं इमं होइ ॥ ७९९ ॥**

'मुल्ले'त्यादि गाथात्रयं, मूल्ययुक्तं पुनर्वस्त्रं त्रिविधं भवति—जघन्यं मध्यममुत्कृष्टं च, तत्र जघन्येन—जघन्यतोऽष्टादशकं यस्याष्टादश रूपका नाणकविशेषा मूल्यं तज्जघन्यं वस्त्रमित्यर्थः, शतसाहस्रं च—रूपकलक्षमूल्यमुत्कृष्टं, शेषं तु मध्यममिति, तत्रेह त्रिविधमपि मूल्ययुक्तं वस्त्रं साधूनां ग्रहीतुं न कल्पते, किन्त्वेतस्मादष्टादशरूपकलक्षणान्मूल्यादन्यूनमूल्यं तदेव कल्पते, उक्तं च पञ्चकल्पबृहद्भाष्ये—"ऊणगअट्ठारसगं वत्थं पुण साहुणो अणुन्नायं । एत्तो वइरित्तं पुण नाणुन्नायं भवे वत्थं ॥ १ ॥" [ ऊनाष्टादशकं वस्त्रं पुनः साधूनामनुज्ञातं । इतो व्यतिरिक्तं पुनर्नानुज्ञातं भवेद्वस्त्रम् ॥ १ ॥ ] ॥ ७९७ ॥ नन्विदं केन रूपकेण प्रमाणमित्याह—'साभरे'त्यादि, साभरको नाम रूपकः, ततो द्वीपस्थानसत्काभ्यां द्वाभ्यां साभरकाभ्यामुत्तरापथे एकः स साभरको भवति, द्वीपश्च यः सुराष्ट्रामण्डले दक्षिणस्यां दिशि योजनमात्रं समुद्रमवगाह्य तिष्ठति सोऽत्र गृह्यते, द्वाभ्यां च उत्तरापथाभ्यां—उत्तरापथसम्बन्धिभ्यां साभरकाभ्यां पाटलीपुत्रनगरसत्क एकः साभरक इति, अनेन रूपकेण वस्त्रप्रमाणमत्र कर्तव्यं ॥ ७९८ ॥ अथ प्रकारान्तरेण रूपकस्वरूपमाह—

'दक्खिणे'त्यादि, वाशब्दः प्रकारान्तरद्योतने द्वौ दक्षिणापथसत्कौ रूपकौ काञ्चीनगर्याः सम्बन्धी नेलको रूपक इत्यर्थः, स च नेलको द्विगुणः सन् एकः कुसुमनगरजः—पाटलीपुत्रसम्बन्धी रूपकः तेन रूपकेणेदमष्टादशकादि प्रमाणं भवतीति ॥ १११ ॥ ॥ ७९९ ॥ इदानीं 'सेज्जयरपिंडो'त्ति द्वादशोत्तरशततमं द्वारमाह—

सेज्जायरो पहू वा पहुसंदिट्ठो य होइ कायव्वो । एगो णेगे य पहू पहुसंदिट्ठेवि एमेव ॥ ८०० ॥ सागारियसंदिट्ठे एगमणेगे चउक्कभयणा उ । एगमणेगा वज्जा णेगेसु य ठावए एगं ॥ ८०१ ॥ अन्नत्थ वसेऊणं आवस्सग चरिममन्नहिं तु करे । दोन्निवि तरा भवंती सत्थाइसु अन्नहा भयणा ॥ ८०२ ॥ जइ जग्गंति सुविहिया करेंति आवस्सयं तु अन्नत्थ । सिज्जायरो न होई सुत्ते व कए व सो होई ॥ ८०३ ॥ दाऊण गेहं तु सपुत्तदारो, वाणिज्जमाईहिं उ कारणेहिं । तं चेव अन्नं व वएज्ज देसं, सेज्जायरो तत्थ स एव होइ ॥ ८०४ ॥ लिंगत्थस्सवि वज्जो तं परिहरओ व भुंजओ वावि । जुत्तस्स अजुत्तस्स व रसावणे तत्थ दिट्ठंतो ॥ ८०५ ॥ तित्थंकरपडिकुट्ठो अन्नायं उग्गमोवि य न सुज्झे । अविमुत्ति अलाघवया दुल्लहसेज्जा उ वोच्छेओ ॥ ८०६ ॥ पुरपच्छिमवज्जेहिं अवि कम्मं जिणवरेहिं लेसेणं । भुत्तं विदेहएहि य न य सागरिअस्स पिंडो उ ॥८०७॥ बाहुल्ला गच्छस्स उ पढमालियपाणगाइकज्जेसु । सज्झायकरणआउट्टिया करे उग्गमेगयरं ॥ ८०८ ॥

'सेज्जे'त्यादिगाथानवकं, शय्यया—साधुसमर्पितगृहलक्षणया संसारसागरं दुस्तरमपि तरतीति शय्यातरः, स द्विधा भवति कर्तव्यः प्रभुर्वा—

यतिप्रदत्तोपाश्रयस्वामी प्रभुसन्दिष्टो वा—तेनैव प्रभुणा यत्कृतप्रमाणतया निर्दिष्टः, तत्र यः प्रभुः स एको वा भवेदनेको वा, प्रभुसन्दिष्टोऽप्येवमेव वाच्यः, कोऽर्थः ?—प्रभुसन्दिष्टोऽप्येको वाऽनेको वा भवतीति ॥ ८०० ॥ अमुमेवार्थं विशेषत आह—'सागारिये'त्यादि, सागारिकः—साधूपाश्रयस्वामी सन्दिष्टश्च—प्रभुसन्दिष्टः प्रत्येकमेको वाऽनेके वा भवन्ति, ततश्चतुष्कभजना—चतुर्भङ्गी ज्ञातव्या, तद्यथा—एकः प्रभुरेकः प्रभुसन्दिष्ट इति प्रथमो भङ्गः, एकः प्रभुरनेके प्रभुसन्दिष्टा इति द्वितीयः, अनेके प्रभव एकः प्रभुसन्दिष्ट इति तृतीयः, अनेके प्रभवोऽनेके च प्रभुसन्दिष्टा इति चतुर्थो भङ्गः, ते च शय्यातरा एको वाऽनेके वा वर्जनीयाः, अत्रैवापवादमाह—'अणेगेसु य ठावए एगं'ति अनेकेषु—वहुषु शय्यातरेषु सत्सु एकं कमप्यपवादपदेन शय्यातरं स्थापयेत्, इयमत्र भावना—वहुजनसाधारणा वसतिः कापि लब्धा, तत्र च साधुसामाचारीकुशलाः श्रावका यद्येवं वदन्ति एकं कमपि शय्यातरं स्थापयत मा सर्वानपि परिहरतेति तदा एकं शय्यातरं स्थापयित्वा शेषगृहेषु भिक्षां गृह्णन्ति, यद्वा वहवस्तत्र साधवस्ततो यदि सर्वेऽपि संस्तरन्ति तदा सर्वानपि शय्यातरान् कुर्वन्ति, असंस्तरणे तु एकं शय्यातरमिति, ग्रहणविधिश्चायं—द्वयोः शय्यातरयोरेकान्तरेण भिक्षाग्रहणवारको भवति त्रिषु शय्यातरेषु तृतीयदिने चतुर्षु चतुर्थदिने एवं वारकेण भिक्षां गृह्णन्तीति ॥ ८०१ ॥ अथायं शय्यातरः कदा भवति ?, तत्राह—'अन्नत्थे'त्यादि, अन्यत्र—अन्यस्मिन् कस्मिंश्चित् सार्थे ग्रामादौ वा उषित्वा सुप्त्वेत्यर्थः चरमं—प्राभातिकमावश्यकं—प्रतिक्रमणमन्यत्र—स्थानान्तरे गत्वा यदि कुर्वन्ति तदा द्वावपि 'तर'त्ति एकदेशेन समुदायोपचारात् शय्यातरौ भवतः, यस्यावग्रहे रात्रौ सुप्तो यदवग्रहे च प्राभातिकं प्रतिक्रमणं कृतं तौ द्वावपि शय्यातरौ भवत इति भावः, इदं च प्रायशः सार्थादिषु सम्भवति आदिशब्दाच्च चौरावस्कन्दभयादिपरिग्रहः, अन्यथा तु—प्रकारान्तरसद्भावे भजना—शय्यातरस्य विकल्पना, यस्य गृहे स्थिताः स वाऽन्यो वा शय्यातरो भवतीत्यर्थः ॥ ८०२ ॥ तामेव भजनामाह

—'जई'त्यादि, यदीत्यभ्युपगमे रात्रेश्चतुरोऽपि प्रहरान् जाग्रति शोभनं विहितं—अनुष्ठानं येषां ते सुविहिताः साधव इत्यर्थः आवश्यकं तु—प्राभातिकप्रतिक्रमणं पुनरन्यत्र गत्वा कुर्वन्ति तदा मूलोपाश्रयस्वामी शय्यातरो न भवति, किन्तु सुप्ते वा—शयने वा कृते सति कृते वा प्राभातिकप्रतिक्रमणे शय्यातरो भवति, अयमत्र तात्पर्यार्थः—शय्यातरगृहे सकलां रात्रिं जागरित्वा प्राभातिकप्रतिक्रमणं यद्यन्यत्र कुर्वन्ति तदा मौलः शय्यातरो न भवति किन्तु यद्गृहे प्रतिक्रमणं कृतं स एव, अथ शय्यातरगृहे रात्रौ सुप्त्वा जागरित्वा वा प्राभातिकप्रतिक्रमणं कुर्वन्ति तदा स एव शय्यातर इति, यदा तु वसतिसङ्कीर्णतादिकारणादनेकोपाश्रयेषु साधवस्तिष्ठन्ति तदा यत्राचार्यः स्थितः स एव शय्यातरो नान्य इति ॥ ८०३ ॥ ननु साधूनां गृहमर्पयित्वा गृहस्वामी यदा देशान्तरं व्रजति तदा शय्यातरो भवति वा न वा ?, तत्राह—'दाऊणे'त्यादि वृत्तं, कश्चिद् गृहस्थः साधूनां गृहं दत्त्वा **'सपुत्रदारः'** पुत्रकलत्रादिसकलनिजलोकपरिवृतो वणिज्यादिभिः कारणैस्तमेव देशमन्यं वा व्रजेत्, तत्रापि च स्थितो यदि तस्य गृहस्य स्वामी तदा स एव शय्यातरो भवति, न पुनर्दूरदेशान्तरस्थितत्वात्तस्य शय्यातरत्वं न भवतीति ॥ ८०४ ॥ अथायं शय्यातरः कस्य सम्बन्धी परिहरणीयस्तत्राह—'लिंगत्थे'त्यादि, लिङ्गस्थस्यापि—लिङ्गमात्रधारिणोऽपि साधुगुणविरहितस्यापीत्यर्थः सम्बन्धी शय्यातरो वर्जनीयः आस्तां तावदितरस्य चारित्रिण इति, स च साधुस्तं शय्यातरपिण्डं परिहरतु वा भुङ्क्तां वा तथापि वर्ज्यः, अथ साधुगुणैर्वियुक्तस्य शय्यातरः कस्मात्परिह्रियते ?, उच्यते, साधुगुणैर्युक्तस्यायुक्तस्य वा शय्यातरः सर्वथा परिहर्तव्यः, अत्र च **'रसापणो'** मद्यापणो दृष्टान्तः, तथाहि—महाराष्ट्राख्ये देशे सर्वेष्वपि मद्यहट्टेषु मद्यं भवतु वा मा वा तथापि तत्परिज्ञापनार्थं ध्वजो बध्यते, तं च दृष्ट्वा सर्वेऽपि भिक्षाचरादयोऽभोज्यमितिकृत्वा परिहरन्ति, एवमसावपि साधुगुणैर्युक्तो वा भवतु अयुक्तो वा तथाप्यस्य रजोहरणध्वजो दृश्यत इतिकृत्वा शय्यातरः परिह्रियत इति ॥ ८०५ ॥ अथ

शय्यातरपिण्डग्रहणे दोषानाह—'तित्थंकरे'त्यादि, तीर्थकरैः सर्वैरपि प्रतिकुष्टो—निषिद्धः शय्यातरपिण्डः, तं च गृह्णता तीर्थकराज्ञा न कृता स्यात्, तथा अज्ञातस्य—अविदितस्य राजादिप्रव्रजितत्वेन उञ्छवृत्त्या यद्भैक्षं तदज्ञातमुच्यते तदेव प्रायः साधुना ग्राह्यं 'अन्नाय-उञ्छं चरई विसुद्धं' इति वचनात्, तच्चासन्ननिवासादतिपरिचयेन ज्ञातस्वरूपतया शय्यातरगृहे पिण्डं गृह्णन्न शुद्ध्यतीति योगः, तथा शय्यातरपिण्डग्रहणे सति 'उद्गमः' कल्पनीयभक्तादिभवनमपि 'न शुद्ध्यति' न शुद्धो भवति, निकटादिभावेन पुनः पुनस्तत्रैव भैक्ष-पानकादिनिमित्तं प्रविशत उद्गमदोषाः स्युरित्यर्थः, तथा स्वाध्यायश्रवणादिभ्यः प्रीतः शय्यातरः क्षीरादि स्निग्धद्रव्यं ददाति तच्च गृह्णता विमुक्तिः—गार्ध्याभावो न कृतः स्यात्, तथा अविद्यमानं लाघवं—लघुता यस्य स तथा तद्भावोऽलाघवता, तत्र विशिष्टाहारलाभेनोपचित-त्वाच्छरीरालाघवं शय्यातरात्तत्परिजनाच्चोपधेर्लाभादुपधेरनल्पतया तदलाघवमिति, तथा दुर्लभा—असुलभा शय्या च—वसतिः कृता भवति, येन किल शय्या देया तेनाहाराद्यपि देयमित्येवं गृहिणां भयोत्पादनात्, तथा व्यवच्छेदो—विनाशो दानभयाच्छय्यायाः शय्यातरेण क्रि-यते, वसत्यभावाद्वा भक्तपानशय्यादिव्यवच्छेदः स्यादिति ॥ ८०६ ॥ तथा—'पुरे'त्यादि, पूर्वः—ऋषभस्वामी पश्चिमो—वर्धमानस्वामी एतौ द्वावपि मुक्त्वा शेषैर्जिनवरैः—द्वाविंशतिसङ्ख्यैर्मध्यमतीर्थकृद्भिर्विदेहजैश्च—महाविदेहक्षेत्रसमुत्पन्नैः सर्वैरपि तीर्थकरैः 'अवि कम्मं'ति अपिः—सम्भावने कर्म—आधाकर्म 'लेशेन' एकदेशेन भुक्तं, 'न च' नैव 'सागारिकस्य' शय्यातरस्य पिण्डः, मध्यमविदेहतीर्थकराणां हि यस्यैव योग्यमाधाकर्म कृतं तस्यैव तन्न कल्पते शेषाणां तु कल्पते इति तैराधाकर्मभोजनमपि कथञ्चिदनुमतं, सागारिकपिण्डः पुनः सर्वथापि प्रतिषिद्ध एवेति, अयं च सागारिकपिण्डो द्वादशधा अशनपानखादिमस्वादिम ४ रजोहरणवस्त्रपात्रकम्बल ४ सूचीपिप्पलक-कर्णशोधननखरदनिका ४ भेदात्, उक्तं च—"असणाईया चउरो ४ पाउञ्छण ५ वत्थ ६ पत्त ७ कंबलयं ८ । सूई ९ छुर १०

कम्मसोहण ११ नहरणिया १२ सागरियपिंडो ॥ १ ॥" तृणडगलकादिस्त्वपिण्डः, उक्तं च—"तणडगलछारमल्लगसेज्जासंथारपीढलेवाई । सेज्जायरपिंडो सो न होइ सेहो य सोवहिओ ॥ १ ॥" अत्र 'सेहो य सोवहिओ'त्ति यदि शय्यातरस्य पुत्रः पुत्री वा वस्त्रपात्रादिसहिता प्रव्रजेत्तदा स शय्यातरपिण्डो न भवतीति ॥ ८०७ ॥ तथा—'वाहुल्ले'त्यादि, गच्छस्य—साधुसमूहस्य वाहुल्यात्—प्राचुर्याद्धेतोः प्रथमालिकापानकाद्यर्थं शय्यातरगृहे पुनः पुनः प्रविशत्सु साधुषु शय्यातर उद्गमदोषं—आधाकर्मादीनामन्यतरं कमपि कुर्यात्, तत्र प्रथमालिका—क्षुल्लकग्लानादीनां प्रथमत एव भोजनं, पानकं च प्रतीतं, तथा निरन्तरस्वाध्यायविधानेन करणेन च—चारित्रेण 'आउट्टिय'त्ति आवर्जिता उपेत्य उद्गमदोषान् कुर्युरिति, अयं च अहोरात्रात्परतोऽशय्यातरो भवति, यदुक्तं—'वुत्थे वज्जेज्जऽहोरत्तं' (उषिते वर्जयेदहोरात्रं) इदमत्र हृदयं—यत्रोषितास्ततः स्थानाद्यस्यां वेलायां विनिर्गता द्वितीयदिने तावत्या वेलायाः परतोऽशय्यातरो भवति, तथा अपवादतो ग्लानत्वादिकारणे शय्यातरपिण्डोऽपि ग्रहीतुं कल्पते, यदुक्तं—'दुविहे गेलन्नंमी निमंतणे दव्वदुल्लहे असिवे । ओमोयरियपओसे भए य गहणं अणुन्नायं ॥ १ ॥' अस्या व्याख्या—आगाढानागाढे—गाढतरागाढतरे द्विविधे ग्लानत्वे शय्यातरपिण्डोऽपि ग्राह्यः, इदमुक्तं भवति—अनागाढे ग्लानत्वे त्रीन् वारानाहिण्ड्यते यदि न लब्धं ग्लानप्रायोग्यं तदा शय्यातरपिण्डोऽपि गृह्यते, आगाढे पुनः शीघ्रमेव शय्यातरपिण्डग्रहणं क्रियते, निमन्त्रणे च—शय्यातरनिर्बन्धे सकृत् तं गृहीत्वा पुनः प्रसङ्गो निवारणीयः, दुर्लभे च क्षीरादिद्रव्ये आचार्यादीनां प्रायोग्ये अन्यत्रालभ्यमाने तत्रैव गृह्णन्ति, अशिवे—दुष्टव्यन्तरोपद्रवादिके अवमौदर्ये च—दुर्भिक्षे अन्यत्र भिक्षायामलभ्यमानायां शय्यातरगृहेऽपि भिक्षां गृह्णन्ति, 'पओसे'त्ति राज्ञा प्रद्विष्टेन सर्वत्र भैक्षे निवारिते प्रच्छन्नं तद्गृहेऽपि गृह्णन्ति, अन्यत्र च तस्करादिभये तत्रापि गृह्णन्ति भिक्षादिकमिति ११२ ॥ ८०८ ॥ इदानीं 'जत्तिय सुत्ते सम्मं'ति त्रयोदशोत्तरशततमं द्वारमाह—

**चउद्स दस य अभिन्ने नियमा सम्मं तु सेसए भयणा । मइओहिविवज्जासे होइ हु मिच्छं न सेसेसु ॥ ८०९ ॥**

यस्य साधोश्चतुर्दश पूर्वाणि यावद्दश च पूर्वाणि अभिन्नानि—परिपूर्णानि सन्ति तस्मिन्नियमात्—निश्चयेन सम्यक्त्वं भवति, शेषे—किञ्चिदूनदशपूर्वधरादौ भजना—विकल्पना, सम्यक्त्वं वा स्यान्मिथ्यात्वं वेत्यर्थः, तथा मतेरवधेश्च विपर्यासे—मत्यज्ञाने विभङ्गज्ञाने च संति हु—निश्चयेन मिथ्यात्वं भवति, मिथ्यात्ववशादेव हि मतिज्ञानावधिज्ञानयोर्विपर्याससद्भावः, श्रुतज्ञानस्य तु विपर्यासो दर्शित एव, 'सेसए भयण'त्ति वचनात्, शेषयोस्तु मनःपर्यवज्ञानकेवलज्ञानयोर्मिथ्यात्वं न भवत्येवेति ११३ ॥ ८०९ ॥ इदानीं 'जे निग्गंथावि चउगइय'त्ति चतुर्दशोत्तरशततमं द्वारमाह—

**चउद्स ओहि आहारगावि मणनाणि वीयरागावि । हुंति पमायपरवसा तयणंतरमेव चउगइया ॥ ८१० ॥**

सर्वत्र सूचामात्रत्वात्सूत्रस्य 'चउदस'त्ति चतुर्दशपूर्वधरा अपि तथा अवधिज्ञानिनोऽपि तथा आहारका अपि—आहारकलब्धिमन्तोऽपि, चतुर्दशपूर्विणोऽपि केचिदाहारकलब्धिमन्तो न भवन्तीत्याहारकग्रहणं, तथा मनःपर्यवज्ञानिनोऽपि, तथा वीतरागा अपि—उपशान्तमोहा अपि, क्षीणमोहानां त्वप्रतिपातित्वान्न ग्रहणं, 'प्रमादपरवशाः' विषयकषायादिकलुषीकृतचेतसः सन्तस्तदनन्तरमेव—तद्भवानन्तरमेव चतुर्गतिका—नारकतिर्यग्मनुष्यदेवलक्षणगतिचतुष्टयभाजो भवन्तीति ११४ ॥ ८१० ॥ इदानीं 'खेत्ताईयं'ति पञ्चदशोत्तरशततमं द्वारमाह—

**जमणुग्गए रविंमि अतावखेत्तंमि गहियमसणाइ । कप्पइ न तमुवभोत्तुं खेत्ताईयत्ति समउत्ती**

॥ ८११ ॥ असणाईयं कप्पइ कोसदुगब्भंतराउ आणेउं । परओ आणिज्जंतं मग्गाईयंति तमकप्पं
॥ ८१२ ॥ पढमप्पहराणीयं असणाइ जईण कप्पए भोत्तुं । जाव तिजामे उड्ढं तमकप्पं कालइक्कंतं
॥ ८१३ ॥ कुक्कुडिअंडयमाणा कवला बत्तीस साहुआहारे । अहवा निययाहारो कीरइ बत्तीस-
भाएहिं ॥ ८१४ ॥ होइ पमाणाईयं तदहियकवलाण भोयणे जइणो । एगकवलाइऊणे ऊणोय-
रिया तवो संति (तंमि) ॥ ८१५ ॥

'जमे'त्यादिगाथापट्कं, यदनुद्गते स्वावतापक्षेत्रे रात्रावित्यर्थः गृहीतमशनादि–अशनं पानं खादिमं स्वादिमं च न तदुपभोक्तुं कल्पते यतीनां, यतः क्षेत्रातीतं तदिति समयोक्तिः–सिद्धान्तभणितिरिति ११५ ॥ ८११ ॥ इदानीं 'मार्गातीत'मिति पोडशोत्तरशततमं द्वारमाह–'असे'त्यादि, अशनादिकं क्रोशद्वयाभ्यन्तराद्–गव्यूतद्वयमध्यादानेतुं कल्पते यतीनां, परतस्तु–क्रोशद्वयात्परत आनीयमानं तदशनादि मार्गातीतमितिकृत्वाऽकल्पनीयमेवेति ११६ ॥ ८१२ ॥ इदानीं 'कालातीत'मिति सप्तदशोत्तरशततमं द्वारमाह–'पढे'त्यादि, दिनप्रथमप्रहरानीतमशनादि कल्पते यतीनां भोक्तुं यावत् त्रयाणां यामानां समाहारस्त्रियामं–प्रहरत्रयमित्यर्थः, ऊर्द्ध्वं तु–प्रहरत्रयादुपरि चतुर्थप्रहरे तदकल्प्यं–अकल्पनीयं कालातिक्रान्तं, सिद्धान्ते निपिद्धमितिकृत्वेति ॥ ११७ ॥ ८१३ ॥ इदानीं 'प्रमाणातिक्रान्त'मित्यष्टादशोत्तरशततमं द्वारमाह–'कुक्कु' इत्यादिगाथाद्वयं,कुर्कुटी–पक्षिणी तस्या यदण्डकं तन्मानाः–तत्प्रमाणाः कवला द्वात्रिंशत्साधूनां–यतीनामाहारे भवन्ति, प्रकारान्तरेण कवलमानमाह–अथवा साधोरुदरं यावन्मात्रेणाहारेण न न्यूनं नाप्यत्याध्रातं भवति तावन्मात्रो निजकाहारो द्वात्रिंशद्भागैः क्रियते, द्वात्रिंशत्तमश्च भागः कवल इति, एतस्माच्च द्वात्रिंशत्कवलमानादधिककवलभोजने यतेः प्रमाणातीतं

भोजनं भवति, तथा एतस्माद् द्वात्रिंशत्कवलप्रमाणाहारादेकेन द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चादिभिर्वा कवलैर्न्यूने सति तस्मिन्नाहारे ऊनोदरिकाभिधस्तपोविशेषो भवतीति ११८ ॥ ८१४—८१५ ॥ इदानीं 'दुहसेज्जचउक्कं'ति एकोनविंशत्युत्तरशततमं द्वारमाह—

**पवयणअसद्दहाणं १ परलाभेहा य २ कामआसंसा ३ । ण्हाणाइपत्थणं ४ इय चत्तारिऽवि दुक्खसेज्जाओ ॥ ८१६ ॥ सुहसेज्जाओऽवि चउरो जइणो धम्माणुरायरत्तस्स । विवरीयायरणाओ सुहसेज्जाउत्ति भन्नंति ॥ ८१७ ॥**

'पवे'त्यादिगाथाद्वयं, शेरते आस्विति शय्याः दुःखदाः शय्या दुःखशय्याः, ताश्च द्वेधा—द्रव्यतो भावतश्च, तत्र द्रव्यतोऽमनोज्ञखट्वादिरूपाः, भावतो दुःस्थितचित्ततया दुःश्रमणतास्वभावास्ताश्चतस्रः, तत्र प्रवचनस्य—जिनशासनस्याश्रद्धानं—एवमेवेदमिति प्रतिपत्त्यभाव इति प्रथमा दुःखशय्या, तथा परेषां—अन्येषां लाभस्य—वस्त्राद्यवाप्तेरीहा— प्रार्थनेति द्वितीया, चः समुच्चये, तथा कामानां—मनोज्ञशब्दरूपादीनामाशंसनं—अभिलषणमिति तृतीया, तथा स्नानादीनां—गात्राभ्यङ्गमर्दनप्रक्षालनादीनां प्रार्थनं—आकाङ्क्षणमिति चतुर्थी, आसु हि क्लिष्टभावस्वभावासु श्रामण्यशय्यासु स्थितो जीवः कदाचिदपि श्रामण्यस्य न सुखमासादयतीति चतस्रो दुःखशय्याः ११९ ॥ ८१६ ॥ इदानीं विंशत्युत्तरशततमं 'सुहसेज्जचउक्कं'ति द्वारमाह—'सुहे'त्यादि, 'यतेः' साधोः 'धर्मानुरागरक्तस्य' धर्मे—जिनधर्मे अनुरागेण—गाढतराभिलापरूपेण रक्तस्य—आसक्तस्य सुखशय्या एवं चतस्रोऽपि 'विपरीताचरणात्' पूर्वोक्तप्रवचनाश्रद्धानादिदुःखशय्यावैपरीत्यकरणतः सुखशय्या इति भण्यन्ते, अयं भावः—प्रवचनश्रद्धानं परलाभानीहनं कामादीनामनाशंसनं स्नानादीनामप्रार्थनं यतेः

सुखशय्याः, तत्र हि स्थितः परमसन्तोषपीयूषमग्नमानसतया निरन्तरतपोऽनुष्ठानादिक्रियाकलापव्यापृततया च सुखमेव यतिः समासादयतीति १२० ॥ ८१७ ॥ इदानीं 'तेरस किरियाठाणाइं'ति एकविंशत्युत्तरशततमं द्वारमाह—

अट्ठा १ णट्ठा २ हिंसा ३ ऽकम्हा ४ दिट्ठी य ५ मोस ६ ऽदिन्ने ७ य । अज्झप्प ८ माण ९ मित्ते १० माया ११ लोभे १२ रियावहिया १३ ॥ ८१८ ॥ तसथावरभूएहिं जो दंडं निसरई उ कज्जेणं । आयपरस्स व अट्ठा अट्ठादंडं तयं विंति १ ॥ ८१९ ॥ जो पुण सरडाईयं थावरकायं च वणलयाईयं । मारेइ छिंदिऊण व छड्डेई सो अणट्ठाए २ ॥ ८२० ॥ अहिमाइवयरियस्स व हिंसिंसु हिंसई व हिंसेही । जो दंडं आरभई हिंसादंडो हवइ एसो ३ ॥ ८२१ ॥ अन्नट्ठाए निसिरइ कंडाई अन्नमाहणे जो उ । जो व निअंतो सस्सं छिंदिज्जा सालिमाईयं ॥ ८२२ ॥ एस अकम्हादंडो ४ दिट्ठिविवज्जासओ इमो होइ । जो मित्तममित्तंति काउं घाएज्ज अहवावि ॥ ८२३ ॥ गामाई घाएज्ज व अतेण तेणत्ति वावि घाएज्जा । दिट्ठिविवज्जासेसो किरियाठाणं तु पंचमयं ५ ॥ ८२४ ॥ अत्तट्ठनायगाईण वावि अट्ठाइ जो मुसं वयइ । सो मोसप्पच्चइओ दंडो छट्ठो हवइ एसो ६ ॥ ८२५ ॥ एमेव आयनायगअट्ठा जो गिण्हई अदिन्नं तु । एसो अदिन्नवित्ती ७ अज्झत्थीओ इमो होइ ॥ ८२६ ॥ नवि कोइ य किंचि भणइ तहवि हु हियएण दुम्मणो किंचि । तस्सऽज्झत्थी सीसइ चउरो ठाणा इमे तस्स ॥ ८२७ ॥ कोहो माणो माया लोभो अज्झत्थिकिरियए चेव ८ । जो पुण

जाइमयाई अट्ठविहेणं तु माणेणं ॥ ८२८ ॥ मत्तो हीलेइ परं खिंसइ परिभवइ माणवत्तेया ९ । माइपिइनायगाईण जो पुण अप्पेवि अवराहे ॥ ८२९ ॥ तिव्वं दंडं कुणई दहणंकणबंधताडणा-ईयं । तम्मित्तदोसवित्ती किरियाठाणं भवे दसमं १० ॥ ८३० ॥ एगारसमं माया अन्नं हियर्यमि अन्न वायाए । अन्नं आयरई वा सकम्मणा गूढसामत्थो ॥ ८३१ ॥ मायावत्ती एसा ११ एत्तो पुण लोहवत्तिया इणमो । सावज्जारंभपरिग्गहेसु सत्तो महंतेसु ॥ ८३२ ॥ तह इत्थीकामेसुं गिद्धो अ-प्पाणयं च रक्खंतो । अन्नेसिं सत्ताणं वहबंधणमारणे कुणइ ॥ ८३३ ॥ एसेह लोहवत्ती १२ इरि-यावहिअं अओ पवक्खामि । इह खलु अणगारस्सा समिईगुत्तीसुगुत्तस्स ॥८३४॥ सयतं अप्पम-त्तस्स भगवओ जाव चक्खुपम्हंपि । निवयइ ता सुहुमा हू इरियावहिया किरिय एसा १३ ॥८३५॥

'अट्ठे'त्यादिगाथाऽष्टादशकं, करणं क्रिया—कर्मबन्धनिबन्धना चेष्टा तस्याः स्थानानि—भेदाः क्रियास्थानानि तानि च त्रयोदश, तत्र 'अट्ठाऽणट्ठा हिंस'त्ति अत्र त्रिषु पदेषु प्राकृतलक्षणेन चतुर्थ्येकवचनस्य लोपो दृश्यः, ततोऽर्थाय—स्वपरप्रयोजनाय क्रिया अर्थक्रिया, अनर्थाय—स्वपरप्रयोजनाभावेन क्रियाऽनर्थक्रिया, हिंसायै क्रिया हिंसाक्रिया, अथवाऽर्थो विद्यते यस्यां साऽर्थक्रिया अनर्थः—स्वप्रयो-जनाभावो विद्यते यस्यां साऽनर्था, हिंसा विद्यते यस्यां सा हिंसाक्रिया, अर्शादेराकृतिगणत्वादच्प्रत्ययः, तथाऽकस्माद्—अनभिसन्धिना क्रियाऽकस्मात्क्रिया, तथा 'दिट्ठी य'त्ति दृष्टिविपर्यासक्रिया सूचनात्सूत्रमितिकृत्वा, तथा मृषाक्रिया तथाऽदत्तादानक्रिया तथाऽ-ध्यात्मक्रिया तथा मानक्रिया तथाऽमित्रक्रिया तथा मायाक्रिया तथा लोभक्रिया तथा ईर्यापथक्रियेति ॥ ८१८ ॥ अथैतानि क्रमेण

व्याचिख्यासुः प्रथमं क्रियास्थानं व्याचष्टे—'तसे'त्यादि, अत्र तृतीयायाः सप्तम्यर्थत्वात् त्रसेषु—द्वीन्द्रियादिषु स्थावरेषु—पृथिव्यादिषु भूतेषु—प्राणिषु यः कश्चिद्दण्डं—दण्ड्यते आत्माऽन्यो वा प्राणी येन स दण्डो—हिंसा, तं निसृजति—करोति कार्येण—प्रयोजनेन, तदेवाह—'आयपरस्स व अट्ठ'त्ति आत्मनः—स्वशरीरादेः परस्य वा—बन्धुवर्गादेरर्थाय—उपकाराय तं क्रियाक्रियावतोरभेदोपचारादर्थ-दण्डं—अर्थक्रियां ब्रुवते तीर्थकरगणधरा इति १ ॥ ८१९ ॥ अथ द्वितीयं क्रियास्थानमाह—'जो पुणे'त्यादि, यः पुनः कश्चित्सरटादिकं—कृकलासमूषिकादिकं त्रसकायं स्थावरकायं च—वनलतादिकं प्रयोजनव्यतिरेकेणैव यथाक्रमं मारयित्वा छित्त्वा च त्यजति स धर्म-धर्मिणोरभेदोपचारादनर्थाय क्रियेति २ ॥ ८२० ॥ तृतीयं क्रियास्थानमाह—'अही'त्यादि, अयं सर्पादिर्वैरी वाऽस्मान् हिंसितवान् हिनस्ति हिंसिष्यति वा इत्यभिसंधिना अह्यादेः—सर्पादेः मकारोऽलाक्षणिकः वैरिणो वा यो दण्डमारभते—वधं विधत्ते स हिंसादण्डः धर्मधर्मिणोरभेदोपचाराद्भवत्येष इति ३ ॥ ८२१ ॥ चतुर्थं क्रियास्थानमाह—'अन्नट्ठे'त्यादि, अन्यार्थं—अन्येषां मृगपक्षिसरीसृपप्र-भृतीनां वधनिमित्तं 'निसृजति' क्षिपति 'काण्डादिकं' शरलेष्टुप्रभृतिकं अन्यं पुनराहन्यात् य एषोऽकस्माद्—अनभिसन्धिना अन्य-वधार्थप्रवृत्त्या दण्डः—अन्यस्य विनाशोऽकस्माद्दण्डः, यो वा 'नियंतो'त्ति अवलोकयन् छेदनबुद्ध्या तृणादिकं अन्यत् शाल्यादिकं शस्यमनाभोगेन छिंद्यादिति, अयमर्थः—अन्यस्मिन् शाल्यादिमध्यव्यवस्थिते तृणादिके छेत्तुमुपक्रान्ते अनाभोगतोऽन्यच्छाल्यादिकं छिंद्यात् एष वाऽकस्माद्दण्डः ४ ॥ ८२२ ॥ पञ्चमं क्रियास्थानमाह—'दिट्ठी'त्यादि, दृष्टेः—बुद्धेर्विपर्यासो—विपर्ययो मतिविभ्रम इत्यर्थः तस्मादयं—वक्ष्यमाणो दण्डो भवति, अमुमेवाह—यो मित्रमपि सदमित्रमितिकृत्वा घातयेत्, यो मित्रस्याप्यमित्रोऽयमिति बुद्ध्या वधः स दृष्टिविपर्यासदण्ड इति भावः, अथवाऽपीति प्रकारान्तरद्योतने, ग्रामादीन् घातयेत्, अयमर्थः—ग्राममध्यवर्तिना केनचित्कांसि-

श्चिदपराधे कृते समग्रमपि ग्रामं यन्मारयति एष वा दृष्टिविपर्यासदण्ड इति, यद्वा अस्तेनमपि स्तेनोऽयमितिकृत्वा हन्यादित्येष दृष्टिविपर्यासः पञ्चमं क्रियास्थानमिति ५ ॥ ८२३ ॥ ८२४ ॥ अथ षष्ठं क्रियास्थानमाह—'अत्तट्ठे'त्यादि, आत्मार्थं परेषां वा—नायकादीनामर्थाय यो मृषा वदति स एष मृषाप्रत्ययिको—मृषाकारणिको दण्डः षष्ठो भवति ६ ॥ ८२५ ॥ सप्तमं क्रियास्थानमाह—'एमेवे'त्यादि, 'एवमेव' मृषावाददण्डवदात्मनायकार्थं—आत्मनः परेषां वा नायकादीनां निमित्तं 'नाइग'त्ति पाठे तु ज्ञात्यर्थं—स्वजनार्थं यो गृह्णात्यदत्तं—अन्येनावितीर्णमेषोऽदत्तवर्ती अदत्तदण्डक्रियावानित्यर्थः ७ ॥ ८२६ ॥ अयं पुनर्वक्ष्यमाणो भवति आध्यात्मिको दण्डः, अध्यात्मं—मनस्तत्र भवो बाह्यनिमित्तानपेक्षः शोकोऽभिभव इति भावः, तमेवाह—'नवी'त्यादि, यस्य सम्मुखं न कोऽपि किञ्चिदप्यनिष्टं जल्पति, तथापि हृदयेन—मनसा कृत्वा किञ्चिदतिशयेन दुर्मनाः—कालुष्यभाग्भवति तस्याध्यात्मिकी क्रिया 'सीसइ'त्ति कथ्यते, तस्य चाध्यात्मिकक्रियास्थानस्य इमानि—वक्ष्यमाणानि चत्वारि 'स्थानानि' कारणानि भवन्ति, तान्येवाह—'कोहो' इत्यादि, क्रोधो मानो माया लोभश्चेत्येतानि चत्वारि कारणान्यध्यात्मक्रियायां भवन्तीति, बाह्यनिमित्तानपेक्षमाभ्यन्तरनिष्कारणक्रोधादिसमुद्भूतं दौर्मनस्यमाध्यात्मिकक्रियेति तात्पर्यार्थः ८ ॥ ८२७ ॥ नवमं क्रियास्थानमाह—'जो पुणे'त्यादि, यः पुनर्जातिमदादिना—जातिकुलरूपबलश्रुततपोलाभैश्वर्यमदलक्षणेनाष्टविधेन मानेन मत्तः सन् परं आत्मव्यतिरिक्तं हीलयति—जात्यादिभिर्निन्दति निकृष्टोऽयमित्यादिवचनैः परिभवत्यनेकाभिः कदर्थनाभिर्मानप्रत्यया एषा क्रियेति ९ ॥ ८२८—८२९ ॥ दशमं क्रियास्थानमाह—'माई'त्यादि, यः पुनर्मातापितृस्वजनादीनामल्पेऽप्यपराधे तीव्रं दण्डं कुरुते दहनाङ्कनबन्धताडनादिकं तन्मित्रद्वेषवर्तिक्रियास्थानं, अमित्रक्रियेत्यर्थः, भवेद्दशमं क्रियास्थानमिति, तत्र दहनं—उल्मुकादिभिर्दम्भनं अङ्कनं—ललाटादिषु चिह्नकरणं बन्धो—रज्ज्वादिभिर्नियन्त्रणं ताडनं—कशादिभिराहननं, आदिशब्दादन्नपान-

सूत्र० श्रु० २ अध्य० २ क्रियास्थानाध्य०



मिथ्यात्विनिग्रहः १० ॥ ८३० ॥ एकादशं क्रियास्थानमाह—'एगारे'त्यादि, एकादशं माया—मायाक्रियास्थानं यथा कश्चिन्मनसि अन्यत्—वचःक्रियाविलक्षणं वाचि—वचसि अन्यत्—मनःक्रियाविलक्षणं अन्यच्च चात्मानमविसंवादि आचरति—करोति, कथम्भूतः सन् ?— 'गूढसामर्थ्यः' गूढे—गोपने सामर्थ्यं—शक्तिविशेषो यस्य स तथा, केन कृत्वा ?—'स्वकर्मणा' निजचेष्टितेनाकारेङ्गितादिना, मायाप्रत्यया एषा क्रियेति ११ ॥ ८३१ ॥ द्वादशं क्रियास्थानमाह—'एत्तो' इत्यादि, इतः—ऊर्ध्वं पुनर्लोभप्रत्यया क्रिया इयं—वक्ष्यमाणा, यथा सावद्यारम्भाः—प्राण्युपमर्दादिना सपापव्यापारा ये परिग्रहा—धनधान्यादिरूपास्तेषु महत्सु—गुरुषु सक्तो—गाढतराकाङ्क्षायुक्तः, तथा स्त्रीषु—युवतिषु कामेषु च—मनोज्ञरूपरसगन्धस्पर्शशब्दस्वरूपेषु गृद्धः—अत्यन्तमभिसक्तः, तथाऽऽत्मानमपायेभ्यो गाढादरेण रक्षन् अन्येषां सत्त्वानां—प्राणिनां वधबन्धनमारणानि—लगुडादिहननरज्ज्वादिसंयमनप्राणव्यपरोपणलक्षणानि करोति एषा इह—सिद्धान्ते लोभप्रत्यया—लोभनिबन्धना क्रियेति ॥ १२ ॥ ८३२—८३३ ॥ त्रयोदशं क्रियास्थानमाह—अतो—लोभक्रियानन्तरमैर्यापथिकीं क्रियां प्रवक्ष्यामि, तत्र ईरणमीर्या—गमनं तद्विशिष्टः पन्था ईर्यापथस्तत्र भवा ऐर्यापथिकी, व्युत्पत्तिमात्रमिदं प्रवृत्तिनिमित्तं तु यः केवलयोगप्रत्यय उपशान्तमोहादित्रयस्य सातवेदनीयकर्मबन्धः सा ऐर्यापथिकी, इह खल्वनगारस्य साधोः समितिषु—ईर्यासमित्यादिषु गुप्तिषु—मनोगुप्त्यादिषु गुप्तस्य—सुसंवृतस्य सततमेवाप्रमत्तस्योपशान्तमोहक्षीणमोहसयोगकेवलिलक्षणगुणस्थानकत्रयवर्तिनः, अन्येषां तु अप्रमत्तानामपि कषायप्रत्ययकर्मबन्धसद्भावेन केवलयोगनिमित्तकर्मबन्धासम्भवात्राप्रमत्तशब्देनात्र ग्रहणं, भगवतः—पूज्यस्य यावच्चक्षुःपक्ष्मापि निपतति—स्पन्दते, इदं च योगस्योपलक्षणं, ततोऽयमर्थः—यावच्चक्षुर्निमेषोन्मेषमात्रोऽपि योगः सम्भवति तावत्सूक्ष्मा—एकसामयिकबन्धत्वेनात्यल्पा सातबन्धनल-

क्षणा क्रिया भवति, एषा द्वः—स्फुटमैर्यापथिकी क्रिया त्रयोदशीति १२१ ॥ ८३४ ॥ ८३५ ॥ इदानीं 'आगरिसा सामाईए चउविहेवि एगभवे' इति द्वाविंशत्युत्तरशततमं द्वारमाह—

**सामाइयं चउद्धा सुय १ दंसण २ देस ३ सव्व ४ भेएहिं । ताण इमे आगरिसा एगभवं पप्प भणियव्वा ॥ ८३६ ॥ तिण्ह सहस्स पुहुत्तं च सयपुहुत्तं च होइ विरईए । एगभवे आगरिसा एवइया हुंति नायव्वा ॥ ८३७ ॥**

'सामे'त्यादि गाथाद्वयं, समो—रागद्वेषयोरपान्तरालवर्ती मध्यस्थः, 'इण् गतौ' अयनं अयो गमनमित्यर्थः समस्य अयः समायः—समीभूतस्य सतो मोक्षाध्वनि प्रवृत्तिः, समाय एव सामायिकं, विनयादेराकृतिगणत्वात् स्वार्थिक इकण्प्रत्ययः, एकान्तोपशान्तगमनमिति भावः, तच्चतुर्धा—चतुर्भेदं श्रुतदर्शनदेशसर्वलक्षणैर्भेदैः, श्रुतसामायिकं सम्यक्त्वसामायिकं देशविरतिसामायिकं सर्वविरतिसामायिकं चेत्यर्थः, तेषां च चतुर्णामप्येते—वक्ष्यमाणा आकर्षा एकं भवं उपलक्षणत्वान्नानाभवांश्च प्राप्य—आश्रित्य भणितव्याः, तत्र आकर्षणमाकर्षः—प्रथमतया मुक्तस्य वा ग्रहणमित्यर्थः, ते च द्विधा—एकभविका नानाभविकाश्च ॥ ८३६ ॥ तत्र प्रथमत एकभविकानाह—'तिण्हे'त्यादि, त्रयाणां—सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिसामायिकानामेकभवे सहस्रपृथक्त्वमाकर्षाणामुत्कर्षतो भवति, विरतेः—सर्वविरतेस्त्वेकभवे शतपृथक्त्वमाकर्षाणामुत्कर्षतः, पृथक्त्वमिति द्विप्रभृतिरानवभ्यः; एवमेतावन्त उत्कर्षत एकभवे आकर्षा भवन्ति ज्ञातव्याः, परतस्तु प्रतिपातोऽलाभो वा, जघन्यतः पुनश्चतुर्णामपि सामायिकानामेक एवाकर्ष एकस्मिन् भवे भवति, उक्तं चावश्यकचूर्णौ—'सुयसामाइयं एग-

भवे जहन्नेणं एगम्मि आगरिसे उक्कोसेणं सहस्सपुहुत्तंवारा, एवं सम्मत्तस्सवि, देसविरईए य सव्वविरईए य पुण जहन्नेण एकम्मि, उक्कोसेणं सयपुहुत्तंवारा" इति ॥ ८३७ ॥ अथ नानाभवगतान् प्रतिपादयति—

**तिण्ह असंखसहस्सा सहसपुहुत्तं च होइ विरईए । नाणभवे आगरिसा एवइया हुंति नायव्वा ॥ ८३८ ॥**

'तिण्हं'इत्यादि, त्रयाणां—सम्यक्त्वश्रुतदेशविरतिसामायिकानां नानाभवेष्वाकर्षाणामुत्कर्षतो भवन्त्यसङ्ख्येयानि सहस्राणि, यतस्त्रयाणामप्येकस्मिन् भवे सहस्रपृथक्त्वमाकर्षाणामुक्तं, भवाश्च क्षेत्रपल्योपमासङ्ख्येयभागगतनभःप्रदेशतुल्याः 'संमत्तदेसविरया पलियस्सासंखभागमेत्ता उ।' [ सम्यक्त्वदेशविरताः पल्यस्यासंखभागमात्रा एव ] इति वचनात्, ततः सहस्रपृथक्त्वं तैर्गुणितमसङ्ख्येयानि सहस्राणि भवन्ति, सहस्रपृथक्त्वं च नानाभवेष्वाकर्षाणामुत्कर्षतो भवति विरतेः—सर्वविरतेः, तस्या हि खल्वेकभवे शतपृथक्त्वमाकर्षाणामुक्तं भवाश्चाष्टौ ततः शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं भवति, एतावन्तो नानाभवेष्वाकर्षा भवन्ति ज्ञातव्याः, अन्ये पठंति—'दोण्ह सहस्समसंखा' इति, तत्रापि श्रुतसामायिकं सम्यक्त्वसामायिकानन्तरीयकत्वादनुक्तमपि प्रतिपत्तव्यं, सामान्यश्रुतस्य त्वक्षरात्मकस्य नानाभवेष्वाकर्षा अनन्तगुणा इति १२२ ॥ ८३८ ॥ इदानीं 'सीलंगट्ठारससहस्स'त्ति त्रयोविंशत्युत्तरशततमं द्वारमाह—

**सीलंगाण सहस्सा अट्ठारस एत्थ हुंति नियमेणं । भावेणं समणाणं अक्खंडचरित्तजुत्ताणं ॥ ८३९ ॥ जोए ३ करणे ३ सन्ना ४ इंदिय ५ भोमाइ १० समणधम्मे य १० । सीलंगसहस्साणं अट्ठारगस्स निप्फत्ती ॥ ८४० ॥ करणाइं तिन्नि जोगा मणमाईणि हवंति करणाइं । आहाराई**

सन्ना चउ सोयाइंदिया पंच ॥ ८४१ ॥ भोमाई नव जीवा अजीवकाओ य समणधम्मो य। खं-
ताइदसपयारो एवं ठिय भावणा एसा ॥ ८४२ ॥ न करइ मणेण आहारसन्नविप्पजढगो उ निय-
मेण । सोइंदियसंवरणो पुढविजिए खंतिसंजुत्तो ॥ ८४३ ॥ इय मद्दवाइजोगा पुढवीकाए हवंति
दस भेया । आउक्कायाईसुवि इअ एए पिंडिअं तु सयं ॥ ८४४ ॥ सोइंदिएण एवं सेसेहिवि जं
इमं तओ पंच । आहारसन्नजोगा इय सेसाहिं सहस्सदुगं ॥ ८४५ ॥ एवं मणेण वयमाइएसु एवं
तु छस्सहस्साइं । न करे सेसेहिंपि य एए सव्वेवि अट्ठारा ॥ ८४६ ॥

शीलाङ्गानां—चारित्रांशानां तत्कारणानां वा सहस्राण्यष्टादश 'अत्र' यतिधर्मे शासने वा भवन्ति—स्युर्नियमेन—अवश्यम्भावेन न न्यूनान्यधिकानि वेति भावः, कथमित्याह—'भावेन' विशुद्धपरिणामेन, बहिर्वृत्त्या तु कल्पप्रतिसेवया न्यूनान्यपि स्युरिति भावः, केषामित्याह—श्रमणानां—साधूनां, न पुनः श्रावकाणां, सर्वविरतावेव तेषामुक्तसङ्ख्याकानां सम्भवात्, अथवा भावेन श्रमणानां न तु द्रव्य-श्रमणानां, तेषामपि किंविधानामित्याह—'अखण्डचरित्रयुक्तानां' समग्रचरणप्रतिपन्नानां न तु दर्पप्रतिषेवया खण्डितचारित्रांशानां, नन्वखण्डचारित्रा एव सर्वविरता भवन्ति तत्खण्डने असर्वविरतत्वप्रसक्तेः, तथाहि—'पडिवज्ज अइकम्मे पंच' इत्यागमप्रामाण्यात् सर्व-विरतः पञ्चापि महाव्रतानि प्रतिपद्यते अतिक्रामति च पञ्चाप्येव नैकादिकमिति कथं सर्वविरतेर्देशखण्डनमिति ?, अत्रोच्यते, सत्यमे-तत्, किन्तु प्रतिपत्त्यपेक्षं सर्वविरतत्वं, परिपालनापेक्षया त्वन्यथाऽपि सञ्ज्वलनकषायोदयात्स्यात्, अत एवोक्तम्—"सव्वेवि य अइ-यारा संजलणाणं तु उदयओ होंती"ति [ सर्वेऽप्यतिचाराश्च संज्वलनानामेवोदयतो भवन्ति ] अतिचारा हि चारित्रदेशखण्डनरूपा एव,

तथैकव्रतातिक्रमे सर्वव्रतातिक्रम इति यदुक्तं तदपि विवक्षया, सा चेयं—"छेयस्स जाव दाणं ताव अइक्कमइ नेव एगंपि । एगं अइक्कमंतो अइक्कमे पंच मूलेणं ॥ १ ॥" [ छेदस्य यावद्दानं तावदतिक्राम्यति नैवैकमपि । एकमतिक्राम्यन् अतिक्राम्यति पञ्च ( शोधिश्च ) मूलेन ॥ १ ॥ ] एवमेव हि दशविधप्रायश्चित्तविधानं सफलं स्यात्, अन्यथा मूलाद्येव तत्स्यात्, व्यवहारनयतश्चातिचारसम्भवः निश्चयतस्त्वसर्वविरततया भङ्ग एवेति पर्याप्तं प्रपञ्चेनेति ॥ ८३९ ॥ कथं पुनरेकविधस्य शीलस्याङ्गानामष्टादश सहस्राणि भवन्तीत्याह—'जोए' इत्यादि, योगे—करणादिव्यापारे विषयभूते करणे—योगस्यैव साधकतमे मनःप्रभृतिके, संज्ञादीनि चत्वारि पदानि द्वन्द्वैकत्ववन्ति, तत्र संज्ञासु—चेतनाविशेषरूपासु आहारादिषु इन्द्रियेषु—अक्षेषु श्रोत्रादिषु भूम्यादिषु—पृथिव्यादिजीवकायेष्वजीवकाये च श्रमणधर्मे च—क्षान्त्यादौ शीलाङ्गसहस्राणां प्रस्तुतानामष्टादश परिमाणमस्य वृन्दस्येत्यष्टादशकं तस्य निष्पत्तिः—सिद्धिर्भवति ॥ ८४० ॥ योगादीनेव व्याख्यातुमाह—'करणाइं'ति विभक्तिलोपात्करणादयः—करणकारणानुमतयस्त्रयो योगा भवन्ति, तथा मनआदीनि तु—मनोवचनकायरूपाणि पुनर्भवन्ति—स्युः करणानि त्रीण्येव, तथा आहारादयः—आहारभयमैथुनपरिग्रहविषया वेदनीयभयमोहनीयवेदमोहनीयलोभकषायोदयसम्पाद्या अध्यवसायविशेषरूपाः, 'चउ'त्ति चतस्रः संज्ञा भवन्ति, तथा श्रोत्रादीनि—पश्चानुपूर्व्या श्रोत्रचक्षुर्घ्राणरसनस्पर्शनानीन्द्रियाणि पञ्च भवन्ति, उत्तरोत्तरगुणावाप्तिसाध्यानि शीलाङ्गानीति ज्ञापनार्थमिन्द्रियेषु पश्चानुपूर्वीति, तथा भूम्यादयः—पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रिया नव जीवा—जीवकायाः, अजीवकायस्तु—अजीवकायः पुनर्दशमो यः परिहार्यतयोक्तः स च महामूल्यवस्त्रपात्रसुवर्णरजतादिरूपो दुष्प्रत्युपेक्षिताप्रत्युपेक्षितदूष्यपुस्तकचर्मतृणपञ्चकादिरूपश्च, तथा श्रमणधर्मस्तु—यतिधर्मः पुनः क्षान्त्यादिः—क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चन्यब्रह्मचर्यरूपो दशविध इति, 'एवं'ति एवमुक्तन्यायेन 'स्थिते' औत्तराधर्येण पट्टकादौ

व्यवस्थिते त्रिचतुःपञ्चदशदशसङ्ख्ये मूलपदकलापे 'भावना' भङ्गप्रकाशना 'एषा' अनन्तरवक्ष्यमाणलक्षणा शीलाङ्गनिष्पत्तिविषयेति ॥ ८४१ ॥ ८४२ ॥ तामेवाह—'न करेइ'त्यादि, न करोतीति करणलक्षणः प्रथमयोग उपात्तः, मनसेति प्रथमं करणं, 'आहारसन्नविप्पजढगो'त्ति आहारसंज्ञाविप्रहीणः सन्, अनेन च प्रथमसंज्ञा तथा नियमेन—अवश्यन्तया श्रोत्रेन्द्रियसंवरणो—निरुद्धरागादिमच्छ्रोत्रेन्द्रियप्रवृत्तिः, अनेन च प्रथमेन्द्रियं, एवंविधः सन् किं न करोतीत्याह—पृथिवीजीवान् आरम्भविषयानिति शेषः, पृथिवीजीवारम्भं न करोतीति तात्पर्यार्थः, अनेन च प्रथमजीवस्थानं, क्षान्तिसंयुक्तः—क्षान्तिसम्पन्नः, अनेन च प्रथमश्रमणधर्मभेद उक्त इति ॥८४३॥ तदेवमेकं शीलाङ्गमाविर्भावितमिति, अथ शेषाण्यपि तान्यतिदेशतो दर्शयन्नाह—'इये'त्यादि, 'इति' अनेनैव पूर्वोक्ताभिलापेन मार्दवादियोगात्—मार्दवार्जवादिपदसंयोगेन 'पृथिवीकाये' पृथिवीकायमाश्रित्य पृथिवीकायारम्भमित्यभिलापेनेत्यर्थः सम्भवन्ति—स्युर्दश भेदा—दश शीलविकल्पाः, अप्कायादिष्वपि नवसु स्थानेषु, अपिशब्दो दशेत्यस्येह सम्बन्धनार्थः, इत्यनेन क्रमेण एते सर्वेऽपि भेदाः 'पिंडियं तु'त्ति प्राकृतत्वात् पिण्डिताः पुनः सन्तः अथवा पिण्डितं—पिण्डमाश्रित्य शतं—शतसङ्ख्याः स्युरिति, श्रोत्रेन्द्रियेणैतत् शतं लब्धं, शेषैरपि चक्षुरादिभिर्यद्—यस्मादिदं शतं प्रत्येकं लभ्यते, ततो मिलितानि पञ्च शतानि स्युः, पञ्चत्वादिन्द्रियाणां, एतानि चाहारसंज्ञायोगलब्धानि इति, एवं शेषाभिरपि भयसंज्ञादिभिस्तिसृभिः पञ्च पञ्च शतानि स्युः, सर्वमीलने च सहस्रद्वयं स्यात्, यतश्चतस्रः संज्ञा इति, एतत्सहस्रद्वितयं मनोयोगेन लब्धं, 'वयमाइएसु'त्ति वागाद्योः—वचनकाययोः प्रत्येकमेतत्सहस्रद्वयं, इत्येवं षट् सहस्राणि, त्रिसङ्ख्यत्वात् मनोवचनकाययोगानां, एतानि न करोतीत्यनेन लब्धानि, शेषयोरपि च कारणानुमत्योः षट् षट् सहस्राणि स्युः, एते अनन्तरोक्ताः सर्वेऽपि शीलभेदाः पिण्डिताः सन्तोऽष्टादश सहस्राणि भवन्तीति। आलापकगाथाश्चैवमत्र करणीयाः—'न करेमि मणसाऽऽहारसन्नविरओ उ सोय-

संगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥ एवं मद्दवगुणे वट्टमाणोऽहं २। अज्जवगुणे वट्टमाणोऽहं ३। यावद्बंभगुणे वट्टमाणोऽहं १०। एवमप्कायादिष्वपि गाथा भणनीयाः। तथा कारेमि न मणसाहारसन्नविरओ उ सोयसंगुत्तो। पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥' इत्यादि तथा—'नऽणुमन्ने मणसाहारसन्नविरओ उ सोयसंगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥' इत्यादि । नन्वेककयोगे एवाष्टादश सहस्राणि स्युर्यदा तु द्व्यादिसंयोगजन्या भङ्गका इह गृह्यन्ते तदा वहुतराः स्युः, तथाहि—एकद्व्यादिसंयोगेन योगेषु सप्त विकल्पाः, एवं करणेष्वपि, संज्ञासु पञ्चदश, इन्द्रियेष्वेकात्रिंशत्, भूम्यादिषु त्रयोविंशत्यधिकं सहस्रं, एवं क्षमादिष्वपीति, एषां च राशीनां परस्परगुणने द्वे कोटीसहस्रे त्रीणि कोटीशतानि चतुरशीतिः कोटयः एकपञ्चाशल्लक्षाणि त्रीणि षष्टिः सहस्राणि द्वे शते पञ्चषष्टिश्चेति ( २३८४५१६३२६५ ) ततः किमित्यष्टादशैव सहस्राण्युक्तानि ?, उच्यते, यदि श्रावकधर्मवदन्यतरभङ्गकेन सर्वविरतिप्रतिपत्तिः स्यात्तदा युज्येत तद्गुणनं, न चैवमेकतरस्यापि शीलाङ्गभङ्गकस्य शेषसद्भाव एव भावादन्यथा सर्वविरतिरेव न स्यादिति, उक्तं च —"इत्थ इमं विन्नेयं अइदंपज्जं तु बुद्धिमंतेहिं । एक्कंपि सुपरिसुद्धं सीलंगं सेससब्भावे ॥ १ ॥" अस्या व्याख्या—अत्र—शीलाङ्गाधिकारे इदं विज्ञेयमैदम्पर्य—तत्त्वं बुद्धिमद्भिः पुरुषैः, यदुत—एकमपि सुपरिशुद्धं शीलाङ्गं शेषसद्भावे—तदपरशीलाङ्गसत्तायामेव, तदेवं समुदितान्येवैतानि भवन्तीति न द्व्यादिसंयोगभङ्गकोपादानं अपि तु सर्वपदान्त्यभङ्गस्येयमष्टादशसहस्रांशतोक्ता, यथा त्रिविधं त्रिविधेनेत्यस्य नवांशतेति, अत एव श्रावकाणामेतानि न भवन्त्येव, किन्तु मनःस्थैर्यसम्पादनार्थं तेऽप्यनुमतिप्रधानेन स्वामिलापेन गाथोच्चारणमात्रमासूत्रयन्ति, अभिलापश्चायं—न करेंती मणसाहारसन्नविरया उ सोयसंगुत्ता । पुढवीकायारंभं धन्ना जे खंतिगुणजुत्ता १ ॥ १ ॥ एवं धन्ना

जे मद्दवुज्जुत्ता २, धन्ना जे अज्जवुज्जुत्ता ३, एवं यावद्धन्ना जे वंभगुणजुत्ता', इत्यादि ॥ ८४४ ॥ ८४५ ॥ ८४६ ॥ १२३ । इदानीं 'नयसत्तगं'ति चतुर्विंशत्युत्तरशततमं द्वारमाह—

**नेगम १ संगह २ ववहार ३ रिज्जुसुए ४ चेव होइ बोद्धवे । सद्दे ५ य समभिरूढे ६ एवंभूए ७ य मूलनया ॥ ८४७ ॥ एक्केक्को य सयविहो सत्त नयसया हवंति एवं तु । बीओवि य आएसो पंचेव सया नयाणं तु ॥ ८४८ ॥**

अनेकधर्मकं वस्त्वनवधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण प्रतिपाद्य स्वबुद्धिं नीयते—प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नयः, अयमत्र तात्पर्यार्थः—इह यो नाम नयो नयान्तरसापेक्षतया स्याद्वादलाञ्छितं वस्तु प्रतिपद्यते स परमार्थतः परिपूर्णं वस्तु गृह्णातीति प्रमाण एवान्तर्भवति, यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणानवधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स वस्त्वेकदेशपरिग्राहकत्वान्नय इत्युच्यते, स च नियमान्मिथ्यादृष्टिरेव, अयथावस्थितार्थवस्तुपरिग्राहकत्वात्, अत एवोक्तमन्यत्र 'सव्वे नया मिच्छावाइणो'त्ति [ सर्वे नया मिथ्यावादिनः ] यत एव च नयवादो मिथ्यावादः तत एव च जिनप्रवचनवेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सरं भाषन्ते न तु जातुचिदपि स्यात्कारविरहितं, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात्स्यात्पदं प्रयुञ्जते तथापि तत्राप्रयुक्तोऽपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्यः, प्रयोजकस्य कुशलत्वात्, उक्तं च—'अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते । विधौ निषेधेऽन्यत्रापि, कुशलश्चेत्प्रयोजकः ॥ १ ॥" अत्र 'अन्यत्रापी'ति अनुवादातिदेशादिवाक्येषु । ते च नया मूलभेदापेक्षया सप्त, तथा चाह—'नेगमे'त्यादि, नैगमः संग्रहो व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्यः।शब्दश्च समभिरूढ एवंभूतश्चेति मूल नया

इति गाथासङ्क्षेपार्थः। तत्र न एकं नैकं नायं नञ् किन्तु न इति 'अन् स्वरे' इति न भवति, प्रभूतानीत्यर्थः, ततो नैकैः—प्रभूतसङ्ख्याकैर्मानैः—महासामान्यावान्तरसामान्यविशेषादिविषयैः प्रमाणैर्मिमीते—परिच्छिनत्ति वस्तुजातमिति नैगमः, पृषोदरादित्वादिष्टरूपसिद्धिः, यद्वा निश्चितो गमो नैगमः परस्परविविक्तसामान्यादिवस्तुग्रहणं स एव प्रज्ञादेराकृतिगणतया स्वार्थिकाण्प्रत्ययविधानान्नैगमः, अथवा गमाः—पन्थानो नैके गमा यस्य स नैगमः, पृषोदरादित्वात्ककारस्य लोपः, बहुविधवस्त्वभ्युपगमपर इत्यर्थः, तथाहि—एष सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि तथा अन्त्यान् विशेषान्—सकलासाधारणरूपान् अवान्तरविशेषांश्च—पररूपव्यावर्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपान् प्रतिपद्यते, यतोऽसावेवमाह—संविन्निविष्टाः किल पदार्थव्यवस्थितयः,. तत्र सर्वेष्वपि पदार्थेषु द्रव्यादिरूपेषु सत् सदित्यविशेषेण प्रत्यय उपजायते वचनं च, न चैते तथारूपे प्रत्ययवचने द्रव्यादिमात्रनिबन्धने, द्रव्यादीनामसर्वव्यापकत्वात्, तथाहि—यदि द्रव्यमात्रनिबन्धनः सदिति प्रत्ययस्तर्हि स गुणादिषु न भवेत्, तत्र द्रव्यत्वाभावात्, गुणमात्रनिबन्धनत्वे द्रव्यादिषु न स्यात्, तत्र गुणत्वाभावात्, एवं सर्वत्रापि भावनीयं, ततोऽस्ति द्रव्यादिभ्यो व्यतिरिक्तं महासत्ताख्यं नाम सामान्यं यद्वशादविशेषेण सर्वत्र सदिति प्रत्यय इति । तथा नवसु द्रव्येषु द्रव्यं द्रव्यमित्यनुगताकारप्रत्ययदर्शनात् द्रव्यत्वं नामावान्तरसामान्यं प्रतिपत्तव्यं, एवं गुणत्वकर्मत्वगोत्वाश्वत्वादीन्यपि, अमूनि चावान्तरसामान्यानि सामान्यविशेषा इत्युच्यन्ते, यत एतानि स्वस्वाधारविशेषेषु अनुगताकारप्रत्ययवचनहेतुत्वात् सामान्यानि विजातीयेभ्यो व्यावर्तमानत्वाच्च विशेषा इति सामान्यविशेषाः, तथा तुल्यजातिगुणक्रियाधाराणां नित्यद्रव्याणां परमाण्वाकाशदिगादीनामत्यन्तव्यावृत्तिबुद्धिहेतुत्वादन्त्या विशेषाः ते च योगिनामेव प्रत्यक्षाः अस्मदादीनां त्वनुमेयाः, तथाहि—तुल्यजातिगुणक्रियाधाराः परमाणवो व्यावर्तकधर्मसम्बन्धिनो व्यावृत्तिप्रत्ययविषयत्वात्, मुक्ताफलराश्यन्तर्गतसचि-

हमुक्ताफलवत्, ये चावान्तरविशेषा घटपटादीनामितरेतरव्यावर्तनक्षमास्ते आबालगोपालाङ्गनादिजनानामपि प्रत्यक्षाः, एते च महासामान्यावान्तरसामान्यांत्यविशेषावान्तरविशेषाः परस्परविसकलितस्वरूपास्तथैव प्रतिभासमानत्वात्, तथाहि—न सामान्यग्राहिणि विज्ञाने विशेषावभासः नापि विशेषग्राहिणि सामान्यावभासः, ततः परस्परविनिर्लुठितस्वरूपाः, तथा चात्र प्रयोगः—यद्यथाऽवभासते तत्तथाऽभ्युपगन्तव्यं, यथा नीलं नीलतया, अवभासन्ते च ते परस्परविसकलितस्वरूपा इति नैगमः। नन्वेष यदि सामान्यविशेषाभ्युपगमपरस्तर्हि यत्सामान्यं तद् द्रव्यं ये तु विशेषास्ते पर्याया इति परमार्थतो द्रव्यास्तिकपर्यायास्तिकनयमतावलम्बित्वात् सम्यग्दृष्टिरेव प्रतिपन्नजिनमतत्वात्तथाविधसम्यग्जैनसाधुवत् ततः कथं मिथ्यादृष्टिः?, तदेतदयुक्तं, प्रतिपन्नजिनमतत्वासिद्धेः, परस्परविसंकलितसामान्यविशेषाभ्युपगमात्, तथाहि—एष परस्परमेकान्ततो विभिन्नावेव सामान्यविशेषाविच्छति, गुणगुणिनामवयवावयविनां क्रियाकारकाणां चात्यन्तभेदं, न पुनर्जैनसाधुरिव सर्वत्रापि भेदाभेदावतो मिथ्यादृष्टिः कणादवत्, कणादेनापि हि सकलमप्यात्मीयं शास्त्रं द्वाभ्यामपि द्रव्यास्तिकपर्यायास्तिकनयाभ्यां समर्थितं तथापि तन्मिथ्यात्वं, स्वविषयप्रधानतया परस्परमनपेक्षयोः सामान्यविशेषयोरभ्युपगमात्, उक्तं च—"जं सामन्नविसेसे परोप्परं वत्थुतो य से भिन्ने। (ग्रन्थाग्रं १०००० ) मन्नइ अच्चंतमतो मिच्छादिट्ठी कणादोव्व ॥ १ ॥ दोहिवि नएहिँ नीयं सत्थमुलूगेण तहवि मिच्छत्तं। जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥ २ ॥" [ यत् सामान्यविशेषौ परस्परं वस्तुतश्च तौ भिन्नौ। मन्यते अत्यन्तं अतः कणाद इव मिथ्यादृष्टिः ॥ १ ॥ द्वाभ्यामपि नयाभ्यामुलूकेन शास्त्रं नीतं तथापि मिथ्यात्वं। यत् स्वविषयप्रधानत्वात् अन्योऽन्यनिरपेक्षौ ( इति वदति ) ॥ २ ॥] १। तथा सङ्गृह्णाति—अशेषविशेषातिरोधानद्वारेण सामान्यरूपतया समस्तं जगदादत्ते इति सङ्ग्रह,, तथाहि—अयमेवं मन्यते—सामान्यमेवैकं तात्त्विकं न विशेषाः, ते हि भावलक्षणसामान्याद्व्यतिरिक्ता वा

भवेयुरव्यतिरिक्ता वा? गत्यन्तराभावात्, प्रथमपक्षे न सन्त्येव विशेषाः, भावाद्व्यतिरिक्तत्वादाकाशकुशेशयवत्, अथ द्वितीयः पक्षस्तर्हि विशेषा अपि भावमात्रमेव, तथाहि—भावमात्रं विशेषास्तदव्यतिरिक्तत्वात्, इह यद्यस्मादव्यतिरिक्तं तत्तदेव, यथा भावस्य स्वरूपं, अव्यतिरेकिणश्च भावाद्विशेषा इति, किं च—विशेषाग्रहो विशेषेण त्याज्यो विशेषव्यवस्थापकप्रमाणाभावात्, तथाहि—भेदरूपा विशेषाः, न च किञ्चन प्रमाणं भेदमवगाहते, प्रत्यक्षं हि भावसम्पादितसत्ताकं अतस्तमेव साक्षात्कर्तुमलं नाभावं, अभावस्य सकलशक्तिविरहरूपतया तदुत्पादने व्यापाराभावात्, अनुत्पादकस्य च साक्षात्करणे सर्वसाक्षात्करणप्रसङ्गः, तथा च सति विशेषाभावात्सर्वोऽपि द्रष्टा सर्वदर्शी स्यात्, अनिष्टं चैतत्, तस्माद्भावग्राहकमेव प्रत्यक्षमेष्टव्यं, स च भावः सर्वत्राविशिष्टस्तथैव तेन ग्राह्य इति न प्रत्यक्षाद् विशेषावगतिः, नाप्यनुमानादेः, प्रत्यक्षपूर्वकत्वाच्छेषप्रमाणपटलस्य, ततः सामान्यमेव परमार्थतः सत् न विशेषा इति सङ्ग्रहः २। तथा व्यवहरणं व्यवहारः, यदिवा विशेषतोऽवह्रियते—निराक्रियते सामान्यमनेनेति व्यवहारः, विशेषप्रतिपादनपरो व्यवहारनय इत्यर्थः, स ह्येवं विचारयति—यदि सदित्युक्ते घटपटाद्यन्यतमो विशेष एव कोऽप्यनिर्दिष्टस्वरूपः प्रतीयते न सङ्ग्रहनयसम्मतं सामान्यं तस्यार्थक्रियासामर्थ्यविकलतया सकललोकव्यवहारपथातीतत्वात् ततो विशेष एवास्ति न सामान्यं, इतश्च न सामान्यमुपलब्धिलक्षणप्राप्तस्य तस्यानुपलब्धेः, इह यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्तव्यं, यथा कचित्केवलभूतलप्रदेशे घटो, नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सत् सङ्ग्रहनयसम्मतं सामान्यमिति स्वभावानुपलब्धिः, अपि च—सामान्यं विशेषेभ्यो व्यतिरिक्तं स्यादव्यतिरिक्तं वा? स्यात्, यद्याद्यः पक्षस्तर्हि सामान्यस्याभाव एव, विशेषव्यतिरिक्तस्य सामान्यस्यासम्भवात्, न हि मुकुलितार्धमुकुलितादिविशेषविकलं किमप्याकाशकुसुममस्तीति परिभावनीयमेतत्, अथाव्यतिरिक्तं ततो विशेषा एव न सामान्यं तदव्यतिरिक्तत्वात्तत्स्वरूपवत्, यदपि चोक्तं 'प्रत्यक्षं

भावसम्पादितसकलसत्ताकं अतस्तमेव साक्षात्कर्तुमल'मित्यादि, तदपि बालप्रलपितं, प्रत्यक्षं हि नाम तेन सम्पादितसत्ताकमुच्यते यदुत्पन्नं सत्प्रत्यक्षं साक्षात् करोति, कुरुते च प्रत्यक्षं साक्षात् घटपटादिरूपं विशेषं न सङ्ग्रहनयसम्मतं सामान्यं, न च विशेषो घटपटादिरूपोऽभावो भावात्मकत्वात्, ततो नार्थक्रियाशक्तिविकल इत्यदोषः, ततो विशेष एव प्रत्यक्षादिप्रमाणप्रसिद्धो न सामान्यमिति सामान्याग्रह एव त्याज्यो न विशेषाग्रहः, किञ्च—यदेवार्थक्रियाकारि तदेव परमार्थसत्, न च सामान्यं दोहादिक्रियासूपयुज्यते किन्तु विशेषा एव गवादयः ततस्त एव तात्त्विकाः न सामान्यमिति, एष च व्यवहारनयो लोकसंव्यवहारपरः ततो यदेव लोकोऽभिमन्यते तदेवैषोऽपि न शेषं सन्तमपि, लोकश्च भ्रमरादौ परमार्थतः पञ्चवर्णाद्युपेतेऽपि कृष्णवर्णादित्वमेव प्रतिपन्नः, तस्य स्पष्टतयोपलभ्यमानत्वात्, तत एषोऽपि तदनुयायितया तदेवेच्छति न शेषान् सतोऽपि शुक्लादीन् वर्णानिति ३ । तथा ऋजु—प्रगुणमकुटिलमतीतानागतपरकीयवक्रपरित्यागाद्वर्तमानक्षणविवर्ति स्वकीयं च सूत्रयति—निष्टङ्कितं दर्शयतीति ऋजुसूत्रः, यदिवा ऋजुश्रुत इति शब्दसंस्कारः, तत्र ऋजुः—पूर्वोक्तवक्रविपर्ययादभिमुखं श्रुतं—ज्ञानमस्येति ऋजुश्रुतः, शेषज्ञानानभ्युपगमात्, तथाहि—अयं मन्यते यदतीतमनागतं वा तद्यथाक्रमं विनष्टत्वात् अलब्धात्मलाभाच्च नार्थक्रियासमर्थं नापि प्रमाणगोचरोऽथ चार्थक्रियासमर्थं प्रत्यक्षादिप्रमाणपथमवतीर्णं वस्तु न शेषं, अन्यथा शशशृङ्गादेरपि वस्तुत्वप्रसक्तेः, ततोऽर्थक्रियासामर्थ्यविकलत्वात् प्रमाणपथातीतत्वाच्च नातीतमनागतं वा वस्तु, यदपि च परकीयं वस्तु तदपि परमार्थतोऽसत् निष्प्रयोजनत्वात् परधनवत्, एष च ऋजुसूत्रो वार्तमानिकं वस्तु प्रतिपद्यमानो लिङ्गवचनभिन्नमप्येकं प्रतिपद्यते, तत्रैकमपि त्रिलिङ्गं यथा तटस्तटी तटं, तथैकमपि एकवचनद्विवचनबहुवचनवाच्यं यथा गुरुर्गुरू गुरवः गोदौ ग्रामः आपो जलं दाराः कलत्रमित्यादि, निक्षेपचिन्तायां च नामस्थापनाद्रव्यभावरूपांश्चतुरोऽप्यसौ निक्षेपानभिमन्यते ४ । तथा शब्द्यते—प्रतिपाद्यते वस्त्वनेनेति

शब्दः, शब्दस्य यो वाच्योऽर्थः स एव येन नयेन तत्त्वतो गम्यते न शेषः स नय उपचारात् शब्द इत्युच्यते, अस्य च द्वितीयं नाम साम्प्रत इति, साम्प्रतवस्त्वाश्रयणात् साम्प्रतः, तथाहि—एषोऽपि ऋजुसूत्रनय इव साम्प्रतमेव वस्त्वभ्युपगच्छति नातीतमनागतं वा, नापि वर्तमानमपि परकीयं, अपि च—निक्षेपचिन्तायां भावनिक्षेपमेव केवलमेष मन्यते न नामादीन् निक्षेपान्, तथा च नामादिनिक्षेपनिराकरणाय प्रमाणमाह—नामस्थापनाद्रव्यरूपा घटा न घटाः घटकार्यकारित्वाभावात् यद् घटकार्यकारि न भवति तन्न घटो यथा पटस्तथा चामी घटा घटकार्यकारिणो न भवन्ति तस्मान्न घटा इति नामादिघटानां घटत्वाभावः, इतश्च घटत्वाभावस्तल्लिङ्गादर्शनात्, न खलु नामादिघटेषु घटलिङ्गं पृथुबुध्नोदराद्याकाररूपं जलधारणरूपं वा किमप्युपलभामहे, अनुपलभमानाश्च तेषु कथं घटव्यपदेशप्रवृत्तिमिच्छामः ?, अपि च—नामादीन् घटान् घटत्वेन व्यपदिशत ऋजुसूत्रस्य प्रत्यक्षविरोधः, अघटरूपतया पटादीनामिव तेषां प्रत्यक्षत उपलभ्यमानत्वात्। अन्यच्च एष लिङ्गवचनभेदाद्वस्तुनो भेदं प्रतिपद्यते, यथा अन्य एव तटीशब्दस्य वाच्योऽर्थः अन्य एव तटशब्दस्य पुल्लिंगस्य, अपर एव च नपुंसकलिङ्गस्य, तथा अन्य एव गुरुरित्येकवचनवाच्योऽर्थः अन्य एव च गुरव इति बहुवचनवाच्यः, ततो न बहुवचनवाच्योऽर्थ एकवचनेन वक्तुं शक्यो, नाप्येकवचनवाच्यो बहुवचनेन, तथा न पुँल्लिङ्गार्थो नपुंसकलिङ्गेन वक्तुं शक्यः नापि स्त्रीलिङ्गेन नापि नपुंसकः पुंल्लिङ्गेन स्त्रीलिङ्गेन वा नापि स्त्रीलिङ्गः पुंल्लिङ्गेन नपुंसकलिङ्गेन वा, अर्थाननुयायितया तेषामर्थतो भिन्नत्वात्, तथा चात्र प्रयोगः—ये परस्परमर्थतोऽननुयायिनस्ते भिन्नार्था इति व्यवहर्तव्याः यथा घटपटादिशब्दाः, परस्परमर्थतोऽननुयायिनश्च लिङ्गवचनभेदभिन्नाः शब्दा इति, ये त्विन्द्रशक्रपुरन्दरादयः शब्दाः सुरपतिप्रभृतिलक्षणमेकमभिन्नलिङ्गवचनमधिकृत्याभिन्नलिङ्गवचनास्तेषामभिन्नोऽर्थ इत्येकार्थता ५। तथा सम्—एकीभावेन अभिरोहति—व्युत्पत्तिनिमित्तमास्कन्दति शब्दप्रवृत्तौ यः स समभिरूढः, एष हि पर्यायशब्दानामपि प्रविभक्तमे-

वार्थममिमन्यते, यथा घटनाद् घटः, विशिष्टा क्वापि या चेष्टा युवतिमस्तकाद्यारोहणादिलक्षणा सा परमार्थतो घटशब्दवाच्या, तद्वत्यर्थे पुनर्घटशब्दः प्रवर्तते उपचारात्, एवं 'कुट कौटिल्ये' कुटनात् कुटः, अत्र पृथुबुध्नोदरकम्बुग्रीवाद्याकारकौटिल्यं कुटशब्दवाच्यं, तथा 'उभ उंभ पूरणे' कुः–पृथिवी तस्यां स्थितस्य उम्भनात्–पूरणात्कुम्भः, अत्र यत् पृथिव्यां स्थितस्य पूरणं तत्कुम्भशब्दवाच्यं, एवं सर्वेषामपि पर्यायशब्दानां नानात्वं प्रतिपद्यते, वदति च–न शब्दान्तराभिधेयं वस्तु द्रव्यं पर्यायो वा तदन्यशब्दवाच्यवस्तुरूपतां सङ्क्रामति, न खलु पटशब्दवाच्योऽर्थो जातुचिदपि घटशब्दवाच्यवस्तुरूपतामास्कन्दति तथाऽनुपलम्भात् आस्कन्दने वा वस्तुसाङ्कर्योपपत्तिः, तथा च सति सकललोकप्रसिद्धप्रतिनियतविषयप्रवृत्तिनिवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः, ततो घटादिशब्दवाच्यानामर्थानां कुटादिशब्दवाच्यार्थरूपताऽनास्कन्दनान्न कुटादयः शब्दा घटाद्यर्थवाचका इति विभिन्नार्थाः पर्यायशब्दाः, प्रमाणयति च–इह ये ये प्रविभक्तव्युत्पत्तिनिमित्तकाः शब्दास्ते ते विभिन्नार्थाः यथा घटपटशकटादिशब्दाः, भिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा इति, यत्पुनरविचारितप्रतीतिवलादेकार्थाभिधायकत्वं पर्यायशब्दानां प्रतिपाद्यते, तदसमीचीनमतिप्रसङ्गात्, तथाहि–यदि युक्तिरिक्ताऽपि प्रतीतिः शरणीक्रियते तर्हि मन्दमन्दप्रकाशे दवीयसि देशे संनिविष्टमूर्तयो विभिन्ना अपि निम्बकदम्बाश्वत्थकपित्थादय एकतर्वाकारतामाबिभ्राणाः प्रतीतिपथमवतरन्तीत्येकतयैव तेऽभ्युपगन्तव्याः, न चैतदस्ति, विविक्ततत्स्वरूपग्राहिप्रत्यनीकप्रत्ययोपनिपातबाधितत्वेन पूर्वप्रतीतेर्विविक्तानामेव तेषामभ्युपगमात्, एवमन्यत्रापि भावनीयं, अन्यच्च–शब्दनय! यदि त्वया परस्परमर्थतो भिन्नत्वाल्लिङ्गवचनभिन्नानां शब्दानां भिन्नार्थता व्यवह्रियते ततः पर्यायशब्दानामपि किं न विभिन्नार्थताव्यवहारः क्रियते?, तेषामपि परस्परमर्थतो भिन्नत्वात्तस्मान्नैकार्थवाचिनः पर्यायध्वनय इति ६। तथा एवंशब्दः प्रकारवचनः एवं–यथा व्युत्पादितस्तं प्रकारं भूतः–प्राप्त एवम्भूतः शब्दः तत्समर्थनप्रधानो नयोऽप्येवम्भूतः उपचारात्,

अयं हि शब्दमर्थेन विशेपयति, अर्थवशान्नैयत्ये व्यवस्थापयतीति भावः, यथा स एव तत्त्वतो घटशब्दो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेपः, तथा अर्थं शब्देन विशेपयति, शब्दवशात्तच्छब्दवाच्यमर्थं प्रतिनियतं व्यवस्थापयतीति भावः, यथा या घटशब्दवाच्यत्वेन प्रसिद्धा चेष्टा सा घटनात् घट इति व्युत्पत्त्यर्थपरिभावनावलात् योपिदादिमस्तकारूढस्य घटस्य जलाहरणादिक्रियारूपा द्रष्टव्या न तु स्थानभरणक्रियारूपा, ततश्च यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव स्वरूपतो वर्तते तदैव तं शब्दं प्रवर्तमानमभिप्रैति न शेपकालं, यथोदकाद्याहरणवेलायां योपिदादिमस्तकारूढो विशिष्टचेष्टावान् घटो घटशब्दवाच्यो न शेपो घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात् पटादिवत्, तथा घटशब्दोऽपि तत्त्वतः स एव द्रष्टव्यो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेपः, शेपस्य स्वाभिधेयार्थशून्यत्वात्, एवं चैप व्युत्पत्तिनिमित्तार्थास्तित्वभूपितमेव तात्त्विकं शब्दमभिलपति, य एव पञ्चेन्द्रियत्रिविधवलादिरूपान् दशविधान् प्राणान् धारयति स एव नारकादिरूपः सांसारिकः प्राणी जीवशब्दवाच्यो न सिद्धः, सूत्रोक्तस्वरूपप्राणधारणलक्षणव्युत्पत्तिनिमित्तासम्भवात्, सिद्धस्त्वात्मादिशब्दवाच्यः; अतति—सातत्येन गच्छति तांस्तान् ज्ञानदर्शनसुखादिपर्यायानित्याद्यात्मादिशब्दव्युत्पत्तिनिमित्तसम्भवादिति ७ ॥८४७॥ सम्प्रत्येतेपामेव नयानां प्रभेदसङ्ख्यादर्शनार्थमाह—'एकैके'त्यादि, नया मूलभेदापेक्षया यथोक्तरूपा नैगमादयः सप्त, एकैकश्च प्रभेदतः शतविधः, ततः सर्वभेदगणनया सप्त नयशतानि भवन्ति, अन्योऽपि चादेशो—मतान्तरं पञ्चैव शतानि नयानां भवन्तीति, तथाहि—शब्दसमभिरूढैवम्भूतानां त्रयाणामपि नयानां शब्दपरत्वेनैकत्वविवक्षणात् पञ्चैव मूलनयाः, प्रत्येकं च शतप्रभेदत्वे पञ्च शतानीति, अपिशब्दात् पट् चत्वारि शतानि द्वे वा शते, तत्र पट् शतान्येवं—नैगमः सामान्यग्राही सङ्ग्रहे प्रविष्टो विशेपग्राही तु व्यवहारे, ततः पडेव मूलनयाः, एकैकश्च प्रभेदतः शतभेद इति पट् शतानि, तथा सङ्ग्रहव्यवहारऋजुसूत्रशब्दा इति चत्वार एव मूलनयाः एकैकश्च शतविध इति चत्वारि शतानि, शतद्वयं तु

नैगमादीनां ऋजुसूत्रपर्यन्तानां चतुर्णां द्रव्यास्तिकत्वात् शब्दादीनां तु त्रयाणां पर्यायास्तिकत्वात्तयोश्च प्रत्येकं शतभेदत्वात्, अथवा यावन्तो वचनपथास्तावन्तो नया इत्यसङ्ख्याताः प्रतिपत्तव्याः १२४ ॥ ८४८ ॥ इदानीं 'वत्थग्गहणविहाणं'ति पञ्चविंशत्युत्तरं शततमं द्वारमाह—

जन्न तयट्ठा कीयं नेव वुयं जं न गहियमन्नेसिं । आहडपामिच्चं चिय कप्पए साहुणो वत्थं ॥८४९॥ अंजणखंजणकद्दमलित्ते, मूसगभक्खियअग्गिविदड्ढे । उन्निय कुट्टिय पज्जवलीढे, होइ विवागो सुह असुहो वा ॥ ८५० ॥ नवभागकए वत्थे चउरो कोणा य दुन्नि अंता य । दो कन्नावट्टीउ मज्झे वत्थस्स एक्कं तु ॥ ८५१ ॥ चत्तारि देवया भागा, दुवे भागा य माणुसा । आसुरा य दुवे भागा, एगो पुण जाण रक्खसो ॥ ८५२ ॥ देवेसु उत्तमो लाभो, माणुसेसु य मज्झिमो । आसुरेसु य गेलन्नं, मरणं जाण रक्खसे ॥ ८५३ ॥

इह तावद्वस्त्रमेकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियावयवनिष्पत्तिभेदात् त्रिधा भवति, तत्र एकेन्द्रियावयवनिष्पन्नं कार्पासिकादि, विकलेन्द्रियावयवनिष्पन्नं कौशेयकादि एतच्च कारण एव गृह्यते, पञ्चेन्द्रियावयवनिष्पन्नं और्णिकादि, पुनरेकैकं त्रिधा—यथाकृताल्पपरिकर्मबहुपरिकर्मभेदात्, तत्र यानि परिकर्मरहितान्येव तथास्वरूपाणि लभ्यन्ते तानि यथाकृतानि, यानि चैकवारं खण्डित्वा सीवितानि तान्यल्पपरिकर्माणि, यानि पुनर्बहुधा खण्डित्वा सीवितानि तानि बहुपरिकर्माणि, इह च यान्यल्पपरिकर्माणि वस्त्राणि तानि बहुपरिकर्मवस्त्रापेक्षया स्तोकसंयमव्याघातकारीणीत्यतस्तदपेक्षया शुद्धानि, तेभ्योऽपि यथाकृतान्यतिशुद्धानि, मनागपि पलिमन्थादिदोषकारित्वाभावात्, ततो गृहद्भिः पूर्वं यथाकृतानि ग्राह्याणि तदलाभे चाल्पपरिकर्माणि तेषामप्यभावे बहुपरिकर्माण्यपि वस्त्राणि ग्राह्याणीति, एतच्च सर्वमपि वस्त्रं

गच्छवासिभिः कल्पनीयमेव ग्राह्यम्, तत्रैवं—यद्वस्त्रं न तदर्थं—व्रतिनिमित्तं क्रीतं, यच्च नैव व्रतिनिमित्तं 'वुयं'ति अन्तर्भूतण्यर्थत्वात् वायितं, यच्च नैव गृहीतमन्येषां सम्बन्धि, अनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय बलाद्यत्र गृहीतमिति भावः, एवंविधं वस्त्रं, तथा अभ्याहृतमपमित्यकं च त्यक्त्वा शेषं साधोः कल्पत इति, तत्र अभ्याहृतं द्वेधा—परग्रामाभ्याहृतं स्वग्रामाभ्याहृतं च, परग्रामाभ्याहृतं यदन्यस्माद् ग्रामादेः साधुनिमित्तमानीतं, स्वग्रामाभ्याहृतं हट्टादिभ्यो यद् व्रतिभिरदृष्टं यतिनिमित्तमेव गृहे समानीतं, व्रतिदृष्टं तु हट्टादिभ्योऽप्यानीतं गृहादिषु यतीनां ग्रहीतुं कल्पत इति, तथा अपमित्यकं—उद्धारकेणान्यस्माद् गृहीत्वा यद्ददाति, दोषाश्चात्रापि पिण्डवद्वाच्या इति, अपरं च—अत्राप्यविशोधिकोटिविशोधिकोटिद्वयं ज्ञातव्यं, तत्र मूलतो यत्यर्थं वायनादिकं वस्त्रस्याविशोधिकोटिः प्रक्षालनादिकं च यत्यर्थं क्रियमाणं विशोधिकोटिः, इदं च वस्त्रं यदा कल्पनीयमित्यवसितं भवति तदा द्वयोरप्यन्तयोर्गृहीत्वा सर्वतो निरीक्षणीयं, मा तत्र गृहिणां मणिर्वा सुवर्णं वा अन्यद्वा रूपकादिद्रव्यं निबद्धं स्यात्, ततः सोऽपि गृहस्थो भण्यते—निरीक्षस्व एतद्वस्त्रं सर्वतः, एवं च यदि तेन मण्यादि दृष्टं ततो गृहीतं, अथ न दृष्टं ततः साधुरेव दर्शयति एनमपनयेति, आह—गृहिणः कथिते कथमधिकरणं न भवति ?, उच्यते, कथिते स्तोकतर एव दोषः, अकथिते तु महानुड्डाहादिः स्यादिति ॥ अथ यादृशे वस्त्रे लब्धे शुभं भवति यादृशे चाशुभं भवतीत्येतदाह—'अंजणे'त्यादि, अञ्जनं—सौवीराञ्जनप्रभृतिकं तैलकज्जलाञ्जनप्रभृति वा खञ्जनं—दीपमलः कर्दमः—पङ्कस्तैर्लिप्ते—खरण्टिते वस्त्रे, तथा मूषकैरुपलक्षणत्वात्कंसारिकादिभिश्च भक्षिते तथाऽग्निना विशेषेण दग्धे तथा तुण्णिते तुन्नकारेण स्वकलाकौशलतः पूरितच्छिद्रे तथा कुट्टिते—रजककुट्टनेन पतितच्छिद्रे तथा पर्यवैः—पुराणादिभिः पर्यायैर्लीढे—युक्ते, अतिजीर्णतया कुत्सितवर्णान्तरादिसंयुक्ते इत्यर्थः, एवंविधे वस्त्रे गृहीते सति भवति विपाकः—परिणामः शुभोऽशुभो वा, इयमत्र भावना—गृहीतस्य वस्त्रस्य नव भागाः कल्प्यन्ते, तत्र च केषुचिद्भागेषु

अञ्जनखञ्जनादिके सति शुभं फलमुपजायते केषुचित्पुनरशुभमिति । अथ तानेव भागानाह—कल्पनया नवभिर्भागैः कृते वस्त्रे एते नव भागा विज्ञेयाः, यथा—चत्वारः कोणकास्तथा द्वावन्तौ ययोर्दशिका भवन्ति तथा द्वे कर्णपट्टिके, मध्ये च वस्त्रस्यैको भागः ॥ सम्प्रत्येतेषामेव विभागानां क्रमेण स्वामिन आह—चत्वारः कोणकरूपा भागा दैव्या—देवसम्बन्धिनः, द्वावन्त्यौ दशिकासम्बद्धौ भागौ मानुषौ—मनुष्यस्वामिकौ, द्वौ च विभागौ—कर्णपट्टिकालक्षणौ आसुरौ—असुरसम्बन्धिनौ सर्वमध्यगतः पुनरेको भागो राक्षसो—राक्षससम्बन्धीत्येवं क्रमेण नवानामपि विभागानां स्वामिनो जानीहीति ॥ अथैतेषु भागेषु अञ्जनादिसद्भावे प्रशस्ताप्रशस्तं फलमाह—दैव्येषु भागेषु यद्यञ्जनादिभिर्दूषितं वस्त्रं भवेत्तदा तस्मिन् गृहीते यतिजनस्य उत्तमो लाभो भवेद्वस्त्रपात्रादीनां, तथा मानुषभागयोरञ्जनादिभिः दूषिते वस्त्रे मुनीनां मध्यमो लाभः सम्पद्यते, तथा आसुरभागयोरञ्जनादिभिः दूषिते वस्त्रे गृह्यमाणे ग्लानत्वं व्रतिनां जायते, राक्षसभागे पुनरञ्जनादिदूषिते जानीहि यतीनां मरणमिति १२५ ॥ ८५३ ॥ साम्प्रतं 'ववहारा पंचेव'त्ति षड्विंशत्युत्तरशततमं द्वारमाह—

आगम १ सुय २ आणा ३ धारणा ४ य जीए ५ य पंच ववहारा । केवल १ मणो २ हि ३ चउदस ४ दस ५ नवपुव्वाइ ६ पढमोऽत्थ ॥ ८५४ ॥ कहेहि सव्वं जो वुत्तो, जाणमाणोऽवि गूहइ । न तस्स दिंति पच्छित्तं, बिंति अन्नत्थ सोहय ॥८५५॥ न संभरे य जे दोसे, सब्भावा न य मायओ । पच्चक्खी साहए ते उ, माइणो उ न साहए १ ॥८५६॥ आयारपकप्पाई सेसं सव्वं सुयं विणिद्दिट्ठं २ । देसंतरट्ठियाणं गूढपयालोयणा आणा ३ ॥८५७॥ गीयत्थेणं दिन्नं सुद्धिं अवहारिऊण तह चेव । दिं-

**तस्स धारणा तह उद्धियपयधरणरूवा वा ४ ॥ ८५८ ॥ दव्वाइ चिंतिऊणं संघयणाईण हाणिमासज्ज । पायच्छित्तं जीयं रूढं वा जं जहिं गच्छे ५ ॥ ८५९ ॥**

'आगमे'त्यादि व्यवह्रियन्ते जीवादयोऽनेनेति व्यवहारः अथवा व्यवहरणं व्यवहारो—मुमुक्षुप्रवृत्तिनिवृत्तिरूपः तत्कारणत्वाद् ज्ञानविशेषा अपि व्यवहारः, स च पञ्चप्रकारस्तद्यथा—आगम्यन्ते—परिच्छिद्यन्ते पदार्था अनेनेत्यागमः १ श्रवणं श्रूयते इति वा श्रुतं २ आज्ञाप्यते—आदिश्यते इत्याज्ञा ३ धरणं—धारणा ४ जीयत इति जीतं ५, तत्र प्रथमः—आगमव्यवहारः षड्विधः, कस्क इत्याह—केवलज्ञानं '**मणोहि**'त्ति 'पदैकदेशे पदसमुदायोपचारात्' मनःपर्यायज्ञानं अवधिज्ञानं '**चउदस दस नव पुव्वाइं**'ति पूर्वशब्दः प्रत्येकमभिसम्बध्यते चतुर्दश पूर्वाणि दश पूर्वाणि नव पूर्वाणि च एष सर्वोऽप्यागमव्यवहार उच्यते इति, इह च यदि केवली प्राप्यते तदा तस्यैवालोचना दीयते तदभावे मनःपर्यायज्ञानिनः तस्याप्यभावेऽवधिज्ञानिनः इत्यादि यथाक्रमं वाच्यं ॥ ८५४ ॥ तत्र केवल्यादिरागमव्यवहारी स्वयमपि तावत्सर्वं जानात्येव ततोऽतिचारजातं शिष्यस्य स्वयमपि प्रकटीकृत्य प्रायश्चित्तं ददाति अन्यथा वेत्याशङ्क्य प्रासङ्गिकं तावदाह—'कहेही'त्यादि कथय सर्वं दोषजातमिति आगमव्यवहारिणा प्रोक्तो यः शिष्यो जानानोऽपि स्वदोषान् मायावितया गूहति—गोपायति न तस्मै—मायाविने प्रायश्चित्तं ददति आगमव्यवहारिणः, किन्तु ब्रुवते—'**अन्यत्र**' अन्यस्य समीपे गत्वा शोधय—शोधिं गृहाण, यस्तु सद्भावत एव दोषान् कांश्चिन्न स्मरति न पुनर्मायया तस्य तान् दोषान् प्रत्यक्षी—प्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थः '**साहए**'त्ति कथयति, मायाविनस्तु न कथयतीति, एतदुक्तं भवति—आगमव्यवहारी यदि केवलज्ञानादिबलेनैतज्जानाति यथैष भणितः सन् शुद्धभावत्वात् सम्यक्प्रतिपत्स्यते इति तदा स्मारयति यथाऽमुकं तवालोचनीयं विस्मृतं ततस्तदप्यालोचयेति, यदि पुनरेतदवगच्छति यथैष भणितोऽपि सन् मायावितया न सम्यक्प्रतिपत्स्यते

इति तदा तमप्रतिपत्स्यमानं नैव स्मारयति निष्फलत्वात्, अमूढलक्षो हि भगवानागमव्यवहारी, अत एव दत्तायामप्यालोचनायां यथालोचकः सम्यगावृत्तो ज्ञातस्ततस्तस्मै प्रायश्चित्तं प्रयच्छति, अथ न प्रत्यावृत्तस्ततो न प्रयच्छतीति, ननु चतुर्दशपूर्वधरादेः कथं प्रत्यक्षज्ञानित्वं ?, तस्य श्रुतज्ञानित्वेन परोक्षज्ञानित्वात्, उच्यते, चतुर्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात्, तथाहि—येन यथा योऽतिचारः कृतस्तं तथा सर्वमेते जानन्तीति, अथ यदि आगमव्यवहारिणः सर्वभावविषयं परिज्ञानं ततः कस्मात्तस्य पुरत आलोच्यते ?, किन्तु तस्य समीपमुपगम्य वक्तव्यमपराधं मे भवन्तो जानते तस्य शोधिं प्रयच्छतेति, उच्यते, आलोचिते वहुगुणसम्भवतः सम्यगाराधना भवति, तथाहि—आलोचनाऽऽचार्येण स आलोचकः प्रोत्साह्यते, यथा वत्स! त्वं भाग्यवान् यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयसि, महादुष्करमेतत्, एवं स प्रोत्साहितः सन् प्रवर्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति शोधिं च सम्यक्प्रतिपद्यते ततः पर्यन्ते आराधना स्तोककालेन च मोक्षगमनमिति ॥ ८५५ ॥ ८५६ ॥ अथ श्रुतव्यवहारमाह—'आयारे'त्यादि, आचारप्रकल्पो—निशीथस्तदादिकं कल्पव्यवहारदशाश्रुतस्कन्धप्रभृतिकं, एकादशाङ्गावशेषपूर्वप्रमुखं च शेषं श्रुतं—सर्वमपि श्रुतव्यवहारः, नवादिपूर्वाणां श्रुतत्वाविशेषेऽप्यतीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वात् केवलादिवदागमत्वेनैव व्यपदेशः, एते च श्रुतव्यवहारिणः स्फुटतरोपलब्धिनिमित्तं त्रीन् वारानालोचनार्हमालोचापयन्ति, ते ह्येकं द्वौ वा वारावालोचिते अनेन सम्यगालोचितमसम्यग्वेति विशेषं नावगच्छन्तीति, कथमालोचापयन्तीति चेदुच्यते प्रथमवेलायां निद्रायमाण इव शृणोति, ततो ब्रूते—निद्राप्रमादं गतवानहमिति न किमप्यश्रौषमतो भूयोऽप्यालोचय, द्वितीयवारमालोचिते भणति—न सुष्ठु मयाऽधुनाऽवधारितमनुपयोगभावादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशार्थमालोचितं ततो ज्ञातव्यमेषोऽमायावी, अथ विसदृशं तर्हि ज्ञातव्यमेष परिणामतः कुटिल इति,

एवं च सति तस्यापि प्रत्यय उपजायते यथाऽहं विसदृशभणनेन मायावी लक्षित इति, ततो मायानिष्पन्नं प्रायश्चित्तं पूर्वं दातव्यं तदनन्तरमपराधनिमित्तमिति ॥ अथ आज्ञाव्यवहारमाह—'देसंते'त्यादि, देशान्तरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचना—निजातिचारनिवेदनमाज्ञाव्यवहारः, एतदुक्तं भवति—यदा द्वावप्याचार्यावासेवितसूत्रार्थतया गीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दूरतरदेशान्तरव्यवस्थितौ अत एव परस्परस्य समीपं गन्तुमसमर्थावभूतां, तदाऽन्यतरः प्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थशिष्याभावे सति मतिधारणाकुशलमगीतार्थमपि शिष्यं समयभाषया गूढार्थान्यतीचारासेवनपदानि कथयित्वा प्रेषयति, तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं वा तत्र गमनं करोति शिष्यं वा तथाविधं योग्यं गीतार्थं प्रज्ञाप्य प्रेषयति तदभावे तस्यैव प्रेषितस्य गूढार्थामतिचारशुद्धिं कथयतीति ॥ ८५७ ॥ अथ धारणाव्यवहारमाह—'गीयत्थे'त्यादि, इह गीतार्थेन संविग्नेनाचार्येण कस्यापि शिष्यस्य कचिदपराधे द्रव्यक्षेत्रकालभावपुरुषान् प्रतिसेवनाश्चावलोक्य या शुद्धिः प्रदत्ता तां शुद्धिं तथैवावधार्य सोऽपि शिष्यो यदाऽन्यत्रापि तादृश एवापराधे तेष्वेव द्रव्यादिषु तथैव प्रायश्चित्तं ददाति तदाऽसौ धारणानाम चतुर्थो व्यवहारः, उद्धृतपदधारणरूपा वा धारणा, इदमुक्तं भवति—वैयावृत्त्यकरणादिना कश्चिद्गच्छोपकारी साधुरद्याप्यशेषच्छेदश्रुतयोग्यो न भवति ततस्तस्यानुग्रहं कृत्वा यदा गुरुरुद्धृतान्येव कानिचित्प्रायश्चित्तपदानि कथयति तदा तस्य तेषां पदानां धरणं धारणाऽभिधीयते इति ॥ ८५८ ॥ अथ जीतव्यवहारमाह—'दव्वाई'त्यादि, येष्वपराधेषु पूर्वमहर्षयो बहुना तपःप्रकारेण शुद्धिं कृतवन्तस्तेष्वप्यपराधेषु साम्प्रतं द्रव्यक्षेत्रकालभावान् विचिन्त्य संहननधृतिबलादीनां च हानिमासाद्य समुचितेन केनचित्तपःप्रकारेण यां गीतार्थाः शुद्धिं निर्दिशन्ति तत्समयपरिभाषया जीतमुच्यते, अथवा यत्प्रायश्चित्तं यस्याचार्यस्य गच्छे सूत्रातिरिक्तं कारणतः प्रवर्तितं अन्यैश्च बहुभिरनुवर्तितं तत्तत्र रूढं जीतमुच्यते, तदेवमेतेषां

पञ्चानां व्यवहाराणामन्यतरेणापि व्यवहारेण युक्त एव प्रायश्चित्तप्रदाने गीतार्थो गुरुरधिक्रियते न त्वगीतार्थः, अनेकदोषसम्भवात्
उक्तं च—'अगीओ न वियाणइ सोहिं चरणस्स देइ ऊणऽहियं । तो अप्पाणं आलोयगं च पाडेइ संसारे ॥ १ ॥' इति
[ अगीतार्थो न विजानीते चरणस्य शोधिं ददात्यूनामधिकां वा । तत आत्मानमालोचकं च पातयति संसारे ॥ १ ॥ ] १२६ ॥ ८५९ ॥

इदानीं 'पंच अहाजाय'त्ति सप्तविंशत्युत्तरशततमं द्वारमाह—

**पंच अहाजायाइं चोलगपट्टो १ तहेव रयहरणं २ । उन्निय ३ खोमिय ४ निस्सेज्जजुयलयं तह य मुहपोत्ती ५ ॥ ८६० ॥**

चोलपट्टस्तथा रजोहरणं तथा और्णिकक्षौमनिषद्यायुगलकं तथा मुखपोतिका एतानि पञ्च यथाजातानि, यथाजातं—जन्म तच्च श्रमणत्वमाश्रित्य द्रष्टव्यं, चोलपट्टादिमात्रोपकरणयुक्त एव हि श्रमणो जायते अतस्तद्योगादेतान्यपि यथाजातान्युच्यन्ते, तत्र चोलपट्टः प्रतीत एव, वाह्याभ्यन्तरनिषद्याद्वयरहितमेकनिषद्यं सदशं रजोहरणं, इह किल सम्प्रति दशिकाभिः सह या दण्डिका क्रियते सा सूत्रनीत्या केवलैव भवति न सहदशिका, तस्याश्च निषद्यात्रयं, तत्र या दण्डिकाया उपरि तिर्यग्वेष्टकत्रयप्रमाणपृथुत्वा एकहस्तायामा कम्बलीखण्डरूपा सा आद्या निषद्या, तस्याश्चाग्रे हस्तत्रिभागायामा दशिकाः सम्बद्ध्यन्ते, एषा च निषद्या दशिकाकलिताऽत्र रजोहरणशब्देन गृह्यते उक्तं च—"एगनिसेज्जं च रयहरण"मिति [ एकनिषद्यावच्च रजोहरणं ॥ ] द्वितीया त्वेनामेव निषद्यां तिर्यग्बहुभिर्वेष्टकैरावेष्टयन्ती किञ्चिदधिकहस्तप्रमाणायामा हस्तप्रमाणमात्रपृथुत्वा वस्त्रमयी निषद्या सा अभ्यन्तरनिषद्या, इयं च क्षौमिकनिषद्याग्रहणेनेह गृह्यते, तृतीया तु तस्या एवाभ्यन्तरनिषद्यायाः तिर्यग्वेष्टकान् बहून् कुर्वन्ती चतुरङ्गुलाधिकैकहस्तमाना चतुरस्रा कम्बलमयी भवति, सा चोपवेशनोप-

कारित्वादधुना पादप्रोञ्छनकमिति रूढा, इयं बाह्या निषद्येत्यभिधीयते, अस्यास्त्विह और्णिकनिषद्याग्रहणेन ग्रहणमिति, तथा मुखपिधानाय पोतं—वस्त्रं मुखपोतं, मुखपोतमेव ह्रस्वं चतुरङ्गुलाधिकवितस्तिमात्रप्रमाणत्वान्मुखपोतिका मुखवस्त्रिकेत्यर्थः, 'अतिवर्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानी'ति वचनाच्च प्रथमतो नपुंसकत्वेऽपि कप्रत्यये समानीते स्त्रीत्वमिति १२७ ॥ ८६० ॥ इदानीं **'निसिजागरणविहि'**त्ति अष्टाविंशत्युत्तरशततमं द्वारमाह—

**सव्वेऽवि पढमयामे दोन्नि य वसहाण आइमा जामा । तइओ होइ गुरूणं चउत्थ सव्वे गुरू सुयइ ॥ ८६१ ॥**

सर्वेऽपि साधवः प्रथमयामे—रात्रेः प्रथमं प्रहरं यावत् स्वाध्यायाध्ययनादि कुर्वाणा जाग्रति, द्वौ च आद्यौ यामौ वृषभाणां, वृषभा इव वृषभा—गीतार्थाः साधवस्तेषां, अयमर्थः—द्वितीये यामे ये सूत्रवन्तः साधवस्ते स्वपन्ति वृषभास्तु जाग्रति, ते च जाग्रतः **प्रज्ञापना**दिसूत्रार्थं परावर्तयन्ति, तृतीयः प्रहरो भवति गुरूणां, कोऽर्थः ?—प्रहरद्वयानन्तरं वृषभाः स्वपन्ति गुरवस्तूत्थिताः प्रज्ञापनादि गुणयन्ति चतुर्थं प्रहरं यावत्, चतुर्थे च प्रहरे सर्वेऽपि साधवः समुत्थाय वैरात्रिकं कालं गृहीत्वा कालिकश्रुतं परावर्तयन्ति, गुरुः पुनः स्वपिति, अन्यथा प्रातर्निद्राघूर्णमानलोचनास्तद्वशादेव च भज्यमानपृष्ठका व्याख्यानभव्यजनोपदेशादिकं कर्तुं ते सोद्यमाः सन्तो न शक्नुवन्तीति १२८ ॥ ८६१ ॥ इदानीं 'आलोयणदायगन्नेस'त्त्येकोनत्रिंशदुत्तरशततमं द्वारमाह—

**सल्लुद्धरणनिमित्तं गीयस्सऽन्नेसणा उ उक्कोसा । जोयणसयाइं सत्त उ बारस वासाइं कायव्वा ॥ ८६२ ॥**

'शल्योद्धरणनिमित्तं' आलोचनार्थं 'गीतस्य' गीतार्थस्य गुरोरन्वेषणा तुः पुनरर्थे उत्कृष्टा क्षेत्रतः सप्तैव योजनशतानि यावत्कर्तव्या कालतस्तु द्वादश वर्षाणि यावदिति, अयमर्थः—संनिहित एव गीतार्थो यदि न लभ्यते तदा योजनशतसप्तप्रमाणक्षेत्रेऽसावुत्कृष्टतोऽन्वेषणीयः कालतस्तु द्वादश वर्षाणि यावत्समागच्छन् प्रतीक्षणीय इति, नन्वेतावति क्षेत्रे तदन्वेषणार्थं पर्यटन्नेतावन्तं च कालं तमागच्छन्तं प्रतीक्षमाणः स यदि अन्तरालेऽप्रदत्तालोचनोऽपि म्रियते तदा किमयमाराधको न वेति ?, उच्यते, आलोचनां दातुं सम्यक्परिणतोऽन्तराऽपि म्रियमाणोऽयमाराधक एव, विशुद्धाध्यवसायसम्पन्नत्वात्, उक्तं च—"आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसयासे । जइ अंतरावि कालं करेज्ज आराहओ तहवि ॥ १ ॥" [ आलोचनापरिणतः सम्यक् संप्रस्थितो गुरुसकाशे । यद्यन्तराऽपि कालं कुर्यात् तथाप्याराधकः ॥ १ ॥ ] अथैवमन्वेषणेऽपि सकलोक्तगुणगुरुर्गुरुर्न प्राप्यते तदा संविग्नगीतार्थमात्रस्याप्यालोचना दातव्या, यतः श्रूयते —अपवादतो गीतार्थसंविग्नपाक्षिकसिद्धपुत्रप्रवचनदेवतानामलाभे सिद्धानामप्यालोचना देया, सशल्यमरणस्य संसारकारणत्वात् इति, आह च—"संविग्गे गीयत्थे असई पासत्थमाइसारूवी" [ संविग्ने गीतार्थे असति पार्श्वस्थादयः सरूप्यन्ताः इति ] १२९ ॥ ८६२ ॥ सम्प्रति 'गुरुपमुहाणं कीरइ असुद्धसुद्धेहिँ जत्तियं कालं ।' इति त्रिंशदुत्तरशततमं द्वारमाह—

**जावज्जीवं गुरुणो असुद्धसुद्धेहिँ वावि कायव्वं । वसहे बारस वासा अट्ठारस भिक्खुणो मासा ॥ ८६३ ॥**

यावज्जीवमाजन्मापीत्यर्थः गुरोः—आचार्यस्य शुद्धैः—आधाकर्मादिदोषादूषितैरशुद्धैर्वाऽपि—आधाकर्मादिदोषयुक्तैर्वाऽपि अशनपानभैषजादिभिः कर्तव्यं प्रतिजागरणमिति शेषः, अयमर्थः—शुद्धैरशुद्धैश्च ते यावज्जीवमपि प्रतिजागरणीयाः साधुश्रावकलोकेन, सर्वस्यापि च ग-

च्छस्य तदधीनत्वात् यथाशक्ति निरन्तरं सूत्रार्थनिर्णयप्रवृत्तेश्च, तथा वृषभे—उपाध्यायादिके द्वादश वर्षाणि यावत् प्रतिजागरणा शुद्धैरशुद्धैर्वस्तुभिश्च विधेया, ततः परं शक्तौ भक्तविवेकः, एतावता कालेनान्यस्यापि समस्तगच्छभारोद्वहनसमर्थस्य वृषभस्य उत्थानात्, तथा अष्टादश मासान् यावद्भिक्षोः—सामान्यसाधोः शुद्धैरशुद्धैः प्रतिजागरणा विधेया, ततः परमसाध्यतया शक्तौ सत्यां भक्तविवेकस्यैव कर्तुमुचितत्वात्, इदं च शुद्धाशुद्धाशनादिभिराचार्यादीनां परिपालनं रोगाद्यभिभूतवपुषां क्षेत्रकालादेः परिहाणिवशतो भक्ताद्यलाभवतां च विधेया (यं) न पुनरेवमेव सुस्थावस्थायामिति, व्यवहारभाष्ये तु सर्वसामान्यग्लानप्रक्रियाव्यवस्थार्थमियं गाथा लिखिताऽस्ति, यथा—"छम्मासे आयरिओ कुलं तु संवच्छराइँ तिन्नि भवे। संवच्छरं गणो खलु जावज्जीवं भवे संघो ॥ १ ॥" अस्या व्याख्या—प्रथमत आचार्यः षड् मासान् यावच्चिकित्सां ग्लानस्य कारयति, तथाप्यप्रगुणीभूतं तं कुलस्य समर्पयति, ततः कुलं त्रीन् संवत्सरान् यावच्चिकित्सकं भवति, तथाप्यप्रगुणीभवने कुलं गणस्य तं समर्पयति, तदनन्तरं संवत्सरं यावद्गणः खलु चिकित्सां कारयति, तथाप्यनिवर्तितरोगे तं गणः सङ्घस्य समर्पयति, ततः सङ्घो यावज्जीवं—प्रासुकप्रत्यवतारेण तदभावे चाप्रासुकेनापि यावज्जीवं चिकित्सको भवति, एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतः, यः पुनर्भक्तविवेकं कर्तुं शक्नोति तेन प्रथमतोऽष्टादश मासान् चिकित्सा कारयितव्या, विरतिसहितस्य जीवितस्य पुनः संसारे दुष्प्रापत्वात्, तदनन्तरं चेत्प्रगुणीभवति ततः सुन्दरं, अथ न भवति तर्हि भक्तविवेकः कर्तव्य इति १३० ॥ ८६३ ॥ इदानीं 'उवहिधोयणकालो'त्ति एकत्रिंशदुत्तरशततमं द्वारमाह—

**अप्पत्ते चिय वासे सव्वं उवहिं धुवंति जयणाए। असईए उदगस्स उ जहन्नओ पायनिज्जोगो**

**॥ ८६४ ॥ आयरियगिलाणाणं मइला मइला पुणोवि धोइज्जा । मा हु गुरूण अवण्णो लोगम्मि अजीरणं इअरे ॥ ८६५ ॥**

अप्राप्त एव—अनायाते एव वर्षे—वर्षाकाले वर्षाकालान्मनागर्वाक्तने काले इत्यर्थः, जलादिसामग्र्यां सत्यामुत्कर्षतः सर्वमुपधिं—उपकरणं यतनया यतयः प्रक्षालयन्ति, उदकस्य—जलस्य पुनरसति—अभावे जघन्यतोऽपि पात्रनिर्योगोऽवश्यं प्रक्षालनीयः, इह निस्पूर्वो युजिरुपकारे वर्तते, उक्तं च पाठोदूखले 'निज्जोगो उवयारो' इति, तत्र निर्युज्यते—उपक्रियतेऽनेनेति निर्योगः—उपकरणं पात्रस्य निर्योगः पात्रनिर्योगः—पात्रोपकरणं पात्रकबन्धादिः, उक्तं च—"पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया । पडलाइं रयत्ताणा गोच्छओ पायनिज्जोगो ॥ १ ॥" इति, आह—किं सर्वेषामेव वस्त्राणि वर्षाकालादर्वागेव प्रक्षाल्यन्ते? किं वाऽस्ति केषाञ्चिद्विशेषः?, अस्तीति ब्रूमः, ॥ ८६४ ॥ केषामिति चेदत आह—'आयरिये'त्यादि, आचार्याः—प्रवचनार्थव्याख्याधिकारिणः सद्धर्मदेशनादिगुणग्रामभूरयः सूरयः, आचार्यग्रहणमुपलक्षणं तेनोपाध्यायादीनां प्रभूणां परिग्रहः, तेषां, तथा ग्लाना—मन्दास्तेषां च पुनः पुनर्मलिनानि २ वस्त्राणि प्रक्षालयेत्, प्राकृतत्वाच्च मलिनानीत्यत्र सूत्रे पुंस्त्वनिर्देशः, प्रस्तुतेऽर्थे कारणमाह—'मा हु' इत्यादि, मा भवतु हुः—निश्चितं गुरूणां मलिनवस्त्रपरिधाने लोकेऽवर्णः—अश्लाघा, यथा निराकृतयोऽमी मलदुरभिगन्धोपलिप्तदेहाः ततः किमेतेषामुपकण्ठं गतैरस्माभिरिति, तथा इतरस्मिन्—ग्लाने मा भवत्वजीर्णमिति, मलक्लिन्नवस्त्रप्रावरणे हि शीतलमारुतादिसम्पर्कतः शैत्यसम्भवेन भुक्ताहारस्यापरिणतौ ग्लानस्य विशेषतो मान्द्यमुज्जृम्भते इति, इह वर्षाकालप्रत्यासन्नं कालमपहाय शेषे ऋतुबद्धे काले चीवरप्रक्षालनं यतीनां न कल्पते, प्राण्युपमर्दोपकरणबकुशत्वाद्यनेकदोषसम्भवात्, नन्वेते दोषा वर्षाकालादर्वागपि वस्त्रप्रक्षालने सम्भवन्ति ततस्तदानीमपि न चीवराणि प्रक्षालनीयानि, तन्न,

तदानीं चीवरप्रक्षालनस्य सूत्रोक्तनीत्या बहुगुणत्वात्, येऽपि च प्राण्युपमर्दादयो दोषास्तेऽपि यतनया प्रवर्तमानस्य न सम्भवन्ति, यो हि सूत्राज्ञामनुसृत्य यतनया सम्यक्प्रवर्तते स यद्यपि कथञ्चित्प्राण्युपमर्दकारी तथापि नासौ पापभाग्भवति नापि तीव्रप्रायश्चित्तभागी, सूत्रबहुमानतो यतनया प्रवर्तमानत्वात्, अत एवोक्तम्—'धुवंति जयणाए' इति १३१ ॥ ८६५ ॥ इदानीं 'भोयणभाय'त्ति द्वात्रिंशदुत्तरशततमं द्वारं व्याचिख्यासुः प्रथमतः कवलमानमाह—

बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥ ८६६ ॥ अद्धमसणस्स सवंजणस्स कुज्जा दवस्स दो भाए । वायपवियारणट्ठा छब्भागं ऊणयं कुज्जा ॥ ८६७ ॥ सीओ उसिणो साहारणो य कालो तिहा मुणेयव्वो । साहारणंमि काले तत्थाहारे इमा मत्ता ॥ ८६८ ॥ सीए दवस्स एगो भत्ते चत्तारि अहव दो पाणे । उसिणे दवस्स दुन्नी तिन्निवि सेसा उ भत्तस्स ॥ ८६९ ॥ एगो दवस्स भागो अवट्ठिओ भोयणस्स दो भागा । वड्ढंति व हायंति व दो दो भागा उ एक्के ॥ ८७० ॥

पुरुषस्य कुक्षिपूरक आहारो मध्यमप्रमाणो द्वात्रिंशत्कवलाः, किलेत्याहारस्य मध्यमप्रमाणतायाः संसूचकं, महेलायाः कुक्षिपूरक आहारो मध्यमप्रमाणोऽष्टाविंशतिः कवला इति ॥ ८६६ ॥ अथ भोजनभागप्रतिपादनार्थमेवाह (ग्रन्थाग्रं ९०००)—'अद्धे'त्यादि, इह किल सर्वमुदरं षड्भिर्भागैर्विभज्यते, तत्रार्धं—त्रीन् भागानशनस्य—कूरमुद्गमोदकादेः सव्यञ्जनस्य—तक्रतीमनभर्जिकासहितस्य योग्यं कुर्यात्—विदध्यात्, तथा द्रवस्य—पानीयस्य योग्यौ द्वौ भागौ कुर्यात्, षष्ठं तु भागं वातप्रविचारणार्थं—वायुसञ्चलनार्थमूनकं कुर्यात्, अन्यथा हि वायुविष्कम्भतः

शरीरे रोगादिसम्भव इति ॥ ८६७ ॥ इह कालापेक्षया तथा तथा भवति आहारस्य प्रमाणं, कालश्च त्रिधा, तथा चाह—'सीओ' इत्यादि, त्रिधा कालो ज्ञातव्यः, तद्यथा—शीत उष्णः साधारणश्च, 'तत्र' तेषु कालेषु मध्ये साधारणे काले आहारे—आहारविषये इयं—अनन्तरोक्ता मात्रा—प्रमाणं ॥ ८६८ ॥ 'सीए' इत्यादि, शीते—अतिशयेन शीतकाले द्रवस्य—पानीयस्य एको भागः कल्पनीयः चत्वारो भक्ते—भक्तस्य, मध्यमे तु शीतकाले द्वौ भागौ पानीयस्य कल्पनीयौ त्रयस्तु भागा भक्तस्य, अथवेतिशब्दो मध्यमशीतकालसंसूचनार्थः, तथा उष्णे—मध्यमोष्णकाले द्वौ भागौ द्रवस्य—पानीयस्य कल्पनीयौ शेषास्तु त्रयो भागा भक्तस्य, अत्युष्णे च काले त्रयो भागा द्रवस्य शेषौ तु द्वौ भागौ भक्तस्य, वाशब्दोऽत्रात्युष्णकालसंसूचनार्थः, सर्वत्र च षष्ठो भागो वायुप्रविचारणार्थं मुत्कलो मोक्तव्यः ॥ ८६९ ॥ सम्प्रति भागानां चरस्थिरविभागप्रदर्शनार्थमाह—'एगो' इत्यादि, एको द्रवस्य भागोऽवस्थितो, न कदाचिदपि न भवतीति भावः, द्वौ च भागौ भोजनस्य, शेषौ तु द्वौ द्वौ भागौ एकैकस्मिन्—भक्ते पाने चेत्यर्थः, वर्धेते वा हीयेते वा, वृद्धिं वा व्रजतो हानिं वा व्रजत इत्यर्थः, तथाहि—अतिशीतकाले द्वौ भागौ भोजनस्य वर्धेते अत्युष्णकाले च पानीयस्य, अत्युष्णकाले च द्वौ भागौ भोजनस्य हीयेते अतिशीतकाले च पानीयस्येति ॥ ८७० ॥ १३२ ॥

साम्प्रतं 'वसहिसुद्धि'त्ति त्रयस्त्रिंशदुत्तरशततमं द्वारमाह—

पट्टीवंसो दो धारणाउ चत्तारि मूलवेलीओ । मूलगुणेहिं विसुद्धा एसा हु अहागडा वसही ॥ ८७१ ॥ वंसगकडणोक्कंवण छायण लेवण दुवारभूमी य । परिकम्मविप्पमुक्का एसा मूलुत्तरगुणेसु ॥ ८७२ ॥ दूमिय धूविय वासिय उज्जोइय बलिकडा अवत्ता य । सित्ता संमट्ठावि य विसो-

**दिकोडिं गया वसही ॥ ८७३ ॥ मूलुत्तरगुणसुद्धं थीपसुपंडगविवज्जियं वसहिं । सेविज्ज सव्वकालं विवज्जए हुंति दोसा उ ॥ ८७४ ॥**

उपरितनस्तिर्यक्पाती पृष्ठवंशो गृहसम्बन्धी मध्यवलक इत्यर्थः द्वौ मूलधारिण्यौ—स्तम्भौ ययोरुपरि पृष्ठवंशस्तिर्यक् स्थाप्यते, ततस्तो मूलवेलयश्चतुर्षु गृहपार्श्वेषु, उभयोर्धारणयोरुभयतो द्विद्विवेलिसम्भवात्, एते च वसतेः सप्त मूलगुणाः, एतैर्मूलगुणैः स्वनिमित्तमार्यं कृतैः सद्भिर्वसतिर्विशुद्धा भवति, या पुनः साधुसङ्कल्पेन निष्पादितैर्मूलगुणैर्युक्ता एषा द्रुः—स्फुटं आधाकृता भवति—साधूनाधाय—सन्धाय कृता आधाकृता आधाकर्मिकीत्यर्थः, उक्ता मूलगुणविशुद्धा वसतिः, अथोत्तरगुणविशुद्धाऽभिधीयते, ते चोत्तरगुणा द्विविधाः—मूलोत्तरगुणा उत्तरोत्तरगुणाश्च, तत्र प्रथमं तावन्मूलोत्तरगुणानाह—'वंसगे'त्यादि, वंशका ये मूलवेलीनामुपरि स्थाप्यन्ते, पृष्ठवंशस्योपरि तिर्यक् कटनं—कटादिभिः समन्ततः पार्श्वाणामाच्छादनं उत्कम्बनं—उपरि कम्बिकानां बन्धनं छादनं—दर्भादिभिराच्छादनं लेपनं—कुड्यानां कर्दमेन गोमयेन च लेपप्रदानं 'दुवार'त्ति संयतनिमित्तमन्यतो वसतेर्द्वारकरणं बृहद्द्वारस्य लघुद्वारकरणं वा 'भूमि'त्ति विषमाया भूमेः समीकरणं, एते सप्त मूलभूता उत्तरगुणा मूलोत्तरगुणाः, उत्तरगुणेषु एते मूलगुणा इत्यर्थः, एतद्रूपं यत्परिकर्म—साध्वर्थमेतेषां निष्पादनं तेन विप्रमुक्ता—विरहिता या वसतिरेषा मूलोत्तरगुणेषु विशुद्धा, एतानि सप्त साध्वर्थं यत्र न कृतानि सा मूलोत्तरगुणविशुद्धा वसतिरिति भावः, एते च पृष्ठवंशादयश्चतुर्दशाप्यविशोधिकोटिः, उत्तरोत्तरगुणास्तु विशोधिकोटिः, ते चामी—'दूमिये'त्यादि, दूमिया नाम—सुकुमारलेपनेन कोमलीकृतकुड्या खटिकया धवलीकृतकुड्या च धूपिता—दुर्गन्धेतिकृत्वाऽगुरुधूपादिभिः सुगन्धीकृता वासिता—पटवासपुष्पादिभिरपनीतदौर्गन्ध्या उद्योतिता—रत्नप्रदीपादिभिरन्धकारे प्रकाशिता बलीकृता—कूरापूपकूरादिबलिविधाना अवत्ता—छगण-

एतैरुत्तरोत्तरगुणैः संयतनिमित्तं मृत्तिकाभ्यां जलेन चोपलिप्तभूमितला सिक्ता—केवलोदकेन आर्द्रीकृता सम्मृष्टा—सम्मार्जिन्या प्रमार्जिता, कृतैर्विशोधिकोटिं गता वसतिः, अविशोधिकोटौ न भवतीत्यर्थः, यत्र तु साध्वर्थमेते न निष्पादिताः सा वसतिर्विशुद्धैवेति । तथा चाह —'मूलुत्त'त्यादि, मूलोत्तरगुणपरिशुद्धां तथा स्त्रीपशुपण्डकविवर्जितां वसतिं सेवेत सर्वकालं, विपर्यये—अशुद्धायां स्त्र्यादिसंसक्तायां च वसतौ भवन्ति दोषा इति, एतदनुसारतस्तु चतुःशालादिष्वपि मूलोत्तरगुणविभागो विज्ञेयः, यत्पुनरिह सूत्रे चतुःशालाद्यपेक्षया मूलोत्तरगुणविभागः साक्षान्नोक्तस्तत्रेदं कारणं—यथा विहरतां साधूनां श्रुताध्ययनादिव्याक्षेपपरिहारार्थं प्रायो ग्रामादिष्वेव वासः सम्भवति, तत्र च वसतिः पृष्ठवंशादियुक्तैव भवति, ततस्तासामेव वसतीनां साक्षाद्ग्रहणमिति, उक्तं च—"चाउस्सालाईए विन्नेओ एवमेव उ विभागो । इह मूलाइगुणाणं सक्खा पुण सुण न जं भणिओ ॥ १ ॥ विहरंताणं पायं समत्तकज्जाण जेण गामेसु । वासो तेसु य वसही पट्ठाइजुया अओ तासिं ॥ २ ॥" ॥ ८७४ ॥ १३३ ॥ साम्प्रतं 'संलेहणा दुवालस वरिसे'त्ति चतुस्त्रिंशदुत्तरशततमं द्वारमाह—

**चत्तारि विचित्ताइं ४ विगईनिज्जूहियाइं चत्तारि ४ । संवच्छरे य दोन्नि उ एगंतरियं च आयामं १० ॥ ८७५ ॥ नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं । अवरेऽवि य छम्मासे होइ विगिट्ठं तवोकम्मं ११ ॥ ८७६ ॥ वासं कोडीसहियं १२ आयामं कट्टु आणुपुव्वीए । गिरिकंदरं व गंतुं पाओवगमं पवज्जेइ ॥ ८७७ ॥**

संलेखनं संलेखना—आगमोक्तेन विधिना शरीराद्यपकर्षणं, सा च त्रिविधा—जघन्या पाण्मासिकी मध्यमा संवत्सरप्रमाणा उत्कृष्टा तु द्वादश वर्षाणि, तत्र उत्कृष्टा तावदेवं—प्रथमं चत्वारि वर्षाणि 'विचित्राणि' विचित्रतपांसि करोति, किमुक्तं भवति?—चत्वारि वर्षाणि

यावत्कदाचिच्चतुर्थं कदाचित् षष्ठं कदाचिदष्टमं एवं दशमद्वादशादीन्यपि करोति, पारणकं च सर्वकामगुणितेनोद्गमादिशुद्धेनाहारेण विधत्ते, ततः परमन्यानि चत्वारि वर्षाणि उक्तप्रकारेण विचित्रतपांसि करोति विकृतिनिर्यूहितानि—विकृतिरहितानि, किमुक्तं भवति?—विचित्रं तपः कृत्वा पारणके निर्विकृतिकं भुङ्क्ते उत्कृष्टरसवर्जं च, ततः परतोऽन्ये द्वे च वर्षे एकान्तरितमाचाम्लं करोति, एकान्तरं चतुर्थं कृत्वा आचाम्लेन पारयतीत्यर्थः, एवमेतानि दश वर्षाणि गतानि, एकादशस्य तु वर्षस्याद्यान् षण्मासान् 'नातिविकृष्टं' नातिगाढं तपः करोति, नातिविकृष्टं नाम तपश्चतुर्थं षष्ठं वाऽवसेयं नाष्टमादिकं, पारणके तु परिमितं—किञ्चिदूनोदरतासम्पन्नमाचाम्लं करोति, ततः परमपरान् षण्मासान् विकृष्टं—अष्टमदशमद्वादशादिकं तपःकर्म भवति, पारणके तु मा शीघ्रमेव मरणं यासिषमितिकृत्वा परिपूर्णघ्राण्या आचाम्लं करोति, न पुनरूनोदरतयेति, द्वादशं तु वर्षं कोटीसहितं निरन्तरमाचाम्लं करोतीत्यर्थः । उक्तं च निशीथचूर्णौ—"दुवालसमं वरिसं निरंतरं हायमाणं उसिणोदएण आयंबिलं करेइ, तं कोडिसहियं भवइ, जेणायंबिलस्स कोडी कोडीए मिलइ"त्ति । चतुर्थं कृत्वा आचाम्लेन पारयति, पुनश्चतुर्थं विधायाचाम्लेनैव पारयतीत्यादीन्यपि बहूनि मतान्तराणि द्वादशस्य वर्षस्य विषये वीक्ष्यन्ते, परं ग्रन्थगौरवभयान्नात्र लिखितानीति । इह च द्वादशे वर्षे भोजनं कुर्वन् प्रतिदिनमेकैककवलहान्या तावदूनोदरतां करोति यावदेकं कवलमाहारयति, ततः शेषेषु दिनेषु क्रमश एकेन सिक्थेनोनमेकं कवलमाहारयति द्वाभ्यां सिक्थाभ्यां त्रिभिः सिक्थैरेवं यावदन्ते एकमेव सिक्थं भुङ्क्ते, यथा दीपे समकालं तैलवर्तिक्षयो भवति तथा शरीरायुषोरपि समकं क्षयः स्यादिति हेतोः, अपरं चेह द्वादशस्य वर्षस्य पर्यन्तवर्तिनश्चतुरो मासान् यावदेकान्तरितं तैलगण्डूषं चिरकालमसौ मुखे धारयति, ततः खेलमल्लके भस्समध्ये प्रक्षिप्य मुखमुष्णोदकेन शोधयति, यदि पुनस्तैलगण्डूषविधानं न कार्यते तदा रूक्षत्वात्तेन मुखयन्त्रमीलनसम्भवे पर्यंतसमये नमस्कारमुच्चारयितुं न शक्नोतीति,

तदेवमनयाऽऽनुपूर्व्या—क्रमेण द्वादशवार्षिकीमुत्कृष्टां संलेखनां कृत्वा गिरिकन्दरां च गत्वा उपलक्षणमेतत् अन्यदपि षट्कायोपमर्दरहितं विविक्तं स्थानं गत्वा पादपोपगमनं, वाशब्दाद्भक्तपरिज्ञामिंगिनीमरणं वा प्रपद्यते, मध्यमा तु संलेखना पूर्वोक्तप्रकारेण द्वादशभिर्मासैः जघन्या च द्वादशभिः पक्षैः परिभावनीया, वर्षस्थाने मासान् पक्षांश्च स्थापयित्वा तपोविधिः प्रागिव निरवशेष उभयत्रापि भावनीय इति भावः ॥ ८७५ ॥ ८७६ ॥ ८७७ ॥ १३४ ॥ इदानीं **'वसहेण वसहिगहणं'**ति पंचत्रिंशदुत्तरशततमं द्वारमाह—

**नयराइएसु घेप्पइ वसही पुव्वामुहं ठविय वसहं । वामकडीइ निविट्ठं दीहीकअग्गिमेकपयं ॥ ८७८ ॥ सिंगक्खोडे कलहो ठाणं पुण नेव होइ चलणेसु । अहिठाणे पोट्टरोगो पुच्छंमि य फेडणं जाण ॥ ८७९ ॥ मुहमूलंमि य चारी सिरे य कउहे य पूयसक्कारो । खंधे पट्टीय भरो पुट्टंमि य धायओ वसहो ॥ ८८० ॥**

नगरग्रामादिषु पूर्वाभिमुखं वामकट्या—वामपार्श्वेण निविष्टं—उपविष्टं दीर्घीकृताग्रिमैकपादं—आयतीकृताग्रतनैकतरचरणं वृषभं—बलीवर्दं बुद्ध्या स्थापयित्वा—निवेश्य वसतिर्गृह्यते, अयमर्थः—यावन्मात्रं क्षेत्रं वसिमाक्रान्तं भवति तावत्सर्वमपि वामपार्श्वोपविष्टपूर्वाभिमुखवृषभरूपं बुद्ध्या परिकल्प्य प्रशस्तेषु प्रदेशेषु साधुभिर्वसतिर्ग्राह्येति ॥ ८७८ ॥ इत्थं च क्षेत्रे वृषभरूपे कल्पिते कुत्रावयवे वसतिः क्रियमाणा किम्फला भवति ?, तत्राह—**'सिंगे'**त्यादि, शृङ्गप्रदेशे यदि वसतिं करोति तदा निरन्तरं व्रतिनां कलहो भवति, तथा स्थानं—अवस्थितिः पुनर्नैव भवति चरणेषु—पादप्रदेशेषु क्रियमाणायां वसतौ, तथाऽधिष्ठाने—अपानप्रदेशे वसतौ क्रियमाणायां मुनीनां उदररोगो भवति, तथा पुच्छे—पुच्छप्रदेशे क्रियमाणायां वसतौ स्फेटनं—अपनयनं वसतेर्जानीहि, तथा मुखमूले वसतौ क्रियमाणायां **'चारि'**त्ति भोजनसम्पत्तिः

साधूनां भव्या भवति, तथा शिरसि—शृङ्गयोर्मध्ये ककुदे वा—अंशकूटप्रदेशे वसतिकरणे पूजा—प्रवरवस्त्रपात्रादिप्रदानलक्षणा सत्कारश्च—अभ्युत्थानादिरूपो व्रतिनां भवति, तथा स्कन्धप्रदेशे पृष्ठप्रदेशे च वसतौ सत्यां भरो भवति—साधुभिरितस्तत आगच्छद्भिर्वसतिराकुला भवति, तथा 'पोट्टंमि य'त्ति उदरदेशे वसतौ विधीयमानायां ध्रातः—तृप्तो भवति वृषभो—वृषभकल्पो भवति गृहीतवसतिनिवासी यतिजन इति ॥ ८७९ ॥ ८८० ॥ १३५ ॥ इदानीं 'उसिणस्स फासुयस्सवि जलस्स सच्चित्तया कालो' इति षट्त्रिंशदुत्तरशततमं द्वारमाह—

**उसिणोदगं तिदंडुक्कलियं फासुयजलंति जइकप्पं । नवरि गिलाणाइकए पहरतिगोवरिवि धरियव्वं ॥ ८८१ ॥ जायइ सचित्तया से गिम्हंमि पहरपंचगस्सुवरिं । चउपहरोवरि सिसिरे वासासु पुणो तिपहरुवरिं ॥ ८८२ ॥**

त्रिभिर्दण्डैः—उत्कालैरुत्कालितं—आवृत्तं यदुष्णोदकं तथा यत्प्रासुकं—स्वकायपरकायशस्त्रोपहतत्वेनाचित्तीभूतं जलं तदेव यतीनां कल्प्यं—ग्रहीतुमुचितं, इह किल प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्रः द्वितीये प्रभूतः परिणमति स्तोकोऽवतिष्ठते तृतीये तु सर्वोऽप्यप्कायोऽचित्तो भवतीति त्रिदण्डग्रहणं, इदं च सर्वमपि प्रहरत्रयमध्य एवोपभोक्तव्यं, प्रहरत्रयादूर्द्ध्वं पुनः कालातिक्रान्तदोषसम्भवेनोपभोगानर्हत्वान्न धारणीयं, नवरं—केवलं ग्लानादिकृते—ग्लानवृद्धादीनामर्थाय प्रहरत्रिकादप्यूर्द्ध्वं धर्तव्यमिति ॥ ८८१ ॥ 'जाये'त्यादि, जायते—भवति सचित्तता 'से'त्ति तस्य उष्णोदकस्य प्रासुकजलस्य वा ग्लानाद्यर्थं धृतस्य 'ग्रीष्मे' उष्णकाले प्रहरपञ्चकस्योपरि—प्रहरपञ्चकादूर्द्ध्वं, कालस्यातिरूक्षत्वाच्चिरेणैव जीवसंसक्तिसद्भावात्, तथा शिशिरे—शीतकाले कालस्य स्निग्धत्वात्प्रहरचतुष्टयादूर्द्ध्वं सचित्तता

भवति, वर्षासु—वर्षाकाले पुनः कालस्यातिस्निग्धत्वात्प्रासुकीभूतमपि जलं भूयः प्रहरत्रयादूर्द्ध्वं सचित्तीभवति, तदूर्द्ध्वमपि यदि ध्रियते तदा क्षारः प्रक्षेपणीयो येन भूयः सचित्तं न भवतीति ॥ ८८२ ॥ १३६ ॥ इदानीं 'तेरिच्छिमाणवीओ देवीओ तिरियमणुयदेवाणं। जग्गुणाओ जत्तियमेत्ताहिगाउ'त्ति सप्तत्रिंशदुत्तरशततमं द्वारमाह—

**तिगुणा तिरूवअहिया तिरियाणं इत्थिया मुणेयव्वा। सत्तावीसगुणा पुण मणुयाणं तयहिया चेव ॥ ८८३ ॥ बत्तीसगुणा बत्तीसरूवअहिया य तह य देवाणं। देवीओ पन्नत्ता जिणेहिं जियराग-दोसेहिं ॥ ८८४ ॥**

त्रिगुणास्त्रिभी रूपैरधिकाश्च तिरश्चां पुंवेदिनां स्त्रियो ज्ञातव्याः, कोऽर्थः?—असत्कल्पनया सर्वेभ्यस्तिर्यग्योनिकपुरुषेभ्यः प्रत्येकं तिस्र-स्तिस्रस्तिर्यक्स्त्रियो दीयन्ते तिस्रश्च तिर्यक्स्त्रिय उद्धरन्ति ततो न तद्योग्यस्तिर्यग्योनिकः पुमान् प्राप्यत इति, एवमुत्तरत्रापि भावना कार्या, तथा मनुष्याणां स्त्रियो मनुष्यपुरुषेभ्यः सप्तविंशतिगुणाः तदधिकाश्च—सप्तविंशतिरूपाधिकाः, तथा देवपुरुषेभ्यो देवस्त्रियो द्वात्रिं-शद्गुणा द्वात्रिंशद्रूपाधिकाश्च प्रज्ञप्ताः—कथिता जिनैर्जितरागद्वेषैरिति ॥ ८८३ ॥ ८८४ ॥ १३७ ॥ इदानीं 'अच्छेरयाण दसगं'ति अष्ट-त्रिंशदुत्तरशततमं द्वारमाह—

**उवसग्ग १ गब्भहरणं २ इत्थीतित्थं ३ अभाविया परिसा ४। कण्हस्स अवरकंका ५ अवयरणं चंदसूराणं ६ ॥ ८८५ ॥ हरिवंसकुलुप्पत्ती ७ चमरुप्पाओ ८ य अट्ठसयसिद्धा ९। अस्संजयाण पूया १० दसवि अणंतेण कालेणं ॥ ८८६ ॥ सिरिरिसहसीयलेसुं एक्केक्कं मल्लिनेमिनाहे य। वीर-**

**जिणिंदे पंच उ एगं सव्वेसु पाएणं ॥ ८८७॥ रिसहे अट्ठऽहियसयं सिद्धं सीयलजिणंमि हरिवंसो ।**
**नेमिजिणेऽवरकंकागमणं कण्हस्स संपन्नं ॥ ८८८ ॥ इत्थीतित्थं मल्ली पूया असंजयाण नवमजिणे ।**
**अवसेसा अच्छेरा वीरजिणिंदस्स तित्थंमि ॥ ८८९ ॥**

आ—विसयतश्चर्यन्ते—अवगम्यन्ते जनैरित्याश्चर्याणि—अद्भुतानि, तानि च उपसर्गादीनि दश, तत्रोपसृज्यते—क्षिप्यते वाध्यते प्राणी धर्मादिभिरित्युपसर्गाः—सुरनरादिकृतोपद्रवाः, ते च योजनशतमिते क्षेत्रे प्रशमितदुर्वारवैरमारिविड्वरदुर्भिक्षाद्युपद्रवोद्रेकस्यापि वरेण्यपुण्यापणस्यापि तीर्थकरस्यापि भगवतः **श्रीमहावीरस्य** छद्मस्थकाले केवलिकाले च नरामरतिर्यक्कृताः समभवन्, इदं च किल न जातुचिद् जातपूर्वं, तीर्थकरा हि निखिलनरामरतिरश्चां सत्कारस्थानमेव, नोपसर्गभाजनं, अनन्तकालभाव्ययमर्थो लोकेऽद्भुतभूत इति १ । तथा गर्भस्य—स्त्रीकुक्षिसमुद्भूतसत्त्वस्य संहरणं—अन्यस्त्रीकुक्षौ सङ्क्रामणं गर्भसंहरणं, एतच्च तीर्थङ्करमुद्दिश्याभूतपूर्वमस्यामवसर्पिण्यां भगवतः **श्रीमहावीरस्य** जातं, तथाहि—**श्रीमहावीरजीवो मरीचिभवे** समुपार्जितनीचैर्गोत्रकर्मा प्राणतकल्पपुष्पोत्तरविमानाच्च्युत्वा ब्राह्मणकुण्डग्रामे ऋषभदत्तापरनामधेयसोमिलद्विजदयिताया देवानन्दायाः कुक्षावाषाढशुक्लपष्ठ्यामवातरत्, इतश्च द्व्यशीतिदिनेषु समतिक्रान्तेषु सौधर्माधिपतिरुपयुक्तावधिर्न तीर्थकृतः कदाचनापि नीचैःकुलेषु जायन्ते इति विमृश्य भुवनगुरुभक्तिभरभावितमनाः पदात्यनीकाधिपतिं हरिणेगमेषिमादिक्षत्—यथैष भरतक्षेत्रे चरमतीर्थकृत् प्रागुपात्तकर्मशेषपरिणतिवशतस्तुच्छकुले जातः तदयमितः संहृत्य क्षत्रियकुण्डग्रामे प्रसिद्धसिद्धार्थपार्थिवपत्न्यास्त्रिशलादेव्याः कुक्षौ स्थाप्यतामिति, ततः स हरिणेगमेषिस्तथेति प्रतिपद्याश्वयुक्कृष्णत्रयोदशीदिवसे रात्रौ प्रथमप्रहरद्वयमध्ये **देवानन्दा**भिधानब्राह्मण्युदरात् त्रिशलादेव्याः कुक्षौ भगवन्तं संहृतवान्, एतदप्यनन्तकालभावित्वादाश्चर्यमेवेति २ ।

तथा स्त्री–योषित्तस्यास्तीर्थङ्करत्वेनोत्पन्नायास्तीर्थं–द्वादशाङ्गं सङ्घो वा स्त्रीतीर्थं, तीर्थं हि त्रिभुवनातिशायिनिरुपमानमहिमानः पुरुषा एव प्रवर्तयन्ति, इह त्ववसर्पिण्यां कुम्भकनृपतिपुत्र्या मल्लयभिधानया एकोनविंशतितमतीर्थंकरत्वेनोत्पन्नया तीर्थं प्रवर्तितं, तथाहि–इहैव जम्बूद्वीपे द्वीपेऽपरविदेहे सलिलावतीविजये वीतशोकायां नगर्यां महाबलो नाम भूपतिरभूत्, स च सुचिरपरिपालितराज्यः षड्भिर्बालमित्रैः सममार्हतं धर्ममाकर्ण्य वरधर्ममुनीन्द्रसमीपे प्रवव्राज, तैश्च सप्तभिरपि यदेकस्तपः करिष्यति तदन्यैरपि कर्तव्यमिति प्रतिज्ञाय सर्वं चतुर्थादितपश्चक्रे, अन्यदा च महाबलमुनिस्तेभ्यो विशिष्टतरफलेप्सया पारणकदिने पादोऽद्य मे दुष्यति शिरोऽद्य मे दुष्यति दुष्युदरमद्य मे नास्ति मेऽद्य क्षुदित्यादिव्यपदेशेन मायया तान् वञ्चयित्वा तपश्चक्रे, तेन च मायामिश्रेण तपसा स्त्रीवेदकर्म अर्हद्वात्सल्यादिभिः विंशतिस्थानैस्तीर्थकृन्नामकर्म च बद्ध्वा पर्यन्तसमये समयोक्ताराधनया विपद्य वैजयन्तविमानेषु सुरः समुत्पेदे, ततश्च्युत्वा च मिथिलानगर्यां कुम्भाभिधवसुधाधिपतेः पत्न्याः **प्रभावत्याः** प्राग्जन्मकृतमायासमुपार्जितस्त्रीवेदकर्मवशतो मल्लयभिधाना पुत्री समभवत्, क्रमेण च प्राप्तयौवना यथाविधि प्रव्रज्यां प्रतिपद्य केवलज्ञानमुपागमत्, अष्टमहाप्रातिहार्यप्रभृतितीर्थंकरसमृद्धिसंशोभिता च तीर्थं प्रवर्तयामासेति, अस्यापि भावस्यानन्तकालजातत्वादाश्चर्यतेति ३ । तथा अभव्या–अयोग्या चारित्रधर्मस्य पर्षत्–तीर्थकरसमवसरणस्थितश्रोतृलोकाः, श्रूयते हि भगवतः श्रीवर्धमानस्वामिनो जृम्भिकग्रामाद्बहिः समुत्पन्ननिःसपत्नकेवलालोकस्य तत्कालसमायातसङ्ख्यातीतसुरविसरविरचितसुचारुसमवसरणस्य भूरिभक्तिकुतूहलाकुलितमिलितापरिमितामरनरतिरश्चां स्वस्वभाषानुसारिणा सजलजलधरध्वानानुकारिणाऽतिमनोहारिणा महाध्वनिना धर्मकथां कुर्वाणस्यापि न केनचिद्विरतिः प्रतिपन्ना, केवलं प्रथमसमवसरणेऽवश्यमेव तीर्थंकृद्भिः कर्तव्या धर्मदेशनेति स्थितिपरिपालनायैव धर्मकथा बभूव, न चैतत्तीर्थकरस्य कस्यापि भूतपूर्वमित्याश्चर्यं ४ । तथा कृष्णस्य–नवमवासुदेवस्यापरकङ्काभिधाना नगरी

गमनगोचरोऽभूदित्यभूतपूर्वत्वादाश्चर्यं, इह किल श्रूयते हस्तिनागपुरे युधिष्ठिरप्रष्ठाः पञ्चापि पाण्डवाः काम्पिल्यपुराधिपद्रुपदनृपपुत्र्या द्रौपद्या सह सहर्षं वारकेण विषयसुखमुपभुञ्जानाः परमप्रमोदेन दिनान्यतिवाहयन्ति स्म, अन्येद्युर्नारदनामा मुनिर्मनःसमीहितान् देशान् परिभ्राम्यन् द्रौपदीमन्दिरमाययौ, द्रौपद्या चाविरतोऽयमिति मत्वा नमस्कृतिमात्रेणापि न तस्य प्रतिपत्तिः कृता, ततोऽसौ क्रोधाध्मातमना नारदः कथमियं महादुःखभाग्भविष्यतीति चिन्तयंस्तन्निकेतनान्निर्गत्य भरतक्षेत्रे च कृष्णभयात्तस्याः कुतोऽप्यपायमपश्यन् धातकीखण्डसम्बन्धिभरतक्षेत्रे चम्पाधिपतिकपिलाख्यकेशवसेवकस्य ललनालम्पटस्य पद्मनाभनृपस्य पुरीमपरकङ्काभिधामभ्यगात्, सोऽपि नृपः ससम्भ्रममुत्थाय प्रतिपत्तिपुरस्सरमन्तःपुरे नीत्वा निखिला अपि निजप्रेयसीः प्रदर्शयन् भगवन्! अनवरतं सर्वत्राप्यस्खलितप्रचारेण भवता विलोकिताः काप्येवंविधाः पुरन्ध्रय इति नारदं निजगाद, नारदोऽपि सेत्स्यत्यनेन मम प्रयोजनमिति मनसि निश्चित्य प्रत्यवादीत्—राजन्! कूपमण्डूक इव किमेताभिः स्वान्तःपुरीभिः प्रमोदमानमानसो भवान्?, यज्जम्बूद्वीपभरतभूषणायमाने हस्तिनागपुरे पाण्डवानां प्रेयस्या द्रौपद्याः पुरस्तादेताः सर्वा अपि दासीदेश्या एवेत्यभिधाय नारदमुनिरुत्पपात, अथ पद्मनाभो द्रौपदीप्राप्तिपर्याकुलः पातालनिवासिनं पूर्वसङ्गतिकं सुरं तपसा समाराध्य प्रत्यक्षीभूतं किं करोमीतिवादिनं पाण्डवप्रणयिनीं द्रौपदीमिहानीय मम समर्पयेत्यवादीत्, देवोऽपि महाराज! द्रौपदी हि महासती पाण्डवव्यतिरेकेण नान्यं मनसाऽपि पतिमभिलषति तथाऽपि त्वन्निर्बन्धादत्रानयामीत्युक्त्वा हस्तिनागपुरादवस्वापिनीदानेन निशि प्रसुप्तां द्रौपदीमपहृत्य तस्मै समर्पयामास, पद्मनाभोऽपि प्रमुदितमनाः प्रबुद्धां निजदयितादनवलोकनेन विह्वलितहृदयां द्रौपदीमभाषत—मा भैषीर्मृगाक्षि! मयैवेह त्वमानायिताऽसि, अहं हि धातकीखण्डभरतक्षेत्रे अपरकङ्कापुरीपतिः पद्मनाभनामा नृपस्त्वां प्रेयसीं प्रार्थये, ततो मया सह स्वेच्छयाऽतुच्छान् भोगान् भुङ्क्ष्वेति, द्रौपद्यपि च तद्वचः श्रुत्वा तत्काल-

समुत्पन्नमतिः षण्मासमध्ये यदि मदीयः कोऽपि इह नागमिष्यति तदा त्वदीयं समीहितं करिष्यामीत्यवोचत, राज्ञाऽपि जम्बूद्वीपजुषां पुरुषाणामत्रागमनमसंभवीति विमृश्य तद्वचः प्रत्यपद्यत, इतश्च पाण्डवाः प्रभाते द्रौपदीमपश्यन्तः सादरं सर्वत्रान्वेषणेऽपि तद्वार्तामप्यलभमानाः समग्रमपि वृत्तान्तं वासुदेवाय न्यवेदयन्, वासुदेवोऽपि किंकर्तव्यतामूढो यावदास्ते तावदकस्मान्नारदमुनिस्तत्र स्वयंकृतमनर्थमवलोकयितुमाजगाम, सर्वत्राप्यस्खलितप्रचारं सञ्चरता भवता किं कापि द्रौपदी दृष्टेति कृष्णेनानुयुक्तः स उक्तवान्—धातकीखण्डेऽमरकङ्कायां नगर्यां गतेन मया पद्मनाभनृपस्य सद्मनि द्रौपदी दृष्टेत्यभिधाय सोऽन्यतोऽगमत्, ततः कृष्णः पद्मनृपतिना द्रौपदी हृता एषोऽहं तामितानेष्यामीति मा मनागपि खेदं विदध्वमिति पाण्डवान् समाश्वास्य महापृतनापरिवृतः पाण्डवैः सह दक्षिणाम्भोनिधितटनिकटमभ्यगात्, पाण्डवा अप्यत्यन्तभीषणमपारं पारावारमवलोक्य स्वामिन्नयं मनसाऽप्यलङ्घ्यः कथं लङ्घनीय इति विष्णुं व्यजिज्ञपन्, विष्णुरपि न काचिच्चिन्ता भवद्भिर्विधेयेति तानुक्त्वाऽष्टमतपसा सुस्थितनामानं लवणसमुद्रस्वामिनममरमाराधयामास, अथाविर्भूय देवेन किं करोमीत्युक्ते विष्णुरवदत्—सुरश्रेष्ठ! पद्मनाभनृपत्यपहृता धातकीखण्डद्वीपाद् द्रौपदी द्रुतमेव यथा समानीयते तथा कुर्विति, देवोऽपि यथा पद्मनाभपार्थिवस्य पूर्वसङ्गतसुरेणापहृत्य समर्पिता तथा तवाप्यहमर्पयामि यद्वा तं सबलवाहनमम्भोनिधिमध्ये क्षिप्त्वा तामानयामीत्यादि बहु जल्पितवान्, कृष्णोऽप्यभाषत—नायं यशस्करः पन्थाः, ततः पाण्डवानां ममापि च षण्णां रथानामम्भोधिमध्येन मार्गमव्याहतं कुरु येन स्वयमेव तत्र गत्वा तं च युधि विनिर्जित्य द्रुपदतनयामानयाम इति, सुस्थितेन च तथैव कृते श्रीपतिः पञ्चभिः पाण्डवैः सह द्विलक्षयोजनप्रमाणमपि जलधिं स्थलमिवोल्लङ्घ्यापरकङ्कापुरीपरिसरोद्याने च स्थित्वा प्रथमं दारुकाख्यदूतप्रेषणेन द्रौपदीमयाचत, पद्मोऽपि स तत्रैव वासुदेवः इह त्वात्मषष्ठोऽप्यसौ मम न किञ्चित् ततो गत्वा युद्धाय स्वस्वामिनं सज्जयेति सगर्वमभिधाय युयुत्सुः ससैन्यः सन्नह्य

तदेवोद्यानमागमत्, विष्णुरपि दारुकवचनश्रवणाद् द्विगुणीभूतरोपस्तं ससैन्यमापतन्तमालोक्य शङ्खमापूर्य तद्ध्वनिना सेनात्रिभागमनाशयत्, ततः शार्ङ्गास्फालनजनितध्वनिनाऽपि सैन्यत्रिभागे नाशिते पद्मनाभनृपोऽवतिष्ठमानतृतीयांशबलो रणाङ्गणान्नंष्ट्वा निजपुरीमध्ये प्रविश्य गोपुराणि पिहितवान्, कृष्णोऽपि सक्रोधं रथादवतीर्य नृसिंहरूपधारी नितान्तं गर्जन्निजपाददर्दरैः पुरमपातयत्, ततः पद्मनाभो भयव्याकुलितः क्षम्यतां २ देवि! रक्ष २ मामस्मात्क्रुद्धात्कृष्णादिति वदन् द्रौपदीं शरणमगमत्, तयाऽपि मां पुरस्कृत्य विधाय च स्त्रीवेषं शार्ङ्गिणमेव शरणं व्रजेरयुक्तः स तथा कृतवान्, कृष्णोऽपि द्रौपदीं पाण्डवानामर्पयित्वा तेनैव पथा रथारूढः प्रतिनिवृत्तः, तदानीं च तत्र चम्पायां पुर्यामुद्याने समवसृतं मुनिसुव्रतजिनं कपिलनामा वासुदेवस्तत्समीपमासीनः स्वामिन्! कस्यायं ममेव शङ्खस्वनः श्रूयते?, इति पप्रच्छ, भगवानपि समग्रं द्रौपदीवृत्तान्तमाख्यत्, ततः कपिलो जम्बूद्वीपभरतार्धाधिपतेरभ्यागतस्य स्वागतिको भवामीति भगवन्तमपृच्छत्, ततो भगवता यथैकत्र द्वितीयोऽर्हन्न चक्रभृन्न तथा विष्णुरपि न भवति, तथा कारणादागतोऽपि नान्येन मिलतीत्युक्तोऽपि कपिलः कौतुकात् कृष्णदिदृक्षया जलधितटे जगाम, दृष्टवांश्चाम्भोधिमध्येन व्रजतो विष्णो रथध्वजान्, ततः कपिलनामा वासुदेवस्त्वां द्रष्टुमुत्कण्ठितोऽहमिहागतस्तद्वलस्वेति स्पष्टाक्षरं शङ्खमवादयत्, कृष्णोऽपि वयमतिदूरं गतास्ततस्त्वया न किञ्चिद्वाच्यमिति व्यक्ताक्षरं शङ्खध्वनिना तं प्रतिबोध्य क्रमेण स्वस्थानं प्राप्त इति ५। तथा कौशाम्ब्यां नगर्यां समवसृतस्य भगवतः श्रीवर्धमानविभोर्वन्दनार्थं पश्चिमपौरुष्यामवतरणं—आकाशात्समवसरणभुवि समागमनं युगपच्चन्द्रसूर्ययोः शाश्वतविमानस्थितयोर्बभूव इदमप्याश्चर्यमेव, अन्यदा हि उत्तरवैक्रियविमानेनैवावतरत इति ६। तथा हरेः—पुरुषविशेषस्य वंशः—पुत्रपौत्रादिपरम्परा हरिवंशः तल्लक्षणं यत्कुलं तस्योत्पत्तिर्हरिवंशकुलोत्पत्तिः, कुलं ह्यनेकधा ततो हरिवंशेन विशेष्यते, एतदपि च पूर्वमभूतत्वादाश्चर्यमेवेति, श्रूयते हि इहैव जम्बूद्वीपभरतक्षेत्रे

कौशाम्ब्यां नगर्यां सुमुखो नाम भूपतिरभूत्, एकदा च विचित्रविलासवसतौ वसन्तसमये समागते मतङ्गजारूढः स राजा रन्तुकामः पुरपरिसरोद्यानं गच्छन् मार्गे वीरकाह्वयस्य कुविन्दस्य दयितां वनमालाभिधानामसमानलावण्यपुण्यदेहावयवामवलोकितवान्, साऽपि प्रणयस्पृशा दृशा वारं वारं साकाङ्क्षमुदैक्षत, राजा च तां निर्निमेषचक्षुषा सस्पृहं पश्यन् स्मरविधुरस्तत्रैव गजं भ्रमयन् कमपि प्रतीक्षमाण इव नाग्रतो जगाम, अथ सुमतिनामा सचिवस्तद्भावं जिज्ञासुः स्वामिन्! सर्वमपि सैन्यमिह प्राप्तं ततः किमद्यापि विलम्ब्यते? इति राजानं व्यजिज्ञपत्, राजापि सचिववचसा चेतः कथमपि संस्थाप्य लीलोद्यानमगमत्, तत्र च शून्यहृदयो हृद्येऽप्युद्याने न क्वापि रतिं प्राप, अथ तमुद्विग्नमानसममात्यः सुमतिरवादीत्—देव! किमद्य शून्यहृदय इव त्वं लक्ष्यसे?, यद्यगोप्योऽयं मनोविकारस्तत्कथ्यतामिति, राजापि त्वमेव मम मनोविकारप्रतीकारप्रवणः ततस्तव गोप्यं न किञ्चिदस्तीत्यभिधाय स्वस्वरूपं न्यरूपयत्, अथ देव! त्वत्समीहितं शीघ्रमेव सम्पादयिष्यामि व्रजतु स्वामी स्वस्थः स्वावासमित्यमात्येनोक्तः क्षितिपतिः स्वावासमयासीत्, ततो मन्त्री विचित्रोपायपण्डितामात्रेयिकां नाम परिव्राजिकां वनमालायाः पार्श्वे प्राहिणोत्, साऽपि तत्र गत्वा तद्विरहविह्वलां वनमालामवोचत्—वत्से! किमद्य विच्छाया वीक्ष्यसे?, निवेदय स्वदुःखमिति, साऽपि निःश्वस्य दुष्प्रापप्रार्थकतामात्मीयामकथयत्, आत्रेयिकापि मदीयमन्त्रतन्त्राणां न किञ्चिदसाध्यमस्ति ततः प्रातः पृथ्वीपतिना सह सङ्गमं तव करिष्यामीति तामाश्वास्य गत्वा च सचिवसविधं तत् नृपप्रयोजनं निष्पन्नप्रायं न्यवेदयत्, सचिवोऽपि तद्वृत्तान्तनिवेदनेन नृपराजमरञ्जयत्, ततः प्रभाते परिव्राजिका वनमालामादाय नृपमन्दिरमगमत्, राजाऽप्यनुरागवशतस्तामन्तःपुरे निक्षिप्य तया सममसमं संसारसुखमन्वभूत्, इतश्च वीरककुविन्दोऽपि वनमालामनवलोकमानो हा प्रिये वनमाले! क्व गताऽसीत्याद्यनेकप्रकारं प्रलपन्नुन्मत्त इव च त्रिकचत्वरादिषु परिभ्रमन्नेकदा नृपतिनिकेतनान्तिकमभ्यगात्, भूपालो-

ऽपि वनमालासहितस्तथाविकृताकारं शून्यमानसं हा वनमाले इत्यादिप्रलापिनं तमवेक्ष्य व्यचिन्तयत्—अहोऽस्माभिरुभयलोकविरुद्धमतिनिर्घृणं कर्म समाचरितं सर्वथाऽप्यस्माकं नरकेऽप्यवस्थानं नास्तीत्यादि बह्वात्मानं निन्दतोस्तयोः सहसैवाकाशात्तडित्पतित्वा प्राणान् जहार, मृत्वा च तौ परस्परस्नेहवशात् शुभध्यानाश्च हरिवर्षाख्ये तृतीये क्षेत्रे मिथुनरूपिणौ हरिहरिणीनामकावुत्पन्नौ, तत्र च कल्पपादपसम्पादितसमीहितौ सततमवियुक्तौ परस्परस्नेहवशात् सुचिरं विलसन्तौ तस्थतुः, वीरकुविन्दोऽपि तयोर्मृत्युमवगत्य त्यक्तमहिलभावो दुस्तपमज्ञानतपः किमपि कृत्वा मृत्वा च सौधर्मकल्पे किल्बिषिकसुरः समुत्पेदे, अवधिना च निजं पूर्वभवं हरिहरिणीनामकौ च पूर्वभववैरिणौ विलोक्य तत्कालोत्पन्नरोपारुणेक्षणः क्षणमचिन्तयत्—इह हरिवर्षक्षेत्रे क्षेत्रानुभावादेव ताववध्यौ मृतौ चावश्यमेव देवलोकं व्रजिष्यतस्ततो दुर्गतिनिबन्धने अकालेऽपि मरणप्रदे नयाम्यन्यत्र स्थानान्तरे इति विनिश्चित्य तावुभावपि कल्पतरुभिः सह ततः क्षेत्रादपहृत्य भरतक्षेत्रे चम्पापुर्यामानैषीत्, तस्यां च पुरि तदानीमिक्ष्वाकुवंशजश्चन्द्रकीर्तिनामा नृपोऽपुत्रः पञ्चत्वमगमत्, ततस्तस्य प्रकृतयो राज्यार्हमपरं पुरुषमन्वेष्टुं सर्वतोऽपि प्रवर्तमानास्तेन देवेनाकाशस्थितेन स्वसमृद्धिवशतः सर्वस्यापि जनस्य विस्मयमुपजनयता सादरमभिहिताः—भो भो राज्यचिन्तकाः! भवत्पुण्यप्रेरितेनेव मया हरिवर्षात् हरिण्याख्यनिजपत्न्या समन्वितो हरिनामा राज्यार्हः पुमान् युग्मरूपोऽनयोरेवाहारयोग्यैः कल्पद्रुमैः सममिहानीतः तदयमस्तु भवतां राजा, एतयोश्च कल्पपादपफलमिश्रं पशुपक्षिमांसं मद्यं चाहारो देय इति, प्रकृतयोऽप्येवमस्त्विति भणित्वा हरिं राज्ये स्थापयामासुः, सोऽपि सुरः स्वशक्त्या तयोरायुःस्थितिं ह्रस्वां तनुं च धनुःशतमानां कृत्वा तिरोदधे, हरिरपि पयोधिपर्यन्तां वसुधां साधयित्वा सुचिरं राज्यमकरोत्, ततः प्रभृति च पृथिव्यां तन्नाम्ना हरिवंशो बभूवेति ७। तथा चमरस्य—असुरकुमारेन्द्रस्योत्पातः—ऊर्द्ध्वगमनं सोऽप्याकस्मिकत्वादाश्चर्यमिति, श्रूयते हि इहैव भरतक्षेत्रे विभेले सन्निवेशे पूरणो नाम धनाढ्यो

गृहपतिरभूत्, स चान्यदा निशीथे चिन्तयामास—नूनं प्राग्भवाचीर्णविस्तीर्णतपःप्रभावतः प्राप्ता तावदियं लक्ष्मीः मान्यता च, ततः पुनरप्येष्यद्भवे विशिष्टफलप्राप्तये गृहवासं परित्यज्य किमपि दुस्तपं तपः करोमीत्येवं विचिन्त्य प्रातः सर्वानपि स्वजनानापृच्छय तनयं च निजपदे निवेश्य प्राणामनामकं तापसव्रतमग्रहीत्, तद्दिनादारभ्य च यावज्जीवं षष्ठं तपश्चकार, पारणकदिने च दारुमयं चतुष्पुटं भिक्षापात्रमादाय मध्याह्नक्षणे भिक्षां भ्राम्यति स्म, तत्र प्रथमपुटपतितां भिक्षां पान्थादिभ्यः द्वितीयपुटपतितां भिक्षां काकादिभ्यः तृतीयपुटभिक्षां च मत्स्यादिजलचारिभ्यो दत्त्वा रागद्वेषादिरहितश्चतुर्थपुटभिक्षां स्वयमभुङ्क्त, एवं द्वादश वर्षाणि बालतपः कृत्वा पर्यन्तसमये मासमेकमनशनमादाय मृत्वा च चमरचञ्चायां चमरेन्द्रो बभूव, उत्पन्नश्च तत्रावधिज्ञानेनेतस्ततः पश्यन्नूर्ध्वं सौधर्मावतंसके विमाने सौधर्मेन्द्रं दृष्ट्वा क्रुद्धः सुरानवोचत्—अरे कोऽयं दुरात्माऽप्रार्थितप्रार्थितो मम शिरः स्थित एवं विलसतीति ?, तेऽप्यूचुः—अयं हि पूर्वभवार्जितैः पुण्यैः सर्वातिशायिसमृद्धिपराक्रमः सौधर्माधिपः शक्र इति, एतच्च श्रुत्वाऽधिकतरं क्रुद्धः स्वपरिवारनिवारितोऽपि युयुत्सुः शिक्षयाम्येनमवज्ञाकारिणमिति वदन् परिघमादाय स हि शक्तः श्रूयते ततः कथमपि तत्पराजितोऽहं कं शरणं प्रपत्स्ये ? इति विचिन्त्य स सुसुमारपुरे प्रतिमास्थितस्य श्रीमहावीरस्य समीपमागमत्, तत्र च प्रणामपूर्वकं भगवंस्तव प्रभावेण वज्रिणं जेष्यामीति विभुं विज्ञप्य लक्षयोजनमानमतिविकृतं निजवपुर्विधाय परिघप्रहरणं परितो भ्रमयन् गर्जन्नास्फोटयन् त्रिदशान् त्रासयन् दर्पान्धः सौधर्मेन्द्रं प्रति समुदपतत्, तत एकं पादं सौधर्मावतंसकविमानवेदिकायामपरं च सुधर्मायां निधाय परिघेनेन्द्रकीलं त्रिस्ताडयित्वाऽनेकशः शक्रमाक्रोशयामास, शक्रोऽप्यवधितस्तं विदित्वा कोपाज्ज्वाज्वल्यमानः स्फारस्फुरत्स्फुलिङ्गशतसमाकुलं कुलिशं तं प्रति मुमोच, चमरोऽपि पृष्ठतो दम्भोलिमायान्तमवलोकयितुमप्यक्षमः श्रीमहावीरं शरणं प्रपित्सुर्वपुर्विस्तरमुपसंहृत्य त्वरिततरं पलायिष्ट, समासन्नीभूतकुलिशश्च शरणं शरणमिति ब्रुवाणः

सूक्ष्मीभूय स्वामिपादयोरन्तरे प्राविशत्, शक्रोऽप्यर्हदादिनिश्रामन्तरेण नासुराणामिहागन्तुं स्वतः शक्तिः सम्भवतीति विचिन्त्यावधिज्ञानावगततद्व्यतिकरस्तीर्थकराशातनाभयात्त्वरितमागत्य स्वामिपादयोश्चतुरङ्गुलमप्राप्तं वज्रमुपसंजहार, स्वामिनं च क्षमयित्वा चमरमवोचत्—मुक्तोऽस्यहो भगवतः प्रसादान्नास्ति ते भयमिति, एवं चमरमाश्वास्य भूयोऽपि भगवन्तं नत्वा शक्रः स्वस्थानमगमन्, चमरोऽप्यमरेन्द्रे गते प्रभुपादद्वयान्तरान्निर्गत्य प्रणम्य च प्रभुं प्रास्तावीत्, यथा—'श्रीमद्वीरजिनेन्द्र! भद्रमतुलं तुभ्यं भवत्वन्वहं, यस्यानन्यसमानदिव्यमहिमन्यामिश्रया निश्रया। किञ्चित्कर्म मनीषितं तनुमतां व्यातन्वतां सम्मुखीभूताप्याशु विपत्तिरेति निधनं सम्पत्तिरुज्जृम्भते ॥ १ ॥' एवं च स्तुत्वा स चमरचञ्चापुरीमयासीत् ८। तथाऽष्टाभिरधिकं शतमष्टशतं ते सिद्धाः—निर्वृता अष्टशतसिद्धाः एकसमयेनेति शेषः, तथा चास्मिन् भरतक्षेत्रे अस्यामवसर्पिण्यां भगवतः श्रीनाभेयस्य निर्वाणसमये श्रूयते अष्टोत्तरं शतमेकसमयेन सिद्धं, तथा चोक्तं सङ्घदासगणिना वसुदेवचरिते—"भयवं उसभसामी जयगुरू पुव्वसयसहस्सं वाससहस्सूणयं विहरिऊण केवली अट्ठावयपव्वए सह दसहिं समणसहस्सेहिं परिनिव्वाणमुवगओ चउद्दसमेणं भत्तेणं माघबहुले पक्खे तेरसीए अभीइणा नक्खत्तेणं एगूणपुत्तसएणं अट्ठहि य नत्तुएहिं सह एकसमएणं निव्वुओ, सेसाणवि अणगाराणं दस सहस्साणि अट्ठसयऊणगाणि सिद्धाणि तंमि चेव रिक्खे समयंतरेसु बहुसु" इति, इदमप्यनन्तकालजातमित्याश्चर्यं, एतदाश्चर्यमुत्कृष्टावगाहनायामेव ज्ञातव्यं, मध्यमावगाहनायां तु अनेकशोऽपि अष्टोत्तरशतं सिध्यतीति नाश्चर्यम् ९। तथा असंयता—असंयमवन्तः आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणस्तेषु पूजासत्कारः, सर्वदा हि किल संयता एव पूजार्हाः, अस्यां त्ववसर्पिण्यां विपरीतं जातमित्याश्चर्यं, तथा च श्रूयते श्रीसुविधिस्वामिनिर्वाणात्कियत्यपि काले गते हुंडावसर्पिणीदोषात्साधूनामुच्छेदः समपद्यत, ततः स्थविरश्रावकान् धर्ममार्गानभिज्ञा जना धर्मं पप्रच्छुः, अथात्मपरिज्ञानानुसारतः किञ्चिद्धर्मं कथयतां तेषां स्थवि-

रश्रावकाणां ते जनाः श्रावकजनयोग्यां धनवसनादिकां पूजां प्रचक्रिरे, तेऽपि तत्पूजया समुत्पन्नगर्वास्तत्कालं स्वबुद्ध्या शास्त्राणि समासूत्र्य महीमन्दिरशय्यास्वर्णरूप्यलोहतिलकर्पासगोकन्यागजाश्वादेर्दानानि इहामुत्र च महाफलान्याचख्युः, महागृद्ध्या च वयमेव दानायोचितं पात्रं अपरं सर्वमपात्रमित्याद्युपदेशतः सर्वतो जनं विप्रतारयन्तोऽपि तदानीं तथाविधगुर्वभावाल्लोकानां गुरुतां गताः, एवमस्मिन् क्षेत्रे समन्ततस्तीर्थसमुच्छेदे सञ्जाते श्रीशीतलस्वामितीर्थे यावदसंयतानामपि तेषां धिग्वर्णानां प्रथीयसी पूजा समजायतेति १० । एतानि च दशाप्याश्चर्याण्यनन्तेन कालेन—अनन्तकालादस्यामवसर्पिण्यां संवृत्तानीति । उपलक्षणं चैतान्याश्चर्याणि, अतोऽन्येऽप्येवमादयो भावा अनन्तकालभाविन आश्चर्यरूपा द्रष्टव्याः, यदुक्तं पञ्चवस्तुके—'उवलक्खणं तु एयाइं'ति ॥ ८८५ ॥ ८८६ ॥ अथ कस्य तीर्थकृतः काले कियन्त्याश्चर्याणि जातानीत्येतदाह—'सिरी'त्यादि, श्रीऋषभनाथशीतलस्वामिनोस्तीर्थे एकैकमाश्चर्यमभूत्, तत्र श्रीऋषभनाथतीर्थे एकसमयेनाष्टोत्तरशतसिद्धिः, शीतलस्वामितीर्थे च हरिवंशोत्पत्तिः, तथा मल्लिजिननेमिनाथयोरप्येकैकं, तत्र स्त्रीतीर्थं मल्लिजिनेनैव प्रवर्तितं, नेमिनाथतीर्थे च कृष्णस्यापरकंकागमनं संवृत्तं, तथा वीरजिनेन्द्रे गर्भहरणोपसर्गचमरोत्पाताभव्यपर्षच्चन्द्रसूर्यावतरणलक्षणानि पञ्चैवाश्चर्याणि क्रमेण जातानि, तथा एकमसंयतपूजालक्षणमाश्चर्यं प्रायेण—बाहुल्येन सर्वेष्वपि तीर्थकरेषु सम्पन्नमिति ॥ ८८७ ॥ एतदेव स्पष्टतरं प्रतिपादयन्नाह—'रिसहे'गाहा 'इत्थी'गाहा, व्याख्यातार्थं चैतत्, नवरं 'पूया अस्संजयाण नवमजिणे' इति यदुक्तं तत्सर्वथा तीर्थोच्छेदजनितासंयतपूजाप्रारम्भमाश्रित्य द्रष्टव्यं, सुविधिस्वामिप्रभृतीनां शान्तिनाथपर्यन्तानामष्टानां तीर्थकृतामन्तरेषु सप्तसु तीर्थोच्छेदजाताया असंयतपूजायाः सद्भावात्, यत्पुनः श्रीऋषभनाथादिकाले मरीचिकपिलादीनामसंयतानां पूजा श्रूयते तत्तीर्थे प्रवर्तमान

एवेति, अत एव प्रागुक्तं 'एगं सव्वेसु पाणणे'ति १३८ ॥ ८८८ ॥ ८८९ ॥ इदानीं 'चउरो भासाउ'त्ति एकोनचत्वारिंशदुत्तरशततमं द्वारमाह—

**पढमा भासा सच्चा १ बीया उ मुसा विवज्जिया तासिं । सच्चामुसा ३ असच्चामुसा ४ पुणो तह चउत्थीत्ति ॥ ८९० ॥ जणवय १ संमय २ ठवणा ३ नामे ४ रूवे ५ पडुच्चसच्चे य ६ । ववहार ७ भाव ८ जोगे ९ दसमे ओवम्मसच्चे य १० ॥ ८९१ ॥ कोहे १ माणे २ माया ३ लोभे ४ पेज्जे ५ तहेव दोसे ६ य । हास ७ भए ८ अक्खाइय ९ उवघाए १० निस्सिया दसहा ॥ ८९२ ॥ उप्पन्न १ विगय २ मीसग ३ जीव ४ अजीवे ५ य जीवअज्जीवे ६ । तह मीसगा अणंता ७ परित्त ८ अद्धा ९ य अद्धद्धा १० ॥ ८९३ ॥ आमंतणि १ आणमणी २ जायणि ३ तह पुच्छणी य ४ पन्नवणी ५ । पच्चक्खाणी भासा ६ भासा इच्छाणुलोमा य ७ ॥ ८९४ ॥ अणभिग्गहिया ८ भासा भासा य अभिग्गहंमि ९ योद्धव्वा । संसयकरणी १० भासा वोयड ११ अव्वोयडा १२ चेव ॥८९५॥**

भाष्यते इति भाषा, सा चतुर्विधा, तत्र प्रथमा भाषा सत्या, सन्तो—मूलोत्तरगुणास्तेषामेव जगति मुक्तिपदप्रदायकतया परमशोभनत्वात् अथवा सन्तो—विद्यमानास्ते च भगवदुपदिष्टा एव जीवादयः पदार्था अन्येषां कल्पनामात्ररचितसत्ताकतया तत्त्वतोऽसत्त्वात् तेभ्यो हिता सत्या, सत्याविपरीतस्वरूपा मृषा द्वितीया, उभयस्वभावा सत्यामृषा तासां चतसृणां भाषाणां मध्ये तृतीया, या पुनस्तिसृष्वपि भाषास्वनधिकृता—तल्लक्षणायोगतस्तत्रानन्तर्भाविनी सा आमन्त्रणाज्ञापनादिविषया असत्या मृषा तासां भाषाणां मध्ये चतुर्थीति ॥ ८९० ॥

साम्प्रतमेतासामेव भाषाणां भेदानभिधित्सुः प्रथमं सत्यभाषाया भेदानाह—'जणवये'त्यादि, सत्या भाषा तावद्दशप्रकारा भवति जनपदसत्यादिभेदात्, तत्र जनपदेषु—देशेषु या यदर्थवाचकतया रूढा देशान्तरेऽपि सा तदर्थवाचकतया प्रयुज्यमाना सत्या—अवितथेति जनपदसत्या, यथा कोङ्कणादिषु पयः पिच्चं नीरमुदकमित्यादि, सत्यता चास्या अदुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद्व्यवहारप्रवृत्तेः, एवं शेषेष्वपि भावना कार्या १, तथा सकललोकसाम्मत्येन सत्यतया प्रसिद्धा सम्मतसत्या, यथा कुमुदकुवलयोत्पलतामरसानां समानेऽपि पङ्कसम्भवे गोपालादीनां सम्मतमरविन्दमेव पङ्कजं न शेषमित्यरविन्दे संमततया पङ्कजशब्दः सत्यः, कुवलयादावसत्योऽसम्मतत्वादिति २, तथा स्थापनासत्या या तथाविधमङ्कविन्यासं मुद्राविन्यासं चोपलभ्य प्रयुज्यते यथा एककं पुरतो बिन्दुद्वयसहितमुपलभ्य शतमिदमिति बिन्दुत्रयसहितं सहस्रमिदमिति, तथा तथाविधं मुद्राविन्यासमुपलभ्य मृत्तिकादिषु माषोऽयं कार्षापणोऽयमिति, यद्वा यक्षेप्यादिकर्म अर्हदादिविकल्पेन स्थाप्यते सा स्थापना तद्विषये सत्या स्थापनासत्या, यथाऽजिनोऽपि जिनोऽयं अनाचार्योऽप्याचार्योऽयमिति ३, तथा नामतः—अभिधानमात्रेण सत्या नामसत्या, यथा कुलमवर्धयन्नपि कुलवर्धनः धनमवर्धयन्नपि धनवर्धनः अयक्षश्च यक्ष इति ४, तथा रूपतो—रूपापेक्षया सत्या रूपसत्या, यथा दम्भतो गृहीतप्रव्रजितरूपः प्रव्रजितोऽयमिति ५, तथा प्रतीत्य—आश्रित्य वस्त्वन्तरं सत्या प्रतीत्यसत्या, यथा अनामिकायाः कनिष्ठामधिकृत्य दीर्घत्वं मध्यमामधिकृत्य ह्रस्वत्वं, न च वाच्यं कथमेकस्या ह्रस्वत्वं दीर्घत्वं च तात्त्विकं परस्परविरोधादिति, भिन्ननिमित्तत्वे परस्परविरोधासम्भवात्, तथाहि—तामेव यदि कनिष्ठां मध्यमां वा एकामङ्गुलिमङ्गीकृत्य ह्रस्वत्वं दीर्घत्वं च प्रतिपाद्येत ततो विरोधः सम्भवेत्, एकनिमित्तत्वे परस्परविरुद्धकार्यद्वयासम्भवात्, यदा त्वेकामधिकृत्य ह्रस्वत्वं अपरामधिकृत्य दीर्घत्वं तदा सत्त्वासत्त्वयोरिव भिन्ननिमित्तत्वान्न परस्परं विरोधः, अथ यदि तात्त्विके ह्रस्वत्वदीर्घत्वे तत

ऋजुत्ववक्रत्वे इव कस्मात्ते परनिरपेक्षे न प्रतिभासेते ?, तस्मात्परोपाधिकत्वात्काल्पनिके इमे इति, तदयुक्तं, द्विविधा हि वस्तुनो धर्माः— सहकारिव्यङ्ग्यरूपा इतरे च, तत्र ये सहकारिव्यङ्ग्यरूपास्ते सहकारिसम्पर्कवशात्प्रतीतिपथमायान्ति यथा पृथिव्या जलसम्पर्कतो गन्धः, इतरे त्वेवमेवापि यथा कर्पूरादिगन्धः, ह्रस्वत्वदीर्घत्वे अपि सहकारिव्यङ्ग्यरूपे, ततस्ते तं तं सहकारिणमासाद्याभिव्यक्तिमायात इत्यदोषः ६, तथा व्यवहारतो—लोकविवक्षातः सत्या व्यवहारसत्या, यथा गिरिर्दह्यते गलति भाजनं अनुदरा कन्या अलोमिका एडका, लोको हि गिरिगततृणादिदाहे तृणादिना सह गिरेरभेदं विवक्षित्वा गिरिर्दह्यते इति ब्रूते, भाजनादुदके श्रवति उदकभाजनयोरभेदं विवक्षित्वा गलति भाजनमिति, सम्भोगजबीजप्रभवोदराभावेऽनुदरेति लवनयोग्यलोमाभावेऽलोमिकेति, ततो लोकव्यवहारमपेक्ष्य साधोरपि तथा ब्रुवतो व्यवहारसत्या भाषा भवति ७, तथा भावतो वर्णादिस्वरूपा सत्या भावसत्या, किमुक्तं भवति ?—यो भावो वर्णादिर्यस्मिन्नुत्कटो भवति तेन या सत्या भाषा सा भावसत्या, यथा सत्यपि पञ्चवर्णसम्भवे शुक्लस्यैव वर्णस्योत्कटत्वाद्बलाका शुक्लेति ८, तथा योगः—सम्बन्धस्तस्मात्सत्या योगसत्या, यथा छत्रयोगाद्विवक्षितशब्दप्रयोगकाले छत्राभावेऽपि छत्रयोगस्य सम्भवात् छत्री, एवं दण्डयोगाद्दण्डी ९, तथा उपमैव औपम्यं तेन सत्या औपम्यसत्या, यथा समुद्रवत्तडागमिति १०॥८९१॥ अथ द्वितीयभाषाया मृषालक्षणाया भेदानाह—'कोहे' इत्यादि, क्रोधनिःसृतादिभेदान्मृषाभाषा दशविधा भवति, सप्तम्याः पञ्चम्यर्थत्वान्निःसृतशब्दस्य च प्रत्येकमभिसम्बन्धात्क्रोधान्निःसृता क्रोधाद्विनिर्गतेत्यर्थः, एवमन्यत्रापि, तत्र क्रोधाभिभूतो विसंवादनबुद्ध्या परं प्रत्याययन् यत्सत्यमसत्यं वा भाषते तत्सर्वं मृषा, तस्य हि आशयोऽतीव दुष्टः, ततो यदपि घुणाक्षरन्यायेन सत्यमापतति शाठ्यबुद्ध्या वोपेत्य सत्यं भाषते तदप्याशयदोषदुष्टमिति मृषा, यथा वा क्रोधाभिभूतः पिता पुत्रमाह—न त्वं मम पुत्र इति, अदासं वा दासमभिधत्ते इति १ तथा मानान्निःसृता यत्पूर्वमननुभूतमप्यैश्वर्यमात्मो-

त्कर्षख्यापनायानुभूतमस्माभिस्तदानीमेवमैश्वर्यमित्यादि वदति २ तथा मायाया निःसृता यत्परवञ्चनाभिप्रायेण सत्यमसत्यं वा भाषते ३ तथा लोभान्निःसृता वणिक्प्रभृतीनामन्यथा क्रीतमेवेत्थं क्रीतमित्यादि ४ तथा प्रेम्णो निःसृता, यदतिप्रेमवशाद्दासोऽहं तवेत्यादि वदति ५ तथा द्वेषान्निःसृता मत्सरिणां गुणवत्यपि निर्गुणोऽयमित्यादि ६ तथा हास्यान्निःसृता यथा कान्दर्पिकाणां कस्मिंश्चित्कस्यचित् सम्बन्धिनि गृहीतेऽपि पृष्टानां केलिवशतो न दृष्टमित्यादि ७ तथा भयान्निःसृता तस्करादिभयेनासमञ्जसभाषणं ८ तथा आख्यायिकानिःसृता, यथा कथास्वसंभव्यभिधानं ९ तथा उपघातान्निसृता चौरस्त्वमित्याद्यसदभ्याख्यानमिति १० ॥८९२॥ अथ तृतीयभाषायाः सत्यामृषाया भेदानाह—'उप्पन्ने'त्यादि, उत्पन्नमिश्रितादिभेदात्सत्यामृषा भाषा दशधा भवति, इह च मध्यस्थितस्य 'मीसय'त्ति पदस्य सर्वत्रापि सम्बधादुत्पन्नमिश्रिता विगतमिश्रितेत्यादि द्रष्टव्यं, ततश्च उत्पन्नमिश्रिता अनुत्पन्नैः सह सङ्ख्यापूरणार्थं या सा उत्पन्नमिश्रिता, एवमन्यत्रापि यथायोगं भावनीयं, तत्रोत्पन्नमिश्रिता यथा कस्मिंश्चिद् ग्रामे नगरे वा न्यूनेष्वधिकेषु वा दारकेषु जातेषु दश दारका अस्मिन्नद्य जाता इत्यादि, व्यवहारतः सत्यामृषात्वाद् अस्याः, श्वस्ते शतं दास्यामीत्युक्त्वा पञ्चाशत्यपि दत्तायां लोके मृषात्वादर्शनादनुत्पन्नेष्वेवादत्तेष्वेव च मृषात्वव्यवहारात् १ तथा एवमेव मरणकथने विगतमिश्रिता, यथा अस्मिन्नद्य दश वृद्धा विगता इत्यादि २ तथा जन्मनो मरणस्य च कृतपरिमाणस्याभिधाने विसंवादने च मिश्रकमिश्रिता उत्पन्नविगतमिश्रितेत्यर्थः, यथाऽस्मिन्नद्य दश दारका जाता दश च वृद्धा विपन्ना इति ३ तथा प्रभूतानां जीवतां स्तोकानां च मृतानां शङ्खशङ्खनकादीनामेकत्र राशौ दृष्टे यदा कश्चिदेवं वदति—अहो महान् जीवराशिरयमिति तदा सा जीवमिश्रिता, सत्यामृषात्वं चास्या जीवत्सु सत्यत्वान्मृतेषु मृषात्वात् ४ तथा यदा प्रभूतेषु मृतेषु स्तोकेषु जीवत्सु एकत्र राशीकृतेषु शङ्खादिष्वेवं वदति—अहो महानयं मृतो जीवराशिरिति तदा सा अजीवमिश्रिता, अस्या अपि सत्यामृ-

पात्वं मृतेषु सत्यत्वात् जीवत्सु च मृषात्वात् ५ तथा तस्मिन्नेव राशौ एतावन्तोऽत्र जीवन्ति एतावन्तोऽत्र मृता इति नियमेनावधारयतो विसंवादे जीवाजीवमिश्रिता ६ तथा मूलकादिकमनन्तकायं तस्यैव सत्कैः परिपाण्डुपत्रैरन्येन वा केनचित्प्रत्येकवनस्पतिना मिश्रमवलोक्य सर्वोऽप्येषोऽनन्तकायिक इति वदतोऽनन्तमिश्रिता ७ तथा प्रत्येकवनस्पतिसङ्घातमनन्तकायिकेन सह राशीकृतमवलोक्य प्रत्येकवनस्पतिरयं सर्वोऽपीति वदतः प्रत्येकमिश्रिता ८ तथा अद्धा—कालः, स चेह प्रस्तावाद्दिवसो रात्रिर्वा परिगृह्यते, स मिश्रितो यया सा अद्धामिश्रिता, यथा कश्चित्कञ्चन त्वरयन् दिवसे वर्तमान एव वदति— उत्तिष्ठ २ रात्रिर्जातेति, रात्रौ वा वर्तमानायामुत्तिष्ठ २ दिवसो जात इति ९ तथा दिवसस्य रात्रेर्वा एकदेशोऽद्धाद्धा, सा मिश्रिता यया सा अद्धाद्धामिश्रिता, यथा प्रथमपौरुष्यामेव वर्तमानायां कश्चित् कञ्चन त्वरयन्नेवं वदति—चल चल मध्याह्नो जात इति १० ॥ ८९३ ॥ अथ चतुर्थभाषाया असत्यामृषाया भेदानाह—'आमंत्रणी'त्यादि, आमन्त्रण्यादिभेदादसत्यामृषा भाषा द्वादशभेदा भवति, तत्र आमन्त्रणी हे देवदत्त ! इत्यादि, एषा हि प्रागुक्तसत्यादिभाषात्रयलक्षणविकलत्वान्न सत्या न मृषा नापि सत्यामृषा, केवलं व्यवहारमात्रप्रवृत्तिहेतुरित्यसत्यामृषा १ एवं सर्वत्रापि भावना कार्या, आज्ञापनी—कार्ये परस्य प्रवर्तनं, यथेदं कुर्विति २ याचनी कस्यापि वस्तुविशेषस्य देहीति मार्गणं ३ प्रच्छनी अविज्ञातस्य सन्दिग्धस्य वा कस्यचिदर्थस्य परिज्ञानाय तद्विदः पार्श्वे कथमेतदिति प्रच्छनं ४ प्रज्ञापनी विनेयजनस्योपदेशदानं, यथा प्राणिवधान्निवृत्ता भवन्ति भवान्तरे प्राणिनो दीर्घायुष इत्यादि ५ प्रत्याख्यानी—याचमानस्य प्रतिषेधवचनं ६ इच्छानुलोमा नाम यथा कश्चित् किञ्चन कार्यमारभमाणः कञ्चन पृच्छति, स प्राह—करोतु भवान् ममाप्येतदभिप्रेतमिति ७ अनभिगृहीता—यत्र न प्रतिनियतार्थावधारणं, यथा बहुषु कार्येषूपस्थितेषु कश्चित् कञ्चन पृच्छति—किमिदानीं करोमि?, स प्राह—यत्प्रतिभासते तत्कुर्विति ८ अभिगृहीता—प्रतिनियतार्थावधारणं,

यथा इदमिदानीं कर्तव्यमिदं नेति, यद्वा अनभिगृहीता याऽर्थमनभिगृह्योच्यते डित्थादिवत्, अभिगृहीता त्वर्थमभिगृह्य योच्यते घटादिवत् ९ संशयकरणी या एकका वागनेकार्थाभिधायितया परस्परं संशयमुत्पादयति, यथा सैन्धवमानीयतामित्यत्र सैन्धवशब्दो लवणवस्त्रपुरुषवाजिषु १० व्याकृता या प्रकटार्था ११ अव्याकृता अतिगभीरशब्दार्था अव्यक्ताक्षरप्रयुक्ता वा, अविभावितार्थत्वादिति १२ १३९ ॥ ८९४ ॥ ८९५ ॥ इदानीं 'वयणसोलसगं'ति चत्वारिंशदुत्तरशततमं द्वारमाह—

**कालतियं ३ वयणतियं ६ लिंगतियं ९ तह परोक्ख १० पच्चक्खं ११ । उवणयऽवणयचउक्कं १५**
**अज्झत्थं चेव सोलसमं ॥ ८९६ ॥**

कालत्रिकं तथा वचनत्रिकं तथा लिङ्गत्रिकं परोक्षमत्र प्रथमैकवचनस्य लोपः तथा प्रत्यक्षं तथोपनयापनयचतुष्कं तथाऽध्यात्मं चैव षोडशमिति गाथावयवार्थः । तत्राकरोत्करोति करिष्यतीत्यतीतादिकालनिर्देशप्रधानं वचनजातं कालत्रिकवचनमित्यर्थः, तथा एको द्वौ बहव इत्येकत्वाद्यभिधायकः शब्दसन्दर्भो वचनत्रिकमिति, तथेयं स्त्री अयं पुरुषः इदं कुलमिति त्रीणि लिङ्गप्रधानानि वचनानीति लिङ्गत्रिकं तथा स इति परोक्षनिर्देशः परोक्षवचनं अयमिति प्रत्यक्षनिर्देशः प्रत्यक्षवचनं, तथोपनयापनयवचनं चतुर्धा भवति, तद्यथा—उपनयापनयवचनं तथा उपनयोपनयवचनं तथा अपनयोपनयवचनं तथा अपनयापनयवचनमिति, तत्रोपनयो—गुणोक्तिः अपनयो—दोषभणनं, तत्र सुरूपेयं रामा परं दुःशीला इत्युपनयापनयवचनं तथा सुरूपेयं स्त्री सुशीलेत्युपनयोपनयवचनं तथा कुरूपा स्त्रीयं परं सुशीलेत्यपनयोपनयवचनं कुरूपेयं कुशीला चेत्यपनयापनयवचनमिति, तथा अन्यच्चेतसि निधाय विप्रतारकबुद्ध्याऽन्यद्विभणिषुरपि सहसा यच्चेतसि तदेव वक्ति यत्तत् षोडशमध्यात्मवचनम् १४० ॥ ८९६ ॥ इदानीं 'मासाण पंचभेय'त्ति एकचत्वारिंशदुत्तरशततमं द्वारमाह—

**मासा य पंच सुत्ते नक्खत्तो १ चंदिओ २ य रिउमासो ३। आइच्चोऽविय अवरो ४ ऽभिवड्ढिओ तह य पंचमओ ५ ॥ ८९७॥ अहरत्त सत्तवीसं तिसत्तसत्तट्ठिभाग नक्खत्तो २७। $\frac{२१}{६७}$। चंदो उणत्तीसं बिसट्ठिभाया य बत्तीसं २९। $\frac{३२}{६२}$ ॥ ८९८॥ उउमासो तीसदिणो ३० आइच्चो तीस होइ अद्धं च ३०। $\frac{१}{२}$। अभिवड्ढिओ य मासो चउवीससएण छेएणं ॥ ८९९॥ भागाणिगवीससयं तीसा एगाहिया दिणाणं तु ३१। $\frac{१२१}{१२४}$। एए जह निप्फत्तिं लहंति समयाउ तह नेयं ॥ ९००॥**

मासा नक्षत्रादयः पञ्च 'सूत्रे' पारमेश्वरे प्रवचने प्रतिपादिता इति शेषः, तत्र नक्षत्रेषु भवो नाक्षत्रः, किमुक्तं भवति ?—चन्द्रश्चारं चरन् यावता कालेनाभिजित आरभ्योत्तराषाढानक्षत्रपर्यन्तं गच्छति तत्कालप्रमाणो नाक्षत्रो मासः, यदिवा चन्द्रस्य नक्षत्रमण्डले परिवर्तयतो निष्पन्न इत्युपचारान्मासोऽपि नक्षत्रं, तथा चन्द्रे भवश्चान्द्रः युगादौ श्रावणे मासे बहुलपक्षप्रतिपद आरभ्य यावत्पूर्णिमासीपरिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपौर्णमासीपरावर्तश्चान्द्रो मास इतियावत्, अथवा चन्द्रचारनिष्पन्नत्वादुपचारतो मासोऽपि चान्द्रः, चः समुच्चये, तथा ऋतुमासः, इह किल ऋतुर्लोकरूढ्या षष्ट्यहोरात्रप्रमाणो मासद्वयात्मकः तस्यार्धमपि मासोऽवयवे समुदायोपचारात् ऋतुः स चार्थात्परिपूर्णत्रिंशदहोरात्रप्रमाणः, एष एव च ऋतुमासः कर्ममास इति वा सावनमास इति वा व्यवह्रियते, उक्तञ्च—"एस चेव उउमासो कम्ममासो सावणो मासो भन्नइ" इति, तथा आदित्यस्यायमादित्यः, स च एकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य षष्ठभागमानः यदिवा आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः, तथा पञ्चमो मासोऽभिवर्धितः, अभिव-

र्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणः सवत्सर., ॥ ८९७ ॥ साम्प्रतमेतेषामेव
गप्रमाणो मासोऽप्यवयवे समुदायोपचारादभिवर्धितः, तदेवमुक्ता नामतो नक्षत्रादयः पञ्चापि मासाः, सप्तविंशतिरहोरात्राः एकस्य
मासानां दिनपरिमाणमाह—'अहरत्ते'गाहा 'उउ'गाहा 'भागा'गाहा, नाक्षत्रो—नक्षत्रसम्बन्धी मासः सप्तविंशतिरहोरात्राः एकस्य
चाहोरात्रस्य सप्तषष्टिभागास्त्रिः सप्त—त्रयो वाराः सप्त, एकविंशतिरित्यर्थः, तथा चान्द्रः—चन्द्रमासः एकोनत्रिंशदहोरात्रा द्वाषष्टिभागाश्च
अहोरात्रस्य द्वात्रिंशत्, तथा ऋतुमासः परिपूर्णानि त्रिंशद्दिनानि, तथा आदित्यः—आदित्यमासो भवति त्रिंशदहोरात्रा अर्धं चाहोरात्रस्य,
तथा अभिवर्धितमासो दिनानामेकेनाधिका त्रिंशत्, एकत्रिंशदहोरात्रा इत्यर्थः, एकस्य चाहोरात्रस्य चतुर्विंशत्युत्तरशतरूपेण छेदेन—भा-
गेन विभक्तस्य एकविंशत्यधिकं शतं भागानां भवतीति, एते पञ्चापि मासा यथा निष्पत्तिं लभन्ते तथा 'समयात्' सिद्धान्ताद्
'ज्ञेयं' ज्ञातव्यमिति । स च निष्पत्तिप्रकारः सिद्धान्तानुसारेण विनेयजनानुग्रहाय किञ्चिद्दर्श्यते—इह किल चन्द्रचन्द्राभिवर्धितचन्द्राभि-
वर्धितलक्षणसंवत्सरपञ्चकप्रमाणे युगे अहोरात्रराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो १८३० भवति, कथमेतदवसीयते? इति चेदुच्यते—
इह सूर्यस्य दक्षिणमुत्तरं वा अयनं त्र्यशीतिअधिकदिनशतात्मकं युगे च पञ्च दक्षिणायनानि पञ्चोत्तरायणानीति सर्वसङ्ख्यया दशाय-
नानि ततस्त्र्यशीत्यधिकं दिनशतं दशकेन गुण्यते इत्यागच्छति यथोक्तो दिनराशिः, एवंप्रमाणं दिनराशिं स्थापयित्वा नक्षत्रचन्द्रऋत्वा-
दित्यमासानां दिनमानानयनाय यथाक्रमं सप्तषष्टिद्वाषष्ट्येकषष्टिषष्टिलक्षणैर्भागहारैर्भागं हरेत् ततो यथोक्तं नक्षत्रादिमासगतदिनपरिमाण-
मागच्छति, तथाहि—युगदिनराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो ध्रियते, तस्य सप्तषष्टिर्युगे नक्षत्रमासा इति सप्तषष्ट्या भागो ह्रियते लब्धाः
सप्तविंशतिरहोरात्राः एकविंशतिरहोरात्रस्य सप्तषष्टिभागाः एष नक्षत्रमासः, तथा तस्यैव युगदिनराशेस्त्रिंशदधिकाष्टादशशतमानस्य युगे

**मासा य पंच सुत्ते नक्खत्तो १ चंदिओ २ य रिउमासो ३ । आइच्चोऽविय अवरो ४ ऽभिवड्डिओ तह य पंचमओ ५ ॥ ८९७ ॥ अहरत्त सत्तवीसं तिसत्तसत्तट्ठिभाग नक्खत्तो २७ । $\frac{२१}{६७}$ । चंदो उणत्तीसं बिसट्ठिभाया य बत्तीसं २९ । $\frac{३२}{६२}$ ॥ ८९८ ॥ उउमासो तीसदिणो ३० आइच्चो तीस होइ अद्धं च ३० । $\frac{१}{२}$ । अभिवड्डिओ य मासो चउवीससएण छेएणं ॥ ८९९ ॥ भागाणिगवीससयं तीसा एगाहिया दिणाणं तु ३१ । $\frac{१२१}{१२४}$ । एए जह निप्फत्तिं लहंति समयाउ तह नेयं ॥ ९०० ॥**

मासा नक्षत्रादयः पञ्च 'सूत्रे' पारमेश्वरे प्रवचने प्रतिपादिता इति शेषः, तत्र नक्षत्रेषु भवो नाक्षत्रः, किमुक्तं भवति ?—चन्द्रश्चारं चरन् यावता कालेनाभिजित आरभ्योत्तरापाढानक्षत्रपर्यन्तं गच्छति तत्कालप्रमाणो नाक्षत्रो मासः, यदिवा चन्द्रस्य नक्षत्रमण्डले परिवर्तयतो निष्पन्न इत्युपचारान्मासोऽपि नक्षत्रं, तथा चन्द्रे भवश्चान्द्रः युगादौ श्रावणे मासे बहुलपक्षप्रतिपद आरभ्य यावत्पूर्णिमासीपरिसमाप्तिस्तावत्कालप्रमाणश्चान्द्रो मासः, एकपौर्णमासीपरावर्तश्चान्द्रो मास इतियावत्, अथवा चन्द्रचारनिष्पन्नत्वादुपचारतो मासोऽपि चान्द्रः, चः समुच्चये, तथा ऋतुमासः, इह किल ऋतुर्लोकरूढ्या षष्ट्यहोरात्रप्रमाणो मासद्वयात्मकः तस्यार्धमपि मासोऽवयवे समुदायोपचारात् ऋतुः स चार्थात्परिपूर्णत्रिंशदहोरात्रप्रमाणः, एष एव च ऋतुमासः कर्ममास इति वा सावनमास इति वा व्यवह्रियते, उक्तञ्च—"एस चेव उउमासो कम्ममासो सावणो मासो भन्नइ" इति, तथा आदित्यस्यायमादित्यः, स च एकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य षष्ठभागमानः यदिवा आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः, तथा पञ्चमो मासोऽभिवर्धितः, अभिव-

र्धितो नाम मुख्यतस्त्रयोदशचन्द्रमासप्रमाणः संवत्सरः, द्वादशचन्द्रमासप्रमाणात्संवत्सरादेकेन मासेनाभिवर्धितत्वात्, परं तद्द्वादशभागप्रमाणो मासोऽप्यवयवे समुदायोपचारादभिवर्धितः, तदेवमुक्ता नामतो नक्षत्रादयः पञ्चापि मासाः, ॥ ८९७ ॥ साम्प्रतमेतेषामेव मासानां दिनपरिमाणमाह—'अहरत्ते'गाहा 'उउ'गाहा 'भागा'गाहा, नाक्षत्रो—नक्षत्रसम्बन्धी मासः सप्तविंशतिरहोरात्राः एकस्य चाहोरात्रस्य सप्तषष्टिभार्गास्त्रिः सप्त—त्रयो वाराः सप्त, एकविंशतिरित्यर्थः, तथा चान्द्रः—चन्द्रमासः एकोनत्रिंशदहोरात्रा द्वाषष्टिभागाश्च अहोरात्रस्य द्वात्रिंशत्, तथा ऋतुमासः परिपूर्णानि त्रिंशद्दिनानि, तथा आदित्यः—आदित्यमासो भवति त्रिंशदहोरात्रा अर्धं चाहोरात्रस्य, तथा अभिवर्धितमासो दिनानामेकेनाधिका त्रिंशत्, एकत्रिंशदहोरात्रा इत्यर्थः, एकस्य चाहोरात्रस्य चतुर्विंशत्युत्तरशतरूपेण छेदेन—भागेन विभक्तस्य एकविंशत्यधिकं शतं भागानां भवतीति, एते पञ्चापि मासा यथा निष्पत्तिं लभन्ते तथा 'समयात्' सिद्धान्ताद् 'ज्ञेयं' ज्ञातव्यमिति । स च निष्पत्तिप्रकारः सिद्धान्तानुसारेण विनेयजनानुग्रहाय किञ्चिद्दर्श्यते—इह किल चन्द्रचन्द्राभिवर्धितचन्द्राभिवर्धितलक्षणसंवत्सरपञ्चकप्रमाणे युगे अहोरात्रराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो १८३० भवति, कथमेतदवसीयते? इति चेदुच्यते—इह सूर्यस्य दक्षिणमुत्तरं वा अयनं त्र्यशीतिअधिकदिनशतात्मकं युगे च पञ्च दक्षिणायनानि पञ्चोत्तरायणानीति सर्वसङ्ख्यया दशायनानि ततस्त्र्यशीत्यधिकं दिनशतं दशकेन गुण्यते इत्यागच्छति यथोक्तो दिनराशिः, एवंप्रमाणं दिनराशिं स्थापयित्वा नक्षत्रचन्द्रऋत्वादित्यमासानां दिनमानानयनाय यथाक्रमं सप्तषष्टिद्वाषष्ट्येकषष्टिषष्टिलक्षणैर्भागहारैर्भागं हरेत् ततो यथोक्तं नक्षत्रादिमासगतदिनपरिमाणमागच्छति, तथाहि—युगदिनराशिस्त्रिंशदधिकाष्टादशशतप्रमाणो ध्रियते, तस्य सप्तषष्ट्या युगे नक्षत्रमासा इति सप्तषष्ट्या भागो ह्रियते लब्धाः सप्तविंशतिरहोरात्राः एकविंशतिरहोरात्रस्य सप्तषष्टिभागाः एष नक्षत्रमासः, तथा तस्यैव युगदिनराशेस्त्रिंशदधिकाष्टादशशतमानस्य युगे

चन्द्रमासा द्वाषष्टिरिति द्वाषष्ट्या भागे हृते यल्लभ्यते तच्चन्द्रमाससमानं, तथाऽस्यैव युगदिनराशेरेकषष्ट्यिुगे ऋतुमासाः इत्येकषष्ट्या भागहरणे लब्धं यथोक्तमृतुमाससमानं, तथा युगे सूर्यमासाः षष्टिरिति षष्ट्या ध्रुवराशेर्भागहारे यल्लब्धमेतत्सूर्यमासपरिमाणं, उक्तं च—'रिक्खाईमासाणं करणमिणमं तु आणणोवाओ । जुगदिणरासिं ठाविय अट्ठार सयाइं तीसाइं ॥ १ ॥ ताहे हराहि भागं रिक्खाईयाण दिणकरंताणं । सत्तट्ठीबावट्ठीएगट्ठीसट्ठिभागेहिं ॥ २ ॥" [ ऋक्षादिमासानां करणमिदं त्वानयनोपायः युगदिनराशिं स्थापयित्वाऽष्टादश शतानि त्रिंशानि ॥ १ ॥ ततो हर भागमृक्षादीनां दिनकरान्तानां सप्तषष्टिद्वाषष्टिएकषष्टिषष्टिभागैः ॥ २ ॥] तथा तस्मिन् वर्षे अभिवर्धितरूपे तृतीये पञ्चमे वा त्रयोदश शशिमासा भवन्ति तद्वर्षं द्वादशभागीक्रियते तत एकैको भागोऽभिवर्धितमास इत्युच्यते, इह किलाभिवर्धितसंवत्सरस्य त्रयोदशचन्द्रमाससमानस्य दिनपरिमाणं त्र्यशीत्यधिकानि त्रीणि शतानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा रात्रिन्दिवस्य ३८३$\frac{४४}{६२}$ तथाहि—एकस्मिन् चन्द्रमासे एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागाः, मासाश्च त्रयोदश इति तानि दिनानि तदंशाश्च त्रयोदशभिर्गुण्यन्ते जातानि सप्तसप्तत्युत्तराणि दिनानां त्रीणि शतानि, अंशानां च षोडशाधिकानि चत्वारि शतानि, ते च दिनस्य द्वाषष्टिभागाः ततो दिनानयनाय द्वाषष्ट्या भागो ह्रियते लब्धानि षट् दिनानि, तानि च पूर्वोक्तदिनेषु मील्यन्ते, ततो जातानि त्रीणि शतानि त्र्यशीत्यधिकानि दिनानां चतुश्चत्वारिंशच्च द्वाषष्टिभागाः, ततो वर्षे मासा द्वादश इति मासानयनाय द्वादशभिर्भागो ह्रियते, लब्धा एकत्रिंशदहोरात्राः शेषास्तिष्ठन्त्यहोरात्रा एकादश, ते चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्तरशतेन गुण्यन्ते, जातानि त्रयोदश शतानि चतुष्षष्ट्यधिकानि, येऽपि च उपरितनाश्चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि चतुर्विंशत्युत्तरशतभागकरणार्थं द्वाभ्यां गुण्यन्ते जाता अष्टाशीतिः, साऽनन्तरभागराशौ प्रक्षिप्यते, जातानि च चतुर्दश शतानि द्विपञ्चाशदधिकानि, तेषां द्वादशभिर्भागे हृते लब्धमेकविंशत्युत्तरं शतं चतुर्विंश-

त्युत्तरशतभागानां, एतावदभिवर्धितमासप्रमाणं, उक्तं च—"जंमि वरिसंमि तेरस ससिणो मासा हवंति सो वरिसो । बारसभाए कज्जइ अभिवड्ढियमास सो भागो ॥ १ ॥" [यस्मिन् वर्षे त्रयोदश शशिनो मासा भवन्ति तत् वर्षं । द्वादशभागीक्रियते स भागोऽभिवर्धितमासः ॥ १ ॥] इति १४१ ॥ ८९८ ॥ ८९९ ॥ ९०० ॥ सम्प्रति 'वरिसाण पंच भेय'त्ति द्विचत्वारिंशदधिकशततमं द्वारमाह—

**संवच्छरा उ पंच उ चंदे १ चंदे २ ऽभिवड्ढिए ३ चेव । चंदे ४ ऽभिवड्ढिए ५ तह विसट्ठिमासेहिं जुगमाणं ॥ ९०१ ॥**

चान्द्रश्चान्द्रोऽभिवर्धितः चान्द्रोऽभिवर्धितश्चेत्येवं क्रमेण पञ्च संवत्सरा भवन्ति, एते च पञ्चाप्यनेन क्रमेण भवन्तो मिलित्वा एकं युगं निष्पादयन्तीति युगसंवत्सरा इत्युच्यन्ते, तत्र पूर्वोक्तस्वरूपचन्द्रमासनिष्पन्नत्वात्संवत्सरोऽपि चान्द्रः, तस्य च प्रमाणं त्रीणि शतानि चतुष्पञ्चाशदुत्तराणि दिनानां द्वादश च द्वाषष्टिभागाः $३५४\frac{१२}{६२}$ तथाहि—एकोनत्रिंशद्दिनानि द्वाषष्टिभागीकृतस्याहोरात्रस्य च द्वात्रिंशदंशाश्चन्द्रमासः $२९\frac{३२}{६२}$ स च द्वादशभिर्गुण्यते ततो यथोक्तं चन्द्रसंवत्सरप्रमाणं भवति, एवं द्वितीयचतुर्थावपि संवत्सराविति, तथा चन्द्रसंवत्सरादेकेन मासेनाभिवर्धितत्वादभिवर्धितसंवत्सरः, तस्य च प्रमाणं त्रीणि शतानि अह्नां त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागाः $३८३\frac{४४}{६२}$ तथाहि—एकत्रिंशदहोरात्राश्चतुर्विंशत्युत्तरशतभागानां चैकविंशं शतमभिवर्धितमासप्रमाणं, तत्रैकत्रिंशद्दिनानि द्वादशभिर्गुण्यन्ते जातानि द्वासप्तत्युत्तराणि त्रीणि शतानि, यच्चैकविंशत्यधिकं भागशतं तदपि द्वादशभिर्गुण्यते जातानि द्विपञ्चाशदधिकानि चतुर्दश शतानि, तेषां च चतुर्विंशत्यधिकशतेन भागहरणे लब्धान्येकादश दिनानि तानि च पूर्वोक्तदिनेषु प्रक्षिप्यन्ते, भवन्ति च त्रीणि शतानि

त्र्यशीत्यधिकानि, शेपस्य चाष्टाशीतिरूपभाज्यराशेश्चतुर्विंशत्युत्तरशतरूपभाजकराशेश्च यथोक्तभागानयनाय द्विकेनापवर्तना क्रियते, लब्धाश्चतुश्चत्वारिंशत् द्वापष्टिभागाः एपोऽभिवर्धितसंवत्सरः, एवं पञ्चमोऽपि, एभिश्चान्द्रादिभिः पञ्चभिः संवत्सरैरेकं युगं भवति, तच्च द्विपष्टिचन्द्रमासप्रमाणं, तथाहि—युगे त्रयश्चन्द्रसंवत्सराः एकैकस्मिंश्च चन्द्रसंवत्सरे द्वादश चन्द्रमासाः ततस्त्रयो द्वादशभिर्गुण्यन्ते जाताः पट्त्रिंशत्, अभिवर्धितसंवत्सरौ च युगे द्वावेव एकैकस्मिंश्चाभिवर्धितसंवत्सरे त्रयोदश चन्द्रमासाः, अधिकमासकस्य तत्र सद्भावात्, ततो द्वौ त्रयोदशभिर्गुण्येते जाताः पड्विंशतिः, उभयमीलने च द्वापष्टिश्चन्द्रमासा इति १४२ ॥ ९०१ ॥ इदानीं 'लोगसरूवं'ति त्रिचत्वारिंशदधिकशततमं द्वारमाह—

माघवईऍ तलाओ ईसिंपब्भारउवरिमतलं जा । चउदसरज्जू लोगो तस्साहो वित्थरे सत्त
॥ ९०२ ॥ उवरिं पएसहाणी ता नेया जाव भूतले एगा । तयणुप्पएसवुड्ढी पंचमकप्पंमि जा पंच
॥ ९०३ ॥ पुणरवि पएसहाणी जा सिद्धसिलाएँ एक्कगा रज्जू । घम्माए लोगमज्झो जोयणअसंखकोडीहिं ॥ ९०४ ॥ हेट्ठाहोमुहमल्लगतुल्लो उवरिं तु संपुडठियाणं । अणुसरइ मल्लगाणं लोगो पंचत्थिकायमओ ॥ ९०५ ॥ तिरियं सत्तावन्ना उड्ढं पंचेव हुंति रेहाओ । पाएसु चउसु रज्जू चउदस रज्जू य तसनाडी ॥ ९०६ ॥ तिरियं चउरो दोसुं छ दोसुं अट्ठ दस य इक्किक्के । बारस दोसुं सोलस दोसुं वीसा य चउसुंपि ॥ ९०७ ॥ पुणरवि सोलस दोसुं बारस दोसुंपि हुंति नायव्वा । तिसु दस तिसु अट्ठ च्छा य दोसु दोसुंपि चत्तारि ॥ ९०८ ॥ ओयरिय लोयमज्झा चउरो चउरो

॥ ९०९ ॥ अडवीसा छ-
य सवहिं नेया । तिग तिग दुग दुग एक्किकगो य जा सत्तमी पुढवी
॥ ९१० ॥ घीसा चउवीसा वीस सोल दस चउरो । सत्तासुवि पुढवीसुं तिरियं खण्डुयगपरिमाणं
पंच सय बारसुत्तर हेट्ठा तिसया उ चउर अब्भहिया । अह उड्ढं अट्ठ सया सोलहिया खंडुया
सबे ॥ ९११ ॥ बत्तीसं रज्जुओ हेट्ठा रुयगस्स हुंति नायवा । एगोणवीसमुवरिं इगवन्ना सबपिं-
डेणं ॥ ९१२ ॥ दाहिणपास दुखंडा वामे संधिज्ज विहियविवरीयं । नाडीजुया तिरज्जू उड्ढाहो
सत्त तो जाया ॥ ९१३ ॥ हेट्ठाओ वामखंडं दाहिणपासंमि ठवसु विवरीयं । उवरिम तिरज्जु
खंडं वामे ठाणंमि संधिज्जा ॥ ९१४ ॥ तिन्नि सया तेयाला रज्जूणं हुंति सवलोगम्मि । चउरंसं
होइ जयं सत्तण्ह घणेणिमा संखा ॥ ९१५ ॥ छसु खंडगेसु य दुगं चउसु दुगं दससु हुंति च-
त्तारि । चउसु चउक्कं गेवेज्जणुत्तराइं चउक्कंमि ॥ ९१६ ॥ सयंभुपुरिमंताओ अवरंतो जाव रज्जु-
माणं तु । एएण रज्जुमाणेण लोगो चउद्दसरज्जुओ ॥ ९१७ ॥

माघवत्याः—तमस्तमप्रभापराभिधानायाः सप्तमनरकपृथिव्यास्तलाद्—अलोकसंस्पर्शिनः सर्वाधस्तनभागादारभ्य ईषत्प्राग्भारायाः—सिद्ध-शिलायाः सर्वोपरितनतलं लोकान्तलक्षणं यावदूर्द्ध्वाधोभागेन चतुर्दशरज्जूप्रमाणो लोको भवति, तस्य च लोकस्याधस्तात्—सप्तमपृथिव्या अधोभागे विस्तरतो देशोनाः सप्त रज्जवः, सूत्रकारेण त्वल्पत्वाद्देशोनत्वं न विवक्षितं, ततोऽधोलोकान्तादुपरि प्रदेशहानिः—तिर्यगङ्गुलास-ङ्ख्येयभागहानिस्तावद् ज्ञातव्या यावद् भूतले—तिर्यग्लोकमध्यवर्तिसमभूमिभागे विस्तरत एका रज्जूः, तदनु—समभूमिभागादुपरिमुखं

प्रदेशवृद्धिः—तिर्यगङ्गुलासङ्ख्येयभागवृद्धिस्तावद् द्रष्टव्या यावदूर्द्धलोकमध्ये पञ्चमे ब्रह्मलोकाभिधे कल्पे विस्तरतः पञ्च रज्जवः, ततः पुनरप्यूर्द्ध प्रदेशहानिस्तावदवसेया यावत्सिद्धशिलाया उपरिष्टाल्लोकान्ते विस्तरत एकैव रज्जुः, घर्म्मायां च—रत्नप्रभापराभिधानायां प्रथमपृथिव्यां योजनानामसङ्ख्याताभिः कोटिभिर्बहुसमभूमिभागादतिक्रान्ताभिर्लोकमध्यं, इयमत्र भावना—इह सामस्त्येन चतुर्दशरज्ज्वात्मको लोकः, स च त्रिधा भिद्यते, तद्यथा—ऊर्द्धलोकस्तिर्यग्लोकोऽधोलोकश्च, तत्र तिर्यग्लोकस्य ऊर्द्धाधोऽपेक्षया अष्टादशयोजनशतप्रमाणस्य मध्यभागे जम्बूद्वीपे रत्नप्रभाया बहुसमे भूमिभागे मेरुबहुमध्येऽष्टप्रादेशिको रुचकः, तत्र गोस्तनाकाराश्चत्वार उपरितनाः प्रदेशाश्चत्वारश्चाधस्तनाः, एष एव रुचकः सर्वासां दिशां विदिशां च प्रवर्तकः, एतस्माच्च रुचकादूर्द्धाधस्तिर्यग्लोकविभागाः, तथाहि—रुचकस्याधस्तादुपरिष्टाच्च नव नव योजनशतानि तिर्यग्लोकः तस्य च तिर्यग्लोकस्याधस्तादधोलोकः उपरिष्टादूर्द्धलोकः, देशोनसप्तरज्जूप्रमाण ऊर्द्धलोकः समधिकसप्तरज्जूप्रमाणोऽधोलोकः मध्येऽष्टादशयोजनशतोच्छ्रयस्तिर्यग्लोकः, ततो—रुचकसमभूतलभागादधोमुखमसङ्ख्याता योजनकोटीर्गत्वा रत्नप्रभायां चतुर्दशरज्ज्वात्मकस्य लोकस्य मध्यभागः परिपूर्णसप्तरज्जूप्रमाणो भवतीति ॥ १०२ ॥ १०३ ॥ १०४ ॥ सम्प्रति लोकस्य संस्थानमाह—'हेट्ठे'त्यादि, अधस्ताद्—अधोभागे अधोमुखमल्लकतुल्यः—अधोमुखीकृतसरावसदृक्षाकारः, उपरि पुनः सम्पुटस्थितयोर्मल्लकयोः—शरावयोराकारमनुसरति लोकः, अयमर्थः—प्रथमं तावदेकं शरावमधोमुखमवस्थाप्यते ततस्तस्योपरि द्वितीयमुपरिमुखं तस्याप्युपरि तृतीयमधोमुखमित्येवं व्यवस्थितशरावत्रयसदृशाकारः सकलोऽपि लोको भवतीति, स च पञ्चास्तिकायमयो—धर्माधर्माकाशजीवपुद्गललक्षणैः पञ्चभिरस्तिकायैर्व्याप्तः ॥ १०५ ॥ अथ चतुर्दशरज्ज्वात्मकमपि लोकमसत्कल्पनया खण्डकप्रविभागेन दिदर्शयिषुः खण्डकनिष्पादनाय तावदाह—'तिरिय'मित्यादि, तिर्यक्—तिरश्चीनाः सप्तपञ्चाशत्सङ्ख्या रेखाः पट्टिकादौ स्थाप्यन्ते, ऊर्द्ध—उपर्यधोभा-

वेन पुनः पञ्चैव रेखाः स्थाप्या भवन्ति, तथा 'पाएसु चउसु'त्ति सप्तम्यास्तृतीयार्थत्वाच्चतुर्भिः पादैः—खण्डकैरेका रज्जूर्भवति, इह चतुर्भिः खण्डकैरेका रज्जूः परिकल्पिता ततो रज्जूचतुर्थभागत्वात् खण्डकं पाद इत्यभिहितं, चतुर्दशरज्जूश्च—ऊर्द्ध्वाधोभावेन चतुर्दशरज्जूप्रमाणा त्रसनाडी, इयमत्र भावना—तिर्यग्व्यवस्थापितसप्तपञ्चाशद्रेखाभिरूर्द्ध्वाधोभावेन षट्पञ्चाशत्खण्डकानि जायन्ते, चतुर्भिश्च खण्डकैरेका रज्जूरिति षट्पञ्चाशतश्चतुर्भिर्भागहारे ऊर्द्ध्वाधश्चतुर्दश रज्जवो लभ्यन्ते इति, तिर्यक्त्रसनाडीमध्ये सर्वत्र एकैव रज्जूरुपर्यधोभावविनिवेशितरेखापञ्चकेन खण्डकचतुष्कस्यैव निष्पन्नत्वात्, एवं तावत् त्रसनाडीमध्ये ऊर्द्ध्वाधोभावेन खण्डकान्युक्तानि ॥ ९०६ ॥ अथ सकलस्यापि लोकस्य तिर्यग्वर्तीनि खण्डकान्यभिधातुकामः प्रथमं तावदूर्द्ध्वलोके रुचकादारभ्य लोकान्तं यावत्तिर्यक्खण्डान्याह— 'तिरिय'मित्यादि, रुचकसमाद् भूभागादूर्द्ध्वं द्वयोः पङ्क्त्योरेकोनत्रिंशत्तमरेखोपरिवर्तिन्योस्तिर्यक्—तिरश्चीनानि चत्वारि चत्वारि खण्डकानि त्रसनाडीमध्यगतान्येव भवन्ति, त्रसनाड्या वहिस्तत्र खण्डकानामभावात्, तत उपरितन्योर्द्वयोः पङ्क्त्योः षट् खण्डकानि, तत्र चत्वारि त्रसनाडीमध्यवर्तीन्येव एकैकं तु त्रसनाड्या वहिः प्रत्येकमुभयपार्श्वयोरिति, तत एकैकस्यां पङ्क्तौ क्रमेणाष्टौ दश च खण्डकानि, तथाहि—एकस्यां पङ्क्तौ नाडीमध्ये चत्वारि वहिश्चैकपार्श्वे द्वयं द्वितीयपार्श्वेऽपि द्वयमित्यष्टौ, अपरस्यां च पङ्क्तौ चत्वारि मध्ये वहिश्च उभयतः प्रत्येकं त्रितयं त्रितयमिति दश, ततोऽपि द्वयोः पङ्क्त्योः प्रत्येकं द्वादश द्वादश खण्डकानि चत्वारि मध्ये वहिश्चत्वारि चत्वारीति, तदनन्तरं द्वयोः पङ्क्त्योः प्रत्येकं षोडश षोडश खण्डकानि चत्वारि मध्ये पार्श्वयोश्च षट् षडिति, तत उपरितनीषु चतसृषु पङ्क्तिषु प्रत्येकं विंशतिः खण्डकानि चत्वारि मध्ये वहिश्चैकपार्श्वेऽष्टावपरपार्श्वेऽप्यष्टाविति, तदेवमूर्द्ध्वलोके चतुर्दशसु पङ्क्तिषु यथासम्भवं खण्डकानां वृद्धिरुक्ता ॥९०७॥ अथ चतुर्दशस्वेव पङ्क्तिषु हानिमाह—(ग्रन्था. १०००० 'पुणरवी'त्यादि, पुनरप्युपरितनपङ्क्तिद्वये षोडश खण्डकानि, भावना च

सर्वत्र प्राग्वदवसेया, तत ऊर्ध्वं द्वयोः पङ्क्त्योर्द्वादश द्वादश खण्डकानि, ततोऽपि तिसृषु पङ्क्तिषु दश दश खण्डकानि, ततोऽपि तिसृषु पङ्क्तिषु अष्टावष्टौ खण्डकानि, तदनु द्वयोः पङ्क्त्योः षट् षट् खण्डकानि ततोऽपि सर्वोपरिवर्तिन्योर्द्वयोः पङ्क्त्योर्नाडीमध्यगतान्येव चत्वारि चत्वारि खण्डकानि भवन्तीति, इत्थं तावन्निजगुरुप्रदर्शितस्थापनानुसारतो रुचकादारभ्य लोकान्तं यावत् 'तिरियं चउरो दोसुं' इत्यादिगाथाद्वयं व्याख्यातं, अपरे तु वैपरीत्येन पट्टेषु स्थापनां पश्यन्त एतद्गाथाद्वयं लोकान्तादारभ्य लोकमध्यं यावद्व्याख्यानयन्तीति ॥ १०८ ॥ अथाधोलोके सप्तस्वपि पृथिवीषु ऊर्ध्वाधोभावेन खण्डकान्याह—'ओयरिये'त्यादि, अवतीर्य लोकान्ताल्लोकमध्यं समागत्य ततो लोकमध्याद् —रुचकलक्षणादारभ्य सर्वत्र—सर्वासु पृथिवीषु त्रसनाडीमध्ये ऊर्ध्वाधोभावेन चत्वारि चत्वारि खण्डकानि ज्ञातव्यानि, त्रसनाड्यास्तु बहिर्द्वितीयाद्यासु पृथिवीषु यथाक्रमं खण्डकानां त्रिकं त्रिकं द्विकं द्विकमेकैकं च खण्डकं तावद् विज्ञेयं यावत् सप्तमी पृथ्वी, इयमत्र भावना—रत्नप्रभायां तावत् त्रसनाड्याः बहिः खण्डकानामभाव एव, ततः शर्कराप्रभाया उपरितनतलादारभ्य दक्षिणवामभागयोः प्रतिपङ्क्ति तिरश्चीनानि त्रीणि त्रीणि खण्डकानि तावदूर्ध्वाधोभावेन ज्ञेयानि यावत्सप्तमपृथिव्या अधस्तनो भागः, ततो वालुकाप्रभाया उपरितलादारभ्य उभयपार्श्वयोः खण्डकत्रयात्पुरतः पुनरपि त्रीणि त्रीणि खण्डकानि तावदवसेयानि यावत्सप्तमी पृथिवी, ततः पङ्कप्रभाया उपरितलादारभ्य द्वयोः पार्श्वयोः पूर्वोक्तखण्डकेभ्यः परतो द्वे द्वे खण्डके तावदवगन्तव्ये यावत्सप्तमी पृथिवी, ततः पुनरपि धूमप्रभाया आरभ्य पार्श्वद्वयेऽपि द्वे द्वे खण्डके तावद्भवतो यावत्सप्तमी पृथिवी, ततो भूयोऽपि तमःप्रभाया आरभ्य पार्श्वद्वयोस्तावदेकैकं खण्डकं स्थापनीयं यावत् सप्तमी पृथिवी, ततः सप्तम्यामपि पृथिव्यां पूर्वोक्तखण्डकेभ्यः परत उभयपार्श्वयोरेकैकं खण्डकं प्रतिपङ्क्ति तावद्भवति यावत्सर्वाधस्तनी पङ्क्तिरिति, तदेवमधोलोके ऊर्ध्वाधोभावेन खण्डकान्युक्तानि ॥ १०९ ॥ अथ तमस्तमःप्रभाया आरभ्य रत्नप्रभां याव-

प्रतिपृथिवि तिर्यक्खण्डकप्रमाणमाह—'अट्ठावीसे'त्यादि, सप्तम्यां—तमस्तमःप्रभायां नरकपृथिव्यामष्टाविंशतिः खण्डकानि तिर्यग्भवन्ति, तत्र त्रसनाड्या वहिरेकपार्श्वे द्वादश द्वितीयपार्श्वेऽपि द्वादश त्रसनाडीमध्ये च चत्वारीति, तमःप्रभायां षड्विंशतिः खण्डकानि चत्वारि मध्ये वहिर्भागयोश्चैकादशैकादशेति, धूमप्रभायां चतुर्विंशतिः चत्वारि मध्ये उभयपार्श्वयोश्च दश दशेति, पङ्कप्रभायां विंशतिः मध्ये चत्वारि वहिर्भागयोश्चाष्टाष्टाविति, वालुकाप्रभायां षोडश मध्ये चत्वारि उभयपार्श्वयोश्च षट् षडिति, शर्कराप्रभायां तिर्यग्दश खण्डकानि चत्वारि मध्ये दक्षिणवामभागयोश्च त्रीणि त्रीणीति, रत्नप्रभायां च त्रसनाडीमध्यगतान्येव चत्वारि तिर्यक्खण्डकानीत्येवं सप्तस्वपि तमस्तमःप्रभाद्यासु पृथिवीषु तिर्यक्तिरश्चीनखण्डकानां—कल्पितचतुरस्राकारनभोभागरूपाणां परिमाणं—सङ्ख्यानं समवसेयमिति ॥ ९१० ॥ अथ सकलस्यापि लोकस्य खण्डकसर्वसङ्ख्यामाह—'पञ्चे'त्यादि, पञ्च शतानि द्वादशोत्तराणि—द्वादशाधिकानि खण्डकानां 'हेट्ठ'त्ति अधोलोके भवन्ति, तथाहि—'अडवीसा' इत्यादिगाथोक्तान् अष्टाविंशत्याद्यङ्कान् मीलयित्वा प्रतिपृथिवि अष्टाविंशतिषड्विंशत्यादिखण्डकसङ्ख्योपेतपङ्क्तिचतुष्टयसद्भावाच्चतुर्भिर्गुणयेत्, ततो जायन्ते पञ्च शतानि द्वादशोत्तराणीति, 'अह उड्ढं'ति अथ—अधोलोकादनन्तरमूर्द्ध्व—ऊर्द्ध्वलोके त्रीणि शतानि चतुर्भिरभ्यधिकानि खण्डकानां भवन्ति, 'तिरियं चउरो दोसुं' इत्यादिगाथाद्वितयोदितखण्डकमीलने यथोक्तसङ्ख्यासद्भावात्, सर्वाणि चाधोलोकोर्द्ध्वलोकसम्बन्धीनि खण्डकानि मिलितानि अष्टौ शतानि षोडशाधिकानि भवन्तीति ॥९११॥ अथ सर्वस्मिन्नपि लोके यावत्यो यावत्यो रज्जवो भवन्ति तावतीर्दर्शयितुमाह—'बत्तीसं'इत्यादि, रुचकस्य—पूर्वोक्तस्वरूपस्याधस्तादधोलोके इत्यर्थः द्वात्रिंशद्रज्जवो भवन्ति ज्ञातव्याः, इह किल त्रिधा रज्जूः—सूचीरज्जूः प्रतररज्जूर्घनरज्जूश्च, तत्रायामतः खण्डकचतुष्टयप्रमाणा वाहल्यतः पुनरेकखण्डप्रमिता खण्डकश्रेणिः सूच्याकारव्यवस्थापितखण्डकचतुष्टयनिष्पन्नत्वात्सूचीरज्जूः, तथा एषैव प्राक्प्रदर्शिता खण्डकचतुष्कात्मिका सूचिस्तयैव गुण्यते अतः प्रत्येकं खण्डकचतुष्टयनि-

ष्पन्नसूचीचतुष्टयात्मिका उपरितनाधस्तनखण्डकरहिता षोडशखण्डकसङ्ख्या प्रतररज्जूः सम्पद्यते, तथा प्रतर एव सूच्या गुणितो दैर्घ्येण विष्कम्भतः पिण्डतश्च समसङ्ख्यखण्डकोपेता सर्वतश्चतुरस्रा घनरज्जूः, दैर्घ्यादिषु त्रिष्वपि स्थानेषु समतालक्षणस्यैव घनस्येह रूढत्वात्, प्रतररज्जूश्च दीर्घविष्कम्भाभ्यामेव समानपिण्डस्तस्यैकखण्डकमात्रत्वादिति भावः, एषा च घनरज्जूश्चतुःषष्टिखण्डकात्मिका, पूर्वोक्तसूच्याऽनन्तरोदितषोडशखण्डकप्रमिते प्रतरे गुणिते एतावतामेव खण्डकानां भावात्, स्थापना च—प्रागुक्तषोडशखण्डकात्मकप्रतरस्योपरि त्रीन् वारान् षोडश षोडश खण्डकानि दत्त्वा भावनीया, तथा च दैर्घ्यविष्कम्भपिण्डैस्तुल्योऽयमापद्यत इति, उक्तं च—"सूई रज्जू चउहिँ उ खंडगेहिँ सोलसहिँ पयररज्जू य। चउसट्ठिखंडगेहिँ घणरज्जू होइ विन्नेया ॥ १ ॥" ततो द्वादशोत्तरपञ्चशतरूपस्याधोलोकखण्डकराशेः प्रतररज्ज्वानयनाय षोडशभिर्भागे हृते द्वात्रिंशत्प्रतररज्जवो भवन्ति, तथा उपरि—ऊर्द्ध्वलोके एकोनविंशतिः प्रतररज्जवः, चतुरुत्तरशतत्रयस्य षोडशभिर्भागहारे एकोनविंशतेरेव लभ्यमानत्वात्, तथा सर्वपिण्डेन—अधोलोकोर्द्ध्वलोकसम्बन्धिसर्वरज्जूमीलनेन एकपञ्चाशत्प्रतररज्जवो भवन्तीति ॥ ११२ ॥ साम्प्रतं घनरज्जूसङ्ख्यां प्रतिपिपादयिषुः प्रथमं तावल्लोकघनीकरणमाह—'दाहिण' गाहा 'हेट्ठाओ' गाहा, ऊर्द्ध्वलोके त्रसनाड्या दक्षिणपार्श्ववर्तिनी ये द्वे खण्डे—ब्रह्मलोकमध्यादधस्तनमुपरितनं च खण्डं ते परिगृह्य विपरीते च विधाय—अधस्तनभागमुपरितनं उपरितनं च चाधः कृत्वेत्यर्थः, वामपार्श्वे सन्दध्यात्—संयोजयेत्, ततस्ते द्वे खण्डे रज्जूविस्तृतया त्रसनाड्या युते सर्वत्र विस्तरतस्तिस्रो रज्जवो जाताः ऊर्द्ध्वाधश्चोच्छ्रयेण सप्त रज्जवः इत्यूर्द्ध्वलोकसंवर्त्तनं, 'हेट्ठाउ'त्ति अधस्ताद्—अधोलोके पुनस्त्रसनाडीतो वामभागवर्ति खण्डं बुद्ध्या गृहीत्वा दक्षिणपार्श्वे विपरीतं कृत्वा स्थापयेत्, तत उपरितनसंवर्तितोर्द्ध्वलोकरूपं खण्डं त्रिरज्जूविस्तीर्णं संवर्तिताधोलोकखण्डस्य वामे स्थाने—वामपार्श्वे सङ्घातयेत्, इयमत्र भावना—इह स्वरूपतस्तावल्लोक ऊर्द्ध्वाधश्चतुर्दशरज्जूप्रमाणः

अधस्ताद्विस्तरतो देशोनसप्तरज्जूप्रमाणः तिर्यग्लोकमध्यभागे एकरज्जूः ब्रह्मलोकमध्ये पञ्चरज्जूः उपरि च लोकान्ते एकरज्जूः शेपस्था-
नेपु पुनरनियतविस्तरः, एवंप्रमाणस्य लोकस्य वैशाखस्थानस्थकटिस्थकरयुग्मपुरुषाकारस्य घनीकरणाय प्रथममुपरितनलोकार्धं संवर्त्यते,
तथाहि—सर्वत्रैकरज्जूविस्तीर्णायास्त्रसनाड्या दक्षिणभागवर्तिनी ब्रह्मलोकमध्यादधस्तनमुपरितनं च ये द्वे खण्डे कूर्पराकारसंस्थिते ब्रह्मलो-
कमध्ये प्रत्येकं द्विरज्जूविस्तीर्णे देशोनार्धचतुष्टयरज्जूच्छ्रये ते बुद्धिकल्पनया समादाय त्रसनाड्या एवोत्तरपार्श्वे वैपरीत्येन सङ्घात्येते, एवं
चोपरितनं लोकार्धं त्रिरज्जूविस्तारं देशोनसप्तरज्जूच्छ्रयं, बाहल्यतस्तु ब्रह्मलोकमध्ये पञ्चरज्जूप्रमाणमन्यत्र त्वनियतबाहल्यं जायते, ततो-
ऽधोलोके च त्रसनाड्या दक्षिणभागवर्त्यधोलोकखण्डमधोभागे देशोनत्रिरज्जूविस्तारं क्रमेण हीयमानविस्तरं तावद्यावदुपरिष्टाद्रज्जवसङ्ख्येय-
भागविष्कम्भं समधिकसप्तरज्जूच्छ्रयं बुद्ध्या परिगृह्य त्रसनाड्या एवोत्तरपार्श्वे ऊर्ध्वाधोभागविपर्यासेन संयोजयेत्, एवं च कृतेऽधस्तनं
लोकार्धं देशोनचतूरज्जूविस्तारं सातिरेकसप्तरज्जूच्छ्रयं बाहल्यतोऽप्यधः कचित्किञ्चिदूनसप्तरज्जूमानं अन्यत्र त्वनियतबाहल्यं जयाते,
तत उपरितनमर्धं बुद्ध्या गृहीत्वाऽधस्तनस्यार्धस्योत्तरपार्श्वे सङ्घात्यते, तथा च सति कचित्सातिरेकसप्तरज्जूच्छ्रयः कचिच्च देशोनसप्तर-
ज्जूच्छ्रयः विस्तरतस्तु देशोनसप्तरज्जूप्रमाणो घनो जातः, ततः सप्तरज्जूनामुपरि यदधिकं तत्परिगृह्य उत्तरपार्श्वे ऊर्ध्वाध आयतं सङ्घा-
त्यते, ततो विस्तरतोऽपि परिपूर्णाः सप्त रज्जवो भवन्ति, तथा सङ्घातितोपरितनखण्डस्य बाहल्यं कचित्पञ्च रज्जवः अधस्तनखण्डस्य तु
बाहल्यं अधस्ताद्यथासम्भवं देशोनाः सप्त रज्जवः, तत उपरितनखण्डबाहल्याद्देशोनरज्जूद्वयमत्रातिरिच्यते इत्यस्मादतिरिच्यमानबाहल्या-
दर्धं गृहीत्वा उपरितनखण्डबाहल्ये संयोज्यते, एवं च कृते बाहल्यतस्तावत् कियत्यपि प्रदेशे किञ्चिदूनाः पट् रज्जवो भवन्ति, व्यवहार-
तस्तु सर्वमप्येतच्चतुरस्रीकृतनभःखण्डं सप्तरज्जूप्रमाणमुच्यते, व्यवहारनयो हि किञ्चिन्न्यूनसप्तहस्तादिप्रमाणमपि पटादिवस्तु परिपूर्णस-

सहस्रादिमानं व्यपदिशति, देशतोऽपि च दृष्टं बाहल्यादिधर्मं परिपूर्णेऽपि वस्तुनि व्यवस्यति स्थूलदृष्टित्वादिति भावः, अत एव तन्मते-
नैवात्र सप्तरज्जूबाहल्यता सर्वगताऽवगन्तव्या, आयामविष्कम्भाभ्यामपि यत्र देशोनसप्तरज्जूप्रमाणमिदं व्यवहारतस्तत्रापि प्रत्येकं सप्तर-
ज्जूप्रमाणता दृश्या, तदेवं व्यवहारनयमतेनायामविष्कम्भबाहल्यैः प्रत्येकं सप्तरज्जूप्रमाणो घनो जायते, एतच्च पट्टिकादौ लिखित्वा भा-
वनीयमिति ॥ ९१३ ॥९१४ ॥ इदानीं घनीकृतस्य लोकस्य रज्जूसङ्ख्यां प्रतिपादयितुमाह—'तिण्णि' इत्यादि, सर्वस्मिन्नपि चतुर्दश-
रज्ज्वात्मके लोके घनीकृते त्रिचत्वारिंशदुत्तराणि त्रीणि शतानि रज्जूनां भवन्ति, अथ घनीकरणे कीदृक्संस्थानो लोकः सम्पद्यते?, त-
त्राह—'चउरंसं होइ जयं' चतुरस्रं—सर्वतः समचतुरस्रं जगत्—लोको भवति, संवर्तितं सदिति शेषः, इयं च त्रिचत्वारिंशदुत्तरशत-
त्रयलक्षणा रज्जूसङ्ख्या सप्तानां घनेन 'समत्रिराशिहतिर्घन' इतिवचनादन्योऽन्यं त्रिस्ताडनेन जायते, एतदुक्तं भवति—संवर्तितस्य लोक-
स्यायामविष्कम्भबाहल्यानां प्रत्येकं सप्तरज्जूमानत्वात् सप्त सप्तकेन गुण्यन्ते जाता एकोनपञ्चाशत् साऽपि पुनः सप्तकेन गुण्यते जा-
तानि त्रीणि शतानि त्रिचत्वारिंशानीति, एतच्च व्यवहारमाश्रित्योक्तं, निश्चयतस्तु एकोनचत्वारिंशदधिकशतद्वयसङ्ख्यानामेव घनरज्जूनां
सम्भवात्, तथाहि—षट्पञ्चाशत्सङ्ख्यास्वपि पङ्क्तिषु 'तिरियं चउरो दोसुं' इत्यादिगाथाकथितानि चतुरादीनि प्रतरखण्डकानि एकैक-
पङ्क्तिगतानि पृथक्पृथग्वर्ग्यन्ते, 'सदृशद्विराशिघातो वर्गः' इतिवचनात् चतुष्कादयोऽङ्काश्चतुष्कादिभिरेव गुण्यन्ते इत्यर्थः, जाताः षोड-
शादयोऽङ्काः, तेषां च सर्वमीलने पञ्चदशसहस्राः षण्णवत्यधिके च द्वे शते खण्डकानां भवन्ति, अस्य च राशेर्घनरज्जूसमानयनाय
चतुःषष्ट्या भागो ह्रियते, ततो जायते एकोनचत्वारिंशदधिकद्विशतसङ्ख्या एव घनरज्जव इति, उक्तं च—'अह उवरिं छप्पन्ना पयरपष्-
क्खदिट्ठखंडाणं । वग्गं कुणह पिहु पिहु संजोगे तिजयगणियपयं ॥ १ ॥ सहसेगारस दुसया बत्तीसहिया अहंमि खंडाणं । समदीह-

पिहुव्वेहाण रज्जुचउरंसमाणेण ॥ २ ॥ चत्तारि सहस्साइं चउसट्ठिजुआइं उड्ढलोगम्मि । पनरससहस्स दुसयं छण्णउयं जायमुभएसिं ॥ ३ ॥ चउसट्ठीएँ विहत्तं उणयाला दो सया हविज्जेवं । लोए घणरज्जूणं तिरियं चउरोति गाहत्थो ॥ ४ ॥" अथोर्द्धलोके यावत्सु खण्डकेषु यावन्तो देवलोका भवन्तीत्येतदाह—'छसु' इत्यादि, रुचकसमाद् भूभागादुपरिमुखेषु षट्सु खण्डकेषु, सार्धरज्जूप्रमाणे क्षेत्रे इत्यर्थः, द्विकं—सौधर्मेशानलक्षणं देवलोकद्वयं भवति, ततोऽप्युपरितनेषु चतुर्षु खण्डकेषु—रज्जूमाने क्षेत्रे सनत्कुमारमाहेन्द्ररूपं देवलोकद्विकं भवति, ततोऽप्युपरि दशसु खण्डकेषु—अर्धतृतीयरज्जूप्रमिते क्षेत्रे भवन्ति ब्रह्मलोकलान्तकशुक्रसहस्रारस्वरूपाश्चत्वारो देवलोकाः, तदनु चतुर्षु खण्डकेषु—रज्जूपरिच्छिन्ने क्षेत्रे आनतप्राणतारणाच्युतनामकानां देवलोकानां चतुष्कं भवति, ततः सर्वोपरिवर्तिनि खण्डकचतुष्टये—अन्तिमरज्जौ नवग्रैवेयकविजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धाख्यानि पञ्चानुत्तरविमानानि सिद्धिक्षेत्रं च भवंतीति ॥९१६॥ सम्प्रति रज्जूस्वरूपमाह—'सयंभु' इत्यादि, सकलद्वीपपयोधिपर्यन्तवर्तिनः स्वयम्भूरमणाभिधानजलनिधेः 'पुरिम'त्ति पूर्ववेदिकान्तादारभ्य यावत्तस्यैव तोयधेरपरवेदिकान्तः एतावत्प्रमाणा रज्जूरवगन्तव्या, अनेन च रज्जूमानेनोच्छ्रयतो लोकश्चतुर्दशरज्जूप्रमाणो भवतीति १४३ ॥ ९१७ ॥ इदानीं 'सन्नाओ तिन्नि'त्ति चतुश्चत्वारिंशं शततमं द्वारमाह—

सन्नाउ तिन्नि पढमेऽत्थ दीहकालोवएसिया नाम । तह हेउवायदिट्ठीवाउवएसा तदियराओ ॥ ९१८ ॥ एयं करेमि एयं कयं मए इममहं करिस्सामि । सो दीहकालसन्नी जो इय तिक्कालसन्नधरो ॥ ९१९ ॥ जे उण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसुं । वत्तंति नियत्तंति य सदेहपरिपालणाहेउं ॥ ९२० ॥ पाएण संपइच्चिय कालंमि न यावि दीहकालंमि । ते हेउवायसन्नी निच्चेट्ठा हुंति

**ड असन्नी ॥ ९२१ ॥ सम्मद्दिट्ठी सन्नी संते नाणे खओवसमिए य । अस्सन्नी मिच्छत्तंमि दिट्ठिवाओवएसेणं ॥ ९२२ ॥**

संज्ञानं संज्ञा ज्ञानमित्यर्थः, सा त्रिभेदा 'पढमेत्थ'त्ति प्रथमा—आद्या अत्र—एतासु तिसृषु संज्ञासु मध्ये दीर्घकालोपदेशिकी नाम, दीर्घकालमतीतानागतवस्तुविषयत्वेनोपदेशः—कथनं यस्याः सा दीर्घकालोपदेशी सैव दीर्घकालोपदेशिका, तथा तदितरे—द्वितीयतृतीये हेतुवाददृष्टिवादोपदेशे, उपदेशशब्दस्य प्रत्येकमभिसम्बन्धात् हेतुवादोपदेशा द्वितीया सञ्ज्ञा दृष्टिवादोपदेशा च तृतीयेत्यर्थः, तत्र हेतुः कारणं निमित्तमित्यनर्थान्तरं तस्य वदनं वादस्तद्विषय उपदेशः—प्ररूपणा यस्यां सा हेतुवादोपदेशा, तथा दृष्टिः—दर्शनं सम्यक्त्वं तस्य वदनं—वादो दृष्टीनां वादो दृष्टिवादः तद्विषय उपदेशः—प्ररूपणं यस्यां सा दृष्टिवादोपदेशेति ॥ ९१८ ॥ अथ दीर्घकालोपदेशसंज्ञायाः स्वरूपं प्रतिपिपादयिषुस्तया संज्ञिनमेवाह—'एयं' इत्यादि, एतत्करोम्यहं एतत्कृतं मया एतत्करिष्याम्यहं इत्येवं यस्त्रिकालविषयां वर्तमानातीतानागतकालत्रयवर्तिवस्तुविषयां संज्ञां—मनोविज्ञानं धारयति स दीर्घकालसंज्ञी, दीर्घकाला—दीर्घकालोपदेशा संज्ञाऽस्यास्तीतिकृत्वा, स च गर्भजस्तिर्यङ् मनुष्यो वा देवो नारकश्च मनःपर्याप्तियुक्तो विज्ञेयः, तस्यैव त्रिकालविषयविमर्शादिसम्भवात्, एष च प्रायः सर्वमप्यर्थं स्फुटरूपमुपलभते, तथाहि—यथा चक्षुष्मान् प्रदीपादिप्रकाशेन स्फुटमर्थमुपलभते तथैषोऽपि मनोलब्धिसम्पन्नो मनोद्रव्यावष्टम्भसमुत्थविमर्शवशतः पूर्वापरानुसन्धानेन यथावस्थितं स्फुटमर्थमुपलभते, यस्य पुनर्नास्ति तथाविधस्त्रिकालविषयो विमर्शः सोऽसंज्ञीति सामर्थ्याल्लभ्यते, स च सम्मूर्च्छिमपञ्चेन्द्रियविकलेन्द्रियादिर्विज्ञेयः, स हि स्वल्पस्वल्पतरमनोलब्धिसम्पन्नत्वादस्फुटमस्फुटतरमर्थं जानाति, तथाहि—संज्ञिपञ्चेन्द्रियापेक्षया सम्मूर्च्छिमपञ्चेन्द्रियोऽस्फुटमर्थं जानाति, ततोऽप्यस्फुटं चतुरिन्द्रियः ततोऽप्यस्फुटतरं त्रीन्द्रियः ततो-

ऽप्यस्फुटतमं द्वीन्द्रियः ततोऽप्यत्यस्फुटतममेकेन्द्रियः तस्य प्रायो मनोद्रव्यासम्भवात्, केवलमव्यक्तमेव किञ्चिदतीवाल्पतरं मनो द्रष्टव्यं यद्वशादाहारादिसंज्ञा अव्यक्तरूपाः प्रादुष्ष्यन्तीति १ ॥ ९१९ ॥ साम्प्रतं हेतुवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह—'जे उण' गाहा, 'पाएण' गाहा, ये पुनः सञ्चिन्त्य सञ्चिन्त्येष्टानिष्टेषु—छायातपाहारादिषु विषयवस्तुषु मध्ये स्वदेहपरिपालनाहेतोरिष्टेषु वर्तन्ते अनिष्टेभ्यस्तु तेभ्य एव निवर्तन्ते, प्रायेण च साम्प्रतकाल एव, न चापि—नैव दीर्घकाले—अतीतानागतलक्षणे, प्रायोग्रहणात् केचिदतीतानागतकालावलम्बिनोऽपि नातिदीर्घकालानुसारिणः ते द्वीन्द्रियादयो हेतुवादोपदेशसंज्ञया संज्ञिनो विज्ञेयाः, अत्र च निश्चेष्टाः—घर्माद्यभितापेऽपि तन्निराकरणाय प्रवृत्तिनिवृत्तिविरहिताः पृथिव्यादय एवासंज्ञिनो भवन्ति, इदमुक्तं भवति—यो बुद्धिपूर्वकं स्वदेहपरिपालनार्थमिष्टेष्वाहारादिषु वस्तुषु प्रवर्तते अनिष्टेभ्यश्च निवर्तते स हेतूपदेशसंज्ञी, स च द्वीन्द्रियादिरपि वेदितव्यः, तथाहि—इष्टानिष्टविषयप्रवृत्तिनिवृत्तिसञ्चिन्तनं न मनोव्यापारमन्तरेण सम्भवति, मनसा च पर्यालोचनं संज्ञा, सा च द्वीन्द्रियादेरपि विद्यते, तस्यापि प्रतिनियतेष्टानिष्टविषयप्रवृत्तिनिवृत्तिदर्शनात्, ततो द्वीन्द्रियादिरपि हेतूपदेशसंज्ञया संज्ञी लभ्यते, नवरमस्य सञ्चिन्तनं प्रायो वर्तमानकालविषयं, न भूतभविष्यद्विषयमिति नायं दीर्घकालोपदेशेन संज्ञी, यस्य पुनर्नास्त्यभिसन्धारणपूर्विका प्रवृत्तिनिवृत्तिशक्तिः स प्राणी हेतुवादोपदेशेनाप्यसंज्ञी लभ्यते, स च पृथिव्यादिरेकेन्द्रियो वेदितव्यः, तस्याभिसन्धिपूर्वकमिष्टानिष्टप्रवृत्तिनिवृत्त्यसम्भवात्, या अपि च आहारादिका दश संज्ञाः पृथिव्यादीनामप्यत्र वक्ष्यन्ते प्रज्ञापनायामपि च प्रतिपादितास्ता अप्यत्यन्तमव्यक्तरूपा मोहोदयजन्यत्वादशोभनाश्चेति न तदपेक्षयाऽपि तेषां संज्ञित्वव्यपदेशः, न हि लोकेऽपि कार्षापणमात्रास्तित्वेन धनवानुच्यते न चाविशिष्टेन मूर्तिमात्रेण रूपवानिति, अन्यत्रापि हेतुवादोपदेशसंज्ञित्वमाश्रित्योक्तं—"कृमिकीटपतङ्गाद्याः समनस्का जङ्गमाश्चतुर्भेदाः । अमनस्काः पञ्चविधाः पृथिवीकायादयो जीवाः ॥१॥"

२ ॥९२०॥९२१॥ अथ दृष्टिवादोपदेशसंज्ञया संज्ञिनमसंज्ञिनं चाह–'सम्मे'त्यादि, दृष्टिवादोपदेशेन क्षायोपशमिके ज्ञाने वर्तमानः सम्यग्दृष्टिरेव संज्ञी, संज्ञानं संज्ञा–सम्यग्ज्ञानं तद्युक्तत्वात्, मिथ्यादृष्टिः पुनरसंज्ञी विपर्ययत्वेन वस्तुतः सम्यग्ज्ञानरूपसंज्ञारहितत्वात्, यद्यपि च मिथ्यादृष्टिरपि सम्यग्दृष्टिरिव घटादिकं जानीते व्यवहरति च तथापि तस्य सम्बन्धि व्यवहारमात्रेण ज्ञानमपि निश्चयतोऽज्ञानमेवोच्यते, स्याद्वादाश्रयणेन ज्ञाननिबन्धनस्य भुवनगुरुनिर्णीतयथावस्थितवस्त्वभ्युपगमस्य कदाचिदप्यभावात्, आह–यदि विशिष्टसंज्ञायुक्तत्वात् सम्यग्दृष्टिः संज्ञीष्यते तर्हि किमिति क्षायोपशमिकज्ञानयुक्तोऽसौ गृह्यते?, क्षायिकज्ञाने हि विशिष्टतरा सा प्राप्यते, ततस्तद्वृत्तिरप्यसौ किं नाङ्गीक्रियते?, उच्यते, यतोऽतीतस्यार्थस्य स्मरणमनागतस्य च चिन्ता संज्ञाऽभिधीयते, सा च केवलिनि नास्ति, सर्वदा सर्वार्थावभासकत्वेन केवलिनां स्मरणचिन्ताद्यतीतत्वात् इति क्षायोपशमिकज्ञान्येव सम्यग्दृष्टिः संज्ञीति। ननु प्रथमं हेतुवादोपदेशेन संज्ञी वक्तुं युज्यते, हेतुवादोपदेशेनाल्पमनोलब्धिसम्पन्नस्यापि द्वीन्द्रियादेः संज्ञित्वेनाभ्युपगमात् तस्य चाविशुद्धतरत्वात्, ततो दीर्घकालोपदेशेन, हेतूपदेशसंज्ञ्यपेक्षया दीर्घकालोपदेशसंज्ञिनो मनःपर्याप्तियुक्ततया विशुद्धत्वात्, तत्किमर्थमुत्क्रमोपन्यासः?, उच्यते, इह सर्वत्र सूत्रे यत्र क्वचित्संज्ञी असंज्ञी वा परिगृह्यते तत्र सर्वत्रापि प्रायो दीर्घकालोपदेशेन गृह्यते न हेतुवादोपदेशेन नापि दृष्टिवादोपदेशेन, तत एतत्संप्रत्ययार्थं प्रथमं दीर्घकालोपदेशेन संज्ञिनो ग्रहणं, उक्तं च–"सन्नित्ति असन्नित्ति य सव्वसुए कालिओवएसेणं। पायं संववहारो कीरइ तेणाइओ स कओ ॥ १ ॥" ततोऽनन्तरमप्रधानत्वात् हेतूपदेशेन संज्ञिनो ग्रहणं, ततः सर्वप्रधानत्वादन्ते दृष्टिवादोपदेशेनेति १४४॥९२२॥

इदानीं 'सन्नाओ चउरो'त्ति पञ्चचत्वारिंशदुत्तरशततमं द्वारमाह–

**आहार १ भय २ परिग्गह ३ मेहुण ४ रूवाओ हुंति चत्तारि। सत्ताणं सन्नाओ आसंसारं समग्गाणं ॥ ९२३ ॥**

संज्ञानं संज्ञा—आभोगः, सा द्विधा—क्षायोपशमिकी औदयिकी च, तत्राद्या ज्ञानावरणक्षयोपशमजन्यमतिभेदरूपा, सा चानन्तरमेवोक्ता, द्वितीया पुनः सामान्येन चतुर्विधाऽऽहारसंज्ञादिलक्षणा, तत्र क्षुद्वेदनीयोदयाद् या कवलाद्याहारार्थं तथाविधपुद्गलोपादानक्रिया सा आहारसंज्ञा, तस्या आभोगात्मिकत्वात्, सा पुनश्चतुर्भिः कारणैः समुत्पद्यते, यदुक्तं **स्थानाङ्गे**—"चउहिं ठाणेहिं आहारसन्ना समुप्पज्जइ, तंजहा—ओमकुट्ठयाए छुहावेयणिज्जस्स कम्मस्सुदएणं मईए तदट्ठोवओगेणं"ति, तत्र अवमकोष्ठतया—रिक्तोदरतया क्षुद्वेदनीयस्य कर्मण उदयेन मत्या—आहारकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन—सततमाहारचिन्तयेति १ तथा भयमोहनीयोदयाद्भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रिया भयसंज्ञा, इयमपि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तं—"हीणसत्तयाए भयवेयणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं"ति, तत्र हीनसत्त्वतया—सत्त्वाभावेन भयवेदनीयस्य कर्मण उदयेन मत्या—भयवार्ताश्रवणभीषणदर्शनादिजनितया बुद्ध्या तदर्थोपयोगेन—इहलोकादिसप्तभयलक्षणार्थपर्यालोचनेनेति २ तथा लोभोदयात्प्रधानसंसारकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया परिग्रहसंज्ञा, एषापि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तम्—"अविमुत्तयाए लोभवेयणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं"ति, तत्र अविमुक्ततया—सपरिग्रहतया लोभवेदनीयकर्मण उदयेन मत्या—सचेतनादिपरिग्रहदर्शनादिजनितबुद्ध्या तदर्थोपयोगेन—परिग्रहानुचिन्तनेनेति ३ तथा पुंवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनसंस्तंभितोरुवेपथुप्रभृतिलक्षणा क्रिया मैथुनसंज्ञा, असावपि चतुर्भिः स्थानैरुत्पद्यते, यदुक्तम्—'चियमंससोणियाए मोहणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं'ति, तत्र चिते—उपचिते मांसशोणिते यस्य स

तथा तद्भावस्तत्ता तया चितमांसशोणिततया मोहनीयस्य कर्मण उदयेन मत्या—सुरतकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन—मैथुनलक्षणार्थचिन्तनेनेति ४, एताश्चतस्रः संज्ञाः समग्राणामेकेन्द्रियादीनां पञ्चेन्द्रियपर्यवसानानां सत्त्वानां—जीवानामासंसारं—संसारवासं यावद्भवन्ति, तथा च केषाञ्चिदेकेन्द्रियाणामप्येताः स्पष्टमेवोपलभ्यन्ते, तथाहि—जलाद्याहारोपजीवनाद्वनस्पत्यादीनामाहारसंज्ञा सङ्कोचनीवल्ल्यादीनां तु हस्तस्पर्शादिभीत्या अवयवसङ्कोचनादिभ्यो भयसंज्ञा विल्वपलाशादीनां तु निधानीकृतद्रविणोपरि पादमोचनादिभ्यः परिग्रहसंज्ञा कुरुवकाशोकतिलकादीनां तु कमनीयकामिनीभुजलतावगूहनपार्ष्णिप्रहारकटाक्षविक्षेपादिभ्यः प्रसूनपल्लवादिप्रसवप्रदर्शनान्मैथुनसंज्ञेति १४५ ॥ ९२३ ॥ इदानीं 'सन्नाओ दस'त्ति षट्चत्वारिंशदधिकशततमं द्वारमाह—

**आहार १ भय २ परिग्गह ३ मेहुण ४ तह कोह ५ माण ६ माया ७ य । लोभो ८ ह ९ लोग १० सन्ना दसऽवेया सवजीवाणं ॥ ९२४ ॥**

संज्ञायतेऽनयाऽयं जीव इति संज्ञा—वेदनीयमोहोदयाश्रिता ज्ञानावरणदर्शनावरणक्षयोपशमाश्रिता च विचित्राहारादिप्राप्तिक्रिया, सा चोपाधिभेदाद्दशविधा, तत्राहारभयपरिग्रहमैथुनसंज्ञा अनन्तरमेव व्याख्याताः, तथा क्रोधवेदनीयोदयात्तदावेशगर्भा परुषमुखनयनदन्तच्छदस्फुरणादिचेष्टा क्रोधसंज्ञा मानोदयादहङ्कारात्मिका उत्सेकादिपरिणतिर्मानसंज्ञा मायावेदनीयेनाशुभसङ्क्लेशादनृतसम्भाषणादिक्रिया मायासंज्ञा लोभवेदनीयोदयतो लालसत्वेन सचित्तेतरद्रव्यप्रार्थना लोभसंज्ञा, तथा मतिज्ञानावरणकर्मक्षयोपशमात् शब्दाद्यर्थगोचरा सामान्यावबोधक्रिया ओघसंज्ञा तद्विशेषावबोधक्रिया लोकसंज्ञा, एवं चेदमापतितं—दर्शनोपयोग ओघसंज्ञा ज्ञानोपयोगो लोकसंज्ञा, एष स्थानाङ्गटीकाभिप्रायः, आचाराङ्गटीकायां पुनरभिहितं—ओघसंज्ञा तु अव्यक्तोपयोगरूपा वल्लीवितानारोहणादिसंज्ञा लोकसंज्ञा तु

स्वच्छंदघटितविकल्परूपा लौकिकाचरिता, यथा—'न सन्त्यनपत्यस्य लोकाः श्वानो यक्षाः विप्रा देवाः काकाः पितामहाः बर्हिणां पक्षवातेन गर्भ इत्यादिका' इति, अपरे तु ज्ञानोपयोग ओघसंज्ञा दर्शनोपयोगो लोकसंज्ञेत्येवमाहुः, एते दशापि अयं जीव इति संज्ञानहेतुत्वात् संज्ञाः सर्वेषां संसारिजीवानां ज्ञेयाः, सुखप्रतिपत्तये च स्पष्टरूपाः पञ्चेन्द्रियानधिकृत्य व्याख्याताः, एकेन्द्रियादीनां त्वेता अव्यक्तरूपा अवगन्तव्या इति १४६ ॥ ९२४ ॥ इदानीं 'सन्नाओ पन्नरसे'ति सप्तचत्वारिंशदधिकशततमं द्वारमाह—

**आहार १ भय २ परिग्गह ३ मेहुण ४ सुह ५ दुक्ख ६ मोह ७ वितिगिच्छा ८ । तह कोह ९**
**माण १० माया ११ लोहे १२ लोगे य १३ धम्मो १४ घे १५ ॥ ९२५ ॥**

प्रक्रमायातस्य संज्ञाशब्दस्य प्रत्येकमभिसम्बन्धादाहारसंज्ञादय ओघसंज्ञापर्यन्ताः पञ्चदश संज्ञा भवन्ति, तत्र दश पूर्वोक्तस्वरूपा एव, सुखदुःखसंज्ञे—सातासातानुभवरूपे मोहसंज्ञा—मिथ्यादर्शनरूपा विचिकित्सासंज्ञा—चित्तविप्लुतिलक्षणा धर्मसंज्ञा—क्षमाद्यासेवनस्वरूपा, एताश्च विशेषानुपादानाद्यथासम्भवं सर्वजीवानामवसेयाः, इह कचिद् ग्रन्थे चतुर्विधाः संज्ञाः उक्ताः कचिद्दशविधाः कचित् तु पञ्चदशविधाः ततः कासाञ्चित्पुनर्भणनेऽपि न पौनरुक्त्यमाशङ्कनीयं, तथा आचाराङ्गे विप्रलापवैमनस्यरूपां शोकसंज्ञां प्रक्षिप्य षोडश संज्ञाः प्रतिपादिता इति १४७ ॥ ९२५ ॥ इदानीं 'सत्तसट्ठिलक्खणभेयविसुद्धं सम्मत्तं'ति अष्टचत्वारिंशदधिकशततमं द्वारमाह—

**चउसद्दहण ४ तिलिंगं ३ दसविणय १० तिसुद्धि ३ पंचगयदोसं ५ । अट्ठपभावण ८ भूसण ५-**
**लक्खण ५ पंचविहसंजुत्तं ॥ ९२६ ॥ छव्विहजयणा ६ ऽऽगारं ६ छब्भावण ६ भावियं च छट्ठाणं**
**६ । इय सत्तयसट्ठिलक्खणभेयविसुद्धं च सम्मत्तं ॥ ९२७ ॥ परमत्थसंथवो वा १ सुदिट्ठपरमत्थसे-**

वणा वावि २ । वावन्न३ कुदंसणवज्जणा य ४ सम्मत्तसद्दहणा ॥ ९२८ ॥ सुस्सूस १ धम्मराओ २ गुरुदेवाणं जहासमाहीए । वेयावच्चे नियमो ३ सम्मदिट्ठिस्स लिंगाइं ॥ ९२९ ॥ अरहंत १ सिद्ध २ चेइय ३ सुए य ४ धम्मे य ५ साहुवग्गे य ६ । आयरिय ७ उवज्झाएसु ८ य पवयणे ९ दंसणे १० यावि ॥ ९३० ॥ भत्ती पूया वन्नजलणं वज्जणमवन्नवायस्स । आसायणपरिहारो दंसण-विणओ समासेणं ॥ ९३१ ॥ मोत्तूण जिणं १ मोत्तूण जिणमयं २ जिणमयट्ठिए मोत्तुं ३ । संसा-रकच्चवारं चिंतिज्जंतं जगं सेसं ॥ ९३२ ॥ संका १ कंख २ विगिच्छा ३ पसंस ४ तह संथवो कुलिंगीसु ५ । सम्मत्तस्सऽइयारा परिहरियव्वा पयत्तेणं ॥ ९३३ ॥ पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी ५ य । विज्जा ६ सिद्धो य ७ कवी ८ अट्ठेव पभावगा भणिया ॥ ९३४ ॥ जिणसासणे कुसलया १ पभावणा २ ऽऽययणसेवणा ३ थिरया ४ । भत्ती य ५ गुणा सम्मत्तदी-वया उत्तमा पंच ॥ ९३५ ॥ उवसम १ संवेगोऽवि य २ निव्वेओ ३ तह य होइ अणुकंपा ४ । अ-त्थिक्कं चिय ५ एए संमत्ते लक्खणा पंच ॥ ९३६ ॥ नोअन्नतित्थिए अन्नतित्थिदेवे य तह सदेवेऽवि । गहिए कुतित्थिएहिं वंदामि न वा नमंसामि ॥ ९३७ ॥ नेव अणालत्तो आलवेमि नो संलवेमि तह तेसिं । देमि न असणाईयं पेसेमि न गंधपुप्फाइ ॥ ९३८ ॥ रायाभिओगो य १ गणाभिओगो २, बलाभिओगो य ३ सुराभिओगो ४ । कंतारवित्ती ५ गुरुनिग्गहो य ६, छ छिंडिआओ जिणसा-

**सणम्मि ॥ ९३९ ॥ मूलं १ दारं २ पइट्ठाणं ३, आहारो ४ भायणं ५ निही ६ । दुच्छक्कस्सावि धम्मस्स, सम्मत्तं परिकित्तियं ॥ ९४० ॥ अत्थि य १ निचो २ कुणई ३ कयं च वेएइ ४ अत्थि निव्वाणं ५ । अत्थि य मोक्खोवाओ ६ छस्सम्मत्तस्स ठाणाइं ॥ ९४१ ॥**

चत्वारि श्रद्धानानि यत्र तच्चतुःश्रद्धानं, श्रद्धानचतुष्टयान्वितं सम्यक्त्वं भवतीति भावः, प्राकृतत्वाच्च प्रथमैकवचनलोपः, एवमग्रेऽपि यथासम्भवं समासो विभक्तिलोपश्च द्रष्टव्यः, 'त्रिलिङ्ग'मिति लिङ्गत्रययुक्तं दशविनयं—दशविधविनयोपेतं त्रिशुद्धं—शुद्धित्रयसमन्वितं 'पंचगयदोसं'ति गताः पञ्च दोषा यस्मात्तद्गतपञ्चदोषं, दोषपञ्चकपरिवर्जितमित्यर्थः, छन्दोभङ्गभयाच्च क्तान्तस्य परनिपातः, अष्टप्रभावनं—अष्टविधप्रभावनापरिगतं 'भूसणलक्खणपंचविहसंजुत्तं'ति पञ्चविधेन भूषणेन पञ्चविधेन च लक्षणेन संयुक्तं, अत्रापि पञ्चविधशब्दस्य परनिपातस्तथैव, तथा षड्विधौ यतनाकारौ यस्य तत् षड्विधयतनाकारं, षड्भिर्यतनाभिः षड्भिश्चाकारैः परिकलितमित्यर्थः, षड्भावनाभावितं—षड्भिर्भावनाभिर्निरन्तरं परिशीलितं, षट्स्थानं—स्थानषट्कयुक्तं, इत्येवं सप्तषष्ट्या 'लक्षणभेदैः' लक्ष्यते—निश्चीयते सम्यक्त्वमेभिरिति लक्षणानि—श्रद्धानादीनि तेषां भेदाः—प्रकाराः परमार्थसंस्तवादयस्तैर्विशुद्धं चस्यैवकारार्थत्वादेतैः सप्तषष्ट्या लक्षणभेदैर्विशुद्धमेव परमार्थतः सम्यक्त्वं भवति, सम्यक्शब्दः प्रशंसार्थोऽविरोधार्थो वा, सम्यग्—जीवस्तस्य भावः सम्यक्त्वं, प्रशस्तो मोक्षाविरोधी वा जीवस्य स्वभावविशेष इतियावत् ॥ ९२७ ॥ अथैतानेव लक्षणभेदान् प्रत्येकं प्रतिपिपादयिषुः प्रथमं 'चउसद्दहणं'ति व्याख्यातुमाह—'परमे'त्यादि, परमाश्च—तात्त्विकाश्च तेऽर्थाश्च—जीवाजीवादयस्तेषु संस्तवः—परिचयस्तात्पर्येण बहुमानपुरस्सरं जीवादिपदार्थावगमाभ्यास इतियावत् वाशब्द उत्तरापेक्षया समुच्चये इति प्रथमं श्रद्धानं, तथा सुष्ठु—सम्यग्रीत्या दृष्टा—उपलब्धाः परमार्था—जीवादयो यैस्ते सु-

दृष्टपरमार्थाः—आचार्यादयस्तेषां सेवनं—पर्युपास्तिः सुदृष्टपरमार्थसेवनं, स्त्रीत्वं प्राकृतत्वात् वाशब्दोऽनुक्तसमुच्चये, ततो यथाशक्ति तद्वैयावृत्तिप्रवृत्तिश्च, अपि समुच्चये, इति द्वितीयं श्रद्धानं, तथा 'वावन्नकुदंसण'त्ति दर्शनशब्दः प्रत्येकमभिसम्बध्यते व्यापन्नं—विपन्नं विनष्टं दर्शनं येषां ते व्यापन्नदर्शना—निह्नवादयः तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः—शाक्यादयस्तेषां वर्जनं—परिहारो व्यापन्नकुदर्शनवर्जनं, मा भूदेतदपरिहारतः सम्यक्त्वमालिन्यमिति, अत्रापि स्त्रीत्वं प्राकृतत्वात् इति तृतीयचतुर्थे श्रद्धाने, 'सम्मत्तसद्दहणा' इति सम्यक्त्वं श्रद्धीयते—अस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धानं, प्रत्येकं च परमार्थसंस्तवादिभिरस्य सम्भवादेकवचनं, न चाङ्गारमर्दकादेरपि परमार्थसंस्तवादीनां सम्भवाद्व्यभिचारता, तात्त्विकानामेवैषामिहाधिकृतत्वात् तस्य च तथाविधानामेषामसम्भवादिति ॥ १२८ ॥ 'तिलिंगं'ति व्याख्यातुमाह—'सुस्सूसे'त्यादि, श्रोतुमिच्छा—शुश्रूषा, ह्रस्वत्वं तु प्राकृतशैल्या, सद्बोधावंध्यनिबन्धनधर्मशास्त्रश्रवणवाञ्छेत्यर्थः, सा च वैदग्ध्यादिगुणोत्तरतरुणनरकिन्नरगानश्रवणरागादप्यधिकतमा सम्यक्त्वे सति भवति, तथा धर्मः—श्रुतचारित्रलक्षणः, तत्र श्रुतधर्मरागस्य शुश्रूषापदेनैव प्रतिपादितत्वादिह धर्मरागश्चारित्रधर्मरागोऽभिप्रेतः, स च तथाविधकर्मदोषतस्तदकरणेन कान्तारागतदुर्गतबुभुक्षाक्षामब्राह्मणघृतपूर्णभोजनाभिलाषादप्यतिरिक्तोऽत्र भवति, तथा गुरवो—धर्मोपदेशका आचार्यादयः देवाश्च—आराध्यतमा अर्हन्तो गुरुदेवाः तेषां, इह च गुरुपदस्य पूर्वनिपातो विवक्षया गुरूणां पूज्यतरत्वख्यापनार्थः, न हि गुरूपदेशमन्तरेण सर्वविद्देवाभिगम इति भावः, यथासमाधि—समाधानानतिक्रमेण, अत्र चाव्ययीभावसमासादपि तृतीयाया अलोपः प्राकृतत्वात्, वैयावृत्त्ये—तत्प्रतिपत्तिविश्रामणाभ्यर्चनादौ नियमः—अवश्यङ्कर्तव्यतयाऽङ्गीकारः, स च सम्यक्त्वे सति भवतीत्येतानि सम्यग्दृष्टेः—धर्मधर्मिणोरभेदोपचारात् सम्यक्त्वस्य लिङ्गानि, एतैः शुश्रूषादिभिस्त्रिभिर्लिङ्गैः सम्यक्त्वमुत्पन्नमस्तीति निश्चीयत इति भावः, यद्यपि च शुश्रूषादय उपशान्तमोहादीनां

साक्षान्न भवन्ति कृतकृत्यत्वात् तथापि फलतो भवन्ति तद्भावस्य तत्फलत्वादिति ॥ ९२९ ॥ 'दसविणय'त्ति व्याख्यानयन्नाह—'अ-
रिहंत'गाहा 'भत्ती'गाहा, अर्हन्तः—तीर्थकराः सिद्धाः—क्षीणाष्टकर्ममलपटलाः चैत्यानि—जैनेन्द्रप्रतिमाः श्रुतं—आचाराद्यागमः धर्मः—
क्षान्त्यादिरूपः साधुवर्गः—श्रमणसमूहः आचार्योपाध्यायौ—प्रतीतौ प्रवक्ति जीवादितत्त्वमिति प्रवचनं—सङ्घः दर्शनं—सम्यक्त्वं तदभेदो-
पचारात्तद्वानपि दर्शनमुच्यते, एवं प्रागपि यथासम्भवं वाच्यं । एतेषु अर्हदादिषु दशसु स्थानेषु विषयेषु किमित्याह—'भत्ती'त्यादि,
भक्तिः—अभिमुखगमनासनप्रदानपर्युपास्त्यञ्जलिबन्धानुव्रजनादिलक्षणा पूजा—गन्धमाल्यवस्त्रपात्रान्नपानप्रदानादिसत्काररूपा वर्णनं वर्णः—
श्लाघनं तेन ज्वलनं—ज्ञानादिगुणोद्भासनं वर्णज्वलनं तथा वर्जनं—परिहरणमवर्णवादस्य—अश्लाघायाः आशातना—मनोवाक्कायैः प्रतीपवर्तनं
तस्याः परिहारः—प्रतिषेधः आशातनापरिहारः, एष दशस्थानविषयत्वाद्दशविधो दर्शनविनयः, सम्यक्त्वे सति अस्य भावात्सम्यक्त्ववि-
नयः 'समासेन' सङ्क्षेपेण द्रष्टव्यः, विस्तरतस्तु शास्त्रान्तरादवसेय इति ॥ ९३१ ॥ 'तिसुद्धि'त्ति व्याचिख्यासुराह—'मोत्तूणे'त्यादि,
'मुत्त्वा' विमुच्य 'जिनं' वीतरागं मुक्त्वा च 'जिनमतं' स्यात्पदलाञ्छिततया तीर्थकृद्भिः प्रणीतं यथावस्थितं जीवाजीवादितत्त्वं तथा
जिनमतस्थितांश्च—प्रतिपन्नपारमेश्वरप्रवचनान् साध्वादीन् मुक्त्वा शेषमेकान्तग्रहग्रस्तं जगच्चिन्त्यमानं—परिभाव्यमानं 'संसारकच्चवारं'ति
संसारमध्ये कचवरनिकरप्रायमसारमित्यर्थः, जिनादित्रितयमेव सारं शेषं तु सर्वमप्यसारमिति चिन्तया सम्यक्त्वस्य विशोध्यमानत्वादेता-
स्तिस्रः शुद्धय इति ॥९३२॥ 'पंचगयदोसं'ति प्रकटयन्नाह—'संके'त्यादि, शङ्का—सर्वज्ञोक्तवचसि संशयः काङ्क्षा—अन्यान्यदर्शनाभिलाषः
विचिकित्सा—सदाचारसाध्वादिनिन्दा तथा कुत्सितं लिङ्गं—दर्शनं येषां ते कुलिङ्गिनः—कुतीर्थिकाः तेषु विषये प्रशंसा—श्लाघा तथा तद्विषय
एव संस्तवः—सम्भाषणादिना परिचयः, एते पञ्चापि शङ्कादयः सम्यक्त्वस्य मालिन्यहेतुत्वादतीचारा—दोषाः सम्यग्दृष्टिना प्रयत्नेन परि-

हर्तव्या –वर्जनीयाः, विशेषतस्त्वेतेषां स्वरूपं षष्ठे श्रावकप्रतिक्रमणातिचारद्वारे प्रतिपादितमिति ॥ ९३३ ॥ 'अट्ठपभावण'त्ति विवरीपुराह–'पावयणी'त्यादि, प्रवचनं–द्वादशाङ्गं तदस्यास्त्यतिशयवदिति प्रावचनी–युगप्रधानागमः, धर्मकथा प्रशस्याऽस्यास्तीति धर्मकथी, यः क्षीराश्रवादिलब्धिसम्पन्नः सजलजलधरध्वानानुकारिणा नादेनाक्षेपणीविक्षेपणीसंवेजनीनिर्वेदिनीलक्षणां चतुर्विधां जनितजनमनःप्रमोदप्रथां धर्मकथां कथयति, वादिप्रतिवादिसभ्यसभापतिरूपायां चतुरङ्गायां परिषदि प्रतिपक्षप्रतिक्षेपपूर्वकं स्वपक्षस्थापनार्थमवश्यं वदतीति वादी, निरुपमवादलब्धिसम्पन्नत्वेन वावदूकवादिवृन्दारकवृन्दैरप्यमन्दीकृतवाग्विभव इति भावः, निमित्तं–त्रैकालिकलाभालाभप्रतिपादकं शास्त्रं तद्वेत्त्यधीते वा स नैमित्तिकः सुनिश्चितातीतादिनिमित्तवेदीत्यर्थः, विप्रकृष्टं–अष्टमप्रभृतिकं दुस्तपं तपोऽस्यास्तीति तपस्वी 'विज्ज'त्ति मतुब्लोपाद्विद्यावान् विद्याः–प्रज्ञप्त्यादयः शासनदेवताः ताः सहायके यस्य स विद्यावान् वज्रस्वामिवत्, अञ्जनपादलेपतिलकगुटिकासकलभूताकर्षणवैक्रियत्वप्रभृतयः सिद्धयः ताभिः सिद्ध्यति स्मेति सिद्धः, कवते–नवनवभङ्गीवैदग्ध्यदिग्धैः पाकातिरेकरसनीयरसरहस्यास्वादमेदुरितसहृदयहृदयानन्दैर्निःशेषभाषावैदग्ध्यहृद्यहृद्यैर्गद्यपद्यप्रबन्धैर्वर्णनं करोतीति कविः, एते प्रावचन्यादयोऽष्टौ प्रभावयन्ति–स्वतः प्रकाशकस्वभावमेव देशकालाद्यौचित्येन सहायकरणात्प्रवचनं प्रकाशयन्तीति प्रभावकाः कथिताः, तेषां च कर्म प्रभावना, सा च सम्यक्त्वं निर्मलीकरोतीति, अन्यत्र पुनरन्यथाऽष्टौ प्रभावका उक्तास्तथाहि–"अइसेसइड्ढि १ धम्मकहि २ वाई ३ आयरिय ४ खवग ५ नेमित्ती ६ । विज्जा ७ रायागणसंमया ८ य तित्थं पभावंति ॥ १ ॥" [ अतिशेषर्धयो धर्मकथको वादी आचार्यः क्षपकः नैमित्तिकः विद्यासिद्धः राजगणसंमतश्च तीर्थं प्रभावयन्ति ॥ १ ॥ ] तत्र अतिशेषा–अवधिमनःपर्ययज्ञानामर्षौषध्यादयोऽतिशयास्ते तैर्वा ऋद्धिर्यस्य सोऽतिशेषर्द्धिः, राजसम्मता–नृपवल्लभाः गणसम्मता–महाजनादिबहुमता इति ॥ ९३४ ॥ 'भूसण'त्ति व्याचिख्यासुराह–

जिनशासने–अर्हद्दर्शनविषये एतच्च सर्वत्र सम्बध्यते कुशलता–नैपुण्यं, तद्वशेन हि नानाप्रकारैरुपायैः सुखेनैव परं प्रतिबोधयतीति, तथा प्रभवति जैनेन्द्रं शासनं तस्य प्रभवतः प्रयोजकत्वं च प्रभावना, सा चाष्टधा प्रभावकभेदेन प्रागेवोक्ता, यत्पुनरिहोपादानं तदस्याः स्वपरोपकारित्वेन तीर्थकरनामकर्मनिबन्धनत्वेन च प्राधान्यख्यापनार्थं, तथा आयतनं द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यतो जिनगृहादि भावतस्तु ज्ञानदर्शनचारित्राधाराः साध्वादयः तस्यासेवनं–पर्युपास्तिः, क्लीवं च प्राकृतत्वादिति, तथा स्थिरता–जिनधर्मं प्रति चलितचित्तस्य परस्य स्थिरत्वापादनं स्वस्य वा परतीर्थिकसमृद्धिदर्शनेऽपि जिनप्रवचनं प्रति निष्प्रकम्पता, तथा भक्तिः–प्रवचने विनयवैयावृत्त्यरूपा प्रतिपत्तिः, एते सम्यक्त्वस्य दीपकाः–प्रभासका उत्तमाः–प्रधाना गुणा–भूषणानि, एतैर्गुणैः सम्यक्त्वमलङ्क्रियत इति भावः ॥९३५॥ 'लक्खणपंचविहसंजुत्तं'ति विवृण्वन्नाह—'उवसमे'त्यादि, अपराधविधायिन्यपि कोपपरिवर्जनमुपशमः, स च कस्यचित्कषायपरिणतेः कटुकफलावलोकनाद्भवति कस्यचित्पुनः प्रकृत्यैवेति, तथा नरामरसुखपरिहारेण मुक्तिसुखाभिलाषः संवेगः, सम्यग्दृष्टिर्हि नरेन्द्रसुरेन्द्राणां विषयसुखानि दुःखानुषङ्गाद् दुःखतया मन्यमानो मोक्षसुखमेव सुखत्वेन मन्यतेऽभिलषति चेति, तथा नारकतिर्यगादिसांसारिकदुःखेभ्यो निर्विण्णता निर्वेदः, सम्यग्दर्शनी हि दुःखातिगहने संसारकारागारे गुरुतरकर्मदण्डपाशिकैस्तथा तथा कदर्थ्यमानः प्रतिकर्तुमक्षमो ममत्वरहितश्च दुःखेन निर्विण्णो भवति, अन्ये तु संवेगो भवविरागः निर्वेदो मोक्षाभिलाष इत्यनयोरर्थव्यत्ययमाहुः, तथा दुःखितेषु प्राणिष्वपक्षपातेन दुःखप्रहाणेच्छा दया अनुकम्पा, पक्षपातेन तु करुणा स्वपुत्रादौ व्याघ्रादीनामप्यस्त्येव, सा चानुकम्पा द्रव्यतो भावतश्च भवति, द्रव्यतः सत्यां शक्तौ दुःखप्रतिकारेण भावत आर्द्रहृदयत्वेनेति, तथा अस्तीति मतिरस्येत्यास्तिकः तस्य भावः कर्म वा आस्तिक्यं, तत्त्वान्तरश्रवणेऽपि जिनगदिततत्त्वविषये निराकाङ्क्षा प्रतिपत्तिः, एतान्युपशमादीनि पञ्च सम्यक्त्वे-सम्यक्त्वविषयाणि लक्षणानि,

एतैः परस्थं परोक्षमपि सम्यक्त्वं सम्यगुपलक्ष्यत इति ॥ ९३६ ॥ 'छव्विहजयण'त्ति व्याख्यानयन्नाह—'नो अन्ने'त्यादि, 'नेवे'त्यादि, अन्यतीर्थिकान्—परदर्शनिनः परिव्राजकभिक्षुभौतिकादीन् अन्यतीर्थिकदेवांश्च—रुद्रविष्णुसुगतादीन् तथा स्वदेवानपि—अर्हत्प्रतिमालक्षणान् कुतीर्थिकैः—दिगम्बरादिभिर्गृहीतान्—स्वीकृतान् भौतिकादिभिर्वा परिगृहीतान् महाकालादीन् 'नो' नैव वन्दे वा न च 'नमस्यामि' नमस्करोमि, तद्भक्तानां मिथ्यात्वादिस्थिरीकरणात्, तत्र वन्दनं—शीर्षाभिवादनं नमस्करणं—प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्तनं, तथा अन्यतीर्थिकैः पूर्वमनालप्तः सन् तान्नैवालपामि नापि संलपामि, तत्र आङ् ईषदर्थत्वाद् ईषद्भाषणमालापनं पुनः पुनः सम्भाषणं संलपनं, तत्सम्भाषणे हि तैः सह परिचयप्राप्त्या तत्प्रक्रियाश्रवणदर्शनादिभिर्मिथ्यात्वोदयोऽपि स्यात्, प्रथमालप्तेन त्वसम्भ्रमं लोकापवादभयात् किञ्चित्स्वल्पं वाच्यमपीति, तथा तेषां—अन्यतीर्थिकानां ददामि नाशनादिकं—अशनपानखादिमस्वादिमवस्त्रपात्रादिकं, तद्दाने ह्यात्मनोऽन्येषां च पश्यतां तेषु बहुमानसद्भावात्तदैव मिथ्यात्वगमनं, इह च परतीर्थिकानामशनादिदानमनुकम्पां विहाय प्रतिषिद्धं, अनुकम्पागोचरापन्नं तु तेषामपि दानं दातव्यं, यत उक्तम्—"सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं। सत्ताणुकंपणट्ठा दाणं न कहिंपि पडिसिद्धं ॥ १ ॥" [ सर्वैरपि जिनैर्जितदुर्जेयरागद्वेषमोहैः। सत्त्वानुकम्पायै दानं न कुत्रापि प्रतिषिद्धं ॥ १ ॥ ] तथा तेषामेव—परतीर्थिकदेवानां तत्परिगृहीतजिनप्रतिमानां च पूजादिनिमित्तं न प्रेषयामि गन्धपुष्पादिकं आदिशब्दाद्विनयवैयावृत्त्ययात्रास्नात्रादिकं च तेषां न करोमीति, एतत्करणे हि लोकानां मिथ्यात्वं स्थिरीकृतं स्यात्, एताभिः परतीर्थिकादिवन्दननमस्करणालपनसंलपनाशनादिदानगन्धपुष्पादिप्रेषणलक्षणाभिः षड्भिर्यतनाभिर्यतमानः सम्यक्त्वं नातिक्रमतीति ॥ ९३७–९३८ ॥ 'छागारं'ति वितन्वन्नाह—'रायाभिओगो' इत्यादि, तत्राभियोजनं—अनिच्छतोऽपि व्यापारणमभियोगः राज्ञो—नृपतेरभियोगो राजाभियोगः, गणः—स्वजनादिसमुदायस्तस्या-

मियोगो गणामियोगः, बलं—बलवतो हठप्रयोगस्तेनामियोगो बलामियोगः, सुरस्य—कुलदेवतादेरमियोगः सुरामियोगः, कान्तारं—अरण्यं तत्र वृत्तिः—वर्तनं निर्वाहः कान्तारवृत्तिः यद्वा कान्तारमपि बाधाहेतुत्वादिह बाधात्वेन विवक्षितं ततः कान्तारेण—बाधया वृत्तिः—प्राणवर्त्तनरूपा कान्तारवृत्तिः, कष्टेन निर्वाह इतियावत्, गुरवो—मातृपितृप्रभृतयः, यदुक्तं—'माता पिता कलाचार्यो, एतेषां ज्ञातयस्तथा। वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः॥ १॥' तेषां निग्रहो—निर्बन्धः, तदेताः षट् छिण्डिका—अपवादा जिनशासने भवन्ति, इदमत्र तात्पर्यम्—प्रतिपन्नसम्यक्त्वस्य परतीर्थिकवन्दनादिकं यत्प्रतिषिद्धं तद्राजाभियोगादिभिरेतैः षड्भिः कारणैर्भक्तिवियुक्तं द्रव्यतः समाचरन्नपि सम्यक्त्वं नातिचरतीति॥९३९॥ 'छब्भावणभावियं'ति व्याख्यातुमाह—'मूलं दार'मित्यादि, द्विषट्कस्यापि—द्वादशभेदस्यापि पञ्चाणुव्रतत्रिगुणव्रतचतुःशिक्षाव्रतरूपस्य चारित्रधर्मस्य इदं सम्यक्त्वं मूलं कारणमित्यर्थः परिकीर्तितं—कथितं, तीर्थकरादिभिरिति सर्वत्र सम्बन्धः, यथा हि मूलविरहितः पादपः प्रचण्डपवनप्रकम्पितस्तत्क्षणादेव निपतति, एवं धर्मतरुरपि सुदृढसम्यक्त्वमूलविहीनः कुतीर्थिकमतमारुतान्दोलितः स्थैर्यं नासादयेदिति, 'दारं'ति द्वारमिव द्वारं प्रवेशमुखमिति भावः, यथा हि अकृतद्वारं नगरं समन्ततः प्राकारवलयवेष्टितमप्यनगरमेव भवति जनप्रवेशनिर्गमाभावात्, एवं धर्ममहापुरमपि सम्यक्त्वद्वारशून्यमशक्याधिगमं स्यादिति, 'पइट्ठाणं'ति प्रतिष्ठते प्रासादोऽस्मिन्निति प्रतिष्ठानं—पीठं, ततः प्रतिष्ठानमिव प्रतिष्ठानं, यथा हि पयःपर्यन्तपृथ्वीतलगतगर्तापूरकरहितः प्रासादः सुदृढो न भवति तथा धर्मदेवस्य हर्म्यमपि सम्यक्त्वरूपप्रतिष्ठानपरित्यक्तं निश्चलं न भवेदिति, 'आहारो'त्ति आधार इव आधार आश्रय इतियावत्, यथा हि धरातलमन्तरेण निरालम्बं जगदिदं न तिष्ठति, एवं धर्मजगदपि सम्यक्त्वलक्षणाधारव्यतिरेकेण नावतिष्ठति, 'भायणं'ति भाजनमिव भाजनं पात्रमित्यर्थः, यथा हि कुण्डादिभाजनविशेषविवर्जितं क्षीरादिवस्तुनिकुरम्बं विनश्यति एवं धर्मवस्तुनिवहोऽपि सम्य-

क्त्वभाजनं विना विनाशमासादयेदिति, 'निहि'त्ति निधिरिव निधिः, यथा हि निरवधिनिधिव्यतिरेकेण महार्हमणिमौक्तिककनकादिद्रव्यं न प्राप्यते तथा सम्यक्त्वमहानिधानानभिगतौ चारित्रधर्मवित्तमपि निरुपमसुखसम्पादकं न प्राप्यते इति, इत्येताभिः पङ्क्तिभिर्भाव्यमानमिदं सम्यक्त्वमविलम्बमसममोक्षसुखसाधकं भवतीति ॥ १४० ॥ 'छट्ठाणं'ति प्रपञ्चयितुमाह—'अत्थी'त्यादि, अस्ति—विद्यते चशब्दस्यावधारणार्थत्वादस्त्येव जीव इति गम्यते, प्रतिप्राणि स्वसंवेदनप्रमाणप्रसिद्धचैतन्यान्यथानुपपत्तेः, तथाहि—न चैतन्यमिदं भूतानां धर्मः, तद्धर्मत्वे सति पृथिव्याः काठिन्यस्येव तस्य सर्वत्र सर्वदा चोपलम्भप्रसङ्गात्, न च सर्वत्र सर्वदा चोपलभ्यते, लोष्टादौ मृतावस्थायां चानुपलम्भात्, नापि चैतन्यमिदं भूतानां कार्यं, अत्यन्तवैलक्षण्यादेव कार्यकारणभावस्याप्यनुपपत्तेः, तथाहि—प्रत्यक्षत एव काठिन्यादिस्वभावानि भूतानि प्रतीयन्ते, चैतन्यं च तद्विलक्षणं, ततः कथमनयोः कार्यकारणभावः ?, तन्न भूतधर्मो भूतकार्यं वा चैतन्यं, अथ चास्ति प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धं, अतो यस्येदं स जीव इति, अनेन च नास्तिकमतमपहस्तितं १ । 'निच्चो'त्ति स च जीवो नित्यः—उत्पत्तिविनाशविरहितः, तदुत्पादककारणाभावात् सतः सर्वथा विनाशायोगाच्च, अनित्यत्वे हि जीवस्य बन्धमोक्षाद्येकाधिकरणत्वाभावप्रसक्तेः, तथाहि—यद्यात्मा नित्यो नाभ्युपगम्यते, किन्तु पूर्वापरक्षणत्रुटितानुसन्धाना ज्ञानक्षणा एव, तथा सत्यन्यस्य बन्धोऽन्यस्य मुक्तिः अन्यस्य क्षुदन्यस्य तृप्तिः अन्योऽनुभविताऽन्यः स्मर्ता अन्यश्चिकित्साद्दुःखमनुभवति अन्यो व्याधिरहितो जायते अन्यस्तपःक्लेशमधिसहतेऽपरः स्वर्गसुखमनुभवति अपरः शास्त्रमभ्यसितुमारभतेऽन्योऽधिगतशास्त्रार्थो भवति, न चैतद्युक्तं, अतिप्रसङ्गादिति, एतेन शौद्धोदनिसिद्धान्तध्वान्तमपध्वस्तं २ । 'कुणइ'त्ति स च जीवः करोति मिथ्यात्वाविरतिकषायादिबन्धहेतुयुक्ततया तत्तत्कर्माणि निर्वर्तयति, प्रतिप्राणिप्रतीतविचित्रसुखदुःखाद्यनुभवान्यथानुपपत्तेः, तथाहि—लोके सुखं दुःखं वा चित्रमनुभूयते, न चैष चित्रसुख-

दुःखानुभवो निर्हेतुकः, सर्वदा सद्भावाभावप्रसङ्गात्, 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्' । इति न्यायात्, तस्मादस्य सुख-दुःखानुभवस्य स्वकृतमेव कर्म हेतुरिति सिद्धो जीवः कर्मणां कर्तेति कापिलप्रतिकल्पनाप्रतिक्षेपः, नन्वयं जीवः सुखाभिलाषी न कदा-चनाप्यात्मनो दुःखमाशास्ते ततो यदि स्वकर्मणामेष कर्ता ततः कथं दुःखफलं कर्म करोति ?, उच्यते, यथा हि रोगी रोगनिवृत्तिमि-च्छन्नपि रोगाभिभूतत्वाद् अपथ्यक्रियानिबन्धनं भाविनमपायं जानन्नपि चापथ्यक्रियामासेवते तद्वदेषोऽपि जीवो मिथ्यात्वाद्यभिभूत-त्वात् कथंचित् जानन्नपि दुःखफलं कर्म करोतीति ३ । 'कयं च वेएइ'त्ति स च जीवः कृतं—स्वयमभिनिर्वर्त्तितं शुभाशुभं कर्म वेद-यते—स्वयमेवोपभुङ्क्ते अनुभवलोकागमप्रमाणतस्तथैवोपपद्यमानत्वात्, तथाहि—यदि स्वयंकृतकर्मफलभोक्तृत्वं जीवस्य नाभ्युपगम्यते ततः सुखदुःखानुभवो मुक्ताकाशयोरिव तस्य न स्यात्, सुखदुःखानुभवकारणसातासातवेदनीयकर्मोपभोगाभावात्, अस्ति चायं सुखदुःखा-नुभवः प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धत्वात्, लोकेऽप्येष जीवः प्रायो भोक्ता सिद्धः, तथाहि—सुखिनं कञ्चन पुरुषं दृष्ट्वा लोके वक्तारो भवन्ति—पुण्यवानेष यदित्थं सुखमनुभवतीति, तथा आगमेषु च जैनेतरेषु भोक्ता सिद्धः 'सव्वं च पएसतया भुंजइ कम्ममणुभावओ भइयं' [ सर्वं च प्रदेशतया भुज्यते कर्म, अनुभावतो भाज्यं । ] तथा 'नाभुक्तं क्षीयते कर्म, कोटिकल्पशतैरपि' । इत्यादिवचनात्, न चैवं लोकप्रतीतावागमेषु वा वर्तमानेषु कस्यचिद्विवेकचक्षुषो विप्रतिपत्तिरस्ति, कृतवैफल्यप्रसङ्गात्, न चैतद्युज्यते, वणिक्कृपीवलादीनां स्वकृतशुभाशुभकर्मफलभोगस्य साक्षादेव दर्शनात्, तथा च सति सिद्ध एष जीवः स्वकृतकर्मणां भोक्तेति, अनेन चाभोक्तृजीववादी दुर्नयो निराकृतः ४ । 'अत्थि निव्वाणं'ति अस्य जीवस्यास्ति—विद्यते निर्वाणं—मोक्षः, सत एव जीवस्य रागद्वेषमदमोहजन्मजरारो-गादिदुःखक्षयरूपोऽवस्थाविशेष इतियावत्, एतेन प्रदीपनिर्वाणकल्पमभावरूपं निर्वाणमित्याद्यसङ्गतं सङ्गिरन्तः सौगतविशेषा व्युदस्ताः;

ते हि प्रदीपस्येवास्य जीवस्य सर्वथा ध्वंस एव निर्वाणमाहुः, तथा च तद्वचः—"दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात्केवलमेति शान्तिम् ॥ १ ॥ जीवस्तथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्, क्लेशक्षयात्केवलमेति शान्तिम् ॥ २ ॥" एतच्चायुक्तं, दीक्षादिप्रयासवैयर्थ्यात्, प्रदीपदृष्टान्तस्याप्यसिद्धत्वात्, तथाहि—न प्रदीपानलस्य सर्वथा विनाशः, किन्तु तथाविधपुद्गलपरिणामवैचित्र्यात् त एव पावकपुद्गला भास्वरं रूपं परित्यज्य तामसं रूपान्तरमाप्नुवन्ति, तथा च विध्याते प्रदीपेऽनन्तरमेव तामसपुद्गलरूपो विकारः संमुपलभ्यते, चिरं चासौ पुरस्ताद्यन्नोपलभ्यते तत्सूक्ष्मसूक्ष्मतरपरिणामसद्भावादञ्जनरजोवत्, अञ्जनस्य हि पवनेनापह्रियमाणस्य यत्कृष्णरज उड्डीयते तदपि परिणामसौक्ष्म्यान्नोपलभ्यते न पुनरसत्त्वादिति, ततो यथाऽनन्तरोक्तस्वरूपं परिणामान्तरं प्राप्तः प्रदीपो निर्वाण इत्युच्यते तथा जीवोऽपि कर्मविरहितः केवलामूर्तजीवस्वरूपलक्षणं परिणामान्तरं प्राप्तो निर्वाणमुच्यते, तस्मात् दुःखादिक्षयरूपा सतोऽवस्था निर्वाणमिति स्थितं ५ । 'अत्थि य मोक्खोवाओ'त्ति अस्ति च मोक्षस्य—निर्वृतेरुपायः—सम्यक्साधनं, सम्यग्दर्शनज्ञानचारित्राणां मुक्तिसाधकतया घटमानकत्वात्, तथाहि—सकलमपि कर्मजालं मिथ्यात्वाज्ञानप्राणिहिंसादिहेतुकं, ततस्तत्प्रतिपक्षतया सम्यग्दर्शनाद्यभ्यासः सकलकर्मनिर्मूलनाय प्रभविष्णुरेव, न चैवं मिथ्यादृष्टिप्रणीतोऽप्युपायो मुक्तिसाधको भविष्यतीति वाच्यं, तस्य हिंसादिदोषकलुषितत्वेन संसारकारणत्वात्, अनेनापि मोक्षोपायाभावप्रतिपादकदुर्नयन्यक्कारः कृतः ६ । एतान्यात्मास्तित्वादीनि षट् सम्यक्त्वस्थानानि, सम्यक्त्वमेषु सत्स्वेव भवतीति भावः, अत्र च प्रतिस्थानकमात्मादिसिद्धये वहु वक्तव्यं तत्तु नोच्यते ग्रन्थगहनताप्रसङ्गादिति १४८ ॥ ९४१ ॥ इदानीं '**एगविहाइ दसविहं सम्मत्तं**'त्येकोनपञ्चाशदधिकशततमं द्वारमाह—

एगविह १ दुविह २ तिविहं ३ चउहा ४ पंचविह ५ दसविहं ६ सम्मं । दुवाइ कारगाई उवसमभेएहि वा सम्मं ॥ ९४२ ॥ एगविहं सम्मरुई १ निसग्गऽभिगमेहि २ तं भवे दुविहं । तिविहं तं खइयाई ३ अहवावि हु कारगाईहिं ॥ ९४३ ॥ सम्मत्तमीसमिच्छत्तकम्मक्खयओ भणंति तं खइयं । मिच्छत्तखओवसमा खाओवसमं ववइसंति ॥ ९४४ ॥ मिच्छत्तस्स उवसमा उवसमयं तं भणंति समयन्नू । तं उवसमसेढीए आइमसम्मत्तलाभे वा ॥ ९४५ ॥ विहिआणुट्ठाणं पुण कारगमिह रोयगं तु सद्दहणं । मिच्छद्दिट्ठी दीवइ जं तत्ते दीवगं तं तु ॥ ९४६ ॥ खइयाई सासायणसहियं तं चउविहं तु विन्नेयं । तं सम्मत्तब्भंसे मिच्छत्ताऽऽपत्तिरूवं तु ॥ ९४७ ॥ वेययसंजुत्तं पुण एयं चिय पंचहा विणिद्दिट्ठं । सम्मत्तचरिमपोग्गलवेयणकाले तयं होइ ॥ ९४८ ॥ एयं चिय पंचविहं निसग्गाभिगमभेयओ दसहा । अहवा निसग्गरुई इच्चाइ जमागमे भणिअं ॥ ९४९ ॥ निस्सग्गु १ वएसरुई २ आणरुई ३ सुत्त ४ बीय ५ रुईमेव । अहिगम ६ वित्थाररुई ७ किरिया ८ संखेव ९ धम्मरुई १० ॥ ९५० ॥ जो जिणदिट्ठे भावे चउव्विहे सद्दहेइ सयमेव । एमेव नन्नहत्ति य निसग्गरुइत्ति नायव्वो ॥ ९५१ ॥ एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व उवएसरुइत्ति नायव्वो ॥ ९५२ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो सो खलु आणारुई नाम ॥९५३॥ जो सुत्तमहिज्जंतो सुएणमोगाहई उ सम्मत्तं ।

अंगेण बाहिरेण य (उ) सो सुत्तरुइत्ति नायव्वो ॥ ९५४ ॥ एगपएऽणेगाइं पयाइं जो पसरई उ सम्मत्ते । उदएव्व तिल्लबिंदू सो बीयरुइत्ति नायव्वो ॥ ९५५ ॥ सो होइ अहिगमरुई सुयनाणं जस्स अत्थओ दिट्ठं । एक्कारस अंगाइं पइन्नगा दिट्ठिवाओ य ॥ ९५६ ॥ दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहिं वित्थाररुई मुणेयव्वो ॥ ९५७ ॥ नाणे दंसणचरणे तवविणए सच्चसमिइगुत्तीसु । जो किरियाभावरुई सो खलु किरियारुई नाम ॥ ९५८ ॥ अणभिग्गहियकुदिट्ठी संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसुं ॥ ९५९ ॥ जो अत्थिकायधम्मं सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायव्वो ॥ ९६० ॥ आईपुढवीसु तिसु खय १ उवसम २ वेयगं ३ च सम्मत्तं । वेमाणियदेवाणं पणिंदितिरियाण एमेव ॥ ९६१ ॥ सेसाण नारयाणं तिरियत्थीणं च तिविहदेवाणं । नत्थि हु खइयं सम्मं अन्नेसिं चेव जीवाणं ॥ ९६२ ॥

एकविधं द्विविधं त्रिविधं चतुर्धा पञ्चविधं दशविधं सम्यक्त्वं भवतीति शेषः, तत्र एकविधं तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वं, एतच्चानुक्तमप्यविवक्षितोपाधिभेदत्वेन सामान्यरूपत्वादवसीयते इत्यस्यां गाथायां न विवृत्तं, द्विविधादि तु न ज्ञायते इत्युल्लेखमाह—'दव्वाइ' इत्यादि, द्विविधं द्रव्यादिभेदतः, तत्र च 'दव्व'त्ति सूचामात्रत्वाद् द्रव्यतो भावतश्च, द्रव्यतो विशोधिविशेषेण विशुद्धिकृता मिथ्यात्वपुद्गला एव, भावतस्तु तदुपष्टम्भोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामः, आदिशब्दः प्रकारान्तरैरपि द्विविधत्वदर्शनार्थः, तेन नैश्च-

यिकव्यावहारिकभेदतः पौद्गलिकापौद्गलिकभेदतो नैसर्गिकाधिगमिकभेदतोऽपि च द्विविधमिति, तत्र यद्देशकालसंहननानुरूपं यथाशक्ति यथावत्संयमानुष्ठानरूपं मौनं–अविकलं मुनिवृत्तं तन्नैश्चयिकं सम्यक्त्वं, व्यावहारिकं तु सम्यक्त्वं न केवलमुपशमादिलिङ्गगम्यः शुभात्मपरिणामः किंतु सम्यक्त्वहेतुरपि अर्हच्छासनप्रीत्यादिः कारणे कार्योपचारात्सम्यक्त्वं, तदपि हि पारम्पर्येण शुद्धचेतसामपवर्गप्राप्तिहेतुर्भवतीति, उक्तं च—'जं मोणं तं सम्मं जं सम्मं तमिह होइ मोणं तु । निच्छयओ इयरस्स उ सम्मं सम्मत्तहेऊवि ॥ १ ॥' [ यन्मौनं तत्सम्यक्त्वं यत्सम्यक्त्वं तदिह भवति मौनमेव । निश्चयस्य इतरस्य तु सम्यक्त्वहेतुरपि सम्यक्त्वं ॥ १ ॥ ] व्यवहारनयमतमपि च प्रमाणं, तद्बलेनैव तीर्थप्रवृत्तेः, अन्यथा तदुच्छेदप्रसङ्गात्, तदुक्तं—'जइ जिणमयं पवज्जह ता मा ववहारनिच्छयं मुयह । ववहारनओच्छेए तित्थुच्छेओ जओऽवस्सं ॥ १ ॥" [ यदि जिनमतं प्रतिपद्यसे तर्हि व्यवहारनिश्चयौ मा मुञ्च । व्यवहारनयोच्छेदे तीर्थोच्छेदो यतोऽवश्यं ॥ १ ॥ ] इति, तथा अपनीतमिथ्यास्वभावसम्यक्त्वपुञ्जगतपुद्गलवेदनस्वरूपं क्षायोपशमिकं पौद्गलिकं, सर्वथा मिथ्यात्वमिश्रसम्यक्त्वपुञ्जपुद्गलानां क्षयादुपशमाच्च जातं केवलजीवपरिणामरूपं क्षायिकमौपशमिकं चापौद्गलिकं, नैसर्गिकाधिगमिके पुनरग्रे वक्ष्येते, तथा 'त्रिविधं कारकादि' कारकरोचकदीपकभेदतः, 'उवसमभेएहिं व'त्ति वाशब्दः त्रैविध्यस्यैव प्रकारान्तरप्रदर्शनार्थः, बहुवचनं च गणार्थं, ततस्त्रिविधं चतुर्विधं पञ्चविधं दशविधं च सम्यक्त्वमुपशमादिभिर्भेदैर्भवतीति, इदमुक्तं भवति—औपशमिकक्षायिकक्षायोपशमिकभेदात् त्रिविधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनभेदाच्चतुर्विधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनवेदकभेदात्पञ्चविधं, एतदेव प्रत्येकं निसर्गाधिगमभेदाद्दशविधमिति, कथं पुनर्द्विविधादिभेदं सम्यक्त्वमित्याह—सम्यग्—अवैपरीत्येन आगमोक्तप्रकारेण, न तु स्वमतिपरिकल्पितभेदैरिति भावः ॥ ९४२ ॥ अथैनामेव गाथां स्फुटतरं व्याख्यानयन्नाह—एकविधं—एकप्रकारमुपाधिभेदाविवक्षया निर्भे-

दमित्यर्थः, 'सम्यग् रुचिः' सम्यग्—अज्ञानसंशयविपर्यासनिरासेन इदमेव तत्त्वमिति निश्चयपूर्विका जिनोदितजीवादिपदार्थेष्वभिप्रीतिः,
जिनोक्तानुसारितया तत्त्वार्थश्रद्धानरूपमेकविधं सम्यक्त्वमिति भावः, तथा निसर्गाधिगमाभ्यां तत्—सम्यक्त्वं भवेद् द्विविधं, तत्र नि-
सर्गः—स्वभावो गुरूपदेशादिनिरपेक्षस्तस्मात्सम्यक्त्वं भवति, यथा नारकादीनां, अधिगमो—गुरूपदेशादिस्तस्मात्सम्यक्त्वं भवतीति प्रती-
तमेव, अयमभिप्रायः—तीर्थकराद्युपदेशदानमन्तरेण स्वत एव जन्तोर्यत्कर्मोपशमादिभ्यो जायते तन्निसर्गसम्यक्त्वं, यत्पुनस्तीर्थकराद्युप-
देशजिनप्रतिमादर्शनादिबाह्यनिमित्तोपष्टम्भतः कर्मोपशमादिना प्रादुर्भवति तदधिगमसम्यक्त्वमिति, तथा त्रिविधं तत्—सम्यक्त्वं क्षायि-
कादि, अथवा त्रिविधं कारकादि ॥ ९४३ ॥ तत्र क्षायिकक्षायोपशमिके व्याख्यातुमाह—सम्यक्त्वमिश्रमिथ्यात्वकर्मक्षयाद्भणन्ति तीर्थ-
करगणधराः क्षायिकं सम्यक्त्वं, त्रिविधस्यापि दर्शनमोहनीयस्य क्षयेण—निर्मूलोच्छेदेन निर्वृत्तं क्षायिकं, अयमर्थः—अनन्तानुबन्धिकषा-
यचतुष्टयक्षयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधेऽपि दर्शनमोहनीयकर्मणि सर्वथा क्षीणे क्षायिकं सम्यक्त्वं भवतीति, तथा
मिथ्यात्वस्य—मिथ्यात्वमोहनीयकर्मण उदीर्णस्य क्षयादनुदीर्णस्य चोपशमात्सम्यक्त्वरूपतापत्तिलक्षणाद्विष्कम्भितोदयस्वरूपाच्च क्षायोपश-
मिकं सम्यक्त्वं व्यपदिशन्ति—कथयन्ति, इदमुक्तं भवति—यदुदीर्णं—उदयमागतं मिथ्यात्वं तद्विपाकोदयेन वेदितत्वात् क्षीणं—निर्जीर्णं,
यच्च शेषं सत्तायामनुदयागतं वर्तते तदुपशान्तं, उपशान्तं नाम विष्कम्भितोदयमपनीतमिथ्यास्वभावं च, मिथ्यात्वमिश्रपुञ्जावाश्रित्य
विष्कम्भितोदयं शुद्धपुञ्जमाश्रित्य पुनरपनीतमिथ्यात्वस्वभावमित्यर्थः, तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयेण अनुदीर्णस्य चोपशमेन निर्वृत्त-
त्वात् त्रुटितरसं शुद्धपुञ्जलक्षणं मिथ्यात्वमपि क्षायोपशमिकं सम्यक्त्वमुच्यते, शोधिता हि मिथ्यात्वपुद्गला अतिस्वच्छवस्त्रमिव दृष्टेर्य-
थाऽवस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वस्यावारका न भवन्ति, अतस्तेऽप्युपचारतः सम्यक्त्वमुच्यन्ते इति ॥ ९४४ ॥ अथौपश-

मिकं सम्यक्त्वमाह—मिथ्यात्वस्य—मिथ्यात्वमोहनीयस्य कर्मणो य उपशमो—विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य भस्मच्छन्नवह्निव-द्विष्कम्भणं तस्मात् 'उवसमयं'ति प्राकृतशैल्या औपशमिकं तत्सम्यक्त्वं भणन्ति समयज्ञाः—सिद्धान्तवेदिनः, तत्पुनरुपशमश्रेण्यामौप-पशमिकीं श्रेणिमनुप्रविष्टस्य सतो जन्तोरनन्तानुबन्धिषु दर्शनत्रिके चोपशमं नीते भवति, किमुपशमश्रेणिगतस्यैवैतद्भवति ?, नेत्याह—'आइमे'त्यादि, आदिमः—प्रथमोऽनादिमिथ्यादृष्टेः सतो जीवस्य योऽसौ सम्यक्त्वलाभस्तस्मिन् वा औपशमिकं सम्यक्त्वं भवति । इह खल्वनादिमिथ्यादृष्टिः कश्चिदायुर्वर्जसप्तकर्मप्रकृतिष्वनाभोगनिर्वर्तितेन यथाप्रवृत्तिकरणेन क्षपयित्वा प्रत्येकं पल्योपमासङ्ख्येयभागन्यूनसा-गरोपमकोटीकोटिप्रमाणतां नीतासु अपूर्वकरणेन 'भन्नइ करणं तु परिणामो' इतिवचनादध्यवसायविशेषरूपेणातिप्रकृष्टघनरागद्वेषपरि-णामजनितस्य वज्राश्मवद् दुर्भेदस्य कर्मग्रन्थेर्भेदं विधायानिवृत्तिकरणं प्रविशति, तत्र च प्रतिसमयं विशुद्ध्यमानस्तान्येव कर्माणि निर-न्तरं क्षपयन् उदीर्णं मिथ्यात्वं वेदयन् अनुदीर्णस्य तु तस्योपशमलक्षणमन्तर्मुहूर्तकालमानमन्तरकरणं प्रविशति, तस्य चायं विधिः—यदुत अन्तरकरणस्थितेर्मिथ्यादलिकं गृहीत्वा प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, एवं च प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणद-लिकं सकलमपि क्षीयते, अन्तर्मुहूर्तेन च कालेन सकलदलिकक्षयः, ततस्तस्मिन्ननिवृत्तिकरणेऽवसिते उदीर्णे च मिथ्यात्वेऽनुभवतः क्षीणे अनुदीर्णे च परिणामविशुद्धिविशेषतो विष्कम्भितोदये ऊषरदेशकल्पं मिथ्यात्वविवरमासाद्य औपशमिकं सम्यक्त्वमधिगच्छति, तस्मिंश्च स्थितः सत्तायां वर्तमानं मिथ्यात्वं विशोध्य पुञ्जत्रयरूपेणावश्यं व्यवस्थापयति, यथा हि कश्चिन्मदनकोद्रवानौषधवशेन शोधयति, ते च शोध्यमानाः केचिच्छुद्ध्यन्ति केचिदर्धशुद्धा एव भवन्ति केचित्तेष्वपि सर्वथैव न शुद्ध्यन्ति, एवं जीवोऽप्यध्यवसायविशेषतो जिनवचन-रुचिप्रतिबन्धकदुष्टरसोच्छेदकरणेन मिथ्यात्वं शोधयति, तदपि शोध्यमानं शुद्धमर्धशुद्धमशुद्धं च त्रिधा जायते, तत्र शुद्धपुञ्जः सर्वज्ञधर्मे

सम्यक्प्रतिपत्त्यप्रतिबन्धकत्वेनोपचारात् सम्यक्त्वपुञ्ज उच्यते, द्वितीयस्तु अर्धशुद्ध इति मिश्रपुञ्ज उच्यते, तदुदये तु जिनधर्मे औदासीन्यमेव भवति, अशुद्धस्त्वर्हदादिपु मिथ्याप्रतिपत्तिजनकत्वान्मिथ्यात्वपुञ्जोऽभिधीयते, तदेवमन्तरकरणेन अन्तर्मुहूर्तकालमौपशमिकसम्यक्त्वेऽनुभूते तदनन्तरं नियमादसौ क्षायोपशमिकसम्यग्दृष्टिर्मिश्रो मिथ्यादृष्टिर्वा भवतीत्येष कार्मग्रन्थिकाभिप्रायः, सैद्धान्तिकाः पुनरयमनादिमिथ्यादृष्टिः कोऽपि ग्रन्थिभेदं विधाय तथाविधतीव्रपरिणामोपेतत्वेनापूर्वकरणमुपारूढः सन्मिथ्यात्वं त्रिपुञ्जीकरोति 'अपुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया ।' इति वचनात्, ततोऽनिवृत्तिकरणसामर्थ्याच्छुद्धपुञ्जपुद्गलान् वेदयन्नौपशमिकं सम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति, अन्यस्तु यथाप्रवृत्त्यादिकरणत्रयक्रमेणान्तरकरणे औपशमिकं सम्यक्त्वं लभते, पुंजत्रयं त्वसौ न करोत्येव, ततश्चौपशमिकसम्यक्त्वाच्युतोऽवश्यं मिथ्यात्वमेव गच्छतीति । नन्वौपशमिकसम्यक्त्वस्य क्षायोपशमिकसम्यक्त्वात्को विशेषः ?, उभयत्रापि ह्यविशेषेणोदितं मिथ्यात्वं क्षीणं अनुदितं चोपशान्तमिति, उच्यते, अस्ति विशेषः, क्षायोपशमिके हि सम्यक्त्वे मिथ्यात्वस्य प्रदेशानुभवोऽस्ति, न त्वौपशमिके सम्यक्त्वे इति, अन्ये तु व्याचक्षते—श्रेणिमध्यवर्तिन्येवौपशमिके सम्यक्त्वे प्रदेशानुभवो नास्ति, न तु द्वितीये, तथापि तत्र सम्यक्त्वाण्वनुभवाभाव एव विशेष इति ॥ १४५ ॥ इदानीं कारकरोचकदीपकसम्यक्त्वानि क्रमेणाह—विहितस्य—आगमोक्तस्य यदनुष्ठानं—करणं तदिह—सम्यक्त्वविचारे कारकं सम्यक्त्वं, अयमर्थः—यदनुष्ठानं यथा सूत्रे भणितं तद् यस्मिन् सम्यक्त्वे परमविशुद्धिरूपे सति देशकालसंहननानुरूपशक्त्यनिगूहनेन तथैव करोति तत् सदनुष्ठानं कारयतीति कारकमुच्यते, एतच्च साधूनां द्रष्टव्यं, तथा श्रद्धानमात्रं रोचकं सम्यक्त्वं, इदमुक्तं भवति—यत्सम्यक्त्वं सदनुष्ठानं रोचयत्येव केवलं न पुनः कारयति तद्रोचयति तथाविधविशुद्धिभावाद्विहितानुष्ठानं इति रोचकं, यथा श्रेणिकादीनां, तथा यः स्वयमिह मिथ्यादृष्टिरभव्यो वा कश्चिदङ्गार-

जिनोक्तानि दीपयति—परस्य प्रकाशयति यस्मात्तस्मा-
मर्दकादिवत् अथ च धर्मकथया मातृस्थानानुष्ठानेनातिशयेन वा केनचित्तत्त्वानि जिनोक्तानि दीपयति—परस्य प्रकाशयति यस्मात्तस्मा-
त्तत्सम्यक्त्वं दीपकमुच्यते, ननु स्वयं मिथ्यादृष्टिरथ च तस्य सम्यक्त्वमिति कथमुच्यते? विरोधात्, उच्यते, मिथ्यादृष्टेरपि सतस्तस्य यः
परिणामविशेषः स खलु प्रतिपत्तॄणां सम्यक्त्वस्य कारणं, ततः कारणे कार्योपचारात् सम्यक्त्वमित्युच्यते, यथाऽऽयुर्घृतमित्यदोषः ॥९४६॥
अथ चतुर्विधं सम्यक्त्वमाह—'खइये'त्यादि, तदेव क्षायिकादित्रिविधं सम्यक्त्वं सास्वादनसहितं चतुर्विधं विज्ञेयं, तत्पुनः सास्वादनमनन्तानुब-
न्धिकषायोदयेन सम्यक्त्वस्यौपशमिकाख्यस्य भ्रंशे—ह्रासे मिथ्यात्वाप्राप्तिरूपमवसेयं, इयमत्र भावना—इहान्तरकरणे औपशमिकसम्यक्त्वा-
द्धायां जघन्यतः समयशेषायामुत्कृष्टतस्तु षडावलिकाशेषायां वर्तमानस्य कस्यचिदनन्तानुबन्धिकषायोदयः सम्पद्यते, ततस्तेन कषायोदये-
नौपशमिकसम्यक्त्वाच्च्यवमानस्य मिथ्यात्वमद्याप्यप्राप्नुवतोऽत्रान्तरे जघन्यतः समयमुत्कृष्टतस्तु षडावलिकाः सास्वादनसम्यक्त्वं भवति,
परतस्त्वसौ नियमेन मिथ्यात्वोदयान्मिथ्यादृष्टिर्भवतीति ॥९४७॥ सम्प्रति पञ्चविधं सम्यक्त्वमाह—'वेयये'त्यादि, एतदेव पूर्वोक्तं चतुर्विधं
सम्यक्त्वं वेदकसम्यक्त्वसंयुक्तं पुनः पञ्चधा—पञ्चविधं विनिर्दिष्टं—विशेषतः कथितं वीतरागैः, तत्र वेदकसम्यक्त्वं सम्यक्त्वपुञ्जस्य बहुत-
रक्षपितस्य चरमपुद्गलानां वेदनकाले—ग्राससमये भवति, वेदयति—अनुभवति सम्यक्त्वपुद्गलान् इति वेदकः—अनुभविता, तदनर्थान्तरभूत-
त्वात् सम्यक्त्वमपि वेदकं, यथा आह्रियत इत्याहारकं तथा वेद्यत इति वेदकं, इदमत्र तात्पर्यम्—क्षपकश्रेणिं प्रतिपन्नस्यानन्तानुबन्धि-
कषायचतुष्टयमपि क्षपयित्वा मिथ्यात्वमिश्रपुञ्जेषु सर्वथा क्षपितेषु सम्यक्त्वपुञ्जमप्युदीर्योदीर्यानुभवेन निर्जरयतो निष्ठितोदीरणीयस्य
चरमग्रासेऽवतिष्ठमानेऽद्यापि सम्यक्त्वपुञ्जपुद्गलानां कियतामपि वेद्यमानत्वाद्वेदकं सम्यक्त्वमुपजायते इति । अत्राह—नन्वेवं सति क्षायो-
पशमिकेन सहास्य को विशेषः?, सम्यक्त्वपुञ्जपुद्गलानुभवस्योभयत्रापि समानत्वात्, सत्यं, किन्त्वेतदशेषोदितपुद्गलानुभूतिमतः प्रोक्तं,

इतरसूदितानुदितपुद्गलस्यैतन्मात्रकृतो विशेषः, परमार्थतस्तु क्षायोपशमिकमेवेदं, चरमग्रासशेषाणां पुद्गलानां क्षयाच्चरमग्रासवर्तिनां तु मिथ्यास्वभावापगमलक्षणस्योपशमस्य सद्भावादिति ॥९४८॥ अथ दशविधं सम्यक्त्वमाह–'एय'मित्यादि, एतदेवानन्तरोदितं पञ्चविधं सम्यक्त्वं निसर्गाधिगमभेदाभ्यां दशधा भवति, क्षायिकक्षायोपशमिकऔपशमिकसास्वादनवेदकानां प्रत्येकं निसर्गतोऽधिगमतश्च जायमानत्वाद्दशविधत्वमित्यर्थः, अथवेति प्रकारान्तरोपदर्शनार्थः निसर्गरुचिरुपदेशरुचिरित्यादिरूपतया यदागमे–प्रज्ञापनादौ प्रतिपादितं तेन च दशविधत्वमवगन्तव्यम् ॥९४९॥ तदेवाह–'निसग्गु'इत्यादि, अत्र रुचिशब्दः प्रत्येकं योज्यते ततो निसर्गरुचिरुपदेशरुचिरिति द्रष्टव्यम्, अत्र निसर्गः–स्वभावस्तेन रुचिः–जिनप्रणीततत्त्वाभिलापरूपा यस्य स निसर्गरुचिः १ उपदेशो–गुर्वादिभिर्वस्तुतत्त्वकथनं तेन रुचिः–उक्तस्वरूपा यस्य स उपदेशरुचिः २ आज्ञा–सर्वज्ञवचनात्मिका तस्यां रुचिः–अभिलाषो यस्य स आज्ञारुचिः ३ 'सुत्तबीयरुइमेव'त्ति अत्रापि रुचिशब्दः प्रत्येकमभिसम्बध्यते, सूत्रं–आचाराद्यङ्गप्रविष्टं अङ्गबाह्यं चावश्यकदशवैकालिकादि तेन रुचिर्यस्य स सूत्ररुचिः ४ बीजमिव बीजं यदेकमप्यनेकार्थप्रबोधोत्पादकं वचः तेन रुचिर्यस्य स बीजरुचिः ५, अनयोश्च पदयोः समाहारद्वन्द्वः तेन नपुंसकनिर्देशः, एवेति समुच्चये, 'अहिगमवित्थाररुई'त्ति अत्रापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धः, ततोऽधिगमरुचिर्विस्ताररुचिश्च, तत्राधिगमो–विशिष्टं परिज्ञानं तेन रुचिर्यस्यासावधिगमरुचिः ६ विस्तारो–व्यासः सकलद्वादशाङ्गस्य नयैः पर्यालोचनमिति भावः तेनोपबृंहिता रुचिर्यस्य स विस्ताररुचिः ७ 'किरियासंखेवधम्मरुई'त्ति रुचिशब्दस्यात्रापि प्रत्येकमभिसम्बन्धात् क्रियारुचिः सङ्क्षेपरुचिर्धर्मरुचिरिति द्रष्टव्यं, तत्र क्रिया–सम्यक्संयमानुष्ठानं तत्र रुचिर्यस्य स क्रियारुचिः ८ सङ्क्षेपः–सङ्ग्रहस्तत्र रुचिर्यस्य विस्तरार्थापरिज्ञानात् स सङ्क्षेपरुचिः ९ धर्मे–अस्तिकायधर्मे श्रुतधर्मादौ वा रुचिर्यस्य स धर्मरुचिः, यच्चेह सम्यक्त्वस्य जीवानन्यत्वेनाभिधानं तद्गुणगुणिनोः कथञ्चिदनन्यत्वख्यापनार्थमिति गाथा-

सङ्क्षेपार्थः ॥९५०॥ व्यासार्थं तु स्वत एव सूत्रकृदाह—'जो'इत्यादि, यो जिनदृष्टान्—तीर्थकरोपलब्धान् भावान्—जीवादिपदार्थांश्चतुर्विधान्—द्रव्यक्षेत्रकालभावभेदतो नामस्थापनाद्रव्यभावभेदतो वा चतुष्प्रकारान् स्वयमेव—परोपदेशनिरपेक्षं जातिस्मरणप्रतिभादिरूपया स्वमत्यैव श्रद्धाति, केनोल्लेखेन श्रद्धाति ? तत आह—एवमेवैतत् जीवादि यथा जिनैर्दृष्टं नान्यथेति, चः समुच्चये, एष निसर्गरुचिर्ज्ञातव्यः ॥९५१॥ उपदेशरुचिमाह—'एए'इत्यादि, एतांश्चैव अनन्तरोक्तान् तुः पूरणे भावान्—जीवादीनुपदिष्टान्—कथितान् परेण—अन्येन श्रद्धाति—तथेति प्रतिपद्यते, कीदृशेन परेण ?—छादयतीति छद्म—घातिकर्मचतुष्टयं तत्र तिष्ठतीति छद्मस्थः—अनुत्पन्नकेवलस्तेन जयति रागादीनिति जिनस्तेन च—उत्पन्नकेवलज्ञानेन तीर्थकृदादिना, छद्मस्थस्य तु प्रागुपन्यासस्तत्पूर्वकत्वाज्जिनस्य प्राचुर्येण वा तथाविधोपदेष्टॄणां, स ईदृकिमित्याह—उपदेशरुचिरिति ज्ञातव्यः ॥९५२॥ आज्ञारुचिमाह—'रागो'इत्यादि, रागः—अभिष्वङ्गो द्वेषः—अप्रीतिः मोहः—शेषमोहनीयप्रकृतयः अज्ञानं—मिथ्याज्ञानरूपं यस्यापगतं—नष्टं भवति, सर्वथा चास्यैतदपगमासम्भवाद्देशत इति गम्यते, अपगतशब्दस्य लिङ्गविपरिणामतो रागादिभिः प्रत्येकमभिसम्बन्धः, एतदपगमाच्च 'आणाए'त्ति अवधारणफलत्वाद्वाक्यस्य आज्ञयैव केवलया तीर्थकरादिसम्बन्धिन्या रोचमानः—क्वचिदपि कुग्रहाभावात् प्रवचनोक्तमर्थजातं तथेति प्रतिपद्यमानो माषतुषादिवत् स खलु—निश्चितमाज्ञारुचिः नामेत्यभ्युपगमे ततश्चाज्ञारुचिरित्यभ्युपगन्तव्यः ॥९५३॥ सूत्ररुचिमाह—'जो सुत्ते'इत्यादि, यः सूत्रं आगममधीयानः पठन् श्रुतेनेति—सूत्रेण तेनैवाधीयमानेन अङ्गेन—अङ्गप्रविष्टेनाचारादिना बाह्येन च—अङ्गबाह्येन आवश्यकादिना सम्यक्त्वमवगाहते—प्राप्नोति तुशब्दस्याधिकार्थसूचकत्वात्प्रसन्नप्रसन्नतराध्यवसायश्च भवति स गोविन्दवाचकवत् सूत्ररुचिरिति ज्ञातव्यः ॥९५४॥ बीजरुचिमाह—'एगे'त्यादि, एकेन पदेन प्रक्रमाज्जीवादिना अवगतेन अनेकानि पदानि प्राकृतत्वेन विभक्तिव्यत्ययादनेकेषु—बहुषु पदेषु—जीवादिषु यः प्रसरति—व्यापितया गच्छति सम्यक्त्वमित्यनेन रुचिरत्रोपलक्षिता

ततो धर्मधर्मिणोरभेदोपचारात् आत्मा सम्यक्त्ववान् सन् प्रसरति रुचिरूपेण प्रसरतीत्यर्थः, यदा तु 'पयरई उ सम्मत्ते' इति पाठस्तदा एकपदविषये सम्यक्त्वे—रुचौ सति अनेकेषु पदेषु प्रचरति—प्रकर्षेण व्यापितया गच्छति रुच्यात्मकत्वेनैवेत्यक्षरार्थः, भावार्थस्तु स एवेति, तुशब्दोऽवधारणे, प्रसरत्येव, कथमित्याह—उदक इव तैलबिन्दुः, किमुक्तं भवति ?—यथा उदकैकदेशगतोऽपि तैलबिन्दुः समस्तमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमवशादशेषेषु तत्त्वेषु रुचिमान् भवति, स एवंविधो बीजरुचिरिति ज्ञातव्यः, यथा हि बीजं क्रमेणानेकबीजानां जनकं एवमस्यापि रुचिविषयो भेदतो भिन्नानां रुच्यन्तराणामिति ॥१५५॥ अधिगमरुचिमाह—'सो'इत्यादि, यस्य श्रुतज्ञानमर्थतो दृष्टं, किमुक्तं भवति ?—येन श्रुतज्ञानस्यार्थोऽधिगतो भवति, किं पुनस्तत् श्रुतज्ञानमित्याह—एकादशाङ्गानि—आचारादीनि प्रकीर्णकानि—उत्तराध्ययननन्द्यध्ययनादीनि दृष्टिवादः—परिकर्मसूत्रादिः, अङ्गत्वेऽपि पृथगुपादानमस्य प्राधान्यख्यापनार्थं, चशब्दादुपाङ्गानि चौपपातिकादीनि, स भवत्यधिगमरुचिः ॥ १५६ ॥ विस्ताररुचिमाह—'दव्वाण'मित्यादि, द्रव्याणां—धर्मास्तिकायादीनामशेषाणामपि सर्वे भावाः—पर्यायाः सर्वप्रमाणैः—अशेषैः प्रत्यक्षादिभिर्यस्योपलब्धाः—यस्य प्रमाणस्य यत्र व्यापारस्तेनैव प्रमाणेन प्रतीताः 'सव्वाहिं'ति सर्वैश्च नयविधिभिः—नैगमादिनयप्रकारैः, अमुं भावमग्रं अमुं चायं नयभेदमि(द इ)च्छतीति स विस्ताररुचिरिति ज्ञातव्यः, सर्ववस्तुपर्यायप्रपञ्चावगमेन तस्य रुचेरतिविमलरूपतया भावात् ॥ १५७ ॥ क्रियारुचिमाह—'नाणे'इत्यादि, ज्ञाने तथा दर्शनं च चारित्रं च दर्शनचारित्रं समाहारद्वन्द्वस्तस्मिन् तथा तपसि विनये च, तथा सर्वासु समितिषु—ईर्यासमित्यादिषु सर्वासु च गुप्तिषु—मनोगुप्तिप्रभृतिषु 'सच्च'त्ति पाठे तु सत्या—निरुपचरितास्ताश्च ताः समितिगुप्तयश्च, यद्वा सत्यं च—अविसंवादनयोगाद्यात्मकं समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु यः क्रियाभावरुचिः, किमुक्तं भवति ?—यस्य भावतो ज्ञानाद्याचारानुष्ठाने रुचिरस्ति स खलु क्रियारुचिर्नाम, इह च चारित्रान्तर्गतत्वेऽपि तपः-

प्रभृतीनां पुनरुपादानं विशेषत एषां मुक्त्यङ्गत्वख्यापनार्थं ॥ ९५८ ॥ सङ्क्षेपरुचिमाह—'अणे'त्यादि, अनभिगृहीता—अनङ्गीकृता कुत्सिता दृष्टिः—सौगतादिदर्शनं येन स तथा, अविशारदः—अकुशलः प्रवचने—जिनप्रणीते शेषेषु च—कपिलादिप्रणीतेषु प्रवचनेषु अनभिगृहीतो—न विद्यतेऽभीत्याभिमुख्येनोपादेयतया गृहीतं—ग्रहणं ज्ञानमस्येत्यनभिगृहीतः, पूर्वमनभिगृहीतकुदृष्टिरित्यनेन दर्शनान्तरपरिग्रहः प्रतिषिद्धः अनेन तु परदर्शनपरिज्ञानमात्रमपि निषिद्धमिति विशेषः, इदमत्र तात्पर्यं—उक्तविशेषणो यः सङ्क्षेपेणैव चिलातीपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स सङ्क्षेपरुचिरुच्यते इति ॥ ९५९ ॥ धर्मरुचिमाह—'जो'इत्यादि, यः खलु जीवोऽस्तिकायानां—धर्मास्तिकायादीनां धर्म—गत्युपष्टम्भकत्वादिरूपं स्वभावं श्रुतधर्मम्—अङ्गप्रविष्टाद्यागमस्वरूपं चारित्रधर्मं च—सामायिकादिकं जिनाभिहितं—तीर्थकृदुक्तं श्रद्धाति—तथेति प्रतिपद्यते स धर्मरुचिरिति ज्ञातव्यः, इह च शिष्यमतिव्युत्पादनार्थमित्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानं, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा कचित्केषाञ्चिदन्तर्भावोऽस्त्येवेति ॥ ९६० ॥ अथ पूर्वोक्तान्येव क्षायिकादीनि त्रीणि सम्यक्त्वानि प्रसङ्गतो नारकादिजीवेषु चिन्तयन्नाह—'आई'त्यादिगाथाद्वयं, आद्यासु तिसृषु पृथिवीषु—रत्नप्रभाशर्कराप्रभावालुकाप्रभासु 'खयोवसमवेयगं'ति सूचकत्वात् सूत्रस्य क्षायिकमौपशमिकं वेदकं च सम्यक्त्वं भवति, इह च वेद्यन्ते—अनुभूयन्ते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदकं—क्षायोपशमिकं सम्यक्त्वमुच्यते, औपशमिकक्षायिकसम्यक्त्वयोः पुद्गलवेदनस्य सर्वथैवाभावात्, यत्पुनः क्षप्यमाणसम्यक्त्वपुञ्जपुद्गलचरमग्रासलक्षणं वेदकसम्यक्त्वं पूर्वमुक्तं तदिह पृथग् न विवक्षितं, पुद्गलवेदनस्य समानत्वेन क्षायोपशमिकसम्यक्त्व एव तस्यान्तर्भावात्, ततोऽयमर्थः—आद्यनरकपृथिवीत्रयवर्तिनारकाणां क्षायिकौपशमिकक्षायोपशमिकानि त्रीण्यपि सम्यक्त्वानि सम्भवन्तीति, तथाहि—योऽनादिमिथ्यादृष्टिर्नारकः प्रथमं सम्यक्त्वमवाप्नोति तस्यान्तरकरणकालेऽन्तर्मुहूर्तमौपशमिकं सम्यक्त्वं भवति, औपशमिकसम्यक्त्वाच्चानन्तरं

शुद्धसम्यक्त्वपुञ्जपुद्गलान् वेदयतस्तस्यापि क्षायोपशमिकं सम्यक्त्वमवाप्यते, मनुष्यतिर्यग्भ्यो वा यः क्षायोपशमिकसम्यग्दृष्टिर्नारकेषूत्पद्यते तस्यैतत्पारभविकं लभ्यते, विराधितसम्यक्त्वो हि षष्ठीपृथिवीं यावत् गृहीतेनापि सम्यक्त्वेन सैद्धान्तिकमतेन कश्चिदुत्पद्यते, कार्मग्रन्थिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्मनुष्यो वा वान्तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते न गृहीतेनेति, यदा पुनः कश्चिन्मनुष्यो नारकयोग्यमायुर्बन्धं विधाय पश्चात्क्षपकश्रेणिमारभते बद्धायुष्कत्वाच्च तां न समापयति केवलं दर्शनसप्तकं क्षपयित्वा क्षायिकं सम्यक्त्वमवाप्नोति, ततश्च मनुष्यायुस्त्रुटिसमये मृत्वा नारकेषूत्पद्यते तदा आद्यपृथिवीत्रयनारकाणां पारभविकं क्षायिकं सम्यक्त्वमवाप्यते, न तु ताद्भविकं, मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वादिति, तथा वैमानिकदेवानां 'पणिंदितिरियाण'त्ति व्याख्यानतो विशेषावगतौ पञ्चेन्द्रियाणां मनुष्याणां तिरश्चां वा सङ्ख्येयवर्षायुषामेवमेव—पूर्वोक्तमेव, त्रीण्यपि सम्यक्त्वानि भवन्तीत्यर्थः ॥ तत्र वैमानिकदेवानामौपशमिकं क्षायिकं च नारकवदेव, क्षायोपशमिकं त्वौपशमिकसम्यक्त्वानन्तरकालभावि ताद्भविकं, तिर्यङ् मनुष्यो वा यः क्षायोपशमिकसम्यग्दृष्टिः सन् वैमानिकेषूत्पद्यते तस्यैतत्पारभविकं च लभ्यते, मनुष्यास्तु द्विविधाः सङ्ख्येयवर्षायुषोऽसङ्ख्येयवर्षायुषश्च, तत्र सङ्ख्येयवर्षायुषां मनुष्याणामौपशमिकं सम्यक्त्वमनन्तरोक्तन्यायेन प्रथमसम्यक्त्वलाभकाले भवत्युपशमश्रेण्यां वा, तदनन्तरकालादिभावि तु क्षायोपशमिकं ताद्भविकं, देवादीनां तु क्षायोपशमिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं क्षायोपशमिकं, क्षायिकं तु क्षपकश्रेण्यां ताद्भविकं, नारकदेवानां क्षायिकसम्यग्दृष्टीनां मनुष्येषूत्पत्तौ पारभविकं तथैव, असङ्ख्येयवर्षायुषां पुनर्मनुष्याणामौपशमिकं क्षायिकं च नारकवदेव वाच्यं, क्षायोपशमिकं तु तदनन्तरकालादिभावि ताद्भविकं तथैव, तिर्यङ्मनुष्यास्तु क्षायोपशमिकसम्यक्त्वयुक्ता वैमानिकेष्वेव जायन्ते नान्यत्र, ये तु मिथ्यादृष्ट्यवस्थायां बद्धायुष्कत्वादेषूत्पद्यन्ते ते अवश्यं मरणसमये मिथ्यात्वं गत्वैवोत्पद्यन्ते इति पारभविकं क्षायोपश-

मिकं सम्यक्त्वमेषां न लभ्यते इति कार्मग्रन्थिकाः, सैद्धान्तिकास्तु मन्यन्ते—क्षायोपशमिकसम्यक्त्वसंयुक्ता अपि बद्धायुष्का अमी केचिद्देतेषूत्पद्यन्ते इति पारभविकमपि क्षायोपशमिकं सम्यक्त्वममीषां लभ्यते, असङ्ख्येयवर्षायुष्कतिरश्चां पुनस्त्रीण्यपि सम्यक्त्वान्यसङ्ख्येयवर्षायुष्कमनुष्यवद्वाच्यानि, शेषाणामाद्यपृथिवीत्रयव्यतिरिक्तानां नारकाणां पङ्कप्रभाद्यधस्तनपृथिवीचतुष्टयनारकाणामित्यर्थः 'तिरियत्थीणं च'त्ति असङ्ख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिरश्चां तत् स्त्रीणां च, तथा त्रिविधदेवानां—भवनपतिव्यन्तरज्योतिष्कलक्षणानां नास्त्येव क्षायिकं सम्यक्त्वं, क्षायिकं हि सम्यक्त्वमेतेषु ताद्भविकं तावन्न भवति, सङ्ख्येयवर्षायुष्कमनुष्यस्यैव क्षायिकसम्यक्त्वारम्भकत्वात्, पारभविकमपि न भवति क्षायिकसम्यग्दृष्टेरेतेष्वनुत्पत्तेः, औपशमिकक्षायोपशमिके तु भवत इति, 'सम्मं अन्नेसिं चेव जीवाणं'ति अन्येषां पुनर्जीवानां सम्यक्त्वमेव नास्ति चः पुनरर्थे, एवोऽवधारणे भिन्नक्रमः स च योजित एव, एतदुक्तं भवति—एकद्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां तद्भवं परभवं वा अपेक्ष्य प्रस्तुतसम्यक्त्वत्रयमध्य एकमपि न सम्भवति, सास्वादनसम्यक्त्वं पुनर्बादरपृथिव्यम्बुवनस्पतिद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियेष्वपर्याप्तावस्थायां पारभविकं, पर्याप्तसंज्ञिपञ्चेन्द्रियेषु तु ताद्भविकमवाप्यते, सूक्ष्मैकेन्द्रियबादरतेजोवायुषु पुनः सम्यक्त्वलेशवतामप्युत्पादाभावात् सास्वादनं नास्तीत्येष कार्मग्रन्थिकाभिप्रायः, सूत्राभिप्रायेण तु पृथिव्याद्येकेन्द्रियाणां सास्वादनसम्यक्त्वं नास्ति, यदुक्तं प्रज्ञापनायां—"पुढविकाइयाणं पुच्छा, गोयमा ! पुढविकाइया नो सम्मदिट्ठी मिच्छादिट्ठी नो सम्मामिच्छदिट्ठी, एवं जाव वणप्फइकाइया" इति ॥ ९६१ ॥ ९६२ ॥ १४९ ॥ इदानीं 'कुलकोडीणं संखा जीवाणं'ति पञ्चाशदधिकशततमं द्वारमाह—

**बारस सत्त य तिन्नि य सत्त य कुलकोडिसयसहस्साइं । नेया पुढविदगागणिवाऊणं चेव परि-**

संखा ॥ ९६३ ॥ कुलकोडिसयसहस्सा सत्तट्ठ य नव य अट्ठवीसं च । वेइंदियतेइंदियचउरिंदियहरियकायाणं ॥ ९६४ ॥ अद्धत्तेरस बारस दस दस नव चेव सयसहस्साइं । जलयरपक्खिचउप्पयउरभुयसप्पाण कुलसंखा ॥ ९६५ ॥ छव्वीसा पणवीसा सुरनेरइयाण सयसहस्साइं । बारस य सयसहस्सा कुलकोडीणं मणुस्साणं ॥९६६॥ एगा कोडाकोडी सत्ताणउई भवे सयसहस्सा । पन्नासं च सहस्सा कुलकोडीणं मुणेयव्वा ॥ ९६७ ॥

'बारसे'त्यादिगाथापञ्चकम्, पृथिव्युदकाग्निवायूनामेव कुलान्याश्रित्य परिसङ्ख्या यथाक्रमं ज्ञेया, तद्यथा—द्वादश कुलकोटिशतसहस्राणि—लक्षाः पृथिवीकायिकानां सप्त उदकजीवानां त्रीण्यग्निकायिकानां वायूनां पुनः सप्तैव कुलकोटिशतसहस्राणि ॥९६३॥ 'कुले'त्यादि, अत्रापि यथासङ्ख्येन योजना, द्वीन्द्रियाणां सप्त कुलकोटिशतसहस्राणि अष्टौ त्रीन्द्रियाणां नव चतुरिन्द्रियाणां अष्टाविंशतिर्हरितकायिकानां—समस्तवनस्पतिकायिकानाम् ॥९६४॥ 'अद्धे'त्यादि, अत्रापि यथाक्रमं पदघटना, तत्र जले चरन्ति—पर्यटन्तीति जलचराः—मत्स्यमकरादयः तेषामर्धत्रयोदश कुलकोटिशतसहस्राणि, सार्धा द्वादश कुलकोटिलक्षा इत्यर्थः, पक्षिणां—केकिकाकादीनां द्वादश चतुष्पदानां—गजगर्दभादीनां दश उरःपरिसर्पाणां—भुजगादीनां दश भुजपरिसर्पाणां—गोधानकुलादीनां नव कुलकोटिलक्षाणि भवन्ति ॥९६५॥ 'छव्वीसे'त्यादि, सर्वेषां भवनपत्यादिसुराणां षड्विंशतिः कुलकोटिलक्षाणि नारकाणां तु पञ्चविंशतिः मनुष्याणां पुनर्द्वादश कुलकोटीनां शतसहस्राणि भवन्तीति ॥९६६॥ अथ पूर्वोक्तानामेव कुलानां सर्वसङ्ख्यामाह—'एगे'त्यादि, सर्वसङ्ख्यया एका कुलकोटीकोटिः सप्तनवतिः कुलकोटीनां शतसहस्राणि पञ्चाशच्च सहस्राः कुलकोटीनां ज्ञातव्याः ॥९६७॥ १५०॥ इदानीं 'जोणिलक्ख चुलसी'त्येकपञ्चाशदधिकशततमं द्वारमाह—

**पुढविदगअगणिमारुय एक्केके सत्त जोणिलक्खाओ । वणपत्तेयअणंते दस चउदस जोणिलक्खाओ ॥ ९६८ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसुं । तिरिएसु होंति चउरो चउदस लक्खा उ मणुएसु ॥ ९६९ ॥ समवन्नाइसमेया बहवोऽवि हु जोणिलक्खभेयाओ । सामन्ना घिप्पंतिह एक्कगजोणीइ गहणेणं ॥ ९७० ॥**

'यु मिश्रणे' इत्यस्य धातोर्युवन्ति—भवान्तरसङ्क्रमणकाले तैजसकार्मणशरीरवन्तः सन्तो जीवा औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धैर्मिश्रीभवन्त्यस्यामिति औणादिके निप्रत्यये योनिः जीवानामुत्पत्तिस्थानमित्यर्थः, तत्र पृथिव्युदकाग्निमरुतां सम्बन्धिन्येकैकस्मिन् समूहे सप्त सप्त योनिलक्षा भवन्ति, तद्यथा—सप्त पृथिवीनिकाये सप्तोदकनिकाये सप्ताग्निनिकाये सप्त वायुनिकाये, वनस्पतिनिकायो द्विविधस्तद्यथा—प्रत्येकोऽनन्तकायश्च, तत्र प्रत्येकवनस्पतिनिकाये दश योनिलक्षाः, अनन्तवनस्पतिनिकाये चतुर्दश लक्षाः, विकलेन्द्रियेषु—द्वीन्द्रियादिषु द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियरूपेषु प्रत्येकं द्वे द्वे योनिलक्षे, तद्यथा—द्वे योनिलक्षे द्वीन्द्रियेषु द्वे त्रीन्द्रियेषु द्वे चतुरिन्द्रियेषु, तथा चतस्रो योनिलक्षा नारकाणां, चतस्रो देवानां, तथा तिर्यक्षु पञ्चेन्द्रियेषु चतस्रो योनिलक्षाः, चतुर्दश योनिलक्षा मनुष्येषु, सर्वसङ्ख्यायाश्च मीलने चतुरशीतिर्योनिलक्षा भवन्तीति । न च वक्तव्यमनन्तानां जीवानामुत्पत्तिस्थानान्यप्यनन्तानि प्राप्नुवन्ति, यतो जीवानां सामान्याधारभूतो लोकोऽप्यसङ्ख्येयप्रदेशात्मक एव, विशेषाधाररूपाण्यपि नरकनिष्कुटदेवशयनीयप्रत्येकसाधारणजन्तुशरीराण्यसङ्ख्येयान्येव, ततो जीवानामानन्त्येऽपि कथमुत्पत्तिस्थानानामानन्त्यं?, भवन्तु तर्ह्यसङ्ख्येयानीति चेन्नैवं, यतो बहून्यपि तानि केवलिदृष्टेन केनचिद्वर्णादिना धर्मेण सदृशान्येकैव योनिरिष्यते, ततोऽनन्तानामपि जन्तूनां केवलिविवक्षितवर्णादिसादृश्यतः परस्परान्तर्भावचिन्तया चतुरशी-

तिलक्षसङ्ख्या एव योनयो भवन्ति, न हीनाधिकाः ॥ ९६८ ॥ ९६९ ॥ एतदेवाह—'समे'त्यादि, समैः—सदृशैर्वर्णादिभिः—वर्णगन्धरसस्पर्शैः समेता—युक्ताः समानवर्णगन्धरसस्पर्शा इत्यर्थः, बह्वोऽपि—प्रभूता अपि योनिभेदलक्षा हुः—निश्चितमिह एकयोनिजातिग्रहणेन गृह्यन्ते, कुतः ?—सामान्यात्—व्यक्तिभेदतः प्राभूत्येऽपि समानवर्णगन्धरसस्पर्शसद्भावेन सादृश्यादिति । ननु योनिकुलयोः कः प्रतिविशेषः ?, उच्यते, योनिर्जीवानामुत्पत्तिस्थानं, यथा वृश्चिकादेर्गोमयादि, कुलानि तु योनिप्रभवानि, तथाहि—एकस्यामेव योनावनेकानि कुलानि भवन्ति, यथा छगणयोनौ कृमिकुलं कीटकुलं वृश्चिककुलमित्यादि, यद्वा तस्यैव वृश्चिकादेर्गोमयाद्येकयोन्युत्पन्नस्यापि कपिलरक्तादिवर्णभेदादनेकविधानि कुलानीति । अथ प्रज्ञापनाद्यनुसारेण योनिविषयोऽपरोऽपि विशेषः कश्चिदुपदर्श्यते—यथा शीतोष्णमिश्रभेदात् त्रिधा योनिः, तत्र नारकाणां शीता उष्णा च, आद्यासु तिसृपूष्णवेदनासु पृथिवीपु शीता, चतुर्थ्यां बहुपूपरितनेपु उष्णवेदनेपु नरकावासेपु शीता अधः स्तोकेपु शीतवेदनेपु उष्णा, पञ्चम्यां बहुपु शीतवेदनेपु उष्णा स्तोकेपु उष्णवेदनेपु शीता, षष्ठीसप्तम्योश्च शीतवेदनयोर्नारकाणां योनिरुष्णैव, शीतयोनिकानां हि उष्णवेदनाऽभ्यधिका भवति उष्णयोनिकानां तु शीतवेदना, नारकाणां च यथा वेदनाप्राचुर्यमापद्यते प्रायः सर्वं तथैव परिणमति, ततो वेदनाक्रमप्रातिकूल्येन योनिक्रमसम्भवः, सुराणां गर्भजतिर्यङ्नराणां च शीतोष्णरूपोभयस्वभावा योनिः, नैकान्तेन शीतं नाप्युष्णं किन्त्वनुष्णाशीतं तदुपपातक्षेत्रमिति भावः, पृथिव्यम्बुवायुवनस्पतिद्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यक्पञ्चेन्द्रियसम्मूर्च्छिममनुष्याणामुपपातस्थानानि शीतस्पर्शान्युष्णस्पर्शान्युभयस्पर्शान्यपि भवन्तीति तेषां त्रिधा योनिः, केषाञ्चिच्छीता केषाञ्चिदुष्णा केषाञ्चिन्मिश्रेति, तेजस्कायिकानामुष्णैव योनिः, उष्णस्पर्शपरिणत एव क्षेत्रे तेषामुत्पत्तेः । तथा सचित्ताचित्तमिश्रभेदादपि त्रिधा योनिः, तत्र नारकाणां देवानां चाचित्ता, तदुपपातक्षेत्रस्य केनापि जन्तुनाऽपरिगृहीतत्वेनाचेतनत्वात्, यद्यपि

च सूक्ष्मैकेन्द्रियाः सकललोकव्यापिनस्तथापि न तत्प्रदेशैरुपपातस्थानपुद्गला अन्योऽन्यानुगमेन सम्बद्धा इत्यचित्तैव तेषां योनिः, एक-द्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यग्नराणां त्रिविधाऽपि योनिः, जीवति गवादावुत्पद्यमानानां कृम्यादीनां सचित्ता अचित्ते काष्ठे समुत्पद्यमानानां घुणादीनामचित्ता सचित्ताचित्तेषु काष्ठगोक्षतादिषु घुणकृम्यादीनामेव मिश्रा, गर्भजतिर्यग्नराणां पुनर्मिश्रा, ये हि शुक्रमिश्राः शोणितपुद्गला योन्याऽऽत्मसात्कृतास्ते सचित्ताः, अन्ये त्वचित्ता इति । तथा संवृतविवृतोभयभेदादपि त्रिधा योनिः, तत्र नारकदेवैकेन्द्रियाणां संवृता योनिः, नारकोत्पत्तिस्थानानां निष्कुटानां संवृतगवाक्षकल्पत्वात् देवानां तु देवशयनीयेषु देवदूष्याभ्यन्तरे संवृतस्वरूपे समुत्पादात् एकेन्द्रियाणां तु योनेः स्पष्टमनुपलक्ष्यमाणत्वात्, द्वित्रिचतुरिन्द्रियसम्मूर्च्छिमतिर्यग्नराणां विवृता योनिः, तेषामुत्पत्तिस्थानस्य जलाशयादेः स्पष्टमुपलक्ष्यमाणत्वात्, गर्भजतिर्यग्नराणां तूभयरूपा योनिः, गर्भस्य संवृतविवृतरूपत्वात्, गर्भो ह्यन्तः स्वरूपतो नोपलभ्यते बहिः पुनरुदरवृद्ध्यादिना समुपलक्ष्यते इति । अथ मनुष्ययोनिगतो विशेषः प्रतिपाद्यते—यथा मनुष्याणां योनिस्त्रिधा—कूर्मोन्नता शङ्खावर्ता वंशीपत्रा च, कूर्मपृष्ठमिवोन्नता कूर्मोन्नता शङ्खस्येवावर्तो यस्यां सा शङ्खावर्ता संयुक्तवंशीपत्रद्वयाकारा वंशीपत्रा, तत्र कूर्मोन्नतायां योनौ तीर्थकृच्चक्रवर्तिवासुदेवबलदेवा उत्पद्यन्ते, वंशीपत्रायां सामान्यमनुष्या जायन्ते, शङ्खावर्ता तु स्त्रीरत्नस्यैव भवति, तस्यां च गर्भ उत्पन्नोऽपि न निष्पत्तिं याति, प्रबलतमकामाग्निपरितापतो ध्वंसगमनादिति वृद्धप्रवादः ॥ १७० ॥ १५१ ॥ सम्प्रति 'तिकालाईवितत्थ विवरणं'ति द्विपञ्चाशदधिकशततमं द्वारमाह—

**त्रैकाल्यं ३ द्रव्यषट्कं ६ नवपदसहितं जीवषट्कायलेश्याः ६, पञ्चान्ये चास्तिकाया ५ व्रत ५ समिति ५ गति ५ ज्ञान ५ चारित्र ५ भेदाः । इत्येते मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः,**

प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ ९७१ ॥ एयस्स विवरणमिणं तिकालमईयवट्टमाणेहिं । होइ भविस्सजुएहिं दव्वच्छक्कं पुणो एयं ॥ ९७२ ॥ धम्मत्थिकायदव्वं १ दव्वमहम्मत्थिकायनामं २ च । आगास ३ काल ४ पोग्गल ५ जीवद्व्वसरूवं च ६ ॥ ९७३ ॥ जीवा १ जीवा २ पुन्नं ३ पावा ४ऽऽसव ५ संवरो य ६ निज्जरणा ७ । बंधो ८ मोक्खो ९ य इमाइं नव पयाइं जिणमयम्मि ॥ ९७४ ॥ जीवं छक्कं इग १ वि २ ति ३ चउ ४ पणिंदिय ५ अणिंदियसरूवं ६ । छक्काया पुढवि १ जला २ नल ३ वाउ ४ वणस्सइ ५ तसेहिं ६ ॥ ९७५ ॥ छल्लेसाओ कण्हा १ नीला २ काऊ य ३ तेउ ४ पउम ५ सिया ६ । कालविहीणं दव्वच्छक्कं इह अत्थिकायाओ ॥ ९७६ ॥ पाणिवह १ मुसावाए २ अदत्त ३ मेहुण ४ परिग्गहेहि ५ इहं । पंच वयाइं भणियाइं पंच समिईओ साहेमि ॥ ९७७ ॥ इरिया १ भासा २ एसण ३ गहण ४ परिट्ठवण ५ नामिया ताओ । पंच गईओ नारय १ तिरि २ नर ३ सुर ४ सिद्ध ५ नामाओ ॥ ९७८ ॥ नाणाइं पंच मइ १ सुय २ ओहि ३ मण ४ केवलेहि ५ भणियाइं । सामाइय १ छेय २ परिहार ३ सुहुम ४ अहक्खाय ५ चरणाइं ॥ ९७९ ॥

त्रयः कालाः समाहृतास्त्रिकालं त्रिकालमेव त्रैकाल्यमतीतादिकालत्रिकमित्यर्थः, द्रव्यषट्कं—धर्मास्तिकायादिभेदात्, नवभिः पदैः—जीवादिभिस्तत्त्वैः सहितं—युक्तं द्रव्यषट्कमेव ज्ञातव्यं, तथा षट्शब्दस्य डमरुकमणिन्यायेनोभयत्र सम्बन्धात् षट् जीवा—एकेन्द्रिया-

दयः षट् कायाः—पृथिवीकायादयः, षट् च लेश्याः—कृष्णादयः, अपरे च पञ्चास्तिकाया—धर्मास्तिकायादयः, तथा पञ्चशब्दस्य प्रत्येक-
मत्रापि योजनात्पञ्च व्रतभेदाः—प्राणिवधविरमणादयः, पञ्च समितिभेदा—ईर्यासमित्यादयः, पञ्च गतिभेदा—नरकगत्यादयः, पञ्च ज्ञान-
भेदाः—मतिज्ञानादयः, पञ्च चारित्रभेदाः—सामायिकादयः, इत्येते पूर्वोक्ताः सर्वेऽपि पदार्थास्त्रिभुवनमहितैः—त्रिलोकार्चितैरर्हद्भिः—तीर्थ-
करैरीशैः—स्वाभाविककर्मक्षयजन्यसुरविरचितचतुस्त्रिंशदतिशयस्वरूपपरमैश्वर्योपशोभितैर्मोक्षमूलं—निर्वाणकारणं प्रोक्तं—उपदिष्टं, अतो यः
पुमान् मतिमान्—प्रवेकविवेककलित एतान् प्रत्येति—स्वरूपतोऽवगच्छति श्रद्धाति—इदमेव तत्त्वमित्यात्मनो रोचयति स्पृशति च—यथा-
यथं सम्यगासेवते स वै स्फुटं 'शुद्धदृष्टिः' शुद्धा—मिथ्यात्वमलानाविला दृष्टिः—सम्यक्त्वं यस्य स शुद्धदृष्टिरिति ॥ ९७१ ॥ अथैनं
वृत्तं व्याचिख्यासुः कालत्रिकं प्रतिपादयन्नाह—'एये'त्यादि, एतस्य—पूर्वोक्तस्य त्रैकाल्यमित्यादेः स्रग्धरावृत्तस्येदं—वक्ष्यमाणं विवरणं—
व्याख्यानं विज्ञेयमिति शेषः, तत्र त्रैकाल्यमतीतवर्तमानाभ्यां भविष्ययुक्ताभ्यां भवति, अतीतवर्तमानभविष्यल्लक्षणास्त्रयः काला इत्यर्थः,
तत्रातिशयेन इतो—गतोऽतीतो, वर्तमानत्वमतिक्रान्त इत्यर्थः, वर्तत इति वर्तमानः—साम्प्रतमुत्पन्नः सर्वसूक्ष्मनिरंशसमयमात्रमान इति
भावः, भविष्यतीति भविष्यन्—वर्तमानत्वं न प्राप्तोऽनागत इति हृदयं, द्रव्यषट्कं पुनरिदं—वक्ष्यमाणं ॥ ९७२ ॥ तदेवाह—'धम्मे'-
त्यादि, धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायकालपुद्गलास्तिकायजीवास्तिकायस्वरूपाणि षड् द्रव्याणि, तत्र जीवानां पुद्गलानां च स्वत
एव गतिक्रियापरिणतानां तत्स्वभावधरणात्—तत्स्वभावपोषणाद्धर्मः अस्तयश्चेह प्रदेशास्तेषां कायः—सङ्घातोऽस्तिकायः, ततो धर्मश्चा-
सावस्तिकायश्च धर्मास्तिकायः, सकललोकव्यापी असंख्येयप्रदेशात्मकोऽमूर्तो द्रव्यविशेष इत्यर्थः । जीवपुद्गलानामेव तथैव गतिपरिण-
तानां तत्स्वभावेऽधरणादधर्मः स चासावस्तिकायश्चाधर्मास्तिकायः, किमुक्तं भवति ?—जीवपुद्गलानां स्थितिपरिणामपरिणतानां तत्परि-

णामोपष्टम्भकोऽमूर्तो लोकव्यापी असंख्येयप्रदेशात्मकोऽधर्मास्तिकायः, लोकमात्रत्वं चानयोरेतदवष्टम्भकाकाशदेशस्यैव लोकत्वात्, अलोकव्यापित्वे त्वनयोर्जीवपुद्गलानामपि तत्र प्रचारप्रसङ्गेन तस्यापि लोकत्वप्राप्तेरिति । तथा आङिति मर्यादया तत्संयोगेऽपि स्वकीयस्वकीयस्वरूपेऽवस्थानतः सर्वथा तत्स्वरूपाप्राप्तिलक्षणया काशन्ते—स्वभावलाभेनावस्थितिकरणेन च दीप्यन्ते पदार्थसार्था यत्र तदाकाशं यदा त्वभिविधावाङ् तदाऽऽङिति सर्वभावाभिव्याप्त्या काशते—प्रतिभासते इत्याकाशं तच्च तदस्तिकायश्चाकाशास्तिकायो, लोकालोकव्यापी अनन्तप्रदेशात्मको द्रव्यविशेष इत्यर्थः। तथा कलनं—समस्तवस्तुस्तोमस्य सङ्ख्यानमिति कालः, अथवा कलयन्ति—समयोऽस्यानेन रूपेणोत्पन्नस्यावलिका मुहूर्तादि वा इत्यादिप्रकारेण सर्वमपि सचेतनाचेतनं वस्त्ववगच्छन्ति केवल्यादयोऽनेनेति कालः—समयावलिकारूपो द्रव्यविशेषः। तथा पूरणगलनधर्माणः पुद्गलाः—परमाण्वादयोऽनन्ताणुकस्कन्धपर्यन्ताः, एते हि कुतश्चिद् द्रव्याद्गलन्ति—वियुज्यन्ते किञ्चित्तु द्रव्यं स्वसंयोगतः पूरयन्ति—पुष्टं कुर्वन्ति, पुद्गलाश्च तेऽस्तिकायश्च पुद्गलास्तिकायः। तथा जीवन्ति जीविष्यन्ति जीवितवन्त इति जीवास्ते च तेऽस्तिकायश्च जीवास्तिकायः, प्रत्येकमसङ्ख्येयप्रदेशात्मकसकललोकभाविनानाजीवद्रव्यसमूह इत्यर्थः, अत्र च जीवपुद्गलानां गत्यन्यथानुपपत्तेर्धर्मास्तिकायस्य तेषामेव स्थित्यन्यथानुपपत्तेरधर्मास्तिकायस्य जीवादिपदार्थानामाधारान्यथानुपपत्तेराकाशास्तिकायस्य वकुलाशोकचम्पकादिपुष्पफलप्रदाननैयत्यान्यथाऽनुपपत्तेः कालस्य घटादिकार्यान्यथानुपपत्तेः पुद्गलास्तिकायस्य प्रतिप्राणि स्वसंवेदनसिद्धचैतन्यान्यथानुपपत्तेश्च जीवास्तिकायस्य सत्त्वं समवसेयमिति ॥ ९७३ ॥ अथ नव पदान्याह—'जीवे'त्यादि, जीवाः—सुखदुःखोपयोगलक्षणाः अजीवाः—तद्विपरीता धर्मास्तिकायादयः पुण्यं—शुभप्रकृतिरूपं कर्म पापं—तद्विपरीतं कर्मैव आश्रवति—आगच्छति कर्मानेनेत्याश्रवः शुभाशुभकर्मोपादानहेतुः हिंसादिः संवरणं संवरो—गुप्त्यादिभिराश्रवनिरोधः निर्जरणं निर्जरा—विपाकात्तपसो वा कर्मणां देशतः क्षपणं बन्धो—

जीवकर्मणोरत्यन्तसंश्लेषः मोक्षः—कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानं, इत्येतानि नवसङ्ख्यानि पदानि—तत्त्वानि जिनमते—अर्हत्प्रवचने विज्ञेयानीति, इह च आश्रवबन्धपुण्यपापानि मुख्यं संसारकारणमिति हेयानि, संवरनिर्जरे मुख्यं मोक्षकारणं, मोक्षस्तु मुख्यं साध्यमित्येतानि त्रीण्यप्युपादेयानीत्येवं शिष्यस्य हेयोपादेयतापरिज्ञानार्थं मध्यमप्रस्थानापेक्षया नवेत्युक्तं, अन्यथा सङ्क्षेपापेक्षया जीवाजीवयोरेव पुण्यपापादीनामन्तर्भावसंभवाद् द्वित्वसङ्ख्ययैवाभिधेयं स्यात्, तथा चोक्तं स्थानाङ्गे—'जदत्थि च णं लोए तं सव्वं दुपडोयारं, तंजहा—जीवा चेव अजीवा चेव'त्ति, विस्तरतस्तु तदुत्तरोत्तरभेदविवक्षयाऽऽनन्त्यमेव स्यात्, अथ कथं जीवाजीवयोरेव पुण्यपापादीनामन्तर्भावसम्भव इति चेदुच्यते—पुण्यपापे कर्मणी बन्धोऽपि तदात्मक एव कर्म च पुद्गलपरिणामः पुद्गलाश्चाजीवा इति, आश्रवस्तु मिथ्यादर्शनादिरूपः परिणामो जीवस्य, स चात्मानं पुद्गलांश्च मुक्त्वा कोऽन्यः ?, संवरोऽप्याश्रवनिरोधलक्षणो देशसर्वभेद आत्मनः परिणामो निवृत्तिरूपः, निर्जरा तु कर्मपरिशाटो जीवः कर्मणां यत्पार्थक्यमापादयति स्वशक्त्या, मोक्षोऽपि सकलकर्मविरहित आत्मैवेति, अन्यत्र पुनः पुण्यपापयोर्बन्धेऽन्तर्भावात् सप्तैव तत्त्वान्युक्तानि ॥ ९७४ ॥ अथ जीवषट्ककायषट्के प्राह—'इगे'त्यादि, इन्द्रियशब्दस्य प्रत्येकमभिसम्बन्धादेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियानिन्द्रियस्वरूपं जीवषट्कं, तत्र एकं—स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियाः—पृथिव्यम्बुतेजोवायुवनस्पतयः द्वे स्पर्शनरसनलक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः—शङ्खशुक्तिकाचन्दनककपर्दकजलूकाकृमिगण्डोलकपूतरकादयः त्रीणि स्पर्शनरसनघ्राणलक्षणानि इन्द्रियाणि येषां ते त्रीन्द्रियाः—यूकामत्कुणगर्दभकेन्द्रगोपककुन्थुमत्कोटपिपीलिकोपदेहिकाकार्पासास्थित्रपुसबीजकतुम्बरकादयः चत्वारि स्पर्शनरसनघ्राणचक्षुर्लक्षणानि इन्द्रियाणि येषां ते चतुरिन्द्रियाः—भ्रमरमक्षिकादंशमशकवृश्चिककीटपतङ्गादयः पञ्च स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि इन्द्रियाणि येषां ते पञ्चेन्द्रियाः—करिमकरमयूरमनुजादयः निखिलकर्मनिर्मु-

स्त्वेन शरीरविरहितत्वान्न विद्यते इन्द्रियं—स्पर्शनादि येषां ते अनिन्द्रियाः—सिद्धाः । तथा षट् कायाः पृथ्वीजलानलवायुवनस्पतित्रसभेदात्, पृथ्वीकायजलकायानलकायवायुकायवनस्पतिकायत्रसकायलक्षणाः षट् काया इत्यर्थः, तत्र पृथिवी—काठिन्यादिलक्षणा सैव कायः—शरीरं येषां ते पृथिवीकायाः जलं—पानीयं तदेव कायः—शरीरं येषां ते जलकायाः, अनलो—वह्निः स एव कायः—शरीरं येषां तेऽनलकायाः, वायुः—पवनः स एव कायः—शरीरं येषां ते वायुकायाः, वनस्पतिः—लतादिरूपः स एव कायः—शरीरं येषां ते वनस्पतिकायाः, त्रसनशीलास्त्रसाः—चलनधर्माणः कायाः—शरीराणि येषां ते त्रसकायाः ॥ ९७५ ॥ अथ लेश्यापट्कमस्तिकायपञ्चकं चाह—'छल्लेसे'त्यादि, लिश्यते—श्लिष्यते कर्मणा सह जीवो यकाभिस्ता लेश्याः—कृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसाहाय्याज्जीवस्याशुभाः शुभाश्च परिणामविशेषाः, उक्तं च—'कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥' कृष्णादिद्रव्याणि च केचिद् 'योगपरिणामो लेश्या' इतिवचनाद्योगान्तर्गतद्रव्याण्याहुः, अन्ये तु 'सकलकर्मप्रकृतिनिःस्यन्दरूपाणि' अपरे पुनः 'कार्मणशरीरवत्पृथगेव कर्माष्टकात्कार्मणवर्गणानिष्पन्नानि कृष्णादिद्रव्याणी'ति प्रतिपादयन्ति, तत्त्वं तु तीर्थकृतो विदन्तीति, एताश्च परिणामविशेषात्मिका लेश्याः षड् भवन्ति, तद्यथा—कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या 'सिय'त्ति सितलेश्या शुक्ललेश्येत्यर्थः, तत्र कृष्णद्रव्यात्मिका कृष्णद्रव्यजनिता वा लेश्या कृष्णलेश्येत्यर्थः, एवं नीललेश्येत्यादिपदेष्वपि भावनीयं, तासु चाद्यास्तिस्रोऽशुभाः अपरास्तु तिस्रः शुभाः, एतासां च विशेषतः स्वरूपनिरूपणार्थं जम्बूखादकषट्पुरुषीदृष्टान्तो ग्रामघातकदृष्टान्तश्चोच्यते, तथाहि—केचित् कस्मिंश्चित्कानने क्षुत्क्षामकुक्षयः षट् पुरुषाः सुपरिपक्वसरसफलभरावनमितसकलशाखं कल्पशाखिसदृक्षमेकं जम्बूवृक्षमद्राक्षुः, ततः सर्वैरपि प्रमुदितैः प्रोक्तं—अहोऽवसरप्राप्तमस्य दर्शनं अपनयामो बुभुक्षां भक्षयामः स्वेच्छयाऽतुच्छान्यस्य

स्वादुफलानीत्यैकमत्ये सति तन्मध्ये क्लिष्टपरिणामेनैकेनोक्तं–युक्तमिदं केवलमस्मिन्ननोकहे दुरारोहे समारोहतां जीवितव्यस्यापि संशयः, तस्मात्तीक्ष्णधारैः कुठारैरमुं मूलत एव कर्तयित्वा तिर्यक्प्रपात्य सुखेनैव सकलानि फलान्यभ्यवहरामः, एष एवंजातीयः कृष्णलेश्यापरिणामः, द्वितीयेन तु किञ्चित्सशूकेनोक्तं–किमस्माकमेतेनातिमहता पादपेन छिन्नेन ?, महीयसीमस्य शाखामेवैकां कर्तयित्वा फलान्यास्वादयामः, एवंप्रकारो नीललेश्यापरिणामः, तृतीयः पुनः प्राह–किमेतया महाशाखया छिन्नया ?, तदेकदेशभूताः प्रशाखा एव कर्तयामः, इत्येवंविधः कापोतलेश्यापरिणामः, चतुर्थश्चोवाच–किमाभिरपि वराकीभिः कर्तिताभिः ?, तत्पर्यन्तवर्तिनः कांश्चिद्गुच्छानेव छिंद्मः, एष तैजसलेश्यापरिणामः, पञ्चमः पुनः प्रोवाच–गुच्छैरपि किं नश्छिन्नैः ?, तन्मध्यात्सुपक्कानि भक्षणोचितानि कानिचित्फलान्येव गृह्णीम इत्यसौ पद्मलेश्यापरिणामः, षष्ठस्तु बभाषे–किं तैरपि त्रोटितैः ?, यावत्प्रमाणैः प्रयोजनमस्माकं तावत्प्रमाणानि फलान्यधस्तादपि पतितान्यस्य विटपिनः प्राप्यन्ते, तद्वयममीभिरेव प्राणवृत्तिं विदध्मः किमुन्मूलनादिनाऽस्य शाखिनः खेदेन ? इत्ययं शुक्ललेश्यापरिणाम इति ॥ ग्रामघातकदृष्टान्तस्तु कस्मिंश्चिद् ग्रामे धनधान्यादिलुब्धैः षड्भिस्तस्करस्वामिभिर्मिलित्वा धाटी प्रक्षिप्ता, तत्रैकेनोक्तं–यत्किमपि द्विपदचतुष्पदपुरुषस्त्रीबालवृद्धादिकं पश्यथ तत्सर्वं मारयत ?, इत्येवंजातीयः कृष्णलेश्यापरिणामः, द्वितीयस्तु नीललेश्यापरिणामवर्ती बभाषे–मानुषाण्येव मारयत किं तिर्यग्भिरिति, तृतीयः पुनः कापोतलेश्यायुक्तो जगाद–पुरुषानेव व्यापादयत ?, किं स्त्रीभिरिति, चतुर्थस्तु तैजसलेश्यापरिणामान्वितः प्राह–पुरुषेष्वपि सप्रहरणानेव निशुम्भत, किं निष्प्रहरणैरपि ?, पञ्चमः पुनः पद्मलेश्यापरिणामसम्पन्नः प्रोवाच–सायुधेष्वपि युध्यमानानेव विनाशयत किमन्यैर्निरपराधैरिति, षष्ठस्तु शुक्ललेश्यापरिणामपरिगतः प्रतिपादयति स्म–अहो महदसमञ्जसं यदेकं तावद् द्रव्यमपहरथ अपरं च वराकमेनं जनं विनाशयथ, तस्माद्यद्यपि द्रव्यमपहरथ तथापि

प्राणांक्षावर स्तिकाय क

पि लोकस्य रक्षतेति ॥ तथा कालविहीनं—काललक्षणद्रव्यरहितं पूर्वोक्तं द्रव्यषट्कमेवास्तिकायाः—धर्मास्तिकायाधर्मोऽस्तिकायपुद्गलास्तिकायजीवास्तिकायलक्षणाः प्रागुक्तस्वरूपाः पञ्चास्तिकाया इत्यर्थः, अथ यथा धर्मास्तिकाय इत्युक्तं तथा काय इति कस्मान्नोच्यते ? इति चेत्, नैवं, प्रदेशबहुत्व एवास्तिकायत्वोपपत्तेः, अत्र च तन्नास्ति, अतीतानागतसमया(ग्रन्था-२०००)नां विनष्टानुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्तमानसमयरूपस्यैकस्यैव कालप्रदेशस्य सद्भावादिति, यद्येवमावलिकामुहूर्तदिवसादिप्ररूपणाया अप्यभावप्रसङ्गः प्राप्नोति, आवलिकादीनामप्यसङ्ख्येयसमयाद्यात्मकत्वेन प्रदेशबहुत्व एवोपपत्तेः, सत्यमेतत्, केवलं स्थिरस्थूलकायत्रयवर्तिवस्त्वभ्युपगमपरव्यवहारनयमतमवलम्ब्याऽऽवलिकादिकालप्ररूपणा, निश्चयनयमतेन तु तदभाव एवेति न कालेऽस्तिकायता ॥ ९७६ ॥ पञ्च व्रतान्याह—'पाणिवहे'त्यादि, व्रतं—शास्त्रविहितो नियमः तस्य च प्रत्येकमभिसम्बन्धात्प्राणिवधव्रतमृषावादव्रतादत्तादानव्रतमैथुनव्रतपरिग्रहव्रतैरिह—जिनसिद्धान्ते पञ्च व्रतानि भणितानि। इतः पञ्च समितीः 'साहेमि'त्ति कथयामि, ॥९७७॥ ता एवाह—'इरिये'त्यादि पूर्वार्धं, ईर्यासमितिर्भाषासमितिरेषणासमितिर्ग्रहणसमितिः आदाननिक्षेपसमितिरित्यर्थः परिष्ठापनासमितिश्चेत्येताः पञ्च समितयः । व्रतसमितिस्वरूपं च षट्षष्टे सप्तषष्टे च द्वारे विस्तरेणोक्तमिति । अथ पञ्च गतीराह—'पंचे'त्यादि उत्तरार्धं, नारकगतितिर्यग्गतिनरगतिसुरगतिसिद्धगतिनामिकाः पञ्च गतयः, तत्र गम्यते—प्राप्यते स्वकर्मरज्जूसमाकृष्टैर्जन्तुभिरिति गतिः नारकाणां गतिर्नारकगतिः, तिरश्चां—एकेन्द्रियादीनां गतिस्तिर्यग्गतिः, नराणां—मनुष्याणां गतिर्नरगतिः, सुराणां—देवानां गतिः सुरगतिः, सिद्धगतिस्तु कर्मजन्या शास्त्रपरिभाषिता न भवति केवलं गम्यत इति गतिरिति व्युत्पत्तिसाम्यमात्रादिहोपात्तेति ॥ ९७८ ॥ अथ पञ्च ज्ञानानि चारित्राणि चाह—'नाणाइं' इत्यादि, मतिश्रुतावधिमनःपर्ययकेवललक्षणैर्भेदैः पञ्च ज्ञानानि, एतानि चाग्रे व्याख्यास्यन्ते, तथा चर्यते—गम्यते

प्राप्यते भवोदधेः परकूलमेभिरिति चरणानि—चारित्राणि, तानि च पञ्च सामायिकं पदैकदेशेऽपि पदसमुदायोपचारात् छेदोपस्थापनिकं परिहारविशुद्धिकं सूक्ष्मसम्परायं यथाख्यातं चेति, तत्र समो—रागद्वेषरहितत्वाद् अयो—गमनं समायः, एष चान्यासामपि साधुक्रियाणामुपलक्षणं, सर्वासामपि साधुक्रियाणां रागद्वेषरहितत्वात्, समायेन निर्वृत्तं समाये वा भवं सामायिकं, यद्वा समानां—ज्ञानदर्शनचारित्राणामायो—लाभः समायः समाय एव सामायिकं, विनयादेराकृतिगणतया स्वार्थे इकण्, तच्च सर्वसावद्यविरतिरूपं, यद्यपि च सर्वमपि चारित्रमविशेषतः सामायिकं तथापि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, प्रथमं पुनरविशेषणात्सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्र स्वल्पकालभावि इत्वरं, इदं च भरतैरावतेषु प्रथमपश्चिमतीर्थकरतीर्थेष्वनारोपितमहाव्रतस्य शैक्षस्य विज्ञेयं, अत्र जन्मनि यावज्जीवितकथाऽस्यात्मनस्तावत्कालभावि यावत्कथं तदेव यावत्कथिकं आभववर्तीत्यर्थः, एतच्च भरतैरावतभाविमध्यमद्वाविंशतितीर्थकरतीर्थेषु विदेहतीर्थकरतीर्थेषु च मुनीनामवसेयं, तेषामुपस्थापनाया अभावात्, ननु चेत्वरमपि सामायिकं 'करोमि भदंत! सामायिकं यावज्जीवं' इत्येवं व्रतग्रहणकाले यावदायुरागृहीतं तत उपस्थापनाकाले तत्परित्यजतः कथं न प्रतिज्ञाभङ्गः?, उच्यते, ननु प्रागेवोक्तं सर्वमेवेदं चारित्रमविशेषतः सामायिकं, सर्वत्रापि सावद्ययोगविरतिसद्भावात्, केवलं छेदादिविशुद्धिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं वा परमविशुद्धिविशेषरूपसूक्ष्मसम्परायादिचारित्रावाप्तौ न भङ्गमङ्गीकरोति तथा इत्वरमपि सामायिकं विशुद्धिरूपच्छेदोपस्थापनावाप्तौ, यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते न तु तस्यैव विशुद्धिविशेषावाप्ताविति, तथा छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तच्छेदोपस्थापनं तदेव छेदोपस्थापनिकं तदेव वा विद्यते यत्र तच्छेदोपस्थापनिकं, तच्च द्विधा—सातिचारं निरति-

चारं च, तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षस्यारोप्यते, तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्तौ, सातिचारं यन्मूलगुणघातिनः पुनर्व्रतारोपणं, तथा परिहरणं परिहारः—तपोविशेषस्तेन विशुद्धिः—कर्मनिर्जरारूपा यस्मिन् चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानका—विवक्षितचारित्रासेवकाः निर्विष्टकायिका—आसेवितविवक्षितचारित्रकाः तदव्यतिरेकाच्चारित्रमप्येवमुच्यते, इह नवको गणश्चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः एकः कल्पस्थितो वाचनाचार्यः, एतत्स्वरूपं च सविस्तरमेकोनसप्ततिद्वारे प्रत्यपादि, तथा सम्परैति—पर्यटति संसारमनेनेति सम्परायः—कषायोदयः सूक्ष्मो—लोभांशावशेषः सम्परायो यत्र तत् सूक्ष्मसम्परायं, तच्च द्विधा—विशुद्ध्यमानकं संक्लिश्यमानकं च, तत्र विशुद्ध्यमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः, संक्लिश्यमानं तूपशमश्रेणितः प्रच्यवमानस्य, तथा अथशब्दो—याथातथ्यार्थे आङ् अभिविधौ, यथातथ्येन अभिविधिना वा यत् ख्यातं—कथितं अकषायचारित्रमिति तत् अथाख्यातं, यथाख्यातमिति द्वितीयं नाम, तस्यायमन्वर्थः—यथा सर्वस्मिन् जीवलोके ख्यातं—प्रसिद्धमकषायं भवति चारित्रमिति तथैव यत्तत् यथाख्यातं, इदं च द्विधा—छाद्मस्थिकं कैवलिकं च, तत्र छाद्मस्थिकमुपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके वा, कैवलिकं सयोगिकेवलिभवमयोगिकेवलिभवं चेति १५२ ॥९७९॥

इदानीं 'सड्ढपडिमाओ'त्ति त्रिपञ्चाशदधिकशततमं द्वारमाह—

**दंसण १ वय २ सामाइय ३ पोसह ४ पडिमा ५ अबंभ ६ सचित्ते ७। आरंभ ८ पेस ९ उद्दिट्ठ १० वज्जए समणभूए ११ य ॥९८०॥ जस्संखा जा पडिमा तस्संखा तीऍ हुंति मासावि। कीरंतीसुवि कज्जाउ तासु पुव्वुत्तकिरिया उ ॥९८१॥ पसमाइगुणविसिट्ठं कुग्गहसंकाइसल्लपरिहीणं।**

सम्मदंसणमणहं दंसणपडिमा हवइ पढमा १ ॥ ९८२ ॥ बीयाणुवयधारी २ सामाइकडो य
होइ तइयाए ३ । होइ चउत्थी चउद्दसीअट्ठमिमाईसु दिवसेसु ॥ ९८३ ॥ पोसह चउविहंपि य
पडिपुण्णं सम्म सो उ अणुपाले । बंधाई अइयारे पयत्तओ वज्जईमासु ॥ ९८४ ॥ सम्ममणुवयगु-
णवयसिक्खावयवं थिरो य नाणी य । अट्ठमीचउद्दसीसुं पडिमं ठाएगराईयं ॥ ९८५ ॥ असि-
णाण वियडभोई मउलियडो दिवसबंभयारी य । रत्तिं परिमाणकडो पडिमावज्जेसु दिवसेसुं
॥ ९८६ ॥ झायइ पडिमाएँ ठिओ तिलोयपुज्जे जिणे जियकसाए । नियदोसपच्चणीयं अन्नं वा
पंच जा मासा ॥ ९८७ ॥ सिंगारकहविभूसुक्करिसं इत्थीकहं च वज्जिंतो । वज्जइ अबंभमेगंतओ
य छट्ठाइ छम्मासे ॥ ९८८ ॥ सत्तमि सत्त उ मासे नवि आहारइ सचित्तमाहारं । जं जं हेट्ठि-
ल्लाणं तं तं चरिमाण सव्वंपि ॥ ९८९ ॥ आरंभसयंकरणं अट्ठमिया अट्ठ मास वज्जेइ । नवमा नव
मासे पुण पेसारंभेऽवि वज्जेइ ॥ ९९० ॥ दसमा दस मासे पुण उद्दिट्ठकयंपि भत्त नवि भुंजे ।
सो होइ उ छुरमुंडो सिहलिं वा धारए कोई ॥ ९९१ ॥ जं निहियमत्थजायं पुच्छंत सुयाण न-
वरि सो तत्थ । जइ जाणइ तो साहइ अह नवि तो बेइ नवि याणे ॥ ९९२ ॥ खुरमुंडो लोएण
व रयहरणं पडिग्गहं च गिण्हित्ता । समणो हूओ विहरइ मासा एक्कारसुक्कोसं ॥ ९९३ ॥ मम-
कारेऽवोच्छिन्ने वच्चइ सन्नायपल्लिं दट्ठुं जे । तत्थवि साहुव्व जहा गिण्हइ फासुं तु आहारं ॥ ९९४ ॥

दर्शनं च—सम्यक्त्वं व्रतानि च—अणुव्रतादीनि सामायिकं च—सावद्यानवद्ययोगपरिवर्जनासेवनस्वरूपं पौषधं च—अष्टमीचतुर्दश्यादि-
पर्वदिनानुष्ठेयोऽनुष्ठानविशेषः प्रतिमा च—कायोत्सर्गः अब्रह्म च—अब्रह्मचर्यं सचित्तं च—सचेतनद्रव्यं इति समाहारद्वन्द्वः तत एतस्मिन्
विषये प्रतिमेति प्रस्तावादवसेयं, अत्र च दर्शनादिषु पञ्चसु विधिद्वारेण प्रतिमाभिग्रहः अब्रह्मसचित्तयोस्तु प्रतिषेधमुखेनेति, तथा आर-
म्भश्च—स्वयं कृष्यादिकरणं प्रैष्यश्च—प्रेषणं परेषां पापकर्मसु व्यापारणं उद्दिष्टं च—तमेव श्रावकमुद्दिश्य सचेतनं सदचेतनीकृतं पक्वं वा
यो वर्जयति—परिहरति स आरम्भप्रैष्योद्दिष्टवर्जकः, प्रतिमेति प्रकृतमेव, इह च प्रतिमानां प्रक्रान्तत्वेऽपि प्रतिमाप्रतिमावतोरभेदोपचारा-
त्प्रतिमावतो निर्देशः कृतः, एवमुत्तरत्रापि, तथा श्रमणः—साधुः स इव यः स श्रमणभूतः, भूतशब्दस्योपमानार्थत्वात्, चः समुच्चये,
आसां च दर्शनप्रतिमा व्रतप्रतिमेत्यादिरूपोऽभिलापः कार्यः, एता एकादश श्राद्धानां—उपासकानां प्रतिमाः—प्रतिज्ञा अभिग्रहाः श्राद्धप्रतिमा
इति ॥ ९८० ॥ अथैतासामेव प्रतिमाणां प्रत्येकं स्वरूपं प्रतिपिपादयिषुः प्रथमं तावत् कालमानं सामान्यस्वरूपं चाह—'जस्संखे'त्यादि,
यत्सङ्ख्या—यावत्सङ्ख्यामाना प्रथमद्वितीयादिकेत्यर्थः प्रतिमा तस्यां मासा अपि तत्सङ्ख्याः—तावत्प्रमाणा भवन्ति, अयमर्थः—प्रथमायां
प्रतिमायामेको मासः कालमानं द्वितीयायां द्वौ मासौ तृतीयायां त्रयो मासा यावदेकादश्यां प्रतिमायामेकादश मासा इति, एतच्च काल-
मानं यद्यपि दशाश्रुतस्कन्धादिषु साक्षान्नोपलभ्यते तथाऽप्युपासकदशासु प्रतिमाकारिणामानन्दादिश्रमणोपासकानां सार्धवर्षप-
ञ्चकलक्षणं प्रतिमैकादशप्रमाणं प्रतिपादितमस्ति, तच्च पूर्वोक्तयैव एकादिकयैकोत्तरया वृद्ध्या सङ्गच्छत इति, तथा उत्तरोत्तरास्वपि तासु
प्रतिमासु क्रियमाणासु पूर्वपूर्वप्रतिमाप्रतिपादिताः सर्वा अपि क्रिया—अनुष्ठानविशेषरूपाः कर्तव्या एव, तुशब्द एवकारार्थः, इदमत्र
तात्पर्यम्—द्वितीयायां प्रतिमायां प्रथमप्रतिमोक्तमनुष्ठानं निरवशेषमपि कर्तव्यं, तृतीयायां तु प्रतिमायां प्रथमद्वितीयप्रतिमाद्वयोक्तमप्यनु-

ष्ठानं विधेयं, एवं यावदेकादश्यां प्रतिमायां पूर्वप्रतिमादशकोक्तं सर्वमप्यनुष्ठानं कार्यमिति ॥ ९८१ ॥ अथ दर्शनप्रतिमास्वरूपनिरूपणा-
याह—'पसमे'त्यादि, सम्यग्दर्शनं—सम्यक्त्वं प्रथमा दर्शनप्रतिमा भवतीति सम्बन्धः, कथम्भूतं सम्यग्दर्शनमित्याह—प्रशमादिगुणवि-
शिष्टं—प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलक्षणैः पञ्चभिर्गुणैर्विशिष्टं—अन्वितं, तथा कुग्रहश्च—तत्त्वं प्रति शास्त्रबाधितत्वेन कुत्सितोऽभिनि-
वेशः शङ्कादयश्च—शङ्काकाङ्क्षाविचिकित्सामिथ्यादृष्टिप्रशंसातत्संस्तवरूपाः पञ्च सम्यक्त्वातीचाराः कुग्रहशङ्कादयस्त एव शल्यते—अने-
कार्थत्वाद्बाध्यते जन्तुरेभिरिति शल्यानि तैः परिहीनं—रहितं, अत एव अनघं—निर्दोषं, अयमत्र भावार्थः—सम्यग्दर्शनस्य कुग्रहशङ्कादि-
शल्यरहितस्याणुव्रतादिगुणविकलस्य योऽभ्युपगमः सा दर्शनप्रतिमेति, सम्यग्दर्शनप्रतिपत्तिश्च तस्य पूर्वमप्यासीत् केवलमिह शङ्कादिदो-
षराजाभियोगाद्याकारषट्कवर्जितत्वेन यथावत्सम्यग्दर्शनाचारविशेषपरिपालनाभ्युपगमेन च प्रतिमात्वं सम्भाव्यते, कथमन्यथा उपास-
कदशासु एकमासं प्रथमायाः प्रतिमायाः पालनेन द्वौ मासौ द्वितीयायाः प्रतिमायाः पालनेन एवं यावदेकादश मासानेकादश्याः पाल-
नेन पञ्च सार्धानि वर्षाण्यर्थतः प्रतिपादितानीति, न चायमर्थो दशाश्रुतस्कन्धादावुपलभ्यते, श्रद्धामात्ररूपायास्तत्र तस्याः प्रतिपादनात्,
एवं दर्शन(व्रत)प्रतिमादिष्वपि यथायोगं भावना कार्या ॥९८२॥ अथ गाथाद्वयेन व्रतसामायिकपौषधप्रतिमात्रयमाह—'बीये'त्यादि, अणु-
व्रतानि—स्थूलप्राणातिपातविरमणादीनि उपलक्षणत्वाद् गुणव्रतानि शिक्षाव्रतानि च वधबन्धाद्यतिचाररहितानि निरपवादानि च धारयतः
सम्यक्परिपालयतो द्वितीया व्रतप्रतिमा भवति, सूत्रे च प्रतिमाप्रतिमावतोरभेदोपचारादित्थं निर्देशः, तथा तृतीयायां—सामायिकप्रतिमायां
सामायिकं—सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं कृतं—विहितं देशतो येन स सामायिककृतः, आहिताग्न्यादिदर्शनात् क्तान्तस्यो-
त्तरपदत्वं, इदमुक्तं भवति—अप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं सामायिककरणं तृतीया प्रतिमेति, तथा चतुर्थी

पोषधप्रतिमा यस्यां चतुर्दश्यष्टम्यादिषु दिवसेषु—चतुर्दश्यष्टम्यमावास्यापौर्णमासीषु पर्वतिथिषु चतुर्विधमप्याहारशरीरसत्काराब्रह्मचर्यव्यापा-
रपरिवर्जनरूपं पौषधं परिपूर्णं, न पुनरन्यतरेणापि प्रकारेण परिहीनं सम्यग् आगमोक्तविधिना स—प्रतिमाप्रतिपत्ता तुशब्दस्यावधारणार्थ-
त्वादनुपालयत्येव—आसेवत एव, एतासु चतसृष्वपि व्रतादिषु प्रतिमासु वन्धादीन्—वन्धवधच्छविच्छेदप्रभृतीन् षष्टिसंख्यान् अतिचारान्
द्वादशव्रतविषयान् प्रयत्नतो—महता यत्नेन वर्जयति—परिहरतीति ॥ ९८३ ॥ ९८४ ॥ अथ प्रतिमाप्रतिमास्वरूपमाह—'सम्मे'त्यादि,
'सम्म'त्ति सम्यक्त्वं मकारोऽलाक्षणिकः अणुव्रतगुणव्रतशिक्षाव्रतानि च यस्य विद्यन्ते स तद्वान्, पूर्वोक्तप्रतिमाचतुष्टयान्वित इत्यर्थः,
स्थिरः—अविचलसत्त्वः इतरो हि तद्विराधको भवति, यतोऽस्यां प्रतिमायां निशि चतुष्पथादौ कायोत्सर्गः क्रियते तत्र चोपसर्गाः प्रभूताः
सम्भवन्तीति, ज्ञानी च—प्रतिमाकल्पादिपरिज्ञानप्रवणः, अजानानो हि सर्वत्राप्ययोग्यः किं पुनरेतत्प्रतिमाप्रतिपत्ताविति, अष्टमीचतुर्द-
श्योरुपलक्षणत्वादष्टमीचतुर्दश्यमावास्यापौर्णमासीरूपेषु पौषधदिनेष्वपि द्रष्टव्यं 'प्रतिमां' कायोत्सर्गं 'ठाइ'त्ति तिष्ठति धातूनामनेकार्थ-
त्वात्करोतीत्यर्थः, किम्प्रमाणामित्याह—एका रात्रिः परिमाणमस्या इत्येकरात्रिकी—सार्वरात्रिकी तां यस्तस्य प्रतिमा भवतीति शेषः ॥९८५॥
शेषदिनेषु यादृशोऽसौ भवति तद्दर्शयितुमाह—'असिणाणे'त्यादि, अस्नानः—स्नानपरिवर्जकः विकटे—प्रकटे प्रकाशे दिवा न रात्रावि-
त्यर्थः दिवापि वा प्रकाशदेशे भुङ्क्ते—अशनाद्यभ्यवहरतीति विकटभोजी, पूर्वं किल रात्रिभोजनेऽनियम आसीत् तदर्थमिदमुक्तं, 'मउलि-
यडो'त्ति अवद्धपरिधानकच्छ इत्यर्थः, तथा दिवसे—दिवा ब्रह्म चरतीत्येवंशीलो दिवसब्रह्मचारी, 'रत्तिं'ति रात्रौ किमत आह—परिमाणं—
स्त्रीणां तद्भोगानां वा प्रमाणं कृतं येन स परिमाणकृतः, कदेत्याह—प्रतिमावर्जेषु—कायोत्सर्गरहितेष्वपर्वस्त्वित्यर्थः दिवसेषु—दिनेष्विति
॥ ९८६ ॥ अथ कायोत्सर्गस्थितो यच्चिन्तयति तदाह—'झायई'त्यादि, ध्यायति—चिन्तयति प्रतिमायां कायोत्सर्गस्थितः—अवस्थितस्त्रि-

लोकपूज्यान्—त्रिभुवनाभ्यर्चनीयान् 'जिनान्—तीर्थकृतो जितकषायान्—निरस्तसमस्तद्वेषादिदोषान् अन्यद्वा जिनापेक्षया निजदोषप्रत्यनीकं
—स्वकीयकामक्रोधप्रमुखदूषणप्रतिपक्षभूतं कामनिन्दाक्षान्तिप्रभृतिकं ध्यायति, कियत्प्रमाणेयं पञ्चमी प्रतिमेत्याह—पञ्च मासान् यावदिति
॥ ९८७ ॥ अथ षष्ठीं प्रतिमामाह—'सिंगारे'त्यादि, शृङ्गारकथा—कामकथा तथा विभूषायाः—स्नानविलेपनधूपप्रभृतिकाया उत्कर्षः—
प्रकर्षः ततः समाहारद्वन्द्वः तद्वर्जयन्—परिहरन्, उत्कर्षग्रहणाच्छरीरमात्रानुगां विभूषां विदधात्यपीति, तथा स्त्रिया—योषिता सह रहसि
कथां—प्रणयवार्तां वर्जयन्, किमित्याह—वर्जयति अब्रह्म—मैथुनमेकं 'तओ य'त्ति तकः—असौ प्रतिमाप्रतिपत्ता षष्ठ्यां—अब्रह्मवर्जनप्रति-
मायां षण्मासान् यावत्, पूर्वस्यां हि प्रतिमायां दिवस एव मैथुनं प्रतिषिद्धं, रात्रौ पुनरप्रतिषिद्धमासीत्, अस्यां तु दिवापि रजन्यामपि
च सर्वथापि मैथुनप्रतिषेधः, अत एवात्र चित्तविप्लुतिविधायिनां कामकथादीनामपि प्रतिषेधः कृत इति ॥ ९८८ ॥ अथ सप्तमीं प्रति-
मामाह—'सत्तमी'त्यादि, सप्तम्यां—सचित्ताहारवर्जनप्रतिमायां सप्त मासान् यावत् सचित्तं—सचेतनमाहारं—अशनपानखादिमस्वादिम-
स्वरूपं नैवाहारयति—अभ्यवहरति, तथा यद्यदधस्तनीनां—प्राक्तनीनां प्रतिमानामनुष्ठानं तत्तत्सर्वमपि—निरवशेषमुपरितनीनां—अग्रेतनप्रति-
मानामवसेयं, एतच्च प्रागुक्तमपि विस्मरणशीलविनेयजनानुग्रहाय पुनरुपन्यस्तम्, एवमन्यत्रापि ॥९८९॥ अथाष्टमीनवम्यौ प्रतिमे प्रतिपा-
दयितुमाह—'आरंभे'त्यादि, अष्टमी—स्वयमारम्भवर्जनप्रतिमा भवति यस्यामष्टौ मासान् यावदारम्भस्य—पृथिव्याद्युपमर्दनलक्षणस्य स्वयं
—आत्मना करणं—विधानं वर्जयति—परिहरति, स्वयमिति वचनाच्चैतदापन्नं—वृत्तिनिमित्तमारम्भेषु तथाविधतीव्रपरिणामरहितः परैः कर्म-
करादिभिः सावद्यमपि व्यापारं कारयतीति, ननु स्वयमप्रवर्तमानस्याप्यारम्भेषु प्रेष्यान् व्यापारयतः प्राणिहिंसा तदवस्थैव, सत्यं, किन्तु
या सर्वथैव स्वयमारम्भाणां करणतः परैश्च कारणत उभयजन्या हिंसा सा स्वयमकरणतस्तावत्परिहृतैव, यतः स्वल्पोऽपि प्रारम्भः परि-

ह्रियमाणः प्रोज्जृम्भमाणमहाव्याधेः स्तोकतरस्तोकतमक्षय इव हित एव भवति, एषा पुनर्नवमी—प्रेष्यारम्भवर्जनप्रतिमा भवति, यस्यां नव मासान् यावत् पुत्रभ्रातृप्रभृतिषु न्यस्तसमस्तकुटुम्बादिकार्यभारतया धनधान्यादिपरिग्रहेष्वल्पाभिष्वङ्गतया च प्रेष्यैरपि—कर्मकरादिभिरपि आस्तां स्वयं आरम्भान्—सपापव्यापारान् महतः कृष्यादीनिति भावः, आसनदापनादिव्यापाराणां पुनरतिलघूनामनिषेध एव, तथाविधकर्मबन्धहेतुत्वाभावेनारम्भत्वानुपपत्तेः ॥ ९९० ॥ अथ दशमीं प्रतिमामाह—'दसमे'त्यादि, दशमी पुनरुद्दिष्टभक्तवर्जनप्रतिमा दश मासान् यावद्भवति, यस्यामुद्दिष्टं—उद्देशस्तेन कृतं—विहितमुद्दिष्टकृतं, तमेव श्रावकमुद्दिश्य संस्कृतमित्यर्थः, एवंस्वरूपं भक्तमपि—ओदनादिकं नैव भुञ्जीत आस्तां तावदितरसावद्यव्यापारकरणमित्यपिशब्दार्थः, 'सो होइ'त्ति स पुनर्दशमप्रतिमाप्रतिपत्ता कश्चित् क्षुरमुण्डः—क्षुरमुण्डितमस्तको भवति 'सिहिलिं'ति शिखां वा शिरसि कोऽपि धारयतीति ॥ ९९१ ॥ तथा—'ज'मित्यादि, नवरं—केवलं स श्रावकस्तत्र—तस्यां दशमप्रतिमायां स्थितो यन्निहितं—भूम्यादौ निक्षिप्तमर्थजातं—द्रव्यं सुवर्णादिकं तत्पृच्छतां सुतानां—पुत्राणां उपलक्षणत्वाद्भ्रात्रादीनां च यदि जानाति ततः कथयति, अकथने वृत्तिच्छेदप्राप्तेः, अथ नैव जानाति ततो ब्रूते—नैवाहं किमपि जानामि—स्मरामीति, एतावन्मुक्त्वा नान्यत्किमपि तस्य गृहकृत्यं कर्तुं कल्पत इति तात्पर्यम् ॥ ९९२ ॥ अथैकादशीं प्रतिमामाह—'खुरे'त्यादि, क्षुरेण मुण्डो—मुण्डितः क्षुरमुण्डो लोचेन वा—हस्तलुञ्चनेन मुण्डः सन् रजोहरणं पतद्ग्रहं च उपलक्षणमेतत् सर्वमपि साधूपकरणं गृहीत्वा 'समणहूओ'त्ति श्रमणो—निर्ग्रन्थस्तद्वद् यस्तदनुष्ठानकरणात्स श्रमणभूतः साधुकल्प इत्यर्थः विहरेत्—गृहान्निर्गत्य निखिलसाधुसामाचारीसमाचरणचतुरः समितिगुप्त्यादिकं सम्यगनुपालयन् भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां दत्तेति भाषमाणः, कस्त्वमिति कस्मिंश्चित्पृच्छति प्रतिमाप्रतिपन्नः श्रमणोपासकोऽहमिति ब्रुवाणो ग्रामनगरादिष्वनगार इव मासकल्पा-

दिना विचरेदेकादश मासान् यावदिति । एतच्चोत्कृष्टतः कालमानमुक्तं, जघन्यतः पुनरेकादशापि प्रतिमाः प्रत्येकमन्तर्मुहूर्तादिमाना एव, तत्र मरणे वा प्रव्रजितत्वे वा सम्भवति, नान्यथेति ॥ ९९३ ॥ तथा—'ममे'त्यादि, ममेत्यस्य करणं ममकारस्तस्मिन्नव्यवच्छिन्ने—अनपगते सति, अनेन स्वजनदर्शनार्थित्वकारणमुक्तं, संज्ञाताः—स्वजनास्तेषां पल्ली—सन्निवेशस्तां संज्ञातपल्लीं व्रजति—गच्छति द्रष्टुं—विलोकयितुं संज्ञातानिति गम्यते, जे इति पादपूरणे, तत्रापि—संज्ञातपल्ल्यामपि, आस्तामन्यत्र, साधुरिव—संयत इव वर्तेते, न पुनः स्वजनोपरोधेन गृहचिन्तादिकं कुर्यात्, यथा च साधुः प्रासुकमेषणीयं च गृह्णाति तथा सोऽपि श्रमणभूतप्रतिमाप्रतिपन्नः प्रासुकमेव—प्रगतासुकमेवाचेतनमेवोपलक्षणत्वादस्यैषणीयं चाहारं—अशनादिकं गृह्णातीति, ज्ञातयो हि स्नेहादनेषणीयं भक्तादि कुर्वन्ति आग्रहेण च तद् ग्राहयितुमिच्छंति अनुवर्तनीयाश्च ते प्रायो भवन्तीति तद्ग्रहणं सम्भाव्यते तथापि तदसौ न गृह्णातीति भावः ॥ इह चोत्तरासु सप्तसु प्रतिमास्वावश्यकचूर्ण्यां प्रकारान्तरमपि दृश्यते, तथाहि—"राईभत्तपरिन्नाएत्ति पञ्चमी, सचित्ताहारपरिन्नाएत्ति षष्ठी, दिया बंभचारी, राओ परिमाणकडेत्ति सप्तमी, दियावि राओवि बंभयारी असिणाणए वोसट्ठकेसमंसुरोमनहेत्ति अष्टमी, सारंभपरिन्नाएत्ति नवमी, पेसारंभपरिन्नाएत्ति दशमी, उद्दिट्ठभत्तविवज्जए समणभूएत्ति एकादशी"त्ति १५३ ॥ ९९४ ॥ इदानीं 'धन्नाणमबीयत्तं'ति चतुष्पञ्चाशदधिकशततमं द्वारमाह—

जव १ जवजव २ गोहुम ३ सालि ४ वीहि ५ धन्नाण कोट्ठयाईसुं। खिविऊणं पिहियाणं लित्ताणं
मुद्दियाणं च ॥ ९९५ ॥ उक्कोसेणं ठिइ होइ तिन्नि वरिसाणि तयणु एएसिं । विद्धंसिज्जइ जोणी
तत्तो जायइ अबीयत्तं ॥ ९९६ ॥ तिल १ मुग्ग २ मसुर ३ कलाय ४ मास ५ चवलय ६ कुलत्थ—

७ तुवरीणं ८। तह कसिणचणय ९ वल्लाण १० कोट्ठयाईसु खिविऊणं ॥ ९९७ ॥ ओलित्ताणं पिहियाण लंछियाणं च मुद्दियाणं च । उक्किट्ठठिई वरिसाण पंचगं तो अयीयत्तं ॥ ९९८ ॥ अयसी १ लट्टा २ कंगू ३ कोडूसग ४ सण ५ वरट्ट ६ सिद्धत्था ७। कोद्दव ८ रालग ९ मूलग बीयाणं १० कोट्ठईयासु ॥ ९९९ ॥ निक्खित्ताणं एयाणुक्कोसठिईएँ सत्त वरिसाइं । होइ जहन्नेण पुणो अंतमुहुत्तं समग्गाणं ॥ १००० ॥

'यवे'त्यादि, यवा गोधूमाश्च प्रतीताः यवयवा—यवविशेषाः शालयः—कलमादिविशेषाः व्रीहयः—सामान्यतः, एतेषां धान्यानां कोष्ठकादिषु—कुशूलपल्यप्रभृतिषु क्षिप्त्वा—प्रक्षिप्य पिहितानां—तथाविधपिधानकेन स्थगितानां लिप्तानां—द्वारदेशे पिधानेन सह गोमयादिना सर्वतोऽवलिप्तानां मुद्रितानां च—मृत्तिकादिमुद्रावतामुत्कर्षतस्त्रीणि वर्षाणि यावत् स्थितिः—अविनष्टयोनिकत्वेन अवस्थानं भवतीति, तदनु—ततः परमेतेषां—यवादीनां पश्चानां धान्यानां योनिः—अङ्कुरोत्पत्तिहेतुर्विध्वस्यते—क्षीयते, ततो—योनिविध्वंसे सति जायतेऽबीजत्वं—तद्बीजमबीजं भवति, उप्तमपि नाङ्कुरमुत्पादयतीति भावः ॥ ९९५ ॥ ९९६ ॥ तथा—'तिले'त्यादि, तिलमुद्गमाषचवलकाः प्रतीताः मसूरो—वृत्ताकारो धान्यविशेषः (ग्रन्था० ७००) चनकिका इत्यन्ये कलायः—त्रिपुटाख्यो धान्यविशेषः कुलत्थाः—चवलकाकाराश्चिपिटिका भवन्ति तुवर्यः—आढक्यः, वृत्तचणकाः—शिखारहिता वृत्ताकाराश्चणकविशेषाः वल्ला—निष्पावाः, एतेषां दशानां धान्यानां कोष्ठकादिषु क्षिप्त्वा पिहितानां ततोऽवलिप्तानां ततो लाञ्छितानां—रेखादिभिः कृतलाञ्छनानां मुद्रितानां चोत्कृष्टा स्थितिर्वर्षपञ्चकं यावद्भवति, ततोऽबीजत्वं जायते, छन्दोऽनुरोधाच्च पिहितावलिप्तयोर्व्यतिक्रमनिर्देशः ॥ ९९७ ॥ ९९८ ॥ 'अयसी'त्यादि, अतसी—क्षुमा लट्टा—

कुसुंभं कङ्गुः—पीततण्डुलाः 'कोडूसग'त्ति कोरदूषकाः—कोद्रवविशेषाः शणं—त्वक्प्रधानो धान्यविशेषः, 'वरठ'त्ति धान्यविशेषः, स वरठीति सपादलक्षादिषु प्रसिद्धः सिद्धार्थाः—सर्षपाः कोद्रवाः प्रतीता एव रालकः—कङ्गुविशेषः मूलकं—शाकविशेषस्तस्य बीजानि मूलकबीजानि एतेषां दशानामपि धान्यानां कोष्ठकादिषु निक्षिप्तानां उपलक्षणमेतत् पिहितानामवलिप्तानां लाञ्छितानां मुद्रितानां चोत्कृष्टायां स्थितौ सप्त वर्षाणि भवन्ति, जघन्येन पुनः समग्राणां—सर्वेषामपि 'पूर्वोक्तानां धान्यानामन्तर्मुहूर्तं स्थितिर्भवति, अन्तर्मुहूर्तोच्च परतः स्वायुःक्षयादेवाचित्तता जायते, सा च परमार्थतोऽतिशयज्ञानेनैव सम्यक्परिज्ञायते न छाद्मस्थिकज्ञानेनेति न व्यवहारपथमवतरति, अत एव च पिपासापीडितानामपि साधूनां स्वभावतः स्वायुःक्षयेणाचित्तीभूतमपि तडागोदकं पानाय वर्धमानस्वामी भगवान् नानुज्ञातवान्, इत्थंभूतस्याचित्तीभवनस्य छद्मस्थानां दुर्लक्षत्वेन मा भूत्सर्वत्रापि तडागोदके सचित्तेऽपि पाश्चात्यसाधूनां प्रवृत्तिप्रसङ्ग इति कृत्वा १५४ ॥ ९९९ ॥ १००० ॥ इदानीं 'खेत्ताइयाणऽचित्तं'ति पञ्चपञ्चाशदधिकशततमं द्वारमाह—

**जोयणसयं तु गंता अणहारेणं तु भंडसंकंती । वायागणिधूमेहि य विद्धत्थं होइ लोणाई॥१००१॥**
**हरियालो मणसिल पिप्पली उ खज्जूर मुद्दिया अभया। आइन्नमणाइन्ना तेऽवि हु एमेव नायव्वा**
**॥ २ ॥ आरुहणे ओरुहणे निसियण गोणाइणं च गाउम्हा । भोम्माहारच्छेओ उवक्कमेणं तु परि-**
**णामो ॥ ३ ॥**

एकं योजनशतं गत्वा—अतिक्रम्य लवणादि विध्वस्तम्—अचित्तं भवति, केनेत्याह—अनाहारेण—स्वदेशजसाधारणाहाराभावेन, अयमर्थः—विवक्षितक्षेत्रादन्यत्र क्षेत्रे लवणादिकं यदा नीयते तदा तत्प्रतिदिनं विध्वस्यमानं २ तावद्गच्छति यावद्योजनशतं, योजनशतादूर्ध्वं पुन-

भिन्नाहारत्वेन शीतादिसम्पर्कतश्चावश्यमचित्तीभवति, केचित्तु योजनशतस्थाने गव्यूतशतं पठन्ति, यदुक्तं निशीथचूर्णौ—'केई पठंति गाउयसयगाहा' इति, तथा 'भंडसंकंती'ति प्राकृतत्वेन विभक्तिव्यत्ययात् भाण्डसङ्क्रान्त्या—पूर्वभाजनादपरभाजनप्रक्षेपणेन पूर्वभाण्डशालाया वाऽन्यभाण्डशालासंचारणेन वाताग्निधूमैश्च योजनशतमगतमपि स्वस्थानेऽन्तरे वा वर्तमानं लवणादिकमचित्तं भवतीति। इत्थं च क्षेत्रादिक्रमेणाचित्तीभवनं पृथिवीकायिकानां वनस्पतिपर्यन्तानां सर्वेषामपि प्रतिपत्तव्यम् ॥ १००१ ॥ अत एवाह—'हरियाले'त्यादि, हरितालादयः प्रतीता एव, नवरं मुद्रिका—द्राक्षा अभया—हरितकी, एतेऽप्येवमेव ज्ञातव्याः, योजनशतात्परतः पूर्वोक्तैरेव हेतुभिरचित्तीभवन्तीति भावः, 'आइन्नमणाइन्न'त्ति योजनशतादागता अपि केचिदाचीर्णाः केचित्पुनरनाचीर्णाः, तत्र पिप्पलीहरितक्यादय आचीर्णा अतो गृह्यन्ते खर्जूरद्राक्षादयः पुनरनाचीर्णास्ततोऽचित्ता अपि न गृह्यन्ते इति ॥ २ ॥ अथ लवणादीनामेवाचित्तताकारणाभिव्यञ्जनायाह—'आरुहणे' इत्यादि, तेषां लवणादीनामारोहणे—शकटगवादिपृष्ठादिष्वधिरोपणे सति तथा अवरोहणे—शकटादिभ्य एवावतारणे तथा निपीदन्तीति नन्द्यादेराकृतिगणत्वाद्युप्रत्यये निपदना—लवणाद्युपरि निविष्टपुरुषाः तेषां गवादीनां च गात्रोष्मणा, तथा यो यस्य लवणादेराहारो भौमादिः—पार्थिवादिस्तस्य व्यवच्छेदे च—अभावे सति, तथा उपक्रम्यते—बहुकालवेद्यमप्यायुः स्तोकेनैव कालेन निष्ठां नीयते अनेनेत्युपक्रमः—स्वकायशस्त्रादिः, तथाहि—किञ्चित्कस्यचित् स्वकायशस्त्रं यथा क्षारोदकं मधुरोदकस्य किञ्चित्परकायशस्त्रं यथा ज्वलनो वनस्पतेः किञ्चित्तूभयशस्त्रं यथा मृत्तिकामिश्रमुदकं शुद्धोदकस्य, तेन च परिणामः—अचित्तता भवति, सचित्तमप्येभिः कारणैरचित्ततारूपेण परिणमतीत्यर्थः १५५ ॥३॥ इदानीं च 'धन्नाइं चउवीसं'ति षट्पञ्चाशदधिकशततमं द्वारमाह—

**धन्नाइं चउवीसं जव १ गोहुम २ सालि ३ वीहि ४ सट्ठी ५ य। कोद्दव ६ अणुया ७ कंगू ८**

रालय ९ तिल १० मुग्ग ११ मासा १२ य ॥ ४ ॥ अयसि १३ हरिमंथ १४ तिउगड १५ निप्फाव १६ सिलिंद १७ रायमासा १८ य। इक्खू १९ मसूर २० तुवरी २१ कुलत्थ २२ तह धन्नय २३ कलाया २४ ॥ ५ ॥

धान्यानि चतुर्विंशतिर्भवन्ति, यथा—यवाः १ गोधूमाः २ शालयो ३ व्रीहयः ४ षष्टिकाः ५ कोद्रवा ६ अणुकाः ७ कंगुः ८ रालकः ९ तिला १० मुद्गा ११ मापाश्च १२ तथा अतसी १३ हरिमन्थाः १४ त्रिपुटिकाः १५ निष्पावाः १६ शिलिन्दा १७ राजमापा १८ इक्षवः १९ मसूराः २० तुवर्यः २१ कुलत्था २२ स्तथा धान्यकं २३ कलायाः २४ इत्येतानि च प्रायेण लोकप्रसिद्धानि प्रागुक्तान्येव, नवरं षष्टिकाः—शालिभेदः ये षष्टिरात्रेण पच्यन्ते, अणुका—युगन्धरी, बृहच्छिरा कङ्गुः अल्पतरशिरो रालकः, हरिमन्थाः—कृष्णचणकाः शिलिन्दा—मकुष्टाः राजमापाः—चवलकाः धान्यकं—कुसुम्भरी कलाया—अत्र वृत्तचणका इति १५६ ॥ ४ ॥ ५ ॥

अधुना 'मरणं सत्तरसभेयं'ति सप्तपञ्चाशदधिकशततमं द्वारमाह—

आवीइ १ ओहि २ अंतिय ३ वलायमरणं ४ वसट्टमरणं च ५ । अंतोसल्लं ६ तब्भव ७ बालं ८ तह पंडियं ९ मीसं १० ॥ ६ ॥ छउमत्थमरण ११ केवलि १२ वेहायस १३ गिद्धपिट्ठमरणं १४ च । मरणं भत्तपरिन्ना १५ इंगिणि १६ पाओवगमणं च १७ ॥ ७ ॥ अणुसमयनिरंतरमाविइसन्नियं तं भणंति पंचविहं । दव्वे खेत्ते काले भवे य भावे य संसारे ॥ ८ ॥ एमेव ओहिमरणं जाणि मओ ताणि चेव मरइ पुणो । एमेव आइअंतियमरणं नवि मरइ ताणि पुणो ॥ ९ ॥ संज-

मजोगविसन्ना मरंति जे तं वलायमरणं तु। इंदियविसयवसगया मरंति जे तं वसट्टं तु ॥ १० ॥ गारवपंकनिवुड्डा अइयारं जे परस्स न कहेंति । दंसणनाणचरित्ते ससल्लमरणं हवइ तेसिं ॥ ११ ॥ मोत्तुं अकम्मभूमिय नरतिरिए सुरगणे य नेरइए। सेसाणं जीवाणं तब्भवमरणं च केसिंचि ॥१२॥ मोत्तूण ओहिमरणं आवी(ई)यंतियंतियं चेव। सेसा मरणा सव्वे तब्भवमरणेण नायव्वा॥१३॥ अविरयमरणं बालं मरणं विरयाण पंडियं बिंति । जाणाहि बालपंडियमरणं पुण देसविरयाणं ॥१४॥ मणपज्जवोहिनाणी सुयमइनाणी मरंति जे समणा । छउमत्थमरणमेयं केवलिमरणं तु केवलिणो ॥ १५ ॥ गिद्धाइभक्खणं गिद्धपिट्ठ उब्बंघणाइ वेहासं । एए दोन्निऽवि मरणा कारणजाए अणुन्नाया ॥ १६ ॥ मरणं भत्तपरिन्ना इंगिणि पायवगमणं च तिन्नि मरणाइं । कन्नसमज्झिमजेट्ठा धिइसंघयणेण उ विसिट्ठा ॥ १७ ॥

'आवीई'त्यादि, मरणशब्दस्य प्रत्येकमभिसम्बन्धादावीचिमरणं अवधिमरणं 'अंतियं'ति आत्यन्तिकमरणं आर्षत्वाच्चेत्थं निर्देशः एवमुत्तरत्रापि, 'वलायमरणं'ति वलन्मरणं वशार्त्तमरणं च अन्तःशल्यमरणं तद्भवमरणं बालमरणं तथा पण्डितमरणं मिश्रमरणं छद्मस्थमरणं केवलिमरणं 'वेहायसं'ति वैहायसमरणं गृध्रपृष्ठं च मरणं 'भत्तपरिन्न'त्ति भक्तपरिज्ञामरणं इंगिनीमरणं पादपोपगमनमरणं चेति ॥६॥७॥ एतानि क्रमशः स्वयमेव विवरीपुरावीचिमरणं तावदाह—'अणुसमय'मित्यादि, अनुसमयं—समयमाश्रित्य, इदं च व्यवहितसमयाश्रयणतोऽपि भवतीति मा भूद्भ्रान्तिरत आह—निरन्तरं—असान्तरमन्तरालाभावात्, किं तदेवंविधं ?—'आवीचिसंज्ञितं' आ—समन्तात् वीचय

इव वीचयः—प्रतिसमयमनुभूयमानायुषोऽपरापरायुर्दलिकोदयात्पूर्वपूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन् मरणे तदावीचि, तत आवीचीति संज्ञा सञ्जाता यस्मिन् तदावीचिसंज्ञितं, तारकादित्वादितचि रूपमिदं, अथवा वीचिः—विच्छेदस्तदभावोऽवीचिः, दीर्घत्वं तु प्राकृतत्वात्, उभयत्र प्रक्रमान्मरणं, तदेवम्भूतं प्रतिक्षणमायुर्द्रव्यविचटनलक्षणमावीचिमरणं पञ्चविधं भणन्ति तीर्थकरगणधरादयोऽस्मिन् संसारे—जगति, पञ्चविधत्वमेवाह—द्रव्ये क्षेत्रे काले भवे भावे च, द्रव्याऽऽवीचिमरणं क्षेत्राऽऽवीचिमरणं कालाऽऽवीचिमरणं भवाऽऽवीचिमरणं भावाऽऽवीचिमरणं चेत्यर्थः, तत्र द्रव्याऽऽवीचिमरणं नाम यन्नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृति निजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद्विचटनं, तच्च नारकादिभेदाच्चतुर्विधं, एवं नारकादिगतिचातुर्विध्यापेक्षया तद्विषयं क्षेत्रमपि चतुर्विधं ततस्तत्प्राधान्यापेक्षया क्षेत्रावीचिमरणमपि चतुर्धैव, काल इति यथायुष्ककालो गृह्यते, न तु अद्धाकालस्तस्य देवादिष्वसम्भवात्, स च देवायुष्ककालादिभेदाच्चतुर्विधः, अतस्तत्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधमेव, नारकादिचतुर्विधभवापेक्षया भवावीचिमरणमपि चतुर्धैव, तेषामेव च नारकादीनां चतुर्विधायुःक्षयलक्षणभावप्राधान्यापेक्षया भावावीचिमरणमपि चतुर्धैवेति ॥ ८ ॥ अथावधिमरणमाह—'एवमेवे'त्यादि, एवमेव यथाऽऽवीचिमरणं द्रव्यक्षेत्रकालभवभावभेदतः पञ्चविधं तथेदमवधिमरणमपीत्यर्थः, तत्स्वरूपमाह—यानि मृतः सम्प्रतीति शेषः तानि चैव 'मरइ पुण'त्ति तिङ्व्यत्ययेन मरिष्यति पुनः, किमुक्तं भवति ?—अवधिः—मर्यादा ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते पुनर्यदि तान्येवानुभूय मरिष्यति तदा द्रव्यावधिमरणं, तद्द्रव्यापेक्षया पुनस्तद्ग्रहणावधेर्यावज्जीवस्य मृतत्वात्, सम्भवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं परिणामवैचित्र्यादिति, एवं क्षेत्रकालादिष्वपि भावना कार्या । आत्यन्तिकमरणमाह—'एमेवे'त्यादि, एवमेव—अवधिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदतः पञ्च-

तया सह तेन सशल्यं त[illegible] तन्मरणं च सशल्यमरणम्—अन्तःशल्यमरणं भवति तेषां—गौरवपङ्कनिमग्नानामिति ॥ ११ ॥ तद्भवमरणमाह
—'मोत्तुं' इत्यादि, मुक्त्वा—अपहाय, कान्?—अकर्मभूमिजाश्च ते देवकुरूत्तरकुर्वादिपूतपन्नतया नरतिर्यञ्चश्चाकर्मभूमिजनरतिर्यञ्च-
स्तान्, तेषां हि तद्भवानन्तरं देवेष्वेवोत्पादः, तथा सुरगणांश्च—सुरनिकायान्, किमुक्तं भवति?—चतुर्निकायवर्तिनोऽपि देवान्, तथा
निरयो—नरकस्तस्मिन् भवा नैरयिकास्तांश्च मुक्त्वेति सम्बन्धः, तेषां देवानां च तद्भवानन्तरं तिर्यग्मनुष्येष्वेवोत्पत्तेः, शेषाणां—एतदुद्ध-
रितानां कर्मभूमिजनरतिरश्चां जीवानां—प्राणिनां तद्भवमरणं, तेषामेव पुनस्तत्रोत्पत्तेः, तद् विद्यते यस्मिन् भवे—तिर्यग्मनुष्यलक्षणे वर्तते
जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण म्रियमाणस्य भवति, तुशब्दस्तेषामपि सङ्ख्येयवर्षायुषामेवेति विशेषख्यापकः, असङ्ख्येयवर्षायुषां
हि युगलधार्मिकत्वादकर्मभूमिजानामिव देवेष्वेवोत्पादः, तेषामपि न सर्वेषां, किन्तु केषाञ्चित्तद्भवोपादानरूपमेवायुःकर्मोपचिन्वतामिति
॥ १२ ॥ अत्रान्तरे—आवीई इति गाथा सूत्रे दृश्यते न चास्या भावार्थः सम्यगवगम्यते नाप्यसावुत्तराध्ययनचूर्ण्यादिषु व्याख्यातेत्युपेक्ष्यते
॥ १३ ॥ सम्प्रति बालपण्डितमिश्रमरणान्याह—'अविरये'त्यादि, विरमणं विरतं—हिंसानृतादेरुपरमणं न विद्यते तद्येषां तेऽविरता-
स्तेषां—मृतिसमयेऽपि देशविरतिमप्यप्रतिपद्यमानानां मिथ्यादृशां सम्यग्दृशां वा मरणमविरतमरणं तद् बाला इव बालाः—अविरतास्तेषां
मरणं बालमरणमिति ब्रुवते इति सम्बन्धः, तथा विरतानां—सर्वसावद्यनिवृत्तिमभ्युपगतानां मरणं पण्डितमरणं ब्रुवते तीर्थकरगणधरा-
दय इति, तथा जानीहि बालपण्डितमरणं—मिश्रमरणं, पुनःशब्दः पूर्वापेक्षया विशेषद्योतनार्थः, देशात्सर्वविरतविषयापेक्षया स्थूलप्राणि-
व्यपरोपणादेर्विरता देशविरतास्तेषां देशविरतानां ॥ १४ ॥ एवं चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण छद्मस्थमरणकेवलिम-
रणे प्राह—'मणपज्जवो' इत्यादि, मनःपर्यायज्ञानिनोऽवधिज्ञानिनः श्रुतज्ञानिनो मतिज्ञानिनश्च म्रियन्ते ये श्रमणाः—तपस्विनः छादय-

मनःपर्यायनिर्देशाद्धि- छद्मस्थास्तेषां मरणं छद्मस्थमरणमेतत्, इह च प्रथमतो मनःपर्यायनिर्देशाद्धि-
न्तीति छद्मानि—ज्ञानावरणादीनि कर्माणि तेषु तिष्ठन्तीति छद्मस्थास्तेषां मरणं छद्मस्थमरणमेतत्, एवमवध्यादिष्वपि यथायोगं स्वधियैव हेतु-
शुद्धिकृतप्राधान्याङ्गीकारेण चारित्रिण एतदुपजायते इति स्वामिकृतप्राधान्यापेक्षया द्रष्टव्यं, भवतीति ॥ १४ ॥ साम्प्रतं वैहाय-
वोच्य इति, तथा केवलमरणं केवलिनः—उत्पन्नकेवलज्ञानस्य सकलकर्मपुद्गलशाटनतो म्रियमाणस्य तैर्भक्षणं गम्यमानत्वादात्मनस्तदनि-
सगृध्रपृष्ठमरणे अभिधातुमाह—'गिद्धाई'त्यादि, गृध्राः—प्रतीताः ते आदिर्येषां शकुनिकाशिवादीनां 'गिद्धपिट्ठ'त्ति गृध्रैः स्पृष्टं—स्पर्शनं यस्मिन्
वारणादिना तद्भक्ष्यकरिकरभादिशरीरानुप्रवेशेन च गृध्रादिभक्षणं, तत्किमुच्यते ? इत्याह—स ह्यलक्तकपूणिकापुटप्रदानेनात्मानं गृध्रा-
तद् गृध्रस्पृष्टं यदिवा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि च मर्तुर्यस्मिन् तद् गृध्रपृष्ठं, कर्मनिर्जरां प्रति प्राधान्यख्यापनार्थम्,
दिभिः पृष्ठादौ भक्षयतीति, पश्चान्निर्दिष्टस्यापि तस्य प्रथमतः प्रतिपादनमत्यन्तमहासत्त्वविषयतया जनितस्य मरणस्य तदु-
'उव्वंधणाइ वेहास'मिति उद्—ऊर्ध्वं वृक्षशाखादौ वन्धनमुद्बन्धनं तदादिर्यस्य तरुगिरिभृगुप्रपातादेरात्मनैव भवनमिति तत्प्राधान्यविव-
द्बन्धनादि, 'वेहास'मिति प्राकृतत्वाद्यलोपे विहायसि—व्योमनि भवं वैहायसं, उद्बद्धस्य हि विहायस्येव केवलमस्याल्पसत्त्वैर्विधातुमशक्यत्वख्यापनार्थं
क्षयेत्थमुक्तमिति, नन्वेवं गृध्रपृष्ठस्याप्यात्मघातरूपत्वाद्वैहायस एवान्तर्भावः, सत्यमेतत् पीडमुभओऽवि ॥ १ ॥'
भेदोपन्यासः, ननु—'भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो । अप्पाणंमि परम्मि य तो वज्जे पीडामुभयोरपि ॥ १ ॥] इत्यागमः,
[ भावितजिनवचनानां ममत्वरहितानां नास्त्येव विशेषः । आत्मनि च परस्मिंश्च ततो वर्जयेत् पीडापरिहाराय 'चत्तारि
एते चानन्तरोक्ते मरणे अत्यन्तमात्मपीडाकारिणी इति कथं नागमविरोधः ?, अत एव च भक्तपरिज्ञानादिषु इत्यादिसंलेखनाविधिः पान-
विचित्ताइं । विगईनिज्जूहियाइं चत्तारि ॥' [ चत्वारि ( वर्षाणि ) विचित्राणि विकृतिनिर्यूढानि चत्वारि ]

कादिविधिश्च तत्राभिहितः, दर्शनमालिन्यं चोभयत्रेत्याशंक्याह—एते—अनंतरोक्ते द्वे अपि—गृध्रपृष्ठवैहायसाख्ये मरणे '**कारण**'त्ति प्राक्तत्वेन सप्तमीलोपात् कारणे—दर्शनमालिन्यपरिहारादिके जाते—समुत्पन्ने यद्वा कारणजाते—कारणप्रकारे सति **उदायिनृपानुमृततथाविधगीतार्थाचार्यवदनुज्ञाते** इत्यदोषः ॥ १६ ॥ सम्प्रति **अन्त्यमरणत्रयमाह**—'**मरण**'मित्यादि, भक्तं—भोजनं तस्य परिज्ञानं परिज्ञा, सा द्विधा—ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च, ज्ञपरिज्ञयाऽनेकविधमस्माभिर्भुक्तपूर्वमेतद्धेतुकं च सर्वमवद्यमिति परिज्ञानं, प्रत्याख्यानपरिज्ञया च—"सव्वं च असणपाणं चउव्विहं जो य बाहिरो उवही । अब्भिन्तरं चउविहं जावज्जीवं च वोसिरइ ॥ १ ॥" [ सर्वं चाशनपानं चतुर्विधं यश्च बाह्य उपधिः । अभ्यन्तरं चतुर्विधं यावज्जीवं च व्युत्सृजति ॥ १ ॥ ] इत्यागमवचनाच्चतुर्विधाहारस्य त्रिविधाहारस्य वा यावज्जीवमपि परित्यागात्मकं प्रत्याख्यानं भक्तपरिज्ञोच्यते, तथा इङ्ग्यते—प्रतिनियतदेश एव चेष्टतेऽस्यामनशनक्रियायामितीङ्गिनी, भक्तपरिज्ञायां हि त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याचष्टे शरीरपरिकर्म च स्वतः करोति परतश्च कारयति, इङ्गिन्यां तु नियमाच्चतुर्विधाहारविरतिः परपरिकर्मविवर्जनं च भवति, स्वयं पुनरिङ्गितदेशाभ्यन्तरे उद्वर्तनादिचेष्टात्मकं परिकर्म यथासमाधि विदधात्यपीति विशेषः, तथा पादैः—अधःप्रसर्पिमूलात्मकैः पिबतीति पादपो—वृक्षः, उपशब्दश्चौपम्ये उपमेयेऽपि सादृश्येऽपि च दृश्यते, ततश्च पादपमुपगच्छति—सादृश्येन प्राप्नोतीति पादपोपगमनं, किमुक्तं भवति ?—यथैव पादपः कथंचित्कथञ्चिन्निपतितः सममसमं वा अविभावयन् निश्चल एवास्ते तथा अयमपि **भगवान्** यद्यथा समविषमदेशेष्वङ्गमुपाङ्गं वा प्रथमतः पतितं न तत्ततश्चलयतीति, इह चैवंविधानशनोपलक्षितानि मरणान्यप्येवमुक्तानि, अत एवाह—त्रीणि मरणानि, अथैतेषामेव त्रयाणां मरणानां किञ्चित् स्वरूपमाह—'**कन्नस**'त्ति सूत्रत्वात् कनिष्ठंलघु जघन्यमितियावत् मध्यमं—लघुज्येष्ठयोर्मध्यभावि ज्येष्ठं—अतिशयवृद्धमुत्कृष्टमित्यर्थः तत एतेषां द्वन्द्वे कनिष्ठमध्यमज्येष्ठानि यथास-

ब्देन त्रीण्यपि मरणान्यवसेयानि, तथा 'धिइ'त्ति धृतिः—संयमं प्रति चित्तस्वास्थ्यं संहननं—शरीरसामर्थ्यहेतुर्वज्रऋषभनाराचादि ततः समाहारद्वन्द्वे धृतिसंहननं तेन विशिष्टान्येतानि, इदमुक्तं भवति—यद्यपि त्रितयमप्येतत् 'धीरेणवि मरियव्वं कापुरिसेणावि अवस्स मरियव्वं । तम्हा अवस्समरणे वरं खु धीरत्तणे मरिउं ॥ १ ॥' [ धीरेणापि मर्त्तव्यं कापुरुषेणाप्यवश्यं मर्त्तव्यं तस्मादवश्यमरणे धीरत्वेनैव मर्त्तुं वरं ॥ १ ॥ ] इत्यादिभावनातः शुभाशयवानेव प्रतिपद्यते फलमपि च वैमानिकता मुक्तिलक्षणं च त्रयस्यापि समानं, तथा चोक्तम्—"एयं पच्चक्खाणं अणुपालेऊण सुविहिओ सम्मं । वेमाणिओ व देवो हविज्ज अहवावि सिज्झिज्जा ॥ १ ॥" [ एतत् प्रत्याख्यानमनुपाल्य सुविहितः सम्यक् वैमानिको देवो वा भवेत् अथवापि सिध्येत् ॥ १ ॥ ] तथापि विशिष्टविशिष्टतरविशिष्टतमधृतिमतामेव च तत्प्राप्तिरिति ज्येष्ठत्वादिस्तद्विशेष उच्यते, तथाहि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति, यत उक्तम्—"सव्वावि य अज्जाओ सव्वेवि य पढमसंघयणवज्जा । सव्वेवि देसविरया पच्चक्खाणेण उ मरंति ॥ १ ॥" [ सर्वा अप्यार्याः सर्वेऽपि च प्रथमसंहननवर्जाः । सर्वेऽपि च देशविरताः प्रत्याख्यानेनैव म्रियन्ते ॥ १ ॥ ] अत्र च प्रत्याख्यानशब्देन भक्तपरिज्ञैव भणिता, तत्र प्राक् पादपोपगमादेरन्यथा भणनात्, इङ्गिनीमरणं तु विशिष्टतरधृतिसंहननवतामेव भवतीत्यार्यिकादिनिषेधत एवावसीयते, पादपोपगमनं तु नाम्नैव विशिष्टतमधृतिमतां वज्रर्षभनाराचसंहननिनामेव च भवति, उक्तं च—"पढमंमि य संघयणे वट्टंते सेलकुड्डसामाणा । तेसिंपि य वोच्छेओ चोद्दसपुव्वीण वोच्छेए ॥ १ ॥" [ प्रथमे च संहनने वर्त्तमाने शैलकुड्यसमानाः । तेषामपि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे ॥ १ ॥ ] इति, तीर्थकरसेवितत्वाच्च पादपोपगमनस्य ज्येष्ठत्वं, इतरयोश्च विशिष्टसाधुसेवितत्वादन्यथात्वं, यतोऽभ्यधायि—"सव्वे सव्वद्धाए सव्वन्नू सव्वकम्मभूमीसु । सव्वगुरू सव्वमहिया सव्वे मेरुम्मि अभिसित्ता ॥ १ ॥ सव्वाहिं लद्धीहिं सव्वेऽवि परिसहे पराजित्ता । सव्वेवि य

तित्थयरा पाओवगया उ सिद्धिगया ॥ २ ॥ अवसेसा अणगारा तीयपडुप्पन्नऽणागया सव्वे । केई पाओवगया पच्चक्खाणिंगिणी केई
॥ ३ ॥" [ सर्वे सर्वाद्धायां एते सर्वज्ञाः सर्वकर्मभूमिषु सर्वगुरवः सर्वमहिताः सर्वे मेरौ अभिषिक्ताः ॥ १ ॥ सर्वाभिर्लब्धिभिर्युक्ताः
सर्वेऽपि च परिषहान् पराजित्य । सर्वेऽपि च तीर्थकराः पादपोपगताः सिद्धिगताः ॥ २ ॥ अवशेषा अनगाराः अतीतप्रत्युत्पन्नानागताः
सर्वे । केचित् पादपोपगताः प्रत्याख्यानिन इङ्गिनश्च केचित् ॥ ३ ॥ ] इति, तस्माद्भक्तपरिज्ञानं कनिष्ठं इङ्गिनीमरणं मध्यमं पादपोप-
गमनं तु ज्येष्ठमिति १५७ ॥ १७ ॥ इदानीं 'पलिओवमं' इत्यष्टपञ्चाशदधिकशततमं द्वारमाह—

पलिओवमं च तिविहं उद्धारऽद्धं च खेत्तपलियं च । एक्केक्कं पुण दुविहं बायर सुहुमं च नायव्वं ॥ १८ ॥ जं जोयणविच्छिन्नं तं तिउणं परिरएण सविसेसं । तावइयं उव्विद्धं पल्लं पलिओवमं नाम ॥ १९ ॥ एगाहियबेहियतेहियाण उक्कोस सत्तरत्ताणं । सम्मट्ठं संनिचियं भरियं वालग्गकोडीहिं ॥ २० ॥ तत्तो समए समए इक्किक्के अवहियंमि जो कालो । संखिज्जा खलु समया बायरउद्धारपल्लंमि ॥ २१ ॥ एक्केक्कमओ लोमं कट्टुमसंखिज्जखंडमद्दिस्सं । समछेयाणंतपएसियाण पल्लं भरिज्जाहि ॥ २२ ॥ तत्तो समए समए एक्केक्के अवहियंमि जो कालो । संखिज्ज वासकोडी सुहुमे उद्धारपल्लंमि ॥ २३ ॥ वाससए वाससए एक्केक्के बायरे अवहियंमि । बायरअद्धापलियं संखेज्जा वासकोडीओ ॥ २४ ॥ वाससए वाससए एक्केक्के अवहियम्मि सुहुमंमि । सुहुमं अद्धा-

**पलियं हवंति वासा असंखिज्जा ॥ २५ ॥ बायरसुहुमायासे खेत्तपएसाणुसमयमवहारे । बायर-सुहुमं खेत्तं उस्सप्पिणीओ असंखेज्जा ॥ २६ ॥**

'पलिओवमे'त्यादिगाथानवकम्, पल्यो—वर्तुलाकृतिर्धान्याधारविशेषः पल्यवत्पल्यः—पुरस्ताद्वक्ष्यमाणस्वरूपः तेनोपमा यत्र कालप्रमाणे तत्पल्योपमं, तच्च त्रिधा—उद्धारपल्योपमं अद्धापल्योपमं क्षेत्रपल्योपमं च, तत्र वक्ष्यमाणस्वरूपवालाग्राणां तत्खण्डानां चोद्धारेण द्वीपसमुद्राणां वा प्रतिसमयमुद्धरणम्—अपहरणमुद्धारः तद्विषयं तत्प्रधानं वा पल्योपममुद्धारपल्योपमं, तथा अद्धा—कालः स चेह प्रक्रमाद्वक्ष्यमाणवालाग्राणां तत्खण्डानां वा प्रत्येकं वर्षशतलक्षण उद्धारकालो गृह्यते, अथवा प्रस्तुताद्धापल्योपमपरिच्छेद्यो नारकाद्यायुष्कलक्षणः कालोऽद्धा तत्प्रधानं तद्विषयं वा पल्योपममद्धापल्योपमं, तथा क्षेत्रं—विवक्षिताकाशप्रदेशस्वरूपं तदुद्धारप्रधानं पल्योपमं क्षेत्रपल्योपमं, एतेषां च मध्ये पुनरेकैकं द्विभेदं ज्ञातव्यं—बादरं सूक्ष्मं च, तत्र वालाग्राणां सूक्ष्मखण्डाकरणतो यथावस्थितानां स्थूलानां ग्रहणाद्बादरं तेषामेवासङ्ख्येयसूक्ष्मखण्डकरणतः सूक्ष्ममिति ॥ १८ ॥ कः पुनरसौ पल्यो येन पल्योपमे उपमा विधीयते ? इत्याह—'ज'मित्यादि, नाम इति शिष्यस्य कोमलामन्त्रणे 'पलिओवमं' इत्यत्र प्राकृतत्वेन विभक्तिव्यत्ययात् सप्तमी 'पल्लं' इत्यादावपि लिङ्गव्यत्ययात् पुंस्त्वं, ततश्च पल्योपमे—पल्योपमविषये धान्यपल्यवत्पल्यः प्रागुद्दिष्टः स विज्ञेयो, यः किमित्याह—यो विस्तीर्णः, कियदित्याह—योजनमुत्सेधाङ्गुलक्रमनिष्पन्नं, वृत्ताकारत्वाद्दैर्घ्येणापि योजनमिति द्रष्टव्यं, तच्च योजनं त्रिगुणं सविशेषं परिरयेण, प्रमितिमङ्गीकृत्य सर्वस्यापि वृत्तपरिधेः किञ्चिन्न्यूनपञ्चागाधिकत्रिगुणत्वादस्यापि पल्यस्य किञ्चिन्न्यूनपञ्चा(ग्रं० ९००)गाधिकानि त्रीणि योजनानि परिधिर्भवतीत्यर्थः, 'उविद्धं' उच्चोऽपि तावदेव योजनमेवेत्यर्थः, आयामविष्कम्भाभ्यां प्रत्येकमेकयोजनमानः उच्चत्वेनापि योजनप्रमाणः परिधिना तु किञ्चिन्न्यूनपञ्चागाधिक-

योजनत्रयमानो यः पल्यः स इह पल्योपमं विज्ञेय इति तात्पर्यं ॥ १९ ॥ अथ अयमेव पल्यो यत्स्वरूपैर्वालाग्रैः पूर्यते तदेतन्निरूपयि-तुमाह—'एगाहिये'त्यादि, एकेनाह्ना निर्वृत्ता एकाहिक्यः द्वाभ्यां त्रिभिश्चाहोभिर्निष्पन्ना द्व्याहिक्यस्त्र्याहिक्यश्च तासामेकाहिकीद्व्याहि-कीत्र्याहिकीनामेवं चतुराहिकीनां यावदुत्कर्षतः सप्तरात्रप्ररूढानां वालानामेवातिसूक्ष्मत्वादग्रकोटयो वालाग्रकोटयस्तासां भृतोऽसौ पल्यो-ऽत्राधिक्रियते, तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोटय उत्तिष्ठन्ति ता एकाहिक्यः द्वाभ्यां तु या उत्तिष्ठन्ति ता द्व्या-हिक्यः त्रिभिस्तु त्र्याहिक्यः एवं यावत्सप्तरात्रप्ररूढाः सप्तरात्रिक्य इति, कथं पुनस्तासां वालाग्रकोटीनां भृत इत्याह—संमृष्टः—आकर्ण पूरितः संनिचितः—प्रचयविशेषान्निबिडीकृतः, किं बहुना ?, तथा कथञ्चनापि भृतोऽसौ पल्यो यथा तानि वालाग्राणि न वायुरपहरति नापि वह्निर्दहति न च तेषु सलिलं प्रविश्य कोथमापादयति, तदुक्तम्—"ते णं वालग्गा नो अग्गी डहेज्जा नो वाऊ हरेज्जा नो सलिलं कुत्थेज्जा" [ तान् वालाग्रान् नाग्निर्दहेत् न वायुर्हरेत् न सलिलं कोथयेत् ] इत्यादि ॥ २० ॥ ततः किमित्याह—'तत्तो' इत्यादि, ततो—यथोक्तवालाग्रभृतपल्यात् समये समये—प्रतिसमयमेकैकस्मिन् वालाग्रेऽपहियमाणे यावान् कालो लगति, प्रतिसमयं वालाग्राकर्ष-णाद्यावता कालेन सकलोऽपि स पल्यः सर्वात्मना निर्लेपो भवतीत्यर्थः, तावान् कालो वादरमुद्धारपल्योपमं इत्यावृत्त्या प्रथमान्ततयाऽ-प्यत्र सम्बध्यते, कियान् पुनरसौ काल इति कथ्यतामित्याह—खल्ववधारणे सङ्ख्येया एव समया अस्मिन् वादरे उद्धारपल्योपमे भवन्ति नासङ्ख्येयाः, वालाग्राणामप्यत्र सङ्ख्यातत्वात् तेषां च प्रतिसमयमेकैकापहारे सङ्ख्येयस्यैव समयराशेः सद्भावादिति ॥ २१ ॥ उक्तं वादरमुद्धारपल्योपमं, अथ क्रमप्राप्तमेव सूक्ष्ममुद्धारपल्योपममभिधित्सुराह—'एक्केक्के'त्यादि, अतः—सहजवालाग्रभृतपल्यादेकैकं लोम—पूर्वोक्तवालाग्रलक्षणं असङ्ख्येयानि खण्डानि यत्र तदसङ्ख्येयखण्डमदृश्यं कृत्वा, एतदुक्तं भवति—पूर्वं वालाग्राणि सहजान्येव गृही-

तानि अत्र तु तान्येव वालाग्राणि प्रत्येकं तावदसत्कल्पनया खण्ड्यन्ते यावद्दृश्यतास्वरूपासङ्ख्येयखण्डरूपतामेकैकं वालाग्रं भजत इति, तत्पुनरेकैकं वालाग्रखण्डं द्रव्यतोऽत्यन्तविशुद्धलोचनश्छद्मस्थः पुरुषो यदतीव सूक्ष्मं पुद्गलद्रव्यं चक्षुषा पश्यति तदसङ्ख्येयभागमात्रं, क्षेत्रतस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रेऽवगाहते तदसङ्ख्येयगुणक्षेत्रावगाहि द्रव्यप्रमाणं, तथा **चानुयोगद्वारसूत्रम्**—"तत्थ णं एगमेगे वालग्गे असंखेज्जाइं खंडाइं किज्जइ, ते णं वालग्गा दिट्ठीओगाहणाओ असंखेज्जइभागमेत्ताओ सुहुमस्स पणगजीवस्स सरीरोगाहणाउ असंखेज्जगुणा" [ तत्रैकैकस्य वालाग्रस्यासंख्येयानि खण्डानि क्रियंते तानि वालाग्राणि दृष्ट्यवगाहनातोऽसंख्येयभागमात्राणि सूक्ष्मस्य पनकजीवस्य शरीरावगाहनाया असंख्येयगुणानि ] इति, वृद्धास्तु व्याचक्षते—वादरपर्याप्तपृथिवीकायशरीरतुल्यमिति, तथा **चानुयोगद्वारमूलटीकाकृदाह हरिभद्रसूरिः**—"बादरपृथिवीकायिकपर्याप्तशरीरतुल्यान्यसङ्ख्येयखण्डानी"ति वृद्धवादः, एवं कृत्वा ततः किं विधेयमित्यत्रोच्यते—ततोऽमीषां सर्वेषामपि समच्छेदानां—परस्परं तुल्यखण्डीकृतानां प्रत्येकं चाद्याप्यनन्तप्रादेशिकानामनन्तपरमाण्वात्मकानां तमेव पूर्वोक्तं पल्यं विभृया—बुद्ध्या परिपूर्णं विदध्यास्त्वमिति ॥ २२ ॥ एवं च तस्मिन् भृते यत्कर्तव्यं तदाह—**'तत्तो'** इत्यादि, ततः—सूक्ष्मखण्डीकृतवालाग्रभृतपल्यात्प्रतिसमयमेकैकस्मिन् सूक्ष्मवालाग्रखण्डेऽपह्रियमाणे यावान् कालो लगति तावत्प्रमाणं सूक्ष्ममुद्धारपल्योपमं भवतीति प्राग्वदत्रापि सम्बन्धः, कियान् पुनरसौ कालो भवतीत्याह—सङ्ख्येया वर्षकोट्यः सूक्ष्मे उद्धारपल्योपमे भवन्तीति ज्ञातव्यं, वालाग्राणामिह प्रत्येकमसङ्ख्येयखण्डात्मकत्वादेकैकस्यापि वालाग्रस्य सम्बन्धिनां खण्डानामपहारेऽसङ्ख्येयसमयराशिप्राप्तेः सर्ववालाग्रखण्डात्मकापहारे भवन्त्येव सङ्ख्याता वर्षकोट्यः ॥ २३ ॥ अथ **बादरमद्धापल्योपमं प्रतिपादयितुमाह**—**'वासे'**त्यादि, तस्मिन्नेवोत्सेधाङ्गुलप्रमितयोजनप्रमाणायामविष्कम्भोद्वेधे पल्ये पूर्वोक्तसहजबादरवालाग्रैर्निभृतं भृते सति प्रति वर्षशतमेकैकं वालाग्रमप-

ह्रियते यावता कालेन स पल्यो निर्लेपीक्रियते तावान् कालो बादरमद्धापल्योपमं विज्ञेयं, तत्र बादरेऽद्धापल्योपमे सङ्ख्येया वर्षकोट्यो भवन्तीति ॥ २४ ॥ अथ सूक्ष्ममद्धापल्योपममाह—'वाससे'त्यादि, स एव पल्यः प्राग्वदसङ्ख्येयखण्डीकृतसूक्ष्मवालाग्रैराकर्णं परिपूर्णः क्रियते, ततो वर्षशते वर्षशतेऽतिक्रान्ते सत्येकैकसूक्ष्मवालाग्रापहारतो यावता कालेन स पल्यः सर्वात्मना रिक्तो भवति तावान् कालः सूक्ष्ममद्धापल्योपमं अवबोद्धव्यं, तत्र च सूक्ष्मेऽद्धापल्योपमे भवन्त्यसङ्ख्येयानि वर्षाणि, असङ्ख्येया वर्षकोटयो भवन्तीत्यर्थः ॥ २५ ॥ सम्प्रति बादरं सूक्ष्मं च क्षेत्रपल्योपममाह—'बायरे'त्यादि, बादराणि च सूक्ष्माणि च बादरसूक्ष्माणि पूर्वोक्तपल्यगतानि सहजान्यसङ्ख्येयखण्डीकृतानि च यानि वालाग्राणीत्यर्थः तेषामवगाढत्वसम्बन्धेन सम्बन्धि यदाकाशं तत्र ये क्षेत्रप्रदेशा—निरंशनभोविभागस्वरूपास्तेषामनुसमयं—प्रतिसमयमेकैकापहारे क्रियमाणे यावान् कालो लगति तदात्मकं यथाक्रममेव बादरं सूक्ष्मं च क्षेत्रं—क्षेत्रपल्योपमं भवति, इयमत्र भावना—स एवोत्सेधाङ्गुलप्रमितयोजनप्रमाणविष्कम्भायामावगाढः पल्यः पूर्ववदेकाहोरात्रयावत्सप्ताहोरात्रप्ररूढैर्वालाग्रैराकर्णं निचितो भ्रियते, ततस्तैर्वालाग्रैर्ये नभःप्रदेशाः स्पृष्टास्ते समये समये एकैकनभःप्रदेशप्रतिसमयापहारेण यावता कालेन सर्वात्मना निष्ठामुपयाति तावान् कालविशेषो बादरं क्षेत्रपल्योपमं, एतच्चासङ्ख्येयोत्सर्पिण्यवसर्पिणीमानं, यतः क्षेत्रस्यातिसूक्ष्मत्वेनैकैकवालाग्रावगाढक्षेत्रप्रदेशानामपि प्रतिसमयमेकैकापहारे 'अंगुलअसंखभागे ओसप्पिणीओ असंखेज्जा' [ अङ्गुलासंख्येयभागे अवसर्पिण्योऽसंख्येयाः ] इति वचनात् असङ्ख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति, किं पुनः सर्ववालाग्रावगाढक्षेत्रप्रदेशापहार इति । तथा स एव पूर्वोक्तः पल्यः पूर्ववदेकैकं वालाग्रमसङ्ख्येयखण्डं कृत्वा तैराकर्णं भृतो निचितश्च तथा क्रियते यथा मनागपि न तत्राग्न्यादिकमाक्रामति, एवं भृते तस्मिन् पल्ये ये आकाशप्रदेशास्तैर्वालाग्रैः स्पृष्टा ये च न स्पृष्टास्ते सर्वेऽप्येकैकस्मिन् समये एकैकाकाशप्रदेशापहारेण

समुद्ध्रियमाणा यावता कालेन सर्वात्मना निष्ठामुपयान्ति तावान् कालविशेषः सूक्ष्मं क्षेत्रपल्योपमं, इदमप्यसङ्ख्येयोत्सर्पिण्यवसर्पिणीमानमेव केवलं पूर्वस्मादसङ्ख्येयगुणं, वालाग्रस्पृष्टनभःप्रदेशेभ्योऽस्पृष्टानामसंख्यातगुणत्वादिति। ननु यैर्वालाग्रैरेकान्ततो निचितमापूरिते सति तस्मिन् पल्ये वह्न्यादिकमपि सर्वथा नाक्रामति तत्र कथं तैर्वालाग्रैः अस्पृष्टा नभःप्रदेशाः सम्भाव्यन्ते ? येनोच्यते तैर्वालाग्रैरस्पृष्टा इति, अत्रोच्यते, वालाग्रेभ्योऽसङ्ख्येयखण्डीकृतेभ्योऽपि नभःप्रदेशानामत्यन्तसूक्ष्मत्वात्, तथा चात्रार्थे प्रश्ननिर्वचनरूपमनुयोगद्वारसूत्रं—"तत्थ णं चोयगे पण्णवगमेवं वयासी—अत्थि णं तस्स पल्लस्सागासप्पएसा जे णं तेहिं वालग्गेहिं अफुन्ना ?, हंता अत्थि, जहा को दिट्ठंतो ?, से जहानामए एगे पल्ले सिया से णं कोहंडाणं भरिए तत्थ माउलिंगा पक्खित्ता तेवि माया तत्थ णं बिल्ला पक्खित्ता तेवि माया तत्थ णं आमलगा पक्खित्ता तेवि माया तत्थ णं बदरा पक्खित्ता तेवि माया तत्थ णं चणगा पक्खित्ता तेवि माया, एवमेएणं दिट्ठंतेणं अत्थि णं तस्स पल्लस्स आगासप्पएसा जे णं तेहिं वालग्गेहिं अणुप्फुन्ना" इति, [तत्र चोदकः प्रज्ञापकमेवमवादीत् —सन्ति तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैरस्पृष्टाः ?, हन्त सन्ति, यथा को दृष्टान्तः ?, तद्यथा नाम एकः पल्यः स्यात् स कूष्माण्डैर्भृतः तत्र मातुलिङ्गानि प्रक्षिप्तानि तानि मातानि तत्र बिल्वानि प्रक्षिप्तानि तान्यपि मातानि तत्रामलकानि प्रक्षिप्तानि तान्यपि मातानि तत्र बदराणि प्रक्षिप्तानि तान्यपि मातानि तत्र चणकाः प्रक्षिप्तास्तेऽपि माताः एवमनेन दृष्टान्तेन सन्ति तस्य पल्यस्याकाशप्रदेशा ये तैर्वालाग्रैर्न स्पृष्टाः ] तदेवमर्वाग्दृष्टयो यद्यपि यथोक्तपल्ये शुषिराभावतोऽस्पृष्टनभःप्रदेशान्न सम्भावयन्ति तथापि सूक्ष्माणामपि वालाग्राणां वादरत्वादाकाशप्रदेशानां पुनरतिसूक्ष्मत्वात्सन्त्येवासङ्ख्याता अस्पृष्टा नभःप्रदेशाः, दृश्यन्ते च निविडतया सम्भाव्यमानेऽपि स्तम्भादौ आस्फालितानां कीलिकानां प्रभूतानां तदन्तः प्रवेशः न चासौ शुषिरमन्तरेण भवतीति। ननु यद्याकाशप्रदेशा वालाग्रैः स्पृष्टा

अस्पृष्टाश्च परिगृह्यन्ते ततः किं वालाग्रैः प्रयोजनं ?, एवं प्ररूपणा क्रियतां—उत्सेधाङ्गुलप्रमितयोजनायामविष्कम्भावगाढे पल्ये यावन्तो नभःप्रदेशा इति, सत्यमेतत्, केवलमनेन सूक्ष्मपल्योपमेन दृष्टिवादे स्पृष्टास्पृष्टभेदेन द्रव्यप्रमाणं क्रियते, यथा यैर्वालाग्रैः स्पृष्टा नभः-प्रदेशास्तेषां प्रतिसमयमेकैकनभःप्रदेशापहारेण यत् वादरक्षेत्रपल्योपमं तत्प्रमाणान्येतानि द्रव्याणि, ये तु वालाग्रैः स्पृष्टा अस्पृष्टा वा नभःप्रदेशास्तेषां प्रतिसमयमेकैकनभःप्रदेशापहारेण यत् सूक्ष्मक्षेत्रपल्योपमं तावत्प्रमाणान्येतानि द्रव्याणि, ततो दृष्टिवादे वालाग्रैः प्रयोजनमिति तत्प्ररूपणा क्रियते इति १५८ ॥ २६ ॥ इदानीं 'अयर'स्त्येकोनषष्ट्यधिकशततमं द्वारमाह—

उद्धारपल्लगाणं कोडाकोडी भवेज्ज दसगुणिया। तं सागरोवमस्स उ एक्कस्स भवे परीमाणं ॥२७॥ जावइओ उद्धारो अड्ढाइज्जाण सागराण भवे। तावइआ खलु लोए हवंति दीवा समुद्दा य ॥ २८ ॥ तह अद्धापल्लाणं कोडाकोडी भवेज्ज दसगुणिया। तं सागरोवमस्स उ परिमाणं हवइ एगस्स ॥ २९ ॥ सुहुमेण उ अद्धासागरस्स माणेण सव्वजीवाणं। कम्मठिई कायठिई भवठिई होइ नायव्वा ॥ ३० ॥ इह खेत्तपल्लगाणं कोडाकोडी हवेज्ज दसगुणिया। तं सागरोवमस्स उ एक्कस्स भवे परीमाणं ॥ ३१ ॥ एएण खेत्तसागरउवमाणेणं हविज्ज नायव्वं। पुढविदगअगणिमारुयहरियतसाणं च परिमाणं ॥ ३२ ॥

'उद्धारे'त्यादिगाथाषट्कं, अतिमहत्त्वसाम्यात्सागरेण—समुद्रेणोपमा यस्य तत्सागरोपमं, तदपि त्रिधा—उद्धाराद्धाक्षेत्रसागरोपमभेदात्, पुनरेकैकं द्विधा—वादरं सूक्ष्मं च, तत्र उद्धारपल्ययोः पूर्वोक्तस्वरूपयोर्वादरसूक्ष्मभेदभिन्नयोर्या प्रत्येकं कोटीकोटिर्दशभिर्गुणिता दश कोटीकोटय

इत्यर्थः तदेतत्प्रत्येकमेकस्य वादरोद्धारसागरोपमस्य सूक्ष्मोद्धारसागरोपमस्य च परिमाणं भवेदिति, दशभिर्वादरोद्धारपल्योपमकोटिकोटिभिरेकं वादरोद्धारसागरोपमं भवति, दशभिश्च सूक्ष्मोद्धारपल्योपमकोटिकोटिभिरेकं सूक्ष्मोद्धारसागरोपमं भवतीत्यर्थः ॥ २७ ॥ अथ सूक्ष्मोद्धारसागरोपमस्य प्रयोजनमाह—'जावइओ' इत्यादि, अर्धतृतीयप्रमाणानां व्याख्यानात् सूक्ष्मोद्धारसागरोपमाणां पञ्चविंशतिपल्यकोटिकोटिष्वित्यर्थः सूक्ष्मवालाग्रोद्धारोपलक्षितः समयराशिरित्यर्थः भवेत्—जायेत तावन्त एव लोके द्वीपाः समुद्राश्च भवन्ति, एतदुक्तं भवति —सार्धे सूक्ष्मोद्धारसागरोपमद्वये सूक्ष्मोद्धारपल्योपमानां पञ्चविंशतिकोटिकोटिष्वित्यर्थः यावन्तो वालाग्रोद्धारविषयाः समया भवन्ति तावत्सङ्ख्यास्तिर्यग्लोके द्वीपसमुद्रा अपि सर्वे सम्भवन्तीत्यर्थः, इह च यद्यपि सूत्रे सामान्येनैवोक्तं तथापि सूक्ष्मोद्धारसागरोपमस्यैवेदं द्वीपसमुद्रसङ्ख्यानयनलक्षणं प्रयोजनमवसेयं, 'एएहिं सुहुमेहिं उद्धारपलिओवमसागरोवमेहिं दीवसमुद्दाणं उद्धारो घिप्पइ' [ एताभ्यां सूक्ष्मोद्धारपल्योपमसागरोपमाभ्यां द्वीपसमुद्राणामुद्धारो गृह्यते ] इति वचनात्, वादरोद्धारसागरोपमेण तु न किमपि प्रयोजनं, केवलं वादरे प्ररूपिते सूक्ष्मप्ररूपणा क्रमनिष्पन्नत्वात् सुखकर्तव्या सुखावसेया च भवतीत्यतस्तत्प्ररूपणामात्रं कृतं, एवं वादराद्धाक्षेत्रसागरोपमयोर्वादरपल्योपमत्रये च वाच्यमिति ॥ २८ ॥ अथ वादरं सूक्ष्मं चाद्धासागरोपममाह—'तहे'त्यादि, तथेति समुच्चये अद्धापल्योपमयोर्वादरसूक्ष्मभेदभिन्नयोर्या प्रत्येकं कोटिकोटिर्दशभिर्गुणिता दश कोटिकोटय इत्यर्थः तदेतत्प्रत्येकमेकस्य वादराद्धासागरोपमस्य सूक्ष्माद्धासागरोपमस्य च प्रमाणं भवेत्, भावार्थस्तु उद्धारसागरोपमवदिति ॥ २९ ॥ अथ सूक्ष्माद्धासागरोपमप्रयोजनमाह—'सुहुमे'त्यादि, सूक्ष्मेणाद्धासागरोपमस्य मानेन—प्रमाणेन सर्वेषां—नारकतिर्यगादिजीवानां कर्मस्थितिकायस्थितिभवस्थितयो भवन्ति ज्ञातव्याः, तत्र कर्मणां—ज्ञानावरणादीनां स्थितिः—अवस्थानकालस्त्रिंशत्सागरोपमकोटीकोट्यादिरूपः कर्मस्थितिः, कायः—पृथिव्यादिकायोऽत्राभिप्रेतः, ततश्चैकस्मिन्

काये पुनः पुनस्तत्रैवोत्पत्त्या स्थितिः असङ्ख्येयोत्सर्पिण्यवसर्पिण्यात्मिका कायस्थितिः भवो—नारकाद्येकजीवस्य विवक्षितमेकमेव जन्म तत्र स्थितिः—आयुःकर्मानुभवनपरिणतिस्त्रयस्त्रिंशत्सागरोपमादिरूपा भवस्थितिः, एताः कर्मकायभवस्थितयः सूक्ष्माद्धासागरोपमेण प्रमीयन्ते इति भावः ॥ ३० ॥ अथ बादरं सूक्ष्मं च क्षेत्रसागरोपममाह—'इहे'त्यादि, इह—अस्मिन् प्रक्रमे बादरक्षेत्रपल्योपमानां दशभिः कोटिकोटिभिर्बादरं क्षेत्रसागरोपमं सूक्ष्मक्षेत्रपल्योपमानां तु दशभिः कोटिकोटिभिः सूक्ष्मं क्षेत्रसागरोपममिति तात्पर्यार्थः, अक्षरार्थस्तु पूर्ववदिति॥३१॥सूक्ष्मक्षेत्रसागरोपमस्य प्रयोजनमाह—'एतेणे'त्यादि,एतेन—सूक्ष्मक्षेत्रसागरोपमस्यैव मानेन—प्रमाणेन ज्ञातव्यं, किमित्याह—परिमाणं—सङ्ख्यानं, केषां ?—पृथिव्युदकाग्निवायुवनस्पतित्रसजीवानां, एतच्च प्राचुर्येण दृष्टिवादे प्रतिपादितं सकृदेवान्यत्र सूक्ष्मोद्धाराद्धाक्षेत्रपल्योपमानामप्येतान्येव प्रयोजनानि द्रष्टव्यानीति १५९ ॥ ३२ ॥ इदानीं 'ओसप्पिणि'त्ति पष्टाधिकशततमं द्वारमाह—

दस कोडाकोडीओ अद्धाअयराण हुंति पुन्नाओ । अवसप्पिणीएँ तीए भाया छच्चेव कालस्स
॥ ३३ ॥ सुसमसुसमा य १ सुसमा २ तइया पुण सुसमदुस्समा ३ होइ । दूसमसुसम चउत्थी
४ दूसम ५ अइदूसमा छट्ठी ६ ॥ ३४ ॥ सुसमसुसमाएँ कालो चत्तारि हवंति कोडिकोडीओ ।
तिन्नि सुसमाएँ कालो दुन्नि भवे सुसमदुसमाए ॥ ३५ ॥ एक्का कोडाकोडी बायालीसाएँ जा
सहस्सेहिं । वासाण होइ ऊणा दूसमसुसमाइ सो कालो ॥ ३६ ॥ अह दूसमाएँ कालो वाससहस्साइं एक्कवीसं तु । तावइओ चेव भवे कालो अइदूसमाएवि ॥ ३७ ॥

'दसे'त्यादिगाथापञ्चकं, अवसर्पति हीयमानारकतया अवसर्पयति वाऽऽयुष्कशरीरादिभावान् ह्रापयतीत्यवसर्पिणी तस्यां, तरीतुमशक्यानि

प्रभूतकालतरणीयत्वादतराणि—सागरोपमाणीत्यर्थः सूक्ष्माद्धासागरोपमाणां सम्पूर्णा दश कोटीकोट्यो भवन्ति, सूक्ष्माद्धासागरोपमाणां दशभिः कोटीकोटीभिर्निष्पन्नोऽवसर्पिणीलक्षणः कालविशेषोऽवगन्तव्य इति तात्पर्यार्थः, तस्यां चावसर्पिण्यां कालस्य भागा—विच्छेदाः सुषमसुषमादयः षडेव भवन्ति ॥ ३३ ॥ तानेवाह—'सुसमे'त्यादि, शोभनाः समाः—वर्षाण्यस्यामिति सुषमा अत्यन्तं सुषमा सुषमासुषमा, सर्वथा दुष्षमानुभावरहित एकान्तसुषमारूपोऽवसर्पिण्याः प्रथमो भागः, द्वितीया सुषमा तृतीया पुनः सुषमदुष्षमा भवति, दुष्टाः समा अस्यां सा दुष्षमा सुषमा चासौ दुष्षमा च सुषमदुष्षमा, सुषमानुभावबहुला अल्पदुष्षमानुभावेत्यर्थः, चतुर्थी दुष्षमसुषमा, दुष्षमा चासौ सुषमा च दुष्षमसुषमा, दुष्षमानुभावबहुला अल्पसुषमानुभावेत्यर्थः, पञ्चमी दुष्षमा, षष्ठी त्वतिशयेन दुष्षमा अतिदुष्षमा, सर्वथा सुषमानुभावरहिता दुष्षमदुष्षमेत्यर्थः ॥ ३४ ॥ अथैतेषामेव सुषमसुषमादीनां षण्णामरकाणां प्रमाणमाह—'सुसमसुसे'त्यादि, सुषमसुषमायां कालः—कालप्रमाणं सागरोपमाणां चतस्रः कोटिकोटयो भवन्ति, सुषमायां तिस्रः सागरोपमकोटिकोटयः, सुषमदुष्षमायां द्वे सागरोपमकोटिकोट्यौ, एका—एकसङ्ख्या सागरोपमकोटिकोटिर्द्विचत्वारिंशता वर्षाणां सहस्रैर्या न्यूना भवति स दुष्षमसुषमायाः कालो, द्विचत्वारिंशद्वर्षसहस्रन्यूनैकसागरोपमकोटिकोटिप्रमाणा दुष्षमसुषमेत्यर्थः, अथ दुष्षमायां कालप्रमाणमेकविंशतिवर्षसहस्राणि तावानेव च—दुष्षमाप्रमाण एव भवेत् कालः अतिदुष्षमायामपि, एकविंशतिवर्षसहस्रप्रमाणा दुष्षमदुष्षमापि भवतीति भावः, अस्यां चावसर्पिण्यां शरीरोच्छ्रयायुष्ककल्पवृक्षादिशुभभावानां परतोऽनन्तगुणा परिहानिः, तथाहि—सुषमसुषमायां मनुष्याणां गव्यूतत्रितयं शरीरोच्छ्रयः त्रीणि च पल्योपमान्यायुः शुभपरिणामोऽपि कल्पवृक्षादिरनेकः, सुषमायां द्वे गव्यूते द्वे च पल्योपमे कल्पपादपादिपरिणामश्च शुभो हीनतरः, सुषमदुष्षमायामेकं गव्यूतं एकं पल्योपमं हीनतमश्च कल्पवृक्षादिपरिणामः, दुष्षमसुषमायां पञ्च-

धनुःशतप्रभृति सप्तहस्तान्तं तनुमानमायुरपि पूर्वकोटिप्रमाणं परिहीनश्च कल्पवृक्षादिपरिणामः, दुष्षमायामनियतं देहमानमायुरप्यनियतं वर्षशतादर्वाक् पर्यन्ते विंशतिवर्षाणि परमायुः शरीरोच्छ्रयो हस्तद्वयं औपधिवीर्यपरिहाणिश्चानन्तगुणा, अतिदुष्षमायामप्यनियतं शरीरोच्छ्रयादि सर्वं पर्यन्ते तु हस्तप्रमाणं वपुः षोडश वर्षाणि परमायुर्निरवशेषौषधिपरिहानिश्चेति, एवमन्यदप्येतत्स्वरूपं समयात् समवसेयमिति १६० ॥ ३५ ॥ ३६ ॥ ३७ ॥ इदानीं 'उस्सप्पिणि'त्ति एकषष्ट्यधिकशततमं द्वारमाह—

**अवसप्पिणीव भागा हवंति उस्सप्पिणीइवि छ एए । पडिलोमा परिवाडी नवरि विभाएसु नायव्वा ॥ ३८ ॥**

'अवसप्पिणी'त्यादि, उत्सर्पति—वर्धतेऽरकापेक्षया उत्सर्पयति वा-भावानायुष्कादीन् वर्धयतीत्युत्सर्पिणी, अस्यामप्येत एवावसर्पिण्याः सम्बन्धिनः सुषमसुषमादयो षट् कालविभागा भवन्ति, नवरं—केवलं विभागेषु—अरकेषु प्रतिलोमा—विपरीता परिपाटी—आनुपूर्वी ज्ञातव्या, अयमर्थः—अवसर्पिण्यां सुषमसुषमाद्या दुष्षमदुष्षमान्ताः षडरका उक्ताः उत्सर्पिण्यां तु दुष्षमदुष्षमाद्याः सुषमसुषमापर्यन्ताः षडरका भवन्तीति, तदेवं विंशतिसूक्ष्माद्धासागरोपमकोटीकोटीप्रमाणद्वादशारकमेतदवसर्पिण्युत्सर्पिण्योः कालचक्रं पञ्चसु भरतेष्वैरवतेषु च पञ्चस्वनाद्यन्तं परिवर्तते, यथाऽहोरात्रे वासरो रजनी वा न शक्यते निरूपयितुमादित्वेनान्तत्वेन वा अनादित्वादहोरात्रचक्रप्रवृत्तेस्तथेदमपीति १६१ ॥ ३८ ॥ इदानीं 'दव्वे खेत्ते काले । भावे पोग्गलपरियट्टो'त्ति द्विषष्ट्यधिकशततमं द्वारमाह—

**ओसप्पिणी अणंता पोग्गलपरियट्टओ मुणेयव्वो । तेऽणंता तीयद्धा अणागयद्धा अणंतगुणा ॥ ३९ ॥ पोग्गलपरियट्टो इह दव्वाइचउव्विहो मुणेयव्वो । थूलेयरभेएहिं जह होइ तहा निसामेह**

॥ ४० ॥ ओरालविउव्वातेयकम्मभासाणपाणमणएहिं । फासेवि सव्वपोग्गल मुक्का अह बायर-
परट्टो ॥ ४१ ॥ अहव इमो दव्वाई ओरालविउव्वतेयकम्मेहिं । नीसेसदव्वगहणंमि बायरो होइ परि-
यट्टो ॥ ४२ ॥ दव्वे सुहुमपरट्टो जाहे एगेण अह सरीरेणं । फासेवि सव्वपोग्गल अणुक्कमेणं नणु
गणिज्जा ॥ ४३ ॥ लोगागासपएसा जया मरंतेण एत्थ जीवेणं । पुट्ठा कमुक्कमेणं खेत्तपरट्टो
भवे थूलो ॥ ४४ ॥ जीवो जइया एगे खेत्तपएसंमि अहिगए मरइ । पुणरवि तस्साणंतरि बीय-
पएसंमि जइ मरए ॥ ४५ ॥ एवं तरतमजोगेण सव्वखेत्तंमि जइ मओ होइ । सुहुमो खेत्तपरट्टो
अणुक्कमेणं नणु गणेज्जा ॥ ४६ ॥ ओसप्पिणीएँ समया जावइया ते य निययमरणेणं । पुट्ठा कमु-
क्कमेणं कालपरट्टो भवे थूलो ॥ ४७ ॥ सुहुमो पुण ओसप्पिणी पढमे समयंमि जइ मओ होइ ।
पुणरवि तस्साणंतरबीए समयंमि जइ मरइ ॥ ४८ ॥ एवं तरतमजोएण सव्वसमएसु चेव एएसुं ।
जइ कुणइ पाणचायं अणुक्कमेणं नणु गणिज्जा ॥ ४९ ॥ एगसमयंमि लोए सुहुमागणिजिया उ
जे उ पविसंति । ते हुंतऽसंखलोयप्पएसतुल्ला असंखेज्जा ॥ ५० ॥ तत्तो असंखगुणिया अगणि-
काया उ तेसि कायठिई । तत्तो संजमअणुभागबंधठाणाणिऽसंखाणि ॥ ५१ ॥ ताणि मरंतेण
जया पुट्ठाणि कमुक्कमेण सव्वाणि । भावंमि बायरो सो सुहुमो य कमेण बोद्धव्वो ॥ ५२ ॥

'ओसप्पी'त्यादि गाथाचतुर्दशकं, अवसर्पिणीग्रहणेनोत्सर्पिण्यप्युपलक्ष्यते, ततोऽयमर्थः—अत्रसर्पिण्युत्सर्पिण्योऽनन्ता मिलिताःसमु-

अतीताद्धापेक्षया
दिताः पुद्गलपरावर्तो ज्ञातव्यः, ते च पुद्गलपरावर्ता अनन्ता अतीताद्धा, अनन्तपुद्गलपरावर्तात्मकोऽतीतः काल इत्यर्थः,
चानन्तगुणोऽनागताद्धा भविष्यत्काल इत्यर्थः, ननु भगवत्यां 'अणागयद्धा णं तीयद्धाओ समयाहिय'त्ति सूत्रेऽनागतकालोऽतीतकालात्स-
मयाधिक उक्तः, तथाहि—"अतीतानागतौ कालावनादित्वानन्तत्वाभ्यां तुल्यौ, तयोश्च मध्ये भगवतः प्रश्नसमयो वर्तते, स चाविनष्टत्वे-
नातीते न प्रविशतीत्यविनष्टसाधर्म्यादनागते क्षिप्तः, ततोऽतीतकालादनागताद्धा समयाधिको भवती"ति, इह पुनरतीताद्धातोऽनागताद्धाऽन-
न्तगुणाऽभिहिता तत्कथं न विरोधः ?, अत्रोच्यते, यथा अनागताद्धाया अन्तो नास्ति एवमतीताद्धाया आदिरित्युभयोरप्यन्ताभावमात्रेण
तत्र तुल्यत्वं विवक्षितमिति न दोषः, यदि च अतीतानागताद्धे वर्तमानसमये समे स्यातां ततः समयातिक्रमेऽनागताद्धा समयेनोना स्यात्
ततो द्व्यादिभिः समयैः, एवं च समत्वं नास्ति, तस्मादतीताद्धायाः सकाशादनागताद्धाऽनन्तगुणेति स्थितं, अत एवानन्तेनापि कालेन
गतेन नासौ क्षीयत इति, वर्तमानैकसमयरूपा वर्तमानाद्धाऽप्यस्ति, सा च सूक्ष्मत्वान्नेह पृथक्प्रतिपादितेति ॥ ३९ ॥ पुद्गलपरावर्तभे-
दानभिधातुमाह—'पोग्गले'त्यादि, इह—अस्मिन् पारमेश्वरप्रवचने पुद्गलपरावर्तो द्रव्यादितो—द्रव्यक्षेत्रकालभावभेदतश्चतुर्विधः—
चतुष्प्रकारो ज्ञातव्यः, तद्यथा—द्रव्यपुद्गलपरावर्तः क्षेत्रपुद्गलपरावर्तः कालपुद्गलपरावर्तो भावपुद्गलपरावर्तश्च, पुनरप्येकैकः पुद्गलपरावर्तः
स्थूलेतरभेदाभ्यां—बादरसूक्ष्मत्वभेदेन द्विधा—बादरः सूक्ष्मश्च, स च यथा भवति तथा निशमयत—शृणुतेति ॥ ४० ॥ तत्र
बादरद्रव्यपुद्गलपरावर्तमाह—'ओराले'त्यादि, एकेन जन्तुना विकटां भवाटवीं पर्यटता अनन्तेषु भवेषु औदारिकवैक्रियतैजसकार्म-
णभाषाऽऽनप्राणमनोलक्षणपदार्थसप्तकरूपतया चतुर्दशरज्ज्वात्मकलोकवर्तिनः सर्वेऽपि पुद्गलाः स्पृष्ट्वा—परिभुज्य यावता कालेन मुक्ता
भवन्ति एष बादरद्रव्यपुद्गलपरावर्तः, किमुक्तं भवति ?—यावता कालेनैकेन जीवेन सर्वेऽपि जगद्वर्तिनः परमाणवो यथायोगमौ-

दारिकादिसप्तकस्वभावत्वेन परिभुज्य २ परित्यक्ता भवन्ति स कालविशेषो बादरद्रव्यपुद्गलपरावर्त्तः, आहारकशरीरं चोत्कृष्टतोऽप्येकजीवस्य वारचतुष्टयमेव सम्भवति ततस्तस्य पुद्गलपरावर्त्ते ग्रहणानुपयोगात् सप्तकं कृतमिति ॥ ४१ ॥ अथ मतान्तरेण द्रव्यपुद्गलपरावर्त्तमाह— 'अहवे'त्यादि, अथवा—अन्येषामाचार्याणां मतेनौदारिकवैक्रियतैजसकार्मणशरीरचतुष्टयरूपतया निःशेषद्रव्यग्रहणेनैकजीवेन सर्वलोकपुद्गलानां परिभुज्य २ परित्यजनेऽयं बादरः—स्थूलः पुद्गलपरावर्त्तो भवति, किंविशिष्टः?—द्रव्यादिः, द्रव्यमत्र आदिर्यस्य पुद्गलपरावर्त्तस्य स द्रव्यादिः, द्रव्यपुद्गलपरावर्त्त इत्यर्थः ॥ ४२ ॥ सूक्ष्मं द्रव्यपुद्गलपरावर्त्तमाह—'दवे' इत्यादि, अत्र द्रव्ये—द्रव्यविषयः सूक्ष्मः पुद्गलपरावर्त्तो भवति यथा औदारिकादिशरीराणामेकेन—अन्यतमेन शरीरेण एको जीवः संसारे परिभ्रमन् सर्वानपि पुद्गलान् स्पृष्ट्वा—परिभुज्य २ मुञ्चति, इयमत्र भावना—यावता कालेन सर्वेऽपि लोकाकाशवर्त्तिनः परमाणव औदारिकाद्यन्यतमैकविवक्षितशरीररूपतया परिभुज्य २ निष्ठां नीयन्ते तावान् कालविशेषः सूक्ष्मद्रव्यपुद्गलपरावर्त्तः, पुद्गलानां—परमाणूनामौदारिकादिरूपतया विवक्षितैकशरीररूपतया वा सामस्त्येन परावर्त्तः—परिणमनं यावति काले स तावान् कालः पुद्गलपरावर्त्तः, इदं च शब्दस्य व्युत्पत्तिनिमित्तं, अनेन च व्युत्पत्तिनिमित्तेन स्वैकार्थसमवायिप्रवृत्तिनिमित्तमनन्तोत्सर्पिण्यवसर्पिणीमानस्वरूपं लक्ष्यते, तेन क्षेत्रपुद्गलपरावर्त्तादौ पुद्गलपरावर्त्तनाभावेऽपि प्रवृत्तिनिमित्तस्यानन्तोत्सर्पिण्यवसर्पिणीमानस्वरूपस्य विद्यमानत्वात्पुद्गलपरावर्त्तशब्दः प्रवर्त्तमानो न विरुध्यते, यथा गोशब्दः पूर्वं गमने व्युत्पादितः, तेन च गमनेन व्युत्पत्तिनिमित्तेन स्वैकार्थसमवायिगुरुककुद्लाङ्गूलसास्नादिमत्त्वरूपं प्रवृत्तिनिमित्तमुपलक्ष्यते, ततो गमनरहितेऽपि गोपिण्डे प्रवृत्तिनिमित्तसद्भावाद्गोशब्दः प्रवर्त्तते इति, 'अणुकमेणं नणु गणेज्ज'त्ति एतांश्च पुद्गलान् अनुक्रमेण—विवक्षितैकशरीरस्पृष्टतारूपया परिपाट्या ननु—निश्चितं गणयेत्, इदमत्र तात्पर्यं—एतस्मिन् सूक्ष्मे द्रव्यपुद्गलपरावर्त्ते

विवक्षितैकशरीरव्यतिरेकेणान्यशरीरतया ये परिभुज्य २ परित्यज्यन्ते ते न गण्यन्ते, किन्तु प्रभूतेऽपि काले गते सति ये च विवक्षि-
तैकशरीररूपतया परिणम्यन्ते त एव परमाणवो गण्यन्त इति, प्रथमपक्षाभिप्रायेण तु औदारिकादिसप्तकमध्यादन्यतमेनैकेन केनचित्पू-
र्वोक्तरीत्या सर्वपुद्गलस्पर्शने सूक्ष्मपुद्गलपरावर्तो भवतीति ॥ ४३ ॥ अथ बादरक्षेत्रपुद्गलपरावर्तमाह—'लोगे'त्यादि, लोकस्य—चतुर्दश-
रज्ज्वात्मकस्याकाशप्रदेशा—निर्विभागा नभोभागा यदा म्रियमाणेनात्र—जगति जीवेन स्पृष्टा—व्याप्ताः क्रमेण—तदनन्तरभावलक्षणेनोत्क्र-
मेण वा—अर्दवितर्दमरणाक्रान्तक्षेत्रप्रदेशरूपेण तदा क्षेत्रपुद्गलपरावर्तो भवेत् स्थूलो—बादरः, किमुक्तं भवति ?—यावता कालेनैकेन जीवेन
क्रमेण उत्क्रमेण वा यत्र तत्र म्रियमाणेन सर्वेऽपि लोकाकाशप्रदेशा मरणे संस्पृष्टाः क्रियन्ते स तावान् कालविशेषो बादरः क्षेत्रपुद्गल-
परावर्तः ॥ ४४ ॥ सम्प्रति सूक्ष्मक्षेत्रपुद्गलपरावर्तमाह—'जीवो' इत्यादिगाथाद्वयं, एकः कश्चिज्जन्तुरनन्तभवभ्रमणपरो यदा एकस्मिन्
क्षेत्रप्रदेशेऽधिगते—प्राप्ते सति, तत्र स्थित इत्यर्थः, कल्पनया न परमार्थेन, असङ्ख्यातप्रदेशावगाढत्वाज्जीवस्य, म्रियते—प्राणान् परित्यजति-
पुनरपि तस्य—प्रथममरणस्पृष्टप्रदेशस्यानन्तरे—अव्यवहिते द्वितीये प्रदेशे यदि म्रियते पुनरप्यनन्तरे तृतीये प्रदेशे यदि म्रियते, एवं तर,
तमयोगेन—अनन्तरानन्तरप्रदेशमरणलाभलक्षणेन सर्वस्मिन्नपि क्षेत्रे—लोकाकाशे मृतो भवति तदा सूक्ष्मः क्षेत्रपुद्गलपरावर्तो ज्ञेयः, अत्र
च क्षेत्रप्रदेशान् अनुक्रमेणैव—प्रथमप्रदेशानुबद्धप्रदेशपरम्परापरिपाट्यैव गणयेत्, न पुनः पूर्वस्पृष्टान् व्यवहितान् वा प्रदेशान् गणयेत्,
इयमत्र भावना—यद्यपि जीवस्यावगाहना जघन्याऽप्यसङ्ख्येयप्रदेशात्मिका भवति तथापि विवक्षिते कस्मिंश्चिद्देशे म्रियमाणस्य विवक्षितः
कश्चिदेकः प्रदेशोऽवधिभूतो विवक्ष्यते, ततस्तस्मात्प्रदेशादन्यत्र प्रदेशान्तरे ये नभःप्रदेशा मरणेन व्याप्यन्ते ते न गण्यन्ते, किन्त्वनन्ते-
ऽपि काले गते सति विवक्षितात्प्रदेशादनन्तरो यः प्रदेशो मरणेन व्याप्तो भवति स गण्यते, तस्मादप्यनन्तरो यः प्रदेशो मरणे व्याप्तः

स गण्यते, एवमानन्तर्यपरम्परया यावता कालेन सर्वलोकाकाशप्रदेशा मरणेन स्पृष्टा भवन्ति तावान् कालविशेषः सूक्ष्मक्षेत्रपुद्गलपरावर्तः, अन्ये तु व्याचक्षते–येष्वाकाशप्रदेशेष्ववगाढो जीवो मृतस्ते सर्वेऽप्याकाशप्रदेशा गण्यन्ते, न पुनस्तन्मध्यवर्ती विवक्षितः कश्चिदेक एवाकाशप्रदेश इति ॥ ४५ ॥ ४६ ॥ अथ बादरं कालपुद्गलपरावर्तमाह—'ओसप्पी'त्यादि, अवसर्पिण्या उपलक्षणत्वादुत्सर्पिण्याश्च यावन्तः समयाः–परमसूक्ष्माः कालविभागास्ते यदा एकजीवेन निजमरणेन क्रमेणोत्क्रमेण वा स्पृष्टा भवन्ति तदा कालपुद्गलपरावर्तो भवेत् स्थूलः, अयमर्थः–यावता कालेनैको जीवः सर्वानप्यवसर्पिण्युत्सर्पिणीसमयान् क्रमेणोत्क्रमेण वा मरणेन व्याप्तान् करोति तावान् कालविशेषो बादरः कालपुद्गलपरावर्तः ॥ ४७ ॥ सूक्ष्मं कालपुद्गलपरावर्तमाह—'सुहुमो' इत्यादिगाथाद्वयं, सूक्ष्मः पुनः कालपुद्गलपरावर्तो भवति, तद्यथा–एकः कश्चिज्जीवोऽवसर्पिण्याः प्रथमे समये यदि मृतो भवति पुनरपि तस्यावसर्पिणीप्रथमसमयस्यानन्तरे द्वितीये समये यदि म्रियते, एवं तरतमयोगेन–अनन्तरानन्तरसमयमरणलाभलक्षणेन एतेषु सर्वेष्वप्यवसर्पिण्युत्सर्पिणीसम्बन्धिषु समयेषु यदि प्राणपरित्यागं करोति तदा सूक्ष्मः कालपुद्गलपरावर्तो भवति, इहापि समयान् अनुक्रमेणैव–प्रथमसमयानुगतसमयपरम्परापरिपाट्यैव गणयेत्, न पुनः पूर्वस्पृष्टान् व्यवहितान् वा समयान् गणयेदिति, अत्रापीयं भावना–इहावसर्पिणीप्रथमसमये कश्चिज्जीवो मृत्युमुपगतः, ततो यदि समयोनविंशतिसागरोपमकोटीकोटीभिरतिक्रान्ताभिर्भूयोऽपि स जन्तुरवसर्पिणीद्वितीयसमये म्रियते तदा स द्वितीयः समयो मरणस्पृष्टो गण्यते, शेषास्तु समया मरणस्पृष्टा अपि सन्तो न गण्यन्ते, यदि पुनस्तस्मिन्नवसर्पिणीद्वितीयसमये न म्रियते किन्तु समयान्तरे तदा सोऽपि न गृह्यते, किन्त्वनन्तास्ववसर्पिण्युत्सर्पिणीषु गतासु यदाऽवसर्पिणीद्वितीयसमये एव मरिष्यति तदा स समयो गण्यते, एवमानन्तर्यप्रकारेण यावता कालेन सर्वेऽप्युत्सर्पिण्यवसर्पिणीसमया मरणव्याप्ता भवन्ति तावान् कालविशेषः

सूक्ष्मः कालपुद्गलपरावर्तः ॥ ४८ ॥ ४९ ॥ साम्प्रतं द्विविधमपि भावपुद्गलपरावर्तं विवक्षुः प्रथमं तावदनुभागबन्धस्थानपरिमाणमाह —'एगसमयंमी'त्यादिगाथाद्वयं, लोके इह—जगति एकस्मिन् समये ये पृथिवीकायिकादयो जीवाः 'सुहुमागणिजिया उ'त्ति सप्तम्यर्थत्वात्प्रथमायाः सूक्ष्माग्निजीवेषु—सूक्ष्मनामकर्मोदयवर्तिषु तेजस्कायिकजीवेषु प्रविशन्ति—उत्पद्यन्ते ते भवन्त्यसङ्ख्येयाः, असङ्ख्येयत्वमेवाह—असङ्ख्येयलोकप्रदेशतुल्याः—असङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणाः, इह च विजातीयजीवानां जात्यन्तरतयोत्पत्तिः प्रवेश उच्यते, इत्थमेव प्रज्ञप्तौ प्रवेशनकशब्दार्थस्य व्याख्यातत्वात्, ततस्ते जीवाः पृथिव्यादिभ्योऽन्यकायेभ्यो बादरतेजस्कायेभ्यश्च सूक्ष्मतेजस्कायतयोत्पद्यन्ते ते इह गृह्यन्ते, ये पुनः पूर्वमुत्पन्नाः(सूक्ष्म)स्तेजस्कायिकाः पुनर्मृत्वा तेनैव पर्यायेणोत्पद्यन्ते ते न गृह्यंते, तेषां पूर्वमेव प्रविष्टत्वात्, ततः सर्वस्तोका एकसमयसमुत्पन्नसूक्ष्माग्निकायिकाः, 'तत्तो'त्ति ततः—तेभ्यः एकसमयोत्पन्नसूक्ष्माग्निकायिकेभ्योऽसङ्ख्यगुणिता—असङ्ख्येयगुणा अग्निकायाः पूर्वोत्पन्नाः सर्वेऽपि सूक्ष्माग्निकायिकजीवाः, कथमिति चेदुच्यते—एकः सूक्ष्माग्निकायिको जीवः समुत्पन्नोऽन्तर्मुहूर्तं जीवति, एतावन्मात्रायुष्कत्वात्तेषां, तस्मिंश्चान्तर्मुहूर्ते ये समयास्तेषु प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशप्रमाणाः सूक्ष्माग्निकायिकाः समुत्पद्यन्ते, अतः सिद्धमेकसमयोत्पन्नसूक्ष्माग्निकायिकेभ्यः सर्वेषां पूर्वोत्पन्नसूक्ष्माग्निकायिकानामसङ्ख्येयगुणत्वं, तेभ्योऽपि सर्वसूक्ष्माग्निकायिकेभ्यस्तेषामेव प्रत्येकं कायस्थितिः—पुनः पुनस्तत्रैव काये समुत्पत्तिलक्षणाऽसङ्ख्यातगुणा, एकैकस्यापि सूक्ष्माग्निकायिकस्यासङ्ख्येयोत्सर्पिण्यवसर्पिणीप्रमाणायाः कायस्थितेरुत्कर्षतः प्रतिपादितत्वादिति, तस्या अपि कायस्थितेः सकाशात्संयमस्थानान्यनुभागबन्धस्थानानि च प्रत्येकमसङ्ख्येयगुणानि, कायस्थितावसङ्ख्येयगुणानां स्थितिबन्धानां भावात्, एकैकस्मिंश्च स्थितिबन्धेऽसङ्ख्येयानामनुभागबन्धस्थानानां सद्भावादिति, संयमस्थानान्यप्यनुभागबन्धस्थानैस्तुल्यान्येवेति तेषामुपादानं, तत्स्वरूपं चाग्रे वक्ष्यामः । अथानुभागबन्धस्थानानीति कः

शब्दार्थः ?, उच्यते, तिष्ठत्यस्मिन् जीव इति स्थानं, अनुभागबन्धस्य स्थानमनुभागबन्धस्थानं, एकेन काषायिकेणाध्यवसायेन गृहीतानां कर्मपुद्गलानां विवक्षितैकसमयबद्धरससमुदायपरिमाणमित्यर्थः, तानि चानुभागबन्धस्थानान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि, तेषां चानुभागबन्धस्थानानां निष्पादका ये कषायोदयरूपा अध्यवसायविशेषास्तेऽप्यनुभागबन्धस्थानानीत्युच्यन्ते, कारणे कार्योपचारात्, तेऽपि चानुभागबन्धाध्यवसाया असङ्ख्येयलोकाकाशप्रदेशप्रमाणा इति ॥ ५० ॥ ५१ ॥ अथ बादरं सूक्ष्मं च भावपुद्गलपरावर्तमाह— 'ताणी'त्यादि, तानि—अनुभागबन्धाध्यवसायस्थानानि सर्वाण्यप्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि म्रियमाणेन यदा जीवेनैकेन क्रमेण—आनन्तर्येणोत्क्रमेण च—पारम्पर्येण स्पृष्टानि भवन्ति एष बादरभावपुद्गलपरावर्तः, किमुक्तं भवति ?—यावता कालेन क्रमेणोत्क्रमेण वा सर्वेष्वप्यनुभागबन्धाध्यवसायेषु वर्तमानो मृतो भवति तावान् कालो बादरभावपुद्गलपरावर्तः, सूक्ष्मः पुनः भावपुद्गलपरावर्तो बोद्धव्यो यदा क्रमेण—परिपाट्या सर्वाण्यप्यनुभागबन्धाध्यवसायस्थानानि स्पृष्टानि भवन्ति, इयमत्र भावना—कश्चिज्जन्तुः सर्वजघन्ये कषायोदयरूपेऽध्यवसाये वर्तमानो मृतस्ततो यदि स एव जन्तुरनन्तेऽपि काले गते सति प्रथमादनन्तरे द्वितीयेऽध्यवसायस्थाने वर्तमानो म्रियते तदा तन्मरणं गण्यते न शेषाण्युत्क्रमभावीन्यनन्तान्यपि मरणानि, ततः कालान्तरे भूयोऽपि यदि द्वितीयस्मादनन्तरे तृतीयेऽध्यवसायस्थाने वर्तमानो म्रियते तदा तृतीयं मरणं गण्यते न शेषाण्यपान्तरालभावीन्यनन्तान्यपि मरणानि, एवं क्रमेण सर्वाण्यनुभागबन्धाध्यवसायस्थानानि यावता कालेन मरणेन स्पृष्टानि भवन्ति तावान् कालविशेषः सूक्ष्मभावपुद्गलपरावर्तः । इह च बादरे प्ररूपिते सति सूक्ष्मः सुखेनैव शिष्यैः समधिगम्यते इति बादरपुद्गलपरावर्तप्ररूपणा क्रियते, न पुनः कोऽपि बादरपुद्गलपरावर्तः क्वचिदपि सिद्धान्तप्रदेशे प्रयोजनवानुपलभ्यत इति, तथा सूक्ष्माणामपि चतुर्णां पुद्गलपरावर्तानां मध्ये जीवाभिगमादौ पुद्गलपरावर्तः क्षेत्रतो बाहुल्येन

गृहीतः, क्षेत्रतो मार्गणायां तस्योपादानात्, तथा च तत्सूत्रं—'जे से साइए सपज्जवसिए मिच्छादिट्ठी से जहन्नेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं, अणंताओ उसप्पिणीओसप्पिणीओ कालओ, खेत्तओ अवड्ढं पोग्गलपरियट्टं देसूण'मित्यादि [यः स सादिसपर्यवसितो मिथ्यादृष्टिः स जघन्येनान्तर्मुहूर्त्तमुत्कृष्टेनानन्तं कालं, अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतोऽपार्धं पुद्गलपरावर्त्तं देशोनं] ततोऽन्यत्रापि यत्र विशेषनिर्देशो नास्ति तत्र पुद्गलपरावर्तग्रहणे क्षेत्रपुद्गलपरावर्तो गृह्यते इति सम्भाव्यते, तत्त्वं तु बहुश्रुता एव विदन्तीति १६२ ॥ ५२ ॥ इदानीं 'पन्नरस कम्मभूमीउ'त्ति त्रिषष्ठ्यधिकशततमं द्वारमाह—

**भरहाइ ५ विदेहाइं ५ एरवयाइं च ५ पंच पत्तेयं। भन्नंति कम्मभूमी धम्मजोग्गा उ पन्नरस॥५३॥**

भरतानि 'विदेहाइं'ति महाविदेहा ऐरवतानि च प्रत्येकं पञ्च पञ्च भण्यन्ते पञ्चदश कर्मभूमयः, एतासामेव स्वरूपमाह—धर्मस्य—श्रुतचारित्ररूपस्य योग्या—उचितास्तदनुष्ठानस्य तत्रैव सम्भवात्, अयमर्थः—कर्म—कृषिवाणिज्यादि मोक्षानुष्ठानं वा तत्प्रधाना भूमयः कर्मभूमयः ताश्च पञ्चदश भवन्ति, तद्यथा—एकं भरतक्षेत्रं जम्बूद्वीपे द्वे धातकीखण्डे द्वे च पुष्करवरद्वीपार्धे एवं भरतानि पञ्च, एवं महाविदेहा ऐरवतानि च प्रत्येकं पञ्च पञ्चेति १६३ ॥ ५३ ॥ इदानीं 'अकम्मभूमीओ तीस'त्ति चतुःषष्ठ्यधिकशततमं द्वारमाह—

**हेमवयं १ हरिवासं २ देवकुरू ३ तह य उत्तरकुरूवि ४। रम्मय ५ एरन्नवयं ६ इय छब्भूमी उ पंचगुणा ॥ ५४ ॥ एया अकम्मभूमीउ तीस सया जुअलधम्मजणठाणं। दसविहकप्पमहद्दुमसमुत्थभोगा पसिद्धाओ ॥ ५५ ॥**

'हेमवय'मित्यादिगाथाद्वयं, हैमवतं हरिवर्षं देवकुरवस्तथा उत्तरकुरवो रम्यकमैरण्यवतं चेत्येताः षड्भूमयः पञ्चभिर्गुणितास्त्रिंशदक-

र्माणो—यथोक्तकर्मविकला भूमयोऽकर्मभूमयो भवन्ति, षण्णां पञ्चानां त्रिंशत्सङ्ख्यात्मकत्वात्, एताश्च सर्वा अपि सदा—सर्वकालं युगलधार्मिकजनानां स्थानं—आश्रयः, युगलधार्मिका एव नरतिर्यञ्चस्तत्र वसन्तीति भावः, तथा दशविधा ये कल्पमहाद्रुमा वक्ष्यमाणस्वरूपास्तत्समुत्थेन—तदुत्पन्नेन भोगेन—अन्नपानवसनालङ्कारादिना प्रसिद्धाः—प्रख्याता इति १६४ ॥ ५४ ॥ ५५ ॥ साम्प्रतं 'अट्ठ मय'त्ति पञ्चषष्ट्यधिकशततमं द्वारमाह—

**जाइ १ कुल २ रूव ३ बल ४ सुय ५ तव ६ लाभि ७ स्सरिय ८ अट्ठ मयमत्तो । एयाइं चिय बंधइ असुहाइं बहुं च संसारे ॥ ५६ ॥**

जातिकुलरूपबलश्रुततपोलाभैश्वर्यस्वरूपैरष्टभिर्मदैः—अभिमानैर्मत्तः—परवशः प्राणी एतान्येव—जात्यादीन्यशुभानि—हीनानि बध्नाति—अर्जयति बहुं च—प्रभूतं कालं यावदस्मिन् संसारे परिभ्रमतीति शेषः, अयमर्थः—जातिमदं विदधानो जन्तुरन्यजन्मनि तामेव जातिं हीनां लभते विकटां च भवाटवीं पर्यटतीति, एवमन्येऽपि भावना कार्या, तत्र जातिः—मातृकी विप्रादिका वा कुलं—पैतृकमुग्रादिकं वा रूपं—शरीरसौन्दर्यं बलं—सामर्थ्यं श्रुतं—अनेकशास्त्रावबोधः तपः—अनशनादि लाभः—अभिलषितवस्तुप्राप्तिः ऐश्वर्यं च—प्रभुत्वमिति, १६५ ॥ ५६ ॥ इदानीं 'दुन्नि सया तेयाला भेया पाणाइवायस्स ॥' इति षट्षष्ट्यधिकशततमं द्वारमाह—

**भू १ जल २ जलणा ३ निल ४ वण ५ बि ६ ति ७ चउ ८ पंचिंदिएहिं ९ नव जीवा । मणवयणकाय ३ गुणिया हवंति ते सत्तवीसंति ॥ ५७ ॥ एक्कासीई सा करणकारणाणुमइताडिया होइ । सच्चिय तिकालगुणिया दुन्नि सया होंति तेयाला (२४३) ॥ ५८ ॥**

द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियाश्चेत्येतैर्भेदैर्न-
भूः—पृथ्वी जलं—आपः ज्वलनः—अग्निः अनिलो—वायुः वनस्पतयः—प्रतीताः
सप्तविंशतिर्भवन्ति, तथा सा—सप्तविंशतिः करणकारणानुमतिभिस्ता-
वविधा जीवाः, ते च मनोवचनकायलक्षणैस्त्रिभिः करणैर्गुणिताः
डिता—गुणिता एकाशीतिर्भवति, सैवैकाशीतिरतीतवर्तमानभविष्यल्लक्षणैस्त्रिभिः कालैर्गुणिता द्वे शते त्रिचत्वारिंशदधिके भवतः, अय-
मत्र भावार्थः—पृथिव्यादीनां नवानामपि जीवानां मनसा वचनेन कायेन च प्रत्येकं वधस्य सम्भवात् सप्तविंशतिर्भेदाः, तत्रापि पृथि-
व्यादिवधं मनःप्रभृतीभिः कश्चित्स्वयं करोति कश्चिदन्येन कारयति कश्चित्पुनरन्यं कुर्वन्तमनुमन्यते इति प्रत्येकं करणकारणानुमतिस-
म्भवेनैकाशीतिर्भेदाः, ते च प्रत्येकं कालत्रयेऽपि सम्भवन्तीति द्वे शते त्रिचत्वारिंशदधिके प्राणातिपातभेदा इति १६६ ॥ ५७ ॥ ५८ ॥

सम्प्रति 'परिणामाणं अट्ठुत्तरसयं'ति सप्तषष्ट्यधिकशततमं द्वारमाह—

**संकप्पाइतिएणं ३ मणमाईहिं ३ तहेव करणेहिं ३। कोहाइचउक्केणं ४ परिणामेऽट्ठोत्तरसयं च ॥५९॥**
**संकप्पो संरंभो १ परितावकरो भवे समारंभो २। आरंभो ३ उद्दवओ सुद्धनयाणं च सव्वेसिं ॥६०॥**

इह सङ्कल्पशब्देन संरम्भ उपलक्ष्यते पर्यायत्वात्, आदिशब्दात्समारम्भारम्भपरिग्रहः, ततो वक्ष्यमाणस्वरूपाः संरम्भसमारम्भार-
म्भाख्यो मनोवचनकायैर्गुण्यन्ते जाता नव, तथा 'करणेहिं'ति बहुवचननिर्देशात्कारणानुमतिपरिग्रहः, ततः पूर्वोक्ता नव करणकार-
णानुमतित्रिकेण गुण्यन्ते जाताः सप्तविंशतिः, साऽपि क्रोधादिचतुष्केण—क्रोधमानमायालोभलक्षणैश्चतुर्भिः कषायैर्गुण्यते जातं 'परि-
णामे' षष्ठीसप्तम्योरर्थं प्रत्यभेदात् परिणामानां—चित्तादिपरिणतिविशेषाणामष्टोत्तरं शतमिति, इदमत्र तात्पर्य—उद्भूतक्रोधपरिणाम आत्मा
करोति स्वयं कायेन संरम्भमित्येको विकल्पः, तथा आविर्भूतमानपरिणाम आत्मा स्वयं करोति कायेन संरम्भमिति द्वितीयः, तथा

समुपजातमायापरिणतिरात्मा स्वयं करोति कायेन संरम्भमिति तृतीयः, तथा लोभकषायग्रस्त आत्मा करोति स्वयं कायेन संरम्भमिति चतुर्थः, एवं कृतेन चत्वारो विकल्पाः कारितेन चत्वारः अनुमत्याऽपि चत्वारः एते द्वादश कायेन लब्धाः, तथा वचसा द्वादश मनसाऽपि द्वादश, एते षट्त्रिंशत्संरम्भेण लब्धाः तथा समारम्भेणापि षट्त्रिंशत् तथा आरम्भेणापि षट्त्रिंशदित्येवमष्टोत्तरं परिणामशतं भवतीति ॥ ५९ ॥ अथ सङ्कल्पादीनामेव स्वरूपमाह—

प्राणातिपातं करोमीति यः सङ्कल्पः—अध्यवसायः स संरम्भः, यः पुनः परस्य परितापकरः—पीडाविधायी व्यापारः स समारम्भः, अपद्रावयतो—जीवितात्परं व्यपरोपयतो व्यापार आरम्भः, एतच्च संरम्भादित्रितयं सर्वेषामपि शुद्धनयानां सम्मतं, अयमर्थः—इह नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतलक्षणाः सप्त नयाः, तत्र शुद्धेरन्तर्भूतकारितार्थत्वात् शोधयंति कर्ममलिनं जीवमिति शुद्धाः—नैगमसङ्ग्रहव्यवहाररूपास्त्रयः, ते हि अनुयायिद्रव्याभ्युपगमपराः, ततो भवान्तरेऽपि कृतकर्मफलोपभोगोपपत्तेः सद्धर्मदेशनादौ प्रवृत्तियोगतो भवति तात्त्विकी शुद्धिस्तस्मात्त एव शुद्धाः, ऋजुसूत्रशब्दसमभिरूढैवंभूतस्वरूपास्तु चत्वारो नया अशुद्धाः, ते हि पर्यायमात्रमभ्युपगच्छन्ति पर्यायाणां परस्परमात्यन्तिकं भेदं च, एवं च सति कृतविप्रणाशादिदोषप्रसङ्गः, तथाहि—मनुष्येण कृतं कर्म किल देवो भुङ्क्ते, मनुष्यावस्थातश्च देवावस्था भिन्ना, ततो मनुष्यकृतकर्मविप्रणाशो, मनुष्येण सता तस्योपभोगाभावात्, देवस्य च फलोपभोगोऽकृताभ्यागमः, देवेन सता तस्य कर्मणोऽकरणात्, कृतप्रणाशादिदोषपरिज्ञाने च न कोऽपि धर्मश्रवणेऽनुष्ठाने वा प्रवर्तते इति मिथ्यात्वशुद्ध्यभावः, तदभावाच्च न ते शुद्धा इति, अथवा शुद्धनयानां चेत्यत्र प्राकृतत्वात्पूर्वस्याकारस्य लोपो द्रष्टव्यः, ततः सर्वेषामप्यशुद्धनयानामेतत्संरम्भादित्रितयं सम्मतं न तु शुद्धानामिति, तत्र नैगमसङ्ग्रहव्यवहाररूपा आद्यास्त्रयो नया अशुद्धा व्यवहाराभ्युपगमपर-

त्वात्, उपरितनास्तु चत्वारः शुद्धा नैश्चयिकत्वादिति, तदिदमत्र तात्पर्य—संरम्भसमारम्भारम्भलक्षणं त्रितयं नैगमादीनामेव त्रयाणां सम्मतं, व्यवहारपरतया तेषां मतेन त्रितयस्यापि सम्भवात्, ऋजुसूत्रादयस्तु हिंसाविचारप्रक्रमे न बाह्यवस्तुगतां हिंसामनुमन्यन्ते, यतस्तन्मतेनात्मैव तथाऽध्यवसायपरिकलितो हिंसा न बाह्यमनुष्यादिपर्यायविनाशनं, 'आया चेव उ हिंसा' इति वचनात्, ततः संरम्भ एव हिंसा, न समारम्भो नाप्यारम्भः, ऋजुसूत्रादीनां मतेनेति १६७ ॥ ६० ॥ सम्प्रति 'बंभमट्ठदसभेयं'ति अष्टषष्ट्यधिकशततमं द्वारमाह—

**दिवा कामरइसुहा तिविहं तिविहेण नवविहा विरई । ओरालियाउवि तहा तं बंभं अट्ठदस-भेयं ॥ ६१ ॥**

दिवि भवं दिव्यं तच्च वैक्रियशरीरसम्भवं काम्यन्त इति कामा—विषयास्तेषु रतिः—अभिष्वङ्गस्तस्मात्सुखं कामरतिसुखं सुरतसुखमिति भावः तस्माद्दिव्यात्कामरतिसुखात् त्रिविधं यथा भवति कृतकारितानुमतिभिरित्यर्थः त्रिविधेन—मनोवाक्कायलक्षणेन करणेन नवविधा विरतिः, एवमौदारिकादपि तिर्यङ्मनुष्यसम्भवात् तथा—त्रिविधंत्रिविधेन नवविधा विरतिः, इत्येवं तद्—ब्रह्मचर्यमष्टादशभेदं भवति, इयमत्र भावना—मनसाऽब्रह्म न करोमि न कारयामि कुर्वन्तमपि परं नानुमन्ये एवं वचसा कायेन चेति दिव्ये ब्रह्मणि नव भेदाः, एवमौदारिकेऽपीत्यष्टादशेति १६८ ॥ ६१ ॥ सम्प्रति 'कामाण चउवीसं'त्येकोनसप्तत्यधिकशततमं द्वारमाह—

**कामो चउवीसविहो संपत्तो खलु तहा असंपत्तो । चउदसहा संपत्तो दसहा पुण होअसंपत्तो ॥ ६२ ॥ तत्थ असंपत्तेऽत्था १ चिंता २ तह सद्ध ३ संभरण ४ मेव । विक्कवय ५ लज्जनासो ६**

**पमाय ७ उम्माय ८ तब्भावो ९ ॥ ६३ ॥ मरणं च होइ दसमे १० संपत्तंपि य समासओ वोच्छं। दिट्ठीए संपाओ १ दिट्ठीसेवा २ य संभासो ३ ॥ ६४ ॥ हसिय ४ ललिओ ५ वगूहिय ६ दंत ७ नहनिवाय ८ चुंबणं ९ चेव । आलिंगण १० मादाणं ११ कर १२ सेवण १३ ऽणंगकीडा १४ य ॥ ६५ ॥**

कामश्चतुर्विंशतिविधः—चतुर्विंशतिभेदो भवति, तत्र प्रथमं तावत्सामान्येन द्विधा—सम्प्राप्तः—कामिनामन्योऽन्यं सङ्गमसमुत्थः, तथा असम्प्राप्तश्च—विप्रलम्भस्वरूपः, तत्र सम्प्राप्तश्चतुर्दशधा—चतुर्दशप्रकारः दशधा पुनः—दशप्रकारो भवत्यसम्प्राप्त इति ॥ ६२ ॥ तत्राल्पतरवक्तव्यत्वादसम्प्राप्तं तावदाह—'तत्थे'त्यादि, तत्र—द्वयोः सम्प्राप्तासम्प्राप्तयोर्मध्ये असम्प्राप्तोऽयं—'अत्थे'ति अर्थनमर्थः—अदृष्टेऽपि रमण्यादौ श्रुत्वा तदभिलाषमात्रं १ चिन्ता—अहो रूपादयस्तस्या गुणा इत्यनुरागेण चिन्तनं २ तथा श्रद्धा—तत्सङ्गमाभिलाषः ३ तथा संस्मरणं—सङ्कल्पिततद्रूपस्यालेख्यादिदर्शनेनात्मनो विनोदनं ४ तथा विक्लवता—तद्विरहदुःखातिरेकेणाहारादिष्वपि निरपेक्षता ५ तथा लज्जानाशो—गुर्वादिसमक्षमपि तद्गुणोत्कीर्तनं ६ तथा प्रमादः—तदर्थमेव सर्वारम्भेषु प्रवर्तनं ७ तथोन्मादो—नष्टचित्ततया आलजालजल्पनं ८ तथा तद्भावना—स्तम्भादीनामपि तद्बुद्ध्याऽऽलिङ्गनादिचेष्टा ९ मरणं च भवति दशमोऽसम्प्राप्तकामभेदः १०, इदं च सर्वथा प्राणपरित्यागलक्षणं न ज्ञातव्यं, शृङ्गाररसभङ्गप्रसङ्गात्, किन्तु मरणमिव मरणं—निश्चेष्टावस्था मूर्च्छाप्राया काचिदित्यर्थः, इत्थमेवाभिनवगुप्तेन भरतवृत्तिकृताऽपि व्याख्यातत्वादिति । अथ संप्राप्तं काममाह—'संपत्तंपी'त्यादि, संप्राप्तमपि कामं समासतः—सङ्क्षेपेण वक्ष्ये, तदेवाह—दृष्टेः सम्पातः स्त्रीणां कुचाद्यवलोकनं १ तथा दृष्टिसेवा—हावभावसारं तद्दृष्टेर्दृष्टिमीलनं २ तथा सम्भाषणं—उचितकाले

सरकथाभिजल्पः ३ ॥ ६३ ॥ ६४ ॥ हसितं च—वक्रोक्तिगर्भं हसनं ४ ललितं—पासकादिक्रीडा ५ उपगूढं—गाढतरपरिष्वक्तं ६ दन्त-पातो—दशनच्छेदविधिः ७ नखनिपातः—कररुहविपाटनप्रकारः ८ चुम्बनं—वक्त्रसंयोगः ९ आलिङ्गनं—ईषत्स्पर्शनं १० आदानं—कुचादिग्रहणं ११ 'करसेवणं'ति प्राकृतशैल्या करणासेवने, तत्र करणं—सुरतारम्भयत्नं चतुरशीतिभेदं वात्स्यायनप्रसिद्धं १२ आसेवनं—मैथुनक्रिया १३ अनङ्गक्रीडा च—आस्यादावर्थक्रियेति १४ ॥ १६९ ॥ ६५ ॥ इदानीं 'दस पाण'त्ति सप्तत्यधिकशततमं द्वारमाह—

**इगि विगल असन्नी सन्नी नव दस पाण चउ छक्क सत्त अट्ठेव ।**
**इंदिय ५ बल ३ ऊसासा १ उ १ पाणा य बोद्धवा ॥ ६६ ॥**

इन्द्रियबलोच्छ्वासायूंषि प्राणा इत्यभिधीयन्ते, ते च दश, तत्रेन्द्रियाणि—स्पर्शनादीनि पञ्च, बलं कायवाङ्मनोभेदात् त्रिधा, उच्छ्वासशब्देनाविनाभावित्वान्निःश्वासो गृह्यते तत उच्छ्वासनिःश्वासरूप एको भेदः, आयुश्च दशममिति । सम्प्रति येषां जीवानां यावन्तः प्राणाः सम्भवन्तीत्येतदाह—'चउछक्के'त्यादि, इह सूचकत्वात्सूत्रस्य 'इगि'त्ति एकेन्द्रियाः 'विकल'त्ति विकलेन्द्रियाः द्वित्रिचतुरिन्द्रिया इत्यर्थः, तत एकेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणां च यथासङ्ख्यं चत्वारः षट् सप्त अष्टौ च प्राणा भवन्ति, इयमत्र भावना—स्पर्शनेन्द्रियकायबलोच्छ्वासायुर्लक्षणाश्चत्वारः प्राणा एकेन्द्रियाणां पृथिव्यादीनां, स्पर्शनेन्द्रियरसनेन्द्रियकायबलवाग्बलोच्छ्वासायुःस्वरूपाः षट् प्राणा द्वीन्द्रियाणां, त एव घ्राणेन्द्रियसहिताः सप्त प्राणास्त्रीन्द्रियाणां, त एव सप्त चक्षुरिन्द्रियसहिता अष्टौ प्राणाश्चतुरिन्द्रियाणां, तथा असंज्ञिनां संज्ञिनां च नव दश प्राणा बोद्धव्याः, अत्राप्ययमर्थः—इन्द्रियपञ्चककायवाग्बलोच्छ्वासनिःश्वासायुर्लक्षणा नव प्राणा असंज्ञिपञ्चेन्द्रियाणां, संज्ञिपञ्चेन्द्रियाणां तु पूर्वोक्ता दशापि प्राणा भवन्तीति १७० ॥६६॥ सम्प्रति 'दस कप्पदुम'त्त्येकसप्तत्यधिकशततमं द्वारमाह—

**मत्तंगया य १ भिंगा २ तुडियंगा ३ दीव ४ जोइ ५ चित्तंगा ६ । चित्तरसा ७ मणियंगा ८ गेहागारा ९ अणियणा य १० ॥ ६७ ॥ मत्तंगएसु मज्जं सुहपेज्जं १ भायणा य भिंगेसु २ । तुडियंगेसु य संगयतुडियाइं बहुप्पगाराइं ३ ॥ ६८ ॥ दीवसिहा ४ जोइसनामगा य एए करेंति उज्जोयं ५ । चित्तंगेसु य मल्लं ६ चित्तरसा भोयणट्ठाए ७ ॥ ६९ ॥ मणियंगेसु य भूसणवराइं ८ भवणाइ भवणरुक्खेसु ९ । तह अणियणेसु धणियं वत्थाइं बहुप्पयाराइं १० ॥ ७० ॥**

इह मत्तं—मदस्तस्याङ्गं—कारणं मदिरास्तद्ददतीति मत्ताङ्गदाः यद्वा मत्तस्य—मदस्याङ्गं—कारणं मदिरारूपं येषु ते मत्ताङ्गास्त एव मत्ताङ्गकाः १ 'भिंग'त्ति भृतं—भरणं पूरणं तत्राङ्गानि—कारणानि भृताङ्गानि—भाजनानि, न हि भरणक्रिया भरणीयं भाजनं विना भवतीति तत्सम्पादकत्वाद् वृक्षा अपि भृताङ्गाः प्राकृतत्वाच्च भिंगा उच्यन्ते २ तथा त्रुटितानि—तूर्याणि तत्कारणत्वात् त्रुटिताङ्गाः ३ 'दीवजोइचित्तंग'त्ति इहाङ्गशब्दः प्रत्येकमभिसम्बध्यते, ततो दीपः—प्रकाशकं वस्तु तत्कारणत्वाद्दीपाङ्गाः ४ ज्योतिः—अग्निस्तत्र च सुषमसुषमायामग्नेरभावात् ज्योतिरिव यद्वस्तु सोष्मप्रकाशकमिति भावः तत्कारणत्वाज्ज्योतिरङ्गाः ४ तथा चित्रस्य—अनेकप्रकारस्य विवक्षाप्राधान्यात् माल्यस्य कारणत्वाच्चित्राङ्गाः ६ तथा चित्रा—विविधा मनोज्ञा रसा—मधुरादयो येभ्यस्ते चित्ररसाः ७ तथा मणीनां—मणिप्रधानाभरणानां कारणत्वान्मण्यङ्गाः ८ तथा गेहं—गृहं तद्वदाकारो येषां ते गृहाकाराः ९ 'अणियण'त्ति विचित्रवस्त्रदायित्वान्न विद्यन्ते नग्नास्तन्निवासिनो जना येभ्यस्तेऽनग्नाः १० इत्येते दश कल्पद्रुमा भवन्तीति ॥ ६७ ॥ अथैतेषां मध्ये येषु यद्भवति तदाह—मत्ताङ्गकेषु कल्पद्रुमेषु सुखपेयं परमातिशयसंपन्नवर्णादिविशिष्टत्वेन पातुमभिलषणीयं सुपक्वेक्षुद्राक्षादिरसनिष्पन्नं मद्यं भवति, कोऽर्थः ?—तेषां फलानि

विशिष्टबलवीर्यकान्तिहेतुविश्रसापरिणतसरससुगन्धिविविधपरिपाकागतहृद्यमद्यपरिपूर्णानि स्फुटित्वा स्फुटित्वा मद्यं मुञ्चन्तीति १ तथा भृताङ्गेषु भाजनानि—स्थालप्रभृतीनि भवन्ति, अयमर्थः—यथा इह मणिकनकरजतादिमयविचित्रभाजनानि स्थालप्रभृतीनि दृश्यन्ते तथैव विश्रसापरिणतैरपरिमितैः स्थालकच्चोलककलशकरकादिभिर्भाजनैः फलैरिवोपशोभमानाः प्रेक्ष्यन्ते २ तथा त्रुटिताङ्गेषु सङ्गतानि—सम्यग्-यथोक्तरीत्या सम्बद्धानि त्रुटितानि—आतोद्यानि बहुप्रकाराणि—ततविततघनशुषिरभेदभिन्नानि फलानीव भवन्ति, तत्र 'ततं—वीणादिकं ज्ञेयं, विततं—पटहादिकम् । घनं तु—कांस्यतालादि, शुषिरं—काहलादिक ॥ १ ॥' मिति ३ तथा दीपशिखा ज्योतिषिकनामकाश्च एते कल्पतरव उद्योतं—प्रकाशं कुर्वन्ति, इदमुक्तं भवति—यथेह स्निग्धं प्रज्वलन्त्यः काञ्चनमणिमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वद्विश्रसापरिणताः ( दीपशिखाकल्पवृक्षाः ) प्रकृष्टोद्योतेन सर्वमुद्योतयन्तो वर्तन्ते ज्योतिषिकास्तु सूर्यमण्डलमिव स्वतेजसा सर्वमप्यवभासयन्तः सन्तीति ४–५ तथा चित्राङ्गेषु माल्यम्—अनेकप्रकारसरससुरभिनानावर्णकुसुमदामरूपं भवति ६ तथा चित्ररसा भोजनार्थाय—युगलधार्मिकाणां भोजननिमित्तं भवन्ति, एतदुक्तं भवति—इहत्यविशिष्टदालिकलमशालिशालनकपकान्नप्रभृतिभ्योऽतीवापरिमितस्वादुतादिगुणोपेतेन्द्रियबलपुष्टिहेतुहृद्यखाद्यभोज्यपदार्थपरिपूर्णैः फलमध्यैर्विराजमानाश्चित्ररसाः संतिष्ठन्ति ७ तथा मण्यङ्गेषु वराणि—श्रेष्ठानि भूषणानि विश्रसापरिणतानि कटककुण्डलकेयूरादीन्याभरणानि भवन्ति ८ तथा भवनवृक्षेषु गेहाकारनामकेषु कल्पद्रुमेषु भवनानि—विश्रसापरिणामत एव प्रांसुप्राकारोपगूढसुखारोहसोपानपङ्क्तिविचित्रचित्रशालावितत वातायनानेकगुप्तप्रकटापवरककुट्टिमतलाद्यलङ्कृतानि नानाविधानि निकेतनानि भवन्ति ९ तथा अनग्नेषु कल्पपादपेषु धणियं—अत्यर्थं बहुप्रकाराणि विचित्राणि वस्त्राणि—विश्रसावशत एवातिसूक्ष्मसुकुमारदेवदूष्यानुकारीणि मनोहारीणि निर्मलभांसि वासांसि समुपजायन्त इति १० । १७१ ॥ ६८ ॥ ६९ ॥७०॥ इदानीं 'नरय'त्ति द्विसप्तत्यधिकशततमं द्वारमाह—

**घम्मा १ वंसा २ सेला ३ अंजण ४ रिट्ठा ५ मघा ६ य माघवई ७ । नरयपुढवीण नामाइं हुंति रयणाइं गोत्ताइं ॥ ७१ ॥ रयणप्पह १ सक्करपह २ वालुयपह ३ पंकपहभिहाणाओ ४। धूमपह ५ तमपहाओ ६ तह महातमपहा ७ पुढवी ॥ ७२ ॥**

इह यदनादिकालप्रसिद्धमन्वर्थरहितमभिधानं तत्सर्वकालं यथाकथञ्चिदन्वर्थनिरपेक्षतया नमनात्–प्रवर्तनान्नामेत्युच्यते, यत्पुनः सान्वर्थं तद्गोः–स्वाभिधायकवचनस्य त्राणाद्–यथार्थत्वसम्पादनेन पालनाद्गोत्रमिति, तत्र घर्मा वंशा शैला अञ्जना रिष्ठा मघा माघवती चेत्येतानि नरकपृथिवीनां सप्तानां यथाक्रमं नामानि भवन्ति, तथा 'रयण'त्ति एकदेशेन समुदायोपचाराद्रत्नप्रभादीनि गोत्राणि भवन्ति, तत्र प्रभाशब्दो वाहुल्यवाची, ततो रत्नानां–कर्केतनादीनां प्रभा–वाहुल्यं यस्यां सा रत्नप्रभा रत्नवहुलेति भावः, एवं शर्कराणामुपलखण्डानां प्रभा यस्यां सा शर्कराप्रभा, वालुकायाः परुषपांसूत्कररूपायाः प्रभा यस्यां सा वालुकाप्रभा, पङ्कस्य प्रभा यस्यां सा पङ्कप्रभा, कर्दमाभद्रव्योपलक्षितेत्यर्थः, धूमस्य प्रभा यस्यां सा धूमप्रभा, धूमाभद्रव्योपलक्षितेति भावः, तमसः प्रभा–वाहुल्यं यत्र सा तमःप्रभा, तथा महातमसः–अतिशायितमसः प्रभा–वाहुल्यं यत्र सा महातमःप्रभा, अपरे तु तमस्तमस्य–प्रकृष्टतमसस्तमस्तमसो वा–अत्यन्ततमसः प्रभा–वाहुल्यं यस्यां सा तमस्तमःप्रभेति वा मन्यन्त इति १७२ ॥ ७१ ॥ ७२ ॥ सम्प्रति 'नेरइयाणं आवास'त्ति त्रिसप्तत्यधिकशततमं द्वारमाह—

**तीसा य १ पन्नवीसा २ पन्नरस ३ दस ४ चेव तिन्नि ५ य हवंति । पंचूण सयसहस्सं ६ पंचेव ७ अणुत्तरा नरया ॥ ७३ ॥**

नारकाणामावासाः क्रमशः सप्तस्वपि पृथिवीषु त्रिंशल्लक्षादयो भवन्ति, तथाहि—प्रथमायां पृथिव्यां त्रिंशच्छतसहस्रा लक्षा इत्यर्थः, एवं द्वितीयस्यां पञ्चविंशतिः तृतीयस्यां पञ्चदश चतुर्थ्यां दश पञ्चम्यां त्रीणि षष्ठयां पञ्चभिरूनं शतसहस्रं लक्षमित्यर्थः सप्तम्यां पञ्चैवानुत्तराः—सर्वाधोवर्तिनो नारकावासाः, ते चैवं—पूर्वस्यां दिशि कालनामा नरकावासः अपरस्यां दिशि महाकालः दक्षिणस्यां रोरुकः उत्तरस्यां महारोरुकः मध्येऽप्रतिष्ठानकः, मिलिताश्चैते चतुरशीतिर्लक्षाः १७३ ॥ ७३ ॥ सम्प्रति 'वेयण'त्ति चतुःसप्तत्यधिकशततमं द्वारमाह—

**सत्तसु खेत्तसहावा अन्नोऽन्नुदीरिया य जा छट्टी । तिसु आइमासु वियणा परमाहम्मियसुरकया य ॥ ७४ ॥**

क्षेत्रस्वभावा—क्षेत्रस्वभावसमुद्भूता दुःखवेदना तावदविशेषेण सप्तस्वपि नरकपृथिवीषु भवति, 'अन्नोऽन्नुदीरिया य जा छट्ठी'त्ति यावच्छब्दोऽयमव्ययत्वेनानेकार्थत्वादिह मर्यादावाची, ततोऽन्योऽन्योदीरिता—नारकैरेव परस्परमुपजनिता वेदना षष्ठीं पृथिवीं यावत्—षष्ठया अर्वाक्पञ्चमीमभिव्याप्य भवतीति, इदमुक्तं भवति—अन्योऽन्योदीरिता वेदना द्विधा—प्रहरणकृता शरीरकृता च, तत्र प्रहरणकृता आद्यास्वेव पञ्चसु पृथिवीषु भवति, शरीरकृता तु सामान्येन सप्तस्वपि पृथिवीषु, न चैतदनार्षं, तथा चोक्तं जीवाभिगमोपांगे—"इमीसे णं भंते ! रयणप्पभाए पुढवीए नेरइया जाव एगत्तंपि पहू विउव्वित्तए पुहुत्तंपि पहू विउव्वित्तए', एगत्तं विउव्वमाणा एगं महं मुग्गररूवं वा मुसुंढीरूवं वा एवं करवत्तअसिसत्तिहलगयामुसलचक्कनारायकुंततोमरसूललगुडजाव भिंडिमालरूवं वा, पुहुत्तं विउव्वेमाणा मुग्गररूवाणि वा जाव भिंडमालरूवाणि वा, ताइं संखेज्जाइं नो असंखेज्जाइं संबद्धाइं नो असंबद्धाइं सरिसाइं नो असरिसाइं विउव्वंति, विउव्वित्ता अन्नमन्नस्स कायं अभिभवमाणा वेयणं उदीरयन्ति, एवं जाव धूमप्पभाए पुढवीए, छट्ठसत्तमासु णं पुढवीसु नेरइया

लोहियकुंथुरूवाइं वइरामयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा २ खाएमाणा २ सयपोराकिमिया इव चालेमाणा चालेमाणा अन्तो अन्तो अणुप्पविसमाणा वेयणमुदीरयन्ति" त्ति [ अस्यां भदन्त ! रत्नप्रभायां पृथिव्यां नैरयिका यावद् एकत्वमपि प्रभुर्विकुर्वितुं पृथक्त्वमपि प्रभुर्विकुर्वितुं ?, एकत्वं विकुर्वन्त एकं महत् मुद्गररूपं वा मुपण्ढीरूपं वा एवं करपत्रासिशक्तिहलगदामुशलचक्रनाराचकुन्ततोमरशूललकुटयावत्मिण्डिमालरूपं वा, पृथक्त्वं विकुर्वन्तो मुद्गररूपाणि वा यावद् मिण्डिमालरूपाणि वा, तानि सङ्ख्येयानि नासङ्ख्येयानि सम्बद्धानि नासम्बद्धानि सदृशानि नासदृशानि विकुर्वन्ति, विकुर्व्य अन्योऽन्यस्य कायमभिभवन्तो वेदनामुदीरयन्ते, एवं यावद् धूमप्रभायां पृथ्व्यां, षष्ठीसप्तम्योः पृथ्व्योर्नैरयिका लौहिककुन्थुरूपाणि वज्रमयतुण्डानि गोमृतककीटसमानानि विकुर्व्य अन्योऽन्यस्य कायं समतुरङ्गायमाणाः २ खादन्तः २ शतपर्वकृमय इव चालयन्तः २ अन्तरन्तरनुप्रविशन्तो वेदनामुदीरयन्ते ]। अत्र पृथक्त्वशब्दो बहुत्ववाची, ततः पृथक्त्वं—प्रभूतानि मुद्गरादीनि मिण्डिमालपर्यन्तानि प्रहरणानि विकुर्वन्तः परिमितानि स्वशरीरसंलग्नानि समानरूपाणि च विकुर्वन्ति, असङ्ख्यातानां स्वशरीरपृथग्भूतानां विसदृशानां च प्रहरणानां विकुर्वणे तथाभवस्वाभाव्येन सामर्थ्याभावात्, 'समतुरङ्गेमाणा समतुरङ्गेमाणा' इति समतुरङ्गा इवाचरन्तः समतुरङ्गायमाणाः, अश्वा इवान्योऽन्यमारोहन्त इत्यर्थः, शतपर्वकृमय इव—इक्षुकृमय इव 'चालेमाणा चालेमाणा' शरीरमध्येन सञ्चरन्तः सञ्चरन्त इति ॥ तथा तिसृष्वाद्यासु पृथिवीषु परमाधार्मिकसुरकृताऽपि वेदना भवति, तत्र क्षेत्रस्वभावजा ( ग्रन्थाग्रं १३००० ) रत्नप्रभाशर्कराप्रभावालुकाप्रभासूष्णा, एतन्नारकाणां हि शीतयोनिकत्वेन केवलं हिमप्रतिमशीतप्रदेशात्मकत्वात् योनिस्थानादन्यत्र च सर्वस्यापि भूम्यादेः खदिराङ्गारेभ्योऽप्यत्यन्तप्रतप्तत्वाद्गाढतर उष्णवेदनानुभवः, एवमन्यास्वपि वाच्यं, पङ्कप्रभायां बहुपूपरितनेषु नरकावासेषूष्णा अधस्तनेषु स्तोकेषु च शीता, धूमप्रभायां

शीता स्तोकेषूष्णा, षष्ठ्यां सप्तम्यां च पृथिव्यां केवला शीता वेदनैव, इयं च वेदना सर्वाऽप्यधोऽधोऽनन्तगुणतया तीव्रा तीव्रतरा तमा चावसेया, उष्णवेदनायाः शीतवेदनायाश्च स्वरूपं पुनरित्थं प्रदर्शयन्ति प्रवचनवेदिनः—यथा निदाघचरमसमयमध्याह्ने नभोयमधिरूढे प्रौढे चण्डरोचिषि सर्वथाऽपि जलदपटलविकले गगनतले मनागप्यस्फुरति मारुति प्रभूतपित्तकोपाभिभूतस्य कृतातपवारणनिवारणस्य सर्वतः प्रज्वलज्ज्वलनज्वालाकरालितकलेवरस्य कस्यचित्पुंसः किल वाक्पथातीतसंवेदना यादृगुष्णवेदना प्रादुर्भवति ततोऽप्युष्णवेदनेषु नरकेषु नारकाणामनन्तगुणा, अपिच—यदि नारका उष्णवेदनेभ्यो नरकेभ्य उत्पाट्य धमनीमुखोध्मायमानखादिराङ्गारराशिशय्याशायिनः क्रियन्ते तदा सुधारससेकातिरेकनिर्वाप्यमाणा इवात्यन्तसुखास्वादमेदुरमनसो निद्रामपि लभेरन् । तथा पौषे माघे वा निशीथे सर्वथाऽप्यभ्रविभ्रमविरहितेऽपि वियति सर्वतोऽपि वपुःप्रकम्पकृति प्रवाति वाते तुषारशिखरिशिखरकृतस्थितेस्तुहिनकणगणसम्पर्किणो निरग्नेर्निराश्रयस्य निरावरणस्य पुंसो या शीतवेदना ततो भवति शीतवेदनेषु नारकाणामनन्तगुणा, किञ्च—यदि ते नारकाः शीतवेदनेभ्यो नरकेभ्य उत्पाट्य यथोक्तपुरुषस्थाने स्थाप्यन्ते तदा ते प्राप्तात्यन्तनिर्वातस्थाना इव निरुपमसुखसम्पत्तेर्निद्रामप्यासादयेयुरिति । तथा क्षुत्पिपासाकण्डूपारवश्यज्वरदाहभयशोकादिकाऽन्याऽपि नारकाणां वेदना श्रुते श्रूयते, तथाहि—ते नारकाः सर्वदैवाक्षयक्षुदग्निदह्यमानशरीराः सकलजगद्गतसुस्निग्धघृतादिपुद्गलाहारेणापि न तृप्यन्ति, पिपासाऽपि तेषां शश्वत्कण्ठोष्ठतालुजिह्वादिशोषकृन्निखिलपयोधिपयःपानेऽपि नोपशाम्यति, कण्डूः पुनः कण्डूयमाना क्षुरिकादिभिरप्यनुच्छेद्या, पारवश्यज्वरदाहभयशोकादयोऽप्यत्रत्येभ्योऽनन्तगुणाः, यदपि च नारकाणामवधिज्ञानं विभङ्गज्ञानं वा तदपि तेषां दुःखकारणं, ते हि दूरत एव तिर्यगूर्द्ध्वमधश्च निरन्तरं दुःखहेतुमापतन्तमालोकयन्ति, आलोक्य च भयेन कम्पमानकायाः सोद्वेगमवतिष्ठन्ते । इयं सर्वाऽपि क्षेत्रस्वभावजा दुःखवेदना, अथ परस्परो-

दीरिता प्रतिपाद्यते—इह द्विविधा नारकाः—सम्यग्दृष्टयो मिथ्यादृष्टयश्च, तत्र ये मिथ्यादृष्टयस्ते मिथ्याज्ञानावलिप्तचेतसः परमार्थमजानानाः परस्परमुदीरयन्ति दुःखानि, ये तु सम्यग्दृष्टयस्ते तु नूनमस्माभिः कृतं जन्मान्तरेऽपि तत्किमपि पापं प्राणिहिंसादिरूपं येन निमग्ना वयं परमदुःखाम्भोधाविति परिभावयन्तः सहन्ते सम्यक्परोदीरितानि दुःखानि न पुनरन्येषामुत्पादयन्ति, दृष्टनिजकर्मविपाकत्वात्, अत एव च ते मिथ्यादृष्टिभ्योऽधिकतरदुःखाः प्रवचने प्रतिपाद्यन्ते, भूयिष्ठतया मानसिकदुःखसम्भवात्, येऽपि च मिथ्यादृष्टयः परस्परमुदीरयन्ति दुःखानि तेऽप्येवं—यथेह जगत्यपूर्वाद् ग्रामान्तरादागच्छतः शुनो दृष्ट्वा तद्ग्रामवास्तव्याः श्वानो निर्दयं क्रुद्ध्यन्ति परस्परं प्रहरन्ति च तथा नारका अपि विभङ्गज्ञानबलेन दूरत एवान्योऽन्यमालोक्य क्रोधान्धा वैक्रियं भयानकं रूपमाधाय तेष्वेव स्वस्वनरकावासेषु क्षेत्रानुभावजनितानि पृथिवीपरिणामरूपाणि शूलशिलामुद्गरकुन्ततोमरखङ्गयष्टिपरशुप्रभृतीनि प्रहरणानि वैक्रियाणि वाऽऽदाय तैः करचरणदशनैश्च परस्परमभिघ्नन्ति, ततः परस्पराभिघाततो विकृताङ्गा निस्स्वनन्तो गाढवेदनाः सूनान्तःप्रविष्टमहिषादय इव रुधिरकर्दमे विचेष्टन्ते, एवमादिकाः परस्परोदीरिता दुःखवेदनाः, परमाधार्मिककृतास्तु तप्तत्रपुपानतप्तायोमयस्त्रीसमालिङ्गनकूटशाल्मल्यग्रारोपणअयोघनाघातवास्यादितक्षणक्षतक्षारोष्णतैलक्षेपणकुन्तादिप्रोतनभ्राष्ट्रभर्जनयन्त्रपीलनकरपत्रपाटनवैक्रियानेककाकोलूकसिंहादिकदर्थनतप्तवालुकावतारणअसिपत्रवनप्रवेशनवैतरणीतरङ्गिणीप्लावनपरस्परायोधनादिजनिता अपरिमिताः समयसमुद्रादवगन्तव्याः । किञ्च—कुम्भीषु पच्यमानास्तीव्रतापात्ते नारका उत्कर्षतः पञ्च योजनशतान्यूर्द्ध्वमुच्छलन्ति, तथा चोक्तं जीवाभिगमे—'नेरइयाणुप्पाओ उक्कोसं पंच जोयणसयाइं । दुक्खेणऽभिहुयाणं वेयणसयसंपगाढाणं ॥ १ ॥' [ नैरयिकाणामुत्पात उत्कृष्टतः पञ्च योजनशतानि । दुःखे-

नामिद्रुतानां वेदनाशतसंप्रगाढानां ॥ १ ॥ ] पतन्तश्च विकुर्वितैर्वज्रतुण्डैरण्डजैरन्तराले त्रोटिभिस्त्रोट्यन्ते किञ्चिच्छेषास्तु भूमिपतिता व्याघ्रादिभिर्विलुप्यन्त इति १७४ ॥ ७४ ॥ इदानीं 'आउ'त्ति पञ्चसप्तत्यधिकशततमं द्वारमाह—

**सागरमेगं १ तिय २ सत्त ३ दस ४ य सत्तरस ५ तह य बावीसा ६ । तेत्तीसं ७ जाव ठिई सत्तसु पुढवीसु उक्कोसा ॥ ७५ ॥ जा पढमाए जेट्ठा सा बीयाए कणिट्ठिया भणिया । तरतमजोगो एसो दसवाससहस्स रयणाए ॥ ७६ ॥**

सप्तस्वपि नरकपृथिवीष्वियं यथासङ्ख्यमुत्कृष्टा स्थितिः, तद्यथा—रत्नप्रभायां पृथिव्यां सागरोपममेकमुत्कृष्टा स्थितिः शर्कराप्रभायां त्रीणि सागरोपमाणि वालुकाप्रभायां सप्त पङ्कप्रभायां दश धूमप्रभायां सप्तदश तमःप्रभायां द्वाविंशतिः तमस्तमःप्रभायां त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिरिति ॥ ७५ ॥ सम्प्रति सप्तस्वपि पृथिवीषु जघन्यां स्थितिमाह—'जे'त्यादि, या प्रथमायां—रत्नप्रभायां ज्येष्ठा—उत्कृष्टा स्थितिरेकसागरोपमलक्षणा सा द्वितीयायां पृथिव्यां शर्कराप्रभाभिधानायां कनिष्ठा—जघन्या भणिता, एष तरतमयोगो—जघन्योत्कृष्टस्थितियोगः सर्वास्वपि पृथिवीषु भावनीयः, तद्यथा—या द्वितीयायामुत्कृष्टा सा तृतीयायां जघन्या या तृतीयायामुत्कृष्टा सा चतुर्थ्यां जघन्या एवं या षष्ठ्यामुत्कृष्टा सा सप्तम्यां जघन्या, रत्नप्रभायां प्रथमपृथिव्यां जघन्या स्थितिर्दश वर्षसहस्राणीति, अयमभिप्रायः—प्रथमपृथिव्यां रत्नप्रभायां जघन्या स्थितिर्दश वर्षसहस्राणि शर्कराप्रभायामेकं सागरोपमं वालुकाप्रभायां त्रीणि सागरोपमाणि पङ्कप्रभायां सप्त धूमप्रभायां दश तमःप्रभायां सप्तदश तमस्तमःप्रभायां कालादिषु चतुर्षु नरकावासेषु द्वाविंशतिसागरोपमाणि जघन्या स्थितिः जघन्योत्कृष्टान्तरालवर्तिनी तु स्थितिः सर्वत्र मध्यमा बोद्धव्या १७५ ॥ ७५ ॥ ७६ ॥ इदानीं 'तणुमाणं'ति षट्सप्तत्यधिकशततमं द्वारमाह—

**पढमाए पुढवीए नेरइयाणं तु होइ उच्चत्तं । सत्त धणु तिन्नि रयणी छच्चेव य अंगुला पुण्णा ॥ ७७ ॥ सत्तमपुढवीएँ पुणो पंचेव धणुस्सयाइं तणुमाणं । मज्झिमपुढवीसु पुणो अणेगहा मज्झिमं नेयं ॥ ७८ ॥ जा जम्मि होइ भवधारणिज्ज अवगाहणा य नरएसु । सा दुगुणा बोद्धव्वा उत्तरवेउव्वि उक्कोसा ॥ ७९ ॥ भवधारणिज्जरूवा उत्तरविउव्विया य नरएसु । ओगाहणा जहन्ना अंगुलअस्संखभागो उ ॥ ८० ॥**

अवगाहते—अवतिष्ठते जीवोऽस्यामित्यवगाहना—तनुः शरीरमित्येकोऽर्थः, सा द्विधा—भवधारणीया उत्तरवैक्रिया च, भवे—नारकादावायुःसमाप्तिं यावदनवरतं धार्यतेऽसाविति भवधारणीया, स्वाभाविकं शरीरमित्यर्थः, सहजशरीरग्रहणोत्तरं—उत्तरकालं कार्यविशेषमाश्रित्य विविधा क्रियत इत्युत्तरवैक्रिया, एकैकाऽपि च द्विधा—जघन्या उत्कृष्टा च, तत्र प्रथमं तावत् प्रतिपृथिवि उत्कृष्टा भवधारणीयाऽवगाहना प्रोच्यते—प्रथमायां रत्नप्रभायां पृथिव्यां नारकाणामुत्कर्षतो भवधारणीयावगाहनोच्चत्वं सप्त धनूंषि तिस्रो रत्नयः—त्रयो हस्ता इत्यर्थः, षडेव चाङ्गुलानि पूर्णानि, उत्सेधाङ्गुलेन सपादैकत्रिंशद्धस्ता इति भावः, सप्तमपृथिव्यां पुनः पञ्चैव धनुःशतान्युत्कर्षतो नारकाणां तनुमानं—शरीरोच्छ्रयः, मध्यमपृथिवीषु—शर्कराप्रभाद्यासु तमःप्रभापर्यन्तासु पुनर्मध्यमं—प्रथमसप्तमपृथिवीनारकतनुमानयोर्मध्यवर्ति अनेकधा, पूर्वपूर्वपृथिवीत उत्तरोत्तरपृथिवीषु द्विगुणद्विगुणं तनुमानमुत्कर्षतो ज्ञातव्यं, तथाहि—रत्नप्रभानारकतनुमानाद् द्विगुणं शर्कराप्रभायां—पञ्चदश धनूंषि द्वौ हस्तौ द्वादश चाङ्गुलानि देहमानं, एवं वालुकाप्रभायामेकत्रिंशद्धनूंषि एको हस्तः पङ्कप्रभायां द्वाषष्टिर्धनूंषि द्वौ हस्तौ धूमप्रभायां पञ्चविंशं धनुःशतं तमःप्रभायां सार्धे द्वे धनुःशते तमस्तमःप्रभायां पञ्चैव धनुःशतानीति ॥ ७७ ॥ सम्प्रति

प्रतिपृथिव्युत्कर्षत उत्तरवैक्रियामवगाहनामाह—'जा जम्मी'त्यादि, सप्तसु नरकेषु—नरकपृथिवीषु मध्ये यस्मिन्नरके—नरकपृथिव्यामुत्कृष्टा भवधारणीया याऽवगाहना उक्ता सा द्विगुणा सती यावत्प्रमाणा भवति तावती तस्यां नरकपृथिव्यामुत्कृष्टा उत्तरवैक्रियरूपा अवगाहना वोद्धव्या, तद्यथा—रत्नप्रभायामुत्कृष्टा उत्तरवैक्रियावगाहना पञ्चदश धनूंषि द्वौ च सार्धौ हस्तौ शर्कराप्रभायामेकत्रिंशद्धनूंषि एको हस्तः वालुकाप्रभायां द्वाषष्टिर्धनूंषि द्वौ च हस्तौ पङ्कप्रभायां पञ्चविंशं धनुःशतं धूमप्रभायां सार्धे द्वे शते तमःप्रभायां पञ्च धनुःशतानि तमस्तमःप्रभायां धनुःसहस्रमिति ॥७९॥ सम्प्रति भवधारणीयामुत्तरवैक्रियां च जघन्यामाह—'भवे'त्यादि, नरकेषु—सर्वासु नरकपृथिवीषु नारकाणां जघन्या भवधारणीया अङ्गुलस्यासङ्ख्येयो भागः, सा चोत्पत्तिसमये द्रष्टव्या, न त्वन्यदा, उत्तरवैक्रियरूपा पुनरवगाहना जघन्याऽङ्गुलसङ्ख्येयभागमात्रा, साऽपि च प्रारम्भकाले द्रष्टव्या, केवलं सा प्रथमसमयेऽपि तथाविधप्रयत्नाभावादङ्गुलसङ्ख्येयभागमात्रैव भवति न त्वसङ्ख्येयभागमात्रा, केचिच्च 'अंगुलअसंखभागो उ' इति पठन्तो जघन्यामुत्तरवैक्रियामप्यङ्गुलासङ्ख्यातभागप्रमाणामाहुः, तदसङ्गतमेव समयविरोधात्, तथा च प्रज्ञापनासूत्रम्—"तत्थ णं जा सा उत्तरवेउव्विया सा जहन्नेणं अंगुलस्स संखेज्जइभागं उक्कोसेणं धणुसहस्स"मिति, तथा अनुयोगद्वारटीकायां हरिभद्रसूरिरप्याह—"उत्तरवैक्रिया तु तथाविधप्रयत्नाभावादाद्यसमयेऽप्यङ्गुलसङ्ख्येयभागमात्रैवे"ति १७६ ॥ ८० ॥ इदानीं 'उप्पत्तिनासविरहो'त्ति सप्तसप्तत्यधिकशततमं द्वारमाह—

चउवीसइं मुहुत्ता १ सत्त अहोरत्त २ तह य पन्नरस ३। मासो य ४ दो य ५ चउरो ६ छम्मासा ७ विरहकालो उ ॥ ८१ ॥ उक्कोसो रयणाइसु सव्वासु जहन्नओ भवे समयो । एमेव य उव्वट्टणासंखा पुण सुरवरुतुल्ला (राण समा) ॥ ८२ ॥

इह नरकगतौ तिर्यङ्मनुष्यगतिका जीवास्तावदनवरतं सदैवोत्पद्यन्ते कदाचित्त्वन्तरमपि भवति, तत्र सामान्येन सर्वामपि नरकग-
तिमाश्रित्य जघन्येनैकः समयः उत्कृष्टतस्तु द्वादश मुहूर्ताः, एतावन्तं कालमन्यत आगत्यैकोऽपि जन्तुर्नरकगतौ नोत्पद्यते इति भावः,
इदं च सूत्रेऽनुक्तमपि स्वयमेव द्रष्टव्यं, यदुक्तम्—"निरइगई णं भन्ते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ?, गोयमा ! जहन्नेणं
एकं समयं उक्कोसेणं बारस मुहुत्त"त्ति, प्रतिपृथिवीषू(वितू)त्पादान्तरमुत्कृष्टतो रत्नप्रभायां चतुर्विंशतिर्मुहूर्ताः शर्कराप्रभायां सप्ताहोरात्राः
वालुकाप्रभायां पञ्चदश पङ्कप्रभायामेको मासः धूमप्रभायां द्वौ मासौ तमःप्रभायां चत्वारो मासाः तमस्तमःप्रभायां षण्मासा विरह-
कालः—अन्तरकाल उत्कृष्टतः, जघन्यतः पुनः सर्वास्वपि रत्नप्रभादिकासु पृथिवीषु प्रत्येकं भवत्येकः समयो विरहकालः, 'एवमेव य
उवट्टण'त्ति यथोपपातविरहकाल उक्तः एवमेव उद्वर्तनविरहकालोऽपि जघन्यत उत्कर्षतश्च वाच्यः, किमुक्तं भवति ?—नरकेभ्यो नारकाः
प्रायः सततं च्यवन्ते कदाचिदेव त्वन्तरं, तत्र सामान्येन नरकगतिमाश्रित्य जघन्यत एकः समयः, उत्कृष्टतस्तु द्वादश मुहूर्ताः । विशे-
षचिन्तायां तु जघन्यतः सर्वास्वपि पृथिवीषु उद्वर्तनाविरहकाल एकः समयः, उत्कर्षतो रत्नप्रभायां चतुर्विंशतिर्मुहूर्ताः शर्कराप्रभायां
सप्त दिना वालुकाप्रभायां पक्षः पङ्कप्रभायां मासः धूमप्रभायां द्वौ मासौ तमःप्रभायां चत्वारो मासाः तमस्तमःप्रभायां षण्मासाः,
एकस्मिन्नारके उद्वृत्ते पुनरियता कालेनान्यो नारक उद्वर्तत इति भावः । 'संखा पुण सुरवरतुल्ल'त्ति उपपातोद्वर्तनयोः सङ्ख्या पुनरेक-
स्मिन् समये कियन्तो नारका उत्पद्यन्ते च्यवन्ते चेत्येवंलक्षणा सुरवरैस्तुल्या यथा सुराणां वक्ष्यते तथैव द्रष्टव्या, तद्यथा—एकस्मिन्
समये नारका उत्पद्यन्ते च्यवन्ते च जघन्यत एको द्वौ वा उत्कर्षतस्तु सङ्ख्याता असङ्ख्याता वेति १७७ ॥ ८१ ॥ ८२ ॥ सम्प्रति
'लेसाउ'त्ति अष्टसप्तत्यधिकशततमं द्वारमाह—

**काऊ १ काऊ २ तह काऊनील ३ नीला ४ य नीलकिण्हा ५ य । किण्हा ६ किण्हा ७ य तहा सत्तसु पुढवीसु लेसाओ ॥ ८३ ॥**

इह सामान्येन तावन्नारकाणां लेश्याषट्कमध्यादाद्याः कृष्णनीलकापोताख्यास्तिस्र एव लेश्या भवन्ति, ताश्च प्रतिपृथिवि प्रतिपाद्यन्ते, तत्र कापोतादयो लेश्याः सप्तस्वपि पृथिवीषु यथासङ्ख्येन भवन्ति, तथाहि—रत्नप्रभायामेका कापोतलेश्यैव भवति, शर्कराप्रभायामपि कापोतलेश्यैव, केवलं क्लिष्टतरा वेदितव्या, एवं सर्वत्र सजातीया विजातीया च लेश्याऽधोऽधः क्लिष्टतरा क्लिष्टतमा वाच्या, वालुकाप्रभायां कापोतनीला च लेश्या भवति, केषुचिदुपरितनेषु प्रस्तटेषु कापोतलेश्या केषुचिदधस्तनेषु नीललेश्येति भावः, पङ्कप्रभायां केवला नीललेश्यैव, धूमप्रभायां नीललेश्या कृष्णलेश्या च, केषुचिदुपरितनप्रस्तटेषु नीललेश्या शेषेष्वधस्तनप्रस्तटेषु कृष्णलेश्या भवतीत्यर्थः, तमःप्रभायामेकैव कृष्णलेश्या, तमस्तमःप्रभायामप्यतिसङ्क्लिष्टतमा कृष्णलेश्यैवेति, इह च केचिदाचक्षते—यथैता नारकाणां वक्ष्यमाणाश्च देवानां बाह्यवर्णरूपाः किल द्रव्यलेश्या अवगन्तव्याः, अन्यथा सप्तमपृथिवीनारकाणां या सम्यक्त्वप्राप्तिः श्रुतेऽभिधीयते सा न युज्यते, तैजस्यादिलेश्यात्रय एव तदवाप्तेरुक्तत्वात्, यदुक्तमावश्यके—"सम्मत्तस्स य तिसु उवरिमासु पडिवज्जमाणओ होइ । पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥ १ ॥" [ सम्यक्त्वस्य च तिसृषूपरितनीषु प्रतिपद्यमानको भवति । पूर्वप्रतिपन्नकोऽन्यतरस्यां पुनर्लेश्यायां ॥ १ ॥ ] उपरितन्यश्च तिस्रो लेश्यास्तेषां न सन्ति, सप्तमपृथिव्यां कृष्णलेश्याया एवोक्तत्वात्, तथा सौधर्मे तेजोलेश्यैव केवला वक्ष्यते, अस्याश्च प्रशस्तपरिणामहेतुत्वेन सङ्गमकादीनां भुवनगुरौ रौद्रोपसर्गकर्तृत्वानुपपत्तिः, तथा—'काऊ नीला कण्हा लेसाओ तिन्नि होंति नरएसु।' [ कापोती नीला कृष्णा लेश्यास्तिस्रो भवन्ति नरकेषु ] इत्यादिरूपो नियमोऽपि विरुध्यते 'देवाण नारयाण य दव्व-

ल्लेसा हवंति एयाओ । भावपरावत्तिइ पुण सुरनेरइयाण छल्लेसा ॥ १ ॥' [ देवानां नारकाणां च द्रव्यलेश्या भवन्त्येताः । भावपरावृत्तौ पुनः सुरनैरयिकाणां षट् लेश्याः ॥ १ ॥ ] इति वचनात्, तस्मादेता नारकाणां वक्ष्यमाणाश्च सुराणां बाह्यवर्णरूपा एवेति, तदेतदयुक्तममिप्रायापरिज्ञानात्, लेश्याशब्दो हि शुभाशुभे परिणामविशेषे व्याख्यातः, तस्य च परिणामविशेषस्योत्पादकानि कृष्णादिरूपाणि द्रव्याणि जन्तूनां सदा संनिहितानि सन्ति, एतैश्च कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनोच्यन्ते, गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिरूपाणि द्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते, ततश्च नारकाणां देवानां च या लेश्यास्ता द्रव्यलेश्या द्रष्टव्याः, तत्तल्लेश्याद्रव्याणि तस्य तस्य नारकस्य देवस्य वा सर्वदैवावस्थितोदयानि द्रष्टव्यानीति तात्पर्यं, न पुनर्बाह्यवर्णरूपाः, तानि च लेश्याद्रव्याणि तिर्यङ्मनुष्याणामन्यलेश्याद्रव्योपधाने विशुद्धवस्त्रमिव मञ्जिष्ठादिरागयोगे सर्वथा स्वरूपत्यागात्तद्रूपेणैव परिणमन्ते, अन्यथैतल्लेश्यायाः पल्योपमत्रयस्थितेरपि सम्भवादुत्कर्षतोऽप्यन्तर्मुहूर्तमागमोक्तं विरुध्येत, नारकदेवलेश्याद्रव्याणां तु तदन्यलेश्याद्रव्यसम्पर्के तदाकारमात्रं तत्प्रतिविम्बमात्रं वा जायते, न पुनः स्वस्वरूपपरिहारेण तद्रूपता, तथाहि—यथा वैडूर्यादिमणेः प्रोतकृष्णादिसूत्रसम्पर्कादस्पष्टं किञ्चित्तदाकारभावमात्रं भवति स्फटिकोपलस्य वा जपाकुसुमादिसन्निधानतः स्पष्टं तत्प्रतिविम्बमात्रं, न तूभयत्रापि तद्रूपतापत्तिः, तथा कृष्णादिलेश्याद्रव्याण्यपि नीलादिलेश्याद्रव्यौघं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं कदाचित्स्पष्टं तत्प्रतिविम्बमात्रं प्रतिपद्यन्ते, न पुनस्तद्वर्णगन्धरसस्पर्शतया परिणम्य नीलादिलेश्याद्रव्यरूपाण्येव भवन्ति, न चैतन्निजमनीषाविजृम्भितं, प्रज्ञापनायां लेश्यापदे इत्थमेव प्रतिपादितत्वात्, तत्सूत्रं च विस्तरभयान्न लिखितमिति । एवं च सप्तमपृथिव्यामपि यदा कृष्णलेश्या तेजोलेश्यादिद्रव्याणि प्राप्य तदाकारमात्रेण तत्प्रतिविम्बमात्रेण वाऽन्विता भवन्ति तदा सदावस्थितकृष्णलेश्याद्रव्ययोगेऽपि

साक्षात्तेजोलेश्यादिद्रव्यसाचिव्ये इव शुभः परिणामो नारकस्य जायते जपोपरक्तस्फटिकसन्निधाने स्फटिकस्य रक्ततावत्, तत्परिणामे
चास्य सम्यक्त्वावाप्तिरविरुद्धेति, न चैवमपि तेजोलेश्यादिसद्भावे सप्तमपृथिव्यां केवलकृष्णलेश्याभिधायिनः सूत्रस्य व्याघातः, यत-
स्तस्यां कृष्णैव सदावस्थायिनी तैजस्यादिका त्वाकारमात्रादिना कदाचिदेव जायते, न च जातापि चिरमवतिष्ठते, न चावस्थितायामपि
तस्यां कृष्णलेश्यादिद्रव्याणि सर्वथा स्वस्वरूपं त्यजन्ति, ततोऽधिकृतसूत्रे कृष्णैव सप्तम्यामुक्तेत्येवं सर्वत्र भावनीयं, अत एव सङ्गमका-
दीनामप्याकारमात्रादिना कृष्णलेश्यासम्भवादुपपद्यते त्रिभुवनगुरावुपसर्गविधातृत्वं, या अपि भावपरावृत्त्या सुरनारकाणां षडपि लेश्या
उक्तास्ता अपि प्रागुक्तेनैवाकारभावमात्रादिना प्रकारेण घटन्ते नान्यथा, लेश्यात्रयनियमस्तु सदावस्थितोदयलेश्याद्रव्यापेक्षत्वादविरुद्ध
इति, किंच—आसां बाह्यवर्णरूपत्वे प्रज्ञप्त्यादिषु—'नेरइया णं भंते! सव्वे समवन्ना?, गोयमा! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं
वुच्चइ?, गोयमा! नेरइया दुविहा पन्नत्ता, तंजहा—पुव्वोववन्नगा य पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नत-
रागा, जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा, से एणट्ठेणं गोयमा! एवं वुच्चइ—नो नेरइया सव्वे समवन्ना" इति वर्णमुक्त्वा
"नेरइया णं भंते! सव्वे समलेसा?, गोयमा! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ?, गोयमा! नेरइया दुविहा पन्नत्ता,
तंजहा—पुव्वोववन्नगा पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धलेसतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धले-
सतरागा, से एएणट्ठेणं गोयमा! एवं वुच्चइ—नो नेरइया सव्वे समलेस्सा" इति लेश्योक्तिरतिरिच्येत, वर्णानामेव लेश्यात्वाभ्युपगमात्,
तेषां च पूर्वसूत्रेणैव प्रतिपादितत्वादिति १७८ ॥ ८३ ॥ सम्प्रति 'अवहि'त्ति एकोनाशीत्यधिकशततमं द्वारमाह—

**चत्तारि गाउयाइं १ अद्धुट्ठाइं २ तिगाउयं चेव ३। अड्ढाइज्जा ४ दोन्नि य ५ दिवड्ढ ६ मेगं च ७ नरयोही ॥ ८४ ॥**

इह रत्नप्रभायां नरकावासेषु नारकाणां चत्वारि गव्यूतान्यवधिः—उत्कृष्टमवधिक्षेत्रप्रमाणं भवति, शर्कराप्रभायां तु अर्धं चतुर्थस्य येषु तान्यर्धचतुर्थानि गव्यूतानि, सार्धं गव्यूतत्रयमित्यर्थः, वालुकाप्रभायां गव्यूतत्रयं, पङ्कप्रभायामर्धं तृतीयस्य येषु तान्यर्धतृतीयानि गव्यूतानि, धूमप्रभायां द्वे गव्यूते, तमायां द्वितीयस्यार्धं यत्र तद् द्व्यर्धं गव्यूतं, सप्तमपृथिव्यां पुनरेकं गव्यूतमुत्कृष्टमवधिप्रमाणं, तथा सप्तस्वपि पृथिवीषु प्रत्येकमुत्कृष्टादवधिक्षेत्रप्रमाणादर्धगव्यूते व्यपनीते जघन्यमवधिक्षेत्रप्रमाणं भवति, तथाहि—प्रथमायां पृथिव्यां सार्धानि त्रीणि गव्यूतानि द्वितीयायां त्रीणि गव्यूतानि तृतीयायामर्धतृतीयानि गव्यूतानि चतुर्थ्यां द्वे गव्यूते पञ्चम्यां सार्धं गव्यूतं षष्ठ्यामेकं गव्यूतं सप्तम्यामर्धगव्यूतमिति, उक्तं च—"अद्धुट्ठगाउयाइं जहन्नयं अद्धगाउयंता" [अध्युष्टगव्यूतादिको जघन्योऽर्धगव्यूतान्तः] इति १७९ ॥ ८४ ॥ सम्प्रति 'परमाहम्मिय'त्त्यशीत्यधिकशततमं द्वारमाह—

**अंबे १ अंबरिसी २ चेव, सामे य ३ सबलेइ य ४। रुद्दो ५ वरुद्द ६ काले य ७, महाकालित्ति ८ आवरे ॥ ८५ ॥ असिपत्ते ९ धणू १० कुंभे ११, वालू १२ वेयरणी इय १३। खरस्सरे १४ महाघोसे १५, पन्नरस परमाहम्मिया ॥ ८६ ॥**

परमाश्च ते अधार्मिकाश्च सङ्क्लिष्टपरिणामत्वात् परमाधार्मिका—असुरविशेषाः, ते च व्यापारभेदेन पञ्चदश भवन्ति, तत्र यः परमाधार्मिको देवो नारकानम्बरतले नीत्वा निःशङ्कं विमुञ्चति सोऽम्ब इत्यभिधीयते १ यस्तु नारकान्निहतान् कल्पनिकाभिः खण्डशः

कृत्वा भ्राष्ट्रपाकयोग्यान् करोतीत्यसावम्बरीषस्य—भ्राष्ट्रस्य सम्बन्धादम्बरीष इति २ यस्तु रज्जुपाणिप्रहारादिना शातनपातनादिकं करोति वर्णतश्च श्यामः स श्याम इति ३ यश्चान्त्रवसाहृदयकालेज्यकादीन्युत्पाटयति वर्णतश्च शवलः—कर्बुरः स शबल इति ४ यः शक्तिकुन्तादिषु नारकान् प्रोतयति स रौद्रत्वाद्रौद्रः ५ यस्तु तेषामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्रः ६ यः पुनः कण्डादिषु पचति वर्णतश्च कालः स कालः ७ महाकाल इति चापरः परमाधार्मिक इति प्रक्रमः, स च श्लक्ष्णमांसानि खण्डयित्वा खादयति वर्णतश्च महाकाल इति ८ असिः—खड्गस्तदाकारपत्रवद्वनं विकुर्व्य यस्तत्समाश्रितान्नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः ९ यो धनुर्विमुक्तार्धचन्द्रादिभिर्बाणैः कर्णादीनां छेदनभेदनानि करोति स धनुः १० भगवत्यां तु महाकालानन्तरमसिस्ततोऽसिपत्रस्ततः कुम्भ इति पठ्यते, तत्र योऽसिना नारकांश्छिनत्ति सोऽसिः शेषं तथैव, यः कुम्भ्यादिषु तान् पचति स कुम्भः ११ यः कदम्बपुष्पाकारासु वज्राकारासु वा वैक्रियासु वालुकासु तप्तासु चनकानिव तान् पचति स वालुकः १२ विरूपं तरणं प्रयोजनमस्या इति वैतरणीति यथार्थां पूयरुधिरत्रपुताम्रादिभिरतितापात्कलकलायमानैर्भृतां नदीं विकुर्वित्वा तत्तारणेन नारकान् यः कदर्थयति स वैतरणीति १३ यो वज्रकण्टकाकुलशाल्मलीवृक्षे नारकमारोप्य खरं स्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वरः १४ यस्तु भीतान् प्रपलायमानान्नारकान् पशूनिव वाटकेषु महाघोषं कुर्वतो निरुणद्धि स महाघोष इति १५। एवमेते पञ्चदश परमाधार्मिकाः प्राग्जन्मनि संक्लिष्टक्रूरक्रियाः पापाभिरताः पञ्चाग्न्यादिरूपं मिथ्याकष्टतपः कृत्वा रौद्रीमासुरीं गतिमनुप्राप्ताः सन्तस्ताच्छील्यान्नारकाणामाद्यासु तिसृषु पृथिवीषु विविधवेदनाः समुदीरयन्ति तथा कदर्थ्यमानांश्च नारकान् दृष्ट्वा इहत्यमेषमहिषकुर्कुटादियुद्धप्रेक्षकनरा इव हृष्यन्ति, हृष्टाश्चाट्टाट्टहासं चेलोत्क्षेपं

त्रिपद्यास्फालनादि च कुर्वन्ति, किं बहुना?, यथैषामित्थं प्रीतिर्न तथा नितान्तकान्ते प्रेक्षणकादाविति १८७ ॥ ८५ ॥ ८६ ॥ सम्प्रति 'नरयुवट्टाण लद्धिसंभवो'त्येकाशीत्यधिकशततमं द्वारमाह—

तिसु तित्थ चउत्थीए केवलं पंचमीए सामन्नं । छट्ठीए विरइऽविरई सत्तमपुढवीइ सम्मत्तं ॥ ८७ ॥
पढमाओ चक्कवट्टी बीयाओ रामकेसवा हुंति । तइयाओ अरहंता तहऽंतकिरिया चउत्थीओ ॥ ८८ ॥
उव्वट्टिया उ संता नेरइया तमतमाओ पुढवीओ । न लहंति माणुसत्तं तिरिक्खजोणिं उवणमंति ॥ ८९ ॥ छट्ठीओ पुढवीओ उव्वट्टा इह अणंतरभवंमि । भज्जा मणुस्सजम्मे संजमलंभेण उ विहीणा ॥ ९० ॥

इह 'तिसु'त्ति सप्तम्याः प्राकृतत्वेन पञ्चम्यर्थत्वादाद्याभ्यस्तिसृभ्य एव पृथिवीभ्य उद्वृत्ता अनन्तरभवे तीर्थकृतो भवन्ति, न शेषपृथिवीभ्यः, सम्भवमात्रं चेदं, न नियमः, तेन ये पूर्वनिबद्धनरकायुषः सन्तः स्वोनुपात्ततीर्थकृन्नामगोत्राः श्रेणिकादय इव नरकेषु गच्छन्ति त एव तत उद्वृत्ता अनन्तरभवे तीर्थकृतो, न शेषाः, चतुर्थ्याः पृथव्या उद्वृत्ताः केचित् केवलं—केवलज्ञानं सामान्येन प्राप्नुवन्ति, तीर्थकृतस्तु नियमेन न भवन्ति, पञ्चम्या उद्वृत्ताः श्रामण्यं—सर्वविरतिरूपं लभन्ते न तु केवलज्ञानं, षष्ठ्या उद्वृत्ता विरताविरतिं—देशविरतिं लभन्ते न तु श्रामण्यं, सप्तम्या उद्वृत्ताः सम्यक्त्वं—सम्यग्दर्शनरूपं, न देशविरत्यादिकमिति, अयमत्र भावार्थः—आद्याभ्यस्तिसृभ्य उद्वृत्तास्तीर्थकृतो भवन्ति चतसृभ्य उद्वृत्ताः केवलज्ञानिनः पञ्चम्या उद्वृत्ताः संयमिनः षष्ठ्या उद्वृत्ता देशविरताः सप्तम्या उद्वृत्ताः सम्यग्दृष्टय इति ॥८७॥ पुनरपि लब्धिविशेषसम्भवं दर्शयन्नाह—'पढमे'त्यादि, प्रथमायाः—रत्नप्रभाया एवोद्वृत्ताश्चक्रवर्तिनो भवन्ति न शेषपृथिवीभ्यः, द्वती-

यायाः—द्वितीयां मर्यादीकृत्य नरकेभ्य उद्धृता रामकेशवा—बलदेववासुदेवा भवन्ति, एवं सर्वत्र मर्यादा भावनीया, तृतीयाया उद्धृता अर्हन्तो भवन्ति, चतुर्थ्या उद्धृता 'अंतकिरिय'त्ति पदैकदेशे पदसमुदायोपचाराद् अन्तक्रियासाधकाः, मुक्तिगामिनो भवन्तीत्यर्थः, तथा तमस्तमाभिधानायाः सप्तम्याः पृथिव्या उद्धृताः सन्तो नारका नियमान्मानुषत्वं न लभन्ते, किन्तु तिर्यग्योनिमुपनमन्ति—धातूनामनेकार्थत्वेन प्राप्नुवन्ति, तथा षष्ठ्याः—तमःप्रभाभिधानायाः पृथिव्या उद्धृताः सन्तो नारका इहानन्तरभवे मनुष्यजन्मनि भाज्याः—केचिन्मनुष्या भवन्ति केचित्तु नेति भावः, येऽपि च मनुष्या भवन्ति तेऽपि नियमतः संयमलाभेन—सर्वविरतिलाभेन विहीना भवन्ति, न तु कदाचनापि तद्युक्ताः १८१ ॥ ८८ ॥ ८९ ॥ ९० ॥ इदानीं 'तेसु जेसिमुववाओ' इति द्व्यशीत्यधिकशततमं द्वारमाह—

**असन्नी खलु पढमं दोच्चं च सरिसिवा तइय पक्खी । सीहा जंति चउत्थिं उरगा पुण पंचमिं पुढविं ॥ ९१ ॥ छट्ठिं च इत्थियाओ मच्छा मणुया य सत्तमिं पुढविं । एसो परमुववाओ बोद्धव्वो नरयपुढवीसु ॥ ९२ ॥ वालेसु य दाढीसु य पक्खीसु य जलयरेसु उववन्ना । संखिज्जाउठिईया पुणोऽवि नरयाउया हुंति ॥ ९३ ॥**

असंज्ञिनः—सम्मूर्च्छिमाः पञ्चेन्द्रियाः खलु प्रथमां नरकपृथिवीं गच्छन्ति, खलुशब्दोऽवधारणे, तच्चावधारणमेवं—असंज्ञिनः प्रथमामेव पृथिवीं यावद्गच्छन्ति, न परत इति, न तु त एव प्रथमां गच्छन्ति, गर्भजसरीसृपादीनामपि उत्तरपृथिवीषट्कगामिनां तत्र गमनभावात्, एवमुत्तरत्राप्यवधारणं भावनीयं, असंज्ञिनश्चात्र तिर्यञ्चो ज्ञेयाः, संमूर्च्छिममनुष्याणामपर्याप्तानामेव कालकरणतो नरकगतेरभावात्, तत्रापि पल्योपमासङ्ख्येयभागायुष्केष्वेव, उक्तं च—"असन्नी णं नेरइयाउ पकरेमाणा जहन्नेणं दस वाससहस्साइं उक्कोसेणं पलि-

ओवमस्स असंखेज्जइभागं पकरिंति"त्ति [ असंज्ञिनो नैरयिकायुः प्रकुर्वन्तो जघन्येन दश वर्षसहस्राणि उत्कृष्टतः पल्योपमस्यासंख्येयभागं प्रकुर्वन्ति ] तथा द्वितीयामेव पृथिवीं यावद्गच्छन्ति सरीसृपा—भुजपरिसर्पा गोधानकुलादयो गर्भव्युत्क्रान्ता न ततः परतः, एवं तृतीयामेव गर्भजाः पक्षिणो—गृध्रादयः, चतुर्थीमेव सिंहाः—सिंहोपलक्षिताश्चतुष्पदा गर्भजाः, पञ्चमीमेव गर्भजा उरगाः—उरःपरिसर्पाः सर्पादयः, षष्ठीमेव स्त्रियः—स्त्रीरत्नाद्या महारम्भादियुक्ताः, सप्तमीं यावद्गर्भजा मत्स्या—जलचरा मनुजाश्च अतिक्रूराध्यवसायिनो महापापकारिणः, एष जीवविशेषभेदेन परमः—उत्कृष्ट उपपातो बोद्धव्यो नरकपृथिवीषु, जघन्यतस्तु सर्वेषामपि रत्नप्रभायाः प्रथमे प्रस्तटे मध्यमतः पुनर्जघन्यात्परतः स्वस्वोत्कृष्टोपपातादर्वागिति ॥ ९१ ॥ ९२ ॥ सम्प्रति केषाञ्चित्तिर्यग्योनिजानां बाहुल्यकृतं विशेषमाह—'वालेसु' इत्यादि, नरकेभ्य उद्धृता व्यालेषु—सर्पादिषु दंष्ट्रिषु—व्याघ्रसिंहादिषु पक्षिषु—गृद्धादिषु जलचरेषु—मत्स्यजातिषु सङ्ख्यातायुःस्थितय उत्पन्नाः सन्तो भूयः क्रूराध्यवसायवशगाः पञ्चेन्द्रियवधादीन् विधाय नरकायुषो भवन्ति, एतच्च बाहुल्येनोच्यते न तु नियमः, यतो नारकेभ्योऽपि केचिदुद्धृत्य सम्यक्त्वादिप्राप्तिवशाच्छुभां गतिमासादयन्तीति ९३ ॥ १८२ ॥ सम्प्रति 'संखा उप्पज्जंताण'त्ति त्र्यशीत्यधिकशततमद्वारस्य 'तह य उवट्टमाणाणं'ति चतुरशीत्यधिकशततमद्वारस्य चावसरो विवरणाय, परमुत्पत्तिनाशविरहकालद्वारे 'संखा पुण सुरवरतुल्ल'त्ति गाथादलेन तद्द्वारद्वयमपि व्यक्तं प्राग्व्याख्यातमिति नेदानीं तद्विवृतमिति १८३—१८४ ॥ सम्प्रति 'एगिंदियविगलिंदियसन्नीजीवाण कायठिइओ'त्ति पञ्चाशीत्यधिकशततमं द्वारमाह—

**अस्संखोसप्पिणिसप्पिणीउ एगिंदियाण (उ) चउण्हं । ता चेव ऊ अणंता वणस्सइए उ बोद्धव्वा**

**॥ ९४ ॥ वाससहस्सासंखा विगलाणं ठिइउ होइ बोद्धवा । सत्तट्ठभवा उ भवे पणिंदितिरिमणुय उक्कोसा ॥ ९५ ॥**

एकेन्द्रियाणां चतुर्णां—पृथिव्यप्तेजोवायुरूपाणां प्रत्येकमुत्कृष्टा कायस्थितिः—मृत्वा मृत्वा तत्रैव कायेऽवस्थानमसङ्ख्येया उत्सर्पिण्यवसर्पिण्यः, एतच्च कायस्थितिमानं कालतः, क्षेत्रतस्त्वसङ्ख्येया लोकाः, इदमुक्तं भवति—असङ्ख्येयेषु लोकाकाशेषु प्रतिसमयमेकैकप्रदेशापहारे सर्वप्रदेशापहारेण यावत्योऽसङ्ख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावत्य इति, ता एव—उत्सर्पिण्यवसर्पिण्योऽनन्ता वनस्पतिकायिकस्योत्कृष्टा कायस्थितिः बोद्धव्या, इयमपि कालतः, क्षेत्रतस्तु पूर्वोक्तप्रकारेण अनन्ता लोकाः, असङ्ख्येयाः पुद्गलपरावर्त्ताः, ते च आवलिकाया असङ्ख्येयतमे भागे यावन्तः समयाः तत्तुल्या, इयं च कायस्थितिः सांव्यवहारिकानाश्रित्य द्रष्टव्या, असांव्यवहारिकजीवानां त्वनादिरवसेया, ततो न मरुदेव्यादिभिर्व्यभिचारः, तथा च क्षमाश्रमणाः—'तह कायठिइकालादओ विसेसे पडुच्च किर जीवे । नाणाइवणस्सइणो जे संववहारबाहिरिया ॥ १ ॥" [ तथा कायस्थितिकालादयो विशेषान् जीवान् किल प्रतीत्य । नानादिवनस्पतीन् ये संव्यवहारबाह्याः ॥ १ ॥ ] यापि चासांव्यवहारिकजीवानामनादिः कायस्थितिः साऽपि केषाञ्चिदनादिरपर्यवसाना, ये जातुचिदप्यसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ न निपतिष्यन्ति, केषाञ्चिदनादिः सपर्यवसाना, येऽसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ निपतन्ति । अथ किमसांव्यवहारिकराशेर्विनिर्गत्य सांव्यवहारिकराशावागच्छन्ति ?, उच्यते, आगच्छन्ति, तथा चोक्तं विशेषणवत्यां—"सिज्झंति जत्तिया किर इह संववहारजीवरासीओ । इन्ति अणाइवणस्सइरासीओ तत्तिया तंमि ॥ १ ॥" [ सिध्यन्ति यावन्तः किलेह संव्यवहारजीवराशेः । आयान्ति अनादिवनस्पतिराशेस्तावन्तस्तस्मिन् ॥ १ ॥ ] तत्र येऽनादिसूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवे-

पूत्पद्यन्ते ते पृथिव्यादिविविधव्यवहारयोगात् सांव्यवहारिकाः, ये पुनरनादिकालादारभ्य सूक्ष्मनिगोदेष्वेवावतिष्ठन्ते ते तु तथाविधव्यवहारातीतत्वादसांव्यवहारिकाः; तत्र सांव्यवहारिकाः सूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवेपूत्पद्यन्ते, तेभ्योऽप्युद्धृत्य केचिद् भूयोऽपि तेष्वेव निगोदेषु गच्छन्ति, परं तत्रापि सांव्यवहारिका एव ते, व्यवहारे पतितत्वात्, तत्र च सूत्रोक्तमुत्कर्षतोऽवस्थानकालमानं, असांव्यवहारिकास्तु सदा निगोदेष्वेवोत्पत्तिमरणभाजो, न कदाचनापि त्रसादिभावं लब्धवन्त इति । तथा विकलानां—द्वित्रिचतुरिन्द्रियाणां प्रत्येकं कायस्थितिस्तु सङ्ख्याता वर्षसहस्राः 'विगलाण य वाससहस्सं संखेज्ज'त्ति पञ्चसङ्ग्रहवचनात्, पञ्चेन्द्रियतिरश्चां मनुष्याणां च संज्ञिपर्याप्तानामुत्कृष्टा कायस्थितिः सप्ताष्टौ वा भवा भवेत्, तत्र सप्त भवाः सङ्ख्येयवर्षायुषः अष्टमस्त्वसङ्ख्येयवर्षायुष एव, तथाहि—पर्याप्तमनुष्याः पर्याप्तसंज्ञिपञ्चेन्द्रियतिर्यञ्चो वा निरन्तरं यथासङ्ख्यं सप्त नरभवांस्तिर्यग्भवान् वाऽनुभूय यद्यष्टमे भवे भूयस्तेष्वेवोत्पद्यन्ते तदा नियमादसङ्ख्यायुष्केष्वेव नेतरेषु, असङ्ख्यायुश्च मृत्वा सुरेष्वेवोत्पद्यन्ते ततो नवमोऽपि नरभवस्तिर्यग्भवो वा निरन्तरं न लभ्यते, अष्टसु च भवेपूत्कर्षतः कालमानं त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वाधिकानि, जघन्या तु सर्वत्रापि कायस्थितिरन्तर्मुहूर्तमिति १८५ ॥ ९४ ॥ ॥ ९५ ॥ सम्प्रति 'एगिंदियविगलसन्निजीवाणं भवट्ठिइ'त्ति षडशीत्यधिकशततमं द्वारमाह—

बावीसई सहस्सा सत्तेव सहस्स तिन्निऽहोरत्ता । वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥ ९६ ॥ संवच्छराइं बारस राइंदिय हुंति अउणपन्नासं । छम्मास तिन्नि पलिया पुढवाईणं ठिउ- कोसा ॥ ९७ ॥ सण्हा य १ सुद्ध २ वालुय ३ मणोसिला ४ सक्करा य ५ खरपुढवी ६ । एकं १ बारस २ चउदस ३ सोलस ४ अट्ठार ५ बावीसा ६ ॥ ९८ ॥

पृथिव्यादीनां मनुष्यपर्यन्तानां स्थितिः—आयुःप्रमाणरूपा एषा उत्कृष्टा, यथा—पृथिवीकायिकानां द्वाविंशतिर्वर्षसहस्राणि अप्कायिकानां सप्त वर्षसहस्राणि तेजस्कायिकानां त्रीणि रात्रिन्दिवानि वाते—वातकाये त्रीणि वर्षसहस्राणि वृक्षा—वनस्पतयो दशवर्षसाहस्रिकाः, किमुक्तं भवति ?—वनस्पतिकायिकानामुत्कर्षतः स्थितिर्दश वर्षसहस्राणीति, तथा द्वीन्द्रियाणामुत्कर्षत आयुःस्थितिर्द्वादश वर्षाणि त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिन्दिवानि चतुरिन्द्रियाणां षण्मासाः पञ्चेन्द्रियाणां तिर्यग्मनुष्याणां त्रीणि पल्योपमानि, एषा चोत्कृष्टा स्थितिः प्रायो निरुपद्रवस्थाने द्रष्टव्या, एवमग्रेऽपि ज्ञेयं ॥ ९६ ॥ ९७॥ एवं सामान्येन पृथिव्यादीनामुत्कृष्टां स्थितिमभिधाय पृथिवीभेदेषु विशेषेणाह—'सण्हे'त्यादि, इह पूर्वार्धपदानामुत्तरार्धपदानां च यथाक्रमं योजना, सा चैवं—श्लक्ष्णा—मरुस्थल्यादिगता पृथिवी तस्या एकं वर्षसहस्रमुत्कृष्टमायुः शुद्धा—कुमारमृत्तिका तस्या द्वादश वर्षसहस्राणि वालुका—सिकता तस्याश्चतुर्दश वर्षसहस्राणि मनःशिला प्रतीता तस्याः षोडश शर्करा—दृषत्कर्करिका तस्या अष्टादश खरपृथिवी—शिलापाषाणरूपा तस्या द्वाविंशतिर्वर्षसहस्राण्युत्कृष्टमायुः, जघन्यं तु सर्वत्राप्यन्तर्मुहूर्तमिति १८६ ॥ ९८ ॥ सम्प्रति 'एएसिं तणुमाणं'ति सप्ताशीत्यधिकशततमं द्वारमाह—

जोयणसहस्समहियं ओहपएगिंदिए तरुगणेसु । मच्छजुयले सहस्सं उरगेसु य गब्भजाईसु ॥ १०९९ ॥ उस्सेहंगुलगुणियं जलासयं जमिह जोयणसहस्सं । तत्थुप्पन्नं नलिणं विन्नेयं भणियमाणंति ॥ ११०० ॥ जं पुण जलहिदहेसुं पमाणजोयणसहस्समाणेसुं । उप्पज्जइ वरपउमं तं जाणसु भूवियारंति ॥ ११०१ ॥ वणऽणंतसरीराणं एगमनिलसरीरगं पमाणेणं । अनलोदगपुढवीणं असंखगुणिया भवे वुड्ढी ॥ २ ॥ विगलिंदियाण बारस जोयणा तिन्नि चउर कोसा य । सेसाणोगा-

**हणया अंगुलभागो असंखिज्जो ॥३॥ गब्भचउप्पय छग्गाउयाइं भुयगेसु गाउयपुहुत्तं। पक्खीसु धणुपुहुत्तं मणुएसु य गाउया तिन्नि ॥ ४ ॥**

ओघपदे–सामान्यचिन्तायामेकेन्द्रिये पृथिव्यादिविशेषानाकाङ्क्षितानामेकेन्द्रियाणामित्यर्थः, विशेषचिन्तायां तरुगणेषु–प्रत्येकवनस्पतीनामित्यर्थः उत्कर्षतः सातिरेकं योजनसहस्रं शरीरप्रमाणमवसेयं, एतच्च समुद्रे गोतीर्थादिगतलतानलिननालाद्यधिकृत्य वेदितव्यं, अन्यत्रैतावदौदारिकशरीरस्यासम्भवात्, तथा पञ्चेन्द्रियतिर्यञ्चस्त्रिविधाः–जलचराः स्थलचराः खेचराश्च, जलचराः सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, स्थलचरास्तु द्विविधाः–चतुष्पदाः परिसर्पाश्च, चतुष्पदाः पुनरपि सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः, परिसर्पास्तु द्विविधाः–उरःपरिसर्पा भुजपरिसर्पाश्च, उभये अपि प्रत्येकं चतुष्पदवच्चतुर्विधाः, इत्येवं स्थलचराः सर्वेऽपि द्वादशविधाः, खेचरास्तु जलचरवच्चतुर्विधाः, तदेवं विंशतिभेदानां तिरश्चां तनुमानचिन्तायां मत्स्यानां–जलचराणां युगले–सम्मूर्छजगर्भजलक्षणे उरगेषु च–उरःपरिसर्पेषु सर्पादिषु गर्भजेषु प्रत्येकं परिपूर्णं योजनसहस्रमिति ॥ ९९ ॥ ननु तनुप्रमाणमुत्सेधाङ्गुलेन 'उस्सेहपमाणओ मिणसु देहं' इति वचनात्, समुद्रपद्मह्रदादीनां तु प्रमाणं प्रमाणाङ्गुलेन, ततः समुद्रादीनां योजनसहस्रावगाहनत्वात्तद्गतपद्मनालादीनामुत्सेधाङ्गुलापेक्षयाऽत्यंतदैर्घ्यं प्राप्नोतीत्यत आह–'उस्सेह'मित्यादि, 'ज'मित्यादि, उत्सेधाङ्गुलेन 'परमाणू रहरेणू' इत्यादिक्रमनिष्पन्नेन गुणितः–प्रमितः सन् योऽसौ जलाशयः–समुद्रगोतीर्थादिरिह–मनुष्यलोके योजनसहस्रप्रमाणो भवति, तत्र समुत्पन्नं नलिनं–पद्मं भणितमानं–पूर्वोक्तकिञ्चित्समधिकयोजनसहस्रप्रमाणं विज्ञेयं, यत् पुनः प्रमाणाङ्गुलानां योजनसहस्रमानेषु जलधिह्रदादिषु वरं–प्रधानं पद्ममुत्पद्यते तज्जानीहि भूविकारं–पृथिवीविकारमिति। इदमुक्तं भवति–इह समुद्रमध्ये प्रमाणाङ्गुलतो योजनसहस्रावगाहे

यानि पद्मानि तानि पृथिवीपरिणामरूपाण्येवं, यथा श्रीदेवतायाः पद्मह्रदे पद्मं, यानि पुनः शेषेषु गोतीर्थादिषु स्थानेषु पद्मानि तानि वनस्पतिपरिणामरूपाण्यपि भवन्ति, तानि च शेषेषु जलाशयेषु, वल्ल्यादयश्चोत्कर्षतो यथोक्तमाना भवन्ति, तथा चोक्तं **विशेषणवत्याम्**—"पुढवीपरिणामाइं ताइं किर सिरिनिवासपउमं व । गोतित्थेसु वणस्सइपरिणामाइं तु होज्जाहि ॥ १ ॥ जत्थुस्सेहंगुलओ सहस्समवसेसएसु य जलेसुं । वल्लीलयादओऽवि य सहस्समायामओ होंति ॥ २ ॥" [तानि किल पृथ्वीपरिणामानि श्रीनिवासपद्ममिव । गोतीर्थेषु वनस्पतिपरिणामानि तु भवेयुः ॥१॥ यत्रोत्सेधांगुलतः सहस्रं अवशेषेषु च जलेषु । वल्लीलतादयोऽपि च सहस्रमायामतो भवन्ति ॥२॥]॥११००-११०१॥

तथा प्रत्येकवनस्पतिवर्जितानां पंचानामपि पृथिव्यादीनामङ्गुलासङ्ख्येयभागमानाऽवगाहना वक्ष्यते, ततस्तत्र विशेषमाह—'वणे'त्यादि, 'विगले'त्यादि, 'गब्भे'त्यादि, 'वण'त्ति वनस्पतीनां 'अणंत'त्ति अनन्तकायिकानां सूक्ष्माणां यान्यसङ्ख्येयानि शरीराणि तेषां प्रमाणेन—मानेनैकमनिलशरीरकं—वायुशरीरं, किमुक्तं भवति ?—सूक्ष्मसाधारणवनस्पतीनामसङ्ख्यातैः शरीरैस्तुल्यमेकं सूक्ष्मं वायुशरीरमिति, उक्तं च **प्रज्ञप्तौ**—'अणंताणं सुहुमवणस्सइकाइयाणं जावइया सरीरा से एगे सुहुमवाउसरीरे"त्ति, अनन्तकायिकानां यावन्ति शरीराणि तदेकं सूक्ष्मं वायुशरीरं, तावत्शरीरप्रमाणमित्यर्थः, यावद्ग्रहणाच्चासङ्ख्यातानि शरीराणि ग्राह्याणि, अनन्तानामपि वनस्पतीनामेकाद्यसङ्ख्येयान्तशरीरत्वेनानन्तानां शरीराणामभावात्, ततो वायुकायिकशरीरादनलोदकपृथिवीनां—अग्निजलपृथिवीकायिकशरीराणां सूक्ष्माणां बादराणां च यथाक्रममसङ्ख्यगुणा भवति वृद्धिः, इयमत्र भावना—यावत्प्रमाणमेकं सूक्ष्मवायुकायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मतेजस्कायिकशरीरं ततोऽसङ्ख्यातगुणमेकं सूक्ष्माप्कायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मपृथिवीकायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं बादरवायुशरीरं ततोऽसङ्ख्यातगुणमेकं बादराग्निशरीरं ततोऽप्यसङ्ख्यातगुणमेकं बादराप्कायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं

बादरपृथिवीशरीरं तस्मादप्यसङ्ख्यातगुणमेकं बादरनिगोदशरीरमिति, एतच्च सर्वमपि भगवत्यैकोनविंशतितमशतकतृतीयोद्देशकानुसारेणोक्तं न तु निजमनीषिकयेति, इह च पृथिव्यादीनामङ्गुलासङ्ख्येयभागमात्रावगाहनात्वेऽप्यसङ्ख्येयभेदत्वादङ्गुलासङ्ख्येयभागस्येतरेतरापेक्षया-ऽसङ्ख्येयगुणत्वं न विरुध्यते ॥ २ ॥ अथ द्वीन्द्रियादीनामवगाहनामाह—विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियाणां यथाक्रमं शरीरमानं द्वादश योजनानि त्रयः क्रोशाः चत्वारः क्रोशाः, इयमत्र भावना—द्वीन्द्रियाणां शङ्खादीनामुत्कर्षतो देहमानं द्वादश योजनानि त्रीन्द्रियाणां कर्ण-शृगालीमत्कोटकादीनां त्रीणि गव्यूतानि चतुरिन्द्रियाणां भ्रमरादीनामेकं योजनं शेषाणां पृथिव्यप्तेजोवायूनां साधारणवनस्पतीनां संमूर्छि-ममनुष्याणां सर्वेषामपि चापर्याप्तजीवानामुत्कर्षतोऽवगाहना—देहमानमङ्गुलासङ्ख्येयो भागः ॥ ३ ॥ अथ तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च देहमानमाह—गर्भजचतुष्पदानां—हस्त्यादीनामुत्कृष्टं देहमानं षड्गव्यूतानि भुजगेषु गर्भजेषु—गोधानकुलादिषु गव्यूतपृथक्त्वं, पृथक्त्वं च द्विप्रभृत्यानवभ्यः, पक्षिषु—गृध्रादिषु 'व्याख्यानतो विशेषप्रतिपत्तेः' गर्भजेषु संमूर्छिमेषु च धनुःपृथक्त्वं, मनुष्येषु च गर्भजेषु त्रीणि गव्यूतानि, 'मणुएसु य'त्ति चकारोऽनुक्तसमुच्चये, ततः संमूर्छिमचतुष्पदानां गवादीनामुत्कर्षतो देहमानं गव्यूतपृथक्त्वम्, संमूर्छिमभुजगानां धनुष्पृथक्त्वं, संमूर्छिमोरगाणां च योजनपृथक्त्वं, एतच्च प्रज्ञापनावगाहनासंस्थानपदोक्तानुसारेणास्माभिरभिहितमिति, इदं चोत्कर्षतः सर्वमपि देहमानं, जघन्यतस्तु सर्वेषामपि जीवानामङ्गुलस्यासङ्ख्याततमो भागः, स चोपपातसमये बोद्धव्यः १८७ ॥ ४ ॥ सम्प्रति 'इंदियसरूवविसओ य एएसिं'ति अष्टाशीत्यधिकशततमं द्वारमाह—

कायंबपुप्फगोलय १ मसूर २ अइमुत्तयस्स कुसुमं च ३ । सोयं १ चक्खू २ घाणं ३ खुरप्पप-
रिसंठिअं रसणं ४ ॥ ५ ॥ नाणागारं फासिंदियं तु बाहल्लओ य सव्वाइं । अंगुलअसंखभागं

**एमेव पुहुत्तओ नवरं ॥ ६ ॥ अंगुलपुहुत्त रसणं फरिसं तु सरीरवित्थडं भणियं । बारसहिं जोयणेहिं सोयं परिगिण्हए सद्दं ॥ ७ ॥ रूवं गिण्हइ चक्खू जोयणलक्खाओ साइरेगाओ । गंधं रसं च फासं जोयणनवगाउ सेसाणि ॥ ८ ॥ अंगुलअसंखभागा मुणंति विसयं जहन्नओ मोत्तुं । चक्खुं तं पुण जाणइ अंगुलसंखिज्जभागाओ ॥ ९ ॥**

इन्दनादिन्द्रः—आत्मा सर्वद्रव्योपलब्धिरूपपरमैश्वर्ययोगात् तस्य लिङ्गं—चिह्नमविनाभावि इन्द्रियं, तद् द्विधा—द्रव्येन्द्रियं भावेन्द्रियं च, तत्र द्रव्येन्द्रियं द्विधा—निर्वृत्तिरूपमुपकरणरूपं च, निर्वृत्तिर्नाम प्रतिविशिष्टसंस्थानविशेषः, साऽपि द्विधा—बाह्या आभ्यन्तरा च, तत्र बाह्या कर्णकर्पटिकादिरूपा, सा च विचित्रा न प्रतिनियतरूपतया व्यपदेष्टुं शक्यते, तथाहि—मनुष्यस्य श्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी भ्रुवां चोपरितने श्रवणबन्धापेक्षया समे वाजिनो नेत्रयोरुपरि तीक्ष्णे चाग्रभागे इत्यादिजातिभेदान्नानाविधा, आभ्यन्तरा तु निर्वृत्तिः सर्वेषामपि जन्तूनां समाना, तामेव चाधिकृत्य प्रस्तुतसूत्रोक्तं संस्थानमवसेयं, केवलं स्पर्शनेन्द्रियनिर्वृत्तेः प्रायो न बाह्याभ्यन्तरभेदः, **तत्त्वार्थमूलटीकायां** तथाऽभिधानात्, उपकरणं—खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिकाऽभ्यन्तरा निर्वृत्तिः तस्याः शक्तिविशेषः, इदं चोपकरणरूपं द्रव्येन्द्रियमन्तर्निर्वृत्तेः कथञ्चिदर्थान्तरं, शक्तिशक्तिमतोः कथञ्चिद्भेदात्, कथञ्चिद्भेदश्च सत्यामपि तस्यामन्तर्निर्वृत्तौ द्रव्यादिनोपकरणस्य विघातसम्भवात्, तथाहि—सत्यामपि कदम्बपुष्पाद्याकृतिरूपायामन्तर्निर्वृत्तावतिकठोरतरघनगर्जितादिना शक्त्युपघाते सति न परिच्छेत्तुमीशते जन्तवः शब्दादिकमिति, भावेन्द्रियमपि द्विधा—लब्धिरुपयोगश्च, तत्र लब्धिः—श्रोत्रेन्द्रियादिविषयः सर्वात्मप्रदेशानां तदावरणकर्मक्षयोपशमः, उपयोगः—स्वस्वविषये लब्धिरूपेन्द्रियानुसारेणात्मनो व्यापारप्रणिधान-

मिति, तच्च पञ्चधा—श्रोत्रादिभेदात्, तत्र श्रोत्रमाभ्यन्तरीं निर्वृत्तिमधिकृत्य कदम्बपुष्पाकारं मांसगोलकरूपं चक्षुः किञ्चित्समुन्नतमध्यपरिमण्डलाकारमसूराख्यधान्यविशेषसदृशं घ्राणमतिमुक्तककुसुमदलचन्द्रकवत् किञ्चिद् वृत्ताकारमध्यविततं प्रदीर्घत्र्यस्रसंस्थितं कर्णाटकायुधं क्षुरप्रस्तत्परिसंस्थितं—तदाकारं रसनेन्द्रियमिति ॥ ५ ॥ तथा—'नाणे'त्यादि, स्पर्शनेन्द्रियं पुनर्नानाकारं—अनेकसंस्थानसंस्थितं, शरीरस्यासङ्ख्येयभेदत्वात्, तथा बाहल्यतः सर्वाण्यपीन्द्रियाण्यङ्गुलस्यासङ्ख्येयो भागः । ननु यदि स्पर्शनेन्द्रियस्याप्यङ्गुलासङ्ख्येयभागो बाहल्यं ततः कथं खड्गाद्यभिघाते अन्तः शरीरस्य वेदनानुभवः ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, त्वगिन्द्रियस्य हि विषयः शीतादयः स्पर्शाः, यथा चक्षुषो रूपं, न च खड्गाद्यभिघाते अन्तः शरीरस्य शीतादिस्पर्शने वेदनमस्तीति, किन्तु केवलं दुःखवेदनं, तच्चात्मा सकलेनापि शरीरेणानुभवति, न केवलेन त्वगिन्द्रियेण, ज्वरादिवेदनावत्, ततो न कश्चिद्दोषः, अथ शीतलपानकादिपाने अन्तः शीतस्पर्शवेदनाऽप्यनुभूयते, ततः कथं सा घटते ?, उच्यते, इह त्वगिन्द्रियं सर्वत्रापि प्रदेशपर्यन्तवर्ति विद्यते, तथा पूर्वसूरिभिर्व्याख्यानात्, तथा च प्रज्ञापनामूलटीका—"सर्वप्रदेशपर्यन्तवर्तित्वात्त्वचोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगस्त्येवे"ति, ततोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यते अन्तरपि शीतस्पर्शवेदनानुभवः, तथा एवमेव—अङ्गुलासङ्ख्येयभागप्रमाणान्येव पृथुत्वतो—विस्तरतोऽपीन्द्रियाणि भवन्ति ॥ ६ ॥ नवरं रसनस्पर्शनयोर्विशेषः, तमेवाह—'अंगुले'त्यादि गाथापूर्वार्धं, अङ्गुलपृथक्त्वविस्तारं रसनेन्द्रियं, स्पर्शनं पुनः शरीरविस्तृतं भणितं, यस्य जीवस्य यावन्मानं शरीरं स्पर्शनमपि तस्य विस्तरतस्तावत्प्रमाणमित्यर्थः ॥ अथेन्द्रियविषयमानमाह—'बारे'त्यादि सार्धा गाथा, द्वादशभ्यो योजनेभ्य आगतं घनगर्जितादिशब्दमुत्कृष्टतो गृह्णाति श्रोत्रं, न परतः, परत आगताः खलु ते शब्दपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रविज्ञानं नोत्पादयितुमीशाः, श्रोत्रेन्द्रियस्य च तथाविध-

मत्यद्भुतं वलं न विद्यते येन परतोऽप्यागतं शब्दं शृणुयादिति, तथा चक्षुरिन्द्रियमुत्कर्षतः सातिरेकाद्योजनलक्षादारभ्य कटकुड्यादिभिरव्यवहितं रूपं गृह्णाति–परिच्छिनत्ति, परतोऽव्यवहितस्यापि परिच्छेदे चक्षुषः शक्त्यभावात्, एतच्चाभासुरद्रव्यमधिकृत्योच्यते, भासुरं तु द्रव्यमधिकृत्य प्रमाणाङ्गुलनिष्पन्नेभ्य एकविंशतियोजनलक्षेभ्योऽपि परतः पश्यन्ति, यथा पुष्करवरद्वीपार्धे मानुषोत्तरनगनिकटवर्तिनो नराः कर्कसंक्रान्तौ सूर्यविम्बं, उक्तं च—"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं । तह पंच सया भणिया सत्ततीसाएँ अइरित्ता ॥ १ ॥ इइ नयणविसयमाणं पुक्खरदीवड्ढवासिमणुयाणं । पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं ॥ २ ॥" तथा शेषाणि—घ्राणरसनस्पर्शनेन्द्रियाणि क्रमेण गन्धं रसं स्पर्शं च प्रत्येकमुत्कर्षतो नवभ्यो योजनेभ्य आगतं गृह्णन्ति, न परतः, परत आगतानां मन्दपरिणामत्वभावात् घ्राणादीन्द्रियाणां च तथारूपाणामपि तेषां परिच्छेदं कर्तुमशक्तत्वात् ॥ ७ ॥ ८ ॥ अथ जघन्यं विषयमानमाह—'अंगुले'त्यादि, चक्षुरिन्द्रियं मुक्त्वा शेषाणि चत्वारि श्रोत्रादीनि जघन्यतोऽङ्गुलासङ्ख्येयभागादागतं स्वस्वविषयं शब्दादिकं जानन्ति, प्राप्तार्थपरिच्छेदकत्वात्, चक्षुः पुनरप्राप्तकारित्वाज्जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रव्यवस्थितं पश्यति, न तु ततोऽप्यर्वाक्तरमिति, प्रतिप्राणि प्रतीतश्चायमर्थः, तथा च नातिसन्निकृष्टमञ्जनरजोमलादिकं चक्षुः पश्यतीति, इह च पृथुत्वपरिमाणं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणां चतुर्णामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यं, स्पर्शनेन्द्रियस्य तूत्सेधाङ्गुलेन, विषयपरिमाणं पुनः सर्वेषामप्यात्माङ्गुलेनैव, अत्र चोभयत्राप्युपपत्तिः सविस्तरतरा भाष्यादवसातव्या १८८ ॥ ९ ॥ इदानीं 'लेसाउ'त्ति एकोननवत्यधिकशततमं द्वारमाह—

**पुढवीआउवणस्सइबायरपत्तेसु लेस चत्तारि । गब्भे तिरियनरेसुं छल्लेसा तिन्नि सेसाणं ॥ १० ॥**

बादरशब्दः प्रत्येकमभिसम्बध्यते, प्रत्येकवनस्पतीनां च स्वरूपोपदर्शनार्थमेव व्यभिचाराभावात्, पर्याप्त इति विशेषणं च सामर्थ्याद्

द्रष्टव्यं, अन्यथा तेजोलेश्याया अयोगात्, ततो वादरपर्याप्तेपु पृथिवीकायिकेष्वप्कायिकेपु प्रत्येकवनस्पतिपु चाद्यास्रतस्नः कृष्णनीलकापोततेजोरूपा लेश्या भवन्ति, तेजोलेश्या कथमवाप्यते इति चेद्, उच्यते, ईशानान्तदेवानामेतेपूत्पादात्कियन्तमपि कालं तेजोलेश्यापि सम्भवति, यल्लेश्या हि जन्तवो म्रियन्ते परभवेऽपि तल्लेश्या एवोत्पद्यन्ते, न पुनः पाश्चात्यभवान्त्यसमयेऽन्यो लेश्यापरिणामोऽन्यश्चागामिकभवाद्यसमये, यदागमः—"जल्लेसाइं दव्वाइं आइत्ता कालं करेइ तल्लेसेसु उववज्जइ'त्ति, [ यल्लेश्यानि द्रव्याणि आदाय कालं करोति तल्लेश्येपूत्पद्यते ] केवलं तिर्यङ्नरा आगामिभवसम्बन्धिलेश्याया अन्तर्मुहूर्तेऽतिक्रान्ते सुरनारकास्तु स्वस्वभवसम्बन्धिलेश्याया अन्तर्मूहूर्ते शेषे सति परभवमासादयन्ति, गर्भजतिर्यङ्मनुष्येपु षडपि लेश्याः तेषामनवस्थितलेश्याकत्वात्, तथाहि—तिरश्चां पृथिवीकायिकादीनां नराणां सम्मूर्छिमगर्भजानां शुक्ललेश्यावर्जा याः काश्चिल्लेश्याः सम्भवन्ति ताः प्रत्येकं जघन्यत उत्कर्षतश्चान्तर्मुहूर्तस्थितयः, शुक्ललेश्या तु जघन्यतोऽन्तर्मुहूर्तावस्थाना उत्कर्षतः किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणेति, इयं चोत्कृष्टा स्थितिः पूर्वकोटेरूर्द्धं संयमावाप्तेरभावात् पूर्वकोट्यायुपः किञ्चित्समधिकवर्षाष्टकादूर्द्धमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया, अन्येषां तूत्कर्षतोऽप्यन्तर्मुहूर्तावस्थानैवेति, शेषाणां—तेजोवायूनां सूक्ष्मपृथिव्यम्बूवनस्पतीनां साधारणानामपर्याप्तवादरपृथिव्यम्बुप्रत्येकवनस्पतीनां द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमपञ्चेन्द्रियतिर्यङ्नराणां च तिस्रः—कृष्णनीलकापोतनामानो लेश्या भवन्तीति १८९॥ १०॥ इदानीं 'एयाण जत्थ गइ'त्ति नवत्यधिकशततमं द्वारमाह—

**एगेंदियजीवा जंति नरतिरिच्छेसु जुयलवज्जेसुं । अमणातिरियावि एवं नरयंमिवि जंति ते पढमे ॥ ११ ॥ तह संमुच्छिमतिरिया भवणाहिववंतरेसु गच्छंति । जं तेसिं उववाओ पलियासंखेज्जआऊसुं ॥ १२ ॥ पंचिंदियतिरियाणं उववाउक्कोसओ सहस्सारे । नरएसु समग्गेसुवि वियला**

अजुयलतिरिनरेसु ॥ १३ ॥ नरतिरिअसंखजीवी जोइसवज्जेसु जंति देवेसु । नियआउयसमहीणाउएसु ईसाणअंतेसु ॥ १४ ॥ उववाओ तावसाणं उक्कोसेणं तु जाव जोइसिया । जावंति बंभलोगो चरगपरिव्वायउववाओ ॥ १५ ॥ जिणवयउक्किट्ठतवकिरियाहिं अभव्वभव्वजीवाणं । गेविज्जेसुक्कोसा गई जहन्ना भवणवईसु ॥ १६ ॥ छउमत्थसंजयाणं उववाउक्कोसओ अ सव्वट्ठे । उववाओ सावयाणं उक्कोसेणऽच्चुओ जाव ॥ १७ ॥ उववाओ लंतगंमि चउदसपुव्विस्स होइ उ जहन्नो । उक्कोसो सव्वट्ठे सिद्धिगमो वा अकम्मस्स ॥ १८ ॥ अविराहियसामन्नस्स साहुणो सावयस्सऽवि जहन्नो । सोहम्मे उववाओ वयभंगे वणयराईसुं ॥ १९ ॥ सेसाण तावसाईण जहन्नओ वंतरेसु उववाओ । भणिओ जिणेहिं सो पुण नियकिरियठियाण विन्नेओ ॥ २० ॥

इह 'एगेंदियजीव'त्ति सामान्योक्तावपि न तेजोवायवो गृह्यन्ते, तेषां मनुष्येष्वेवानुत्पादात्, उक्तं च—'सत्तममहिनेरइया तेऊ वाऊ अणंतरुव्वट्टा । नवि पावे माणुस्सं तहा असंखाउया सव्वे ॥१॥' [ सप्तममहीनैरयिकास्तेजोवायू अनन्तरोद्वृत्ताः । नैव प्राप्नुवन्ति मानुष्यं तथाऽसंख्यायुषः सर्वे ॥ १ ॥ ] तत एकेन्द्रियजीवाः—पृथिव्यम्बुवनस्पतयो युगलवर्जेषु—युगलधार्मिकवर्जितेषु सङ्ख्यातायुष्केष्वित्यर्थः नरेषु तिर्यक्षु च यान्ति—उत्पद्यन्ते, न देवनारकासङ्ख्येयवर्षायुस्तिर्यग्नरेष्विति भावः, तथाऽमनस्कतिर्यश्चोऽपि—असंज्ञिपञ्चेन्द्रियतिर्यञ्चोऽप्येवं—पूर्ववत्, सङ्ख्येयायुष्केषु नरतिर्यक्षु समुत्पद्यन्त इति भावः, नरकेऽपि च प्रथमे ते गच्छन्ति, इदमुक्तं भवति—असंज्ञिपञ्चेन्द्रियतिर्यञ्चश्च चतसृष्वपि गतिषूत्पद्यन्ते, केवलं नरकदेवगत्योरुत्पद्यमानानाममीषां विशेषः, तत्र नरकगतौ प्रथमपृथिव्यामेव, न शेषासु, तत्रा-

प्युत्कृष्टतोऽपि पल्योपमासङ्ख्येयभागायुष्केष्वेव जायन्ते, नाधिकायुष्केष्विति ॥ ११ ॥ देवगतौ पुनरुत्पद्यमानानां विशेषमाह—'तहे'-त्यादिगाथानवकं, तथा संमूर्छिमतिर्यञ्चो देवेषूत्पद्यमाना भवनपतिव्यन्तरेष्वेव जायन्ते, न ज्योतिष्कादिषु, यस्मात्तेषां—सम्मूर्छिमतिरश्चां देवेषु पल्योपमासङ्ख्यातभागमात्रायुष्केष्वेवोपपातो, नाधिकस्थितिष्विति ॥ १२ ॥ पञ्चेन्द्रियतिरश्चामुत्कर्षत उपपातः सहस्रारं यावद्भवति, नरकेष्वपि समग्रेषु—सर्वास्वपि नरकपृथिवीषु, इदमत्र तात्पर्य—सङ्ख्यातायुष्कसंज्ञितिर्यक्पञ्चेन्द्रियाश्चतसृष्वपि गतिषूत्पद्यन्ते, केवलं देवगतौ सहस्रारकल्पमेव यावदुत्पद्यन्ते, न तु परत आनतादिषु, तथाविधयोग्यताऽभावादिति, तथा विकला—द्वित्रिचतुरिन्द्रिया युगलवर्जेषु तिर्यक्षु मनुष्येषु चोत्पद्यन्ते, न देवनारकेषु ॥ १३ ॥ असङ्ख्यजीविनः—असङ्ख्यवर्षायुषो नरास्तिर्यञ्चश्च ज्योतिष्कवर्जितेषु देवेषु यान्ति, देवगतिं विमुच्य शेषे गतित्रये मोक्षे च नैव ते गच्छन्तीत्यर्थः, इह च यद्यपि सामान्येनासङ्ख्येयवर्षायुष्का नरतिर्यञ्चो भणितास्तथापि 'सूचकत्वात् सूत्रस्य' विशिष्टा एव खेचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च वेदितव्याः, तथाहि—असङ्ख्येयवर्षायुषो देवेषूत्पद्यमाना निजायुषः समस्थितिषु हीनस्थितिषु चोत्पद्यन्ते, नाधिकस्थितिषु, ततः पल्योपमासङ्ख्येयभागमात्रेणासङ्ख्येयवर्षायुषः खेचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च ज्योतिष्कवर्जेषु, उपलक्षणमेतत्, ज्योतिष्कसौधर्मेशानवर्जेषूत्पद्यन्ते, न ज्योतिष्कादिष्वपि, अधिकस्थितिषूत्पादाभावात्, ज्योतिष्केषु हि जघन्यतोऽपि पल्योपमाष्टमभागः सौधर्मेशानयोश्च पल्योपमं स्थितिरिति, शेषास्त्वसङ्ख्येयवर्षायुषो हैमवतादिक्षेत्रभाविनस्तथा सुषमसुषमादिषु त्रिष्वरकेषु भरतैरवतभाविनश्च तिर्यग्मनुष्या निजायुषः समहीनायुष्केषु सर्वेष्वपीशानान्तेषु गच्छन्ति, तत ऊर्द्ध्वं तु सर्वथा निषेधः, यत ईशानादूर्द्ध्वं सनत्कुमारादिषु जघन्यतोऽपि सागरोपमद्वयादिकैव स्थितिः, असङ्ख्यातवर्षायुषां तिर्यङ्मनुष्याणां पुनरुत्कर्षतोऽपि त्रीण्येव पल्योपमानीति ॥ १४ ॥ तापसा—वनवासिनो मूलकन्दफलाहारा वालतप-

स्विनः तेषामुपपात उत्कर्षतो भवति यावज्ज्योतिष्काः, तत ऊर्द्ध्वं नोत्पद्यन्त इति भावः, तथा चरकपरिव्राजका—धाटिभैक्षोपजीविनस्त्रिदण्डिनः अथवा चरकाः—कच्छोटकादयः परिव्राजकाः—कपिलमुनिसूनवः चरकाश्च परिव्राजकाश्च तेषामुत्कर्षत उपपातो यावद्ब्रह्मलोकः ॥ १५ ॥ जिनोक्तानि यानि व्रतानि—प्राणातिपातविरमणादीनि यथोत्कृष्टं—विशिष्टमष्टमादितपो याश्च क्रियाः—प्रतिदिनानुष्ठेयप्रत्युपेक्षणादिकाः एतैः सर्वैरपि भव्यानामभव्यानां च मिथ्यादृशां जीवानां देवेपूत्पद्यमानानामुत्कृष्टा गतिर्ग्रैवेयकेषु, इयमत्र भावना—ये किल भव्या अभव्या वा सम्यक्त्वविकलाः सन्तः श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणश्च तेऽपि केवलक्रियाकलापप्रभावत उपरितनग्रैवेयकान् यावदुत्पद्यन्ते एव, असंयताश्चैते, सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वादिति, जघन्या तु गतिर्भवनपतिषु, एतच्च देवेपूत्पादापेक्षया द्रष्टव्यं, (ग्रन्थाग्रं ८००) अन्यथा देवत्वादन्यत्रापि यथाध्यवसायमुत्पादो भवतीति ॥ १६ ॥ छाद्यते—आव्रियते यथाऽवस्थितमात्मनः स्वरूपं येन तच्छद्म—ज्ञानावरणीयादिकर्म तस्मिन् तिष्ठन्तीति छद्मस्थाः ते च ते संयताश्च छद्मस्थसंयताः तेषामुत्कर्षत उपपातः सर्वार्थसिद्धे महाविमाने, श्रावकाणां—देशविरतिमनुष्याणां पुनरुपपात उत्कर्षतोऽच्युतं—द्वादशदेवलोकं यावदिति ॥ १७ ॥ उपपातो लान्तके—षष्ठदेवलोके चतुर्दशपूर्वधरस्य जघन्यतो भवति, उत्कृष्टतस्तु सर्वार्थसिद्धे, अकर्मकस्य—क्षीणाष्टकर्मणः पुनश्चतुर्दशपूर्विणः उपलक्षणत्वादन्येषां मनुष्याणां क्षीणकर्मणां सिद्धिगमो—मोक्षावाप्तिर्भवतीति ॥ १८ ॥ साधोः प्रव्रज्याकालादारभ्याविराधितश्रामण्यस्य—अखण्डितसर्वविरतिरूपचारित्रस्य, श्रावकस्य चाविराधितश्रामण्यस्य—अखण्डितयथागृहीतदेशचारित्रस्य जघन्यत उपपातः सौधर्मे—प्रथमदेवलोके, केवलं तत्रापि साधोर्जघन्या स्थितिः पल्योपमपृथक्त्वं श्रावकस्य तु पल्योपममिति, तथा साधूनां श्रावकाणां च निजनिजव्रतभङ्गे जघन्यत उपपातो वनचरादिषु, वनचरा—व्यन्तरास्तेषामादयः—प्रथमाः, भवनपतिव्यन्तरादिक्रमेणागमे

देवानां प्रसिद्धत्वात् भवनपतय इत्यर्थः तेपु, तथा चोक्तं प्रज्ञापनायां—"विराहियसंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं सोहम्मे कप्पे" तथा "विराहियसंजमासंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं जोइसिएसु"त्ति अत्र च 'विराधितसंयमानां' विराधितः—सर्वात्मना खण्डितो न पुनः प्रायश्चित्तप्रतिपत्त्या भूयः संधितः संयमः संयमासंयमश्च यैस्ते तथा तेषां ॥ १९ ॥ शेषाणां तापसादीनां —तापसचरकपरिव्राजकादीनां जघन्यत उपपातो जिनैः—तीर्थकरैर्भणितो व्यन्तरेपु, प्रज्ञापनायां तु तापसादीनां 'जहन्नेणं भवणवासीसु' इत्युक्तं, स पुनरुपपातविधिर्निजक्रियास्थितानां—निजनिजागमोक्तानुष्ठाननिरतानां, न स्वाचारहीनानामिति १९० ॥ २० ॥ इदानीं 'एएसिं जत्तो आगइ'त्ति एकनवत्यधिकशततमं द्वारमाह—

**नेरइयजुयलवज्जा एगिंदिसु इंति अवरगइजीवा । विगलत्तेणं पुण ते हवंति अनिरय अमरजुयला ॥ २१ ॥ हुंति हु अमणातिरिच्छा नरतिरिया जुयलधम्मिए मोत्तुं । गब्भचउप्पयभावं पावंति अजुयलचउगइया ॥ २२ ॥ नेरइया अमरावि य तेरिच्छा माणवा य जायंति । मणुयत्तेणं वज्जित्तु जुयलधम्मियनरतिरिच्छे ॥ २३ ॥**

'नेरइये'त्यादिगाथात्रयं, नैरयिकयुगलधार्मिकवर्जिता अपरगतिजीवाः सङ्ख्यातवर्षायुषः एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्नराः सनत्कुमारादिदेवानामेकेन्द्रियेष्वनुत्पादात् भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाश्च एकेन्द्रियेपु—पृथिव्यादिष्वागच्छन्ति, केवलं तथाभवस्वाभाव्याद्देवास्तेजोवायुवर्जितेपु पर्याप्तबादरेपु समायान्तीत्यवसेयं, तथा नैरयिकदेवयुगलधार्मिकवर्जितास्ते—तिर्यङ्नरजीवा विकलेन्द्रियत्वेन —द्वित्रिचतुरिन्द्रियत्वेन भवन्ति, द्वित्रिचतुरिन्द्रियेष्वागच्छन्तीति भावः ॥ २१ ॥ युगलधार्मिकांस्तिरश्चो नरांश्च वर्जयित्वा शेषा नरा-

स्तिर्यञ्चश्च भवन्त्यमनस्कतिर्यञ्चः, उपलक्षणत्वादमनस्का मनुजाश्च, इदमुक्तं भवति—सङ्ख्यातवर्षायुष्कनरतिर्यञ्च एवासंज्ञिपञ्चेन्द्रियतिर्यक्नरेषूत्पद्यन्ते, न देवनारका इति, तथा युगलधार्मिकनरतिर्यग्वर्जिताश्चतुर्गतिका अपि जीवा गर्भजचतुष्पदभावं प्राप्नुवन्ति, केवलं देवाः सहस्रारादर्वाग् द्रष्टव्याः, आनतादिदेवानां मनुष्येष्वेवोत्पादात्, एवं शेषाणामपि गर्भजतिर्यक्पञ्चेन्द्रियाणां द्रष्टव्यं, जीवाभिगमादौ चतुर्गतिकजीवानां जलचरादिषूत्पादस्योक्तत्वात् ॥ २२ ॥ नैरयिका अमराश्च तथा युगलधार्मिकनरतिर्यग्वर्जितास्तिर्यञ्चो मनुष्याश्च मनुजत्वेन—गर्भजमनुष्यत्वेनोत्पद्यन्ते १९१ ॥ २३ ॥ सम्प्रति 'उप्पत्तिमरणविरहो जायंतमरंतसंखा उ'त्ति द्विनवतित्रिनवत्यधिकशततमं द्वारयुग्ममाह—

**भिन्नमुहुत्तो विगलेंदियाण संमुच्छिमाण य तहेव । बारस मुहुत्त गब्भे सव्वेसु जहन्नओ समओ**
**॥ २४ ॥ उव्वट्टणावि एवं संखा समएण सुरवरु तुल्ला । नरतिरियसंख सव्वेसु जंति सुरनारया गब्भे**
**॥ २५ ॥ बारस मुहुत्त गब्भे मुहुत्त सम्मुच्छिमेसु चउवीसं । उक्कोसविरहकालो दोसुवि य जहन्नओ समओ ॥ २६ ॥ एमेव य उव्वट्टणसंखा समएण सुरवरतुल्ला । मणुएसुं उववज्जेऽसंखाउय मोत्तु सेसाओ ॥ २७ ॥**

'भिन्ने'त्यादिगाथाचतुष्कं, विकलेन्द्रियाणां—द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमाणां च—असंज्ञिपञ्चेन्द्रियाणां तिरश्चां प्रत्येकं भिन्नः—खण्डो मुहूर्तोऽन्तर्मुहूर्तमित्यर्थः, उत्कृष्ट उपपातविरहकालः, तथा 'गब्भे'त्ति गर्भजपञ्चेन्द्रियतिरश्चामुत्कृष्ट उपपातविरहकालो द्वादश मुहूर्ताः, जघन्यतः पुनः सर्वेष्वपि विकलेन्द्रियादिषूपपातविरहकाल एकसमयः ॥ २४ ॥ विकलेन्द्रियाणां सम्मूर्छजानां गर्भव्यु-

ङ्कान्तानां च पञ्चेन्द्रियतिरश्चां उपपातविरहकालसमतया उद्वर्तनापि—उद्वर्तनाविरहकालोऽपि वक्तव्यः, तथा एतेषामेव द्वीन्द्रियादीनामेकेन समयेन—एकस्मिन् समये उपपाते उद्वर्तनायां च सङ्ख्या सुरवरैस्तुल्या भणनीया, सा चैवं—'एगो व दो व तिन्नि व संखमसंखा य एगसमएणं। उववज्जन्तेवइया उव्वट्टंतावि एमेव ॥ १ ॥' तथा नरास्तिर्यञ्चश्च सङ्ख्यातवर्षायुषः सर्वेष्वपि स्थानेषु यान्ति, चतसृष्वपि गतिषूत्पद्यन्ते इति भावः, 'सुरनारया गब्भे'त्ति सूत्रस्य सूचामात्रपरत्वात् सुरा नारकाश्च गर्भजपर्याप्तसङ्ख्यातवर्षायुष्कतिर्यङ्मनुष्येषु गच्छन्ति, नान्यत्र, नवरं सुरा एकेन्द्रियेष्वपि, उक्तं च—'बायरपज्जत्तेसुं सुराण भूदगवणेसु उप्पत्ती। ईसाणंताणं चिय तत्थवि न उ उड्डगाणंपि ॥ १ ॥' ॥ २५ ॥ उक्तस्तिरश्चामुपपातच्यवनयोर्विरहकाल एकसमयसङ्ख्या च प्रसङ्गतः सामान्येन गतिद्वारं च, अथ मनुष्याणामेतदेवाह—'बारसे'त्यादि, गर्भजेषु मनुष्येषु उत्कर्षत उपपातविरहकालो द्वादश मुहूर्ताः, संमूर्च्छिममनुष्येषु चतुर्विंशतिर्मुहूर्ताः, जघन्यतस्तूभयत्राप्येकः समयः, तथा उद्वर्त्तनाऽपि—उद्वर्तनाविरहकालोऽप्येवमेव—उपपातविरहकालवद्वेदितव्यः, सङ्ख्या पुनरेकस्मिन् समये उत्पद्यमानानामुद्वर्तमानानां च नराणां सुरवरैस्तुल्या, सा चैवं—'एगो व दो व तिन्नि व संखमसंखा उ एगसमएणं। उववज्जंतेवइया उव्वट्टंतावि एमेव ॥ १ ॥' इति, नवरमसङ्ख्यातत्वं सामान्यतो गर्भजसम्मूर्छिमसङ्ग्रहापेक्षया द्रष्टव्यं, तथा असङ्ख्यातवर्षायुषो नरतिरश्चः उपलक्षणत्वात् सप्तमपृथिवीनारकतेजोवायूंश्च मुक्त्वा शेषाः सर्वेऽपि सुरनरतिर्यङ्नारका मनुष्येषूत्पद्यंत इति। १९२—१९३ ॥ २६ ॥ ॥ २७ ॥ सम्प्रति 'भवणवइवाणमन्तरजोइसियविमाणवासिदेवाण ठिइ'त्ति चतुर्नवत्यधिकशततमं द्वारमाह—

**भवणवइवाणमंतरजोइसियविमाणवासिणो देवा। दस १ अट्ठ २ पंच ३ छवीस ४ संखजुत्ता कमेण इमे ॥ २८ ॥ असुरा १ नागा २ विज्जू ३ सुवन्न ४ अग्गी ५ य वाउ ६ थणिया ७ य। उदही**

८ दीव ९ दिसाविय १० दस भेया भवणवासीणं ॥ २९ ॥ पिसाय १ भूया २ जक्खा ३ य रक्खसा ४ किन्नरा ५ य किंपुरिसा ६ । महोरगा ७ य गंधव्वा ८ अट्ठविहा वाणमंतरिया ॥ ३० ॥ अणपन्निय १ पणपन्निय २ इसिवाइय ३ भूयवाइए ४ चेव । कंदिय ५ तह महकंदिय ६ कोहंडे ७ चेव पयगे ८ य ॥ ३१ ॥ इय पढमजोयणसए रयणाए अट्ठ वंतरा अवरे । तेसु इह सोलसिंदा रुयगअहो दाहिणुत्तरओ ॥ ३२ ॥ चंदा १ सूरा २ य गहा ३ नक्खत्ता ४ तारया ५ य पंच इमे । एगे चलजोइसिया घंटायारा थिरा अवरे ॥ ३३ ॥ सोहंमी १ साण २ सणंकुमार ३ माहिंद ४ बंभलोयमिहा ५ । लंतय ६ सुक्क ७ सहस्सार ८ आणय ९ पाणया १० कप्पा ॥ ३४ ॥ तह आरण ११ अच्चुया १२ विहु इणिंह गेविज्जवरविमाणाइं । पढमं सुदरिसणं १३ तह बिईयं सुप्पबुद्धंति १४ ॥ ३५ ॥ तइयं मणोरमं १५ तह विसालनामं १६ च सव्वओभद्दं १७ । सोमणसं १८ सोमाणस १९ महपीइकरं च २० आइच्चं २१ ॥ ३६ ॥ विजयं च २२ वेजयंतं २३ जयंत २४ मपराजियं २५ च सव्वट्ठं २६ । एयमणुत्तरपणगं एएसिं चउव्विहसुराणं ॥ ३७ ॥ चमरबलि सारमहियं सेसाण सुराण आउयं वोच्छं । दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं ॥ ३८ ॥ अद्धुट्ठ अद्धपंचमपलिओवम असुरजुयलदेवीणं । सेसवणदेवयाण य देसूणद्धपलियमुक्कोसं ॥ ३९ ॥ दस भवणवणयराणं वाससहस्सा ठिई जहण्णेणं । पलिओवममुक्कोसं वंतरियाणं वियाणिज्जा ॥ ४० ॥

पलियं सवरिसलक्खं ससीण पलियं रवीण सयसहस्सं। गहणक्खत्तताराण पलियमद्धं च-उब्भागो ॥ ४१ ॥ तद्देवीणवि तट्ठिइअद्धं अहियं तमंतदेविदुगे। पाओ जहन्नमट्ठसु तारयतारीणमट्ठंसो ॥ ४२ ॥ दो साहि सत्त साहिय दस चउदस सत्तरेव अयराइं। सोहम्मा जा सुक्को तदुवरि एक्केक्कमारोवे ॥ ४३ ॥ तेत्तीसऽयरुक्कोसा विजयाइसु ठिइ जहन्न इगतीसं। अजहन्नमणुक्कोसा सवट्ठे अयर तेत्तीसं ॥ ४४ ॥पलियं अहियं सोहंमीसाणेसुं तओऽहकप्पठिई। उवरिल्लंमि जहन्ना कमेण जावेक्कतीसऽयरा ॥ ४५ ॥ सपरिग्गहेयराणं सोहंमीसाण पलियसाहीयं। उक्कोस सत्त वन्ना नव पणपन्ना य देवीणं ॥ ४६ ॥

'भवणे'त्यादिगाथा एकोनविंशतिः, दीव्यन्तीति देवाः—प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषाः, ते च मूलभेदतस्तावच्चतुर्विधाः, तद्यथा—भवनपतयो व्यन्तरा ज्योतिष्का विमानवासिनश्च, तत्र भवनानां पतयः—तन्निवासित्वात्स्वामिनो भवनपतयः, तन्निवासित्वं च बाहुल्यतो नागकुमाराद्यपेक्षया द्रष्टव्यं, ते हि प्रायो भवनेषु वसन्ति कदाचिदावासेषु, असुरकुमारास्तु प्राचुर्येणावासेषु कदाचिद्भवनेषु, भवनानामावासानां चायं विशेषः—भवनानि बहिर्वृत्तान्यन्तः समचतुरस्राणि अधःकर्णिकासंस्थानानि, आवासास्तु कायमानस्थानीया महामण्डपा विचित्रमणिरत्नप्रभाभासितसकलदिक्चक्रा इति। तथा विविधमन्तरं—शैलान्तरं कन्दरान्तरं वनान्तरं वा आश्रयरूपं येषां ते वनान्तराः, यदिवा विगतमन्तरं—विशेषो मनुष्येभ्यो येषां ते व्यन्तराः, तथाहि—मनुष्यानपि चक्रवर्तिवासुदेवप्रभृतीन् भृत्यवदुपचरन्ति केचिद्व्यन्तरा इति मनुष्येभ्यो विगतान्तराः, प्राकृतत्वाच्च सूत्रे 'वाणमंतरा' इति पाठः, यद्वा 'वानमन्तरा' इति

पदसंस्कारः, तत्रापि वनानामन्तराणि वनान्तराणि तेषु भवा वानमन्तराः, पृषोदरादित्वादुभयपदान्तरालवर्ती मागमः, इदं तु व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तं तु सर्वत्रापि जातिभेद एवानुसर्तव्यः । तथा द्योतयन्ति—प्रकाशयन्ति जगदिति ज्योतींषि—विमानानि तेषु भवा ज्योतिष्काः । तथा विविधं मान्यन्ते—उपभुज्यन्ते पुण्यवद्भिर्जीवैरिति विमानानि तेषु वसन्तीत्येवंशीला विमानवासिनः । एते च भवनपत्यादयो देवाः 'क्रमेण' यथासङ्ख्यं दशाष्टपञ्चषड्विंशतिसङ्ख्यैर्भेदैर्युक्ता भवन्ति ॥ २८ ॥ सम्प्रत्येतानेव क्रमेण भेदानभिधित्सुः प्रथमं तावद्भवनपतिभेदानाह—'असुरे'त्यादि, भवनवासिनां अवान्तरजातिभेदमधिकृत्य दश भेदा भवन्ति, तद्यथा—'असुरा' इति पदैकदेशे पदसमुदायोपचारादसुरकुमाराः एवं नागकुमारा इत्याद्यपि परिभावनीयं, अथ कस्मादेते कुमारा इति व्यपदिश्यन्ते ?, उच्यते, कुमारवच्चेष्टनात्, तथाहि—सर्वे एवैते कुमारा इव शृङ्गाराभिप्रायकृतविशिष्टोत्तरोत्तररूपक्रियासमुद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहना अत्युल्वणरागाः क्रीडनपराश्च, ततः कुमारा इव कुमारा इति, गाथानुबन्धानुलोम्यादिकारणाच्च कुतश्चिदेते एवं पठिताः, प्रज्ञापनादौ त्वमुनैव क्रमेण पठ्यन्ते, तथाहि—"असुरा नाग सुवन्ना विज्जू अग्गी य दीव उदही य । दिसिपवणथणियनामा दसहा एए भवणवासी ॥ १ ॥" ॥ २९ ॥ व्यन्तरभेदानाह—'पिसाये'त्यादि, सुगमा ॥ ३० ॥ इहापरेऽप्यष्टौ व्यन्तरभेदाः सन्तीत्यतस्तानप्याह—'अणे'त्यादिगाथाद्वयं, अप्रज्ञप्तिकाः पञ्चप्रज्ञप्तिकाः ऋषिवादिताः भूतवादिताः क्रन्दिताः महाक्रन्दिताः कूष्माण्डाः पतङ्गाश्चेत्येवमपरे—पिशाचादिव्यतिरिक्ता अष्टौ व्यन्तरनिकायाः, रत्नप्रभायाः पृथिव्याः प्रथमे—उपरितने योजनशते भवन्ति, एतदुक्तं भवति—रत्नप्रभाया उपरितने रत्नकाण्डरूपे योजनसहस्रे अध उपरि च प्रत्येकं योजनशतरहिते पिशाचादयोऽष्टौ व्यन्तरनिकायाः सन्ति, तत्र च यदुपरि योजनशतं मुक्तं तत्राध उपरि च दशयोजनरहितेऽप्रज्ञप्तिकादयोऽष्टाविति, तेषु च—अप्रज्ञप्तिकादिष्वष्टसु व्यन्तरनिकायेषु रुचकस्याधस्ता-

दक्षिणत उत्तरतश्च द्वयोर्द्वयोरिन्द्रयोर्भावात् षोडश इन्द्रा भवन्ति, एवं पिशाचादिष्वप्यष्टसु षोडश भवनपतिषु च दशसु विंशतिः, अत एव विंशतिर्भवनपतीन्द्राणां द्वात्रिंशतो व्यन्तरेन्द्राणां असङ्ख्यातत्वेऽपि चन्द्रार्काणां जातिमात्राश्रयणाद् द्वयोश्चन्द्रसूर्ययोर्ज्योतिष्केन्द्रयोः दशानां च सौधर्मादिकल्पेन्द्राणां मीलने चतुःषष्टिरिन्द्रा इति ॥ ३१ ॥ ३२ ॥ ज्योतिष्कभेदानाह—'चंदे'त्यादि, चन्द्राः सूर्याः ग्रहाः नक्षत्राणि तारकाश्चेत्येवं पञ्च ज्योतिष्कभेदा भवन्ति, तत्र चैके—मनुष्यक्षेत्रवर्तिनो ज्योतिष्काश्चला—मेरोः प्रादक्षिण्येन सर्वकालं भ्रमणशीलाः अपरे पुनर्ये मानुषोत्तरपर्वतात्परेण स्वयंभूरमणसमुद्रं यावद्वर्तन्ते ते सर्वेऽपि स्थिराः—सदावस्थानस्वभावाः, अत एव घण्टाकारा अचलनधर्मकत्वेन घण्टावत् स्थानस्था एव तिष्ठन्तीत्यर्थः ॥ ३३ ॥ वैमानिकभेदानाह—'सोहंमी'त्यादिगाथाचतुष्कं, इह वैमानिका द्विविधाः—कल्पोपपन्नाः कल्पातीताश्च, तत्र कल्पः—आचारः, स चात्र इन्द्रसामानिकत्रायस्त्रिंशादिव्यवस्थारूपः तं प्रतिपन्नाः कल्पोपपन्नाः, ते च द्वादश, तद्यथा—सौधर्मदेवलोकनिवासिनः सौधर्माः ईशानदेवलोकनिवासिन ईशानाः एवं सर्वत्रापि भावनीयं, भवति च 'तात्स्थ्यात्तद्व्यपदेशो' यथा पञ्चालदेशनिवासिनः पाञ्चाला इति, यथोक्तरूपं कल्पमतीताः—अतिक्रान्ताः कल्पातीताः—ग्रैवेयका अनुत्तरविमानवासिनः, सर्वेषामपि तेषामहमिन्द्रत्वात्, तत्र लोकपुरुषस्य ग्रीवाप्रदेशे भवानि विमानानि ग्रैवेयकानि, तानि च नव, तद्यथा—सुदर्शनं १ सुप्रबुद्धं २ मनोरमं ३ विशालं ४ सर्वतोभद्रं ५ सुमनः ६ सौमनसं ७ प्रीतिंकरं ८ आदित्यं ९ चेति, तथा न विद्यन्ते उत्तराणि—प्रधानानि विमानानि येभ्यस्तान्यनुत्तराणि तानि च पञ्च, तद्यथा—विजयं वैजयन्तं जयन्तं अपराजितं सर्वार्थसिद्धं च, एतन्निवासिनो देवा एतन्नामानो द्रष्टव्याः, मिलिताश्च वैमानिकाः षड्विंशतिः । एतेषां मूलभेदापेक्षया चतुर्विधानां भवनपत्यादिदेवानां 'ठिइ'त्ति स्थितिरायुष्कलक्षणा प्रतिपाद्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ तामेवाह—'चमरे'त्यादि, इहासुरकुमारादयो दश भवनपतिनिकायाः;

एकैके च द्विधा—मेरोर्दक्षिणदिग्भागवर्तिनो मेरोरेवोत्तरदिग्भागवर्तिनश्च, तत्रासुरकुमाराणां दक्षिणदिग्भाविनामिन्द्रश्चमरः उत्तरदिग्भाविनां च बलिः; तत्र 'चमरबलि सारमहियं'ति पदैकदेशेऽपि पदसमुदायोपचारात् 'सार'मिति सागरोपमं द्रष्टव्यं, प्राकृतत्वाच्चमरबलिशब्दाभ्यां परतः षष्ठीविभक्तेर्लोपः, ततोऽयमर्थः—चमरबल्योः क्रमेण सागरोपममधिकं चोत्कृष्टमायुः, किमुक्तं भवति ?—चमरस्यासुरेन्द्रस्य दक्षिणदिग्वर्तिन उत्कृष्टमायुरेकं परिपूर्णं सागरोपमं, बलेरसुरेन्द्रस्य उत्तरदिग्वर्तिनः सागरोपमं किञ्चित्समधिकमिति, सम्प्रति शेषाणां चमरबलिव्यतिरिक्तानां सुराणां—देवानां नागकुमाराद्यधिपतीनामित्यर्थः आयुर्वक्ष्ये, तदेव कथयति—'दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं' इत्यादि, दाक्षिणात्यानां नागकुमाराद्यधिपतीनां—धरणप्रमुखानां नवानामिन्द्राणामुत्कृष्टमायुः द्वितीयमर्धं यस्य तद् द्व्यर्धं पल्योपमं, सार्धं पल्योपममित्यर्थः, 'उत्तरिल्लाणं'ति उत्तराहाणां—उत्तरदिग्भाविनां नागकुमारादीन्द्राणां भूतानन्दप्रभृतीनां नवानां देशोने—किञ्चिदूने द्वे पल्योपमे, उत्तरदिग्वर्तिनो ह्येते स्वभावादेव शुभाश्चिरायुषश्च भवन्ति, दक्षिणदिग्वर्तिनस्तु तद्विपरीता इति ॥ ३८ ॥

इत्युक्तं भवनवासिनां देवानां उत्कृष्टमायुः, सम्प्रति भवनवासिव्यन्तरदेवीनामाह—'अद्धुट्ठे'त्यादि, असुरयोः—असुरेन्द्रयोश्चमरबलिनाम्नोर्युगलं असुरयुगलं तस्य देवीनां यथाक्रममुत्कृष्टमायुरर्धचतुर्थानि अर्धपञ्चमानि च पल्योपमानि, चमरेन्द्रदेवीनां सार्धानि त्रीणि बलीन्द्रदेवीनां तु सार्धानि चत्वारि पल्योपमानीत्यर्थः, शेषाणां नागकुमाराद्यधिपतीनां तूत्तरदिग्वर्तिनां तथा 'वण'त्ति वनचराणां—व्यन्तराणामुत्तरदक्षिणदिग्वर्तिनां चशब्दात् दक्षिणदिग्भाविनागकुमाराद्यधिपतीनां च सम्बन्धिनीनां देवीनां यथाक्रममुत्कृष्टमायुर्देशोनं पल्योपममर्धपल्योपमं च, इयमत्र भावना—उत्तरदिग्भाविनागकुमाराद्यधिपतिदेवीनामुत्कृष्टमायुर्देशोनं पल्योपमं, दक्षिणदिग्भाविनागकुमाराद्यधिपतिदेवीनां दक्षिणोत्तरदिग्भाविव्यन्तराधिपतिदेवीनां चोत्कृष्टमायुरर्धं पल्योपममिति, केचिद्व्यन्तरीणां पल्योपममुत्कृष्टमायुराहुः

"श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितय" इति वचनश्रवणात्, तत्र तेषामागमानवगमविजृम्भितं, यदुक्तं **प्रज्ञापनायाम्**— "वाणमंतरीणं भंते! केवइकालं ठिई पन्नत्ता?, गोयमा! जहन्नेणं दस वाससहस्साइं उक्कोसेणं अद्धपलिओवम"मिति, श्रीप्रभृतयस्तु भवनपतिदेव्यः, तथा च सङ्ग्रहणीटीकायां **हरिभद्रसूरिः**—"तासां भवनपतिनिकायान्तर्गतत्वादि"ति ॥ ३९ ॥ अथ भवनपतिव्यन्तरदेवदेवीनां जघन्यां व्यन्तरदेवानामुत्कृष्टां च स्थितिमाह—'दसे'त्यादि, सूचकत्वात्सूत्रस्य 'भवण'त्ति भवनपतिदेवानां, उपलक्षणत्वात्तद्देवीनां च वनचराणां—व्यन्तरदेवानां तद्देवीनां च जघन्येन स्थितिर्दश वर्षसहस्राणि, जघनं—अधस्तान्निकृष्टो भागः तत्र भवं जघन्यं—रोममलादि तच्च किल स्तोकं ततोऽन्यदपि स्तोकं लक्षणया जघन्यमित्युच्यते, केवलं भावप्रधानत्वान्निर्देशस्य जघन्येन—जघन्यतया सर्वस्तोकतयेत्यर्थः, तथा व्यन्तराणां—व्यन्तरदेवानामुत्कृष्टां स्थितिं विजानीयात् पल्योपमप्रमाणां, तद्देवीनां तु पल्योपमार्धमुत्कृष्टा स्थितिः प्रागेवोक्तेति ॥ ४० ॥ सम्प्रति ज्योतिष्कदेवदेवीनामुत्कृष्टां जघन्यां च स्थितिमाह—'पलिये'त्यादिगाथाद्वयं, ज्योतिष्कदेवास्तावच्चन्द्रादित्यग्रहनक्षत्रतारकभेदात्पञ्चविधाः तद्देव्योऽपि पञ्चविधा इति सर्वेऽपि दशविधाः, तत्र शशिनां—असङ्ख्येयद्वीपसमुद्रवर्तिचन्द्रविमानवासिदेवानां सवर्षलक्षं—वर्षाणां लक्षेणाधिकं पल्योपममुत्कृष्टमायुः, एवं रवीणां—आदित्यानामशेषाणां ससहस्रं—वर्षाणां सहस्रेणाधिकं पल्योपममुत्कृष्टमायुः, तथा ग्रहनक्षत्रताराणां पल्योपमं पल्योपमार्धं पल्योपमचतुर्भागश्च यथाक्रममुत्कृष्टमायुः, इयमत्र भावना—ग्रहाणां—भौमबुधादीनां परिपूर्णं पल्योपमं नक्षत्राणां—अश्विन्यादीनां पल्योपमार्धं तारकदेवानां च पल्योपमस्य चतुर्थो भाग उत्कृष्टमायुरिति, तथा तेषां—चन्द्रादित्यग्रहनक्षत्रतारकदेवानां सम्बन्धिन्याः स्थितेरर्धं—समप्रतिभागरूपं तेषामेव सम्बन्धिनीनां देवीनां क्रमेणोत्कृष्टमायुः, केवलमन्त्यदेवीद्विके—नक्षत्रतारकदेवीद्वये तदेवार्धमधिकं—विशेषाधिकमवसेयं, इदमुक्तं भवति—चन्द्रविमानवासिनीनां देवीनां पल्योपमार्धं पञ्चा-

शद्वर्षसहस्राधिकं सूर्यदेवीनां पल्योपमार्धं पञ्चवर्षशताधिकं ग्रहदेवीनां च पूर्णं पल्योपमार्धमुत्कृष्टमायुः, तथा नक्षत्रदेवीनां पल्योपमस्य चतुर्थो भागो विशेषाधिकमुत्कृष्टमायुः, तारकदेवीनां पल्योपमस्याष्टमो भागः किञ्चिदधिकमुत्कृष्टमायुरिति, तथा तारकदेवदेव्योः पृथगभिधानात् शेषेष्वष्टसु—चन्द्रादित्यग्रहनक्षत्रदेवतद्देवीरूपेषु भेदेषु पादः—पल्योपमस्य चतुर्थो भागो जघन्यमायुः, तथा तारकदेवानां तारकदेवीनां च पल्योपमस्याष्टांशः—अष्टमो भाग इति ॥ ४१ ॥ ४२ ॥ अथ वैमानिकदेवानामुत्कृष्टां स्थितिमाह—'दो साही'त्यादि, सौधर्मात्–सौधर्मकल्पाद्यावत् शुक्रो—महाशुक्रकल्पस्तावदनेन क्रमेणोत्कृष्टा स्थितिः प्रतिपत्तव्या, तथाहि—सौधर्मे कल्पे देवानामुत्कृष्टा स्थितिर्द्वे अतरे, तरीतुमशक्यं प्रभूतकालतरणीयत्वादतरं सागरोपमं, द्वे सागरोपमे इत्यर्थः, ईशाने ते एव द्वे सागरोपमे साधिके—किञ्चित्समधिके, सनत्कुमारे सप्त सागरोपमाणि, माहेन्द्रे तान्येव सप्त सागरोपमाणि साधिकानि, ब्रह्मलोके दश सागरोपमाणि लान्तके चतुर्दश महाशुक्रे सप्तदश, 'तदुवरि एक्केक्कमारोवे' इति तस्य—महाशुक्रस्य कल्पस्योपरि सहस्रारादिषु प्रतिकल्पं प्रतिग्रैवेयकं च पूर्वस्मात् पूर्वस्मादधिकमेकैकं सागरोपमं उत्कृष्टायुश्चिन्तायामारोपयेत्, तद्यथा—सहस्रारेऽष्टादश सागरोपमाण्युत्कृष्टा स्थितिः आनते एकोनविंशतिः प्राणते विंशतिः आरणे एकविंशतिः अच्युते द्वाविंशतिः अधस्तनाधस्तनग्रैवेयके त्रयोविंशतिः अधस्तनमध्यमे चतुर्विंशतिः अधस्तनोपरितने पञ्चविंशतिः मध्यमाधस्तने षड्विंशतिः मध्यममध्यमे सप्तविंशतिः मध्यमोपरितनेऽष्टाविंशतिः उपरितनाधस्तने एकोनत्रिंशत् उपरितनमध्यमे त्रिंशत् उपरितनोपरितनग्रैवेयके एकत्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिः ॥ ४३ ॥ एकैकवृद्ध्या च एकत्रिंशतोऽनन्तरमनुत्तरेषु द्वात्रिंशदेव स्यात् अतस्तेषु पृथगाह—'तेत्तीसे'त्यादि, विजयादिषु—विजयवैजयन्तजयन्तापराजितेषु चतुर्षु अनुत्तरविमानेषु त्रयस्त्रिंशदतराणि—सागरोपमाण्युत्कृष्टा स्थितिः, जघन्या पुनरेतेषु विजयादिषु चतुर्षु एक-

त्रिंशत्सागरोपमाणि, तथा सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमाण्यजघन्योत्कृष्टा स्थितिरिति ॥ ४४ ॥ अथ वैमानिकदेवानामेव जघन्यां स्थितिमाह—'पलिय'मित्यादि, इह यथाक्रमं पदसम्बन्धात् सौधर्मे कल्पे एकं पल्योपमं ईशाने तदेव किञ्चित्समधिकं जघन्या स्थितिः, तत ऊर्ध्वं सनत्कुमारादिषु ग्रैवेयकानुत्तरविमानावसानेषु अधःकल्पस्थितिः—अधोवर्त्तिनः कल्पस्य वा उत्कृष्टा स्थितिः उपर्युपरिवर्त्तिनि सैव जघन्या स्थितिः, अनेन च क्रमेण तावत्प्रतिपत्तव्यं यावदेकत्रिंशदतराणि, तथाहि—यैव सौधर्मे सागरोपमद्वयरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि सनत्कुमारे जघन्या, यैव चेशाने सातिरेकसागरोपमद्वयस्वरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि माहेन्द्रे जघन्या, सनत्कुमारोत्कृष्टस्थितिस्तु सागरोपमसप्तकलक्षणा तदुपरिवर्तिनि ब्रह्मलोके जघन्या, तथा चोक्तं प्रज्ञापनायाम्—'बंभलोए कप्पे देवाणं केवइयकालं ठिई पन्नत्ता ?, गोयमा ! जहन्नेणं सत्त सागरोवमाइं"ति, तत्त्वार्थभाष्ये तु या माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमाणि सा ब्रह्मलोके जघन्या भवतीत्युक्तं, ब्रह्मलोकोत्कृष्टस्थितिस्तु दशसागरोपमात्मिका लान्तके जघन्या, लान्तकोत्कृष्टस्थितिरपि चतुर्दशसागरोपमरूपा महाशुक्रे जघन्या, तदुत्कृष्टस्थितिस्तु सप्तदशसागरोपमस्वरूपा सहस्रारे जघन्या, तदुत्कृष्टस्थितिः पुनरष्टादशसागरोपमलक्षणा आनते जघन्या, तदुत्कृष्टस्थितिस्त्वेकोनविंशतिसागरोपमस्वरूपा प्राणते जघन्या, तदुत्कृष्टस्थितिरपि विंशतिसागरोपमात्मिका आरणे जघन्या, तदुत्कृष्टस्थितिस्त्वेकविंशतिसागरोपमस्वरूपा अच्युते जघन्या, तदुत्कृष्टस्थितिस्तु द्वाविंशतिसागरोपमरूपा अधस्तनाधस्तनग्रैवेयके जघन्या, एवमेकैकं सागरोपमं वर्धयता तावन्नेयं यावदनुत्तरचतुष्के—विजयवैजयन्तजयन्तापराजितरूपे एकत्रिंशत्सागरोपमाणि जघन्या, स्थितिः, सर्वार्थसिद्धे पुनर्जघन्या स्थितिर्नास्ति, अजघन्योत्कृष्टायास्त्रयस्त्रिंशत्सागरोपमरूपाया एव स्थितेस्तत्राभिधानादिति ॥४५॥ सम्प्रति वैमानिकदेवीनां जघन्यामुत्कृष्टां च स्थितिमाह—'सपरी'त्यादि, इह वैमानिकदेवीनामुत्पत्तिः सौधर्मेशानयोरेव, ताश्च द्विधा-

परिगृहीताः कुलाङ्गना इव अपरिगृहीताश्च वेश्या इव, तत्र सपरिग्रहाणां—परिगृहीतानामितरासां च—अपरिगृहीतानां जघन्या स्थितिः सौधर्मे ईशाने च यथासङ्ख्यं पल्यं—पल्योपमं साधिकं च, किमुक्तं भवति ?—सौधर्मे परिगृहीतानां देवीनामपरिगृहीतानां च देवीनां जघन्यायुः पल्योपमं ईशाने परिगृहीतानामपरिगृहीतानां च देवीनां साधिकं पल्योपममिति, तथा सौधर्मे परिगृहीतानामपरिगृहीतानां (ग्रन्थाग्रं १४०००) चोत्कृष्टमायुर्यथाक्रमं सप्त पञ्चाशच्च पल्योपमानि ईशाने नव पञ्चपञ्चाशच्च, इयमत्र भावना—सौधर्मे परिगृहीतानामुत्कृष्टमायुः सप्त पल्योपमानि अपरिगृहीतानां पञ्चाशत्, ईशाने परिगृहीतानामुत्कृष्टमायुर्नव पल्योपमानि अपरिगृहीतानां च पञ्चपञ्चाशदिति १९४ ॥ ४६ ॥ सम्प्रति 'भवण'त्ति पञ्चनवत्यधिकशततमं द्वारमाह—

सत्तेव य कोडीओ हवंति बावत्तरी सयसहस्सा । एसो भवणसमासो भवणवईणं वियाणिज्जा ॥ ४७ ॥ चउसट्ठी असुराणं नागकुमाराण होइ चुलसीई । बावत्तरि कणगाणं वाउकुमाराण छन्नउई ॥ ४८ ॥ दीवदिसाउदहीणं विज्जुकुमारिंदथणियअग्गीणं । छण्हंपि जुयलाणं बावत्तरिमो सयसहस्सा ॥ ४९ ॥ इह संति वणयराणं रम्मा भोमनयरा असंखिज्जा । तत्तो संखिज्जगुणा जोइसियाणं विमाणाओ ॥ ५० ॥ बत्तीसऽट्ठावीसा बारस अट्ठ य चउरो सयसहस्सा । आरेण बंभलोया विमाणसंखा भवे एसा ॥ ५१ ॥ पंचास चत्त छच्चेव सहस्सा लंत सुक्क सहस्सारे । सय चउरो आणयपाणएसु तिन्नारणच्चुयए ॥ ५२ ॥ एक्कारसुत्तरं हेट्ठिमेसु सत्तुत्तरं च मज्झिमए ।

**सयमेगं उवरिमए । पंचेव अणुत्तरविमाणा ॥ ५३ ॥ चुलसीई सयसहस्सा सत्ताणउई भवे सहस्साइं । तेवीसं च विमाणा विमाणसंखा भवे एसा ॥ ५४ ॥**

भवनवासिनां देवानां दशस्वपि निकायेषु सम्पिण्ड्य चिन्त्यमानानि सर्वाण्यपि भवनानि सप्त कोटयो द्वासप्ततिश्च शतसहस्राणि—लक्षाः भवन्ति ७७२०००००० एष भवनपतीनां भवनसमासो—भवनसर्वसङ्ख्या इति विजानीयात्, एतानि च अशीतिसहस्राधिकलक्षयोजनबाहल्याया रत्नप्रभाया अध उपरि च प्रत्येकं योजनसहस्रमेकं मुक्त्वा शेषेऽष्टसप्ततिसहस्राधिकलक्षयोजनमाने मध्यभागेऽवगन्तव्यानि, अन्ये त्वाहुः—नवतेर्योजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनं च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासम्भवमावासा इति ॥ ४७ ॥ सम्प्रति भवनवासिनामेव प्रतिनिकायं भवनसङ्ख्यामाह—'चउ' इत्यादि, असुराणां—असुरकुमाराणां दक्षिणोत्तरदिग्भाविनां सर्वसङ्ख्यया भवनानि चतुःषष्टिः शतसहस्राणि—लक्षा भवन्ति, एवं नागकुमाराणां चतुरशीतिर्लक्षाः कनकानां—सुवर्णकुमाराणां द्विसप्ततिर्लक्षाः वायुकुमाराणां पण्णवतिलक्षाः द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्निकुमाराणां षण्णामपि दक्षिणोत्तरदिग्वर्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिः षट्सप्ततिर्लक्षा भवन्ति भवनानां, एषां च सर्वेषामप्येकत्र मीलने प्रागुक्ताः सङ्ख्या भवन्ति ॥ ४८ ॥ ४९ ॥ सम्प्रति व्यन्तरनगरवक्तव्यतामाह—'इहे'त्यादि, इह—तिर्यग्लोके रत्नप्रभायाः प्रथमे योजनसहस्रे रत्नकाण्डरूपे अध उपरि च प्रत्येकं योजनशतविरहिते वनचराणां—व्यन्तराणां रम्याणि—रमणीयानि भूमौ भवानि भौमानि—भूम्यन्तर्वर्तीनि नगराण्यसङ्ख्यातानि सन्ति, रम्यता चैतेषु नित्यमुदितैर्व्यन्तरैर्गतस्यापि कालस्यावेदनात्, यदाह—"तहिं देवा वंतरिया वरतरुणीगीयवाइयरवेणं । निच्चं सुहिया पमुइया गयंपि कालं न याणंति ॥ १ ॥" [ तत्र देवा व्यन्तरा वरतरुणीगीतवादित्ररवेण । नित्यं सुखितप्र-

मुदिता गतमपि कालं न जानन्ति ॥ १ ॥ ] यास्तु मनुष्यक्षेत्राद्बहिर्द्वीपेषु समुद्रेषु च व्यन्तराणां नगर्यस्ता जीवाभिगमादिशास्त्रेभ्योऽव-
सेयाः, तेभ्योऽपि व्यन्तरनगरेभ्यः सङ्ख्येयगुणानि ज्योतिष्काणां—ज्योतिष्कदेवानां विमानानि ॥ ५० ॥ सम्प्रति वैमानिकदेवविमानानां
सङ्ख्यामाह—'बत्तीसे'त्यादि गाथाचतुष्कं, ब्रह्मलोकाद्—ब्रह्मलोकचरमपर्यन्तादारतः—अर्वाक्, किमुक्तं भवति ?—ब्रह्मलोकमभिव्याप्य
एषा विमानसङ्ख्या भवति, तद्यथा—सौधर्मे कल्पे द्वात्रिंशद्विमानानां शतसहस्राणि ईशानेऽष्टाविंशतिः सनत्कुमारे द्वादश माहेन्द्रेऽष्टौ ब्रह्मलोके
चत्वारि ॥ ५१ ॥ तथा—'पंचासे'त्यादि, अत्रापि पूर्वार्धे कल्पक्रमेण सङ्ख्यापदयोजना, लान्तके पञ्चाशद्विमानानां सहस्राणि महाशुक्रे
चत्वारिंशत् सहस्रारे षट् सहस्राः, तथा आनतप्राणतयोर्द्वयोः समुदितयोश्चत्वारि विमानशतानि, तथा आरणाच्युतयोर्द्वयोः समुदितयो-
स्त्रीणि विमानशतानि ॥५२॥ तथा—'एगारे'त्यादि,अधस्तनेषु त्रिषु ग्रैवेयकेषु समुदितेषु विमानानामेकादशोत्तरं शतं मध्यमे ग्रैवेयकत्रिके
समुदिते सप्तोत्तरं शतं उपरितनग्रैवेयकत्रिके समुदिते शतमेकं, सर्वान्तिमप्रतरे तु विजयादीनि पञ्चैवानुत्तरविमानानि ॥ ५३ ॥ अथ विमा-
नानां सर्वसङ्ख्यामाह—'चुलसीई'त्यादि, अनन्तरगाथात्रयाभिहितानां विमानानामेषा सर्वसङ्ख्या—चतुरशीतिः शतसहस्राणि सप्तनवतिः
सहस्राणि त्रयोविंशतिश्च विमानानीति ( ८४९७०२३ ) १९५ ॥ ५४ ॥ सम्प्रति 'देहमाणं'ति पण्णवत्यधिकशततमं द्वारमाह—

**भवणवणजोइसोहम्मीसाणे सत्त हुंति रयणीओ । एक्केक्कहाणि सेसे दुदुगे य दुगे चउक्के य ॥५५॥**
**गेविज्जेसुं दोन्नि य एगा रयणी अणुत्तरेसु भवे । भवधारणिज्ज एसा उक्कोसा होइ नायव्वा ॥५६॥**
**सव्वेसुक्कोसा जोयणाण वेउव्विया सयसहस्सं । गेविज्जणुत्तरेसुं उत्तरवेउव्विया नत्थि ॥५७॥ अंगु-**
सा.५७ **लअसंखभागो जहन्न भवधारणिज्ज पारंभे । संखेज्जा अवगाहण उत्तरवेउव्विया सावि ॥ ५८ ॥**

'भवणे'त्यादिगाथाचतुष्टयं, भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानेषु देवानामुत्सेधाङ्गुलेन देहमानमुत्कर्षतः सप्त रत्नयो—हस्ता भवन्ति, शेषे द्विके द्विके द्विके चतुष्के च एकैकहानिः—एकैकहस्तविषया हानिर्वक्तव्या, तद्यथा—सनत्कुमारमाहेन्द्रयोरुत्कर्षतः षट् हस्ताः शरीरप्रमाणं ब्रह्मलोकलान्तकयोः पञ्च शुक्रसहस्रारयोश्चत्वारः आनतप्राणतारणाच्युतेषु त्रय इति, तथा ग्रैवेयकेषूत्कर्षतः शरीरप्रमाणं द्वौ रत्नी एकश्च रत्निरनुत्तरेषु भवेत्, एषा च सप्तहस्तप्रमाणादिका उत्कृष्टावगाहना भवधारणीया वेदितव्या ॥ ५५ ॥ ५६ ॥ साम्प्रतमुत्तरवैक्रियरूपावगाहनामानमाह—'सव्वेसु' इत्यादि, भवनपत्यादिषु अच्युतदेवलोकपर्यन्तेषु सर्वेषामपि देवानामुत्तरवैक्रिया तनुरुत्कर्षतो योजनानां शतसहस्रं, योजनलक्षप्रमाणा भवतीत्यर्थः, ग्रैवेयकेषु अनुत्तरेषु च देवानामुत्तरवैक्रिया तनुर्नास्ति, सत्यामपि शक्तौ प्रयोजनाभावतस्तदकरणात्, उत्तरवैक्रियं ह्यत्र गमनागमननिमित्तं परिचारणानिमित्तं वा क्रियते, न चैतेषामेतदस्तीति ॥ ५७ ॥ सम्प्रति जघन्यतो भवधारणीयामुत्तरवैक्रियां चाह—'अंगुले'त्यादि, सर्वेषामपि भवनपत्यादीनां भवधारणीया—स्वाभाविक्यवगाहना जघन्याऽङ्गुलस्यासङ्ख्येयो भागः, सा च प्रारम्भे उत्पत्तिप्रथमसमये समवसेया, उत्तरवैक्रिया पुनरवगाहना जघन्याऽङ्गुलस्य सङ्ख्येयो भागः, पर्याप्तत्वेन तस्य तथाविधजीवप्रदेशसङ्कोचाभावात्, साऽपि प्रारम्भे उत्तरवैक्रियशरीरनिर्माणप्रथमसमये द्रष्टव्या १९६ ॥ ५८ ॥ साम्प्रतं 'लेसाउ'त्ति सप्तनवत्यधिकशततमं द्वारमाह—

**किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया । जोइससोहंमीसाण तेऊलेसा मुणेयव्वा ॥ ५९ ॥**
**कप्पे सणंकुमारे माहिंदे चेव बंभलोए य । एएसु पम्हलेसा तेण परं सुक्कलेसाओ ॥ ६० ॥**

भवनपतयो व्यन्तराश्च कृष्णनीलकापोततेजोलेश्याकाः, कृष्णा नीला कापोती तैजसी चैषां लेश्या भवन्तीत्यर्थः, तत्रापि परमाधा-

र्मिकाः कृष्णलेश्याः, तथा ज्योतिष्केषु सौधर्मेशानयोश्च देवास्तेजोलेश्याका ज्ञातव्याः, तथा सनत्कुमारमाहेन्द्रब्रह्मलोकाख्येषु त्रिषु कल्पेषु देवाः पद्मलेश्याकाः, ततो—ब्रह्मलोकात्परं—ऊर्द्ध्वं लान्तकादिषु अनुत्तरविमानान्तेषु देवाः शुक्ललेश्या ज्ञातव्याः, सर्वा अपि लेश्या यथोत्तरस्थानं विशुद्धविशुद्धतरा बोद्धव्याः, एताश्च भावलेश्याहेतवो भवस्थिताः कृष्णादिद्रव्यरूपा द्रव्यलेश्या एवेह प्रतिपत्तव्याः न भावलेश्याः, तासामनवस्थितत्वात्, नापि बाह्यवर्णरूपा, बाह्यवर्णस्य देवानां प्रज्ञापनादौ पार्थक्येनोक्तत्वात्, एतच्च नारकलेश्याद्वारे प्रागेवोक्तं, भावलेश्यास्तु देवानां प्रतिनिकायं यथासम्भवं षडपि भवन्ति, तथा च तत्त्वार्थमूलटीकायां हरिभद्रसूरिः—"भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकाय"मिति १९७ ॥ ५९ ॥ ६० ॥ इदानीं 'ओहिनाणं'त्यष्टनवत्यधिकशततमं द्वारमाह—

**सक्कीसाणा पढमं दोच्चं च सणंकुमारमाहिंदा । तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थिं ॥ ६१ ॥ आणयपाणयकप्पे देवा पासंति पंचमीं पुढवीं । तं चेव आरणच्चुय ओहिणाणेण पासंति ॥ ६२ ॥ छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला । संभिन्नलोगनालिं पासंति अणुत्तरा देवा ॥ ६३ ॥ एएसिमसंखेज्जा तिरियं दीवा य सागरा चेव । बहुययरं उवरिमया उड्ढं च सकप्पथूभाइं ॥ ६४ ॥ संखेज्जजोयणाइं देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा जहन्नयं पन्नवीसं तु ॥ ६५ ॥ भवणवइवणयराणं उड्ढं बहुओ अहो य सेसाणं । जोइसिनेरइयाणं तिरियं ओरालिओ चित्तो ॥ ६६ ॥**

'सक्की'त्यादिगाथाषट्कं, शक्रेशानौ—सौधर्मेशानकल्पेन्द्रौ उपलक्षणमेतत् इन्द्रसामानिकादयश्चोत्कृष्टायुषः, एवमन्यत्राप्युपलक्षणव्याख्यानं

द्रष्टव्यं, प्रथमां—रत्नप्रभाख्यां पृथिवीं यावत्, रत्नप्रभायाः पृथिव्याः सर्वाधस्तनं भागं यावदुत्कृष्टतोऽवधिना पश्यतः, सनत्कुमारमाहेन्द्राविन्द्रौ द्वितीयां—शर्कराप्रभां पृथिवीं यावत्, शर्कराप्रभायाः पृथिव्या अधस्तनं सर्वान्तिमं चरमं भागं यावदित्यर्थः, एवमुत्तरत्रापि भावनीयं, ब्रह्मलोकलान्तकौ तृतीयां—वालुकाप्रभां यावत्, शुक्रसहस्रारौ चतुर्थीं पङ्कप्रभां यावत्, तथा आनतप्राणतकल्पयोर्देवाः—इन्द्रतत्सामानिकादयः पञ्चमीं पृथिवीं—धूमप्रभां यावदवधिना पश्यन्ति, आरणाच्युतदेवा अपि तामेव पञ्चमीं पृथ्वीं यावत्, तथा आनतप्राणतदेवेभ्य आरणाच्युतदेवास्तामेव विशुद्धतरां वहुपर्यायां च, तत्राप्यानतदेवेभ्यः प्राणतदेवाः आरणदेवेभ्यश्चाच्युतदेवाः सविशेषां पश्यन्ति, उत्तरोत्तरदेवानां विमलविमलतरावधिज्ञानसद्भावात्, एवं प्रागुत्तरत्र च सर्वत्र भावनीयं, तथा अधस्तनमध्यमग्रैवेयकाः 'आधेये आधारोपचारात्' तन्निवासिनो देवाः षष्ठीं—तमःप्रभां पृथिवीं यावत्पश्यन्ति, उपरितनग्रैवेयकवासिनो देवाः सप्तमीं पृथिवीं यावत्, अनुत्तरविमानवासिनस्तु देवाः सम्भिन्नां—परिपूर्णां लोकनाडीं—लोकमध्यवर्तिनीं त्रसनाडीमधस्तादवधिना पश्यन्ति, उक्तं च तत्त्वार्थभाष्ये—"अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनालिं पश्यन्ती"ति, अन्ये तु स्वविमानध्वजादूर्द्ध्वमदर्शनात् किञ्चिदूनां लोकनाडीं पश्यन्तीत्याहुः, तदेवमधस्तादवधिविषयभूतं क्षेत्रमुक्तं ॥ ६१ ॥ ६२ ॥ ६३ ॥ सम्प्रति तदेव तिर्यगूर्द्ध्वं चाह—'एएसि'मित्यादि, एतेषां—शक्रेशानादिदेवानां तिर्यक्—तिरश्चीनमवधिविषयं क्षेत्रमसङ्ख्येया द्वीपाः सागराश्च, असङ्ख्यातान् द्वीपानसङ्ख्यातांश्च समुद्रानवधिना तिर्यक्पश्यन्तीत्यर्थः, केवलमेतदेव द्वीपसमुद्रासङ्ख्येयकं 'उवरिमया' इति उपर्युपरिवर्तिकल्पवासिनो देवा वहुकतरं, उपलक्षणमेतत् वहुकतमं च तिर्यगवधिना पश्यन्ति, उपर्युपरिदेवलोकनिवासिनां विशुद्धविशुद्धतरावधिज्ञानसद्भावात्, ऊर्द्ध्वं पुनः सर्वेऽपि शक्रादयो देवाः स्वकल्पस्तूपादीन्—स्वस्वविमानचूलाध्वजादिकं यावत्पश्यन्ति न परतः, तथा भवस्वाभाव्यात्, जघन्यतः पुनरमी सर्वेऽपि सौधर्मादयोऽनुत्तरवि-

मानवासिपर्यन्ता अङ्गुलासङ्ख्येयभागमात्रं क्षेत्रं पश्यन्ति, तथा चावश्यकचूर्णिः—"वेमाणिया सोहम्माओ आरब्भ जाव सव्वट्ठसिद्धगा देवा ताव जहन्नेण अंगुलस्स असंखेज्जइभागं ओहिणा जाणंति पासंति," नन्वङ्गुलासङ्ख्येयभागमात्रक्षेत्रप्रमितोऽवधिः सर्वजघन्यो भवति, सर्वजघन्यश्चावधिस्तिर्यग्मनुष्येष्वेव न शेषेषु, यदुक्तं—'उक्कोसो मणुएसु मणुस्सतेरिच्छएसु य जहन्नो ।' इति [ उत्कृष्टो मनुष्येषु मनुष्यतिर्यक्षु च जघन्यः ] तत्कथमिह वैमानिकानां सर्वजघन्य उक्तः ?, उच्यते, सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः सम्भवति, स च सर्वजघन्योऽपि कदाचिदवाप्यते, उपपातानन्तरं तु देवभवप्रत्ययजः, ततो न कदाचिद्दोषः, यदाह जिनभद्रगणिक्षमाश्रमणः—"वेमाणियाणमंगुलभागमसंखं जहन्नओ होइ । उववाओ परभविओ तब्भवजो होइ तो पच्छा ॥ १ ॥' [ वैमानिकानामङ्गुलासंख्यभागो जघन्यतो भवति । औपपातिकः ( उपपाते ) पारभविकः तद्भवजो भवति तत् पश्चात् ॥ १ ॥ ] पारभविकत्वान्नायं सूत्रकृता नोक्त इति ॥ ६४ ॥ उक्तं वैमानिकानामधस्तिर्यगूर्द्ध्वं चावधिक्षेत्रं, अथ सामान्यतः शेषदेवानामाह—'संखेज्जे'त्यादि, देवानां—भवनपतिव्यन्तरज्योतिष्काणामर्धसागरोपमप्रमाणे किञ्चिदूनायुषि सति संख्येयान्येव योजनानि अवधिपरिच्छेद्यक्षेत्रं, ततः परं संपूर्णार्धसागरोपमादिके आयुषि सति पुनः असङ्ख्येयानि योजनानि, केवलमायुर्वृद्ध्या योजनासङ्ख्यातकस्यापि वृद्धिर्वाच्या, जघन्यं तु पुनरवधिक्षेत्रं पञ्चविंशतिर्योजनानि, तानि च येषां सर्वजघन्यं—दशवर्षसहस्रप्रमाणं आयुस्तेषामेव भवनपतिव्यन्तराणां द्रष्टव्यानि न शेषाणां, आह च भाष्यकृत्—"पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसिं'मिति [ पञ्चविंशतिर्योजनानि दशवर्षसाहस्रिका स्थितिर्येषां ] ज्योतिष्काः पुनरसङ्ख्येयस्थितिकत्वाज्जघन्यतोऽपि सङ्ख्येययोजनप्रमितान् सङ्ख्येयान् द्वीपसमुद्रानवधिज्ञानतः पश्यन्ति, उत्कर्षतोऽपि तानेव, केवलमधिकतरान्, उक्तं च प्रज्ञापनायाम्—"जोइसिया णं भंते! केवइयं खेत्तं ओहिणा जाणंति पासंति ?,

गोयमा! जहन्नेणवि संखेज्जे दीवसमुद्दे उक्कोसेणवि संखेज्जे दीवसमुद्दे" इति ॥ ६५ ॥ अथ नारकतिर्यङ्नरामराणां मध्ये कस्य कस्यां दिशि प्रभूतोऽवधिरिति प्रतिपादयन्नाह—'भवणे'त्यादि, भवनपतीनां व्यन्तराणां चावधिरूर्द्धं वहुकः—प्रभूतः, शेपासु च दिक्षु स्वल्पविषय एवावधिः, एवमग्रेऽपि भावनीयं, शेपाणां तु वैमानिकदेवानां पुनरधः प्रभूतोऽवधिः ज्योतिष्कनारकाणां तिर्यक्प्रभूतः, तथा तिर्यग्मनुष्याणां सम्वंध्यवधिरौदारिकावधिरुच्यते अयं तु चित्रो—नानाप्रकारः, केषाञ्चिदूर्द्धं वहुः अन्येपां त्वधः परेषां तु तिर्यक् केषाञ्चित् तुल्य इति भावः १९८ ॥ ६६ ॥ सम्प्रति 'उप्पत्तीए विरहो'त्ति नवनवत्यधिशततमं द्वारमाह—

**भवणवणजोइसोहंमीसाण चउवीसई मुहुत्ता उ। उक्कोस विरहकालो सव्वेसु जहन्नओ समओ ॥ ६७ ॥ नव दिण वीस मुहुत्ता बारस दस चेव दिण मुहुत्ता उ। बावीसा अद्धं चिय पणयाल असीइ दिवससयं ॥ ६८ ॥ संखिज्ज मास आणयपाणय तह आरणच्चुए वासा। संखेज्जा विन्नेया गेविज्जेसुं अओ वोच्छं ॥ ६९ ॥ हिट्ठिमे वाससयाइं मज्झिम सहसाइं उवरिमे लक्खा। संखिज्जा विन्नेया जहसंखेणं तु तीसुंपि ॥ ७० ॥ पलिया असंखभागा उक्कोसो होइ विरहकालो उ। विजयाइसु निद्दिट्ठो सव्वेसु जहन्नओ समओ ॥ ७१ ॥**

'भवणे'त्यादिगाथाचतुष्कं, इह भवनपत्यादिषु देवाः प्रायः सततमुत्पद्यन्ते कदाचिदेव त्वन्तरं, तच्च सामान्येन चतुर्विधेष्वपि समुदितेषु देवेषु द्वादश मुहूर्ताः, तदनन्तरमवश्यमन्यतमस्मिन् कश्चिद्देव उत्पद्यते एव, उक्तं च—"गब्भयतिरिनरसुरनारयाण विरहो मुहुत्त बारसग" [गर्भजतिर्यङ्नरसुरनारकाणां विरहो मुहूर्त्तानां द्वादशकं] मिति, विशेषतस्तु भवनवासिषु व्यन्तरेषु ज्योतिष्केषु सौधर्मे

ईशाने च प्रत्येकमुत्कर्षत उपपातविरहकालश्चतुर्विंशतिर्मुहूर्ताः, इयमत्र भावना—भवनवास्यादिषु मध्ये प्रत्येकमेकस्मिन् बहुषु वा देवेषूत्पन्नेषु सत्सु अन्य उत्कृष्टमन्तरं चतुर्विंशतिं मुहूर्त्तान् कृत्वा नियमतः समुत्पद्यते इति, जघन्यत उपपातविरहकालः सर्वेष्वपि भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानरूपेषु एकः समयः, किमुक्तं भवति?—एतेषु पञ्चस्वपि स्थानेषु प्रत्येकमेकस्मिन् बहुषु वा समुत्पन्नेष्वन्यः समयमेकमन्तरं कृत्वा समुत्पद्यत इति, शेषः सर्वोऽप्युपपातविरहकालो मध्यमो वेदितव्य इति ॥ ६७ ॥ सनत्कुमारे कल्पे देवानामुत्कर्षत उपपातविरहकालो नव दिनानि—रात्रिन्दिवानि विंशतिश्च मुहूर्ताः माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः ब्रह्मलोके सार्धानि द्वाविंशतिर्दिनानि लान्तके पञ्चचत्वारिंशद्दिनानि महाशुक्रेऽशीतिर्दिनानि सहस्रारे दिवसशतं—अहोरात्रशतं ॥ ६८ ॥ आनते प्राणते च प्रत्येकमुत्कर्षत उपपातविरहकालः सङ्ख्येया मासाः, केवलमानतापेक्षया प्राणते प्रभूता वेदितव्याः, ते च वर्षादर्वागेव, तथा आरणे अच्युते च प्रत्येकं सङ्ख्येयानि वर्षाणि, नवरमत्राप्यारणापेक्षयाऽच्युते प्रभूतानि, तानि च वर्षशतादर्वागेव, अतः परं ग्रैवेयकेषूत्कर्षत उपपातविरहकालं वक्ष्ये ॥ ६९ ॥ प्रतिज्ञातमेवाह—'हिट्ठिमे'त्यादि, त्रिष्वपि अधस्तनमध्यमोपरितनग्रैवेयकत्रिकेषु यथासङ्ख्येन सङ्ख्येयानि वर्षशतानि वर्षसहस्राणि वर्षलक्षाणि च विज्ञेयानि, तथाहि—अधस्तनग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षशतानि, तानि च वर्षसहस्रादारतः, मध्यमग्रैवेयकत्रिके सङ्ख्येयानि वर्षसहस्राणि, तानि च वर्षलक्षादर्वाक्, उपरितनग्रैवेयकत्रिके सङ्ख्येयानि वर्षलक्षाणि, तानि च वर्षकोट्या आरतो द्रष्टव्यानि, अन्यथा कोटीग्रहणमेव कुर्यादित्येवं सर्वत्र भावनीयं, इयं च व्याख्या हरिभद्रसूरिकृतसङ्ग्रहणीटीकानुसारतः, अन्ये तु सामान्येनैव व्याचक्षत इति ॥ ७० ॥ साम्प्रतमनुत्तरविमानेषु उपपातविरहकालमानमाह—'पलिये'त्यादि, विजयादिषु—विजयवैजयन्तजयन्तापराजितरूपेषु चतुर्षु विमानेषूत्कृष्ट उपपातविरहकालोऽद्धापल्योपमासङ्ख्येयभागः, तुशब्दस्यानुक्तसमुच्चयार्थत्वात्स-

र्वार्थसिद्धे पल्योपमस्य सङ्ख्येयो भागः, तथा च प्रज्ञापना—'सव्वट्ठसिद्धदेवा णं भंते ! केवइकालं विरहिया उववाएणं पन्नत्ता ?, गोयमा! जहन्नेणं एगं समयं उक्कोसेणं पलिओवमस्स संखेज्जइभाग"मिति, जघन्यतः पुनः सर्वेष्वपि—सनत्कुमारादिष्वनुत्तरान्तेषु उपपातविरहकाल एकः समय इति १९९ ॥ ७१ ॥ सम्प्रति 'उव्वट्टणाए विरहो'त्ति द्विशततमं द्वारमाह—

**उववायविरहकालो एसो जह वण्णिओ य देवेसु । उव्वट्टणावि एवं सव्वेसिं होइ विन्नेया ॥ ७२ ॥**

उपपतनमुपपातः—तदन्यगतिकानां सत्त्वानां देवत्वेनोत्पादः तस्य विरहकालः—अन्तरकालः एषः—चतुर्विंशतिमुहूर्तादिक उत्कृष्टो जघन्यतश्च यथा देवेषु प्रागुपवर्णितः एवं—अनेनैव प्रकारेण सर्वेषां देवानामुद्वर्तनाऽपि विज्ञेया, तद्यथा—भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानदेवानामुत्कृष्ट उद्वर्तनाविरहकालश्चतुर्विंशतिर्मुहूर्ताः, सनत्कुमारे नव दिनानि विंशतिश्च मुहूर्ताः माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः ब्रह्मलोके सार्धा द्वाविंशतिर्दिनाः लान्तके पञ्चचत्वारिंशद्दिनाः शुक्रे अशीतिर्दिनाः सहस्रारे दिनशतं आनतप्राणतयोः सङ्ख्येया मासाः आरणाच्युतयोः सङ्ख्येयानि वर्षाणि अधस्तनेषु त्रिषु ग्रैवेयकेषु सङ्ख्येयानि वर्षशतानि मध्यमेषु त्रिषु सङ्ख्येयानि वर्षसहस्राणि उपरितनेषु त्रिषु सङ्ख्येयानि वर्षलक्षाणि विजयादिषु चतुर्षु पल्योपमासङ्ख्येयभागः सर्वार्थसिद्धे च पुनः पल्योपमसङ्ख्येयभागः, जघन्यतः पुनः सर्वेषामप्युद्वर्तनाविरहकाल एकः समय इति २०० ॥ ७२ ॥ इदानीं 'इमाण संख'त्त्येकोत्तरद्विशततमं द्वारमाह—

**एक्को व दो व तिन्नि व संखमसंखा य एगसमएणं । उववज्जंतेवइया उव्वट्टंतावि एमेव ॥ ७३ ॥**

भवनवास्यादिषु प्रत्येकमेकस्मिन् समये जघन्यतः एको द्वौ वा त्रयो वा उत्पद्यन्ते, उत्कर्षतः सङ्ख्याता असङ्ख्याता वा, केवलं सहस्रारादूर्ध्वं सर्वत्रोत्कर्षतः सङ्ख्याता एव वक्तव्याः नासङ्ख्याताः, यतो मनुष्या एव सहस्रारादूर्ध्वं गच्छन्ति न तिर्यञ्चो, मनुष्याश्च

सङ्ख्याता एव, 'उव्वट्टंतावि एमेव' त्ति उद्वर्तमाना अपि सन्तो भवनपतिव्यन्तरादिभ्य इत्थमेवोद्वर्तन्ते, ते च जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतः सङ्ख्याता असङ्ख्याता वा यावत्सहस्रारकल्पः, सहस्रारकल्पादूर्ध्वमुत्कर्षतः सङ्ख्याता एव च्यवन्ते, आनतादिच्युता हि मनुष्येष्वेवागच्छन्ति, न तिर्यक्षु, मनुष्याश्च सङ्ख्याता एवेति २०१ ॥७३॥ इदानीं 'जम्मि एयाण गइ'त्ति द्व्युत्तरद्विशततमं द्वारमाह—

**पुढवीआउवणस्सइ गब्भे पज्जत्तसंखजीवीसुं । सग्गच्चुयाण वासो सेसा पडिसेहिया ठाणा ॥७४॥**
**बायरपज्जत्तेसुं सुराण भूदगवणेसु उप्पत्ती । ईसाणंताणं चिय तत्थवि न उवट्टगाणंपि ॥ ७५ ॥**
**आणयपभिईहिंतो जाणुत्तरवासिणो चवेऊणं। मणुएसुं चिय जायइ नियमा संखिज्जजीविसुं ॥७६॥**

स्वर्गात्—देवोत्पादस्थानाच्च्युतानां सामान्येन भवनपतिव्यन्तरज्योतिष्कवैमानिकानां देवानां वासो—वसनमुत्पत्तिरित्यर्थः पृथिवीकाये अप्काये वनस्पतिकाये तथा गर्भजेषु पर्याप्तेषु सङ्ख्यातवर्षजीविषु तिर्यग्मनुष्येषु भवति, शेषाणि पुनः स्थानानि—तेजस्कायवायुकायद्वित्रिचतुरिन्द्रियासङ्ख्यातायुष्कसम्मूर्छिमापर्याप्ततिर्यग्नरदेवनारकरूपाणि प्रतिषिद्धानि तीर्थकरगणधरैः ॥ ७४ ॥ अत्रैव विशेषमाह—'बायरे'त्यादिगाथाद्वयं, पृथिव्युदकप्रत्येकवनस्पतिष्वपि वादरपर्याप्तेष्वेव सुराणां—देवानामुत्पत्तिः, न पुनः सूक्ष्मपृथिव्यप्कायिकेषु साधारणवनस्पतिषु अपर्याप्तेषु बादरपृथिव्यप्प्रत्येकवनस्पतिष्वेवेति, तत्रापीशानान्तानामेव देवानामेकेन्द्रियेषूत्पत्तिः न तूर्ध्वगानां सनत्कुमारादीनां, ते हि पञ्चेन्द्रियतिर्यङ्मनुष्येष्वेवोत्पद्यन्ते, तथा आनतप्रभृतिभ्यः—आनतकल्पदेवानारभ्य यावदनुत्तरवासिनो देवाः स्वस्थानाच्च्युत्वा नियमतः सङ्ख्यातवर्षायुष्केषु मनुष्येष्वेव जायन्ते, नैकेन्द्रियेषु नापि तिर्यक्ष्विति भावः २०२ ॥ ७५ ॥ ७६ ॥ इदानीं 'जत्तो आगई एसिं'ति त्र्युत्तरद्विशततमं द्वारमाह—

**परिणामविसुद्धीए देवाउयकम्मबंधजोगाए । पंचिंदियाउ गच्छे नरतिरिया सेसपडिसेहो ॥ ७७॥**
**आईसाणा कप्पा उववाओ होइ देवदेवीणं । तत्तो परं तु नियमा देवीणं नत्थि उववाओ ॥७८॥**

परिणमनं परिणामो—मानसिको व्यापारविशेषः, स च द्विधा—विशुद्धोऽविशुद्धश्च, तत्र यो विशुद्धः स देवगतिकारणमिति तत्प्रतिपादनार्थं विशुद्धिग्रहणं, परिणामस्य विशुद्धिः परिणामविशुद्धिः तया, प्रशस्तेन मानसव्यापारेणेत्यर्थः, एतेन शुभाशुभगत्यवाप्तौ मनोव्यापारस्यैव प्राधान्यमाह, सापि च परिणामविशुद्धिः काऽप्युत्कर्षं प्राप्ता मुक्तिपदस्यैव प्रापिका, अतस्तन्निवृत्त्यर्थमाह—देवायुःकर्मबन्धनयोग्यया हेतुभूतया पञ्चेन्द्रियाः, तुशब्द एवकारार्थः पञ्चेन्द्रिया एव नैकेन्द्रियद्वीन्द्रियादय इत्यर्थः, नरा—मनुष्यास्तिर्यञ्चश्च देवेषु मध्ये गच्छन्ति, शेषाणां तु सुरनारकाणां देवगतिगमने प्रतिषेधो ज्ञातव्यः, न खलु देवा नारका वा स्वायुःक्षयेऽनन्तरं देवत्वेनोत्पद्यन्त इति ॥ ७७ ॥ सम्प्रति प्रसंगतो देवदेवीनामुत्पत्तिस्थानमाह—'**आईसाणे**'त्यादि, आ ईशानात्—ईशानकल्पमभिव्याप्य, किमुक्तं भवति ?—भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेषु देवानां देवीनां चोपपातो—जन्म भवति, ततः—ईशानात्परमूर्द्ध्वं सनत्कुमारादिषु देवीनामुपपातो नास्ति, किन्तु देवानामेव केवलानां, केवलं सनत्कुमारादिदेवानां रतामिलाषे सति देव्यः स्वल्पपरिगृहीताः सौधर्मादीशानाच्च सहस्रारं यावद्गच्छन्ति न परत इति, तथा अच्युतात्परतः सुराणामपि गमागमौ न स्तः, तत्राधस्तनानामूर्द्ध्वं शक्त्यभावात्, उपरितनानां त्विहागमने प्रयोजनाभावात्, ग्रैवेयकानुत्तरसुरा हि जिनजन्ममहिमादिष्वपि नात्रागच्छन्ति, किन्तु स्वस्थानस्था एव भक्तिमातन्वते, संशयप्रश्ने चावधिज्ञानतो भगवत्प्रयुक्तानि मनोद्रव्याणि साक्षाद्वेत्य तदाकारान्यथानुपपत्त्या जिज्ञासितमर्थं निश्चिन्वन्ति, न चान्यत्प्रयोजनं, तन्न तेषामिहागम इति २०३ ॥ ७८ ॥ सम्प्रति '**विरहो सिद्धिगईए**'त्ति चतुरुत्तरद्विशततमं द्वारमाह—

**एक्कसमओ जहन्नो उक्कोसेणं तु जाव छम्मासा । विरहो सिद्धिगईए उवट्टणवज्जिया नियमा ॥७९॥**

एकः समयो जघन्यतः सिद्धिगतौ विरहः—अन्तरं भवति, उत्कर्षतस्तु यावत् षण्मासाः, सा च सिद्धिगतिर्नियमात्—निश्चयेनोद्वर्तनवर्जिता, न खलु सिद्धास्ततः कदाचनाप्युद्वर्तन्ते, तद्धेतूनां कर्मणां निर्मूलमुन्मूलितत्वात्, उक्तं च—"दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" २०४ ॥ ७९ ॥ सम्प्रति 'जीवाणाहारगहणऊसास'त्ति पञ्चोत्तरद्विशततमं द्वारमाह—

**सरिरेणोयाहारो तयाय फासेण रोमआहारो । पक्खेवाहारो पुण कावलिओ होइ नायव्वो ॥८०॥ ओयाहारा जीवा सव्वे अपजत्तगा मुणेयव्वा । पज्जत्तगा य लोमे पक्खेवे हुंति भइयव्वा ॥ ८१ ॥ रोमाहारा एगिंदिया य नेरइयसुरगणा चेव । सेसाणं आहारो रोमे पक्खेवओ चेव ॥८२॥ ओयाहारा मणभक्खिणो य सव्वेऽवि सुरगणा होंति । सेसा हवंति जीवा लोमाहारा मुणेयव्वा ॥ ८३ ॥ अपज्जत्ताण सुराणऽणाभोगनिवत्तिओ य आहारो । पज्जत्ताणं मणभक्खणेण आभोगनिम्माओ ॥ ८४ ॥ जस्स जइ सागराइं ठिइ तस्स य तेत्तिएहिं पक्खेहिं । ऊसासो देवाणं वाससहस्सेहिं आहारो ॥ ८५ ॥ दसवाससहस्साइं जहन्नमाऊ धरंति जे देवा । तेसिं चउत्थाहारो सत्तहिं थोवेहिं ऊसासो ॥ ८६ ॥ दसवाससहस्साइं समयाई जाव सागरं ऊणं । दिवसमुहुत्तपुहुत्ता आहारूसास सेसाणं ॥ ८७ ॥**

'सरीरे'त्यादिगाथाष्टकं, शरीरेणैव केवलेन य आहारः स ओजाहारः, एतदुक्तं भवति—यद्यप्यौदारिकवैक्रियाहारकतैजसकार्मणभेदतः शरीरं पञ्चधा तथाऽपीह तैजसेन तत्सहचारिणा कार्मणेन च शरीरेण पूर्वशरीरत्यागे विग्रहेणाविग्रहेण चोत्पत्तिदेशं प्राप्तः सन् जन्तुर्यत्प्रथममौदारिकादिशरीरयोग्यान् पुद्गलानाहारयति यच्च द्वितीयादिसमयेष्वप्यौदारिकादिमिश्रेणाहारयति यावच्छरीरनिष्पत्तिः एष सर्वोऽप्योजआहारः, ओजसा—तैजसशरीरेणाहार ओजआहारः, सकारवर्णलोपादोजाहारो वा, यद्वा ओजः—स्वजन्मस्थानोचितः शुक्रानुविद्धशोणितादिपुद्गलसङ्घातस्तस्याहार ओजाहारः, तथा त्वचा—त्वगिन्द्रियेण यः स्पर्शस्तेन य आहारः शरीरोपष्टम्भकानां शिशिरप्रावृट्कालादिभाविनां शीतजलादिपुद्गलानां ग्रहणं स लोमभिः—लोमरन्ध्रैराहारः प्रचुरतरमूत्राद्यभिव्यङ्ग्यो लोमाहारः, यः पुनराहारः कावलिकः—कवलैर्निष्पन्नो भवति स प्रक्षेपाहारो ज्ञातव्यः, प्रक्षेपणं—मुखे प्रवेशनं प्रक्षेपः तेनौदनादेराहारः प्रक्षेपाहारः, अथवा प्रक्षिप्यत इति प्रक्षेपः—ओदनकवलादिस्तस्याहारः प्रक्षेपाहारः ॥ ८० ॥ अथ यस्यामवस्थायां जीवानां य आहारस्तदाह—'ओयाहारे'त्यादि, ओजः—उत्पत्तिदेशे स्वशरीरयोग्यः पुद्गलसमूहस्तदाहारयन्तीत्योजआहाराः यद्वा ओजः—तैजसशरीरं तेनाहारो येषां ते ओजआहारा जीवाः सर्वेऽप्येकेन्द्रियादयः पञ्चेन्द्रियान्ता अपर्याप्ता मन्तव्याः, अपर्याप्तत्वं च शरीरपर्याप्तिमपेक्ष्य नाहारपर्याप्तिं, तदपर्याप्तानामनाहारकत्वात्, सर्वाभिः स्वयोग्यपर्याप्तिभिरपर्याप्ता ओजआहारा इत्यन्ये, तथा पर्याप्ताः—शरीरपर्याप्त्या पर्याप्ताः मतान्तरेण सर्वाभिः स्वयोग्यपर्याप्तिभिः पर्याप्ताः सर्वे जीवा लोम्नि—लोमाहारे नियमतो भवन्ति, पर्याप्तानां सर्वेषामपि जीवानां सर्वदापि लोमाहारो भवत्येवेति भावः, तथा च घर्माद्यभितप्तारछायया शीतलानिलसलिलस्पर्शनेन वा प्रीयन्ते प्राणिनः, प्रक्षेपे—प्रक्षेपाहारे भवन्ति भजनीयाः—यदैव कवलप्रक्षेपं कुर्वन्ति तदैव प्रक्षेपाहारो नान्यदा, लोमाहारता तु पवनादिस्पर्शनात् सदैवेति ॥ ८१ ॥ अथैकेन्द्रियादीनां पृथगाहारनैय-

शरीरपर्याप्त्या पर्याप्ताः मतान्तरेण सर्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा
त्यमाह—'रोमे'त्यादि, शरीरपर्याप्त्या पर्याप्ताः मतान्तरेण सर्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा
एव ज्ञातव्याः, न पुनः प्रक्षेपाहाराः, तत्र एकेन्द्रियाणां प्रक्षेपाहाराभावो मुखाभावात्, नैरयिकदेवानां तु वैक्रियशरीरतया तथास्वभा-
वात्, उक्तं च—"एगिंदियदेवाणं नेरइयाणं च नत्थि पक्खेवो । सेसाणं जीवाणं संसारत्थाण पक्खेवो ॥ १ ॥" [ एकेन्द्रियदेवानां
नैरयिकाणां च नास्ति प्रक्षेपः । शेषाणां जीवानां संसारस्थानां प्रक्षेपः ॥ १ ॥ ] शेषाणां—द्वित्रिचतुरिन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां
मनुष्याणां चाहारो लोम्नि—लोमविषयः प्रक्षेपतश्च भवति, उभयरूपस्याप्याहारस्य तेषां सम्भवात् ॥ ८२ ॥ अथ देवानामाहारविषयं
विशेषमाह—'ओये'त्यादि, सर्वेऽपि भवनपत्यादयः सुरगणा अपर्याप्तावस्थायामोजआहाराः, पर्याप्तावस्थायां मनोभक्षिणो—मनसा
चिन्तितोपनतान् सकलेन्द्रियाह्लादकमनोज्ञपुद्गलान् भक्षयन्तीव भक्षयन्ति—वैक्रियशरीरेणात्मसात्कुर्वतीत्येवंशीला मनोभक्षिणः, इयमत्र
भावना—यथा शीतपुद्गलाः शीतयोनिकस्य प्राणिनः सुखित्वायोपकल्पन्ते उष्णाः पुद्गला वा उष्णयोनिकस्य तथा देवैरपि मनसाऽभ्यव-
ह्रियमाणाः पुद्गलास्तेषां तृप्तये परमसन्तोषाय चोपकल्पन्ते, तत आहारविषयाभिलापनिवृत्तिर्भवतीति, शेषाः—सुरव्यतिरिक्ता जीवा नैर-
यिकादयोऽपर्याप्तावस्थायामोजआहाराः, पर्याप्तास्तु लोमाहारा ज्ञातव्याः, न पुनर्मनोभक्षिणः, मनोभक्षणलक्षणो ह्याहारः स उच्यते
ये तथाविधशक्तिवशान्मनसा स्वशरीरपुष्टिजनकाः पुद्गला अभ्यवह्रियन्ते यदभ्यवहरणानन्तरं च तृप्तिपूर्वः परमसन्तोष उपजायते, न
चैतन्नैरयिकादीनामस्ति प्रतिकूलकर्मोदयवशतस्तेषां तथारूपशक्त्यभावात् ॥ ८३ ॥ पुनरत्रैव विशेषमाह—'अपज्जे'त्यादि, आभोगनमा-
भोगः—आलोचनमभिसन्धिरित्यर्थः आभोगेन निर्वर्तितः—उत्पादित आभोगनिर्वर्तितः आहारयामीतीच्छापूर्वं निर्मापित इतियावत्, तद्वि-
परीतोऽनाभोगनिर्वर्तितः, आहारयामीति विशिष्टेच्छामन्तरेण निष्पाद्यते यः प्रावृट्काले प्रचुरतरमूत्राद्यभिव्यङ्ग्यशीतपुद्गलाद्याहारवत् सोऽ-

नाभोगनिर्वर्तित इति भावः, अत्रापर्याप्तकानां सुराणामोजआहारोऽनाभोगनिर्वर्त्तितः—अनाभोगसम्पादितो भवति, मनःपर्याप्तेरभावात् आभोगासम्भवात्, पर्याप्तानां पुनर्यो मनोभक्षणेन—मनसा सञ्चिन्त्य विशिष्टपुद्गलाभ्यवहरणेनाहारः स आभोगनिर्मितः—आभोगसम्पादितो भवति ॥ ८४ ॥ सम्प्रति सागरोपमसङ्ख्यया आहारोच्छ्वासयोः कालमानमाह—'जस्से'त्यादि, देवानां मध्ये यस्य देवस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावद्भिः पक्षैरुच्छ्वासः—शरीरान्तर्गतप्राणपवनोत्सर्पणं प्रवर्तते, तावद्भिश्च वर्षसहस्रैराहारः—आहाराभिलाषः, यथा—यस्य देवस्यैकं सागरोपमं स्थितिस्तस्यैकस्मिन् पक्षेऽतिक्रान्ते उच्छ्वासः एकस्मिन् वर्षसहस्रे आहारः, यस्य द्वे सागरोपमे तस्य पक्षद्वये उच्छ्वासो वर्षसहस्रद्वये आहारः, यावत् त्रयस्त्रिंशत्सागरोपमाणि यस्य स्थितिस्तस्य त्रयस्त्रिंशत्पक्षातिक्रमे उच्छ्वासः त्रयस्त्रिंशद्वर्षसहस्रातिक्रमे आहारः, देवेषु हि यो यथा महायुः स तथा सुखी, सुखितानां च यथोत्तरं महानुच्छ्वासनिःश्वासक्रियाविरहकालः, दुःखरूपत्वादुच्छ्वासनिःश्वासक्रियायाः, ततो यथा यथाऽऽयुषः सागरोपमवृद्धिस्तथा तथोच्छ्वासक्रियाविरहप्रमाणस्यापि पक्षवृद्धिः, आहारक्रियायास्तु ततोऽप्यतिदुःखरूपत्वाद्वर्षसहस्रवृद्धिः ॥ ८५ ॥ अथ जघन्यायुषामाहारोच्छ्वासयोः कालमानमाह—'दसे'त्यादि, ये देवा—भवनपतयो व्यन्तराश्च जघन्यं दशवर्षसहस्राण्यायुर्धरन्ति तेषामाहारः—आहाराभिलाषश्चतुर्थाद्—अहोरात्राद्उत्पद्यते, सति चाहाराभिलाषे मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणैव कायेनाहारतया परिणमन्ति, तथा तेषामेव—दशवर्षसहस्रधारिणां देवानां सप्तभिः स्तोकैः—आधिव्याधिरहितमनुष्यसत्कोच्छ्वासनिःश्वाससप्तकप्रमाणैः कालविशेषैरुच्छ्वासः, सप्तसप्तस्तोकातिक्रमे एवोच्छ्वसन्ति, शेषकालं च तदावाधया रहिताः स्तिमिता एव तिष्ठन्तीत्यर्थः ॥ ८६ ॥ अथ वर्षसहस्रदशकस्थितेरूर्द्ध्वं यावत्सागरोपमं पूर्णमेतावत्यन्तराले आहारोच्छ्वासकालमानमाह—'दसवे'त्यादि येषामुक्तेभ्यः शेषाणां देवानां दशवर्षसहस्राणि समयादीनि—समयावलिकामुहूर्तदिवसमाससंवत्सरयुगाद्य-

धिकानि यावत्किञ्चिदूनं सागरोपममायुःस्थितिः तेषां दिवसपृथक्त्वादाहारो मुहूर्तपृथक्त्वादुच्छ्वासश्च, सूत्रे च—'पुहुत्ते'ति एकवचननिर्देशो जात्यपेक्षः, ततोऽयं भावार्थः—दशवर्षसहस्रेभ्य ऊर्ध्वं समयादिवृद्धौ यथाक्रममाहारोच्छ्वासयोर्दिवसमुहूर्तपृथक्त्वानि तावद्वर्धनीयानि यावत्परिपूर्णसागरोपमायुषां पक्षादुच्छ्वासो वर्षसहस्रादाहार इति, तथा एकेन्द्रियाणामाहाराभिलाषः सततं, विकलेन्द्रियनारकाणामुत्कर्षतोऽन्तर्मुहूर्तात् पञ्चेन्द्रियतिरश्चामहोरात्रद्वयातिक्रमात् मनुष्याणां चाहोरात्रत्रयातिक्रमादिति, उच्छ्वासोऽपि नारकाणां निरन्तरं एकद्वित्रिचतुःपञ्चेन्द्रियतिर्यङ्नराणां पुनरनियतमात्रः २०५ ॥ ८७ ॥ सम्प्रति **'तिन्नि सया तेवट्ठा पासंडीणं'**ति षडुत्तरद्विशततमं द्वारमाह—

**असीइसयं किरियाणं १८० अकिरियवाईण होइ चुलसीई ८४ । अन्नाणिय सत्तट्ठी ६७ वेणइयाणं च बत्तीसं ३२ ॥ ८८ ॥ जीवाइनवपयाणं अहो ठविज्जंति सयपरयसद्दा । तेसिंपि अहो निच्चानिच्चा सद्दा ठविज्जन्ति ॥ ८९ ॥ काल १ स्सहाव २ नियई ३ ईसर ४ अप्पत्ति ५ पंचवि पयाइं । निच्चानिच्चाणमहो अणुक्कमेणं ठविज्जंति ॥ ९० ॥ जीवो इह अत्थि सओ निच्चो कालाउ इय पढमभंगो । बीओ य अत्थि जीवो सओ अनिच्चो य कालाओ ॥ ९१ ॥ एवं परओऽवि हु दोन्नि भंगया पुव्वदुगजुया चउरो । लद्धा कालेणेवं सहावपमुहावि पावंति ॥ ९२ ॥ पंचहिवि चउक्केहिं पत्ता जीवेण वीसई भंगा । एवमजीवाईहिंवि य किरियावाई असिइसयं ॥ ९३ ॥ इह जीवाइपयाइं पुन्नं पावं विणा ठविज्जन्ति । तेसिमहोभायम्मि ठविज्जए सपरसद्ददुगं ॥ ९४ ॥**

तस्सवि अहो लिहिज्जइ काल १ जहिच्छा य २ पयदुगसमेयं। नियइ १ स्सहाव २ ईसर ३ अप्पत्ति ४ इमं पयचउक्कं ॥ ९५ ॥ पढमे भंगे जीवो नत्थि सओ कालओ तयणु वीए। परओऽवि नत्थि जीवो काला इय भंगगा दोन्नि ॥ ९६ ॥ एव जइच्छाईहिवि पएहिं भंगदुगं दुगं पत्तं। मिलियावि ते दुवालस संपत्ता जीवतत्तेणं ॥ ९७ ॥ एवमजीवाईहिवि पत्ता जाया तओ उ चुलसीई। भेया अकिरियवाईण हुंति इमे सव्वसंखाए ॥ ९८ ॥ संत १ मसंतं २ संतासंत ३ मवत्तव ४ सयअवत्तवं ५। असयअवत्तवं ६ सयवत्तवं ७ (सयसयवत्तवं) च सत्त पया ॥ ९९ ॥ जीवाइनवपयाणं अहोकमेणं इमाइं ठविऊणं। जह कीरइ अहिलावो तह साहिज्जइ निसामेह ॥ १२०० ॥ संतो जीवो को जाणइ ? अहवा किं व तेण नाएणं?। सेसपएहिवि भंगा इय जाया सत्त जीवस्स ॥१॥ एवमजीवाईणऽवि पत्तेयं सत्त मिलिय तेसट्ठी। तह अन्नेऽवि हु भंगा चत्तारि इमे उ इह हुंति ॥ २ ॥ संती भावुप्पत्ती को जाणइ किंच तीएँ नायाए? । एवमसंती भावुप्पत्ती सदसत्तिया चेव ॥ ३ ॥ तह अवत्तवावि हु भावुप्पत्ती इमेहिं मिलिएहिं। भंगाण सत्तसट्ठी जाया अन्नाणियाण इमा ॥ ४ ॥ सुर १ निवइ २ जइ ३ न्नाई ४ थविरा ५ वम ६ माइ ७ पिइसु ८ एएसिं। मण १ वयण २ काय ३ दाणेहिं ४ चउविहो कीरए विणओ ॥ ५ ॥ अट्ठवि चउक्कगुणिया वत्तीस हवंति वेणइयभेया। सवेहिं पिंडिएहिं तिन्नि सया हुंति तेसट्ठा ॥ ६ ॥

'असीई'त्यादिगाथा एकोनविंशतिः, न कर्तारमन्तरेण क्रिया—पुण्यवन्धादिलक्षणा सम्भवति, तत एवं परिज्ञाय तां क्रियामात्मसम-
वायिनीं वदन्ति तच्छीलाश्च ये ते क्रियावादिनः—आत्माद्यस्तित्वप्रतिपत्तिलक्षणाः तेषामशीत्यधिकं शतं भवति, वक्ष्यमाणप्रकारेण अशी-
त्यधिकशतसङ्ख्यास्ते इति भावः, तथा न कस्यचित्प्रतिक्षणमवस्थितस्य पदार्थस्य क्रिया सम्भवति उत्पत्त्यनन्तरमेव विनाशादित्येवं ये वद-
न्ति तेऽक्रियावादिनः—आत्मादिनास्तित्वप्रतिपत्तिलक्षणाः, तथा चाहुः—"क्षणिकाः सर्वसंस्कारा, अस्थिराणां कुतः क्रिया ? । भूतिर्यैषां
क्रिया सैव, कारकं सैव चोच्यते ॥ १ ॥" तेषां चतुरशीतिर्भवति, तथा कुत्सितं ज्ञानमज्ञानं तदेषामस्ति तेन वा चरन्तीत्यज्ञानिकाः—
असंचिन्त्यकृतवन्धवैफल्यादिप्रतिपादनपराः, तथाहि ते एवमाहुः—न ज्ञानं श्रेयः तस्मिन् सति परस्परं विवादयोगेन चित्तकालुष्यादि-
भावतो दीर्घतरसंसारप्रवृत्तेः, तथाहि—केनचित्पुरुषेणान्यथा देशिते वस्तुनि विवक्षितो ज्ञानी ज्ञानगर्वाध्मातमानसस्तस्योपरि कलुषचित्तः
तेन सह विवादमारभते, विवादे च क्रियमाणे तीव्रतीव्रतरचित्तकालुष्यभावतोऽहङ्कारतश्च प्रभूतप्रभूततराशुभकर्मबन्धसम्भवः, तस्माच्च दीर्घ-
दीर्घतरसंसारः, तथा चोक्तम्—'अन्नेण अन्नहा देसियंमि भावंमि नाणगव्वेणं । कुणइ विवायं कलुसियचित्तो तत्तो य से वंधो ॥ १ ॥"
[ अन्येनान्यथा देशिते भावे ज्ञानगर्वेण । करोति विवादं कलुषितचित्तस्ततश्च तस्य बन्धः ॥ १ ॥ ] यदा पुनरज्ञानमाश्रीयते तदा नाह-
ङ्कारसम्भवो नापि परस्योपरि चित्तकालुष्यभावः ततो न कर्मबन्धसम्भवः, अपिच—यः सञ्चिन्त्य क्रियते कर्मबन्धः स दारुणविपाकः
अत एवावश्यंवेद्यः, तस्य तीव्राध्यवसायतो निष्पन्नत्वात्, यस्तु मनोव्यापारमन्तरेण कायवचनकर्मवृत्तिमात्रतो विधीयते न तत्र मनसोऽभि-
निवेशः ततो नासाववश्यंवेद्यो नापि तस्य दारुणो विपाकः, केवलं अतिशुष्कसुधापङ्कधवलितभित्तिगतरजोराजिरिव स कर्मसङ्गः स्वत एव
शुभाध्यवसायपवनविक्षोभितोऽपयाति, मनसोऽभिनिवेशाभावश्चाज्ञानाभ्युपगमे समुपजायते, ज्ञाने सत्यभिनिवेशसम्भवात्, तस्मादज्ञानमेव

मुमुक्षुणा—मुक्तिमार्गप्रवृत्तेनाभ्युपगन्तव्यं [ग्रन्थाग्रं ३००] न ज्ञानमिति, किञ्च—भवेद्युक्तो ज्ञानस्याभ्युपगमो यदि ज्ञानस्य निश्चयः कर्तुं पार्यते, परं यावता स एव न पार्यते, तथाहि—सर्वेऽपि दर्शनिनः परस्परं भिन्नमेव ज्ञानं प्रतिपन्नाः, ततो न निश्चयः कर्तुं शक्यते—किमिदं ज्ञानं सम्यगुत नेदमिति, यदुक्तम्—'सव्वे य मिहो भिन्नं नाणं इह नाणिणो जओ बिंति। तीरइ तओ न काउं विणिच्छओ एवमेयन्ति ॥ १ ॥" [ सर्वे च मिथो भिन्नं ज्ञानं इह ज्ञानिनो यतो ब्रुवते, शक्यते ततो न कर्तुं विनिश्चय एवमेतादिति ॥ १ ॥ ] तेषामज्ञानिकानां सप्तषष्टिर्भेदाः, तथा विनयेन चरन्तीति वैनयिकाः—एते चानवधृतलिङ्गाचारशास्त्राः केवलं विनयप्रतिपत्तिप्रधानाः, एषां च द्वात्रिंशद्भेदा इति ॥ ८८ ॥ अथ 'यथोद्देशं निर्देश' इति न्यायात् क्रियावादिनामशीत्युत्तरशतसङ्ख्याभङ्गानयनोपायमाह—'जीवे'त्यादिगाथाद्वयं, जीवादीनि नव पदानि—जीवअजीवआश्रवबन्धसंवरनिर्जरापुण्यपापमोक्षलक्षणान्नव पदार्थान् परिपाट्या पट्टिकादौ विरचय्य तेषामधः प्रत्येकं स्वतः परत इति शब्दौ स्थाप्येते, तयोरपि—स्वतः परत इति शब्दयोरधः प्रत्येकं नित्यानित्यशब्दौ स्थाप्येते, ततोऽपि—नित्यानित्य-शब्दयोरधस्तादनुक्रमेण—परिपाट्या कालस्वभावनियतीश्वरात्मस्वरूपाणि पञ्च पदानि स्थाप्यन्ते ॥ ८९ ॥ ९० ॥ अथैतेषामेव भेदानाम-भिलापमाह—'जीवो' इत्यादिगाथात्रयं, इह अस्ति जीवः स्वतो नित्यः कालतः प्रथमो भङ्गो—विकल्पः, अस्य च विकल्पस्यायमर्थः—इह—अस्मिन् जगति अस्ति—विद्यते खल्वयं जीवः—आत्मा स्वतः—स्वेन रूपेण, न तु परोपाध्यपेक्षया, ह्रस्वत्वदीर्घत्वे इव, नित्यः—शाश्वतो, न क्षणिकः, पूर्वोत्तरकालयोरवस्थितत्वात्, कालवादिनो मतेन, कालवादिनश्च ते मन्तव्या ये कालकृतमेव सर्वं जगन्मन्यन्ते, तथा च ते एवमाहुः—न कालमन्तरेण सहकारचम्पकाशोकादिकुसुमोद्गमफलानुबन्धादयो हिमकणानुषक्तशीतप्रपातनक्षत्रगर्भाधानवर्षादयो वा ऋतुविभागसम्पादिता बालकुमारयौवनवलिपलितागमादयो वा अवस्थाविशेषा घटन्ते, प्रतिनियतकालविभाग एव तेषामुपलभ्यमान-

त्वात्, अन्यथा सर्वमव्यवस्थया भवेत्, न चैतद् दृष्टमिष्टं वा, अपिच—मुद्गादिपक्तिरपि न कालमन्तरेण लोके भवन्ती दृश्यते, किन्तु कालक्रमेण, अन्यथा स्थालीन्धनादिसामग्रीसम्पर्कसम्भवे प्रथमसमयेऽपि मुद्गादिपक्तेर्भावप्रसङ्गः, न च तद्भवति, तस्माद्यत्कृतकं तत्सर्वं कालकृतमिति, यदाहुः—'न कालव्यतिरेकेण, गर्भबालशुभादिकम् । यत्किंचिज्जायते लोके, तदसौ कारणं किल ॥ १ ॥ किंच कालादृते नैव, मुद्गपक्तिरपीक्ष्यते । स्थाल्यादिसंनिधानेऽपि, ततः कालादसौ मता ॥ २ ॥" द्वितीयश्च भङ्गोऽयं—अस्ति जीवः स्वतोऽनित्यः कालतः, एवमुक्तप्रकारेण परतोऽपि द्वौ भङ्गौ कर्तव्यौ, यथा—अस्ति जीवः परतो नित्यः कालतः, अस्ति जीवः परतोऽनित्यः कालतः, सर्वेषामपि हि पदार्थानां परपदार्थस्वरूपापेक्षया स्वस्वरूपपरिच्छेदः, यथा दीर्घत्वापेक्षया ह्रस्वत्वस्य ह्रस्वत्वापेक्षया च दीर्घत्वस्य, इत्येवमेवात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुन्यात्मबुद्धिः प्रवर्तत इति, अतो यदात्मनः स्वरूपं तत्परत एवावधार्यते न स्वतः, पूर्वेण च स्वत एव इति पदलब्धेन भङ्गद्विकेन युक्तावेतौ भङ्गौ चत्वारो भवन्ति, ते च कालपदेन लब्धाः, एवमनेन प्रकारेण स्वभावप्रमुखा अपि—स्वभावनियतीश्वरात्मपदान्यपि प्रत्येकं चतुरश्चतुरो विकल्पान् प्राप्नुवन्ति, तथाहि—अस्ति जीवः स्वतो नित्यः स्वभावतः १ अस्ति जीवः स्वतोऽनित्यः स्वभावतः २ अस्ति जीवः परतो नित्यः स्वभावतः ३ अस्ति जीवः परतोऽनित्यः स्वभावतः ४, ते हि स्वभाववादिन एवमाहुः—इह सर्वे भावाः स्वभाववशादुपजायन्ते, तथाहि—मृदः कुम्भो भवति न पटादिः तन्तुभ्योऽपि पट उत्पद्यते न कुम्भादिः, एतच्च प्रतिनियतं भवनं तथास्वभावतामन्तरेण न घटते, तस्मात्सकलमिदं स्वभावकृतमवसेयं, अन्यच्च—आस्तामन्यत्कार्यजातं, इह मुद्गादिपक्तिरपि न स्वभावमन्तरेण भवितुमर्हति, तथाहि—स्थालीन्धनकालादिसमग्रसामग्रीसम्भवेऽपि न काङ्कटुकमुद्गानां पक्तिरुपलभ्यते, तस्माद्यद्भावे भवति यदभावे च न भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति

स्वभावकृता मुद्गपक्तिरप्येष्टव्या, ततः सकलमेवेदं वस्तुजातं स्वभावहेतुकमवसेयमिति । तथा अस्ति जीवः स्वतो नित्यो नियतितः १ तथाऽस्ति जीवः स्वतोऽनित्यो नियतितः २ अस्ति जीवः परतो नित्यो नियतितः ३ अस्ति जीवः परतोऽनित्यो नियतितः ४, नियतिवादिनो ह्येवमाहुः—नियतिर्नाम तत्त्वान्तरमस्ति यद्वशादेते भावाः सर्वेऽपि नियतेनैव रूपेण प्रादुर्भवन्ति, नान्यथा, तथाहि—यद्यदा यतो भवति तत्तदा तत एव नियतेनैव रूपेण भवदुपलभ्यते, अन्यथा कार्यकारणभावव्यवस्था प्रतिनियतरूपव्यवस्था च न भवेत्, नियामकाभावात्, तत एवं कार्यनैयत्यतः प्रतीयमानामेनां नियतिं को नाम निराकर्तुमलं ?, तथा चोक्तम्—"नियतेनैव रूपेण, सर्वे भावा भवन्ति यत्। ततो नियतिजा ह्येते, तत्स्वरूपानुभेदतः ॥ १ ॥ यद्यदैव यतो यावत्, तत्तदैव ततस्तथा । नियतं जायते न्यायात्, क एनां वाधितुं क्षमः ? ॥ २ ॥" तथा अस्ति जीवः स्वतो नित्य ईश्वरतः १ अस्ति जीवः स्वतोऽनित्य ईश्वरतः २ अस्ति जीवः परतो नित्य ईश्वरतः ३ अस्ति जीवः परतोऽनित्य ईश्वरतः ४, ईश्वरवादिनो हि सर्वं जगदीश्वरकृतं मन्यन्ते, ईश्वरं च सहजसिद्धज्ञानवैराग्यधर्मैश्वर्यरूपचतुष्टयं प्राणिनां च स्वर्गापवर्गयोः प्रेरकमिति, तदुक्तम्—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ १ ॥ अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्, स्वर्गं वा श्वभ्रमेव वा ॥ २ ॥" इत्यादि । तथा अस्ति जीवः स्वतो नित्य आत्मनः १ अस्ति जीवः स्वतोऽनित्य आत्मनः २ अस्ति जीवः परतो नित्य आत्मनः ३ अस्ति जीवः परतोऽनित्य आत्मनः ४, आत्मवेदिनो हि विश्वपरिणतिरूपमात्मानमेवैकं प्रतिपन्नाः, यत उक्तम्—'एक एव हि भूतात्मा, देहे देहे व्यवस्थितः । एकधा वहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥ तथा "पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्य"मित्यादि, तदेवं पञ्चभिरपि चतुष्ककैर्मिलितैर्विंशतिर्भङ्गा जाताः, एते च जीवपदेन प्राप्ताः, एवमजीवादिभिरप्यष्टभिः पदैः प्रत्येकं विंशतिर्विकल्पाः प्राप्यन्ते,

यथा अस्त्यजीवः स्वतो नित्यः कालत इत्यादि सर्वं भावनीयं, इत्यतो विंशतिर्नवभिर्गुणिता शतमशीत्युत्तरं क्रियावादिनां भवति ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ इदानीमक्रियावादिनां चतुरशीतिसङ्ख्यभङ्गानयनोपायमाह—'इहे'त्यादिगाथाद्वयं, इह अक्रियावादिभेदानयनप्रक्रमे जीवादीनि पूर्वोक्तानि पुण्यपापवर्जितानि सप्त पदानि परिपाट्या पट्टिकादौ स्थाप्यन्ते, तेषां च जीवादिपदानामधोभागे प्रत्येकं स्वपरशब्दद्विकं स्थाप्यते, स्वतः परत इति द्वे पदे न्यस्येते इत्यर्थः, असत्त्वादात्मनो नित्यानित्यविकल्पौ न स्तः, तद्धर्मिसिद्ध्यापत्तेः, तस्यापि च—स्वपर-शब्दद्विकस्याधस्तात्कालयदृच्छारूपपदद्वयसमेतमेतन्नियतिस्वभावेश्वरात्मलक्षणं पदचतुष्कं लिख्यते, कालयदृच्छानियतिस्वभावेश्वरात्म-स्वरूपाणि षट् पदानि स्थाप्यन्त इत्यर्थः, इह यदृच्छावादिनः सर्वेऽप्यक्रियावादिन एव, न केचिदपि क्रियावादिनः, ततः प्राग्यदृच्छा नोपन्यस्ता ॥ ९४ ॥ ९५ ॥ अथ विकल्पाभिलापमाह—'पढमे'त्यादिगाथात्रयं, नास्ति जीवः स्वतः कालत इति प्रथमो भङ्गः, तदनु नास्ति जीवः परतः कालत इति द्वितीयो भङ्गः, एतौ द्वौ च भङ्गौ कालेन लब्धौ, एवं यदृच्छादिभिरपि पञ्चभिः पदैः प्रत्येकं द्वौ द्वौ विकल्पौ प्राप्येते, सर्वेऽपि मिलिता द्वादश, अमीषां च विकल्पानामर्थः प्राग्वद्भावनीयः, नवरं यदृच्छात इति—यदृच्छावादिनां मते, अथ के ते यदृच्छावादिनः ?, उच्यते, इह ये भावानां संतानापेक्षया न प्रतिनियतं कार्यकारणभावमिच्छन्ति किंतु यदृच्छया ते यदृ-च्छावादिनः, तथा च एत एवमाहुः—न खलु प्रतिनियतो वस्तूनां कार्यकारणभावः, तथाप्रमाणेनाग्रहणात्, तथाहि—शालूकादपि शालूको जायते गोमयादपि, अग्नेरप्यग्निर्जायते अरणिकाष्ठादपि, जायते धूमादपि धूमोऽग्नीन्धनसंपर्कादपि, कन्दादपि जायते कदली वीजादपि, वटादयोऽपि वीजादुपजायन्ते शाखैकदेशादपि, ततो न प्रतिनियतः कश्चिदपि कार्यकारणभाव इति यदृच्छातः कश्चिदपि किंचिद्भवतीति प्रतिपत्तव्यं, न खल्वन्यथा वस्तुसद्भावं पश्यन्तोऽन्यथाऽऽत्मानं प्रेक्षावन्तः परिक्लेशयन्ति, एते च द्वादश विकल्पा जीव-

तत्त्वेन—जीवपदेन संप्राप्ता—लब्धाः, एवमजीवादिभिरपि षड्भिः पदैः प्रत्येकं द्वादश द्वादश विकल्पाः प्राप्ताः, ततो द्वादशभिः सप्त गुणिता जाताश्चतुरशीतिः, सर्वसङ्ख्यया चाक्रियावादिनामेते भेदा भवंतीति ॥ ९६ ॥ ९७ ॥ ९८ ॥ इदानीमज्ञानिकानां सप्तषष्टिसङ्ख्य-भेदानयनोपायमाह—'संते'त्यादिगाथाद्वयं, सत्त्वं १ असत्त्वं २ सदसत्त्वं ३ अवक्तव्यत्वं ४ सदवक्तव्यत्वं ५ असदवक्तव्यत्वं ६ सद-सदवक्तव्यत्वं ७ चेति सप्त पदानि—सप्त भङ्गाः, तत्र सत्त्वं—स्वरूपेण विद्यमानत्वं, असत्त्वं—पररूपेणाविद्यमानत्वं, सदसत्त्वं—स्वपररूपाभ्यां विद्यमानत्वाविद्यमानत्वं, तत्र यद्यपि सर्वं वस्तु स्वपररूपाभ्यां सर्वदैव स्वभावत एव सदसत् तथापि कचित् किञ्चित्कदाचिदुद्भूतं प्रमात्रा विवक्ष्यते तत एवं त्रयो विकल्पा भवन्ति, तथा तदेव सत्त्वमसत्त्वं च यदा युगपदेकेन शब्देन वक्तुमिष्यते तदा तद्वाचकः शब्दः कोऽपि न विद्यते इति अवक्तव्यत्वं, यदा त्वेको भागः सन्नपरश्चावक्तव्यो युगपद्विवक्ष्यते तदा सदवक्तव्यत्वं, यदा त्वेको भागोऽसन्नपरश्चावक्तव्यो युगपद्विवक्ष्यते तदाऽसदवक्तव्यत्वं, यदा त्वेको भागः सन्नपरश्चासन् अपरश्चावक्तव्यस्तदा सदसदवक्तव्यत्वमिति। न चैतेभ्यः सप्तविकल्पेभ्योऽन्यो विकल्पः संभवति, सर्वस्यैतेष्वेव मध्येऽन्तर्भावात्, इह च घटमाश्रित्य किञ्चिद्भावना प्रदर्श्यते, तथाहि—ओष्ठग्रीवाकपालकुक्षिबुध्नादिभिः स्वपर्यायैः सद्भावेन विशेषितः कुम्भः कुम्भो भण्यते, सन् घट इति प्रथमो भङ्गो भवतीत्यर्थः १ तथा पटादिगतैस्त्वक्त्राणादिभिः परपर्यायैरसद्भावेन विशेषितोऽकुम्भो भवति, सर्वस्यापि घटस्य परपर्यायैरसत्त्वविवक्षायामसन् घट इति द्वितीयो भङ्गो भवतीत्यर्थः २ तथा एकस्मिन् देशे स्वपर्यायसत्त्वेन अन्यत्र तु देशे परपर्यायासत्त्वेन विवक्षितो घटः संश्चासंश्च भवति, घटोऽघटश्च भवतीत्यर्थः ३ तथा सर्वोऽपि घटः स्वपरोभयपर्यायैः सद्भावासद्भावाभ्यां विशेपितो युगपद्वक्तुमिष्टोऽवक्तव्यो भवति, स्वपरपर्यायसत्त्वासत्त्वाभ्यामेकेन केनाप्यसांकेतिकेन शब्देन सर्वस्यापि तस्य युगपद्वक्तुमशक्यत्वात् ४ तथा एकस्मिन् देशे स्वपर्यायैः सत्त्वेन विशेषितोऽन्यत्र तु देशे स्वप-

रोभयपर्यायैः सत्त्वासत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चावक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वादेशे चावक्तव्यत्वादिति ५ तथा एकदेशे परपर्यायैरसत्त्वेन विशेषितोऽन्यस्मिंस्तु देशे स्वपरपर्यायैः सत्त्वासत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भोऽसन्नवक्तव्यश्च भवति, अकुम्भोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्याकुम्भत्वात् देशे चावक्तव्यत्वादिति ६ तथा एकदेशे स्वपर्यायैः सत्त्वेन विशेषितः एकस्मिंस्तु देशे परपर्यायैरसत्त्वेन विशेषितोऽन्यस्मिंस्तु देशे स्वपरोभयपर्यायैः सत्त्वासत्त्वाभ्यां युगपदेकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चासंश्चावक्तव्यश्च भवति, घटोऽघटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वादेशेऽघटत्वाद्देशेऽवक्तव्यत्वादिति ७, एवं सप्तभेदो घटः, एवं पटादिरपि द्रष्टव्य एवेति, एतानि च सप्त पदानि जीवादीनां नवानां पदानां परिपाट्या पट्टिकादौ विन्यस्तानामधस्तात्क्रमेण प्रत्येकं स्थापयित्वा यथा—येन प्रकारेण क्रियतेऽभिलापस्तथा साहिष्यत इति—कथ्यते निशमयत—शृणुत, एतच्च शिष्याणामवहितत्वोत्पादनार्थमुक्तमिति ॥ ९९ ॥ १२०० ॥ तमेवाभिलापमाह—'संतो' इत्यादिगाथाद्वयं, सन् जीव इति को वेत्ति ? किं वा तेन ज्ञातेनेति प्रथमो भङ्गः, अस्य चायमर्थः—न कस्यचिद्विशिष्टं ज्ञानमस्ति योऽतीन्द्रियमात्मानमवभोत्स्यते, न च तेन ज्ञातेनापि किञ्चित्फलमस्ति, तथाहि—यदि नित्यः सर्वगतोऽमूर्तो ज्ञानादिगुणोपेत एतद्गुणव्यतिरिक्तो वाऽऽत्मा ततः कतमस्य पुरुषार्थस्य सिद्धिरिति, तस्मादज्ञानमेव श्रेयः, एवं शेषैरप्यसदादिभिः षड्भिः पदैर्जीवभङ्गा भवन्ति, असन् जीवः को वेत्ति ? किं वा तेन ज्ञातेनेत्यादि, इति जाता जीवपदस्य सप्त भङ्गाः, एवमजीवादीनामप्यष्टानां पदानां प्रत्येकं सप्त सप्त भङ्गा भवन्ति, सर्वेऽपि मिलितास्त्रिषष्टिः, तथाऽन्येऽपि—अमी वक्ष्यमाणाः हुशब्दस्यावधारणार्थत्वाच्चत्वार एव भङ्गा इह—अज्ञानिकप्ररूपणप्रक्रमे भवन्ति ॥ १ ॥ ॥ २ ॥ तानेवाह—'संती'त्यादिगाथाद्वयं, सती भावोत्पत्तिः को जानाति ? किं वाऽनया ज्ञातया ? १ एवमसती भावोत्पत्तिः को

वेत्ति ? किं वाऽनया ज्ञातया ? २ सदसती भावोत्पत्तिः को वेत्ति ? किं वाऽनया ज्ञातया ? ३ अवक्तव्या भावोत्पत्तिः को वेत्ति ? किं
वाऽनया ज्ञातया ? ४ एतेषां च भङ्गानामयं तात्पर्यार्थः—इह पदार्थस्योत्पत्तिः किं सतोऽसतः सदसतोऽवाच्यस्य वेति को जानाति ?
ज्ञातेन वा न किञ्चिदपि प्रयोजनमिति, शेषविकल्पत्रयं तु उत्पत्त्युत्तरकालं पदार्थावयवापेक्षमतोऽत्र न संभवतीति नोक्तम्, एतैश्चतुर्भि-
र्भङ्गैर्मिलितैः त्रिषष्टिमध्ये प्रक्षिप्तैर्जाता एषा भङ्गकानां सप्तषष्टिरज्ञानिकानामिति ॥ ३ ॥ ४ ॥ इदानीं वैनयिकानां द्वात्रिंशद्भेदानाह—
'सुरे'त्यादिगाथाद्वयं, सुरा—देवाः नृपतयो—राजानः यतयो—मुनयः ज्ञातयः—स्वजनाः स्थविरा—वृद्धाः अवमा—अनुकम्पनीयाः कार्पटि-
कादयः मातापितरौ प्रतीतौ एतेषामष्टानां प्रत्येकं मनोवचनकायदानैश्चतुर्विधो विनयः क्रियते, तद्यथा—सुराणां विनयं करोति मनसा
तथा वाचा तथा कायेन तथा देशकालोपपन्नदानेन इत्यादि, एते च विनयादेव केवलात्स्वर्गापवर्गमार्गमभ्युपगच्छन्ति, विनयश्च नीचैर्वृ-
त्त्यनुत्सेकलक्षणः, सर्वत्र चैवंविधेन विनयेन देवादिपूपतिष्ठन् स्वर्गापवर्गभाग्भवतीति, तदेवमेतेऽष्टावपि भङ्गा चतुष्केण गुणिता द्वात्रिं-
शद्वैनयिकभेदा भवन्तीति । सर्वैरप्येतैः पूर्वोक्तैः क्रियाऽक्रियाऽज्ञानवैनयिकवादिभेदैः पिंडितैः—एकीकृतैस्त्रीणि त्रिषष्ट्यधिकानि पाखण्डिनां
शतानि भवन्तीति । एतेषां च प्रतिक्षेपः सूत्रकृताङ्गादिभ्यः समवसेयः २०६ ॥ ५ ॥ ६ ॥ सम्प्रति 'अट्ठहा पमाय'त्ति सप्तोत्तर-
द्विशततमं द्वारमाह—

**पमाओ य मुणिंदेहिं, भणिओ अट्ठभेयओ । अन्नाणं १ संसओ २ चेव, मिच्छानाणं ३ तहेव य**
**॥ ७ ॥ रागो ४ दोसो ५ मइब्भंसो ६, धम्मंमि य अणायरो ७ । जोगाणं दुप्पणिहाणं ८, अट्ठहा**
**वज्जियव्वओ ॥ ८ ॥**

प्रमाद्यति—मोक्षमार्गं प्रति शिथिलोद्यमो भवत्यनेन प्राणीति प्रमादः, स च मुनीन्द्रैः—तीर्थकृद्भिर्भणितः—प्रतिपादितो भवति, अष्टभेदः—अष्टप्रकारः, तद्यथा—अज्ञानं—मूढता संशयः—किमेतदेवं स्यादुतान्यथेति संदेहः मिथ्याज्ञानं—विपर्यस्ता प्रतिपत्तिः रागः—अभिष्वङ्गः द्वेषः—अप्रीतिः स्मृतिभ्रंशो—विस्मरणशीलता धर्मे चार्हत्प्रणीतेऽनादरः—अनुद्यमः योगानां—मनोवाक्कायानां दुष्प्रणिधानं—दुष्टताकरणं, अयं चाष्टविधोऽपि प्रमादः कर्मबन्धहेतुत्वाद्वर्जयितव्यः—परिहर्तव्य इति २०७ ॥ ७ ॥ ८ ॥ सम्प्रति 'भरहाहिव'त्ति अष्टोत्तरद्विशततमं द्वारमाह—

**भरहो १ सगरो २ मघवं ३ सणंकुमारो य रायसद्दूलो ४ । संती ५ कुंथू ६ य अरो ७ हवइ सुभूमो ८ य कोरव्वो ॥ ९ ॥ नवमो य महापउमो ९ हरिसेणो १० चेव रायसद्दूलो । जयनामो ११ य नरवई बारसमो बंभदत्तो य १२ ॥ १० ॥**

भरतः प्रथमश्चक्रवर्ती द्वितीयः सगरः—सगरनामा तृतीयो मघवान् चतुर्थः सनत्कुमारो राजशार्दूलः, शार्दूलशब्दः सिंहपर्यायः, राज्ञां शार्दूल इव राजसु वा शार्दूलश्चक्रवर्तीत्यर्थः, पञ्चमः शान्तिनाथः षष्ठः कुन्थुनाथः सप्तमोऽरस्वामी अष्टमः सुभूमो भवति कौरव्यः—कौरव्यगोत्रः नवमो महापद्मः दशमो हरिषेणो राजशार्दूलः—चक्रवर्ती एकादशो जयनामा नरपतिः द्वादशो ब्रह्मदत्तः २०८ ॥ ९ ॥ १० ॥ इदानीं 'हलधर'त्ति नवोत्तरद्विशततमं द्वारमाह—

**अयले १ विजये २ भद्दे ३, सुप्पभे य ४ सुदंसणे ५ । आणंदे ६ नंदणे ७ पउमे ८, रामे यावि ९ अपच्छिमे ॥ ११ ॥**

प्रथमो बलदेवोऽचलः द्वितीयो विजयः तृतीयो भद्रः चतुर्थः सुप्रभः पञ्चमः सुदर्शनः षष्ठ आनन्दः सप्तमो नन्दनः अष्टमः पद्मः

सीताभर्ता राम इत्यर्थः नवमो रामः—कृष्णसहचरः अपश्चिमः—सर्वान्तिमो, न विद्यते पश्चिमो यस्मादिति व्युत्पत्तेः, २०९ ॥ ११ ॥ सम्प्रति 'हरिणो'त्ति दशोत्तरद्विशततमं द्वारमाह—

**तिविट्ठू य १ दुविट्ठू य २ सयंभु ३ पुरिसुत्तमे ४ पुरिससीहे ५ । तह पुरिसपुंडरीए ६ दत्ते ७ नारा-**
**यणे ८ कण्हे ९ ॥ १२ ॥**

त्रिपृष्ठः प्रथमो वासुदेवः प्राकृतत्वादार्षत्वाच्च सूत्रे 'तिविट्ठू'त्ति निर्देशः, द्वितीयो द्विपृष्ठः तृतीयः स्वयम्भूः चतुर्थः पुरुषोत्तमः पञ्चमः पुरुषसिंहः षष्ठः पुरुषपुण्डरीकः सप्तमो दत्तः अष्टमो नारायणो रामभ्राता लक्ष्मण इत्यर्थः, नवमः कृष्णः २१० ॥ १२ ॥ इदानीं 'पडिवासुदेव'त्त्येकादशोत्तरद्विशततमं द्वारमाह—

**आसग्गीवे १ तारय २ मेरए ३ मधुकेढवे ४ निसुंभे ५ य । बलि ६ पहराए ७ तह रावणे य ८**
**नवमे जरासिंधू ९ ॥ १३ ॥**

अश्वग्रीवः प्रथमः प्रतिवासुदेवः तारको द्वितीयः मेरकस्तृतीयः मधुकैटभश्चतुर्थः, अस्य च मधुरित्येव नाम केवलं कैटभाभिधभ्रातृसंबन्धान्मधुकैटभ इत्युच्यते, निशुम्भः पञ्चमः बलिः षष्ठः प्रभाराजः प्रह्लादो वा सप्तमः रावणोऽष्टमः जरासन्धो नवमः, एते सर्वेऽपि त्रिपृष्ठादीनां नवानामपि वासुदेवानां यथाक्रमं प्रतिशत्रवः, तथा सर्वेऽपि चक्रयोधिनः सर्वेऽपि च हताः स्वचक्रैः, यतस्तान्येव प्रतिवासुदेवचक्राणि प्रतिवासुदेवैर्वासुदेवव्यापत्तये क्षिप्तानि पुण्योदयवशाद्वासुदेवान् प्रणम्य वासुदेवहस्ते चटितानि तैः क्षिप्तानि तान्येव प्रतिवासुदेवान् व्यापादयन्ति २११ ॥ १३ ॥ सम्प्रति '**रयणाइं चउदस**'त्ति द्वादशोत्तरद्विशततमं द्वारमाह—

सेणावइ १ गाहावइ २ पुरोहिय ३ तुरय ४ गय ५ वड्डई ६ इत्थी ७ । चक्कं ८ छत्तं ९ चम्मं १० मणि ११ कागिणि १२ खग्ग १३ दंडो १४ य ॥ १४ ॥ चक्कं १ खग्गं २ च धणू ३ मणी ४ य माला ५ तहा गया ६ संखो ७ । एए सत्त उ रयणा सव्वेसिं वासुदेवाणं ॥ १५ ॥ चक्कं छत्तं दंडं तिन्निवि एयाइं वाममित्ताइं । चम्मं दुहत्थदीहं बत्तीसं अंगुलाइ असी ॥ १६ ॥ चउरंगुलो मणी पुण तस्सद्धं चेव होइ विच्छिन्नो । चउरंगुलप्पमाणा सुवन्नवरकागिणी नेया ॥ १७ ॥

सेनापतिः १ गृहपतिः २ पुरोहितः ३ तुरगः ४ गजः ५ वर्धकिः ६ स्त्री ७ चक्रं ८ छत्रं ९ चर्म १० मणिः ११ काकिनी १२ खड्गो १३ दण्ड १४ श्चेत्येतानि चतुर्दशापि रत्नानि निगद्यन्ते, 'रत्नं निगद्यते तज्जातौ जातौ यदुत्कृष्ट'मिति वचनात् सेनापत्यादिजातिषु वीर्यत उत्कृष्टत्वेन रत्नानीत्युच्यन्ते, तत्र सेनापतिः—दलनायको गङ्गासिन्धुपरपारविजये बलिष्टः १ गृहपतिः—चक्रवर्तिगृहसमुचितेतिकर्तव्यतापरः शाल्यादिसर्वधान्यानां समस्तस्वादुसहकारादिफलानां सकलशाकविशेषाणां निष्पादकश्च २ पुरोहितः—शान्तिकर्मादिकृत् ३ तुरङ्गमगजौ प्रकृष्टवेगमहापराक्रमादिगुणसमन्वितौ ४—५ वर्धकिः—गृहनिवेशादिसूत्रणाकारी, यस्तमिस्रगुहायां खण्डप्रपातगुहायां चोन्मग्नजलानिमग्नजलयोर्नद्योश्चक्रवर्तिसैन्योत्तरणाय काष्ठमयं सेतुबन्धं करोति ६ स्त्रीरत्नमत्यद्भुतकामसुखनिधानं ७ चक्रं समस्तायुधातिशायि दुर्दमरिपुजयकरं ८ छत्रं चक्रवर्तिहस्तसंस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं सत् वैताढ्यनगोत्तरविभागवर्तिम्लेच्छानुरोधिमेघकुमारवृष्टाम्बुभरनिरसनसमर्थं नवनवतिसहस्रकाञ्चनशलाकापरिमण्डितं निर्व्रणसुप्रशस्तकाञ्चनमयोद्दण्डदण्डं बस्तिप्रदेशे पञ्जरविराजितं राजलक्ष्मीचिह्नमर्जुनाभिधानपाण्डुरस्वर्णप्रत्यवस्तृतपृष्ठदेशं शारदसंपूर्णपूर्णिमामृगाङ्कमण्डलमनोहरं तपनातपवातवृष्टिप्रभृतिदोषक्षयकारकं ९

चर्मरत्नं छत्रस्याधस्ताच्चक्रवर्तिहस्तस्पर्शप्रभावसंजातद्वादशयोजनायामविस्तारं प्रातरुप्तापराह्णसंपन्नोपभोग्यशाल्यादिसम्पत्तिकरं १० मणिरत्नं वैडूर्यमयं त्र्यस्रं षडंशं यथाक्रममूर्द्ध्वाधःस्थितयोश्छत्रचर्मरत्नयोरपान्तराले छत्रतुम्बे न्यस्तं सद् द्वादशयोजनविस्तारिणः समस्तस्यापि चक्रवर्तिकटकस्य निरुपमप्रकाशकारि तमिस्रगुहायां खण्डप्रपातगुहायां च प्रविशतश्चक्रवर्तिनो हस्तिरत्नदक्षिणशिरसि निबद्धं च द्वादश योजनानि यावत्पूर्वापरपुरतोरूपासु तिसृषु दिक्षु निबिडतममपि तमःस्तोममपहरति, यस्य च हस्ते शिरसि वा बद्ध्यते तस्य दिव्यतिर्यग्मनुष्यकृतसमस्तोपद्रवसमस्तरोगापहारं करोति, एतच्च मूर्ध्न्यन्यत्र वाऽङ्गे व्यवस्थाप्य संग्रामे प्रविष्टः सन् शस्त्रैरवध्यो भवति सर्वभयविमुक्तश्चोपजायते, अन्यच्च—तस्मिन् मणिरत्ने सदा मणिबन्धादौ व्यत्रस्थितेऽवस्थितयौवनोऽवस्थितकेशनखश्चोपजायते पुमान् ११ काकिणीरत्नमष्टसौवर्णिकं समचतुरस्रसंस्थानसंस्थितं विषापहारसमर्थं यत्र चन्द्रप्रभा सूर्यप्रभा वह्निर्दीप्तिर्वा न तमःस्तोममपहर्तुमलं भवति तत्र तमिस्रगुहायामतिनिबिडतिमिरतिरस्करणदक्षं, यस्य दिव्यप्रभावकलिततया द्वादश योजनानि यावत्तमिस्रविसरविनाशिका गभस्तयो विवर्धन्ते, यच्च सर्वकालं चक्रवर्ती निजस्कन्धावारे रात्रौ स्थापयति, तद्धि दिवसालोकभूतं प्रकाशं रजन्यामादधाति, यस्य च प्रभावेण चक्रवर्ती द्वितीयमर्धभरतमभिजेतुं सकलसैन्यसमेतस्तमिस्रगुहायां प्रविशति, तथा च तत्र प्रविष्टः सन् स पूर्वभित्तितटे पश्चिमभित्तितटे च प्रत्येकं योजनान्तरितानि पञ्चधनुःशतायामविष्कम्भान्युभयपार्श्वयोर्योजनोद्योतकराणि चक्रनेमिसंस्थानानि चन्द्रमण्डलप्रतिनिभानि वृत्तहिरण्यरेखारूपाणि गोमूत्रिकान्यायेनैकस्यां भित्तौ पञ्चविंशतिरपरस्यां तु चतुर्विंशतिरित्येकोनपञ्चाशतं मण्डलान्यालिखन् व्रजति, तानि च मण्डलानि यावच्चक्रवर्ती चक्रवर्तिपदं परिपालयति तावदवतिष्ठन्ते, गुहाऽपि तथैवोद्घाटिता तिष्ठति, उपरते तु चक्रिणि तत्सर्वमुपरमते १२ खड्गरत्नं—संग्रामभूमावप्रतिहतशक्तिः १३ दण्डरत्नं रत्नमयपञ्चलताकं वज्रसारमयं सर्वशत्रुसैन्यविनाशकारकं, चक्रवर्तिनः

स्कन्धावारे विषमोन्नतविभागेषु समत्वकारि शान्तिकरं चक्रवर्तिनो हितेप्सितमनोरथपूरकं दिव्यमप्रतिहतं प्रयत्नविशेषतश्च व्यापार्यमाणं योजनसहस्रमप्यधः प्रविशति १४ । एतानि चतुर्दश रत्नानि प्रत्येकं यक्षसहस्राधिष्ठितानि भवन्ति, तथैतानि सेनापत्यादीनि सप्त पञ्चेन्द्रियाणि चक्रादीनि सप्त एकेन्द्रियाणि पृथिवीपरिणामरूपाणि प्रत्येकं जम्बूद्वीपे जघन्यपदेऽष्टाविंशतिरेककालं प्राप्यन्ते, जघन्यतोऽपि चक्रवर्तिचतुष्टयसद्भावात्, उत्कृष्टतस्तु दशोत्तरद्विशतसङ्ख्यानि, चक्रवर्तिनो ह्येककालं त्रिंशद्भवन्ति, यथा अष्टाविंशतिर्विदेहे एकैको भरतैरवतयोः, सप्तानां च त्रिंशता गुणने द्वे शते दशोत्तरे भवत इति ॥ १४ ॥ अथ रत्नप्रस्तावाद्वासुदेवस्यापि रत्नान्याह—'चक्क'मित्यादि, चक्रखड्गधनुर्मणयः प्रतीताः माला सदैव चाम्लाना देवार्पिता गदा—कौमोदकी नाम प्रहरणविशेषः शङ्खः—पाञ्चजन्यो द्वादशयोजनविस्तारिध्वानः, एतानि सप्त रत्नानि सर्वेषामपि वासुदेवानां भवन्ति ॥ १५ ॥ अथ सप्तानामप्येकेन्द्रियरत्नानां प्रमाणमाह—'चक्क'मित्यादि गाथाद्वयं, चक्रं छत्रं दण्डमित्येतानि त्रीण्यपि रत्नानि व्यामप्रमाणानि, व्यामो नाम प्रसारितोभयबाह्वोः पुंसस्तिर्यग्हस्तद्वयाङ्गुल्योरन्तरालं, चर्मरत्नं द्विहस्तदैर्घ्यं, द्वात्रिंशदङ्गुलदीर्घोऽसिः—खड्गरत्नं, तथा दैर्घ्यमधिकृत्य मणिः पुनश्चतुरङ्गुलप्रमाणः, तस्य—दैर्घ्यस्यार्धं द्वे अङ्गुले इत्यर्थः विस्तीर्णो—विस्तृतः, तथा चतुरङ्गुलप्रमाणा सुवर्णवरकाकिनी—जात्यसुवर्णमयी काकिनीनाम रत्नं ज्ञेया, एतानि सप्ताप्येकेन्द्रियरत्नानि सर्वचक्रवर्तिनामात्माङ्गुलेन ज्ञेयानि, शेषाणि तु सप्त पञ्चेन्द्रियरत्नानि तत्तत्कालीनपुरुषोचितमानानीति २१२ ॥ १६ ॥ ॥ १७ ॥ सम्प्रति 'नव निहिओ'त्ति त्रयोदशोत्तरद्विशततमं द्वारमाह—

**नेसप्पे १ पंडुयए २ पिंगलए ३ सव्वरयण ४ महपउमे ५ । काले य ६ महाकाले ७ माणवग ८ महानिही संखे ९ ॥ १८ ॥ नेसप्पंमि निवेसा गामागरनगरपट्टणाणं च । दोणमुहमडंबाणं खंधा-**

राणं गिहाणं च ॥ १९ ॥ गणियस्स य गीयाणं माणुम्माणस्स जं पमाणं च । धन्नस्स य बीयाणं उप्पत्ती पंडुए भणिया ॥ २० ॥ सव्वा आहरणविही पुरिसाणं जा य जा य महिलाणं । आसाण य हत्थीण य पिंगलगनिहिम्मि सा भणिया ॥ २१ ॥ रयणाइं सव्वरयणे चउदस पवराइं चक्कवट्टीणं । उप्पज्जंति एगिंदियाइं पंचिंदियाइं च ॥ २२ ॥ वत्थाण य उप्पत्ती निप्फत्ती चेव सव्वभत्तीणं । रंगाण य धाऊण य सव्वा एसा महापउमे ॥ २३ ॥ काले कालन्नाणं भव्व पुराणं च तिसुवि वंसेसु । सिप्पसयं कम्माणि य तिन्नि पयाए हियकराइं ॥ २४ ॥ लोहस्स य उप्पत्ती होइ महाकाल आगराणं च । रूप्पस्स सुवण्णस्स य मणिमोत्तियसिलपवालाणं ॥ २५ ॥ जोहाण य उप्पत्ती आवरणाणं च पहरणाणं च । सव्वा य जुद्धनीई माणवगे दंडनीई य ॥ २६ ॥ नट्टविही नाडयविही कव्वस्स चउव्विहस्स निप्फत्ती । संखे महानिहिम्मि उ तुडियंगाणं च सव्वेसिं ॥ २७ ॥ चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य विक्खंभे । बारस दीहा मंजूससंठिया जण्हवीएँ मुहे ॥ २८ ॥ वेरुलियमणिकवाडा कणयमया विविहरयणपडिपुन्ना । ससिसूरचक्कलक्खण अणुसमवयणोववत्तीया ॥ २९ ॥ पलिओवमट्ठिईया निहिसरिनामा य तत्थ खलु देवा । जेसिं ते आवासा अक्किज्जा आहिवच्चाय ॥ ३० ॥ एए ते नव निहिणो पभूयधणरयणसंचयसमिद्धा । जे वसमुवगच्छंति सव्वेसिं चक्कवट्टीणं ॥ ३१ ॥

नैसर्पः पाण्डुकः पिङ्गलकः सर्वरत्नः महापद्मः कालः महाकालः माणवकः महानिधिः शङ्खश्च, एते नव निधयः, एतेषु च निधिषु कल्पपुस्तकानि शाश्वतानि वर्तन्ते, तेषु च विश्वस्थितिराख्यायते ॥ १८ ॥ तत्र यस्मिन्निधौ यदाख्यायते तदाह—'नेसप्पंमी'त्यादिगाथा एकादश, नैसर्पे—नैसर्पाभिधे निधौ ग्रामाकरनगरपत्तनानां द्रोणमुखमडम्बानां स्कन्धावाराणां गृहाणां चशब्दादापणानां च निवेशाः—स्थापनान्याख्यायन्ते, तत्र ग्रामो—वृत्त्यावृतः आकरो—यत्र सन्निवेशे लवणाद्युत्पद्यते नगरं—राजधानी पत्तनं—जलस्थलनिर्गमप्रवेशं द्रोण-मुखं—जलनिर्गमप्रवेशं अर्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं मडम्बं स्कन्धावारः—कटकनिवेशः गृहं—भवनं आपणो—हट्ट इति ॥ १९ ॥ गणितस्य—दीनारादिपूगफलादिलक्षणस्य तथा गीतानां—स्वरकरणपाटकरणधूपकागारुकटिकिकाप्रभृतीनां प्रबन्धानां, तथा मानं—सेतिकादि तद्विषयं यत्तदपि मानमेव धान्यादि मेयमिति भावः तथा उन्मानं—तुलाकर्षादि तद्विषयं यत्तदप्युन्मानं, खण्डगुडादि धरिममित्यर्थः, ततः समाहारद्वन्द्वः ततस्तस्य यत्प्रमाणं, तथा धान्यबीजानां च—शाल्यादीनां देशकालौचित्येनोत्पत्तिः—निष्पत्तिः पाण्डुकनिधौ भणिता—व्यावर्णिता ॥ २० ॥ सर्वोऽप्याभरणविधिर्यः पुरुषाणां यश्च महिलानां तथा अश्वानां हस्तिनां च स यथौचित्येन पिङ्गलनामके महा-निधौ भणितः ॥ २१ ॥ इह चक्रवर्तिनश्चतुर्दश रत्नानि सर्वोत्तमानि भवन्ति, तद्यथा—चक्रप्रमुखाणि सप्त एकेन्द्रियाणि सेनापतिप्रमु-खाणि सप्त पञ्चेन्द्रियाणि, तानि चतुर्दशापि सर्वरत्नाख्ये महानिधौ उत्पद्यन्ते, तदुत्पत्तिस्तत्र व्यावर्णितेत्यर्थः, अन्ये त्वेवमाहुः—उत्पद्यन्ते एतत्प्रभावात् स्फीतिमन्ति च भवन्तीत्यर्थः ॥ २२ ॥ सर्वेषामपि वस्त्राणां या उत्पत्तिः तथा सर्वेषामपि वस्त्रादिगतानां भक्तिविशेषाणां सर्वेषामपि च रङ्गाणां—मञ्जिष्ठाकृमिरागकुसुम्भादीनां धातूनां च—लोहताम्रादीनां 'धोव्वाण य'त्ति पाठे तु सर्वेषां वस्त्रादिप्रक्षालनविधीनां या निष्पत्तिः सर्वा चैषा महापद्मे निधावभिधीयते ॥ २३ ॥ काले—कालनामनि निधौ कालज्ञानं—समस्तज्योतिःशास्त्रानुगतं ज्ञानमिति

भावः, तथा जगति त्रयो वंशाः, वंशः प्रवाह आवलिकेत्यनर्थान्तरं, तद्यथा—तीर्थकरवंशश्चक्रवर्तिवंशो बलदेववासुदेववंशश्च, तेषु त्रिष्वपि वंशेषु यद्भव्यं—भावि यच्च पुराणं—अतीतं, उपलक्षणमेतत् वर्तमानं च, 'तिसुवि वासेसु'त्तिपाठे तु अनागतवस्तुविषयमतीतवस्तुविषयं च कालज्ञानं क्रमेणानागतातीतवर्षत्रयगोचरमिति, कचिद् 'भवपुराणं च तिसुवि कालेसु'त्ति पाठः, तत्र च त्रिष्वपि कालेषु—वर्तमानातीतानागतेषु भव्यं—शुभं पुराणं च—अशुभं कालज्ञानमिति, तथा यत् शिल्पशतं—घटलोहचित्रवस्त्रनापितशिल्पानां पञ्चानामपि प्रत्येकं विंशतिभेदत्वात् यानि च कृषिवाणिज्यादीनि जघन्यमध्यमोत्कृष्टभेदभिन्नानि त्रीणि कर्माणि प्रजाया हितकराणि तदेतत्सर्वमभिधीयते ॥ २४ ॥ महाकाले निधौ लोहस्य नानाभेदभिन्नस्योत्पत्तिराख्यायते, रूप्यसुवर्णमणिमुक्ताशिलाप्रवालानां संबन्धिनामाकराणां च, तत्र रूप्यसुवर्णे प्रतीते मणयः—चन्द्रकान्तादयः मुक्ता—मौक्तिकानि शिलाः—स्फाटिकादिका प्रवालानि—विद्रुमाणीति ॥ २५ ॥ माणवके निधौ योधानां—शूरपुरुषाणामावरणानां—खेटकादीनां प्रहरणानां—खड्गादीनां च यत्र यथा वा उत्पत्तिर्भवति तथाऽभिधीयते, तथा सर्वोऽपि युद्धनीतिः—व्यूहरचनादिलक्षणा, सर्वोऽपि च दण्डनीतिः—सामादिचतुर्विधाऽऽख्यायते ॥ २६ ॥ शङ्खाभिधाने पुनर्महानिधौ सर्वोऽपि नर्तनविधिः—नृत्यकरणप्रकारः सर्वोऽपि च नाटकविधिः—अभिनेयप्रबन्धप्रपञ्चनप्रकारः, तथा धर्मार्थकाममोक्षलक्षणपुरुषार्थप्रतिबद्धस्य यद्वा संस्कृतप्राकृतापभ्रंशसंकीर्णभाषानिबद्धस्य गद्यपद्यगेयचौर्णपदबद्धस्य वा चतुर्विधस्यापि काव्यस्य तथा सर्वेषां त्रुटिताङ्गानामातोद्यापरपर्यायाणामुत्पत्तिराख्यायते । अन्ये त्वेते पूर्वोक्ताः पदार्थाः सर्वेऽपि नवसु निधिषु साक्षादेव समुत्पद्यन्ते इति व्याख्यानयन्ति ॥२७॥ अथ नवानामपि निधीनां साधारणं स्वरूपमाह—'चक्कठपई'त्यादि, प्रत्येकमष्टसु चक्रेषु प्रतिष्ठानं—अवस्थानं येषां ते अष्टचक्रप्रतिष्ठानाः, प्राकृतत्वादष्टशब्दस्य परनिपातः, अष्टौ योजनानि उत्सेधः—उच्चैस्त्वं येषां ते तथा, नव च योजनानि विष्कम्भेण नवयोजनविस्तारा इत्यर्थः, द्वादशयोजनदीर्घाः,

मञ्जूपासंस्थानसंस्थिताः सदैव जाह्नव्या—गंगाया मुखेऽवस्थिताः चक्रवर्त्तिन उत्पत्तिकाले च भरतविजयानन्तरं चक्रवर्तिना सह पातालेन चक्रवर्तिपुरमनुगताः ॥ २८ ॥ वैडूर्यमणिमयानि कपाटानि येषां ते तथा, मयट्प्रत्ययस्य वृत्त्या उक्तार्थता, कनकमयाः—सौवर्णाः विविधरत्नपरिपूर्णाः, शशिसूरचक्राकाराणि लक्षणानि—चिह्नानि येषां ते तथा, प्राकृतत्वात्प्रथमाबहुवचनस्य लोपः, 'अणुसमवयणोववत्तीय'त्ति अनुरूपा समा—अविषमा वदनोपपत्तिः—द्वारघटना येषां ते तथा, 'अणुवम'त्तिपाठे तु न विद्यते उपमावचनस्योपपत्तिः—घटना येषां स्वरूपव्यावर्णने ते अनुपमवचनोपपत्तिकाः—उपमया प्रतिपादयितुमशक्याः, उपमाया एवाभावादिति भावः, क्वचित् 'अणुसमयचयणोववत्तीय'त्तिपाठः, तत्र अनुसमयं—प्रतिसमयं पुद्गलानां च्यवनमुपपत्तिश्च येषां ते तथा, यावन्तस्तेभ्यः पुद्गला गलन्ति तावन्त एवानुसमयं लगन्तीत्यर्थः, स्थानाङ्गे तु 'अणुसमजुगबाहुवयणा य'त्ति पठ्यते, तत्र चायमर्थः—अनुसमा—अनुरूपा अविषमा जुगत्ति—यूपस्तदाकारा वृत्तत्वाद्दीर्घत्वाच्च बाहवो—द्वारशाखा वदनेषु—मुखेषु येषां ते तथा ॥ २९ ॥ तेषु च निधिषु पल्योपमस्थितिका निधिसदृशनामानस्ते देवा भवन्ति येषां देवानां त एव निधय आवासा—आश्रयाः आधिपत्याय—आधिपत्यनिमित्तमक्रेयाः, न तेषामाधिपत्यं क्रयेण लभ्यमिति भावः ॥ ३० ॥ एते ते नव निधयः प्रभूतधनरत्नसंचयसमृद्धाः ये सर्वेषामपि भरतक्षेत्राधिपचक्रवर्तिनां वशमुपयान्तीति २१३ ॥ ३१ ॥ इदानीं 'जीवसंखा उ'त्ति चतुर्दशोत्तरद्विशततमं द्वारं विभणिषुः स्वकृतमेव जीवसङ्ख्याप्रतिपादकं कुलकमत्र ग्रन्थे निक्षिप्तवान् ग्रन्थकारः, तत्र चेयमादिगाथा—

**नमिउं नेमिं एगाइजीवसंखं भणामि समयाओ । चेयणजुत्ता एगे १ भवत्थसिद्धा दुहा जीवा २ ॥ ३२ ॥ तस थावरा य दुविहा २ तिविहा थीपुंनपुंसगविभेया ३ । नारयतिरियनरामरगइभे-**

याओ चउब्भेया ४ ॥ ३३ ॥ अहव तिवेयअवेयगसरूवओ वा हवंति चत्तारि ४। एगबितिचउपणिंदियरूवा पंचप्पयारा ते ॥ ३४ ॥ एए चिय छ अणिंदियजुत्ता ६ अहवा छ भूजलग्गिनिला। वणतससहिया ६ छप्पिय ते सत्त अकायसंवलिया ॥ ३५ ॥ अंडय १ रसय २ जराउय ३ संसेयय ४ पोयया ५ समुच्छिमया ६। उब्भिय ७ तहोववाइय ८ भेएणं अट्ठहा जीवा ॥ ३६ ॥ पुढवाइ पंच बितिचउपणिंदि ४ जुत्ता य नवविहा ९ हुंति। नारयनपुंस तिरिनरतिवेय सुरथीपुमेवं वा ॥ ९ ॥ ३७ ॥ पुढवाइ अट्ठ असन्नि सन्नि दस ते ससिद्ध इगदसउ ११। पुढवाइया तसंता अपज्जपज्जत्त बारसहा ॥ ३८ ॥ बारसवि अतणुजुत्ता तेरस सुहुमियरेगिंदियेइंदी। तिय चउ असन्नि सन्नी अपज्जपज्जत्त चउदसहा ॥ ३९ ॥ चउदसवि अमलकलिया पनरस तह अंडगाइ जे अट्ठ। ते अपज्जत्तगपजत्तभेयओ सोलस हवंति ॥ ४० ॥ सोलसवि अकायजुया सतरस नपुमाइ नव अपज्जत्ता। पज्जत्ता अट्ठारस अकम्मजुअ ते इगुणवीसं ॥ ४१ ॥ पुढवाइ दस अपज्जा पज्जत्ता हुंति वीस संखाए। असरीरजुएहिं तेहिं वीसई होइ एगहिया ॥ ४२ ॥ सुहुमियरभूजलानलवाउवणाणंत दस सपत्तेआ। बितिचउअसन्निसन्नी अपज्जपज्जत्त बत्तीसं ॥ ४३ ॥ तह नरयभवणवणजोइकप्पगेवेज्जऽणुत्तरुप्पन्ना। सत्तदसऽडपणबारस नवपणछप्पन्नवेउव्वा ॥ ४४ ॥ हुंति अडवन्नसंखा ते नरतेरिच्छसंगया सव्वे। अपजत्तपजत्तेहिं सोलसुत्तरसयं तेहिं ॥ ४५ ॥ सन्नि-

दुगहीण बत्तीससंगयं तं सयं छयत्तालं। तं भवाभवगदूरभव आसन्नभवं च ॥ ४६ ॥ संसारनिवा-
सीणं जीवाण सयं इमं छयत्तालं। अप्पं व पालियवं सिवसुहकंखीहिं जीवेहिं ॥ ४७ ॥ सिरि-
अम्मएवमुणिवइविणेयसिरिनेमिचंदसूरीहिं। सपरहियत्थं रइयं कुलयमिणं जीवसंखाए ॥ ४८ ॥

नत्वा—प्रणम्य नेमिं—द्वाविंशतीर्थकरं एकादिकां—एकद्वित्र्यादिकां जीवसङ्ख्यां भणामि—कथयामि समयात्—सिद्धान्तात्, न पुनः स्वमनीषिकयेति। तत्र चेतनायुक्ताः—चैतन्योपेता जीवा एके—एकविधाः, उपयोगलक्षणत्वाज्जीवानां, सिद्धसंसार्यवस्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात्, सततावबोधाभावे चाजीवत्वप्रसङ्गात्, तथा भवस्थसिद्धभेदेन द्विधा जीवाः, तत्र भवस्थाः—संसारवर्तिनः सिद्धा—मुक्तिपदप्राप्ताः ॥ ३२ ॥ अथवा त्रसस्थावरभेदेन द्विधा जीवाः, तत्र त्रसा—द्वीन्द्रियादयः स्थावराः—पृथिव्यादय एकेन्द्रियाः, तथा त्रिविधाः स्त्रीपुंनपुंसकभेदतः, इह स्त्र्यादयः स्त्र्यादिवेदोदयात् योन्यादिसंगता गृह्यन्ते, तथा चोक्तम्—"योनिर्मृदुत्वमस्थैर्यं, मुग्धताऽबलता स्तनौ। पुंस्कामितेति लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते ॥ १ ॥ मेहनं खरता दार्ढ्यं, शौण्डीर्यं श्मश्रु धृष्टता। स्त्रीकामितेति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते ॥ २ ॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम्। नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम् ॥ ३ ॥" तथा नारकतिर्यग्नरामरगतिभेदतश्चतुर्भेदा जीवाः ॥ ३३ ॥ अथवा त्रिवेदावेदस्वरूपतो भवन्ति चतुर्विधा जीवाः, वाशब्दः समुच्चये, तत्र त्रिवेदास्त्रयः—पुरुषाः स्त्रियो नपुंसकाश्च, न विद्यते वेद उपशमितत्वात् क्षपितत्वाद्वा येषां ते अवेदाः—अनिवृत्तिबादरादयो भवस्थाः सिद्धाश्च। तथा एकद्वित्रिचतुःपञ्चेन्द्रियभेदतः पञ्चप्रकारास्ते जीवाः ॥ ३४ ॥ एत एव एकेन्द्रियादयः पञ्चप्रकारा जीवा अनिन्द्रिययुक्ताः षड्विधा भवन्ति, न विद्यन्ते इन्द्रियाणि—स्पर्शनादीनि येषां तेऽनिन्द्रियाः—सिद्धाः, अथवा पृथिव्यप्तेजोवायुवनस्पतित्रसभेदतः षड्विधा जीवाः,

तथा पूर्वोक्ता एव पृथिव्यादयः षड्विधा जीवा अकायसहिताः सप्तविधा भवन्ति, न विद्यते कायः—पञ्चप्रकारमपि शरीरं येषां तेऽकायाः—सिद्धाः ॥ ३५ ॥ अण्डजादिभेदतोऽष्टविधा जीवा भवन्ति, तत्र अण्डाज्जाता अण्डजाः—पक्षिगृहकोकिलामत्स्यसर्पादयः रसाज्जाता रसजाः—तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा जीवविशेषाः, जरायोः—गर्भवेष्टनाज्जातास्तद्वेष्टिता इत्यर्थः जरायुजा—मनुष्यगोमहिष्यादयः, संस्वेदाज्जाताः संस्वेदजा—मत्कुणयूकाशतपदिकादयः, पोतं—वस्त्रं तद्वज्जाताः पोतादिव बोहित्थाज्जाता अजरायुवेष्टिता इत्यर्थः पोतजा—हस्तिवल्गुलीचर्मजलूकाप्रभृतयः, संमूर्च्छनेन निर्वृत्ताः संमूर्च्छिमाः—कृमिपिपीलिकामक्षिकाशालिकादयः, उद्भेदाद्—भूमिभेदाज्जाता उद्भेदजाः—पतङ्गखञ्जनकादयः, उपपाते—देवशयनीयादौ भवा औपपातिकाः—देवा नारकाश्चेति ॥ ३६ ॥ पृथिव्यादयः—पृथिव्यप्तेजोवायुवनस्पतयः पञ्च द्वित्रिचतुःपञ्चेन्द्रिययुक्ता नवविधा जीवा भवन्ति, अथवा नारका नपुंसकत्वेनैकविधाः तिर्यञ्चो नराश्च त्रिवेदत्वेन—स्त्रीपुंनपुंसकवेदत्वेन प्रत्येकं त्रिभेदाः सुराश्च स्त्रीपुरुषभेदत्वेन द्विविधाः इत्येवं नवविधा जीवाः ॥ ३७ ॥ पृथिव्यादयः—पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियलक्षणा अष्टौ जीवाः असंज्ञिसंज्ञिपञ्चेन्द्रियेण सहिता दशविधा भवन्ति, तथा त एव दशविधा जीवाः ससिद्धाः—सिद्धसहिता एकादशविधा भवन्ति, तथा पृथिव्यादयस्त्रसान्ताः, पृथिव्यप्तेजोवायुवनस्पतित्रसा इत्यर्थः, प्रत्येकमपर्याप्तपर्याप्तभेदतो द्वादशविधा भवन्ति ॥ ३८ ॥ ते द्वादशापि अतनुयुक्तास्त्रयोदश भवन्ति, न विद्यते तनुः—शरीरं येषां तेऽतनवः—सिद्धाः, तथा एकेन्द्रिया द्विधा—सूक्ष्मा बादराश्च, तथा द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियास्तु द्विविधाः—असंज्ञिनः संज्ञिनश्च, एते सप्तापि प्रत्येकमपर्याप्ताः पर्याप्ताश्चेति चतुर्दशविधा जीवाः ॥ ३९ ॥ एत एव चतुर्दश अमलसहिताः पञ्चदशविधाः, न विद्यते मल इव मलो—निसर्गनिर्मलजीवमालिन्यापादनहेतुत्वादष्टप्रकारं कर्म येषां तेऽमलाः—सिद्धाः, तथा येऽण्डजरसजादयः पूर्वमष्टौ जीवभेदा भणितास्तेऽप-

र्याप्तपर्याप्तभेदतः षोडश भवन्ति ॥ ४० ॥ एत एव षोडश अकायेन—सिद्धेन युक्ताः सप्तदशविधाः । तथा पूर्वोक्ता नपुंसकादिभेदा —नारकनपुंसकस्त्रीपुंनपुंसकतिर्यक्स्त्रीपुंनपुंसकमानवस्त्रीपुंवेददेवलक्षणा नवविधा अपि जीवाः प्रत्येकमपर्याप्ताः पर्याप्ताश्च सन्तोऽष्टादश-भेदाः । तथा ते एव चाष्टादश अकर्मभिः—सिद्धैर्युक्ता एकोनविंशतिः ॥ ४१ ॥ पूर्वं ये पृथिव्यादयो दशविधा जीवा भणिताः त एवापर्याप्तपर्याप्तभेदाभ्यां विंशतिसङ्ख्या भवन्ति, तथा तैरेव पृथिव्यादिभिर्विंशतिसङ्ख्यैर्भेदैरशरीरयुतैः—सिद्धसहितैः सद्भिरेकविंशतिर्जीवभेदा भवन्ति ॥४२॥ पृथिव्यप्तेजोवाय्वनन्तवनस्पतयः पञ्च प्रत्येकं सूक्ष्मवादरभेदतो दश भवन्ति, ते च सप्रत्येकाः—प्रत्येकवनस्पतिसहिता एकादश, द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रियाश्च पञ्च मिलिताः षोडश, एते च प्रत्येकमपर्याप्तपर्याप्तभेदभिन्ना द्वात्रिंशद्भवन्ति, इयमत्र भावना—पृथिवीकायो द्विधा—सूक्ष्मो वादरश्च, पुनरेकैको द्विधा—अपर्याप्तः पर्याप्तश्चेति चतुर्विधः पृथ्वीकायः, एवं जलानलवायवोऽपि, वनस्पतिर्द्विधा —साधारणः प्रत्येकश्च, तत्र साधारणो द्विधा—सूक्ष्मो वादरश्च, पुनरेकैको द्विधा—अपर्याप्तः पर्याप्तश्च, प्रत्येकस्तु वादर एव, स चापर्याप्तपर्याप्तभेदेन द्विविध इति षोढा वनस्पतिकायः, द्वित्रिचतुरसंज्ञिसंज्ञिपञ्चेन्द्रियाः पुनः प्रत्येकमपर्याप्तपर्याप्तभेदतो द्विधा, मिलिताश्च द्वात्रिंशदिति ॥ ४३ ॥ नारकभवनपतिवनचरज्योतिष्ककल्पग्रैवेयकानुत्तरविमानोत्पन्ना जीवा यथाक्रमं सप्तदशअष्टपञ्चद्वादशनवपञ्चभेदा भवन्ति, एवं च वैक्रियशरीरिणः षट्पञ्चाशद्भेदाः, एतदुक्तं भवति—रत्नप्रभादिपृथिवीसप्तकनिवासित्वेन नारकाः सप्तविधाः भवनपतयोऽसुरकुमारादिभेदतो दशविधाः व्यन्तराः पिशाचादिभेदादष्टविधाः ज्योतिष्काश्चन्द्रादिभेदेन पञ्चविधाः कल्पोपपन्नाः सौधर्मादिद्वादशदेवलोकोत्पन्नत्वेन द्वादशविधाः ग्रैवेयकोत्पन्ना अधस्तनाधस्तनादिग्रैवेयकनवकनिवासित्वेन नवविधाः अनुत्तरविमानोत्पन्नास्तु विजयादिविमानपञ्चकोत्पन्नत्वेन पञ्चविधाः, सर्वमीलने च षट्पञ्चाशदिति ॥ ४४ ॥ ते सर्वेऽपि वैक्रियशरीरिणो नरतिर्यक्संगताः सन्तोऽष्टप-

ञ्चाशत्सङ्ख्या भवन्ति, तथा तैरेवाष्टपञ्चाशत्सङ्ख्यैः प्रत्येकमपर्याप्तपर्याप्तभेदभिन्नैः षोडशोत्तरशतं भवन्ति ॥ ४५ ॥ संज्ञिद्विकं—पर्याप्तापर्याप्तसंज्ञिरूपं तेन हीना—रहिता पूर्वोक्ता या द्वात्रिंशत् तया संगतं—मिलितमेतदेव षोडशोत्तरं शतं षट्चत्वारिंशं शतं भवति, संज्ञिद्विकस्य तु षोडशोत्तरशतग्रहणेनैव ग्रहणाद्वर्जनमिति । तच्च षट्चत्वारिंशं शतं भव्याभव्यदूरभव्यासन्नभव्यलक्षणैश्चतुर्भिर्भेदैः संगृह्यते, इदमत्र तात्पर्य—पूर्वोक्तस्य षट्चत्वारिंशदुत्तरशतस्य मध्ये केचिज्जीवा भव्याः केचिदभव्याः केचिद् दूरभव्याः केचिदासन्नभव्या इति, तत्र मुक्तिपर्यायेण भविष्यन्तीति भव्याः—सिद्धिगमनयोग्याः, न पुनरवश्यं सिद्धिगामिन एव, भव्यानामपि केषाञ्चित्सिद्धिगमनासंभवात्, उक्तं च—"भव्वावि न सिज्झिस्संति केइ" इत्यादि, भव्यविपरीता अभव्याः, तथा च ते न कदाचिदपि संसाराकूपारस्य पारं प्राप्नुवन्तः प्राप्नुवन्ति प्राप्स्यन्ति चेति, इदं च भव्यानां भव्यत्वमनादिकालसिद्धं शाश्वतमेव, न पुनः सामग्र्यन्तरेण पश्चाद्भवत्यपगच्छति वा, अभव्यत्वमप्यभव्यानामित्थमेव द्रष्टव्यं, यद्यपि च भव्यत्वाभव्यत्वाभ्यामेव सर्वेऽप्यमी जीवभेदाः संगृहीतास्तथापि भव्यविशेषत्वादेतौ दूरभव्यासन्नभव्यलक्षणौ भेदौ पृथगुपात्तौ, तत्र दूरेण—दीर्घतरेण कालेन भव्या—मुक्तिगामिनो दूरभव्याः—ये गोशालकवच्चिरान्मोक्षं यास्यन्ति, ये पुनस्तेनैव भवेन द्वित्र्यादिभिर्वा भवैर्मोक्षं यास्यन्ति ते आसन्नभव्याः । इह च भव्यत्वाभव्यत्वलक्षणमेवमाचक्षते वृद्धाः—यः संसारविपक्षभूतं मोक्षं मन्यते तदवाप्त्यभिलापं च सस्पृहं वहति किमहं भव्योऽभव्यो वा ? यदि भव्यस्तदा शोभनं अथाभव्यस्तदा धिग्मामित्यादिचिन्तां च कदाचिदपि करोति स इत्यादिप्रकारेण चिह्नेन ज्ञायते भव्य इति, यस्य तु जातुचिदपि नेयं चिन्ता समुत्पन्ना समुत्पद्यते समुत्पत्स्यते वा स ज्ञायतेऽभव्य इति, उक्तं **चाचाराङ्गटीकायां**—"अभव्यस्य हि भव्याभव्यशंकाया अभावादि"त्यादि ॥ ४६ ॥ संसारनिवासिनां—भववर्तिनां जीवानां—प्राणिनामेतत् षट्चत्वारिंशदुत्तरं शतमात्मवत् पालनीयं—रक्षणीयं शिवसुखकाङ्क्षिभिः—

मोक्षसुखाभिलाषुकैर्जीवैरिति ॥ ४७ ॥ श्रीआम्रदेवसूरिशिष्यैः श्रीनेमिचंद्रसूरिभिः स्वपरहिताय, आत्मनोऽविस्मृतये परेषां चावबोधाय इत्यर्थः, जीवसङ्ख्यायाः प्रतिपादकमिदं कुलकं—गाथासमुदायात्मकं रचितं—कृतमिति २१४ ॥ ४८ ॥ इदानीं **'कम्माइं अट्ठ'त्ति** पञ्चदशोत्तरद्विशततमं द्वारमाह—

**पढमं नाणावरणं १ बीयं पुण दंसणस्स आवरणं २। तइयं च वेयणीयं ३ तहा चउत्थं च मोहणीयं ४ ॥ ४९ ॥ पंचममाउं ५ गोयं ६ छट्ठं सत्तमगमंतरायमिह ७। बहुतमपयडित्तेणं भणामि अट्ठमपए नामं ८ ॥ ५० ॥**

प्रथमं—आद्यं ज्ञानावरणं द्वितीयं पुनर्दर्शनावरणं तृतीयं च वेदनीयं तथा चतुर्थं च मोहनीयं पञ्चममायुः गोत्रं षष्ठं सप्तमं चान्तरायं इह च बहुतमोत्तरप्रकृतित्वेन बहुवक्तव्यत्वात् भणामि अष्टमपदे अष्टमपदस्थाने वा नामकर्मेति, ग्रन्थान्तरे हि आयुर्नाम गोत्रमन्तरायं चेत्यनेन क्रमेण पठ्यते, इह तु बहूत्तरप्रकृतितया पर्यन्ते नामकर्मेति । तत्र ज्ञायते—परिच्छिद्यते वस्त्वनेनेति ज्ञानं—सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः आव्रियते—आच्छाद्यतेऽनेनेत्यावरणं—मिथ्यात्वादिसचिवजीवव्यापाराहृतकर्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः ज्ञानस्य—मत्यादेरावरणं ज्ञानावरणं १ तथा दृश्यतेऽनेनेति दर्शनं—सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधः तस्यावरणं दर्शनावरणं २ तथा वेद्यते—आह्लादादिरूपेणानुभूयते यत्तद्वेदनीयं, यद्यपि सर्वं कर्म वेद्यते तथापि पङ्कजादिशब्दवद्वेदनीयशब्दस्य रूढिविषयत्वात् सातासातमेव कर्म वेदनीयमित्युच्यते, न शेषं ३ तथा मोहयति—सदसद्विवेकविकलं करोत्यात्मानमिति मोहनीयं ४ तथा एति—आगच्छति प्रतिबन्धकतां स्वकृतकर्मावाप्तनरकादिकुगतेर्निष्क्रमितुमनसो जन्तोरित्यायुः अथवा आ—समन्तादेति—गच्छति

भवाद्भवान्तरसंक्रान्तौ जन्तूनां विपाकोदयमित्यायुः ५ तथा गूयते—शब्द्यते उच्चावचैः शब्दैर्यत्तद्गोत्रं—उच्चनीचकुलोत्पत्तिलक्षणः पर्यायविशेषः तद्विपाकवेद्यं कर्मापि गोत्रं, कारणे कार्योपचारात् ६ तथा अन्तरा—दातृप्रतिग्राहकयोरन्तर्विघ्नहेतुतया अयते—गच्छतीत्यन्तरायं, यज्जीवस्य दानादिकं कर्तुं न ददातीत्यर्थः ७ तथा नामयति—गत्यादिविविधभावानुभवनं प्रति प्रवणयति जीवमिति नाम ८। एता अष्टौ मूलप्रकृतयः २१५ ॥ ५० ॥ साम्प्रतं 'तेसिं उत्तरपयडीण अट्ठवन्नसयं'ति षोडशोत्तरद्विशततमं द्वारमाह—

पंचविहनाणवरणं नव भेया दंसणस्स दो वेए। अट्ठावीसं मोहे चत्तारि य आउए हुंति ॥ ५१ ॥ गोयम्मि दोन्नि पंचंतराइए तिगहियं सयं नामे । उत्तरपयडीणेवं अट्ठावन्नं सयं होइ ॥ ५२ ॥ मइ १ सुय २ ओही ३ मण ४ केवलाणि जीवस्स आवरिज्जंति। जस्स प्पभावओ तं नाणावरणं भवे कम्मं ॥ ५३ ॥ नयणे१यरो२हि३केवल४दंसणआवरणयं भवे चउहा । निद्दा ५ पयलाहि छहा ६ निद्दाइदुरुत्त ७–८ थीणद्धी ९ ॥ ५४ ॥ एवमिह दंसणावरणमेयमावरइ दरिसणं जीवे। सायमसायं च दुहा वेयणियं सुहदुहनिमित्तं ॥ ५५ ॥ कोहो माणो माया लोभोऽणंताणुबंधिणो चउरो। एवमपच्चक्खाणा पच्चक्खाणा य संजलणा ॥ ५६ ॥ सोलस इमे कसाया एसो नवनोकसायसंदोहो । इत्थीपुरिसनपुंसकरूवं वेयत्तयं तंमि ॥ ५७ ॥ हासरईअरईभयसोगदुगुंछत्ति हासछक्कमिमं। दरिसणतिगं तु मिच्छत्तमीससम्मत्तजोएणं ॥ ५८ ॥ इय मोहे अट्ठवीसा नारयतिरिनरसुराउय चउक्कं। गोयं नीयं उच्चं च अंतरायं तु पंचविहं ॥ ५९ ॥ दाउं न लहइ लाहो

न होइ पावइ न भोगपरिभोगं। निरुओऽवि असत्तो होइ अंतरायप्पभावेणं ॥ ६० ॥ नामे बायालीसा भेयाणं अहव होइ सत्तट्ठी। अहवावि हु तेणउई तिग अहियसयं हवइ अहवा ॥६१॥ पढमा बायालीसा ४२ गइ १ जाइ २ सरीर ३ अंगुवंगे ४ य। बंधण ५ संघायण ६ संघयण ७ संठाण ८ नामं च ॥ ६२ ॥ तह वन्न ९ गंध १० रस ११ फास १२ नाम अगुरुलहुयं च १३ बोद्धव्वं। उवघाय १४ पराघाया १५ णुपुव्वि १६ ऊसासनामं च १७ ॥ ६३ ॥ आयावु १८ज्जोय १९ विहायगई २० तस २१ थावराभिहाणं च २२। बायर २३ सुहुमं २४ पज्जत्ता २५ पज्जत्तं च २६ नायव्वं ॥ ६४ ॥ पत्तेयं २७ साहारण २८ थिर २९ मथिर ३० सुभा ३१ सुभं ३२ च नायव्वं। सूभग ३३ दूभग ३४ नामं सूसर ३५ तह दूसरं ३६ चेव ॥ ६५ ॥ आएज्ज ३७ मणाएज्जं ३८ जसकित्ती नाम ३९ अजसकित्ती ४० य। निम्माणं ४१ तित्थयरं ४२ भेयाणवि हुंतिमे भेया ॥ ६६ ॥ गइ होइ चउप्पयारा जाईवि य पंचहा मुणेयव्वा। पंच य हुंति सरीरा अंगोवंगाइं तिन्नेव ॥ ६७ ॥ छस्संघयणा ६ जाणसु संठाणावि य हवंति छच्चेव ६। वन्नाईण चउक्कं ४ अगुरुलहु १ वघाय १ परघायं १ ॥ ६८ ॥ अणुपुव्वी चउभेया ४ उस्सासं १ आयवं १ च उज्जोयं १। सुहअसुहा विहयगई २ तसाइवीसं च २० निम्माणं ॥ ६९ ॥ तित्थयरेणं सहिया १ सत्तट्ठी एव हुंति पयडीओ ६७। संमामीसेहिं विणा तेवन्ना सेसकम्माणं ॥ ७० ॥ एवं वीसुत्तरसयं १२० बंधे पयडीण होइ

नायवं । बंधणसंघायावि य सरीरगहणेण इह गहिया ॥ ७१ ॥ बंधणभेया पंम उ संघायावि य हवंति पंचेव । पण वन्ना दो गंधा पंच रसा अट्ठ फासा य ॥ ७२ ॥ दस सोलस छव्वीसा एया मेलिवि सत्तसट्ठीए । तेणउई होइ तओ बंधणभेया उ पन्नरस ॥ ७३ ॥ वेउव्वाहारोरालियाण सगतेयकम्मजुत्ताणं । नव बंधणाणि इयरदुसहियाणं तिन्नि तेसिंपि ॥७४॥ सव्वेहिंवि छूढेहिं तिगअहियं सयं तु होइ नामस्स । इय उत्तरपयडीणं कम्मट्ठग अट्ठवन्नसयं ॥ ७५ ॥

पञ्चविधं ज्ञानावरणं नव भेदा दर्शनस्य—दर्शनावरणस्य द्वौ वेदनीये अष्टाविंशतिर्मोहनीये चत्वारश्च आयुषि भवन्ति गोत्रे द्वौ पञ्च अन्तरायके त्रिभिरधिकं शतं नामकर्मणि, उत्तरप्रकृतीनामेवं सर्वमीलनेऽष्टपञ्चाशदधिकं शतं भवतीति ॥ ५१ ॥ ५२ ॥ तत्र यथास्वं तानेव भेदान् क्रमेण नामग्राहमाह—'मई'त्यादिगाथात्रयोविंशतिः, तत्र मतिश्रुतावधिमनःपर्यवकेवलानि जीवस्याव्रियन्ते—आच्छाद्यन्ते यत्प्रभावतस्तद् ज्ञानावरणं भवेत्कर्म, किमुक्तं भवति?—ज्ञानावरणं पञ्चप्रकारं, तद्यथा—मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यवज्ञानावरणं केवलज्ञानावरणं चेति । तथा दर्शनावरणं बन्धे उदये सत्तायां च त्रिधा प्राप्यते, तद्यथा—कदाचिच्चतुर्धा कदाचित् षोढा कदाचिच्च नवधा, तत्र कथं चतुर्धा? कथं षोढा? कथं वा नवधेति त्रीनपि प्रकारान् दर्शयन् प्रथमतश्चतुर्धा दर्शयति—दर्शनावरणं चतुर्धा—चतुष्प्रकारं भवति, कथमित्याह—नयनेतरावधिकेवलेषु—नयनेतरावधिकेवलविषयं तत्, सूत्रे तु सप्तम्या अदर्शनं लोपात्, लोपश्च प्राकृतत्वात्, एष चात्र भावार्थः—दर्शनावरणं यदा चतुर्धा बन्धे उदये सत्तायां वा विवक्ष्यते तदेवंरूपं तदवगन्तव्यं, यथा नयनदर्शनावरणमितरदर्शनावरणमचक्षुर्दर्शनावरणमित्यर्थः अवधिदर्शनावरणं केवलदर्शनावरणं चेति, तदेव दर्शनावरणचतुष्टयं निद्राप्रचलाभ्यां

वतो दातुं न लभते जीवस्तद्दानान्तरायं, एवं यत्प्रभावतो जीवस्य लाभो न भवति तल्लाभान्तरायं, यत्प्रभावतो भोगान् परिभोगांश्च न प्राप्नोति तत्क्रमेण भोगान्तरायं परिभोगान्तरायं च, यत्प्रभावतश्च नीरुजोऽपि—नीरोगोऽपि जीवोऽशक्तः—असमर्थो भवति तद्वीर्यान्तरायं, इयमत्र भावना—यदुदयवशात् सति विभवे समागते च गुणवति पात्रे दत्तमस्मै महाफलमिति जानन्नपि दातुं नोत्सहते तद्दानान्तरायं, तथा यदुदयवशाद्दानगुणेन प्रसिद्धादपि दातुर्गृहे विद्यमानमपि देयमर्थजातं याच्ञाकुशलोऽपि गुणवानपि याचको न लभते तल्लाभान्तरायं, तथा यदुदयवशात् सत्यामपि विशिष्टाहारादिप्राप्तावसति च प्रत्याख्यानपरिणामे वैराग्ये वा केवलं कार्पण्यान्नोत्सहते भोक्तुं तद्भोगान्तरायं, एवं परिभोगान्तरायमपि भावनीयं, नवरं भोगपरिभोगयोरयं विशेषः—सकृद्भुज्यते इति भोगः—आहारमाल्यादिः, पुनः पुनः परिभुज्यते इति परिभोगो—भवनवनितादिः, तथा यदुदयवशात्सत्यपि नीरुजि शरीरे यौवनिकायामपि वर्तमानोऽल्पप्राणो भवति यद्वा बलवत्यपि शरीरे साध्येऽपि प्रयोजने हीनसत्त्वतया न प्रवर्तते तद्वीर्यान्तरायमिति, तथा विवक्षान्तरतः कारणान्तरतश्च नामकर्म नानाप्रकारं, तद्यथा—द्विचत्वारिंशद्भेदं सप्तषष्टिभेदं त्रिनवतिभेदं त्र्युत्तरशतभेदं च ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥ तत्र तावद् द्विचत्वारिंशद्भेदानाह—'पढमे'त्यादिगाथानवकं, प्रथमा द्विचत्वारिंशदियं द्रष्टव्या, तद्यथा—गतिनाम जातिनाम शरीरनाम अङ्गोपाङ्गनाम बन्धननाम संघातनाम संहनननाम संस्थाननाम वर्णनाम गन्धनाम रसनाम स्पर्शनाम अगुरुलघुनाम उपघातनाम पराघातनाम आनुपूर्वीनाम उच्छ्वासनाम आतपनाम उद्योतनाम विहायोगतिनाम त्रसनाम स्थावरनाम बादरनाम सूक्ष्मनाम पर्याप्तनाम अपर्याप्तनाम प्रत्येकनाम साधारणनाम स्थिरनाम अस्थिरनाम शुभनाम अशुभनाम सुभगनाम दुर्भगनाम सुस्वरनाम दुःस्वरनाम आदेयनाम अनादेयनाम यशःकीर्तिनाम अयशःकीर्तिनाम निर्माणनाम तीर्थकरनाम चेति । तथा एतेषामेव गत्यादीनां

भेदानां यदा नारकगत्यादयः प्रतिभेदा विवक्षिता भवन्ति तदा सप्तषष्टिः ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ तामेव सप्तषष्टिमाह— 'गई'त्यादिगाथापञ्चकं, गतिनाम चतुर्धा—नरकगतितिर्यग्गतिमनुष्यगतिदेवगतिभेदात्, जातिनाम पञ्चधा एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियजातिभेदात्, शरीरनाम पञ्चधा औदारिकवैक्रियाहारकतैजसकार्मणशरीरभेदात्, अङ्गोपाङ्गनाम त्रिधा औदारिकवैक्रियाहारकाङ्गोपाङ्गभेदात्, संहनननाम षोढा—वज्रऋषभनाराचऋषभनाराचनाराचअर्धनाराचकीलिकासेवार्तसंहननभेदात्, संस्थाननाम षोढा समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुंडसंस्थानभेदात्, वर्णादिचतुष्कं—वर्णगंधरसस्पर्शलक्षणं, तथा अगुरुलघूपघातपराघातं च, आनुपूर्वीनाम चतुर्धा नारकतिर्यग्मनुष्यदेवानुपूर्वीभेदात्, तथा उच्छ्वासं आतपं उद्योतं, विहायोगतिर्द्विधा—शुभाशुभविहायोगतिभेदात्, त्रसादिविंशतिः—त्रसस्थावरादिका यशःकीर्तिअयशःकीर्तिपर्यन्ता, निर्माणं च, एताः प्रकृतयस्तीर्थकरनाम्ना सहिताः सप्तषष्टिर्भवन्ति, एता एव च वन्धमुदयं चाश्रित्य नामकर्मण उत्तरप्रकृतयः परिगृह्यन्ते, शेषाणां च कर्मणां सम्यक्त्वमिश्रैर्विना त्रिपञ्चाशत्, बन्धचिंतायां हि दर्शनमोहनीयोत्तरप्रकृती सम्यक्त्वमिश्रे न गृह्येते, तयोर्बन्धासंभवात्, मिथ्यात्वपुद्गला एव हि तथाविधविशोधिवशात् सम्यक्त्वरूपतया मिश्ररूपतया च परिणमन्तीति । एवं च सप्तषष्टेर्नामकर्मभेदानां त्रिपञ्चाशतश्च शेषकर्मभेदानां मीलने वन्धे विंशत्युत्तरं प्रकृतीनां शतं भवति ज्ञातव्यं । ननु पूर्वोक्तद्विचत्वारिंशदुत्तरप्रकृतिमध्ये ये बन्धनसंघातनाम्नी प्रतिपादिते ते सप्तषष्टिमध्ये कथं न गण्येते ? इत्याह—'बंधणे'त्यादि, वन्धनसंघातौ शरीरग्रहणेन शरीरनामकर्मान्तर्भूतत्वेनेह—सप्तषष्टिभेदचिंतायां गृहीताविति पृथग्न विवक्षितौ, तथा सत्तायां चिन्त्यमानायां नामकर्मप्रकृतयस्त्रिनवतिसङ्ख्या मतान्तरेण त्र्युत्तरशतसङ्ख्याश्चाधिक्रियन्ते ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ततः क्रमेण त्रिनवतिं त्र्युत्तरशतं चाह—'बंधणे'त्यादिगाथाचतुष्कं, औदारिकवैक्रियाहारकतैजसकार्मणवन्धनभेदाद्बन्धननाम पञ्चधा, संघातनामापि

औदारिकवैक्रियाहारकतैजसकार्मणसंघातभेदात् पञ्चधा, एवमेता दश, तथा वर्णनाम कृष्णनीललोहितहारिद्रसितभेदात् पञ्चधा, गन्धनाम सुरभिदुरभिगन्धभेदाद् द्विधा, रसनाम तिक्तकटुकषायाम्लमधुरभेदात् पञ्चधा, स्पर्शनाम कर्कशमृदुलघुगुरुशीतोष्णस्निग्धरूक्षभेदादष्टधा, एवमेता विंशतिः प्रकृतयः, एतासां मध्याद्वर्णगन्धरसस्पर्शानां सामान्यतश्चतुर्णां सप्तषष्टिपक्षेऽपि गृहीतत्वात्तदपगमे शेषाः षोडश बन्धनसंघातदशकेन सह षड्विंशतिः प्रकृतयो भवन्ति, एताश्च अनन्तरोक्तसप्तषष्टिमध्ये प्रक्षिप्यन्ते, ततो नामप्रकृतीनां त्रिनवतिर्भवतीति । तथा प्रकारान्तरेण बन्धनस्य पञ्चदश भेदाः, के ते इत्याह—'वेउव्वे'त्यादि, वैक्रियाहारकौदारिकाणां प्रत्येकं स्वकतैजसकार्मणयुक्तानां, स्वकं—आत्मीयं, किमात्मीयमिति चेदुच्यते वैक्रियस्य वैक्रियं आहारकस्याहारकं औदारिकस्यौदारिकं तेन स्वकेन तैजसेन कार्मणेन च प्रत्येकं सहितानां बन्धनानि चिन्त्यमानानि नवनवसङ्ख्यानि भवन्ति, तद्यथा—वैक्रियवैक्रियबन्धनं वैक्रियतैजसबन्धनं वैक्रियकार्मणबन्धनं आहारकाहारकबन्धनं आहारकतैजसबन्धनं आहारककार्मणबन्धनं औदारिकौदारिकबन्धनं औदारिकतैजसबन्धनं औदारिककार्मणबन्धनमिति, तत्र पूर्वगृहीतवैक्रियपुद्गलानां स्वैरेव वैक्रियपुद्गलैर्गृह्यमाणैः सह संबन्धो वैक्रियवैक्रियबन्धनं, तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धो वैक्रियतैजसबन्धनं, तथा तेषामेव वैक्रियपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धो वैक्रियकार्मणबन्धनं, तथा पूर्वगृहीतानामाहारकपुद्गलानां स्वैरेवाहारकपुद्गलैर्गृह्यमाणैः सह यः संबन्धः स आहारकाहारकबन्धनं तथा तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध आहारकतैजसबन्धनं, तथा तेषामेवाहारकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध आहारककार्मणबन्धनं, तथा पूर्वगृहीतानामौदारिकपुद्गलानां स्वैरेवौदारिकपुद्गलैर्गृह्यमाणैः सह यः संबन्धः

स औदारिकौदारिकबन्धनं, तेषामेवौदारिकपुद्गलानां गृहीतानां गृह्यमाणानां च तैजसपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध औदारि-
कतैजसबन्धनं, तथा तेषामेवौदारिकपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्ध औदारिक-
कार्मणबन्धनं, तथा 'इयरदुसहियाणं तिन्नि'त्ति इतराभ्यां—तैजसकार्मणाभ्यां द्वाभ्यां समुदिताभ्यां सहितानां वैक्रियाहारकौदारिकाणां
त्रीणि बन्धनानि भवन्ति, तद्यथा—वैक्रियतैजसकार्मणबन्धनं आहारकतैजसकार्मणबन्धनं औदारिकतैजसकार्मणबन्धनं च, तत्र वैक्रिय-
पुद्गलानां तैजसपुद्गलानां कार्मणपुद्गलानां च पूर्वगृहीतानां गृह्यमाणानां वा यः परस्परं संबन्धस्तद्वैक्रियतैजसकार्मणबन्धनं, एवमाहारक-
तैजसकार्मणबन्धनौदारिकतैजसकार्मणबन्धनयोरपि भावनाऽनुसर्तव्या, अनेन च बन्धनत्रिकेण सह पूर्वोक्तानि नव बन्धनानि द्वादश
भवन्ति, तथा 'तेसिं च'त्ति तयोश्च—तैजसकार्मणयोः स्वस्थाने परस्परं बन्धनचिंतायां त्रीणि बन्धनानि भवन्ति, तद्यथा—तैजसतै-
जसबन्धनं तैजसकार्मणबन्धनं कार्मणकार्मणबन्धनं चेति, तत्र तैजसपुद्गलानां पूर्वगृहीतानां स्वैरेव तैजसपुद्गलैर्गृह्यमाणैः सह यः परस्परं
संबन्धस्तत्तैजसतैजसबन्धनं, तेषामेव तैजसपुद्गलानां पूर्वगृहीतानां गृह्यमाणानां च कार्मणपुद्गलैर्गृह्यमाणैः पूर्वगृहीतैश्च सह संबन्धस्तैजस-
कार्मणबन्धनं, कार्मणपुद्गलानां पूर्वगृहीतानां स्वैरेव कार्मणपुद्गलैर्गृह्यमाणैः सह संबन्धः कार्मणकार्मणबन्धनं, एतैश्च त्रिभिर्बन्धनैः सहि-
तानि पूर्वोक्तानि द्वादश बन्धनानि पञ्चदश भवन्ति, एतन्निमित्तभूतानि च यानि बन्धननामकर्माणि तान्यपि पञ्चदश, एतैश्च सर्वैरपि
बन्धनभेदैर्बन्धनपञ्चकरहितपूर्वोक्तत्रिनवतिमध्ये प्रक्षिप्तैर्नामकर्मण उत्तरप्रकृतीनां त्र्युत्तरं शतं भवति । इत्येवं सर्वसङ्ख्यया अष्टानामपि
कर्मणामुत्तरप्रकृतीनामष्टपञ्चाशदधिकं शतं भवतीति । तदेवमुक्ताः सर्वा अपि नामत उत्तरप्रकृतयः, साम्प्रतमेतासामेवार्थः कथ्यते, तत्र
'मन ज्ञाने' मननं मतिः यद्वा मन्यते—इन्द्रियमनोद्वारेण नियतं वस्तु परिच्छिद्यतेऽनयेति मतिः—योग्यदेशावस्थितवस्तुविषय इन्द्रियमनो-

निमित्तोऽवगमविशेषः मतिश्चासौ ज्ञानं च मतिज्ञानं, तच्च द्विविधं—श्रुतनिश्रितमश्रुतनिश्रितं च, तत्र प्रायः श्रुताभ्यासमन्तरेणापि यत्सह-जविशिष्टक्षयोपशमवशादुत्पद्यते तदश्रुतनिश्रितं—औत्पत्तिक्यादिबुद्धिचतुष्टयं, यत्तु पूर्वं श्रुतपरिकर्मितमतेर्व्यवहारकाले तु अश्रुतानुसारि-तया समुत्पद्यते तत् श्रुतनिश्रितं, तच्चतुर्धा, तद्यथा—अवग्रहः ईहा अवायः धारणा चेति, पुनरवग्रहो द्विधा—व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते—प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जनं—उपकरणेन्द्रियस्य कदम्बपुष्पाद्याकृतेः श्रोत्रघ्राणरसनस्पर्शनलक्षणस्य शब्दगन्ध-रसस्पर्शपरिणतद्रव्याणां च यः परस्परं संबन्धः प्रथममुपश्लेषमात्रं, अपरं च—इन्द्रियेणाप्यर्थस्य व्यज्यमानत्वादिन्द्रियमपि व्यञ्जनमु-च्यते, ततश्च व्यञ्जनेन—इन्द्रियलक्षणेन व्यञ्जनस्य—विषयसंबन्धलक्षणस्यावग्रहणं—परिच्छेदनमेकस्य व्यञ्जनशब्दस्य लोपात् व्यञ्जनाव-ग्रहः, किमपीदमिति अव्यक्तज्ञानरूपार्थावग्रहादधोऽव्यक्ततरं ज्ञानमात्रमित्यर्थः, अयं च नयनमनोवर्जेन्द्रियचतुष्टयभेदाच्चतुर्धा, नयनमन-सोरप्राप्यकारित्वेन विषयसंबन्धाभावाद्, अस्य चेन्द्रियविषययोः संबन्धग्राहकत्वादिति भावः, अर्थ्यत इत्यर्थः तस्य शब्दरूपादिभेदाना-मन्यतरेणापि भेदेनानिर्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रहः, किमपीदमित्यव्यक्तज्ञानमित्यर्थः, स च मनःसहितेन्द्रियपञ्चकजन्य-त्वात् षोढा । अवगृहीतस्यैव वस्तुनोऽपि किमयं भवेत् स्थाणुरेव न तु पुरुष इत्यादि वस्तुधर्मान्वेषणात्मकं ज्ञानचेष्टनमीहा, ईहनं ईहेति-कृत्वा, 'अरण्यमेतत् सविताऽस्तमागतो, न चाधुना संभवतीह मानवः । प्रायस्तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना ॥१॥' इत्याद्यन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभिमुखताऽऽलिङ्गितो ज्ञानविशेष ईहा इति हृदयं, साऽपि मनःसहितेन्द्रियपञ्चकजन्यत्वात् षोढैव । ईहितस्यैव वस्तुनः स्थाणुरेवायमित्यादिनिश्चयात्मको बोधविशेषोऽवायः, अयमपि पूर्ववत् षोढा । तथा निश्चितस्यैवाविच्युतिस्मृ-तिवासनारूपं धरणं धारणा, साऽपि पूर्ववत् षोढैव । तदेवमर्थावग्रहादीनां चतुर्णां प्रत्येकं षड्विधत्वाद्व्यञ्जनावग्रहभेदचतुष्टयेन सह श्रुत-

निश्रितं मतिज्ञानमष्टाविंशतिविधं, अश्रुतनिश्रितेन चौत्पत्तिक्यादिबुद्धिचतुष्टयेन सह द्वात्रिंशद्विधं भवति, जातिस्मरणमपि समतिक्रान्तसंख्यातभवावगमस्वरूपं मतिज्ञानभेद एव, तथा चाचाराङ्गटीका—"जातिस्मरणं त्वाभिनिबोधकविशेष" इति, एतावद्भेदभिन्नस्यास्य एतावद्भेदमेव यदावरणस्वभावं कर्म तन्मतिज्ञानावरणमेकग्रहणेन गृह्यते । तथा श्रवणं श्रुतं—वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषः, एवमाकारं वस्तु घटशब्दवाच्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानीकृतसमानपरिणामः शब्दार्थपर्यालोचनानुसारीन्द्रियमनोनिमित्तो ज्ञानविशेष इत्यर्थः, श्रुतं च तद् ज्ञानं च श्रुतज्ञानं, तद्भेदाश्च नन्द्यादिभ्योऽवसेयाः, तस्य सभेदस्याप्यावरणस्वभावं कर्म श्रुतज्ञानावरणं । तथा अवशब्दोऽधःशब्दार्थः, अव—अधोऽधो विस्तृतं वस्तु धीयते—परिच्छिद्यतेऽनेनेत्यवधिः यद्वाऽवधिः—मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः अवधिश्चासौ ज्ञानं च अवधिज्ञानं, तच्चानन्तद्रव्यभावविषयत्वात्तत्तारतम्यविवक्षयाऽनन्तभेदं असङ्ख्येयक्षेत्रकालविषयत्वात्तु तत्तारतम्यविवक्षयाऽसङ्ख्येयभेदं प्रकारान्तरविवक्षया त्वनुगामिकादिभेदत आवश्यकादिभ्योऽनुसरणीयं, तस्यैतावद्भेदभिन्नस्यावरणस्वरूपं कर्म अवधिज्ञानावरणं । तथा संज्ञिभिर्जीवैः काययोगेन मनोवर्गणाभ्यो गृहीतानि मनोयोगेन मनस्त्वेन परिणमय्यालम्ब्यमानानि द्रव्याणि मनांसीत्युच्यन्ते तेषां पर्यायाः—चिन्तानुगुणाः परिणामास्तेषु ज्ञानं मनःपर्यायज्ञानं, इदं चार्धतृतीयसमुद्रान्तर्वर्तिसंज्ञिमनोगतद्रव्यालम्बनं, तच्च द्वेधा—ऋजुमति विपुलमति च, एतत्स्वरूपं च लब्धिद्वारे वक्ष्यते, तस्यैवंभेदभिन्नस्यावरणस्वभावं कर्म मनःपर्यायज्ञानावरणं । तथा केवलं एकं मत्यादिज्ञाननिरपेक्षत्वात् शुद्धं वा केवलं तदावरणमलकलङ्कविगमात् सकलं वा केवलं प्रथमत एवाशेषतदावरणविगमतः संपूर्णोत्पत्तेः असाधारणं वा केवलमनन्यसदृशत्वात् अनंतं वा केवलं ज्ञेयानन्तत्वात् केवलं च तद् ज्ञानं च केवलज्ञानं तस्यावरणं केवलज्ञानावरणं । अत्र चाद्यानि चत्वार्यावरणानि

देशघातीनि केवलज्ञानावरणोद्धरितज्ञानदेशघातित्वात्, केवलज्ञानावरणं तु सर्वघाति, एतानि मतिज्ञानावरणादीनि पञ्चोत्तरप्रकृतयः,
तन्निष्पन्नं तु सामान्येन ज्ञानावरणं मूलप्रकृतिः, यथाऽङ्गुलीपञ्चकनिष्पन्नो मुष्टिः घृतगुडकणिकादिभिर्निष्पन्नो वा मोदक इत्यादि, एव-
मेतनेष्वपि भावना कार्या । तथा नयनाभ्यां दर्शनं–सामान्यावबोधरूपं नयनदर्शनं तस्यावरणं नयनदर्शनावरणं चक्षुर्दर्शनावरणमित्यर्थः,
इतरैः–चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनमितरदर्शनं तस्यावरणमितरदर्शनावरणं, अचक्षुर्दर्शनावरणमित्यर्थः, अवधिरेव दर्शनमवधिदर्शनं
तस्यावरणमवधिदर्शनावरणं, केवलमेव दर्शनं केवलदर्शनं तस्यावरणं केवलदर्शनावरणं, तथा 'द्रा कुत्सायां गतौ' नियतं द्राति–कुत्सित-
त्वमविस्पष्टत्वं गच्छति चैतन्यमनयेति निद्रा–नखच्छोटिकादिमात्रेणैव सुखावबोधा स्वापावस्थेत्यर्थः, कारणे कार्योपचारात् तद्विपाकवेद्या
कर्मप्रकृतिरपि निद्रेत्युच्यते, तथोपविष्ट ऊर्द्धस्थितो वा प्रचलति–विघूर्णयत्यस्यां स्वापावस्थायामिति प्रचला, तद्विपाकवेद्या कर्मप्रकृतिरपि
प्रचला, तथा निद्रातोऽतिशायिनी निद्रा निद्रानिद्रेति मध्यपदलोपी समासः, दुःखप्रबोधा स्वापावस्थेत्यर्थः, तस्यां हि चैतन्यस्यात्यन्तम-
स्फुटतरीभूतत्वाद्बहुभिर्घोलनाप्रकारैः प्रबोधो भवति, अतः सुखप्रबोधनिद्रातोऽस्या अतिशायिनीत्वं, तद्विपाकवेद्या कर्मप्रकृतिरपि निद्रानिद्रा,
तथा प्रचलातोऽतिशायिनी प्रचला प्रचलाप्रचला, सा हि चङ्क्रमणादिकमपि कुर्वतः स्वमुभवतीति स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यास्या
अतिशायिनीत्वं, तथा स्त्याना–बहुत्वेन संघातमापन्ना गृद्धिः–अभिकाङ्क्षा जाग्रदवस्थाऽध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा
स्त्यानगृद्धिः, तस्यां हि जाग्रदवस्थाऽध्यवसितमर्थमुत्थाय साधयति, स्त्याना वा–पिण्डीभूता ऋद्धिः–आत्मशक्तिरूपाऽस्यामिति स्त्यानर्द्धिरि-
त्यप्युच्यते, तद्भावे हि उत्कर्षतः प्रथमसंहननस्य केशवार्धबलसदृशी शक्तिरुपजायते, तथा च प्रवचने श्रूयते–कस्मिंश्चित्प्रदेशे कोऽपि क्षुल्लको
विपाकप्राप्तस्त्यानर्द्धिनिद्रासहितो द्विरदेन दिवा खलीकृतः, ततस्तस्मिन् द्विरदे बद्धाभिनिवेशो निशि स्त्यानर्द्ध्युदये वर्तमानः समुत्थाय तद्-

न्तयुगलमुत्पाट्य स्वोपाश्रयद्वारि च प्रक्षिप्य पुनः प्रसुप्तवान् इत्यादि, तद्विपाकवेद्या कर्मप्रकृतिरपि स्त्यानगृद्धिः स्त्यानर्द्धिर्वोच्यते । तथा वेदनीयं कर्म, वेद्यते—सुखं दुःखं वा आत्मना ज्ञायते तद्वेदनीयं, तच्च द्विधा—सातमसातं च, यदुदयवशादारोग्यविषयोपभोगादिजनित-माह्लादरूपं सातं—सुखं वेद्यते तत्सातवेदनीयं, यदुदयवशाद्रोगादिजनितं परितापरूपमसातं—दुःखमनुभूयते तदसातवेदनीयं । तथा कष्य-न्ते—हिंस्यन्ते परस्परमस्मिन् प्राणिन इति कषः—संसारः कषमयन्ते—गच्छन्त्येभिर्जन्तव इति कषायाः—क्रोधमानमायालोभाः, तत्र क्रोधः—अक्षान्तिपरिणतिरूपः मानो—गर्वो जात्याद्युद्भवममार्दवं माया—वञ्चनाद्यात्मिका जीवपरिणतिः लोभः—असंतोषात्मको जीवपरिणामः, ते च प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदाच्चतुर्धा, ततः षोडश, तत्र पारम्पर्येणानन्तं भवमनुबध्नन्ति—अनुसंद-धतीत्येवंशीला अनन्तानुबन्धिनः, यद्यप्येतेषामन्यकषायोदयरहितानामुदयो नास्ति तथाऽप्यवश्यमनन्तभवभ्रमणमूलकारणमिथ्यात्वोदयापे-क्षकत्वादेतेषामेवैतन्नाम, न पुनः सहजोदयानामन्यकषायाणामपि, तेषामवश्यं मिथ्यात्वोदयापेक्षकत्वाभावात्, नञोऽल्पार्थत्वादल्पं प्रत्या-ख्यानमप्रत्याख्यानं—देशविरतिरूपं तदप्यावृण्वन्तीत्यप्रत्याख्यानावरणाः, प्रत्याख्यानं—सर्वविरतिरूपमावृण्वन्तीति प्रत्याख्यानावरणाः, परी-षहोपसर्गादिसंपाते सति चारित्रिणमपि सं—ईषत् ज्वलयन्तीति संज्वलनाः, तथा नोशब्दः साहचर्ये, ततः कषायैः सहचारिणः—सहव-र्तिनो ये ते नोकषायाः, कैः कषायैः सहचारिण इति चेद्, उच्यते, आद्यैर्द्वादशभिः, तथाहि—नाद्येषु द्वादशसु कषायेषु क्षीणेषु नोकषायाणा-मवस्थानसंभवः, तदनन्तरमेव तेषामपि क्षपणाय क्षपकस्य प्रवृत्तिः, अथवा एते प्रादुर्भवन्तोऽवश्यं कषायानुद्दीपयन्ति, ततः कषायसह-चारिणः, ते च नोकषाया नव, तत्र यदुदये स्त्रियाः पित्तोदये मधुरद्रव्याभिलाषवत् पुंस्यभिलाषः समुत्पद्यते स कुकूलाग्निसमानः स्त्री-वेदः, यदुदये पुंसः स्त्रियामभिलाषो भवति श्लेष्मोदयेऽम्लाभिलाषवत् स तृणाग्निज्वालासमानः पुंवेदः, यदुदये पण्डकस्य पित्तश्लेष्मोदये

मार्जिकाऽभिलापवदुभयोरपि स्त्रीपुरुषयोरभिलाषः समुदेति स नगरमहादाहसमानो नपुंसकवेदः, तथा यदुदये सनिमित्तमनिमित्तं वा हसति तत् हास्यमोहनीयं, यदुदयाद्बाह्याभ्यन्तरेषु वस्तुषु प्रीतिरुपजायते तद्रतिमोहनीयं, एतेष्वेव यदुदयादप्रीतिरुपजायते तदरतिमोहनीयं, यदुदयात्सनिमित्तमनिमित्तं वा तथारूपस्वसंकल्पतो बिभेति तद्भयमोहनीयं, यदुदयात्प्रियविप्रयोगादौ स्वोरस्ताडमाक्रन्दति परिदेवते भूपीठे च लुठति दीर्घं निःश्वसिति तच्छोकमोहनीयं, यदुदयवशात्पुनः पुरीषादिबीभत्सपदार्थेषु जुगुप्सावान् भवति तज्जुगुप्सामोहनीयं, तथा यदुदयाज्जिनप्रणीततत्त्वार्थानामश्रद्धानं विपरीतश्रद्धानं वा तन्मिथ्यात्वं, यदुदयात्पुनर्जिनप्रणीतं तत्त्वं न सम्यक् श्रद्धत्ते नापि निन्दति तन्मिश्रं, सम्यग्मिथ्यात्वमित्यर्थः, यदुदयवशात्पुनर्जिनप्रणीतं तत्त्वं सम्यक् श्रद्धत्ते तत्सम्यक्त्वमिति । तथा नारकस्य सतो वेद्यमानमायुष्कं नारकायुष्कं तिरश्चां तिर्यगायुष्कं मनुष्याणां नरायुष्कं देवानां सुरायुष्कमिति । तथा यदुदयवशादुत्तमजातिकुलतपोरूपैश्वर्यश्रुतसत्काराभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिसंभवस्तदुच्चैर्गोत्रं, यदुदयवशात्पुनर्ज्ञानादिसंपन्नोऽपि निन्दां लभते हीनजात्यादिसंभवं च तन्नीचैर्गोत्रं । अन्तरायभेदाश्च नामोत्कीर्तनावसरे सूत्रकृतैव व्याख्याता इति । तथा गम्यते—तथाविधकर्मसचिवैर्जीवैः प्राप्यत इति गतिः—नारकत्वादिपर्यायपरिणतिः तद्विपाकवेद्या कर्मप्रकृतिरप्युपचाराद्गतिः सैव नाम गतिनाम, एवमन्यत्रापि द्रष्टव्यं, ततश्च नरकविषये गतिनाम नरकगतिनाम, नारकशब्दव्यपदेश्यपर्यायनिबन्धनं नरकगतिनामेति तात्पर्यं, एवं तिर्यग्मनुष्यदेवगतिनामापि वाच्यमिति । तथा एकेन्द्रियादीनां एकेन्द्रियत्वादिरूपसमानपरिणामलक्षणमेकेन्द्रियादिव्यपदेशभाग् यत्सामान्यं सा जातिः, इदमत्र तात्पर्यं—द्रव्यरूपमिन्द्रियं अङ्गोपाङ्गनामेन्द्रियपर्याप्तिनामसामर्थ्यात् सिद्धं, भावरूपं तु स्पर्शनादीन्द्रियावरणक्षयोपशमसामर्थ्यात्, 'क्षायोपशमिकानीन्द्रियाणी'ति वचनात्, यत्पुनरेकेन्द्रियादिशब्दप्रवृत्तिनिबन्धनं तथारूपसमानपरिणतिलक्षणं सामान्यं तदनन्यसाध्यत्वाज्जातिनामनिबन्ध-

नमिति, उक्तं च—"अव्यभिचारिणा सादृश्येनैकीकृतोऽर्थोऽसौ जाति"रिति, तन्निमित्तं जातिनाम, तत्र एकस्य स्पर्शनेन्द्रियज्ञानस्यावरणक्षयोपशमात्तदेकविज्ञानभाज एकेन्द्रियाः, एवं यस्य यावन्तीन्द्रियाणि तस्य तान्याश्रित्यानेनाभिलापेन तावज्ज्ञेयं यावत्पञ्चानां स्पर्शनरसनघ्राणचक्षुःश्रोत्रज्ञानानामावरणक्षयोपशमात् पञ्चविज्ञानभाजः पञ्चेन्द्रियाः, तेषामेकेन्द्रियाणां जातिनाम एकेन्द्रियजातिनाम एवं यावत् पञ्चेन्द्रियजातिनाम । शीर्यत इति शरीरं—प्रतिक्षणं प्रागवस्थातश्चयापचयाभ्यां विनश्यतीत्यर्थः, तत्र यस्य कर्मण उदयादौदारिकवर्गणापुद्गलान् गृहीत्वा औदारिकशरीरत्वेन परिणमयति तदौदारिकशरीरनाम, एवं वैक्रियाहारकतैजसकार्मणशरीरनामस्वपि वाच्यं, यावद् यस्य कर्मण उदयात्कार्मणवर्गणापुद्गलान् गृहीत्वा कार्मणशरीरत्वेन परिणमयति तत्कार्मणशरीरनाम, इदं च सत्यपि समानवर्गणापुद्गलमयत्वे स्वकार्यभूतात्कार्मणशरीरादन्यदेव, इयं हि कार्मणशरीरस्य कारणभूता नामकर्मण उत्तरप्रकृतिः, कार्मणशरीरं तु पुनरेतदुदयसंभवित्वादेतत्कार्यं निःशेषकर्मणां प्ररोहभूमिराधारो वा संसार्यात्मनां च गत्यन्तरसंक्रमणे साधकतमं कारणमित्यन्यदेव स्वकार्यात्कार्मणशरीरात्कारणभूतं प्रस्तुतं कार्मणशरीरनामकर्मेति । तथा अङ्गानि—शिरउरउदरपृष्ठबाहूरुसंज्ञितान्यष्टौ तदवयवभूतानि त्वङ्गुल्यादीन्युपाङ्गानि शेषाणि तु तत्प्रत्यवयवभूतान्यङ्गुलिपर्वरेखादीन्यङ्गोपाङ्गानि, अङ्गानि च उपाङ्गानि च अङ्गोपाङ्गानि चेति द्वन्द्वे एकपदशेषे अङ्गोपाङ्गानि, तानि च यस्य कर्मण उदयाद् येषु त्रिषु शरीरेषु भवन्ति तत् त्रिविधं अङ्गोपाङ्गनाम, तत्र यदुदयादौदारिकशरीरत्वेन परिणतानां पुद्गलानामङ्गोपाङ्गविभागेन परिणतिर्भवति तदौदारिकशरीराङ्गोपाङ्गनाम, एवं वैक्रियाहारकाङ्गोपाङ्गनाम्नोरपि वाच्यं, तैजसकार्मणयोस्तु जीवप्रदेशसंस्थानानुरोधित्वान्नास्त्यङ्गोपाङ्गसंभव इति । तथा वध्यतेऽनेनेति वन्धनं—औदारिकादिपुद्गलानां गृहीतानां गृह्यमाणानां च परस्परसंश्लेषकारि, तच्च शरीरपञ्चकभेदात् पञ्चधा, तत्र पूर्वगृहीतैरौदारिकपुद्गलैः सह गृह्यमाणानौदारिकपुद्गलानुदितेन येन कर्मणा वध्नात्यात्मा—

परस्परसंसक्तान् करोति तदौदारिकबन्धननाम, दारुपाषाणादीनां जतुरालाप्रभृतिश्लेषद्रव्यवत्, एवं वैक्रियादिवन्धनचतुष्केऽपि वाच्यं, अथवा औदारिकौदारिकवन्धननामभेदादि पञ्चदशधा, तच्च प्रागेव व्याख्यातं, यदि त्विदं शरीरपुद्गलानामन्योऽन्यसंश्लेषकारि वन्धननाम न स्यात् तत्तेषां शरीरपरिणत्या संहितानामप्यसंबद्धत्वात्पवनापहृतकुण्डस्थितसंहतास्तिमितसक्तूनामिव एकत्र स्थैर्यं न स्यादिति । तथा संघात्यन्ते—पिण्डीक्रियन्ते औदारिकादिपुद्गला येन तत्संघातनं, तदपि च शरीरपञ्चभेदत्वात्पञ्चधा, तत्र यस्य कर्मण उदयादौदारिकशरीरत्वपरिणतान् पुद्गलानात्मा संघातयति—पिण्डयत्यन्योऽन्यसंनिधानेन व्यवस्थापयति तदौदारिकसंघातनाम, इत्येवं वैक्रियादिशरीरचतुष्टयेऽपि वाच्यं, यदि च पुद्गलसंहतिमात्रनिमित्तं संघातनाम न स्यात्तदा वन्धोऽपि न भवेत्, 'नासंहतस्य बंधन'मिति न्यायात् । तथा संहन्यमानशरीरपुद्गलानां लोहपट्टादिवत् उपकारि संहननं—अस्थिरचनाविशेषः, तत्पुनरौदारिकशरीर एव नान्येषु, अस्थ्यादिरहितत्वात्तेषां, तच्च षोढा—वज्रऋषभनाराचादि, तत्र वज्रं—कीलिका ऋषभः—परिवेष्टनपट्टः नाराचः—उभयतो मर्कटवन्धः, ततश्च द्वयोरस्थ्नोरुभयतो मर्कटवन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्रनामकमस्थि भवति यत्र तद्वज्रऋषभनाराचं प्रथमं, वज्रवर्जं ऋषभनाराचं द्वितीयं, ऋषभवर्जं वज्रनाराचमित्यन्ये, वज्रऋषभवर्जं नाराचं तृतीयं, एकतो मर्कटवन्धं द्वितीयपार्श्वे कीलिकाविद्धमर्धनाराचं चतुर्थं, ऋषभनाराचवर्जं कीलिकाविद्धास्थिद्वयसंचितं कीलिकाख्यं पञ्चमं, यत्र पुनः परस्परं पर्यन्तमात्रसंस्पर्शलक्षणां सेवां ऋतानि—आगतान्यस्थीनि भवन्ति नित्यमेव च स्नेहाभ्यङ्गादिरूपां परिशीलनामाकाङ्क्षति तत्सेवार्तं षष्ठं संहननमिति । तथा संस्थानं—अवयवरचनात्मिका शरीराकृतिः, तदपि षोढा—समचतुरस्रादि, तत्र समाः—शरीरलक्षणशास्त्रोक्तप्रमाणलक्षणाविसंवा(ग्रन्थाग्रं १५०००)दिन्यस्रतस्रोऽस्रयः—चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तत्समचतुरस्रं, समासान्तोऽत्प्रत्ययः, न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलं,

यथा न्यग्रोध उपरि संपूर्णावयवोऽधस्तु हीनस्तथेदमपि नाभेरुपरि विस्तारबहुलं संपूर्णलक्षणादिमाग् अधस्तु न तथेति, तथा आदिः— इहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते, ततः सह आदिना—नाभेरधस्तनभागेन यथोक्तप्रमाणलक्षणेन वर्तत इति सादि, यद्यपि च सर्वमपि शरीरमादिना सह वर्तते तथापि सादित्वविशेषणान्यथानुपपत्त्या विशिष्ट एव प्रमाणलक्षणोपपन्न आदिरिह लक्ष्यते, तत उक्तं- यथोक्तप्रमाणलक्षणेनेति, इदमुक्तं भवति—यत्संस्थानं नाभेरधः प्रमाणोपपन्नमुपरि च हीनं तत्सादि इति, अपरे तु साचीति पठन्ति, तत्र साचीति प्रवचनवेदिनः शाल्मलीतरुमाचक्षते, ततः साचीव यत्संस्थानं तत्साचि, यथा शाल्मलीतरोः स्कन्धकाण्डमतिपुष्टमुपरि च न तदनुरूपा महाविशालता तद्वदस्यापि संस्थानस्याधो भागः परिपूर्णो भवति उपरितनभागस्तु नेति भावः, तथा वामनं मडहकोष्ठं पाणिपादशिरोग्रीवं यथोक्तप्रमाणलक्षणोपेतं शेषं तूरउदरादिरूपं कोष्ठं शरीरमध्यं मडहं—लक्षणरहितं तद् यत्र तद्वामनमित्यर्थः, अधस्त- नकायमडहं कुब्जं पाणिपादशिरोग्रीवालक्षणोऽधस्तनकायो मडहो—लक्षणविसंवादी यत्र शेषं तु मध्यकोष्ठं यथोक्तलक्षणयुक्तं तत्कुब्जं, वामनविपरीतमित्यर्थः, अन्ये तु दर्शितलक्षणव्यत्ययेन प्रथमं कुब्जं ततो वामनं पठन्तीति, हुण्डं तु सर्वावयवेषु प्रायो लक्षणविनिर्मुक्तं, यस्यैकोऽप्यवयवः प्रायो न लक्षणयुक्तो भवति तत्सर्वत्रासंस्थितं हुण्डमित्यर्थः । तथा वर्ण्यते—अलङ्क्रियते गुणवत्क्रियते शरीराद्यनेनेति वर्णः—कृष्णादिः पञ्चधा, तत्र कृष्णः कज्जलादाविव नीलः प्रियङ्गुपर्णादाविव लोहितो हिङ्गुलकादाविव हारिद्रो हरिद्रादाविव शुक्लः खटिकादाविव। तथा गन्ध्यते आघ्रायत इति गन्धः, स द्विधा—सुरभिः श्रीखण्डादाविव दुरभिर्लसुनादाविव। तथा रस्यते—आस्वाद्यत इति रसः तिक्तादिः पञ्चधा, तत्र तिक्तः कोशातक्यादाविव कटुः शुण्ठ्यादाविव, शास्त्रे हि यत्परिणाममङ्गीकृत्यातिदारुणं तत्कटुकमु- च्यते, यच्च परिणामेऽतिशीतलं तन्निम्बादिकं लोके कटुकमपि शास्त्रे तिक्तमिति व्यपदिश्यते, कषायोऽपक्वकपित्थादाविव अम्ल आम्लवे-

तसादाविव मधुरः शर्करादाविव । तथा स्पृश्यत इति स्पर्शः—कर्कशादिरष्टधा, तत्र कर्कशः पाषाणादाविव मृदुर्हंसरुतादाविव लघुरर्कतूलादाविव गुरुर्वज्रादाविव शीतो मृणालादाविव उष्णो वह्न्यादाविव स्निग्धो घृतादाविव रूक्षो भस्मादाविव, एवमेते वर्णादयो यदुदयवशाज्जन्तुशरीरेषु भवन्ति तान्यपि कर्माण्येतन्नामकानि वाच्यानीति। तथा सर्वप्राणिनां शरीराणि यदुदयवशादात्मीयात्मीयापेक्षया नैकान्तेन लघूनि नापि गुरूणि किंतु अगुरुलघुपरिणामपरिणतानि भवन्ति तदगुरुलघुनाम, एकान्तगुरुत्वे हि वोढुमशक्यानि स्युः एकान्तलघुत्वे तु वायुना विक्षिप्यमाणानि धारयितुं न पारयेरन्निति। तथा स्वशरीरावयवैरेव प्रतिजिह्वागलवृन्दलम्बकचौरदन्तादिभिः शरीरान्तर्वर्धमानैर्यदुदयादुपहन्यते—पीड्यते जन्तुस्तदुपघातनाम, तथा यदुदयादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा नृपसभामपि गतः सभ्यानामपि क्षोभमापादयति प्रतिपक्षप्रतिघातं च विधत्ते तत्पराघातनाम, तथा कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतुःसमयप्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटी इहाऽऽनुपूर्वी, तत्र नरकगत्या सहचरिताऽऽनुपूर्वी नरकगत्यानुपूर्वी, तत्समयं च वेद्यमानत्वात्सहचारित्वं, एवं तिर्यग्मनुष्यदेवानुपूर्व्योऽपि वाच्याः । तथा यदुदयादुच्छ्वासनिःश्वासलब्धिरात्मनो भवति तदुच्छ्वासनाम, सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न संभवतीति चेत्, नैतदस्ति, वैक्रियाहारकादिलब्धीनां औदयिकीनामपि संभवाद्, वीर्यान्तरायक्षयोपशमोऽपि च तत्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यते । ननु यदि उच्छ्वासनामकर्मोदयादुच्छ्वासनिःश्वासौ तदा उच्छ्वासपर्याप्तिनाम्नः कोपयोगः ?, उच्यते, उच्छ्वासनाम्न उच्छ्वासनिःश्वासग्रहणमोक्षविषया लब्धिरुपजायते, सा च लब्धिर्नोच्छ्वासपर्याप्तिमन्तरेण स्वफलं साधयति, न खल्विषुक्षेपणशक्तिमानपि धनुर्ग्रहणशक्तिमन्तरेणेषुं क्षेप्तुमलं, तत उच्छ्वासलब्धिनिर्वर्तनार्थमुच्छ्वासपर्याप्तिनाम्न उपयोगः, एवमन्यत्रापि भिन्नविषयता यथायोगं सूक्ष्म-

धिया भावनीया। तथा यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम, तद्विपाकश्च भानुमण्डलादिगतेषु पृथिवीकायेष्वेव, न वह्नौ, प्रवचने प्रतिषेधात्, तत्रोष्णत्वमुष्णस्पर्शनामोदयात् उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति। तथा यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यनुष्णप्रकाशात्मकमुद्योतमातन्वन्ति यथा यतिदेवोत्तरवैक्रियचन्द्रग्रहनक्षत्रताराविमानरत्नौषधयस्तदुद्योतनाम, तथा विहायसा—नभसा गतिः—प्रवृत्तिर्विहायोगतिः, ननु सर्वगतत्वाद्विहायसस्ततोऽन्यत्र गतिर्न संभवतीति किमर्थं विहायसा विशेषणं?, व्यवच्छेद्याभावात्, सत्यमेतत्, किंतु यदि गतिरित्येवोच्यते ततो नाम्नः प्रथमप्रकृतिरपि गतिरस्तीति पौनरुक्त्याशङ्का स्यात्, अतस्तद्व्यवच्छित्तये विहायसा विशेषणं, विहायसा गतिर्न तु नारकत्वादिपर्यायपरिणतिरूपेति विहायोगतिः, सा च द्वेधा-प्रशस्ता अप्रशस्ता च, तत्र प्रशस्ता हंसहस्तिवृषभादीनां, अप्रशस्ता तु खरोष्ट्रमहिषादीनामिति। तथा त्रस्यन्ति—उष्णाद्यभितप्ताः सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसा—द्वीन्द्रियादयः तत्पर्यायविपाकवेद्यं कर्मापि त्रसनाम, तथा तिष्ठन्तीत्येवंशीला उष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्थाः स्थावराः—पृथिव्यादय एकेन्द्रियादयः तत्पर्यायविपाकवेद्यं कर्मापि स्थावरनाम, तेजोवायूनां तु स्थावरनामोदयेऽपि चलनं स्वाभाविकमेव, न तूष्णाद्यभितापेन द्वीन्द्रियादीनामिव विशिष्टमिति। तथा यदुदयाज्जीवा वादरा भवन्ति तद्वादरनाम, वादरत्वं चात्र परिणामविशेषः, यद्वशात्पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि वहूनां समुदाये चक्षुषा ग्रहणं भवति, तद्विपरीतं सूक्ष्मनाम, यदुदयाद्वहूनामपि समुदितानां जन्तुशरीराणां चक्षुर्ग्राह्यत्वं न भवति, तथा यदुदयात्स्वयोग्यपर्याप्तिनिर्वर्तनसमर्थो भवति तत्पर्याप्तकनाम, यदुदयाच्च स्वयोग्यपर्याप्तिपरिसमाप्तिसमर्थो न भवति तदपर्याप्तकनाम, पर्याप्तिस्वरूपं तु द्वाविंशत्यधिकद्विशततमद्वारे विशेषेण वक्ष्यते, तथा यदुदयात् जीवं जीवं प्रति भिन्नं शरीरमुपजायते तत्प्रत्येकनाम, तस्योदयः

प्रत्येकशरीरिणां, प्रत्येकशरीरिणश्च नारकामरमनुष्यद्वीन्द्रियादयः पृथिव्यादयः कपित्थादितरवश्च, ननु यदि प्रत्येकनाम्न उदयः कपित्थादिपादपादीनामिष्यते तर्हि तेषां जीवं जीवं प्रति भिन्नं शरीरं भवेत्, तच्च न भवति, यतः कपित्थाश्वत्थपीलुशेल्वादीनां मूलस्कन्धत्वक्शाखादयः प्रत्येकमसङ्ख्येयजीवा उच्यन्ते, यत उक्तं प्रज्ञापनायां एकास्थिकबहुबीजवृक्षप्ररूपणावसरे—"एएसिं मूला असंखेज्जजीविया कंदावि खंधावि तयावि सालावि पवालावि, पत्ता पत्तेयजीविया" इत्यादि, मूलादयश्च फलपर्यन्ताः सर्वेऽप्येकशरीराकारा उपलभ्यन्ते, देवदत्तशरीरवत्, यथा हि देवदत्तशरीरमखण्डमेकरूपमुपलभ्यते तद्वन्मूलादयोऽपि, तत एकशरीरात्मकाः कपित्थादयस्ते चासङ्ख्येयजीवाः ततः कथं ते प्रत्येकशरीरिणः?, उच्यते, प्रत्येकशरीरिण एव, तेषां मूलादिष्वसङ्ख्येयानामपि जीवानां भिन्नभिन्नशरीरसंभवात्, केवलं श्लेषद्रव्यविमिश्रितसकलसर्षपवर्तिरिव प्रबलरागद्वेषोपचिततथारूपप्रत्येकनामकर्मपुद्गलोदयतस्ते तथा परस्परविमिश्रशरीरा जायन्ते, तथा चोक्तं प्रज्ञापनायामेव—"जह सगलसरिसवाणं सिलेसमिस्साण वट्टिया वट्टी। पत्तेयसरीराणं तह होंति सरीरसंघाया ॥ १ ॥ जह वा तिलपप्पडिया बहुएहिं तिलेहिं मीसिया संती। पत्तेयसरीराणं तह होंति सरीरसंघाया ॥ २ ॥" गाथाद्वयस्याप्ययमक्षरार्थः—यथा सकलसर्षपाणां श्लेषद्रव्येण मिश्रीकृतानां वर्तिता—वलिता वर्तिः यथा च बहुभिस्तिलैर्विमिश्रिता सती तिलपर्पटिका भवति तथा प्रत्येकशरीरिणां शरीरसङ्घाताः, इयमत्र भावना—यथा तस्यां वर्तौ सकलसर्षपाः परस्परं भिन्ना नान्योऽन्यानुवेधभाजस्तथा अदर्शनात् अत एव सकलग्रहणं येन स्पष्टमेव अन्योऽन्यानुवेधाभावः प्रतीयते, एवं वृक्षादावपि मूलादिषु प्रत्येकमसङ्ख्येया अपि जीवाः परस्परं विभिन्नशरीराः, यथा च ते सर्षपाः श्लेषद्रव्यसंपर्कमाहात्म्यात् परस्परं विमिश्रा जातास्तथा प्रत्येकशरीरिणोऽपि ते तथारूपप्रत्येकनामकर्मपुद्गलोदयात्परस्परं संहता जाता इति। तथा यदुदयवशादनन्तानां जीवानामेकं शरीरं भवति तत्साधारणनाम, ननु कथमन-

न्तानां जीवानामेकं शरीरमुपजायते ?, तथाहि—य एव प्रथममुत्पत्तिदेशमागतस्तेन तच्छरीरं निष्पादितं, अन्योऽन्यानुगमनेन च सक-
त्मना क्रोडीकृतं, ततः कथं तत्रान्येषां जीवानामवकाशः ?, न खलु देवदत्तशरीरे देवदत्तेनान्योऽन्यानुवेधेन क्रोडीकृते देवदत्त श-
सकलशरीरेण सहान्योऽन्यानुगमपुरस्सरमन्येऽपि जीवाः प्रादुष्षन्ति, तथाऽदर्शनात्, अपि च—सत्यप्यवकाशे येनैव तच्छरीरं निष्पाद्या-
न्योऽन्यानुगमेन क्रोडीकृतं स एव तत्र प्रधान इति, तस्यैव पर्याप्तापर्याप्तव्यवस्था प्राणापानादियोग्यपुद्गलोपादानं च भवेत्, न शेषाणा-
मिति, तदेतदसम्यक्, सम्यग्जिनवचनपरिज्ञानाभावात्, ते ह्यनन्ता अपि जीवास्तथाविधकर्मोदयसामर्थ्यतः समकमेवोत्पत्तिदेशमधि-
तिष्ठन्ति समकमेव च तच्छरीराश्रिताः पर्याप्तीर्निर्वर्तयितुमारभन्ते समकमेव च पर्याप्ता भवन्ति, समकालमेव च प्राणापानादियोग्यान् पुद्ग-
लानाददते, यच्चैकस्य पुद्गलाभ्यवहरणं तदन्येषामनन्तानामपि साधारणं, यच्चानन्तानां तद्विवक्षितस्यापि जीवस्य, ततो न कदाचिदनुपप-
त्तिरिति, उक्तं च प्रज्ञापनायाम्—"समयं वक्कंताणं समयं तेसिं सरीरनिप्फत्ती । समयं आणुग्गहणं समयं ऊसासनिस्सासा ॥ १ ॥
एगस्स उ जं गहणं बहूण साहारणाण तं चेव । जं बहुयाणं गहणं समासओ तं पि एगस्स ॥ २ ॥ साहारणमाहारो साहारणमाणुपा-
णगहणं च । साहारणजीवाणं साहारणलक्खणं एयं ॥ ३ ॥" इति [ समकं व्युत्क्रान्तानां समकं तेषां शरीरनिष्पत्तिः । समकमानापा-
नग्रहणं समकमुच्छ्वासनिःश्वासौ ॥ १ ॥ एकस्य तु यद्ग्रहणं बहूनां साधारणानां तदेव । यद् बहूनां ग्रहणं समासतस्तदपि एकस्य ॥ २ ॥
साधारण आहारः साधारणमानापानग्रहणं च । साधारणजीवानां साधारणलक्षणमेतत् ॥ ३ ॥ ] तथा यदुदयात् शरीरावयवानां शिरोऽ-
स्थिदन्तानां स्थिरता भवति तत् स्थिरनाम, तथा यदुदयवशाज्जिह्वादीनां शरीरावयवानामस्थिरता भवति तदस्थिरनाम, तथा यदुदयान्ना-
भेरुपरितनाः शिरःप्रभृतयोऽवयवाः शुभा भवन्ति तच्छुभनाम, शिरःप्रभृतिभिर्हि स्पृष्टः परो हृष्यतीति तेषां शुभत्वं, तथा यस्योदया-

नाभेरधस्तनाः पादादयोऽवयवा अशुभा भवन्ति तदशुभनाम, तैः स्पृष्टः परो रुष्यतीति तेषामशुभत्वं, कामिन्याः पादेनापि स्पृष्टस्तुष्यति ततो व्यभिचार इति चेत्, न, तत्तोषस्य मोहनीयनिबन्धनत्वात्, वस्तुस्थितिश्चेह चिन्त्यते, ततो न दोषः, तथा यदुदयादनुपकार्यपि सर्वस्य मनःप्रह्लादकारी भवति तत्सुभगनाम, तथा यदुदयादुपकारकृदपि जनद्वेष्यो भवति तद् दुर्भगनाम, तथा यदुदयान्मधुरगम्भीरोदारस्वरो भवति तत्सुस्वरनाम, तथा यदुदयात्खरभिन्नदीनहीनस्वरो भवति तद् दुःस्वरनाम, तथा यदुदयेन यत्किञ्चिदपि ब्रुवाणः सर्वस्योपादेयवचनो भवति तदादेयनाम, तथा यदुदयाद् युक्तमपि ब्रुवाणः परिहार्यवचनस्तदनादेयनाम, तथा तपःशौर्यत्यागादिना समुपार्जितेन यशसा कीर्तनं—संशब्दनं श्लाघनं यशःकीर्तिः, अथवा यशः—सामान्येन ख्यातिः कीर्तिः—गुणोत्कीर्तनरूपा प्रशंसा यद्वा सर्वदिग्गामिनी पराक्रमकृता वा सर्वजनोत्कीर्तनीयगुणता यशः एकदिग्गामिनी दानपुण्यकृता वा कीर्तिः, यशश्च कीर्तिश्च यशःकीर्ती ते यदुदयाद्भवतस्ततो यशःकीर्तिनाम, ननु च कथमेते यशःकीर्ती तन्नामोदयनिबन्धने ?, तद्भावेऽपि कचित्तयोरभावात्, तदुक्तम्—"तस्सेव केइ जसकित्तिकित्तया अजसकित्तआ अन्ने । पायाराई जं वेंति अइसए इंदयालत्तं ॥ १ ॥" [ तस्यैव केचित् यशःकीर्त्तिकीर्त्तकाः अयशःकीर्त्तिकीर्त्तका अन्ये । यस्मात् प्राकारादीनतिशयानां इन्द्रजालत्वं ब्रुवते ॥ १ ॥ ] नैष दोषः, सद्गुणमध्यस्थपुरुषापेक्षयैव यशःकीर्तिनामोदयस्याभ्युपगतत्वात्, उक्तं च—"जइ कहवि धाउवेसम्मयाए दुद्धंपि जायए कडुयं । निंबो महुरो कस्सई न पमाणं तहवि तं होइ ॥ १ ॥" [ यदि कथमपि धातुवैषम्येण दुग्धमपि भवति कटुकं । निम्बश्च कस्यचिन्मधुरो न तथापि तत्प्रमाणं भवति ॥ १ ॥ ] अपि तु—"विवरीयदव्वगुणभासयाए अपमाणता उ तस्सेव । सग्गुणविसयं तम्हा जाणह जसकित्तिनामं तु ॥ १ ॥" [ द्रव्यगुणविपरीतभासकतया तस्यैवाप्रमाणता । तस्मात् सद्गुणविषयं यशःकीर्त्तिनाम जानीहि ॥ १ ॥ ] तद्विपरीतमयशःकीर्तिनाम यदुदयवशान्म-

न्यस्यापि जनस्याप्रशस्यो भवति, तथा यदुदयवशाज्जन्तुशरीरेषु स्वस्वजात्यनुसारेणाङ्गप्रत्यङ्गानां प्रतिनियतस्थानवर्तिता भवति तन्निर्माणनाम, तच्च सूत्रधारकल्पं, तदभावे हि तद्भृतककल्पैरङ्गोपाङ्गनामादिभिर्निर्वर्तितानामपि शिरउदरादीनां स्थानप्रवृत्तेरनियमो भवेत्, तथा यदुदयवशादष्टमहाप्रातिहार्यप्रमुखाश्चतुस्त्रिंशदतिशयाः प्रादुष्षन्ति तत्तीर्थकरनामेति ॥ ७५ ॥ २१६ ॥ इदानीं 'बंधोदयोदीरणसत्ताणं किंचि सरूवं'ति सप्तदशोत्तरद्विशततमं द्वारमाह—

सत्तट्ठछेगबंधा संतुदया अट्ठ सत्त चत्तारि । सत्तट्ठछपंचदुगं उदीरणाठाणसंखेयं ॥ ७६ ॥
बंधेऽट्ठ सत्तऽणाउग छव्विहममोहाउ इगविहं सायं । संतोदएसु अट्ठ उ सत्त अमोहा चउ अघाई ॥ ७७ ॥ अट्ठ उदीरइ सत्त उ अणाउ छव्विहमवेयणीआऊ । पण अवियणमोहाउग अकसाई नाम गोत्तदुगं ॥ ७८ ॥ बंधे वीसुत्तरसय १२० सयबावीसं तु होइ उदयंमि १२२ । उदीरणाए एवं १२२ अडयालसयं तु सन्तंमि १४८ ॥ ७९ ॥

'सत्ते'त्यादिगाथापञ्चकं, मिथ्यात्वादिभिर्बन्धहेतुभिरञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके कर्मयोग्यवर्गणापुद्गलैरात्मनो वह्न्ययस्पिण्डवदन्योऽन्यानुगमलक्षणः संबन्धो बन्धः, तस्य चत्वारि स्थानानि, तद्यथा—सप्त अष्टौ षट् एकमिति, तथा तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमकृतस्वरूपप्रच्युत्यभावेऽपि सति सद्भावः सत्ता, तस्या अपि त्रीणि स्थानानि, तद्यथा—अष्टौ सप्त चत्वारि, तथा तेषामेव कर्मपुद्गलानां यथास्वस्थितिबद्धानामपवर्तनादिकरणविशेषतः स्वभावतो वा उदयसमयप्राप्तानां विपाकवेदनमुदयः, तस्यापि त्रीणि स्थानानि, तद्यथा—अष्टौ सप्त चत्वारि, तथा उदयावलिकातो बहिर्वर्तिनीनां स्थितीनां दलिकं कषायैः

सहितेन असहितेन वा योगसंज्ञकेन वीर्यविशेषेण समाकृष्योदयावलिकायां प्रवेशनमुदीरणा, तस्याः पुनः पञ्च स्थानानि, तद्यथा—सप्त अष्टौ षट् पञ्च द्वे, इत्येषां बन्धादीनां स्थानसङ्ख्या ॥ ७६ ॥ साम्प्रतमेतेषां बन्धादिस्थानानामेव स्वरूपमाह—'बंधे'त्यादिगाथाद्वयं, आयुर्बन्धकाले ज्ञानावरणादिका अष्टौ प्रकृतयो बन्धे प्राप्यन्ते, शेषकालं त्वनायुष्काः—आयुर्बन्धविवर्जिताः सप्त, 'अमोहाउ'त्ति मोहायुर्वर्जाः षट् प्रकृतीर्बध्नतः षड्विधो बन्धः, ज्ञानदर्शनावरणान्तरायनामगोत्रबन्धव्यवच्छेदे एकमेव सातं बध्नत एकविधो बन्धः। तथा सत्तायामुदये च सर्वप्रकृतिसमुदाये अष्टौ प्राप्यन्ते, मोहनीयस्य उदयसत्ताव्यवच्छेदे सप्त, घातिकर्मणां—ज्ञानदर्शनावरणान्तरायाणामुदयसत्ताव्यवच्छेदे चतस्रः। तथा सर्वप्रकृतिसमुदायेऽष्टौ प्रकृतीरुदीरयति, आयुष उदीरणायामपगतायामायुर्वर्जाः सप्त, वेदनीयायुषोरुदीरणायामपगतायां षड्विधं कर्मोदीरयति, वेदनीयमोहायुषामुदीरणाऽपगमे पञ्च प्रकृतीरुदीरयति, अकषायी—केवली नामगोत्रलक्षणे द्वे कर्मणी उदीरयति। अथैतान्येव बन्धादिस्थानानि विनेयव्युत्पत्तये गुणस्थानकयोजनया विभाव्यन्ते—मिथ्यादृष्ट्यादयो मिश्रवर्जिता अप्रमत्तान्ता अष्ट सप्त वा कर्माणि बध्नन्ति, आयुः कदाचिदेव बध्यते इत्यायुर्बन्धकाले अष्ट आयुर्बन्धाभावे तु सप्तैव, मिश्रापूर्वकरणानिवृत्तिबादरास्तु सप्तैव बध्नन्ति, तेषामायुर्बन्धाभावात्, तत्र मिश्रस्य तथास्वाभाव्यात् इतरयोः पुनरतिविशुद्धत्वात् आयुर्बन्धस्य च घोलनापरिणामहेतुत्वात्, तथा सूक्ष्मसंपरायो मोहनीयायुर्वर्जानि षट् कर्माणि बध्नाति, मोहनीयबन्धस्य बादरकषायोदयहेतुत्वात् तस्य च तदभावात् आयुर्बन्धाभावस्त्वतिविशुद्धतरत्वादवसेयः, तथा उपशान्तमोहक्षीणमोहसयोगिकेवलिन एकविधं सातवेदनीयं कर्म बध्नन्ति, न शेषाणि, तद्बन्धहेत्वभावात्, अयोगिकेवली तु योगस्यापि बन्धहेतोरभावादबन्धकः। तथा मिथ्यादृष्टिगुणस्थानकादारभ्य यावत्सूक्ष्मसंपरायगुणस्थानं तावदष्टावपि कर्मप्रकृतय उदये सत्तायां च प्राप्यन्ते, सर्वत्रापि मोहनीयोदयसत्तयोः प्राप्यमाणत्वात्, उपशान्तमोहे

उदये सप्त प्राप्यन्ते, मोहनीयस्योपशान्तत्वेनोदयाभावात्, सत्तायां त्वष्टौ, मोहनीयस्य विद्यमानत्वात्, क्षीणमोहे सत्तायामुदये च सप्त, मोहनीयस्य क्षीणत्वेनोदयसत्तयोरभावात्, सयोग्ययोगिकेवलिनोस्तु चत्वार्यघातिकर्माणि उदये सत्तायां च प्राप्यन्ते, न शेषाणि, तेषां क्षीणत्वात्, तथा मिथ्यादृष्टेरारभ्य यावत्प्रमत्तसंयतगुणस्थानं तावज्जीवो निरन्तरमष्टानामपि कर्मणामुदीरकः, केवलमनुभूयमानभवायुष्कावलिकावशेषे सत्यायुष आवलिकाप्रविष्टत्वेनोदीरणाया अभावात् सप्तानामुदीरकः, सम्यग्मिथ्यादृष्टिगुणस्थानके तु वर्तमानः सर्वदैवाष्टानामुदीरकः, आयुष आवलिकावशेषत्वे मिश्रगुणस्थानकस्यासंभवात्, तथाहि—अन्तर्मुहूर्तावशेष एवायुषि मिश्रगुणस्थानकात्प्रतिपत्य सम्यक्त्वं मिथ्यात्वं वा जीवो गच्छतीति, अप्रमत्तापूर्वकरणानिवृत्तिबादरा वेदनीयायुर्वर्जानां शेषाणां षण्णां कर्मणामुदीरकाः, न तु वेदनीयायुषोः, अतिविशुद्धतया तदुदीरणायोग्याध्यवसायस्थानाभावात्, सूक्ष्मसंपरायस्तु षण्णां पञ्चानां वा उदीरकः, तत्र यावन्मोहनीयमावलिकावशेषं न भवति तावत्पूर्वोक्तानामेव षण्णामुदीरकः, आवलिकावशेषे च मोहनीये तस्याप्युदीरणाया अभावात्पञ्चानामुदीरकः, उपशान्तमोहोऽपि वेदनीयायुर्मोहनीयवर्जानां पञ्चानामुदीरकः, तत्र वेदनीयायुषोः कारणं प्रागेवोक्तं, मोहनीयं तूदयाभावान्नोदीर्यते, 'वेद्यमानमेवोदीर्यत' इति वचनात्, क्षीणमोहोऽप्यनन्तरोक्तानां पञ्चानां कर्मणामुदीरकः, तानि च तावदुदीरयति यावद् ज्ञानदर्शनावरणान्तरायाणि आवलिकाप्रविष्टानि न भवन्ति, आवलिकामात्रप्रविष्टेषु तेषु तेषामप्युदीरणाया अभावात् द्वे एव नामगोत्रलक्षणे कर्मणी उदीरयतीति, सयोगिकेवली पुनर्नामगोत्रे उदीरयति, न शेषाणि, घातिकर्मचतुष्टयस्य निर्मूलत एव क्षीणत्वात्, वेदनीयायुषोस्तु पूर्वोक्तकारणान्नोदीरणेति, अयोगिकेवली त्वनुदीरकः, योगसव्यपेक्षत्वात् उदीरणायास्तस्य च योगाभावादिति ॥ ७७ ॥ ७८ ॥ अथ बन्धादिषु सर्वसङ्ख्यया यावत्य उत्तरप्रकृतयो भवन्ति तावतीर्दर्शयितुमाह—'बन्धे' इत्यादि, बन्धे—बन्धचिन्तायां विंशत्युत्तरं प्रकृतीनां शतं भवतीति,

उदये च द्वाविंशत्युत्तरं शतं भवतीति, उदीरणायामप्येवं, द्वाविंशत्युत्तरमेव शतमित्यर्थः, सत्तायां पुनरष्टचत्वारिंशदधिकं शतं भवति, इयमत्र भावना—बन्धे उदये च चिन्त्यमाने बन्धननामानि संघातननामानि च स्वस्वशरीरान्तर्गतान्येव विवक्ष्यन्ते, तथा ये वर्णगन्धरसस्पर्शानामुत्तरभेदा यथाक्रमं पञ्चद्विपञ्चाष्टसङ्ख्याः तेऽपि बन्धे उदये च न विवक्ष्यन्ते, किंतु वर्णादय एव चत्वारः, तथा बन्धे चिन्त्यमाने सम्यक्त्वसम्यग्मिथ्यात्वे न गृह्येते, मिथ्यात्वपुद्गलानामेव तथापरिणतेः, तथा च सति बन्धचिन्तायां बन्धनपञ्चकं संघातनपञ्चकं वर्णादिषोडशकं च नाम्नस्त्रिनवतेरपनीयते शेषाः सप्तषष्टिः परिगृह्यन्ते, मोहनीयप्रकृतयश्च सम्यक्त्वसम्यग्मिथ्यात्वहीनाः शेषाः षड्विंशतिः, ततः सर्वप्रकृतिसङ्ख्यामीलने बन्धे विंशत्युत्तरं प्रकृतिशतं भवति, उदये च चिन्त्यमाने सम्यक्त्वमिश्रे अप्युदयमायात इति ते अपि परिगृह्येते, तत उदये द्वाविंशं प्रकृतिशतं, उदये सत्येवोदीरणा भवतीत्यत उदीरणायामपि द्वाविंशं शतं, सत्तायां तु चिन्त्यमानायां बन्धनपञ्चकं संघातनपञ्चकं वर्णादिषोडशकं च पूर्वापनीतं परिगृह्यते, ततः सर्वसङ्ख्यया प्रकृतीनामष्टचत्वारिंशं शतं भवति, उक्तं च **कर्मस्तवे**— "अडयालं पयडिसयं खविय जिणं निव्वुयं वंदे" [ अष्टचत्वारिंशं प्रकृतीनां शतं क्षपयित्वा निर्वृतं जिनं वन्दे ] ॥ यदा पुनर्गर्गर्षिशिवशर्मप्रभृत्याचार्याणां मतेनाष्टपञ्चाशदधिकं प्रकृतिशतं सत्तायामधिक्रियते तदा बन्धनानि पञ्चदश विवक्ष्यन्ते ततोऽष्टचत्वारिंशदधिकस्य प्रकृतिशतस्य पूर्वोक्तस्योपरि बन्धनगता दश प्रकृतयोऽधिकाः प्राप्यन्ते इति भवत्यष्टपञ्चाशदधिकं प्रकृतिशतमिति ॥ ७९ ॥ २१७ ॥

इदानीं 'कम्मट्ठिई सावाह'त्ति अष्टादशोत्तरद्विशततमं द्वारमाह—

**मोहे कोडाकोडीउ सत्तरी वीस नामगोयाणं । तीसियराण चउण्हं तेत्तीसऽयराइं आउस्स**
**॥ ८० ॥ एसा उक्कोसठिई इयरा वेयणिय बारस मुहुत्ता । अट्ठट्ठ नामगोत्तेसु सेसएसु मुहु-**

**त्तंतो ॥ ८१ ॥ जस्स जइ कोडकोडीउ तस्स तेत्तियसयाइं वरिसाणं। होइ अबाहाकालो आउम्मि पुणो भवतिभागो ॥ ८२ ॥**

मोहे—मोहनीये षष्ठीसप्तम्योरर्थं प्रत्यभेदात् मोहनीयस्य कर्मण उत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्यः, इह द्विधा स्थितिः, तद्यथा—कर्मरूपतावस्थानलक्षणा अनुभवयोग्या च, तत्र कर्मरूपतावस्थानलक्षणामेव स्थितिमधिकृत्योत्कृष्टं जघन्यं वा प्रमाणमभिधातुमिष्टमवगन्तव्यं, अनुभवयोग्या पुनरबाधाकालहीना, येषां च कर्मणां यावत्यः सागरोपमकोटीकोट्यः तेषां तावन्ति वर्षशतान्यबाधाकालः, तेन मोहनीयस्योत्कृष्टा स्थितिः सप्ततिसागरोपमकोटीकोट्य इति तस्य सप्ततिर्वर्षशतान्यबाधाकालः, तथाहि—तन्मोहनीयमुत्कृष्टस्थितिकं बद्धं सत् सप्ततिवर्षशतानि यावन्न काञ्चिदपि स्वोदयतो जीवस्याबाधामुत्पादयति, अबाधाकालहीनश्च कर्मदलिकनिषेकः, किमुक्तं भवति ?—सप्ततिवर्षशतप्रमाणेषु समयेषु मध्ये न वेद्यदलिकनिक्षेपं करोति, किंतु तत ऊर्द्धमिति, तथा नामगोत्रयोरुत्कृष्टा स्थितिर्विंशतिसागरोपमकोटीकोट्यो, द्वे वर्षसहस्रे अबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः, तथा इतरेषां चतुर्णां—ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, त्रीणि वर्षसहस्राण्यबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, आयुष उत्कृष्टा स्थितिस्त्रयस्त्रिंशदतराणि—सागरोपमाणि पूर्वकोटित्रिभागोऽबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, सूत्रकृता त्वसौ पूर्वकोटित्रिभागोऽबाधारूपतयैवापयाति न पुनरुदयमायाति अतो यावती स्थितिरायुषो वेद्यते तावत्येवाबाधारहितोपात्तेति ॥ ८० ॥ अथ उत्कृष्टस्थितिनिगमनपूर्वं जघन्यां स्थितिमाह—'एसे'त्यादि, एषा—पूर्वोक्ता उत्कृष्टा स्थितिः, इतरा—जघन्या पुनर्वेदनीये—वेदनीयस्य द्वादश मुहूर्ताः, इह द्विधा वेदनीयस्य जघन्या स्थितिः प्राप्यते—सकषायानकषायांश्च प्रतीत्य, तत्राकषायाणां वेदनीयस्थितिर्द्विसमयस्थितिका,

यतस्तत्कर्म प्रथमसमये बद्धं द्वितीयसमये वेदितं तृतीयसमयेऽकर्मतामनुभवति, अकषायाणां कषायरहितत्वेन बहुतरस्थितिबन्धासंभवात्, सकषायाणां तु सूत्रोपात्ता द्वादशमुहूर्ता जघन्या स्थितिः, अन्तर्मुहूर्तमबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, तथा नामगोत्रयोः प्रत्येकमष्टौ अष्टौ मुहूर्ता जघन्या स्थितिः अन्तर्मुहूर्तमबाधा अबाधाकालहीनश्च कर्मदलिकनिषेकः, तथा शेषाणां—ज्ञानावरणदर्शनावरणान्तरायमोहनीयायुषां जघन्या स्थितिर्मुहूर्तान्तः—अन्तर्मुहूर्तं, अत्राप्यन्तर्मुहूर्तमबाधा, नवरं तल्लघुतरमवसेयं, अबाधाकालहीनश्च कर्मदलिकनिषेकः, तदेवमुक्ता मूलप्रकृतीनामुत्कृष्टा जघन्या च स्थितिः, उत्तरप्रकृतीनां तु **कर्मप्रकृत्या**दिग्रन्थेभ्योऽवसेया ॥ ८१ ॥ साम्प्रतमेतेषामेव कर्मणामुत्कृष्टस्थित्यबाधाकालपरिमाणमाह—'जस्से'त्यादि, यस्य कर्मणो यावत्यः सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः प्रतिपादिता तस्य कर्मणस्तावन्मात्राणि वर्षशतानि भवत्युत्कृष्टोऽबाधाकालः, यथा मोहनीयस्य सप्ततिसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः ततस्तस्य सप्ततिवर्षशतान्यबाधा, एवं सर्वत्रापि भावनीयं, आयुषि पुनरुत्कृष्टोऽबाधाकालो भवत्रिभागः—पूर्वकोटित्रिभागलक्षणः, पूर्वकोटित्रिभागमध्ये बध्यमानायुर्दलिकनिषेकं न विदधातीत्यर्थः, वेद्यमानस्य ह्यायुषो द्वयोस्त्रिभागयोरतिक्रान्तयोस्तृतीये भागेऽवशिष्टे परभवायुषो बन्धः ततः पूर्वकोटित्रिभागो लभ्यते, जघन्या त्वबाधा सर्वेषामपि कर्मणामन्तर्मुहूर्तप्रमाणेति ॥ ८२ ॥ २१८ ॥ इदानीं 'बायालीसा य पुन्नपयडीओ'त्ति एकोनविंशत्युत्तरद्विशततमं द्वारमाह—

**सायं १ उच्चागोयं २ नरतिरिदेवाउ ५ नाम एयाओ । मणुयदुगं ७ देवदुगं ९ पंचिंदियजाइ १०**
**तणुपणगं १५ ॥ ८३ ॥ अंगोवंगतिगंपि य १८ संघयणं वज्जरिसहनारायं १९ । पढमं चिय संठाणं**
**२० वन्नाइचउक्क सुपसत्थं २४ ॥ ८४ ॥ अगुरुलहु २५ पराघायं २६ उस्सासं २७ आयवं च २८**

**उज्जोयं २९। सुपसत्था विहगगई ३० तसाइदसगं च ४० निम्माणं ४१ ॥ ८५ ॥ तित्थयरेणं सहिया पुन्नपयडीओ हुंति बायाला ४२। सिवसिरिकडक्खियाणं सयावि सत्ताणमेयाउ ॥ ८६ ॥**

सातं—सातवेदनीयं तथा उच्चैर्गोत्रं तथा नरायुस्तिर्यगायुर्देवायुश्च, तथा एताश्च नामकर्मप्रकृतयस्तद्यथा—मनुष्यद्विकं—मनुष्यगतिमनुष्यानुपूर्वीलक्षणं देवद्विकं—देवगतिदेवानुपूर्वीलक्षणं पञ्चेन्द्रियजातिः तनुपञ्चकं—औदारिकवैक्रियाहारकतैजसकार्मणलक्षणं अङ्गोपाङ्गत्रिकं—औदारिकवैक्रियाहारकाङ्गोपाङ्गलक्षणं, संहननं वज्रर्षभनाराचाख्यं, प्रथमं चैव संस्थानं—समचतुरस्राख्यं, तथा वर्णादिचतुष्कं—वर्णगन्धरसस्पर्शस्वरूपं सुप्रशस्तं—शुभं, तत्र वर्णाः शुक्लपीतरक्ताः गन्धः सुरभिः रसा मधुराम्लकषायाः स्पर्शा मृदुलघुस्निग्धोष्णा इति, अगुरुलघु पराघातं उच्छ्वासं आतपं उद्योतं सुप्रशस्ता विहायोगतिः त्रसादिदशकं च—त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिलक्षणं निर्माणं च, एता एव तीर्थकरनाम्ना सहिता द्विचत्वारिंशत्पुण्यप्रकृतयः शुभसंज्ञिकाः प्रकृतयो भवन्ति, एताश्च शिवश्रीकटाक्षितानां सत्त्वानां सदैव प्राप्यन्त इति ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ २१९॥ इदानीं 'बासीई पावपयडीओ' त्ति विंशत्युत्तरद्विशततमं द्वारमाह—

**नाणंतरायदसगं १० दंसण ११ मोहपयइ छवीसा २६ । अस्सायं निरयाउं नीयागोएण अडयाला ॥ ८७ ॥ नरयदुगं २ तिरियदुगं ४ जाइचउक्कं ८ च पंच संघयणा १३ । संठाणावि य पंच उ १८ वन्नाइचउक्कमपसत्थं २२ ॥ ८८ ॥ उवघाय २३ कुविहायगई २४ थावरदसगेण होंति चोत्तीसा ३४ । सव्वाओ मीलियाओ बासीई पावपयडीओ ८२ ॥ ८९ ॥**

ज्ञानावरणपञ्चकं अन्तरायपञ्चकं दर्शनावरणनवकं, सम्यक्त्वमिश्रे उदयमेव केवलमाश्रित्याशुभे, न बन्धमपि, तयोर्बन्धासंभवात्, अतस्त-

द्वर्जा मोहनीयस्य षड्विंशतिः प्रकृतयः, असातं नरकायुष्कं नीचैर्गोत्रं चेत्येता अष्टचत्वारिंशत्प्रकृतयः, नरकद्विकं—नरकगतिनरकानुपूर्वीस्वरूपं तिर्यग्द्विकं—तिर्यग्गतितिर्यगानुपूर्वीलक्षणं, जातिचतुष्कं—एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिलक्षणं, पञ्च संहननानि प्रथमवर्जानि संस्थानान्यपि आद्यवर्जानि पञ्च, वर्णादिचतुष्कमप्रशस्तं, तत्र वर्णौ नीलकृष्णौ गन्धो दुरभिः रसौ तिक्तकटुकौ स्पर्शाश्च गुरुखररूक्षशीतरूपा इति, उपघातं कुत्सिता च—अप्रशस्ता विहायोगतिः, स्थावरदशकं च—स्थावरसूक्ष्मापर्याप्तसाधारणास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिलक्षणं एताश्चतुस्त्रिंशन्नामकर्मप्रकृतयः, मिलिताश्च सर्वा द्व्यशीतिः पापप्रकृतयः—अशुभसंज्ञाः प्रकृतय इत्यर्थः, वर्णादिचतुष्कं हि शुभप्रकृतिसङ्ख्यायामशुभप्रकृतिसङ्ख्यायां च परिगृह्यते, तस्य द्विधा संभवात्, अतो बन्धोक्ताया विंशत्युत्तरशतलक्षणसङ्ख्याया न व्याघात इति ॥ ८७ ॥ ८८ ॥ ८९ ॥ २२८ ॥ इदानीं 'भावच्छकं सपडिभेयं'त्येकविंशत्युत्तरद्विशततमं द्वारमाह—

भावा छच्चोवसमिय १ खइय २ खओवसम ३ उदय ४ परिणामा ५। दु २ नव ९ ट्ठारि १८गवीसा २१ तिग ३ भेया सन्निवाओ य ॥ ९० ॥ सम्मचरणाणि पढमे दंसणनाणाइं दाणलाभा य। उवभोगभोगवीरिय सम्मचरित्ताणि य बिइए ॥ ९१ ॥ चउनाणमणाणतिगं दंसणतिग पंच दाणलद्धीओ। सम्मत्तं चारित्तं च संजमासंजमो तइए ॥ ९२ ॥ चउगइ चउक्कसाया लिंगतिगं लेसछक्कमन्नाणं। मिच्छत्तमसिद्धत्तं असंजमो तह चउत्थम्मि ॥ ९३ ॥ पंचमगंमि य भावे जीवाभवत्तभव्वया चेव। पंचण्हवि भावाणं भेया एमेव तेवन्ना ॥ १२९४ ॥ ओदयियखओवसमियपरिणामेहिं चउरो गइचउक्के। खइयजुएहिं चउरो तदभावे उवसमजुएहिं ॥ ९५ ॥

एक्केक्को उवसमसेढीसिद्धकेवलिसु एवमविरुद्धा । पन्नरस सन्निवाइयभेया वीसं असंभविणो
॥ ९६ ॥ दुगजोगो सिद्धाणं केवलिसंसारियाण तियजोगो । चउजोगजुअं चउसुवि गईसु
मणुयाण पणजोगो ॥ ९७ ॥ मोहस्सेवोवसमो खाओवसमो चउण्ह घाईणं । उदयक्खयपरि-
णामा अट्ठण्हवि हुंति कम्माणं ॥ ९८ ॥

विशिष्टहेतुभिः स्वभावतो वा जीवानां तेन तेन रूपेण भवनानि भावाः—वस्तुपरिणामविशेषाः, अथवा भवन्त्येभिरुपशमादिभिः पर्यो-
यैरिति भावाः, 'छच्चे'ति चशब्दस्यावधारणार्थत्वात् षडेव—षट्सङ्ख्या एव, तद्यथा—औपशमिकः क्षायिकः क्षायोपशमिकः औदयिकः
पारिणामिकः सान्निपातिकश्च, तत्रोपशमो—भस्मच्छन्नाग्नेरिवानुद्रेकावस्था प्रदेशतोऽप्युदयाभाव इतियावत्, इत्थंभूतश्चोपशमः सर्वोपशम
उच्यते, स च मोहनीयस्यैव कर्मणो न शेषस्य, 'सव्वुवसमो मोहस्सेव उ' इति वचनात्, तत्र चैवं शब्दव्युत्पत्तिः—उपशम एवौपश-
मिकः स्वार्थिक इकण्प्रत्ययः यद्वा उपशमेन निर्वृत्त औपशमिकः—क्रोधाद्युदयाभावफलरूपो जीवस्य परमशान्तावस्थालक्षणः परिणाम-
विशेषः, क्षयः—कर्मणामत्यन्तोच्छेदः क्षय एव क्षायिकः क्षयेण वा निर्वृत्तः क्षायिकः—तत्कर्माभावफलरूपो विचित्रो जीवस्य परिणति-
विशेषः, उदीर्णस्यांशस्य क्षयः अनुदीर्णस्य चांशस्य विपाकमधिकृत्योपशमः क्षयोपशमः स एव क्षायोपशमिकः तेन वा निर्वृत्तो घातिक-
र्मक्षयोपशमसंपाद्यो मतिज्ञानादिलब्धिरूप आत्मनः परिणामविशेषः क्षायोपशमिकः, अष्टानां कर्मणां यथास्वमुदयसमयप्राप्तानामात्मी-
यात्मीयस्वरूपेणानुभवनमुदयः उदय एवौदयिकः यद्वा उदयेन निर्वृत्त औदयिको भावो—नारकत्वादिपर्यायपरिणतिरूपः, परिणमनं परि-
णामः—कथञ्चिदवस्थितस्य वस्तुनः पूर्वावस्थापरित्यागेनोत्तरावस्थागमनं स एव तेन वा निर्वृत्तः पारिणामिकः। एषामेव यथाक्रमं भेदानाह

—'दुनवे'त्यादि, द्वौ नव अष्टादश एकविंशतिस्त्रयश्च यथाक्रमेण भेदा येषां ते तथा, सान्निपातिकश्च पष्ठो भावः, सन्निपतनं सन्निपातो—मिलनं स एव तेन वा निर्वृत्तः सान्निपातिकः, औदयिकादिभावद्व्यादिसंयोगनिष्पाद्योऽवस्थाविशेष इत्यर्थः ॥ ९० ॥ सांप्रतमौपशमिकक्षायिकभेदान् द्विनवसङ्ख्यान् व्याख्यातुमाह—'सम्मे'त्यादि, सम्यक्त्वं चारित्रं चौपशमिकं, प्रथमे औपशमिके भावे वर्तेते, औपशमिकं हि सम्यक्त्वं दर्शनसप्तके चारित्रं तु चारित्रमोहनीये उपशान्ते संभवति, अत औपशमिकभाववर्तित्वमनयोरिति, तथा 'दंसणनाणाइ'ति 'सूचकत्वात् सूत्रस्य' केवलदर्शनं केवलज्ञानं दानलाभोपभोगपरिभोगवीर्यलब्धयः क्षायिकसम्यक्त्वं क्षायिकचारित्रं च द्वितीये क्षायिके भावे भवन्ति, तथाहि—केवलदर्शनं केवलज्ञानं च निजनिजावरणक्षय एवोपजायते, क्षायिकदानादिलब्धयस्तु पञ्चापि पञ्चविधान्तरायक्षय एव, क्षायिकसम्यक्त्वमपि दर्शनमोहसप्तकक्षये, क्षायिकचारित्रं पुनश्चारित्रमोहनीयक्षये इति ॥ ९१ ॥ अधुना क्षायोपशमिकभावभेदानष्टादशसङ्ख्यानाह—'चउ'इत्यादि, चत्वारि ज्ञानानि—मतिश्रुतावधिमनःपर्यायरूपाणि अज्ञानत्रिकं—मतिश्रुताज्ञानविभङ्गरूपं, दर्शनत्रिकं—चक्षुरचक्षुरवधिदर्शनस्वभावं 'पंचे'ति सङ्ख्या दानेनोपलक्षिता लब्धयो दानलब्धयः, दानलाभोपभोगपरिभोगवीर्यलब्धयः, सम्यक्त्वं—सम्यग्दर्शनं, चारित्रं च—सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपरायलक्षणं, संयमासंयमो—देशविरतिरूप इत्येतेऽष्टादश भेदास्तृतीये क्षायोपशमिके भावे भवन्ति, तथाहि—ज्ञानचतुष्कमज्ञानत्रिकं च यथास्वमावारकस्य मतिज्ञानावरणादिकर्मणः क्षयोपशम एव भवति, दर्शनत्रिकं तु चक्षुर्दर्शनावरणादिक्षयोपशमे, दानादिकाः पुनः पञ्च लब्धयोऽन्तरायकर्मक्षयोपशमे भवन्ति । ननु दानादिलब्धयः पूर्वं क्षायिकभाववर्तिन्य उक्ताः इह तु क्षायोपशमिक इति कथं न विरोधः ?, नैतदेवं, अभिप्रायापरिज्ञानात्, दानादिलब्धयो हि द्विधा भवन्ति—अन्तरायकर्मणः क्षयसंभविन्यः क्षयोपशमसंभविन्यश्च, तत्र याः क्षायिक्यः पूर्वमुक्तास्ताः क्षयसंभूतत्वेन केवलिन एव भवन्ति,

यास्त्विह क्षायोपशमिक्य उच्यन्ते ताः क्षयोपशमसंभूताः छद्मस्थानामेवेति, सम्यक्त्वमपि क्षायोपशमिकं दर्शनसप्तकक्षयोपशमे, चारित्रचतुष्कं तु चारित्रमोहनीयक्षयोपशमे, संयमासंयमश्चाप्रत्याख्यानावरणकषायमोहनीयक्षयोपशमे इति ॥ ९२ ॥ सांप्रतमेकविंशतिमौदयिकभावभेदानाह—'चउगई'त्यादि, एते सर्वेऽपि गत्यादयो भावाश्चतुर्थे औदयिके भावे भवन्ति, तथाहि—चतस्रो नरकादिगतयो नरकगत्यादिनामकर्मोदयादेव जीवे प्रादुष्षन्ति, कषाया अपि क्रोधादयश्चत्वारः कषायमोहनीयकर्मोदयात्, लिङ्गत्रिकमपि—स्त्रीवेदादिरूपं स्त्रीवेदपुंवेदनपुंसकवेदमोहनीयकर्मोदयात्, लेश्यापट्कं तु 'योगपरिणामो लेश्या' इत्याश्रयणेन योगत्रिकजनककर्मोदयात्, येषां तु मते कषायनिस्स्यंदो लेश्यास्तदभिप्रायेण कषायमोहनीयकर्मोदयात्, येषां तु कर्मनिस्स्यंदो लेश्यास्तन्मतेन तु संसारित्वासिद्धत्ववदष्टप्रकारकर्मोदयादिति, अज्ञानमपि—विपर्यस्तबोधरूपं मत्यज्ञानादिकं ज्ञानावरणमिथ्यात्वमोहनीयोदयात्, यत्तु पूर्वमस्यैव मत्याद्यज्ञानस्य क्षायोपशमिकत्वमुक्तं तद्वस्त्ववबोधमात्रापेक्षया, सर्वमपि हि वस्त्ववबोधमात्रं विपर्यस्तमविपर्यस्तं च ज्ञानावरणीयकर्मक्षयोपशम एव भवति, यत्पुनस्तस्यैव विपर्यासलक्षणमज्ञानत्वं तद् ज्ञानावरणमिथ्यात्वमोहनीयकर्मोदय एव संपद्यते, इत्येकस्यैवाज्ञानस्य क्षायोपशमिकत्वमौदयिकत्वं च न विरुध्यते, इत्येवमन्यत्रापि विरोधपरिहारः कर्तव्य इति, मिथ्यात्वं मिथ्यात्वमोहनीयोदयात्, असिद्धत्वं—कर्माष्टकोदयात्, असंयमः—अविरतत्वं तदप्यप्रत्याख्यानावरणकषायोदयादुपजायत इति । ननु निद्रापञ्चकासातादिवेदनाहास्यरत्यरतिप्रभृतयः प्रभूततरभावा अन्येऽपि कर्मोदयजन्याः सन्ति तत् किमित्येतावन्त एवैते निर्दिष्टाः?, सत्यं, उपलक्षणमात्रत्वादमीषां संभविनोऽन्येऽपि द्रष्टव्या इति ॥ ९३ ॥ अथ पारिणामिकभेदांस्त्रीनाह—'पंचे'त्यादि, पञ्चमके च—पारिणामिकत्वलक्षणे भावे जीवत्वाभव्यत्वभव्यत्वानि वर्तन्ते, जीवत्वमभव्यत्वं भव्यत्वं चानादिपारिणामिको भाव इत्यर्थः, उपलक्षणं चैतत्, तेन ये गुडघृततण्डुलासवघटादीनां नवपुराणत्वादयोऽवस्थावि-

शेषाः ये च वर्षधरपर्वतभवनविमानकूटरत्नप्रभादीनां पुद्गलविचटनचटनसंपाद्या अवस्थाविशेषाः यानि च गंधर्वनगराणि यच्च कपिहसितमुल्कापातो गर्जितं महिका दिग्दाहो विद्युत् चन्द्रपरिवेषः सूर्यपरिवेषश्चन्द्रसूर्यग्रहणमिन्द्रधनुरित्यादिः सर्वः सादिपारिणामिको भावः, लोकस्थितिरलोकस्थितिर्धर्मास्तिकायत्वमित्यादिरूपस्त्वनादिपारिणामिक इति । उक्ताः प्रत्येकं भावभेदाः, सम्प्रत्येतेषामेव भेदानां सर्वसङ्ख्यामाह—'पंचणहवी'त्यादि, पञ्चानामप्यौपशमिकादीनां भावानां भेदाः समुदिताः सन्त एवमेव—पूर्वोक्तप्रकारेण त्रिपञ्चाशत्सङ्ख्या भवन्ति, द्विनवाष्टादशैकविंशतित्रयाणां मीलनेनैतत्सङ्ख्यायाः सद्भावादिति । षष्ठस्तु सान्निपातिको भाव एतेषामेव द्व्यादिसंयोगनिष्पाद्यः, तत्र चागमोक्तक्रमेण औदयिकौपशमिकक्षायिकक्षायोपशमिकपारिणामिकरूपाणां पञ्चानां पदानां सामान्यतः षड्विंशतिर्भङ्गा उत्पद्यन्ते, तद्यथा—दश द्विकसंयोगे दश त्रिकसंयोगे पञ्च चतुष्कसंयोगे एकः पञ्चकसंयोगे इति, तत्र द्विकसंयोगे दश—औदयिक औपशमिक इत्येको भङ्गः औदयिकः क्षायिक इति द्वितीयः औदयिकः क्षायोपशमिक इति तृतीयः औदयिकः पारिणामिक इति चतुर्थः औपशमिकः क्षायिक इति पञ्चमः औपशमिकः क्षायोपशमिक इति षष्ठः औपशमिकः पारिणामिक इति सप्तमः क्षायिकः क्षायोपशमिक इत्यष्टमः क्षायिकः पारिणामिक इति नवमः क्षायोपशमिकः पारिणामिक इति दशमः, तथा दश त्रिकसंयोगे—औदयिक औपशमिकः क्षायिक इत्येको भङ्गः औदयिक औपशमिकः क्षायोपशमिक इति द्वितीयः औदयिक औपशमिकः पारिणामिक इति तृतीयः औदयिकः क्षायिकः क्षायोपशमिक इति चतुर्थः औदयिकः क्षायिकः पारिणामिक इति पञ्चमः औदयिकः क्षायोपशमिकः पारिणामिकः इति षष्ठः औपशमिकः क्षायिकः क्षायोपशमिक इति सप्तमः औपशमिकः क्षायिकः पारिणामिक इत्यष्टमः औपशमिकः क्षायोपशमिकः पारिणामिक इति नवमः क्षायिकः क्षायोपशमिकः पारिणामिक इति दशमः, तथा चतुष्कसंयोगे—औदयिक औपशमिकः क्षायिकः क्षायोप-

शमिक इत्येको भङ्गः औदयिक औपशमिकः क्षायिकः पारिणामिक इति द्वितीयः औदयिकः औपशमिकः क्षायोपशमिकः पारिणामिक
इति तृतीयः औदयिकः क्षायिकः क्षायोपशमिकः पारिणामिक इति चतुर्थः औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिक इति
पञ्चमः, षड्विंशतितमस्तु भङ्गः पंचकसंयोगे जायमानः सुप्रतीत एव, एते च षड्विंशतिर्भङ्गा भङ्गरचनामात्रमधिकृत्य दर्शिता वेदि-
तव्याः, संभविनः पुनरेतेषु मध्ये परमार्थतः षडेव, तद्यथा—एको द्विकसंयोगे ९ द्वौ त्रिकसंयोगे ५—६ द्वौ चतुष्कसंयोगे ३—४ एकः
पञ्चकसंयोगे ॥ १४ ॥ एते चावान्तरभेदतः पंचदश भवन्त्यतस्तान् सूत्रकृदाह—'ओदई'त्यादिगाथाद्वयं, औदयिकक्षायोपशमिकपा-
रिणामिकैर्भावैर्निष्पन्नस्य सान्निपातिकस्य नारकतिर्यग्नरसुरस्वरूपगतिचतुष्कविषयतया चिन्त्यमानस्य चत्वारो भेदा भवन्ति, इदमुक्तं
भवति—औदयिकः क्षायोपशमिकः पारिणामिक इत्ययं त्रिकसंयोगनिष्पन्नो भङ्गो गतिभेदाच्चतुर्धा भिद्यते, तद्यथा—निरयगतावौदयिकं
नैरयिकत्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, तिर्यग्गतावौदयिकं तिर्यग्योनित्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं
जीवत्वादि, एवं नरसुरगत्योरपि भावना कार्या, तथा एतैरेवौदयिकादिभिस्त्रिभिः क्षायिकसहितैर्निष्पन्नस्य सान्निपातिकस्य भावस्य
चत्वारो भेदा भवन्ति, अयमर्थः—अमीषामेव त्रयाणां भावानां मध्ये यदा क्षायिको भावश्चतुर्थः प्रक्षिप्यते तदा चतुष्कसंयोगो भवति,
एवं चामिलपनीयः—औदयिकः क्षायिकः क्षायोपशमिकः पारिणामिकः, एषोऽपि गतिभेदाच्चतुर्धा, तद्यथा—औदयिकी नरकगतिः
क्षायिकं सम्यक्त्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, एवं तिर्यग्नरसुरगतिष्वपि भावनीयं, प्रकारान्तरेण चतुःसंयोगे
एव चतुर्भेदानाह—तदभावे—अनन्तरप्रक्षिप्तक्षायिकभावाभावे औपशमिकभावयुक्तैरौदयिकादिभिरेव चत्वारो भेदा भवन्ति, एतदुक्तं
भवति—यदा क्षायिकभावस्थाने औपशमिको भावः प्रक्षिप्यते तदापि चतुष्कसंयोगो भवति, एवं चामिलापः—औदयिक औपशमिकः

क्षायोपशमिकः पारिणामिकः, एषोऽपि गतिभेदात्प्रागिव चतुर्धा भावनीयः, नवरमौपशमिकं सम्यक्त्वमवगन्तव्यं, तथा एककः—एकसङ्ख्यः सान्निपातिको भेद उपशमश्रेणिसिद्धकेवलिषु भवति, तत्र औदयिक औपशमिकः क्षायिकः क्षायोपशमिकः पारिणामिक इत्येवंरूप एकः पञ्चकसंयोगो यः क्षायिकः सम्यग्दृष्टिः सन्नुपशमश्रेणिं प्रतिपद्यते तस्य संभवति, तथाहि—औदयिकं मनुष्यत्वादि औपशमिकं चारित्रं क्षायिकं सम्यक्त्वं क्षायोपशमिकमिन्द्रियादि पारिणामिकं जीवत्वादि, सिद्धेषु पुनरेको द्विकसंयोगलक्षणः सान्निपातिकभेदः, तद्यथा—क्षायिकः पारिणामिक इति, तत्र क्षायिकं सम्यक्त्वकेवलज्ञानादि पारिणामिकं जीवत्वं, केवलिनां त्वेकस्त्रिकसंयोगलक्षणः सान्निपातिकभेदः, तद्यथा—औदयिकः क्षायिकः पारिणामिकः, तत्रौदयिकं मनुष्यत्वादि क्षायिकं केवलज्ञानादि पारिणामिके जीवत्वभव्यत्वे, एवमनेन गत्यादिषु संयोगषट्कचिन्तनप्रकारेणाविरुद्धाः परस्परविरोधाभावेन संभविनः पञ्चदश सान्निपातिकभेदाः षट्कभावविकल्पा भवन्ति, विंशतिसङ्ख्याः पुनर्भङ्गा असंभविनः संयोगोत्थानमात्रतयैव संभवंति न पुनर्जीवेषु कदाचिदपि प्राप्यन्ते इति ॥ ९५ ॥ ९६ ॥ अथैत एव संभविनः षड् भङ्गा येषु जीवेषु संभवन्ति तानाह—'दुगे'त्यादि, दशसु द्विकसंयोगेषु मध्ये क्षायिकपारिणामिकभावद्वयनिष्पन्नो नवमो द्विकसंयोगः सिद्धानां संभवति, शेषास्तु नव प्ररूपणामात्रं, अन्येषां तु जीवानामौदयिकी गतिः क्षायोपशमिकानीन्द्रियाणि पारिणामिकं तु जीवत्वमित्येतद्भावत्रयं जघन्यतोऽपि लभ्यत इति, तथा केवलिनां संसारिणां च त्रिकसंयोगः, तत्र दशसु त्रिकसंयोगेषु मध्ये केवलिनां औदयिकक्षायिकपारिणामिकभावत्रयनिष्पन्नः पञ्चमो भङ्गः संभवति, औपशमिकस्य मोहनीयाश्रितत्वेन तत्क्षयवतां केवलिनामसंभवात्, क्षायोपशमिकस्यापि इन्द्रियाद्यभावतोऽसंभवाद् 'अतीन्द्रियाः केवलिन' इति वचनात्, संसारिणां तु चतुर्गतिकजीवानामौदयिकक्षायोपशमिकपारिणामिकभावत्रयनिष्पन्नः षष्ठस्त्रिकसंयोगः संभवति, शेषास्त्वष्टौ प्ररूप-

णामात्रं, क्वाप्यसंभवादिति, तथा पञ्चसु चतुष्कसंयोगेषु मध्ये चतुर्योगयुगं—चतुःसंयोगभङ्गद्वयं चतसृष्वपि गतिषु संभवति, तथाहि—
औपशमिकसम्यग्दृष्टेरौदयिकौपशमिकक्षायोपशमिकपारिणामिकभावचतुष्टयनिष्पन्नस्तृतीयो भङ्गः, क्षायिकसम्यग्दृष्टेस्तु औदयिकः
क्षायिकः क्षायोपशमिकः पारिणामिक इत्येवंरूपश्चतुर्थो भङ्गश्चतसृष्वपि गतिषु प्राप्यत इति, तथा मनुष्याणां पञ्चकयोगः—पूर्वोक्तभाव-
पञ्चकसंयोगः संभवति, केवलं क्षायिकसम्यग्दृष्टयः सन्तो ये उपशमश्रेणिं प्रतिपद्यन्ते तेषामेव न पुनरन्येषां, समुदितभावपञ्चकस्य
तेषामेव भावादिति ॥ ९७ ॥ उक्ता जीवानधिकृत्य सर्वेऽपि भावाः, इदानीं को भावः कस्मिन् कर्मणि भवतीत्येतन्निरूपयितुमाह—
'मोहस्सेवे'त्यादि, अष्टानां कर्मणां मध्ये मोहनीयस्यैवोपशमो—विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य विष्कम्भणं नान्येषां, उपशम-
स्त्विह सर्वोपशमो विवक्षितो न देशोपशमः, तस्य सर्वेषामपि कर्मणां संभवात्, तथा उदयावलिकाप्रविष्टस्यांशस्य क्षयेणानुदयावलिका-
प्रविष्टस्योपशमेन—विपाकोदयनिरोधलक्षणेन निर्वृत्तः क्षायोपशमिकः, स चतुर्णामेव घातिकर्मणां—ज्ञानावरणदर्शनावरणमोहनीयान्तराय-
रूपाणां भवति न शेषकर्मणां, चतुर्णामपि च केवलज्ञानावरणकेवलदर्शनावरणरहितानां, तयोर्विपाकोदयविष्कम्भाभावतः क्षयोपशमासं-
भवात्, उदयक्षयपरिणामा अष्टानामपि कर्मणां भवन्ति, तत्र उदयो—विपाकानुभवनं, तस्य सर्वेषामपि संसारिजीवानामष्टानामपि कर्मणां
दर्शनात्, क्षयः—आत्यन्तिकोच्छेदः, स च मोहनीयस्य सूक्ष्मसंपरायगुणस्थानकस्य चरमसमये, शेषाणां तु त्रयाणां घातिकर्मणां क्षीणक-
षायगुणस्थानकस्य, अघातिकर्मणामयोगिकेवलिनः, तथा परिणमनं परिणामः—जीवप्रदेशैः सह संलुलिततया मिश्रीभवनं यद्वा तत्तद्-
द्रव्यक्षेत्रकालाध्यवसायापेक्षया तथातथासंक्रमादिरूपतया यत्परिणमनं स परिणामः, एष चात्र तात्पर्यार्थः—मोहनीयस्य औपशमिकक्षा-

यिकक्षायोपशमिकौदयिकपारिणामिकलक्षणाः पञ्चापि भावाः संभवन्ति, ज्ञानावरणदर्शनावरणान्तरायाणामौपशमिकवर्जाः शेषाश्चत्वारः, नामगोत्रवेदनीयायुषां क्षायिकौदयिकपारिणामिकलक्षणास्त्रय इति ॥ ९८ ॥ अथ गुणस्थानकेषु भावपञ्चकं चिन्तयन्नाह—

**सम्माइचउसु तिग चउ भावा चउ पणुवसामगुवसंते । चउ खीणऽपुव्वे तिन्नि सेसगुणठाणगेग-जिए ॥ ९९ ॥**

'सम्माई'त्यादि, सम्यग्दृष्ट्यादिषु चतुर्षु—अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तसंयतलक्षणेषु गुणस्थानकेषु त्रयश्चत्वारो वा भावाः प्राप्यन्त इति शेषः, तत्र क्षायोपशमिकसम्यग्दृष्टेश्चतुर्ष्वपि गुणस्थानकेषु त्रयो भावा लभ्यन्ते, तद्यथा—यथासंभवमौदयिकी गतिः क्षायोपशमिकमिन्द्रियसम्यक्त्वादि पारिणामिकं जीवत्वमिति, क्षायिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेश्च चत्वारो भावा लभ्यन्ते, त्रयस्तावत्पूर्वोक्ता एव चतुर्थस्तु क्षायिकसम्यग्दृष्टेः क्षायिकसम्यक्त्वलक्षणः औपशमिकसम्यग्दृष्टेस्त्वौपशमिकसम्यक्त्वलक्षण इति, तथा चत्वारः पञ्च वा भावा द्वयोरप्युपशमकोपशान्तयोर्भवन्ति, किमुक्तं भवति?—अनिवृत्तिबादरसूक्ष्मसंपरायलक्षणगुणस्थानकद्वयवर्ती जन्तुरुपशमकः उपशान्तमोहगुणस्थानकवर्ती चोपशान्तः, तत्रानिवृत्तिबादरसूक्ष्मसंपराययोश्चत्वारः पूर्ववदेव, उपशान्तमोहे तु चतुर्थ औपशमिकसम्यक्त्वचारित्ररूपः, पञ्चमः पुनस्त्रयाणामपि दर्शनसप्तकक्षये उपशमश्रेणिं प्रतिपद्यमानानां, तथाहि—क्षायिकसम्यक्त्वस्य औपशमिकचारित्रस्य च सद्भावादिति, तथा चत्वारो भावाः क्षीणापूर्वयोः—क्षीणमोहगुणस्थानके अपूर्वकरणगुणस्थानके च, तत्र त्रयः पूर्ववदेव चतुर्थस्तु क्षीणमोहे क्षायिकसम्यक्त्वचारित्ररूपः, अपूर्वकरणे तु क्षायिकसम्यक्त्वरूप औपशमिकसम्यक्त्वरूपो वेति, 'तिन्नि सेसगुणठाणगे'ति त्रयः—त्रिसङ्ख्या भावा भवन्ति, केष्वित्याह—विभक्तेर्लोपात् शेषगुणस्थानकेषु—मिथ्यादृष्टिसासादनसम्यग्मिथ्यादृष्टिसयोगिकेवल्ययोगि-

केवलिलक्षणेषु, तत्र मिथ्यादृष्ट्यादीनां त्रयाणामौदयिकक्षायोपशमिकपारिणामिकलक्षणास्त्रयः सयोग्ययोगिकेवलिनोस्त्वौदयिकक्षायिकपारिणामिकरूपा इति । नन्वमी त्रिप्रभृतयो भावा गुणस्थानकेषु चिन्त्यमानाः किं सर्वजीवाधारतया चिन्त्यन्ते ? आहोश्विदेकजीवाधारतयेत्याह—'एगजिए'त्ति एकजीवे—एकजीवाधारतयेत्थं भावचिन्ता मन्तव्या, नानाजीवापेक्षया तु संभविनः सर्वेऽपि भावा भवन्तीति २२१ ॥ ९९ ॥ इदानीं 'जीवचउदसगो'त्ति द्वाविंशत्युत्तरद्विशततमं द्वारमाह—

**इह सुहुमबायरेगिंदियबितिचउ असन्नि सन्नि पंचिंदी । पज्जत्तापज्जत्ता कमेण चउदस जियट्ठाणा**
**॥ १३०० ॥**

इह—जगति प्रवचने वा अनेन क्रमेण चतुर्दश जीवस्थानानि भवन्ति, तिष्ठन्ति जीवास्तत्तत्कर्मपारतन्त्र्यादेष्विति स्थानानि—सूक्ष्मपर्याप्तैकेन्द्रियत्वादयोऽवान्तरविशेषाः जीवानां स्थानानि जीवस्थानानि, केन क्रमेणेत्याह—सूक्ष्मबादरभेदाद् द्विविधा एकेन्द्रियाः तथा द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्चासंज्ञिसंज्ञिभेदतो द्विधा मिलिताश्च सप्त, एते च सूक्ष्मैकेन्द्रियादयः प्रत्येकं द्विविधाः—पर्याप्ता अपर्याप्ताश्चेति, तथा विशेषश्चात्र—अपर्याप्तका द्विधा—लब्ध्या करणेन च, तत्र ये अपर्याप्तका एव सन्तो म्रियन्ते न पुनः स्वयोग्यपर्याप्तीः सर्वा अपि समर्थयन्ते ते लब्ध्यपर्याप्तकाः, ये पुनः स्वयोग्यकरणानि—शरीरेन्द्रियादीनि न तावत् निर्वर्तयन्ति अथ चावश्यं पुरस्तान्निर्वर्तयिष्यन्ति ते करणापर्याप्तकाः, इह चैवमागमः—लब्ध्यपर्याप्तका अपि नियमादाहारशरीरेन्द्रियपर्याप्तिपरिसमाप्तावेव म्रियन्ते नार्वाक्, यस्मादागामिकभवायुर्बद्ध्वा म्रियन्ते सर्व एव देहिनः, तच्चाहारशरीरेन्द्रियपर्याप्त्या पर्याप्तानामेव बध्यत इति २२२ ॥ १३०० ॥

इदानीं '**अजीव चउदसगो**'त्ति त्रयोविंशत्युत्तरद्विशततमं द्वारमाह—

**धम्मा १ ऽधम्मा २ ऽऽगासा ३ तियतियभेया तहेव अद्धा य १०। खंधा ११ देस १२ पएसा १३ परमाणु १४ अजीव चउदसहा ॥ १ ॥**

इह अजीवा द्विविधाः—रूपिणोऽरूपिणश्च, रूपमेषामस्तीति रूपिणः, रूपग्रहणं गन्धादीनामुपलक्षणं, तद्व्यतिरेकेण तस्यासंभवात्, अथवा रूपं नाम स्पर्शरूपादिसंमूर्च्छनात्मिका मूर्त्तिः तदेषामस्तीति रूपिणः—पुद्गलाः, तेषामेव रूपादिमत्त्वात्, रूपव्यतिरेकिणोऽरूपिणो—धर्मास्तिकायादयः, तत्र रूपिणश्चतुर्धा अरूपिणश्च दशधा, बहुवक्तव्यत्वाच्च प्रथममरूपिण आह—धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायाः—पूर्वोक्तस्वरूपास्त्रयोऽपि प्रत्येकं त्रिभेदाः, तद्यथा—धर्मास्तिकायद्रव्यं धर्मास्तिकायदेशाः धर्मास्तिकायप्रदेशाः, तत्र धर्मास्तिकायद्रव्यरूपं सकलदेशप्रदेशात्मकाविभागधर्मानुगतसमानपरिणामवत् अवयविद्रव्यं धर्मास्तिकायद्रव्यं, तथा तस्यैव धर्मास्तिकायद्रव्यस्य देशाः—बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागा धर्मास्तिकायदेशाः, तथा धर्मास्तिकायस्य प्रकृष्टा देशा—निर्विभागा भागा धर्मास्तिकायप्रदेशाः, ते चासङ्ख्येया लोकाकाशप्रदेशप्रमाणत्वात्तेषां, एवमधर्मास्तिकायाकाशास्तिकाययोरपि प्रत्येकं त्रिभेदता वाच्या, नवरमाकाशास्तिकायप्रदेशा अनन्ता द्रष्टव्याः, अलोकस्यानन्तत्वात्, दशमश्च अद्धाकालः, अस्य च वर्तमानसमयरूपस्यैव परमार्थसत्त्वाद्देशकल्पनाविरहः। तथा स्कन्धा देशाः प्रदेशाः परमाणवश्चेति चतुर्विधा रूप्यजीवाः, तत्र स्कन्दन्ति—शुष्यन्ति धीयन्ते च—पुष्यन्ति विघटनेन संघातेन चेति स्कन्धाः—अनन्तानन्तपरमाणुप्रचयरूपा मांसचक्षुर्ग्राह्याः कुम्भस्तम्भादयः तदग्राह्या अचित्तमहास्कन्धादयोऽपि, पृषोदरादित्वाच्च रूपनिष्पत्तिः, अत्र बहुवचनं पुद्गलस्कन्धानामानन्त्यख्यापनार्थं, देशाः—स्कन्धानामेव स्कन्धत्वपरिणाममजहतां बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका विभागाः, अत्रापि बहुवचनमनन्तप्रादेशिकेषु तथाविधेषु स्कन्धेषु देशानन्तत्वसंभावनार्थं, प्रदेशास्तु स्कन्धानां—स्क-

न्धत्वपरिणामपरिणतानां बुद्धिपरिकल्पिताः प्रकृष्टा देशा निर्विभागा भागा इत्यर्थः, अत्रापि बहुवचनं प्रदेशानन्तत्वसंभावनार्थं, परमाश्च ते अणवश्च परमाणवो—निर्विभागद्रव्यरूपाः। ननु प्रदेशपरमाण्वोः कः प्रतिविशेषः?, उभयोरपि निर्विभागरूपत्वात्, उच्यते, स्कन्धप्रतिबद्धा निर्विभागाः प्रदेशाः; ये तु स्कन्धत्वपरिणामरहिता विशकलिता एकाकिन एवास्मिन् लोके वर्तन्ते ते परमाणवः; तदेवमजीवाः—जीवव्यतिरिक्ताश्चतुर्दशविधा भवन्ति २२३ ॥ १ ॥ इदानीं 'गुण चउदसगु'त्ति चतुर्विंशत्युत्तरद्विशततमं द्वारमाह—

**मिच्छे १ सासण २ मिस्से ३ अविरय ४ देसे ५ पमत्त ६ अपमत्ते ७। नियट्टि ८ अनियट्टि ९**
**सुहुमु १० वसम ११ खीण १२ सजोगि १३ अजोगि १४ गुणा ॥ २ ॥**

'सूचनात् सूत्र'मिति न्यायात् 'पदैकदेशेऽपि पदसमुदायोपचाराद्वा' इहैवं गुणस्थानकनिर्देशो द्रष्टव्यः, तद्यथा—मिथ्यादृष्टिगुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानं अविरतसम्यग्दृष्टिगुणस्थानं देशविरतिगुणस्थानं प्रमत्तसंयतगुणस्थानं अप्रमत्तसंयतगुणस्थानं अपूर्वकरणगुणस्थानं अनिवृत्तिवादरसंपरायगुणस्थानं सूक्ष्मसंपरायगुणस्थानं उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानं सयोगिकेवलिगुणस्थानं अयोगिकेवलिगुणस्थानं इत्येतानि चतुर्दश गुणस्थानानि भवन्ति। तत्र मिथ्या—विपर्यस्ता दृष्टिः—अर्हत्प्रणीततत्त्वप्रतिपत्तिर्यस्य भक्षितधत्तूरपुरुषस्य सिते पीतप्रतिपत्तिवत् स मिथ्यादृष्टिः, गुणा—ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषाः, तिष्ठन्ति गुणा अस्मिन्निति स्थानं—ज्ञानादिगुणानामेव शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, गुणानां स्थानं गुणस्थानं, मिथ्यादृष्टेर्गुणस्थानं—सासादनाद्यपेक्षया ज्ञानादिगुणानां शुद्ध्यपकर्षकृतः स्वरूपभेदो मिथ्यादृष्टिगुणस्थानं। ननु यदि मिथ्यादृष्टिरसौ कथं तस्य गुणस्थानसंभवः?, गुणा हि ज्ञानदर्शनचारित्ररूपाः, तत्कथं ते दृष्टौ ज्ञानादिविपर्यस्तायां भवेयुः?, उच्यते, इह यद्यपि

तत्त्वार्थश्रद्धानलक्षणात्मगुणसर्वघातिप्रबलमिथ्यात्वमोहनीयविपाकोदयवशाद्वस्तुप्रतिपत्तिरूपा दृष्टिरसुमतो विपर्यस्ता भवति तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्ताऽपि भवति, यथाऽतिबहलघनपटल-समाच्छादितायामपि चन्द्रार्कप्रभायां काचित्प्रभा, तथाहि—समुन्नतनूतनघनाघनघनपटलेन रविरजनिकरकरनिकरतिरस्कारेऽपि नैकान्तेन तत्प्रभाविनाशः संपद्यते, प्रतिप्राणिप्रसिद्धदिनरजनिविभागाभावप्रसङ्गात्, उक्तं च—"सुट्ठुवि मेहसमुदए होइ पहा चंदसूराण"मिति, [सुष्ठ्वपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः] एवमिहापि प्रबलमिथ्यात्वोदयेऽपि काचिदविपर्यस्तापि दृष्टिर्भवतीति तदपेक्षया मिथ्यादृष्टेरपि गुणस्थानसंभवः, यद्येवं ततः कथमसौ मिथ्यादृष्टिरेव मनुष्यपश्वादिप्रतिपत्त्यपेक्षया अन्ततो निगोदावस्थायामपि तथाभू-ताव्यक्तस्पर्शमात्रप्रतिपत्त्यपेक्षया वा सम्यग्दृष्टित्वादपि ?, नैष दोषः, यतो भगवदर्हत्प्रणीतं सकलमपि प्रवचनार्थमभिरोचयमानोऽपि यदि तद्गतमेकमप्यक्षरं न रोचयति तदानीमप्येष मिथ्यादृष्टिरेवोच्यते, तस्य भगवति सर्वज्ञे प्रत्ययनाशात्, उक्तं च—"सूत्रोक्तस्यैक-स्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥" किं पुनः शेषो भगवदर्हदभिहितयथाव-ज्जीवाजीवादिवस्तुतत्त्वप्रतिपत्तिविकलः ?, ननु सकलप्रवचनार्थाभिरोचनात्तद्गतकतिपयार्थानां चारोचनादेष न्यायतः सम्यग्मिथ्यादृ-ष्टिरेव भवितुमर्हति, कस्मान्मिथ्यादृष्टिः ?, तदसत्, वस्तुतत्त्वापरिज्ञानात्, इह यदा सकलं वस्तु जिनप्रणीततया सम्यक् श्रद्धत्ते तदा-नीमसौ सम्यग्दृष्टिः, यदा त्वेकस्मिन्नपि वस्तुनि पर्याये वा मतिदौर्बल्यादिना एकान्तेन सम्यक्परिज्ञानमिथ्यापरिज्ञानाभावतो न सम्यक् श्रद्धानं नाप्येकान्ततो विप्रतिपत्तिः तदा सम्यग्मिथ्यादृष्टिः, उक्तं च शतकबृहच्चूर्णौ—"जहा नालिकेरदीववासिस्स खुहाइय-स्सवि इत्थ समागयस्स पुरिसस्स ओयणाइए अणेगविहे ढोइए तस्स आहारस्सोवरिं न रुई न य निंदा, जेण तेण सो ओयणाइओ

आहारो न कयावि दिट्ठो नावि सुओ, एवं सम्मामिच्छादिट्ठिस्सवि जीवाइपयत्थाणं उवरि न य रुई नावि निंद"त्ति, यदा पुनरेकस्मिन्नपि वस्तुनि पर्याये वा एकान्ततो विप्रतिपत्तिं प्रतिपद्यते तदा मिथ्यादृष्टिरेवेत्यदोषः १। तथा आयं—औपशमिकसम्यक्त्वलाभलक्षणं सादयति—अपनयतीति नैरुक्ते यशब्दलोपे आसादनं—अनन्तानुवंधिकपायवेदनं, सति ह्यस्मिन् परमानन्दसुखफलदो निःश्रेयसतरुवीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयमात्रेण उत्कृष्टतः षड्भिरावलिकाभिरपगच्छतीति, सह आसादनेन वर्तत इति सासादनः सम्यग्—अविपर्यस्ता दृष्टिः—जिनप्रणीतवस्तुप्रतिपत्तिर्यस्य स सम्यग्दृष्टिः सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः तस्य गुणस्थानं सासादनसम्यग्दृष्टिगुणस्थानं, अथवा सह आसातनया—अनन्तानुवन्ध्युदयलक्षणया वर्तत इति सासातनः स चासौ सम्यग्दृष्टिश्च २ तस्य गुणस्थानं सासातनसम्यग्दृष्टिगुणस्थानं, सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठः, तत्र सह सम्यक्त्वलक्षणरसास्वादनेन वर्तत इति सास्वादनः, यथा हि भुक्तक्षीरान्नविषयव्यलीकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति तथैषोऽपि मिथ्यात्वाभिमुखतया सम्यक्त्वस्योपरि व्यलीकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति ततः स चासौ सम्यग्दृष्टिश्च २ तस्य गुणस्थानं, एतच्चैवं भवति—इहापारसंसारपारावारान्तर्वर्ती जन्तुर्मिथ्यादर्शनमोहनीयादिप्रत्ययमनन्तपुद्गलपरावर्तान् यावदनेकशारीरिकमानसिकदुःखलक्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशतो गुरुतरगिरिसरित्प्रवाहवाह्यमानोपलघोलनाकल्पेनाध्यवसायविशेषरूपेणानाभोगनिर्वर्तितेन यथाप्रवृत्तिकरणेनाऽऽयुर्वर्जानि ज्ञानावरणादिकर्माणि सर्वाण्यपि पृथक्पल्योपमसङ्ख्येयभागन्यूनैकसागरोपमकोटीकोटीस्थितिकानि करोति, अत्र चान्तरे कर्कशकर्मपटलापहस्तितवीर्यविशेषाणामसुमतामतिकठोरतरनिबिडचिरप्ररूढगहनतरुग्रन्थिवद् दुर्भेदः कर्मपरिणामजनितो जीवस्य घनरागद्वेषपरिणामरूपोऽभिन्नरूपो ग्रन्थिर्भवति, इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति, ततो

ग्रन्थिभेदं कर्तुमसमर्थाः पुनरपि व्यावृत्त्य संक्लेशवशादुत्कृष्टस्थितीनि कर्माणि कुर्वन्ति, कश्चित्पुनर्महात्मा समासन्नपरमनिर्वृतिसुखः समुल्लसितप्रभूतदुर्निवार्यवीर्यप्रसरो निसिताकुण्ठकुठारधारयेवापूर्वकरणरूपया परमविशुद्ध्या यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधाय मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्तमुदयक्षणादुपरि गत्वा अनिवृत्तिकरणसंज्ञितेनान्तर्मुहूर्तकालमानं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति, अत्र च यथाप्रवृत्तापूर्वानिवृत्तिकरणानामयं क्रमो, यथा—"जा गंठी ता पढमं गंठिं समइच्छओ भवे वीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १ ॥" [ यावत् ग्रन्थिस्तावद् प्रथमं ग्रन्थिं समतिक्रामतो भवेद् द्वितीयं । अनिर्वृत्तिकरणं पुनः पुरस्कृतसम्यक्त्वे जीवे ॥ १ ॥ ] **'गंठिं समइच्छओ'**त्ति ग्रन्थिं समतिक्रामतो भिन्दानस्येतियावत्, **'सम्मत्तपुरक्खडे'**त्ति सम्यक्त्वं पुरस्कृतं येन स तथा तस्मिन्, आसन्नसम्यक्त्वे जीवे अनिवृत्तिकरणं भवतीत्यर्थः । एतस्मिंश्चान्तरकरणे कृते तस्य कर्मणः स्थितिद्वयं भवति, अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्तमाना, तस्मादेव चान्तरकरणादुपरितनी द्वितीया, स्थापना चेयं ०, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन पुनस्तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाऽभावात्, यथा हि वनदवानलः पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनवनदवोऽप्यन्तरकरणमवाप्य विध्यायति, तथा च सति तस्यौपशमिकसम्यक्त्वलाभः, तस्यां चान्तर्मौहूर्तिक्यामुपशान्ताद्धायां परमनिधिलाभकल्पायां जघन्येन समयशेषायां उत्कृष्टतः षडावलिकाशेषायां कस्यचिन्महाविभीषिकोत्थानकल्पस्तथाविधं किंचिन्निमित्तमाश्रित्यानन्तानुबन्ध्युदयो भवति, तदुदये चासौ सासादनसम्यग्दृष्टिगुणस्थाने वर्तते, उपशमश्रेणिप्रतिपतितो वा कश्चित्सासादनत्वं यातीति कार्मग्रन्थिमतं, सिद्धान्तमते तु श्रेण्याः समाप्तौ प्रतिपतितः प्रमत्तगुणस्थानेऽप्रमत्तगुणस्थाने वा तिष्ठते, कालगतस्तु देवेष्वविरतो भवतीति, सासादनोत्तरकालं चावश्यं

मिथ्यात्वोदयादयं मिथ्यादृष्टिर्भवतीति २ । तथा सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिः तस्य गुणस्थानं सम्यग्मिथ्यादृ-
ष्टिगुणस्थानं, इहानन्तरोक्तविधिना लब्धेनौपशमिकसम्यक्त्वेनौषधविशेपकल्पेन मदनकोद्रवस्थानीयं मिथ्यात्वमोहनीयं कर्म शोधयित्वा
त्रिधा करोति, तद्यथा—शुद्धमर्धविशुद्धमविशुद्धं चेति, स्थापना ० ● •, तत्र त्रयाणां पुञ्जानां मध्ये यदा अर्धविशुद्धपुञ्ज उदेति तदा तदु-
दयवशाज्जीवस्यार्धविशुद्धमर्हदभिहिततत्त्वश्रद्धानं भवति, तेन तदासौ सम्यग्मिथ्यादृष्टिगुणस्थानमन्तर्मुहूर्तकालं स्पृशति, तत ऊर्द्ध्वमवश्यं
सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ३ । तथा विरमति स्म—सावद्ययोगेभ्यो निवर्तते स्मेति विरतः न विरतोऽविरतः अथवा विरमणं विरतं—
सावद्ययोगप्रत्याख्यानं नास्य विरतमस्तीत्यविरतः स चासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टिः, इदमुक्तं भवति—यः पूर्ववर्णितौपशमिकसम्यग्दृष्टिः
शुद्धदर्शनमोहपुञ्जोदयवर्ती वा क्षायोपशमिकसम्यग्दृष्टिः क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिरविरतप्रत्ययं दुरन्तनरकादिदुःखफलकर्म-
वन्धं सावद्ययोगविरतिं च परममुनिप्रणीतसिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नपि न विरतिमभ्युपगच्छति न च तत्पालनाय
यतते, अप्रत्याख्यानावरणोदयविघ्नितत्वात्, ते हि अल्पमपि प्रत्याख्यानमावृण्वन्ति, स इहाविरतसम्यग्दृष्टिरुच्यते ४ । तथा सर्वसावद्य-
योगस्य देशे—एकव्रतविषयस्थूलसावद्ययोगादौ सर्वव्रतविषयानुमतिवर्जसावद्ययोगान्ते विरतं—विरतिर्यस्यासौ देशविरतिः, सर्वसावद्ययो-
गविरतिस्त्वस्य नास्ति; प्रत्याख्यानावरणकषायोदयात्, सर्वविरतिरूपं हि प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा उच्यन्ते इति, देश-
विरतस्य गुणस्थानं देशविरतगुणस्थानं ५ । तथा संयच्छति स्म—सर्वसावद्ययोगेभ्यः सम्यगुपरमति स्मेति संयतः प्रमाद्यति स्म—मोहनी-
यादिकर्मोदयप्रभावतः संज्वलनकषायनिद्राद्यन्यतमप्रमादयोगतः संयमयोगेषु सीदति स्मेति प्रमत्तः स चासौ संयतश्च प्रमत्तसंयतः तस्य
गुणस्थानं प्रमत्तसंयतगुणस्थानं—विशुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः, तथाहि—देशविरतगुणापेक्षया एतद्गुणानां विशुद्धिप्रकर्षोऽ-

शुद्ध्यपकर्षश्च, अप्रमत्तसंयतगुणापेक्षया तु विपर्ययः, एवमन्येऽष्वपि गुणस्थानकेषु पूर्वोत्तरगुणापेक्षया विशुद्ध्यविशुद्धिप्रकर्षापकर्षयोजना द्रष्टव्या ६। तथा न प्रमत्तोऽप्रमत्तो—निद्रादिप्रमादरहितः स चासौ संयतश्चाप्रमत्तसंयतस्तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानं ७। तथा अपूर्वमभिनवमनन्यसदृशमितियावत् करणं—स्थितिघातरसघातगुणश्रेणिगुणसंक्रमस्थितिवन्धानां पञ्चानां पदार्थानां निर्वर्तनं यस्यासावपूर्वकरणः, तथाहि—वृहत्प्रमाणाया ज्ञानावरणादिकर्मस्थितेरपवर्तनाकरणेन खण्डनं—अल्पीकरणं स्थितिघातः, रसस्यापि—कर्मपरमाणुगतस्निग्धलक्षणस्य प्रचुरीभूतस्य सतोऽपवर्तनाकरणेन खण्डनं रसघातः, एतौ च द्वावपि पूर्वगुणस्थानकेषु विशुद्धेरल्पत्वादल्पावेव कृतवान् अत्र पुनर्विशुद्धेः प्रकृष्टतरत्वाद् वृहत्प्रमाणतयाऽपूर्वाविमौ करोति, तथा उपरितनस्थितेर्विशुद्धिवशादपवर्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्तं यावदुदयक्षणादुपरि क्षिप्रतरक्षपणाय प्रतिक्षणमसङ्ख्येयगुणवृद्ध्या यद्विरचनं सा गुणश्रेणिः, स्थापना ⁘⁘⁘ एतां च पूर्वगुणस्थानेष्वविशुद्धतरत्वात् कालतो द्राघीयसीं दलिकविरचनामाश्रित्याप्रथीयसीं च दलिकस्याल्पस्यापवर्तनाद्विरचितवान्, इह तु तामेव विशुद्धत्वादपूर्वां कालतो ह्रस्वतरां दलिकविरचनामाश्रित्य पुनः पृथुतरां वहुतरदलिकस्यापवर्तनाद्विरचयतीति, तथा वध्यमानशुभाशुभप्रकृतिषु अवध्यमानशुभाशुभप्रकृतिदलिकस्य प्रतिक्षणमसङ्ख्येयगुणवृद्ध्या विशुद्धिवशान्नयनं गुणसंक्रमः, तमप्यसाविह अपूर्वं करोति, तथा स्थितिं च कर्मणामशुद्धत्वात् प्राग्द्राघीयसीं वद्धवान्, इह तु तामपूर्वां पल्योपमासङ्ख्येयभागेन हीनां हीनतरां हीनतमां च विशुद्धिवशाद्वध्नाति, अयं चापूर्वकरणो द्विधा—क्षपक उपशमकश्च, क्षपणोपशमनार्हत्वाच्चैवमुच्यते राज्यार्हकुमारराजवत्, न पुनरसौ क्षपयत्युपशमयति वा किमपि सर्वात्मना कर्म, तस्य गुणस्थानमपूर्वकरणगुणस्थानं, अस्मिंश्च गुणस्थानके कालत्रयवर्तिनो नानाजीवानाश्रित्य प्रतिसमयं यथोत्तरमधिकवृद्ध्या असङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति, तथाहि—येऽस्यान्तर्मुहूर्तप्रमाणस्य

गुणस्थानस्य प्रथमसमयं प्रतिपन्नाः प्रतिपद्यन्ते प्रतिपत्स्यन्ते च तान् सर्वानपेक्ष्य जघन्यादीन्युत्कृष्टान्तान्यसङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि लभ्यन्ते, कश्चित्कदाचित्केषाञ्चित्प्रथमसमयवर्तिनां परस्परमध्यवसायस्थाने नानात्वस्यापि भावात्, तस्य च नानात्वस्यैतावत एव केवलज्ञानेनोपलब्धत्वात्, अत एव चेदमपि न वाच्यं कालत्रयवर्तिनामेतद्गुणस्थानकप्रथमसमयप्रतिपत्तॄणामानन्त्यात्परस्परमध्यवसायस्थानानां नानात्वाच्चानन्तान्यध्यवसायस्थानानि प्राप्नुवन्ति, बहूनां प्राय एकाध्यवसायस्थानवर्तित्वात्, ततो द्वितीयसमये तदन्यान्यधिकतराण्यध्यवसायस्थानानि लभ्यन्ते तृतीयसमये तदन्यान्यधिकतराणि चतुर्थसमये तदन्यान्यधिकतराणीत्येवं यावच्चरमसमयः, एतानि च स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति, स्थापना ⁘⁘ ननु द्वितीयादिसमयेष्वध्यवसायस्थानानां वृद्धौ किं कारणं ?, उच्यते, स्वभावविशेषः, एतद्गुणस्थानकप्रतिपत्तारो हि प्रतिसमयं विशुद्धिप्रकर्षमासादयन्तः खलु स्वभावत एव बहवो विभिन्नेषु विभिन्नेष्वध्यवसायस्थानेषु वर्तन्त इति, अत्र च प्रथमसमयजघन्याध्यवसायस्थानात् प्रथमसमयोत्कृष्टमध्यवसायस्थानमनन्तगुणविशुद्धं प्रथमसमयोत्कृष्टाच्चाध्यवसायस्थानाद् द्वितीयसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धं तस्मात्तदुत्कृष्टमनन्तगुणविशुद्धं इत्येवं यावद् द्विचरमसमयोत्कृष्टाध्यवसायस्थानाच्चरमसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धं तस्मादपि तदुत्कृष्टमनन्तगुणविशुद्धमिति, एकसमयगतानि चामून्यध्यवसायस्थानानि परस्परं षट्स्थाननिपतितानि, युगपदेतद्गुणस्थानकप्रविष्टानां च परस्परमध्यवसायस्थानस्य व्यावृत्तिलक्षणा निवृत्तिरप्यस्ति, यथोक्तमनन्तरमितिकृत्वा निवृत्तिगुणस्थानकमप्येतदुच्यते ८। तथा युगपद्गुणस्थानकं प्रतिपन्नानां बहूनामपि जीवानामन्योऽन्यमध्यवसायस्थानस्य व्यावृत्तिः—निवृत्तिः सा नास्ति अस्येत्यनिवृत्तिः, समकालमेतद्गुणस्थानकमारूढस्यापरस्य यस्मिन् समये यदध्यवसायस्थानमन्योऽपि विवक्षितः पुरुषस्तस्मिन् समये तदेवाध्यवसायस्थानं समनुवर्तते इत्यर्थः, संपरैति—पर्य-

टति संसारमनेनेति संपरायः—कषायोदयः बादरः—सूक्ष्मकिट्टीकृतसंपरायापेक्षया स्थूरः संपरायो यस्य स बादरसंपरायः अनिवृत्तिश्चासौ बादरसंपरायश्च २ तस्य गुणस्थानमनिवृत्तिबादरसंपरायगुणस्थानं, तस्यां चानिवृत्तिबादरगुणस्थानकाद्धायामान्तर्मौहूर्तिक्यां प्रथमसमयादारभ्य प्रतिसमयमनन्तगुणविशुद्धं यथोत्तरमध्यवसायस्थानं भवति, यावन्तश्चान्तर्मुहूर्ते समयास्तावन्त्येवाध्यवसायस्थानानि तत्प्रविष्टानां भवन्ति नाधिकानि, एकसमयप्रविष्टानां सर्वेषामप्येकाध्यवसायस्थानत्वात्, स चानिवृत्तिबादरो द्वेधा—क्षपक उपशमकश्च, क्षपयति उपशमयति वा कषायाष्टकादिकमितिकृत्वा ९। तथा सूक्ष्मः—किट्टीकृतः संपरायो—लोभकषायोदयरूपो यस्य स सूक्ष्मसंपरायः, स द्विधा—क्षपक उपशमकश्च, क्षपयति उपशमयति वा अनिवृत्तिबादरेण किट्टीकृतं लोभमेकमितिकृत्वा, तस्य गुणस्थानं सूक्ष्मसंपरायगुणस्थानं १०। तथा छादयति ज्ञानादिकं गुणमात्मन इति छद्म—ज्ञानावरणीयादिघातिकर्मोदयः छद्मनि तिष्ठतीति छद्मस्थः, स च सरागोऽपि भवतीति तद्व्यवच्छेदार्थं वीतरागग्रहणं, वीतो—विगतो रागो—मायालोभकषायोदयरूपः उपलक्षणत्वादस्य द्वेषोऽपि—क्रोधमानोदयरूपो यस्य स वीतरागः स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः, स च क्षीणकषायोऽपि भवति तस्यापि यथोक्तरागापगमात् ततस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणं, उपशान्ताः—उपशमिता विद्यमाना एव सन्तः संक्रमणोद्वर्तनापवर्तनादिकरणैर्विपाकोदयप्रदेशोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः स चासौ वीतरागच्छद्मस्थश्च २ तस्य गुणस्थानमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानं ११। तथा क्षीणा—अभावमापन्नाः कषाया यस्य स क्षीणकषायः, तत्रान्येष्वपि गुणस्थानकेषु क्षपकश्रेणिद्वारोक्तयुक्त्या कापि कियतामपि कषायाणां क्षीणत्वसंभवात् क्षीणकषायव्यपदेशः संभवति ततस्तद्व्यवच्छेदार्थं वीतरागग्रहणं, क्षीणकषायवीतरागत्वं च केवलिनामप्यस्तीति तद्व्यवच्छेदार्थं छद्मस्थग्रहणं, यद्वा छद्मस्थः सरागोऽपि भवतीति तदपनोदार्थं वीतरागग्रहणं, वीतरागश्चासौ छद्मस्थश्च

वीतरागच्छद्मस्थः, स चोपशान्तकषायोऽप्यस्तीति तद्व्यवच्छेदार्थं क्षीणकषायग्रहणं, क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च २ तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानं १२। तथा योजनं योगो—व्यापारः, उक्तं च—"कायवाङ्मनःकर्म योगः" (तत्त्व० ६–१) सह योगेन वर्तन्ते ये ते सयोगा—मनोवाक्कायाः ते यस्य विद्यन्ते स सयोगी, तत्र भगवतः काययोगश्चङ्क्रमणनिमेषोन्मेषादिः वाग्योगो देशनादिः मनोयोगो मनःपर्यायज्ञानिभिरनुत्तरसुरादिभिर्वा मनसा पृष्टस्य मनसैव देशना, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यायज्ञानेनावधिज्ञानेन च पश्यन्ति, दृष्ट्वा च ते हि विवक्षितवस्त्वालोचनाऽऽकारार्थानुपपत्त्या अलोकस्वरूपादिकमपि बाह्यमर्थं पृष्टमवगच्छंति, केवलं ज्ञानं दर्शनं च विद्यते यस्य स केवली सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थानं सयोगिकेवलिगुणस्थानं १३। तथा योगः—पूर्वोक्तो विद्यते यस्यासौ योगी न योगी अयोगी स चासौ केवली च अयोगिकेवली तस्य गुणस्थानमयोगिकेवलिगुणस्थानं, अयोगित्वं पुनरेवं—इह त्रिविधोऽपि योगः प्रत्येकं द्विधा—सूक्ष्मो बादरश्च, तत्र केवलोत्पत्तेरनन्तरं जघन्यतोऽन्तर्मुहूर्तमुत्कर्षतो देशोनां पूर्वकोटीं विहृत्यान्तर्मुहूर्तावशेषायुष्कः सयोगिकेवली शैलेशीं प्रतिपित्सुः पूर्वं बादरकाययोगेन बादरवाग्योगं निरुणद्धि ततो बादरमनोयोगं ततः सूक्ष्मकाययोगेन बादरकाययोगं, सति तस्मिन् सूक्ष्मयोगस्य निरोद्धुमशक्यत्वात्, ततस्तेनैव सूक्ष्मवाग्योगं ततः सूक्ष्ममनोयोगं ततः सूक्ष्मक्रियमनिवृत्ति शुक्लध्यानं ध्यायन् सूक्ष्मकाययोगं स्वात्मनैव निरुणद्धि, अन्यस्यावष्टम्भनीययोगान्तरस्य तदाऽसत्त्वात्, तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायन् ह्रस्वपञ्चाक्षरोच्चारणमात्रकालं शैलेशीकरणं प्रविष्टो भवति, शीलस्य—योगलेश्याकलङ्कविप्रमुक्तयथाख्यातचारित्रलक्षणस्य य ईशः स शीलेशस्तस्येयं शैलेशी, त्रिभागोनस्वदेहावगाहनायामुदरादिरन्ध्रपूरणवशात् संकोचितस्वप्रदेशस्य शैलेशस्यात्मनोऽत्यन्तस्थिरावस्थितिरित्यर्थः तस्यां करणं—पूर्वरचितशैलेशीसमयसमानगुणश्रेणिकस्य वेदनीयनामगोत्राख्यस्याघातिकर्मत्रित-

यस्यासङ्ख्येयगुणया श्रेण्या आयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणं, तत्रासौ प्रविष्टोऽयोगिकेवली भवति, अयं च भवस्थः, ततः शैलेशीकरणचरमसमयानन्तरं कोशबन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादेरण्डफलमिव भगवानपि कर्मसम्बन्धविमोक्षलक्षणसहकारिसमुत्थस्वभावविशेषादूर्द्ध्वं गच्छति, स चोर्द्ध्वं गच्छन् ऋजुश्रेण्यां यावत्स्वाकाशप्रदेशेषु इहावगाढस्तावत एव प्रदेशानूर्द्ध्वमप्यवगाहमानो विवक्षितसमयाच्चान्यत्समयान्तरमस्पृशन् लोकान्ते गच्छति, न परतोऽपि, गत्युपष्टम्भकधर्मास्तिकायाभावात्, तत्र च गतः सन् शाश्वतं कालमवतिष्ठते १४।२२४ ॥ २ ॥ इदानीं 'मग्गणचउदसगो'त्ति पञ्चविंशत्युत्तरद्विशततमं द्वारमाह—

**गइ १ इंदिए य २ काये ३ जोए ४ वेए ५ कसाय ६ नाणेसुं ७ । संजम ८ दंसण ९ लेसा १०**
**भव ११ सम्मे १२ सन्नि १३ आहारे १४ ॥ ३ ॥**

गतिः इन्द्रियाणि कायाः योगाः वेदाः कषायाः ज्ञानानि संयमः दर्शनानि लेश्याः भव्याः सम्यक्त्वं संज्ञी आहारक इति मूलभेदापेक्षया चतुर्दश मार्गणास्थानानि, मार्गणं—जीवादीनां पदार्थानामन्वेषणं मार्गणा तस्याः स्थानानि—आश्रया मार्गणास्थानानि, उत्तरभेदापेक्षया तु द्वाषष्टिः, तथाहि—सुरनरतिर्यग्नारकगतिभेदाद् गतिश्चतुर्धा, स्पर्शनरसनघ्राणचक्षुःश्रोत्रेन्द्रियभेदात् पञ्च इंद्रियाणि, पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात् कायः षोढा, मनोवचनकायाख्या योगास्त्रयः, स्त्रीपुंनपुंसकस्वरूपा वेदास्त्रयः, क्रोधमानमायालोभलक्षणाः कषायाश्चत्वारः, मतिश्रुतावधिमनःपर्यायकेवलभेदात् पञ्च ज्ञानानि, ज्ञानग्रहणेन चाज्ञानमपि तत्प्रतिपक्षभूतमुपलक्ष्यते, तच्च त्रिधा—मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदात्, एवमष्टौ, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसंपराययथाख्यातभेदात् संयमः पञ्चधा, तत्प्रतिपक्षत्वाच्च देशसंयमोऽसंयमश्च गृह्यते, एवं सप्त, चक्षुरचक्षुरवधिकेवलभेदाच्चत्वारि दर्शनानि, कृष्णा नीला कापोती

तैजसी पद्मा शुक्ला चेति षट् लेश्याः, भव्यस्तत्प्रतिपक्षत्वेन चाभव्य इति द्वयं, क्षायोपशमिकक्षायिकौपशमिकभेदात् सम्यक्त्वं त्रिधा, सम्यक्त्वग्रहणेन च तत्प्रतिपक्षभूतानि मिश्रसासादनमिथ्यात्वान्यपि गृह्यन्ते एवं षट्, संज्ञी तत्प्रतिपक्षश्चासंज्ञीति द्वयं, आहारकस्तत्प्रतिपक्षोऽनाहारक इति द्वयं, सर्वमीलने च द्वाषष्टिरिति २२५ ॥३॥ इदानीं 'उवओग बारस'त्ति षड्विंशत्युत्तरद्विशततमं द्वारमाह—

**मइ १ सुय २ ओही ३ मण ४ केवलाणि ५ मइ ६ सुयअन्नाण ७ विब्भंगा ८। अचक्खु ९ चक्खु १० अवही ११ केवलचउदंसणु १२ वउगा ॥ ४ ॥**

उपयुज्यते—वस्तुपरिच्छेदं प्रति व्यापार्यते जीव एभिरित्युपयोगाः—बोधरूपा जीवस्य स्वतत्त्वभूता व्यापाराः, ते च द्विधा—साकारा अनाकाराश्च, तत्र आकारः—प्रतिवस्तु प्रतिनियतो ग्रहणपरिणामरूपो विशेषः 'आगारो उ विसेसो' इति वचनात् सह आकारेण वर्तन्ते इति साकाराः, सामान्यविशेषात्मके वस्तुनि विशेषांशग्राहिण इत्यर्थः, तद्विपरीतास्त्वनाकाराः, सामान्यांशग्राहिण इत्यर्थः, तत्र मतिश्रुतावधिमनःपर्यायकेवलाख्यानि पञ्च ज्ञानानि, मत्यज्ञानश्रुताज्ञानविभङ्गरूपाणि त्रीणि चाज्ञानानि इत्यष्टौ साकाराः, अचक्षुश्चक्षुरवधिकेवलाख्यानि चत्वारि दर्शनान्यनाकाराः, तदेवं मिलिता द्वादश उपयोगाः, तत्र ज्ञानानि दर्शनानि च प्रागेवोक्तानि, तथा मतिश्रुतावधिज्ञानान्येव नञः कुत्सार्थत्वान्मिथ्यात्वकलुषिततया यदा कुत्सितानि भवन्ति तदा यथाक्रमं मत्यज्ञानश्रुताज्ञानविभङ्गव्यपदेशभाञ्जि भवन्ति, 'विभंग'त्ति विपरीतो भङ्गः—परिच्छित्तिप्रकारो यस्मिन् तद्विभङ्गमिति २२६ ॥ ४ ॥ इदानीं 'योगा पन्नरस'त्ति सप्तविंशत्युत्तरं द्विशततमं द्वारमाह—

**सच्चं १ मोसं २ मीसं ३ असच्चमोसं ४ मणो तह वई य ४। उरल १ विउव्वा २ हारा ३ मीस ३ कम्मयग १ मिय जोगा ॥ ९ ॥**

यद्यपि मनोवाक्कायावष्टम्भसमुत्थो जीवस्य परिस्पन्द एव योग उच्यते तथाऽपीह योगशब्देन कारणे कार्योपचारात्तत्सहकारिभूतं मनःप्रभृत्येव विवक्षितमिति तैः सह योगस्य सामानाधिकरण्यं, तत्र मनश्चतुर्धा, तद्यथा—सत्यं मृषा मिश्रमसत्यामृषा च, तत्र सन्तो—मुनयः पदार्था वा जीवादयस्तेषु यथासङ्ख्यं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन च साधु सत्यं, यथा—अस्ति जीवः सदसद्रूपो देहमात्रव्यापीत्यादिरूपतया यथावस्थितवस्तुविकल्पनचिन्तनपरं, सत्यंविपरीतमसत्य, यथा—नास्ति जीव एकान्तसद्रूपो वेत्यादि अयथावस्थितवस्तुप्रतिभासनपरं, सत्यं च मृषा चेति मिश्रं, यथा धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति विकल्पनपरं, अत्र हि कतिपयाशोकवृक्षाणां सद्भावात् सत्यता अन्येषामपि धवादीनां सद्भावादसत्यता, व्यवहारनयमतापेक्षया चैवमुच्यते, परमार्थतः पुनरिदमसत्यमेव, यथाविकल्पितार्थायोगात्, तथा यन्न सत्यं नापि मृषा नापि सत्यमृषा तदसत्यामृषा, इह विप्रतिपत्तौ सत्यां यद्वस्तुप्रतिष्ठाशया सर्वज्ञमतानुसारेण विकल्प्यते यथा अस्ति जीवः सदसद्रूप इति तत्किल सत्यं परिभाषितं आराधकत्वात्, यत्पुनर्विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतोत्तीर्णं विकल्प्यते यथा नास्ति जीव एकान्तनित्यो वेति तदसत्यं विराधकत्वात्, यत्पुनर्वस्तुप्रतिष्ठाशामन्तरेण स्वरूपमात्रपर्यालोचनपरं यथा हे देवदत्त! घटमानय गां देहि मह्यमित्यादिचिन्तनं तदसत्यामृषा, इदं हि स्वरूपमात्रपर्यालोचनपरत्वान्न यथोक्तलक्षणं सत्यं नापि मृषेति, इदमपि व्यवहारनयमतेन द्रष्टव्यं, निश्चयनयमतेन तु विप्रतारणादिबुद्धिपूर्वकमसत्येऽन्तर्भवति अन्यथा तु सत्ये इति। यथा मनः सत्यादिभेदाच्चतुर्धा तथा वागपि सत्यादिभेदाच्चतुर्धा। तथौदारिकवैक्रियाहारकाणि शरीराणि,

तत्र उदारं—प्रधानं, प्राधान्यं च तीर्थकरगणधरशरीरापेक्षया द्रष्टव्यं, ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनरूपत्वात्, अथवा उदारं—सातिरेकयोजनशतसहस्रमानत्वाच्छेषशरीरेभ्यो बृहत्प्रमाणं, बृहत्ता चास्य वैक्रियमाश्रित्य भवधारणीयसहजशरीरापेक्षया द्रष्टव्या, अन्यथोत्तरवैक्रियं योजनलक्षमानमपि लभ्यते इति, उदारमेवौदारिकं, तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियं, तथाहि—तदेकं भूत्वाऽनेकं भवति अनेकं च भूत्वा एकं तथा अणु भूत्वा महद्भवति महद् भूत्वा अणु इत्यादि, तथा चतुर्दशपूर्वविदा तीर्थकरस्फातिदर्शनादिकतथाविधकार्योत्पत्तौ विशिष्टलब्धिवशादाह्रियते—निर्वर्त्यत इत्याहारकं, तथा मिश्रशब्दः प्रत्येकं संबध्यते, औदारिकमिश्रं वैक्रियमिश्रमाहारकमिश्रं च, तत्रौदारिकमिश्रं कार्मणेन, तच्चापर्याप्तावस्थायां केवलिसमुद्घातावस्थायां वा, उत्पत्तिदेशे हि पूर्वभवादनन्तरागतो जीव आद्यसमये कार्मणेनैव केवलेनाहारयति, ततः परमौदारिकस्याप्यारब्धत्वादौदारिकेण कार्मणमिश्रेण यावच्छरीरस्य निष्पत्तिः, केवलिसमुद्घातावस्थायां तु द्वितीयषष्ठसप्तमसमयेषु कार्मणेन मिश्रमौदारिकं प्रतीतमेव, तथा वैक्रियमिश्रं कार्मणेनौदारिकेण वा, तत्र कार्मणेन मिश्रं देवनारकाणामपर्याप्तावस्थायामाद्यसमयानन्तरं द्रष्टव्यं, बादरपर्याप्तकवायोः पञ्चेन्द्रियतिर्यग्मनुष्याणां च वैक्रियलब्धिमतां वैक्रियारम्भकाले वैक्रियपरित्यागकाले वा औदारिकेण मिश्रं, तथा सिद्धप्रयोजनस्य चतुर्दशपूर्वविद आहारकं त्यजत औदारिकं गृह्णत आहारकं वा प्रारभमाणस्याहारकमिश्रमौदारिकेण ज्ञेयं, तथा '**कम्मयगं**'ति कर्मजकं कर्मणो जातं कर्मजं कर्मात्मकमित्यर्थः तदेव कर्मजकं, किमुक्तं भवति ?—कर्मपरमाणव एवात्मप्रदेशैः सह क्षीरनीरवदन्योऽन्यानुगताः सन्तः शरीररूपतया परिणताः कर्मजशरीरमिति, अत एव तदन्यत्र कार्मणमित्युक्तं, कर्मणो विकारः कार्मणमिति, तथा चोक्तम्—"कम्मविवागो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥ १ ॥" [ कर्मविपाकः कार्मणमष्टविधविचित्रकर्मनिष्पन्नं । सर्वेषां शरीराणां कार-

णभूतं ज्ञातव्यं ॥ १ ॥ ] अत्र 'सवेसिं' इति सर्वेषामौदारिकादीनां शरीराणां कारणभूतं—बीजभूतं कार्मणं शरीरमिति, न खल्वामूलसमुच्छिन्ने भवप्रपञ्चप्ररोहबीजभूते कार्मणे वपुषि शेषशरीरप्रादुर्भावः, इदं च कर्मजं शरीरं जन्तोर्गत्यन्तरसंक्रान्तौ साधकतमं कारणं, तथाहि—कर्मजेनैव वपुषा परिकरितो जन्तुर्मरणदेशमपहायोत्पत्तिदेशमभिसर्पति, ननु यदि कार्मणवपुःपरिकरितो गत्यन्तरं संक्रामति तर्हि स गच्छन्नागच्छन् वा कस्मान्न दृश्यते ?, उच्यते, कर्मपुद्गलानामतिसूक्ष्मतया चक्षुरादीन्द्रियागोचरत्वात्, तथा च परतीर्थिकैरप्युक्तम्—"अन्तरा भवदेहोऽपि, सूक्ष्मत्वान्नोपलभ्यते । निष्क्रामन्वा प्रविशन्वा, नाभावोऽनीक्षणादपि ॥ १ ॥" तदेवं चतुर्धा मनोयोगश्चतुर्धा वाग्योगः सप्तधा च काययोगः इति पञ्चदश योगाः । ननु तैजसमपि शरीरं विद्यते यद् भुक्ताहारपरिणमनहेतुः यद्वशाच्च विशिष्टतपोविशेषसमुत्थलब्धिविशेषस्य पुंसस्तेजोलेश्याविनिर्गमः तत्किमिह नोक्तमिति ?, उच्यते, सदा कार्मणेन सहाव्यभिचारितया तस्य तद्ग्रहणेनैव गृहीतत्वादिति २२७ ॥ ५ ॥ इदानीं 'परलोयगई गुणठाणएसु'त्ति अष्टाविंशत्युत्तरद्विशततमं द्वारमाह—

**मिच्छे सासाणे वा अविरयभावंमि अहिगए अहवा । जंति जिया परलोयं सेसेक्कारसगुणे मोत्तुं ॥ ६ ॥**

मिथ्यात्वे सासादनत्वे वा अथवा अविरतभावे—अविरतसम्यग्दृष्टित्वेऽधिगते—प्राप्ते सति, मिथ्यात्वादिना गृहीतेनेत्यर्थः, परलोकं—भवान्तरं जीवा व्रजन्ति, शेषांस्तु मिश्रदेशविरत्यादीनेकादश गुणस्थानकान् मुक्त्वा—इह भव एव सर्वथा परित्यज्य जीवाः परलोकं यान्ति, इयमत्र भावना—मिथ्यात्वेन गृहीतेन भवान्तरगमनं प्रतीतमेव, तस्य च सर्वत्रापि संभवात्, एवं सासादनभावेऽपि 'अणुबंधोदयमाउगबन्धं कालं च सासणो कुणइ ।' [ सास्वादनोऽनन्तानुबन्धिबन्धोदयमायुर्बन्धं कालं च करोति ] इति वचनात्, तथा गृहीतसम्य-

क्त्वस्यापि देवादिपूत्पादादविरतसम्यग्दृष्टित्वेऽपि परलोकगमनं, तथा गृहीतमिश्रभावो न भवान्तरं गच्छति, 'न सम्ममिच्छो कुणइ कालं' [ न सम्यग्मिथ्यादृष्टिः कालं करोति ] इति वचनात्, देशविरत्यादिगुणस्थानकानां तु विरतिसद्भाव एव भावात्, विरतिश्च यावज्जीवितावधिकत्वान्न तेषु परलोकसंभव इति २२८ ॥ ६ ॥ इदानीं 'गुणठाणयकालमाणं'त्येकोनत्रिंशदुत्तरद्विशततमं द्वारमाह—

**मिच्छत्तमभव्वाणं अणाइयमणंतयं च विन्नेयं । भव्वाणं तु अणाई सपज्जवसियं च सम्मत्ते ॥ ७ ॥**
**[मीसाखीणसजोगे न मरंतिक्कारसेसु अ मरंति । तेसुवि तिसु गहिएसुं परलोअगमो न अट्ठेसु ॥ ८ ॥] छावलियं सासाणं समहियतेत्तीससायर चउत्थं । देसूणपुव्वकोडी पंचमगं तेरसं च पुढो ॥८॥ लहुपंचक्खर चरिमं तइयं छट्ठाइ बारसं जाव । इह अट्ठ गुणट्ठाणा अंतमुहुत्ता पमाणेणं॥९॥**

इह च मिथ्यात्वकालचिन्तायां चतुर्भङ्गी, तद्यथा—अनाद्यनन्तः १ अनादिसान्तः २ साद्यनन्तः ३ सादिसान्तश्च ४, तत्र मिथ्यात्वं—विपरीतरुचिरूपमभव्यानामनाद्यनन्तं च विज्ञेयं, अनादिकालात्तेषु तत्सद्भावात् आगामिकालेऽपि च तदभावासंभवादिति भावः, भव्यानां पुनर्मिथ्यात्वमनादि सपर्यवसितं, चशब्दस्यानुक्तसमुच्चयार्थत्वात् सादिसपर्यवसितं च विज्ञेयं, सपर्यवसितत्वं च सम्यक्त्वे—सम्यक्त्वावाप्तौ सत्यां, इदमुक्तं भवति—योऽनादिमिथ्यादृष्टिः सन् भव्यजीवः सम्यक्त्वं लप्स्यते तस्य मिथ्यात्वमनादिसान्तं, अनादिकालात्तेषु तस्य सद्भावात् आगामिकाले तु भव्यत्वान्यथानुपपत्तेरवश्यं सम्यक्त्वावाप्तौ पर्यवसानाच, यस्त्वनादिमिथ्यादृष्टिः सम्यक्त्वं लब्ध्वा केनापि कारणेन पुनर्मिथ्यात्वं याति तस्य तत्सादि, सम्यक्त्वलाभादनन्तरं तत्प्राप्तेः सादित्वात्, मिथ्यात्वे च जघन्यतोऽन्तर्मुहूर्तं उत्कृष्टतस्त्वर्हदाशातनादिपापबहुलतयाऽपार्धपुद्गलपरावर्तं यावत् स्थित्वा यदा पुनरपि सम्यक्त्वं लभते तदा तत्सान्तं,

साद्यनंतमितितृतीयभङ्गस्तु शून्य एव, प्रतिपतितसम्यग्दृष्टीनामेव हि मिथ्यात्वं सादि, तेषां चावश्यं सम्यक्त्वभावतो मिथ्यात्वस्यानन्तत्वासंभवादिति, तथा सासादनगुणस्थानकं उत्कर्षतः षडावलिकाप्रमाणं, तत ऊर्द्धमवश्यं मिथ्यात्वोपगमात्, आवलिका चासङ्ख्यातसमयसमुदायरूपा, चतुर्थ—अविरतसम्यग्दृष्टिगुणस्थानकं त्रयस्त्रिंशत्सागरोपमाणि साधिकानि, तथाहि—कश्चिदितः स्थानादुत्कृष्टस्थितिष्वनुत्तरविमानेषूत्पन्नः तत्र चाविरतसम्यग्दृष्टित्वेन त्रयस्त्रिंशत्सागरोपमाणि स्थितः ततश्च्युत्वाऽत्राप्यायातो यावदद्यापि विरतिं न लभते तावत्तद्भावेनैव स्थित इत्यतो मनुष्यभवसंबद्धकतिपयवर्षाधिकत्रयस्त्रिंशत्सागरोपमसंभवः, पञ्चमं—देशविरतिगुणस्थानकं त्रयोदशं—सयोगिगुणस्थानकं, एते द्वे अपि पृथक् प्रत्येकं किञ्चिदूनपूर्वकोटिप्रमाणे, गर्भस्थो हि किल सातिरेकान्नव मासान् गमयति, जातोऽपि चाष्टौ वर्षाणि यावद्विरत्यनर्हो भवति, तत ऊर्द्ध्वं देशविरतिं प्रतिपद्य सर्वविरतिप्रतिपत्त्या केवलज्ञानं वोत्पाद्य यौ देशविरतिसयोगिकेवलिनौ प्रत्येकं पूर्वकोटिं जीवतस्तयोः किञ्चिदूनवर्षनवकलक्षणेन देशेन न्यूना पूर्वकोटिरिति, तथा चरमं—अयोगिकेवलिगुणस्थानं लघुपञ्चाक्षरं, किमुक्तं भवति?—नातिद्रुतं नातिविलम्बितं च किंतु मध्यमेन प्रकारेण यावता कालेन ङञणनम इत्येवंरूपाणि पञ्चाक्षराण्युच्चार्यन्ते तावत्कालमानमिति, तत ऊर्द्ध्वं मुक्त्यवाप्तेः, तृतीयं—सम्यग्मिथ्यादृष्टिगुणस्थानं, तथा षष्ठादि द्वादशं यावत्प्रमत्ताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहरूपाणीत्यर्थः इत्येतान्यष्टौ गुणस्थानानि प्रत्येकमन्तर्मुहूर्तप्रमाणानि, परतो गुणस्थानकान्तरगमनात् कालकरणाद्वेति, एतच्चोत्कृष्टतः कालप्रमाणमुक्तं, जघन्यतस्तु सासादनप्रमत्ताप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहानामेकः समयः, तदूर्द्ध्वं मरणभावेनान्यत्रोपगमात्, मिथ्यादृष्टिमिश्राविरतदेशविरतक्षीणमोहसयोगिकेवलिनां चान्तर्मुहूर्तं,

अयोगिकेवलिनस्तु जघन्योत्कृष्टतः पूर्वोक्तमेवेति २२९ ॥ ७ ॥ ८ ॥ ८ ॥ ९ ॥ इदानीं 'निरयतिरिनरसुराणं उक्कोस विउव्वणाकालो'त्ति त्रिंशदुत्तरद्विशततमं द्वारमाह—

**अंतमुहुत्तं नरएसु हुंति चत्तारि तिरियमणुएसुं । देवेसु अद्धमासो उक्कोस विउव्वणाकालो ॥ १० ॥**

अन्तर्मुहूर्तं नरकेषूत्कर्षतो विकुर्वणावस्थानकालः, तिर्यक्षु मनुष्येषु च चत्वार्यन्तर्मुहूर्तानि, देवेषु—भवनपत्यादिषु अर्धमासः—पञ्चदशदिनान्युत्कृष्टतो विकुर्वणाकाल इति २३० ॥ १० ॥ इदानीं 'सत्त समुग्घाय'त्त्येकत्रिंशदधिकद्विशततमं द्वारमाह—

**वेयण १ कसाय २ मरणे ३ वेउव्विय ४ तेयए य ५ आहारे ६ । केवलियसमुग्घाए ७ सत्त इमे हुंति मणुयाणं ॥ ११ ॥ एगिंदीणं केवलिआहारगवज्जिया इमे पंच । पंचावि अवेउव्वा विगलासन्नीण चत्तारि ॥ १२ ॥ केवलियसमुग्घाओ पढमे समयंमि विरयए दंडं । बीए पुणो कवाडं मंथाणं कुणइ तइयंमि ॥ १३ ॥ लोयं भरइ चउत्थे पंचमए अंतराइं संहरइ । छट्ठे पुण मंथाणं हरइ कवाडंपि सत्तमए ॥ १४ ॥ अट्ठमए दंडंपि हु उरलंगो पढमचरमसमएसुं । सत्तमछट्ठबिइज्जेसु होइ ओरालमिस्ससो ॥ १५ ॥ कम्मणसरीरजोई चउत्थए पंचमे तइज्जे य । जं होइ अणाहारो सो तंमि तिगेऽवि समयाणं ॥ १६ ॥**

समित्येकीभावे उत् प्राबल्येन हननं—वेदनीयादिकर्मप्रदेशानां निर्जरणं घातः, एकीभावेन प्राबल्येन घातः समुद्घातः, केन सहैकीभावगमनमिति चेद्, उच्यते, अर्थाद्वेदनादिभिः, तथाहि—यदाऽऽत्मा वेदनादिसमुद्घातं गतस्तदा वेदनाद्यनुभवज्ञानपरिणत एव भवति नान्यज्ञानप-

रिणत इति वेदनाद्यनुभवज्ञानेन सहैकत्वापत्तिर्जीवस्यावगन्तव्या, प्रावल्येन घातः कथमिति चेद्, उच्यते, इह वेदनादिसमुद्घातपरिणतो जन्तुर्वेहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय च निर्जरयति, आत्मप्रदेशैः सह संश्लिष्टान् शातयतीति भावः, स च सप्तधा, तद्यथा—वेदनासमुद्घातः कषायसमुद्घातः मारणान्तिकसमुद्घातः वैक्रियसमुद्घातः तैजससमुद्घातः आहारकसमुद्घातः केवलिसमुद्घातश्चेति, तत्र वेदनया—असद्वेदनोदयजनितया पीडया हेतुभूतया समुद्घातो वेदनासमुद्घातः, स चासातवेदनीयकर्माश्रयः, तथाहि—वेदनाकरालितो जीवः स्वप्रदेशान् अनन्तानन्तकर्मस्कन्धानुविद्धान् शरीराद्वहिरपि विक्षिपति, तैश्च वदनजठरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्तं यावत्तिष्ठति, तस्मिंश्चान्तर्मुहूर्ते प्रभूतासातवेदनीयकर्मपुद्गलपरिशाटं करोति, ततः समुद्घातान्निवृत्त्य स्वरूपस्थो भवति १, कषायैः—क्रोधादिभिर्हेतुभूतैः समुद्घातः कषायसमुद्घातः, स च कषायाख्यचारित्रमोहनीयकर्माश्रयः, तथाहि—तीव्रकषायोदयाकुलो जीवः स्वप्रदेशान् वहिर्विक्षिप्य तैः प्रदेशैर्वदनोदरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्यायामतो विस्तरतश्च देहमात्रं क्षेत्रमभिव्याप्य वर्तते, तथाभूतश्च प्रभूतान् कषायकर्मपुद्गलान् परिशातयति २, मरणमेव प्राणिनामन्तकारित्वादन्तो मरणान्तस्तत्र भवो मारणान्तिकः स चासौ समुद्घातश्च मारणान्तिकसमुद्घातः, स चान्तर्मुहूर्तशेषायुःकर्माश्रयः, तथाहि—कश्चिज्जीवोऽन्तर्मुहूर्तशेषे स्वायुषि वहिः स्वदेशान् विक्षिप्य तैर्वदनोदरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्य विष्कम्भवाहल्याभ्यां स्वशरीरप्रमाणमायामतः स्वशरीरातिरेकतो जघन्येनाङ्गुलासङ्ख्येयभागमुत्कर्षतोऽसङ्ख्येयानि योजनान्येकदिशि क्षेत्रमभिव्याप्य वर्तते, तथाभूतश्च प्रभूतानायुःकर्मपुद्गलान् परिशातयति ३, वैक्रिये प्रारभ्यमाणे समुद्घातो वैक्रियसमुद्घातः, स च वैक्रियशरीरनामकर्मविषयः, तथाहि—वैक्रियलब्धिमान् जीवो वैक्रियकरणकाले स्वप्रदेशान् शरीरा-

द्बहिर्निष्कास्य विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतः सङ्ख्येययोजनप्रमाणं दण्डं निसृजति, निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, यत उक्तम्—"वेउव्वियसमुग्घायेणं समोहणइ समोहणित्ता संखेज्जाइं जोयणाइं दंडं निसिरइ निसिरित्ता अहाबायरे पुग्गले परिसाडेति' ४, तेजसि विषये भवस्तैजसः, स चासौ समुद्घातश्च तैजससमुद्घातः, स च तेजोलेश्याविनिर्गमकालभावी तैजसशरीरनामकर्माश्रयः, तथाहि—तेजोनिसर्गलब्धिमान् क्रुद्धः साध्वादिः सप्ताष्टौ पदानि अवष्वक्य विष्कम्भबाहल्याभ्यां शरीरमानं आयामतस्तु सङ्ख्येययोजनप्रमाणं जीवप्रदेशदण्डं शरीराद्बहिः प्रक्षिप्य क्रोधविषयीकृतं मनुष्यादि निर्दहति, तत्र च प्रभूतांस्तैजसशरीरनामकर्मपुद्गलान् शातयति ५, आहारकशरीरे प्रारभ्यमाणे समुद्घात आहारकसमुद्घातः, स चाहारकशरीरनामकर्मविषयः, तथाहि—आहारकशरीरलब्धिमानाहारकशरीरं चिकीर्षुर्विष्कम्भबाहल्याभ्यां देहमानं आयामतः सङ्ख्येययोजनप्रमाणं शरीराद्बहिः स्वप्रदेशदण्डं निसृज्य यथास्थूलान् प्रभूतानाहारकशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयतीति ६, एते च षडपि समुद्घाताः प्रत्येकमान्तर्मुहूर्तिकाः, तथा केवलिन्यन्तर्मुहूर्तभाविपरमपदे भवः कैवलिकः स चासौ समुद्घातश्च केवलिकसमुद्घातः, स च सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रयः, अमुं च सूत्रकारः स्वयमेव पुरस्तात्प्रपञ्चयिष्यतीति । अथैतानेव समुद्घातान् जीवेषु चिंतयति—'सत्त इमे हुंति मणुयाणं'ति सप्ताप्येते पूर्वोक्ताः समुद्घाता मनुष्याणां भवन्ति, मनुष्येषु सर्वभावसंभवात् । 'एगेंदी'त्यादि, एकेन्द्रियाणां—पृथिव्यादीनां कैवलिकाहारकसमुद्घातवर्जिता इमे आद्याः पञ्च समुद्घाता भवन्ति, पञ्चापि चैते वैक्रियवर्जिताश्चत्वारः समुद्घाता विकलेन्द्रियाणामसंज्ञिपञ्चेन्द्रियाणां च भवन्ति, इयं च गाथा प्रज्ञापनापंचसंग्रहजीवसमासादिभिः शास्त्रान्तरैः सह विसंवदति, तेष्वेकेन्द्रियादीनां तैजससमुद्घातस्य प्रतिषिद्धत्वात्, तथा च चतुर्विंशतिदण्डकक्रमेण प्रज्ञापनासूत्रं—"नेरइयाणं भंते! कइ समु-

ग्घाया पन्नत्ता ?, गोयमा ! चत्तारि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए । असुरकुमाराणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए तेयसमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, एवं जाव थणियकुमाराणं । पुढविकाइयाणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! तिन्नि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए, एवं जाव चउरिंदियाणं, नवरं वाउकाइयाणं चत्तारि समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, पंचिंदियतिरिक्खजोणियाणं जाव वेमाणियाणं भंते ! कइ समुग्घाया पन्नत्ता ?, गोयमा ! पंच समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए कसायसमुग्घाए तेयसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, नवरं मणुस्साणं सत्तविहा समुग्घाया पन्नत्ता, तंजहा—वेयणासमुग्घाए जाव केवलिसमुग्घाए" इति, एतच्च सुखार्थं किंचिद्व्याख्यायते—नैरयिकाणामाद्याश्चत्वारः समुद्घाताः, तेषां भवप्रत्ययेन तेजोलेश्यालब्ध्याहारकलब्धिकेवलित्वाभावतः शेषसमुद्घातत्रयासंभवात्, असुरकुमारादीनां दशानामपि भवनपतीनां तेजोलब्धेरपि भावादाद्याः पञ्च, पृथिव्यप्तेजोवनस्पतिद्वित्रिचतुरिन्द्रियाणामाद्यास्त्रयः, तेषां वैक्रियलब्धेरप्यसंभवात्, वायूनामाद्याश्चत्वारस्तेषां बादरपर्याप्तानां वैक्रियलब्धिसंभवाद्वैक्रियसमुद्घातस्यापि संभवात्, पञ्चेन्द्रियतिरश्चामाद्याः पञ्च, केषांचित्तेषां वैक्रियतेजोलेश्यालब्धेरपि संभवात्, मनुष्याणां सप्तापि, व्यन्तरज्योतिष्कवैमानिकानां त्वाद्याः पञ्चेति ॥ १२ ॥ अथ केवलिसमुद्घातं सूत्रकृदेव व्याचष्टे—'केवली'त्यादिगाथाचतुष्कं, केवलिसमुद्घातः प्रतिपाद्यत इति शेषः, तत्रान्तर्मुहूर्तावशेषायुः केवली कश्चित्कर्मणां समीकरणार्थं समुद्घातं करोति यस्य वेदनीयादिकमायुषः सकाशादधिकतरं भवति, अन्यस्तु न करोत्येव, तं च कुर्वन् प्रथमसमये बाहल्यतः स्वशरीरप्रमाणं ऊर्द्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां

दण्डाकारत्वेन विस्तारणाद्दण्डं विरचयति, द्वितीये पुनः समये तमेव दण्डं पूर्वापरं दक्षिणोत्तरं वाऽऽत्मप्रदेशानां प्रसारणात्पार्श्वतो लोका-
न्तगामि कपाटमिव कपाटं करोति, तृतीयसमये तमेव कपाटं दक्षिणोत्तरं पूर्वापरं वा दिग्द्वयप्रसारणान्मथिसदृशं मन्थानं लोकान्तप्रा-
पिणमारचयति, एवं च लोकस्य प्रायो बहु पूरितं भवति मथ्यन्तराणि त्वपूरितानि, जीवप्रदेशानामनुश्रेणि गमनात्, चतुर्थसमये
तान्यपि मथ्यन्तराणि सह लोकनिष्कुटैः पूरयति, तथा च समस्तोऽपि लोकः पूरितो भवति, तदनन्तरं च पञ्चमे समये यथोक्तप्र-
क्रमात् प्रतिलोममथ्यन्तराणि संहरति, प्रसृतान् जीवप्रदेशान् सकर्मकान् मथ्यन्तर्गतान् संकोचयतीत्यर्थः, षष्ठे पुनः समये मन्थान-
मुपसंहरति, घनतरसंकोचात्, सप्तमे समये कपाटमपि संहरति, दण्डात्मनि संकोचात्, अष्टमे तु समये दण्डमपि संहृत्य स्वशरीरस्थ
एव भवति, तदेवमष्टसामयिकः कैवलिकः समुद्घातः, एतेषु चाष्टस्वपि समयेषु केवली प्रभूतान् वेदनीयनामगोत्रकर्मपुद्गलान् शात-
यति । सम्प्रति समुद्घातगतस्य योगव्यापारश्चिन्त्यते—योगाश्च—मनोवाक्कायाः तत्र समुद्घातगतस्य काययोग एव केवलो व्याप्रियते,
न मनोवाग्योगौ, प्रयोजनाभावात्, तत्र प्रथमचरमसमययोरौदारिकाङ्गो भवति, औदारिककायव्यापारप्राधान्यादौदारिकयोगयुक्त एवे-
त्यर्थः, सप्तमषष्ठद्वितीयेषु औदारिकमिश्रः, समुद्घातमापन्न औदारिके तस्माच्च वहिः कार्मणवीर्यपरिस्पन्दादौदारिककार्मणमिश्रकाययो-
गयुक्त इत्यर्थः, चतुर्थपञ्चमतृतीयसमयेषु पुनर्बहिरेवौदारिकाद्बहुतरप्रदेशव्यापारसद्भावात् कार्मणशरीरयोगयुक्त एव, तन्मात्रचेष्टनात्,
अत्रैव हेतुमाह—'जं होइ अणाहारो सो तंमि तिगेवि समयाणं'ति यद्—यस्मात्कारणात् स तस्मिन् समयत्रिकेऽप्यनाहारको भवति,
यश्चानाहारकः स नियमादेव केवलकार्मणशरीरयोगीति २३१ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इदानीं 'छप्पज्जत्तीओ'त्ति द्वात्रिंश-
दुत्तरद्विशततमं द्वारमाह—

**आहार १ सरीरिं २ दिय ३ पज्जत्ती ४ आणपाण ४ भास ५ मणे ६ । चत्तारि पंच छप्पिय एगिंदियविगलसन्नीणं ॥ १७ ॥ पढमा समयपमाणा सेसा अंतोमुहुत्तिया य कमा । समगंपि हुंति नवरं पंचम छट्ठा य अमराणं ॥ १८ ॥**

पर्याप्तिर्नाम आहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः, सा च पुद्गलोपचयादुपजायते, किमुक्तं भवति ?—उत्पत्तिदेशमागतेन प्रथमं ये गृहीताः पुद्गलास्तेषां तथा अन्येषामपि प्रतिसमयं गृह्यमाणानां तत्संपर्कतस्तद्रूपतया जातानां यः शक्तिविशेषः—आहारादिपुद्गलखलरसादिरूपतापादनहेतुः यथोदरान्तर्गतानां पुद्गलविशेषाणामाहारपुद्गलखलरसरूपतापरिणमनहेतुः शक्तिविशेषः सा पर्याप्तिः, सा च षोढा, तद्यथा—आहारपर्याप्तिः शरीरपर्याप्तिरिन्द्रियपर्याप्तिः प्राणापानपर्याप्तिर्भाषापर्याप्तिर्मनःपर्याप्तिश्च, तत्र यया शक्त्या करणभूतया जन्तुर्बाह्यमाहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्तिः, यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः, यया तु धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां वा इन्द्रियाणां प्रायोग्यानि द्रव्याण्युपादाय एकद्वित्र्यादीन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः, यया पुनरुच्छ्वासयोग्यवर्गणादलिकमादाय उच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा प्राणापानपर्याप्तिः, यया तु भाषाप्रायोग्यदलिकमादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः, यया पुनर्मनोयोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः, आह—किं सर्वेषामपि जीवानां सर्वा अप्येताः पर्याप्तयः प्राप्यन्ते ?, नेत्याह—'चत्तारी'त्यादि, इह यथासङ्ख्येन संबन्धः, तद्यथा—आद्याश्चतस्र एवैकेन्द्रियाणां, भाषामनसोस्तेष्वभावात्, विकलशब्देन चात्र मनोविकला गृह्यन्ते, ते च पारिशे-

ष्याद् द्वित्रिचतुरिन्द्रिया असंज्ञिपञ्चेन्द्रियाश्च लभ्यन्ते, तेषामाद्याः पञ्चैव पर्याप्तयो न तु मनःपर्याप्तिः मनसस्तेष्वभावादिति, संज्ञिपञ्चेन्द्रियाणां पुनः षडपि पर्याप्तयः प्राप्यन्ते, मनसोऽपि तेषां सद्भावादिति, एताभिश्च स्वस्वयोग्यपर्याप्तिभिरपर्याप्ता एव ये कालं कुर्वन्ति तेऽप्याद्यपर्याप्तित्रयं समाप्य ततोऽन्तर्मुहूर्तेनायुर्बद्ध्वा तदनन्तरमबाधाकालरूपमन्तर्मुहूर्तं जीवित्वैव च म्रियन्ते इति ॥ १७ ॥ अथासां निष्पत्तिकालमानमाह—'पढमे'त्यादि, प्रथमा—आहारपर्याप्तिः समयप्रमाणा, शेषाः—शरीरपर्याप्त्यादयः पञ्च पर्याप्तयः क्रमेण प्रत्येकमान्तर्मौहूर्तिक्यः, इदमुक्तं भवति—एताः पर्याप्तयः सर्वा अप्युत्पत्तिप्रथमसमये एव यथास्वं युगपज्जन्तुना निष्पादयितुमारभ्यन्ते, क्रमेण च निष्ठामुपयान्ति, तद्यथा—प्रथममाहारपर्याप्तिः ततः शरीरपर्याप्तिरिन्द्रियपर्याप्तिरित्यादि, आद्याहारपर्याप्तिश्च प्रथमसमय एव निष्पाद्यते, शेषास्तु पञ्चापि प्रत्येकमन्तर्मुहूर्तेन कालेन, अथ आहारपर्याप्तिः प्रथमसमय एव निष्पद्यते इति कथमवसीयते ?, उच्यते, इह भगवता आर्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि—"आहारपज्जत्तीए अपज्जत्तए णं भंते ! किं आहारए अणाहारए ?, गोयमा ! नो आहारए अणाहारए" इति, तत आहारपर्याप्त्या अपर्याप्तो विग्रहगतावेवोपपद्यते नोपपातक्षेत्रसमागतोऽपि, उपपातक्षेत्रसमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रमागतोऽपि आहारपर्याप्त्या अपर्याप्तः स्यात्तत एवं व्याकरणसूत्रं पठेत्—'सिय आहारए सिय अणाहारए' यथा शरीरादिषु पर्याप्तिषु 'सिय आहारए सिय अणाहारए' इति, सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्तप्रमाणः, एतच्च सूत्रे यद्यपि सामान्येनोक्तं तथाप्यौदारिकशरीरिणामेव द्रष्टव्यं, वैक्रियाहारकशरीरिणां त्वाहारेन्द्रियानप्राणभाषामनःपर्याप्तयः पञ्चाप्येकैकेनैव समयेन समाप्यन्ते, शरीरपर्याप्तिः पुनरन्तर्मुहूर्तेन, उक्तं च—"वेउव्वाहाराणं सरीर अन्नाउ पण इगिगसमया । पिहु पण अंतमुहुत्ता उराल आहार इगसमया ॥ १ ॥" [ वैक्रियाहारक-

योः शरीरमन्याः पञ्चैकैकसामयिकाः। पृथक् पञ्च आन्तर्मुहूर्त्तिका औदारिके आहारपर्याप्तिरेकसामयिकी ॥ १ ॥] अथ देवानां विशेषमाह—'समगंपि हुंति नवरं पंचम छट्ठा य अमराणंति' नवरं—केवलं पञ्चमी—भाषापर्याप्तिः षष्ठी च—मनःपर्याप्तिः एते द्वे अपि पर्याप्ती अमराणां—देवानां समकमपि—युगपदपि भवतः, केनाप्यभिप्रायेण **व्याख्याप्रज्ञप्त्यादिषु** देवानामनयोः पर्याप्त्योरेकत्वप्रतिपादनात्, तथा च **व्याख्याप्रज्ञप्तिटीका**—"पंचविहाए पज्जत्तीए'त्ति पर्याप्तिः—आहारशरीरादीनामभिनिर्वृत्तिः, सा चान्यत्र षोढा उक्ता इह तु पञ्चधा, भाषामनःपर्याप्त्योर्बहुश्रुताभिमतेन केनापि कारणेन एकत्वविवक्षणादि"ति २३२ ॥ १७ ॥ १८ ॥ इदानीं **'अणाहारया चउरो'**त्ति त्रयस्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**विग्गहगइमावन्ना केवलिणो समोहया अजोगी य । सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ १९ ॥**

विग्रहगतिः—भवात् भवान्तरे विश्रेण्या गमनं तामापन्नाः—प्राप्ताः सर्वेऽपि जीवाः तथा केवलिनः समुद्धताः—कृतसमुद्घाताः तथा अयोगिनः—शैलेश्यवस्थाः तथा सिद्धाः—क्षीणकर्माष्टकाः, सर्वेऽप्येतेऽनाहाराः, एतद्व्यतिरिक्ताः शेषाः सर्वेऽप्याहारकाः, इह परभवं गच्छतां जीवानां गतिर्द्विधा—ऋजुगतिर्विग्रहगतिश्च, तत्र यदा जीवस्य मरणस्थानादुत्पत्तिस्थानं समश्रेण्यां प्राञ्जलमेव भवति तदा ऋजुगतिः, सा चैकसमया, समश्रेणिव्यवस्थितत्वेनोत्पत्तिदेशस्याद्यसमय एव प्राप्तेः, नियमादाहारकश्चास्यां, हेयग्राह्यशरीरमोक्षग्रहणान्तरालाभावेनाहाराव्यवच्छेदात्, यदा तु मरणस्थानादुत्पत्तिस्थानं वक्रं भवति तदा विग्रहगतिः, वक्रश्रेण्या अन्तरालरूपेण विग्रहेणोपलक्षिता गतिर्विग्रहगतिरितिकृत्वा, तत्र विग्रहगत्योत्पन्ना उत्कर्षतस्त्रीन् समयान् यावदनाहारकाः, तथाहि—अस्यां वक्रगतौ स्थितो जन्तुरेकेन

द्वाभ्यां त्रिभिश्चतुर्भिर्वा वक्रैरुत्पत्तिदेशमायाति, तत्रैकवक्रायां द्वौ समयौ, तयोश्च नियमादाहारकः, तथाहि—आद्यसमये पूर्वशरीरमोक्षः तस्मिंश्च समये तच्छरीरयोग्याः केचित्पुद्गला जीवयोगाल्लोमाहारतः संबन्धमायान्ति, औदारिकवैक्रियाहारकपुद्गलादानं चाहारः, तत आद्यसमये आहारकः, द्वितीये च समये उत्पत्तिदेशे तद्भवयोग्यशरीरपुद्गलादानादाहारकः, द्विवक्रायां गतौ त्रयः समयाः, तत्राद्ये अन्त्ये च प्राग्वदाहारको मध्यमे त्वनाहारकः, त्रिवक्रायां चत्वारः समयाः, ते चैवं—त्रसनाड्या बहिरधस्तनभागादूर्ध्वमुपरितनभागादधो वा जायमानो जन्तुर्विदिशो दिशि दिशो वा विदिशि यदोत्पद्यते तदैकेन समयेन विदिशो दिशि याति द्वितीयेन त्रसनाडीं प्रविशति तृतीयेनोपर्यधो वा याति चतुर्थेन बहिरुत्पद्यते, दिशो विदिशि उत्पादे त्वाद्ये समये त्रसनाडीं प्रविशति द्वितीये उपर्यधो वा याति तृतीये बहिर्गच्छति चतुर्थे विदिश्युत्पद्यते, अत्राद्यन्तयोः प्राग्वदाहारकः मध्यमयोस्त्वनाहारकः, चतुर्वक्रायां पञ्च समयाः, ते च त्रसनाड्या बहिरेव विदिशो विदिश्युत्पादे प्राग्वद्भावनीयाः, अत्राप्याद्यन्तयोराहारकः त्रिषु त्वनाहारकः, तथा केवलिनः समुद्घातेऽष्टसामयिके तृतीयचतुर्थपञ्चमरूपान् केवलकार्मणयोगयुतांस्त्रीन् समयान्, अयोगिनः शैलेश्यवस्थायां ह्रस्वपञ्चाक्षरोच्चारणमात्रं, सिद्धास्तु सादिमपर्यवसितं कालमनाहारका इति २३३ ॥ १९ ॥ इदानीं 'सत्त भयट्ठाणाइं'ति चतुस्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**इह १ परलोया २ ऽऽयाणा ३ मकम्ह ४ आजीव ५ मरण ६ मसिलोए ७ । सत्त भयट्ठाणाइं**
**इमाइं सिद्धंतभणियाइं ॥ २० ॥**

भयं—भयमोहनीयप्रकृतिसमुत्थ आत्मपरिणामः तस्य स्थानानि—आश्रया भयस्थानानि, तत्र मनुष्यादिकस्य सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्यद्भयं तदिहलोकभयं, इहाधिकृतभीतिमतो जन्तोर्जातौ यो लोकस्ततो भयमिति व्युत्पत्तेः, तथा परस्मात्—विजा-

तीयात्तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद्भयं तत्परलोकभयं, तथा आदीयते इत्यादानं तदर्थं मम सकाशादयमिदमादास्यतीति यच्चौरादिभ्यो भयं तदादानभयं, तथा अकस्मादेव—बाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य राज्यादौ भयमकस्माद्भयं, तथा धनधान्यादिहीनोऽहं दुष्काले कथं जीविष्यामीति, दुष्कालपतनाद्याकर्णनाद्भयमाजीविकाभयं, नैमित्तिकादिना मरिष्यसि त्वमधुनेत्यादिकथिते भयं मरणभयं, अकार्यकरणोन्मुखस्य विवेचनायां जनापवादमुत्प्रेक्ष्य भयमश्लोकभयमिति, इमानि सप्त भयस्थानानि सिद्धांते भणितानि २३४ ॥ २० ॥ इदानीं 'छब्भासाओ अप्पसत्थाओ'त्ति पंचत्रिंशदुत्तरद्विशततमं द्वारमाह—

**हीलिय १ खिंसिय २ फरुसा ३ अलिआ ४ तह गारहत्थिया भासा ५। छट्टी पुण उवसंताहिगरणउल्लाससंजणणी ६ ॥ २१ ॥**

भाष्यन्ते—प्रोच्यन्ते भाषा—वचनानि ताश्च अप्रशस्ता—गुरुकर्मबन्धहेतुत्वादशोभना हीलितादिभेदतः षड् भवन्ति, तत्र हीलिता सासूयमवगणयन् वाचक! ज्येष्ठार्येत्यादि जल्पनं १ खिंसिता जन्मकर्माद्युद्घाटनं २ परुषा दुष्टशैक्षेत्यादि कर्कशवचनं ३ अलीका किं दिवा प्रचलयसीत्यादिप्रश्ने न प्रचलयामीत्यादि भणनं ४ ( ग्रन्थाग्रं १५००० ) तथा गृहस्थानामियं भाषा गार्हस्थी सा च पुत्र मामक भागिनेयेत्यादिरूपा ५ षष्ठी पुनर्भाषा 'उपशान्ताधिकरणोल्लाससंजननी' उपशान्तस्य—उपशमं नीतस्याधिकरणस्य—कलहस्य य उल्लासः—प्रकामं प्रवर्तनं तस्य संजननी—संमुत्पादयित्रीत्यर्थः २३५ ॥२१॥ इदानीं 'भंगा अणुव्वयाणं'ति षट्त्रिंशदुत्तरद्विशततमं द्वारमाह—

**दुविहा २ अट्ठविहा वा ८ बत्तीसविहा य ३२ सत्तपणतीसा ७३५ । सोलस य सहस्स भवे अट्ठ सयट्ठोत्तरा १६८०८ वइणो ॥ २२ ॥ दुविहा विरयाविरया दुविहंतिविहाइणट्ठहा हुंति । वय-**

मेगेगं छव्विहगुणियं दुगमिलिय बत्तीसं ॥ २३ ॥ तिन्नि तिया तिन्नि दुया तिन्निक्किका य हुंति जोएसु । ति दु एकं ति दु एकं ति दु एकं चेव करणाइं ॥ २४ ॥ मणवयकाइयजोगे करणे कारावणे अणुमईए । एक्कगदुगतिगजोगे सत्ता सत्तेव गुणवन्ना ॥ २५ ॥ पढमेक्को तिन्नि तिया दोन्नि नवा तिन्नि दो नवा चेव । कालतिगेण य गुणिया सीयालं होइ भंगसयं ॥ २६ ॥ पंचाणुवयगुणियं सीयालसयं तु नवरि जाणाहि । सत्त सया पणतीसा सावयवयगहणकालंमि ॥ २७ ॥ सीयालं भंगसयं जस्स विसुद्धीएँ होइ उवलद्धं । सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥ २८ ॥ दुविहतिविहाइ छव्विह तेसिं भेया कमेणिमे हुंति । पढमेक्को दुन्नि तिया दुगेग दो छक्क इगवीसं ॥ २९ ॥ एगवए छब्भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पयवुड्ढीए सत्तगुणा छज्जुया कमसो ॥ ३० ॥ इगवीसं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय बावीसगुणा इगवीसं पक्खिवेयव्वा ॥ ३१ ॥ एगवए नव भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय दसगुण काउं नव पक्खेवंमि कायव्वा ॥ ३२ ॥ इगवन्नं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पन्नासगुणा गुणवन्नं पक्खिवेयव्वा ॥ ३३ ॥ एगाई एगुत्तरपत्तेयपयंमि उवरि पक्खेवो । एक्केक्कहाणिअवसाणसंखया हुंति संयोगा ॥ ३४ ॥ अहवा पयाणि ठविउं अक्खे घित्तूण चारणं कुज्जा । एक्कगदुगाइजोगा भंगाणं संख कायव्वा ॥ ३५ ॥ बारस १ छावट्ठीवि य २ वीसहिया दो

य ३ पंच नव चउरो ४। दो नय सत्त य ५ चउ दोन्नि नव य ६ दो नव य सत्तेव ७ ॥ ३६ ॥ पण नव चउरो ८ वीसा य दोन्नि ९ छावट्ठि १० बारसे ११ क्को १२ य । सावयभंगाणमिमे सव्वाणवि हुंति गुणकारा ॥ ३७ ॥ छच्चेव य १ छत्तीसा २ सोल दुगं चेव ३ छ नव दुगमिक्कं ४। छ सत्त सत्त सत्त य ५ छप्पन्न छसट्ठि चउ छट्ठे ६ ॥ ३८ ॥ छत्तीसा नवनउई सत्तावीसा य ७ सोल छन्नउई। सत्त य सोलस भंगा अट्ठमठाणे वियाणाहि ८ ॥ ३९ ॥ छन्नउई छावत्तरि सत्त दु सुन्नेक्क हुंति नवमम्मि ९। छाहत्तरि इगसट्ठी छायाला सुन्न छच्चेव १० ॥ ४० ॥ छप्पन्न सुन्न सत्त य नव सत्तावीस तह य छत्तीसा ११ ॥ छत्तीसा तेवीसा अडहत्तरि छहत्तरीगवीसा १२ ॥ ४१ ॥ दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ ४२ ॥ एगविहं दुविहेणं एक्कविहेण छट्ठओ होइ। उत्तरगुण सत्तमओ अविरयओ अट्ठमो होइ ॥ ४३ ॥ पंचण्हमणुवयाणं एक्कगदुगतिगचउक्कपणगेहिं । पंचगदसदसपणएक्कगो य संजोय नायव्वा ॥ ४४ ॥ छच्चेव य छत्तीसा सोल दुगं चेव छ नव दुग एक्कं । छस्सत्त सत्त सत्त य पंचण्ह वयाण गुणणपयं ॥ ४५ ॥ वयएक्कगसंजोगाण हुंति पंचण्ह तीसई भंगा । गुणसंजोग दसण्हंपि तिन्नि सट्ठा सया हुंति ॥ ४६ ॥ तिगसंजोग दसण्हं भंगसया एक्कवीसइ सट्ठा। चउ-संजोगप्पणगे चउसट्ठि सयाण असियाणि ॥ ४७ ॥ सत्तसरी सयाइं छहत्तराइं तु पंचमे हुंति।

**उत्तरगुण अविरयमेलियाण जाणाहि सवग्गं ॥ ४८ ॥ सोलस चेव सहस्सा अट्ठ सया चेव हुंति अट्ठहिया । एसो वयपिंडत्थो दंसणमाई उ पडिमाओ ॥ ४९ ॥**

व्रतं—नियमविशेषस्तद्विद्यते येषां ते व्रतिनः श्रावका इत्यर्थः, ते द्विधा—वक्ष्यमाणयुक्त्या द्विप्रकाराः, अथवा अष्टविधाः, अथवा द्वात्रिंशद्भेदाः, अथवा सप्त शतानि पञ्चत्रिंशदधिकानि, अथवा षोडश सहस्रा अष्टौ शतान्यष्टोत्तराणि व्रतिनो भवन्ति । अत्र च व्रतिन इत्युक्ते सामान्येन श्रावका गृह्यन्ते नतु देशविरता एव, अविरतसम्यग्दृष्टीनामपि सम्यक्त्वप्रतिपत्तिलक्षणस्य नियमस्य सद्भावात् ॥ २२ ॥ अथैतानेव भेदान् प्रत्येकं व्याचिख्यासुराद्यं भेदत्रयमाह—'दुविहे'त्यादि, द्विविधाः श्रावकाः—विरता अविरताश्च, तत्र विरताः—प्रतिपन्नदेशविरतयः अविरताः—अभ्युपेतक्षायिक(कादि)सम्यक्त्वाः सत्यकिश्रेणिककृष्णादय इव, 'दुविहं तिविहाइणट्ठहा होंति'त्ति द्विविधः—कृतकारितरूपः त्रिविधो—मनोवाक्कायभेदेन यत्र स द्विविधत्रिविध एको भङ्गः स आदिर्यस्य द्विविधत्रिविधादेर्भङ्गजालस्य तेन द्विविधत्रिविधादिना भङ्गजालेनाष्टविधाः श्रावका भवन्ति, यद्वक्ष्यति—"दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं एक्केक्कविहेण छट्ठओ होइ । उत्तरगुण सत्तमओ अविरयओ अट्ठमो होइ ॥ २ ॥" अनयोश्च सोपयोगत्वादत्रैव व्याख्या क्रियते—इह व्रतं प्रतिपित्सुः कोऽपि किञ्चित्प्रतिपद्यते, श्रावकव्रतप्रतिपत्तेर्बहुभङ्गत्वात्, तत्र द्विविधं—कृतकारितभेदं त्रिविधेन—मनसा वचसा कायेनेति प्रथमो भङ्गः, एवं च भावना—स्थूलहिंसादिकं न करोत्यात्मना न कारयत्यन्येन मनसा वचसा कायेन चेति, अस्य चानुमतिरप्रतिषिद्धा, आपत्यादिपरिग्रहसद्भावात्तैर्हिंसादिकरणे च तस्यानुमतिप्राप्तेः, अन्यथा परिग्रहापरिग्रहयोरविशेषेण प्रव्रजिताप्रव्रजितयोरभेदापत्तेः, यत्पुनर्व्याख्याप्रज्ञप्त्यादौ त्रिविधं त्रिविधेनेत्यपि प्रत्याख्यानमुक्तमगारिणस्तद्विशेषविषयं विज्ञेयं, तथाहि—यः किल प्रविव्रजिषुरेव पुत्रादि-

संततिपालनाय विलम्बमानः प्रतिमाः प्रतिपद्यते यो वा विशेषं स्वयम्भूरमणादिगतं मत्स्यमांसदन्तिदन्तचित्रकचर्मादिकं स्थूलहिंसादि वा कचिदवस्थाविशेषेण प्रत्याख्याति स एव त्रिविधं त्रिविधेनेति करोति इत्यल्पविषयत्वादत्र न विवक्षितमिति, द्विविधं द्विविधेनेति द्वितीयो भङ्गः, अत्र चोत्तरभङ्गास्त्रयः, तत्र द्विविधमिति—स्थूलहिंसादिकं न करोति न कारयति, द्विविधेनेति मनसा वचसा १ यद्वा मनसा कायेनेति २ यद्वा वाचा कायेनेति ३, तत्र यदा मनसा वाचा न करोति न कारयति तदा मनसाऽभिसन्धिरहित एव वाचाऽपि हिंसादिकमब्रुवन्नेव कायेनैव दुश्चेष्टितादिना असंज्ञिकवत्करोति, यदा तु मनसा कायेन न करोति न कारयति तदा मनसाऽभिसन्धिरहित एव कायेन दुश्चेष्टितादि परिहरन्नेवानाभोगाद्वाचैव हन्मि घातयामि चेति ब्रूते, यदा तु वाचा कायेन न करोति न कारयति तदा मनसैवाभिसन्धिमधिकृत्य करोति कारयति च, अनुमतिस्तु त्रिभिरपि सर्वत्रैवास्ति, एवं शेषविकल्पा अपि भावनीयाः, द्विविधमेकविधेनेति तृतीयः, अत्राप्युत्तरभङ्गास्त्रयः, द्विविधं करणं कारणं च एकविधेन मनसा १ यद्वा वचसा २ यद्वा कायेन ३, एकविधं त्रिविधेनेति चतुर्थः, अत्र च द्वौ प्रतिभङ्गौ, एकविधं करणं मनसा वाचा कायेन च, अथवा एकविधं कारणं मनसा वाचा कायेन, एकविधं द्विविधेनेति पञ्चमः, अत्र चोत्तरभेदाः षट्, एकविधं करणं द्विविधेन मनसा वाचा १ यद्वा मनसा कायेन २ यद्वा वाचा कायेन ३, अथवा एकविधं कारणं द्विविधेन मनसा वाचा ४ यद्वा मनसा कायेन ५ यद्वा वाचा कायेन ६, एकविधमेकविधेनेति षष्ठो मूलभङ्गः, अत्राप्युत्तरभङ्गाः षट्, एकविधं करणं एकविधेन मनसा १ यद्वा वाचा २ यद्वा कायेन ३ अथवा एकविधं कारणं एकविधेन मनसा ४ यद्वा वाचा ५ यद्वा कायेनेति ६, तदेवं मूलभङ्गाः षट्, षण्णामपि च मूलभङ्गानामुत्तरभङ्गाः सर्वसङ्ख्ययैकविंशतिः, तथा च वक्ष्यति—"दुविहतिविहा य छश्चिय तेसिं भेया कमेणिमे होंति । पढमेको दोन्नि तिया दुगेग दो छच्च इगवीसं ॥ १ ॥" एषाऽपि प्रक्रमादिहैव व्याख्यायते—अनन्तरोक्ता एव

द्विविधत्रिविधादयः षड्भङ्गाः स्थाप्यन्ते, तेषां षण्णां भङ्गानां क्रमेणैते वक्ष्यमाणा भेदा—उत्तरविकल्पा भवन्ति, तथाहि—प्रथममेकः स्थाप्यते, तदनन्तरं क्रमेण द्वौ त्रिकौ तत एको द्विकः तदनु क्रमेण द्वौ षट्कौ, इयमत्र भावना—प्रागुक्तायाः षड्भङ्ग्याः प्रथमे भङ्गे एक एव भेदः, द्वितीयभङ्गे उत्तरभेदास्त्रयः, तृतीयेऽपि त्रयः, चतुर्थे द्वौ, पञ्चमे षट्, षष्ठेऽपि मूलभङ्गे उत्तरभङ्गाः षडित्येवं षड्भङ्ग्यामुत्तरभङ्गका मिलिता एकविंशतिरिति, स्थापना चेयं

| | | | | | | |
|---|---|---|---|---|---|---|
| २ | २ | २ | १ | १ | १ | योगाः |
| ३ | २ | १ | ३ | २ | १ | करणानि |
| १ | ३ | ३ | २ | ६ | ६ | भङ्गाः |

इति करणकारणमनोवाक्कायैरुत्तरभेदाः, 'उत्तरगुण सत्तमओ'त्ति प्रतिपन्नोत्तरगुणः सप्तमो भेदः, श्रावकाणां हि द्विधा नियमो—मूलगुणविषय उत्तरगुणविषयश्च, तत्र मूलभूता गुणा मूलगुणाः—पञ्चाणुव्रतानि उत्तरभूता गुणा उत्तरगुणाः—त्रीणि अणुव्रतानि चत्वारि च शिक्षाव्रतानि, इह च संपूर्णासंपूर्णोत्तरगुणभेदमनादृत्य सामान्येनैक एव भेदो विवक्षितः, 'अविरयओ अट्ठमो होइ'त्ति अविरतः—अविरतसम्यग्दृष्टिरष्टमो भेदः, तदेवमुक्ता अष्टविधाः श्रावकाः । अथ द्वात्रिंशद्विधानाह—'वयमेगेगं' इत्यादि, एकैकं स्थूलप्राणातिपातविरमणादिकं व्रतं षड्भिर्विधाभिः—भेदैर्गुणितं—ताडितं द्विविधत्रिविधादिकया पूर्वोक्तया षड्भङ्ग्या गुणितमित्यर्थः, प्रतिपन्नोत्तरगुणाविरतसम्यग्दृष्टिलक्षणभेदद्विकमिलितं द्वात्रिंशद्भवन्ति, तथाहि—स्थूलप्राणातिपातविरतिं षड्भङ्गीमध्यात्कश्चिदाद्येन भङ्गेन गृह्णाति कश्चिद् द्वितीयेन कश्चित् तृतीयेन कश्चिच्चतुर्थेन कश्चित्पञ्चमेन कश्चित् षष्ठेनेति प्राणातिपातविरतेः षड् भङ्गाः, एवं मृषावादादत्तादानमैथुनपरिग्रहेष्वपि प्रत्येकं षड् भङ्गा वाच्याः मिलिताश्च त्रिंशत् । आवश्यके पुनरेवं त्रिंशद्भङ्गाः—यथा कश्चित्पञ्चाप्यणुव्रतानि समुदितान्येव गृह्णाति, तत्र च द्विविधत्रिविधादयः षड्भेदाः, अन्यो व्रतचतुष्टयं गृह्णाति तत्रापि षट्, अपरो व्रतत्रयं तत्रापि षट्, अन्यो व्रतद्वयं तत्रापि षट्, अन्यस्त्वेकमेवाणुव्रतं गृह्णाति तत्रापि षडेव भङ्गाः, एवमेते पञ्च षट्कास्त्रिंशद्भवन्ति, उत्तरगुणा-

गा. ६६

विरतसहितास्तु द्वात्रिंशत् ॥ २३ ॥ एवं तावदावश्यकनिर्युक्त्यभिप्रायेण कृता भङ्गप्ररूपणा, सांप्रतं पञ्चत्रिंशदुत्तरसप्तशतसङ्ख्यान् श्रावकभेदान् प्रतिपिपादयिषुर्भगवत्यभिप्रायेण नवभङ्गीमाह–'तिन्नी'त्यादि, योगेषु–करणकारणानुमतिरूपेषु त्रयस्त्रिकाः त्रयो द्विकाः त्रय एककाश्च भवन्ति क्रमेण स्थाप्या इति शेषः, तदधस्ताच्च क्रमेण त्रीणि द्वे एकं त्रीणि द्वे एकं त्रीणि द्वे एकं चैव करणानि–मनोवाक्कायलक्षणानि स्थाप्यानि भवन्तीति पदघटना, भावार्थः पुनरयं–त्रिविधं त्रिविधेनेति प्रथमो भङ्गः, कश्चिद् गृही सावद्यं योगं न करोति न कारयति नान्यं समनुजानीते मनसा वचसा कायेन चेत्येको भङ्ग इति भावः, त्रिविधं द्विविधेनेति द्वितीयो मूलभङ्गः, अत्रोत्तरभङ्गास्त्रयः, तथाहि–न करोति न कारयति नानुजानीते मनसा वाचा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३, त्रिविधमेकविधेनेति तृतीयो भङ्गः, अत्राप्युत्तरभङ्गास्त्रयस्तथाहि–न करोति न कारयति नानुजानीते मनसा १ यद्वा वचसा २ यद्वा कायेन ३, द्विविधं त्रिविधेनेति चतुर्थो भङ्गः, अत्राप्युत्तरभङ्गास्त्रयः, तथाहि–न करोति न कारयति मनसा वचसा कायेन १ यद्वा न करोति नानुजानीते त्रिभिरपि करणैः २, यद्वा न कारयति नानुजानीते त्रिभिरपि करणैः ३, द्विविधं द्विविधेनेति पञ्चमो भङ्गः, अत्र चोत्तरभेदा नव, तथाहि–न करोति न कारयति मनसा वचसा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३ अथवा न करोति नानुजानीते मनसा वचसा ४ यद्वा मनसा कायेन ५ यद्वा वचसा कायेन ६ अथवा न कारयति नानुजानीते मनसा वचसा ७ यद्वा मनसा कायेन ८ यद्वा वचसा कायेन ९, द्विविधमेकविधेनेति षष्ठो भङ्गः, अत्राप्युत्तरभेदा नव, तथाहि–न करोति न कारयति मनसा १ यद्वा वचसा २ यद्वा कायेन ३ अथवा न करोति नानुजानीते मनसा ४ यद्वा वचसा ५ यद्वा कायेन ६ अथवा न कारयति नानुजानीते मनसा ७ यद्वा वचसा ८ यद्वा कायेन ९, एकविधं त्रिविधेनेति सप्तमो भङ्गः, अत्र चोत्तरभङ्गास्त्रयः, तथाहि

—न करोति मनसा वचसा कायेन १ यद्वा न कारयति त्रिभिरपि करणैः २ यद्वा नानुजानीते त्रिभिरपि करणैः ३, एकविधं द्विविधेनेत्यष्टमो भङ्गः, अत्र चोत्तरविकल्पा नव, तथाहि—न करोति मनसा वचसा १ यद्वा मनसा कायेन २ यद्वा वचसा कायेन ३ अथवा न कारयति मनसा वचसा ४ यद्वा मनसा कायेन ५ यद्वा वचसा कायेन ६, अथवा नानुजानीते मनसा वचसा ७ यद्वा मनसा कायेन ८ यद्वा वचसा कायेन ९, एकविधं एकविधेनेति नवमो मूलभङ्गः, अत्राप्युत्तरविकल्पा नव, तथाहि—न करोति मनसा १ यद्वा वचसा २ यद्वा कायेन ३ अथवा न कारयति मनसा ४ यद्वा वचसा ५ यद्वा कायेन ६ अथवा नानुजानीते मनसा ७ यद्वा वचसा ८ यद्वा कायेनेति ९। तदेवं मूलभङ्गा नव उत्तरभङ्गास्तु मीलिताः सर्वसङ्ख्यया एकोनपञ्चाशत्, उक्तं च—"तिविहंतिविहेण पढमो तिविहं दुविहेण बीयओ होइ। तिविहं एगविहेणं दुविहं तिविहेण ति चउत्थो ॥ १ ॥ दुविहदुविहेण पंचम दुविहेक्कविहेण छट्ठओ होइ। एकविहं तिविहेणं दुविहेण य सत्तमट्ठमओ ॥ २ ॥ एक्कविहेक्कविहेणं नवमो पढमंमि एक्कभङ्गो उ। सेसेसु तिन्नि तिन्नि य तिन्नि य नव नव य तह तिन्नि ॥ ३ ॥ नव नव य होंति कमसो एए सव्वेवि इगुणवन्नासं ॥" स्थापना

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

इति करणकारणानुमतिमनोवाक्कायाः, ननु च वाक्कायाभ्यां तावत्प्रत्यक्षादिप्रमाणत एव करणकारणानुमतयो दृश्यन्ते, मनसस्तु ताः कथं प्रत्येतव्याः?, अन्तर्व्यापारत्वेन परैरनुपलक्ष्यमाणत्वात्, उच्यते, निर्व्यापारकायवचनो यदा सावद्ययोगकरणादि मनसा विकल्पयति तदा मुख्यतया कायवचनवन्मनस्यपि करणादीनि संभवन्ति, तथाहि—सावद्ययोगमेनमहं करोमीत्येवं यदा मनसा चिन्तयति तदा करणं, यदा तु मनसा चिन्तयति करोत्वेष सावद्यं असावपि चेङ्गितज्ञोऽभिप्रायादेव प्रवर्तते तदा कारणं, यदा पुनः सावद्यव्यापारं विधाय मनसा चिन्तयति—सुष्ठु कृत-

मिदं मया तदा मानसी अनुमतिरिति, तदेवं सूत्रकृन्निगदितां नवभङ्गीं विवृण्वद्भिरस्माभिः प्रसङ्गादेकोनपञ्चाशद्भङ्गयपि प्रद-र्शिता ॥ २४ ॥ संप्रति प्रकारांतरेण सूत्रकार एवैनां प्रतिपादयितुमाह—'मणे'त्यादि, इह च प्राकृतत्वाद्विभक्तिव्यत्ययोऽवग-न्तव्यः, ततः करणस्य कारणस्यानुमतेश्च मनोवाक्कायलक्षणैः त्रिभिः करणैः सह योगे—संबन्धे सति एकद्विकत्रिकयोगे—प्रत्येकमे-कसंयोगद्विकसंयोगत्रिकसंयोगचिन्तया सप्त सप्तका भवन्ति, तथाहि—स्थूलहिंसादिकं न करोति मनसा १ वाचा २ कायेन च ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन च ७, एते करणेन सप्त भङ्गाः, एवं कारणेन सप्त, अनु-मत्या सप्त, तथा स्थूलहिंसादिकं न करोति न कारयति च मनसा १ वाचा २ कायेन ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन ७, एते करणकारणाभ्यां सप्त भङ्गाः, एवं कारणानुमतिभ्यामपि सप्त, करणानुमतिभ्यां सप्त, करण-कारणानुमतिभिरपि सप्त, एवं सप्त सप्तका मीलिता एकोनपञ्चाशद्भवन्ति ॥ २५ ॥ अत्र सूत्रकारः पूर्वोक्ताया एव नवभङ्ग्या उत्तरभ-ङ्गप्रतिपादनपूर्वं सप्तचत्वारिंशदुत्तरशतसङ्ख्यान् भङ्गकानाह—'पढमे' इत्यादि, 'तिन्नि तिये'त्यादिगाथोक्तानां नवभङ्गीप्रतिपादकाना-मङ्कानामधस्तात्प्रथमे स्थाने एककः स्थाप्यते, ततः क्रमेण त्रयस्त्रिकाः, ततो द्वौ नवकौ, तत एकस्त्रिकः, पुनरपि द्वौ नवकौ, अयमत्र तात्प-र्यार्थः—त्रिविधं त्रिविधेनेत्यत्र प्रथमभङ्गे एक एव विकल्पः, सर्वप्रकारैः प्रत्याख्यातत्वाद्विकल्पान्तराभाव इति भावः, तदन्येषु पुनर्द्विती-यतृतीयचतुर्थेषु त्रयस्त्रयः पञ्चमषष्ठयोर्नव नव सप्तमे त्रयः अष्टमनवमयोर्नव नवेत्येवं सर्वेऽप्येकोनपञ्चाशत्, एते च त्रिकालविषयत्वा-त्प्रत्याख्यानस्य कालत्रिकेण—अतीतानागतवर्तमानलक्षणेन गुणिताः सप्तचत्वारिंशं शतं भङ्गानां भवन्ति, त्रिकालविषयता चातीतस्य निन्दया साम्प्रतिकस्य संवरणेन अनागतस्य च प्रत्याख्यानेनेति, यदाह—"अईयं निंदामि पडुप्पन्नं संवरेमि अणागयं च पच्चक्खा-

मि''त्ति ॥ २६ ॥ साम्प्रतं पञ्चत्रिंशदुत्तरसप्तशतसङ्ख्यान् श्रावकभेदानाह—'पंचे'त्यादि, इह नवरिशब्द आनन्तर्यार्थः, 'आनन्तर्ये णवरी'ति प्राकृतलक्षणवचनात्, आनन्तर्यं च पूर्वोक्तापेक्षया, ततोऽयमर्थः—एतदेव सप्तचत्वारिंशं शतं पञ्चस्वप्यणुव्रतेषु प्रत्येकं सप्तचत्वारिंशदधिकस्य भङ्गशतस्य भावात्पञ्चभिरणुव्रतैर्गुणितं सप्त शतानि पञ्चत्रिंशदधिकानि जानीहि—बुध्यस्व श्रावकव्रतग्रहणकाले—श्रावकाणां पञ्चाणुव्रतप्रतिपत्तिप्रस्तावे इति ॥ २७ ॥ एते च भङ्गा यस्यार्थतोऽवगताः स एव प्रत्याख्यानप्रवीण इति दर्शयन्नाह—'सीयाल'मित्यादि, विशुद्धिर्नाम जीवस्य विशुद्धिकारित्वात्प्रत्याख्यानमुच्यते तद्विषयं 'सीयालं'ति सप्तचत्वारिंशदुत्तरभङ्गानां—ग्रहणप्रकाररूपाणां शतं यस्योपलब्धं—अर्थतः सम्यक्परिज्ञातं भवति स खलु—स एव प्रत्याख्याने—नियमविशेषप्रतिपत्तिरूपे कुशलो—निष्णातः, शेषा—एतद्व्यतिरिक्ताः पुनरकुशला—अनभिज्ञाः । इह च यद्यप्यनन्तरं पञ्चत्रिंशदुत्तराणि सप्त शतान्यभिहितानि तथापि सप्तचत्वारिंशच्छतमूलत्वात्तेषां मुख्यतया सूत्रे सप्तचत्वारिंशच्छतमेवमुक्तमिति ॥ २८ ॥ अथ षड्भङ्ग्या एवोत्तरभङ्गरूपामेकविंशतिभङ्गीमाह—'दुविहे'त्यादि, इयं च प्राग्व्याख्यातैव, इह च द्विविधत्रिविधादिना पूर्वभणितेन भङ्गकनिकुरम्बेन श्रावकाईपञ्चाणुव्रतादिव्रतसंहतिभङ्गकदेवकुलिकाः सूचिताः, ताश्च एकैकव्रतं प्रत्यभिहितया षड्भङ्ग्या तथा एकविंशतिभङ्ग्या तथा नवभङ्ग्या तथा एकोनपञ्चाशद्भङ्ग्या च निष्पद्यन्ते । अथ देवकुलिका इति कः शब्दार्थः ?, उच्यते, एकादिव्रतप्रतिबद्धभङ्गककदम्बकप्रतिपादका अङ्काः पट्टादिषु न्यस्ता देवकुलिकाकारत्वेन प्रतिभासनादेवकुलिका इति व्यपदिश्यन्ते, सर्वास्वपि च देवकुलिकासु प्रत्येकं त्रयस्त्रयो राशयो भवन्ति, तद्यथा—आदौ गुण्यराशिः मध्ये गुणकारकराशिः अन्ते चागतराशिरिति ॥ २९ ॥ तत्र प्रथमं तावदेतासामेव देवकुलिकानां षड्भङ्ग्यादिक्रमेण विवक्षितव्रतभङ्गकसर्वसङ्ख्यारूपानेवंकारकराशीनाह—'एगे'त्यादिगाथाचतुष्कं, एकस्मिन् व्रते—स्थूलप्राणातिपातविरमणादिके ये द्विवि-

षड्विधादयः पञ्चाशाः सूत्रे—आवश्यकनिर्युक्त्यादौ श्रावकाणां निर्दिष्टाः—कथितास्त एव पञ्चाशाः सप्तगुणाः—सप्तभिराहताः षड्युताश्च क्रमेण सर्वभङ्गकसङ्ख्याराशिं जनयन्तीति शेषः, कथं पुनः पञ्चाशाः सप्तभिर्गुण्यन्ते ? इत्याह—पदवृद्ध्या—मृषावादादिकैकव्रतवृद्ध्या, यावन्ति व्रतानि विवक्ष्यन्ते तावतीर्वारा गुण्यन्ते इति तात्पर्यं, स्थूलं च न्यायमाश्रित्यैवमुच्यते यावता एकव्रतभङ्गकराशेरधो व्यवस्थापितत्वाद्विवक्षितव्रतेभ्य एकेन हीना वारा गुण्यन्ते इति, इयमत्र भावना—एकव्रते तावत् पञ्चाशाः, ते च सप्तभिर्गुणिता जाता द्विचत्वारिंशत् तत्र षट् क्षिप्यन्ते जाता अष्टचत्वारिंशत् एषाऽपि सप्तभिर्गुण्यते षट् च क्षिप्यन्ते जातं ३४२ अत्रापि सप्तभिर्गुणिते षट्सु प्रक्षिप्तेषु जातं २४०० पुनः सप्तभिर्गुणिते षट्प्रक्षेपे च जातं १६८०६, एवं सप्तगुणनषट्प्रक्षेपक्रमेण तावद्गन्तव्यं यावदेकादश्यां वेलायामागतं १३८४१२८७२०२, एते चाष्टचत्वारिंशदादयो द्वादशाप्यागतराशय उपर्यधोभावेन व्यवस्थाप्यमाना अर्द्धदेवकुलिकाकारां भूमिकामास्तृण्वन्तीति खण्डदेवकुलिकेत्युच्यते, तदेवमुक्ता पञ्चाङ्गीप्रतिबद्धा खण्डदेवकुलिका ॥ एकविंशतिभङ्ग्यादिखण्डदेवकुलिका अप्येवमेव भावनीयाः, केवलमेकविंशतिभङ्गीपक्षे एकविंशतिरधो व्यवस्थाप्य वारंवारं द्वाविंशत्या गुण्यन्ते एकविंशतिस्तु प्रक्षिप्यते यावदेकादशवेलायां द्वादशव्रतभङ्गसर्वसङ्ख्यायामागतं १२८५५००२६३१०४९२१५ । नवभङ्गीपक्षेऽप्येवं, नवरमधो नव, ते च वारंवारं दशभिर्गुण्यन्ते नव च प्रक्षिप्यन्ते यावदेकादश्यां वारायां सर्वव्रतभङ्गसर्वसङ्ख्यायामागतं ९९९९९९९९९९९९ । एकोनपञ्चाशद्भङ्गीपक्षे पुनरधावेकोनपञ्चाशत्, सा च वारंवारं पञ्चाशता गुण्यते एकोनपञ्चाशच्च प्रक्षिप्यन्ते यावदेकादश्यां वारायां सर्वव्रतभङ्गकसङ्ख्यायामागतं २४४१४०६२४९९९९९९९९९९९९९ । अक्षरार्थस्तु सुगम एवेति, तथा सप्तचत्वारिंशच्छतभङ्गपक्षेऽप्येवं, नवरं तत्र सप्तचत्वारिंशच्छतमधो व्यवस्थाप्यते, वारंवारमष्टचत्वारिंशच्छतेन गुण्यते, सप्तचत्वारिंशच्छतं च प्रक्षिप्यते यावदेकादश्यां

वेलायामागतं ११०४४३६०७७१९६११५३३२५६९५७६९५, उक्तं च—"सीयालं भङ्गसयं वयवुड्ढाऽडयालसयगुणं काउं । सीयालसएण जुयं सव्वग्गं जाण भङ्गाणं ॥ १ ॥" [ सप्तचत्वारिंशं भङ्गशतं व्रतवृद्धाष्टचत्वारिंशच्छतगुणं कृत्वा । सप्तचत्वारिंशच्छतेन युतं सर्वाग्रं जानीहि भङ्गानां ॥ १ ॥ ] तदेवं प्रतिपादिताः पञ्चापि खण्डदेवकुलिकाः । साम्प्रतं संपूर्णदेवकुलिकानामवसरः, तत्र च प्रतिव्रतमेकैकदेवकुलिकासद्भावेन षड्भङ्ग्यादिषु प्रत्येकं द्वादश द्वादश देवकुलिकाः प्रादुर्भवन्ति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ तासु च सर्वास्वप्युच्यमानासु महान् ग्रन्थविस्तरो भवतीत्यतो दिग्मात्रप्रदर्शनाय पड्भङ्ग्यामेव द्वादशीं देवकुलिकामभिधित्सुरेकद्विकादिसंयोगसूचकगुणकारकराशिसमानयनोपायमाह—'एगाई'त्यादि, 'एगाई एगुत्तर'त्ति यावत्प्रमाणानां पदानामेककद्विकादिसंयोगाः समानेतुमिष्यन्ते तावत्प्रमाणा एव एकादय एकोत्तरया वृद्ध्या उपर्युपरि क्रमेण स्थाप्यन्ते, इह च द्वादशानां व्रतानां संयोगाः समानेतव्याः तत एकादयो द्वादश यावन्न्यसनीयाः, स्थापना

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |

ततः 'पत्तेयपयंमि'त्ति प्रत्येकं एकैकस्मिन् पदे 'उवरि'त्ति प्रक्षेपाङ्कोपरिस्थिते 'पक्खेवो'त्ति अधस्तनाङ्कस्य प्रक्षेपः कार्यः, अधस्तनाङ्कस्तु तथैव ध्रियते, कथं प्रक्षेपः कार्यः ? इत्याह—'एक्केकहाणि'त्ति एकैकस्योपरितनाङ्कस्य हानिः—वर्जनं यथा भवति तथा, क्षेपे २ उपरितनोऽङ्कोऽधस्तनाङ्कक्षेपरहितः कार्य इति भावः, 'अवसाणसंखया हुंति संयोग'त्ति अवसानक्रमेण सर्वाङ्कप्रक्षेपपरिसमाप्तिरूपे ये अङ्काः क्रमशस्तत्सङ्ख्याः—तत्प्रमाणाः संयोगा—एकद्वित्र्यादिपदमीलनरूपा भवन्ति, इयमत्र भावना—प्रथममेकादिद्वादशान्ता ऊर्द्ध्वायता पङ्क्तिः स्थाप्या, तत एकको द्विके क्षिप्यते जातास्त्रयः, ते च त्रिषु क्षिप्यन्ते जाताः षट्, ते च चतुष्के क्षिप्यन्ते जाता दश, ते च पञ्चके क्षिप्यन्ते जाता पञ्चदश, ते च षट्के जाता एकविंशतिः, सा च सप्तके जाता अष्टाविंशतिः सा चाष्टके जाता षट्-

त्रिंशत् सा च नवके जाता पञ्चचत्वारिंशत् सा च दशके जाता पञ्चपञ्चाशत् सा च एकादशे क्षिप्यते जाता षट्षष्टिः, एषा च नोपरिस्थे द्वादशके क्षिप्यते, किंतु द्वादशकस्तदवस्थ एव ध्रियते, 'एकेकहाणि'त्ति वचनात्, इति प्रथमप्रक्षेपः। पुनश्चैकक्स्त्रिके क्षिप्यते जाताश्चत्वारः, ते च षट्के क्षिप्यन्ते, जाता दश, ते च दशके जाता विंशतिः, सा च पञ्चदशके जाता पञ्चत्रिंशत्, सा चैकविंशतौ जाता षट्पञ्चाशत्, सा चाष्टाविंशतौ जाता चतुरशीतिः, सा च षड्विंशतौ जातं विंशत्युत्तरं शतं, तच्च पञ्चचत्वारिंशति जातं पञ्चषष्ट्यधिकं शतं, तदपि पञ्चपञ्चाशति प्रक्षिप्यते, जातं विंशत्युत्तरं शतद्वयं, एतच्चोपरिस्थितषट्षष्टौ न क्षिप्यते, 'एकेकहाणि'त्ति वचनात्, इति द्वितीयः क्षेपः। एवं च वारंवारं चरममङ्कं वर्जयित्वोपर्युपरि तावदङ्काः प्रक्षेप्तव्या यावदेकादशः क्षेपः, एककस्त्वन्त्यत्वान्न कुत्रापि क्षिप्यते इति द्वादशस्य क्षेपस्यासंभवः। स्थापना तदेवं एककसंयोगा द्वादश द्विकसंयोगाः षट्षष्टिः त्रिकसंयोगा द्वे शते विंशत्युत्तरे चतुष्कसंयोगाश्चत्वारि शतानि पञ्चनवत्यधिकानि पञ्चकसंयोगाः सप्त शतानि द्विनवत्यधिकानि षट्कसंयोगा नव शतानि चतुर्विंशत्यधिकानि सप्तकसंयोगाः सप्त शतानि द्विनवत्यधिकानि अष्टकसंयोगाश्चत्वारि शतानि पञ्चनवत्युत्तराणि नवकसंयोगा द्वे शते विंशत्युत्तरे दशकसंयोगाः षट्षष्टिः एकादशसंयोगा द्वादश द्वाद-

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १२ | | | | | | | | | | | |
| ११ | ६६ | | | | | | | | | | |
| १० | ५५ | २२० | | | | | | | | | |
| ९ | ४५ | १६५ | ४९५ | | | | | | | | |
| ८ | ३६ | १२० | ३३० | ७९२ | | | | | | | |
| ७ | २८ | ८४ | २१० | ४६२ | ९२४ | | | | | | |
| ६ | २१ | ५६ | १२६ | २५२ | ४६२ | ७९२ | | | | | |
| ५ | १५ | ३५ | ७० | १६६ | २१० | ३३० | ४९५ | | | | |
| ४ | १० | २० | ३५ | ६६ | ८४ | १२० | १२५ | २२० | | | |
| ३ | ६ | १० | १५ | २१ | २८ | ३६ | ४५ | ५५ | ६६ | | |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

शकसंयोगः पुनरेक एवेति ॥ ३४ ॥ अथवा प्रकारान्तरेण संयोगसङ्ख्यापरिज्ञानोपायमाह—'अहवे'त्यादि, अथवा पदानि—विवक्षितव्रतलक्षणानि पट्टिकादौ स्थापयित्वा अक्षान् गृहीत्वा क्रमेण चारणां कुर्यात्, तत एकद्विकादिसंयोगविषये भङ्गाः समुत्पद्यन्ते, तेषां सङ्ख्या कर्तव्या, इह च यद्यपि द्वादशी देवकुलिका वक्तुमुपक्रान्ता तथापि लाघवार्थं पञ्चाणुव्रतान्येवाश्रित्य भावनाऽभिधीयते, तत्र पञ्चानां पदानामेकसंयोगे एकैकचारणया पञ्च भङ्गाः, द्विकसंयोगे दश, ते चैवं—प्रथमद्वितीयप्रथमतृतीयप्रथमचतुर्थप्रथमपञ्चमचारणया चत्वारः, द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमचारणया त्रयः तृतीयचतुर्थतृतीयपञ्चमचारणया द्वौ चतुर्थपञ्चमचारणया त्वेकः सर्वे दश, तथा त्रिकयोगेऽपि दश, ते चैवं—प्रथमद्वितीयतृतीय—प्रथमद्वितीयचतुर्थ—प्रथमद्वितीयपञ्चम—प्रथमतृतीयचतुर्थ—प्रथमतृतीयपञ्चम—प्रथमचतुर्थपञ्चमचारणया षट्, द्वितीयतृतीयचतुर्थ—द्वितीयतृतीयपञ्चम—द्वितीयचतुर्थपञ्चमचारणया त्रयः, तृतीयचतुर्थपञ्चमचारणया त्वेकः, सर्वे दश, चतुःसंयोगे पञ्च, ते चैवं—प्रथमद्वितीयतृतीयचतुर्थचारणया एकः प्रथमद्वितीयतृतीयपञ्चमचारणया द्वितीयः प्रथमद्वितीयचतुर्थपञ्चमचारणया तृतीयः प्रथमतृतीयचतुर्थपञ्चमचारणया चतुर्थः द्वितीयतृतीयचतुर्थपञ्चमचारणया तु पञ्चमः, पञ्चकयोगे पुनश्चारणाया असंभवादेक एव भङ्ग इति ॥ ३५ ॥ एवं सर्वत्रापि चारणा करणीया, अथ सूत्रकारः साक्षादेव द्वादश्या देवकुलिकायाः क्रमेण गुणकारकराशीनाह—'बारसे'त्यादि गाथाद्वयं, द्वादश षट्पष्टिर्विंशत्यधिके द्वे शते 'पंच नव चउरो'त्ति पञ्च नव चत्वारश्च, गणितव्यवस्थावशतो व्युत्क्रमेण स्थाप्यन्ते, ततो भवन्ति पञ्चनवत्युत्तराणि चत्वारि शतानि, एवमग्रेऽपि, 'दो नव सत्त य'त्ति द्विनवत्यधिकानि सप्त शतानि, 'चउ दोन्नि नव य'त्ति चतुर्विंशत्युत्तराणि नव शतानि, 'दो नव य सत्तेव'त्ति द्विनवत्यधिकानि सप्त शतानि, 'पण नव चउरो'त्ति पञ्चनवत्युत्तराणि चत्वारि शतानि, विंशत्युत्तरे द्वे शते षट्पष्टिर्द्वादश

एकश्चेत्येते राशयः सर्वेषामपि श्रावकभङ्गानां षट्षट्त्रिंशदादिरूपाणां गुण्यराशीनां यथाक्रमं गुणकारा भवन्ति, सर्वग्रहणं चेदं ज्ञापयति—न पञ्चभ्यामेव केवलायामेते गुणकाराः किन्त्वेकविंशतिभङ्गावित्यपि, गुणकारकराशीनां सर्वत्राप्येकस्वरूपत्वात् ॥ ३६ ॥ ॥ ३७ ॥ इदानीं द्वादश्या एव देवकुलिकायाः क्रमेण गुण्यराशीनाह—'छच्चेव ये'त्यादिगाथाचतुष्कं, षडेव षट्त्रिंशत् 'सोल दुगं चेव'त्ति द्वे शते षोडशोत्तरे २१६ 'छन्नव दुगेक्क'त्ति एकसहस्रं षण्णवत्यधिके च द्वे शते १२९६ 'छ सत्त सत्त सत्त य'त्ति सप्त सहस्राः सप्त शतानि षट्सप्तत्यधिकानि ७७७६ 'छपन्नछछट्ठिछचउ'त्ति षट्चत्वारिंशत्सहस्राणि षट् शतानि षट्पञ्चाशदधिकानि ४६६५६ 'छट्ठे'त्ति आद्यषट्कापेक्षया षष्ठे स्थाने इत्यर्थः 'छत्तीसा नवनउई सत्तावीसा य'त्ति द्वे लक्षे एकोनाशीतिः सहस्रा नव शतानि षट्त्रिंशच्चेति २७९९३६ 'सोलस छन्नउई सत्त य सोलस भंग'त्ति सोलत्ति—षोडश लक्षाः एकोनाशीतिः सहस्राणि षट् शतानि षोडश भङ्गानष्टमस्थाने विजानीहि—अवबुध्यस्व १६७९६१६ 'छन्नउई छावत्तरि सत्त दुसुन्नेक्के'त्ति एका कोटिः सप्तसप्ततिः सहस्राः षट् शतानि षण्णवतिश्च भवन्ति नवमे स्थाने १००७७६९६ 'छाहत्तरि इगसठी छायाला सुन्न छच्चेव'त्ति षट् कोट्यश्चतस्रो लक्षाः षट्षष्टिः सहस्राः शतमेकं षट्सप्ततिश्चेति ६०४६६१७६ 'छप्पन्न सुन्न सत्त य नव सत्तावीस तहय छत्तीस'त्ति षट्त्रिंशत्कोटयः सप्तविंशतिर्लक्षाः सप्तनवतिः सहस्राः षट्पञ्चाशच्चेति, ३६२७९७०५६ 'छत्तीसा तेवीसा अट्ठहत्तरी छहत्तरीगवीस'त्ति द्वे कोटीशते सप्तदश कोटयः सप्तषष्टिर्लक्षाः द्व्यशीतिः सहस्राणि त्रीणि शतानि षट्त्रिंशदधिकानि २१७६७८२३३६ एतेषां च राशीनामानयनोपायो यथा—आद्याः षट् षड्भिर्गुण्यन्ते जाताः षट्त्रिंशत्, सापि षड्भिर्गुण्यते जाते द्वे शते षोडशोत्तरे, एवं वारंवारं तावत् षड्भिर्गुणनं विधेयं यावद् द्वादशापि गुण्यराशयः संपूर्णाः संपद्यन्ते इति, एत एव षड् देवकुलिकाः षट्त्रिंशदादयो द्वादश गुण्यराशयः

क्रमशो द्वादशषट्षष्टिप्रभृतिभिर्द्वादशभिर्गुणकारकराशिभिर्गुणिता आगतराशयो भवन्ति, उक्तं च—"पढमवए छब्भंगा छहिँ छहिँ गुणिया य वारसवि ठाणा । संजोगेहि य गुणिया सावयवयभंगया हुंति ॥ १ ॥" इह च सूत्रकारेणागतराशयो विस्तरभयान्नोक्ताः, वयं तु विनेयानुग्रहाय गाथाभिरुपदर्शयामः—वाहत्तरि १ छाहत्तरि तेवीसा २ सुन्न दु पण सीयाला ३ । वीसा पनरस चउसट्ठि ४ दु नव पणसीइ पनर छ य ५ ॥ १ ॥ चोयालसयं दस एकतीस चउ ६ वार ति नव सयरी य । इग दु दु ७ वीसा नव नव चालीसा एग तेयासी ८ ॥ २ ॥ वीस इगतीस नव सयरि एग वावीस ९ सोल छस्सत्त । छस्सत्त सुन्न नव नव तिन्नि य १० दसमंमि ठाणंमि ॥ ३ ॥ वाहत्तरि छायाला छप्पन्न तिपन्न ति चउ ११ छत्तीसा । तेवीसा अडहत्तरि छहत्तरि एकवीसा य १२ ॥ ४ ॥ गाथाचतुष्टयस्याप्यर्थः प्राग्वदवसेयः, तदेवमुक्ता गुण्यगुणकारकागतराशित्रयप्रदर्शनेन द्वादशी देवकुलिका, एतदनुसारेणाप्रोक्ता अन्या अप्येकादश देवकुलिकाः स्वयमभ्युह्याः, यथा च षड्भङ्ग्यां द्वादश देवकुलिकाः एवमेकविंशतिनवैकोनपञ्चाशत्सप्तचत्वारिंशशतभङ्गपक्षेऽप्यनया दिशा प्रत्येकं द्वादश द्वादश देवकुलिकाः समवसेयाः, सर्वसंख्यया च षष्टिर्देवकुलिका भवन्तीति, सर्वासामप्यासां देवकुलिकानां स्थापना वहुश्रुतसूरिसूत्रितेभ्यः पटेभ्यः प्रतिपत्तव्याः, भावार्थस्तु पुरस्ताद्व्यक्तीकरिष्यते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ अथ 'दुविहं तिविहाइणऽट्ठहा होंति'त्ति यत्पूर्वमुक्तं तद्विवृण्वन्नाह—'दुविहे'त्यादिगाथाद्वयं, एतच्च प्रागेव व्याख्यातं ॥ ४२ ॥ ४३ ॥ इदानीमष्टोत्तरशताधिकषोडशसहस्रसंख्यान् श्रावकभेदानभिधित्सुः पञ्चाणुव्रतदेवकुलिकाप्रतिपादनाय प्रथममेकादिसंयोगपरिमाणप्रदर्शनपरान् गुणकारकराशीनाह—'पंचण्ह' मित्यादि, पञ्चानामणुव्रतानामेककद्विकत्रिकचतुष्कपञ्चकैश्चिन्त्यमानानां यथासंख्येन पञ्च दश दश पञ्चैकश्चेत्येवं संयोगा ज्ञातव्याः, अयमर्थः—पञ्चानामणुव्रतानामेककसंयोगाः पञ्च द्विकसंयोगा दश त्रिकसंयोगा अपि दश चतुष्कसंयोगाः पञ्च

पञ्चकसंयोगस्त्वेक एवेति, एते च संयोगा 'एगाई एगुत्तरे'त्यादिना करणेनाक्षसंचारणया वा समानेतव्याः, भावना तु प्रागेव प्रदर्शिता ॥ ४४ ॥ अथ पञ्चमदेवकुलिकाया गुण्यराशीनाह—'छच्चेवे'त्यादि, आदौ षडेव ततः षट्त्रिंशत् 'सोलदुगं चेव'त्ति द्वे शते षोडशोत्तरे, 'नव दुग एक'मिति द्वादश शतानि षण्णवत्यधिकानि 'छ सत्त सत्त सत्त य'त्ति सप्तसहस्राः सप्त शतानि षट्सप्तत्युत्तराणि, पञ्चानामपि व्रतानामेतद्गुणनस्य—ताडनस्य पदं—स्थानं, गुण्यराशयः इत्यर्थः ॥ ४५ ॥ अथ पञ्चमदेवकुलिकाया एवागतराशीनाह—'वये'त्यादिगाथात्रयं, व्रतसंबन्धिनामेककसंयोगानां पञ्चानां त्रिंशद्भङ्गा भवन्ति, द्विकसंयोगानां दशानामपि त्रीणि शतानि षष्ट्यधिकानि भवन्ति, त्रिकसंयोगानां दशानामेकविंशतिर्भङ्गशतानि षष्ट्यधिकानि—षष्ट्यधिकशतोत्तरे द्वे सहस्रे इत्यर्थः, चतुःसंयोगपञ्चके पञ्चानां चतुष्कसंयोगानां चतुःषष्टिः शतान्यशीत्युत्तराणि भवन्ति, पञ्चके—पञ्चकसंयोगे पुनः सप्तसप्ततिः शतानि षट्सप्तत्युत्तराणि भङ्गानां भवन्ति। इयमत्र भावना—कश्चित्स्थूलप्राणातिपातविरमणादीनि पञ्चाणुव्रतानि प्रतिपद्यते, तत्र किल पञ्चैककसंयोगाः, एकैकस्मिंश्च एककसंयोगे द्विविधत्रिविधादयः षट् पङ्क्ता भवन्ति, ततः षट् पञ्चभिर्गुण्यन्ते जातास्त्रिंशत्, एतावन्तः पञ्चानां व्रतानामेककसंयोगे भङ्गाः, तथा एकैकस्मिन् द्विकसंयोगे षट्त्रिंशत् षट्त्रिंशद्भङ्गाः,तथाहि—प्राणातिपातव्रतसंबन्धी द्विविधत्रिविधलक्षणः प्रथमो भङ्गकोऽवस्थितो मृषावादसत्कान् षड्भङ्गान् लभते, एवं प्राणातिपातव्रतसंबन्धी द्विविधद्विविधलक्षणो द्वितीयोऽपि भङ्गकोऽवस्थितो मृषावादसत्कान् षड्भङ्गान् लभते, एवं प्राणातिपातव्रतसंबन्धी द्विविधैकविधलक्षणस्तृतीयोऽपि भङ्गकः एकविधत्रिविधलक्षणः चतुर्थोऽपि एकविधद्विविधलक्षणः पञ्चमोऽपि एकविधैकविधलक्षणः षष्ठोऽपि भङ्गकोऽवस्थितः एवं मृषावादसत्कान् षट्षड्भङ्गान् प्रत्येकं लभते, ततश्च षट् षड्भिर्गुणिताः षट्त्रिंशत्, दश चात्र द्विकसंयोगा भवन्तीत्यतः षट्त्रिंशद्दशभिर्गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि, एतावन्तः

पञ्चानां व्रतानां द्विकसंयोगे भङ्गाः, भङ्गाभिलापश्चैवं—स्थूलप्राणातिपातं प्रत्याख्याति द्विविधं त्रिविधेन स्थूलमृषावादमपि द्विविधं त्रिविधेन १ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं तु द्विविधं द्विविधेन २ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं तु द्विविधमेकविधेन ३ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं त्वेकविधं त्रिविधेन ४ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं त्वेकविधं द्विविधेन ५ स्थूलप्राणातिपातं द्विविधं त्रिविधेन स्थूलमृषावादं पुनरेकविधमेकविधेन ६, एवं स्थूलादत्तादानमैथुनपरिग्रहेष्वपि प्रत्येकं षट् षड्भङ्गाः, सर्वेऽपि मिलिताश्चतुर्विंशतिः, एते च द्विविधत्रिविधलक्षणं प्राणातिपातप्रथमभङ्गममुञ्चता लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठेष्वपि प्राणातिपातभङ्गेषु चतुर्विंशतिश्चतुर्विंशतिर्भङ्गा भवन्ति, एते सर्वेऽपि चतुश्चत्वारिंशदुत्तरं शतं, तथा स्थूलमृषावादं प्रत्याख्याति द्विविधं त्रिविधेन स्थूलादत्तादानमपि द्विविधं त्रिविधेन, स्थूलमृषावादं द्विविधं त्रिविधेन स्थूलादत्तादानं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण षड्भङ्गा ज्ञेयाः, एवं मैथुनपरिग्रहेष्वपि प्रत्येकं षट् षड्भङ्गाः, सर्वेऽप्यष्टादश, एते च मृषावादप्रथमभङ्गममुञ्चता लब्धाः, एवं द्वितीयादिष्वप्यष्टादश २ भवन्ति, मिलिताश्चाष्टोत्तरं शतं, तथा स्थूलादत्तादानं स्थूलमैथुनं च प्रत्याख्याति द्विविधं त्रिविधेन, स्थूलादत्तादानं द्विविधं त्रिविधेन स्थूलमैथुनं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण षड् भङ्गा ज्ञेयाः, एवं मैथुनपरिग्रहेष्वपि षड् भङ्गाः, सर्वेऽपि द्वादश, एते च स्थूलादत्तादानप्रथमभङ्गकममुञ्चता लब्धाः, एवं द्वितीयादिष्वपि द्वादश द्वादश भवन्ति, मिलिताश्च द्वासप्ततिः, तथा स्थूलमैथुनं स्थूलपरिग्रहं च प्रत्याख्याति द्विविधं त्रिविधेन स्थूलमैथुनं द्विविधं त्रिविधेन स्थूलपरिग्रहं तु द्विविधं द्विविधेन, एवं पूर्वक्रमेण षड् भङ्गाः, एते च स्थूलमैथुनप्रथमभङ्गकममुञ्चता लब्धाः, एवं द्वितीयादिष्वपि प्रत्येकं षट् षड्भवन्ति, मिलिताश्च षट्त्रिंशत्, एते च मूलादारभ्य सर्वेऽपि चतुश्चत्वारिंशं शतं अष्टोत्तरं शतं द्वासप्ततिः षट्त्रिंशच्च मिलितास्त्रीणि शतानि षष्ठ्यधिकानि भवन्तीति;

एवं त्रिकसंयोगाविष्वपि भङ्गामिलापः कार्यः, विस्तरभयान्न नेह प्रदर्श्यते । तथा एकैकस्मिन् त्रिकसंयोगे षोडशोत्तरं शतद्वयं प्रत्येकं भङ्गानां भवन्ति, तथाहि—मृषावादसंबन्धी प्रथमो भङ्गोऽवस्थितोऽदत्तादानसत्कान् षड्भङ्गान् लभते, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठा अपि षड्भङ्गान् लभन्ते, ततोऽत्रापि षट्त्रिंशद् भङ्गाः, ते च प्राणातिपातप्रथमभङ्गकेन लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठैरपि प्राणातिपातसंबन्धिभिर्भङ्गैः षट्त्रिंशत् षट्त्रिंशल्लब्धाः, षट्त्रिंशतश्च षड्भिर्गुणने द्वे शते षोडशोत्तरे, अत्र च त्रिकसंयोगा दश भवन्ति, ततो द्वे शते षोडशोत्तरे दशभिर्गुण्येते जातान्येकविंशतिः शतानि षष्ट्यधिकानि, एतावन्तः पञ्चानां व्रतानां त्रिकसंयोगे भङ्गाः, तथा एकैकस्मिन् चतुष्कसंयोगे द्वादश शतानि षण्णवत्यधिकानि प्रत्येकं भङ्गानां भवन्ति, तथाहि—अदत्तादानसंबन्धी प्रथमो भङ्गोऽवस्थितो मैथुनव्रतसत्कान् षड्भङ्गान् लभते, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठा अपि षड् भङ्गान् लभन्ते, जाताः षट्त्रिंशद् भङ्गाः, ते च मृषावादप्रथमभङ्गकेन लब्धाः, एवं द्वितीयतृतीयचतुर्थपञ्चमषष्ठैरपि मृषावादभङ्गैः षट्त्रिंशत् षट्त्रिंशल्लब्धाः, जाते द्वे शते षोडशोत्तरे, एते च प्राणातिपातभङ्गकैः षड्भिरपि प्रत्येकं प्राप्यन्ते, जातानि १२९६, चतुष्कसंयोगाश्चात्र पञ्च, ततो द्वादश शतानि षण्णवत्यधिकानि पञ्चभिर्गुण्यन्ते, जातानि चतुःषष्टिशतान्यशीत्यधिकानि, एतावन्तः पञ्चानां व्रतानां चतुष्कसंयोगे भङ्गाः, तथा पञ्चकसंयोगे मैथुनव्रतसंबन्धिनः प्रथमाद्याः षडपि भङ्गाः प्रत्येकं परिग्रहसत्कान् षट् षड्भङ्गान् लभन्ते, जातं ३६, सा च षट्त्रिंशत् अदत्तादानभङ्गैः षड्भिरपि प्रत्येकं प्राप्यते, जातं २१६, एते च द्वे शते षोडशोत्तरे मृषावादभङ्गैः षड्भिरपि प्रत्येकं प्राप्यते, जातं १२९६, एतानि च द्वादश शतानि षण्णवत्यधिकानि प्राणातिपातव्रतसंबन्धिभिः षड्भिरपि भङ्गैः प्रत्येकं प्राप्यन्ते, जातानि ७७७६, एक एव चात्र पञ्चकसंयोगः, ततः सप्तसप्ततिशतानि षट्सप्तत्युत्तराणि एकेन गुण्यन्ते, 'एकेन च गुणितं तदेव भवती'ति गुण्यराशेर्वृद्ध्यभावात्सप्तसप्तति-

| | | |
|---|---|---|
| ६ | ५ | ३० |
| ३६ | १० | ३६० |
| २१६ | १० | २१६० |
| १२९६ | ५ | ६४८० |
| ७७७६ | १ | ७७७६ |

| प्रा | मृ | अ | मै | प |
|---|---|---|---|---|
| २३ | २३ | २३ | २३ | २३ |
| २२ | २२ | २२ | २२ | २२ |
| २१ | २१ | २१ | २१ | २१ |
| १३ | १३ | १३ | १३ | १३ |
| १२ | १२ | १२ | १२ | १२ |
| ११ | ११ | ११ | ११ | ११ |

शतानि षट्सप्तत्यधिकानीत्यवस्थितैव सङ्ख्या जाता, एतावन्तः पञ्चानां व्रतानां पञ्चकसंयोगे भङ्गाः, व्रतयन्त्रक-स्थापना चेयं, तदेवं गुणकारकगुण्यागतराशित्रिकेण निष्पन्ना परिपूर्णा पञ्चमी देवकुलिका, एतदनुसारेण सर्वासामपि देवकुलिकानां निष्पत्तिर्निपुणत्वेन स्वयमवसेया, 'उत्तरगुणअविरयमेलियाण जाणाहि सव्वग्गं'ति प्रतिपन्नोत्तरगुणाविरतसम्यग्दृष्टिलक्षणभेदद्वयीमिलितानामनन्तरोक्तानां त्रिंशत्प्रभृतीनां भङ्गानां सर्वाग्रं—सर्वसङ्ख्यां जानीहि ॥ ४६ ॥ ४७ ॥ ४८ ॥ एतदेवाह—'सोलसे'त्यादि, षोडश सहस्रा अष्टौ शतान्यष्टाधिकानि भवन्ति, एषः—पूर्वोक्तो व्रतानां पञ्चसङ्ख्यानां पिंडार्थः—सर्वसमुदायसङ्ख्यास्वरूपः। दर्शनादयस्तु प्रतिमा—अभिग्रहविशेषाः, न पुनर्व्रतानि, ताभ्यो व्रतानां विभिन्नस्वरूपत्वादिति भावः, एते च श्रावकाणां भेदाः पञ्चैवाणुव्रतान्याश्रित्योक्ताः, द्वादशव्रतविवक्षया तु भूयस्तरा अपि भेदा भवन्ति, ॥ ४९ ॥ तथा चाह—

**तेरसकोडिसयाइं चुलसीइजुयाइं बारस य लक्खा। सत्तासीई सहस्सा दो य सया तह दुरुत्ता य ॥५०॥**

'तेरसे'त्यादि, त्रयोदश कोटिशतानि चतुरशीतिकोटयो द्वादश लक्षाः सप्ताशीतिसहस्राणि द्वे शते द्व्युत्तरे १३८४१२८७२०२, एतच्च षड्भङ्गीप्रतिबद्धाया द्वादश्या देवकुलिकायाः समागतसर्वराशिसंपिण्डनेन उत्तरगुणाविरतरूपभेदद्वयप्रक्षेपेण च भवतीति। एते च सर्वेऽपि श्रावकाणामेव व्रतभङ्गा इह प्रतिपादिताः, साधूनां पुनः सप्तविंशतिरेव भङ्गा भवन्ति, तथाहि—यन्न करोति तन्मनसा वचसा कायेन, एवं न कारयत्यपि मनसा वाचा कायेन, एवं न समनुजानीते मनसा वचसा कायेनेत्येवं वर्तमाने काले नव

भङ्गाः, एवमतीतेऽपि नव, भविष्यत्यपि नवेत्येवं सप्तविंशतिः, आह च भाष्यकृत्—"करणतिगेणेक्कं कालतिए तिधणसंखियमिसीणं। सव्वंति जओ गहियं सीयालसयं पुण गिहीणं ॥ १ ॥ [ करणत्रिकेणैकैकं (योगं) कालत्रिकेण त्रिघनसङ्ख्यमृषीणां। सर्वमिति यतो गृहीतं सप्तचत्वारिंशं शतं पुनर्गृहिणां ॥ १ ॥ ३×३×३=२७ ] अत्र न करोमि न कारयामीत्यादिकमेकैकं योगं मनःप्रभृतिना करणत्रयेण सह कालत्रिके चारयेत्, ततश्च त्रयाणां यो घनः—सप्तविंशतिलक्षणस्तत्सङ्ख्यैव—भङ्गकसङ्ख्यामाश्रित्य तत्सङ्ख्याप्रमाणमृषीणां—साधूनामवबुध्येतेति शेषः। कस्मादित्याह—यतः सर्वसावद्ययोगं प्रत्याख्यानीति साधुभिः प्रत्याख्यानं गृहीतं, ततस्तत्प्रत्याख्यानभङ्गकानामेतत्सङ्ख्याप्रमाणता, असर्वसावद्ययोगप्रत्याख्यायिनां पुनर्गृहिणां प्रत्याख्यानस्य सप्तचत्वारिंशदुत्तरं भङ्गकशतं विज्ञेयमिति २३६ ॥ ५० ॥ अधुना 'अट्ठारस पावठाणगाइ'न्ति सप्तत्रिंशदधिकद्विशततमं द्वारमाह—

**सव्वं पाणइवायं १ अलियं २ मदत्तं ३ च मेहुणं सव्वं ४। सव्वं परिग्गहं ५ तह राईभत्तं ६ च वोसरिमो ॥ ५१ ॥ सव्वं कोहं ७ माणं ८ मायं ९ लोहं १० च राग ११ दोसे १२ य। कलहं १३ अब्भक्खाणं १४ पेसुन्नं १५ परपरीवायं १६ ॥ ५२ ॥ मायामोसं १७ मिच्छादंसणसल्लं १८ तहेव वोसरिमो। अंतिमऊसासंमि देहंपि जिणाइपच्चक्खं ॥ ५३ ॥**

सर्वं—सप्रभेदं प्राणातिपातं १ तथा सर्वमलीकं—मृषावादं २ तथा सर्वमदत्तं—अदत्तादानं ३ तथा सर्वं मैथुनं ४ तथा सर्वं परिग्रहं ५ तथा सर्वं रात्रिभक्तं च—रजनिभोजनं ६ व्युत्सृजामः—परिहरामः, तथा सर्वं क्रोधं ७ मानं ८ मायां ९ लोभं च १० रागद्वेषौ च ११–१२ तथा कलहं १३ अभ्याख्यानं १४ पैशून्यं १५ परपरिवादं १६ मायामृषा १७ मिथ्यात्वदर्शनशल्यं च १८ तथैव—सप्रभेदं

व्युत्सृजामः, एतान्यष्टादश पापहेतूनि स्थानकानि पापस्थानकानि, न केवलमेतान्येव, किंतु अन्तिमे उच्छ्वासे, परलोकगमनसमये इत्यर्थः, देहमपि निजं शरीरमिति व्युत्सृजामः, तत्रापि ममत्वमोचनात् जिनादिप्रत्यक्षं—तीर्थकरसिद्धादीनां समक्षमिति, तत्र प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रिभक्तक्रोधमानमायालोभाः प्रतीताः, तथा रागः—अनभिव्यक्तमायालोभलक्षणस्वभावभेदमभिष्वङ्गमात्रं, 'दोसो'त्ति द्वेषणं द्वेषः दूषणं वा दोषः, स चानभिव्यक्तक्रोधमानलक्षणभेदस्वभावोऽप्रीतिमात्रं, कलहो—राटी अभ्याख्यानं—प्रकटमसद्दोषारोपणं पैशून्यं—पिशुनकर्म प्रच्छन्नं सदसद्दोषाविर्भावनं, तथा परेषां परिवादः परपरिवादो—विकत्थनमित्यर्थः, तथा माया च—निकृतिः मृषा च—मृषावादः मायया वा सह मृषा मायामृषा प्राकृतत्वान्मायामोसं मायामुसं वा दोषद्वययोगः, इदं च मानमृषादिदोषसंयोगोपलक्षणं, वेशान्तरकरणेन लोकप्रतारणमित्यन्ये, तथा मिथ्यादर्शनं—विपर्यस्ता दृष्टिः तदेव तोमरादिशल्यमिव शल्यं दुःखहेतुत्वान्मिथ्यादर्शनशल्यमिति, स्थानाङ्गे च रात्रिभोजनं पापस्थानमध्ये न पठितं किंतु परपरिवादाग्रतोऽरतिरतिः, तस्य चायमर्थः—अरतिश्च—तन्मोहनीयोदयजश्चित्तविकार उद्वेगलक्षणः रतिश्च—तथाविधानन्दरूपा अरतिरतिरित्येकमेव विवक्षितं, यतः क्वचन विषये या रतिस्तामेव विषयान्तरापेक्षयाऽरतिं व्यपदिशन्ति, एवमरतिमेव रतिमित्यौपचारिकमेकत्वमनयोरस्तीति, तथा रागपदस्थाने पिज्जपदं च पठन्ति, तत्र च प्रियस्य भावः कर्म वा प्रेम, अर्थस्तु रागपदवाच्य एवेति, २३७ ॥ ५१ ॥ ५२ ॥ ५३ ॥ इदानीं 'मुणिगुण सत्तावीसं'त्यष्टत्रिंशदधिकद्विशततमं द्वारमाह—

**छव्वय छकायरक्खा पंचिंदियलोहनिग्गहो खंती । भावविसुद्धी पडिलेहणाइकरणे विसुद्धी य**

**॥ ५४ ॥ संजमजोए जुत्तय अकुसलमणवयणकायसंरोहो । सीयाइपीडसहणं मरणंउ(तु)वसग्ग-सहणं च ॥ ५५ ॥**

षट् व्रतानि—प्राणातिपातविरमणादीनि रजनिभोजनपर्यवसानानि षण्णां कायानां—पृथिव्यादित्रसान्तानां रक्षा—संघट्टपरितापादिपरिहारेण सम्यगनुपालनं पञ्चानामिन्द्रियाणां—श्रोत्रादीनां निग्रहो—नियन्त्रणं, इष्टेतरेषु शब्दादिषु रागद्वेषाकरणमित्यर्थः, लोभस्य च निग्रहो—विरागता क्षान्तिः—क्रोधनिग्रहः भावविशुद्धिः—अकलुषान्तरात्मता प्रतिलेखनादिकरणे च विशुद्धिः, शुद्धेनाध्यवसायेन सम्यगुपयुक्ततया प्रत्युपेक्षणादिक्रियाकरणमित्यर्थः, तथा संयमोपष्टम्भको योऽसौ योगो—व्यापारस्तत्र युक्तता—तत्परता अकुशलानां—अप्रशस्तानां मनोवचःकायानां संरोधो—निषेधः, प्रशस्तानामेव तेषां करणमिति तात्पर्यं, शीतवातातपादिजनितायाः पीडायाः—वेदनायाः सहनं—सम्यगमर्षणं, 'मरणान्तोपसर्गसहनं च' मरणमन्ते येषां ते मरणान्ता—मरणहेतव इत्यर्थः ते च ते उपसर्गाश्च मरणान्तोपसर्गास्तेषां सहनं—कल्याणमित्रबुद्ध्या सम्यक्तितिक्षणं, एते सप्तविंशतिर्मुनीनां—अनगाराणां गुणाः—चारित्रविशेषा भवन्ति। अन्यत्र पुनरित्थमनगारगुणा उक्ताः—महाव्रतानि पञ्च ५ इन्द्रियनिग्रहाश्च पञ्च १० क्रोधादिविवेकाश्चत्वारः १४ सत्यानि त्रीणि, तत्र—भावसत्यं—शुद्धान्तरात्मता करणसत्यं—यथोक्तप्रतिलेखनादिक्रियाकरणं योगसत्यं—मनःप्रभृतीनामवितथत्वं १७ क्षमा—अनभिव्यक्तक्रोधमानस्वरूपस्य द्वेषसंज्ञितस्याप्रीतिमात्रस्याभावः, अथवा क्रोधमानयोरुदयनिरोधः, क्रोधमानशब्दाभ्यां तूदयप्राप्तयोस्तयोर्निरोधः प्रागभिहित इति न पौनरुक्त्यं १८ विरागता—अभिष्वङ्गमात्रस्याभावः, यद्वा मायालोभयोरनुदयो, मायालोभविवेकशब्दाभ्यां तूदयप्राप्तयोस्तयोर्निरोधः प्रागभिहित इतीहापि न पुनरु-

कता १९ मनःप्रभृतिनिरोधाः २२ ज्ञानादिसंपन्नतास्तिस्रः २५ वेदनाधिसहनता २६ मरणान्तोपसर्गसहनं च २७ ॥ २३८ ॥ ५४ ॥ ॥ ५५ ॥ इदानीं 'इगवीसा सावयगुणाणं'त्येकोनचत्वारिंशदधिकद्विशततमं द्वारमाह—

**धम्मरयणस्स जोगो अक्खुद्दो १ रूववं २ पगइसोमो ३। लोयप्पिओ ४ अक्कूरो ५ भीरू ६ अस-**
**ढो सदक्खिन्नो ८ ॥५६॥ लज्जालुओ ९ दयालू १० मज्झत्थो ११ सोमदिट्ठि १२ गुणरागी १३।**
**सक्कहसुपक्खजुत्तो १४ सुदीहदंसी १५ विसेसन्नू १६ ॥ ५७ ॥ वुड्ढाणुगो १७ विणीओ १८ कय-**
**न्नुओ १९ परहियत्थकारी य २०। तह चेव लद्धलक्खो २१ इगवीसगुणो हवइ सड्ढो ॥ ५८ ॥**

परतीर्थिकप्रणीतानां सर्वेषामपि धर्माणां मध्ये प्रधानत्वेन यो रत्नमिव वर्तते स धर्मरत्नं—जिनोदितो देशविरत्यादिरूपः समाचारः तस्य योग्यः—उचित ईदृक्स्वरूप एव श्रावको भवति, तद्यथा—अक्षुद्र इत्यादि, तत्र यद्यपि क्षुद्रः—तुच्छः क्षुद्रः—क्रूरः क्षुद्रो—दरिद्रः क्षुद्रो—लघुरित्यनेकार्थः क्षुद्रशब्दः तथाऽपीह तुच्छार्थो गृह्यते तस्यैव प्रस्तुतोपयोगित्वात्, ततः क्षुद्रः—तुच्छोऽगम्भीर इत्यर्थः तद्विपरीतोऽक्षुद्रः स च सूक्ष्ममतित्वात् सुखेनैव धर्ममवबुध्यते १ रूपवान्—संपूर्णाङ्गोपाङ्गतया मनोहराकारः, स च तथारूपसंपन्नः सदाचारप्रवृत्त्या भविकलोकानां धर्मे गौरवमुत्पादयन् प्रभावको भवति, ननु नन्दिषेणहरिकेशबलप्रभृतीनां कुरूपाणामपि धर्मप्रतिपत्तिः श्रूयते, अतः कथं रूपवानेव धर्मेऽधिक्रियते ?, सत्यं, इह द्विविधं रूपं—सामान्यमतिशायि च, तत्र सामान्यं संपूर्णाङ्गत्वादि, तच्च नन्दिषेणादीनामप्यासीदेवेति न विरोधः, प्रायिकं चैतच्छेषगुणसद्भावे कुरूपत्वस्याप्यदुष्टत्वात्, एवमग्रेऽपि, अतिशायि पुनर्यद्यपि तीर्थकरादीनामेव संभवति तथापि येन क्वचिद्देशे काले वयसि वा वर्तमानो रूपवानयमिति जनानां प्रतीतिमुपजनयति तदेवेहाधिकृतं

मन्तव्यं २ प्रकृत्या—स्वभावेन सौम्यः—अभीषणाकृतिर्विश्वसनीयरूप इत्यर्थः, एवंविधश्च प्रायेण न पापव्यापारे व्याप्रियते सुखाश्रयणीयश्च भवति ३ लोकस्य—सर्वजनस्य इहपरलोकविरुद्धवर्जनेन दानशीलादिगुणैश्च प्रियो—वल्लभो लोकप्रियः, सोऽपि सर्वेषां धर्मे बहुमानं जनयति ४, अक्रूरः—अक्लिष्टाध्यवसायः, क्रूरो हि परच्छिद्रान्वेषणलम्पटः कलुषमनाः स्वानुष्ठानं कुर्वन्नपि न फलभाग्भवतीति ५ भीरुः—ऐहिकामुष्मिकापायेभ्यस्त्रसनशीलः, स हि कारणेऽपि सति न निःशङ्कमधर्मे प्रवर्तते ६ अशठः—अच्छद्मानुष्ठाननिष्ठः, शठो हि वञ्चनप्रपञ्चचतुरतया सर्वस्याप्यविश्वसनीयो भवति ७ सदाक्षिण्यः—स्वकार्यपरिहारेण परकार्यकरणैकरसिकान्तःकरणः, स च कस्य नाम नानुवर्तनीयो भवति ? ८ 'लज्जालु य'त्ति प्राकृतशैल्या लज्जावान्, स खल्वकृत्यासेवनवार्तयाऽपि व्रीडते, स्वयमङ्गीकृतमनुष्ठानं च परित्यक्तुं न शक्नोति ९ दयालुः—दयावान्, दुःखितजन्तुजातत्राणाभिलाषुक इत्यर्थः, 'धर्मस्य हि दया मूल'मिति प्रतीतमेव १० मध्यस्थो—रागद्वेषत्यक्तधीः, स हि सर्वत्रारक्तद्विष्टतया विश्वस्यापि वल्लभो भवति ११ सौम्यदृष्टिः—कस्याप्यनुद्वेजकः, स हि दर्शनमात्रेणापि प्राणिनां प्रीतिं पल्लवयति १२ गुणेषु—गाम्भीर्यस्थैर्यप्रमुखेषु रज्यतीत्येवंशीलो गुणरागी, स हि गुणपक्षपातित्वादेव सद्गुणान् बहु मन्यते निर्गुणांश्चोपेक्षते १३ सत्कथाः—सदाचारचारित्वात्सुचरित्रचर्याकथनरुचयो न तु दुश्चारित्रचर्याकथनरुचयो ये सपक्षाः—सहाया जनास्तैर्युक्तः—अन्वितो, धर्माविघ्नकपरिवार इति भावः, एवंविधश्च न केनचिदुन्मार्गं नेतुं शक्यते १४ अन्ये तु सत्कथः सुपक्षयुक्तश्चेति पृथग्गुणद्वयं मन्यन्ते, मध्यस्थः सोमदृष्टिश्चेति द्वाभ्यामप्येकमेवेति, तथा सुदीर्घदर्शी—सुपर्यालोचितपरिणामपेशलकार्यकारी, स किल पारिणामिकया बुद्ध्या सुन्दरपरिणाममैहिकमपि कार्यमारभते १५ विशेषज्ञः—सारेतरवस्तुविभागवेदी, अविशेषज्ञस्तु दोषानपि गुणत्वेन गुणानपि दोषत्वेनाध्यवस्यति १६ वृद्धान्—परिणतमतीननुगच्छति—गुणार्जनबुद्ध्या सेवत इति वृद्धानुगः, वृद्धजना-

नुगत्या हि प्रवर्तमानः पुमान् न जातुचिदपि विपदः पदं भवति १७ विनीतो—गुरुजनगौरवकृत्, विनयवति हि सपदि संपदः प्रादुर्भवन्ति १८ स्वल्पमप्युपकारमैहिकं पारत्रिकं वा परेण कृतं जानाति न निह्नुते इति कृतज्ञः, कृतघ्नो हि सर्वत्राप्यमन्दां निन्दां समासादयति १९ परेषां—अन्येषां हितान्—पथ्यानर्थान्—प्रयोजनानि कर्तुं शीलं यस्य स परहितार्थकारी, सदाक्षिण्योऽभ्यर्थित एव करोति अयं पुनः स्वत एव परहिताय प्रवर्तते इत्यनयोर्भेदः, यश्च प्रकृत्यैव परहितकरणे नितरां निरतो भवति स निरीहचित्ततयाऽन्यानपि सद्धर्मे स्थापयति २० तथा लब्धमिव लब्धं लक्षं—शिक्षणीयानुष्ठानं येन स लब्धलक्षः, पूर्वभवाभ्यस्तमिव सर्वमपि धर्मकृत्यं झटित्येवाधिगच्छतीति भावः, ईदृशो हि वन्दनप्रत्युपेक्षणादिकं धर्मकर्म सुखेनैव शिक्षयितुं शक्यते २१, तदेवमेकविंशतिगुणसंपन्नः श्राद्धः—श्रावको भवतीति २३९ ॥ ५६ ॥ ५७ ॥ ५८ ॥ इदानीं 'तेरिच्छीणुक्किट्ठ गब्भट्ठिइ'त्ति चत्वारिंशदधिकशततमं द्वारमाह—

**उक्किट्ठा गब्भठिई तिरियाणं होइ अट्ठ वरिसाइं । माणुस्सीणुक्किट्ठं इत्तो गब्भट्ठिइं वुच्छं ॥ ५९ ॥**

उत्कृष्टा गर्भस्थितिः—गर्भावस्थानं तिरश्चीनां—तिर्यग्योषितां भवत्यष्टौ वर्षाणि, ततः परं गर्भस्य विपत्तिः प्रसवो वेति २४० ॥ इदानीं 'माणुसीणुक्किट्ठा गब्भठिइ'त्ति तथा 'तग्गब्भस्स कायट्ठिइ'त्येकचत्वारिंशदधिकद्विचत्वारिंशदधिकद्विशततमे द्वारे आह—

**गब्भट्ठिइ मणुस्सीणुक्किट्ठा होइ वरिसबारसगं । गब्भस्स य कायठिई नराण चउवीस वरिसाई ॥ ६० ॥**

मानुषीणां—मनुष्यस्त्रीणामुत्कृष्टा गर्भस्थितिर्भवति वर्षद्वादशकं—द्वादशवर्षप्रमाणा; अयमर्थः—कश्चिज्जन्तुराविर्भूतप्रभूतपापाभिभूतवपुर्वातपित्तादिदूषिते देवादिस्तम्भिते वा गर्भे द्वादश वर्षाणि निरन्तरं तिष्ठतीति, इयं च भवस्थितिरुक्ता, कायस्थितिः पुनर्नराणां गर्भस्य

चतुर्विंशतिर्वर्षाणि, इदमुक्तं भवति—कश्चिज्जीवो द्वादश वर्षाणि जीवित्वा तदन्ते च मृत्वा तथाविधकर्मवशात्तत्रैव गर्भस्थिते कलेवरे समुत्पद्य पुनर्द्वादश वर्षाणि जीवतीत्येवं चतुर्विंशतिर्वर्षाण्युत्कृष्टतो गर्भे जन्तुस्तिष्ठतीति २४१, २४२ ॥ ६० ॥ इदानीं 'गब्भट्ठिय-जीवआहारो'त्ति त्रिचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पढमे समये जीवा उप्पन्ना गब्भवासमज्झंमि । ओयं आहारंती सव्वप्पणयाइ पूयव ॥ ६१ ॥**

**ओयाहारा जीवा सव्वे अपज्जत्तया मुणेयव्वा । पज्जत्ता उण लोमे पक्खेवे हुंति भइयव्वा ॥ ६२ ॥**

प्रथमे समये जीवा उत्पन्ना गर्भवासमध्ये ओज आहारयन्ति—ओजआहारं कुर्वन्ति, 'सव्वप्पयणयाए'त्ति सर्वात्मना, सर्वैरप्यात्मप्रदेशैरित्यर्थः, किंवदित्याह—अपूपा इव, यथा हि तैलभृततप्ततापिकायां प्रथमसमय एवापूपाः सकलमपि तैलमापिबन्ति, एवं जीवा अपि गर्भोत्पत्तिप्रथमसमये ओज आहारयन्ति, पितुः संबन्धि शुक्रं मातुः संबन्धि शोणितमेतद्द्वयमप्येकत्र मिलितं ओज इत्युच्यते, अथ कस्यामवस्थायां जीवस्याहारः क इत्येतत्प्रसङ्गतः प्राह—'ओये'त्यादि, इयं च प्रागेव पञ्चोत्तरद्विशततमद्वारे व्याख्याता २४३ ॥ ६१ ॥ ॥ ६२ ॥ इदानीं 'रिउरुहिरसुक्कजोए जेत्तियकालेण गब्भसंभूई'त्ति चतुश्चत्वारिंशदधिकद्विशततमं द्वारमाह—

**रिउसमयण्हायनारी नरोवभोगेण गब्भसंभूई । बारसमुहुत्त मज्झे जायइ उवरिं पुणो नेय ॥ ६३ ॥**

मासावसाने त्रीणि दिनानि यावद्युवतीनां यदजस्रमस्रं श्रवति तदृतुरित्युच्यते, तत्र ऋतुसमये स्नातायाश्चतुर्थदिवसादूर्ध्वं शुद्धिहेतोः कृतस्नानायाः नार्याः स्त्रियो नरोपभोगेन—पुरुषसंभोगेन गर्भसंभूतिर्भवति, सा च द्वादशानामेव मुहूर्तानां मध्ये जायते, चतुर्विंशतिघटिकानां मध्ये इत्यर्थः, ऊर्ध्वं पुनर्नैव गर्भसंभूतिः, द्वादश मुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं ध्वंसमुपगच्छत

इति भावः २४४ ॥ ६३ ॥ इदानीं 'जत्तिय पुत्ता गब्भे'त्ति तथा 'जत्तिय पियरो य पुत्तस्स'त्ति पञ्चचत्वारिंशदधिकषट्चत्वा-
रिंशदधिके च द्विशततमे द्वारे प्राह—

**सुयलक्खपुहुत्तं होइ एगनरभुत्तनारिगब्भंमि । उक्कोसेणं नवसयनरभुत्तत्थीइ एगसुओ ॥ ६४ ॥**

सुतलक्षपृथक्त्वं भवत्येकपुरुषभुक्ताया नार्या गर्भे, पृथक्त्वं चेह द्विप्रभृतिरानवभ्य इति समयोक्तं ज्ञेयं, अयमर्थः—एकस्याः स्त्रियः पुरुषेणोपभुक्ताया गर्भे जघन्यत एको द्वौ त्रयो वा यावत् उत्कृष्टतस्तु नव लक्षाणि जीवानामुत्पद्यन्ते, निष्पत्तिं तु प्राय एको वा द्वौ वा गच्छतः, शेषास्तु स्वल्पकालं जीवित्वा तत एव म्रियन्ते इति, तथोत्कृष्टतो नवशतसङ्ख्यैर्नरैरुपभुक्तायाः स्त्रियो गर्भे एकः सुतो भवति, कोऽर्थः ?—काचिद् दृढसंहनना कामातुरा च तरुणी यदा द्वादशमुहूर्तमध्ये उत्कर्षतो नवभिर्नरशतैः संभुज्यते तदा तद्बीजे यः पुत्रो जायते स नवानां पितृशतानां पुत्रो भवतीति २४५—२४६ ॥ ६४ ॥ इदानीं 'महिलाण गब्भअभवणकालो पुरिसअबीय-
कालो'त्ति सप्तचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पणपन्नाएँ परेणं जोणी पमिलायए महिलियाणं । पणहत्तरीएँ परओ होइ अबीयओ नरो पायं ॥ ६५ ॥ वाससयाउयमेयं परेण जा होइ पुव्वकोडीओ । तस्सद्धे अमिलाया सव्वाउयवीसभाये य ॥ ६६ ॥ बीयं सुक्कं तह सोणियं च ठाणं तु जणणिगब्भंमि । ओयं तु उवट्ठंभस्स कारणं तस्स-रूवं तु ॥ ६७ ॥ अट्ठारसपिट्ठकरंडयस्स संधीउ हुंति देहंमि । बारस पंसुलियकरंडया इहं तह च्छ पंसुलिए ॥ ६८ ॥ होइ कडाहे सत्तंगुलाइं जीहा पलाइ पुण चउरो । अच्छीउ दो पलाइं सिरं**

चतुर्विंशतिर्वर्षाणि, इदमुक्तं भवति—कश्चिज्जीवो द्वादश वर्षाणि जीवित्वा तदन्ते च मृत्वा तथाविधकर्मवशात्तत्रैव गर्भस्थिते कलेवरे समुत्पद्य पुनर्द्वादश वर्षाणि जीवतीत्येवं चतुर्विंशतिर्वर्षाण्युत्कृष्टतो गर्भे जन्तुस्तिष्ठतीति २४१, २४२ ॥ ६० ॥ इदानीं 'गब्भट्ठिय-जीवआहारो'त्ति त्रिचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पढमे समये जीवा उप्पन्ना गब्भवासमज्झंमि । ओयं आहारंती सव्वप्पणयाइ पूयव्व ॥ ६१ ॥**

**ओयाहारा जीवा सव्वे अपज्जत्तया मुणेयव्वा । पज्जत्ता उण लोमे पक्खेवे हुंति भइयव्वा ॥ ६२ ॥**

प्रथमे समये जीवा उत्पन्ना गर्भवासमध्ये ओज आहारयन्ति—ओजआहारं कुर्वन्ति, 'सव्वप्पयणयाए'त्ति सर्वात्मना, सर्वैरप्यात्मप्रदेशैरित्यर्थः, किंवदित्याह—अपूपा इव, यथा हि तैलभृततप्ततापिकायां प्रथमसमय एवापूपाः सकलमपि तैलमापिबन्ति, एवं जीवा अपि गर्भोत्पत्तिप्रथमसमये ओज आहारयन्ति, पितुः संबन्धि शुक्रं मातुः संबन्धि शोणितमेतद्द्वयमप्येकत्र मिलितं ओज इत्युच्यते, अथ कस्यामवस्थायां जीवस्याहारः क इत्येतत्प्रसङ्गतः प्राह—'ओये'त्यादि, इयं च प्रागेव पञ्चोत्तरद्विशततमद्वारे व्याख्याता २४३ ॥ ६१ ॥ ॥ ६२ ॥ इदानीं 'रिउरुहिरसुक्कजोए जेत्तियकालेण गब्भसंभूइ'त्ति चतुश्चत्वारिंशदधिकद्विशततमं द्वारमाह—

**रिउसमयण्हायनारी नरोवभोगेण गब्भसंभूई । बारसमुहुत्त मज्झे जायइ उवरिं पुणो नेय ॥ ६३ ॥**

मासावसाने त्रीणि दिनानि यावद्युवतीनां यद्रजस्रमस्रं श्रवति तदृतुरित्युच्यते, तत्र ऋतुसमये स्नातायाश्चतुर्थदिवसे शुद्धिहेतोः कृतस्नानायाः नार्याः स्त्रियो नरोपभोगेन—पुरुषसंभोगेन गर्भसंभूतिर्भवति, सा च द्वादशानामेव मुहूर्तानां मध्ये जायते, चतुर्विंशतिघटिकानां मध्ये इत्यर्थः, ऊर्ध्वं पुनर्नैव गर्भसंभूतिः, द्वादश मुहूर्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं ध्वंसमुपगच्छत

इति भावः २४४ ॥ ६३ ॥ इदानीं 'जत्तिय पुत्ता गब्भे'त्ति तथा 'जत्तिय पियरो य पुत्तस्स'त्ति पञ्चचत्वारिंशदधिकषट्चत्वारिंशदधिके च द्विशततमे द्वारे प्राह—

**सुयलक्खपुहुत्तं होइ एगनरभुत्तनारिगब्भंमि । उक्कोसेणं नवसयनरभुत्तत्थीइ एगसुओ ॥ ६४ ॥**

सुतलक्षपृथक्त्वं भवत्येकपुरुषभुक्ताया नार्या गर्भे, पृथक्त्वं चेह द्विप्रभृतिरानवभ्य इति समयोक्तं ज्ञेयं, अयमर्थः—एकस्याः स्त्रियः पुरुषेणोपभुक्ताया गर्भे जघन्यत एको द्वौ त्रयो वा यावत् उत्कृष्टतस्तु नव लक्षाणि जीवानामुत्पद्यन्ते, निष्पत्तिं तु प्राय एको वा द्वौ वा गच्छतः; शेषास्तु स्वल्पकालं जीवित्वा तत एव म्रियन्ते इति, तथोत्कृष्टतो नवशतसङ्ख्यैर्नरैरुपभुक्तायाः स्त्रियो गर्भे एकः सुतो भवति, कोऽर्थः ?—काचिद् दृढसंहनना कामातुरा च तरुणी यदा द्वादशमुहूर्तमध्ये उत्कर्षतो नवभिर्नरशतैः संभुज्यते तदा तद्बीजे यः पुत्रो जायते स नवानां पितृशतानां पुत्रो भवतीति २४५—२४६ ॥ ६४ ॥ इदानीं 'महिलाण गब्भअभवणकालो पुरिसअबीयकालो'त्ति सप्तचत्वारिंशदधिकद्विशततमं द्वारमाह—

**पणपन्नाएँ परेणं जोणी पमिलायए महिलियाणं । पणहत्तरीएँ परओ होइ अबीयओ नरो पायं ॥ ६५ ॥ वाससयाउयमेयं परेण जा होइ पुव्वकोडीओ । तस्सद्धे अमिलाया सव्वाउयवीसभाये य ॥ ६६ ॥ बीयं सुक्कं तह सोणियं च ठाणं तु जणणिगब्भंमि । ओयं तु उवट्ठंभस्स कारणं तस्सरूवं तु ॥ ६७ ॥ अट्ठारसपिट्ठकरंडयस्स संधीउ हुंति देहंमि । बारस पंसुलियकरंडया इहं तह च्छ पंसुलिए ॥ ६८ ॥ होइ कडाहे सत्तंगुलाइं जीहा पलाइ पुण चउरो । अच्छीउ दो पलाइं सिरं**

तु भणियं चउक्कवालं ॥ ६९ ॥ अद्धुट्ठपलं हिययं बत्तीसं दसण अच्छिखंडाइं । कालेज्जयं तु स-
मए पणवीस पलाइ निद्दिट्ठं ॥ ७० ॥ अंताइं दोन्नि इहयं पत्तेयं पंच पंच वामाओ । सट्ठिसयं
संधीणं मम्माण सयं तु सत्तहियं ॥ ७१ ॥ सट्ठिसयं तु सिराणं नाभिप्पभवाण सिरमुवगयाणं ।
रसहरणिनामधेज्जाण जाणऽणुग्गहविघाएसु ॥ ७२ ॥ सुइचक्खुघाणजीहाणणुग्गहो होइ तह
विघाओ य । सट्ठसयं अन्नाणवि सिराणऽहोगामिणीण तहा ॥ ७३ ॥ पायतलमुवगयाणं जंघा-
बलकारिणीणऽणुवघाए । उवघाए सिरवियणं कुणंति अंधत्तणं च तहा ॥ ७४ ॥ अवराण गुदप-
विट्ठाण होइ सट्ठं सयं तह सिराणं । जाण बलेण पवत्तइ वाऊ मुत्तं पुरीसं च ॥ ७५ ॥ अरिसा
उ पांडुरोगो वेगनिरोहो य ताण य विघाए । तिरियगमाण सिराणं सट्ठसयं होइ अवराणं
॥ ७६ ॥ बाहुबलकारिणीओ उवघाए कुच्छिउयरवियणाओ । कुव्वंति तहऽन्नाओ पणवीसं सिंभ-
धरणीओ ॥ ७७ ॥ तह पित्तधारिणीओ पणवीसं दस य सुक्कधरणीओ । इय सत्त सिरसयाइं
नाभिप्पभवाइं पुरिसस्स ॥ ७८ ॥ तीसूणाइं इत्थीण वीसहीणाइं हुंति संढस्स । नव ण्हारूण
सयाइं नव धमणीओ य देहंमि ॥ ७९ ॥ तह चेव सव्वदेहे नवनउइं लक्ख रोमकूवाणं । अद्धुट्ठा
कोडीओ समं पुणो केसमंसूहिं ॥ ८० ॥ मुत्तस्स सोणियस्स य पत्तेयं आढयं वसाए उ । अद्धाढयं
भणंति य पत्थं मत्थुलुयवत्थुस्स ॥ ८१ ॥ असुइमल पत्थछक्कं कुलओ कुलओ य पित्तसिंभाणं ।

**सुक्कस्स अद्धकुलओ दुट्ठं हीणाहियं होज्जा ॥ ८२ ॥ एक्कारस इत्थीए नव सोयाइं तु हुंति पुरिसस्स । इय किं सुइत्तणं अट्ठिमंसमलरुहिरसंघाए? ॥ ८३ ॥**

वर्षाणां पञ्चपञ्चाशतः परत आर्तवाभावान्महिलानां योनिः प्रम्लायति—गर्भोत्पत्तिकारणतां न प्रतिपद्यते, भावार्थस्तु निशीथचूर्ण्यक्षरैरुपदर्श्यते—"इत्थीए जाव पणपन्न वासा न पूरंति ताव अमिलिया(लाणा) जोणी, आर्तवं भवति गर्भं च गृह्णातीत्यर्थः, पणपन्नवासाए पुण कस्सइ अत्तवं भवति न पुण गब्भं गिण्हइ, पणपन्नाए परओ नो अत्तवं नो गब्भं गिण्हइ"त्ति, तथा वर्षाणां पञ्चसप्ततेः परतः प्रायेण नरः—पुमान् भवत्यबीजो—गर्भाधानयोग्यवीर्यविवर्जितः ॥६५॥ कियत्प्रमाणायुषां पुनरेतन्मानं द्रष्टव्यमित्याह—'वासे'त्यादि, वर्षशतायुषामेवंदंयुगीनानामेवैतद्—गर्भधारणादिकालमानमुक्तं द्रष्टव्यं, परेण तर्हि का वार्ता? इत्याह—'परेण जा होइ पुव्वकोडीओ' इत्यादि, वर्षशतात्परतो वर्षशतद्वयं त्रयं चतुष्टयं चेत्यादि यावन्महाविदेहादिमनुष्याणां या पूर्वकोटिः सर्वायुष्के भवति तस्य सर्वायुषोऽर्धे तदर्धं यावदम्लाना—गर्भधारणक्षमा युवतीनां योनिर्द्रष्टव्या, ततः परतः सकृत्प्रसवधर्मिणोऽम्लानयोनयश्चावस्थितयौवनत्वात्, पुरुषाणां तु सर्वस्यापि पूर्वकोटिपर्यन्तस्य स्वायुषोऽन्त्यो विंशतितमो भागोऽबीजो भवति २४७ ॥ ६६ ॥ इदानीं 'सुक्काईण पमाणं'त्यष्टचत्वारिंशदधिकद्विशततमं द्वारमाह—'बीय' मित्यादि, बीजं—कारणं तत्र शरीरस्य शुक्रं तथा शोणितं च, पितुः शुक्रं मातुः शोणितं एतद् द्वयमपि शरीरस्य कारणमित्यर्थः, स्थानं तु तस्यादौ जननीगर्भे—मातुरुदरमध्यभागे, शुक्रशोणितसमुदाय ओज इत्युच्यते, शरीरोपष्टम्भस्यापि प्रथमतस्तदेव हेतुः कारणमित्यर्थः, तस्य शरीरस्य स्वरूपं तु 'अट्ठारसपिट्ठकरंडयस्स' इत्याद्यनन्तरवक्ष्यमाणलक्षणमिति शेषः ॥ ६७ ॥ तदेवाह—'अट्ठे'त्यादिगाथाद्वयं, देहे—मनुष्यशरीरे पृष्ठकरण्डकस्य—पृष्ठवंशस्याष्टादश ग्रन्थिरूपाः संधयो भवन्ति, यथा वंशस्य पर्वाणि,

तेषु चाष्टादशसु सन्धिषु मध्ये द्वादशभ्यः सन्धिभ्यो द्वादश पंशुलिका निर्गत्योभयपार्श्वावावृत्त्य वक्षःस्थलमध्योर्द्ध्ववर्त्यस्थि लगित्वा पञ्जकाकारतया परिणमन्ति, अत आह—इह शरीरे द्वादश पंशुलिकारूपाः करण्डका—वंशका भवन्ति, 'तह छपुंसुलिए होइ कडाहे'त्ति तथा तस्मिन्नेव पृष्ठवंशे शेषषट्संधिभ्यः षट् पांशुलिका निर्गत्य पार्श्वद्वयं चावृत्त्य हृदयस्योभयतो वक्षःपञ्जरादधस्ताद् शिथिलकुक्षितस्तूपरिष्टात्परस्परासंमिलितास्तिष्ठन्ति, अयं च कटाह इत्युच्यते, जिह्वा—मुखाभ्यन्तर्वर्तिमांसखण्डरूपा दैर्घ्येणात्माङ्गुलतः सप्ताङ्गुलप्रमाणा भवति, तौल्ये तु मगधदेशप्रसिद्धेन पलेन चत्वारि पलानि भवन्ति, अक्षिमांसगोलकौ तु द्वे पले, शिरस्तु अस्थिखण्डरूपैश्चतुर्भिः कपालैर्निष्पद्यते इति ॥ ६८ ॥ ६९ ॥ तथा 'अड्डुट्ठे'त्यादि, हृदयान्तर्वर्तिमांसखण्डं सार्धपलत्रयं भवति, द्वात्रिंशच्च मुखे दन्ता—अस्थिखण्डरूपाः प्रायः प्राप्यन्ते, कालेयजं तु—वक्षोऽन्तर्गूढमांसविशेषरूपं पञ्चविंशतिपलान्यागमे निर्दिष्टं ॥ ७० ॥ तथा—'अंताइं' इत्यादि, इह शरीरे द्वे अन्त्रे भवतः, प्रत्येकं पञ्चपञ्चवामप्रमाणे, तथा संधयः—अङ्गुल्याद्यस्थिखण्डमेलापकस्थानानि तेषां षष्ट्यधिकं शतं भवन्ति, मर्माणि—सक्थ्याणिकाविरकादीनि, तेषां तु सप्ताधिकं शतं भवति ॥ ७१ ॥ अथ पुरुषशरीरे शिरासङ्ख्यामाह—'सट्ठिसय'मित्यादिगाथासप्तकं; इह पुरुषस्य शरीरे नाभिप्रभवाणि शिराणां—स्नसानां सप्त शतानि भवन्ति, तत्र षष्ट्यधिकं शतं शिराणां नाभेः शिरसि गच्छति, ताश्च रसहरणीनामधेयाः, रसो ह्रियते—विकीर्यते यकाभिरितिकृत्वा, यासां चानुग्रहविघातयोः सतोर्यथासङ्ख्यं श्रोत्रचक्षुर्घ्राणजिह्वानामनुग्रहो विघातश्च भवति, तथा अन्यासामप्यधोगामिनीनां पादतलमुपगतानामनुपघाते जङ्घाबलकारिणीनां स्नसानां षष्ट्यधिकं शतं भवति, उपघाते तु ता एव शिरोवेदनाऽन्धत्वादीनि कुर्वन्ति, तथाऽपरासां गुदप्रविष्टानां शिराणां षष्ट्यधिकं शतं भवति, यासां बलेन वायुर्मूत्रं पुरीषं च प्राणिनां प्रवर्तते, एतासां च विघातेऽर्शांसि पाण्डुरोगो वेगनिरोधश्च भवति, तथा अपरासां तिर्यग्गामिनीनां

शिराः शिराणां पञ्चविंशतिः तथाऽन्याः कुर्वन्ति, उपघाते च सति कुक्षिउदरवेदनाः पञ्चधिकं शतं भवति, ताः पुनर्बाहुबलकारिण्यः, इत्येवं नाभिप्रभवाणि श्लेष्मधारिण्यो भवन्ति, तथा पित्तधारिण्योऽपि पञ्चविंशतिः शिराः, दश च शिराः शुक्राख्यसप्तमधातुधारिण्यः, इत्येवं नाभिप्रभवाणि सप्तशिराशतानि पुरुषस्य शरीरे भवन्ति ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ अथ स्त्रीनपुंसकयोः कियन्त्य एता भवन्तीत्याशङ्क्याह—'तीसूणाइं' इत्यादिगाथाचतुष्कं, त्रिंशता न्यूनानि स्त्रीणां सप्त शिराशतानि भवन्ति, विंशत्या च हीनानि सप्त शतानि शिराणां भवन्ति षण्ढस्य—नपुंसकस्य, तथा स्नायूनाम्—अस्थिबन्धनशिराणां शतानि नव च धमन्यो रसवहा—नाड्यो देहे ॥ ७९ ॥ तथा सर्वस्मिन्नपि देहे नवनवतिर्लक्षा रोमकूपाणां भवन्ति, रोम्णां—तनूरुहाणां कूपा इव कूपा रोमकूपा—रोमरन्ध्राणीत्यर्थः, एतच्च संख्यानं श्मश्रुकेशैर्विनाऽवसेयं, तैस्तु सह सार्धास्तिस्रः कोट्यो रोमकूपानां जायन्ते, तत्र श्मश्रूणि—कूर्चकचाः, केशास्तु—शिरोरुहा इति ॥८०॥ शरीरे सर्वदैव मूत्रस्य शोणितस्य च प्रत्येकमवस्थितमाढकं मगधदेशप्रसिद्धमानविशेषरूपं भणन्ति, उक्तं च—"दो असईओ पसई, दो पसइओ सेइया, चत्तारि सेइयाउ कुलओ, चत्तारि कुडवा पत्थो, चत्तारि पत्था आढयं, चत्तारि आढया दोणो" इत्यादि, धान्यभृतोऽवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते, वसायास्त्वर्धाढकं भणन्ति, मस्तकभेज्जको मस्तुलुङ्गवस्तु, अन्ये त्वाहुः—मेदपिप्पिसादि मस्तुलुङ्गं, तस्यापि प्रस्थं यथोक्तरूपं वदन्ति ॥ ८१ ॥ अशुचिरूपो योऽसौ मलस्तस्य प्रस्थषट्कं भवति, पित्तश्लेष्मणोः प्रत्येकं यथानिर्दिष्टस्वरूपः कुलवो भवति, शुक्रस्त्वर्धकुलवः, एतच्चाढकप्रस्थादिकं मानं बालकुमारतरुणादीनां 'दो असइओ पसई'त्यादिक्रमेणात्मीयात्मीयहस्तेनानेतव्यं, उक्तमानाच्च शुक्रशोणितादेर्यत्र हीनाधिक्यं भवति तत्र वातादिदूषितत्वेनेति ज्ञेयं ॥ ८१ ॥ अथ श्रोत्राणि शरीरे यावन्ति भवन्ति तावन्त्युपदर्श्योपसंहरति—'एक्कारसे'त्यादि, द्वौ कर्णौ द्वे चक्षुषी द्वे घ्राणे मुखं स्तनौ पायुरुपस्थश्चेत्येवमेकादश श्रोत्राणि

स्त्रियो भवन्ति, स्तनवर्जानि शेषाणि नव पुरुषस्य, एतच्च मनुजगतिमाश्रित्य प्रोक्तं, तिर्यग्गतौ तु अजादीनां द्विस्तनीनामेकादश श्रोत्राणि, गवादीनां चतुःस्तनीनां त्रयोदश, सूकर्यादीनामष्टस्तनीनां सप्तदश, निर्व्याघाते एवं, व्याघाते पुनरेकस्तन्या अजाया दश, त्रिस्तन्याश्च गोर्द्वादशेति, इत्येवमस्थ्यादिसंघातरूपे शरीरे किं नाम स्वरूपतः शुचित्वं ?, न किञ्चिदित्यर्थः ॥ २४८ ॥ ८३ ॥ इदानीं 'सम्मत्ताईणुत्तमगुणाण लाहंतरं तु उक्कोसं' इत्येकोनपञ्चाशदधिकद्विशततमं द्वारमाह—

**सम्मत्तंमि य लद्धे पलियपुहुत्तेण सावओ होइ । चरणोवसमखयाणं सायरसंखंतरा हुंति ॥ ८४ ॥**

यावत्यां कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात्पल्योपमपृथक्त्वलक्षणे स्थितिखण्डे क्षपिते श्रावको—देशविरतो भवेत्, ततश्चरणोपशमक्षयाणामन्तरा संख्यातानि सागरोपमाणि भवन्ति, इयमत्र भावना—देशविरतिप्राप्त्यनन्तरं संख्यातेषु सागरोपमेषु क्षपितेषु चारित्रमवाप्नोति, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषूपशमश्रेणिं प्रतिपद्यते, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु क्षपकश्रेणिर्भवति, ततस्तद्भवे मोक्ष इति, एवमप्रतिपतितसम्यक्त्वस्य देवमनुष्यजन्मसु संसरणं कुर्वतोऽन्योऽन्यमनुष्यभवे देशविरत्यादिलाभो भवति, यदिवा तीव्रशुभपरिणामवशात्क्षपितबहुकर्मस्थितेरेकस्मिन्नपि भवेऽन्यतरश्रेणिवर्ज्यान्येतानि सर्वाण्यपि भवन्ति, श्रेणिद्वयं त्वेकस्मिन् भवे सैद्धान्तिकाभिप्रायेण न भवत्येव, किंत्वेकैवोपशमश्रेणिः क्षपकश्रेणिर्वा भवतीति, उक्तं च—"एवं अप्परिवडिए सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं ॥१॥" [एवमप्रतिपतिते सम्यक्त्वे देवमनुजजन्मसु अन्यतरश्रेणिवर्जानि एकभवेनैव सर्वाणि ॥१॥] ॥ २४९ ॥ ८४ ॥ इदानीं 'न लहंति माणुसत्तं सत्ता जेऽणंतरुवट्ट'त्ति पञ्चाशदधिकद्विशततमं द्वारमाह—

**सत्तममहिनेरइया तेऊ वाऊ अणंतरुवट्टा । न लहंति माणुसत्तं तहा असंखाउया सव्वे ॥ ८५ ॥**

सप्तमपृथिवीनैरयिकास्तैजसकायिका वायुकायिकास्तथा असङ्ख्यातवर्षायुषः सर्वे तिर्यङ्मनुष्याश्चानन्तरमुद्धृता मानुष्यं न लभन्ते, मृत्वाऽनन्तरभवे मनुजेषु नोत्पद्यन्ते इत्यर्थः, शेषास्तु सुरनरतिर्यग्नारका नरेषूत्पद्यन्ते ॥ २५० ॥ ८५ ॥ इदानीं 'पुव्वंगपरिमाणं'ति एकपञ्चाशदधिकद्विशततमं द्वारमाह—

**वरिसाणं लक्खेहिं चुलसीसंखेहिं होइ पुव्वंगं। एयं चिय एयगुणं जायइ पुव्वं तयं तु इमं ॥ ८६ ॥**

वर्षाणां लक्षैश्चतुरशीतिसङ्ख्यैर्भवति पूर्वाङ्गं—पूर्वाख्यस्य सङ्ख्याविशेषस्य कारणं, अनेनैवैतद्गुणेन तस्य जायमानत्वात्, तथा चाह—'एयं चिय' इत्यादि, एतदेव—पूर्वाङ्गं चतुरशीतिवर्षलक्षलक्षणं एतद्गुणं—चतुरशीतिलक्षैर्गुणितं सञ्जायते पूर्वं, तत्पुनरिदं—अनन्तरद्वारे वक्ष्यमाणस्वरूपमिति ॥ २५१ ॥ ८६ ॥ साम्प्रतं 'माणं पुव्वस्स'त्ति द्विपञ्चाशदधिकद्विशततमं द्वारमाह—

**पुव्वस्स उ परिमाणं सयरिं खलु वासकोडिलक्खाओ। छप्पन्नं च सहस्सा बोद्धव्वा वासकोडीणं ॥ १ ॥ ८७ ॥**

पूर्वाभिधानस्य सङ्ख्याविशेषस्य परिमाणं वर्षकोटीनां सप्ततिः कोटिलक्षाः षट्पञ्चाशत् सहस्राणि, ७०५६०००००००००० । ॥ २५२ ॥ ८७ ॥ इदानीं 'लवणसिहमाणं'ति त्रिपञ्चाशदधिकद्विशततमं द्वारमाह—

**दसजोयणाण सहसा लवणसिहा चक्कवालओ रुंदा। सोलससहस्स उच्चा सहस्समेगं तु ओगाढा ॥ २ ॥ ८८ ॥**

लवणसमुद्रे योजनलक्षद्वयविष्कम्भे मध्यमेषु दशसु योजनसहस्रेषु नगरप्राकार इव जलमूर्ध्वं गतं, तस्योत्सेधवृद्धिः शिखेव शिखा, ततो लवणस्य शिखा लवणशिखा, सा दशयोजनानां सहस्राणि चक्रवालतो रुन्द्रा—रथचक्रवद्विस्तीर्णा, भूतलसमजलपट्टादूर्ध्वं षोडशयोजनसहस्राण्युच्चा एकं तु सहस्रमधोऽवगाढा, इयमत्र भावना—लवणसमुद्रे जम्बूद्वीपाद्धातकीखण्डद्वीपाच्च प्रत्येकं पञ्चनवतिपञ्चनवतियोजनसह-

स्राणि गोतीर्थं, गोतीर्थं नाम तडागादिष्विव प्रवेशमार्गरूपो नीचो नीचतरो भूप्रदेशो, गोतीर्थमिव गोतीर्थमिति व्युत्पत्तेः, मध्यभागावगा-
हस्तु दशयोजनसहस्रप्रमाणविस्तारः, गोतीर्थं च जम्बूद्वीपवेदिकान्तसमीपे धातकीखण्डवेदिकान्तसमीपे चाङ्गुलासङ्ख्येयभागः, ततः परं
समतलाद् भूभागादारभ्य क्रमेण प्रदेशहान्या तावन्नीचत्वं नीचतरत्वं परिभावनीयं यावत्पञ्चनवतियोजनसहस्राणि, पञ्चनवतियोजनस-
हस्रपर्यन्ते च समतलं भूभागमपेक्ष्य उण्डत्वं योजनसहस्रमेकं, तथा जम्बूद्वीपवेदिकातो धातकीखण्डद्वीपवेदिकातश्च समतले भूभागे
प्रथमतो जलवृद्धिरङ्गुलसङ्ख्येयभागः, ततः समतलभूभागमेवाधिकृत्य प्रदेशवृद्ध्या जलराशिः क्रमेण परिवर्धमानः परिवर्धमानः तावत्प-
रिभावनीय यावदुभयतोऽपि पञ्चनवतियोजनसहस्राणि, पञ्चनवतियोजनसहस्रपर्यन्ते चोभयतोऽपि समभूभागमपेक्ष्य जलवृद्धिः सप्त
योजनशतानि, किमुक्तं भवति ?—तत्र प्रदेशे समभूभागमपेक्ष्यावगाहो योजनसहस्रं, तदुपरि जलवृद्धिः सप्त योजनशतानीति, ततः
परं मध्ये भूभागे दशयोजनसहस्रविस्तारेऽवगाहो योजनसहस्रं जलवृद्धिः षोडश योजनसहस्राणि, पातालकलशगतवायुक्षोभे च तेषामु-
परि अहोरात्रमध्ये द्वौ वारौ किञ्चिन्न्यूने द्वे गव्यूते उदकमतिरेकेण परिवर्धते पातालकलशगतवायूपशान्तौ च हीयते ॥ २५३ ॥ ८८ ॥

इदानीं 'उस्सेहंगुलआयंगुलपमाणंगुलपमाणं'ति चतुःपञ्चाशदधिकद्विशततमं द्वारमाह—

**उस्सेहंगुल १ मायंगुलं च २ तइयं पमाणनामं च ३ । इय तिन्नि अंगुलाइं वावारिज्जंति समयंमि**
**॥ ८९ ॥ सत्थेण सुतिक्खेणवि छेत्तुं भेत्तुं च जं किर न सक्का । तं परमाणुं सिद्धा वयंति**
**आइं पमाणाणं ॥ ९० ॥ परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो**
**अट्ठगुणविवड्ढिया कमसो ॥ ९१ ॥ वीसंपरमाणुलक्खा सत्तानउई भवे सहस्साइं । सयमेगं**

वावन्नं एगंमि उ अंगुले हुंति ॥ ९२ ॥ परमाणू इच्चाइक्कमेण उस्सेहअंगुलं भणियं । जं पुण आयंगुलमेरिसेण तं भासियं विहिणा ॥ ९३ ॥ जे जंमि जुगे पुरिसा अट्ठसयंगुलसमूसिया हुंति । तेसिं जं नियमंगुलमायंगुलमेत्थ तं होइ ॥ ९४ ॥ जे पुण एयपमाणा ऊणा अहिगा व तेसिमेयं तु । आयंगुलं न भन्नइ किंतु तदाभासमेवत्ति ॥ ९५ ॥ उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुणं । उस्सेहंगुलदुगुणं वीरस्सायंगुलं भणियं ॥ ९६ ॥ आयंगुलेण वत्थुं उस्सेहपमाणओ मिणसु देहं । नगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥ ९७ ॥

अगि रगीत्यादिदण्डके अगिर्गत्यर्थो धातुः, गत्यर्थाश्च ज्ञानार्था अपि भवन्त्यतोऽग्यन्ते—प्रमाणतो ज्ञायन्ते पदार्था अनेनेत्यङ्गुलं—मानविशेषः, तच्च त्रिविधं, तद्यथा—आद्यमुत्सेधाङ्गुलं द्वितीयमात्माङ्गुलं तृतीयं च प्रमाणाङ्गुलनामकं, इत्येतानि त्रीण्यङ्गुलानि समये—सिद्धान्ते तत्तद्वस्तुमानविषयतया व्यापार्यन्ते, तानि च वस्तूनि यथायथमेभिर्मीयन्ते इत्यर्थः ॥ ८९ ॥ नन्वमीषामङ्गुलानां मध्ये उत्सेधाङ्गुलं तावत् किंप्रमाणं भवतीत्याशङ्क्य तत्प्रमाणनिष्पत्तिक्रमनिरूपणार्थमाह—'सत्थेणे'त्यादि, शस्त्रेण—खड्गादिना सुतीक्ष्णेनापि छेत्तुं—द्विधाकर्तुं भेत्तुं वा—खंडशो विदारयितुं सच्छिद्रं वा कर्तुं यं पुद्गलविशेषं न शक्ताः पुमांसस्तं परमाणुं घटाद्यपेक्षयाऽतिसूक्ष्मं सिद्धाः—सैद्धान्तिकतया प्रसिद्धा यद्वा ज्ञानप्रसिद्धाः केवलिनः, न तु मुक्तिप्राप्ताः, तेषां शरीराद्यभावेन वचनस्यासंभवात्, वदन्ति—ब्रुवते प्रमाणानां—अङ्गुलहस्तादीनामादिं—मूलं, किलशब्देन चेदं सूच्यते—लक्षणमेवेदं परमाणोः, न पुनस्तं छेत्तुं भेत्तुं वा कोऽप्यारभते, अतिश्लक्ष्णत्वेन छेदनभेदनाविषयत्वात्प्रयोजनाभावाच्चेति, अयं चेह व्यवहारनयमतेनैव परमाणुत्वेनोच्यते, यावताऽनन्ताणुकस्कन्ध एवासौ, केवलं सूक्ष्मप-

रिणामापन्नत्वेन चक्षुर्ग्रहणच्छेदनभेदनाद्यविषयत्वात्सूक्ष्मत्वमपि व्यवहारनयः परमाणुं मन्यत इतीह परमाणुत्वेनोपन्यस्त इति ॥ ११ ॥ उक्तं परमाणुस्वरूपं, इदानीं तदुपरिवर्तिनः उत्सेधाङ्गुलनिष्पत्तिकारणभूतानन्यानपि परिमाणविशेषानाह—'परमाणू' इत्यादि, इह परमाणोरनन्तरं उपलक्षणस्य व्याख्यानादुच्छ्लक्ष्णश्लक्ष्णिकादीनि त्रीणि पदानि गाथायामनुक्तान्यपि द्रष्टव्यानि, अनुयोगद्वारादिषु तथैवाभिधानाद्युक्तिसंगतत्वाच्च, ततश्चानन्तैः परमाणुभिरेकस्या उच्छ्लक्ष्णश्लक्ष्णिकाया आगमेऽभिधानात्परमाणुं वर्जयित्वा सर्वेऽप्येते उच्छ्लक्ष्णश्लक्ष्णिकाश्लक्ष्णश्लक्ष्णिकोर्ध्वरेणुत्रसरेणुरथरेण्वादयो यवपर्यन्ताः परिमाणविशेषा यथोत्तरमष्टगुणाः क्रमेण ज्ञातव्याः, तत उत्सेधाङ्गुलं निष्पद्यते, इयमत्र भावना—पूर्वोक्तव्यावहारिकपरमाणवोऽनन्ता मिलिताः सन्त एका उच्छ्लक्ष्णश्लक्ष्णिका भवति, अतिशयेन श्लक्ष्णा—श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका उत्तरप्रमाणापेक्षया उत्—प्राबल्येन श्लक्ष्णश्लक्ष्णिका उच्छ्लक्ष्णश्लक्ष्णिका, अष्टाभिरुच्छ्लक्ष्णश्लक्ष्णिकाभिरेका श्लक्ष्णश्लक्ष्णिका, प्राक्तनप्रमाणापेक्षयाऽष्टगुणत्वात् ऊर्ध्वरेण्वपेक्षया चाष्टमभागवर्तित्वात्, अष्टाभिः श्लक्ष्णश्लक्ष्णिकाभिरेक ऊर्ध्वरेणुः, जालप्रभाऽभिव्यङ्ग्यः स्वतः परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्मा रेणुरूर्ध्वरेणुः, अष्टभिरूर्ध्वरेणुभिरेकस्त्रसरेणुः, त्रस्यति—पूर्वादिवातप्रेरितो गच्छति यो रेणुः स त्रसरेणुः, अष्टभिस्त्रसरेणुभिरेको रथरेणुः, रथगमनोत्खातो रेणू रथरेणुः, पूर्वः पौरस्त्यादिवातेषु चलति अयं तु तत्सद्भावेऽपि रथचक्राद्युत्खननमन्तरेण न चलतीत्यस्मात्पूर्वोऽल्पप्रमाणः, इह च कासु सूत्रादर्शेषु 'परमाणू रहरेणू तसरेणू' इत्यादिरेव पाठो दृश्यते, स चासङ्गत एव लक्ष्यते, रथरेणुमाश्रित्य त्रसरेणोरष्टगुणत्वानुपपत्तेः, उक्तन्यायेन विपर्ययस्यैव घटनादिति, यदपि संग्रहिण्यां 'परमाणू रहरेणू तसरेणू' इत्यादिरेव पाठो दृष्ट इत्युच्यते तत्रापि समानः पन्थाः, तस्यापि घटमानकत्वस्य चिन्त्यत्वादागमेन सह विरोधाद्युक्त्यसंगतत्वाच्चेति, अष्टभी रथरेणुभिर्देवकुरूत्तरकुरुमनुष्याणां संबंधि एकं वालाग्रं भवति, तैरष्टभिर्हरिव-

र्यरम्यकमनुष्यवालाग्रं भवति तैरष्टभिर्हैमवतैरण्यवतमनुष्यवालाग्रं तैरष्टभिः पूर्वविदेहापरविदेहमनुष्यवालाग्रं तैरष्टमिर्भरतैरवतमनुष्यवालाग्रं, इह चैवं वालाग्राणां भेदे सत्यपि वालाग्रजातिसामान्यविवक्षया वालाग्रमिति सामान्येनैकमेव सूत्रे निर्दिष्टमिति, अष्टमिर्भरतैरवतमनुष्यवालाग्रैरेका प्रतीतस्वरूपैव लिक्षा जायते, तामिरष्टामिरेका यूका, तामिरप्यष्टाभिर्यवशब्दसूचितमेकं यवमध्यं, अष्टमिर्यवमध्यैरेकमुत्सेधाङ्गुलं निष्पद्यत इति, इत ऊर्ध्वं सूत्रानुक्तमप्युपयोगित्वादुच्यते—एतानि षडङ्गुलान्यङ्गुलषट्कविस्तीर्णः पादस्य मध्यतलप्रदेशः पादैकदेशत्वात्पादो भवति, द्वौ च युग्मीकृतावेतौ पादौ द्वादशाङ्गुलप्रमाणा वितस्तिः, द्वे वितस्ती हस्तः, चत्वारो हस्ता धनुः, द्वौ धनुःसहस्रौ गव्यूतं, चत्वारि गव्यूतानि योजनमिति, उक्तं च—"अट्ठेव य जवमज्झाणि अंगुलं छच्च अंगुला पाओ। पाया य दो विहत्थी दो य विहत्थी भवे हत्थो ॥ १ ॥ चउहत्थं पुण धणुहं दुन्नि सहस्साइं गाउयं तेसिं। चत्तारि गाउया पुण जोयणमेगं मुणेयव्वं ॥ २ ॥" ॥ ९१ ॥ अथैकस्मिन्नुत्सेधाङ्गुले कियन्तः परमाणवो भवन्तीत्येतदाशङ्क्याह—'वीसे'त्यादि, विंशतिर्लक्षाः परमाणूनां सप्तनवतिसहस्राणि शतं चैकं द्विपञ्चाशदधिकं एकस्मिन्नुत्सेधाङ्गुले एतावन्तः परमाणवो भवन्ति, इयं च संख्या 'परमाणू तसरेणू' इत्यादिगाथायां साक्षादुपात्तानेव परमाणुविशेषानाश्रित्य द्रष्टव्या, उपलक्षणव्याख्यानलब्धोच्छ्लक्ष्णश्लक्ष्णिकादित्रयापेक्षया पुनरतिभूयसी परमाणुसंख्या संपद्यत इति ॥ ९२ ॥ अथोत्सेधाङ्गुलोपसंहारपूर्वमात्माङ्गुलं संबन्धयन्नाह—'परमाणु' इत्यादि, परमाण्वादिक्रमेण भणितं प्रथममुत्सेधाङ्गुलं, उत्सेधो—देवादिशरीराणामुच्चत्वं तन्निर्णयकर्तृकत्वेन तद्विषयमङ्गुलमुत्सेधाङ्गुलं, यद्वा उत्सेधो 'अणंताणं सुहुमपरमाणुपुग्गलाणं समुदयसमिइसमागमेणं एगे ववहारपरमाणू' इत्यादिक्रमेणोच्छ्रयो—वृद्धिस्तस्माज्जातमङ्गुलमुत्सेधाङ्गुलं, यत्पुनरात्माङ्गुलं पूर्वमुद्दिष्टं तदीदृशेन—वक्ष्यमाणस्वरूपेण विधिना—प्रकारेण भाषितं—प्रतिपादितं तीर्थकृद्गणधरैः ॥ ९३ ॥ तमेव विधिमाह—'जे जंमी' त्यादि, ये

पुरुषाः—चक्रवर्तिवासुदेवादयो यस्मिन् युगे—सुषमदुष्षमादिकाले निजाङ्गुलेनैवाष्टोत्तरं शतमङ्गुलानामुच्छ्रिता—उच्चा भवन्ति तेषां च स्वकीयाङ्गुलेनाष्टोत्तराङ्गुलशतोच्चानां पुरुषाणां यन्निजं—आत्मीयमङ्गुलं तत्पुनरात्माङ्गुलं भवति, इह च ये यस्मिन् काले प्रमाणयुक्ताः पुरुषा भवन्ति तेषां संबन्धी आत्मा गृह्यते तत आत्मनोऽङ्गुलमात्माङ्गुलं ॥९४॥ इदं च पुरुषाणां कालादिभेदेनानवस्थितमानत्वादनियतप्रमाणं द्रष्टव्यं । 'जे पुणे' त्यादि, ये पुनः पुरुषा एतस्मादष्टोत्तराङ्गुलशतलक्षणात्प्रमाणान्न्यूनाः समधिका वा तेषां संबन्धि यदङ्गुलमेतदात्माङ्गुलं न भण्यते, किंतु तदाभासमेव—आत्माङ्गुलाभासमेव, परमार्थत आत्माङ्गुलं तन्न भवतीत्यर्थः, लक्षणशास्त्रोक्तस्वरादिशेषलक्षणवैकल्यसहायं च यथोक्तप्रमाणाद्धीनाधिक्यमिह प्रतिषिद्धं न केवलमिति संभाव्यते, भरतचक्रवर्त्यादीनां स्वाङ्गुलतो विंशत्यधिकाङ्गुलशतमानानामप्यत्र निर्णीतत्वान्महावीरादीनां च केषाञ्चिन्मतेन चतुरशीत्याद्यङ्गुलप्रमाणत्वादिति ॥ ९५ ॥ साम्प्रतं क्रमसंप्राप्तं प्रमाणाङ्गुलमाह—'उस्सेहंगुले' त्यादि, उत्सेधाङ्गुलं—अनन्तरोक्तस्वरूपं सहस्रगुणं सदेकं प्रमाणाङ्गुलं भवति, परमं—प्रकर्षरूपं प्रमाणं प्राप्तमङ्गुलं प्रमाणाङ्गुलं, नातः परं बृहत्तरमङ्गुलमस्तीति भावः, यदिवा समस्तलोकव्यवहारराज्यादिस्थितिप्रथमप्रणेतृत्वेन प्रमाणभूतोऽस्मिन्नवसर्पिणीकाले तावद्युगादिदेवो भरतचक्रवर्ती वा तस्य प्रमाणभूतपुरुषस्याङ्गुलं प्रमाणाङ्गुलं, तच्च भरतचक्रवर्तिन आत्मांगुलं, तदा आत्माङ्गुलस्य प्रमाणाङ्गुलस्य च तुल्यत्वात्, ननु यदि भरतचक्रिणः संबन्ध्यङ्गुलं प्रमाणाङ्गुलमित्युच्यते एवं सत्युत्सेधाङ्गुलात्प्रमाणाङ्गुलं चतुःशतगुणमेव स्यात्, न सहस्रगुणं, तथाहि—भरतचक्रवर्ती आत्मीयाङ्गुलेन किल विंशं शतमङ्गुलानामनुयोगद्वारचूर्ण्यादिषु निर्णीतः, उत्सेधाङ्गुलेन तु पञ्चधनुःशतमानत्वात् प्रतिधनुश्च षण्णवत्यङ्गुलसद्भावादष्टचत्वारिंशत्सहस्राण्यङ्गुलानामसौ संपद्यते, एवं च सत्येकस्मिन् प्रमाणाङ्गुले उत्सेधाङ्गुलानां चत्वार्येव शतानि भवन्ति, विंशत्यधिकशतेन प्रमाणाङ्गुलानामष्टचत्वारिंशत्सहस्रसंख्यस्योत्सेधाङ्गुलराशेर्भागापहारे एता-

वत एव लाभात्, ततश्चैवं भरतसंबन्ध्यङ्गुललक्षणं प्रमाणाङ्गुलमुत्सेधाङ्गुलाच्चतुःशतगुणमेव स्यात् न सहस्रगुणमिति, सत्यमुक्तं, किंतु
प्रमाणाङ्गुलस्यार्धतृतीयोत्सेधाङ्गुलरूपं पृथुत्वमस्ति, ततो यदा स्वकीयपृथुत्वेन युक्तं यथावस्थितमेवेदं चिन्त्यते तदोत्सेधाङ्गुलात्प्रमाणा-
ङ्गुलं चतुःशतगुणमेव भवति, यदा त्वर्धतृतीयोत्सेधाङ्गुललक्षणेन विष्कम्भेण शतचतुष्टयलक्षणं प्रमाणाङ्गुलदैर्घ्यं गुण्यते तदोत्सेधाङ्गु-
लविष्कम्भा सहस्राङ्गुलदीर्घा च प्रमाणाङ्गुलसूचिर्जायते, इदमुक्तं भवति—अर्धतृतीयोत्सेधाङ्गुलविष्कम्भे प्रमाणाङ्गुले तिस्रः श्रेणयः
कल्प्यन्ते, प्रथमा उत्सेधाङ्गुलेनैकाङ्गुलविष्कम्भा शतचतुष्टयदीर्घा द्वितीयापि तावन्मानैव तृतीयापि दैर्घ्येण चतुःशतमानैव विष्कम्भ-
तस्त्वर्धाङ्गुलप्रमाणा, ततश्चैतस्या दैर्घ्याच्छतद्वयं गृहीत्वा विष्कम्भोऽङ्गुलप्रमाणः संपाद्यते, तथा च सत्यङ्गुलशतद्वयदीर्घा अङ्गुलविष्कम्भा
इयमपि सिद्धा, ततस्तिसृणामप्येतासामुपर्युपरि व्यवस्थापने उत्सेधाङ्गुलेनाङ्गुलसहस्रदीर्घा अङ्गुलविष्कम्भा प्रमाणाङ्गुलस्य सूचिः सिद्धा
भवति, तत इमां सूचिमधिकृत्य उत्सेधाङ्गुलात्प्रमाणाङ्गुलं सहस्रगुणदीर्घमुक्तं, वस्तुतस्तु चतुःशतगुणदीर्घमेव, अत एव पृथ्वीपर्वतद्वी-
पपयोराशिविमानादिमानान्यनेनैव चतुःशतगुणेनार्धतृतीयाङ्गुललक्षणस्वविष्कम्भान्वितेनानीयन्ते न तु सहस्रगुणया अङ्गुलविष्कम्भया
सूच्या इति तावद् वृद्धसम्प्रदायादवगतं, तत्त्वं तु केवलिनो विदन्तीति । तथा तदेवोत्सेधाङ्गुलं द्विगुणं सद् वीरस्य भगवतोऽपश्चिमतीर्थ-
कृत एकमात्माङ्गुलं भणितं पूर्वाचार्यैः, वर्धमानस्वामी हि भगवान् आदेशान्तरादात्माङ्गुलेन चतुरशीतिरङ्गुलानि, उत्सेधाङ्गुलतस्तु सप्तहस्त-
मानत्वादष्टपष्ट्यधिकं शतं, तथा चानुयोगद्वारचूर्णिः—"वीरो आएसंतरओ आयंगुलेण चुलसीइअंगुलमुव्विद्धो उत्सेहंगुलओ सयमट्ठ-
सट्ठं हवइ" इति, ततो द्वे उत्सेधाङ्गुले वीरस्यैकमात्माङ्गुलं भवति, अत्र च मतान्तराण्यधिकृत्य वहु वक्तव्यं तच्च नोच्यते ग्रन्थगौरव-
भयात् । इदं च त्रिविधमप्यङ्गुलं पुनः प्रत्येकं त्रिधा भवति, तद्यथा—सूच्यङ्गुलं प्रतराङ्गुलं घनाङ्गुलं च, तत्र दैर्घ्येणाङ्गुलायता वाहल्य-

तस्त्वेकप्रादेशिकी नभःप्रदेशश्रेणिः सूच्यङ्गुलमुच्यते, एतच्च सद्भावतोऽसंख्येयप्रदेशमप्यसत्कल्पनया सूच्याकारव्यवस्थापितप्रदेशत्रयनिष्पन्नं द्रष्टव्यं, स्थापना चेयं ०००, सूची सूच्यैव गुणिता प्रतराङ्गुलं, इदमपि परमार्थतोऽसंख्येयप्रदेशात्मकं असद्भावतस्त्वेषैवानन्तरदर्शिता त्रिप्रदेशात्मिका सूचिः तयैव गुण्यते, अतः प्रत्येकं प्रदेशत्रयनिष्पन्नसूचीत्रयात्मकं नवप्रदेशसंख्यं संपद्यते, स्थापना चेयं ⁝⁝⁝, प्रतरश्च सूच्या गुणितो दैर्घ्यविष्कम्भबाहल्येषु समसंख्यं घनाङ्गुलं भवति, दैर्घ्यादिषु त्रिष्वपि स्थानेषु समतालक्षणस्यैव समयचर्यया घनस्येह रूढत्वात्, प्रतराङ्गुलं तु दैर्घ्यविष्कम्भाभ्यामेव प्रदेशैः समं पिण्डतस्तस्य तत्रैकप्रदेशमात्रत्वादिति भावः, इदमपि सद्भावतो दैर्घ्यविष्कम्भ-बाहल्येषु प्रत्येकमसंख्येयमानमसत्प्ररूपणया तु सप्तविंशतिप्रदेशात्मकं, पूर्वोक्तत्रिपदेशात्मकसूच्याऽनन्तरप्रदर्शिते नवप्रदेशात्मके प्रतरे गुणिते एतावतामेव प्रदेशानां भावात्, एषां च स्थापनानन्तरनिर्दिष्टनवप्रदेशात्मकप्रतरस्याध उपरि च नव नव प्रदेशान् दत्त्वा भावनीया, तथा च सत्यायामविष्कम्भपिण्डैस्तुल्यविषयमापद्यत इति ॥ ९६ ॥ अथ येनाङ्गुलेन यन्मीयते तदाह—'आय' मित्यादि, आत्माङ्गुलेन वास्तु मिमीष्व, तच्च वास्तु त्रिधा—खातमुच्छ्रितमुभयं च, तत्र खातं—कूपभूमिगृहतडागादि उच्छ्रितं—धवलगृहादि उभयं—भूमिगृहादियुक्तं धवलगृहादि, तथा देहं—देवादीनां शरीरमुत्सेधप्रमाणतः—उत्सेधाङ्गुलेन मिमीष्व, प्रमाणाङ्गुलेन पुनर्नगपृथ्वीविमानादीनि मिमीष्व, तत्र नगा—मेर्वाद्याः पृथिव्यो—घर्माद्याः विमानानि—सौधर्मावतंसकादीनि, आदिशब्दाद्भवननरकावासद्वीपसमुद्राद्यपि प्रमाणाङ्गुलेन मिमीष्वेति २५४ ॥ ९७ ॥ इदानीं 'तमकायसरूवं'ति पञ्चपञ्चाशदधिकद्विशततमं द्वारमाह—

**जंबूदीवाउ असंखेज्जइमा अरुणवरसमुद्दाओ । बायालीससहस्से जगईउ जलं विलंघेउं ॥ ९८ ॥**
**समसेणीए सतरस एक्कवीसाइं जोयणसयाइं । उल्लसिओ तमरूवो वलयागारो अउक्काओ**

॥ ९९ ॥ तिरिय पवित्थरमाणो आवरयंतो सुरालयचउक्कं । पंचमकप्पे रिट्ठंमि पत्थडे चउदिसिं मिलिओ ॥ १४०० ॥ हेट्ठा मल्लयमूलट्ठिइट्ठिओ उवरि बंभलोयं जा । कुक्कुडपंजरगागारसंठिओ सो तमक्काओ॥ १ ॥ दुविहो से विक्खंभो संखेज्जो अत्थि तह असंखेज्जो । पढमंमिवि विक्खंभो संखेज्जा जोयणसहस्सा ॥ २ ॥ परिहीएँ ते असंखा बीए विक्खंभपरिहिजोएहिं । हुंति असंखसहस्सा नवरमिमं होइ वित्थारो ॥ ३ ॥

जम्बूद्वीपादसङ्ख्येयतमो योऽसावरुणवरसमुद्रस्तमाश्रित्य द्विचत्वारिंशद्योजनसहस्राणि जगत्या जलं विलङ्घ्य समश्रेण्या—सममित्तितया एकविंशत्यधिकानि सप्तदश योजनशतानि यावद्वलयाकारस्तमोरूपो देवानामपि तत्रोद्योताभावेन महान्धकारात्मकत्वादप्काय उल्लसितः, अयमर्थः—एतस्माज्जम्बूद्वीपात्तिर्यगसङ्ख्यातद्वीपसमुद्रान् व्यतिक्रम्यारुणवरनामा द्वीपः समस्ति, तद्वेदिकापर्यन्ताद् द्विचत्वारिंशद्योजनसहस्राण्यरुणवरं समुद्रमवगाह्यात्रान्तरे जलोपरितनतलादूर्ध्वमेकविंशत्युत्तराणि सप्तदश योजनशतानि यावत्सममित्त्याकारतया गत्वा वलयाकृतिरप्कायमयो महान्धकाररूपस्तमस्कायः समुल्लसित इति, अयं च तिर्यक्प्रविस्तरन् सुरालयचतुष्कं—सौधर्मेशानसनत्कुमारमाहेन्द्ररूपं देवलोकचतुष्टयमावृण्वन्—आच्छादयन्नूर्ध्वं तावद्गतो यावत् पञ्चमे ब्रह्मलोकनामके कल्पे तृतीयेऽरिष्ठविमानप्रस्तटे चतसृष्वपि दिक्षु मिलित इति ॥ ९८ ॥ ९९ ॥ १०० ॥ अथ तमस्कायस्य संस्थानमाह—'हेट्ठे' त्यादि, अधस्ताद्—अधोभागे मल्लकमूलस्थितिस्थितो—मल्लकं—शरावं तस्य मूलं—बुध्नं तस्य स्थितिः—संस्थानं तया स्थितो—व्यवस्थितः, शरावबुध्नाकार इति भावः, उपरिष्टाच्च ब्रह्मलोकं यावत् कुर्कुटपञ्जरकाकारसंस्थितः सः—पूर्वोक्तस्वरूपस्तमस्कायो भवति, तमसां—तमिस्रपुद्गलानां कायो—राशिस्तमस्काय इति ॥ १ ॥ अथास्य

तमस्कायस्य विष्कम्भं परिधिं च प्राह—'दुविहो' इत्यादिगाथाद्वयं, द्विविधो—द्विप्रकारः 'से'त्ति तस्य तमस्कायस्य विष्कम्भो—विस्तारो भवति—सङ्ख्यातस्तथा असङ्ख्यातश्च, तत्र प्रथमे विष्कम्भे आदित आरभ्य ऊर्ध्वं सङ्ख्येययोजनानि यावत्सङ्ख्येया योजनसहस्राः प्रमाणतो भवन्ति, परिधौ—परिक्षेपे पुनस्त एव योजनसहस्रा असङ्ख्याताः, अधस्तमस्कायस्य सङ्ख्यातयोजनविस्तृतत्वेऽप्यसङ्ख्याततमद्वीपपरिक्षेपतो बृहत्तरत्वात्तत्परिक्षेपस्यासङ्ख्यातयोजनसहस्रप्रमाणत्वमविरुद्धं, आन्तरबहिःपरिक्षेपविभागस्तु नोक्तः, उभयस्याप्यसङ्ख्याततया तुल्यत्वादिति। तथा द्वितीये विष्कम्भे विष्कम्भपरिधियोगाभ्यां—विष्कम्भेन परिधिना च प्रत्येकमसङ्ख्याता योजनसहस्रा भवन्ति, नवरं—केवलमिदमसङ्ख्यातयोजनसहस्ररूपं प्रमाणं विस्तारे भवति, वलयाकारादूर्ध्वं यदाऽसौ तमस्कायः क्रमेण विस्तरति तदानीमिदं प्रमाणमवसेयमिति भावः, अस्य च तमस्कायस्य महत्त्वमित्थमागमविदः प्रवेदयन्ति, यथा—यो देवो महर्द्धिको यया गत्या तिसृभिश्चपुटिकाभिरेकविंशतिवारान् सकलं जम्बूद्वीपमनुपरिवृत्त्यागच्छेत् स एव देवस्तयैव गत्या षड्भिरपि मासैः सङ्ख्यातयोजनविस्तारमेव तमस्कायं व्यतिव्रजेत् नेतरमिति, यदा च कश्चिद्देवः परदेव्यासेवाहेवाकपररत्नापहारादिभिरपराधमाधत्ते तदा बलवद्देवभयात् प्रपलाय्य देवानामपि भूरिभयाविर्भावकत्वेन गमनविघातहेतौ तस्मिंस्तमस्काये निलीयत इति ॥२५५॥२॥३॥ सम्प्रति 'अणंतछक्कं'ति षट्पञ्चाशदधिकद्विशततमं द्वारमाह—

**सिद्धा १ निगोयजीवा २ वणस्सई ३ काल ४ पोग्गला ५ चेव । सव्वमलोगागासं ६ छप्पेएऽणंतया नेया ॥ ४ ॥**

सर्वे एव सिद्धाः—अपगतसकलकर्मकलंकाः तथा सर्वेऽपि सूक्ष्मबादरभेदभिन्ना निगोदजीवा—अनन्तकायिकजन्तवः तथा सर्वे वनस्पतयः—प्रत्येकानन्तवनस्पतिजीवाः काल इति—सर्वेऽतीतानागतवर्तमानसमयाः सर्वे पुद्गलाः—समस्तपुद्गलास्तिकायगताः परमाणवः तथा

सर्वे—समस्तमलोकाकाशं, अयं च सर्वशब्दः प्रत्येकं लिङ्गवचनपरिणामेन सर्वत्र संबन्धनीयः, स च तथैव संबन्धितः, एते—प्रदर्शितस्वरूपाः षडपि राशयोऽनन्तका ज्ञेयाः ॥ २५६ ॥ ४ ॥ इदानीं 'अट्ठंगनिमित्ताणं'ति सप्तपञ्चाशदधिकद्विशततमं द्वारमाह—

**अंगं १ सुविणं २ च सरं ३ उप्पायं ४ अंतरिक्ख ५ भोमं च ६ । वंजण ७ लक्खण ८ मेव य अट्ठपयारं इह निमित्तं ॥५॥ अंगप्फुरणाईहिं सुहासुहं जमिह भन्नइ तमंगं १ । तह सुसुमिणय-दुस्सुमिणएहिं जं सुमिणयंति तयं २ ॥ ६ ॥ इट्ठमणिट्ठं जं सरविसेसओ तं सरंति विन्नेयं ३ । रुहिरवरिसाइ जंमिं जायइ भन्नइ तमुप्पायं ४ ॥ ७ ॥ गहवेहभूयअट्टहासपमुहं जमंतरिक्खं तं ५ । भोमं च भूमिकंपाइएहिं नज्जइ वियारेहिं ६ ॥ ८ ॥ इह वंजणं मसाई ७ लंछणपमुहं तु लक्खणं भणियं ८ । सुहअसुहसूयगाइं अंगाईयाइं अट्ठावि ॥ ९ ॥**

अङ्गं स्वप्नः स्वर उत्पात आन्तरिक्षं भौमं व्यञ्जनं लक्षणं चेत्येवमष्टप्रकारं—अष्टविधमिह—शास्त्रे निमित्तं भवति, अतीतानागतवर्तमानानामतीन्द्रियभावानामधिगमे निमित्तं—हेतुर्यद्वस्तुजातं तन्निमित्तं, सूत्रे स्वप्नादिपदेषु प्राकृतत्वान्नपुंसकत्वमिति ॥ ५ ॥ साम्प्रतमष्टप्रकारमपि निमित्तं क्रमेण व्याख्यातुमाह—'अंगे'त्यादिगाथाचतुष्कं, अङ्गस्फुरणादिभिः—शरीरावयवस्पन्दप्रमाणादिभिर्यदिह वर्तमानमतीतमनागतं वा शुभं वा—प्रशस्तमशुभं वा—अप्रशस्तं अन्यस्मै कथ्यते तद्भण्यतेऽङ्गाख्यं निमित्तं, यथा—"दक्षिणपार्श्वे स्पन्दनमभिधास्ये तत्फलं स्त्रिया वामे । पृथिवीलाभः शिरसि स्थानविवृद्धिर्ललाटे स्यात् ॥ १ ॥" इत्यादि, १ तथा सुस्वप्नदुःस्वप्नाभ्यां यत्कथ्यते शुभाशुभं तत्स्वप्नाख्यं निमित्तं, यथा—"देवेज्यात्मजबान्धवोत्सवगुरुच्छत्राम्बुजप्रेक्षणं, प्राकारद्विरदाम्बुदद्रुमगिरिप्रासादसंरोहणम् । अम्भोधेस्तरणं सुरा-

मृतपयोऽश्नां च पानं तथा, चन्द्रार्कग्रसनं स्थितं शिवपदे स्वापे प्रशस्तं नृणाम् ॥ १ ॥" इत्यादि २, इष्टमनिष्टं च यत्स्वरविशेषतः पड्जादिस्वरसप्तकविभागतः शकुनरुतरूपाद्वा परस्मै कथ्यते तत् स्वरनामकं निमित्तं, यथा—"सज्जेण लब्भए वित्तिं, कयं च न विणस्सइ। गावो मित्ता य पुत्ता य, नारीणं चेव वल्लहो ॥ १ ॥" इत्यादि, यद्वा—'चिलिचिलिसद्दो पुन्नो सामाए सूलिसूलि धन्नो उ। चेरी चेरी दित्तो चिक्कुत्ती लाभहेउत्ति ॥१॥' इत्यादि ३, सहजरुधिरवृष्ट्यादि यस्मिन् जायते (भण्यते) तदुत्पाताभिधं निमित्तं, आदिशब्दादस्थिवृष्ट्यादिपरिग्रहः, यथा—"मज्जानि रुधिरास्थीनि, धान्याङ्गारान् वसां तथा। मघवा वर्षते यत्र, भयं विद्याच्चतुर्विधम् ॥१॥" इत्यादि ४, ग्रहवेधभूताट्टहासप्रमुखमान्तरिक्षं निमित्तं, तत्र ग्रहवेधो—ग्रहस्य ग्रहमध्येन निर्गमः, भूताट्टहासः—अतिमहानाकाशे आकस्मिकः किलकिलारावः, यथा—"भिनत्ति सोमं मध्येन, ग्रहेष्वन्यतमो यदा। तदा राजभयं विद्यात्, प्रजाक्षोभं च दारुणम् ॥ १ ॥" इत्यादि, प्रमुखग्रहणाद्गन्धर्वनगरादिपरिग्रहः, यथा—"कपिलं शस्यघाताय, माञ्जिष्ठं हरणं गवाम्। अव्यक्तवर्णं कुरुते, बलक्षोभं न संशयः ॥ १ ॥ गंधर्वनगरं स्निग्धं, सप्राकारं सतोरणम्। सौम्यां दिशं समाश्रित्य, राज्ञस्तद्विजयङ्करम् ॥ २ ॥" इत्यादि ५, भूमिकम्पादिभिर्विकारैः शुभाशुभं यद् ज्ञायते तद्भौमं निमित्तं, यथा—"शब्देन महता भूमिर्यदा रसति कम्पते। सेनापतिरमात्यश्च, राजा राष्ट्रं च पीड्यते ॥ १" ६, इह—अस्मिन् शास्त्रे व्यञ्जनं—मषादि, लाञ्छनप्रमुखं तु लक्षणं भणितं, यथा—"नाभ्यधस्ताद्भवेद्यस्या, लाञ्छनं मशकोऽपि वा। कुङ्कुमोदकसङ्काशं, सा प्रशस्ता निगद्यते ॥१॥" इत्यादि, निशीथग्रन्थे पुनरित्थमुक्तं—"माणाइगं लक्खणं मसाइगं वंजणं, अहवा जं सरीरेण सह समुप्पन्नं तं लक्खणं पच्छा उप्पन्नं वंजण" मिति, तदेवं शुभाशुभसूचकान्यङ्गादीन्यष्टावपि प्रतिपादितानीति, लक्षणानि च पुरुषविभागेनेत्थं निशीथे प्रोक्तानि—"पागयमणुयाणं बत्तीसं अट्ठसयं बलदेववासुदेवाणं अट्ठसहस्सं चक्कव-

द्वितित्थगराणं, जे फुडा हत्थपायाइसु लक्खिज्जंति तेसिं पमाणं भणियं, जे पुण अंतो स्वभावसत्त्वादयः तेहिं सह बहुतरा भवता-
त्यादि, २५७, ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ संप्रति 'माणुम्माणपमाणं'ति अष्टपञ्चाशदधिकद्विशततमं द्वारमाह—

**जलदोणमद्धभारं समुहाइं समूसिओ उ जो नव उ। माणुम्माणपमाणं तिविहं खलु लक्खणं नेयं ॥ १० ॥**

मानं—जलद्रोणप्रमाणता, उन्मानं—तुलारोपितस्यार्धभारप्रमाणता, यस्य स्वमुखानि नवैव समुच्छ्रितः स पुमान् प्रमाणोपेतो भवति,
अयमर्थः—पानीयपरिपूर्णायां पुरुषप्रमाणादीषदतिरिक्तायां महत्यां कुण्डिकायां प्रवेशितो यः पुरुषो जलस्य द्रोणं—सर्वार्धघटिकाघटस्वरूपं
निष्कासयति द्रोणेन जलस्योनां वा तां पूरयति स पुरुषो मानयुक्तो भवति, तथा सारपुद्गलोपचितत्वात् तुलायामारोपितः सन्नर्धभारं
यः पुरुषस्तुलयति स उन्मानयुक्तो भवति, तथा यद्यस्यात्मीयमङ्गुलं तेनात्मनोऽङ्गुलेन द्वादशाङ्गुलानि मुखं प्रमाणयुक्तं भवति, अनेन च
मुखप्रमाणेन नव मुखानि सर्वोऽपि पुरुषः प्रमाणयुक्तो भवति, प्रत्येकं द्वादशाङ्गुलैर्नवभिर्मुखैरष्टोत्तरं शतमङ्गुलानां संपद्यते, ततश्चैतावदु-
च्छ्रयः पुमान् प्रमाणयुक्तो भवतीति, तदेवं मानोन्मानप्रमाणरूपमेतत् त्रिविधं लक्षणमुत्तमपुरुषाणां खलु निश्चयेन ज्ञेयमिति, २५८
॥ १० ॥ इदानीं 'अट्ठारस भक्खभोज्जाइं'त्येकोनषष्ट्यधिकद्विशततमं द्वारमाह—

**सूओ १ यणो २ जवन्नं ३ तिन्नि य मंसाइं ६ गोरसो ७ जूसो ८। भक्खा ९ गुललावणिया १० मूलफला ११ हरियगं १२ डागो १३ ॥ ११ ॥ होइ रसालू य १४ तहा पाणं १५ पाणीय १६ पाणगं १७ चेव। अट्ठारसमो सागो १८ निरुवहओ लोइओ पिण्डो ॥ १२ ॥ जलथलखहयर-**

मंसाइं तिन्नि जूसो उ जीरयाइजुओ। मुग्गरसो भक्खाणि य खंडखज्जयपमोक्खाणि ॥ १३ ॥ गुललावणिया गुडप्पपडीउ गुलहाणियाउ वा भणिया। मूलफलंतिक्कपयं हरियग्गमिह जीरयाईयं ॥ १४ ॥ डाओ वत्थुलराईण भज्जिया हिंगुजीरयाइजुया। सा य रसालू जा मज्जियत्ति तल्लक्खणं चेयं ॥१५॥ दो घयपला महु पलं दहियस्सऽद्धाढयं मिरिय वीसा। दस खंडगुलपलाइं एस रसालू निवइजोगो ॥ १६ ॥ पाणं सुराइयं पाणियं जलं पाणगं पुणो एत्थ। दक्खावाणियपमुहं सागो सो तक्कसिद्धं जं ॥ १७ ॥

सूपः ओदनः यवान्नं त्रीणि मांसानि गोरसो यूपः भक्ष्याणि गुडलावणिका मूलफलानि हरितकं डाकः, तथा भवति रसाला, आर्षत्वात् रसालू इति निर्देशः, तथा पानं पानीयं पानकं अष्टादशश्च शाकः, एषोऽष्टादशविधो निरुपहतो–निर्गत उपहतः–दोषो यस्मादसौ निरुपहतो–निर्दोष इत्यर्थः, लौकिको–निर्विवेकलोकप्रतीतः पिण्डः–आहार इति ॥ ११ ॥ १२ ॥ तत्र सूपो–दालिः ओदनः–कूरः, यवान्नं–यवनिष्पन्नं परमान्नं, गोरसो–दुग्धदधिघृतप्रभृतिकः, शेषं च सूत्रकृदेव क्रमेण विवृणोति–'जले'त्यादिकं गाथापञ्चकं, जलचरस्थलचरखचरजीवसंबन्धीनि त्रीणि मांसानि, तत्र जलचरा–मत्स्यादयः स्थलचरा–हरिणादयः खचरा–लावकादयः, तथा जूषो–जीरककटुभाण्डादिमियुतः सुसंभृतो मुद्गरसः, तथा भक्ष्याणि–खण्डखाद्यकप्रमुखाणि, खाद्यकं–खज्जकं, तत्र खण्डेन खरण्टितं, तत्प्रमुखाणि, तथा गुललावणिका–गुडपर्पटिका, पूर्वदेशीयप्रधानगुडकृता या पर्पटिकेत्यर्थः, अथवा गुडमिश्रा धाना गुडधाना भणिता गुललावणिकेति, 'मूलकफल'मिति त्वेकमेव पदं माह्यं, नतु द्वयं, तत्र मूलानि अश्वगन्धादीनां फलानि सहकारादीनां, तथा हरितकमिह जीर-

कादिपत्रनिर्मितं, तथा डाको वस्तुलराजिकादीनां भर्जिकाहिङ्गुजीरकादिभिर्युता सुसंस्कृता, सा च रसाला ज्ञेया या मार्जितेति लोके प्रसिद्धा, तस्याश्चेदं—वक्ष्यमाणं स्वरूपं । तदेवाह—'**दो घयपले**' त्यादि, द्वे पले घृतस्य एकं पलं मधुनः अर्धाढको दध्नः विंशतिर्मरिचानि वर्तितानि दश च पलानि खण्डस्य गुडस्य वा, एतैः पदार्थैर्मिलितै रसाला निष्पद्यते, एषा च नृपतीनां—राज्ञामुपलक्षणत्वादीश्वरलोकस्य योग्या—उचितेति, तथा पानं—सुरादि, आदिशब्दात्सर्वमद्यभेदपरिग्रहः, तथा पानीयं—सुशीतलं सुस्वादु च जलं, पानकं पुनरत्र-द्राक्षाखर्जूरादिकृतं पानकप्रमुखं, तथा शाकः स उच्यते यत्तक्रेण सिद्धं—निष्पन्नं वटकादीति, २५९ ॥ १३ ॥ १४ ॥१५॥ १६ ॥ १७॥

सम्प्रति '**छट्ठाणवुड्ढिहाणि**'त्ति षष्ट्यधिकद्विशततमं द्वारमाह—

**वुड्ढी वा हाणीवा अणंत १ अस्संख २ संखभागेहिं ३ । वत्थूण संख ४ अस्संख ५ णंत ६ गुणणेण य विहेया ॥ १८ ॥**

अनन्ताऽसङ्ख्यातसङ्ख्यातभागैः सङ्ख्यातासङ्ख्यातानन्तगुणेन च वस्तूनां—पदार्थानां वृद्धिर्वा हानिर्वा विधेया, इह षट्स्थानके त्रीणि स्थानानि भागेन—भागहारेण वृद्धानि हीनानि वा भवन्ति, त्रीणि च स्थानानि गुणनेन—गुणकारेण, '**भागो तिसु गुणणा तिसु**' इति वचनात्, तत्र भागहारेऽनन्तासङ्ख्यातसङ्ख्यातलक्षणः क्रमः, गुणकारे च सङ्ख्यातासङ्ख्यातानन्तलक्षण इति, अयमर्थः—सर्वविरतिविशुद्धिस्थानादीनां वस्तूनां वृद्धिर्वा हानिर्वा चिन्त्यमाना षट्स्थानगता प्राप्यते, तद्यथा—अनन्तभागवृद्धिः असङ्ख्यातभागवृद्धिः सङ्ख्यातभागवृद्धिः सङ्ख्यातगुणवृद्धिः असङ्ख्यातगुणवृद्धिः अनन्तगुणवृद्धिश्च, एवं हानिरपि, तत्र किञ्चित्सुगमत्वात्सर्वविरतिविशुद्धिस्थानान्येवाश्रित्य लेशतो भाव्यते—इह हि सर्वोत्कृष्टादपि देशविरतिविशुद्धिस्थानात् सर्वजघन्यमपि सर्वविरतिविशुद्धिस्थानमनन्तगुणं,

अनन्तगुणता च सर्वत्रापि पट्स्थानकचिन्तायां सर्वजीवानन्तकप्रमाणेन गुणकारेण द्रष्टव्या, इयमत्र भावना—सर्वजघन्यमपि सर्वविरतिविशुद्धिस्थानं केवलिप्रज्ञाच्छेदनकेन विच्छिद्यते, छित्त्वा च निर्विभागा भागाः पृथक्क्रियन्ते, ते च निर्विभागा भागाः सर्वसंकलनया विभाव्यमाना यावन्तः सर्वोत्कृष्टदेशविरतिविशुद्धिस्थानगता निर्विभागाः भागाः सर्वजीवानन्तकरूपेण गुणकारेण गुण्यमाना जायन्ते तावत्प्रमाणाः प्राप्यन्ते, अत्राप्ययं भावार्थः—इह किलासत्कल्पनया सर्वोत्कृष्टस्य देशविरतिविशुद्धिस्थानस्य निर्विभागा भागा दश सहस्राणि, सर्वजीवानन्तकप्रमाणश्च राशिः शतं, ततस्तेन शतसङ्ख्येन सर्वजीवानन्तकमानेन राशिना दशसहस्रसङ्ख्याः सर्वोत्कृष्टदेशविरतिविशुद्धिस्थानगता निर्विभागा भागा गुण्यन्ते, जाता दश लक्षाः, एतावन्तः किल सर्वजघन्यस्यापि सर्वविरतिविशुद्धिस्थानस्य निर्विभागा भागा भवन्ति, एते च सर्वजघन्यचारित्रसत्कविशुद्धिस्थानगता निर्विभागा भागाः समुदिताः सन्तः सर्वजघन्यं संयमस्थानं भण्यते, तस्मादनन्तरं यद् द्वितीयं संयमस्थानं तत् पूर्वस्मादनन्तभागवृद्धं, किमुक्तं भवति ?—प्रथमसंयमस्थानगतनिर्विभागभागापेक्षया द्वितीयसंयमस्थाने निर्विभागा भागा अनन्ततमेन भागेनाधिका भवन्तीति, तस्मादपि यदनन्तरं तृतीयं तत्ततोऽनन्तभागवृद्धं, एवं पूर्वस्मात् पूर्वस्मादुत्तरोत्तराणि निरन्तरमनन्तभागवृद्धानि संयमस्थानानि अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणानि वाच्यानि, एतानि च समुदितानि संयमस्थानान्येकं कण्डकं भवति, कण्डकं नाम समयपरिभाषया अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणा सङ्ख्याऽभिधीयते, उक्तं च—"कण्डंति एत्थ भन्नइ अंगुलभागो असंखेज्जो" [कण्डकमिति भण्यतेऽङ्गुलभागोऽसङ्ख्येयः] तस्माच्च कण्डकात् परतो यदन्यदनंतरं संयमस्थानं तत् पूर्वस्मादसङ्ख्येयभागाधिकं, एतदुक्तं भवति—पाश्चात्यकण्डकसत्कचरमसंयमस्थानगतनिर्विभागभागापेक्षया कण्डकानन्तरे संयमस्थाने निर्विभागभागगतप्रदेशा असङ्ख्येयतमेन भागेनाधिकाः प्राप्यन्ते, ततः पराणि

पुनर्यान्यन्यानि संयमस्थानानि अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणानि तानि यथोत्तरमनन्तभागवृद्धान्यवसेयानि, एतानि च समुदितानि द्वितीयं कण्डकं, तस्य च द्वितीयकण्डकस्योपरि यदन्यत् संयमस्थानं तत्पुनरपि द्वितीयकण्डकसत्कचरमसंयमस्थानगतनिर्विभागभागापेक्षयाऽसङ्ख्येयभागवृद्धं, ततो भूयोऽपि ततः पराणि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरप्येकमसङ्ख्येयभागवृद्धं संयमस्थानं, एवमनन्तभागाधिकैः कण्डकप्रमाणैः संयमस्थानैर्व्यवहितान्यसङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्तान्यपि कण्डकमात्राणि भवन्ति, चरमादसङ्ख्येयभागाधिकसंयमस्थानात् पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि संयमस्थानानि वाच्यानि, ततः परमेकं सङ्ख्येयभागाधिकं संयमस्थानं, ततो मूलादारभ्य यावन्ति स्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि तेनैव क्रमेणाभिधाय पुनरप्येकं सङ्ख्येयभागाधिकं संयमस्थानं वाच्यं, इदं च द्वितीयं सङ्ख्येयभागाधिकं स्थानं, ततोऽनेनैव क्रमेण तृतीयं वाच्यं, अमूनि चैवं सङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति, तत उक्तक्रमेण भूयोऽपि सङ्ख्येयभागाधिकस्थानप्रसंगे सङ्ख्येयगुणाधिकमेकं स्थानं वक्तव्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्राग्व्यतिक्रान्तानि तावन्ति भूयोऽपि तथैव वाच्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं स्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वाच्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं स्थानं, अमून्यप्येवं सङ्ख्येयगुणाधिकानि स्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति; ततस्तेनैव क्रमेण पुनः सङ्ख्येयगुणाधिकस्थानप्रसंगेऽसङ्ख्येयगुणाधिकं स्थानं वाच्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव भूयोऽपि वाच्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं संयमस्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वाच्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं, अमूनि चैवमसङ्ख्येयगुणाधिकानि संयमस्था-

नानि तावद्वाच्यानि यावत्कण्डकमात्राणि, ततः पूर्वपरिपाट्या पुनरप्यसङ्ख्येयगुणाधिकस्थानप्रसङ्गेऽनन्तगुणाधिकं संयमस्थानं वाच्यं, ततो भूयोऽपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागुक्तानि भवन्ति तावन्ति तथैव वाच्यानि, ततो भूयोऽप्येकमनन्तगुणाधिकं स्थानं, ततः पुनरपि मूलादारभ्य तावन्ति स्थानानि तथैव वाच्यानि, ततः पुनरप्येकमनन्तगुणाधिकं स्थानं, एवमनन्तगुणाधिकानि संयमस्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति, ततो भूयोऽपि तेषामुपरि पञ्चवृद्ध्यात्मकानि संयमस्थानानि मूलादारभ्य तथैव वाच्यानि, यत्पुनरनन्तगुणवृद्धिस्थानं तन्न प्राप्यते, षट्स्थानकस्य परिसमाप्तत्वात्, इत्थंभूतान्यसङ्ख्येयानि कण्डकानि समुदितानि एकं षट्स्थानकं भवति, अस्माच्च षट्स्थानकादूर्ध्वमुक्तक्रमेणैव द्वितीयं षट्स्थानकमुत्तिष्ठति, एवमेव च तृतीयं, एवं षट्स्थानकान्यपि तावद्वाच्यानि यावदसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति, उक्तं च—"छट्ठाणगअवसाणे अन्नं छट्ठाणयं पुणो अन्नं। एवमसंखा लोगा छट्ठाणाणं मुणेयव्वा ॥ १ ॥" अस्मिंश्च षट्स्थानके यादृशोऽनन्ततमो भागोऽसङ्ख्येयतमः सङ्ख्येयतमो वा गृह्यते यादृशस्तु सङ्ख्येयोऽसङ्ख्येयोऽनन्तो वा गुणकारः स निरूप्यते—तत्र यदपेक्षयाऽनन्तगुणवृद्धता तस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागो ह्रियते हृते च भागे यल्लब्धं सोऽनन्ततमो भागः तेनाधिकमुत्तरं संयमस्थानं, किमुक्तं भवति ?—प्रथमस्य संयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति ये लभ्यन्ते तावत्प्रमाणैर्निर्विभागैर्भागैर्द्वितीयसंयमस्थाने निर्विभागा भागा अधिकाः प्राप्यन्ते, द्वितीयसंयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति यावन्तो लभ्यन्ते तावत्प्रमाणैर्निर्विभागैर्भागैरधिकास्तृतीये संयमस्थाने निर्विभागा भागाः प्राप्यन्ते, एवं यद्यत्संयमस्थानमनन्तभागवृद्धमुपलभ्यते तत्तत्पाश्चात्यस्य संयमस्थानस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति यद्यल्लभ्यते तावत्प्रमाणेनानन्ततमेन भागेनाधिक्यमवगन्तव्यं। असङ्ख्येयभा-

गाधिकानि पुनरप्येवं—पाश्चात्यस्य संयमस्थानस्य सत्कानां निर्विभागभागानामसङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यद्यल्लभ्यते सोऽसङ्ख्येयतमो भागः, ततस्तेनासङ्ख्येयतमेन भागेनाधिकान्यसङ्ख्येयभागाधिकानि स्थानानि वेदितव्यानि, सङ्ख्येयभागाधिकानि त्वेवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्योत्कृष्टेन सङ्ख्येयेन भागे हृते सति यद्यल्लभ्यते स सङ्ख्येयतमो भागः, ततस्तेन सङ्ख्येयतमेन भागेनाधिकानि स्थानानि वेदितव्यानि, सङ्ख्येयगुणवृद्धानि पुनरेवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य ये ये निर्विभागा भागास्ते ते उत्कृष्टेन सङ्ख्येयकमानेन राशिना गुण्यन्ते गुणिते च सति यावन्तो यावन्तो भवन्ति तावत्तावत्प्रमाणानि सङ्ख्येयगुणाधिकानि स्थानानि द्रष्टव्यानि, एवमसङ्ख्येयगुणवृद्धान्यनन्तगुणवृद्धानि च भावनीयानि, नवरमसङ्ख्येयगुणवृद्धौ पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य निर्विभागा भागा असङ्ख्येयलोकाकाशप्रदेशप्रमाणेनासङ्ख्येयेन गुण्यन्ते, अनन्तगुणवृद्धौ तु सर्वजीवप्रमाणेनानन्तेनेति । अयं च षट्स्थानकविचारः स्थापनां विना मन्दबुद्धिभिः सम्यगवबोद्धुं न शक्यते, सा च स्थापना कर्मप्रकृतिपटेभ्यः प्रतिपत्तव्या, विस्तरभयात्तु नेह प्रदर्श्यते, केवलं कियन्तमपि स्थानाशून्यार्थं स्थापनाप्रकारं प्रकाशयामः, तथाहि—प्रथमं तावत्तिर्यक्पङ्क्तौ चत्वारो विन्दवः स्थाप्यन्ते, तेषां च कण्डकमिति संज्ञा, सर्वेषामपि चैतेषामन्योऽन्यमनन्तभागवृद्ध्या वृद्धिरवसेया, ततस्तेषामग्रतोऽसङ्ख्यातभागवृद्धिसंज्ञक एककः स्थाप्यते, ततो भूयोऽपि चत्वारो विन्दवः, तत एकक इत्यादि तावदवसेयं यावद्विंशतिविन्दवश्चत्वारश्चैकका जाताः, तदनु सङ्ख्यातभागवृद्धिसंज्ञको द्विकः स्थाप्यते, ततः पुनरपि विंशतिर्विन्दवश्चत्वारश्चैकका:, ततो द्वितीयो द्विकः, एवं विंशतेर्विंशतेर्विन्दूनामन्तराऽन्तरा चतुर्णां चतुर्णामेककानामवसाने तृतीयचतुर्थावपि द्विकौ क्रमेण स्थाप्यौ, तदनु भूयोऽपि चतुर्थद्विकस्याग्रे विंशतिविन्दवश्चत्वारश्चैकका:, एवं च जातं बिन्दूनां शतं, एककानां विंशतिश्चत्वारश्च द्विकाः, अत्रान्तरे चतुर्णां विन्दूनामग्रतः सङ्ख्यातगुणवृद्धिसंज्ञकः प्रथमस्त्रिकः

संस्थाप्यते, ततः पुनरपि बिन्दूनां शतादेककानां विंशतेर्द्विकानां चतुष्टयाच्च परतो द्वितीयस्त्रिकः स्थाप्यते, एवं बिन्दूनां शते एककानां विंशतौ द्विकानां च चतुष्टये चतुष्टयेऽतिक्रान्ते तृतीयश्चतुर्थावपि त्रिकौ स्थाप्यौ, तदनु चतुर्थत्रिकस्याप्यग्रे बिन्दूनां शतमेककानां विंशतिर्द्विकानां चतुष्टयं च स्थाप्यते, ततो जातानि पञ्च शतानि बिन्दूनां शतमेककानां विंशतिर्द्विकानां चत्वारश्च त्रिकाः, अत्रान्तरे चतुर्णां बिन्दूनाममतोऽसङ्ख्यातगुणवृद्धिसंज्ञकः प्रथमचतुष्कः स्थाप्यते, ततो भूयोऽपि पञ्च शतानि बिन्दूनां, शतमेककानां विंशतिर्द्विकानां चत्वारश्च त्रिकाः प्रागिव स्थाप्यन्ते, ततो द्वितीयचतुष्कः स्थाप्यः, एवं बिन्दूनां शतपञ्चके एककानां शते द्विकानां विंशतौ त्रिकाणां चतुष्टये चतुष्टये चातिक्रान्ते तृतीयचतुर्थावपि चतुष्कौ क्रमेण स्थाप्यौ, ततश्चतुर्थचतुष्कस्याग्रे पञ्चमचतुष्कयोग्यं दलिकं स्थापयित्वा अनन्तगुणवृद्धिसंज्ञकः प्रथमः पञ्चको न्यस्यते, एवमनेनैवानन्तरोक्तेन क्रमेण द्वितीयतृतीयचतुर्था अपि पञ्चका न्यसनीयाः, ततश्चतुर्थपञ्चकस्याप्यग्रे पञ्चमपञ्चकोचितं दलिकं लिख्यते, न च पञ्चकः स्थाप्यते, तत आद्यन्तयोः प्रत्येकं बिन्दुचतुष्टयेन प्रथमं षट्स्थानं समाप्यते, यदा पुनः प्रथमानन्तरं द्वितीयं षट्स्थानकं स्थापयितुमिष्यते तदा तदपेक्षया प्रथमं पृथक्चत्वारो बिन्दवः स्थाप्यन्ते, तदनन्तरमेककादिः सर्वोऽपि पूर्वोक्तविधिः क्रमेण कर्तव्य इति, साम्प्रतमङ्कानां बिन्दूनां च सर्वसङ्ख्या कथ्यते—तत्रैकस्मिन् षट्स्थानके चत्वारः पञ्चका भवन्ति, ततः पञ्चभिर्वा गुणयेदिति करणवशाच्चतुर्णां पञ्चकानां पञ्चभिर्गुणने लब्धा विंशतिचतुष्काः, एतेषामपि पञ्चभिर्गुणने लब्धं शतं त्रिकाणां, तेषामपि पञ्चभिर्गुणने लब्धानि पञ्च शतानि द्विकानां, तेषामपि च पञ्चभिर्गुणने लब्धे द्वे सहस्रे सार्धे एककानां, तेषामपि च पञ्चभिर्गुणने लब्धानि द्वादश सहस्राणि सार्धानि बिन्दूनां १२५००, इयमेकस्मिन् षट्स्थाने सर्वसङ्ख्या, एवं शेषेष्वपि षट्स्थानकेषु प्रतिपत्तव्यमिति, २६०॥१८॥ इदानीं 'अवहरिउं जाइं नेव तीरंति'त्येकषष्ट्यधिकद्विशततमं द्वारमाह—

समणी १ मवगयवेयं २ परिहार ३ पुलाय ४ मप्पमत्तं ५ च । चउदसपुविं ६ आहारगं च ७ न य कोइ संहरइ ॥ १९ ॥

श्रमणीं—अजिह्मब्रह्मचरणशरणां साध्वीं अपगतवेदं—क्षपितवेदं 'परिहार'त्ति प्रतिपन्नपारिहारिकतपश्चरणं पुलाकं—लब्धिपुलाकं अप्रमत्तं—अप्रमत्तसंयतं चतुर्दशपूर्विणं—चतुर्दशपूर्वधरं आहारकं च—आहारकशरीरिणं नैव कोऽपि—विद्याधरदेवादिः (ग्रन्थाग्रं १७०००) संहरति—प्रत्यनीकतयाऽनुकम्पया अनुरागेण वोत्क्षिप्यान्यत्र क्षिपति, इह च न सर्वोऽपि चतुर्दशपूर्वधर आहारकलब्धिमान् भवति, किंतु कश्चिदेवेति ज्ञापनार्थमाहारकग्रहणं ॥ २६१ ॥ १९ ॥ इदानीं 'अंतरदीव'त्ति द्विषष्ट्यधिकं द्विशततमं द्वारमाह—

चुल्लहिमवंतपुव्वावरेण विदिसासु सायरं तिसए । गंतूणंतरदीवा तिन्नि सए हुंति विच्छिन्ना ॥ २० ॥ अउणावन्ननवसए किंचूणे परिहि तेसिमे नामा । एगोरुअ १ आभासिय २ वेसाणी चेव ३ नंगूली ४ ॥ २१ ॥ एएसिं दीवाणं परओ चत्तारि जोयणसयाणि । ओगाहिऊण लवणं सपडिदिसिं चउसयपमाणा ॥ २२ ॥ चत्तारंतरदीवा हय ५ गय ६ गोकन्न ७ संकुलीकन्ना ८ । एवं पंचसयाइं छस्सय सत्तट्ठ नव चेव ॥ २३ ॥ ओगाहिऊण लवणं विक्खंभोगाहसरिसया भणिया । चउरो चउरो दीवा इमेहिं नामेहिं नायव्वा ॥ २४ ॥ आयंसमिंढगमुहा अयोमुहा गोमुहा य चउरोए १२ । अस्समुहा हत्थिमुहा सीहमुहा चेव वग्घमुहा १६ ॥ २५ ॥ तत्तो य आसकन्ना हरिकन्न अकन्न कन्नपावरणा २० । उक्कमुहा मेहमुहा विज्जुमुहा विज्जुदंता य २४ ॥ २६ ॥

**घणदंत लट्ठदंता य गूढदंता य सुद्धदंता य २८। वासहरे सिहरिंमि य एवं चिय अट्ठवीसावि ॥ २७ ॥ तिन्नेव हुंति आई एगुत्तरवड्ढिया नवसयाओ। ओगाहिऊण लवणं तावइयं चेव विच्छिन्ना ॥ २८ ॥**

इह जम्बूद्वीपे भरतस्य हैमवतस्य च क्षेत्रस्य सीमाकारी पूर्वापरपर्यन्ताभ्यां लवणार्णवजलसंस्पर्शी महाहिमवदपेक्षया क्षुल्लो—लघुर्हिमवन्नामा पर्वतः समस्ति, तस्य लवणार्णवजलसंस्पर्शादारभ्य पूर्वस्यां पश्चिमायां च दिशि प्रत्येकं द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, तत्र ईशान्यां दिशि या निर्गता दंष्ट्रा तस्यां हिमवतः पर्यन्तादारभ्य त्रीणि योजनशतानि लवणसमुद्रं गत्वा—अवगाह्य अत्रान्तरे योजनशतत्रयायामविष्कम्भः किञ्चिन्न्यूनैकोनपञ्चाशदधिकनवयोजनशतपरिरय एकोरुकनामा द्वीपो वर्तते, अयं च पञ्चधनुःशतप्रमाणविष्कम्भया गव्यूतद्वयोच्छ्रितया पद्मवरवेदिकया वनखण्डेन च सर्वतः परिमण्डितः, एवं सर्वेऽप्यन्तरद्वीपाः प्रत्येकं पद्मवरवेदिकया वनखण्डेन च परिक्षिप्तपरिसराः समवसेयाः, एवं तस्यैव हिमवतः पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीय दंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्तते, तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्यन्तादारभ्य दक्षिणपश्चिमायां दिशि नैर्ऋतकोणे इत्यर्थः त्रीणि योजनशतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि यथोक्तप्रमाणो वैषाणिकनामा द्वीपः, तथा तस्यैव हिमवतः पश्चिमायामेव दिशि पर्यन्तादारभ्य पश्चिमोत्तरस्यां दिशि वायव्यकोणे इत्यर्थः त्रीणि योजनशतानि लवणसमुद्रमध्ये चतुर्थी दंष्ट्रामतिक्रम्यात्रान्तरे पूर्वप्रमाणो नाङ्गोलिकनामा द्वीपः, एवमेते हिमवतश्चतसृष्वपि विदिक्षु तुल्यप्रमाणाश्चत्वारोन्तरे—लवणसमुद्रमध्ये द्वीपा अन्तरद्वीपा अवतिष्ठन्ते, तत एतेषामेकोरुकादीनां चतुर्णां द्वीपानां परतः 'सपडिदिसं'ति प्रत्येकं पूर्वो-

त्तरादिविदिक्षु चतसृष्वपि चत्वारि चत्वारि योजनशतानि लवणसमुद्रमवगाह्य चतुर्योजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातश्चतुर्योजनशतप्रमाणान्तरा हयकर्णगजकर्णगोकर्णशष्कुलीकर्णनामानश्चत्वारोऽन्तरद्वीपाः, तद्यथा—एकोरुकस्य परतो हयकर्णः आभासिकस्य परतो गजकर्णः वैषाणिकस्य परतो गोकर्णः नङ्गोलिकस्य परतः शष्कुलीकर्ण इति, एवमग्रेऽपि भावना कार्या, तत एतेषामपि हयकर्णादीनां चतुर्णां द्वीपानां परतः पुनरपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं पञ्च पञ्च योजनशतानि व्यतिक्रम्य पञ्चयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः पञ्चयोजनशतप्रमाणान्तरा आदर्शमुखमेण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपाः, एतेषामप्यादर्शमुखादीनां चतुर्णां द्वीपानां परतो भूयोऽपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं षट् षट् योजनशतानि व्यतिक्रम्य षट्षड्योजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः षड्योजनशतप्रमाणान्तरा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानश्चत्वारो द्वीपाः, एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो भूयो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं सप्तयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातः सप्तयोजनशतप्रमाणान्तरा अश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः, एतेषामप्यश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकमष्टाष्टौ योजनशतान्यतिक्रम्याष्टयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातोऽष्टयोजनशतप्रमाणान्तरा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः, ततोऽमीषामप्युल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं नवनवयोजनशतान्यतिक्रम्य नवयोजनशतायामविष्कम्भा जम्बूद्वीपवेदिकातो नवयोजनशतप्रमाणान्तरा घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपाः, एवमेते हिमवति पर्वते चतसृषु विदिक्षु व्यवस्थिताः सर्वसंख्यया अष्टाविंशतिः, एवं शिखरिण्यपि वर्षधरे—पर्वते लवणोदार्णवजलसंस्पर्शादारभ्य यथोक्तप्रमाणान्तराश्चतसृषु विदिक्षु व्यवस्थिता एकोरुकादिनामानोऽष्टाविंशतिसङ्ख्या द्वीपा वक्तव्याः, ततः सर्वस-

ऋयया षट्पञ्चाशदन्तरद्वीपा भवन्तीति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अथैतेषु वर्तमानानां मनुष्याणां स्वरूपमाह—'संती' त्यादिगाथात्रयं,

**संति इमेसु नरा वज्जरिसहनारायसंहणणजुत्ता। समचउरंसगसंठाणसंठिया देवसमरूवा ॥ २९ ॥ अट्ठधणुस्सयदेहा किंचूणाओ नराण इत्थीओ। पलियअसंखिज्जइभागआऊया लक्खणोवेया ॥ ३० ॥ दसविहकप्पदुमपत्तवंछिया तह न तेसु दीवेसु। ससिसूरगहणमक्कूणजूयामसगाइया हुंति ॥ ३१ ॥**

एतेषु सर्वेष्वप्यन्तरद्वीपेषु नराः—पुरुषाः सन्ति—सदैव परिवसन्ति, ते च वज्रर्षभनाराचसंहननिनः समचतुरस्रसंस्थानसंस्थिता देवलोकानुकारिरूपलावण्याकारशोभितविग्रहा अष्टधनुःशतप्रमाणशरीरोच्छ्रयाः, स्त्रीणां त्विदमेव प्रमाणं किञ्चिन्न्यूनं द्रष्टव्यं, तथा पल्योपमासङ्ख्येयभागप्रमाणायुषः समग्रशुभलक्षणतिलकमषाद्युपेताः स्त्रीपुरुषयुगलव्यवस्थिता दशविधकल्पपादपावाप्तवाञ्छितोपभोगसम्पदः प्रकृत्यैव प्रतनुक्रोधमानमायालोभाः संतोषिणो निरौत्सुक्या मार्दवार्जवसंपन्नाः सत्यपि मनोहारिणि मणिकनकमौक्तिकादिके ममत्वकारणे ममत्वाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धाः परस्परप्रेष्यप्रेषकभावरहितत्वादहमिन्द्राः हस्त्यश्वकरभगोमहिष्यादिसद्भावेऽपि तत्परिभोगपराङ्मुखाः पादविहारचारिणो ज्वरादिरोगभूतपिशाचादिग्रहव्यसनविरहिताः, चतुर्थाद्याहारमेते गृह्णन्ति, आहारश्च शाल्यादिधान्यसद्भावेऽपि न तन्निष्पन्नः, किंतु शर्करातोऽप्यनन्तगुणमाधुर्या मृत्तिका चक्रवर्तिभोजनादप्यधिकमधुराणि कल्पद्रुमपुष्पफलानि चेति, चतुःषष्टिश्च पृष्ठकरण्डकास्तेषां, षण्मासावशेषायुषश्चामी स्त्रीपुरुषयुगलं प्रसुवते, एकोनाशीतिदिनानि च तत्परिपालयन्ति, स्तोकस्नेहकषाय-

तया च ते मृत्वा दिवं व्रजन्ति, मरणं च तेषां जृम्भाकासक्षुतादिमात्रपुरस्सरं न शरीरपीडयेति, तथा तेषु द्वीपेष्वनिष्टसूचकाश्चन्द्रसूर्योपरागादयः शरीरोपद्रवकारिणश्च मत्कुणयूकामशकमक्षिकादयो न भवन्ति, येऽपि च जायन्ते भुजगव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधितुमलं, नाप्यन्योऽन्यं हिंस्यहिंसकभावे वर्तन्ते, क्षेत्रानुभावतो रौद्रभावरहितत्वात्, अत एव तेऽपि मृत्वा दिवमेव व्रजन्ति, भूमिरपि तत्र रेणुपङ्ककण्टकादिरहिता सकलदोषपरित्यक्ता सर्वत्र समतला रमणीया च वर्तत इति, यच्चात्र सूत्रातिरिक्तमुक्तं तत्सर्वमुपलक्षणत्वाद् द्रष्टव्यं २६२ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ इदानीं 'जीवाजीवाणं अप्पबहुयं'ति त्रिषष्ट्यधिकद्विशततमं द्वारमाह—

**नर १ नेरइया २ देवा ३ सिद्धा ४ तिरिया ५ कमेण इह हुंति। थोव १ असंख २ असंखा ३ अणंतगुणिया ४ अनंतगुणा ५ ॥ ३२ ॥ नारी १ नर २ नेरइया ३ तिरिच्छि ४ सुर ५ देवि ६ सिद्ध ७ तिरिया ८ य। थोव असंखगुणा चउ संखगुणाऽणंतगुण दोन्नि ॥ ३३ ॥ तस तेउ पुढवि जल वाउकाय अकाय वणस्सइ सकाया। थोव असंखगुणाहिय तिन्नि दोऽणंतगुणअहिया ॥ ३४ ॥ पण चउ ति दु य अणिंदिय एगिंदि सइंदिया कमा हुंति। थोवा तिन्नि य अहिया दोऽणंतगुणा विसेसहिया ॥ ३५ ॥ जीवा पोग्गल समया दव्व पएसा य पज्जवा चेव। थोवाणंताणंता विसेसअहिआ दुवेऽणंता ॥ ३६ ॥**

इह सर्वत्र यथासङ्ख्येन पदयोजना, तत्र सर्वस्तोकास्तावन्नरा—मनुष्याः सङ्ख्येयकोटीकोटीमात्रप्रमाणत्वात्, तेभ्यो नैरयिका असङ्ख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि प्रथमवर्गमूले तृतीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनी-

कृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात्, तेभ्यो देवा असङ्ख्येयगुणाः, व्यन्तराणां ज्योतिष्काणां च प्रत्येकं प्रतरासङ्ख्येयभागवर्तिश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सिद्धा अनन्तगुणाः, कालस्यानन्तत्वात् षण्मासान्ते च कस्यचिदवश्यं सिद्धिगमनात् तत्प्राप्तस्य च पुनरावृत्त्यभावात्, तेभ्योऽपि तिर्यञ्चोऽनन्तगुणाः, अनन्तेनापि कालेनैकनिगोदानन्तभागवर्तिजीवराशेः सिद्धत्वात् तिर्यग्गतौ त्वसङ्ख्येयनिगोदसद्भावात् प्रतिनिगोदं च सिद्धानन्तगुणजीवराशिभावात् ॥ ३२ ॥ उक्तं नैरयिकतिर्यग्योनिकमनुष्यदेवसिद्धरूपाणां पञ्चानामल्पबहुत्वं, इदानीं नैरयिकतिर्यग्योनिकतिर्यग्योनिकीमनुष्यमानुषीदेवदेवीसिद्धलक्षणानामष्टानामल्पबहुत्वमाह—'नारी'त्यादि, सर्वस्तोका नार्यो—मनुष्यस्त्रियः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, ताभ्यो नरा—मनुष्या असङ्ख्येयगुणाः, इह नरा इति संमूर्च्छिमजा अपि मनुष्या गृह्यन्ते, वेदस्याविवक्षणात्, ते च संमूर्च्छिमजा वान्तादिषु नगरनिर्धमनान्तेषु जायमाना असङ्ख्येयाः प्राप्यन्ते, तेभ्यो नैरयिका असङ्ख्येयगुणाः, मनुष्या ह्युत्कृष्टपदेऽपि श्रेण्यसङ्ख्येयभागगतप्रदेशराशिप्रमाणा लभ्यन्ते, नैरयिकास्त्वङ्गुलमात्रक्षेत्रप्रदेशराशिसत्कतृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रमाणश्रेणिगताकाशप्रदेशराशिप्रमाणाः, ततो भवन्त्यसङ्ख्येयगुणाः, तेभ्यस्तिर्यग्योनिकाः स्त्रियोऽसङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, ताभ्योऽपि देवा असङ्ख्येयगुणाः, असङ्ख्येयगुणप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगतप्रदेशराशिमानत्वात्, तेभ्योऽपि देव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात्, ताभ्योऽपि सिद्धा अनन्तगुणाः, तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः, अत्र युक्तिः प्रागेवोक्ता ॥ ३३ ॥ अथ सामान्येनैव जन्तूनां कायविशेषणविशेषितानामल्पबहुत्वमाह—'तसे'त्यादि, सर्वस्तोकास्त्रसकायिकाः, द्वीन्द्रियादीनामेव त्रसकायत्वात्, तेषां च शेषकायापेक्षयाऽत्यल्पत्वात्, तेभ्यस्तैजसकायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः पृथिवीकायिका

विशेषाधिकाः, प्रभूतासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्योऽप्कायिका विशेषाधिकाः, प्रभूततरासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यो वायुकायिका विशेषाधिकाः, प्रभूततमासङ्ख्येयलोकाकाशप्रदेशमानत्वात्, तेभ्योऽकायिका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यो वनस्पतिकायिका अनन्तगुणाः, अनन्तलोकाकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सकाया विशेषाधिकाः, पृथिवीकायिकादीनामपि तत्र प्रक्षेपात् ॥ ३४ ॥ साम्प्रतमेकेन्द्रियत्वादिविशेषणविशिष्टानां जन्तूनामल्पबहुत्वमाह—'पणे'त्यादि, सर्वस्तोकाः पञ्चेन्द्रियाः, सङ्ख्येययोजनकोटीकोटीप्रमाणविष्कम्भसूचीप्रमितप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यश्चतुरिन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूतसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि त्रीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूततरसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि द्वीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्याः प्रभूततमसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽनिन्द्रिया अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽप्येकेन्द्रिया अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्योऽपि सेन्द्रिया विशेषाधिकाः, द्वीन्द्रियादीनामपि तत्र प्रक्षेपात् ॥ ३५ ॥ अथ जीवपुद्गलादीनामल्पबहुत्वमाह—'जीवे'त्यादि, वक्ष्यमाणापेक्षया सर्वस्तोका जीवाः, तेभ्यः पुद्गला अनन्तगुणाः, इह हि परमाणुद्विप्रदेशिकादीनि पृथक्पृथग्द्रव्याणि, तानि च सामान्यतस्त्रिधा—प्रयोगपरिणतानि मिश्रपरिणतानि विस्रसापरिणतानि च, तत्र प्रयोगपरिणतान्यपि तावज्जीवेभ्योऽनन्तगुणानि, एकैकस्य जीवस्यानन्तैः प्रत्येकं ज्ञानावरणीयादिकर्मपुद्गलस्कन्धैरावेष्टितत्वात्, किं पुनः शेषाणि ?, यतः प्रयोगपरिणतेभ्यो मिश्रपरिणतान्यनन्तगुणानि तेभ्योऽपि विस्रसापरिणतान्यनन्तगुणानि ततो युक्तं जीवेभ्यः पुद्गला अनन्तगुणाः, तेभ्योऽद्धासमया अनन्तगुणाः, यत एकस्यापि परमाणोर्द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भावसमया उपलब्धाः, यथैकस्य परमाणोस्तथा सर्वेषां परमाणूनां सर्वेषां

च प्रत्येकं द्विप्रदेशिकादीनां स्कन्धानामेवमन्यान्यद्रव्यक्षेत्रकालभावसम्बन्धिनामनन्ताः समया अतीता अनागता अपीति सिद्धं पुद्गलेभ्यः समयानामनन्तगुणत्वं, तेभ्यः सर्वद्रव्याणि विशेषाधिकानि, कथमिति चेद् उच्यते इह ये अनन्तरमद्धासमयाः पुद्गलेभ्योऽनन्तगुणा उक्तास्ते प्रत्येकं द्रव्याणि, ततो द्रव्यचिन्तायां तेऽपि गृह्यन्ते, तेषु मध्ये सर्वजीवद्रव्याणि सर्वपुद्गलद्रव्याणि धर्माधर्माकाशास्तिकायद्रव्याणि च प्रक्षिप्यन्ते, तानि च समुदितान्यप्यद्धासमयानामनन्तभागकल्पानीति तेषु प्रक्षिप्तेष्वपि मनागधिकत्वं जातमित्यद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि, तेभ्यः सर्वप्रदेशा अनन्तगुणाः, एकस्याप्यलोकाकाशद्रव्यस्य सर्वद्रव्यानन्तगुणप्रदेशत्वात्, तेभ्यः सर्वपर्यवा अनन्तगुणाः, एकैकस्मिन्नाकाशप्रदेशेऽनन्तानामगुरुलघुपर्यायाणां सद्भावादिति ॥ २६३ ॥ ३६ ॥ इदानीं 'जुगप्पहाणसूरिसंख'त्ति चतुःषष्ट्यधिकद्विशततमं द्वारमाह—

**जा दुप्पसहो सूरी होहिंति जुगप्पहाण आयरिया । अज्जसुहम्मप्पभिई चउरहिया दुन्नि य सहस्सा ॥ ३७ ॥**

इहावसर्पिण्यां दुष्षमावसानसमये द्विहस्तोच्छ्रितवपुर्विंशतिवर्षायुष्कः पुष्कलतपःक्षपितकर्मतया समासन्नसिद्धिसौधः शुद्धान्तरात्मा दशवैकालिकमात्रसूत्रधरोऽपि चतुर्दशपूर्वधर इव शक्रपूज्यो दुप्रसभनामा सर्वान्तिमः सूरिर्भविष्यति, ततस्तं दुष्प्रसभं यावत्तमभिव्याप्यैवेत्यर्थः, आर्यसुधर्मप्रभृतयः आरात्—सर्वहेयधर्मेभ्योऽर्वाग्यातः आर्यः स चासौ सुधर्मस्तत्प्रभृतयः, प्रभृतिग्रहणाच्च जम्बूस्वामिप्रभवशय्यम्भवाद्या गणधरपरम्परा गृह्यते, युगप्रधानाः—तत्कालप्रचरत्पारमेश्वरप्रवचनोपनिषद्वेदित्वेन विशिष्टतरमूलगुणोत्तरगुणसंपन्नत्वेन च तत्कालापेक्षया भरतक्षेत्रमध्ये प्रधाना आचार्याः—सूरयश्चतुरधिकसहस्रद्वयप्रमाणा भविष्यन्ति, अन्ये तु चतूरहितसहस्रद्वयप्रमाणा इत्याहुः,

तत्त्वं तु सर्वविदो विदन्ति, यच्च महानिशीथग्रन्थे जगन्थ ग्रन्थकारः—"इत्थं चायरियाणं पणपन्ना होंति कोडिलक्खाओ। कोडिसहस्से कोडीसए य तह इत्तिए चेवत्ति ॥ १ ॥" [इत्थं चाचार्याणां पञ्चपञ्चाशत्कोटीलक्षाः कोटीसहस्रा कोटीशतं तथैतावन्त एवेति ॥ १ ॥] (५५५५१५५ कोट्यः) तत्सामान्यमुनिपत्यपेक्षया द्रष्टव्यं, तथा च तत्रैवोक्तम्—"एएसिं मज्झाओ एगे निव्वडइ गुणगणाइन्ने। सव्वुत्तमभंगेणं तित्थयरस्साणुसरिस गुरू ॥ १ ॥" [एतेषां मध्यात् एके निपतन्ति गुणगणाकीर्णाः सर्वोत्तमभङ्गे तीर्थकरानुसदृशा गुरवः ॥ १ ॥] २६४ ॥ ३७ ॥ इदानीं 'उस्सप्पिणिअंतिमजिणतित्थप्पमाणं'ति पञ्चषष्ट्यधिकद्विशततमं द्वारमाह—

**ओसप्पिणअंतिमजिण तित्थं सिरिरिसहनाणपज्जाया। संखेज्जा जावइया तावयमाणं धुवं भविही ॥ ३८ ॥**

इह श्रीऋषभस्वामिनः केवलज्ञानपर्यायो वर्षसहस्रोन एकः पूर्वलक्षः, तत एवंस्वरूपा ज्ञानपर्यायाः सङ्ख्येया यावन्तो भवन्ति तावत्प्रमाणमुत्सर्पिण्यामन्तिमजिनस्य चतुर्विंशतितमस्य भद्रकृन्नाम्नस्तीर्थकृतस्तीर्थं ध्रुवं—निश्चितं भविष्यति, सङ्ख्येयपूर्वलक्षमानं तत्तीर्थमित्यर्थः, २६५ ॥ ३८ ॥ इदानीं 'देवाण पवियारो'त्ति षट्षष्ट्यधिकद्विशततमं द्वारमाह—

**दो कायप्पवियारा कप्पा फरिसेण दोन्नि दो रूवे। सद्दे दो चउर मणे नत्थि वियारो उवरि यत्थी ॥ ३९ ॥ गेविज्जणुत्तरेसुं अप्पवियारा हवंति सव्वसुरा। सप्पवियारठिईणं अणंतगुणसोक्खसंजुत्ता ॥ ४० ॥**

द्वौ कल्पाविति मर्यादायां कल्पशब्देन च तात्स्थ्यात् कल्पस्था देवाः, ततोऽयमर्थः—भवनपत्यादय ईशानान्ता देवाः क्लिष्टोदर्कपुंवेदा-

नुभावान्मनुष्यवन्मैथुने निमज्जन्तः सर्वाङ्गीणं कायक्लेशजं स्पर्शानन्दमासाद्य तृप्यन्ति नान्यथेति, कायेन—शरीरेण मनुष्यस्त्रीपुंसानामिव प्रवीचारो—मैथुनोपसेवनं ययोस्तौ कायप्रवीचारौ, तथा स्पर्शेन द्वौ सनत्कुमारमाहेन्द्रौ सप्रवीचारौ, तद्देवा हि मैथुनाभिलाषिणो देवीनां स्तनाद्यवयवस्पर्शलीलयैव कायप्रवीचारदेवेभ्योऽनन्तसुखमवाप्नुवन्ति तृप्ताश्च जायन्ते, देवीनामपि देवैः स्पर्शे कृते सति दिव्यप्रभावतः शुक्रपुद्गलसंचारेणानन्तगुणं सुखमुत्पद्यते, एवमग्रेऽपि भावना कार्या, तथा द्वौ ब्रह्मलोकलान्तकौ रूपदर्शने सप्रवीचारौ, देवीनां दिव्योन्मादजनकरूपावलोकनेनैव तत्र सुराः सुरतसुखजुषो जायन्त इत्यर्थः, तथा द्वौ शुक्रसहस्रारौ देवीशब्दे श्रुते सति सप्रवीचारौ, सुरसुन्दरीणां सविलासगीतहसितभाषितभूषणादिध्वनिमाह्लादकमाकर्ण्य उपशांतवेदास्तत्र देवा भवन्तीत्यर्थः, तथा चत्वारः—आनतप्राणतारणाच्युताभिधानदेवलोकदेवा मनसा सप्रवीचारा भवन्ति, ते हि यदा प्रवीचारचिकीर्षया देवीश्चित्तस्य गोचरीकुर्वन्ति तदैव तास्तत्संकल्पाज्ञानेऽपि तथाविधस्वभावतः कृताद्भुतशृङ्गाराः स्वस्थानस्थिता एव उच्चावचानि मनांसि दधाना मनसैव भोगायोपतिष्ठन्ते, तत इत्थमन्योऽन्यं मनःसङ्कल्पे दिव्यप्रभावादेव देवीषु शुक्रपुद्गलसंक्रमत उभयेषां कायप्रवीचारादनन्तगुणं सुखं संपद्यते तृप्तिश्चोल्लसतीति, उपरि च—ग्रैवेयकादिषु स्त्रीप्रवीचारः—स्त्रीसेवा सर्वथा नास्तीति ॥ ३९ ॥ अत एवाह—'गेवेज्जे'त्यादि, ग्रैवेयकेषु नवसु अनुत्तरविमानेषु पञ्चसु अप्रवीचारा—मैथुनसेवाविरहिता भवन्ति सर्वेऽपि सुरा—देवाः, नन्वेवं तेषामप्रवीचाराणां सुखं किंचिन्न भविष्यतीत्याह—सप्रवीचारस्थितिभ्यो देवेभ्यः सकाशादनन्तगुणसौख्यसंयुक्तास्ते ग्रैवेयका अनुत्तरसुराश्च भवन्ति, प्रतनुमोहोदयतया प्रशमसुखान्तर्लीनत्वात्, ते च तथाभवस्वभावत्वेन चारित्रपरिणामाभावान्न ब्रह्मचारिण इति २६६ ॥ ४० ॥ संप्रति 'कण्हराईण सरूवं'ति सप्तषष्ट्यधिकद्विशततमं द्वारमाह—

पंचमकप्पे रिट्ठंमि पत्थडे अट्ठ कण्हराईओ । समचउरंसक्खोडयठिइओ दो दो दिसिचउक्के ॥४१॥
पुव्वावरउत्तरदाहिणाहि मज्झिल्लियाहि पुट्ठाओ । दाहिणउत्तरपुव्वा अवरा बहिकण्हराईओ ॥४२॥
पुव्वावरा छलंसा तंसा पुण दाहिणुत्तरा बज्झा । अब्भंतरचउरंसा सव्वावि य कण्हराईओ ॥ ४३ ॥
आयामपरिक्खेवेहिं ताण असंखजोयणसहस्सा । संखेज्जसहस्सा पुण विक्खंभे कण्हराईणं
॥ ४४ ॥ ईसाणदिसाईसुं एयाणं अंतरेसु अट्ठसुवि । अट्ठ विमाणाइं तहा तम्मज्झे एक्कगविमाणं
॥ ४५ ॥ अच्चिं १ तहऽच्चिमालिं २ वइरोयण ३ पभंकरे य ४ चंदाभं ५ । सूराभं ६ सुक्काभं ७
सुपइट्ठाभं च ८ रिट्ठाभं ९ ॥ ४६ ॥ अट्ठायरट्ठिईया वसंति लोगंतिया सुरा तेसुं । सत्तट्ठभवभ-
वंता गिज्झंति इमेहिं नामेहिं ॥४७॥ सारस्सय १ माइच्चा २ वण्ही ३ वरुणा य ४ गद्दतोया ५ य ।
तुसिया ६ अव्वाबाहा ७ अग्गिच्चा ८ चेव रिट्ठा य ९ ॥ ४८ ॥ पढमजुयलंमि सत्त उ सयाणि
बीयंमि चउद्दस सहस्सा । तइए सत्त सहस्सा नव चेव सयाणि सेसेसु ॥ ४९ ॥

पञ्चमे ब्रह्मलोकनामके कल्पे तृतीये रिष्टप्रस्तटे अष्टौ कृष्णराज्यो भवन्ति, कृष्णाः सचित्ताचित्तपृथिवीपरिणामरूपा राज्यो—भित्त्याकारव्यवस्थिताः पङ्क्तयः कृष्णराज्यः, कथंभूतास्ता इत्याह—'समचतुरस्राः' समाः—सर्वास्वपि दिक्षु तुल्याः चतुरस्राः चतुष्कोणाः अत एवाखाटकस्थितयः, इहाखाटकाः प्रेक्षास्थाने आसनविशेषलक्षणाः, प्रज्ञप्तिटीकायां तथा व्याख्यानात्, तत्स्थितयः—तत्सदृशाकाराः, यथा चैता व्यवस्थितास्तथा दर्शयति—'दो दो दिसिचउक्के'त्ति दिक्चतुष्के—चतसृष्वपि पूर्वादिषु दिक्षु द्वे द्वे कृष्णराज्यौ व्यवस्थिते,

तथाहि—पूर्वस्यां दक्षिणोत्तरायते तिर्यग्विस्तीर्णे द्वे कृष्णराज्यौ, एवं दक्षिणस्यां पूर्वापरायते अपरस्यां दक्षिणोत्तरायते उत्तरस्यां पूर्वापरायते इति ॥ ४१ ॥ अथ तासामेव पुनः स्वरूपमाह—'पुव्वे'त्यादि, पूर्वापरोत्तरदक्षिणाभिर्मध्यवर्तिनीभिः कृष्णराजीभिः क्रमेण दक्षिणोत्तर-पूर्वापराबहिर्वर्तिन्यः कृष्णराज्यः स्पृष्टाः, अयमर्थः—पौरस्त्याभ्यन्तरा कृष्णराजी दक्षिणबाह्यां कृष्णराजीं स्पृशति, एवं दक्षिणाभ्यन्तरा पश्चिमबाह्यां पश्चिमाऽभ्यन्तरा उत्तरबाह्यां उत्तराभ्यन्तरा च पूर्वबाह्यामिति ॥४२॥ स्थापना चेयं । कोणविभागस्त्वेवं—'पुव्वावरे'त्यादि, पौरस्त्यपाश्चात्ये द्वे बाह्ये कृष्णराज्यौ षडस्रे—षट्कोटिके, उत्तरादाक्षिणात्ये पुनर्बाह्ये द्वे कृष्णराज्यौ त्र्यस्रे अभ्यन्तराः सर्वा अपि—चतस्रोऽपि कृष्णराज्यश्चतुरस्राः ॥ ४३ ॥ साम्प्रतमेतासामेव प्रमाणमाह—'आयामे'त्यादि, आयामपरिक्षेपाभ्यां—दैर्घ्यपरिधिभ्यां तासां—कृष्णराजीनामसङ्ख्याता योजनसहस्रा भवन्ति, विष्कम्भे—विस्तारे पुनः कृष्णराजीनां सङ्ख्याता योजनसहस्रा इति ॥ ४४ ॥ अथैतासां मध्ये विमानसंयोजनामाह—'ईसाणे'त्यादि, एतासामष्टानां कृष्णराजीनामीशानदिगादिष्वष्टस्वभ्यन्तरेषु—राजीद्वयमध्यलक्षणेष्ववकाशान्तरेष्वष्टौ विमानानि भवन्ति, तथा तन्मध्ये—तासां बहुमध्यभागे एकं विमानं ॥ ४५ ॥ तान्येव विमानानि नामतः प्राह—'अच्ची'त्यादि, अयमर्थः—अभ्यन्तरोत्तरपूर्वयोः कृष्णराज्योरन्तरे अर्चिर्विमानं १ एवं पूर्वयोरर्चिर्मालिः २ अभ्यन्तरपूर्वदक्षिणयोर्वैरोचनं ३ दक्षिणयोः प्रभङ्करं ४ अभ्यन्तरदक्षिणपश्चिमयोश्चन्द्राभं ५ पश्चिमयोः सूराभं ६ अभ्यन्तरपश्चिमोत्तरयोः शुक्राभं ७ उत्तरयोः सुप्रतिष्ठाभं ८ सर्वकृष्णराजीमध्यभागे तु रिष्टाभमिति ९ ॥ ४६ ॥ अथैतन्निवासिनो देवानाह—'अट्ठाये'त्यादि, तेष्वेवाकाशान्तरवर्तिष्वष्टासु अर्चिःप्रभृतिषु विमानेषु 'लोकान्तिकाः' लोकस्य—ब्रह्मलोकस्यान्ते—समीपे भवाः सुरा—देवाः परिवसन्ति, कथंभूता इत्याह—'अष्टातरस्थितयः' अष्टावतराणि—सागरोपमाणि स्थितिर्येषां ते तथा, तथा सप्तभिरष्टभिर्वा भवैर्भवान्तो मुक्तिर्येषां ते सप्ताष्टभवभवान्ताः एतैश्च—वक्ष्यमा-

णैर्नाममिरमी गीयन्ते—कथ्यन्ते ॥ ४७ ॥ तान्येव नामानि विमानक्रमेणाह—'सारे'त्यादि, सारस्वताः १ मकारोऽलाक्षणिकः आदित्याः २ वह्नयः ३ वरुणाः ४ गर्दतोयाः ५ तुषिताः ६ अव्याबाधाः ७ आग्नेयाः ८ एते संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति 'तास्थ्यात्तद्व्यपदेश' इति रिष्टविमानाधारा रिष्टाः ९, एते च सारस्वतादयो लोकान्तिकसुराः प्रव्रज्यासमयात्संवत्सरेणार्वागेव स्वयंसम्बुद्धमपि जिनेन्द्रं कल्प इतिकृत्वा भगवन्! सर्वजनजीवहितं तीर्थं प्रवर्तयेति बोधयन्ति ॥ ४८ ॥ अथैतेषां देवानां परिवारमाह—'पढमे'त्यादि, अयमत्राभिप्रायः—सारस्वतादित्ययोः समुदितयोः सप्त देवाः सप्त च देवशतानि परिवारः, एवं वह्निवरुणयोश्चतुर्दश देवाश्चतुर्दश च देवसहस्राः, गर्दतोयतुषितयोः सप्त देवाः सप्त च देवसहस्राः, शेषेषु त्वव्याबाधाग्नेयरिष्टेषु नव देवा नव च देवशतानीति, ॥ २६७ ॥ ४९ ॥ इदानीं 'सज्झायस्स अकरणं' त्यष्टपष्ट्यधिकद्विशततमं द्वारमाह—

संजमघा १ उप्पाये २ सादिव्वे ३ वुग्गहे य ४ सारीरे ५। महिया १ सचित्तरओ २ वासम्मि य ३ संजमे तिविहं ॥ ५० ॥ महिया उ गब्भमासे सचित्तरओ य ईसिआयंबे। वासे तिन्नि पगारा वुब्बुय तवज्ज फुसिए य ॥५१॥ दव्वे तं चिय दव्वं खेत्ते जहियं तु जच्चिरं कालं। ठाणाइभास भावे मोत्तुं उस्सासउम्मेसे ॥ ५२ ॥ पंसू य मंसरुहिरे केससिलावुट्ठि तह रयुग्घाए। मंसरुहिरे अहरत्तं अवसेसे जच्चिरं सुत्तं ॥ ५३ ॥ पंसू अचित्तरओ रयस्सलाओ दिसा रउग्घाओ। तत्थ सवाए निव्वायए य सुत्तं परिहरंति ॥ ५४ ॥ गंधव्वदिसा विज्जुक्क गज्जिए जूव जक्खआलित्ते। एक्केक्कपोरिसिं गज्जियं तु दो पोरिसी हणइ ॥ ५५ ॥ दिसिदाहो छिन्नमूलो उक्क सरेहा पगाससंजुत्ता।

संझाछेयावरणो उ जूवओ सुक्कि दिण तिन्नि ॥ ५६ ॥ चंदिमसूरुवरागे निग्घाए गुंजिए अहोरत्तं । संझाचउ पडिवए जं जहिं सुगिम्हए नियमा ॥ ५७ ॥ आसाढी इंदमहो कत्तिय सुगिम्हए य बोद्धव्वे । एए महामहा खलु एएसिं जाव पाडिवया ॥ ५८ ॥ उक्कोसेण दुवालस चंदो जहन्नेण पोरिसी अट्ठ । सूरो जहन्न बारस पोरिसि उक्कोस दो अट्ठ ॥ ५९ ॥ सग्गहनिवुड्ड एवं सूराई जेण हुंतिऽहोरत्ता । आइन्नं दिणमुक्के सोच्चिय दिवसो य राई य ॥ ६० ॥ वुग्गहदंडियमाई संखोभे दंडिए व कालगए । अणरायए य सभए जच्चिरऽनिद्दोच्चऽहोरत्तं ॥ ६१ ॥ तद्दिवसभोइआइ अंतो सत्तण्ह जाव सज्झाओ । अणहस्स य हत्थसयं दिट्ठिविवित्तंमि सुद्धं तु ॥ ६२ ॥ मयहर पगए बहुपक्खिए य सत्तघर अंतर मयंमि । निदुक्खत्ति य गरिहा न पढंति सणियगं वावि ॥ ६३ ॥ तिरिपंचिंदिय दव्वे खेत्ते सट्ठिहत्थ पोग्गलाइन्नं । तिकुरत्थ महंतेगा नगरे बाहिं तु गामस्स ॥ ६४ ॥ काले तिपोरिसि अट्ठ व भावे सुत्तं तु नंदिमाईयं । सोणिय मंसं चम्मं अट्ठीवि य अहव चत्तारि ॥ ६५ ॥ अंतो बहिं व धोयं सट्ठी हत्थाउ पोरिसी तिन्नि । महकाइ अहोरत्तं रत्ते वूढे य सुद्धं तु ॥ ६६ ॥ अंडगमुज्झिय कप्पे न य भूमि खणंति इयरहा तिन्नि । असज्झाइयप्पमाणं मच्छियपाया जहिं बुड्डे ॥ ६७ ॥ अजराउ तिन्नि पोरिसि जराउयाणं जरे पडे तिन्नि । रायपह-बिंदुपडिए कप्पे वूढे पुणो नत्थि ॥ ६८ ॥ माणुस्सयं चउद्धा अट्ठिं मोत्तूण सयमहोरत्तं । परि-

**ग्रावन्नविवन्ने सेसे तिय सत्त अट्ठेव ॥ ६९ ॥ रत्तुक्कडा उ इत्थी अट्ठ दिणे तेण सत्त सुक्कहिए । तिण्ह दिणाण परेणं अणोउगं तं महारत्तं ॥ ७० ॥ दंते दिट्ठे विगिंचण सेसट्ठि बारसेव वरिसाइं । दड्ढट्ठीसु न चेव य कीरइ सज्झायपरिहारो ॥ ७१ ॥**

आ—मर्यादया सिद्धान्तोक्तन्यायेन अध्ययनं—पठनं आध्यायः सुष्ठु—शोभन आध्यायः स्वाध्यायः स एव स्वाध्यायिकं यत्र नास्ति तदस्वाध्यायिकं—रुधिरादि, तन्मूलभेदापेक्षया द्विधा—आत्मसमुत्थं परसमुत्थं च, आत्मनः—स्वाध्याय चिकीर्षोः समुद्भूतमात्मसमुत्थं, परस्मात्—स्वाध्यायकर्तुरन्यस्मात्समुद्भूतं परसमुत्थं, तत्र बहुवक्तव्यत्वात्प्रथमतः परसमुत्थमेव प्रतिपाद्यते, तच्च पञ्चविधं, तद्यथा—संयमघाति—संयमौपघातिकं १ औत्पातिकं—उत्पातनिमित्तं २ सदैवं—देवताप्रयुक्तं ३ व्युद्ग्रहः—संग्रामः ४ शारीरं च—शरीरसंभवं ५, एतेषु च पञ्चस्वप्यस्वाध्यायिकेषु स्वाध्यायं विदधतः साधोस्तीर्थकृदाज्ञाभङ्गादयो दोषा भवन्ति । तत्र संयमे—संयमोपघातविषयमस्वाध्यायिकं त्रिविधं—महिका सचित्तरजो वर्षं चेति । त्रीनपि भेदान् क्रमेण व्याख्यानयति—'मही'त्यादि, महिका गर्भमासे पतन्ती धूमरी प्रतीता, गर्भमासो नाम कार्तिकादिर्यावन्माघमासः, सा च पतनसमकालमेव सर्वमप्कायभावितं करोति, सचित्तरजो नाम व्यवहारसचित्ता अरण्यवातोद्धूता श्लक्ष्णा धूलिः, तच्च सचित्तरजो वर्णत ईषदाताम्रं दिगन्तरेषु दृश्यते, गाथायां पुंस्त्वं प्राकृतत्वात्, तदपि निरन्तरपातेन त्रयाणां दिनानां परतः सर्वं पृथ्वीकायभावितं करोति, वर्षस्य पुनस्त्रयः प्रकारा भवन्ति, तानेवाह—'बुब्बुय'त्ति यत्र वर्षे निपतति पानीयमध्ये बुद्बुदाः—तोयशलाकारूपा उत्तिष्ठन्ति तद्वर्षमप्युपचाराद् बुद्बुदमित्युच्यते, तद्वर्ज—तैर्बुद्बुदैर्वर्जितं द्वितीयं वर्षं, तृतीयं 'फुसिअय'त्ति जलस्पर्शिका निपतन्त्यः, तत्र बुद्बुदे

वर्षे निपतति यामाष्टकादूर्ध्वं, अन्ये तु व्याचक्षते—त्रयाणां दिनानां परतः, तद्वर्जे पञ्चानां दिनानां परतः, जलस्पर्शिकारूपे सप्तानां दिनानां परतः सर्वमप्कायस्पृष्टं भवति । अथ संयमघातिभेदानां सर्वेषामपि चतुर्विधं परिहारमाह—'दव्वे' इत्यादि, द्रव्ये—द्रव्यतस्तदेवास्वाध्यायिकं महिका सचित्तरजो वर्षं वा वर्ज्यन्ते, क्षेत्रे यावति क्षेत्रे महिकादि पतति तावत्क्षेत्रं, कालतो 'जच्चिरं' यावन्तं कालं पतति तावन्तं कालं, भावे—भावतो मुक्त्वा उच्छ्वासमुन्मेषं च, तद्वर्जने जीवितव्यव्याघातसंभवात्, शेषं—स्थानादिकं आदिशब्दाद्गमनागमनप्रतिलेखनादिपरिग्रहः कायिकीं चेष्टां भाषां च वर्जयन्ति, इह च न निष्कारणेन कामपि लेशतोऽपि चेष्टां कुर्वन्ति, ग्लानादिकारणे तु समापतिते यतनया हस्तसंज्ञया अक्षिसंज्ञया अङ्गुलीसंज्ञया वा व्यवहरन्ति पोतावरिता वा भाषन्ते वर्षाकल्पावृताश्च गच्छन्तीति । गतं संयमोपघात्यस्वाध्यायिकं इदानीमौत्पातिकमाह—'पंसू ये'त्यादि, अत्र वृष्टिशब्दः प्रत्येकमभिसंबध्यते, पांशुवृष्टौ मांसवृष्टौ रुधिरवृष्टौ केशवृष्टौ शिलावृष्टौ च, तत्र पांशुवृष्टिर्नाम यदचित्तं रजो निपतति, मांसवृष्टिर्मांसखण्डानि पतन्ति, रुधिरवृष्टिर्यत्र रुधिरबिन्दवः पतन्ति, केशवृष्टिर्यदुपरिभागात्केशाः पतन्ति, शिलावृष्टिः—पाषाणनिपतनं करकादिशिलावर्षमित्यर्थः, तथा रजउद्घाते—रजस्वलासु दिक्षु सूत्रं न पठ्यते, शेषाः सर्वा अपि चेष्टाः क्रियन्ते, तत्र मांसे रुधिरे च पतति एकमहोरात्रं वर्ज्यते, अवशेषे—पांशुवृष्ट्यादौ यावच्चिरं—यावन्तं कालं पांशुप्रभृति पतति तावन्तं कालं सूत्रं—नन्द्यादि न पठ्यते, शेषकालं तु पठ्यते । सम्प्रति पांशुरजउद्घातयोर्व्याख्यानमाह—'पंसू'इत्यादि, पांशवो नाम धूमाकारमापाण्डुरमचित्तरजः, रजउद्घातो रजस्वला दिशो यासु सतीषु समन्ततोऽन्धकारमिव दृश्यते, तत्र पांशुवृष्टौ रजउद्घाते वा सवाते निर्वाते च पतति यावत्पतनं तावत्सूत्रं परिहरन्ति । ॥ ५४ ॥ गतमौत्पातिकं, इदानीं सदेवमाह—'गंधव्वे'त्यादि, गन्धर्वनगरं नाम यच्चक्रवर्त्यादिनगरस्योत्पातसूचनाय संध्यासमये तस्य नगरस्योपरि द्वितीयं नगरं प्राकाराट्टा-

लकादिसंस्थितं दृश्यते, 'दिस'त्ति दिग्दाहः, विद्युत्—तडित् उल्का—सरेखा प्रकाशयुक्ता वा गर्जितं—जीमूतध्वनिः यूपको—वक्ष्यमाणलक्षणः यक्षादीप्तं नाम—एकस्यां दिशि अन्तराऽन्तरा यद् दृश्यते विद्युत्सदृशः प्रकाशः, एतेषु मध्ये गन्धर्वनगरादिकमेकैकां पौरुषीं हन्ति, एकैकं प्रहरं यावत्स्वाध्यायो न विधीयते इति भावः, गर्जितं पुनः द्विपौरुषीं हन्ति, इह च गन्धर्वनगरं नियमात् सदेवम्, अन्यथा तस्याभावात्, शेषकाणि तु दिग्दाहादीनि भाज्यानि—कदाचित्स्वाभाविकानि भवन्ति कदाचिद्देवकृतानि, तत्र स्वाभाविकेषु स्वाध्यायो न परिह्रियते, किंतु देवकृतेषु, परं येन कारणेन स्फुटं वैविक्त्ये न तानि न ज्ञायन्ते तेन तेषामविशेषेण परिहारः, उक्तं च—"गंधव्वनगर नियमा सादिव्वं सेसगाणि भइयाणि । जेण न नज्जंति फुडं तेण उ तेसिं तु परिहारो ॥ १ ॥" [गान्धर्वनगरं नियमात् सदैवं शेषकाणि भक्तानि । येन न ज्ञायन्ते स्फुटं तेन तु तेषां परिहार एव ॥ १ ॥] अथ दिग्दाहादिव्याख्यानमाह—'दिसी'त्यादि, दिशि—पूर्वादिकायां छिन्नमूलो दाहः—प्रज्वलनं दिग्दाहः, किमुक्तं भवति ?—अन्यतमस्यां दिशि महानगरं प्रदीप्तमिवोपरि प्रकाशोऽधस्तादन्धकार इति दिग्दाहः, उल्का प्रपतः सरेखा प्रकाशयुक्ता वा तारकस्येव पातः, यूपको नाम शुक्लपक्षे त्रीणि दिनानि यावद्, द्वितीयस्यां तृतीयस्यां चतुर्थ्यां चेत्यर्थः, सन्ध्याछेदः—सन्ध्याविभागः स आव्रियते येन स सन्ध्याच्छेदावरणश्चन्द्रः, इयमत्र भावना—शुक्लपक्षे द्वितीयातृतीयाचतुर्थीरूपेषु त्रिषु दिनेषु सन्ध्यागतश्चन्द्र इतिकृत्वा सन्ध्या न विभाव्यते ततस्तानि शुक्लपक्षे त्रीणि दिनानि यावच्चन्द्रः सन्ध्याच्छेदावरणः स यूपक इति, एतेषु त्रिषु दिनेषु प्रादोषिकं कालं न गृह्णन्ति प्रादोषिकीं च सूत्रपौरुषीं न कुर्वन्ति, सन्ध्याच्छेदाविभावनेन कालवेलापरिज्ञानाभावादिति, न केवलं अमूनि सदेवानि, किंत्वन्यान्यपि, तान्येवाह—'चंदी'त्यादि, चन्द्रस्य—चन्द्रविमानस्योपरागो—राहुविमानतेजसोपरञ्जनं चन्द्रोपरागो ग्रहणमित्यर्थः, एवं सूर्योपरागोऽपि, ततश्चन्द्रोपरागे सूर्योपरागे च तद्दिनेऽपगते इति वाक्यशेषः, तथा साभ्रे निरभ्रे वा

नभसि व्यन्तरकृतो महागर्जितसमो ध्वनिर्निर्घातः, गर्जितस्येव विकारो गुञ्जावद्गुञ्जमानो महाध्वनिर्गुञ्जितं, तस्मिन्निर्घाते गुञ्जिते च प्रत्येकमहोरात्रं यावत्स्वाध्यायपरिहारः, अयं चात्र विशेषः—यस्यां वेलायां निर्घातो गुञ्जितं वाऽधिकृते दिनेऽभवत् द्वितीयेऽपि दिने यावत्सैव वेला प्राप्ता भवति तावदस्वाध्याय एव, उक्तं च—"निग्घायगुञ्जिएसुं विसेसो—विइयदिणे जाव सा वेला अहोरत्तच्छेएण ण छिज्जइ, जहा अन्नेसु असज्झाइएसु" इति । 'संझाचउ'त्ति चतस्रः संध्यास्तिस्रो रात्रौ, तद्यथा—प्रस्थिते सूर्ये अर्धरात्रे प्रभाते च, चतुर्थी दिनस्य मध्यभागे, एतासु चतसृष्वपि सन्ध्यासु स्वाध्यायो न विधीयते, शेषक्रियाणां तु प्रतिलेखनादीनां तु न प्रतिषेधः, 'पाडिवए'त्ति प्रतिपद्ग्रहणेन प्रतिपत्पर्यन्ताश्चत्वारो महामहाः सूचिताः, ततश्चतुर्णां महामहानां चतसृषु प्रतिपत्सु तथैव स्वाध्याय एव न क्रियते, न शेषक्रियाणां प्रतिषेधः 'जं जहिं सुगिम्हए नियम'त्ति, एवमन्योऽपि य उत्सवः पशुवधादिबहुलो यस्मिन् ग्रामनगरादौ यावन्तं कालं प्रवर्तते स तत्र तावन्तं कालं वर्जनीयः, सुग्रीष्मकः—चैत्रमासभावी पुनर्महामहः सर्वेषु देशेषु शुक्लपक्षप्रतिपद आरभ्य चैत्रपौर्णमासीप्रतिपत्पर्यन्तो नियमात् प्रसिद्ध इति । के पुनस्ते चत्वारो महामहाः?, तत्र सूत्रकृदाह—'आसाढी'त्यादि, आषाढी—आषाढपौर्णमासीमह इन्द्रमहः—अश्वयुक्पौर्णमासी कार्त्तिकी—कार्त्तिकपौर्णमासी सुग्रीष्मकः—चैत्रपौर्णमासी, खलुशब्दस्यावधारणार्थत्वादेत एव चत्वारो महान्तः—सर्वातिशायिनो महा—उत्सवा महामहा बोद्धव्याः, एतेषां च चतुर्णां महामहानां मध्ये यो महामहो यस्मिन् देशे यतो दिवसादारभ्य यावन्तं कालं प्रवर्तते तस्मिन् देशे ततो दिवसादारभ्य तावन्तं कालं न स्वाध्यायं कुर्वन्ति, इह च यद्यपि सर्वेऽपि महामहाः पौर्णमासीपर्यन्ता एव प्रसिद्धास्तथापि क्षणानुवृत्तिसंभवेन प्रतिपदोऽप्यवश्यं वर्जनीयाः, अत एवाह—'जाव पाडिवइ'त्ति गतार्थं । सम्प्रति जघन्यत उत्कर्षतश्च चन्द्रोपरागं सूर्योपरागं चाधिकृत्य स्वाध्यायविघातकालमानमाह—'उक्कोसेणे'त्यादिगाथाद्वयं, चन्द्र उत्कर्षतो द्वादशपौरुषीं हन्ति जघ-

कथमिति चेदुच्यते—उद्गच्छंश्चन्द्रमा राहुणा गृहीतः, ततश्चतस्रः पौरुषी रात्रेर्हन्ति चतस्र आगामिनो दिवसस्य एवमष्टौ, न्यतरस्त्वष्टौ, कथमिति चेदुच्यते—उद्गच्छंश्चन्द्रमा राहुणा गृहीतः, ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगामिन्या रात्रेश्चतस्रो द्वितीयस्य द्वादश पुनरेवं—प्रभातकाले चन्द्रमाः सग्रहण एवास्तमुपगतः ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगामिन्या रात्रेश्चतस्रो द्वितीयस्य दिवसस्य, अथवा औत्पातिकग्रहणेन सर्वरात्रिकं ग्रहणं सञ्जातं सग्रह एव निमग्नः, तत्र संदूषितरात्रेश्चतस्रः पौरुषीरन्यच्चाहोरात्रं, अथवा अभ्रच्छन्नतया विशेषपरिज्ञानाभावाच्च न ज्ञातं कस्यां वेलायां ग्रहणं ? प्रभाते च सग्रहो निमज्जन् दृष्टस्ततः समग्रा रात्रिः परिहृता अन्यच्चा-होरात्रमिति द्वादश। तथा सूर्यो जघन्येन द्वादश पौरुषीर्हन्ति उत्कर्षतो द्वावष्टौ—षोडश पौरुषीरित्यर्थः, कथमिति चेदुच्यते—सूर्यः सग्रह एवा-स्तमुपयातः, ततश्चतस्रः पौरुषी रात्रेर्हन्ति चतस्र आगामिनो दिवसस्य चतस्रस्ततः परस्या रात्रेरेवं द्वादश, षोडश पुनरेवं—सूर्य उद्गच्छन् राहुणा गृहीतः सकलं च दिवसमुत्पातवशात्सग्रहः स्थित्वा सग्रह एवास्तं गतः, ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगा-मिन्या रात्रेश्चतस्रोऽपरदिवसस्य ततोऽपि चतस्रोऽपरस्या रात्रेः एवं षोडश पौरुषीर्हन्ति सग्रह उद्गतः सग्रह एवास्तमितः, तथा चोक्तम्— "एयं उग्गच्छंतगहिए सग्गहनिवुड्डे दट्ठव्व" मिति, कथमिति चेदुच्यते—'सूराई जेण होंतऽहोरत्त'त्ति सूर्योदयो येनाहोरात्राः, यतः सूर्योदिरहोरात्रस्ततो दिनमुक्ते सूर्ये स एव दिवसः सैव च रात्रिरस्वाध्यायिकतया परिह्रियन्ते, चन्द्रे तु तस्यामेव रात्रौ मुक्ते यावदपर-श्चन्द्रो नोदेति तावदस्वाध्याय इति सैव रात्रिरपरं च दिनमित्येवमहोरात्रमस्वाध्यायः, अन्ये पुनराहुः आचीर्णमिदं—चन्द्रो रात्रौ गृहीतो रात्रावेव मुक्तस्तस्या एव रात्रेः शेषं वर्जनीयं, यस्मादागामिसूर्योदये समाप्तिरहोरात्रस्य जाता, सूर्योऽपि यदि दिवा गृहीतो दिवैव च मुक्तस्ततस्तस्यैव दिवसस्य शेषं रात्रिश्च वर्जनीयेति। गतं सदैवमस्वाध्यायिकं, इदानीं व्युद्ग्रहजमाह—'वुग्गहे'त्यादि गाथाद्वयं, व्युद्ग्रहे—परस्परविग्रहे दण्डिकादीनां, आदिशब्दात्सेनापत्यादीनां च परस्परं विग्रहेऽस्वाध्यायः, इयमत्र भावना—द्वौ दण्डिकौ सस्क-

न्धावारौ परस्परं संग्रामं कर्तुकामौ यावन्नोपशाम्यतस्तावत्स्वाध्यायं कर्तुं न कल्पते, एवं द्वयोः सेनाधिपत्योर्द्वयोर्वा तथाविधप्रसिद्धिपात्रयोः स्त्रियोः परस्परं व्युद्ग्रहे वर्तमाने अथवा मल्लयुद्धे तथा द्वयोर्ग्रामयोः परस्परं कलहभावे बहवस्तरुणाः परस्परं लोष्टैर्युध्यन्ति यदिवा बाहुयुद्धादिभिः स्वतो लोष्टादिभिर्वा परस्परं कलहे देशप्रसिद्धे रजःपर्वणि वा यावन्नोपशमो भवति सेनाधिपादिव्युद्ग्रहस्य तावदस्वाध्यायः, किं कारणमिति चेदुच्यते तत्र वानमन्तराः कौतुकेन स्वस्वपक्षेण समागच्छन्ति ते छलयेयुः, भूयसां च लोकानामप्रीतिर्यथा वयमेवं भीता वर्तामहे कामप्यापदं प्राप्स्यामः एते च श्रमणका निर्दुःखाः सुखं पठन्ति, तथा दण्डिके कालगते 'अणरायए य'त्ति यावदन्यो राजा नाभिषिक्तो भवति तावत्प्रजानां महान् संक्षोभो भवति तस्मिन् संक्षोभे सति स्वाध्यायो न कल्पते, सभयं—म्लेच्छादिभयाकुलं तस्मिन्नपि स्वाध्यायो न कर्तव्यः, एतेषु सर्वेषु व्युद्ग्रहादिष्वस्वाध्यायविधिमाह—'जच्चिरऽनिदोच्चऽहोरत्तं'ति व्युद्ग्रहादिषु यच्चिरं—यावन्तं कालं 'अनिदोच्चं' इत्यनिर्भयमस्वास्थ्यमित्यर्थः, तावन्तं कालमस्वाध्यायः, स्वस्थीभवनानन्तरमप्येकमहोरात्रं परिहृत्य स्वाध्यायः कर्तव्यः, उक्तं च—"निद्दोच्चीभूएवि अहोरत्तमेगं परिहरित्ता सज्झाओ कीरइ" इति । इह 'संखोभे दंडिए य कालगए' इत्यनेनान्यदपि सूचितमस्ति ततस्तदभिधित्सुराह—'तद्दिवसे'त्यादि, भोजिके—ग्रामस्वामिनि आदिशब्दाद्वक्ष्यमाणमहत्तरादिपरिग्रहः-सप्तानां गृहाणामन्तः—मध्ये कालगते सति तद्दिवसमहोरात्रं यावदस्वाध्यायः—स्वाध्यायपरिहारः, प्रसङ्गादन्यदपि प्रतिपादयति—'अणाहस्स' इत्यादि, कोऽप्यनाथो हस्तशताभ्यन्तरे मृतः तस्मिन्ननाथे हस्तशताभ्यन्तरे कालगते स्वाध्यायो न क्रियते, तत्रेयं यतना—शय्यातरस्यान्यस्य वा तथाविधस्य श्रावकस्य यथा वार्ता कथ्यते स्वाध्यायान्तरायमस्माकमनाथमृतकेन कृतमस्ति, ततः सुन्दरं भवति यदीदं छर्द्यते, एवमभ्यर्थितो यदि शय्यातरादिः परिष्ठापयेत्ततः शुभं भवतीति स्वाध्यायः कार्यः, अथवा (च) शय्यातरादिर्न कोऽपि परिष्ठापयि-

तुमिच्छति तदाऽन्यस्यां वसतौ व्रजन्ति, यद्यन्या वसतिर्नास्ति तदा रात्रौ सागारिकासंलोके वृषभास्तदनाथमृतकमन्यत्र प्रक्षिपन्ति, अथ तत्कलेवरं श्वशृगालादिभिः समन्ततो विकीर्णं ततः समन्ततो निभालयन्ति यद् दृष्टं तत्सर्वमपि त्यजन्ति इतरस्मिंस्तु प्रयत्ने कृतेऽप्यदृष्टे अशठा इतिकृत्वा शुद्धाः, स्वाध्यायं कुर्वन्ति, अपि न प्रायश्चित्तभाज इति भावः। संप्रति 'तद्दिवसभोइयाई' इत्यत्रोक्तमादिशब्दं व्याख्यानयति—'मयहरे'त्यादि, महत्तरके—ग्रामप्रधाने प्रकृते—ग्रामाधिकारनियुक्ते बहुपाक्षिके—बहुस्वजने, चकारात् शय्यातरे, अन्यस्मिन् वा प्राकृते मनुष्ये स्ववसत्यपेक्षया सप्तगृहाभ्यन्तरे मृते तद्दिवसं—एकमहोरात्रमस्वाध्यायः, किं कारणमत आह—निर्दुःखा अमी इत्यप्रीत्या गर्हासंभवात्, ततो न पठन्ति, (शनैर्वा पठन्ति) यथा न कोऽपि शृणोतीति, महिलारुदितशब्दोऽपि यावत् श्रूयते तावन्न पठन्ति। गतं व्युद्ग्रहजं, इदानीं शारीरिकस्यावसरः, तच्च द्विविधं—मानुषं तैरश्चं च, तत्र तैरश्चं त्रिधा—जलजं—मत्स्यादितिर्यग्भवं एवं गवादीनां स्थलजं मयूरादीनां च खजं, पुनर्जलजादिकं प्रत्येकं द्रव्यादिभेदतश्चतुर्विधं, तानेव द्रव्यादीन् चतुरो भेदानाह—'तिरी'त्यादि, द्रव्ये—द्रव्यतस्तिर्यक्पञ्चेन्द्रियाणां जलजादीनां रुधिरादिद्रव्यमस्वाध्यायिकं, न विकलेन्द्रियाणां, क्षेत्रे—क्षेत्रतः षष्टिहस्ताभ्यन्तरे परिहरणीयं, न परतः, अथ तत्स्थानं तैरश्चेन पौद्गलेन—मांसेन समन्ततः काककुक्कुरादिभिर्विक्षिप्तेनाकीर्णं—व्याप्तं तदा यदि स ग्रामस्तर्हि तस्मिन् तिसृभिः कुरथ्याभिरन्तरिते विकीर्णे पौद्गले स्वाध्यायः क्रियते, अथ नगरं तदा तत्र यस्यां राजा सबलवाहनो गच्छति देवयानो रथो वा विविधानि वा वाहनानि गच्छन्ति तया महत्याऽप्येकया रथ्यया अन्तरिते स्वाध्यायः कार्यः, अथ स ग्रामः समस्तोऽपि विकीर्णेन पौद्गलेनाकीर्णो विद्यते न तिसृभिः कुरथ्याभिरन्तरितं तत्पौद्गलमवाप्यते तदा ग्रामस्य बहिः स्वाध्यायो विधेयः। गता क्षेत्रतो मार्गणा, सम्प्रति कालतो भावतश्च तामाह—'काले'त्यादि, काले—कालतस्तज्जलजादिगतं रुधिरादि संभवकालादारभ्य तिस्रः

पौरुषीर्हन्तिं, 'अट्ठेवे'ति यत्र महाकायपञ्चेन्द्रियस्य मूषकादेर्मार्जारादिना मारणं तत्राष्टौ पौरुषीर्यावदस्वाध्यायः, गता कालतोऽपि मार्गणा, भावत आह—भावे—भावतो नन्द्यादिकं सूत्रं न पठन्ति। अथवा जलजादिकं प्रत्येकं रुधिरादिभेदतश्चतुर्विधं, तद्यथा—शोणितं मांसं चर्म अस्थि चेति, चत्वार्यप्येतानि प्रतीतानि। अत्रैव विशेषमाह—'अंतो'इत्यादि, यदि पष्टेर्हस्तानां अन्तः—मध्ये मांसं धौतं—प्रक्षालितं तदा तस्मिन् वहिर्नीतेऽपि यतस्ततस्तत्र नियमात् केचिदवयवाः पतिता भवन्ति ततस्तिस्रः पौरुषीः परिहर्तव्यः स्वाध्यायः, एवं पाकेऽप्यवसेयं, पष्टिहस्तेभ्यो वहिः—परतः पुनः प्रक्षालिते पक्वे वा पिशिते स्वाध्यायः कर्तव्यः, न कश्चिद्दोषः, 'अट्ठवे'ति प्राग्युक्तं तदिदानीं भावयति—'महकाए अहोरत्तं'ति एतच्च प्रागेव व्याख्यातं, अत्रैके प्राहुः—यदि मार्जारादिना मूषकादिरविभिन्न एव सन् मारितो मारयित्वा च गृहीत्वा अथवा गिलित्वा यदि ततः स्थानात्पलायते तदा पठन्ति साधवः सूत्रं, न कश्चिद्दोषः, अन्ये नेच्छंति यतः कस्तं जानाति अविभिन्नो भिन्नो वा मारित इति, अपरे पुनरेवमाहुः—यत्र मार्जारादिः स्वयं मृतोऽन्येन वा केनाप्यविभिन्न एव सन्मारितस्तत्र यावत्तत्कलेवरं न भिद्यते तावन्नास्वाध्यायिकं, विभिन्ने त्वस्वाध्यायिकमिति, तदेतदसमीचीनं, यतश्चर्मादिभेदतश्चतुर्विधमस्वाध्यायिकं तस्मादविभिन्नेऽप्यस्वाध्याय एव, 'रत्ते वूढे य सुद्धं'ति यत्तत्र पष्टिहस्ताभ्यन्तरे पतितं रक्तं—रुधिरं तेनावकाशेन पानीयप्रवाह आगतस्तेन व्यूढं तदा पौरुषीत्रयमध्येऽपि शुद्धमस्वाध्यायिकमिति स्वाध्यायः कार्यः। तैरश्चास्वाध्यायिकप्रस्तावादन्यदप्याह—'अण्डगे'त्यादि, पष्टिहस्ताभ्यन्तरे अण्डके पतिते यदि तदण्डकमभिन्नमद्याप्यस्ति तदा तस्मिन्नुज्झिते स्वाध्यायः कल्पते, अथ पतितं सत्तदण्डकं भिन्नं तस्य च कललबिन्दुर्भूमौ पतितस्तदा न कल्पते, न च भूमिं खनन्ति, इतरथा—भूमिखनने यदि तदस्वाध्यायिकमपनयन्ति तथापि तिस्रः पौरुषीर्यावदस्वाध्यायः, अथ कल्पे पतितं सत्तदण्डकं भिन्नं कललबिन्दुर्वा तत्र लग्नस्तदा तस्मिन् पष्टिह-

स्तेभ्यः परतो वहिर्नीत्वा धौते कल्पते, अण्डकविन्दोरसृग्बिन्दोर्वाऽस्वाध्यायिकस्य प्रमाणं यत्र मक्षिकापादा निमज्जन्ति, किमुक्तं भवति ?—यावन्मात्रे मक्षिकापादो निमज्जति तावन्मात्रेऽप्यण्डकविन्दौ रुधिरविन्दौ वा भूमौ पतितेऽस्वाध्यायः। किंच—"अजराउ"इत्यादि, अजरायुः—जरायुरहिता हस्तिन्यादिका प्रसूता तिस्रः पौरुपीः स्वाध्यायं हन्ति, अहोरात्रं छेदं मुक्त्वा—अहोरात्रे तु छिन्ने आसन्नायामपि प्रसूतायां कल्पते स्वाध्यायः, जरायुजादीनां पुनर्गवादीनां यावज्जरायुर्लम्बते तावदस्वाध्यायः, जरायौ पतितेऽपि सति तदनन्तरं तिस्रः पौरुषीर्यावदस्वाध्यायः, तथा राजपथे यद्यस्वाध्यायिकविन्दवः पतितास्तदा कल्पते स्वाध्यायः, किं कारणमिति चेदुच्यते यत्तत्स्वयोगत आगच्छतां गच्छतां च मनुष्यतिरश्चां पदनिपातैर्वोत्क्षिप्तं भवति, जिनाज्ञा चात्र प्रमाणमतो न कश्चित् दोषः, अथ पुनस्तदस्वाध्यायिकं तैरश्चं राजपथादन्यत्र षष्टिहस्ताभ्यन्तरे पतितं तदा तस्मिन् व्यूढे वर्षोदकेन उपलक्षणमेतत् दग्धे वा प्रदीपनकेन शुद्ध्यति स्वाध्यायः। गतं तैरश्चमधुना मानुषमाह—'माणुस्से'त्यादि, मानुषमस्वाध्यायिकं चतुर्धा—चर्म रुधिरं मांसं अस्थि च, एतेष्वस्थि मुक्त्वा शेषेषु सत्सु क्षेत्रतो हस्तशताभ्यन्तरे न कल्पते स्वाध्यायः कालतोऽहोरात्रं, 'परियावन्नविवन्ने'त्ति मानुषं तैरश्चं वा यद्रुधिरं तद्यदि पर्यापन्नत्वेन—परिणामान्तरापन्नत्वेन स्वभावाद्वर्णाद्विवर्णीभूतं भवति खदिरकल्कसदृशं तदा तदस्वाध्यायिकं न भवतीति क्रियते तस्मिन् पतितेऽपि स्वाध्यायः, 'सेस'त्ति पर्यापन्नं विवर्णं मुक्त्वा शेषमस्वाध्यायिकं भवति, 'तिग'त्ति यदविरताया मासे २ आर्तवमस्वाध्यायिकमागच्छति तत्स्वभावतस्त्रीणि दिनानि गलति, ततस्तानि त्रीणि दिनानि यावदस्वाध्यायः, त्रयाणां दिवसानां परतोऽपि कस्याश्चिद्गलति परं न तदार्तवं भवति किंतु तन्महारक्तं नियमात् पर्यापन्नं विवर्णं भवतीति नास्वाध्यायिकं गण्यते, तथा यदि प्रसूताया दारको जातस्तदा सप्त दिनान्यस्वाध्यायिकं अष्टमे दिवसे कर्तव्यः स्वाध्यायः, अथ दारिका जाता तर्हि सा रक्तोत्कटेति तस्यां जाता-

यामष्टौ दिनान्यस्वाध्यायः, नवमे दिने स्वाध्यायः कल्पते । एनमेव गाथावयवं व्याचिख्यासुराह—'रत्तु'इत्यादि, निषेककाले यदि रक्तोत्कटता तदा स्त्री इति तस्यां जातायां दिनान्यष्टावस्वाध्यायः, दारकः शुक्राधिकस्ततस्तस्मिन् जाते सप्त दिनान्यस्वाध्यायः, तथा स्त्रीणां त्रयाणां दिनानां परतस्तन्महारक्तमनार्तवं भवति ततो न गणनीयं । अस्थि मुक्त्वेति यत्पूर्वमुक्तं तस्येदानीं विधिमाह—'दंते' इत्यादि, यत्र हस्तशताभ्यन्तरे दारकादीनां दन्तः पतितो भवति तत्र प्रयत्नतो निभालनीयः, यदि दृश्यते तदा परिष्ठाप्यः, अथ सम्यग्मृग्यमाणैरपि न दृष्टस्तदा शुद्धमिति कल्पते स्वाध्यायः, अन्ये तु ब्रुवते—तस्यावहेठनार्थं कायोत्सर्गः करणीयः, दन्तं मुक्त्वा शेषे अङ्गोपाङ्गसम्बन्धिन्यस्थिनि हस्तशताभ्यन्तरे पतिते द्वादश वर्षाणि न कल्पते स्वाध्यायः, अथास्थीन्यग्निना दग्धानि तदा हस्तशताभ्यन्तरे स्थितेष्वपि तेषु नैव क्रियते स्वाध्यायस्य—वाचनादेः परिहारः, अनुप्रेक्षा तु न कदाचनापि प्रतिषिध्यते इति २६८ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८॥ ॥ ६९ ॥ ७० ॥ ७१ ॥ इदानीं 'नंदीसरदीवठिय'इत्येकोनसप्तत्यधिकद्विशततमं द्वारमाह—

विक्खंभो कोडिसयं तिसट्ठिकोडी उ लक्खतचुलसीई। नंदीसरो पमाणंगुलेण इय जोयणपमाणो ॥ ७२ ॥ एयंतो अंजणरयणसामकरपसरपूरिओवंता । बालतमालवणावलिजुयव्व घणपडलकलियव्व ॥ ७३ ॥ चउरो अंजणगिरिणो पुव्वाइदिसासु ताणमेक्केक्को । चुलसीसहस्सउच्चो ओगाढो जोयणसहस्सं ॥७४॥ जुम्मं। मूले सहस्सदसगं विक्खंभे तस्स उवरि सयदसगं। तेसु घणमणिमयाइं सिद्धाययणाणि चत्तारि ॥ ७५ ॥ जोयणसयदीहाइं बावत्तरि ऊसियाइं रम्माइं । पन्नास वित्थ-

डाइं चउदुवाराइं सधयाइं ॥ ७६ ॥ पइदारं मणितोरणपेच्छामंडवविरायमाणाइं । पञ्चधणुस्सय-
ऊसियअठ्ठुत्तरसयजिणजुयाइं ॥ ७७ ॥ मणिपेढिया महिंदज्झया य पोक्खरिणिया य पासेसुं ।
कंकेल्लिसत्तवन्नयचंपयचूयावणजुयाओ ॥ ७८ ॥ नंदुत्तरा य नंदा आणंदा नंदिवद्धणा नाम ।
पुक्खरिणीओ चउरो पुवंजणचउदिसिं संति ॥ ७९ ॥ विक्खंभायामेहिं जोयणलक्खप्पमाणजु-
त्ताओ । दसजोयणूसियाओ चउदिसितोरणवणजुयाओ ॥ ८० ॥ तासिं मज्झे दहिमुह मही-
हरा दुद्धदहियसियवन्ना । पोक्खरिणीकल्लोलाहणणोब्भवफेणपिण्डुव ॥ ८१ ॥ चउसठ्ठिसहस्सुच्चा
दसजोयणसहस्सवित्थडा सवे । सहसमहो उवगाढा उवरि अहो पल्लयागारा ॥ ८२ ॥ अंजण-
गिरिसिहरेसु व तेसुवि जिणमंदिराइं रुंदाइं । वावीणमंतरालेसु पवयदुगं दुगं अत्थि ॥ ८३ ॥ ते
रइकराभिहाणा विदिसिठिया अठ्ठ पउमरायाभा । उवरिठ्ठियजिणिंदसिणाणघुसिणरससंगपिं-
गुव ॥८४॥ अच्चंतमसिणफासा अमरेसरविंदविहियआवासा । दसजोयणसहसुच्चा उविद्धा गाउ-
यसहस्सं ॥८५॥ झल्लरिसंठाणठिया उच्चत्तसमाणवित्थडा सवे । तेसुवि जिणभवणाइं नेयाइं ज-
हुत्तमाणाइं ॥ ८६ ॥ दाहिणदिसाएँ भद्दा विसालवावी य कुमुयपुक्खरिणी । तह पुंडरीगिणी
मणितोरणआरामरमणीया ॥ ८७ ॥ पुक्खरिणी नंदिसेणा तहा अमोहा य वावि गोथूभा । तह
य सुदंसणवावी पच्छिमअंजणचउदिसासु ॥८८॥ विजया य वेजयंती जयंति अपराजिया उ वावी-

**ओ । उत्तरदिसाएँ पुव्वुत्तवावीमाणा उ बारसवि ॥ ८९ ॥ सव्वाओ वावीओ दहिमुहसेलाण ठाणभूयाओ । अंजणगिरिपमुहं गिरितेरसगं विज्जइ चउदिसिंपि ॥ ९० ॥ इय बावन्नगिरीसरसिहरट्ठियवीयरायविम्बाणं । पूयणकए चउविहदेवनिकाओ समेइ सया ॥ ९१ ॥**

इतो जम्बूद्वीपादष्टमो वलयाकारः कामं कमनीयतया सकलसुरविसरानन्दी नन्दीश्वरो नाम द्वीपोऽस्ति, नन्द्या—अत्युदारजिनमन्दिरोद्यानपुष्करिणीपर्वतप्रभृतिप्रभूतपदार्थसार्थसमुद्भूतयाऽत्यद्भूतया समृद्ध्या ईश्वरः—स्फातिमान्नन्दीश्वरः, स च विष्कम्भे—चक्रवालविष्कम्भतः एकं कोटिशतं त्रिषष्टिः कोट्यश्चतुरशीतिर्लक्षाः १६३८४००००० इत्येतावद्योजनप्रमाणः, योजनानि चात्र प्रमाणाङ्गुलनिष्पन्नान्यवसेयानि । अथाञ्जनशैलादिवक्तव्यतामाह—'एयन्तो'इत्यादि गाथात्रिकं, एतस्य नन्दीश्वरस्य द्वीपस्यान्तः—मध्यभागे पूर्वादिषु दिक्षु एकैकस्यां दिशि एकैकभावेन चत्वारः सर्वात्मनाऽञ्जनरत्नमया अञ्जनगिरयः प्रज्ञप्ताः, तद्यथा—पूर्वस्यां दिशि देवरमणः दक्षिणस्यां नित्योद्योतः पश्चिमायां स्वयंप्रभः उत्तरस्यां रमणीयः, उक्तं च—"पुव्वदिसि देवरमणो निच्चुज्जोओ य दाहिणदिसाए । अवरदिसाएँ सयंपभ रमणिज्जो उत्तरे पासे ॥ १ ॥" कथंभूतास्ते इत्याह—अञ्जनरत्नानां—कृष्णरत्नविशेषाणां ये श्यामाः करप्रसराः—प्रभापटलानि तैः पूरिताः—परिपूर्णतां नीता उपान्ताः—पर्यन्तभागा येषां ते तथा, एवंविधाश्चोत्प्रेक्ष्यन्ते—बालतमालवनावलीयुता इव—तरुणतरतमालतरुवनमण्डलीवलयिता इव, तथा घनपटलकलिता इव—प्रावृषेण्यपयोदपङ्क्तियुक्ता इव, धाराधरा हि विविधोद्यानहृद्याः सजलजलदजालमालिनो हि भवन्तीति, तथा तेषामञ्जनकपर्वतानामेकैकोऽञ्जनकः पर्वतः प्रत्येकं चतुरशीतियोजनसहस्राणि उच्चः—उच्छ्रितः एकं योजनसहस्रमवगाढो—भूमिप्रविष्टः, तथा तस्यैकैकस्याञ्जनगिरेर्मूले—धरणितले सहस्रदशकं—दश योजनसहस्राणि भवन्ति विष्कम्भे—विस्तरतः, तदनन्तरं च

मात्रया मात्रया परिहीयमानस्य तस्य उपरि—पर्यन्तभागे शतदशकं—योजनसहस्रं विष्कम्भेन, एवं चैते चत्वारोऽप्यञ्जनगिरयो मूले वि-
स्तीर्णा मध्ये संक्षिप्ता उपरि च तनुकाः संवृत्ताः, तेषु चाञ्जनगिरिषु घनमणिमयानि—नानाविधनिःसपत्नरत्ननिर्मितानि एकैकस्मिन्नेकैक-
सद्भावाश्चत्वारि सिद्धायतनानि—शाश्वतानि सिद्धानां वा—शाश्वतीनामर्हत्प्रतिमानामायतनानि सिद्धायतनानि भवन्ति । अथैतेषामेव प्रमा-
णादिप्रतिपादनायाह—'जोयणे'त्यादि गाथात्रयं, तानि सिद्धायतनानि योजनशतमेकं दीर्घाणि—पूर्वपश्चिमतः द्वासप्ततिर्योजनान्युच्छ्रि-
तानि रम्याणि—रमणीयानि पञ्चाशद्योजनानि विस्तृतानि—विस्तीर्णानि दक्षिणोत्तरतः, तथा एकैकस्यां दिशि एकैकसद्भावेन चत्वारि
द्वाराणि येषु तानि चतुर्द्वाराणि, सध्वजानि—सपताकानि, तथा प्रतिद्वारमेकैकस्मिन् द्वारे मणयः—चन्द्रकान्तादिरत्नविशेषास्तन्निष्पन्नैस्तोरणैः,
प्रेक्षा—प्रेक्षणकं तदर्थं मण्डपाः—प्रेक्षामण्डपास्तैश्च प्रसिद्धस्वरूपैर्विशेषेण राजमानानि—शोभमानानि, तथा पञ्चधनुःशतसमुच्छ्रितैरष्टोत्तर-
शतसङ्ख्यैः ऋषभवर्धमानचन्द्राननवारिषेणाख्यैर्जिनैः शाश्वतप्रतिमाभिर्युतानि—संयुक्तानि । तेषां सिद्धायतनानां मध्ये मणिमय्यः—सर्वा-
त्मना रत्नमय्यः पीठिका—वेदिकाः प्रज्ञप्ताः, तासामुपरि महेन्द्रध्वजाः, महेन्द्रा इत्यतिमहान्तः समयभाषया ते च ते ध्वजाश्चेति, अथवा
महेन्द्रस्यैव—शक्रादेर्ध्वजा महेन्द्रध्वजाः, तेषां च पुरतः प्रत्येकं योजनशतायामाः पञ्चाशद्योजनविष्कम्भा दशयोजनोद्वेधाः पुष्करिण्यो—
वाप्यः प्रज्ञप्ताः, ताश्च पार्श्वेषु चतसृषु दिक्षु कङ्केलिसप्तपर्णचम्पकचूतवनयुक्ताः, तत्र पूर्वस्यां दिशि अशोकवनं दक्षिणस्यां सप्तच्छदवनं
पश्चिमायां चम्पकवनं उत्तरस्यां च सहकारवनमिति । उक्ता अञ्जनगिरिवक्तव्यता, अथ पुष्करिणीवक्तव्यतामाह—'नन्दु'इत्यादि गाथाद्वयं,
तेषु चतुर्षु अञ्जनगिरिषु मध्ये योऽसौ पूर्वः—पूर्वदिग्भावी अञ्जनगिरिस्तस्य चतुर्दिशि—चतसृषु दिक्षु लक्षमेकं गत्वा चतस्रः पुष्करिण्यः
सन्ति, तद्यथा—पूर्वस्यां नन्दोत्तरा दक्षिणस्यां नन्दा अपरस्यां आनन्दा उत्तरस्यां नन्दिवर्धना च, ताश्च विष्कम्भायामाभ्यां योजन-

लक्षप्रमाणयुक्ता दश योजनान्युच्छ्रिता—उद्विद्धाः, तथा चतसृषु दिक्षु नानामणिमयस्तम्भसंनिविष्टैरुत्तुङ्गैस्तोरणैः पूर्वादिदिक्क्रमेणाशोकसप्तच्छदचम्पकचूतवनैश्च युक्ताः—परिक्षिप्ताः । एवं शेपाञ्जनगिरिसम्बन्धिनीनामपि पुष्करिणीनां वाच्यं । तासां मध्ये—बहुमध्यदेशभागे सर्वात्मना स्फटिकमया दधिमुखनामानो महीधराः—पर्वताः सन्ति, ते च दुग्धदधिवत् सितः—श्वेतो वर्णः—कान्तिर्येषां ते तथा, अतश्चोत्प्रेक्ष्यन्ते—पुष्करिणीनां—वापीनां ये कल्लोलाः—समुल्लसन्तस्तरङ्गास्तेपां यदाहननं—परस्परं प्रतिस्फालनं तत्समुद्भूताः फेनपिण्डा इव । एते दधिमुखपर्वताः सर्वेऽपि चतुःषष्टियोजनसहस्राण्युच्छ्रिता दश योजनसहस्राणि विस्तीर्णाः एकं योजनसहस्रमधोऽवगाढाः उपर्यधश्च सर्वत्र समाः अत एव पल्यङ्कसंस्थानसंस्थिताः । तेष्वपि दधिमुखपर्वतेषु रुन्द्राणि—विशालानि जिनमन्दिराणि—सिद्धायतनानि वक्तव्यानि, यथाऽञ्जनगिरिशिखरेषु अञ्जनपर्वतोपरिवर्तिसिद्धायतनवक्तव्यतात्रापि वक्तव्येति भावः, तथैतासामेव वापीनामपान्तरालेषु द्वौ द्वौ पर्वतौ स्तः । तत्स्वरूपमाह—'ते'इत्यादि गाथात्रयं, पूर्वाञ्जनगिरेर्विदिक्षु व्यवस्थिता द्वयोर्द्वयोर्वाप्योरन्तराले वहिःकोणयोः प्रत्यासत्तौ प्रत्येकं पर्वतद्वितयभावादष्टौ रतिकरनामानः पर्वताः सन्ति, ते च 'पद्मरागाभाः' पद्मरागः—शोणमणिविशेपस्तद्वदाभा—प्रभा येपां ते तथा, अत उत्प्रेक्ष्यन्ते—उपरिस्थिताः—तदुपरि वर्तमाना ये जिनेन्द्राः—शाश्वतप्रतिमास्तेपां यत् स्नानं—कुङ्कुमजलं तत्संपर्कतः पाटला इव, सर्वेऽपि चैते रतिकराः प्रकामकोमलस्पर्शाः तथा सुरपतिसमूहकृतावासाः दश योजनसहस्राण्युच्छ्रिता गव्यूतसहस्रं—सार्धयोजनशतद्वयमुद्विद्धाः उच्चत्वसमानविस्तरा दशयोजनसहस्रविस्तीर्णा इत्यर्थः सर्वतः समा झल्लरीसंस्थानसंस्थिता इति, तेष्वपि रतिकरेषु यथोक्तमानानि पूर्वोक्तप्रमाणानि जिनभवनानि ज्ञेयानि, तदेवमुक्ता पूर्वाञ्जनगिरिवक्तव्यता, एतदनुसारेण च शेपदिगञ्जनगिरीणामपि सर्वं वाच्यं, नवरं पुष्करिणीनां नामसु विशेपः, तमेवाह—'दाहिणे'त्यादि गाथाचतुष्कं, दक्षिणस्यां दिशि दक्षिणाञ्जने इत्यर्थः पूर्वस्यां दिशि भद्रा वापी दक्षिणस्यां

दिशि विशाला अपरस्यां दिशि कुमुदा उत्तरस्यां पुण्डरीकिणी, एताश्च सर्वा अपि मणिमयतोरणारामरमणीयाः । तथा पश्चिमाञ्जनगिरौ पूर्वस्यां दिशि नन्दिषेणा वापी दक्षिणस्याममोघा अपरस्यां गोस्तूभा उत्तरस्यां सुदर्शना तथोत्तराञ्जनगिरौ पूर्वस्यां दिशि विजया दक्षिणस्यां वैजयन्ती अपरस्यां जयन्ती उत्तरस्यामपराजिता, द्वादशानामप्यमूषां वापीनां प्रमाणादिकं सर्वं पूर्वाञ्जनगिरिवापीवद् वक्तव्यं, सर्वा अपि षोडशाप्येता वाप्यो दधिमुखशैलानां स्थानभूताः—आधारभूता एव, एतासु वापीषु मध्यभागे दधिमुखशैला व्यवस्थिता इत्यर्थः, तदेवं नन्दीश्वरद्वीपे चतसृष्वपि दिक्षु प्रत्येकमञ्जनगिरिप्रमुखं गिरित्रयोदशकं विद्यते, तथाहि—एकैकस्यां दिशि एकैकोऽञ्जनगिरिश्चत्वारो दधिमुखाः अष्टौ रतिकराः मिलिताश्च त्रयोदश, ते च चतसृष्वपि दिक्षु प्रत्येकमेतावतामद्रीणां सद्भावाच्चतुर्भिर्गुण्यन्ते, जाता द्विपञ्चाशद्गिरयः । साम्प्रतं सर्वोपसंहारमाह—'इये'त्यादि, इति—प्रागुक्तप्रकारेण द्विपञ्चाशत्सङ्ख्यगिरीश्वरशिखरेषु स्थितानां वीतरागबिम्बानां पूजाकृते चतुर्विधो—भवनपतिव्यन्तरज्योतिष्कवैमानिकलक्षणो देवनिकायः—सुरसमूहः सदा—सर्वकालं समेति, इह च नन्दीश्वरवक्तव्यतायां बहु वक्तव्यं तत्तु नोच्यते ग्रन्थगौरवभयात्, विशेषार्थिना च जीवाभिगमादिशास्त्राणि परिभावनीयानि, यच्चात्र जीवाभिगमद्वीपसागरप्रज्ञप्तिसंग्रहिण्यादिभ्यः किञ्चिदन्यथात्वं दृश्यते तन्मतान्तरमवसेयमिति २६९ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ इदानीं 'लद्धीओ'त्ति सप्तत्यधिकद्विशततमं द्वारमाह—

**आमोसहि १ विप्पोसहि २ खेलोसहि ३ जल्लओसही ४ चेव । सव्वोसहि ५ संभिन्ने ६ ओही ७**
**रिउ ८ विउलमइलद्धी ९ ॥ ९२ ॥ चारण १० आसीविस ११ केवलिय १२ गणहारिणो य १३**

पुव्वधरा १४। अरहंत १५ चक्कवट्टी १६ बलदेवा १७ वासुदेवा १८ य ॥ ९३ ॥ खीरमहुसप्पिआसव १९ कोट्ठयबुद्धी २० पयाणुसारी २१ य। तह बीयबुद्धि २२ तेयग २३ आहारग २४ सीयलेसा २५ य ॥ ९४ ॥ वेउव्विदेहलद्धी २६ अक्खीणमहाणसी २७ पुलाया २८ य। परिणामतववसेणं एमाई हुंति लद्धीओ ॥ ९५ ॥ संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो वावि (वयवा)। अन्ने विडित्ति विट्ठा भासंति पइत्ति पासवणं ॥ ९६ ॥ एए अन्ने य बहू जेसिं सव्वेवि सुरहिणोऽवयवा। रोगोवसमसमत्था ते हुंति तओसहिं पत्ता ॥ ९७ ॥ जो सुणइ सव्वओ मुणइ सव्वविसए उ सव्वसोएहिं। सुणइ बहुएवि सद्दे भिन्ने संभिन्नसोओ सो ॥ ९८ ॥ रिउ सामन्नं तम्मत्तगाहिणी रिउमई मणोनाणं। पायं विसेसविमुहं घडमेत्तं चिंतियं मुणइ ॥ ९९ ॥ विउलं वत्थुविसेसण नाणं तग्गाहिणी मई विउला। चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं ॥ १५०० ॥ आसी दाढा तग्गय महाविसाऽऽसीविसा दुविहभेया। ते कम्मजाइभेएण णेगहा चउविहविकप्पा ॥१॥ खीरमहुसप्पिसाओवमाणवयणा तयासवा हुंति। कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ॥ २ ॥ जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो। जो अत्थपएणऽत्थं अणुसरइ स बीयबुद्धीओ ॥ ३ ॥ अक्खीणमहाणसिया भिक्खं जेणाणियं पुणो तेणं। परिभुत्तं चिय खिज्जइ बहुएहिवि न उण अन्नेहिं ॥ ४ ॥ भवसिद्धियपुरिसाणं एयाओ हुंति भणियलद्धीओ। भवसिद्धियम-

हिलाणवि जत्तिय जायंति तं वोच्छं ॥५॥ अरहंतचक्किकेसवबलसंभिन्ने य चारणे पुव्वा । गणहर-पुलायआहारगं च न हु भवियमहिलाणं ॥ ६ ॥ अभवियपुरिसाणं पुण दस पुव्विल्लाउ केवलित्तं च । उज्जुमई विउलमई तेरस एयाउ न हु हुंति ॥ ७ ॥ अभवियमहिलाणंपि हु एयाओ हुंति भणियलद्धीओ । महुखीरासवलद्धीवि नेय सेसा उ अविरुद्धा ॥ ८ ॥

लब्धिशब्दस्य प्रत्येकमभिसम्बन्धात् आमर्शौषधिलब्धिः विप्रुडौषधिलब्धिः खेलौषधिलब्धिः जल्लौषधिलब्धिः सर्वौषधिलब्धिः सम्भिन्नेति 'सूचकत्वात्सूत्रस्य' सम्भिन्नश्रोतोलब्धिः अवधिलब्धिः ऋजुमतिलब्धिः विपुलमतिलब्धिः चारणलब्धिः आशीविषलब्धिः केवलिलब्धिः गण-धरलब्धिः पूर्वधरलब्धिः अर्हल्लब्धिः चक्रवर्तिलब्धिः बलदेवलब्धिः वासुदेवलब्धिः क्षीरमधुसर्पिराश्रवलब्धिः कोष्ठकबुद्धिलब्धिः पदानुसारिलब्धिः तथा बीजबुद्धिलब्धिः तेजोलेश्यालब्धिः आहारकलब्धिः शीतलेश्यालब्धिः वैकुर्विकदेहलब्धिः अक्षीणमहानसीलब्धिः पुलाकलब्धिः, एवमेता अष्टाविंशतिसङ्ख्याः आदिशब्दादन्याश्च जीवानां शुभशुभतरशुभतमपरिणामवशादसाधारणतपःप्रभावाच्च नानाविधलब्धयः ऋद्धिविशेषा भवन्ति। अथैताः क्रमेण व्याचिख्यासुः पूर्वं तावदामर्शौषध्यादिलब्धिपञ्चकं प्रपञ्चयितुमाह—'संफरिसे'त्यादि गाथाद्वयं, संस्पर्शनमामर्शः स एवौषधिर्यस्यासावामर्शौषधिः—करादिसंस्पर्शमात्रादेव विविधव्याधिव्यपनयनसमर्थो लब्धिलब्धिमतोरभेदोपचारात् साधुरेवामर्शौषधिरित्यर्थः, इदमत्र तात्पर्य—यत्प्रभावात् स्वहस्तपादाद्यवयवपरामर्शमात्रेणैवात्मनः परस्य वा सर्वेऽपि रोगाः प्रणश्यन्ति सा आमर्शौषधिः, 'मुत्तपुरीसाण विप्पुसो वावि'(ऽवयवा)त्तिमूत्रपुरीषयोर्विप्रुषः—अवयवाः इह विप्रुडुच्यते, 'विप्पुसो वाऽवि'त्ति पाठस्तु ग्रन्थान्तरेष्वदृष्टत्वादुपेक्षितः, अथचावश्यमेतद्व्याख्यानेन प्रयोजनं तदेत्थं व्याख्येयं—वाशब्दः समुच्चये अपिशब्द एवकारार्थो भिन्नक्रमश्च, ततो

मूत्रपुरीपयोरेवावयवा इह विप्रुडुच्यते इति, अन्ये तु भापन्ते–विडिति विष्ठा पत्ति प्रश्रवणं मूत्रं, 'सूचकत्वात् सूत्रस्ये'ति, तत 'एए'त्ति एतौ विप्रुण्मूत्रावयवौ 'अन्ने य'त्ति अन्ये च खेलजल्लकेशनखादयो वहवः सर्वे च समुदिता अवयवा येषां साधूनां सुरभयो रोगोपशमसमर्थाश्च ते साधवो भवन्ति, कथंभूता इत्याह–'तओसहिं पत्ति'त्ति ते च ते औपधयश्च तदौपधयो–विण्मूत्रखेलजल्लकेशनखाद्यौपधयः सर्वौषधयश्च ताः प्राप्तास्तदौपधिप्राप्ताः, विण्मूत्राद्यौपधयः सर्वौपधयश्च साधवो भवन्तीत्यर्थः, एतदुक्तं भवति–यन्माहात्म्यान्मूत्रपुरीपावयवमात्रमपि रोगराशिप्रणाशाय संपद्यते सुरभि च सा विप्रुडौपधिः, तथा खेलः–श्लेष्मा जल्लो–मलः कर्णवदननाशिकानयनजिह्वासमुद्भवः शरीरसम्भवश्च तौ खेलजल्लौ यत्प्रभावतः सर्वरोगापहारकौ सुरभी च भवतः सा क्रमेण खेलौपधिर्जल्लौपधिश्च, तथा यन्माहात्म्यतो विण्मूत्रकेशनखादयश्च सर्वेऽप्यवयवाः समुदिताः सर्वत्र भेपजीभावं सौरभं च भजंते सा सर्वौषधिरिति । सम्प्रति सम्भिन्नश्रोतोलब्धिमाह—'जो'इत्यादि, यः सर्वतः–सर्वैरपि शरीरदेशैः शृणोति स सम्भिन्नश्रोताः, अथवा यः सर्वानपि शब्दादीन् विपयान् सर्वैरपि श्रोतोभिः–इन्द्रियैर्जानाति, एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विपयान् योऽवगच्छतीत्यर्थः, स सम्भिन्नश्रोतोलब्धिमान्, अथवा द्वादशयोजनविस्तृतस्य चक्रवर्तिकटकस्य युगपद्ब्रुवाणस्य तत्तूर्यसङ्घातस्य वा समकालमास्फाल्यमानस्य सम्भिन्नान्–लक्षणतो विधानतश्च परस्परं विभिन्नान् जननिवहसमुत्थान् शङ्खकाहलाभेरीभाणकढक्कादितूर्यसमुत्थान् वा युगपदेव च सुवहून् शब्दान् यः शृणोति स संभिन्नश्रोताः सम्भिन्नश्रोतोलब्धिरिति । अथ ऋजुमतिलब्धिं विपुलमतिलब्धिं चाह–'रिउ'इत्यादि गाथाद्वयं, ऋजु–सामान्यं वस्तुमात्रं तद्ग्राहिणी मतिः–संवेदनं ऋजुमति मनोज्ञानं–मनःपर्यायज्ञानमेव, सा च प्रायो–वाहुल्येन विशेपविमुखं–देशकालाद्यनेकपर्यायपरित्यक्तं घटमात्रं परेण चिन्तितं जानाति, तथा विपुलं वस्तुनो घटादेर्विशेपाणां देशक्षेत्रकालादीनां मानं–सङ्ख्यास्वरूपं तद्ग्राहिणी मतिर्विपुला, सा

पर्यवशतैरुपेतमनुसरति—सौवर्णः पाटलिपुत्रकोऽद्यतनो महानपवरकस्थित इत्याद्यपि प्रभूतविशेषैर्विशिष्टं
च परेण चिन्तितं घटं प्रसङ्गतः पर्यवशतैरुपेतमनुसरति—सौवर्णः पाटलिपुत्रकोऽद्यतनो महानपवरकस्थित इत्याद्यपि प्रभूतविशेषैर्विशिष्टं
घटं परेण चिन्तितमवगच्छतीत्यर्थः, इदमत्र तात्पर्यं—मनःपर्यायज्ञानं द्वेधा—ऋजुमतिर्विपुलमतिश्च, तत्र सामान्यघटादिवस्तुमात्रचिन्तनप्र-
वृत्तमनःपरिणामग्राहि किञ्चिदविशुद्धतरमर्धतृतीयाङ्गुलहीनमनुष्यक्षेत्रविषयं ज्ञानं ऋजुमतिलब्धिः, पर्यायशतोपेतघटादिवस्तुविशेषचिन्तन-
प्रवृत्तमनोद्रव्यग्राहि स्फुटतरं संपूर्णमनुष्यक्षेत्रविषयं ज्ञानं विपुलमतिलब्धिः। सम्प्रत्याशीविपलब्धिमाह—'आसी'त्यादि, आश्यो—दंष्ट्रास्तासु
गतं—स्थितं महद्विषं येषां भवति ते आशीविषाः, ते च द्विभेदाः—कर्मभेदेन जातिभेदेन च, तत्र कर्मभेदेन पञ्चेन्द्रियतिर्यग्योनयो मनुष्या
देवाश्च सहस्रारान्ता इत्यनेकविधाः, एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकभुजङ्गादिसाध्यां क्रियां कुर्वन्ति, शापप्र-
दानादिना परं व्यापादयन्तीति भावः, देवास्त्वपर्याप्तावस्थायां तच्छक्तिमन्तो मन्तव्याः, ते हि पूर्वं मनुष्यभवे समुपार्जिताशीविषलब्धयः
सहस्रारान्तदेवेष्वभिनवोत्पन्ना अपर्याप्तावस्थायां प्राग्भविकाशीविषलब्धिसंस्कारादाशीविषलब्धिमन्तो व्यवह्रियन्ते, ततः परं तु पर्याप्ता-
वस्थायां संस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः, यद्यपि च नाम पर्याप्ता अपि देवाः शापादिना परं व्यापादयन्ति तथापि न
लब्धिव्यपदेशः, भवप्रत्ययतस्तथारूपसामर्थ्यस्य सर्वसाधारणत्वात्, गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरिति प्रसिद्धेः, जातिभेदेन च
वृश्चिकमण्डूकसर्पमनुष्यभेदाश्चतुर्विधाः क्रमेण बहुबहुतरबहुतमातिबहुतमविषाः, वृश्चिकविषं ह्युत्कृष्टतोऽर्धभरतक्षेत्रप्रमाणं वपुर्व्याप्नोति मण्डू-
कविषं भरतक्षेत्रप्रमाणं भुजङ्गविषं जम्बूद्वीपप्रमाणं मनुष्यविषं तु समयक्षेत्रप्रमाणमिति। अथ क्षीरमधुसर्पिराश्रवलब्धिं कोष्ठकबुद्धिलब्धिं
चाह—'खीरे'त्यादि, क्षीरं—दुग्धं मधु—मधुरद्रव्यं सर्पिः—घृतं एतत्स्वादोपमानं वचनं वैरस्वाम्यादिवत्तदाश्रवाः—क्षीरमधुसर्पिराश्रवा
भवन्ति, इयमत्र भावना—पुण्ड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्धार्धक्रमेण दीयते यावदेकस्याः पीतगोक्षीरायाः क्षीरं, तत्किल चातुरि-

क्यमित्यागमे गीयते, तद्यथोपभुज्यमानमतीव मनःशरीरप्रह्लादहेतुरुपजायते तथा यद्वचनमाकर्ण्यमानं मनःशरीरसुखोत्पादनाय प्रभवति ते क्षीराश्रवाः, क्षीरमिव वचनमा—समन्तात् श्रवन्तीति व्युत्पत्तेः, एवं मध्वपि किमप्यतिशायिशर्करादिमधुरद्रव्यं द्रष्टव्यं, घृतमपि पुण्ड्रेक्षुचारिगोक्षीरसमुत्थं मन्दाग्निकथितं विशिष्टवर्णाद्युपेतं, मध्विव वचनमाश्रवन्तीति मध्वाश्रवाः, घृतमिव वचनमाश्रवन्तीति घृताश्रवाः, उपलक्षणत्वाच्च अमृताश्रविण ईक्षुरसाश्रविण इत्यादयोऽप्येवमवसेयाः, अथवा येषां पात्रपतितं कदन्नमपि क्षीरमधुसर्पिरादिरसवीर्यविपाकं जायते ते क्रमेण क्षीराश्रविणो मध्वाश्रविणः सर्पिराश्रविण इत्यादि। तथा कोष्ठकनिक्षिप्तधान्यानीव सुनिर्गला—अविस्मृतत्वाच्चिरस्थायिनः सूत्रार्थौ येषां ते कोष्ठकधान्यसुनिर्गलसूत्रार्थाः कोष्ठबुद्धयः, कोष्ठे इव धान्यं या बुद्धिराचार्यमुखाद्विनिर्गतौ तदवस्थावेव सूत्रार्थौ धारयति न किमपि तयोः सूत्रार्थयोः कालान्तरेऽपि गलति सा कोष्ठबुद्धिलब्धिरिति भावः। अथ पदानुसारिलब्धिं बीजबुद्धिलब्धिं चाह—'जो' इत्यादि, योऽध्यापकादेः केनापि सूत्रपदेनाधीयते(ऽनुधावति—अधीते) बह्वपि सूत्रं स्वप्रज्ञयाऽभ्युह्य तदवस्थमेव गृह्णाति स पदानुसारलब्धिमान्, तथा उत्पादव्ययध्रौव्ययुक्तं सदित्यादिवदर्थप्रधानं पदमर्थपदं तेनैकेनापि बीजभूतेनाधिगतेन योऽन्यमश्रुतमपि यथावस्थितं प्रभूतमर्थमवगाहते स बीजबुद्धिलब्धिमान्, इयं च बीजबुद्धिलब्धिः सर्वोत्तमप्रकर्षप्राप्ता गणभृतां भगवतां, ते हि उत्पादादिपदत्रयमवधार्य सकलमपि द्वादशाङ्ग्यात्मकं प्रवचनमभिसूत्रयन्तीति। इदानीमक्षीणमहानसीलब्धिमाह—'अक्खीणे'त्यादि, येनानीतं भैक्षं बहुभिरपि—लक्षसङ्ख्यैरप्यन्यैस्तृप्तितोऽपि भुक्तं न क्षीयते यावदात्मना भुङ्क्ते, किंतु तेनैव भुक्तं निष्ठां याति तस्याक्षीणमहानसीलब्धिः, अत्र चावधिचारणकेवलिगणधारिपूर्वधरअर्हच्चक्रवर्तिबलदेववासुदेवतेजोलेश्याऽऽहारकशीतलेश्यावैक्रियपुलाकलब्धयः प्रायेण प्रागेव परमार्थतः प्रतिपादितत्वात्प्रतीतत्वाच्च सूत्रकृता न विवृता इति, तेजोलेश्याशीतलेश्यालब्धी च स्थानाशून्यार्थं किञ्चिद्व्याख्यायेते—तत्र तेजोले-

श्यालब्धिः क्रोधाधिक्यात्प्रतिपन्थिनं प्रति मुखेनानेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनदक्षतीव्रतरतेजोनिसर्जनशक्तिः; शीतलेश्यालब्धिस्त्वगण्यकारुण्यवशादनुग्राह्यं प्रति तेजोलेश्याप्रशमनप्रत्यलशीतलतेजोविशेषविमोचनसामर्थ्यं, पुरा किल गोशालकः कूर्मग्रामे करुणारसिकान्तःकरणतया स्नानाभावाविर्भूतयूकासन्ततितायिनं वैशिकायिनं बालतपस्विनमकारणकलहकलनतया 'अरे यूकाशय्यातर' इत्याद्ययुक्तोक्तिभिः कोपाटोपाध्मायमानमानसमकरोत्, तदनु वैशिकायिनस्तस्य दुरात्मनो दाहाय वज्रदहनदेश्यां तेजोलेश्यां विससर्ज, तत्कालमेव च भगवान् वर्धमानस्वामी प्रगुणितकरुणस्तत्प्राणत्राणाय प्रचुरपरितापोच्छेदच्छेकां शीतलेश्याममुञ्चदिति, इह च यः खलु नियमात् निरन्तरं षष्ठं तपः करोति पारणकदिने च सनखकुल्माषमुष्ट्या जलचुलुकेन चैकेनात्मानं यापयति तस्य षण्मासान्ते तेजोलेश्यालब्धिरियमुत्पद्यते, तथा 'एमाई हुंति लद्धीओ' इत्यत्रादिशब्दादन्या अप्यणुत्वमहत्त्वलघुत्वगुरुत्वप्राप्तिप्राकाम्येशित्ववशित्वाप्रतिघातित्वान्तर्धानकामरूपित्वादिका लब्धयो बोद्धव्याः, तत्राणुत्वं—अणुशरीरता येन विशच्छिद्रमपि प्रविशति तत्र च चक्रवर्तिभोगानपि भुङ्क्ते, महत्त्वं मेरोरपि महत्तरशरीरकरणसामर्थ्यं, लघुत्वं—वायोरपि लघुतरशरीरता, गुरुत्वं—वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि प्रकृष्टबलैर्दुःसहता, प्राप्तिः—भूमिस्थस्य अङ्गुल्यग्रेण मेरुपर्वताग्रप्रभाकरादेः स्पर्शसामर्थ्यं, प्राकाम्यम्—अप्सु भूमाविव प्रविशतो गमनशक्तिः, तथाऽप्स्विव भूमावुन्मज्जननिमज्जने, ईशित्वं—त्रैलोक्यस्य प्रभुता तीर्थकरत्रिदशेश्वरऋद्धिविकरणं, वशित्वं—सर्वजीववशीकरणलब्धिः, अप्रतिघातित्वम्—अद्रिमध्येऽपि निःसङ्गगमनं, अन्तर्धानम्—अदृश्यरूपता, कामरूपित्वं—युगपदेव नानाकाररूपतया विकुर्वणशक्तिरिति। अथ भव्यत्वाभव्यत्वविशिष्टानां पुरुषाणां महिलानां च यावत्यो लब्धयो भवन्ति तत् प्रतिपादयति—'भवे'त्यादि गाथाचतुष्कं, भवा—भाविनी सिद्धिः—मुक्तिपदं येषां ते भवसिद्धिका भव्या इत्यर्थः ते च ते पुरुषाश्च ते तथा तेषामेताः—पूर्वोक्ताः सर्वा अपि

लब्धयो भवन्ति, तथा भवसिद्धिकमहिलानामपि यावत्यो लब्धयो न जायन्ते तद्वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति—'अरिहंते'त्यादि, अर्हच्चक्रवर्तिवासुदेवबलदेवसम्भिन्नश्रोतश्चारणपूर्वधरगणधरपुलाकाहारकलब्धिलक्षणा एता दश लब्धयो भव्यमहिलानां—भव्यस्त्रीणां 'न हु' नैव भवन्ति, शेषास्त्वष्टादश लब्धयो भव्यस्त्रीणां भवन्तीति सामर्थ्याद्गम्यते, यच्च मल्लिस्वामिनः स्त्रीत्वेऽपि यत्तीर्थंकरत्वमभूत्तदाश्चर्यभूतत्वान्न गण्यते, तथा अनन्तरमुक्तास्तावद्दश लब्धयः केवलित्वं च—केवलिलब्धिरन्यच्च ऋजुमतिविपुलमतिलक्षणं लब्धिद्वयमित्येतास्त्रयोदश लब्धयः पुरुषाणामप्यभव्यानां नैव कदाचनापि भवन्ति, शेषाः पुनः पञ्चदश भवन्तीति भावः, अभव्यमहिलानामप्येताः पूर्वभणितास्त्रयोदश लब्धयो न भवन्ति, चतुर्दशी मधुक्षीराश्रवलब्धिरपि नैव तासां भवति, शेषास्त्वेतद्व्यतिरिक्ताश्चतुर्दशलब्धयोऽविरुद्धाः, भवन्तीत्यर्थः, ॥ २७० ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १५०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ इदानीं 'तव'त्येकसप्तत्यधिकद्विशततमं द्वारमाह—

पुरिमड्ढेक्कासणनिव्विगइयआयंबिलोववासेहिं । एगलया इय पंचहिं होइ तवो इंदियजउत्ति ॥ ९ ॥ निव्विगइयमायामं उववासो इय लयाहिं तिहिं भणिओ । नामेण जोगसुद्धी नवदिणमाणो तवो एसो ॥ १०॥ नाणंमि दंसणंमि य चरणंमि य तिन्नि तिन्नि पत्तेयं । उववासो तप्पूयापुव्वं तन्नामगतवंमि ॥ ११ ॥ एक्कासणगं तह निव्विगइयमायंबिलं अभत्तट्ठो । इय होइ लयचउक्कं कसायविजए तवच्चरणे ॥ १२ ॥ खमणं एक्कासणगं एक्कगसित्थं च एगठाणं च । एक्कगदत्तं नीव्विघमायंबिलमट्ठकवलं च ॥ १३॥ एसा एगा लइया अट्ठहिं लइयाहिं दिवस चउसट्ठी । इय अट्ठकम्मसूडणतवंमि

भणिया जिणिंदेहिं ॥ १४ ॥ इग दुग इग तिग दुग चउ तिग पण चउ छक्क पंच सत्त छगं । अट्ठग सत्तग नवगं अट्ठग नव सत्त अट्ठेव ॥ १५ ॥ छग सत्तग पण छक्कं चउ पण तिग चउर दुग तिगं एगं । दुग एक्कग उववासा लहुसिहनिक्कीलियतवंमि ॥ १६ ॥ चउपन्नं खमणसयं दिणाण तह पारणाणि तेत्तीसं । इह परिवाडिचउक्के वरिसदुगं दिवस अडवीसा ॥ १७ ॥ विगईओ निव्विगईयं तहा अलेवाडयं च आयामं। परिवाडिचउक्कंमि य पारणएसुं विहेयव्वं ॥ १८॥ इग दुग इग तिग दुग चउ तिग पण चउ छक्क पंच सत्त छगं । अड सत्त नवऽड दस नव एक्कारस दस य बारसगं ॥ १९ ॥ एक्कार तेर बारस चउदस तेरस य पनर चउदसगं । सोलस पनरस सोला होइ विवरीयमेक्कंतं ॥ २० ॥ एए उ अभत्तट्ठा इगसट्ठी पारणाणमिह होइ । एसा एगा लइया चउग्गुणाए पुण इमाए ॥ २१ ॥ वरिसछगं मासदुगं दिवसाइं तहेव बारस हवंति । एत्थ महासीहनिक्कीलियंमि तिव्वे तवच्चरणे ॥ २२ ॥ एक्को दुगाइ एक्कग अंतरिया जाव सोलस हवंति । पुण सोलस एगंता एक्कंतरिया अभत्तट्ठा ॥ २३ ॥ पारणयाणं सट्ठी परिवाडिचउक्कगंमि चत्तारि । वरिसाणि हुंति मुत्तावलीतवे दिवससंखाए ॥ २४ ॥ इग दु ति काहलियासुं दाडिमपुप्फेसु हुंति अट्ठ तिगा । एगाइसोलसंता सरियाजुयलंमि उववासा ॥ २५ ॥ अंतंमि तस्स पयगं तत्थंकट्ठाणमेक्कमह पंच।सत्त य सत्त य पण पण तिन्निक्कंतेसु तिगरयणा ॥२६॥ पारणयदिणट्ठासी परिवाडि-

चउक्कगे वरिसपणगं । नव मासा अट्ठारस दिणाणि रयणावलितवंमि ॥ २७ ॥ रयणावलीक्कमेणं कीरइ कणगावली तवो नवरं । कुज्जा दुगा तिगपए दाडिमपुप्फेसु पयगे य ॥ २८ ॥ परिवाडि-चउक्के वरिसपंचगं दिणदुगूणमासतिगं । पढमतवुत्तो कज्जो पारणयविही तवप्पणगे ॥ २९ ॥ भद्दाइतवेसु तहाऽऽइया लया इग दु तिन्नि चउ पंच । तह ति चउ पंच इग दु तह पणग इग दोन्नि ति चउक्कं ॥ ३० ॥ तह दु ति चउ पणगेगं तह चउ पणगेग दोन्नि तिन्नेव । पणहत्तरि उववासा पारणयाणं तु पणवीसा ॥ ३१ ॥ पभणामि महाभद्दं इग दुग तिग चउ पणच्छ सत्तेव । तह चउ पण छग सत्तग इग दु ति तह सत्त एक्कं दो ॥ ३२ ॥ तिन्नि चउ पंच छक्कं तह तिग चउ पण छ सत्तगेगं दो । तह छग सत्तग इग दो तिग चउ पण तह दुगं ति चउ ॥३३॥ पण छग सत्तेक्कं तह पण छग सत्तेक्क दोन्नि तिय चउरो। पारणयाण गुवन्ना छण्णउयसयं चउत्थाणं ॥ ३४ ॥ भद्दो-त्तरपडिमाए पण छग सत्तट्ठ नव तहा सत्त। अड नव पंचच्छ तहा नव पण छग सत्त अट्ठेव ॥३५॥ तह छग सत्तट्ठ नव पण तहट्ठ नव पणट्ठ सत्तऽभसट्ठा । पणहत्तरसयसंखा पारणगाणं तु पणवीसा ॥ ३६ ॥ पडिमाएँ सव्वभद्दाए पण छ सत्तट्ठ नव दसेक्कारा । तह अड नव दस एक्कार पण छ सत्त य तहेक्कारा ॥ ३७ ॥ पण छग सत्तग अड नव दस तह सत्तट्ठ नव दसेक्कारा । पण छ तहा दस एक्कार पण छ सत्तट्ठ नव य तहा ॥ ३८ ॥ छग सत्तड नव दसगं एक्कारस पंच तह नवग

दूसगं । एक्कारस पण छक्कं सत्तट्ठ य इह तवे होंति ॥ ३९ ॥ तिन्नि सया बाणउया इत्थुववासाण होंति संखाए । पारणया गुणवन्ना भद्दाइतवा इमे भणिया ॥ ४० ॥ पडिवइया एक्कचिय दुगं दुइज्जाण जाव पन्नरस । खमणेहऽमावसाओ होइ तवो सव्वसंपत्ती ॥ ४१ ॥ रोहिणिरिक्खदिणे रोहिणीतवो सत्त मासवरिसाइं । सिरिवासुपुज्जपूयापुव्वं कीरइ अभत्तट्ठो ॥ ४२ ॥ एक्कारस सुयदेवीतवंमि एक्कारसीओ मोणेणं । कीरंति चउत्थेहिं सुयदेवीपूयणापुव्वं ॥ ४३ ॥ सव्वंगसुंदरतवे कुणंति जिणपूयखंतिनियमपरा । अट्ठुववासे एगंतरंबिले धवलपक्खंमि ॥ ४४ ॥ एवं निरुजसिहोवि हु नवरं सो होइ सामले पक्खे । तंमि य अहिओ कीरइ गिलाणपडिजागरणनियमो ॥ ४५ ॥ सो परमभूसणो होइ जंमि आयंबिलाणि बत्तीसं । अंतरपारणयाइं भूसणदाणं च देवस्स ॥ ४६ ॥ आयइजणगोऽवेवं नवरं सव्वासु धम्मकिरियासुं । अणिगूहियबलविरियप्पवित्तिजुत्तेहिं सो कज्जो ॥ ४७ ॥ एगंतरोववासा सव्वरसं पारणं च चेत्तंमि । सोहग्गकप्परुक्खो होइ तहा दिज्जए दाणं ॥ ४८ ॥ तवचरणसमत्तीए कप्पतरू जिणपुरो ससत्तीए । कायव्वो नाणाविहफलविलसिरसाहियासहिओ ॥ ४९ ॥ तित्थयरजणणिपूयापुव्वं एक्कासणाइं सत्तेव । तित्थयरजणणिनामगतवंमि कीरंति भद्दवए ॥ ५० ॥ एक्कासणाइएहिं भद्दवयचउक्कगंमि सोलसहिं । होइ समोसरणतवो तप्पूयापुव्वविहिएहिं ॥ ५१ ॥ नंदीसरपडपूया निययसामत्थसरिसतवचरणा ।

होइ अमावस्सतवो अमावसावासरुद्दिट्ठो ॥ ५२ ॥ सिरिपुंडरीयनामगतवंमि एगासणाइ कायव्वं । चेत्तस्स पुन्निमाए पूएयव्वा य तप्पडिमा ॥५३॥ देवग्गठवियकलसो जा पुन्नो अक्खयाण मुट्ठीए । जो तत्थ सत्तिसरिसो तवो तमक्खयनिहिं बिंति ॥ ५४ ॥ वड्ढइ जहा कलाए एक्केक्काएऽणुवासरं चंदो । संपुन्नो संपज्जइ जा सयलकलाहिं पव्वंमि ॥ ५५ ॥ तह पडिवयाए एक्को कवलो बीयाइ पुन्निमा जाव । एक्केक्ककवलवुड्ढी जा तेसिं होइ पन्नरसगं ॥ ५६ ॥ एक्केक्कं किण्हंमि य पक्खंमि कलं जहा ससी मुयइ । कवलोवि तहा मुच्चइ जाऽमावासाइ सो एक्को ॥ ५७ ॥ एसा चंदप्पडिमा जवमज्झा मासमित्तपरिमाणा । इण्हिं तु वज्जमज्झं मासप्पडिमं पवक्खामि ॥ ५८ ॥ पन्नरस पडिवयाए एक्कगहाणीएँ जावऽमावस्सा । एक्केणं कवलेणं जाया तह पडिवईऽवि सिआ ॥ ५९ ॥ बीयाइयासु इक्कगवुड्ढी जा पुन्निमाएँ पन्नरस । जवमज्झवज्जमज्झाओ दोवि पडिमाओं भणियाओ ॥ ६० ॥ दिवसे दिवसे एगा दत्ती पढमंमि सत्तगे गिज्झा । वड्ढइ दत्ती सह सत्तगेणं जा सत्त सत्तमए ॥ ६१ ॥ इगुवन्नवासरेहिं होइ इमा सत्तसत्तमी पडिमा । अट्ठट्ठमिया नवनवमिया य दसदसमिया चेव ॥ ६२ ॥ नवरं वड्ढइ दत्ती सह अट्ठगनवगदसगवुड्ढीहिं । चउसट्ठी एक्कासी सयं च दिवसाणिमासु कमा ॥ ६३ ॥ एगाइयाणि आयंबिलाणि एक्केक्कवुड्ढिमंताणि । पज्जंतअभत्तट्ठाणि जाव पुन्नं सयं तेसिं ॥ ६४ ॥ एयं आयंबिलवद्धमाणनामं महातवच्चरणं । वरिसाणि

एत्थ चउद्स मासलिगं वीस दिवसाणि ॥ ६५ ॥ गुणरयणवच्छरंमी सोलस मासा हवंति तवच-
रणे । एगंतरोववासा पढमे मासंमि कायवा ॥ ६६ ॥ ठायवं उक्कुडुआसणेण दिवसे निसाएँ पुण
निचं । वीरासणिएण तहा होयवमवाउडेणं च ॥ ६७ ॥ बीयाइसु मासेसुं कुज्जा एगुत्तराए वुड्ढीए ।
जा सोलसमे सोलस उववासा हुंति मासंमि ॥ ६८ ॥ जं पढमगंमि मासे तमणुट्ठाणं समग्गमा-
सेसु । पंच सयाइं दिणाणं वीसूणाइं इमंमि तवे ॥ ६९ ॥ तह अंगोवंगाणं चिइवंदणपंचमंगलाईणं ।
उवहाणाइ जहाविहि हवंति नेयाइं तह समया ॥ ७० ॥

तपति-निर्दहति दुष्कर्माणीति तपः, तच्च नानाविधोपाधिनिवन्धनत्वादनेकप्रकारं, तत्रेन्द्रियजयमूलत्वाज्जिनधर्मस्य प्रथममिन्द्रियजयाह्वयं तपः प्राह—प्रथमदिने पूर्वार्धं द्वितीयदिने एकाशनकं तृतीयदिने निर्विकृतिकं चतुर्थदिने आचामाम्लं पञ्चमदिने उपवासः इत्येवं पञ्चभिस्तपोदिनैरेका लता, लता श्रेणिः परिपाटी चेत्येकार्थाः, एकैकं चेन्द्रियमाश्रित्यैवंस्वरूपा एकैका लता क्रियते, ततः पञ्चभिर्लताभिः पञ्चविंशत्या दिवसैरिन्द्रियजयाख्यस्तपोविशेषो भवति, इन्द्रियाणां—स्पर्शनादीनां पञ्चानामपि जयो—दमनं यस्मादसाविन्द्रियजयः, इन्द्रियजयहेतुत्वाद्वा इन्द्रियजयः, यद्यपि सर्वाण्यपि तपांसीन्द्रियजये प्रभविष्णूनि तथापीन्द्रियजयमालम्ब्य क्रियमाणत्वादस्यैव तपसस्तद्धेतुत्वं पूर्वसूरिभिरभिहितं, एवमुत्तरत्रापि वाच्यं ॥ ९ ॥ योगशुद्धितपः आह—'निविगइये'त्यादि, निर्विकृतिकं आचामाम्लं उपवासश्च इत्येका लता, एकैकं च योगमाश्रित्यैवंविधा एकैका लता क्रियते, ततस्तिसृभिर्लताभिर्योगशुद्धिनामकं दिननवकप्रमाणमेतत्तपो भणितं पूर्वर्षिभिः, सूत्रे च पुंस्त्वं प्राकृतत्वात्, योगानां—मनोवाक्कायव्यापाराणां शुद्धिः—अनवद्यता यस्मात्तत्तपो योगशुद्धिः ॥ १० ॥ ज्ञानदर्शनचारित्रतपांसि

प्राह—'नाणंमी'त्यादि, ज्ञाने-ज्ञानशुद्धिनिमित्तं दर्शने-दर्शनशुद्धिनिमित्तं चरणे-चारित्रशुद्धिनिमित्तं तत्पूजापूर्व-ज्ञानादिपूजापुरस्सरं तन्नामके-ज्ञानादिनामके तपसि प्रत्येकं त्रयस्त्रय उपवासा भवन्ति, इदमुक्तं भवति-ज्ञानस्य सिद्धिहेतोस्त्रिभिरुपवासैः कृतैर्ज्ञानतपो भवति, तत्र च यथाशक्ति ज्ञानस्य-सिद्धान्तादेः पुस्तकन्यस्तस्य सुप्रशस्तपरिधापनिकादिकरणं ज्ञानवतां च पुरुषाणामेषणीयवस्त्रान्न-पानप्रदानादिरूपा पूजा कर्तव्या, एवं त्रिभिरुपवासैर्दर्शनतपो भवति, नवरं तत्र दर्शनप्रभावकाणां सम्मत्यादिग्रन्थानां सद्गुरूणां च पूजा विधेया, तथा त्रिभिरुपवासैश्चारित्रतपो भवति, तत्रापि चारित्रिणां पूजा करणीयेति ॥ ११ ॥ कषायविजयतपः प्राह—'एक्के'त्यादि, एकाशनकं निर्विकृतिकं आचाम्लं अभक्तार्थश्च-उपवासः इत्येका लता, प्रतिकषायं चैकैका लता क्रियते तत्कषाय-विजयं तपश्चरणं, कषायाणां-क्रोधमानमायालोभलक्षणानां चतुर्णां विशेषेण जयः-अभिभवनं यस्मादितिकृत्वा, अस्मिंश्च तपसि चतस्रो लताः षोडश दिवसानि ॥ १२ ॥ अष्टकर्मसूदनं तपः प्राह—'खमण'मित्यादिगाथाद्वयं, क्षमणम्-उपवासः १ एकाशनं २ एक-सिक्थकं ३ एकस्थानकं ३ एका दत्तिः ५ निर्विकृतिकं ६ आचाम्लं ७ अष्टकवलं च ८ एषा एका लता, एकैकं च कर्माश्रित्यैवंरूपा एकैका लता क्रियते, ततोऽष्टाभिर्लताभिर्दिवसानां चतुःषष्टिर्भणिता जिनेन्द्रैरष्टकर्मसूदनतपसि, अष्टानां कर्मणां-ज्ञानावरणादीनां सूदनं-विनाशनं यस्मात्तदष्टकर्मसूदनं तपः, एतत्समाप्तौ च जिनपतीनां स्नपनविलेपनपूजनपरिधापनिकादि विधेयं, पुरतो विशिष्टबलिमध्ये कनक-मयी कर्मतरुदारिका कुठारिका च ढौकनीया ॥ १२ ॥ लघुसिंहनिष्क्रीडितं तपः प्रतिपादयितुमाह—'इगे'त्यादिगाथाद्वयं, अनन्तरवक्ष्य-माणमहासिंहनिष्क्रीडितापेक्षया लघु-ह्रस्वं सिंहस्य निष्क्रीडितं-गमनमित्यर्थः सिंहनिष्क्रीडितं तदिव यत्तपस्तत्सिंहनिष्क्रीडितमिति, सिंहो हि गच्छन् गत्वाऽतिक्रान्तं देशमवलोकयति एवं यत्र तपस्यतिक्रान्ततपोविशेषं पुनरासेव्याग्रेतनं तं प्रकरोति तत् सिंहनिष्क्रीडितमिति,

एतस्य चैवं रचना—एकादयो नवान्ताः क्रमेण स्थाप्यन्ते, पुनरपि प्रत्यागत्या नवाद्य एकान्ताः, ततश्च द्व्यादीनां नवान्तानामग्रे प्रत्येकमेकादयोऽष्टान्ताः स्थाप्यन्ते, ततो नवाद्येकान्तप्रत्यागतपङ्क्तावष्टादीनां द्व्यन्तानामादौ सप्ताद्य एकान्ताः स्थाप्यन्ते इति, स्थापना चेयं, अयमर्थः—प्रथममेक उपवासः क्रियते ततः पारणकं एवमन्तरा सर्वत्र पारणकं ज्ञेयं, ततो द्वौ तत एकः ततस्त्रय उपवासा ततो द्वौ ततश्चत्वारः ततस्त्रयः ततः पञ्च ततश्चत्वारः ततः षट् ततः पञ्च ततः सप्त ततः षट् ततोऽष्टौ ततः सप्त ततो नव ततोऽष्टौ ततो नव ततः सप्त ततोऽष्टौ ततः षट् ततः सप्त ततः पञ्च ततः षट् ततश्चत्वारः ततः पञ्च ततस्त्रयः ततश्चत्वारः ततो द्वौ ततस्त्रयः तत एकः ततो द्वौ तत एक इति, एते लघुसिंहनिष्क्रीडिते तपस्युपवासाः ॥ १३ ॥ अथोपवासदिवसानां पारणकदिनानां च सङ्ख्यामाह—'चउ'इत्यादि, लघुसिंहनिष्क्रीडिते तपसि क्षमणदिनानां—उपवासदिवसानां शतमेकं चतुष्पञ्चाशदधिकं, तथाहि—द्वे नवसङ्कलने तत एका ४५, पुनः ४५, अष्टसङ्कलना चैका ३६ सप्तसङ्कलनाप्येकैव २८, सर्वमीलने च यथोक्ता सङ्ख्या भवति १५४, तथा पारणकानि त्रयस्त्रिंशत्, तदेवं सर्वदिनसङ्ख्या १८७, ते च षण्मासाः सप्तदिनाधिका भवन्ति, एतच्च तपः परिपाटीचतुष्टयेन क्रियते, तत एतेषु चतुर्गुणितेषु द्वे वर्षे अष्टाविंशतिदिनाधिके भवतः ॥ १४ ॥ अथ परिपाटीचतुष्टयेऽपि प्रत्येकं पारणस्वरूपं निरूपयति—'विगई'त्यादि, प्रथमपरिपाट्यां पारणकेषु विकृतयो भवन्ति, सर्वरसोपेतं पारणकमिति भावः, द्वितीयपरिपाट्यां निर्विकृतिकं—विकृतिविरहः, तृतीयपरिपाट्यामलेपकारि—वल्लचणकादि, चतुर्थपरिपाट्यामाचाम्लं परिमितभैक्ष्यमिति, एवमस्य तपसः पारणकभेदेन चतस्रः परिपाट्यो विधेयाः ॥ १५ ॥ महासिंहनि-

क्रीडितं तप आह—'इगे'त्यादि गाथाद्वयं, इह एकादयः षोडशान्ताः षोडशादयश्चैकान्ताः स्थाप्यन्ते, ततश्च द्व्यादीनां षोडशान्तानामग्रे प्रत्येकमेकादयः पञ्चदशान्ताः षोडशादिषु त्वेकान्तेषु पञ्चदशादीनां द्व्यन्तानामादौ प्रत्येकं चतुर्दशादयः एकान्ताः स्थाप्यन्ते, स्थापना चेयं,

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ | १५ | १४ | १६ | |
| महासिंहनिष्क्रीडितं तपः | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | १५ |
| १ | २ | १ | ३ | २ | ४ | ३ | ५ | ४ | ६ | ५ | ७ | ६ | ८ | ७ | ९ | ८ | १० | ९ | ११ | १० | १२ | ११ | १३ | १२ | १४ | १३ | १५ | १४ | १६ | |

अयमर्थः—प्रथममेक उपवासः ततो द्वौ तत एकः ततस्त्रयः ततो द्वौ ततश्चत्वारः ततस्त्रयः ततः पञ्च ततश्चत्वारः ततः षट् ततः पञ्च ततः सप्त ततः षट् ततोऽष्टौ ततः सप्त ततो नव ततोऽष्टौ ततो दश ततो नव तत एकादश ततो दश ततो द्वादश तत एकादश ततस्त्रयोदश ततो द्वादश ततश्चतुर्दश ततस्त्रयोदश ततः पञ्चदश ततश्चतुर्दश ततः षोडश ततः पञ्चदशोपवासा इति, एवं प्रत्यागत्याऽपि षोडशोपवासाः ततश्चतुर्दशेत्यादि तावद्वसेयं यावत्पर्यंत एक उपवास इति ॥ १६ ॥ अथोक्तशेषं दिनसर्वसङ्ख्यां चाह—'एए'इत्यादि गाथाद्वयं, अस्मिन्महासिंहनिष्क्रीडिते तीव्रे—अतिदुश्चरे तपश्चरणे एते—पूर्वोक्तपङ्क्तिद्वितयोदिता अभक्तार्था—उपवासा भवन्ति, ते च सर्वसङ्ख्यया चत्वारि शतानि सप्तनवत्युत्तराणि, तथाहि—अत्र द्वे षोडशसङ्कलने १३६—१३६ एका पञ्चदशसङ्कलने (ना) १२० एकैव चतुर्दशसङ्कलने (ना) १०५, तथा एकषष्टिः पारणकानि भवन्ति, ततः सर्वैकत्वे वर्षमेकं षण्मासा अष्टादश च दिनानीत्येषा परिपाटी, एतदपि च तपः पूर्ववत्पारणकभेदेन चतसृभिः परिपाटीभिः परिसमाप्यते, ततोऽस्य राशेश्चतुर्भिर्गुणने वर्षाणि षट् मासौ द्वौ दिनानि च द्वादश भवन्तीति ॥ १७ ॥ मुक्तावलीतपः प्राह—'एको'इत्यादि गाथा-

द्वयं, मुक्तावली—मौक्तिकहारस्तदाकारस्थापनया यत्तपस्तन्मुक्तावलीत्युच्यते, तत्रादौ तावदेककः स्थाप्यते ततो द्विकत्रिकादय एककान्तरिता भवन्ति यावत् पर्यन्ते षोडश, ततः पुनः प्रत्यागत्या षोडशादय एककपर्यन्ता एककान्तरिताः स्थाप्यन्ते, स्थापना चेयं, अयमर्थः—पूर्वं तावदेक उपवासः ततो द्वौ ततः पुनरेकः ततस्त्रयः

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ |
| १ | २ | १ | ३ | १ | ४ | १ | ५ | १ | ६ | १ | ७ | १ | ८ | १ | ९ | १ | १० | १ | ११ | १ | १२ | १ | १३ | १ | १४ | १ | १५ | १ | १६ |

तत एकः ततश्चत्वारः तत एकः ततः पञ्च तत एकः ततः षट् तत एकः ततः सप्त तत एकः ततोऽष्टौ तत एकः ततो नव तत एकः ततो दश तत एकः तत एकादश तत एकः ततो द्वादश तत एकः ततस्त्रयोदश तत एकः ततश्चतुर्दश तत एकः ततः पञ्चदश तत एकः ततः षोडशोपवासाः, एवमर्धं मुक्तावल्या निष्पन्नं, द्वितीयमप्यर्धमेवं द्रष्टव्यं, केवलमत्र प्रतिलोमगत्या उपवासान् करोति, तद्यथा—षोडशोपवासान् कृत्वा एकमुपवासं करोति, ततः पञ्चदश तत एकमित्येवमेकोपवासान्तरितमेकोत्तरहान्या तावन्नेयं यावत्पर्यन्ते द्वावुपवासौ कृत्वा एकमुपवासं करोतीति, एतेऽभक्तार्था—उपवासाः सर्वाग्रेण त्रीणि शतानि, तथाहि—द्वे षोडशसङ्कलने १३६—१३६ अष्टाविंशतिश्च चतुर्थानि तथा षष्टिः पारणकानि ततो जातं वर्षमेकं, एतदपि तपः प्राग्वच्चतसृभिः परिपाटीभिः समाप्यते, ततो भवन्ति मुक्तावलीतपसि दिवससङ्ख्यया चत्वारि वर्षाणीति, अंतकृद्दशासु पुनर्य एव प्रथमपङ्क्तिपर्यन्तवर्तिनः षोडश द्वितीयपङ्क्तिप्रारम्भेऽपि त एव, एक एव षोडशक इति तात्पर्यं ॥ १८ ॥ रत्नावलीतपः प्राह—'दुगे'त्यादि गाथात्रयं, रत्नावली—आभरणविशेषः रत्नावलीव रत्नावली, यथा हि रत्नावली उभयत आदिसूक्ष्मस्थूलस्थूलतरविभागकाहलिकाख्यसौवर्णावयवद्वययुक्ता तदनु दाडिमपुष्पोभयोपशोभिता ततोऽपि सरलसरिकायुगलशालिनी पुनर्मध्यदेशे सुश्लिष्टपदकसमलङ्कृता च भवति, एवं यत्तपः पट्टादावुपदर्श्यमानमिममाकारं

धारयति तद्रत्नावलीत्युच्यते, तत्रैककद्विकत्रिका उत्तराधर्यक्रमेण काहलिकयोः स्थाप्या भवन्ति, तदनु द्वयोरपि दाडिमपुष्पयोः प्रत्येकमष्टौ त्रिकाः, ते चोभयतो रेखाचतुष्टयेन नव कोष्ठकान् विधाय मध्ये च शून्यं कृत्वा स्थाप्यन्ते, ततश्चाधोऽधः सरिकायुगले एकादयः षोडशान्ताः स्थाप्याः, तस्य च सरिकायुगलस्यान्ते–पर्यन्ते पदकं–पङ्क्तिषट्केन चतुस्त्रिंशदङ्कस्थानानि, कोष्ठकाः इत्यर्थः, तत्र प्रथमायां पङ्क्तावेकमङ्कस्थानं द्वितीयस्यां पञ्च तृतीयस्यां सप्त चतुर्थ्यामपि सप्त पञ्चम्यां पञ्च षष्ठ्यामपि पञ्च सप्तम्यां त्रीणि अष्टम्यां त्वेकमेवाङ्कस्थानं, तेषु चतुस्त्रिंशत्यपि कोष्ठकेषु त्रिकरचना, त्रिकाः स्थाप्यन्ते इति

३ ३ ३
१ २ ३ ३ ० ३ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
३ ३ ३

३ ३ ३
१ २ ३ ३ ० ३ १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
३ ३ ३

३
३ ३ ३ ३ ३
३ ३ ३ ३ ३ ३ ३
३ ३ ३ ३ ३ ३ ३
३ ३ ३ ३ ३
३ ३ ३ ३ ३
३ ३ ३
३

भावः, स्थापना चेयं, इदमत्र तात्पर्यं–रत्नावलीतपसि प्रथममेकमुपवासं करोति ततो द्वौ ततस्त्रीन् इत्येका काहलिका; अंतरा च सर्वत्र

पारणकं वाच्यं, ततोऽष्टावष्टमानि—उपवासत्रिकात्मकानि करोति, एतैः किल काहलिकाया अधस्ताद्दाडिमपुष्पं निष्पद्यते, ततश्चैकमु-
पवासं करोति ततोऽपि द्वौ ततस्त्रीन् ततोऽपि चतुर इत्येवं पञ्च षट् सप्ताष्टौ नव दशैकादश द्वादश त्रयोदश चतुर्दश पञ्चदश षोडशो-
पवासान् करोति, एषा हि दाडिमपुष्पस्याधस्तादेका सरिका, ततश्चतुस्त्रिंशदष्टमानि करोति, एतैः किल पदकं संपद्यते, ततः षोडशो-
पवासान् करोति ततः पञ्चदश ततश्चतुर्दश इत्येवमेकैकहान्या तावज्ञेयं यावदेक उपवासः, एषा द्वितीया सरिका भवति, ततश्चाष्टाव-
ष्टमानि करोति, एतैरपि द्वितीयं दाडिमपुष्पं निष्पद्यते, ततस्त्रीनुपवासान् करोति ततो द्वौ तत एकमुपवासं करोति, एतैर्द्वितीया काहलिका
निष्पद्यते, एवं सति परिपूर्णा रत्नावली सिद्धा भवति, अस्मिंश्च रत्नावलीतपसि काहलिकायास्तपोदिनानि १२ दाडिमपुष्पयोः षोड-
शभिरष्टमैर्दिनानि ४८ सरिकायुगले द्वाभ्यां षोडशसंकलनाभ्यां दिनानि २७२ पदके चतुस्त्रिंशताऽष्टमैर्दिनानि १०२, सर्वैकत्वे चत्वारि
शतानि चतुस्त्रिंशदुत्तराणि, अष्टाशीतिश्च पारणकदिनानि, उभयमीलने पञ्च शतानि द्वाविंशत्युत्तराणि, पिण्डितास्तु वर्षमेकं मासाः
पञ्च दिनानि च द्वादश, इदमपि च तपः पूर्ववच्चतसृभिः परिपाटीभिः समर्थ्यते, ततश्चतुर्भिर्गुणने वर्षाणि पञ्च मासा नव अष्टादश
च दिनानीति ॥ १९ ॥ २० ॥ २१ ॥ कनकावलीतपः प्राह—'रयणे'त्यादि गाथाद्वयं, कनकमयमणिकनिष्पन्नो भूषणविशेषः कन-
कावली तदाकारं स्थापनया यत्तपस्तत्कनकावलीत्युच्यते, एतच्च कनकावलीतपो रत्नावलीतपःक्रमेणैव क्रियते, नवरं—केवलं दाडिम-
पुष्पयोः पदके च त्रिकपदे—त्रिकाणां स्थाने उपवासद्वयसूचका द्विकाः कर्तव्याः, शेषं पुनः सर्वमपि तथैवेति, अस्मिंश्च तपसि काह-
लिकयोस्तपोदिनानि द्वादश दाडिमपुष्पयोर्द्वात्रिंशत् सरिकायुगले द्वे शते द्वासप्तत्युत्तरे पदके चाष्टषष्टिः, सर्वसङ्ख्यया त्रीणि शतानि
चतुरशीत्यधिकानि, अष्टाशीतिश्च पारणकदिवसाः, तत्प्रक्षेपाच्चत्वारि दिनशतानि द्वासप्तत्युत्तराणि, सर्वाग्रपिण्डस्तु वर्षमेकं त्रयो मासा द्वावि-

शतिर्दिवसाः, अत्रापि पूर्ववच्चतुर्भिर्गुणने वर्षाणि पञ्च मासौ द्वौ दिनानि चाष्टाविंशतिरिति, अन्तकृद्दशादिषु तु कनकावल्यां पदके दाडिमद्वये च द्विकस्थाने त्रिका उक्ताः रत्नावल्यां च द्विका इति। तथा प्रथमतपसि लघुसिंहनिष्क्रीडिते यः सर्वरसाहारादिकः पारणकविधिरुक्तः स तपःपञ्चकेऽपि—लघुबृहत्सिंहनिष्क्रीडितमुक्तावलीरत्नावलीकनकावलीलक्षणे कर्तव्यः, एतच्च सर्वं यथायथं भावितमेवेति ॥ २२ ॥ अथ भद्रतपः प्राह—'भद्दे'त्यादि गाथाद्वयं, भद्रादिषु—भद्रमहाभद्रभद्रोत्तरसर्वतोभद्रेषु तपस्सु मध्ये पूर्वं भद्रतपः प्रतिपादयामि, तद्यथा—आदौ भवेदेक उपवासः ततो द्वौ ततस्त्रयः ततश्चत्वारः ततः पञ्च इत्येका लता एवं त्रयश्चत्वारः पञ्च एको द्वौ इति द्वितीया पञ्च एको द्वौ त्रयश्चत्वार इति तृतीया द्वौ त्रयश्चत्वारः पञ्च एक इति चतुर्थी चत्वारः पञ्च एको द्वौ त्रय इति पञ्चमी, इह पञ्चमिलताभिः पञ्चसप्ततिरुपवासाः पञ्चविंशतिश्च पारणकानि, उभयमीलने च शतमेकं दिनानामिति ॥ २३ ॥ स्थापना चेयं।

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |
| ३ | ४ | ५ | १ | २ |
| ५ | १ | २ | ३ | ४ |
| २ | ३ | ४ | ५ | १ |
| ४ | ५ | १ | २ | ३ |

महाभद्रं तपः प्राह—'पभणामी'त्यादि गाथात्रयं, प्रकर्षेण भणामि—प्रतिपादयामि महाभद्रनामकं तपः, तद्यथा—पूर्वमेक उपवासः ततो द्वौ त्रयश्चत्वारः पञ्च षट् सप्तेत्येका लता, चत्वारः पञ्च षट् सप्त एको द्वौ त्रय इति द्वितीया, सप्त एको द्वौ त्रयश्चत्वारः पञ्च षडिति तृतीया, त्रयश्चत्वारः पञ्च षट् सप्त एको द्वाविति चतुर्थी, षट् सप्तैको द्वौ त्रयश्चत्वारः पञ्चेति पञ्चमी, द्वौ त्रयश्चत्वारः पञ्च षट् सप्त एक इति षष्ठी, पञ्च षट् सप्त एको द्वौ त्रयश्चत्वार इति सप्तमी, इहैकोनपञ्चाशत्पारणकानि, षण्णवत्यधिकं शतं चतुर्थानां—उपवासानामित्यर्थः, एवं चास्मिन्महाभद्रे तपसि द्वे शते पञ्चचत्वारिंशदुत्तरे दिनानां भवत इति। स्थापना चेयं ($\frac{४३८}{१}$) ॥२४॥ साम्प्रतं भद्रोत्तरं तपः प्राह—'भद्दो'इत्यादि गाथाद्वयं, प्रतिमा नाम प्रतिज्ञाविशेषः, ततो भद्रोत्तरप्रतिमायां—भद्रोत्तरतपसि पञ्च षट् सप्ताष्टौ नवेत्याद्या लता, सप्ताष्टौ नव पञ्च षडिति

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ४ | ५ | ६ | ७ | १ | २ | ३ |
| ७ | १ | २ | ३ | ४ | ५ | ६ |
| ३ | ४ | ५ | ६ | ७ | १ | २ |
| ६ | ७ | १ | २ | ३ | ४ | ५ |
| २ | ३ | ४ | ५ | ६ | ७ | १ |
| ५ | ६ | ७ | १ | २ | ३ | ४ |

द्वितीया, नव पञ्च षट् सप्ताष्टाविति तृतीया, षट् सप्ताष्टौ नव पञ्चेति चतुर्थी, अष्टौ नव पञ्च षट् सप्तेति पञ्चमी, इह पञ्चसप्तत्युत्तरं शतमभक्तार्थानां—उपवासानां पञ्चविंशतिस्तु पारणकानां, एवं च भद्रोत्तरतपसि शतद्वयं दिनानां भवति, स्थापना चेयं ॥ साम्प्रतं सर्वतोभद्रतपः प्राह—'पडिमे'त्यादि गाथा-चतुष्कं, प्रतिमायां सर्वभद्रायां सर्वतोभद्रतपसीत्यर्थः, पञ्च षट् सप्त अष्टौ नव दश एकादश उपवासा इति प्रथमा लता, अष्टौ नव दश एकादश पञ्च षट् सप्तेति द्वितीया, एकादश पञ्च षट् सप्ताष्टौ नव दशेति तृतीया, सप्त अष्टौ नव दश एकादश पञ्च षडिति चतुर्थी, दश एकादश पञ्च षट् सप्त अष्ट नवेति पञ्चमी, षट् सप्त अष्टौ नव दश एकादश पञ्चेति षष्ठी, नव दश एकादश पञ्च षट् सप्त अष्टा-विति सप्तमी, स्थापना चेयं, अत्र च सर्वसङ्ख्यया त्रीणि शतानि द्विनवत्युत्तराणि उपवासानां भवन्ति, एकोनपञ्चाशच्च पारणकानां, उभयमीलने चत्वारि शतान्येकचत्वारिंशदधिकानि दिनानां भवन्तीति । तदेवमेतानि भद्रादीनि—भद्रमहाभद्रभद्रोत्तरसर्वतोभद्ररूपाणि चत्वारि तपांसि भणितानि, ग्रंथान्तरे पुनरमून्यन्यथाऽपि दृश्यन्ते, एतेष्वपि चतुर्षु तपस्सु प्राग्वत्पारणकभेदतः प्रत्येकं चातुर्विध्यं च द्रष्टव्यं, दिनसङ्ख्या च यथायथमानेतव्येति ॥ २५ ॥ अथ सर्वसौख्यसम्पत्तितपः प्राह—'पडिवे'त्यादि, प्रतिपदेकैव द्विकं द्वितीययोः एवं यावत्पञ्चदश अमावास्याः क्षमणैः—उपवासैर्यत्र भवन्ति, अयमर्थः—एका प्रतिपद् द्वे द्वितीये तिस्रस्तृतीयाः चत-

| | | | | |
|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ |
| ७ | ८ | ९ | ५ | ६ |
| ९ | ५ | ६ | ७ | ८ |
| ६ | ७ | ८ | ९ | ५ |
| ८ | ९ | ५ | ६ | ७ |

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ८ | ९ | १० | ११ | ५ | ६ | ७ |
| ११ | ५ | ६ | ७ | ८ | ९ | १० |
| ७ | ८ | ९ | १० | ११ | ५ | ६ |
| १० | ११ | ५ | ६ | ७ | ८ | ९ |
| ६ | ७ | ८ | ९ | १० | ११ | ५ |
| ९ | १० | ११ | ५ | ६ | ७ | ८ |

गा. ७४

स्त्रश्चतुर्थ्यः एवं यावत्पञ्चदश पञ्चदश्यः कृतोपवासा यत्र भवन्ति तत्तपः सर्वसंपत्तिः 'सूचकत्वात्सूत्रस्य' सर्वसौख्यसंपत्तिस्तपो भवति, सर्वेषां सौख्यानां संपत्तिः—प्राप्तिर्यस्मादितिकृत्वा, यद्वा सर्वसंपत्तिरित्येव नाम, तथाहि—तत्किमपि वस्तु नास्ति भुवस्तले यदस्य सम्यगासेवितस्य तपसः प्रभावतः प्रायेण प्राणिनां न संपद्यते इति । इह चामावास्याशब्दश्रवणादन्यत्र च 'इय जाव पन्नरस पुन्निमासु कीरंति जत्थ उववासा' इत्यादिवचनाकर्णनादवसीयते इह च यथेदं तपः कृष्णपक्षे शुक्लपक्षे वा प्रारभ्यते न कश्चिद्दोषः, अत्र च विंशत्युत्तरं शतमुपवासानां भवति १५ ॥ ४१ ॥ रोहिणीतपः प्राह—'रोहिणी'त्यादि, रोहिणी—देवताविशेषः तदाराधनार्थं तपो रोहिणीतपः तस्मिन् रोहिणीतपसि सप्तमासाधिकसप्तवर्षाणि यावद्रोहिणीनक्षत्रोपलक्षिते दिने उपवासः क्रियते, इह च वासुपूज्यजिनप्रतिमायाः प्रतिष्ठा पूजा च विधेया १६ ॥ ४२ ॥ श्रुतदेवतातपः प्राह—'एक्के'त्यादि, श्रुतदेवताराधनार्थं तपः श्रुतदेवीतपः तस्मिन् श्रुतदेवीतपस्येकादश एकादश्यः श्रुतदेवतापूजापुरस्सरमुपवासा मौनव्रतेन विधीयन्ते, उपलक्षणं चैतत्, ततोऽम्बातपोऽप्यत्र द्रष्टव्यं, तत्र पञ्चसु पञ्चमीषु नेमिजिनाम्बिकापूजापूर्वमेकाशनादिना भवति १७ ॥ ४३ ॥ सर्वाङ्गसुन्दरतपः प्राह—'सव्वंगे'त्यादि, सर्वाङ्गानि सुन्दराणि—सौंदर्योपेतानि भवन्ति यस्मात्तत्सर्वाङ्गसुन्दरं तपः तस्मिन् सर्वाङ्गसुन्दरे तपसि क्षान्तिमार्दवार्जवाद्यभिग्रहकृताग्रहास्तीर्थकरपूजामुनिदीनादिदाननिरताश्चाष्टावुपवासान् एकान्तरितानाचाम्लेन कृतपारणकान् धवलपक्षे कुर्वन्ति, अस्य च तपसः सर्वाङ्गसुन्दरत्वमानुपङ्गिकमेव फलं, मुख्यं तु सर्वज्ञाज्ञया क्रियमाणानां सर्वेषामेव तपसां मोक्षावाप्तिरेव फलमिति भावनीयं, एवं सर्वत्रापि १८ ॥ ४४ ॥ निरुजशिखतपः प्राह—'एव'मित्यादि, रुजानां—रोगाणामभावो निरुजं तदेव प्रधानफलविवक्षया शिखेव शिखा—चूला यत्रासौ निरुजशिखस्तपोविशेषः सोऽप्येवमेव—सर्वाङ्गसुन्दरतपोवदष्टभिरुपवासैराचाम्लपारणकैर्द्रष्टव्यः, नवरं—केवलं स—निरुजशिखस्तपोविशेषः श्यामले—कृष्णपक्षे

भवति, अधिकश्च तत्र क्रियते ग्लानप्रतिजागरणनियमो—ग्लानो मया पथ्यादिदानतः प्रतिचरणीयः इत्येवंरूपप्रतिज्ञाग्रहणमित्यर्थः, शेषं
तु जिनपूजादिकं तथैवेति १९ ॥ ४५ ॥ परमभूषणतपः प्राह—'सो' इत्यादि, परमाणि—शक्रचक्रवर्त्याद्युचितानि प्रकृष्टानि हारकेयूर-
कुण्डलादीनि भूषणानि—आभरणानि यस्मादसौ परमभूषणः, तस्मिन् द्वात्रिंशदाचाम्लानि पारणकान्तरितानि शक्तिसद्भावे निरन्तराणि
वा करोति, तत्समाप्तौ च देवस्य मुकुटतिलकाद्याभरणवितरणं यथाशक्ति यतिदानादिकं च कर्तव्यमिति २० ॥ ४६ ॥ आयतिजनकं
तपः प्राह—'आयई'त्यादि, आयतिं—आगामिकालेऽभीष्टफलं जनयति—करोति योऽसावायतिजनकस्तपोविशेषः सोऽप्येवं—परमभूषणत-
पोवद् द्वात्रिंशताऽऽचाम्लैर्द्रष्टव्यः, नवरं—केवलं सर्वासु धर्मक्रियासु—वन्दनकप्रतिक्रमणस्वाध्यायसाधुसाध्वीवैयावृत्त्यादिषु सर्वधर्मकृत्ये-
ष्वनिगूहितबलवीर्यप्रवृत्तियुक्तैः—अगोपायितशरीरप्राणचित्तोत्साहप्रवर्तनप्रधानैः सः—आयतिजनकः कार्यः २१ ॥ ४७ ॥ सौभाग्यकल्प-
वृक्षमाह—'एगंते'त्यादिगाथाद्वयं, कल्पवृक्ष इव कल्पवृक्षः सौभाग्यफलदाने कल्पवृक्षः सौभाग्यकल्पवृक्षः, तत्र सौभाग्यकल्पवृक्षतपसि
चैत्रमासे एकान्तरा—एकदिनव्यवहिता उपवासाः समग्रमपि मासं भवन्ति, पारणकं च सर्वरसं—सविकृतिकमित्यर्थः, तथाऽत्र यथाशक्ति
साध्वादिभ्यो दानं दीयते, अस्य च तपश्चरणस्य समाप्तौ शक्त्यनुसारतो जिनपतेः पुरतः पूजाकरणादिपूर्वं विशालस्थालावलिमध्ये महा-
रजतमयः सरलतण्डुलमयो वा विविधफलपटलविलसदसंख्यशाखाशिखः कल्पशाखी कर्तव्य इति २२ ॥ ४८ ॥ ४९ ॥ तीर्थकरमा-
तृतप आह—'तित्थे'त्यादि, तीर्थकरजननीपूजापूर्वमेकाशनानि—एकभक्तानि सप्तैव तीर्थकरजननीनामके तपसि क्रियन्ते, अस्य च
तपसो भाद्रपदे मासि शुक्लसप्तम्यामारम्भः त्रयोदश्यां च समाप्तिः, वर्षत्रयं च यावदिदं तपः क्रियते २३ ॥ ५० ॥ समवसरणतप
आह—'एक्कासे'त्यादि, भाद्रपदमासि कृष्णप्रतिपद आरभ्य तत्पूजापूर्वं—समवसरणप्रतिमापूजनपुरस्सरं स्वशक्त्यनुसारेणैकाशननिर्विकृ-

तिकाचाम्लोपवासैः षोडशभिर्भाद्रपदचतुष्के—चतुर्षु भाद्रपदेषु प्रत्येकं विहितैः समवसरणतपो भवति, अत्र च चतुर्षु भाद्रपदेषु चतुःषष्टिस्तपोदिनानि स्युः, अयं भावः—समवसरणस्यैकैकं द्वारमाश्रित्य प्रत्येकं दिनचतुष्टयं क्रियते, तत एवास्य द्वारिकेति प्रसिद्धिः २४ ॥ ५१ ॥ अमावास्यातपः प्राह—'नन्दी'त्यादि, पटलिखितनन्दीश्वरसुरभुवनजिनार्चनान्वितं निजसामर्थ्यसदृशेन—स्वशक्त्यनुरूपेणोपवासादीनामन्यतमेन तपश्चरणेन भवत्यमावास्यातपोऽमावास्यावासरोद्दिष्टं, अमावास्यादिवस इत्यर्थः, इदं च तपो दीपोत्सवामावास्यायामारभ्यते वर्षसप्तकेन च समाप्यत इति २५ ॥ ५२ ॥ पुण्डरीकतप आह—'सिरी'त्यादि, श्रीपुण्डरीकनामके तपसि चैत्रमासस्य पूर्णिमायाः प्रारभ्य द्वादश पूर्णिमासीः मतान्तरेण सप्त वर्षाणि यावदेकाशनादि तपः स्वशक्त्या कर्तव्यं, पूजनीया च तत्प्रतिमा—नाभेयजिनप्रथमगणधरस्य पुण्डरीकस्य प्रतिकृतिरिति, इह च चैत्रमासपूर्णिमास्यामस्य तपसः प्रारम्भे पुण्डरीककेवलोत्पत्तिरेव कारणं, पुण्डरीकस्य हि भगवतश्चैत्रपूर्णिमायामुदपादि केवलज्ञानं, तथा चाचक्ष्महि श्रीपद्मप्रभचरित्रे पुण्डरीकगणधरवक्तव्यतायां—"घणघाइकम्मकलुसं पक्खालिय सुक्कझाणसलिलेणं । चेत्तस्स पुन्निमाए संपत्तो केवलालोयं ॥ १ ॥" [ घनघातिकर्मकलुषं प्रक्षाल्य शुक्लध्यानसलिलेन । चैत्रस्य पूर्णिमायां संप्राप्तः केवलालोकं ॥ १ ॥ ] इति, एवमन्यत्रापि उपयुज्य कारणं वाच्यं २६ ॥ ५३ ॥ अक्षयनिधिमाह—'देवे'त्यादि, देवाग्रे—सर्वज्ञप्रतिमायाः पुरतः स्थापितः कलशः प्रतिदिनं क्षिप्यमाणयाऽक्षतमुष्ट्या यावद्भिर्दिनैः पूर्यते तावन्ति दिनानि स्वशक्त्यनुरूपं यत्तप एकाशनाद्यन्यतरं तद् बुधा ब्रुवते अक्षयनिधिं, अक्षयः—सदैव परिपूर्णो निधिः—निधानं यस्मादितिकृत्वा २७ ॥ ५४ ॥ साम्प्रतं यवमध्यां चन्द्रप्रतिमामाह—'वड्ढई'त्यादिगाथाचतुष्कं, चन्द्र इव कलावृद्धिहानिभ्यां या प्रतिमा सा चन्द्रप्रतिमा—चन्द्रायणाख्यं तप इति; सा द्विधा—यवमध्या वज्रमध्या च, यवस्येव मध्ये स्थूलस्य पर्यन्तभागयोस्तु तनुकस्य मध्यं यस्याः सा यवमध्या, वज्रस्येव

मध्ये तनुकस्य पर्यंतयोस्तु स्थूलस्य मध्यं यस्याः सा वज्रमध्या, तत्रादौ यवमध्यां व्याख्यानयति—यथा शुक्लपक्षे प्रतिपदः प्रारभ्यानुवासरं—प्रतिदिवसमेकैकया कलया चन्द्रो वर्धते यावत्पर्वणि—पूर्णिमायां सकलाभिरपि कलाभिः संपूर्णः संपद्यते, तथा—तेनैव प्रकारेण प्रतिपदि एकः कवलः, उपलक्षणमेतत्, ततो भिक्षा दत्तिर्वा एकैव गृह्यते, द्वितीयायां द्वौ कवलौ तृतीयायां त्रयः कवलाः एवमेकैककवलवृद्ध्या यावत्पूर्णिमायां तेषां कवलानां पञ्चदशकं भवति, पञ्चदश कवला अभ्यवह्रियन्ते इत्यर्थः, कृष्णे पक्षे च यथा प्रतिदिनमेकैकां कलां शशी मुञ्चति तथा कवलोऽपि मुच्यते यावदमावास्यायां 'सो'त्ति स कवल एको भवति, कोऽर्थः ?—कृष्णपक्षप्रतिपदि पञ्चदश कवला गृह्यन्ते द्वितीयायां चतुर्दश तृतीयायां त्रयोदश इत्येवं यावदमावास्यायामेक एव कवल इति, एषा यवमध्या चन्द्रप्रतिमा मासमात्रप्रमाणा भणिता २८ ॥ इदानीं पुनर्मासप्रमितां—मासप्रमाणां वज्रमध्यां चन्द्रप्रतिमां प्रकर्षेण वक्ष्यामि ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ तामेवाह—'पन्नरे'त्यादिगाथाद्वयं, कृष्णपक्षप्रतिपदि पञ्चदश कवला गृह्यन्ते, तत एकैकहान्या तावन्नीयते यावदमावास्यायामेकेन कवलेन जाता, अमावास्यायामेक एव कवलो गृह्यते इति भावः, तथा प्रतिपदपि सिता—शुक्ला एकेन कवलेन जाता, कोऽर्थः ?,—शुक्लप्रतिपद्यप्येक एव कवलो गृह्यते, ततो द्वितीयाया आरभ्यैकोत्तरवृद्ध्या तावन्नेयं यावत्पूर्णिमास्यां पञ्चदश कवला दत्तयो वा गृह्यन्ते इति, तदेवमिमे यवमध्यवज्रमध्ये द्वे अपि प्रतिमे भणिते इति, एष च पञ्चाशकादिग्रन्थाभिप्रायः, व्यवहारचूर्ण्यभिप्रायः पुनरयं—शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्य दृश्यस्य पञ्चदशभागीकृतस्य एका कला दृश्यते चतुर्दश कला न दृश्यन्ते द्वितीयस्यां द्वे कले तृतीयस्यां तिस्रः कलाः एवं यावत्पञ्चदश्यां परिपूर्णायां पञ्चदश कलाः, ततो बहुलपक्षस्य प्रतिपदि एकया कलया ऊनो दृश्यते चतुर्दश कला दृश्यन्ते द्वितीयस्यां त्रयोदश तृतीयायां द्वादश यावदमावास्यायामेकापि न दृश्यते, तदेवमयं मास आदावूनो मध्ये संपूर्णोऽन्ते पुनरपि परिहीनो,

यवोऽप्यादावन्ते च तनुको मध्ये विपुलः, एवं साधुरपि भिक्षां गृह्णाति शुक्लपक्षस्य प्रतिपद्येकां द्वितीयस्यां द्वे तृतीयस्यां तिस्रो यावत्पञ्चदश्यां पञ्चदश ततो वहुलपक्षस्य प्रतिपदि पुनश्चतुर्दश द्वितीयायां त्रयोदश यावच्चतुर्दश्यामेकां अमावास्यामुपोषितः, ततश्चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च भिक्षायास्तनुत्वान्मध्ये विपुलत्वाद्यवमध्योपमितमध्यभागा, तथा चामुमेव यवमध्यां चन्द्रप्रतिमामधिकृत्यान्यत्रोक्तं—"एकैकां वर्धयेद्भिक्षां, शुक्ले कृष्णे च ह्रापयेत्। भुञ्जीत नामावास्यायामेष चान्द्रायणो विधिः ॥ १ ॥" वज्रमध्यायां चन्द्रप्रतिमायां वहुलपक्ष आदौ क्रियते, तत एवं भावना—वहुलपक्षस्य प्रतिपदि चन्द्रविमानस्य चतुर्दश कला दृश्यन्ते द्वितीयस्यां त्रयोदश तृतीयस्यां द्वादश यावच्चतुर्दश्यामेका अमावास्यायामेकापि न ततः पुनरपि शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्य एका कला दृश्यते द्वितीयायां द्वे यावत्पञ्चदश्यां पञ्चदशापि, तदयं मास आदावन्ते च पृथुलो मध्ये तनुको वज्रमप्यादावन्ते च विपुलं मध्ये तनुकमेवं साधुरपि भिक्षां गृह्णाति वहुलपक्षस्य प्रतिपदि चतुर्दश द्वितीयस्यां त्रयोदश यावच्चतुर्दश्यामेकाममावास्यायां चोपवासयति ततः पुनरपि शुक्लपक्षस्य प्रतिपद्येकां भिक्षां गृह्णाति द्वितीयस्यां द्वे यावत्पञ्चदश्यां पञ्चदशेति, तत एषापि चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च विपुलतया मध्ये च तनुकतया वज्रमध्योपमितमध्यभागा वज्रमध्येति २९ ॥ ५९ ॥ ६० ॥ साम्प्रतं सप्तसप्तमिकाद्याश्चतस्रः प्रतिमाः प्रतिपादयति—'दिवसे' इत्यादिगाथात्रयं, प्रथमे सप्तके दिवसे २ एका दत्तिर्ग्राह्या, ततः सप्तकेन सह दत्तिर्वर्धते यावत्सप्तमे सप्तके प्रतिदिनं सप्त दत्तयो भवन्ति, इयमत्र भावना—सप्तसप्तमिकायां प्रतिमायां सप्तसप्तका दिनानां भवन्ति, तत्र प्रथमे सप्तके प्रतिदिवसमेकैकां दत्तिं गृह्णाति द्वितीये सप्तके प्रतिदिवसं द्वे द्वे दत्ती एवं तृतीये सप्तके तिस्रः २ चतुर्थे चतस्रः २ पञ्चमे पञ्च २ षष्ठे षट् २ सप्तमे सप्त सप्तेति, एताश्च भोजनविषया एवं दत्तय उक्ताः, एवमेतत्सङ्ख्या एव पानकविषया अपि प्रतिपत्तव्याः, तथा

चाष्टमाङ्गसूत्रम्—“पढमे सत्तए एक्केक्कं भोयणस्स दत्तिं पडिगाहेइ, एक्केक्कं पाणयस्स, एवं जाव सत्तमे सत्त दत्तीउ भोयणस्स पडिगाहेइ, सत्त पाणयस्से”त्यादि, अन्ये पुनरन्यथा प्रतिपादयन्ति—प्रथमे सप्तके प्रथमदिवसे एकां दत्तिं गृह्णाति द्वितीये द्वे तृतीये तिस्रः चतुर्थे चतस्रः पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त, एवं द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमे च सप्तके द्रष्टव्यं, उक्तं च व्यवहारभाष्ये—“अहवा एक्केक्कियं दत्तिं जा सत्तेक्केक्कस्स सत्तए। आएसो अत्थि एसोऽवि”त्ति, तदेवमेकोनपञ्चाशता वासरैरियं सप्तसप्तकिका प्रतिमा भवति, सप्त सप्तका दिनानां यस्यां सा सप्तसप्तकिका, सप्तशब्दककारस्य मकारः प्राकृतत्वात्, अथवा सप्त सप्तमानि दिनानि यस्यां सा सप्तसप्तमिका, यस्यां हि सप्त दिनसप्तकानि भवन्ति तस्यां सप्त सप्तमानि दिनानि भवन्त्येवेति। तथा अष्टाष्टमिका नवनवमिका दशदशमिका च प्रतिमा एवं—प्रागुक्तप्रकारेणैव द्रष्टव्या, नवरं—केवलमयं विशेषः—अष्टकनवकदशकवृद्धिभिः सह प्रत्येकं दत्तिर्वर्धते, इदमुक्तं भवति—अष्टाष्टमिकायां प्रतिमायामष्टावष्टकानि भवन्ति, तत्र प्रथमेऽष्टके प्रतिदिनमेकैका दत्तिर्गृह्यते, द्वितीयेऽष्टके प्रतिदिनं द्वे दत्ती एवं तृतीये तिस्रः चतुर्थे चतस्रः एवमेकैकदत्तिवृद्ध्या तावदवगन्तव्यं यावदष्टमेऽष्टके प्रतिदिनमष्टावष्टौ दत्तयो गृह्यन्ते, अस्यां हि चतुःषष्टिर्दिनानि भवन्ति। तथा नवनवमिकायां प्रतिमायां नव नवकानि भवन्ति, तत्र प्रथमे नवके प्रतिदिनमेकैका दत्तिः द्वितीये नवके प्रतिदिनं दत्तिद्वयं तृतीये नवके प्रतिदिनं दत्तित्रयं एवमेकैकदत्तिवृद्ध्या तावदवसेयं यावन्नवमे नवके प्रतिदिनं नव नव दत्तयः, अत्र चैकाशीतिर्दिनानि। तथा दशदशमिकायां प्रतिमायां दश दशकानि भवन्ति, तत्र प्रथमे दशके प्रतिदिनमेका दत्तिर्गृह्यते, द्वितीये दशके प्रतिदिनं दत्तिद्वयं, एवमेकैकदत्तिवृद्ध्या तावन्नेतव्यं यावद्दशमे दशके प्रतिदिनं दश दश दत्तयः, अत्र दिनानां शतमेकं। तदेवं नवभिर्मासैश्चतुर्विंशत्या दिनैश्चतस्रोऽप्येताः प्रतिमाः समाप्यन्ते, इह च सप्तसप्तमिकायां प्रतिमायां दत्तिपरि-

माणं पण्णवत्यधिकं शतं, अष्टाष्टमिकायामष्टाशीत्युत्तरे द्वे शते दत्तीनां, नवनवमिकायां पञ्चोत्तराणि चत्वारि शतानि, दशदशमिकायां पञ्चाशदधिकानि पञ्च शतानि दत्तीनामिति ३० ॥ ६१ ॥ ६२ ॥ ६३ ॥ इदानीमाचाम्लवर्धमानं तपः प्राह—'एगे'त्यादिगाथाद्वयं, एकादिकान्येकैकवृद्धिमन्ति पर्यन्ताभक्तार्थान्याचाम्लानि क्रियन्ते यावत्तेषामाचाम्लानां शतं परिपूर्णं भवति, एतदाचाम्लवर्धमाननामकं महातपश्चरणं, आचाम्लं वर्धमानं यत्र तपश्चरणे तदाचाम्लवर्धमानं, अयमर्थः—प्रथमं तावदाचाम्लं क्रियते तत उपवासः ततश्च द्वे आचाम्ले पुनरुपवासः त्रीण्याचाम्लानि पुनरुपवासः चत्वार्याचाम्लानि पुनरुपवासः पञ्च आचाम्लानि पुनरुपवासः एवमुपवासान्तरितान्येकोत्तरवृद्ध्या तावदाचाम्लानि वर्धनीयानि यावत्पर्यन्ते शतमाचाम्लानां कृत्वा एकमुपवासं करोतीति, इह च शतं चतुर्थानां तथा पञ्चाशदधिकानि पञ्च सहस्राण्याचाम्लानां भवन्ति, उभयमीलने वर्षाणि चतुर्दश मासास्त्रयो दिनानि च विंशतिरिति ३१ ॥ ६४ ॥ ॥ ६५ ॥ अथ गुणरत्नवत्सरं तपः प्राह—'गुणे'त्यादिगाथाचतुष्टयं, गुणानां—निर्जरादी(मेळा)नां निर्जराविशेषाणां रचनं—करणं वत्सरेण सत्रिभागवर्षेण यस्मिंस्तपसि तद्गुणरचनवत्सरं अथवा गुणा एव रत्नानि यत्र स तथा गुणरत्नो वत्सरो यत्र तद्गुणरत्नवत्सरं तपः एतस्मिन् गुणरत्नवत्सरे तपश्चरणे षोडश मासा भवन्ति, तत्र प्रथमे मासे एकान्तरा उपवासाः कर्तव्याः, तथा दिवसे निरन्तरमुत्कटुकासनेन स्थातव्यं निशायां पुनर्नित्यमेव वीरासनकेन—वीरासनोपविष्टेन तथा निशि भवितव्यमप्रावृतेन—निरावरणेनेत्यर्थः, एवं द्वितीयादिष्वपि मासेष्वेकोत्तरया वृद्ध्या तावदुपवासाः कर्तव्या यावत्षोडशे मासे षोडशोपवासा भवन्ति, अयमर्थः—प्रथमे मासे पारणकदिनान्तरित एकैक उपवासः कर्तव्यः द्वितीये मासे द्वौ द्वावुपवासौ तृतीये मासे त्रयस्त्रय उपवासाः चतुर्थे चत्वारो यावत् षोडशमासे षोडश षोडश उपवासा भवन्ति, अत्र च त्रयोदश मासाः सप्तदश दिनाधिकास्तपःकालः त्रिसप्ततिश्च दिनानि पारणककालः, एवं चायं—'पन्नरस

वीसं चउवीस चेवं चउवीसं पन्नवीसा य। चउवीस एक्कवीसा चउवीसा सत्तवीसा य ॥ १ ॥ तीसा तेत्तीसाविय चउवीस छवीस अट्ठवीसा य। तीसा बत्तीसावि य सोलसमासेसु तवदिवसा ॥ २ ॥ पन्नरस दसऽट्ठ छप्पञ्च चउर पञ्चसु य तिन्नि तिन्नित्ति। पञ्चसु दो दो य तहा सोलसमासेसु पारणगा ॥ ३ ॥' इह च यत्र मासेऽष्टमादितपसो यावन्ति दिनानि न पूर्यन्ते तावन्त्यग्रेतनमासादाकृष्य पूरणीयानि अधिकानि चाग्रेतनमासे क्षेप्तव्यानि, तथा यत्प्रथमेत्यादिगाथायामुत्कटुकासनाद्यनुष्ठानं पूर्वमुक्तं तत्समग्रेष्वपि मासेसु करणीयं, सर्वसङ्ख्यया चास्मिंस्तपसि विंशत्यूनानि पञ्च शतानि दिनानां भवन्तीति, तदेवमपारः प्रवचनपारावारः तत्प्रतिपादिततपसां च प्रभूताः कर्तार इत्यतोऽनेकानि स्कन्दकप्रमुखपुरुषविशेषैराचीर्णानि तपांसि श्रूयन्ते ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ कियन्तीह वैविक्त्येन वक्तुं शक्यन्ते?, दिङ्मात्रं च किञ्चिदेतदुपदर्शितं ततः शेषाणां तपोविशेषाणामतिदेशमाह—'तहे'त्यादि, तथाशब्दः प्रागुक्तापेक्षया समुच्चये, अङ्गानां—आचारादीनां उपाङ्गानां—औपपातिकादीनां चैत्यवन्दनाया—ऐर्यापथिकीशक्रस्तवस्थापनार्हत्स्तवनामस्तवश्रुतस्तवसिद्धस्तवस्वरूपायाः पंचमङ्गलमहाश्रुतस्कन्धस्य आदिशब्दात्प्रकीर्णकानां च देवेन्द्रस्तवादीनामुपधानानि—तपोविशेषरूपाणि येन विधिना भणितानि तथैव समयात्—सिद्धान्ताद् भवन्ति ज्ञेयानि, इह च साम्प्रतं मुग्धलोकहिताय बहुश्रुतसूरिपरम्पराप्रवर्तितान्यपराण्यपरिमितानि तपांसि प्रचरन्ति दृश्यन्ते, परं नेह तानि प्रतन्यन्ते, ग्रन्थप्रपञ्चप्रसङ्गात्, तदर्थिना चास्मदुपरचिता सामाचारी निरीक्षणीया २७१ ॥ ७० ॥

इदानीं 'पायालकलस'त्ति द्विसप्तत्युत्तरद्विशततमं द्वारमाह—

**पणनउइ सहस्साइं ओगाहित्ता चउद्दिसिं लवणं। चउरोऽलिंजरसंठाणसंठिया होंति पायाला ॥ ७१ ॥ वलयामुह केयूरे जुयगे तह ईसरे य बोद्धव्वे। सव्ववइरामयाणं कुड्डा एएसि दससइया,**

॥ ७२ ॥ जोयणसहस्सदसगं मूले उवरिं च होंति विच्छिन्ना । मज्झे य सयसहस्सं तत्तियमित्तं च ओगाढा ॥ ७३ ॥ पलिओवमट्ठिईया एएसिं अहिवई सुरा इणमो । काले य महाकाले वेलंब पभंजणे चेव ॥ ७४ ॥ अन्नेवि य पायाला खुड्डालिंजरगसंठिया लवणे । अट्ठ सया चुलसीया सत्त सहस्सा य सव्वेसिं ॥ ७५ ॥ जोयणसयविच्छिन्ना मूलुवरिं दस सयाणि मज्झंमि । ओगाढा य सहस्सं दसजोयणिया य सिं कुड्डा ॥ ७६ ॥ पायालाण विभागा सव्वाणवि तिन्नि तिन्नि बोद्धव्वा । हिट्ठिमभागे वाऊ मज्झे वाऊ य उदगं च ॥ ७७ ॥ उवरिं उदगं भणियं पढमगवीएसु वाउसंखुभिओ । उड्ढं वामे उदगं परिवड्ढइ जलनिही खुभिओ ॥ ७८ ॥ परिसंठिअंमि पवणे पुणरवि उदगं तमेव संठाणं । वड्ढेइ तेण उदही परिहायइऽणुक्कमेणेव ॥ ७९ ॥

जम्बूद्वीपमध्यमध्यासीनस्य मन्दराचलस्य चतसृषु पूर्वादिषु दिक्षु प्रत्येकं पञ्चनवतियोजनसहस्राणि लवणार्णवमवगाह्य अत्रान्तरे चतसृषु दिक्षु प्रत्येकमेकैकभावेन चत्वारः पातालाः—'पदैकदेशे पदसमुदायोपचारात्' पातालकलशाः, ते च किंसंस्थाना इत्याह—अलिञ्जरं—महापिहिडं तत्संस्थानसंस्थितास्तदाकारा इत्यर्थः ॥ ७१ ॥ अथ तेषां नामादिकमाह—'वलये'त्यादिगाथात्रयं, मेरोः पूर्वस्यां दिशि पातालकलशो वडवामुखो—वडवामुखनामा वलयामुखो वा, दक्षिणस्यां केयूपः केयूरो वा, समवायाङ्गटीकायां तु केतुकः, अपरस्यां तु यूपः उत्तरस्यामीश्वरः, एते चत्वारोऽपि सर्ववज्रमयाः—सर्वात्मना वज्रमयाः, तेषां च—सर्ववज्रमयानां कुड्यानि—ठिक्करिकाः सर्वत्र बाहल्यमधिकृत्य दश शतकानि, दश योजनशतप्रमाणानि ॥ ७२ ॥ चत्वारोऽपि ते महापातालकलशा मूले—बुध्ने उपरि—मुखे च प्रत्येकं योज-

नसहस्रदशकं—दश योजनसहस्राणि विस्तीर्णा भवन्ति, मध्ये—उदरप्रदेशे पुनः शतसहस्रं—योजनलक्षं विस्तीर्णाः, तथा तावन्मात्रं—योजनलक्षमात्रमवगाढा—भूमौ प्रविष्टाः, इदमुक्तं भवति—चत्वारोऽप्येते पातालकलशा एकैकं योजनलक्षमुद्वेधेन, तथा मूले दश योजनसहस्राणि विष्कम्भेन, तत ऊर्द्धमेकप्रादेशिक्याः श्रेण्या विष्कम्भतः प्रवर्धमानाः २ मध्ये एकैकं योजनलक्षं विष्कम्भेन, तत ऊर्द्धं भूयोऽप्येकप्रादेशिक्या श्रेण्या विष्कम्भतो हीयमाना हीयमाना उपरि—मुखमूले दश योजनसहस्राणि विष्कम्भत इति ॥ ७३ ॥ साम्प्रतमेतेषां पातालकलशानामधिपतीन् देवानाह—एतेषां पातालकलशानामधिपतयः सुराः पल्योपमस्थितयो महर्धिका इमे—एवंनामानः, तद्यथा—वडवामुखे कालः केयूरे महाकालः यूपे वेलम्बः ईश्वरे प्रभञ्जन इति ॥ ७४ ॥ सम्प्रति लघुपातालकलशवक्तव्यतामाह—'अन्नेऽवी'त्यादिगाथाद्वयं, लवणे—लवणसमुद्रे तेषां पातालकलशानामन्तरेषु तत्र तत्र प्रदेशेषु बहवोऽन्येऽपि क्षुल्ला—लघवः पातालाः—पातालकलशाः, क्षुल्लालिञ्जरसंस्थिता—लघुपिहडकसंस्थानसंस्थिताः सन्ति, तत्र सर्वेषामपि सर्वसङ्ख्या सप्त सहस्राण्यष्टौ शतानि चतुरशीत्युत्तराणि, एकैकस्य महापातालकलशस्य परिवारे एकसप्तत्यधिकैकोनविंशतिशतसङ्ख्यानां लघुपातालकलशानां भावादिति ॥७५॥ एते च लघुपातालकलशाः प्रत्येकमर्धपल्योपमस्थितिकैर्देवैः परिगृहीताः । सम्प्रत्येतेषां प्रमाणमाह—सर्वेऽपि लघुपातालकलशा मूले—बुध्ने उपरि—मुखे प्रत्येकं योजनशतं विस्तीर्णाः, मध्ये—मध्यभागे जठरप्रदेशे दश शतानि—दश योजनशतानि विस्तीर्णाः, तथाऽवगाढा—भूमौ प्रविष्टाः सहस्रं—योजनसहस्रं, तथा 'सिं'ति एतेषां लघुपातालकलशानां कुड्यानि—ठिक्करिका बाहल्यमधिकृत्य दशयोजनकानि—दशयोजनप्रमाणानि ॥ ७६ ॥ सम्प्रति गुरूणां लघूनां च पातालकलशानां वाय्वादिविभागमाह—'पायालाणे'त्यादिगाथात्रयं, सर्वेषामपि गुरूणां लघूनां च पातालकलशानां त्रयस्त्रयो विभागा भवन्ति, तद्यथा—अधस्तनो मध्यम उपरितनश्च, तत्र महापातालकलशानामेकैकस्त्रिभागस्त्रयस्त्रिंश-

